| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ७५१ | १ | ११ | प्रतिकल | प्रतिकूल |
| ,, | ,, | २५ | सव | सर्वे |
| ,, | १ | ३३ | शर्षं | शेषं |
| ,, | २ | ३० | निश्चय | निश्चये |
| ७५२ | १ | २ | प्रतिकले | प्रतिकूले |
| ,, | ,, | ३३ | निदशः | निर्देशः |
| ,, | २ | ११ | कचिदू | केचिदू |
| ७५३ | १ | ४ | देश (देश) | देशे (देश) |
| ७५७ | २ | २९ | शेप | शेषं |
| ७६० | ,, | १६ | शाच | शौच |
| ७६६ | ,, | ९ | लाभयोन | लाभयोर्न |
| ७६९ | १ | १७ | मपल | मुपल |
| ७७१ | ,, | १४ | श्राद्ध | श्राद्धे |
| ७७६ | ,, | १३ | दशनात् | दर्शनात् |
| ७७७ | ,, | २७ | शर्प | शेषं |
| ,, | २ | २१ | ननकूलां | ननुकूलां |
| ७७८ | १ | ११ | मत | मृत |
| ,, | ,, | १२ | मतप्रजात्व | मृतप्रजात्वं |
| ७७८ | १ | २४ | प्रतीयत | प्रतीयते |
| ७७९ | ,, | २७ | द्वेपित | द्वेपिता |
| ,, | २ | २७ | श्रष्ठयं | श्रैष्ठयं |
| ,, | ,, | ३४ | चव | चैव |
| ७८० | १ | २३ | देह | देह- |
| ,, | २ | १२ | प्रसिद्धव | प्रसिद्धैव |
| ७८१ | १ | १० | प्रसिद्धव | प्रसिद्धैव |
| ,, | २ | २० | शस्यव | शस्यैव |
| ७८२ | १ | ६ | कतव्यम् | कर्तव्यम् |
| ,, | ,, | १२ | आमष्मिकं | आमुष्मिकं |
| ७८३ | ,, | १६ | भाया | भार्या |
| ७८५ | ,, | २० | कायाणि | कार्याणि |
| ७८६ | ,, | ४ | पूवाग्नौ | पूर्वाग्नौ |
| ,, | २ | १८ | सवं | सर्वं |
| ,, | ,, | ३५ | वोढु | वोढुं |
| ७९१ | १ | १ | कतव्य | कर्तव्य |
| ७९३ | ,, | ३० | मतेष्वपि | मृतेष्वपि |
| ७९५ | २ | ११ | पतितः | पतितैः |



# धर्मकोशः

## संस्कारकाण्डम्

### संस्कारोपोद्घातः

#### वेदाः

संस्कारशब्दः सामान्येन इष्टरूपान्तरकरणे
प्रयुक्त ऋग्वेदे

[1] न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनो-
पस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे
शंभविष्ठा ॥

अश्विनौ संस्कृतं घर्मं न प्र मिमीतः न हिंस्ताम् । किंतु अन्ति अन्तिके घर्मसमीपे नूनं इदानीं इह यज्ञे गमिष्ठा गन्तृतमौ अश्विना अश्विनौ उपस्तुता उपस्तुतौ भवतः । दिवाभिपित्वे दिवसस्याभिपतने प्रातःकाले अवसा रक्षणेन सह आगमिष्ठा आगन्तृतमौ, अवर्तिं प्रति द्वन्द्वभूतौ । वर्तिर्जीवनम् । तदभावः अवर्तिः । तद्रहितमन्न यथा भवति तथा आगन्तृतमौ, आगत्य च दाशुषे हविर्दत्तवते यजमानाय शंभविष्ठा सुखस्य भावयितारौ भवताम् । ऋभा.

[2] न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप
यन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि
चरन्ति यज्वनः ॥

रेणुककाटः रेणुकस्य रेणोः पार्थिवस्य रजसः उद्भेदकः । कटिर्भेदनकर्मा । अर्वा युद्धार्थमागतोऽश्वः ताः गाः न अश्नुते न प्राप्नुयात् । तथा ताः गावः संस्कृतत्रं विशसनादिसंस्कारं न अभि उप यन्ति नाभिगच्छन्तु । अपि च ताः गावः यज्वनः यागशीलस्य तस्य मर्तस्य मनुष्यस्य उरुगायं विस्तीर्णगमनं अभयं भयवर्जितं प्रदेशं अनु उद्दिश्य वि चरन्ति विशेषेण गच्छन्तु । ऋभा.

[1] य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या
गमत् ॥

यः उग्रः उद्गूर्णः ओजस्वी वा सन् भवन् अनिष्टृतः शत्रुभिरनिस्तीर्णः स्थिरः अचलः रणाय युद्धाय संस्कृतः शस्त्रैरलंकृतः सोमैर्वा संस्कृतः सः इन्द्रः मघवा धनवान् यदि स्तोतुः हवं आह्वानं शृणवत् शृणोति तर्हि अन्यत्र न योषति न गच्छति । किंतु आ गमत् तत्रैव आगच्छति । ऋभा.

[2] सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो
मित्रो अग्निः ॥

*सा प्रथमा मुख्या संस्कृतिः सोमसंस्कारे यस्येन्द्रस्य [illegible] 'आ तेति देवमच्छेहीन्द्राय सोमम्' (शुसं. ४।२०) इत्युक्तत्वात् । किंभूता संस्कृतिः । विश्ववारा विश्वैः सर्वैर्ऋत्विग्भिरनृत्विग्भिश्च व्रियते यत्र सोमः सा विश्ववारा । यद्वा विश्वं वृणोति क्रियमाणः सोमो यत्रेति विश्ववारा,*

(१) ऋसं. ५।७६।२; मासं. २।१।९।४ (१७५२).
(२) ऋसं. ६।२८।४; असं. ४।२१।४ टो अश्नुत (टोऽश्नुत); कासं. १३।१६ (८१); तैब्रा. २।४।६।९ मर्तस्य (मर्त्यस्य).

(१) ऋसं. ८।३३।९; असं. २०।५३।३, २०।५७।१३; मासं. २।१८।३ (१६९८).
(२) शुसं. ७।१४; शब्रा. ४।२।१।२७.

जगदुत्पत्तिबीजत्वात् । सोमस्य वरुणो मित्रः अग्निश्च स प्रसिद्धो यस्य प्रथमो मुख्यो भृत्य इति शेषः । वरुणमित्राग्नयोऽन्येषामप्युपलक्षकाः । देवगणानां यः प्रभुरित्यर्थः । शुम.

## यज्ञैरात्मसंस्कारः

प्रवर्ग्येऽभिष्टवमन्त्रैर्होतृपठितैरात्मसंस्कारः–

**एकविंशोऽयं पुरुषः । दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः । तमिममात्मानमेकविंशं संस्कुरुते ॥**

अयं पुरुषो मनुष्यदेहो जीवनोपेतः एकविंशतिसंख्यानामवयवानां समूहरूपत्वादेकविंश इत्युच्यते । दश हस्त्या इत्यादिना तदेव स्पष्टीक्रियते । आत्मशब्देन मध्यदेहो जीवात्मा वाऽभिधीयते । संख्यासामान्यात् तैर्मन्त्रैः आत्मानमेव संस्करोति । ऐब्रासा.

सोमयागगतपशुयागे वपाहोमे पञ्चावदानैः यजमानसंस्कारो देवत्वनिर्माणरूपः

**पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा । स यावानेव पुरुषस्तावन्तं यजमानं संस्कृत्याग्नौ देवयोन्यां जुहोति । अग्निर्वै देवयोनिः । सोऽग्नेर्देवयोन्या आहुतिभ्यः संभूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति ॥**

पञ्चसंख्यायोगात्पुरुषस्य पाङ्क्तत्वं, तद्योगाच (? तद्योगश्च) लोमादिभिः पञ्चभिर्निष्पादितत्वात् । तस्मात्पञ्चभिरवदानैः पुरुषो यावल्लोमादिपञ्चावयवोपेतोऽस्ति तावन्तं सर्वमपि यजमानं संस्कृत्य अग्नौ देवत्वप्राप्तिकारणे हुतवान् भवति । अग्नेश्च यागद्वारा देवजन्मकारणत्वम् । एवं सति स यजमानो देवत्वकारणादग्नेः स्वेनानुष्ठिताभ्यः आहुतिभ्यः समष्टिरूपेण उत्पन्न सुवर्णवर्णशरीरयुक्तः ऊर्ध्वगामी स्वर्गं प्राप्नोति । ऐब्रासा.

सोमयागे आज्यशस्त्रेणात्मसंस्कारः

**प्राणो वै जातवेदाः । स हि जातानां वेद । यावतां वै स जातानां वेद ते भवन्ति । येषामु न वेद किमु ते स्युः । यो वा आज्य आत्मसंस्कृतिं वेद तत्सुविदितम् ॥**

अत्र जातवेदःशब्देन प्राण एवाभिधीयते न त्वग्निः । अत एव अन्तिमभागव्याख्याने 'वायुर्वै जातवेदाः' इत्याम्नातम् । यस्मात् स प्राणो जातानामुत्पन्नानां शरीराणां स्वरूपं वेद जानाति लभते इत्यर्थः । तस्मात् प्राणस्य जातवेदाः इति नामधेयम् । एवं सति प्राणो यावतां उत्पन्नानां शरीराणां स्वरूपं वेद लभते ते देहाः भवन्ति सत्तां भजन्ते । येषां तु देहानां स्वरूपं प्राणो न वेद न लभते ते देहाः किमु स्युः किमु विद्यमानतां भजेयुः, न भजेयुरित्यर्थः । एवं सति जातवेदोनामकस्य प्राणस्य प्रतिपादिकायाः पुरोरुचः अन्तः पाठे यजमानो लब्धप्राणः सन् विद्यमानो भवति । अन्यथा अयमसत्कल्पः स्यात् । एवं उक्तप्रकारेण यो यजमानः आज्यशस्त्रे पुनर्जन्मस्वरूपां संस्कृतिं वेद तत् तस्य यजमानस्य सुविदितं सम्यग्ज्ञानमुत्पन्नम् । अनेन 'होतृजपम्' इत्यारभ्य प्रोक्ते प्रघट्टके अवस्थितस्यार्थवादस्य सर्वस्यापि उपसंहारो जातः । ऐब्राशा.

सोमयागे आज्यशस्त्रेण प्राणमनोवाक्श्रोत्रापानचक्षुर्भिः समस्तस्याऽऽत्मनः पुण्यलक्ष्म्याश्च संस्कारः

**प्र वो देवायाग्नय इति शंसति । प्राणो वै प्र । प्राणं हीमानि सर्वाणि भूतान्यनु प्रयन्ति । प्राणमेव तत्संभावयति । प्राणं संस्कुरुते ॥**

अस्याः प्रथमाया ऋचः आदौ प्रेतिशब्दः श्रूयते स प्राणस्वरूपः, नाम्न आद्याक्षरसाम्यात् । हि यस्मात्कारणात् सर्वाणि इमानि भूतानि जीवजातानि प्राणमनु प्रयन्ति प्राणः प्रथमतो गच्छति तमनु पश्चात् देहाः प्रयन्ति, प्राणप्रेरणादूर्ध्वं देहानां चलनात् । तत् तथा सति प्रशब्दप्रयुक्ताया ऋचः शंसनेन प्राणं संभावयति संभावितं पूजितं करोति । अनया पूजया प्राणः संस्कृतः सन् स्वव्यापारसमर्थो भवति । तस्मात् 'प्र वो देवाय' इत्येषा शंसनीया । ऐब्राशा.

**दीदिवांसमपूर्व्यमिति शंसति । मनो वै दीदाय । मनसो हि न किञ्चन पूर्वमस्ति । मन एव तत्संभावयति । मनः संस्कुरुते ॥**

(१) ऐब्रा. ७।२. (२) ऐब्रा. ७।४. (३) ऐब्रा. १०।७. (१) ऐब्रा. १०।८.

यद्यपि अध्ययनक्रमेण इयं ऋक् पञ्चमी तथापि द्वितीयात्वेन प्रयोक्तव्या, ब्राह्मणक्रमस्य अनुष्ठानार्थत्वात्। दीदिवांसं दीप्तियुक्तं अपूर्व्यं अस्मादन्येन पूर्वेण रहितं इत्येताभ्यां मन्त्रपदाभ्यां मनोऽभिधीयते। तच्च मनः सर्वार्थप्रकाशकत्वात् दीदाय दीप्तियुक्तं भवति। तथा मनसोऽपि न किंचिदपीन्द्रियं व्यापारवन्नास्ति, मनसा संकल्पितेषु अर्थेषु पश्चाद्वागादीन्द्रियाणां व्याप्रियमाणत्वात्। अत एव आरण्यकाण्डे वक्ष्यति– 'मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति' (ऐआ. ३।१।१) इति। अतो दीदिवांसं अपूर्व्यमिति पदद्वयार्थस्य मनसि विद्यमानत्वात् तच्छंसनेन मनसः संभावनासंस्कारौ संपद्येते। अत्राध्ययनक्रमात् अन्यमनुष्ठानक्रममभिप्रेत्य आश्वलायन आह– 'अनुब्राह्मणं वाऽऽनुपूर्व्यम्' इति। ऐब्रासा.

**स नः शर्माणि वीतय इति शंसति। वाग्वै शर्म। तस्माद्वाचाऽनुवदन्तमाह शर्मवदास्मा आयांसीति। वाचमेव तत्संभावयति। वाचं संस्कुरुते॥**

सः अग्निः नः अस्माकं वीतये कामाय शर्माणि सुखानि यच्छतु इति मन्त्रपादस्यार्थः। अत्र शर्मशब्देन वागेव विवक्षिता। यस्मादेवं तस्माल्लोके स्वगुरूक्तमर्थं स्ववाचा सम्यगनुवदन्तं पुरुषं इतरः प्रामाणिक एवमाह– अस्मै गुरूक्तार्थस्य सम्यगनुवादिने शिष्याय शर्मवत् सुखयुक्तं जीवनं संपन्नं यस्मात् तस्मात् हे शिष्य आयासि समन्ततो नियतोऽस्मि। आङ्पूर्वस्य 'यम उपरमे' इत्यस्य धातोः छान्दसं रूपम्। आस्मा इत्याकारश्च छान्दसः। इत्येवं वाङ्नियमितस्य सुखस्य लौकिकेनोच्यमानत्वात् मन्त्रोक्तशर्मशब्देन वाग्विवक्षोपपन्ना। तन्मन्त्रपाठेन वाचः संभावनासंस्कारौ भवतः। ऐब्रासा.

**उत नो ब्रह्मन्नविष इति शंसति। श्रोत्रं वै ब्रह्म। श्रोत्रेण हि ब्रह्म शृणोति। श्रोत्रे ब्रह्म प्रतिष्ठितम्। श्रोत्रमेव तत्संभावयति। श्रोत्रं संस्कुरुते॥**

उत अपि च हे ब्रह्मन् देवेषु ब्राह्मणरूप अग्ने नः अस्मान् अविषः रक्षसि। अस्मिन्मन्त्रे ब्रह्मशब्देन श्रोत्रमुपलक्ष्यते। श्रोत्रेण हि ब्रह्म वेदं पुरुषः शृणोति। श्रोत्रे अवगतं ब्रह्म वेदवाक्यं प्रतिष्ठितं कदाचिदपि अविस्मृतं भवति। तस्मात् तन्मन्त्रपाठेन श्रोत्रस्य संभावनासंस्कारौ भवतः। ऐब्रासा.

**स यन्ता विप्र एषामिति शंसति। अपानो वै यन्ता। अपानेन ह्ययं यतः प्राणो न पराङ् भवति। अपानमेव तत्संभावयति। अपानं संस्कुरुते॥**

सः अग्निः विप्रः देवेषु ब्राह्मणः सन् एषां मनुष्यविप्राणां यन्ता नियमनकर्ता। अस्मिन् मन्त्रे यन्तृशब्देनापानवायुरुपलक्ष्यते। निःश्वासरूपेणापानेन यतो नियमितः प्राणवायुः (न) पराङ् भवति परं बाह्यं दूरदेशं अञ्चति गच्छति इति पराङ्। यद्ययं बहिर्मुख उच्छ्वासरूपः प्राणवायुरपानवायुना न नियम्येत तदा बहिरेव गच्छेत्, न पुनर्निवर्तेत, ततः पुरुषो म्रियेत, अतः अपानस्य नियन्तृत्वं युक्तम्। एतन्मन्त्रपाठेन अपानवायोः संभावनासंस्कारौ भवतः। ऐब्रासा.

**ऋतावा यस्य रोदसी इति शंसति। चक्षुर्वा ऋतम्। तस्माद्यतरो विवदमानयोराहाहमनुष्ठया चक्षुषाऽदर्शमिति तस्य श्रद्दधति। चक्षुरेव तत्संभावयति। चक्षुः संस्कुरुते॥**

रोदसी द्यावापृथिव्यौ यस्य अग्नेः ऋतावा सत्यवत्यौ। अस्मिन् (? एतन्) मन्त्रगतऋतशब्देन चक्षुरुपलक्ष्यते। यस्मादेवं तस्माल्लोके विवदमानयोः पुरुषयोर्मध्ये यतरः पुमानेवमाह। कथमिति तदुच्यते– अहं अनुष्ठया अनुष्ठित्या प्रयत्नेन चक्षुषा अदर्शं दृष्टवानस्मीति। तस्य श्रद्दधति तदीयवचनं सर्वे विश्वसन्ति। दूरस्थे चूतवृक्षे फलमस्ति न वेति निश्चेतुं राजा द्वौ पुरुषौ प्रेषयति, तयोरलसः कश्चिदागत्य दृष्ट्वा नास्तीति ब्रूते। अपरस्तु तत्र प्रयत्नेन दृष्ट्वा यत्र क्वापि पर्णेन आच्छन्नं फलं सम्यग्दृष्टवानस्मीति ब्रूते। तस्य वचने सर्वेषां विश्वासो जायते। तस्मात् सम्यग्दर्शनं चक्षुषः ऋतत्वं युक्तम्। एतन्मन्त्रपाठेन चक्षुषः संभावनासंस्कारौ भवतः। ऐब्रासा.

**नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वस्वित्युत्तमया परिदधाति। आत्मा वै समस्तः सहस्रवांस्तोकवान्**

पुष्टिमान् । आत्मानमेव तत्समस्तं संभावयति । आत्मानं समस्तं संस्कुरुते ॥

यद्वसु धनं सहस्रवत् सहस्रसंख्योपेतं तोकवत् अपत्योपेतं पुष्टिमत् समृद्धियुक्तमस्ति तादृशं धनं नः अस्मभ्यं नु क्षिप्रमेव रास्व हे अग्ने देहि । अनया अन्तिमया आज्यशस्त्रं समापयेत् । अत्र समस्तः पूर्वोक्तः प्राणमनोवागादिभिः सर्वैरिन्द्रियैः संपूर्ण आत्मा वै पुरुष एव सहस्रसंख्योपेतधनयुक्तो बहुभिरपत्यैरुपेतः समृद्धियुक्तश्च विवक्षितः । अतस्तत्पाठेन तादृशस्य पुरुषस्यैव संभावनासंस्कारौ भवतः । ऐब्रासा.

याज्यया यजति । प्रत्तिर्वै याज्या । पुण्यैव लक्ष्मीः । पुण्यामेव तल्लक्ष्मीं संभावयति । पुण्यां लक्ष्मीं संस्कुरुते ॥

अग्न इन्द्रश्चेति येयं याज्या पूर्वमुक्ता तया यजति यागार्थं याज्यां पठेत् । याज्या च प्रत्तिर्वै प्रदानरूपैव । तथा च हविष आदानप्रदाने क्रमेण पुरोनुवाक्यायाज्याधीने श्रुत्यन्तरे श्रूयेते ' पुरोनुवाक्ययाऽऽदत्ते प्रयच्छति याज्यया ' इति । अतः प्रदानरूपत्वादियं पुण्यैव लक्ष्मीः । शास्त्रीयत्वात् पुण्यत्वम् । फलस्य लब्धिहेतुत्वात् लक्षणस्य दर्शनहेतुत्वाद्वा लक्ष्मीत्वम् । अतो याज्यापाठेन पुण्याया एव लक्ष्म्याः संभावनासंस्कारौ भवतः । ऐब्रासा.

स एवं विद्वांश्छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद ॥

उक्तक्रमेणानुष्ठातृवेदिनोः फलं दर्शयति– स एवमिति । एवं विद्वानित्यत्र अनुतिष्ठन्नित्यध्याहार्यम् । वेदनपूर्वकोऽनुष्ठाता गायत्र्यादिच्छन्दःस्वरूपो वह्न्यादिदेवतास्वरूपः ऋगादिवेदस्वरूपो मरणरहितो मोक्षस्वरूपः सन् संभूय सर्वं जगदेकीकृत्य सर्वा देवताः प्राप्नोति । तदेतदनुष्ठातुः फलम् । य एवं वेदेत्यत्रापि विदुषः फलत्वेन च्छन्दोमयत्वादिकमावर्तनीयम् । अथवा य एवं वेदेत्युक्तत्वैव स एवं विद्वानित्यनूद्यमानत्वादेवं वाक्यमावर्तनीयम् । ऐब्रासा.

. यो वै तद्वेद यथा छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति तत्सुविदितम् ॥

वेदनमात्रस्य कथमीदृशं फलमित्याशङ्क्य सुवेदनत्वाद्युक्तं फलमित्येतद्दर्शयति– यो वै तद्वेदेति । येन प्रकारेण छन्दःप्राप्त्यादिपूर्वकं सर्वदेवताप्राप्तिर्भवति तत् तादृशं प्रकारं यो वेद तद्वेदनं सुविदितं शोभनज्ञानं, तस्माद्युक्तं फलमित्यर्थः । ऐब्रासा.

इत्यध्यात्ममथाधिदैवतम् ॥

उक्तवक्ष्यमाणयोः शङ्कापरिहाराय विभागं दर्शयति— इत्यध्यात्ममिति । आत्मानं शरीरं अधिकृत्य वर्तते इत्यध्यात्मम् । अस्मिन् खण्डे शरीररूपत्वेन प्रशंसनमाज्यशस्त्रस्योक्तम् । उत्तरखण्डे तु अधिदैवतं देवताविषयं आज्यशस्त्रप्रशंसनमुच्यते । ऐब्रासा.

सोमयागे वैश्वदेवस्तोत्रेणाङ्गसंस्कारः

[1]यद्वैश्वदेवं शंसत्यङ्गान्येवास्य तत्संस्करोति ॥

(उत्पन्नो बालः पश्चेव दर्शनश्रवणग्रीवोन्नमनादिक्रियाभ्यः पश्चादेव समर्थः सन् हस्ताभ्यां पादाभ्यां चेतस्ततः प्रचरति । हस्तादीन्यङ्गानि च बहुदेवताकानि ।) तस्माद्वैश्वदेवतृचेनाङ्गसंस्कारः ।

ऐब्रासा.

सोमयागे निष्केवल्यशस्त्रस्तोत्रिये मध्यमया वाण्या आत्मसंस्कारः

[2]तं मध्यमया वाचा शंसत्यात्मानमेव तत्संस्कुरुते ॥

अत्युच्चत्वमतिनीचत्वं च यस्यां वाचि नास्ति सा मध्यमा । यावता ध्वनिना देवयजनदेशस्थाः शृण्वन्ति, न तद्बहिर्देशस्थाः, तावन्तं ध्वनिं कुर्यात् । तेन आत्मानमेव देहमेव संस्कुरुते । ऐब्रासा.

ब्रह्माख्य ऋत्विक् मनसा स्वर्गसंस्कारकः

[3]अयं वै यज्ञो योऽयं पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च हि मनसा च यज्ञो वर्तते । इयं वै वागदो मनः । तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति । मनसैव ब्रह्मा संस्करोति ॥

---

(१) ऐब्रा. २।१२.
(२) ऐब्रा. १२।१३.
(३) ऐब्रा. २५।८.

सोऽयं योऽयं वायुः पवते अन्तरिक्षे संचरति अयमेव यज्ञस्वरूपो वायुसदृशो यज्ञः । यथा वायोः संचारमार्गास्तथा तस्य यज्ञस्य वाक् च मनश्च वर्तन्यौ प्रवृत्तिमार्गौ । यस्माद्वाचा मन्त्ररूपया मनसा च प्रयोगानुसंधात्रा यज्ञो वर्तते तस्मादुभौ मार्गौ । तत्र वाक् इयं वै भूमिस्वरूपैव, मनस्त्वदः स्वर्गरूपम् । तत् तथा सति वाग्रूपया त्रय्या विद्यया होत्रादयो रथस्थानीयस्य यज्ञस्यैकं पक्षं भागं संस्कुर्वन्ति सम्यक् संपादयन्ति । ब्रह्मा मनसैव संस्करोति सम्यक् संपादयति । अन्य भागमिति शेषः । होत्रादिभिर्वाचाऽनुष्ठीयमानेष्वङ्गेषु कैवल्यराहित्यं ब्रह्मा अनुसंदध्यादित्यर्थः । छन्दोगाश्चैतमर्थमामनन्ति ' एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतराम् ' इति । ऐब्रासा.

सत्रेषु अहीनेषु च शिल्पाख्यशस्त्रैरात्मसंस्कारः

[1]आत्मसंस्कृतिर्वाव शिल्पानि । च्छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते ॥

वक्ष्यमाणानि नाभानेदिष्ठादिशिल्पानि आत्मसंस्कृतिः जीवात्मनः संस्कारकारणानि । तस्मादेतैर्यजमानो जीवात्मानं छन्दोमयं वेदमयो यथा भवति तथा संस्कुरुते । ऐब्रासा.

[2]स पाङ्क्तो भवति । पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा । स यावानेव पुरुषस्तावन्तं यजमानं संस्करोति ॥

सः वृषाकपिनामकः सूक्तविशेषः पङ्क्तिच्छन्दोयुक्तो भवति । पुरुषोऽपि लोमादिभिः पञ्चधा सृष्टत्वात् पञ्चसंख्यायोगेन पाङ्क्तः । तथा सति सः पुरुषः स्वकीयैरवयवैर्यावानेव भवति तावन्त सर्वमपि यजमानमनेन संस्करोति । ऐब्रासा.

यज्ञक्रतुना यजमानसंस्कारो यजमानस्य नवजन्मनिर्माणरूपः

[3]यजमानं ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति । स यथा गर्भो योन्यामन्तरेवं संभवञ्छेते । न वै सकृदेवाग्रे सर्वः संभवति । एकैकं वा अङ्गं संभवतः संभवतीति ॥

यज्ञक्रतुशब्देन तत्साधनभूतः शिल्पसमूहो विवक्षितः । एतेन सर्वेणापि शिल्पसमूहेन यजमानं संस्कुर्वन्ति । प्राणप्राप्त्यर्हता संस्कारः । स एव चात्र क्रियते । ननु (तु) यजमानस्य मरणं जन्म (वा) । बहुभिः शिल्पैः क्रमेण संस्कारे दृष्टान्तः– यथा योन्यामन्तः मध्ये सः प्रसिद्धः गर्भो भवति । एवमयं यजमानः क्रमेण संभवन् संस्कारेणोत्पद्यमानः शेते अवतिष्ठते । लोकेऽपि गर्भः अग्रे प्रथमं रेतःसेककाले एव सर्वः संपूर्णाङ्गः सकृदेव न वै संभवति नैवोत्पद्यते । किंतु संभवतः उत्पद्यमानस्य पुरुषस्यैकैकमङ्गं क्रमेण संभवति निष्पद्यते । तथा च गर्भोपनिषद्याम्नातम्– ' एकरात्रोषितं कललं भवति । सप्तरात्रोषितं बुद्बुदं भवति ' इत्यादि । अतो गर्भवत्क्रमेण संस्कारो युक्त इत्यर्थः । ऐब्रासा.

दर्शपूर्णमासाभ्यां यजमानसंस्कारो दैवात्मनिर्माणरूपः

[1]अथ यत्सूक्तवाके यजमानस्य नाम गृह्णाति । एष ह वै दैव आत्मा यजमानस्य यमृत्विजः संस्कुर्वन्ति । तस्मादस्य नाम गृह्णाति । अत्र हि जायते । उच्चैर्गृह्णीयात् । यद्यथाऽऽचार्यः स्यात्तथा ह यजमानोऽप्रच्यावुको भवति । अथ पञ्चाऽऽशिषो वदति । इड्यायां तिस्रः । ता अष्टावेताभिर्वै देवाः सर्वा अष्टीराश्नुवते । तथो एवैतद्यजमान एताभिरेव सर्वा अष्टीरश्नुते ॥

सोमयागे अभिप्लवषडहे वैश्वदेवशस्त्रैरात्मप्राणसंस्कारः

[2]द्वे वैश्वदेवानां प्रतिपदौ द्वावनुचरौ । षळृतुः संवत्सरः षड्विधः । द्वे द्यावापृथिवी । द्वे इमे प्रतिष्ठे । षळङ्गोऽयमात्मा षड्विधः । अनु द्वे अहोरात्रे । द्वाविमौ प्राणापानौ । तत्र संवत्सरः संपदो यन्ति नाऽऽत्मसंस्कृतेर्न प्राणसंस्कृतेः ॥

विषुवति निविदा यजमानसंस्कारः

[3]उपयैकशततमी स यजमानलोकः । तदत्रैव यजमानान् संस्कुर्वन्ति । तदत्रैव यजमानान् संस्कृत्याऽऽदौ महाव्रतीयेनाह्ना प्रजनयतीति पैङ्गी संपत् ॥

---

(१) ऐब्रा. ३०।१.
(२) ऐब्रा. ३०।३.
(३) ऐब्रा. ३०।५.

(१) शाब्रा. ३।८.
(२) शाब्रा. २०।३.
(३) शाब्रा. २५।७.

अग्नीषोमीयपशुयागेन यजमानसंस्कारः

स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्यते । द्वयं वा अस्मिँल्लोके यजमानः । अस्थि च माꣳसं च । अस्थि चैव तेन माꣳसं च यजमानः सꣳस्कुरुते ॥

यस्मिन्नहनि देवता यजमानस्य समीपे निवसति तदहरुपवसथीयम् । अत एवान्यत्र आम्नायते– 'उपास्मिन् श्वो यक्ष्यमाणे देवता वसन्ति' इति । अग्नाप्य- ग्नीषोमीयानुष्ठानदिनादूर्ध्वदिने यजमानः सोमेन यक्ष्यते । तस्मादिदमहरुपवसथीयम् । य (?अ)स्मिन्नहनि यः पशुरालभ्यः स द्विदेवत्यः । तौ च देवौ अग्नीषोमौ, 'यदग्नीषोमीयं पशुमालभते' इत्यन्यत्राऽऽम्नानात् । यजमानस्य शरीरमप्यस्मिन् मनुष्यलोके अस्थिमांसद्वयात्मकम् । ततो द्विदेवत्येन पशुना यजमानः स्वकीयमस्थि मांसं च संस्कुरुते । तैत्रासा.

दर्शपूर्णमासाभ्यां यजमानसंस्कारः

यदेवं कपालान्युपदधाति । यज्ञो वै प्रजापतिः । यज्ञमेव प्रजापतिꣳ सꣳस्करोति । आत्मानमेव तत्सꣳस्करोति । तꣳ सꣳस्कृतमात्मानम् । अमुष्मिँल्लोकेऽनुपरैति ॥

उपधानेन कपालेषु संस्कृतेषु तद्द्वारा तत्साध्यो यागः संस्क्रियते । यज्ञद्वारा तत्स्रष्टुः प्रजापतेः संस्कारः । तेन कपालयज्ञप्रजापतिसंस्कारेण तेषां संस्कृतत्वाद्यजमानः स्वयं संस्कृतो भवति । तं च संस्कृतं स्वर्गे लोके गच्छन्तमनु फलदानाय यज्ञः प्रजापतिरूपधारी कश्चिद्देवो गच्छति । तैसा. १।१।७।१–२

यज्ञरूपस्यात्मसंस्कारस्य कर्तारः ऋत्विजः

ता वा एता ऋत्विजामेव दक्षिणाः । अन्यं वा एत एतस्याऽऽत्मानं संस्कुर्वन्त्येतं यज्ञमृङ्मयं यजुर्मयं साममयमाहुतिमयम् । सोऽस्यामुष्मिँल्लोक आत्मा भवति । तद् ये माऽजीजनन्तेति । तस्मादृत्विग्भ्य एव दक्षिणा दद्यात्, नानृत्विग्भ्यः ॥

उक्ताया दक्षिणाया ऋत्विक्संबन्धं सहेतुकं विधत्ते– ता वा इत्यादि । अन्यं वा इति । यतः ऋत्विजः एतस्य यजमानस्य अन्यं आत्मानं दृश्यमानशरीरव्यतिरिक्तं शरीरं संस्कुर्वन्ति । एतं यज्ञमृङ्मयमिति । तद्ये मेति । तत् तस्मात् यज्ञरूपशरीरान्तरोत्पादनात् यजमानः इमे ऋत्विजो मां अजीजनन्त इति मन्यते । तस्मादृत्विग्भ्य एव दद्यात्, तद्व्यतिरिक्तेभ्यो न दद्यादित्यर्थः । शब्रासा.

यज्ञे विष्णुक्रमक्रमणेन दैवः संस्कारः

प्रजापतिरेषोऽग्निः । उभयम्वेतत् प्रजापतिर्यच्च देवाः यच्च मनुष्याः । तद् यद् विष्णुक्रमवात्सप्रे भवतः । यद्देवास्य दैवं रूपम् । तदस्य तेन संस्करोति । अथ यद्वनीवाह्यते । यदेवास्य मानुषं रूपम् । तदस्य तेन संस्करोति । स ह वा एतं सर्वं कृत्स्नं प्रजापतिं संस्करोति य एवं विद्वान् वनीवाह्यते । तस्मादु वनीवाह्येतैव ॥

अस्त्वेवं विषयभेदेन प्रयाणभेदः, तथापि द्विविधमपि कर्तव्यमित्यत्र किं कारणमिति तत् दर्शयति– प्रजापतिरेषोऽग्निरुभयम्वेतदित्यादिना । स्रष्टृस्रष्टव्ययोरभेदोपचारेण एतत् उभयं अपि प्रजापतिः एव । तथा सत्युभयेन सवात्सप्रेण विष्णुक्रमेण वनीवाहनेन चेत्युभयेन दैवमानुषभेदेनोभयविधमपि रूपं संस्करोति । अत उभयमप्यवश्यमनुष्ठेयमित्यर्थः । उक्तार्थज्ञानपूर्वकमनुतिष्ठतः फलमाह– स ह वा एतमिति । तस्माद्विति निगमनम् । शब्रासा.

अग्नित्रयचयनविधयाऽऽत्मसंस्कारः

सैषा त्रेधा विहिता वागनुष्टुप् । तामेषोऽग्निः प्राणो भूत्वाऽनुसंचरति । य आहवनीयेऽग्निः स प्राणः । सोऽसावादित्यः । अथ य आग्नीध्रीयेऽग्निः स व्यानः । स उ अयं वायुर्योऽयं पवते । अथ यो गार्हपत्येऽग्निः स उदानः । स उ अयं योऽयमस्मिँल्लोकेऽग्निः । एवंविद्ध धाव सर्वा वाचं, सर्वं प्राणं, सर्वमात्मानं संस्कुरुते ॥

(१) तैब्रा. १।५।९।७.
(२) तैब्रा. ३।२।७४,५.
(३) शब्रा. ४।३।४।५.

(१) शब्रा. ६।८।१।४. (२) शब्रा. ७।१।२।२१.

. सैषा त्रेधा विहितेत्यादि । त्रिप्रकारेण विहिता सैषा अनुष्टुप् वाक् एव । तां एष उक्थ्यः अग्निः प्राणो भूत्वा अनुसंचरति आहवनीयगार्हपत्याग्नीध्रीयाख्येषु स्थानेषु क्रमेण व्याप्नोति । तत्तत्स्थानगतेऽग्नौ प्राणोदानव्यानरूपात्मना सूर्यादि (? य) भेदेन तस्य व्याप्तिमाचष्टे —य आहवनीयेऽग्निरिति । आहवनीये आहवनीयस्थाने निहितो यः अग्नि, स प्राणः प्राणात्मकः, सोऽसावादित्यः आदित्यात्मकश्च । आग्नीध्रीये निहितस्तु व्यानात्मकः वाय्वात्मकश्च । गार्हपत्ये निहितस्तु उदानात्मकः पार्थिवाग्निरूपश्च । आहवनीयादीनां द्युलोकादिरूपत्वस्य प्रतिपादितत्वात् ऊर्ध्वमध्याधोदेशसंबन्धेन प्राणादीनां तत्तदग्न्यात्मकता अवगन्तव्या । प्रतिपादितमर्थं विदुषः फलमाह— एवंविदिति । अग्न्याद्यधिष्ठितलोकत्रयाणां प्रजापत्यात्मकत्वं गार्हपत्यचितौ संपादितास्वनुष्टुप्सु उदीरितरीत्या जानन् कृत्स्नां वाचं कृत्स्नं प्राणं एतैरेव सर्वैः सपूर्णं आत्मानं अग्निशरीरं संस्कुरुते उत्पादयति । शब्रासा.

तदाहुः । यदयं लोको गार्हपत्यः । अन्तरिक्षं धिष्ण्याः । द्यौराहवनीयः । अन्तरिक्षलोक उ अस्माल्लोकादनन्तर्हितः । अथ कस्माद्गार्हपत्यं चित्वाऽऽहवनीयं चिनोति, अथ धिष्ण्यानिति । सह हैवेमावग्रे लोकावासतुः । तयोर्वियतोर्योऽन्तरेणाऽऽकाश आसीत्तदन्तरिक्षमभवत् । ईक्षं हैतन्नाम ततः पुरा । अन्तरा वा इदमीक्षमभूदिति तस्मादन्तरिक्षम् । तयद्गार्हपत्यं चित्वाऽऽहवनीयं चिनोति । एतौ ह्यग्रे लोकावसृज्येताम् । अथ प्रत्येत्य धिष्ण्यान्निवपति कर्मण एवानन्तरायाय । अथो अन्तयोर्वाव संस्क्रियमाणयोर्मध्यं संस्क्रियते ॥[1]

. गार्हपत्याग्नीध्रीयाहवनीयानां क्रमेण पृथिव्यन्तरिक्षद्युलोकात्मकत्वात् क्रमेणैव तेषां संस्कारो युक्त इत्याशङ्क्य व्युत्क्रमानुष्ठानमुपपादयति–तदाहुरित्यादिना । अन्तरिक्षं धिष्ण्या इति । गार्हपत्याहवनीययोरन्तरालवर्तिन आग्नीध्रीयादयो धिष्ण्याः, ते अन्तरिक्षलोकात्मका इत्यर्थः । तत्र गार्हपत्यचयनानन्तर्यं आहवनीयचितेराक्षिपति— अन्तरिक्षलोक इति । अस्मात् लोकात् भूलोकात् अन्तरिक्षलोकः अनन्तर्हितः प्रत्यासन्नः । तथा च गार्हपत्यचयनानन्तरं धिष्ण्यनिवपनमकृत्वा अथ कस्मात् हेतोराहवनीयचयनमेव क्रियते । अथ अनन्तरमेव धिष्ण्यान्, चिनोतीत्यनुपपद्यते । इत्थमनुष्ठाने कारणं वक्तुमाह— सह हैवेमाविति । अग्रे पुरा इमौ भूस्वर्गाख्यौ लोकौ सह आसतुः । तयोः वियतोः विविधं गच्छतोः वियुज्यमानयोः यः मध्ये आकाशः अवकाशः आसीत् तदन्तरिक्षमभवत् । ततः पुरा द्यावापृथिव्योर्विगमनात् पूर्वं ईक्षं इति आकाशस्य नाम । द्यावापृथिव्योर्विश्लेषे सति अन्तरा तयोर्मध्ये खलु इदमीक्षमभूत्, इति हेतौ, यस्मादेवं तस्मात् इदमाकाशमन्तरिक्षनामकं संपन्नमित्यर्थः । तयद्गार्हपत्यमित्यादि । एवमन्तरिक्षनिष्पत्तेर्लोकद्वयानन्तरभावित्वात् गार्हपत्यचयनानन्तरं अन्तरिक्षसंस्तुतान् धिष्ण्यानतिक्रम्य आहवनीयं चिनोति चयनेन संस्करोति । यत् यस्मात् तौ भूस्वर्लोकौ अग्रे खलु सह असृज्येतां सृष्टौ अभवताम् । अथ आहवनीयचयनानन्तरं प्रत्येत्य प्रतिनिवृत्य सदसि धिष्ण्यान् निवपति निर्मिमीते । अत्र प्रयोजनमाह—कर्मण एवेति । तत्र धिष्ण्यानां निवपनं कर्मणः क्रियाकलापस्य अनन्तरायाय अविच्छेदायैव भवति । न त्वनेन किञ्चित् संस्कर्तव्यमस्तीत्याह— अथो इति । अपि च उभयोः अन्तयोः आहवनीयगार्हपत्ययोश्चयनेन संस्क्रियमाणयोः मध्यमपि खलु संस्क्रियते तेनैव संस्कारेण संस्कृतमेव भवति । तस्मात् गार्हपत्यचयनानन्तरमाहवनीयस्यैव चयनं, पश्चात् धिष्ण्यानां निवपनमिति क्रमः सिद्ध इति भावः । शब्रासा.

यजमान- अभये स्थाने यज्ञेनाऽऽत्मसंस्कारं कुरुते

यद्वेवैनमभिजुहोति । एतद्वै देवा एतमात्मानमुपधायाबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । त एतान् राक्षोघ्नान् प्रतिसरानपश्यन् 'कृणुष्व पाजः प्रसितिं न पृथ्वीम्' ( शुसं. १३।९-१३ ) इति । राक्षोघ्ना वै प्रतिसराः । त एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा

( १ ) शब्रा. ७।१।२।२१.

( १ ) शब्रा. ७।४।१।३३.

अपहत्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत । तथैवैतद्यजमान एतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षांसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते ॥

मन्त्रविध्यर्थमनुवदति—यद्वैनमिति । 'कृणुष्व पाजः' इत्याद्यान् राक्षोघ्नान् पञ्च मन्त्रान् विधातुमाख्यायिकामाह—एतद्वै देवा इति । यद्वै न इममिति । नः अस्माकं इमं आत्मानं इह अस्मिन् अवसरे नाष्ट्रा रक्षांसि यत् येनोपायेन न हन्युः, स उपायः कः इति विचारितवन्त इत्यर्थः । राक्षोघ्नान् प्रतिसरान् इत्यादि । राक्षसान् प्रति अस्त्ररूपेण सरन्ति गच्छन्तीति प्रतिसराः 'कृणुष्व पाजः' इत्याद्या मन्त्राः । अत एव ते रक्षोहननसंबन्धात् राक्षोघ्नाः । प्रसिद्धो वैशब्दः । सा च 'अस्तासि विध्य रक्षसस्तपिष्ठैः' इत्यादिमन्त्रवर्णादवसेया । तथैवैतदित्यादिना उक्तार्थदृष्टान्तमुखेन अग्निहोममन्त्रविधिः । शब्रासा.

अथातश्चयनस्यैव । अन्तरोपसदौ चिनोति । एतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति । त एताः पुरोऽपश्यन्नुपसद इमानेव लोकान् । इमे वै लोकाः पुरः । ताः प्रापद्यन्त । ताः प्रपद्याभयेऽनाष्ट्र एतमात्मानं समस्कुर्वत । तथैवैतद्यजमान एताः पुरः प्रपद्याभयेऽनाष्ट्र एतमात्मानं संस्कुरुते ॥

एवं चित्याग्नेर्वेदेश्च मानमुक्तं, अथ चयनविषयविचारो वक्ष्यते इति प्रतिजानीते—अथातश्चयनस्यैवेति । विधिरिति मीमांसेति वा शेषः । तत्र कालं विधत्ते—अन्तरोपसदौ चिनोतीति । पौर्वाह्णिक्यापराह्णिक्योरुपसदोर्मध्ये चिनुयात् । तत्र साग्निकप्रकृतावग्निष्टोमे तिस्र उपसदः । साग्निके ऐकाहिके क्रतौ तिस्र उपसदः । द्वादशाहगवामयनतापश्चितादिषु अहीनसत्रसांवत्सरेषु द्वादशचतुर्विंशतिषष्ट्युत्तरत्रिशतसंख्या उपसद इति वक्ष्यते । ताश्च त्रित्वादिपक्षेष्वप्येकैकस्मिन् दिने पूर्वाह्णापराह्णयोः उपसदः कार्याः । तथा चैतरेयकं ब्राह्मणम्— 'त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैकामुपायन्' इति, 'त इमाः षट् सतीरुपसदो द्विर्द्विरेकैकामुपायन्' (ऐब्रा. ४।६) इत्यादि, 'तस्मात्पूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यं स्वपराह्णेऽपरया' (ऐब्रा. ४।६) इति । तत्र कालं प्रशंसन्ति— एतद्वै देवा अबिभयुरिति । एतस्मिन् काले देवाः भीतवन्तः, इह अस्मिन् काले नः अस्मान् नाष्ट्राः नाशकाः राक्षसा यथा न हन्युः इति । भीताः उपसदः पुरोऽपश्यन् । उपसदां पुरत्वं तद्विशेषलोकात्मकत्वं चैतरेयके समाम्नातम्—' इमानेव लोकान् पुरोऽकुर्वत ' इत्युपक्रम्य 'ते वा अयस्मयीमेवेमामकुर्वत रजतामन्तरिक्षं हरिणीं दिवम्' इति, ते देवा अब्रुवन्— उपसद उपायामोपसदा वै महापुरं जयन्ति ' ( ऐब्रा. ४।६ ) इति । त एवं लोकपुररूपा उपसदः प्रपद्य अभये भीतिरहिते अनाष्ट्रे नाशकरहिते स्थाने देवाः एतमात्मानं संस्कृतवन्तः । तथाऽयं यजमानोऽपि उपसदोर्मध्येऽग्निचयनेनाऽऽत्मानं संस्कुरुते । शब्रासा.

चयनेनाऽऽत्मसंस्कारः

स यदग्निं चेष्यमाणो दीक्षते । यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां योनौ रेतोभूतमात्मानमसिञ्चत्, एवमेवैष एतदात्मानमुखायां योनौ रेतोभूतं सिञ्चति छन्दोमयं, स्तोममयं, प्राणमयं, देवतामयम् । तस्यार्धमासे प्रथम आत्मा संक्रियते, दवीयसि परः, दवीयसि परः । संवत्सर एव सर्वः कृत्स्नः संक्रियते ॥

तद्यत्परिश्रितमुपधत्ते तद्रात्रिमुपधत्ते । तदनु पञ्चदश मुहूर्तान् । मुहूर्ताननु पञ्चदशाशीतीः । अथ यद्यजुष्मतीमुपधत्ते तदहरुपधत्ते । तदनु पञ्चदश मुहूर्तान् । मुहूर्ताननु पञ्चदशाशीतीः । एवमेतां त्रयीं विद्यामात्मन्नावपते । आत्मन् कुरुते । सोऽत्रैव सर्वेषां भूतानामात्मा भवति छन्दोमयः, स्तोममयः, प्राणमयः, देवतामयः । स एतन्मय एव भूत्वोर्ध्व उत्क्रामति ॥

तस्यैषा प्रतिष्ठा य एष तपति । एतस्माद्वेवाधिचीयते । एतस्मिन्नधिचीयते । आत्मन एवैनं तन्निर्मिमीते । आत्मनः प्रजनयति । स यदैवंविदस्मा-

(१) शब्रा. १०।२।५।१.

(१) शब्रा. १०।४।२।२९-३१.

ल्लोकात्प्रैति, अथैतमेवात्मानमभिसंभवति - छन्दोमयं, स्तोममयं, प्राणमयं, देवतामयम् । स एतन्मय एव भूत्वोर्ध्व उत्क्रामति य एवं विद्वानेतत्कर्म कुरुते, यो वैतदेवं वेद ॥

- यत्प्रजापतेरुखायां सिक्ते स्वात्मनि संवत्सराग्निरूपे परिश्रियज्जुष्मतीष्टकोपधानेनादित्ये प्रतिष्ठितत्वं, तत्सर्वमिदानीन्तने यजमाने योजयितुं प्रस्तौति– सः यदग्निं चेष्यमाणो दीक्षत इति । स अनुष्ठाता यत् यदा अग्निं इष्टकाभिः चेष्यमाणः । हेतौ शानच् प्रत्ययः । चयनाद्धेतोः दीक्षते, तदा प्रजापतिवत् सर्वमनुष्ठातव्यं, फलं च तस्य तद्वदेवेत्याह– यथैव तत्प्रजापतिरित्यादिना आत्मन एवैनं निर्मिमीत आत्मनः प्रजनयति इत्यन्तेन । पूर्ववत् व्याख्येयम् । अयमत्र विशेषः– प्रजापतिवृत्तान्तस्य भूतत्वादाख्यातानां भूतकालेऽर्थे अनद्यतने लङ्, अत्र तु वर्तमानप्रयोग इति । उक्तमर्थजातं विदुषः फलमाह– स यदैवंविदस्माल्लोकात् प्रैतीति । वेदितृनुष्ठात्रोरयं विशेषः एकदा ज्ञात्वाऽनुष्ठाने फलम् । ज्ञानमात्रे तु यावज्जीवम् । एवं कर्मणो भावनायां फलमिति । अत एव ज्ञानपूर्वककर्मानुष्ठानं केवलं च ज्ञानमित्युभयं दर्शितम्– य एवं विद्वानेतत् कर्म कुरुते यो वैतदेवं वेदेति । शब्रासा.

चेलक उ ह स्माऽऽह शाण्डिल्यायनः । इम एव लोकास्तिस्रः स्वयमातृण्णावत्यश्चितयः । यजमानश्चतुर्थी । सर्वे कामाः पञ्चमी । इमांश्च लोकान्संस्कुर्व आत्मानं च, सर्वांश्च कामानित्येव विद्यादिति ॥

- इदानीं प्रकारान्तरेण पञ्चचितिरूपसंपत्तिं तथैवोपासनां दर्शयति– चेलक उ ह स्माऽऽह शाण्डिल्यायन इति । शाण्डिल्यपुत्रश्चेलको नामर्षिरेवमाह– इमे त्रयो लोकाः एव अग्नेः स्वयमातृण्णावत्यः तिस्रश्चितयः । स्वयमातृण्णा नाम सहजच्छिद्रयुक्तपाषाणेष्टकाः । ताश्च तिसृषु प्रथममध्यमोत्तमासु चितिषु उपधीयन्ते । यजमानः कर्ता चतुर्थी चितिः । सर्वे कामाः पञ्चमी चितिः । एवमिमांस्त्रींल्लोकान्, सर्वान् कामान्, आत्मानं, पञ्चचित्यात्मना संस्कुर्वे इति ध्यायेदिति । शब्रासा.

सोऽयमात्मा त्रेधा विहित एव । सोऽनेन त्रेधा विहितेनाऽऽत्मनैतं त्रेधा विहितं दैवममृतमाप्नोति । ता उ सर्वा इष्टका इत्येवाऽऽचक्षते, नेष्टक इति, नेष्टकमिति, वाचो रूपेण । वाग्घ्येवैतत्सर्वं यत् स्त्री, पुमान्, नपुंसकम् । वाचा ह्येवैतत्सर्वमाप्तम् । तस्मादेना 'अङ्गिरस्वद्ध्रुवा सीद' ( शुसं. १२।५३ ) इत्येव सर्वाः सादयति । नाङ्गिरस्वद्ध्रुवः सीदेति । नाङ्गिरस्वद्ध्रुवं सीदेति । वाचं ह्येवैतां संस्कुरुते ॥

सोऽयमात्मा पुरुषः त्रेधा विहितः, लिङ्गत्रयशब्दाभिहिताङ्गयुक्तः । अनेन त्रेधा विहितेनाऽऽत्मना त्रिविधेष्टकाचितेन त्रेधा विहितं अग्निवायुसूर्यात्मना त्रिविधं दैवममृतं आदित्यमाप्नोति । तद्यदि इष्टकानां स्त्रीपुंनपुंसकलिङ्गशब्दाभिधेयत्वं, तर्हि तथैव कथमिष्टकाशब्दस्य लिङ्गत्रयव्यवहारो नास्तीत्याशङ्क्य वाग्रूपत्वेन परिहरति– ता उ सर्वा इष्टका इत्येवाऽऽचक्षत इति । स्त्रीलिङ्गशब्देनैव व्यवह्रियन्ते, न तु पुंनपुंसकलिङ्गाभ्यामिति । तदनुवदति– नेष्टक इति, नेष्टकमिति । किमर्थमेवं, वाचो रूपेण । वाचः स्त्रीलिङ्गत्वं स्फुटम् । सादनमन्त्रेऽपि स्त्रीलिङ्गत्वमेवेत्याह– तस्मादेना अङ्गिरस्वद्ध्रुवा सीदेति । ध्रुवशब्दात् स्त्रियां टाप् प्रत्ययः । पुंनपुंसकलिङ्गतां ध्रुवपदेन संयोज्य प्रदर्शयति निराकरणाय– नाङ्गिरस्वद्ध्रुवः सीदेति, नाङ्गिरस्वद्ध्रुवं सीदेति । ध्रुव इति पुंल्लिङ्गत्वं, ध्रुवमिति नपुंसकत्वम् । इत्येवमग्नेर्वाग्रूपत्वमुक्तम् । शब्रासा.

सा वा एषा वाक् त्रेधा विहिता– ऋचः, यजूंषि, सामानि । मण्डलमेवर्चः, अर्चिः सामानि, पुरुषो यजूंषि । अथैतदमृतं यदेतदर्चिर्दीप्यते । इदं तत्पुष्करपर्णं तद्यत्पुष्करपर्णमुपधायाग्निं चिनोति । एतस्मिन्नेवैतदमृत ऋङ्मयं यजुर्मयं साममयमात्मानं संस्कुरुते । सोऽमृतो भवति ॥

( १ ) शब्रा. १०।४।५।२.

( १ ) शब्रा. १०।५।१।३.

( २ ) शब्रा. १०।५।१।५.

यदुक्तं विद्यया अस्मादित्यस्योर्ध्वमग्निश्रितो भवतीति तद्विशदयति– सा वा एषा वाक् त्रेधा विहितेति। सूर्यमण्डले तावत्रीणि विद्यन्ते ज्योतिर्मयमण्डलं, अर्चींषि, तदन्तर्वर्ती पुरुषः इति। चयनेऽपि वेदत्रयमस्ति। तत्र मण्डलमेव ऋग्रूपत्वेनोपासनीयं, आर्चिः एव सामरूपत्वेन, अन्तर्वर्ती अग्निपुरुषः एव यजूरूपत्वेन। अर्चिर्दीप्यते इति यत् तदेतदमृतं, तत् पुष्करपर्णम्। यतः 'अपां पृष्ठमसि' (शुसं. १३।२) इति मन्त्रेण प्रथमं पुष्करपर्णमुपधाय तस्योपर्यग्नेश्चयनं, अतस्तदात्मके अमृते अर्चिर्मये आदित्ये अयमुपासिता स्वीयमात्मानं वेदत्रयरूपं चित्याग्निरूपं संस्कुर्वन् अमृतः मृत्युबाधारहितः सूर्यात्मको भवतीत्यर्थः। शब्रासा.

यद्वै यजमानोऽग्निं चिनुते। अमुष्मै तल्लोकाय यज्ञेनाऽऽत्मानं संस्कुरुते॥

दर्शपूर्णमासहवनेन यजमानसंस्कारो मृत्योरुपरिष्टात् परलोके नवजन्मरूपः

अथ यद्वषट्कृते जुहोति। एष वै वषट्कारो य एष तपति। स एष मृत्युः। तदेनमुपरिष्टान्मृत्योः संस्करोति। तदेनमतो जनयति। स एतं मृत्युमतिमुच्यते। यज्ञो वा अस्याऽऽत्मा भवति। तद्यज्ञ एव भूत्वैतन्मृत्युमतिमुच्यते। एतेनो ह्यस्य सर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः॥

वषट्कारानन्तरभाविनं होमविधिमनूद्य प्रशंसति– अथेति। य एष सूर्यः तपति अन्तरिक्षलोके एष एव वषट्कारः। स एष वषट्कारात्मकः सूर्यः मृत्युः। तमतिक्रम्य होमेन एनं यजमानं मृत्योरुपरिष्टात् संस्करोति। तदेनं अतः अस्माद्धोमात् जनयति। जातश्च यजमानः एतं मृत्युं अतिमुच्यते मृत्युगोचरान्मुक्तो भवति। तत्र कारणमाह– यज्ञो वा अस्येति। अस्य यजमानस्य यज्ञः खलु आत्मा शरीरं भवति। तत् तस्मात् यज्ञशरीरात्मको भूत्वा वषट्कारात्मकं मृत्युं अतिमुच्यते। यतः सर्वेषु यज्ञक्रतुषु वषट्कृते होमः। एतेनैव हेतुना अस्य यजमानस्य सर्वे यज्ञक्रतवः यज्ञा दर्शपूर्णमासादयः, यूपवन्तः क्रतवः, उभयविधाश्चैते वषट्कारात्मकाः एतं मृत्युं अतिमुक्ताः अतिक्रम्यावस्थिताः। शब्रासा.

अथ यामेतामाहुतिं जुहोति। एषा ह वा अस्याहुतिरमुष्मिँल्लोक आत्मा भवति। स यदैवंविदस्माल्लोकात्प्रैति। अथैनमेषाऽऽहुतिरेतस्य पृष्ठे सत्याह्वयति। एहि, अयं वै त इहात्माऽस्मीति। तद्यदाह्वयति तस्मादाहुतिर्नाम॥

अथाहुतिशरीरत्वं यजमानस्य प्रतिपादयति– अथ यामेतामिति। स्वाहाकारेण वा वषट्कारेण वा या एषा यज्ञेषु आहुतिर्हूयते, एषा खलु अमुष्मिन् स्वर्गे लोके अस्य यजमानस्य आत्मा शरीरम्। एवंवित् उक्तार्थवित् सः यजमानः यदा अस्मात् भूलोकात् प्रैति प्रगच्छति, अथ तदा एतस्य यजमानस्य पृष्ठे पश्चाद्भागे सती भवन्ती एषा आहुतिः आह्वयति, हे यजमान, एहि आगच्छ, ते त्वदीयः आत्मा अहं इह अस्मिन् स्थाने अस्मि भवामि, अत आगच्छेति। अत एवाऽऽथर्वणिकैराम्नायते 'एह्येहीति ता आहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं भक्षयन्ति' इति। आहुतिनामनिर्वचनं करोति– तद्यदाह्वयतीति। शब्रासा.

प्रणीताप्रणयनं शिरःसंस्कारः

[2]शिरो ह वा एतद्यज्ञस्य यत्प्रणीताः। स यत्प्रणीताः प्रणयति। शिर एवैतद्यज्ञस्य संस्करोति। स विद्याच्छिर एव म एतत्संक्रियत इति॥

अथोपासनार्थं यज्ञशरीरावयवत्वेन प्रणीतादीनामनुष्ठेयपदार्थानां अधियज्ञमध्यात्मं च संपत्तिं कथयति– शिरो ह वा एतद्यज्ञस्येत्यादिना। प्रणीताख्या या आपः आहवनीयस्योत्तरतो निधीयन्ते, एतद्यज्ञस्य शिरः इति तेन ज्ञातव्यं तत्र। सः अध्वर्युः प्रणीताः प्रणयति इति यदस्ति, एतत् एतेन यज्ञस्य शिर एव संस्करोति विशिष्टाकृतिमर्त् करोति। 'संपर्युपेभ्यः' (पा. सू. ६।१।१३७) इति कृञः सुट्। अध्यात्ममनुसंधानं विधत्ते– स विद्याच्छिर एव म इति। यजमानः विद्यात् जानीयात्। कथमिति

(१) शब्रा. १३।८।१।१७.
(२) शब्रा. ११।२।२।५.

(१) शब्रा. ११।२।२।६.
(२) शब्रा. ११।२।६।१.

तदुच्यते– एतत् प्रणीतात्मकं संक्रियमाणं यज्ञसंबन्धि शिर एव मदीयं शिर इति । शब्रासा.

ब्रह्मचर्यव्रतमात्मसंस्कारः

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत् । सोऽब्रवीत् । अस्तु मह्यमप्येतस्मिन् भाग इति । यामेव रात्रिं समिधं नाऽऽहराता इति । तस्माद्यां रात्रिं ब्रह्मचारी समिधं नाऽऽहरत्यायुष एव तामवदाय वसति । तस्माद्ब्रह्मचारी समिधमाहरेत् । नेदायुषोऽवदाय वसानीति ॥

अथाग्निहोत्रादिनियमप्रसङ्गादागतं ब्रह्मचारिधर्मं निरूपयितुमाख्यायिकामाह– ब्रह्म वै मृत्यव इति । जगत्कारणं ब्रह्म सर्वाः प्रजाः सृष्ट्वा तस्मै मृत्यवे ताः प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेकमेव न प्रायच्छत् । सः मृत्युरब्रवीत्– एतस्मिन् ब्रह्मचारिण्यपि मह्यं भागोऽस्त्विति । ततो ब्रह्मणा उक्तम्– यामेव रात्रिं असौ ब्रह्मचारी समिधं नाऽऽहरातै समिदाहरणमग्न्यर्थं न कुर्यात्, सा रात्रिस्तव भागोऽस्त्विति । इत्थमाख्यायिकासिद्धमर्थं श्रुतिः स्वयमेव व्याचष्टे– तस्माद्या रात्रिमिति । यस्मादेवं ब्रह्मणा भागत्वेन परिकल्पितं तस्मात् यां रात्रिं ब्रह्मचारी समिधमग्न्यर्थं नाहरति, आयुषः सकाशादेव तां रात्रिमवदाय अवखण्ड्य वसति । यस्मादेवं दोषः, तस्माद्ब्रह्मचारी सर्वदा रात्रौ समिधमाहरेत्, नैवाऽऽयुषो जीवनात् तां रात्रिमवखण्ड्य वसानीत्यभिप्रायेण । शब्रासा.

दीर्घसत्रं वा एष उपैति । यो ब्रह्मचर्यमुपैति । स यामुपयन् समिधमादधाति, सा प्रायणीया । यां स्नास्यन्, सोदयनीया । अथ या अन्तरेण सत्र्या एवास्य ताः । ब्राह्मणो ब्रह्मचर्यमुपयन्— ॥ चतुर्धा भूतानि प्रविशति । अग्निं पदा । मृत्युं पदा । आचार्यं पदा । आत्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥

ब्रह्मचर्यधर्माचरणं सत्रयागात्मना निरूपयति– दीर्घसत्रं वा एष उपैतीति । दीर्घं चिरसाध्यं सत्रं यागः दीर्घसत्रम् । यः ब्रह्मचर्याश्रमविहितं कर्म ब्रह्मचर्यं, तद्ब्रह्मचर्यमुपैति एषः दीर्घसत्रमेवोपैति उपगच्छति । तत्र प्रायणीयोदयनीये संपादयति– स यामुपयन्निति । उपयन् प्रथमं गुरुसमीपमुपगच्छन् उपनयनकाले यां समिधमग्नावादधाति, सैव समित्प्रायणीयेष्टिः । स्नास्यन् स्नानं करिष्यन् यां समिधमादधाति, सैव समित् उदयनीयेष्टिः । अथ याः समिधः अन्तरेण तयोर्मध्ये अग्नावादधाति, ताः सत्र्याः सत्रियाः सत्रसंबन्धिन्यः समिधः । एवं समिदाधानं सत्रयागात्मना स्तुत्वा आत्मनिष्क्रयहेतुत्वेनापि स्तौति– ब्राह्मणो ब्रह्मचर्यमुपयन्निति । उपयन् उपगच्छन् । चतुर्धा चतुर्विधेन । पदा पादेन चतुर्थांशेन । आचार्यं सावित्रीप्रदानपुरःसरं अध्यापयितारम् । स्मर्यते हि– 'उपनीय गुरुः शिष्यं वेदमध्यापयेत् द्विजम् । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' ( मस्मृ. २।१४० ) इति । आत्मन्येवेत्यादि । आत्मनि स्वस्मिन्नेव अस्य ब्रह्मचारिणः चतुर्थः पादः परिशिष्यते । अतः स्वरूपहानिशङ्का न कार्येति भावः । शब्रासा.

स यदग्नये समिधमाहरति । य एवास्याग्नौ पादः, तमेव तेन परिक्रीणाति । तं संस्कृत्याऽऽत्मन् धत्ते । स एनमाविशति ॥

तत्र समिदाधानेनाग्नौ प्रविष्टस्य चतुर्थांशस्य परिक्रयं दर्शयति– स यदग्नय इति । परिक्रीणाति समिधो मूल्यत्वेन अग्नये समर्प्य स्वकीयं तुरीयमंशं पुनरादत्ते । यतः पदा अंशेन समिदाधानेन च संस्कृत्य उत्कृष्टं कृत्वा पुनः आत्मन् आत्मनि स्वरूपे धारयति । स भागोऽप्यग्नेः सकाशात् प्रतिनिवृत्य एनं ब्रह्मचारिणं आविशति । शब्रासा.

अथ यदात्मानं दरिद्रीकृत्येवाह्रीर्भूत्वा भिक्षते । य एवास्य मृत्यौ पादः, तमेव तेन परिक्रीणाति । तं संस्कृत्याऽऽत्मन् धत्ते । स एनमाविशति ॥

मृत्यौ प्रविष्टस्य पादस्य परिक्रयार्थत्वेन भिक्षाचर्यं विधत्ते– अथ यदात्मानमिति । अथ उपनयनानन्तरं आत्मानं दरिद्रीकृत्य दरिद्रमिव कृत्वा अह्रीः लज्जारहितः भूत्वा भिक्षेत वृत्त्यर्थं याचेत । य एवास्येत्यादि पूर्ववद्योज्यम् । शब्रासा.

( १ ) शब्रा. ११।३।३।१–७.

अथ यदाचार्यवचसं करोति । यदाचार्याय कर्म करोति । य एवास्याऽऽचार्ये पादः, तमेव तेन परिक्रीणाति । तं संस्कृत्याऽऽत्मन् धत्ते । स एनमाविशति ॥

आचार्यगतस्य पादस्य तत्परिचर्यया परिक्रयणं दर्शयति– अथ यदाचार्यवचसमिति । आचार्यवाक्यं, तत्र युक्तायुक्तचिन्ता न कार्येत्यर्थः । तथा तस्मै आचार्याय पादसंवाहनादिलक्षणं परिचर्यारूपं कर्म करोति इति च यदस्ति, तेनेति संबन्धः । गतमन्यत् ।

शत्रासा.

न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षां जयत्यप ज्ञातीनामशनायामप पितॄणाम् । स एवं विद्वान्यस्या एव भूयिष्ठं श्लाघेत, तां भिक्षेतेत्याहुः । तल्लोक्यमिति । स यद्यन्यां भिक्षितव्यां न विन्देत्, अपि स्वामेवाऽऽचार्यजायां भिक्षेत । अथो स्वां मातरम् । नैनं सप्तम्यभिक्षिताऽतीयात् । तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा आविशन्ति । यथा ह वा अग्निः समिद्धो रोचते, एवं ह वै स स्नात्वा रोचते । य एवं विद्वान् ब्रह्मचर्यं चरति ॥

ब्रह्मचर्यायां क्रियमाणस्य परिचरणस्य परिक्रयार्थत्वमुक्तं, इदानीं समृद्ध्यादिहेतुतामप्याह—न ह वा इति । न खलु स्नात्वा स्नानेन गुरुकुलात् प्रतिनिवृत्य भिक्षेत । कस्य हेतोः ? स्नानानन्तरं हि भिक्षाभक्षणं अपजयति अतिक्रामति । पुनस्तस्य याचनखेदो न भवतीत्यर्थः । न केवलं स्वस्यैवैतत्फलं, अपि तु स्वधर्म्याणां सर्वेषामित्याह– अप ज्ञातीनामिति । ज्ञातीनां सगोत्रजानां संबन्धिनी या अशनाया अशनेच्छा क्षुत्पिपासा तामपि अपजयति । तथा पितॄणां संबन्धिनीमपि अशनायामपजयति । अशनशब्दात् क्यचि 'अशनायोदन्यधनाया बुभुक्षापिपासा० ' ( पा. सू. ७।४।३४ ) इति निपात्यते । स एवं विद्वानित्यादि । एवं उक्तरीत्या भिक्षाचरणस्य माहात्म्य विद्वान् सः ब्रह्मचारी यस्या एव भिक्षितायाः स्त्रियः सकाशात् भूयिष्ठं बहुतरमन्नं लभ्यते इति श्लाघेत, तां भिक्षेत इत्याहुः अभिज्ञाः कथयन्ति । तत्र निमित्तमप्याह– तल्लोक्यमिति । यद्धि भूयिष्ठमन्नं भिक्षातो लब्धं, तदेव हि स्नानादूर्ध्वमतिवृद्धं सत् लोक्यं लोकहितं भवति । भिक्षितव्याभावात् भिक्षालोपशङ्का न कार्येत्याह– स यद्यन्यामिति । निगदसिद्धमेतत् । नैनं सप्तमीत्यादि । सप्तमी सप्तसंख्यापूरणी रात्रिः अभिक्षिता भिक्षाचरणरहिता सती एनं ब्रह्मचारिणं नातीयात् नातिक्रामेत् । सर्यते अतिक्रमणे महान् दोषः– ' अकृत्वा भैक्ष्यचरणमसमिध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ ' (मस्मृ. २।१८७ ) इति । विदुषो ब्रह्मचारिणः फलमाह– तमेवं विद्वांसमिति । उक्तमर्थजातं विद्वांसं जानन्तं, ज्ञात्वा च एवमेव समिदाहरणादीनि चरन्तं कुर्वन्तम् । स्नात्वा समावर्तनं कृत्वा । रोचते दीप्यते । स्पष्टमन्यत् ।

शत्रासा.

अथर्ववेदविदा आचार्येण संस्कृतस्यैव अन्यवेदाधिकारः

व्यासः पुरोवाच । भृग्वङ्गिरोविदा संस्कृतोऽन्यान् वेदानधीयीत । नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत । अथ सामवेदे खिलश्रुतिः— ब्रह्मचर्येण चैतस्मादथर्वाङ्गिरसो ह यो वेद (१द) स वेद सर्वमिति ब्राह्मणम् ॥

यज्ञसंस्कारः अथर्ववेदविदो ब्रह्मणो मनसा

प्रजापतिर्यज्ञमतनुत । स ऋचैव हौत्रमकरोत् । यजुषाध्वर्यवम् । साम्नौद्गात्रम् । अथर्वाङ्गिरोभिर्ब्रह्मत्वम् । तं वा एतं महावादं कुरुते । यद्दचैव हौत्रमकरोद्यजुषाऽऽध्वर्यवं साम्नौद्गात्रमथर्वाङ्गिरोभिर्ब्रह्मत्वं, स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यतरः पक्षः संस्क्रियते । मनसैव ब्रह्मा यज्ञस्यान्यतरं पक्षं संस्करोति । अयमु वै यः पवते स यज्ञः । तस्य मनश्च वाक् च वर्तनिः । मनसा चैव हि वाचा च यज्ञो वहति । अत एव मन इयमेव वाक् । स यद्ब्रह्मास्ति विद्यादर्धं मेऽस्य यज्ञस्यान्तरगादिति । तद्यथैकपात् पुरुषो यन्नेकचक्रो वा रथो वर्तमानो भ्रेषं न्येत्येवमेवास्य यज्ञो भ्रेषं न्येति । यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति ॥

( १ ) गोब्रा. १।१।२९.
( २ ) गोब्रा. १।३।२.

दक्षिणात्मको यज्ञसंस्कारः

[1]यन्माध्यंदिने सवने दक्षिणा नीयन्ते, स्वर्गस्य लोकस्य समष्ट्यै । बहुदेयं सेतुं वा एतत् यजमानः संस्कुरुते, स्वर्गस्य लोकस्याऽऽक्रान्त्यै प्रजाक्रान्त्यै ॥

शिल्पाख्यशस्त्रैरात्मसंस्कारः

[2]शिल्पानि शंसति, यदेव शिल्पानि, एतेषां वै शिल्पानामनुकृतिर्हि शिल्पमधिगम्यते । हस्ती कंसो वासो हिरण्यमश्वतरी रथशिल्पं, शिल्पं हास्य समधिगम्यते । य एवं वेद यदेव शिल्पानि शंसति, तत् स्वर्गस्य लोकस्य रूपम् । यद्वेव शिल्पानि, आत्मसंस्कृतिर्वै शिल्पान्यात्मानमेवास्य तत् संस्कुर्वन्ति ॥

वृषाकपिस्तोत्रेण यजमानसंस्कारः

[3]वृषाकपिं शंसति, आत्मा वृषाकपिः, आत्मानमेवास्य तत् कल्पयति । तन्न्यूङ्ख इति, अन्नं वै न्यूङ्खः, अन्नाद्यमेवास्मै तत् संप्रयच्छति, यथा कुमाराय जाताय स्तनम् । स पाङ्क्तो भवति, पाङ्क्तो ह्ययं पुरुषः पञ्चधा विहितः लोमानि त्वगसृङ्मांसमस्थिमज्जा मस्तिष्कम् । स यावानेव पुरुषस्तावन्तं यजमानं संस्कृत्याच्छायाकाय संप्रयच्छति ॥

यज्ञक्रतुना यजमानसंस्कारो यजमानस्य नवजन्मनिर्माणरूपः

[4]यजमानं वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति । स यथा गर्भो योन्यामन्तरेव संभवच्छेते । न ह वै सकृदेवा अग्रे सर्वं संभवति । एकैकं वाऽङ्गं संभवति ॥

त्रय्या विद्यया संस्कृतो निर्मितः पुरुषः, तस्याऽऽत्मा महाव्रतम्

[5]यमेवैतमृग्मयं यजुर्मयं साममयं पुरुषं संस्कुर्वन्ति, तस्यैष आत्मा यन्महाव्रतम् ॥

त्रय्या विद्यया संस्कृतो निर्मित आत्मा

[6]तदेतदैष्टिकं कर्म । यमात्मानमध्वर्युः संस्करोति, तस्मिन्यजुर्मयं प्रवयति । यजुर्मयं ऋङ्मयं होता । ऋङ्मये साममयमुद्गाता । [ साममये ] स एष त्रय्यै विद्याया आत्मा । एष उ एवैतदिन्द्रस्याऽऽत्मा भवति य एवं वेद ॥

## पाकयज्ञाः

[1]यद्वै चातुर्मास्यानां पाकयज्ञस्यैव, तदेषां पशव्यम् । पशव्यो गृहमेधः । न प्रयाजान् यजति नानुयाजान् । न सामिधेनीरन्वाह । आज्यभागौ यजति यज्ञवास्तौ । अग्नये समवद्यति । ... इडामुपह्वयन्ते । ...... निष्कापं निदधाति ॥

[2]यद्वै चातुर्मास्यानां पाकयज्ञस्यैव, तदेषां पशव्यम् । गृहमेध्यो वै पाकयज्ञः । न प्रयाजा इज्यन्ते नानुयाजाः । न सामिधेनीरन्वाह । आज्यभागौ यजति । तेन यज्ञः क्रियते । अग्नये समवद्यति । ...... इडामुपह्वयन्ते । निष्कापो निधीयते ॥

[3]इळामुपह्वयते । इळाविधा वै पाकयज्ञाः । इळामेवानु ये के च पाकयज्ञास्ते सर्वेऽग्निष्टोममपियन्ति ॥

दीक्षणीयेष्टिगतचोदकप्राप्तेडोपाह्वानसादृश्येन पाकयज्ञानामग्निष्टोमप्राप्तिं दर्शयति– इळामुपह्वयत इति । पाकयज्ञाश्च सप्तसंख्याकाः हुतः, प्रहुतः, आहुतः, शूलगवः, बलिहरणं, प्रत्यवरोहणं, अष्टकाहोमः इति । सोऽयं सूत्रान्तरकारस्य पक्षः । आश्वलायनस्तु हुतादींस्त्रीनेव पाकयज्ञानाह । ते च पाकयज्ञाः इळाविधाः इळासदृशाः, 'इळा खलु वैषा पाकयज्ञः' इति श्रुत्यन्तरात् । ततो दीक्षणीयेष्टौ इडोपाह्वानेन तत्सदृशाः पाकयज्ञाः सर्वेऽप्यग्निष्टोमं प्राप्नुवन्ति । ... ऐत्राह्म.

[4]एतेन वै सर्वान् यज्ञान् प्रणयन्ति, ये च पाकयज्ञाः, ये चेतरे ॥

[5]अमौ हि सर्वान् यज्ञांस्तन्वते– ये च पाकयज्ञाः, ये चेतरे ॥

( १ ) गोब्रा. २।३।१७. ( २ ) गोब्रा. २।३।७.
( ३ ) गोब्रा. २।६।८. ( ४ ) गोब्रा. २।६।९.
( ५ ) शाब्रा. २।१. ( ६ ) शाब्रा. ४।६.

( १ ) मैसं. १।१०।१५ ( ४० ).
( २ ) काठसं. ३६।९ ( १७ ).
( ३ ) ऐब्रा. १।४।२.
( ४ ) शाब्रा. १।४।२।१०.
( ५ ) शाब्रा. ४।५।१।१२.

एते यज्ञं क्षण्वन्ति ये मध्ये यज्ञस्य पाकयज्ञिय-येडया चरन्ति । ब्रह्मा वा ऋत्विजां भिषक्तमः । तद्ब्रह्मा संदधाति ॥

क्षण्वन्ति हिंसन्ति । ये मध्ये यज्ञस्य पाकयज्ञियया पाकयज्ञार्हया विलक्षणया इडया चरन्ति । पाकयज्ञेषु हुतशेषो भक्ष्यते, इडाहुतशेषो भक्ष्यते, तेन पाकयज्ञार्हे-त्युच्यते । ब्रह्मा वा ऋत्विजां भिषक्तमः अतिशयेन यज्ञस्य चिकित्सिता। स हि प्रायश्चित्तैर्यज्ञं भिषज्यतीत्यभि-प्रायः । ततः किम् ? यत् वाचंयमो भवति, तत् तेन ब्रह्मा यज्ञं संदधाति । शब्रासा.

सोऽर्चन् श्राम्यंश्चचार प्रजाकामः । तत्रापि पाकयज्ञेनेजे । स घृतं दधि मस्त्वामिक्षामित्यप्सु जुहवाञ्चकार । ततः संवत्सरे योषित् संबभूव ॥

सोऽर्चन् श्राम्यन् तपस्तप्तवान् प्रजाकामः । तत्रापि स मनुः पाकयज्ञेन अनेन ईजे इष्टवान् घृतादिभिः । ततः तस्मात्पाकयज्ञादेव संवत्सरे पूर्णे योषित् मिश्रीभावात्मिका संभूता । शब्रासा.

एतद्ध वै मनुर्बिभयाञ्चकार– इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया ॥

निर्ल्पार्थवादोऽयम् । बिभयाञ्चकार भीतः । तनिष्ठं तनुतमम् । पाकयज्ञिया पाकयज्ञार्हा । मनुष्यप्रधानत्वात् मन्दतरवीर्येत्यभिप्रायः । शब्रासा.

तदु होवाच याज्ञवल्क्यः– न वै यज्ञ इव मन्तवै, पाकयज्ञ इव वा इति । इदं हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोति । अथैतदग्नौ हुत्वो-सृप्याऽऽचामति, निर्लेढि, तदस्य पाकयज्ञस्येवेति । तदस्य तत्पशव्यं रूपम् । पशव्यो हि पाकयज्ञः ॥

अस्याग्निहोत्रस्य याज्ञवल्क्याभिमतं पाकयज्ञत्वमुप-न्यस्यति– तदु होवाचेति । न खल्वग्निहोत्रहोमो दर्शपूर्ण-मासादियज्ञवत् केवलयज्ञत्वेन मन्तव्यः, अयं खलु पाकयज्ञ इव भवति । इतिशब्दो वाक्यसमाप्तौ । एतदुपपादयति– इदं हीति । इदं खलु अग्निहोत्रं वक्ष्यमाणरूपं, तत्र पयःन्या-वदानादिकं ( कर्म ) केवलो यज्ञधर्मः । अग्नौ किंचिद्धुत्वा किंचिदवशेषमुत्सृप्य बहिर्निर्गम्य आचमननिर्लेहनादिकः पाकयज्ञधर्मः तस्माग्निहोत्रस्य पाकयज्ञस्य सतो रूपम् । अस्त्वेवं, किं ततः इत्याह– तदस्येति । तत् पाकयज्ञियं अस्य अग्निहोत्रस्य रूपं पशव्यं पशुभ्यो हितं, पशुप्राप्ति-साधनमित्यर्थः । शब्रासा.

अथाप्येष प्राक्रीडितः श्लोकः प्रत्यभिवदति सप्त सुत्याः सप्त च पाकयज्ञा इति ॥

सायंप्रातर्होमौ स्थालीपाको नवश्च यः ।
बलिश्च पितृयज्ञश्चाष्टका सप्तमः पशुरित्येते पाकयज्ञाः ॥

सप्त सुत्याः सप्त च पाकयज्ञाः
हविर्यज्ञाः सप्त तथैकविंशतिः ।
सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति
नूतना यानृषयो सृजन्ति, ये च सृष्टाः पुराणैः ॥

## बौधायनगृह्यसूत्रम्

सर्वेषां गृह्यकर्मणां गर्भाधानादिसंस्कारसहितानां पाकयज्ञेषु सप्तसु समावेशनम्

यथो एतद्धुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्था इति ॥

ता अनु व्याख्यास्यामः ॥

तत्र यद्धूयते स हुतो यथैतद्विवाहः सीमन्तो-न्नयनं चेति ॥

तत्र हि हूयत एव ॥

अथ यद्धुत्वा दीयते स प्रहुतो यथैतज्जातकर्म चौलं चेति ॥

तत्र हि हुत्वा दीयत एव ॥

अथ यद्धुत्वा दत्त्वा चादीयते स आहुतो यथैतदुपनयनं समावर्तनं चेति ॥

( १ ) शब्रा. १।७।४।१९.
( २ ) शब्रा. १।८।१।७.
( ३ ) शब्रा. १।८।१।१६, १८.
( ४ ) शब्रा. २।३।१।२१.

( १ ) गोब्रा. १।१।१२.
( २ ) गोब्रा. १।५।२३.
( ३ ) गोब्रा. १।५।२५.
( ४ ) बौगृ. १।१।१-१२.

तत्र हि हुत्वा दत्त्वा चादीयते ॥
अथ यच्छूलेपूपनीय गव्यानि श्रपयन्ति स शूलगवः ॥
अथ यत् गृह्याभ्यो देवताभ्योऽन्नं संप्रकिरन्ति तत् बलिहरणम् ॥
अथ यद्दतो ऋतुं प्रत्यवरोहन्ति तत् प्रत्यवरोहणम् ॥
अथ यदेकाष्टकायामन्नं क्रियते सोऽष्टकाहोम इति ॥

गर्भाधानादीनां संस्काराणामकरणे कालातिपाते वा प्रायश्चित्तम्

अथ गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचोलोपनयनादि कार्यं न कारयेदिति समानं कर्म । 'ततं म आपः', 'यत्पाकत्रा' मनस्वती, मिन्दाहुती, महाव्याहृतीः, व्याहृतयश्च प्रायश्चित्तं जुहुयादिति ॥
कालातिक्रमे प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती जुहुयादिति ॥
व्याहृतिपूर्वकं चेति सर्वेषां समानमाचार्या ब्रुवते ॥
तत्रोदाहरन्ति—पक्वं सौविष्टकृतमाज्यं प्रणीताप्रणयनं ब्रह्माणमिध्माबर्हिरेकमिति विज्ञायत इति हि ब्राह्मणमिति हि ब्राह्मणम् ॥

## आश्वलायनगृह्यसूत्रम्

सर्वेषां गृह्यकर्मणां गर्भाधानादिसंस्कारसहितानां पाकयज्ञेषु त्रिषु समावेशनम् *, पाकयज्ञस्वरूपं च

उक्तानि वैतानिकानि । गृह्याणि वक्ष्यामः ॥

(१) उक्तानि व्याख्यातानि कथितानि । कानि । वैतानिकानि । क उक्तानि । 'अग्न्याधेयप्रभृतीन्याह वैतानिकानि' (आश्रौ. १।१।२) इत्येवमारभ्य 'इति सत्राणि' (आश्रौ. १२।१५।६) इत्येवमन्तानि । उक्तस्यानुकीर्तने किं प्रयोजनम् । प्रवृत्तिरेषा आचार्यस्य—उत्तरार्थविवक्षया उक्तस्यानुकीर्तनं करोति । तद्यथाऽन्यत्रापि 'उक्ता देवताः' (आश्रौ. १।६।१) 'प्रदानानां उक्ताः प्रैषाः' (आश्रौ. ३।७।१) इति । यद्येवं, तत्र उक्तशब्दस्य प्रयोजनवत्त्वादिहापि प्रयोजनेन भवितव्यम् । इह तर्हि एतत्प्रयोजनम्—उक्तान्येव वैतानिकानि । वक्ष्यमाणानां वैतानिकसंज्ञा निवर्तयति— गृह्याणि इति । संज्ञान्तरोपदेशात् न भविष्यति । संज्ञासमावेशदर्शनात् उभयसंज्ञाप्रवृत्तिः स्यात् । को दोषः । 'एतस्य समाम्नायस्य' (आश्रौ. १।१।१) इति योऽयं नियमः प्रारब्ध, स एतेषामपि प्रसज्ज्येत, वैतानिकसंज्ञालाभात् । सति नियमे 'ममाग्ने वर्च.' (ऋसं. १०।१२८।१) इति यथैव नवको वैश्वदेवः प्रयुज्यते एवमिहापि प्रसज्ज्येत । 'ममाग्ने वर्चः इति प्रत्यृचं समिधः' (आगृ. ३।९।२) इति इह दशर्चमिष्यते । अग्न्याधेयोत्तरकालं च प्रसङ्गः स्यात्, तत्प्रभृतित्वात् कर्मणाम् । तस्माद्वैतानिकसंज्ञा निवर्तयितव्या । यद्येवं अप्राप्तत्वात् संज्ञायाः नैव निवर्तयितव्या । कथमप्राप्ता । शास्त्रभेदात् । पूर्वे द्वादशाध्यायाः शौनकस्य कृतिः । अमी चत्वार आश्वलायनस्य कृतिः । एवमप्राप्ता संज्ञा किमिति निवर्तयति । कथं पुनः नानाशास्त्रभेदः । आगमात् आचार्यप्रवृत्तिदर्शनाच्च । किमिति । यत् द्वादशाध्यायान्ते त्रयाणां वाक्यानां अभ्यासं करोति । आचार्याणां नमस्कारदर्शनात् । तस्मान्नानात्वम् । शास्त्रान्तरत्वे आचार्याणां नमस्कार उपपद्यते । तस्मान्नानाशास्त्रत्वमेव । नानाशास्त्रत्वे सिद्धे अप्राप्तत्वात् कथं संज्ञां निवर्तयति । एकशास्त्रभावदर्शनार्थं संबन्धः । सम्बन्धे प्रयोजनम्—पूर्वोक्ता नियमा यथा स्युः । कः पुनरनित्यत्वे प्रसङ्गः । पूर्वाणि श्रौतानि । इमानि स्मार्तानि । पूर्वैः सह तुल्यत्वादस्य नित्यत्वम् । तस्मात् संबन्धः । एतदपि सिद्धं, समन्वारम्भसामर्थ्यात् । इदं तर्हि इतरत् प्रयोजनं, सम्बन्धे नानाशास्त्रयोरेककार्यं यथा स्यात् । किं तत् । पुरस्तात् संज्ञाः परिभाषाश्च या उक्तास्ता इहापि कथं स्युः, 'ऋचं पादग्रहणे' (आश्रौ. १।१।१७) इत्येव-

* टीकायां स्पष्टम् ।

(१) बौगृ. ४।६।१–४.

(२) भागृ. १।१।१; मेधा. ३।६७, प्रपा. ५६; प्रका. ३२.

मारभ्य । तथा इहं यदुक्तं तत् प्राक् यथा स्यात् उत्पवनविधानात् । अन्यतरथा हि अनारभ्यमाणं एतत्सर्वं पुनरिहास्य भवति । तथा सति गुरु शास्त्रं स्यात् । तस्माल्लाघवार्थं संबन्धः क्रियते । संबन्धे प्रयोजनमेतच्चेत् दोषोऽप्यस्ति । संबन्धे को दोषः । प्रत्यगुदगवस्थितस्य कर्माणि भवन्ति, 'अन्यत्राप्येवंभूतः' ( आश्वौ. १।११। ११,१२ ) इति वचनात् । तथा उत्पवने 'सकृन्मन्त्रेण' ( आगृ. १।३।३ ) इत्येतदतिरिच्यते, 'सर्वमैवं कर्मावृत्तौ' ( आश्वौ. १।३।२९.) इति सिद्धत्वात् । 'अग्निमीळे पुरोहितमित्येकाम्' ( आगृ. ३। ५।६ ) इत्येकाग्रहणं * ( 'ऋचं पादग्रहणे' ) इति सिद्धत्वात् । 'यज्ञोपवीत्याचम्य' ( आगृ. ३।२।२ ) 'यज्ञोपवीती नित्योदकः' ( आगृ. ३।७।३ ) इति च यज्ञोपवीतिग्रहणे * 'यज्ञोपवीतशौचे'–( आश्वौ. १।१। १० ) इति सिद्धत्वात् । एवमुभयप्रवृत्तौ गुणबहुत्वात् संबन्धः क्रियते । दोषांस्तु परिहरिष्यामः । तद्यथा लोकेऽपि भोजने आमयकृता दोषाः सन्ति । न च भोजनमुत्सृज्यते । गुणबहुत्वात् दोषनिर्घाते यत्नः । एवमिहापीति । तस्मादवश्यं संबन्धः कर्तव्यः । तत्र यदुक्तं अवस्थितस्य कर्माणि प्राप्नुवन्ति इति तत्र । कस्मात् । जान्वाच्याधिकारात् । क्व प्रकृतम् । 'आग्नीध्रीये जान्वाच्याहुतीः(? ति) जुहुयात्' ( आश्वौ. ४। १३।१ ) इति अग्निः (?) इत्यत्र प्रकृतम् । क्वचित् तिष्ठद्ग्रहणात् । 'तिष्ठन् प्रत्यङ्मुखः प्राङ्मुखः' (मुख्याः) ( आगृ. १।७।३ ) इति तिष्ठद्ग्रहणात् अन्यत्तत्सर्वं आसीनस्य भवतीति ज्ञापयति । 'तिष्ठन् समिधमादध्यात्' ( आगृ. ३।८।१६ ) इति च तिष्ठद्ग्रहणम् । 'समिधमादध्यात्' इति वचनादेव तिष्ठतो भवति । ( अतो ) यदन्यत् तत्सर्वमासीनस्य भवतीति सिद्धम् । एवमयं तावत् दोषः परिहृतः । अन्यांश्चाप्युत्तरत्र परिहरिष्यामः तत्रतत्रैव ।

वैतानिकेभ्योऽनन्तरं गृह्याणि वक्ष्यामः । तत्र गृह्याणि इति– गृह्यो नामाग्निः । विहृता पुनः तस्येयं संज्ञा । विवाहादीनि कर्माणि यस्मिन् भवन्ति स गृह्य उच्यते ।

* 'अतिरिच्यते' 'अतिरिच्यते' इति क्रमेण शोधः ।

कथं ज्ञायते । तत्र दृष्टत्वात् संज्ञायाः । 'पाणिग्रहणादि गृह्यम्' ( आगृ. १।९।१ ) इति । तथाऽन्यत्र दर्शनाच्च । 'गृह्यस्याग्नेरुपविष्टाय' (?) इति श्रौते दर्शयति गृह्यमिति । तस्मिन् भवानि गृह्याणि । यद्येवं, प्राग्विवाहात् यानि कर्माणि तानि एतस्मिन्नग्नौ न प्राप्नुवन्ति । कानि पुनस्तानि । जातकर्मादीनि चौलादीनि च । कस्मात् । गृह्यसंज्ञाया अभावात् । तत्रैके अनियमो भवति एतेषु कर्मस्वित्येवं संप्रतिपन्नाः । तथा सति एतेषां पाकयज्ञसंज्ञा न प्राप्नोति । अपाकयज्ञत्वे च 'पाकयज्ञानामेतत्तन्त्रम्' इति तन्त्रं न प्राप्नोति । अनियतामित्वं च नेष्यते । तस्मान्नैवम् । कथं पुनर्नात्र प्रयोगक्रमः । विधिक्रमस्य विवक्षितत्वात् । जातकर्मादि वक्तव्यं प्रथमम् । यस्माद्विवाहकर्म प्रथमं विधीयते तत् ज्ञापयति एतस्मिन्नेवाग्नौ वैतानिक ( ? एतानि ) कर्माणि भवन्ति इति । एवं ब्रुवतां प्रागेवाग्निपरिग्रहो भवतीति । तत्र । तथा सति गृह्यसंज्ञा नास्तीति स्यात् । प्रायोवृत्त्या भविष्यतीति प्रायोवृत्त्या च शास्त्रान्तरे चाग्निपरिग्रहस्य जातकर्मणि दृष्टत्वात् । एवमनेनाभ्युपायेन साधयति । पुनरप्युत्तरत्र विचारयिष्यामः । एवं गृह्याणि इति प्रतिज्ञां कृत्वा उत्तरत्र विस्तरशो वक्ष्यते । एवमत्र विचारयितव्यम् । देभा.

( २ ) वैतानिकानि उक्तानि । अतः परं गृह्याणि वक्ष्यामः । वितानः अग्नीनां विस्तारः । तत्र भवानि वैतानिकानि । बह्वग्निसाध्यानि कर्माणीत्यर्थः । गृहनिमित्तोऽग्निर्गृह्यः । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्यायां शालायां च वर्तते । तथा 'सगृहो गृहमागतः' इत्यत्र हि पूर्वो गृहशब्दो भार्यावचनः । उत्तरस्तु शालावचनः । येषां भार्यासंयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्तन्ते तेषामयं गृहशब्दो भार्यावचनः । येषां तु दायविभागकाले अग्निरुत्पद्यते तेषां शालावचनः । 'भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि' ( गौध. ५।७,८ ) इति गौतमः । उक्तानुकीर्तनं संबन्धकरणार्थम् । संबन्धकरणे प्रयोजनम्– कथं सौम्यः परिभाषाः प्राप्नुयुरिति । कथं वा न प्राप्नुयुः । शाखान्तरत्वात् । कथं शाखान्तरत्वम् । सूत्रसमाम्नायाचार्य-

नमस्कारात्। शास्त्रान्तरे एवाचार्यनमस्कार उपपद्यते। इदं प्रतिज्ञासूत्रम्। गानाष्ट्.

(३) द्विप्रकाराणि कर्माणि श्रुतिलक्षणानि आचारलक्षणानि च। तत्र उक्तानि वैतानिकानि वितानैः अग्निभिः साध्यानि श्रुतिलक्षणानि कर्माणि। अथ इदानीं गृह्याणि वक्ष्यामः। गृहाश्रमे भवः अग्निः गृह्यः। वक्ष्यति च 'पाणिग्रहणादि गृह्यं परिचरेत्' (आगृ. १।९।१) इति। यस्मिन्नग्नौ पाणिं गृह्णीयात् स गृह्य इति छन्दोगाः। इह तु तत्साध्यानि कर्माणि विवक्षितानि। यद्यपि उपनयनादौ लौकिकोऽग्निः, रथारोहणादिषु अग्निरेव नास्ति, तथापि सर्वाण्येव स्मृत्याचारलक्षणानि कर्माणि गृह्याणि इत्युच्यन्ते भूम्ना। किं प्रयोजनं सूत्रस्य। गृह्याणां कर्मणामधिकारः। तेन वक्ष्यमाणेषु कर्मसु सति संभवे गृह्योऽग्निः गृहस्थश्च अधिकारी इति सिद्धम्। अथ 'गृह्याणि वक्ष्यामः' इत्येवाधिकारे सिद्धे 'उक्तानि वैतानिकानि' इति उक्तानुभाषणं वक्ष्यमाणेषु तदपेक्षाप्रदर्शनार्थम्। तेन तत्र याः परिभाषाः 'तस्य नित्याः प्राच्यश्रेष्ठाः' इत्यादयः, तासां वक्ष्यमाणेष्वपि प्रवृत्तिर्भवति। प्रकरणभेदाद्धि न प्राप्नोति। अना.

त्रयः पाकयज्ञाः ॥

(१) पाकयज्ञाः त्रिविधाः त्रिप्रकारा भवन्ति। गृह्यकर्मस्वेवं कल्प्यताम्। पाकयज्ञव्यतिरिक्तान्यन्यान्यपि सन्ति कर्माणि अपाकयज्ञसंज्ञानि 'पाकेन यज्ञः पाकयज्ञः' इत्येवं विग्रहं कुर्वताम्। कानि पुनस्तानि। आज्यहोमब्रह्मयज्ञप्रभृतीनि। व्यक्तमित्याचार्यो दर्शयति– यथा अन्ये पाकयज्ञाः अन्ये आज्यहोमाः इति 'कृताकृतमाज्यहोमेषु' (आगृ. १।३।४) इत्यत्र विभावयिष्यामः। तस्मात् पाकयज्ञव्यतिरिक्तानि कर्माणि भवन्तीति सिद्धमेतत्। स्यादेतदेवं पाकयज्ञशब्दः पक्वौ (वर्तेत। न) वर्तते। पाकशब्दस्यानेकार्थत्वात्। कः (क) पुनरन्यत्र विद्यते। अल्पत्वे च। तद्यथा अत्रापि च योऽस्मत्पाकतरः अल्पतरः। तथा प्रशंसायामपि वर्तते प्रशस्तयज्ञाः पाकयज्ञा इति। कथं प्रशस्ता इति। अल्पप्रयोगा बहुफलाः। किं फलम्। ये एते गर्भाधानादयः संस्काराः, तैर्ब्राह्मण्यमवाप्यते। तस्मादेते प्रशस्ताः। क्व पुनरयं प्रशंसायां दृष्टः। 'पाकः पृच्छामि मनसाविजानन्' (ऋसं. १।१६४।५) इति, 'यत्रा सुपर्णा अमृतस्य भागम्' (स मा धीरः पाकमत्रा विवेश) (ऋसं, १।१६४।२१) इति च। किंचान्यत्। आज्यहोमानां चाप्यपाकयज्ञत्वे तन्त्रं न प्राप्नोति। इष्यते च। तस्मात् सर्वकर्मणां पाकयज्ञसंज्ञेति। तानि गृह्यकर्माणि पाकयज्ञसंज्ञानि भवन्ति। एवं कल्प्यते– यज्ञ(? त्रय) इति चायं परिमाणशब्दः, स जातौ कल्पते इति। कथम्। आचार्योपदेशात्। यदेकैकस्मिन् बहुवचनेन उपदेशं करोति। देभा.

(२) पाकयज्ञास्त्रयः। त्रिविधा इत्यर्थः। कुतः। हुताः प्रहुताः ब्रह्मणिहुताः इत्येकैकस्मिन् बहुवचननिर्देशात्। यदि हि त्रिविधत्वं न स्यात् एकवचनेन निर्देशं कुर्यात्। तस्मात् त्रिविधत्वमिति। पाकयज्ञाः अल्पयज्ञाः प्रशस्तयज्ञा वा। दृष्टश्चोभयत्र पाकशब्दः। 'योऽस्मत् पाकतरः' इत्यत्राल्पत्वे पाकशब्दः। 'तं पाकेन मनसाऽपश्यम्' (ऋसं. १०।११४।४) इति, 'यो मा पाकेन मनसा' (ऋसं, ७।१०४।८) इति च प्रशंसायाम्। तेन आज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति। यदि हि पाकशब्दः पक्वौ वर्तेत, आज्यहोमेषु तन्त्रं न स्यात्। इष्यते च। तस्मान्न तत्र वर्तते। प्रशस्तयज्ञा इत्युक्तम्। कथं प्रशस्तत्वम्। उच्यते। यस्मादेतेषु संस्कारा उच्यन्ते। तैश्च ब्राह्मण्यमवाप्यते। के पुनस्ते संस्काराः। गर्भाधानादयः। तस्मात् सर्वेषां पाकयज्ञत्वमिति यदुक्तं तत् सम्यक्। गानाष्ट्.

(३) पाकगुणका यज्ञाः पाकयज्ञा इति विज्ञायमाने आज्यहोमेषु 'पाकयज्ञानामेतत्तन्त्रम्' इत्येष विधिर्न वर्तते। तस्मादल्पवचनः पाकशब्दः, यथा 'योऽस्मत् पाकतरः' इति। प्रशंसावचनो वा, यथा 'तं पाकेन मनसाऽपश्यमभितः' इति। अल्पायाससाध्यत्वादल्पत्वम्। महाफलत्वात् प्रशस्तत्वम्। वक्ष्यति च 'अथ काम्यानां स्थाने काम्याः' 'चरवः' 'तानेव कामानाप्नोति' इति। ते पाकयज्ञाः त्रयः त्रिविधा इत्यर्थः। अना.

(१) आगृ. १।१।२; प्रपा. ५६.

-हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मण-भोजने ब्रह्मणिहुताः ॥

(१). कथं त्रिविधत्वमित्यत आह– हुता इति। अनग्नौ हूयन्ते ते प्रहुता नाम वेदितव्याः। ये एवमध्याहारं कुर्वन्ति तेषां किमुदाहरणम्। बलिहरणं सर्पबलिश्च। द्वयोर्वचनं नोपपद्यते। एवंप्रकारा अन्येऽपि द्रष्टव्याः। होमाधिकाराद्यमध्याहारः। अन्ये पुनरन्यथा। अनग्नौ क्रियमाणानां कर्मणां प्रहुतसंज्ञेति। ब्रह्मयज्ञप्रभृतीनां सर्वेषां पाकयज्ञसंज्ञा साधिता भवति। तेन गृह्यकर्माणि। अपाकयज्ञसंज्ञं कर्म नास्ति। अत एव पाकयज्ञशब्दः पक्तौ न वर्तते। ब्राह्मणभोजने ब्रह्मणिहुता नाम वेदितव्याः 'ब्राह्मणान् भोजयित्वा' (आग्. १।२२।१६) इत्येवमादयः। एवमुपदेशात् त्रित्वे सिद्धे किमर्थं त्रिग्रहणम्। चतुर्विधं मा भूदिति। क्व दृष्टम्। चतुर्णां शास्त्रान्तरे दृष्टत्वात्। हुतः प्रहुतः प्राशितो ब्रह्मणिहुतश्च इति। एवं शास्त्रान्तरे दृष्टं चतुष्कं प्रतिषेधति। तज्ज्ञापयति चतुर्विधा अपि भवन्तीति। किंचान्यत्। अविप्रतिषेधः शास्त्रान्तरे दृष्टो विधिः। इहापि ब्राह्मणप्रमाणमेतत् साधितम्। देभा.

(२) अग्नौ हूयमानाः 'हविष्यस्य जुहुयात्' (आगृ. १।२।१) इत्येवमादयो हुताः। अनग्नौ क्रियमाणाः 'अथ बलिहरणम्' (आगृ. १।२।३) इत्येवमादयः प्रहुताः। ब्राह्मणभोजनं यत्रास्ति 'ब्राह्मणान् भोजयित्वा' इति ते ब्रह्मणिहुताः। अग्नाविति वचनं अनग्नौ हूयमानस्य सर्पबलेः प्रहुतत्वार्थम्। सोऽपि हि जुहोतिशब्दचोदितः। हुतादिसंज्ञाविधानं कृत्स्नोपदेशार्थं छान्दसश्चार्थतश्च मृगतीर्थसंज्ञावत्। अथवा त्रैविध्योपदेशार्थम्। पाकयज्ञानामेतत् तन्त्रमिति वक्ष्यति। अत्र त्रैविध्योपदेशे (१ अ)सति तत् पाकयज्ञग्रहणमपार्थकम्। तत्समानजातीयानामेव हुतानां पाकयज्ञाना तन्त्रं यथा स्यादित्येवमर्थं (त्रैविध्योपदेशः १), प्रहुतब्रह्मणिहुतानां मा भूत् तन्त्रमिति। तेन सर्पबल्यादावबदानधर्मो निवृत्तः, ब्राह्मणभोजने च निर्वापादि निवृत्तम्।

गानाट्ट.

(३) ता एव विधा लक्षणेन दर्शयति–– हुता इति। हूयमानाः क्रियमाणा इत्यर्थः। न हि पाकयज्ञाः सर्वे हूयन्ते। हुता नाम पाकयज्ञाः पार्वणादयः। 'अनग्नौ प्रहुताः' अनग्नौ क्रियमाणाः प्रहुता नाम पाकयज्ञाः बलिहरणब्रह्मयज्ञादयः। ब्राह्मणभोजने ब्रह्मणिहुताः। यत्र ब्राह्मणभोजनमेव यत्र च ब्राह्मणभोजनमधिकं ते ब्रह्मणि हुता आतिथ्यपार्वणश्राद्धादयः। त्रैविध्योपदेशस्य प्रयोजनं 'पाकयज्ञानामेतत्तन्त्रम्' इति वक्ष्यते। तत् यादृशेषु पाकयज्ञेषु तन्त्रं समाम्नातं तादृशेष्वेव यथा स्यात्। कीदृशे च तत् समाम्नातं, हुते। तस्मात् हुतेष्वेव तस्य तन्त्रस्य प्रवृत्तिः। तेन सर्पबल्यादौ अवदानधर्मो न भवति। ब्राह्मणभोजने निर्वापप्रोक्षणादयो न भवन्ति। अना.

पाकयज्ञे त्रिविधे ऋचः प्रमाणम्

**अथाप्यृच उदाहरन्ति* यः समिधा य आहुती यो वेदेनेति ॥**

(१) अथाप्यृच उदाहरन्ति। एतस्मिन्नर्थे ऋचोऽप्युदीरयन्ति पूर्वे आचार्याः। अस्मिन्नर्थे श्रौतकर्मणां नित्यत्वदर्शनात् एतेषां स्मृतिप्रामाण्यादनित्यत्वं स्यात्। ननु एतान्यपि कर्माणि श्रुतौ दृश्यन्ते श्राद्धोपनयनशूलगवप्रभृतीनि। तेषामेव नित्यत्वं स्यात्। लिङ्गात्तस्मात् सर्वाण्येव श्रौतानि। एवं चेदृचामुदाहरणमनर्थकम्। उच्यते। नानर्थकम्। द्रव्यसाध्यानां कर्मणां फलं श्रूयते। अद्रव्यसंयुक्तानामपि फलमस्तीति ऋचामुदाहरणम्। 'विद्ययैवाप्यस्ति प्रीतिः' (आगृ. १।१।५) इत्यत्र एतद्विवक्षया आहुत्यादीनामनुकीर्तनम्। का नाम ऋचः। 'यः समिधा य आहुती' इत्येताः। कियन्त्यः। तिस्रः। कुतः। अधिकपादग्रहणात्। तथा सति तृतीया नोपपद्यते, अन्यार्थत्वात्। एवं द्वे भवतः। एवं सति परिभाषा बाध्यते 'अधिके तृचम्'

---

(१) आगृ. १।२।२; प्रपा. ५६.

* यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये। यो नमसा स्वध्वरः॥
तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः। न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत्॥ (ऋस. ८।१९।५, ६)

(१) आगृ. १।१।४; प्रपा. ५६.

(आश्वौ. १।१।१.९) इति, बहुवचनं च । नैष दोषः । न तस्याः परिभाषाया इहाधिकारोऽस्ति । कस्मात् । अविध्युपदेशात् । विधौ या ऋच उपदिश्यन्ते तत्र परिभाषा भवति । निदर्शनार्थस्य (?श्च) उपदेश इह । याश्च अर्थेन संबद्धाः तासामिह ग्रहणम् । तस्माददोषः । एवमपि बहुवचनमनर्थकम् । नानर्थकम् । सर्वासामत्र विवक्षितत्वात् अदोषः । देभा.

(२) अधिकपादग्रहणमृचोऽधिकस्य द्व्यृचस्य ग्रहणार्थं, न तृचस्य । तृतीयस्यामप्यर्थविरोधात् । बहुवचनं तु 'अगोरुधाय' 'आ ते अग्ने' 'यः समिधा' इति द्व्यृचावभिप्रेत्योपपन्नम् । ऋचामुदाहरणं कथम् । एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यानि आहिताग्नेरपि स्युरित्येवमर्थम् । गानाग्नि.

(३) देवतामुद्दिश्य द्रव्यत्यागो यागः । स च ब्रह्मयज्ञादिषु नास्ति । तत् कथमेतेषु यज्ञशब्द इत्याशङ्क्य तेषां यज्ञत्वमुपपादयितुं ऋच उदाहरति– अथापीति । तत्र अधिकपादग्रहणात् तृचस्य ग्रहणे प्राप्ते तृतीयार्थविरोधान्न गृह्यते । ऋच इति बहुवचनं वक्ष्यमाणापेक्षम् । यो मर्तो मर्त्यः समिधा अग्नये, विभक्तिव्यत्ययः, अग्निं ददाश दाशतिर्दानकर्मा अन्यत्र, इह तु प्रीणने द्रष्टव्यः प्रीणाति । य आहुती तृतीयैकवचनस्य पूर्वसवर्णदीर्घः यश्च आहुत्या अग्निं प्रीणाति । यो वेदेन यश्च वेदेन अग्निं प्रीणाति । यो नमसा यश्च नमस्कारेण अग्निं प्रीणाति । यच्छब्दश्रुतेः तच्छब्दोऽध्याहार्यः । सः स्वध्वरः स सर्वोऽपि शोभनयज्ञः, न केवलं य आहुत्या प्रीणाति स एव । किंच तस्येत् तस्यैव अर्वन्तः अश्वा रंहयन्ते गमयन्ति कं रथं आशवः क्षिप्रगामिनः । द्युम्नितमं द्युम्नं इति हिरण्यनाम, अतिशयेन द्युम्नवत् द्युम्नितमम् । एवंभूतं यशोऽपि तस्यैव । तस्य देवकृतमंहः व्यसनं कुतश्चन अपि न नशत् न व्याप्नोति मर्त्यकृतं चांहो न नशत् इति ऋग्द्वयस्यार्थः । अना.

**समिधमेवापि श्रद्धान आदधन्मन्येत यज इदमिति । नमस्तस्मै । य आहुत्या यो वेदेनेति । विद्ययैवाप्यस्ति प्रीतिः । तदेतत्पश्यन्नृषिरुवाच – 'अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः । घृतात्स्वादीयो मधुनश्च वोचत ॥' (ऋसं. ८।२४।२०) इति । वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह । 'आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उत ॥' (ऋसं. ६।१६।४७) इति । एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति य इमं स्वाध्यायमधीयत इति । यो नमसा स्वध्वर इति । नमस्कारेण वै खल्वपि । न वै देवा नमस्कारमति । यज्ञो वै नमः । इति हि ब्राह्मणं भवति ॥**

(१) यो मर्त्योऽग्नये तृप्तिं ददाति समिधा समिद्भिः, तस्य किं फलम् । 'तस्येदर्वन्तो रंहयन्ते' (ऋसं. ८।१९।६) इत्यस्यामृचि यत्फलं तद्भवति । श्रद्धानस्य कर्मफलं भवति इत्येतदत्र विधीयते । श्रद्धान आदधन्मन्येत यज इदमिति । एवमेव य आहुत्या अग्नये मर्तः तृप्तिं जनयति ददाति तस्याप्येवम् । तथा चैवं वेदेन यो ददात्यग्नये तृप्तिं तस्यापि पूर्ववत् समिदाहुत्योस्तृप्तिर्दृष्टा । कथं वेदेनेति । अथातो वेदेनापि तृप्तिर्भवतीति उत्तरमारभ्यते । अगोरुधाय गविष इति । यदिदं मयासक्तं (? सूक्तं) प्रयुक्तं तत् घृताच्च मधुनश्च स्वादुतरमस्तु । समिदाहुत्योर्या तृप्तिर्भवति सा मम चैतत्सूक्तप्रयोगमात्रेणैव प्रीतिर्भवति ते अस्तिं । तस्माद्वेदप्रयोगमात्रेणैव तृप्तिर्भवतीति सिद्धम् । आ ते अग्ने ऋचा हविर्यदाहरामि ते हृदा संस्कृतं हृदा प्रयुक्तं ते तव मन्त्राः उक्षवत् ऋषभवत् वशावत् तृप्तिं जनयन्तु । तस्मान्मन्त्रप्रयोगमात्रेणैव तृप्तिर्भवति । तस्मात् विद्ययैवास्ति प्रीतिः इत्येतदुपपन्नं भवति । तस्मादेत एव मन्त्राः । तस्येदर्वन्त इति समिदाहुतिमन्त्राणा अनुकीर्तनं तुल्यफलवद् (? फलवद) र्शनार्थम् । अपेक्षार्थमपरे । आहुत्यभावे समिधा । तथा मन्त्रेण । यो नमसा ये (? ते) तृप्तिं जनयन्ति (? ति) तेषाम (? तस्या)पि स्वध्वरः शोभनयज्ञः । 'तस्येदर्वन्तः' इत्येतत्फलं तस्यापि

(१) आगृ. १।१।५; प्रपा. ५६; शूक. २१ (नमस्कारेण वै खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम इति हि ब्राह्मण भवति । ) एतावदेव.

भवतीति । कथमेतावता देवतास्तृप्यन्ति । नमस्कारस्य यज्ञत्वात् । तत्कुतः ( ? तत्कुतः ? ) ब्राह्मणदर्शनात् । अस्यापि प्रयोगस्यैव पूर्वैः सार्धं विकल्पं मन्यन्ते । आपेक्षिकमपरे । यस्य वेदो नास्ति तस्यायं विधिः । लौकिकमपरे । योऽयं देवतानां नमस्कारः क्रियते ता देवताः प्रति तस्यैतद्विधानमिति । अपरे तु यस्य पूर्वोऽयं विधिर्वै ( ? र्वि )प्रतिषिद्धः तस्यायं भवतीति कल्पयन्ति । कस्य । शूद्रस्येति । कस्मात् । शास्त्रान्तरदर्शनात् ' अनुज्ञातोऽस्य मन्त्रो नमस्कारः ' ( गौध. १०।६३ ) इति । एवमेतत् बहुधा विचार्य ( ? र्य ) यदनुक्तमयथोक्तं वा तत्सर्वं न्यायतः कल्पयितव्यम् । देभा.

( २ ) ' समिधमेवापि श्रद्दधान आदधन्मन्येत ' इत्यारभ्य ' यज्ञो वै नमः ' इत्यन्तं ब्राह्मणं भवति । तत्र ' समिधा ' इत्यस्य तात्पर्यकथनं ब्राह्मणं समिधमेवापीति । समिधमेवापि श्रद्दधान आदधत् यजे इदं दैवतमिति मन्येतैव । कुतः । नमस्तस्मै । अत्र नमःशब्देनान्नमुच्यते । निघण्टुषु नमःशब्दोऽन्ननामसु पठितः ( निघण्टुः २।७ ) । समिदपि तस्मै दैवताय नमो भवति अन्नं भवति, प्रीतिहेतुर्भवतीत्यर्थः । श्रद्दधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेऽधिकार इति ज्ञाप्यते । ' य आहुती ' इत्यस्य विवरणं ब्राह्मणं य आहुत्येति । तत्र ' सुपां सुलुक् ' ( पा. ७।१।३९ ) इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णादेशः । ' यो वेदेन ' इत्यस्य तात्पर्यकथनं ब्राह्मणं यो वेदेनेति विद्ययैवेत्यादि । विद्ययापि प्रीतिर्देवतस्यास्त्येवेत्यर्थः । द्रव्यत्यागाभावेऽपि चेदस्याध्ययनमात्रेणापि प्रीतिरस्तीत्यभिप्रायः । विद्यया प्रीतिरस्तीत्येतत् द्रढयितुं तस्मिन्नर्थे मन्त्रान्तरत्वं ( ? न्तरं ) साक्षित्वेन श्रुतिर्दर्शयति– तदेतदित्यादि । तदेतदर्थरूपं पश्यन् ऋषिः मन्त्रद्रष्टा उवाच– अगोरुधायेत्यादि । अस्मिन् सूक्ते ( ? मन्त्रे ) स्तोतारः प्रत्यक्षीकृताः । एवम्भूतायेन्द्राय हे सखायः, वचो वोचत घृतात् स्वादीयो मधुनश्चेति कृत्वेति । वच एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृताः स्तूयन्ते । हे इन्द्र, इदं मे मम वच एव घृताच्च मधुनश्च स्वादीयः । असिद्धत्वात् स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति– स्वादीयोऽस्त्वित्यादिना । स्वादीयोऽस्त्वित्येवासौ साक्षित्वेन ऋषिराहेत्यर्थः । अतोऽस्ति प्रीतिः । एवमध्ययनं रसात् स्वादुतरमित्युक्तम् । मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति– आ ते अग्न इत्यादि । अस्य मन्त्रस्य तात्पर्यकथनं ब्राह्मणं एत एवेत्यादि । हे अग्ने, एत एव मे मत्संबन्धिनः । अत एव ते तव उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति । भवन्त्वित्यर्थः । भवन्तीति लिङर्थे लेट् ( पा. ३।४।७ ) । विकरणसिप्प्रत्ययाडागमेकारलोपास्तु व्यवस्थितविकल्पत्वान्न भवन्ति । के मत्संबन्धिन इति चेत् ये इमं स्वाध्यायमधीयत इति । अस्य मन्त्रस्य तात्पर्यं उक्षादिमांसेन तव यावती प्रीतिस्तावती तव विद्ययाऽपि भवत्वित्यर्थः । उत्तरार्धर्चतात्पर्यकथनं ब्राह्मणं यो नमसा स्वध्वर इति नमस्कारेणेत्यादि । नमस्कारेणापि योऽग्निमर्चयति सोऽपि स्वध्वरः शोभनयज्ञः । ' तस्येदर्वन्तो रंहयन्ते ' इत्यादि पाकयज्ञानामर्थवादः । नमस्कारेणापि खलु प्रीतिरस्ति । कुतः । न वै देवा नमस्कारमति । अतिरतिक्रमणे । देवा हि नमस्कारं नातिक्रामन्ति । तमप्याह्रियन्त ( ? हरन्त ) इत्यर्थः । किमिति नातिक्रामन्ति । यज्ञो वै नमः । नमस्कारोऽपि यज्ञ इत्यर्थः । इति हि ब्राह्मणं भवति । इतिशब्दो निर्दिष्टपरामर्शी । समिधमेवेत्यादि एवमन्तं ब्राह्मणं भवतीत्यर्थः । गानांह.

( ३ ) एवापिशब्दौ अल्पतां द्योतयतः । कनिष्ठामात्रं हि समित् तामपि श्रद्दधानो भूत्वा आदधत् पुरुषः यज इदं इति मन्येत याग एवायं मया क्रियत इति मन्येत इत्यर्थः । सूत्रकारोऽपि तं नमस्यति नमस्तस्मै । दृष्टश्च एवंविधः प्रासङ्गिकोऽन्यत्रापि नमस्कारः । यथा आर्यानुक्रमण्याम्–' नमोऽग्निभ्यस्त्वबोधि ? इति । तदेवं यः समिधा ददाश स स्वध्वर इति व्याख्यातम् । य आहुती इति व्याचष्टे–य आहुत्या । तृतीयैकवचनस्य पूर्वसवर्णदीर्घ इति व्याख्यातम् । यो वेदेन इति व्याख्यातुमुपादानं, व्याचष्टे– विद्ययैवापि अस्ति प्रीतिः । दाशतिः प्रीत्यर्थ इत्यनेन दर्शितम् । तदेतत् पश्यन् ऋषिरुवाच तदेतत् अनन्तरोक्तं अर्थरूपं पश्यन् ऋषिर्वैयश्वो विश्वमना उवाच – ' अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः ।

घृतात् स्वादीयो मधुनश्च वोचत ॥' इति । स्तुतिलक्षणां गां वाचं यो न निरुणद्धि तस्मै अगोरुधाय गविषे गामिच्छते दुक्षाय द्युस्थानाय दस्म्यं अनुरूपं स्तुतिलक्षणं वचः घृतात् मधुनश्च स्वादीयः स्वादुतरं दर्शनीयं वोचत ब्रूत हे मदीया ऋत्विजः पुत्रपौत्रा वा । अत्र तृतीयं पादं अर्थतो व्याचष्टे— वच एव म इदं घृताच मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह । मम स्वभूतं इदं वच एव घृताच मधुनश्च स्वादीयोऽस्तु इति यत् एतदेव अनेन पादेन ऋषिराह इत्यर्थः । न केवलं घृताच मधुनश्च मांसादपि स्वादुतरमिति दर्शयितुं ऋगन्तरमुदाहरति— 'आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उत ॥' इति । हे अग्ने ते तुभ्यं हृदा तष्टं हृदयेन विकीर्तितं हविः ऋचा ऋग्रूपेण आभरामसि आहरामो वयम् । ते, हविरपि परामृशतस्तच्छन्दस्य उक्षादिभिः सामानाधिकरण्याल्लिङ्गवचनभेदः, तादृग्रूपं हविः ते तव उक्षाण ऋषभाश्च वशाश्च भवन्ति । वन्ध्या गावो वशाः । व्याचष्टे— एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति । भरद्वाजस्यैषा— य इमं स्वाध्यायमधीयत इति । चलोपोऽत्र द्रष्टव्यः । ये च इमं स्वाध्यायमधीयत इति । न केवलं भरद्वाजस्यैव, किं तर्हि, अन्येऽपि य इमं स्वाध्यायमधीयते तेषामपि एते उक्षाण ऋषभाश्च वशाश्च भवन्ति, द्रष्टृव्यतिरिक्तानामपि अध्ययनमात्रेण भवन्तीत्यर्थः । यो नमसा स्वध्वर इति व्याख्येयोपादानं, व्याचष्टे— नमस्कारेण वै खल्वपि । अस्ति प्रीतिरित्यपेक्ष्यते । एतदेवोपपादयति— न वै देवा नमस्कारमति । वै प्रसिद्धौ । न खलु देवा नमस्कारमतिकामन्ति । 'यज्ञो वै नमः' इति हि ब्राह्मणं भवति । ततश्च यथा यज्ञं नातिक्रामन्ति, एवं नमस्कारमपीति । अना.

## कौषीतकिगृह्यसूत्रम्

पाकयज्ञाश्चत्वारः

. चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति ॥

(१) कौगृ. १।५.

## आपस्तम्बगृह्यसूत्रम्

लौकिककर्मणां पाकयज्ञसंज्ञा

[१]लौकिकानां पाकयज्ञशब्दः ॥

(१) एवं सर्वगार्ह्यहोमाना साधारणं स्मार्तं विधिमुक्त्वा, इदानीं पाकयज्ञेषु वैकल्पिकं श्रौतं विधिमाह— लौकिकानामिति । लोके भवाः लौकिकाः 'लोकस्मृतिलक्षणा इत्यर्थः । लोकशब्देन शिष्टा उच्यन्ते । पाकयज्ञ इति विवाहादीना संज्ञा विधीयते । पाकशब्दः अल्पवचनः, यथा— 'क्षिप्रं यजेत पाको देवः' ( आपश्र. ७।२०।१५ ) इति । पाकगुणको यज्ञः पाकयज्ञ इति निर्वचने आज्यहोमेषु सज्ञा न स्यात् । तत्संज्ञाप्रयोजनं 'यज्ञं व्याख्यास्यामः' (आप. प. १।१) इत्यत्र एतेषामन्तर्भावः । 'निर्ऋतिं पाकयज्ञेन यजेत' इत्यत्र च धर्मप्राप्तिः । अनाकुला

(२) लोकयन्ति वेदैर्वेदार्थानिति लोकाः त्रैविद्यवृद्धाः शिष्टाः द्विजन्मानः । तैर्लोकैः आचर्यन्ते यानि कर्माणि तानि लौकिकानि । तेषां मध्ये सप्तानां औपासनहोमादीना पाकयज्ञशब्दः संज्ञात्वेन प्रसिद्धः, न तु श्रौतानां विवाहादीनां च, तत्र लोकानामप्रयोगात् । यदि लोकप्रयोगादेवैषां पाकयज्ञनामता प्रसिद्धैव, तर्हि 'पाकयज्ञेषु ब्राह्मणावेक्षो विधिः' इत्येतावता अलं, किमर्थं 'लौकिकानां पाकयज्ञशब्दः' इति । उच्यते— पाकेन पक्वेन चरुणा साध्यो यज्ञः पाकयज्ञः इत्येवंव्युत्पन्नसंज्ञानुवादात् नान्तरीयकावगतश्चरुरेवाग्निहोत्रकविधौ हविः, न पुनर्विध्यन्तरवदाज्यादिकमपीति नियमज्ञापनार्थम् । बौधायनेन तु अत्र आज्यं हविरुपदिष्टम् । न त्वाग्निहोत्रिकं हविरिह भवति, अग्निहोत्रधर्मप्रापकप्रमाणाभावात् । 'द्विर्जुहोति' ( आपगृ. १।२।११ ) इत्येवमादयः पुनः पञ्च पदार्थाः वचनबलाद्भवन्ति । देवतास्तु तत्तन्मन्त्रप्रतिपाद्या एव । ताद.

पाकयज्ञकर्मणः इतिकर्तव्यता

[२]तत्र ब्राह्मणावेक्षो विधिः ॥

(१) आपगृ. १।२।९; गौमि. ८।१९,२०।६७; चम. ११८; मुक्ता. ६८.

(२) आपगृ. १।२।१०.

[1]द्विर्जुहोति द्विर्निमार्ष्टि द्विः प्राश्नात्युत्सृप्याचामति निर्लेढीति ॥

( १ ) तत्र तेषु पाकयज्ञेषु अपरो विधिः ब्राह्मणावेक्ष इत्याचक्षते। ब्राह्मणमात्मनि प्रमाणत्वेनावेक्षत इति ब्राह्मणावेक्षः ब्राह्मणदृष्ट इत्यर्थः। विधिः प्रयोगः । यः प्रागुक्त आघारवान् ( स ) दर्शपूर्णमासप्रकृतिः। अयं तु अग्निहोत्रप्रकृतिः ब्राह्मणावेक्षः। उभयोर्विकल्पस्तत्रेत्युच्यते– येषु पाकयज्ञेषु आघारवतः तन्त्रस्य प्रवृत्तिः तत्रैवास्य विकल्पेन प्राप्तिरिति दर्शनार्थम् । तेन पण्यहोमादिषु अस्य विधेरप्रवृत्तिः ।

तत्र ' द्विर्जुहोति ' इत्यनेन अग्निहोत्राहुत्योरुभयोर्धर्मः पाकयज्ञेषु प्रधानाहुतिं स्विष्टकृतं च अधिकृत्य विहितो वेदितव्यः। ' द्विर्निमार्ष्टि ' इति च अग्निहोत्रवल्लेपनिमार्जनम्। ' द्विः प्राश्नाति ' इति अङ्गुलिप्राशनम्। 'उत्सृप्याचामति' इति च यत्तत्र तृतीयं प्राशनं 'बर्हिषोपयम्योदङ्ङावृत्योत्सृप्याचामति' इति, तच्चोदितम्। 'निर्लेढि' इति यत्तत्र ' द्विः स्रुचं निर्लेढि ' इति च, तचोदितम्। यावता च विधानेन होमादिसंसिद्धिः तावदमन्त्रवदग्निहोत्रादेव प्रत्येतव्यम्। तद्यथा– स्रुवेणोन्नयनं, पालाशी समित् आहुतिधारणार्था, चतुर्गृहीतं, पञ्चगृहीतं इति। तत्र प्रयोगः– अग्निमिध्वा परिसमूह्य, परिस्तीर्य, पर्युक्ष्य, आज्यहोमेषु आज्यं संस्कृत्य, पक्वहोमेषु स्थालीपाकं स्रुक्स्रुवं संमृज्य यावत्प्रधानाहुति चतुर्गृहीतानि पञ्चगृहीतानि वा समवद्यति। यत्रोभयं हविस्तत्र तस्योभयस्य, यथा मासिश्राद्धे। ततः पश्चादग्नेर्बर्हिषि उपसाद्य, पालाशीं समिधमाधाय, सर्वानेव मन्त्रान् समनुद्रुत्य, सकृदेव प्रधानाहुतीर्हुत्वा, प्रातरग्निहोत्रवत् लेपमपमृज्य बर्हिषि निमार्ष्टि यद्यहनि कर्म । अथ रात्रौ, सायमग्निहोत्रवत् । ततः सौविष्टकृतीं द्वितीयामाहुतिं उत्तराहुतिवज्जुहोति– 'अग्नये स्विष्टकृते स्वाहा ' इति स्थालीपाकेषु, 'यदस्य कर्मणः' इत्याज्यहोमेषु । ईशानयज्ञे तु कर्म तत्र चोदितेन मन्त्रेण। ततः पूर्ववल्लेपमवमृज्य प्राचीनावीती दक्षिणतो भूमौ निमार्ष्टि । ततः स्रुचं सादयित्वा अङ्गुलिप्राशनादिनिर्लेपनान्तमग्निहोत्रवत्। ततो दर्भैः स्रुक्प्रक्षालनं, ततः परिसमूहनपर्युक्षणे । एतदाग्निहोत्रिकं नाम तन्त्रं सर्वपाकयज्ञेषु आघारवता तन्त्रेण सह विकल्प्यते ।

अनाकुला

( २ ) तत्र तेषु पाकयज्ञेषु मध्ये पार्वणादिषु पञ्चसु ब्राह्मणावेक्षो विधिर्भवति। यो विधिः प्रत्यक्षमेव ब्राह्मणमवेक्षते, न ' अग्निमिद्ध्वा ' इत्यादिवत् लोकाचारानुमेयं, सोऽप्येषु विकल्पेन भवतीत्यर्थः । नानयोर्विध्योर्मिथः संसर्गः। नापि स्मार्तस्यानेन बाधः। प्रत्यक्षब्राह्मणस्यापि स्मृत्यनुवादे कल्पसूत्राधिकरणन्यायेन स्मृतितुल्यप्रमाणत्वात्। अत एव ' सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजते ' ( तैसं. ५।३।१२।१,२ ) इति श्रुत्याः ' यजेत वाऽश्वमेधेन ' ( मनु. ११।७४ ) इति मनुस्मृत्यनुवादेन अश्वमेधद्वादशवार्षिकयोर्विकल्पः । बौधायनीये च व्यक्तोऽयमर्थः। तत्रोदाहरन्ति– ' आघारं प्रकृतिं प्राह दर्वीहोमस्य बादरिः। अग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्त्वपूर्वताम् ॥ ' ( बौगृ. १।४।४४ ) इति, ' ता न मिथः संसादयेदनादेशात् ' ( बौगृ. १।५।१ ) इति। होममन्त्रादयस्तु विध्यन्तरीयाः अर्थादाचाराच्चेहापि भवन्ति । यद्यस्यापि स्मृतितुल्यमेव प्रामाण्यं, किमर्थं ' ब्राह्मणावेक्षः ' इति । उक्तोत्तरमेवैतत्। आग्निहोत्रिकविधौ भ्रेषे ' यदि यजुष्टः ' ( ऐब्रा. २५।३४ ) इति श्रौतं प्रायश्चित्तम्। न तु स्मार्तनाशे ' यद्यविज्ञाता सर्वव्यापद्वा ' ( ऐब्रा. २५।३४ ) इति ।

सर्वे प्रधानहोमाः प्रधानहोमत्वसामान्यात् एको होम इत्यभिप्रेत्य स्विष्टकृदपेक्षया श्रुतिः द्विर्जुहोतीत्याह, न पुनर्द्विरेव जुहोतीति, ' सप्तदश प्राजापत्यान् ' ( तैब्रा. १।३।४।३ ) इतिवत् इह संप्रतिपन्नदेवताकत्वाभावात्।

केचित्– यावन्तः प्रधानहोमाः तावन्ति चतुर्गृहीतानि स्रुचि सहावदाय होममन्त्रान् सर्वाननुद्रुत्य सकृदेव जुह्वति । द्विर्निमार्ष्टीत्यादि व्यक्तार्थम् ।

प्रयोगस्तु– न परिस्तरणदर्वीसंस्कारोपस्तरणादीनि, अत्रानुपदेशात्। चरुपाकस्त्वर्थाद्विद्यत एव। तेन चरुणा प्रधानाहुतिस्विष्टकृत्प्राशनभक्षणेभ्यः पर्याप्तेन दर्वीं पूरयित्वा अपरेणाग्निं दर्भेषु सादयित्वा आदाय तत्तन्मन्त्रैः सर्वाः प्रधानाहुतीः क्रमेण हुत्वा दर्व्यास्ततो लेपमादाय

( १ ) आपगृ. ३।२।११.

दर्भैर्निमृज्य शेषात्स्विष्टकृते हुत्वा, प्राचीनावीती पुनर्लेपमादाय दक्षिणतो भूम्यां निमृज्य अप उपस्पृश्य यज्ञोपवीती दर्व्या लेपमङ्गुल्याऽऽदाय प्राश्य शुद्ध्यर्थमाचम्य पुनरप्येवं कृत्वा उदङ्ङावृत्य उत्सृप्य दर्व्या हविःशेषं सर्वं भक्षयित्वा तां निर्लेह्य आचम्य तां दर्भैरद्भिः प्रक्षालयेदिति ।

ननु– वैश्वदेवौपासनहोमयोः कस्मान्नायं विधिः ? उच्यते । तत्र 'उभयतः परिषेचनम्' (आपगृ. ३।७।२२) इति एककार्ययोः द्वयोरपि विध्योः परिसंख्यानात्, अत एव बर्हिर्लेपप्रतिपत्त्योरभावाच्च ।

केचित्तु– पाकयज्ञ इत्यत्र पाकशब्दस्याल्पवाचकत्वात् विवाहादयोऽपि सोमाद्यपेक्षया पाकयज्ञा इति तेष्वप्ययं विधिरिति, तन्न, तेषां मनुष्यसंस्कारार्थत्वेन अप्राधान्यात् प्रधानवाचियज्ञशब्दवाच्यत्वानुपपत्तेः । ताद.

## काठकगृह्यसूत्रम्

पाकयज्ञाश्चत्वारः *

**अथ पाकयज्ञः ॥**

(१) पूर्वसूत्रभागेन श्रौतकर्माणि उपदिष्टानि । इदानीं अनेनाध्यायेन स्मार्तानि उपदिश्यन्ते । 'अग्निर्भूतानामधिपतिः' इत्येवमादयो मन्त्रा अविनियुक्ताः । ते लिङ्गक्रमसमाख्यानवशात् संस्कारेषु गर्भाधानादिषु पाकयज्ञेषु च विनियुज्यन्ते । एतैश्च (? एते च) श्रौतैः कर्मभिः *अधिकारशेषतया व्यपेक्षते* (? क्ष्यन्ते)। न *ह्यसंस्कृतस्य अकृतपाकयज्ञस्य श्रौतेषु अधिकारः* । यस्मात् त्रैवर्णिकोऽधीतवेदः कृतधर्मजिज्ञासः समावृत्तधर्मद्वितीय (? समावृत्तः सहधर्मचारिणीद्वितीयः) आवसथ्यकर्मकृत् अग्नीनादधीतेति क्रमः । तत्र द्वौ राशी इह गृह्यशास्त्रे वक्तव्यौ संस्कारराशिः पाकयज्ञराशिश्च । पाकयज्ञा अग्न्यर्जनमपेक्ष्यन्ते (? क्षन्ते)। संस्काराश्च गर्भाधानादयोऽक्षतयोनि-*मूढा स्त्रियमपेक्ष्यन्ते* (? क्षन्ते)। *तद्विवाहेनोभयं संपद्यते* अग्न्यर्जनं च भार्या चेति ।

आवि. १।१

(२) सहधर्मचारिण्या सार्धं यो गृहप्रवेशः तदनन्तरं पाकयज्ञः कर्तव्यः, तदनुष्ठानावसरलाभात् । पाकं निर्वर्त्यं यज्ञाः पाकयज्ञाः । तेषामासूत्रणमिह क्रियते । विस्तरेण तद्वक्ष्यते । देव.

**चतुर्विधः पाकयज्ञो भवति हुतोऽहुतः प्रहुतः प्राशितश्चेति ॥**

तत्र हुतो हवननिर्वर्त्यो वैश्वदेवादिः । अहुतस्तु अहवनसाध्यो बल्युपहारादिः । यस्य तु प्रारम्भे हवनं *स प्रहुतः अन्वष्टकादिः । प्रकृष्टेन अशनेन निर्वर्त्यते यः* अतिथिब्राह्मणभोजनादिः स प्राशितः । देव.

**हुतो हुतानाम् ॥**

प्रकृतिरिति शेषः । इहत्यानां हुताना वैदिको होमः प्रकृतिरित्यर्थः । यतः इतिकर्तव्यता उपजीव्यते सा प्रकृतिः । या उपजीवति सा विकृतिः । तथा च वैश्वदेवे प्रकृतिः (? प्रकृतितः) समूहनपर्युक्षणपरिस्तरणस्वाहाकारान्तप्रक्षेपादयः *क्रियाः क्रियन्ते* । देव.

**उपहारोऽहुतानाम् ॥**

वैदिक उपहारः अत्रत्यानामुपहाराणा प्रकृतिः । अत्र उपाग्नि विष्टरमास्तीर्य आवाहनं कृत्वा स्रजो गन्धाश्चोपहृत्य धूपं प्रदाय बल्युपहारादिदानान्तम् । देव.

**पिण्डपितृयज्ञः प्रहुतानाम् ॥**

वैदिकः पिण्डपितृयज्ञः इहत्याना प्रकृतिः । वैश्वदेवशेषपिण्डप्रतिपन्नित्वात्तदीयपिण्डमन्त्रः । ग्रामागमनादयश्च *तद्धर्मा भवन्ति अतिदेशात्* । देव.

**मधुपर्को ब्रह्मौदनश्च प्राशितानाम् ॥**

प्राशितो द्विविधः– अतिथिभोजनदानादिना ब्राह्मणभोजनवितरणात्मना च । तत्र अतिथिभोजनदानस्य आतिथ्ये (?) वैदिको मधुपर्कः प्रकृतिः । तत्र च श्रोत्रियाणां पाद्य( ? पाद्या)र्घ्यमधुपर्कपूर्वं मांसप्रदानं भोजनमिति विध्यन्तः । देवताविशेषोद्देशेन तु ब्राह्मणभोजनदाने आधानविहितो ब्रह्मौदनः प्रकृतिः । *तत्रापि बर्हिर्युक्तेष्वासनेषु* उपवेशनं अर्घ्यदानादिकं सघृतमन्नं देवतायै संकल्प्य 'प्राश्नन्तु भवन्तः' इत्यनुज्ञानपूर्वकं चाशुन( ? चाशन )मित्यादिरित्यर्थभावः ।

देव.

---

* पाकयज्ञेषु संस्काराणां नान्तर्भावः इति टीकाभिप्रायः ।

(१) कागृ. १३।१–१०.

**दर्शपूर्णमासप्रकृतयः पाकयज्ञाः ॥**

साधारणेतिकर्तव्यतातिदेशोऽयम् । असाधारणा तु पूर्वमितिकर्तव्यता निदर्शिता । देव.

**तेष्वावृदुपचारस्तूष्णीम् ॥**

दर्शपूर्णमासिके विध्यन्ते अविशेषेण प्राप्ते क्वचिदपवादमाह । आवृत् क्रिया । उपचारः अनुष्ठानम् । तत् तूष्णीम् । निर्वापावघातादिक्रियानुष्ठानं अमन्त्रकमित्यर्थः । देव.

**अनर्थलुप्तम् ॥**

यत् लुप्तार्थे निष्प्रयोजनं प्रकृतौ दृष्टमपि न कर्तव्यं विकृतौ अमन्त्रकमपि । यथा पेषणकपालोपधानादि स्थालीपाके निष्प्रयोजनम् । एवं सामिधेनीनां लुप्तत्वात् समिदाधानं लुप्तार्थत्वात् न कर्तव्यम् * ( प्रयाजाभावाच्चोपभृत् ) । सामिधेन्यभावस्तु वक्ष्यमाणः ( ? माणात् ) परिसंख्यानात् ' तत्र क्लृप्तिः पाकयज्ञानाम् ' ( ' तन्त्रक्लृप्तिं पाकयज्ञानाम् ' – आवि. ) इत्यादिकात् । न च— एतावता दर्विहोमगृहमेधीयादिवत् अपूर्वत्वं पाकयज्ञानां, किं दर्शपूर्णमासप्रकृतिकत्वाभिधानेन – इति वाच्यं, कतिपयचतुरवत्तजुहूहोमादिधर्मोपजीवनात् । देव.

**एष औपसदोऽग्निर्वैवाहनो वा ॥**

एषः अतन्त्रोक्तः आहवनीयधर्मकः आहितः, वैवाहनो वा दक्षिणाग्न्याकृतिः, उभयोऽप्यौपसदः । अन्वर्थसंज्ञेयम् । उपसीदन्ति अस्मिन् इत्युपसत् आवसथः । तत्र भवः औपसदः । वाशब्दो विकल्पार्थः । तेन समुच्चयाभावः । संव्यवहारार्थमौपसदसंज्ञा – ' औपसदेऽग्नौ सायं प्रातः ' ( कागृ. ५३ । १ ) इत्यादि । वैवाहनस्य विवाह एव संस्कारः, इतरस्य त्रेताया इव आधानम् । देव.

**तस्मिन्पाकयज्ञाः ॥**

भवन्तीति वाक्यशेषः । औपसदे प्रथमश्राद्धार्थमाहिते पाकयज्ञाः, न तु लौकिके गर्भाधानादिसंस्कारवत् । स्थालीपाकेन निर्वर्त्या यज्ञाः पाकयज्ञाः अष्टकाद्याः । देव.

**तेषामुक्तमुपसमाधानम् ॥**

यत् उक्तमुपसमाधानं तदेव तेषां पाकयज्ञानाम् । किमुक्तम् । पञ्चदश्यामौपवस्त्रं भुक्त्वा व्रतचारिणौ स्याताम् । श्वोभूते प्रातर्होमं कृत्वा बर्हिः संनह्य समिधौ चोद्धतावोक्षितेऽग्निं साध( ? साद )यित्वा परिसमूह्य परिस्तीर्याग्रेरुपसमाधानं ( ? रुपस्थानं ) ' विभूरसि ' इत्यनुवाकेन । त्रिभिः स्तरैः परिस्तरणं, वैश्रवणीयदर्शनात् । सर्वसंभारढौकनमुपसमाधानमित्यपि व्याचक्षते । इष्टिविकारत्वादैष्टिको विध्यन्तः संनिपत्योपकारको नष्टः(?) । अथा (? अन्वा )धानं तु नेष्यते गृह्याग्नौ प्रयाजानुयाजाचारादुपकारिणः अन्वाधा( ? ) मुद्धारः । उपयामं कृत्वा उत्तरतः संस्तीर्य पात्राणि प्रयुनक्ति, कृष्णाजिनमुलूखलं स्थालीं मेक्षणमुपयामं स्रुवं स्रुचमाज्यधानीं हविष्यांश्चापरेणाग्निमासादयेत् । तांश्च निर्वपेत् अग्नये अग्नीषोमाभ्यामिति पौर्णमास्यां, अग्नये इन्द्राग्निभ्यामित्यमावस्यायाम् । गृह्ये हि तस्यै तस्यै देवतायै चतुरो मुष्टीन्निर्वपतीति दृश्यते । देव.

**यथाचरितं च पवित्रसंस्करणाज्यनिर्वपणग्रहणाधिश्रयणोत्पवनमवेक्षणं च ॥**

यथाचरितं मन्त्रवदित्यर्थः । ( अवेक्षणं पल्यापि ? ) । तत्र अच्छिन्नाग्रौ समौ प्रादेशमात्रौ दर्भौ पवित्रकम् । ' यथोक्तमुपसमाधानम् ' इति तन्त्रतन्त्रोक्तं– हविष्यान्नेन चरुस्थालीं पूरयित्वा अमुष्मै इति संकल्प्य अवहत्य निष्पूय चरौ पवित्रान्तर्हिता अपो निषिच्य तण्डुलादिकं निक्षिप्य अवधानेन अनास्रावितान्तः ( ? तान्तरं ) ऊष्मपकं चरुं श्रपयित्वा अभिघार्य उदगुद्वास्य उदगभिघार्य आघारसमिधौ आदधाति । ' विष्णोर्मनसा पूते स्थः ॥ देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ ' (कासं. १।५ [ १८, १९ ]) (इति) पवित्राभ्यामुदकमुत्पूय तेनैव तूष्णीं हविष्यान् पात्राणि च प्रोक्षति ।

* इतः परं देव०भाष्यं ' प्रयाजाभावाच्चोपभृत् ' इत्युत्तरं सूत्रं कल्पयित्वा तत्र मुद्रितमादर्शपुस्तके । वस्तुतः न तत् सूत्रं, टीकांश एव सः इत्यस्माकं निर्णयात् नास्माभिरतत् सूत्रत्वेन संगृहीतम् । तत्रत्वेन मुद्रितं देव०भाष्यमपि न तद्व्याख्यानत्वं रजते, पूर्वसंदर्भेण च सुतरां संगच्छते इति तदत्रैव निवेशितम् । प्रयाजाभावाच्चोपभृत् ' इत्ययं यदि देव०भाष्यांशः परिकल्प्यते तदा ' सामिधेन्याद्यभावस्तु ' इति पाठो भवितुं युक्तः ।

( १ ) कागृ. ४७।१-१६.

आज्यधान्या पवित्रान्तर्हितायामाज्यं निर्वपति– 'पृश्न्याः पयोऽसि तस्य तेऽक्षीयमाणस्य पिन्वमानस्य पिन्वमानं निर्वपामि ॥' (कासं. १।१० [३०])। देवेभ्य आज्यं निरुप्य गृह्णाति– 'पञ्चानां त्वा वातानां धर्त्रायागृह्णामि। पञ्चानां त्वा सलिलानां धर्त्रायागृह्णामि। पञ्चानां त्वा पृष्ठाना धर्त्रायागृह्णामि। पञ्चानां त्वा दिशां धर्त्रायागृह्णामि। पञ्चानां त्वा पञ्चजनानां धर्त्रायागृह्णामि। भूरस्माक९हव्यं देवानामाशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्रायागृह्णामि। धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभिस्त्वा देवताभ्यो गृह्णामि ॥' (कासं. ५।६ [२८])। अधिश्रयति– 'इषे त्वा' (कासं. १।१० [३२])। 'अदब्धेन' (कासं. १।१० [३२]) इति पत्नी अवेक्षते। 'ऊर्जे त्वा' (कासं. १।१० [३२]) इति पुनरधिश्रयति। 'अग्नेर्जिह्वा' (कासं. १।१० [३२]) इति पवित्रेणोत्पुनाति। 'हविरसि' (कासं. १।१० [३२]) इत्यनेन वीक्षते। अवेक्षणं चेति (? वेति) योगविभागात् पत्न्या अप्यवेक्षणं वा (?) ज्ञायते। अन्यथा एक एव योगोऽभविष्यत्। मैत्रायणीयायां च स्फुटमेवाभिहितं पत्न्यवेक्षणम्। देव.

**प्रागाज्यभागाभ्यामुक्ता आघारौ ॥**

स्रुक्स्रुवौ प्रतिताप्य समुन्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा आघारसमिधावाधाय चरुमभिघार्य उदग्दर्भेषूद्वास्य अभिघार्य उपयामपाणिः 'प्रजापतये स्वाहा' इत्युत्तरार्धेऽग्नेः संततं दीर्घं प्राञ्चं प्रज्वालितायां समिधि आघारयति। स्रुवेण तिष्ठन् चतुर्गृहीतेन दक्षिणमाघारमाघारयति–'ऊर्ध्वो अध्वरो दिविस्पृगहृतो यज्ञो यज्ञपतेः। इन्द्रवान्बृहद्भाः स्वाहा ॥' [कासं. १।१२ (३९, ४०)]। देव.

**युक्तः पुरस्तादिति पञ्चभिराज्यस्य जुहोति ॥**

आज्यस्येति द्वितीयार्थे षष्ठी। अवयवावयविसबन्धे वा, आज्यस्यांशं जुहोतीत्यर्थः। आज्यग्रहणाद्दर्व्यौ (? दन्य-दर्व्यौ)पधिद्रव्यं प्रधानमस्तीति ज्ञापयति। देव.

**आयुषः प्राणमिति संतनीर्जुहोति ॥**

आयुषः प्राणमित्येकादश नाभेर्भौवनस्य। देव.

**जयाभ्यातानान्राष्ट्रभृतश्च ॥**

'येनं कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' (माग. १।१०।११) इतीहापि विनियोगः। त्रयोदश जयाः, अभ्यातानहोमश्चतुर्दश। जयाभ्यातानान् जुहोतीत्यनुवर्द्धः। राष्ट्रभृतश्च। अत्रापि जुहोतीत्यपेक्ष(? क्ष्य)ते। राष्ट्रभृत्संज्ञया प्रसिद्धाः त्रयोदश आहुतयः। देव.

**वार्त्रघ्नावाज्यभागौ ॥**

राष्ट्रभृदनन्तरं वार्त्रघ्नावाज्यभागौ जुहोति। उभयत्र चौभौ पौर्णमास्याममावास्यायां च। अन्येषु पाकयज्ञेषु आज्यमेव भागो ययोः तौ आज्यभागौ अग्नीषोमौ। आज्यशब्दोऽत्रापि धर्माणा ग्राहकः। तेन चतुर्गृहीतेन होमः। आग्नेयस्य आग्नेयी याज्यानुवाक्या, द्वितीयस्य सौमी। अन्ये त्वाहुः– न याज्यैव अनुवाक्या भवितुमर्हति। अनुवाक्यया प्रैषः, याज्यया हविःप्रक्षेपः। तत्र गायत्र्योऽनुवाक्याः त्रिष्टुभो याज्या इति प्रायिकः। अत एवात्र वार्त्रघ्नशब्दोऽनुवाक्याया ग्राहक इत्याहुः। तथा चोक्तम्— 'यत्र वृत्र(? वृत्र)स्तत्रानुवाक्या' इति। 'अग्निर्वृत्राणि...आहुतः' (कासं. २।१४ [६६]), 'त्वं सोमासि...क्रतुः' (कासं. २।१४ [६७])। एतदाज्यभागान्तं कर्म उपसमाधानशब्देनोच्यते इत्याहुः। अग्निमुपसमाधाय आज्यभागान्तं हुत्वेत्यर्थः। देव.

**स्विष्टकृदाज्यभागा अन्तरेणावापः ॥**

उक्तयोराज्यभागयोर्भविष्यतः स्विष्टकृतश्च मध्ये आवापः कर्तव्यः। आवापशब्देन स्थालीपाकयज्ञा आग्नेयादय उच्यन्ते। अथवा स्विष्टकृदाज्यभागा(व)न्तरेण आवापः प्रधानकर्मणां कर्तव्य इत्यध्याहारेण पूरयितव्यम्। देव.

**नामधेयेन देवतां यजेत तद्देवतया वर्चाऽऽग्नेयीं चोद्दिष्टामग्नीषोमीयामैन्द्राग्नीं वा द्विदेवतेषु वैश्वदेवीं बहुदेवतेषु ॥**

आग्नेयस्थालीपाकस्य अग्नये स्वाहेति नामधेयेन जुहुयात्, पर्वणि स्थालीपाकस्य अग्नये स्वाहा, अग्नीषोमाभ्यां स्वाहेति। तद्देवतया ऋचेति पक्षान्तरमूहविधानादक्षशोधिमतर (? तद्देवतया ऋचेति पक्षान्तरम्। ऊहविधानात् ऋक्पक्षोऽभिमततरः) इत्याहुः। आग्नेये स्थालीपाके

वदाग्नेयी युक्ता यदा न नामधेयेन यागः । देशकाल-
ऽभेदे नागविनायकग्रामयक्षप्रभृतीनां यागाः प्रसिद्धाः
वताभिधानसमर्था वेदे मन्त्रा नाम्नाताः, तेष्वपि
ष्टेषु दर्शपूर्णमासयोः ' इति नयेन अतिदेशप्राप्ता
ग्नेयादिमन्त्राः स्मार्तादिष्वेवोहनीयाः । तस्मात् ' ऋक्षु
हेत् ' इति ऋक्षूहनिषेधाद्धर्हुवचन( ? निषेधवचन )-
र्थवत् । तत्रैक( ? तत्र द्वि )देवतेषु अग्नीषोमीया-
न्द्राग्नी वा प्रकृतौ । बहुदेवतेषु तु वैश्वदेवी विश्वेदेव-
काशनसमर्थामतिदेशप्राप्तामृत्तमूहेत् । देव.

ऋतुतिथिनक्षत्रदेवताश्च यजेत ॥

षट् ऋतवः, तान् तदधिष्ठातृभूताश्च देवताः नाम-
येन यजेत । एवं तिथीः तदधिष्ठातृभूताश्च देवताः
यजेत । तथा नक्षत्राणि अश्विन्यादि( ? दीनि ) तद्दे-
ताश्च । ताश्च शान्तिविमोकमन्त्रेषु पठिताः व्याख्याताश्च
प्रधानदेशावाप्राधान्यमिति ( ? ) विज्ञेयम् । देव.

'प्राक् स्विष्टकृत उपहोमः । इह गावोऽयं यज्ञ
आ नः प्रजां धूर्भिरुपधूर्भिश्च हुत्वेडामग्न इति
स्विष्टकृतम् ॥

' इह गावः ' इत्यादयः उपहोमाः । तेषां स्विष्टकृतः
पूर्वत्वं नियम्यते । ' इडामग्ने ' इति स्विष्टकृतं यजेते-
त्यनुषङ्गः । ' इह गावः ' इत्यादीन् उपहोमान् हुत्वा
मध्यात् पूर्वार्धाच्चावदाय स्विष्टकृतं यजेत ' इडामग्ने '
इति मन्त्रेण । देव.

त्वं नो अग्न इति द्वाभ्यां जुहुयादया भूरिति च ।
सर्वप्रायश्चित्तानि मनो ज्योतिरिति सप्तभिः ॥

ततः एतदाहुतिद्वयं जुहुयादित्यर्थः । अया भूरिति
न्त्र, जुहुयादित्यनुषज्यते । देव.

परिस्तरणान्यनुप्रहरेत् । नानुप्रहरेदित्येके ॥

' सूक्तवाकेन प्रस्तरं प्रहरति ' इति प्रकृतावा-
म्नातम् । तत् पाकयज्ञेषु केचिदिच्छन्तीत्यर्थः । देव.

एवं सर्वा देवताश्चेज्यानि च ॥

सर्वा देवताः साधारणनाम्ना यजेत । इज्यानि च
यष्टव्यानि यज्ञा इत्यर्थः । सर्वदेवताभ्यः स्वाहा, यज्ञेभ्यः
स्वाहा इति । इज्यानि हविष्यद्रव्याणि सर्वाणि सर्व-
देवतोद्देशेन प्रक्षिपेदित्यपि केचिद्व्याचक्षते । देव.

## पारस्करगृह्यसूत्रम्

पाकयज्ञाश्चत्वारः, संस्कारास्तेष्वन्तर्भवन्ति *

चत्वारः पाकयज्ञाः, हुतोऽहुतः प्रहुतः प्राशित
इति ॥

(१) चत्वारि स्मार्ताग्निकर्माणि पाकयज्ञा इत्युच्यन्ते ।
तानि चतुःप्रकाराणि भवन्ति । के पुनस्ते चत्वारः
पाकयज्ञाः ? इत्याकाङ्क्षिते आह– हुतोऽहुतः प्रहुतः
प्राशित इति । एते चत्वारः पाकयज्ञाः । ( हुतो ) यत्र
होम एव केवलो न बलिहरणम् । यथा अक्षतहोमः ।
अहुतो न हूयते यत्र । यथा पुंसवनम् । प्रहुतो यत्र हूयते
बलिहरणं च । यथा पश्वादिः । प्राशितो यत्र प्राश्यते ।
यथा अतिथिभोजनम् । उपदिश्यमाना एवैते चत्वारो
भवन्ति । प्रकारवचनं अप्रवृत्तिविशेषकरत्वादनर्थकमिति ।
नानर्थकं, प्रकारान्तरसूचनार्थकत्वात् । चत्वारः प्रकारा
उपदिष्टाः । अस्ति हि पञ्चमः प्रकारः, स नोपदिष्टः ।
तत्सूचनार्थमेवैतत्सूत्रम् । कश्चासौ ? ब्रह्मयज्ञ इति । तस्य
विधेर्ब्राह्मणोपदिष्टत्वात् । यावता तदवदयमहरहमध्ये-
( ? रहोऽध्ये )तव्यमिति । भर्तृभा.

(२) चत्वारः पाकयज्ञाः । कोऽस्याभिसंबन्धः । विवाहः
प्रक्रान्तः, तत्र च बहिःशालायां कर्मेष्यते, तेनान्यत्रापि
यत्र यत्र बहिःशाला तदर्थमभिधीयते । चतुष्प्रकाराः पाक-
यज्ञाः भवन्तीति शेषः । तानाह– हुतोऽहुतः प्रहुतः प्राशित
इति । यत्र होम एव भवति स हुत उच्यते, यथा अक्षत-
होमः । अहुतश्च यत्र होमो नास्ति, यथा स्वस्तरारोहणम् ।
प्रहुतो यत्र होमो बलिहरणं च, यथा पश्वादिषु । प्राशितो
यत्र प्राशनमेव, न होमो न च बलिहरणं, यथा 'सर्वासां
पयसि पायसं श्रपयित्वा ब्राह्मणान् भोजयेत् ' इति ।
कभा.

( ३ ) चत्वारः पाकयज्ञाः । पच्यते श्रप्यते ओदना-
दिकमस्मिन्निति पाको गृह्याग्निः । तस्मिन्पाके, नान्यत्रेति
भावः, ( पाके ? ) यज्ञाः पाकयज्ञाः । यतः, ' वैवाहिके-
ऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि । पञ्चयज्ञविधानं

* भर्तृयज्ञभाष्ये स्पष्टमिदम् ।

( १ ) पागृ. १।४।१; संदी. २३ ( भागः २ ).

न्च पङ्क्तिं चान्वाहिकीं गृही ॥ ' ( मस्मृ. ३।६७ ) इति मनुना दैनंदिनपाको गृह्येऽग्नौ स्मर्यते । ते चत्वारः चतुर्विधाः भवन्ति । कथम् ? हुतोऽहुतः प्रहुतः प्राशित इति । तत्र हुतो होममात्रं, यथा सायंप्रातर्होमः । अहुतः होमबलिरहितं कर्म, यथा स्रस्तरारोहणम् । प्रहुतः यत्र होमो बलिकर्म भक्षणं च, यथा पश्वादिकर्म । प्राशितः यत्र प्राशनमात्रं, न होमो न बलिः, यथा सर्वासां गवां पयसि पायसश्रपणानन्तरं ब्राह्मणभोजनम् । इत्थं चतुर्विधः ।

हभा.

## खादिर( द्राह्यायण )गृह्यसूत्रम्

पाकयज्ञः एकाग्निसाध्यो यज्ञः

पाकयज्ञ इत्याख्या यः कश्चैकाग्नौ ॥[1]

संज्ञा व्यवहारार्था । एकाग्निः गृह्याग्निः । एकाग्निग्रहणं अन्याग्निसाध्यानां संज्ञानिवृत्त्यर्थम् । यः कश्चेति ' सप्त पाकयज्ञसंस्थाः ' इति दर्शनात् तद्व्यतिरेकार्थे शास्त्रान्तरोक्तसंग्रहार्थं च ।

रुद्रभा.

## जैमिनिगृह्यसूत्रम्

पाकयज्ञाश्चत्वारः गृह्यकर्माणि संस्काराणामन्तर्भावेण *

अथातः पाकयज्ञान् व्याख्यास्यामः । हुतोऽहुतः प्रहुतः प्राशित इति । तेषामेकाग्नौ होमः । नित्ये यज्ञोपवीतोदकाचमने । दर्शपूर्णमासतन्त्राः । स्वतन्त्रा वा ॥[2]

यस्मिन् होममात्रं प्रधानं स हुतः औपासनादिः । यस्मिन्न विद्यते होमः स अहुतः संध्यावन्दनादिः । यस्मिन् होमोऽन्यच्च प्रधानं स प्रहुतः पुंसवनादिः । पुंसवने हि पुरुषसूक्तहोमः पुंलिङ्गप्रश्नश्च प्रधानम् । प्राशितं श्राद्धकर्म । एवं चतुर्धा पाकयज्ञान् व्याख्यास्यामः । यस्मात् एते दर्शपूर्णमासादिभ्योऽल्पे भवन्ति तस्मादेषु पाकयज्ञाख्या । पाकशब्दो ह्यत्राल्पार्थकः ।

तेषां पाकयज्ञानां होम एकाग्नौ कर्तव्यः । न तु कर्मणिकर्मणि पृथगग्निरुपादेयः । सर्वकर्मार्थमेकोऽग्निर्धार्यः । स चार्थादौपासनाग्निरिति प्रसिद्धम् । ब्रह्मचर्यार्थसमिदाधानादिस्तु तेषां औपासनाग्न्यसंभवात् लौकिके इति सिद्धम् ।

एते कर्मादौ स्तः । विकल्पानुक्तेरेव नित्यत्वे सिद्धे नित्यशब्दग्रहणं स्त्रिया अपि यज्ञोपवीताकारेण उत्तरीयं कर्माङ्गं भवति । श्रोत्रस्पर्शाद्यनुकल्पव्यावृत्त्यर्थं उदकग्रहणम् । एते पाकयज्ञा दर्शपूर्णमासतन्त्रसदृशतन्त्रा भवन्ति । एतेन यदेतेष्वनुक्तमाकाङ्क्षितं तद्दर्शपूर्णमासाभ्यामानेतव्यम् । ' यथा खादिरः पालाशो वेध्मा ' इत्युक्ते एकविंशतिरिध्मदारूणीति । वाशब्दश्चार्थः । एते स्वतन्त्राश्च भवन्ति, न सर्वत्रैषां दर्शपूर्णमासतन्त्रमानेतव्यमित्यर्थः । तेनात्र न ऋत्विग्वरणादि । तथा च सूत्रद्वयार्थं आचाराद्व्यवस्थापनीयः ।

श्रीव्या.

## वैखानसगृह्यसूत्रम्

अष्टादश शारीराः संस्काराः द्वाविंशतिर्यज्ञाश्च संस्कार-
पदभाजः इति चत्वारिंशत् संस्काराः,
सन्यासः मुनिधर्मोऽपि संस्कारः,
एतेषु उत्तरोत्तरो गरीयान्

* अथ निषेकादिसंस्कारान् व्याख्यास्यामः । ऋतुसंगमनगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मोत्थाननामकरणान्नप्राशनप्रवासागमनपिण्डवर्धनचौडकोपनयनपारायणव्रतबन्धविसर्गोपाकर्मसमावर्तनपाणिग्रहणानीत्यष्टादश संस्काराः शारीराः । यज्ञाश्च द्वाविंशत् । ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति पञ्चानामहरहरनुष्ठानम् । स्थालीपाक आग्रयणमष्टका पिण्डपितृयज्ञो मासिश्राद्धं चैत्र्याश्वयुजीति सप्त पाकयज्ञाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणेष्टिश्चातुर्मास्यो निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञाः । इत्येते चत्वारिंशद्भवन्ति । निषेकाद्या जातका-

---

* टीकायां स्पष्टम् ।

( १ ) खागृ. १।१।२०,

( २ जैगृ. १।१.

* पाकयज्ञेषु संस्कारा गर्भाधानादयः अष्टादश नान्तर्भवन्तीति अस्याचार्यस्य मतम् ।

( १ ) वैगृ. १।१, सं. ३ ( स्थालीपाकोऽष्टका अमाश्राद्धमौपासनहोमः श्रावण्याग्रहायणी चैत्रीति सप्त पाकयज्ञसंस्था वैश्वदेवमेके चैत्रीस्थाने समामनन्ति । ) एतावदेव.

त्संस्कृतायां ब्राह्मण्यां ब्राह्मणाज्जातमात्रः पुत्रमात्रः । उपनीतः सावित्र्यध्ययनाद्ब्राह्मणः । वेदमधीत्य शारीरैरा पाणिग्रहणात्संस्कृतः पाकयज्ञैरपि यजन् श्रोत्रियः । स्वाध्यायपर आहिताग्निर्हविर्यज्ञैरप्यनूचानः । सोमयज्ञैरपि भ्रूणः । संस्कारैरेतैरुपेतो नियमयमाभ्यामृषिकल्पः । साङ्गचतुर्वेदतपोयोगादृषिः । नारायणपरायणो निर्द्वन्द्वो मुनिः । इति संस्कारविशेषात् पूर्वात् पूर्वात्परो वरीयान् इति विज्ञायते ॥

निषेकादीनां संस्काराणां प्रायश्चित्तम्

अथ निषेकादिसंस्काराणां प्रायश्चित्तं व्याख्यास्यामः । स्नात्वा संकल्प्य पुण्याहे विधिवत्संस्कारान् कुर्यात् । चतुर्दिशं चतुर्हस्तं गोचर्मेत्युक्तम् । गोचर्ममात्रोपलिप्ते पूर्ववदग्निं निधायाभिमुखमासीनमग्निं ध्यात्वाऽऽघारं जुहुयात् । सर्वस्यादावाघारे क्रियालोपे विपर्यासे च व्याहृतीर्महाव्याहृतीर्गायत्रीं सावित्रीं मिन्दाहुती वैष्णवं च द्विरावर्त्य हुत्वा पुनराघारं जुहोति । स्थण्डिले परिस्तरणादिसंभारे च प्रमाणवर्जिते हीने मिन्दाहुती सावित्रीं व्याहृतीश्च जुहुयात् । ऋत्विजोरभावे दक्षिणोत्तरयोः प्रागग्रं कूर्चं निधाय ब्रह्मसोमौ संकल्पयति । सर्वं युग्मं प्राच्यामुदीच्यां वाऽग्रमन्तं च दैविके करोति । सर्वमयुग्मं दक्षिणस्यां पश्चिमस्यां वाऽग्रमन्तं च पैतृके करोति । होमे न्यूनेऽतिरिक्ते च पूर्णाहुती मिन्दाहुती जुहोति । विशेषेऽनुक्ते स्रुवेण होतव्यमाज्यं हविर्व्याहृतिर्मन्त्रम् ( ? न्त्रः ) । प्रायश्चित्तेऽनुक्ते वैष्णवं प्रायश्चित्तम् । अमावाज्ये चरौ वा होमे मक्षिकक्रिमिरोमपिपीलिकादिपतने तद्व्यपोह्य बर्हिषोद्दीप्य प्राजापत्यमाग्नेयम् । अग्न्यायतने गोवराहश्वसर्पमण्डूकमार्जाराद्यैर्गमने तत्पदानीदं विष्णुरिति प्रोक्ष्य वैष्णवं रौद्रं च । परिस्तरणादिसंभाराणां दाहे भेदे च्छेदे नाशे च तत्तत्स्थाने संयोज्य मिन्दाहुती द्विरावर्त्य जुहुयात् । आघारे कृते तस्मिन्नग्नौ समुत्सन्नेऽग्निं ध्यात्वा तद्भस्मायं ते योनिरिति समिधमारोप्योद्बुध्यस्वेति लौकिकाग्नौ समिधं निधायोज्वाल्य परिषिच्य मनो ज्योतिरयाश्चाग्ने मिन्दाहुती व्याहृतीश्च जुहुयात् । सर्वहोमानामन्ते स्विष्टकृत्प्रभृत्यन्तहोमे हीने विष्णोर्नुकादिमिन्दाहुत्याश्चावितादीन् जुहुयात् ॥

अथ निषेकादीनां सामान्यप्रायश्चित्तम् । विष्णोर्नुकादिमिन्दाहुत्याश्चावितादीन्द्विरावर्त्य हुत्वा तत्तत्कर्म कुर्यादिति केचित् । अथवाप्युपनयनं यावत्तावत्कालं गर्भाधानादिचौडकान्तेषु हीनेषु तन्त्रयित्वैकहोमे कुर्याच्चेत्पिता चान्द्रायणं पुत्रः प्राजापत्यं चरित्वा ब्राह्मणभोजनसुवर्णपशुदानानि कृत्वा विष्णोर्नुकादिमिन्दाहुत्याश्चावितादीन् रौद्रं मूलहोमं वैष्णवं च द्विरावर्त्य प्रत्येकं हुत्वा तन्त्रयित्वैकहोमे गर्भाधानादीन् कुर्यात् । आघारान्ते होमश्चैको भवति । आदावन्ते च प्रत्येकं परिषेकं करोतीति विशेषः ॥

## वैजवापगृह्यसूत्रम्

शूद्राणां संस्काराः

शूद्रस्यापि निषेकपुंसवनसीमन्तोन्नयनजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचौलानि अमन्त्रकाणि यथाकालमुपदिष्टानि ॥

## कौशिकसूत्रम्

पाकयज्ञरूपम्

दर्शपूर्णमासाभ्यां पाकयज्ञाः ॥
अथाप्यपरो हवनयोगी भवति ॥
कुम्भीपाकादेव व्युद्धार्य जुहुयात् ॥
अधिश्रयणपर्यग्निकरणाभिघारणोद्वासनालङ्करणोत्पवनैः संस्कृत्य ॥ अथापि श्लोकौ भवतः—
आज्यभागान्तं प्राक् तन्त्रमूर्ध्वं स्विष्टकृता सह ।

( १ ) वैगृ. ६।१.

( १ ) वैगृ. ६।६.

( २ ) मभा. १०।५० गृह्यकारः ; गौमि. १०।५१ करणोपनिष्क्रमणान्न ( करणान्न ) गृह्यकारः; संग्र. १३३ गौमिवत्; ३१८ गौमिवत्, गृह्यकारः; मुक्ता. ६७ गृह्यकारः; संग. ६२० ( निषेक० ) शेषं गौमिवत्, गृह्यकारः.

( ३ ) कौसू. १।६।३०-३४.

हवींषि यत्र आप्यापो यथा तन्त्रस्य तन्तवः ॥
पाकयज्ञान् समासाद्यैकाज्यानेकबर्हिषः ।
एकस्विष्टकृतः कुर्यान्नानापि सति दैवते-
(१ त ३) ति ॥

आज्यतन्त्रे पाकतन्त्रे दर्शपूर्णमासधर्मा भवन्ति पूर्वतन्त्रं च उत्तरतन्त्रं च सर्वेषु पाकतन्त्रेषु । सर्वमाथर्वणं कर्म पाकयज्ञशब्देन उच्यते । अत्रापि गोपथब्राह्मणपठितौ श्लोकौ भवतः । केशवोऽपि पठति– देवतेति ।

हाकेटी.

## गौतमः

संस्काराश्चत्वारिंशत्

*गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनम् ॥*

(१) चत्वारिंशता संस्कारैरित्युक्तम् । के पुनस्ते इति तानाह– गर्भाधानेति । गर्भाधानादयः प्रतिगृह्यमाम्नाताः । इहाभिधानं तु संस्कारत्वज्ञापनार्थम् । मनुनाऽपि चैषां संस्कारत्वमुक्तम्— 'निषेकादिः श्मशानान्तः' (मस्मृ. २।१६) इत्यादि । गर्भाधानं ऋतावेव 'सवेदाने हुत्वा' इत्यादि प्रतिगृह्यं द्रष्टव्यम् । पुंसवनं तृतीये मासे चोद्यते प्रथमे गर्भे, नान्यत्र । तत्र तु व्यक्ते गर्भे । प्रतिगर्भे केचिदिच्छन्ति । केचिदेकमेव । तथा सीमन्तोन्नयनमपि । तत् चतुर्थे षष्ठे अष्टमे वा चोद्यते । जातकर्मापि स्तनप्राशनात् नाभिवर्धनाद्वा प्राग्द्रष्टव्यम् । नामकरणं दशमे द्वादशे वाऽहनि पुण्ये नक्षत्रे वा । अन्नप्राशनं षष्ठे मासे संवत्सरे वा । यथाऽऽह शङ्खः–'संवत्सरेऽन्नप्राशनं षष्ठे वा' इति । चौलं संवत्सरे तृतीये वा । उपनयनमुक्तम् । उपनिष्क्रमणं च अन्नप्राशने एवान्तर्भूतत्वान्नोक्तम् । तदुक्तं मनुना– 'मासे चतुर्थे कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।' (मस्मृ. २।३४) इति ।

मभा.

(२) समाहारद्वन्द्वः । गर्भाधानं 'ऋतावुपेयात्' इत्यादिकालनियमेन सूत्रकारोक्तविधाननिषेकः । गर्भाधानादयः संस्काराः तत्तद्गृह्योक्ताः । इह तु संस्कारगणनार्थं स्वरूपनिर्देशमात्रं कृतम् । * गौमि.

(३) मनुना उपनिष्क्रमणाख्यं कर्माप्युक्तम् 'चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।' (२।३४)– इति, तदिह नादृतम् । मुक्ता. ७३

(४) आश्वलायनेन तु 'उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च' इत्यनवलोभनमप्युक्तम् । अन्येऽपि कर्णवेधादयः संस्कारा ज्योतिःशास्त्रोक्तास्तत्रतत्र वक्ष्यन्ते ।

संम. ८

(५) 'वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥' (४।३६) इति मनूपदिष्टेन 'दीक्षाया कुण्डली भवति' इति श्रुतिविहितेन च कुण्डलधारणेन आक्षिप्तः कर्णवेधाख्यः संस्कारः आवश्यकोऽपि न षोडशादिसंस्कारान्तर्गतः, तन्मध्ये तस्य पाठाभावात् ।

सदी. २ (भागः २)

### चत्वारि वेदव्रतानि ॥

(१) ब्रह्मग्रहणार्थत्वात् पृथगुपदेशः । प्रतिवेदं चत्वारि चत्वारि ग्रहीतव्यानीत्येवमर्थं वेदग्रहणम् ।

मभा.

(२) एतानि प्रतिवेदं प्रतिशाखं च गृह्योक्तानि । ऽ गौमि.

(३) वेदव्रतानि प्राजापत्यादीनि । † स्मृच. ११

(१) गौध. ८।१३; प्रक. ७६; मभा; गौमि. ८।१४, स्मृच. (क.) १३ (गर्भाधानं पुंसवनं सीमन्तोन्नयनं जातकर्म नामकरणान्नप्राशनं चौलोपनयनम्), (ग.) १२; स्मृमा. १ (गर्भाधानं पुंसवनं सीमन्तोन्नयन जातकर्म नामकरणान्नप्राशनचौलोपनयनम्), पमा. ४३६ पुंसवनमी (पुंसवनानवलोभनमी); मपा. ९६ नाम . नयनम् (नामकरणनिष्क्रमणान्नप्राशनचूडोपनयनम्); प्रपा. ४ नयनम् (नयनानि); प्रर. १ प्रपावत्; संप्र. १३७: १४१, १५७ धानपुंसवन (धानं पुंसवनं) निर्दिष्टमात्रम्; चम. ११७; मुक्ता. ७३; संम. ७ धानपुंस (धानं पुंस) नयनम् (नयनानि); भान. १४२; प्रका. १ स्मृचवत्; संर. २ प्रपावत्; संदी. २ (भागः २).

* संप्र. गौमिवत् । ऽ संप्र., चम. गौमिवत् ।
† मुक्ता. स्मृचवत् ।

(१) गौध. ८।१४; प्रक. ७६; मभा.; गौमि. ८।१५; स्मृच. (क.) १३, (ग.) १२; स्मृमा. १; पमा. ४३६; मपा. ९६; प्रपा. ४; प्रर. १; संप्र. १३७; चम. ११७; मुक्ता. ७३; संम. ७; भान. १४२; प्रका. १; संर. २; संदी. २ (भाग २).

स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञाना-मनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां च ॥

(१) स्नानं समावर्तनम्। सहधर्मचारिणीसंयोगो विवाहः। एतेषां चेति वक्ष्यमाणानामष्टकादीनामिति संबन्धः। ब्रक. ७६

(२) स्नानं समावृत्तिः। सहधर्मचारिणीसंयोगो विवाहः। विसमासो नावश्यमनन्तरमेव विवाह इति ज्ञापनार्थः। विवाह इति वक्तव्ये सहधर्मचारिणीग्रहणं दारपरिग्रहस्य कर्मार्थत्वज्ञापनार्थम्। एवं च अकृतदारस्य विधुरस्य च पञ्चयज्ञाद्यभावे न दोषः। पञ्चानां यज्ञानां देवयज्ञादीनां अनुष्ठानं करणम्। अनुष्ठानमिसंबन्धार्थः षष्ठ्या निर्देशः। अनुष्ठानग्रहणं च नाग्निष्टोमादिवत् कदाचिदेव, किंतु अहरहरित्येवमर्थम्। यद्यपि देवयज्ञादय एव पञ्च महायज्ञाः, तथापि देवादीनामुपादानं पञ्च संस्कारा इति ज्ञापनार्थं, अन्यथा पञ्चयज्ञानुष्ठानमेक एव संस्कार इत्याशङ्का स्यादिति। देवादयो व्याख्याताः। एतेषां चेत्यात्मगुणसमुच्चयार्थश्चकारः। ततश्च पञ्च यज्ञा अप्यात्मगुणसहिता एव पुरुषार्थप्रापकाः, न पृथग्भूता इति सिद्धं भवति। एतेषामिति वक्ष्यमाणानामुपलक्षणं, नोक्ताः पञ्च यज्ञा एव। कुतः? यदि पञ्चयज्ञानामेवाऽऽत्मगुणसहितत्वमिष्यते, तदानीं सगुणानां पञ्चानां यज्ञानामनुष्ठानमित्यवक्ष्यत्। ततश्च वक्ष्यमाणा अप्यात्मगुणसहिता एव ब्रह्मसायुज्यप्रापका इति द्रष्टव्यम्। * मभा.

(३) स्नानं समावर्तनं, सहधर्मचारिणीसंयोगो विवाहः। पञ्चानां देवा(?दी)नां यज्ञाः तेषामनुष्ठानम्। एतत्पञ्चमहायज्ञानुष्ठानमहरहः कर्तव्यम्। न तु सकृत्कृतेन संस्कारसिद्धिः। पञ्चग्रहणात्पञ्चैते पृथक् संस्काराः, न पुनः समुदिता एकः संस्कारः। वक्ष्यमाणानामष्टकादीनां च पाकयज्ञानामनुष्ठानं संस्कार इति। * गौमि.

अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः ॥

(१) 'ऊर्ध्वमाग्रहायण्यास्त्रयोऽपरपक्षाः तेषामेकैकस्मिन्नेकैका (एका) भवति (जैगृ. २।३)' इति या उच्यन्ते ता अष्टकाः। पार्वणः (स्थालीपाकः) पर्वणि भवत्वात् पार्वणः। श्राद्धं मासिश्राद्धमुच्यते। श्रावणीशब्देन श्रावणपौर्णमासीयुक्तत्वादुपाकरणमुच्यते। आग्रहायणीशब्देन आग्रहायणमुच्यते। चैत्रीशब्देन शूलगवः। आश्वयुजीति इन्द्रध्वजहोमः। सप्तग्रहणमेकैकस्य गणनार्थम्। पाकग्रहणं स्थालीपाकसंबन्धार्थम्। यज्ञग्रहणमग्निसंबन्धार्थम्। संस्थाः सम्यक् स्थिताः गृह्य एवोक्ता इत्यर्थः। मभा.

(२) 'ऊर्ध्वमाग्रहायण्यास्त्रयोऽपरपक्षास्तेष्वेकैकस्मिन्नेकाऽष्टका भवति' इति छन्दोगाः। 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकैकस्यां वा' (आगृ. २।४।१,२) इत्याश्वलायनः। 'या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते।' (आपगृ. ८।२१।१०) इत्यापस्तम्बः।

* स्मृच., स्मृसा., चम. मभागतम्।

(१) गौध. ८।१५; ब्रक. ७६; मभा.; गौमि. ८।१६–१८; स्मृच. (क. १३) (देवपितृमनुष्यभूतब्रह्मणामेतेषां च०), (ख.) ३२; स्मृसा. १ (पञ्चानां .. .. तेषां च०); पमा. ४३७ स्मृच(क.)वत्; प्रपा. ४ (स्नानं सहधर्मिणीसंयोगः पञ्चमहायज्ञानामनुष्ठानम्); प्रर. १ पमावत्; संप्र. १३७ (देवपितृमनुष्यभूतब्रह्मणाम्०); चम. ११७ ब्रह्मणामेतेषां (ब्राह्मणानामेतेषां); मुक्ता. ७३; संम. ७ पमावत्; श्रान. १४२ चमवत्; प्रका. १ पमावत्; संर. २ पञ्चानां यज्ञानामनुष्ठान (पञ्चमहायज्ञाः) शेषं पमावत्; संदी. २ (भागः २) पमावत्.

* संप्र., मुक्ता. गौमिवत्।

(१) गौध. ८।१६; ब्रक. ७६ (सप्त०); मभा.; गौमि. ८।१९; स्मृच. (क.) १३ पार्वणः (पार्वणं) ण्याग्रहायणी (ण्याग्रयणी), केचित् औपासनहोमो वैश्वदेव पार्वणमष्टका मासिश्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञानाहुः।: १५७ अष्टका पार्वणः (अष्टकाः पार्वणं) ण्याग्रहायणी (ण्याग्रयणी) युजीति (युजी चेति), (ख.) ३२ पार्वण. (पार्वणं) युजीति (युजी चेति): ४१३ पार्वणः (पार्वणं) ण्याग्रहायणी (ण्याग्रयणी) युजीति (युजी चेति); पमा. १५३ णः श्राद्धं (णश्राद्धं): ४३७ णः श्राद्धं (णश्राद्ध) युजीति (युजी चेति); प्रपा. ४; प्रर. १ पाकयज्ञसंस्थाः (पाकसंस्थाः); संप्र. १३७ (अष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः); चम. ११७; मुक्ता. १९ णः श्राद्ध (णश्राद्ध): ७३ णः श्राद्ध (णश्राद्ध) ग्रहायणी (ग्रयणी); संम. ७ णः श्राद्ध (णश्राद्ध); श्रान. १४२ संमवत्; प्रका. १ संमवत्; संर. २; संदी. २ (भागः २) संप्रवत्.

एवंभूता अष्टका । पर्वणि भवः स्थालीपाकः पार्वणः । श्राद्धं मासिश्राद्धम् । श्रावणी सर्पबलिः ' श्रावण्यां पौर्णमास्यां गृह्यमग्निमतिप्रणीय ' ( खागृ. ३।२।१ ) इत्यादि च्छन्दोगामिहितः । ' श्रावण्या पौर्णमास्यामस्तमिते स्थालीपाकः ' ( आपगृ. ७।१८।५ ) इत्यापस्तम्बः । आग्रहायणी मार्गशीर्ष्यां पौर्णमास्यां क्रियमाणः सर्पबलि- ( १ ले )रुत्सर्गहोमः । हेमन्ते प्रत्यवरोहणाख्यं च कर्म आग्रहायणीशब्देनोच्यते । चैत्री शूलगवः, ईशानबलिरित्यापस्तम्बीयाना प्रसिद्धः । स चैत्र्या पौर्णमास्यां भवति । 'अथ शूलगवः शरदि वसन्ते च' (आगृ. ४।९।१,२) इत्याश्वलायनः । ' आश्वयुजीं रुद्राय ( पाय )सः ' ( खागृ. ३।३।१ ) इति च्छन्दोगाः । ' आश्वयुज्यां पौर्णमास्यां तत्कर्म ( १ आश्वयुज्यामाश्वयुजीकर्म, ) निवेशनमलंकृत्य स्नाताः शुचिवाससः पशुपतये स्थालीपाकं निरुप्य जुहुयुः ' ( आगृ. २।२।१,२ ) इत्याश्वलायनः । अनाहिताग्नेराग्रयणमपि तत्रैव भवति । तदिदं द्वयमाश्वयुजीशब्देन विवक्षितम् । पाकयज्ञ इति गार्ह्याणां कर्मणामाख्या । यथाऽऽह आपस्तम्बः— ' लौकिकानां पाकयज्ञशब्दः ' ( आपगृ. १।२।९ ) इति । संस्थाः विधाः, पाकयज्ञविधाः सप्तेत्यर्थः । * गौमि.

( ३ ) चैत्री होलकाख्यं कर्म । आश्वयुजी इन्द्रध्वजहोमाख्यम् । अन्ये तु प्रसिद्धाः । केचिदौपासनहोमो वैश्वदेवं पार्वणमष्टका मासिश्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञानाहुः । ऽ स्मृच. १३

( ४ ) श्रावणी सर्पबल्याख्य श्रवणाकर्माख्यं च कर्म । संप्र. १३७

( ५ ) श्राद्धममावास्यादि । श्रावणी तत्र कर्तव्यं श्रवणाकर्म । आग्रहायणी तत्र कर्तव्यं प्रत्यवरोहणम् । चैत्री तत्र कर्तव्यः शूलगवः । आश्वयुजी तत्र कर्तव्यमाश्वयुजीकर्म अनाहिताग्नेराग्रहाय( १ ग्रय )णं चेति द्वयं आश्वयुजीशब्दमाम्नानिति हरदत्तः । पाकयज्ञाः अल्पयज्ञाः । प्रशस्तयज्ञा वा, ' तं पाकेन मनसा ' ' यो मा पाकेन मनसा ' इत्यादौ पाकशब्दप्रयोगस्य प्रशंसायां ᳚ दर्शनादिति वृत्तिकृन्नारायणः । ऽ चम. ११७,११८

( ६ ) आपस्तम्बिनां तु औपासनं दर्शपूर्णमासौ वैश्वदेवमष्टका मासिश्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञाः, अग्न्याधेयं विना अग्निहोत्रादिपिण्डपितृयज्ञान्ता हविर्यज्ञसस्था इति भेदः । आन. १४२

( ७ ) सूत्रकृता आश्वयुज्या अविधानात् तत्र औपासनहोमः संस्थात्वेन ग्राह्यः । उक्तं च वैखानसेन— ' स्थालीपाकोऽष्टका अमाश्राद्धमौपासनहोमः श्रावण्याग्रहायणी चैत्रीति सप्त पाकयज्ञसंस्थाः, वैश्वदेवमेके चैत्रीस्थाने समामनन्ति ' इति । पाकयज्ञसंस्थाः सप्तेत्यन्वयः । पाकयज्ञसंस्था उद्दिश्य सप्तत्वं विधीयते । तत्र सप्तत्वं चरमपदलक्षणया सप्तान्यतमत्वम् । उद्देश्यविधेयभावस्थले विधेयतावच्छेदकरूपेण विधेयस्य उद्देश्यतावच्छेदकव्यापकत्वबोधो व्युत्पत्तिसिद्धः । उद्देश्यतावच्छेदकं पाकयज्ञसंस्थात्वम् । विधेयतावच्छेदकं सप्तान्यतमत्वम् । तथाष्टकादिभेदसप्तकाभाववत्त्वम् । तथा च पाकयज्ञसंस्थाः सप्तान्यतमा इत्यर्थे सिद्धे आधिक्यव्यवच्छेदसिद्धिः । एतेन सिद्धयसिद्धिव्याघातो निरस्तः । न्यूनत्वव्यवच्छेदस्तु सप्तत्वान्वयादेव लभ्यते । बौधायनेन तु पाकयज्ञसंस्थानामपरिमितत्वमपि पक्षे उक्तं कर्मान्तसूत्रे ' अपरिमिता उ हैके ब्रुवते यच्च किंचान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्थाः ' इति । अनेनाद्भवस्वामिमाष्यम्–' अविशेषेण यत्किंचिदेतामग्नेरन्यत्र हूयते सर्वास्ताः पाकयज्ञसंस्थाः' इति । एतेनापरिमितत्वं दर्शितमिति । एतन्मते सप्तान्यतमत्व सप्तपदेन न लक्षणीयम् । गर. ३

अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः ॥

* मर., मंप्र., मुचऊ., सेन. गौमिगताम् ।

ऽ दीपे मैमिगतम् ।

* आगृ. १।१।२ ( मंप्र. पृ. १७ ) द्रष्टव्यम् ।

ऽ सेन. चमवद् पदार्थाः ।

( १ ) गौध. ८।१७ ; मक. ७६ ; ममा. ; गौमि. ८।२० ; स्मृच. ( क. ) १३ मासामामदर्शे चातुर्मास्यानि ( मासी चातुर्मास्यामदर्शेति ) : १४७ दर्शपौर्णमासावाग्रयणं चातुर्मास्यानि ( दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टि ), ( ग. ) १२ पौर्णमासामावास्ये वा ( पूर्णमासौ अमावास्या ) : ४११ दर्शपौर्णमासा-

(१) श्रुतिप्रसिद्धकर्मानुवादः संस्कारत्वार्थः। अत्र आग्रयणशब्देन आग्रहायणेष्टिरुच्यते, इतरस्य पूर्वमुक्तत्वात्। अग्न्याधेयमित्याधानमुच्यते। अग्निहोत्रं नाम हविर्यज्ञः श्रुतौ प्रसिद्धः। दर्शपूर्णमासौ तु संस्कारमध्ये एक एव। इतरे प्रसिद्धाः। सप्तग्रहणस्योक्तं प्रयोजनम्। दोषस्याप्युक्तमेव। मभा.

(२) अग्न्याधेयादयः श्रुतिसिद्धाः संस्कारेषु गण्यन्ते। सप्तग्रहणाद्दर्शपूर्णमासौ समुदायतयैकः संस्कारः। सोमसंबन्धाभावाद्धविर्यज्ञा इति। * गौमि.

अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः॥

(१) उक्तेनैव न्यायेन सूत्रं व्याख्येयम्। पाकयज्ञादीनां विसमासो भिन्नफलत्वज्ञापनार्थः। मभा.

(२) अग्निष्टोमे राजन्यस्य षोडशिग्रहो गृह्यते यत्र सोऽत्यग्निष्टोमः। ब्राह्मणस्य कथमयं संस्कार इति चिन्त्यम्। अन्ये प्रसिद्धाः। गौमि.

इत्येते चत्वारिंशत्संस्काराः॥

(१) इत्येते इत्युक्तोपसंहारः। चत्वारिंशदिति नियमार्थः, एतावन्त एव संस्कारा इति। ततश्च समस्तस्मार्तश्रौतकर्मसंपदुपेतो भवति। मभा.

(२) इत्युक्तोपसंहारः। चत्वारिंशद्ग्रहणा (देय ता?)देतावन्त एव संस्काराः। नान्यानि स्मार्तकर्माणि काम्यादीनि चेति। गौमि.

(३) गर्भाधानाद्युपनयनपर्यन्ता एव संस्काराः सर्वेषां नियताः, न पुनः स्नानादयः। तथात्वे 'यमिच्छेत्कर्तुं (?) तमावसेत्' (वस्मृ. ७।२) 'यदि चे(वे)तरथा ब्रह्मचर्यादेव प्रव्रजेत्' (जाउ. ४) इति विरोधः स्यात्। * स्मृच. १३–१४

(४) चत्वारिंशद्ग्रहणादेतावन्तः संस्काराः, तेन अन्यानि श्रौतानि स्मार्तानि च कर्माणि न संस्कारेष्वन्तर्भवन्ति। मुक्ता. ७३

संस्काराणां ब्राह्मपदप्राप्तये अष्टभिरात्मगुणैः समुच्चयः कर्तव्यः

अथाष्टावात्मगुणाः॥

(१) वक्ष्यन्ते इति शेषः। अथशब्दोऽनन्तरवाची, संस्कारानन्तरमात्मगुणा वक्ष्यन्ते इत्यर्थः। सर्व एवैतैर्गर्भाधानादिभिः समुच्चीयन्ते, न तु यथालाभमित्येवमर्थमष्टौग्रहणमिति केचित्। तदयुक्तम्। 'यस्य तु खलु संस्काराणामेकदशोऽप्यष्टावात्मगुणाः' इत्यत्राष्टौग्रहणस्य आनर्थक्यप्रसङ्गात्। ततश्च संज्ञार्थं वचनं, यत्रयत्राष्टावात्मगुणा उच्यन्ते तत्रतत्र दयादीनामेव ग्रहणं यथा स्यादिति। समुच्चितानामेव प्रवेशो यथा स्यादित्येवमर्थं गुरुसंज्ञाकरणम्। मभा.

---

* संप्र., चम. गौमिवत्।

ग्रयणं चातुर्मास्यानि (दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिः); पमा. १५२ पौर्ण (पूर्ण) चातुर्मास्यानि (चातुर्मास्यं): ४३७ अग्न्या . .. पशुबन्धः (अग्न्याधेयोऽग्निहोत्र दर्शपूर्णमासाग्रयणचातुर्मास्यानि निरूढपशुबन्धाः); प्रपा. ४ पौर्णमासावाग्रयणं चातुर्मास्यानि (पूर्णमासौ चातुर्मास्यानि आग्रयणेष्टि); प्रर. १ प्रपावत्; संप्र. १३७ प्रपावत्; चम. ११७ पौर्णमासावाग्रयणं (पूर्णमासावाग्रहायणं); मुक्ता. १९ दर्शपौर्णमासावाग्रयणं चातुर्मास्यानि निरूढ (दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिनिरूढ): ७३ पौर्ण (पूर्ण); संम. ७ प्रपावत्; आन. १४२ पौर्ण (पूर्ण); प्रका. १ प्रपावत्; संर. २ प्रपावत्; संदी. २ (भागः २) प्रपावत्.

(१) गौध. ८।१८; अक. ७६; मभा.; गौमि. ८।२१; स्मृच. (क.) १३, १५७, (ख.) २२, ४१२; पमा. १५२ मोऽत्यग्नि (मात्यग्नि): ४३७ रात्रोऽप्तो (रात्राप्तो); प्रपा. ४ सोमसंस्थाः (सोमयज्ञसंस्थाः); प्रर. १ प्रपावत्; संप्र. १३७ प्रपावत्; चम. ११७ मोऽत्यग्नि (मात्यग्नि) उक्थ्यः (उक्थः) रात्रोऽप्तो (रात्राप्तो); मुक्ता. १९: ७२ वाजपेयोऽतिरात्रोऽप्तो (वाजपेयातिरात्राप्तो); संम. ७; आन. १४२; प्रका. २; संर. २ प्रपावत्; संदी. २ (भागः २) रात्रोऽप्तो (रात्र आप्तो) शेषं प्रपावत्.

* चम. स्मृचवत्।

(१) गौध. ८।१९; अक. ७६; मभा.; गौमि. ८।२२; स्मृच. (क.) १३, (ख.) २२; पमा. ४३७; प्रपा. ४; प्रर. १; संप्र. १३७; चम. ११७; मुक्ता. ७३; संम. ७; आन. १४२; प्रका. २; संर. २; संदी. २ (भागः २).

(२) गौध. ८।२०; मभा.; गौमि. ८।२३; स्मृच. (क.) १३ अथाष्ट (अष्टा), (ख.) ३२; प्रपा. ४ स्मृचवत्; प्रर. १ स्मृचवत्; संप्र. १३८; चम. ११७ स्मृचवत्; मुक्ता. ७३ स्मृचवत्; संम. ७ स्मृचवत्; आन. १४२ (अष्टावात्मगुणाश्च); प्रका. २ स्मृचवत्; संर. २ स्मृचवत्; संदी. २ (भागः २

( २ ) अथशब्दः संभावनायाम् । गौमि.

**दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति ॥**

( १ ) दया हितचिन्तनम् । सर्वग्रहणात्स्थावरेष्वपि । क्षान्तिः बाह्याभ्यन्तरद्वन्द्वसहिष्णुता । अनसूया गुणवतामुपरि प्रद्वेषाभावः । शौचं द्रव्यादिशौचम् । अनायासः आत्मपीडानारम्भः । मङ्गलं प्रशस्तमेव । अकार्पण्यं आपद्यपि अदीनता संविभागरुचित्वं च । अस्पृहा विषयसंतोषः परद्रव्यानभिलाषश्च । इतिकरणं समाप्त्यर्थं, एतावान् पुरुषस्य संस्कारः कर्तव्यः इति । विसमासः फलपृथक्त्वज्ञापनार्थः । एवं सर्वालाभे यथालाभपरिग्रहोऽपि कर्तव्यः, पृथग्भूतस्यापि फलश्रवणात् ।

मभा.

( २ ) आपन्नस्य द्वेष्टुरपि रक्षणं दया । बाह्ये आभ्यन्तरे वा परेण दुःखे उत्पादितेऽपि तस्मिन् कोपाभावः क्षमा, सैव क्षान्तिः । गुणिना गुणानाविष्करणमसूया, एतद्भिन्ना अनसूया । निन्दितसंसर्गाभक्ष्यादिपरिहारपूर्वकं स्वधर्मव्यवस्थानं शौचम् । शरीरपीडावहक्षुद्रकर्माचरणमायासः, तद्भिन्नोऽनायासः । अप्रशस्तकर्मविवर्जनपूर्वकं प्रशस्तकर्माचरणं मङ्गलं, तस्य भावो माङ्गल्यम् । अदैन्यपूर्वकं सत्पात्रे भक्त्या शक्त्या च प्रत्यहं दानमकार्पण्यम् । परकीयवस्तुन्यभिलाषः स्पृहा, तद्भिन्ना अस्पृहा । संर. २–३

**यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति ॥**

( १ ) गौध. ८।२१; मभा. ; गौमि ८।२४ ; स्मृच. ( क. ) १३ सूया ( सूयता ) मङ्गल ( माङ्गल्य ), ( ख. ) ३२ ; मपा. ४ मङ्गल ( माङ्गल्य ) ; मर. १ मनायासो मङ्गल ( मनालस्यं माङ्गल्य ); संप्र. १३८ ; चम. ११७ मपावत्; मुक्ता. ७३ ; संम. ७ मङ्गल ( मङ्गल्य ), आन. १४२; प्रका. २ ; संर. २ मपावत्, संदी. २ ( भाग. २ ).

( २ ) गौध. ८।२२; मभा., गौमि. ८।२५ सालोक्यं च ( सालोक्य ) , स्मृच. ( क. ) १३ ( यस्यैते चत्वारिंशत्संस्काराः ते चाष्टावात्मगुणा ते संस्कृतो ब्रह्मणः सायुज्य सालोक्य गच्छति ), ( ख ) ३४ ; पमा. ५५ (=) ( यस्यैते अष्टचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्य सलोकतां गच्छति ); मपा. ४ ( यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोति ); मर. १ ( यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोति ); संप्र. १३९ यस्यैते चत्वा ( यस्यैते न चत्वा ); चम. ११७ सालोक्यं च ( सालोक्य ); मुक्ता. ७३ ; संम. ७ मपावत्; आन. १४२ तात्पर्यंगोद्धारः; प्रका. २ मपावत्; संर. २ मपावत्.

यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति ॥

( १ ) यस्य तु पुरुषस्य । एते इति संस्कारपरामर्शो गुणानां गौरवार्थः । चत्वारिंशदिति संहितानामप्यसामर्थ्यज्ञापनार्थम् । न चाष्टावात्मगुणाः, चकारात्समस्ता व्यस्ताश्च । एतदपि गुणस्तुतिः । न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति । ब्रह्मा नाम देवताविशेषः । सायुज्यं ऐकात्म्यं, सालोक्यं समानस्थानवासित्वम् । निन्दा च गुणस्तुत्यर्थैव । प्राधान्यात् सायुज्यस्यैव पूर्वमुपदेशः ।

तुशब्दो विशेषवाची, एकदेशग्रहणेनोपनयनस्यैव ग्रहणमिति । खल्वित्यवधारणे, स एव गच्छतीति । अपिशब्दात्समस्ता अपि । अथशब्दादानन्तर्येणैव गच्छतीति । एकदेशयोगात्सालोक्यं, समस्तयोगात्सायुज्यमिति द्रष्टव्यम् । इयमपि गुणस्तुतिः । मभा.

( २ ) एषामुत्कर्षमाह– यस्यैते इति । सालोक्यं समानलोकवासित्वम् । एकदेशसंयोगात्सालोक्यं समस्तयोगात्सायुज्यमिति ।

तुशब्दो विशेषवाची । खलुशब्दः प्रसिद्धौ । यस्य चत्वारिंशत्संस्कारेषु द्विजत्वमूलकतिपयसंस्कारसंबन्धेऽप्यष्टावात्मगुणाः सन्ति । अथशब्दो निर्धारणे । ब्रह्मणः सायुज्यं सालोक्य च गच्छत्येव । * गौमि.

( ३ ) अतश्च यस्यैते चत्वारिंशत्संस्काराः अष्टावात्मगुणाश्च तस्यैवेदं ब्रह्मसायुज्यप्राप्तिलक्षणं फलमित्यवगन्तव्यम् । † स्मृच. १३

( ४ ) गच्छति गच्छतीति द्विरुक्तिरष्टमाध्यायसमाप्त्यर्था । चम. ११८

* संप्र. गौमिवत् । † मुक्ता. स्मृचवत् ।

( १ ) गौध. ८।२३ ; मभा.; गौमि. ८।२६ ; संप्र. १३९ देशो ( देशे ): १३८ तात्पर्यंगोद्धारः; चम. ११७ गच्छति ( गच्छति गच्छति ); आन. १४२ तात्पर्यंगोद्धारः.

## हारीतः

संस्कारो द्विविधो ब्राह्मदैवभेदाभ्याम्, बैजिक-गार्भिकदोषनिरसनं अष्टभि. संस्कारैः, उपनयनादिव्रतैः देवपितृपात्रत्वम्

[1]द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च। गर्भाधानादिः स्नानान्तो ब्राह्मः। पाकयज्ञा हविर्यज्ञाः सौम्याश्चेति दैवः। ब्राह्मसंस्कारसंस्कृतः ऋषीणां समानतां सलोकतां सायुज्यं गच्छति। दैवेनोत्तरेण संस्कृतो देवानां समानतां सलोकतां सायुज्यं गच्छति॥

(१) सौम्याः सोमयागा अग्निष्टोमादयः। समानता समानो यः तेन तुल्यतोक्ता। सायोज्यता, समानं आयोज्यं शरीरं यस्य सः सायोज्यः। ब्रक. ७७

(२) एतच्च गुणविहीनसंस्काराभिप्रायेण। अत एव गौतमः– 'यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति' (गौध. ८।२२) इति। ऽ स्मृच. १३

(३) ते च ब्राह्माः षोडश। पृ. १३५

समानता समानो मानः पूजा यस्य सः समानः, समानस्य भावः (समानता)। सामान्यता, सामान्यशब्दः समानपर्यायः, तेन तुल्यरूपतोक्ता। समानलोकता एकलोकनिवासः। संप्र. १४०

गर्भाधानवदुपेतो ब्रह्मगर्भं संदधाति। पुंसवनात् पुंसीकरोति। फलस्नपनात् मातापितृजं पापमपोहति। रेतोरक्तगर्भोपघातः पञ्चगुणः। जातकर्मणा प्रथममपोहति। नामकरणेन द्वितीयम्। प्राशनेन तृतीयम्। चूडाकरणेन चतुर्थम्। स्नानेन पञ्चमम्। एतैरष्टभिर्गर्भसंस्कारैः गर्भोपघातात्पूतो भवति। उपनयनादिभिरष्टाभिरन्तर्व्रतैश्चाष्टाभिः स्वच्छन्दःसंमिता ब्राह्मणाः परं पात्रं देवपितॄणां भवन्ति। च्छदसां वाऽऽयतनम्॥

गर्भाधानवत् गर्भाधानविधिना 'विष्णुर्योनिं कल्पयतु' इत्यादिना। उपेतः स्त्रियमुपगतः। ब्रह्मगर्भं संदधातीति। ब्रह्म वेदः, तद्ग्रहणयोग्यं गर्भं संदधाति

(१) ब्रक. ७७ सायुज्यं (सायोज्यतां च) सर्वत्र; स्मृच. (क.) १३ द्विविध एव (द्विविधः) दिः स्नानान्तो (दिस्मार्तो) पाकयज्ञा...दैव. (पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः) देवानां (दैवानां), (ख.) ३४ स्नानान्तो (स्मार्तो) पाकयज्ञा...दैवः (पाकयज्ञहविर्यज्ञसोमाश्चेति दैवः); हभा. १८८ गर्भाधा...दैवः (गर्भाधानादिस्नानान्तो ब्राह्मः। पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः) (सलोकतां०) सायुज्यं (सायुज्यतां) दैवेनो...गच्छति (दैवनोत्तरेण संस्कारेणानुसंस्कृतो देवानां समानतां सालोक्यतां सायुज्यतां गच्छति); पमा. ४३६ (द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्च, गर्भाधानादिस्मार्तो ब्राह्मः. पाकयज्ञहविर्यज्ञाः सौम्याश्च दैवो ब्राह्मेण संस्कृत ऋषीणां समानतां सायुज्यं गच्छति, दैवेनोत्तरेण संस्कृतो देवानां समानतां सायुज्यं गच्छति); प्रपा. ४ (द्विविधो हि संस्कारो ब्राह्मो दैवश्चेति। गर्भाधानादिः स्मार्तो ब्राह्मः। पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवः। ब्राह्मेण संस्कृत ऋषीणां समानतां सायुज्यं गच्छति। दैवेनोत्तरेण सस्कृतो देवानां समानतां सायुज्यं गच्छतीति।); संप्र. १३५ द्विविध एव (द्विविधो हि) स्नानान्तो (स्मार्तो) सौम्याश्चेति (सौम्याश्च) (ब्राह्मणं...गच्छति०) स्नानान्त इति पाठः कल्पतरौ: १३९–१४० (द्विविध एव... दैवः०) (ब्राह्मसंस्कारसंस्कृतः ऋषीणां समानतां सामान्यतां समानलोकतां सायोज्यतां गच्छति। दैवेनोत्तरेण संस्कारेणानुसंस्कृतो देवानां समानतां सामान्यतां समानलोकतां सायोज्यतां च गच्छति); मुक्ता. ७३ दिः स्नानान्तो.. ऋषीणां समानता सलोकतां (दिसमावर्तान्ते ब्राह्मः। पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवाः। ब्राह्मेण संस्कारेण संस्कृत ऋषीणां समानानां); संम. ८ दिः स्नानान्तो...गच्छति (दिस्मार्तो ब्राह्मः। पाकयज्ञा हविर्यज्ञाश्चेति दैवः। ब्राह्मेण संस्कारेण संस्कृत ऋषीणां सलोकतां गच्छति। दैवनोत्तरेण संस्कृतो देवानां समानतां सलोकतां गच्छतीति); संग. ७–९ (द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्चेति। गर्भाधानादिः स्मार्तो ब्राह्मः स्नानान्त इति। पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवाः। ब्राह्मसंस्कारसंस्कृत ऋषीणां समानतां गच्छति। दैवेनोत्तरसंस्कारेण संस्कृतो देवानां समतां गच्छति।); रत्न. २ (द्विविधः संस्कारो भवति। गर्भाधानादिस्नानान्तो ब्राह्मः। पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः। ब्राह्मसंस्कारैः संस्कृतो ऋषीणां समानतां समानलोकतां सायुज्यतां गच्छति।) एतावदेव; संदी. १ (भागः २) द्विविध एव (द्विविधो हि) स्नानान्तो (स्मार्तो) म्याश्चेति (म्याश्च) (ब्राह्म...गच्छति०).

ऽ मुक्ता. स्मृचवत्।

(१) ब्रक. ७५ रेतोरक्तग (ब्राह्मण्यरेतोत्थग) एतैर (व्रतैर); हभा. १८८ मातापितृजं पापम (पितृजं पाप्मानम) (रेतोरक्त...पञ्चगुणः०) गर्भसंस्कारैः (गार्भसंस्कारैः) उपनय...वाऽऽयतनम् (उपनयनाद्यैरेभिरनुव्रतैश्चाष्टभिः स्वच्छन्दसंमितो ब्राह्मणः परं पात्रं देवपितॄणां भवति। छन्दसामायतनम्।); संत. ८५७ स्नपनात् (स्थापनात्) पापम (पाप्मानम) स्नानेन (स्नापनेन) रष्टभिर्गर्भम (रष्टाभिः सं) (उपनयना...वाऽऽयतनम्०).

संजनयति । पुंसीकरोति अव्यक्तलिङ्गगर्भं पुमांसं करोति, 'पुमांसं पुत्रं विन्दस्व' ( सा. मं. ब्रा. १।४।९ ) इति मन्त्रवर्णात् । फलस्नपनात् फलस्नपनाङ्कसीमन्तोन्नयनात् । मातापितृजं मातापितृद्वारा जातम् । गर्भसंस्य ( आश्रयसंस्य ? ) आश्रयसंस्कारद्वारा अपत्यसंस्कारः । उपघातः पापसंघः । पञ्चगुणः पञ्चप्रकारः । उपपातकजातिभ्रंशकरसंकरणापात्रीकरणमलिनीकरणरूपपापपञ्चकसंक्रान्ते ( न्त इ ) इति जयस्वामी । स्नानं चात्र समावर्तनम् । अष्टौ व्रतचर्याः 'उपनयनादि मेखला' इत्यादि( ना ) 'ऊर्ध्वरेताः' इत्यत्र वक्ष्यमाणाः । अन्तर्व्रतानि सावित्रीगोदानकाऽऽदित्यव्रतौपनिषदाष्टकामासिक( ? ज्येष्ठसामिक )महानाम्नीमहाव्र( तव्रा )तिकानि । स्वच्छन्दःसंमिताः स्ववेदयुक्ताः ।

* प्रक. ७५

## विष्णुः

स्त्रीणां जातकर्मादिसंस्कारा अमन्त्रकाः, विवाहः समन्त्रकः

एता एव क्रियाः स्त्रीणाममन्त्रकाः ॥
तासां समन्त्रको विवाहः ॥

## शङ्खः शङ्खलिखितौ च

संस्काराः पूर्वे उत्तरे च, संस्काराणां ब्राह्मपदप्राप्तये अष्टभिरात्मगुणैः समुच्चयः कर्तव्यः

पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैव च ।
संस्कारा ह्यग्निहोत्रान्ता अग्निहोत्रं तु जुह्वतः ॥
¹संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः ।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः ॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः ।
नाकपृष्ठं यशो धर्मं त्रिरीजानस्त्रिविष्टपम् ॥

( १ ) अग्निहोत्रिणः दर्शपूर्णमासं विनाऽपि अग्निहोत्रानुष्ठानं विहितमस्ति, तस्याग्निहोत्रपर्यन्ताः संस्काराः । ( जातकर्म ? ) पूर्वैः गर्भाधानादिभिः, उत्तरैः अग्न्याधेयादिभिः । अष्टगुणैः दयादिभिः । ब्राह्मलौकिकः ब्रह्मलोकार्हः । नाकपृष्ठं मेरुपृष्ठम् । त्रिविष्टपं देवलोकः । त्रिरीजानः पाकयज्ञहविःसोमसंस्थाभिः । त्रिः सोमयागेनेष्टवान् इति माधवस्वामी । * प्रक. ७८

( २ ) गर्भाधानादयः पूर्वे संस्काराः । उत्तरे पाकयज्ञादयः । ऽ स्मृच. १३

शूद्राणां अमन्त्रकाः संस्काराः

²मन्त्रवर्जं शूद्रस्य ॥

## महाभारतम्

संस्कारसामान्यविधिः

³चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥
⁴मन्त्रोऽयं जातकर्मादि ब्राह्मणस्य विधीयते ।
जीवतो यो यथाकालं श्मशाननिधनादिति ॥

संस्कारैर्माहात्म्यम्

⁵जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः ॥

---

* फलस्नपनाङ्कसीमन्तोन्नयनं च मानवगृह्यसूत्रे 'अष्टमे गर्भमासे जयप्रभृतिभिर्हुत्वा फलैः स्नापयित्वा' ( २।१६ ) इत्यादिना ग्रन्थेन विहितमनुसंधेयम् । तत्र तृतीये षष्ठे वा मासि सीमन्तोन्नयनं कर्तव्यं चेत् फलस्नपनादिविधिर्न प्राप्नोति इति ध्येयम् । अत्र 'ज्यैष्ठसामिक' इति अन्तर्व्रतपरिगणने धृतः पाठो न साधुः । यतः 'गोदाने चौलवत् कल्पः' ( १।८।१ ) इति खादिरगृह्यसूत्रस्य व्याख्यानावसरे रुद्रस्कन्देनोक्तम्- अष्टौ व्रतानि स्मर्यन्ते छन्दोगानां-उपनयन गोदाने व्रातिकमादित्यव्रतं महानाम्निकमौपनिषदं ज्यैष्ठिकं सामगामव्रतमिति । अत्र ज्यैष्ठिकव्रतस्थाने ज्येष्ठसामव्रतं शिरस्येन सन्निवेश्य, ( १।५।२४ ) सूत्रव्याख्यानावसरे सर्वाण्यष्टौ व्रतानि विवृतानि, तत एतद् प्रतीयते, यद् 'ज्यैष्ठसामिक' इति लेखकप्रमादः, 'ज्येष्ठसामिक' इत्येव पाठः साधुः स्यादिति ।

( १ ) विस्मृ. २७।१३,१४.

( २ ) प्रक. ७८; संप्र. १४०.

* संप्र. ७८५ ।

ऽ मुक्ता. स्मृच ३ ।

( १ ) प्रक. ७८; स्मृच. ( क ) ११ स्तुमे ( रति पे ) ब्राह्मलौकिकः ( ब्रह्मलौकिकम् ) शेष., ( ग. ) १४ कपुस्तकस्य पाठः, मनु; प्रपा. ४ स्तुमे ( रति मे ) ब्राह्मणो ( ब्राह्मणो ) मनुः ; संप्र. १४०; मुक्ता. ७२ स्मृचवत्, शेषं; संग. ९ शेष.

( २ ) प्रक. ७८; स्मृच. ( क. ) ११ पू., ( ग. ) १४ पू., मनु, संप्र. १४०; मुक्ता. ७३ वमात्र ( मन्त्रात्र ) पू., शेष ; संग. ९ पू., शेष.

( ३ ) विश्व. २।११.

( ४ ) भा. १३।११।१२,१३.

( ५ ) भा. १३।१८९।२,३; स्मृच. १८९ मिर्यस्तु ( भिर्युक्तो ) मन्त्री युक्त ( कर्मनिष्ठ ) नियमस्थ ( नियम मही ).

शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥

संस्काराः

भूतग्रामे नियुक्तं यत्तदेतत्कीर्तितं मया ।
ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि पृच्छते ॥
जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम् ।
क्रिया स्यादासमावृत्तेराचार्ये वेदपारगे ॥
अधीत्य वेदानखिलान् गुरुशुश्रूषणे रतः ।
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ॥
आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥
प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः ।
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ॥
गृहस्थस्त्वेव धर्माणां सर्वेषां मूलमुच्यते ।
तत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति ॥
प्रजावान् श्रोत्रियो यज्वा
मुक्तो दिव्यैस्त्रिभिर्ऋणैः ।
अथान्यानाश्रमान् पश्चात्
पूतो गच्छति कर्मभिः ॥

संस्कृतस्य सिद्धिः

[1]संस्कृतस्य हि दान्तस्य नियतस्य कृतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च ॥

शूद्राणां पाकयज्ञेषु पञ्चमहायज्ञेषु पौष्टिककर्मणि चाधिकारः, शूद्राणां मन्त्राः, सर्वयज्ञेषु दक्षिणादानाधिकारः

[3]स्वाहाकारनमस्कारौ मन्त्रः शूद्रे विधीयते ।
ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान् स्वयम् ॥

(१) स्वाहाकारनमस्कारौ द्वावपि पृथक् पृथक् मन्त्रौ, न समुच्चितौ । ताभ्यां स्वाहाकारनमस्काराभ्यां विकल्पिताभ्यां, न समुच्चिताभ्याम् । व्रतः मन्त्रः तद्वान् स्वाहाकाररूपमन्त्रवान् नमस्काररूपमन्त्रवान् वा । स्मृकौ. ४०–४१

(२) तत्र स्वाहाकारमन्त्रः शूद्रे लोकविद्विष्टत्वात् आचारविरोधाच्च न भवतीत्याहुः । शूशि. ४९

मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीं क्रियाम् ॥
दक्षिणा पाकयज्ञानां हिरण्यं तु विधीयते ॥
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः ॥
नेह शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति ।
स्मृतिप्रयुक्तं तु न धर्ममश्नुते
न चास्य धर्मे प्रतिषेधनं स्मृतम् ॥
विकर्म चास्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथा सन्तमाश्रित्येह स्वकर्मसु ॥
यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते ॥

## मनुः

संस्काराणां निषेकादीनां मौञ्जीबन्धनान्तानां बैजिकगार्भिकपापनाशकत्वम्, संस्कारलक्षणम् (टीकाकारकृतम्)

[5]वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

(१) मन्त्रप्रयोगाः वैदिककर्माणि । वेदाः मन्त्रा इहाभिप्रेताः । तेषां यान्युच्चारणानि तानि तत्र भवानि । अतः अध्यात्मादित्वाट्ठक् । वेदमूलत्वाद्वा उपचरितो

(१) भा. १२।२३४।१–७.

(२) भा. १२।२३५।२४.

(३) पमा. ४१९–४२० पूर्वार्ध (स्वाहाकारनमस्कारमन्त्रं शूद्रे विधीयते ।) ब्रह्मवान् (ब्राह्मणवान्); स्मृकौ. ४०; शूशि. ४९; संम. ८१ स्वाहाकारनमस्कारौ (स्वाहाकारो नमस्कारो) पू.; शूक. ५३ (तस्माच्छूद्रः पाकयज्ञैर्यजेत व्रतवान् स्वयम् ।) उत्त.: ६५ मन्त्रः शूद्रे विधीयते (मन्त्रौ शूद्रौ विधीयताम्); सस्मृ. ३६ मन्त्रः (मन्त्रौ) पू.

(१) स्मृकौ. २६; शूशि. ६६; शाम. ३,७; शूक. ४१.

(२) शूक. ५३.

(३) शूक. ५७.

(४) स्थलादिनिर्देशः व्यासवचने द्रष्टव्यः ।

(५) मस्मृ. २।२६; मेधा.; गोरा.; ब्रक. ७३; मवि. कादिर्द्वि (कार्यैर्द्वि); स्मृच. (क.) १४, (ख.) ३६ मविवत्; मसु.; स्मृसा. १; स्मृकौ. २७; शूशि. ६८; मच.; संप्र. १३२ : ३३८ ( = ); मुक्ता. ७२ मविवत्; विपा. ३७२ (भागः २); श्रान. १४२ मविवत्, शंरा.; नन्द.; भाच.; सस्मृ. ५१ मविवत्.

वैदिकशब्दः । कर्मशब्देन च इतिकर्तव्यतारूपं कर्म गृह्यते । ततश्च कर्मभिर्निषेकादिः संस्कारः कार्यः इति साध्यसाधनभेदोपपत्तिः । प्रधानं निषेकः, मन्त्रोच्चारणं इतिकर्तव्यता । निषेकः योनौ शुक्रनिक्षेपः । स आदिरस्य संस्कारकलापस्य वक्ष्यमाणस्य उपनयनपर्यन्तस्य । एकवचनं शरीरसंस्कार इति समुदायापेक्षम् । संस्कारशब्देन च सगुणशरीरनिर्वर्तकमुच्यते । तत्र निषेको निर्वर्तकः, अन्यानि विशेषजनकानि । एतदेवाह— पावन इति । पावयति अशुद्धतामपकर्षतीति पावनः । प्रेत्य चेह चेति संस्कृतस्य सर्वत्रात्र दृष्टादृष्टफलेषु कर्मसु कारीरीज्योतिष्टोमादिषु अधिकारात् उभयलोकोपकारकत्वमाह । पुण्यैः शुभैः मङ्गलैरिति यावत् । सौभाग्यमावहन्ति दौर्भाग्यं चापनुदन्तीति पुण्यपावनशब्दयोरर्थभेदः । द्विजन्मनामिति शूद्रपर्युदासार्थम् । संस्कार्यनिर्देशश्चायम् । लक्षणया च त्रैवर्णिकाः प्रतीयन्ते । न हि तदानीं द्विजन्मानो भवन्ति ।

मेधा.

( २ ) वैदिकमन्त्रसाध्यत्वात् वेदमूलसाध्यत्वाच्च वैदिकैः स्मार्तैः कर्मभिः ' विष्णुर्योनिं कल्पयतु ' इत्येवमादिमन्त्रप्रयोगादिभिः पुण्यैः पारम्पर्येण धर्महेतुभिः गर्भाधानादिः द्विजातीनां शरीरसंस्कारः कर्तव्यः । पावनः पवित्रीकारकः । प्रेत्य परलोके संस्कृतस्य यागादिकर्मफलसंबन्धात् इह लोके च संस्कृतस्य अध्ययनाद्यधिकारात् ।

● गोरा.

( ३ ) वेदोक्तैः क्रियाविशेषैः पुण्यैः पुण्यसाधनैः गर्भाधानादिभिः शरीरसंस्कारः शरीरगतातिशयजननं कार्यम् । इह ऐहिकफलेषु कर्मसु कर्तव्येषु पावनः अनधिकारहेतुपापनाशकः । एवं प्रेत्येत्यत्रापि ।

मवि.

( ४ ) वैदिकैः विहिताभिमर्शनादिभिः । पुण्यैः अतिशयजनकैः । शरीरसंस्कारः, शरीरशब्दोऽत्र अजहत्स्वार्थलक्षणया तत्कारणेऽपि वर्तते । मक. ७१

( ५ ) निषेकादिसंस्कारस्यैव यागादिवदधिकारार्थता स्वतन्त्रफलता चेत्याह—वैदिकैरिति ।

ऽ मच.

( ६ ) आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः । स च द्विविधः । एकस्तावत् कर्मान्तराधिकारे अनुकूलः, यथा उपनयनजन्यो वेदाध्ययनाद्यधिकारापादकः । अपरस्तु उत्पन्नदुरितमात्रनाशकः, यथा बीजगर्भसमुद्भवैनोनिबर्हणो जातकर्मादिजन्यः ।

● संप्र. १३२

( ७ ) वैदिकैः आधानादिभिः निषेकाद्यैः स्मार्तैः संस्कारैः प्रेत्य चेह च शुभं भवतीत्यर्थः ।

आन. १४२

( ८ ) वैदिकैः श्रौतस्मार्तैः । न केवलं यस्मिन् शरीरे संस्कारः कृतः तस्यैव पावनः किल, भविष्यतोऽपीत्युक्तम्—प्रेत्य च पावन इति । नन्द.

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥

( १ ) उक्तं संस्कारप्रयोजनं पावनः शरीरसंस्कारः पुण्यश्च । तत्र पावनत्वमुच्यते दुष्टस्य दोषापकर्षणम् । कुतः पुनः शरीरस्य दुष्टता ? इत्याशङ्कायामाह— बैजिकं गार्भिकं चैन इति । बीजे भवं बीजनिमित्तं वा बैजिकम् । एवं गार्भिकम् । एनः पापं अदृष्टं दुःखकारणम् । तस्य बीजगर्भयोर्निमित्तभावात् अशुचित्व-

● शूग., मनु. वैराग्यम् ।          ऽ दीन गेराघर ।

● सप्र. मेधावत् श्लोकव्याख्यानम् । शरीरसंस्काख्या मकारः ।

( १ ) मस्मृ २।२७; विश्व. १।१३ उत्त. ; मेधा.; गोरा. चौड ( चौल ) मृज्यते ( नुद्यते ) ; अप. १।१३; मक. ७४ ; मवि मृज्यते (नीयते) ; स्मृच (क.) १४ जातकर्मचौड ( चौल-कर्मचूड ) मपमृज्यते ( मपि नुद्यते ), ( सं. ) १६ चौड ( चूड ) मपमृज्यते ( मपमार्जति ); मनु ; हमा. १८८ चौड ( चूड ), स्मृमा. १; स्मृकौ. २८ अशुद्धिनचुरम् ; मया. १११ गार्भै ( गर्भै ) चौड ( चौल ) उत्तरार्धे ( औरस्यक्षेत्रज [illegible] पमुपयुज्यते । ), शुद्धि. ७० चौड ( चौल ); मच.; वीमि. १।१३; संप्र. १३४ चौड ( चूड ) : १३८ (=) चौड ( चूड ); मुका. ७१ जातकर्मचौड ( जातिकर्मचौड ) मृज्यते ( मृज्यते ) ; संस्र. ८ चौडमौञ्जी ( चूडामौञ्जि ); शुक. ४८ पूर्वार्धे ( वैदिकै-र्गार्भिकैर्होमैश्चूडामौञ्जीनिबन्धनैः । ); स्मृ. २ दृष्टिवत् ; आन. १४२ दृष्टिवत् ; मनु. दृष्टिवत् ; माध. दृष्टिवत् ; हम. ११७२ चौड ( चूड ) ; संर. ५ चौड ( चूड ) ; संदी. २ ( भाग २ ) दृष्टिवत् .

शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥

संस्काराः

भूतग्रामे नियुक्तं यत्तदेतत्कीर्तितं मया ।
ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि पृच्छते ॥
जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम् ।
क्रिया स्यादासमावृत्तेराचार्ये वेदपारगे ॥
अधीत्य वेदानखिलान् गुरुशुश्रूषणे रतः ।
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ॥
आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥
प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः ।
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ॥
गृहस्थस्त्वेव धर्माणां सर्वेषां मूलमुच्यते ।
तत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति ॥
प्रजावान् श्रोत्रियो यज्वा
मुक्तो दिव्यैस्त्रिभिर्ऋणैः ।
अथान्यानाश्रमान् पश्चात्
पूतो गच्छति कर्मभिः ॥

संस्कृतस्य सिद्धिः

²संस्कृतस्य हि दान्तस्य नियतस्य कृतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च ॥

शूद्राणां पाकयज्ञेषु पञ्चमहायज्ञेषु पौष्टिककर्मणि चाधिकारः, शूद्राणां मन्त्राः, सर्वयज्ञेषु दक्षिणादानाधिकारः

³स्वाहाकारनमस्कारौ मन्त्रः शूद्रे विधीयते ५। एतया ताभ्यां शूद्रः पाकयज्ञैर्यजेत ~७ अधिक्रियते । यथा

(१) स्वाहाकार~ "" तु कार्ये द्रव्यशुद्ध्यैव शुद्धिः, मन्त्रौ, आज्यस्य भोजनादौ । स्पृश्यता हि कुमारस्य —अङ्गिर्गात्राणि शुध्यन्ति ' इत्येतावतैव भवति । तथा चाऽऽह— ' न तदुपस्पर्शनादशौचम् ' ( गौध. २।७ ) इति ।

कथं पुनः कर्मार्थत्वमेतेषाम् । युक्तमुत्पवनस्याऽऽज्यद्वारकं, प्रकरणेन विनियोगात् । अमी तु बाह्याः न कस्यचित् कर्मणः प्रकरणे श्रुताः । अतः पुरुषद्वारिका कर्माविकल्पिताभ्यां, न समुच्चिताभ्याम् । अत्र मन्त्रः तद्वान् स्वाहाकाररूपमन्त्रवान् नमस्काररूपमन्त्रवान् वा ।

स्मृकौ. ४०–४१

(२) तत्र स्वाहाकारमन्त्रः शूद्रे लोकविद्विष्टत्वात् आचारविरोधाच्च न भवतीत्याहुः । शूदि. ४९

मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीं क्रियाम् ॥
दक्षिणा पाकयज्ञानां हिरण्यं तु विधीयते ॥
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः ॥
न चेह शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति ।
स्मृतिप्रयुक्तं तु न धर्ममश्नुते
न चास्य धर्मे प्रतिषेधनं स्मृतम् ॥
विकर्म चास्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथा सन्तमाश्रित्येह स्वकर्मसु ॥
यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते ॥

## मनुः

संस्काराणां निषेकादीनां मौञ्जीबन्धनान्तानां बैजिकगार्भिकपापनाशकत्वम्, संस्कारलक्षणम् ( टीकाकारकृतम् )

¹वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कार~ ) इति, ' तस्मादनुशिष्ट~यमाहुः ' इति । अनुशासनं च स्वाधिकारप्रतिपादनम् । तच्च वेदाध्यापनेन अर्थावबोधपर्यन्तेन भवतीति वक्ष्यामः । अत एव उभयोपकारकाः संस्काराः, अपत्योत्पत्तिविधौ पितुः, माणवकस्य च संस्कृतसाध्यासु क्रियासु । तस्मात् पितुरधिकारः, तदभावे तत्स्थानापन्नस्य । तथा चाऽऽह ' असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः । ' इति ।

मेधा.

(२) गर्भे गर्भावस्थायां कर्तव्यैर्निषेकादिकर्मभिः तथा होमैरपि सीमन्तकर्मादिनामकैर्गार्भैरेव, जातानन्तरकर्तव्यैश्च जातकर्मादिभिः । तैश्च बैजिकं पितृगततत्तत्पापविशेषदूषितशुक्रसंभवं पापं, तथा गर्भो मातृरजः, तद्दोष-

वैदिकशब्दः। कर्मशब्देन च इतिकर्तव्यतारूपं कर्म गृह्यते। ततश्च कर्मभिर्निषेकादिः संस्कारः कार्यः इति साध्यसाधनभेदोपपत्तिः। प्रधानं निषेकः, मन्त्रोच्चारणं इतिकर्तव्यता। निषेकः योनौ शुक्रनिक्षेपः। स आदिर्यस्य संस्कारकलापस्य वक्ष्यमाणस्य उपनयनपर्यन्तस्य। एकवचनं शरीरसंस्कार इति समुदायापेक्षम्। संस्कारशब्देन च सगुणशरीरनिर्वर्तकमुच्यते। तत्र निषेको निर्वर्तकः, अन्यानि विशेषजनकानि। एतदेवाह— पावन इति। पावयति अशुद्धतामपकर्षतीति पावनः। प्रेत्य चेह चेति संस्कृतस्य सर्वत्रात्र दृष्टादृष्टफलेषु कर्मसु कारीरीज्योतिष्टोमादिषु अधिकारात् उभयलोकोपकारकत्वमाह। पुण्यैः शुभैः मङ्गलैरिति यावत्। सौभाग्यमावहन्ति दौर्भाग्यं चापनुदन्तीति पुण्यपावनशब्दयोरर्थभेदः। द्विजन्मनामिति शूद्रपर्युदासार्थम्। संस्कार्यनिर्देशश्चायम्। लक्षणया च त्रैवर्णिकाः प्रतीयन्ते। न हि तदानीं द्विजन्मानो भवन्ति। मेधा.

( २ ) वैदिकमन्त्रसाध्यत्वात् वेदमूलसाध्यत्वाच्च वैदिकैः स्मार्तैः कर्मभिः 'विष्णुर्योनिं कल्पयतु' इत्येवमादिमन्त्रप्रयोगादिभिः पुण्यैः पारम्पर्येण धर्महेतुभिः गर्भाधानादिः द्विजातीनां शरीरसंस्कारः कर्तव्यः। पावनः पवित्रीकारकः। प्रेत्य परलोके संस्कृतस्य यागादिकर्मफलसंबन्धात् इह लोके च संस्कृतस्य अध्ययनाद्यधिकारात्। * गोरा.

च्यापसक्मानाभक्तम्। [illegible] पुण्यैः पुण्यसाधनैः

ब्रह्मचर्यगार्हस्थ्यधर्मैः स्वाध्यायव्रतयज्ञादिभिः [illegible]

ब्राह्मी तनुः

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥

* गोरा, स्मृच, मुक्ता. मनुवत्।

ऽ शेषं मनुवत्।

† 'एवमेनः शमं याति' इत्यत्र मिताक्षरायां 'गात्रस्याभिसंबन्धिनिमित्तम्' इति व्याख्यानम्।

( १ ) मस्मृ २।२८, विश्व. १।५० उत्त.; मेधा.; गोरा.; मिता. १।१०३ उत्त.; मक. ७७; मनु.; मच.; संप्र. १४०; आन. १४२ येनेज्यया सुतैः (येन तपसा); मंग. ९; नन्द.; भाच.

( ६ ) आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः। स च द्विविधः। एकस्तावत् कर्मान्तराधिकारे अनुकूलः, यथा उपनयनजन्यो वेदाध्ययनाद्यधिकारापादकः। अपरस्तु उत्पन्नदुरितमात्रनाशकः, यथा बीजगर्भसमुद्भवैनोनिबर्हणो जातकर्मादिजन्यः। * संप्र. १३२

( ७ ) वैदिकैः *आधानादिभिः निषेकाद्यैः स्मार्तैः* संस्कारैः प्रेत्य चेह च शुभं भवतीत्यर्थः। आन. १४२

( ८ ) वैदिकैः श्रौतस्मार्तैः। न केवलं यस्मिन् शरीरे संस्कारः कृतः तस्यैव पावनः किल, भविष्यतोऽपीत्युक्तम्—प्रेत्य च पावन इति। नन्द.

**गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।**
**बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥**

( १ ) उक्तं संस्कारप्रयोजनं पावनः शरीरसंस्कारः पुण्यश्च। तत्र पावनत्वमुच्यते दुष्टस्य दोषापकर्षणम्। *कुतः पुनः शरीरस्य दुष्टता? इत्याशङ्कायामाह*— बैजिकं गार्भिकं चैन इति। बीजे भवं बीजनिमित्तं वा बैजिकम्। एवं गार्भिकम्। एनः पापं अदृष्टदुःखकारणम्। तस्य बीजगर्भयोर्निमित्तभावात् अशुचित्व-

* संप्र. मेधावत् श्लोकव्याख्यानम्। शरीरपदव्याख्या भारवत्।

( १ ) मस्मृ. २।२७; विश्व. १।१२ उत्त.; मेधा.; गोरा. चौड (चौल) मृज्यते (नुद्यते); अप. १।१३; मक. ७४; मवि. मृज्यते (नीयते); स्मृच. (क.) १४ जातकर्मचौड (बीज-द्रव्यैर्म) मपमृज्यते (मपि शुध्यते), (ग.) ३६ चौड एव यागः, दमां[illegible]ते (मपमार्ष्टि); मनु.; हभा. १८८ चौट होमे। तथापि हि '[illegible] २८ अशुद्धिप्रचुरम्; मपा. ११३ इति चेन्, महायज्ञे का गतिः। 'मह[illegible] (मैरध्ययनेनैव द्विमोऽ- शुद्धयादर्शादीनाम्'! अतो यत्र शुद्धयादिनि देव[illegible] वीमि. काष्ठादेरपि भूत उपसितारये, सोऽपि होम एव।

इज्यया देवर्षितर्पणेन। एव [illegible]

भियाकलापः। इदानीं गृहस्थधर्माः। [illegible]

विधिना। महायज्ञैः

ज्योतिष्टोमादिभिः।

मात्रमिहोच्यते। शुक्रशोणिते पुरुषस्य बीजम्। ते च स्वभावादशुचिनी। गर्भाधान्यपि दोषसंक्रान्त्या दुष्टैव। अतः तन्निमित्तमशुचित्वं पुरुषस्य संस्कारैरपमृज्यते अपनुद्यते। तानिदानीं कांश्चिन्नामधेयेन, कांश्चित्संस्कार्यविशेषोपलक्षितान् कृत्वा निर्दिशति— गार्भैर्होमैः। गर्भे संभूते नार्याः क्रियन्ते, गर्भं वा ग्रहीतुं (इति) गर्भप्रयोजनकत्वात् गार्भाः। नारी तत्र द्वारमात्रम्। प्रयोजकस्तु गर्भ एव। अतस्तत्प्रयुक्तत्वाच्च तदर्था होमाः पुंसवनसीमन्तोन्नयनगर्भाधानानि। होमशब्द उपलक्षणार्थः कर्ममात्रस्य। न हि गर्भाधानं होमः। एतेषां च कर्मणां द्रव्यदेवतादिरूपं गृह्यस्मृतिभ्योऽवसातव्यम्। यथैव गार्भैर्होमैः एवं जातकर्माख्येन संस्कारेण। एवं चौडेन। चूडार्थः चौडः। मौञ्जीनिबन्धनं उपनयनम्। तत्र हि मुञ्जविकारो मेखला बध्यते। अतस्तेन उपनयनकर्म उपलक्ष्यते। बन्धनमेव निबन्धनम्। निः वृत्तपूरणः। जातकर्मादीनि संस्कारनामधेयानि कृतद्वन्द्वानि करणविभक्त्या एनोपमार्जनस्य निर्दिश्यन्ते।

संस्कारश्च सर्वः संस्कार्ये कार्यान्तरदोषभूते कृतार्थे करिष्यमाणार्थे वा कञ्चित् दृष्टमदृष्टं वा विशेषमादधाति। 'व्रीहीनवहन्ति' इति, 'व्रीहिभिर्यजेत' इति यागं निर्वर्तयिष्यता तुषकणविप्रमोक्षो दृष्टो विशेषः। 'शिरसोऽवतार्य स्रजं शुचौ देशे निदधाति' इति उपभुक्ताया आर्कार्णाकारायाः प्रतिपत्तिनियमात् अदृष्टः स्रजो विशेषः। तत्र इमे संस्काराः शरीरशुद्ध्यर्थाः श्रुताः। न च गन्धापकर्षणं मृद्वारिसंबन्धादिव शरीरे दृश्यते। तेन इयं जन्मादिकालशुद्धिवत् अदृष्टविशेषा शुद्धिर्वेदितव्या। एतया च शुद्ध्या पूतः श्रौतस्मार्तेषु कर्मसु अधिक्रियते। यथा मन्त्रपूतमाज्यं होमे। लौकिके तु कार्ये द्रव्यशुद्ध्यैव शुद्धिः, यथा आज्यस्य भोजनादौ। स्पृश्यता हि कुमारस्य 'अद्भिर्गात्राणि शुध्यन्ति' इत्येतावतैव भवति। तथा चाऽऽह— 'न तदुपस्पर्शनादशौचम्' (गौध. २।७) इति।

कथं पुनः कर्मार्थत्वमेतेषाम्। युक्तमुत्पवनस्याऽऽज्यस्य, प्रकरणेन विनियोगात्। अमी तु बाह्याः न कस्यकर्मणः प्रकरणे श्रुताः। अतः पुरुषद्वारिका कर्मार्थता दुर्भणा। न च असति कार्योपयोगे स्वरूपतः संस्कार एव निर्वर्त्यः। तथा सति संस्कारत्वं हीयेत, प्रधानकर्मता स्यात्। अतश्च 'कार्यः शरीरसंस्कारः' इति, 'कुमारं जातं पुराऽन्यैरालम्भात्' (आप. १।१५।१) इति च द्वितीयाश्रुतिर्बाध्येत। 'सक्तून्जुहोति' इतिवद्विनियोगभङ्गः स्यात्। तत्र च अधिकारकल्पना इत्यादि बहु असमञ्जसं प्राप्नोति।

उच्यते। न वयं श्रुत्यादिप्रामाण्यापेक्षं तादर्थ्यं अङ्गलक्षणं ब्रूमः, अपि तु उपकारकत्वम्। तच्च अनङ्गत्वेऽप्युपपद्यते। यथा आधानविधिः स्वाध्यायाध्ययनविधिश्च। न ह्यत्र श्रुत्यादयः सन्ति। 'यदाहवनीये जुहोति' इत्याहवनीयादयो विनियुक्ताः। अलौकिकत्वाच्च तत्स्वरूपस्य आधानविधिनैव सिद्धिः 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति। अत आहवनीयादिनिर्वृत्तिद्वारेण आधानं क्रतूपयुज्यते। न चाङ्गम्। अध्ययनविधिरपि अर्थावबोधद्वारेण क्रतूपकारकः। एवममी संस्काराः। एतत्संस्कृतस्याध्ययनविधिः, निष्पादिताध्ययनविध्यर्थस्य विवाहः, कृतविवाहस्य आधानम्, आहिताग्नेरधिकारः इत्यस्ति (संस्कार १) कार्योपयोगिता बाह्यपुरुषसंस्काराणाम्।

निषेकग्रहाच्च सर्वत्रापि पितुरधिकारः। तथा च जातकर्मणि मन्त्रः 'आत्मा वै पुत्रनामाऽसि' इति। तस्य हि अपत्योत्पादनं अपत्यानुशासनं च विहितम् 'ऋणानि त्रीण्यपाकृत्य' (मस्मृ. ६।३५) इति, 'तस्मादनुशिष्टं पुत्रं लोक्यमाहुः' इति। अनुशासनं च स्वाधिकारप्रतिपादनम्। तच्च वेदाध्यापनेन अर्थावबोधपर्यन्तेन भवतीति वक्ष्यामः। अत एव उभयोपकारकाः संस्काराः, अपत्योत्पत्तिविधौ पितुः, माणवकस्य च संस्कृतसाध्यासु क्रियासु। तस्मात् पितुरधिकारः, तदभावे तत्स्थानापन्नस्य। तथा चाऽऽह 'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।' इति। मेधा.

(२) गर्भे गर्भावस्थायां कर्तव्यैर्निषेकादिकर्मभिः तथा होमैरपि सीमन्तकर्मादिनामकैर्गार्भैरेव, जातानन्तरकर्तव्यैश्च जातकर्मादिभिः। तैश्च बैजिकं पितृगततत्तत्पापविशेषदूषितशुक्रसंभवं पापं, तथा गर्भो मातृरजः, तद्दोष-

संभवं च पापं द्विजानामपनीयते । अथ उपनयनादिभिः संस्कारैरुपनीतस्य देहशोधनार्थानीत्यर्थः । मवि.

( ३ ) कुतः पापसंभवः येनैषां पापक्षयहेतुत्वं, अत आह— गार्भैरिति । ये गर्भशुद्धये क्रियन्ते ते गार्भाः । होमग्रहणमुपलक्षणं, गर्भाधानादेरहोमरूपत्वात् । जातस्य यत्कर्म मन्त्रवत्सर्पिःप्राशनादिरूपं तज्जातकर्म । चौडं चूडाकरणकर्म । मौञ्जीनिबन्धनं उपनयनम् । एतैर्बैजिकं प्रतिषिद्धमैथुनसंकल्पादिना पैतृकरेतोदोषात् यदुत्पापं, गार्भिकं च अशुचिमातृगर्भवासजं, तत् द्विजातीनामपमृज्यते । * ममु.

( ४ ) शरीरसंस्कार इत्युक्तं, तत्र कथं कस्य संस्कारः, तत्राऽऽह— गार्भैरिति द्वाभ्याम् । गार्भिके अशुचिमातृगर्भवासजं मातुर्व्यभिचारसंकल्पजं च 'यन्मे माता प्रलुलोभ' इत्यादिश्रुतेः । ऽ मच.

( ५ ) बैजिकं बीजसंबन्धि पित्रोः दुरन्नभोजनादिजनितं, गार्भिकं गर्भसंबन्धि मातुरभक्ष्यभक्षणादिना संभृतं एनः पापं अवमृज्यते इत्यन्वयः । 'यन्मयि माता गर्भे सति । एनश्चकार यत्पिता ।' ( तैब्रा. ३।७।१२।३,४) इति मन्त्रलिङ्गादिति भावः । आन. १४२

( ६ ) पित्रादिना कार्यैः संस्कारैरपनेयं पापमाह— गार्भैरिति । बैजिकं गार्भिकं पितुश्च मातुश्चापराधैः कृतमित्यर्थः । नन्द.

( ७ ) बैजिकं शुक्रशोणितसंबन्धजमित्यर्थः । †गोत्रव्याधिसंक्रमनिमित्तम् । माच.

ब्रह्मचर्यगार्हस्थ्यधर्मैः स्वाध्यायव्रतयज्ञादिभिः
ब्राह्मी तनुः

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥

( १ ) येषु कर्मसु माणवकस्य संस्कारा उपकारकाः तानीदानीमुदाहरणमात्रेण दर्शयति— स्वाध्यायेनेति । अध्ययनक्रिया स्वाध्यायशब्देनात्राभिप्रेता । तस्या एव विषयनिर्देशः त्रैविद्येनेति । व्यवधानेऽपि अर्थलक्षणः संबन्धः 'यस्य येनार्थसंबन्धः' इति न्यायेन । अत एव सामानाधिकरण्येऽपि श्रुते विषयविषयिभावो विभक्तिविपरिणामेन । त्रयाणां वेदानामध्ययनेन इत्यर्थः । त्रय एव वेदाः त्रैविद्यम् । चातुर्वर्ण्यादिवत् रूपसिद्धिः । अथवा स्वाध्यायेनेति वेदाध्ययनं, त्रैविद्येनेति तदर्थावबोधः । व्रतैः सावित्रादिभिर्ब्रह्मचारिकर्तृकैः । होमैः व्रतादेशनकाले ये क्रियन्ते । यदि वा सायंप्रातः समिद्भिरग्नीन्धनं ब्रह्मचारिणो होमशब्देन अग्न्याधारसंबन्धसामान्यात् उच्यते ।

अथ किं समिदाधानं न होमः, येनैवमुच्यते संबन्धसामान्यादिति । न भवतीति ब्रुवन्ति, अदनीयद्रव्यसाध्यत्वात् यागहोमयोः । कथं तर्हि 'सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः' इत्युक्तम् । लक्षणया समिदाधानं होमशब्देनोच्यते । यथैव हूयमानं द्रव्यमग्नौ प्रक्षिप्यते एवं समिन्धनार्थाः समिधोऽपि । अतः एतेन सामान्येन समिन्धनमेव होम इत्युच्यते । उत्पत्तिवाक्ये हि 'समिधमादध्यात्' इति श्रुतम् । 'जुहुयात्ताभिरग्निम्' इत्यनुवादोऽयमन्यार्थं इति परस्तात् वक्ष्यामः । न चानुवादे लक्षणादोषः ।

इदं तु युक्तं यत् मेध्यमात्रद्रव्यसाध्यौ यागहोमौ । तथा च सति बहुयश्चोदना यथार्थां भवन्ति । यथा 'सूक्तवाकेन प्रस्तरं प्रहरति' इति । तत्र हि प्रस्तर द्रव्यमाहुः हरति च यजतिम् । अथ वचनादमी तादृश एव यागाः, दर्भाश्चाप्यदनीयाः केषाञ्चित् । कथं शाकलहोमे । तत्रापि हि 'शकलान्यभ्यादधाति' इत्युत्पत्तिः इति चेत्, ब्रह्मयज्ञे का गतिः । 'ब्रह्मेभ्य एकैकस्मै समिधो जुहुयादर्कादीनाम्' । अतो यत्र जुहुयादिति देवतासंबन्धश्च काष्ठादेरपि श्रुत उत्पत्तिवाक्ये, सोऽपि होम एव ।

इज्यया देवर्षितर्पणेन । एष तावदुपनीतस्य ब्रह्मचर्ये क्रियाकलापः । इदानीं गृहस्थधर्माः । सुतैः अपत्योत्पत्तिविधिना । महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः । यज्ञैः श्रौतैर्ज्योतिष्टोमादिभिः ।

---

* गोरा., स्मृच., मुक्ता. ममुवत् ।

ऽ शेषं ममुवत् ।

† 'एवमेनः शमं याति' इत्यत्र मिताक्षरायां 'गात्रव्याधिसंक्रान्तिनिमित्तम्' इति व्याख्यानम् ।

( १ ) मस्मृ. २।२८ ; विश्व. १।५० उत्त. ; मेधा. ; गोरा. ; मिता. १।१०३ उत्त. ; मक. ७७ ; ममु. ; मच. ; संप्र. १४० ; आन. १४२ येनेज्यया सुतैः (येन तपस्यया) ; संग. ९ ; नन्द. ; माच.

ननु यद्येषां कर्मणां किञ्चित् प्रयोजनं स्यात्, तदा तदधिकारयोग्यतोत्पत्त्यर्था ब्राह्माः संस्कारा अर्थवन्तः स्युः, अत आह— ब्राह्मीयं क्रियते तनुः। ब्रह्म परमात्मा कारणपुरुषः, तस्य इयं संबन्धिनी तनुः शरीरं एतैः श्रौतस्मार्तैः सर्वैः कर्मभिः क्रियते। ब्रह्मसंबन्धिता च तद्भावापत्तिलक्षणा। स हि परः पुरुषार्थः। संबन्धान्तराणि सर्वस्य (? सर्गस्य) कस्यचित्कारणत्वेन सिद्धत्वात् नाभिलषितव्यानि। ततो मोक्षप्राप्तिरुक्ता भवति ब्राह्मीत्वनेन। तनुशब्देन च तदधिष्ठाता पुरुषो लक्ष्यते। तस्य ह्येते शरीरद्वारकाः संस्काराः। तस्यैव च मोक्षप्राप्तिः। शरीरस्य पञ्चतापत्तेः।

अन्ये त्वाहुः— ब्रह्मप्राप्तौ योग्या क्रियते। न हि कर्मभिरेव केवलैर्ब्रह्मत्वप्राप्तिः, ज्ञानकर्मसमुच्चयात् किल मोक्षः। एतैस्तु संस्कृत आत्मा उपासनास्वधिक्रियते। तथा च श्रुतिः— 'य एतदक्षरं गार्ग्यविदित्वा यजते जुहोति तपस्तप्यते अधीते ददात्यन्तवदेवास्य तद्भवति' (बृउ. ३।८।१०) इति।

ननु च नैतेषां कर्मणां ब्रह्मप्राप्तिः फलं श्रुतम्। तथाहि— नित्यानि तावदश्रुतफलान्येव। कल्पनायां च पौरुषेयत्वम्। यावज्जीवादिपदैश्च नित्यताया अवगमितत्वात् विश्वजिन्न्यायोऽपि नास्ति। अथ अस्मादेव वचनादेतत्फलत्वमिति यद्युच्येत, मोक्षार्थिनः तदा अधिकारः स्यात्, तथा च नित्यत्वहानिः, ततश्च श्रुतिविरोधः। निष्फलं न कश्चिदनुतिष्ठति, तत्र आनर्थक्यं इति चेत् काममननुष्ठानम्। प्रमाणस्य प्रमेयावगतिरर्थः। सा चेत्कृता, जातमर्थवत्त्वम्। अस्ति चात्र कर्तव्यतावगतिः। सत्यां च तस्यां अकरणे शास्त्रार्थातिक्रमः, ततश्च प्रत्यवायः। ईदृश एवार्थे लिङादीनां वृद्धव्यवहारे व्युत्पत्तिः। यो हि भृत्यादिः कर्तव्यं न करोति कस्यचित् आज्ञा- (? पयि)तुः, स चेतनार्थी चेतनं न लभते। यदि वा प्रत्यवायेन योज्यते, तत्र फलस्य अश्रुतत्वात् न फलानुस्मृतिः प्रत्यवायः, अपि तु दुःखेन योजनं नित्येषु। एवं सर्वपुरुषाधिकारो नित्यः समर्थितो भवति। तस्मात् न नित्यानां किञ्चित् फलम्। काम्यानां त्वन्यदेव फलं, न मोक्षः, श्रुतत्वात्। तत्र कथमेतत् सर्वकर्मानुष्ठानसाध्यः परः पुरुषार्थ इति।

अत एव कैश्चिदर्थवादोऽयमिति व्याख्यायते संस्कारविधिस्तुत्यर्थः। अत्र च ब्राह्मीयमिति यत्किञ्चिदालम्बनमाश्रित्य गुणवादेन नीयते। ब्रह्म वेदः, तदुच्चारणार्हा तत्कर्माधिकारिणी च। यत् तर्हि गौतमेनोक्तम् 'चत्वारिंशत्संस्काराः' (८।८) इति, तत् कथम्। तत्र हि सोमसंस्थाऽपि संस्कारत्वेनोक्ता। न च प्रधानकर्मणां संस्कारत्वोपपत्तिः। नाप्येतदर्थवादतया शक्यं व्याख्यातुं अविशेषत्वात्। तत्राप्यात्मगुणशेषसंस्कारत्वाध्यारोपेण स्तुतिः। एवमिहाप्यसंस्कारैः संस्कारान् समानीकृत्य तुल्यफलताध्यारोपेण संस्काराणामवश्यकर्तव्यतामाचष्टे। तथा च संस्कारप्रकरणान्नोत्कृष्यते स्तुतिः। क्रियते इति च वर्तमानापदेशः, न विधिविभक्तिः। तत्र कुतो ब्रह्मप्राप्तेः फलत्वावगमः। न चात्र कर्माणि विधीयन्ते, येनाधिकाराकाङ्क्षायां सत्यपि वर्तमाननिर्देशे रात्रिसत्रे प्रतिष्ठावत् फलनिर्देशः स्यात्। तस्मात् संस्कारस्तुत्यर्थमेव सर्वमेतदुच्यते।

येऽपि विभागेन वर्णयन्ति— नित्यानां ब्रह्मप्राप्तिः फलं, काम्यानां तु यथाश्रुतमेव, तदपि अप्रमाणं, सर्वस्यास्य अर्थवादत्वात्, अन्तरेण च फलं नित्येष्वनुष्ठानसिद्धेः प्रतिपादितत्वात्। तदुक्तम् 'कामात्मता न प्रशस्ता' (मस्मृ. २।२) इति। * मेधा.

( २ ) वेदाध्ययनेन, व्रतैः सावित्र्या( ? त्रा )दिभिः, होमैः सायंप्रातरग्निकार्यैः, त्रैविद्याख्येन व्रतेन प्राधान्यात्पृथगुपदिष्टेन, इज्यया ब्रह्मचर्यावस्थायां देवर्षिपितृतर्पणरूपया, पुत्रैः, महायज्ञैः वैश्वदेवादिभिः, यज्ञैः अग्निष्टोमादिभिः ब्रह्मप्राप्तियोग्या तनुः ततश्च आत्मा क्रियते, ज्ञानकर्मसमुच्चयान्मोक्षावाप्तेः। गोरा.

( ३ ) उपनयनानन्तरं क्रियमाणेन स्वाध्यायेन, व्रतैः स्वाध्यायसमयमारभ्य कर्तव्यैः सायंप्रातरग्निसमिन्धनादिभिः स्नातकव्रतादिभिश्च, होमैः उपाकरणोत्सर्जनहोमैः, त्रैविद्येन

* वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वसमर्थनाय 'महायज्ञैश्च यज्ञैश्च' इत्यस्यार्थश्लोकः मिताक्षराकारेण (यास्मृ. १।१०२) प्रमाणत्वेनोद्धृतः इत्यत्रानुसंधेयम्।

षट्त्रिंशदब्दचर्यवेदत्रयाध्ययनार्थं गुरुकुलवासेन। त्रैविद्येन स्वाध्यायेनेति व्यस्तपदसंबन्धः। इज्यया पाकयज्ञेन हविर्यज्ञैः (च), सुतैः पुत्रोत्पादनेन, महायज्ञैः ब्रह्मयज्ञाद्यैः पञ्चभिः, यज्ञैः अग्निष्टोमादिभिः सोमयज्ञैः इयं एतस्मिन् लोके या तनुः देहः सा ब्राह्मी ब्रह्मप्राप्तियोग्या क्रियते, अपाकृतर्णत्रयस्य मोक्षोपायेऽधिकारात्। मवि.

(४) व्रतैः मधुमांसवर्जनादिनियमैः, होमैः सावित्रचरुहोमादिभिः सायंप्रातर्होमैश्च, त्रैविद्याख्येन च, * व्रतेष्वप्राधान्यादस्य पृथगुपन्यासः। ऽ मसु.

(५) एकवाक्योपात्तत्वेन एषां 'त्वाष्ट्रं पात्नीवतं जुहोति' इतिवत् समुच्चयः। × मच.

(६) अथ उत्तरेषां संस्काराणां फलविशेषमाह—स्वाध्यायेनेति। स्वाध्यायेन वेदाध्ययनेन। व्रतैः प्राजापत्यादिभिः। होमैः समिदाधानादिभिः नित्यनैमित्तिकैः। त्रिविद्यां वेदेति त्रैविद्यः, तस्य भावः त्रैविद्यं, वेदत्रयार्थज्ञानमिति यावत्। इज्यया स्मार्तेन पाकयज्ञेन। सुतशब्देन समावर्तनं विवाहश्चोपचर्यते। महायज्ञैः देवपितृमनुष्यभूतब्रह्मयज्ञैः। यज्ञैः अग्न्याधानादिभिः। ब्राह्मी ब्रह्मप्राप्त्यर्हा। नन्द.

(७) त्रैविद्येन वेदत्रयोक्तकर्मणा। माच.

स्त्रीणां जातकर्मादिसंस्कारा अमन्त्रकाः, विवाहः समन्त्रकः

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥

(१) इयमावृत् अशेषतः स्त्रीणाममन्त्रिका कार्या। जातकर्मण आरभ्य इयं संस्काराणां आवृत् परिपाटी, सेतिकर्तव्यताकः संस्कारकलाप इति यावत्। संस्कारार्थं शुद्ध्यर्थं शरीरस्य। पौंस्नमेव स्त्रीणामपि प्रयोजनमाह। यथाकालं, यस्मिन् काले यः संस्कार उक्तः तं कालमनतिक्रम्य। पदार्थानतिवृत्तौ 'यथाऽसादृश्ये' (पा. २।१।७) अव्ययीभावः। एवं क्रमेऽपि द्रष्टव्यम्। मन्त्रमात्ररहिताया आवृतो विहितत्वात् अयथाकालक्रमप्राप्तिरेव नास्ति इत्यतो निषेधो नित्यानुवादो वृत्तपूरणार्थः। एतावद्विवक्षितं स्त्रीणां चैते अमन्त्रका इति।

मेधा.

(२) 'प्राङ्नाभिवर्धनात्पुंसः' (मस्मृ. २।२९) इति पुंग्रहणस्य स्त्र्यर्थत्वे प्रमाणाभावात् स्त्रीणां अप्राप्त(प्ति:) इत्यत आह—अमन्त्रिकेति। • गोरा.

(३) इयमावृत् जातकर्मादिक्रियापरिपाटी, गर्भाधानादेस्तत्पूर्वकर्मणः स्त्रीत्वानिश्चयेन अमन्त्रकत्वायोगात्। अशेषतः सकलावृद्वती। संस्कारार्थं बैजिकगार्भिकदोषहत्या क्रत्वाद्यधिकारसिद्ध्यर्थम्। स्वकाले च कर्तु (अ)शक्तानां कालान्तरेऽपि नामकरणादीनां यथोक्तक्रमेणैवानुष्ठानं इत्येतदर्थं यथाक्रममित्युक्तम्। अत्र शूद्रस्य विशेषानभिधानात् नामकरणगुणविधेश्च स्त्रीणामेव अमन्त्रकं सर्वं कार्यमिति गम्यते। मवि.

(४) अत्रोपयुक्ता होमास्तु समन्त्रका एव।

मच.

(५) मनुरपि 'प्राङ्नाभिवर्धनात्पुंसः' (मस्मृ. २।२९) इत्युपक्रम्य नामकरणनिष्क्रमणान्नप्राशनचूडोपनयनकेशान्तान् पुरुषसंस्कारान् विधाय अन्ते पूर्वोक्तसंस्कारेतिकर्तव्यतां स्त्रीष्वतिदिशति—अमन्त्रिकेति। अत्र इयमिति सर्वनाम्ना बुद्धिस्थत्वमर्थान् सर्वेषां च संस्काराणां बुद्धिस्थतया उपनयनस्यापि तदन्तर्गतत्वेनातिदेशात् स्त्रीणामप्यमन्त्रकमुपनयनं सिध्यति। ये तु चूडान्ता-

---

* अत्र 'व्रतेष्वप्राधान्यात्' इति लेखकप्रमाद इति भाति, 'व्रतेन, प्राधान्यात्' इति साधु स्यात्, तच्च गोरावद् व्याख्यानं भवेत्।

ऽ शेषं गोरावत्।

× शेषं मेधावत्।

(१) मस्मृ. २।६६, मेधा. २।२९ पू., २।६६; गोरा.; अप. १।१३; मक. ९६; मवि.; स्मृच. (क.) २१, (ख.) ६० अमन्त्रिका (अमन्त्रका), मसु.; मपा. ३६२ अमन्त्रिका तु कार्येव (अमन्त्रिका तु कार्या च); मपा. १११ पू.; संत. ९२६ पू.; मच.; वीनि. २।१३ स्त्रीणामा (स्त्रियामा); संप्र. १९४: ३७८ पू., ३१७ पू. '४०२; सुभा. ८४ स्वयचार; मिन्धु. ९२१ पू.; शूक. २१८ पू.; संकौ. ११६ पू.; भान. १८५ अमन्त्रिका तु (अमन्त्रिकैव) पू.; प्रका.

• शेषं मेधावत्।

१९१ मातृदोषतः (मामशेषतः) संस्कारार्थं (संस्कारार्थे); संग. ५९६ पू., ६१९ पू.; नन्द.; माच.; वीमि. १।१३।७; सस्मृ ५१.

नामेव इदमा परामर्शः, नोपनयनकेशान्तयोः इति मन्यन्ते, तेषां असंनिधिव्यवधानेन विच्छिन्नबुद्धीनां परामर्शं वदतां कथमिव लज्जा नाननमानमयति । अथ 'तूष्णीमेताः क्रियाः स्त्रीणाम्' (यास्मृ. १।१३) इति याज्ञवल्क्यैकवाक्यतया चूडान्तानामेव परामर्शः, नोपनयनादीनामिति वाच्यं, तर्हि यमहारीतवाक्यैकवाक्यतया उपनयनपरामर्शोऽपि कथं नाङ्गीक्रियते इति । अथ 'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः । पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥' (मस्मृ. २।६७) इत्यग्रेतनवाक्ये विवाहस्य उपनयनस्थानापत्तिविधानान्यथानुपपत्त्या इदमः संकोच इति न वाच्यं, तस्य स्मृत्यन्तराभिहितोपनयनाभावपक्षे विवाहस्य तत्स्थानापत्तिविधायकत्वेनापि चरितार्थत्वात् । तस्मात् मनुवाक्ये नेदमः संकोच इति ।

किञ्च आश्वलायनेनापि 'मुखमग्रे ब्राह्मणोऽनुलिम्पेत' (आगृ. ३।८।११) इति समावर्तनीयमनुलेपनं प्रस्तुत्य 'उपस्थं स्त्री' (आगृ. ३।८।११) इत्यनेन स्त्रीणामनुलेपनं विदधता तासामप्युपनयनमुक्तं भवति, उपनयनपूर्वकत्वात्समावर्तनस्य । यत्तु सार्वत्रिकोऽयं स्त्रीणामनुलेपनविधिः, न समावर्तनीयः, उपनयनाभावेन समावर्तनासंभवात् इति व्याख्यानं, तदसत्, उक्तरीत्या उपनयनसद्भावेन 'प्राग्रजसः समावर्तनम्' इति हारीतोक्त्या च प्राग्रजसः समावर्तनसंभवे तदङ्गत्वपरिहारेण उत्कर्षस्यान्याय्यत्वात्, 'प्रकरणे च संभवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति' (जैसू. १।२।२४) इति न्यायात् । अत एव संन्यासब्रह्मजिज्ञासादिकमपि उपनीतानामेव स्त्रीणा घटते, आश्रमसमुच्चयविकल्पयोरुपनयनपूर्वकत्वात् । तदयं निर्गलितोऽर्थः—ब्रह्मवादिनीनां गर्भाष्टमादौ मन्त्रवत् तूष्णीं चोपनयनं, ततो वेदाध्ययनं, प्राग्रजोदर्शनात् समावर्तनं, प्रागेव रजोदर्शनात् विवाहश्चेति । सद्योवधूनां तु उक्तविवाहकाले एवोपनयनं, सद्य एव समावर्तनं, सद्य एव विवाह इति । 'पुराकल्पे' इति वचनात् नास्मिन् कल्पे इति गम्यते । अत एव मनुः 'वैवाहिको विधि...ऽग्निपरिक्रिया' इत्यादिना विवाहस्योपनयनस्थानापत्तिमाह । वैदिकः वेदग्रहणार्थः संस्कारः उपनयनं, स स्त्रीणां वैवाहिको विधिः विवाहजन्यः संस्कारः स्मृतः पूर्वैः इति मेधातिथिपाठार्थः । मिताक्षरादिपाठस्तु 'औपनायनिकः स्मृतः' इति । तत्र औपनायनिकः उपनयनकार्यकारी । ततश्च यथा पुरुषस्योपनयनादिः तथा स्त्रीणां विवाहादिर्विधिनिषेधाधिकार इत्यर्थः ।

संप्र. ४०३–४०५

[1]वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥

पूर्वेण आवृद्वचनेन जातकर्मादिवत् उपनयनेऽप्यमन्त्रके प्राप्ते तन्निवृत्त्यर्थमारभ्यते— वैवाहिक इति । वेदग्रहणार्थो वैदिकः संस्कार उपनयनाख्यो यः स स्त्रीणां वैवाहिको विधिः । विवाहे भवः विवाहविषयः विवाहसाध्यः । अतो विवाहस्योपनयनस्थाने विहितत्वात् तस्य निवृत्तिः । यदि विवाहस्तत्कार्यकरः हन्त प्राप्तं वेदाध्ययनं प्राप्ता च व्रतचर्या । उपनयनं नाम मा भूत् । एतदुभयमपि निवर्तयति—पतिसेवा गुरौ वासः । पतिं यत् सेवते उपचरति आराधयति स एवास्या गुरौ (वासः) वसतिः । गुरौ वसत्या अध्ययनं कर्तव्यं, न चास्या गुरौ वासोऽस्ति, अतः

---

(१) मस्मृ. २।६७ ; विश्व. १।१५ पू. ; मेधा. ; गोरा. ; मिता. १।८७ (=) (वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।) पू. ; अप. १।२३ (पृ. ९०८) मितावत्; मक. ६६ ; मभा. २।८ मितावत्, पू., स्मृत्यन्तरम्; मवि. गृहार्थोऽग्निपरिक्रिया (गृहार्थेषु परिष्क्रिया) ; स्मृच. (क.) २४, (ख.) ६१ पूर्वार्धं मितावत् ; ममु. ; स्मृसा. १ (=) पूर्वार्धं मितावत्, परिक्रिया (परिष्क्रिया) ; मपा. ३७ मितावत्, पू. ; प्रपा. २१२ (वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः । पतिसेवा गुरौ सेवा गृहस्थाग्निपरिक्रिया ॥) ; मच. ; वीमि. १।१३ (=) मितावत्, पू. ; संप्र. ४०३; धम. ११३ (वैवाहिको विधिः स्त्रीणामौपनायनिको मतः ।) पू. ; मुक्ता. ८४ पूर्वार्धं मितावत् ; संम. ६६ (=) (वैवाहिको विधिः स्त्रीणामौपनायनिकः परः ।) पू. ; भान. १४९ पूर्वार्धं मितावत् ; नन्द. ; भाच. गृहार्थो (गृहार्थे) ; सस्मृ. ५१ ; कृभ. १०६५ (=) संमवत्, पू., ११६७ (=) संमवत्, पू. ; संदी. ३ (भागः २) पूर्वार्धं मितावत्.

कुलोऽध्ययनम्। गृहार्थः गृहकृत्यानि रन्धनपारिणाह्यप्रत्यवेक्षणादीनि यानि नवमे वक्ष्यन्ते 'अर्थस्य संग्रहे चैनाम्' (मस्मृ. ९।११) इत्यादि। सायं प्रातर्ब्रह्मचारिणो यत्समिदाधानं तदेवास्या गृहकृत्यम्। अग्निक्रियया च यावान् यमनियमसमूहो ब्रह्मचारिणः स सर्व उपलक्ष्यते।

एवं चैतदुक्तम्— विवाहस्योपनयनापत्त्यं (त्या) यथैव पुरुषस्योपनयनात्प्रभृति श्रौताः स्मार्ता आचारप्राप्ताश्च विधयो भवन्ति, प्राक्तनं कामचारवादभक्षत्वं, एवं स्त्रीणां प्राग्विवाहात् कामचारः, परस्मात् (? स्तात्) श्रौतस्मार्तेष्वधिकारः।

एवं वा पदयोजना— विवाह एव स्त्रीणा वैदिकः संस्कारः उपनयनम्। अनुपनयनेऽपि विवाहे भक्त्या उपनयनत्वमुच्यते। किं तदुपनयनेन विवाहस्य साम्यं येनास्य तद्व्यपदेशः, अत आह— पतिसेवेत्यादि।

* मेधा.

शूद्रसंस्कारविचारः अमन्त्रककर्मानुज्ञा च

**न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति।**
**नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥**

(१) सर्वोऽयमनुवादश्लोकः। यदस्याऽऽहत्य शूद्राहिकया न प्रतिषिद्धं यथा हिंसास्तेयादि अनादृतवर्णविशेषं सामान्यशास्त्रप्रतिषिद्धं, न तद्व्यतिक्रमादस्य पापमुत्पद्यते। श्रुतमेवास्य शब्देन यथा हिंसास्तेयादिः तत्रास्य भवत्येव दोषः। न च संस्कारं उपनयनलक्षणं अर्हति। तदुक्तम् 'त्रयो वर्णा द्विजातयः' (मस्मृ. १०।४) इति। एवं नास्याधिकारो धर्मेऽस्ति स्नानोपवासदेवतार्चनादौ नास्य नित्योऽधिकारोऽस्ति। अकरणे न प्रत्यवैति। न धर्मात् प्रतिषेधनम्। येषु स्नानोपवासव्रतादिषु नित्याधिकारो नास्ति, अकरणे प्रत्यवायाभावः, अथ निषेधो नास्ति, तादृशेभ्यो धर्मेभ्यो न प्रतिषेधः। न चेदृशादस्य प्रतिषेधः। अतः शिष्टाप्रतिषिद्धत्वात् अभ्युदयकामस्य तदनुष्ठानं युज्यते। एवं लशुनादिभक्षणनिवृत्तिरपि अभ्युदयायास्य वेदितव्या। सामान्यशास्त्रविहितं 'निवृत्तिस्तु महाफला' (मस्मृ. ५।५६) इति। अतो 'न धर्मात्प्रतिषेधनम्' इति यत्राऽऽरम्भः। मेधा.

* स्मृतिकौमुद्यां समुद्धृतं मेधातिथिभाष्यम्— अथ गर्भाधानादिसंस्कारेषु शूद्रः केष्वधिक्रियते— के (? न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति। नास्याधिकारो) धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥ अस्य मेधातिथेर्व्याख्या— 'यदस्याहत्य शूद्राहिकया न प्रतिषिद्धं, यथा हिंसास्तेयाद्यनादृतवर्णविशेषं सामान्यशास्त्रप्रतिषिद्धं, न तद्व्यतिक्रमादस्य पापमुत्पद्यते। यथा द्विजातीनां पातकमुत्पद्यते तथा नास्तीति न शूद्रे पातकं किञ्चिदित्यस्यार्थः। न च संस्कारमर्हति। उपनयनलक्षणं संस्कार नार्हति। तथा चोक्तम्— 'त्रयो वर्णा द्विजातयः' इति। तथा वचनान्तरप्राप्तनामकरणादिव्यतिरिक्तं संस्कारमपि नार्हति। एवमुक्तेन प्रकारेण नास्याधिकारो धर्मेऽस्ति। स्नानोपवासदेवतार्चनादौ नास्य नित्योऽधिकारः। अकरणे न प्रत्यवैति। न धर्मात्प्रतिषेधनम्। येषु स्नानोपवासव्रतादिषु नित्याधिकारो नास्ति, अकरणे प्रत्यवायाभावः, अथ च निषेधोऽपि नास्ति, तादृशेभ्यो धर्मेभ्यो न प्रतिषेधनम्। ईदृशेषु धर्मेषु प्रतिषेधाभावात्। स्नानोपवासव्रतादिष्वधिकारोऽस्तीत्यर्थः। शिष्टाप्रतिषिद्धत्वादभ्युदयकामस्य तदनुष्ठानं युज्यत इत्युक्तं भवति। एवं लशुनादिभक्षणनिवृत्तिरप्यभ्युदयायास्य वेदितव्या। यतो मनुनैवोक्तं— '*न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥*' इति। मांसभक्षणे विध्युक्ते दोषो नास्ति। एतच्चोत्तरत्र सम्यक् प्रतिपादयिष्यति। मैथुने स्वदारेष्वृतावृतौ च। मद्यशब्दो लशुनादीनामप्युपलक्षणार्थः। यतो मद्यपानलशुना-

---

* सर्वाणि व्याख्यानानि मेधागतार्थानि। सप्रत्याख्यानं च 'अमन्त्रिका तु' इत्युपरितनश्लोके (संका. पृ. ४१-४२) द्रष्टव्यम्।

(१) मस्मृ. १०।१२६, ख. धर्मेऽस्ति (धर्मोऽस्ति); मेधा. धर्मेऽस्ति (धर्मोऽस्ति) भीधापुरेणसादितमेधातिथौ एव; गोरा.; मवि.; शूर. ४८०; स्मृकौ. २५; शूद्रि. ६४ नास्या (न चास्या); मच.; संम. १३४ पृ.; मुक्ता. ६७ न धर्मा (नाधर्मा); सिन्धु. ११७४ पृ.; शूक. ४९ पृ.; रत्न. ३ पृ.; मन्द.; भाच.; सास्तु. ११ पृ. : २१.

* मार्दर्शपुस्तकीयमेधातिथिभाष्यात् स्मृतिकौमुदीगतं शूद्राचारशिरोमणिगतं च मेधातिथिभाष्यं विस्तृततरमिति तदेव संगृहीतम्।

दिभक्षणनिवृत्तौ क्रियमाणायां महद्दृष्टादृष्टफलमुत्पद्यते, अतो निवृत्तिर्महाफला । एवंविधधर्मे प्रतिषेधाभावात् 'न धर्मात्प्रतिषेधनम्' इत्युक्तम् । न तु ज्योतिष्टोमादेर्धर्मा- त्प्रतिषेधाभावः । तस्य वर्णविशेषोपादानेन विधानात् ।

स्मृकौ. २५-२६

**शूद्राचारशिरोमणौ समुद्धृतं मेधातिथिभाष्यम्**—
यदस्याऽऽहत्य शूद्राह्निकया न प्रतिषिद्धं, किंतु अनादृतवर्णविशेषं सामान्यशास्त्रेणैव निषिद्धं हिंसास्तेयानृतादि, तद्व्यतिक्रमादस्य न तथा पातकमुत्पद्यते यथा द्विजातीनाम् । तथा योऽस्य संस्कारो विशिष्य नोपदिष्ट उपनयनादिरूपः तं नार्हति । येषु तु गर्भाधाननामकरणनिष्क्रमणान्नप्राशनविवाहान्यकर्मसु विशिष्य प्रमाणमस्ति ते न निषिध्यन्ते इति वक्ष्यते । नास्याधिकार इति । अस्य श्रौते स्मार्ते च धर्मे मन्त्रैकसाध्ये अधिकारो नास्ति । अमन्त्रके च स्नानोपवासार्चनादौ साधारणधर्मे प्रतिषेधो नास्ति । यद्वा, स्नानोपवासव्रतदानार्चनादौ नास्य शूद्रस्य नित्योऽधिकारोऽस्ति, तदकरणे न प्रत्यवैति । अत एव नास्माद्धर्मात्प्रतिषेधोऽप्यस्ति । शिष्टाप्रतिषिद्धत्वात् साधारणधर्मत्वेन विहितत्वात् अभ्युदयकामनया तदनुष्ठानसंभवादित्यर्थः । एवं लशुनादिभक्षणेऽपि न निषेधः, तद्वर्जने त्वभ्युदयः इति वदन्ति । तदुक्तं मनुना-'न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥' (मस्मृ. ५।५६) इति । मांसभक्षणे विध्युक्ते । मद्यशब्दो लशुनादेरप्युपलक्षकः । मैथुने स्वदारेषु ऋतौ अऋतौ च । यतः सामान्यतो निषिद्धस्यापि वर्जने दृष्टादृष्टफलमुत्पद्यते, अतो निवृत्तिर्महाफला । न तु ज्योतिष्टोमादेर्धर्मस्य प्रतिषेधाभाव इति मन्तव्यं, तस्य वर्णविशेषोपादानेन विधानात् ।

शूशि. ६४-६६

( २ ) पञ्चयज्ञादिकरणरूपात् धर्मात् प्रतिषेधनम् ।

मवि.

( ३ ) लशुनादिभक्षणेन शूद्रे न किञ्चित्पातकं भवति । न तु ब्रह्मवधादावपि, 'अहिंसा सत्यं' (मस्मृ. १०।६३) इत्यादेश्चातुर्वर्ण्यधर्मसाधारणत्वेन विहितत्वात् । न चाप्युपनयनादिसंस्कारमर्हति, नास्य अग्निहोत्रादिधर्मे अधिकारोऽस्ति, अविहितत्वात् । न च शूद्रविहितत्वात् पाकयज्ञादिधर्मात् अस्य निषेधः । एवं चास्य सर्वस्य सिद्धत्वात् अयं श्लोक उत्तरार्धोऽनुवादः । * मगु.

( ४ ) धर्मे श्रौते । धर्मात् श्रौतात् । गुर. ४८१

( ५ ) तदर्थमाह मेधातिथिः— यत्सामान्यतो निषिद्धं स्तेयानृतादि न तदतिक्रमेऽस्य तथा पापं यथा द्विजानाम् । शूकृ. ४९

( ६ ) पातकं विहितकर्माननुष्ठानप्राप्तः प्रत्यवायः शूद्रे नास्ति, तस्य अविहितधर्मत्वात् । संस्कारं निषेकादिकम् । श्रौते धर्मे अधिकारो नास्ति । धर्मात् पाकयज्ञादेः ।

नन्द.

**धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।**
**मन्त्रवर्ज्यं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥**

( १ ) एतदेवाह— धर्मं आप्तुं इच्छन्तः अभ्युदयकामाः सतां साधूनां धर्मं अनुष्ठिताः समाश्रिताः मन्त्रवर्ज्यं न दुष्यन्ति । अतः स्नानैकाहोपवासदेवतार्चनगुरुब्राह्मणनमस्कारादि सतां वृत्तमाचरन्तो न दुष्यन्ति, प्रशंसां फलं च प्राप्नुवन्ति । न पुनरेतन्मन्तव्यं— यानि समन्त्रकाणि ब्राह्मणादीनां कर्माणि दर्शपौर्णमासादीनि तानि मन्त्रवर्ज्यं शूद्रस्य न दुष्यन्तीति । यतः समन्त्रकेष्वपूर्वेषु मन्त्ररहितेनानुष्ठानमशास्त्रं स्यात् । मन्त्रवर्ज्यमित्येतस्य दर्शितो विषयः । तथा च भगवान् व्यासः — 'न चेह शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति । स्मृति( ? श्रुति )प्रयुक्तं तु न धर्ममश्नुते न चास्य धर्मे प्रतिषेधनं स्मृतम् ॥' इति । एतदपि

---

* गोरा., मच., माच. मगुगतम् । अनुद्धपाठबाहुल्यात् गोरा. नोद्धृता ।

( १ ) मस्मृ. १०।१२७, ग. वृत्त ( धर्मं ) वर्ज्य ( वर्जं ) ; मेधा. वृत्त ( धर्मं ) वर्ज्यं ( वर्जं ) ; गोरा. ; ममा. १०।६६ वृत्त ( वृत्ति ) वर्ज्यं ( वर्जं ) ; मवि. वर्ज्यं ( वर्जं ) ; मगु. ; गुर. ४८० मेधावत् ; स्मृकौ. २६ मेधावत् ; शूशि. ६६ वृत्तमनुष्ठिताः ( धर्ममनुष्ठितम् ) वर्ज्यं ( वर्जं ) ; मच. धर्मेप्सवस्तु ( धर्मेप्सवस्तु ) दोषं मेधावत् ; शुका. ६७ वृत्त (वृत्ति); दाम. ३ मेधावत् ; शूक. ४४ वृत्तमनुष्ठिताः ( धर्ममनुमताः ) वर्ज्यं ( वर्जं ) ; नन्द. वृत्त ( वृत्ति ) ; माच. वर्ज्यं ( वर्जं ) ; सस्मृ. ३३ ममावत्.

न्यथाविहितानुकार्येव। लशुनसुरापानादेर्न पतति। संस्कारानर्हता उक्तैव। उक्तं च अनुपनीतत्वात् श्रुतिविषयधर्माभावे स्मृतिविषये सामान्यविहिता धर्मा यथोक्तप्रकारास्ते नास्य प्रतिषिध्यन्ते। तथा च स्मृत्यन्तरम् — 'पाकयज्ञैः स्वयं यजेत' (गौध. १०।६४) 'अनुज्ञातोऽस्य नमस्कारो मन्त्रः' (गौध. १०।६३) इति। ये पुनराहुः— आवसथ्याधानपार्वणवैश्वदेवाद्यपाकयज्ञादिषु शूद्राणां पाक्षिकोऽधिकारः, तेषां अभिप्रायं न विद्मः। आवसथ्याधानं तावत् गृह्यकारैराम्नातं त्रैवर्णिकोद्देशेनैव। मन्वादिभिश्च नैवमाम्नातम्। तथा केवलं 'वैवाहिकाग्नौ (? केऽग्नौ) कुर्वीत गृह्यं कर्म' (मस्मृ. ३।६७) इति तत्र नैवाम्नातम्। कुतः शूद्रस्याऽऽधानम्। अथ पाकयज्ञविधानात् अग्न्याधानाक्षेपः, तदपि न, लौकिकाग्नौ वैश्वदेवो भविष्यति, यावद्वचनं वाचनिकं नान्यदाक्षेप्तुमलं, (इति) 'विवाहाग्नौ (? वैवाहिकेऽग्नौ)' इत्यत्रैव प्रदर्शितम्। पार्वणशब्देन च यद्यमावास्यं श्राद्धमुच्यते तदप्यनुजानीमः, अष्टकापार्वणश्राद्धवैश्वदेवानां विहितत्वात्। अथ दर्शपौर्णमासौ, तदपाकृतम्।

* मेधा.

(२) तदेवाऽऽह— धर्मेप्सव इति। मन्त्रवर्जम्। न सोमयागादिकर्म। इह काम (? पाक) यज्ञकरणे प्रशंसा प्राप्नुवन्ति, धर्मं च लभन्ते इत्यपि द्रष्टव्यम्। पञ्चमहायज्ञकरणे न दोष इत्युक्तम्। सतां वृत्तमनुष्ठिताः सतां वृत्तं लक्षीकृत्य उद्युक्ताः। प्रशंसा सद्भूतताम्। मवि.

(३) ये पुनः शूद्राः स्वधर्मवेदिनो धर्मप्राप्तिकामाः त्रैवर्णिकानामाचारं अनिषिद्धमाश्रिताः ते 'नमस्कारेण मन्त्रेण पञ्च यज्ञान् न हापयेत्।' (यास्मृ. १।१२१) इति याज्ञवल्क्यवचनात् नमस्कारमन्त्रेण मन्त्रान्तररहितं पञ्चयज्ञादिधर्मान् कुर्वाणा न प्रत्यवयन्ति, ख्यातिं च लोके लभन्ते। § ममु.

(४) मन्त्रवर्जं वैदिकमन्त्रवर्जम्। गर.४८१

* स्मृकौ. मेधावत्।

§ गोरा., मच. ममुवत्प्रायः।

(५) अत्र (शान्तिकर्मणि) च शूद्राणामप्यधिकारः, 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः।' इत्यादिवाक्येषु श्रावणस्य पुरुषार्थतया रागप्राप्तत्वेन तद्विधौ वाक्यवैयर्थ्यापत्तेर्णिजविवक्षया श्रवणविधानात् तेषां पुराणश्रवणेऽधिकारेण ज्ञानसद्भावात्। वैदिकमन्त्राभावे कथं तद्वत्सु कर्मस्वधिकार इति चेत्, शृणु, 'धर्मेप्सवस्तु धर्मज्ञाः...प्राप्नुवन्ति च' इति मनुना मन्त्रवर्जनात्। यत्तु मेधातिथिः— मन्त्रवर्जितेषु उपवासादिषु अधिकारार्थमिदं, न तु समन्त्रकेषु मन्त्रपर्युदासेनाधिकारार्थमिति, तन्न, अमन्त्रकोपवासादिषु श्रवणविधिनैव अधिकारसिद्धौ एतद्वाक्यानर्थक्यापत्तेः। अत एव मोक्षधर्मेऽपि 'मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीं क्रियाम्।' इति। अत्र एतद्वाक्यस्य पौराणत्वेन तत्सामान्योपस्थितपौराणक्रियोद्देशेन मन्त्रवर्जनविधौ पौष्टिकीमित्यस्य उद्देश्यविशेषणत्वेन अविवक्षितत्वम्। एवं मनुवाक्यस्य एतस्य च एकैव श्रुतिर्मूलत्वेन कल्प्यते। शाम. ३

(६) यत्तु मेधातिथिनोक्तम्— यानि मन्त्ररहितानि व्रतोपवासादीनि तान्यनुतिष्ठन्तः शूद्रा न दुष्यन्ति, न पुनः समन्त्राण्यपि मन्त्रवर्जमनुतिष्ठन्तो न दुष्यन्तीति, समन्त्रकविधौ शूद्रान् प्रत्यप्रवृत्तत्वेन मन्त्रवर्जानुष्ठाने अशास्त्रानुष्ठानं स्यादिति, तन्न, सपत्नीष्टिवत् शूद्रग्राहिकया (? अ)-विधाने मन्त्रवर्जताविधानात्। अन्यथा मन्त्रहीने व्रतोपवासादौ अनधि (? अधि) कारप्रसक्त्या विधिवैयर्थ्यात्। तस्मात्तन्निधानार्थमेवैतत्। शूक. ४४-४५.

(७) यद्यप्येवं तथापि धर्मेप्सवो धर्मज्ञाः सन्तो वृत्तिं निषेकादिसंस्कारं मन्त्रवर्जितं अनुष्ठिताः अनुष्ठितवन्तः शूद्रा न दुष्यन्ति। नन्द.

(८) धर्मेप्सवः धर्मज्ञाः मन्त्रवर्जं अध्ययनवर्जं न दुष्यन्ति। भाच.

**यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः।**
**तथा तथेमं चामुं च लोकं प्राप्नोत्यनिन्दितः॥**

(१) मस्मृ. १०।१२८; मेधा.; गोरा.; मवि.; ममु.; गर. ४८० सद्वृत्त (सद्वृत्त) उत्तरार्धे (तथाप्येवं चामुं च लोकमाप्नोत्यनिन्दितः।); स्मृकौ. ९९; मच.; शूका. ६७; नन्द.; भाच. त्वनिन्दितः (त्वनिन्दितम्); सस्मृ. ११ भाचवत्.

परगुणानिन्दकः शूद्रो यथा यथा द्विजात्याचारमनिषिद्धमनुतिष्ठति, तथा तथा जनैरनिन्दितः इह लोके उत्कृष्टः स्मृतः स्वर्गादिलोकं च प्राप्नोति ।

* ममु.

## याज्ञवल्क्यः

कर्माणि संस्कारा वा निषेकाद्याः श्मशानान्ताः समन्त्रका द्विजातीनां, शूद्राणाममन्त्रकाः

**ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥**

(१) उक्तं धर्मादीनां स्वरूपं प्रमाणं च । इदानीं तत्साधनानि वाच्यानि । तत्र च क्रियामात्रसाधारण्यात् कर्तुः पूर्वमभिधानं युक्तमित्यत आह— ब्रह्मेति । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा इति व्यवहारार्था परिभाषेयम् । तुशब्दोऽपकृष्यावधारणार्थो व्याख्येयः । आद्यास्त्रयो द्विजा इतीयमपि संज्ञा पूर्ववत् । ननु चाद्या द्विजा इत्येतावद् वाच्यं, बहुवचनात् त्रित्वावगतेः । सत्यमेवम् । रथकारव्यावृत्त्यर्थस्त्रिशब्दः । यत्तु स्मृत्यन्तरे रथकारस्योपनयनस्मरणं, तत् आधानाधिकृतत्वात् भ्रान्तेरित्यवसेयम् । विकल्पो वाऽस्तु । नेत्याचार्यः । तेषां द्विजातीनां निषेकादारभ्य आ अस्थिसंचयनात् मन्त्रतः क्रियाः भवन्ति । शास्त्रतः इत्यर्थः । तृतीयार्थे पञ्चमी द्रष्टव्या । वैशब्दो हेत्वर्थः । यस्मात् मन्त्रार्हं तेषां उपनयनाख्यं जन्म तस्मात् मन्त्रवत्यः क्रिया भवन्तीति ।

§ विश्व.

(२) एतैर्नवभिः श्लोकैः सकलशास्त्रोपोद्घातमुक्त्वा इदानीं वर्णादीनां धर्मान् वक्तुं प्रथमं तावत् वर्णानाह— ब्रह्मेति । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा वक्ष्यमाणलक्षणाः । तेषां आद्यास्त्रयो ब्राह्मणक्षत्रियवैश्या द्विजाः द्विर्जायन्त इति द्विजाः । तेषां द्विजानां वै एव, न शूद्रस्य, निषेकाद्याः निषेको गर्भाधानं आद्यो यासां तास्तथोक्ताः, श्मशानं पितृवनं, तत्संबन्धि कर्म अन्ते यासां ताः क्रिया मन्त्रैर्भवन्ति । मिता.

(३) तेषां द्विजानां गर्भाधानाद्याः प्रेतकर्मपर्यन्ताः क्रिया मन्त्रैः कार्याः । शूद्रस्य तु यावदुक्तम् । उपनयनात्त(? न्य)संस्कारानुवृत्तौ यमः— ' शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः । न केनचित् समसृजच्छन्दसा तं प्रजापतिः ॥ ' सृष्ट्वाऽनुप(? नोप)नीतवान् । अतो नोपनेय इत्यर्थः । यच्छ्रुतिः— ' गायत्र्या ब्राह्मणमसृजत । त्रिष्टुभा राजन्यम् । जगत्या वैश्यम् । न केनचिच्छन्दसा शूद्रम् । असंस्कार्यो विज्ञायते । ' असंस्कार्यः अनुपनेयः । ब्रह्मपुराणम्— ' विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा । ' मात्रशब्दात् मन्त्राणां व्यावृत्तिः पूर्वसंस्काराणां वा । तदा च विकल्पः विहितत्वादपि तेषाम् ।

* अप.

(४) द्विजातीनां मन्त्रतः क्रियाः इति वदन् शूद्रस्यामन्त्रकाः संस्कारा इत्याह । अत एव संस्काराधिकारे यमः— ' शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः । ' इति । एतच्च चूडाकरणान्तसंस्काराभिप्रायम् ।

† स्मृच. १४

(५) अथ वर्णधर्मेषु वक्तव्येषु वर्णानाह— ब्रह्मेति । ब्रह्म ब्राह्मणः । क्वचित् विप्रेति पाठः । कर्माधिकारिविभागाय द्विजान् विविनक्ति— त्वाद्यास्त्रयो द्विजाः । अत्र तुशब्दस्य वर्णा इत्युत्तरं पाठात् स्वरूपस्य आद्या इत्यनन्तरं योजनादर्थस्य संगतिः । तेषामाद्यास्तु त्रयो द्विजाः द्विर्जायन्ते इति व्युत्पत्तेः । तथा च वक्ष्यति— ' मातुर्यदग्रे ' (याज्ञ. १।३९) इत्यादि । अत्र श्रुतीनामनभि-

---

* गौरा., अन्यानि च व्याख्यानानि मनुमध्ये गतार्थानि ।

§ शूद्रसंस्कारसंबन्धि विश्वरूपमतं अग्रे ' तूष्णीमेताः क्रियाः ' इति याज्ञवल्क्यश्लोके द्रष्टव्यम् ।

(१) यास्मृ. १।१० ; विश्व. ; मिता. ; अप. ; मक. ७३ ; स्मृच. (क.) १४, (ग.) ३५ ब्रह्म (विप्र) ; स्मृमा. १ ; पमा. ४२७ काद्याः श्मशा (कादिकान्ता) ; मपा. ४ ब्रह्म (विप्र) काद्याः श्मशा (कादिकमन्ता) ; गप. ६ पू. ; मर. १ ; शूदि. ६७ पमावत् ; वीमि. ; संप्र. १११ : १५७ (=) उत्त. ; धम. १ ; मुक्ता. ७२ पमावत् ; संम. ८ ; सस्मृ. ३२ ; संर. ५ पमावत् ; संदी. १ (भाग: २) ब्रह्मक्षत्रियविट्शूद्रा (ब्रह्मक्षत्रविशः शूद्रा).

* शेषं मितागतार्थम् ।

† शेषं अपमध्ये गतार्थम् । मपा., मर., चम., संम., संर., संदी. स्मृचवत्सारः ।

व्यक्तलिङ्गसंख्यत्वात् ब्राह्मणाश्च क्षत्रियाश्चेत्यादिविग्रहेऽपि प्रकृतसमासोपपत्तेराद्या इत्यनेन ब्राह्मणा एवोक्ता इति भ्रमनिरासाय त्रय इत्युक्तं, वर्णा इत्यनुषङ्गेऽपि तन्नि-(१ तदनि)रासात् । तत्र च ब्रह्मव्यक्तिषु तिसृषु अनध्यवसायादव्याप्त्यानन्त्याच्च ब्राह्मणत्वक्षत्रियत्ववैश्यत्वान्येवादाय त्रित्वपर्यवसानमिति। अत एव मनुः– 'चतुर्थ एकजातिस्तु वर्णो नास्ति तु पञ्चमः ॥ ' (१०।४)। चतुर्थः शूद्रः । वर्णः शूद्रः । वर्णसंकरस्तत्स्यैव । वर्णसंकरो न वर्णान्तर्गत इत्यप्याहुः । तत्र द्विजानां शूद्रादिभ्यो धर्मे विशेषमाह– 'निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः । ' निषेको गर्भाधानं, तदाद्याः, श्मशानं तत्संबन्धिन्यन्त्येष्टिः, तदन्ताः क्रिया मन्त्रतः मन्त्रकरणिकाः। तेषां वै द्विजानामेव, न तु शूद्रस्यापि । अमन्त्रकास्तु तस्यापि क्रियाः । अत एव चूडाकरणान्ताः क्रियाः प्रकृत्य यमः– '*शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण* संस्कृतः । न केनचित् समसृजत् छन्दसा तं प्रजापतिः ॥' शूद्र इति लिङ्गमविवक्षितं, अनुपादेयगतत्वात् । एवंविधः चूडान्तक्रियावान् अत एव संस्कृतः कार्यः । मन्त्रेण वैदिकेन, ' वेदमन्त्रवर्जम् ' इत्येकमूलताऽनुरोधात् । (न) केनचित् (छन्दसा) गायत्र्यादिना प्रजापतिर्ब्रह्मा तं शूद्रं समसृजत् संयोजयामास । तेन उपनयनं नास्तीत्यर्थः । तथा च श्रुतिः– ' गायत्र्या ब्राह्मणं समसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचित् छन्दसा शूद्रम् ' इति । एवं च ' विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदा । ' इति ब्रह्मपुराणे मात्रपदेन उपनयनस्य वैदिकमन्त्रस्य वा व्यवच्छेदः, न गर्भाधानादीनामपीति मन्तव्यम् । वीमि.

*संस्काराणां गर्भाधानादिचौलान्तानां कालविधिः,*
*के संस्काराः शूद्रः कर्तव्याः केषां चावृत्तिः*
*इत्यत्र टीकाकाराणां व्यवस्था*

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥

(१) काः पुनस्ताः क्रियाः, कस्मिन् काले कर्तव्या इत्यत आह– *गर्भाधानमिति । गर्भाधानाख्यः प्रथमः* संस्कारो निषेकलक्षणः । स च ऋतौ कार्यः । सामर्थ्यात् ऋतुर्वक्ष्यमाणः, न वसन्तादिकः । पुंसवनाख्यो द्वितीयः संस्कारः । स च प्राग्गर्भस्पन्दनात् । तथा च पारस्करः–

---

(१) यास्मृ. १।११; विश्व. मास्येते (मासेऽष्टो) ; मिता. स्पन्दनात् (स्पन्दनात्) ; अप. । मक. ७८ ; स्मृच. (क) २७, (ख.) ४१ पू. : ४४ उत्त. ; चका. ७३२ मितावत्, पू. : ७३४ तृतीयः पादः ; स्मृमा. १ मितावत्, पू. ; पमा. ४३७ : ४३९ चतुर्थः पादः ; मपा. ३५० पू. ; संत. ९०८ मास्येते (प्रसवे) ; संसौ. ४० मितावत्, पू. : ४२ तृतीयः पादः, अनुवादरूपेण ; वीमि. ' प्रसवे जातकर्म च ' इत्यपि पाठः ; संप्र. १४१ (गर्भाधानमृतौ) एतावदेव : १६७ (पुंसः सवनं स्पन्दनात्पुरा) एतावदेव ; शुका. ७८ ; संम. १२ मितावत्, पू. : १३ तृतीयः पादः ; सिन्धु. ११७४ प्रथमपादः ; संकौ. १ (=) (गर्भाधानमृतौ) एतावदेव : ५४ (पुंसः सवनं स्पन्दनात्पुरा) एतावदेव : ५५ तृतीयः पादः ; रत्न. २,३ ; मान. १४६ उत्त. ; संर. ५१ तृतीयः पादः ; पुम. ४३१ मितावत्, पू. : ४३२ (पुंसः सवनं स्पन्दनात्पुरा) एतावदेव, (षष्ठेऽष्टमे वा मासि सीमन्तः) इति ; सस्मृ. ५१ पुरा (पुरः); संर. ८११ (पुंसः सवन स्पन्दनात्पुरा) एतावदेव : ८२० (षष्ठेऽष्टमे वा सीमन्तः) एतावदेव.

(१) यास्मृ. १।१२ ; विश्व. प्राशनं मासि (प्राशनं मासे) ; मिता. ; अप. ; मक. ७९ : ८९ प्रथमपादः, याज्ञवल्क्यशङ्खस्मृती ; स्मृच. (क. ) २० पू., (ख. ) ५३ पू. ; चका. ७३८ प्रथमपादः, याज्ञवल्क्यशङ्खस्मृती : ७४३ चूडा कार्या (चूडाकर्म) शङ्खयाज्ञवल्क्यौ, चतुर्थः पादः ; हमा. १७१ प्रथमपादः ; स्मृमा. ४ चतुर्थपादः; पमा. ४३७ ; मपा. ३५५, ३५६ चतुर्थपादः ; गमा. १७२ प्रथमपादः; श्राकौ. ४८९; संत. ९०८ ; उत. १४४ चतुर्थपादः ; संसौ. ६५ तृतीयपादः ; विभा १७८ (=) प्रथमपादः ; मच. २।३० प्रथमपादः ; वीमि. ; संप्र. २३३ प्रथमपादः : २५० द्वितीयपादः : २६७ तृतीयपादः : २९९ चतुर्थपादः ; षम. १० द्वितीयतृतीयपादौ; शुका. ८१ : ८३ मासि (मासे) उत्त. ; संम. १६ प्रथमपादः : १७ द्वितीयपादः ; सिन्धु. ९०४ प्रथमपादः ; त्रिपा. १०८ प्रथमपादः ; संकौ. १०१ प्रथमपादः : ११२ चतुर्थपादः ; रत्न. २ ; मान. १४८ पू. ; संर. ६८ प्रथमपादः : ८९ चतुर्थपादः ; पुम. ४१३ प्रथमपादः ; सस्मृ. ५१ अहन्येका (अहरेका) प्राशनं मासि (प्राशनं मासे).

'अथ पुंसवनं पुरा स्पन्दनात्' (पार. १।१४।१,२) इति प्रथमकल्पमाह। षष्ठे गर्भमासे अष्टमे वा सीमन्तोन्नयनाख्यस्तृतीयः। अतः परं नाम्नैवा(व) गतकालं जातकर्म भवति। चशब्दात् सोष्यन्तीकर्म च। तथा चाह–'सोष्यन्तीमद्भिरभ्युक्षति' (पार. १।१६।१), 'जातस्य कुमारस्य च' (पार. १।१६।३) इति। एते च संस्काराः कार्त्स्न्येन गृह्यादवगन्तव्याः। प्रतिगर्भं च अपसीमन्तोन्नयनाः प्रवर्तन्ते, तस्य स्त्रीसंस्कारत्वात्। तत्संस्कारत्वं च 'सीमन्तमूर्ध्वं विनयन्ती(? ति)' (पार. १।१५।४) इति वचनात्, मन्त्रवर्णाच्च 'आजीवं (? ऊर्जीव) फलिनी भव' (पार. १।१५।६) इति, सीमन्तिनीति समाख्यानाच्च। अन्या च स्मृतिः–'सीमन्तोन्नयनं पुंसवनवत् प्रथमे गर्भे मासे षष्ठेऽष्टमे वा' (पार. १।१५।१–३) इति। न च तदेवं नेयं–प्रथमे गर्भे मासनियमार्थमिति, श्रुतिबाधप्रसङ्गात्। न च स्त्रीसंस्कारत्वेऽपि गर्भनिमित्तत्वादावृत्तिरिति शक्यं वक्तुं, प्रथमगर्भस्यैव निमित्तभावात्। कार्यशून्यत्वाच्चानावृत्तिः। गर्भाधानं त्वर्थादेव आवर्तते। लिङ्गाच्च पुंसवनम्। सोष्यन्तीकर्म तु सुखप्रसवार्थत्वात्। अतोऽ(?)वैषम्यम्। अतः सूक्तं अपसीमन्तोन्नयनाः प्रवर्तन्ते इति। एवं च समाचारानुग्रहः।

किञ्चान्यत्–एकादशेऽहनि नाम कर्तव्यम्। एवं निष्क्रमणाद्यपि। तथा चाह–'चतुर्थे मासि निष्क्रमणं करोति' इति। यत्तु 'दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति' (पार. १।१७।१) इति, दशम्या व्युष्टायामिति तत्रार्थः। तथा चाह मनुः—'नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत्' (२।३०) इति। आनन्तर्यार्थश्चकारः। दशम्यां व्युष्टाया द्वादश्या वेति द्रष्टव्यम्। अंशजातत्वेनैकादश्यामिति नोक्तम्। तुशब्दाच्चायमेवाद्यः कल्प इति द्योतितम्। अथ तु दशम्यां एवेति तस्यार्थः, तदा यस्य प्राग्दशरात्रात् शुद्धिस्तद्विषयत्वेन द्रष्टव्यं, सूतकवाक्योपरोधात्। एकादशे त्वविशेषेण प्राथमकल्पिकः। यथाकुलमिति चूडाभिप्रायम्। यथा 'पञ्चचूडा भरद्वाजाः' इति। कालस्त्वङ्गम्। गुरुलाघवं गृह्यादवगन्तव्यम्। अथवा कालाभिप्रायमेवैतत् जातकर्मादिविषयत्वेनापि योज्यम्। यथा–जन्मानन्तरं दशरात्रे वा जातकर्म। एकादशे द्वादशे वाह्नि, शतरात्रे पुण्ये नक्षत्रे वा नामकरणम्। दशरात्रे चतुर्थे मासे वा निष्क्रमणम्। षष्ठे मासे संवत्सरे वाऽन्नप्राशनम्। संवत्सरे सार्धे तृतीये वा चूडाकरणम्। तत्सर्वं यथाकुलं वा कार्यं, उक्तकालं वा। द्विर्मासग्रहणं तु छन्दःसमाधानार्थम्। ऋज्वन्यत्। विश्व.

(२) इदानीं ताः क्रिया अनुक्रमति–गर्भाधानमिति। गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्। एवं वक्ष्यमाणान्यपि। तद्गर्भाधानं ऋतौ ऋतुकाले वक्ष्यमाणलक्षणे। पुंसवनाख्यं कर्म गर्भचलनात्पूर्वम्। षष्ठे अष्टमे वा मासि सीमन्तोन्नयनम्। एते च पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कार्ये न प्रतिगर्भम्। यथाह देवलः—'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता। यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत्॥' इति। * एते आ इते आगते गर्भकोशाज्जाते कुमारे जातकर्म। एकादशेऽहनि नाम। तच्च पितामहमातामहादिसंबद्धं कुलदेवतासंबद्धं वा। यथाह शङ्खः—'कुलदेवतासंबद्धं पिता नाम कुर्यात्' इति। चतुर्थे मासि निष्क्रमणलक्षणं सूर्यावेक्षणं कर्म। षष्ठे मास्यन्नप्राशनं कर्म। चूडाकरणं तु यथाकुलम्। कार्यमिति प्रत्येकं संबध्यते। मिता.

(३) अत्र गर्भाधानादिवत् ऋत्वादयः कालविशेषा अप्यनूद्यन्ते इति शास्त्रविहितानां कालान्तराणां न निवर्तकाः किन्तु तदुपलक्षकाः। तत्र शास्त्रान्तराणि विशेषाभिधायकानि लक्ष्यन्ते। तत्र हारीतः–'संकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः। यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्॥' सीमन्तोन्नयने बैजवापगृह्यम्–'आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्'। देवलः–'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता'। अत एव पारस्करः–'अथ पुंसवनवत् सीमन्तोन्नयनं प्रथमगर्भे' इति सीमन्तोन्नयनं प्रथमगर्भे

* अत्र 'यदा' इति पदं निर्णयसागरपुस्तके चौखम्बापुस्तके च मुद्रितमस्ति, तत्तु प्रामादिकमेवेति तद्विरहितो वेङ्कटेश्वरपुस्तक, पाठोऽस्माभिरनुसृतः।

अभिधत्ते। पुंसवनं तु प्रतिगर्भमावर्तेत। गृह्यपरिशिष्टम्— 'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम्, अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते'। *नायं नियमः। 'नामधेयं दशम्याम्' इत्यादिवचनविरोधात्*। अतो विकल्प एव। स्वगृह्यापेक्षया चैतद्व्यवस्था। एवं च 'अहन्येकादशे' 'द्वादश्यां वाऽस्य कारयेत्' इत्यादि विवक्षितार्थमेव, नाशौचान्तोपलक्षणार्थम्। तेन आशौचेऽपि तत्कार्यम्।

* अप.

(४) 'चतुर्थे स्पन्दते ततः' इति वचनात् स्पन्दनात्पूर्वमासत्रयं पुंसवनकालः। अत्र चतुर्थमासस्य सौरत्वे चान्द्रत्वे वा निषेककाम(? मास)स्यापि तथात्वे तदाद्यन्तदिनमिश्रके *सति अधिकन्यूनकालयोगेर्भस्पन्दनमनियत*मापद्येत, सावने तु नियतं, तेनात्र सावनगणना युक्ता *योषिद्व्यवहारसिद्धा* च। '*अहन्येकादशे नाम*' इत्यत्रापि 'अशौचव्यपगमे नामधेयम्' (२७।५) इति विष्णुसूत्रात् सूतकोत्तरदिनपरमेकादशादिनपदम्।

संत. ९०८

(५) उक्ता एव निषेकादिक्रियाः कालविशेषसंबन्धेनाऽनुक्रामन् तासां फलमप्याह सार्धश्लोकाभ्याम्। गर्भ आधीयते अनेनेत्यादिव्युत्पत्तिभिर्गर्भाधानादिशब्दैः तत्तत्संस्कारकर्माण्युच्यन्ते। ऋतौ (वा?) वक्ष्यमाणे काले। पुमान् सूयते अनेनेति पुंसवनं 'पुंसः सवनम्' इत्यनेनोक्तम्। स्पन्दनात् गर्भचलनात् पूर्वं तृतीये मासीत्यर्थः, 'चतुर्थे स्पन्दते ततः' इति वचनात्। गर्भमासात् षष्ठे अष्टमे वा मासि सीमन्तोन्नयनम्। एते आ इते बहिर्गते गर्भकोशात् अपत्ये, सति जन्मनि जातकर्म इत्यर्थः। '*प्रसवे जातकर्म च*' *इति पाठः सुगमः*। चशब्देन प्रसङ्गात् अपत्यजन्मकालकृत्यानामन्येषां कर्मणां समुच्चयः। यद्वा, अग्रिमश्लोकस्थैकादशे इत्यनन्तरं संयोज्यमानः अत्रानुक्तान् द्वादशादीन् समुच्चिनोति। ते च दर्शयिष्यन्ते।

एकादशे जन्मदिनात्। एतच्च सूतकान्तोपलक्षणं, 'आशौचव्यपगमे नामधेयकरणम्।' (२७।५) इति विष्णुवचनात्। अत्र श्रुतिः— 'एकादशे द्वादशे वा पिता नाम कुर्यात्'। मनुः— 'नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत्। पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा *गुणान्विते*॥' (मस्मृ. २।३०)। दशम्यां तिथौ दशमे दिने इति यावत्। एतच्च आशौचापकर्षे। 'दशम्यामुपस्थाप्य ब्राह्मणान् भोजयित्वा पिता—' (पाग्. १।१७।१), 'नामधेयं दशम्यां तु केचिदिच्छन्ति पार्थिव। द्वादश्यामपरे रात्र्यां मासे पूर्णे तथा परे॥ अष्टादशेऽहि च तथा वदन्त्येके मनीषिणः॥' रात्रिपदमहोरात्रपरम्। गोभिलः— 'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणम्' (गोगृ. २।८।८)। व्युष्टे अतीते। अत्र कालविकल्पे व्यवस्थेति वक्ष्यते। निष्क्रमः सूर्यस्य *चन्द्रमसो वा दर्शनार्थं अपत्यस्य सूतीगृहात् निस्सरणं* चतुर्थे मासि। एतच्च छन्दोगानां, 'जननाद्यस्तृतीयो *ज्यौत्स्नस्तस्य तृतीयायाम्*' (२।८।१) इति गोभिलवचनात्। ज्यौत्स्नः शुक्लपक्षः। '*षष्ठेऽन्नप्राशनं मासि*' इति प्रथमः कल्पः। 'ततोऽन्नप्राशनं कार्यं मासि षष्ठे यथाविधि। अष्टमे वाऽपि कर्तव्यं यदेष्टं मङ्गलं कुले॥' इति ब्रह्मपुराणे कालान्तरस्यापि विधानात्। लौगाक्षिरपि— 'षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा'। चूडा चूडाकर्म। यथाकुलं कुलाचारानुसारेण द्वितीये तृतीये वाऽब्दे। तथा च मनुः— * 'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते। द्वितीये वा तृतीये वा

---

* 'कृते' इति पदं मिताक्षरा।

* केऽप्यन्ये निबन्धकर्तारः इदं मनुवचनमाहुः। प्रकृतग्रन्थकर्ता संस्कारप्रकाशे चूडाकरणप्रस्तावे वचनमिदमन्यथा व्याख्यातवान्। तद्यथा— "अत्र अपूर्णे इति पदच्छेदः। स च द्वितीयादिष्वप्यनुषज्यते। ततश्च प्रथमादिवर्षाणामेवाधिकरणत्वं सिध्यति। यत्तु कल्पतरुणा 'प्रथमेऽब्दे तृतीये वा' इति मनुवाक्ये 'प्रथमेऽब्दे वर्तमाने' इति व्याख्याय 'ततः संवत्सरे पूर्णे' इति वाक्ये तत्प्रश्लेषमकृत्वा 'संवत्सरे पूर्णे' इति व्याख्यानं, तद् पूर्वापरविरोधात् चिन्त्यं, संभवत्यविरोधे विरुद्धव्याख्यानानौचित्यात्। यदपि "द्वितीये संपूर्णे, तृतीये त्वसंपूर्णे, 'तृतीये प्रथिते गते' इति लौगाक्षिस्मरणात्" इति व्याख्यानं, तदपि तथैव, भिन्नवाक्यस्थपदान्तरैकवाक्यतापेक्षया समानवाक्यस्थितपदानुषङ्गस्य धीकेन्द्रियनिकटस्थेनाभ्यर्हितत्वात् इत्यलं पल्लवितेन। वाशब्दद्वयोपादानं पक्षद्वयसमत्वं दर्शयति सर्वस्य।" इति।

कर्तव्यं श्रुतिदर्शनात् ॥ ' द्वितीये पूर्णे इत्यनुपज्यते । तृतीये अल्पावशिष्टे, ' तृतीये भूयिष्ठे गते चूडा '. इति लौगाक्षिवचनात् । इदं च तृतीयस्यैव चरमभागप्रशंसापरमिति न पौनरुक्त्यम् । कार्येति विभक्ति( ? लिङ्ग )-विपरिणामेन गर्भाधानादिषु उपनयनान्तेष्वप्यन्वेति । नाम्नस्तु करणं व्यवस्थापनमात्रमिति विशेषः । न च चूडापदवत् नामपदमपि कर्मविशेषपरमेवास्त्विति वाच्यं, प्रामाणिकलिखनविरोधादिति । वीमि.

गर्भाधानादीनां चौलान्तानां संस्काराणां बीजगर्भसमुद्भूतपापनाशकत्वं द्विजविषये उपनयनस्यापि

एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥

( १ ) कस्मात् पुनरेषां संस्कारकर्मणां प्रयत्नेनैव नियोगतोऽनुष्ठानम् । उच्यते यस्मात्– एवमेन इति । मातापित्रोर्जन्यस्य वा नियतनिमित्तत्वादेनसश्च निराकार्यत्वात् प्रयत्नेनैवं ( ? व ) नियोगतः करणम् । गर्भार्थत्वेऽपि च अकरणे मातापित्रोरेव प्रत्यवायः । तथा चाह मनुः– ' बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते । ' इति । विश्व.

( २ ) एतेषां नित्यत्वेऽप्यानुषङ्गिकं फलमाह– एवमेन इति । एवं उक्तेन प्रकारेण गर्भाधानादिभिः संस्कारकर्मभिः कृतैः एनः पापं शमं याति । किंभूतम् । बीजगर्भसमुद्भवं शुक्रशोणितसंबद्धं *गात्रव्याधिसंक्रान्तिनिमित्तं वा, न तु पतितोत्पन्नत्वादि । § मिता.

( ३ ) एवं कृतेषु संस्कारेषु एनः पापं बीजगर्भोत्थं शाम्यति । बीजं शुक्रशोणितम् । गर्भो जठरान्तरस्थितो देहः । तेन जठरवासो लक्ष्यते । एनोऽत्र अप्रायत्यं, मातुः पीताशनादेरुत्पन्नमित्यर्थः । एतच्च चातुर्वर्ण्याभिप्रायं, न द्विजातिमात्रविषयम् । तथा सत्युपनयनं विधाय वाच्यं स्यात् । देवल.– ' चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः । ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ॥ ' अत एव मनुर्द्विजात्यभिप्रायेणोपनयनं विधाय आह– ' गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ ' एवमेनःशान्त्या प्रयुज्यमाना एते संस्काराः पुंसवनात्परे पित्रभावे पितृस्थानीयेन पितृव्यादिना कार्या इति सिद्धम् । अप.

( ४ ) उक्तक्रियाणामावश्यकत्वेऽप्यानुषङ्गिकं फलमाह– एवमेन इति । एवं एवंकृते । बीजं शुक्रं शोणितं च । गर्भस्तदाशयः । तत्समुद्भवं तत्संबन्धि । एनः अशुचित्वं अपत्यस्य । अत्र गर्भाधानादित्रयं क्षेत्रसंस्कारद्वारा अपत्यसंस्कारकम् । क्षेत्रसंस्कारश्च प्रथमगर्भ एव जात इति न प्रतिगर्भमावर्तनीयं, ' आरम्भणीया 'न्यायात् । तथा च हारीतः–' सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥ ' सीमन्तेन तदन्तकर्मणा, न्यायतौल्यात्, वचनस्य चास्य न्यायमूलकत्वात् । द्विजेति चोपलक्षणम् । अत एव 'सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता । ' इति देवलेन संस्कृतेति नारीति च सामान्येनैवोक्तम् । जातकर्मादि तु साक्षादेव अपत्यसंस्कारकमिति प्रत्यपत्यमावर्तनीयमिति विवेकः । द्विजसंस्कारे तु उपनयनमप्यधिकं, ' गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ ' इति मनूक्तेः । गार्भैर्होमैरिति तु पुंसवनादीनामप्युपलक्षणम् । वीमि.

स्त्रीणां विवाहान्यसंस्कारा अमन्त्रकाः

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥

( १ ) किं पुनरेताः क्रियाः पुंविषया एव, नेत्याह– तूष्णीमिति । अपि कार्या इति शेषः, संस्कार्यत्वाविशेषात् ।

* ' बैजिकं गार्भिक चैनः ' इति मनुवाक्ये भावार्थचन्द्रिकायां ' गोत्रव्याधिसक्रमनिमित्तम् ' इति व्याख्यातम् ।

§ संम., सर. मितावत् ।

( १ ) यास्मृ. १।१३ ; विश्व. ; मिता. ; अप. ; स्मृच. (क.) १४, ( ख. ) ३६ ; हभा. १८८ ; पमा. ४३७ ; प्रपा. २०७ ; श्राकौ. ४८९ ; संत. ९०८ ; वीमि. ; मुक्ता. ७३ ; संम. ८ ( = ) ; रत्न. २ ; सस्मृ. ५१ ; संर. ५ ( = ).

( १ ) यास्मृ. १।१३ ; विश्व. ; मिता. ; अप. ; ब्रक. ७४,९६ ; स्मृच. ( क. ) २३, ( ख. ) ६० ; हभा. १८८ ; स्मृसा. १ ( = ) ; स्मृकौ. ३७ ; गभा. १९४ ; श्राकौ. ४९७ ; संत. ९२६ ; संसौ. ७० ( = ) ; वीमि. ; संप्र. १९४, ३१७ ; मुक्ता. ८४ विवाहस्तु ( विवाहश्च ) ; संम. ५ : ८ स्मृतिः ; श्राम. ८७ ; शूक. २५८ ; विपा. २६७ ( = ) ; श्रान. १४९ ; संग. ६१९, ६४२ ; सस्मृ. ५१ ; कृभ. १७४१ ; संर. ५ स्मृतिः : ८३८ ; संदी. ३ ( भागः २ ).

एता इति सर्वनाम्नोऽतःशब्दावच्छिन्नजातकर्मादिविषयत्वं द्रष्टव्यम् । गर्भाधानादौ त्वविशेषः । मुख्यप्रसवार्थत्वात् तु सोष्यन्तीकर्मणश्चशब्दावगतस्यापि ग्रहणम् । नन्वेवं सति स्त्रीणां मन्त्रहानात् तदुक्तकर्माधिकारो दुःश्लिष्टः स्यात् । *वचनगम्यत्वात् अधिकारस्यैतदचोद्यम् ।* न च स्त्रीणामात्यन्तिको मन्त्राभावः । यदि नाम जातकर्मादि तूष्णीं– विवाहस्तु समन्त्रकः समन्त्रक एव । तस्मादविरोधः । कार्याभावात्तु नपुंसके संस्कारनिवृत्तिः । अर्थलक्षणास्तु नामकरणादयः शूद्रस्यापि प्रवर्तन्ते । तथा च मनुः 'शूद्रस्य प्रेष्यसंयुतम्' (मस्मृ. २।३२) इति । अविहिताप्रतिषिद्धत्वात् । 'मन्त्रवर्जं शूद्रस्य' इति शङ्खः । निःशेषतो वा स्त्रीसमत्ववचनात् इति केचित् । तत्तु सामान्यतोदृष्टत्वाच्छब्दलक्षणे व्यवहारे नादरणीयम् । एते च संस्काराः स्त्रीणामपि ब्राह्मणादीनामेतेष्वेव कालेषु भवन्ति । विश्व.

(२) स्त्रीणां विशेषमाह– तूष्णीमिति । एता जातकर्मादिकाः क्रियाः स्त्रीणां तूष्णीं विनैव मन्त्रैः यथाकालं कार्याः । विवाहः पुनः समन्त्रकः कार्यः । मिता.

(३) एतान्युक्तानि नामकरणादीनि चूडाकरणान्तानि कर्माणि दुहितॄणामपि मन्त्ररहितानि कुर्यात् । तथा शूद्रस्य यथार्हम् । हमा. १८८

(४) द्विजस्त्रीणां द्विजेभ्यः शूद्रादिभ्यश्च विशेषमाह– तूष्णीमिति ; तूष्णीं वेदमन्त्रेण विना । एताः जातकर्माद्याः । स्त्रीणां ब्राह्मण्यादित्रिसृणाम् । विवाहकर्मणि पत्युरधिकारः, तस्य च 'निषेकाद्याः' इत्यादितः सामान्यत एव मन्त्रप्राप्तौ 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।' (मस्मृ. २।६७) इति वचनाद्विवाहस्य स्त्रीसंस्कारत्वेन तत्प्राधान्यमभिप्रेत्य तथा ( ? या ) च मन्त्राणामपि संबन्धमाह– विवाहस्तु समन्त्रकः इति । अत्र जातकर्मादौ साङ्गोपाङ्गे मन्त्राणां निषेधः । तथा च मनुः– 'अमन्त्रिका तु कार्येयं स्त्रियामावृदशेषतः । संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥' (मस्मृ. २।६६) । आवृत् क्रिया । अशेषतः सेतिकर्तव्यताका । एवं च विवाहेऽपि साङ्गे एव मन्त्रविधिः, 'एकत्र' इति न्यायादित्यर्थः । वीमि.

(५) गोभिलोऽपि * 'तूष्णीमेताः क्रियाः स्त्रीणां मन्त्रेण तु होमः' इति । अत्र होमपदं स्वस्तिवाचनादीनामङ्गानामुपलक्षणम् । तेन तान्यपि समन्त्रकाणि भवन्ति, अमन्त्रकत्वस्य 'यज्ञार्थर्वणं वै काम्या इष्टयस्ता *उपांशु कर्तव्याः' इत्युपांशुत्वस्येव प्रधानमात्रधर्मत्वात् ।* ततश्चात्र घृतमधुप्राशनादिप्रधानमन्त्राणामेव निवृत्तिर्नाङ्गमन्त्राणामिति सिद्धम् । संप्र. १९४

(६) यत्तु जातकर्मादिसंस्कारानुक्त्वा याज्ञवल्क्यः– 'तूष्णीमेताः क्रियाः स्त्रीणाम्' इति तत्प्रधानाङ्गमन्त्रबाधार्थम् । यदि हि 'अप्स्ववभृथेन चरन्ति' इतिवत् तृतीयान्तेन साङ्गभावनामुक्त्वा तस्यां तूष्णीत्वं विधीयते ततः स्यादङ्गमन्त्रबाधः । इह तु 'यज्ञार्थर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इत्यत्र इष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात् प्रधाने एव तूष्णीत्वविधिर्नाङ्गेऽपि । *तेन कन्याजातकर्मादौ वृद्धिश्राद्धं समन्त्रकमेव भवति* इति दिक् । § श्राम. ८७

संस्कर्तारः

*[1]असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।*
*भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥* †

## नारदः

संस्कर्तारः

*[2]येषां तु न कृताः पूर्वं संस्कारविधयः क्रमात् ।*
*कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥*
*अविद्यमाने पित्र्यर्थे स्वांशादुद्धृत्य वा पुनः ।*
*अवश्यकार्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः ॥*

---

* एतादृशं गोभिलसूत्रं नोपलभ्यते । 'एतयैवाऽऽवृता स्त्रियाः । तूष्णीम् । मन्त्रेण तु होम' । ' (गोगृ. २।१।२२-२४) इति सूत्राणि दृश्यन्ते, *तानि तु चूडामात्रविषयाणीति सामान्यविशेषरूपेण* विषयभेदः ।

§ सम., सर. श्रामवद् ।

† व्याख्यानानि 'कन्यादातारः' इत्यस्मिन्प्रकरणे तथा व्यवहारकाण्डे पृ. १४१९ द्रष्टव्यानि ।

(१) यास्मृ. २।१२४. *अन्यः स्थलादिनिर्देशः* 'कन्यादातारः' इत्यस्मिन्प्रकरणे द्रष्टव्यः ।

(२) *संत* ९१२. *अन्यः स्थलादिनिर्देशः व्याख्यानादि च* व्यवहारकाण्डे १९८४ पृष्ठे द्रष्टव्यम् ।

### बृहस्पतिः

आत्मगुणानां गौतमेन संस्कारैः सह नित्यत्वेन प्राधान्येन च समुच्चितानां व्याख्यानम्

[1]दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥
[2]परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥
[3]बाह्ये चाभ्यन्तरे चैव दुःख उत्पादिते परैः ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥
[4]न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥
[5]अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥

[1]शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥
[2]प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
[3]स्तोकादपि हि दातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किञ्चिदकार्पण्यं हि तत्स्मृतम् ॥
[4]यथोत्पन्नेन संतोषः कर्तव्यो ह्यर्थवस्तुना ।
परस्याचिन्तयित्वाऽर्थं साऽस्पृहा परिकीर्तिता ॥

---

(१) अप. १।१२२ णानि च (णानि तु); मक. ११; चव्र. ८; कृर. १४ अकार्पण्यमस्पृहत्वं (अकार्पण्यास्पृहत्वं च); पमा. ७६ उत्तरार्धे (अकार्पण्यास्पृहत्वे च सर्वसाधारणा इमे ।); दीक. ३।१८५ (पृ. ९१); पप्र. ३२; इन्दु. २.

(२) अप. १।१२२; मक. ११–१२; स्मृच. (क.) १३ परे वा (परेषां) आपन्ने (कृपया): (ख.) ३३ (यदा तु बन्धुवर्गेषु मित्रे द्वेष्टरि वा सदा । आपन्नो रक्षितव्यस्तु दयैषा परिकीर्तिता ॥); चव्र. ८; कृर. १५; पप्र. ३३; मुक्ता. ७३ आपन्ने रक्षितव्यं तु (आपदो रक्षणं यत्तु); इन्दु. २.

(३) अप. १।१२२ पूर्वार्धे (बाह्ये चाऽऽध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।); मक. १२ पूर्वार्धे (बाह्ये वाऽऽध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।); स्मृच. (क.) १३: (ख.) ३३ वा हन्ति (चाहन्ति); चव्र. ८ पूर्वार्धे (बाह्ये वाऽऽध्यात्मिके चैव दुःखे चौत्पातिके क्वचित् ।); कृर. १५ अपवत्; पप्र. ३३ पूर्वार्धे (बाह्ये चाध्यात्मिके चैव दुःखे चौत्पातिके क्वचित् ।); संप्र. १३८; मुक्ता. ७३ न कुप्यति न वा हन्ति (न प्रकुर्वन्ति नो हन्ति); इन्दु. २ बाह्ये चाभ्यन्तरे चैव (बाह्ये वाऽभ्यन्तरे वाऽपि).

(४) अप. १।१२२; मक. १२; स्मृच. (क.) १३, (ख.) ३३; चव्र. ८; कृर. १५; पप्र. ३३; संप्र. १३८ न गुणान् गुणिनो हन्ति (न दुर्गुणान् गुणैर्हन्ति); इन्दु. २ न गुणान् (गुणान्न).

(५) अप. १।१२२; मक. १२; स्मृच. (क.) १३ हारश्च (हारस्तु) निन्दितैः (निन्दकैः): (ख.) ३३ पूर्वार्धे (अभक्ष्यपरिहारस्तु दुष्टसंसर्गवर्जनम् ।); चव्र. ८–९; कृर. १५; पप्र. ३३ अभक्ष्य (अधर्म); संप्र. १३८ स्वधर्मे च (स्वधर्मेषु); मुक्ता. ७३; इन्दु. ३.

(१) अप. १।१२२; मक. १२; स्मृच. (क.) १३ अत्यन्तं तन्न (अत्यन्तं तु न): (ख.) ३३; चव्र. ९ कर्तव्यमना (कुर्वीत अना); कृर. १५; पप्र. ३३; संप्र. १३८ सुशुभेनापि (शुभेनापि च) उत्तरार्धे (अत्यन्तं वर्जयेत्तत्तु सोऽनायासः प्रकीर्तितः); इन्दु. ३ चव्रवत्.

(२) अप. १।१२२ नित्य...र्जनम् (नित्यं नाप्रशस्तप्रवर्तनम्); मक. १२ विवर्जनम् (विसर्जनम्); स्मृच. (क.) १३, (ख.) ३३; चव्र. ९; कृर. १५ प्रशस्तविवर्जनम् (प्रशस्तस्य च वर्जनम्); पप्र. ३३ प्रोक्तमृषिभि (प्रोक्तं मुनिभि); संप्र. १३८; मुक्ता. ७३; इन्दु. ३.

(३) अप. १।१२२ हि दातव्य (प्रदातव्य) हि तत्स्मृतम् (तदुच्यते); मक. १२; स्मृच. (क.) १३: (ख.) ३३ दातव्यमदीनेना (दातव्यं मुदितेना); चव्र. ९ दपि हि दातव्य (दप्युपकर्तव्य); कृर. १६ हि दातव्य (प्रदातव्य); पप्र. ३४ दपि हि (दपि च); संप्र. १३८ दकार्पण्य हि तत्स्मृतम् (त्वदकार्पण्यमुच्यते); मुक्ता. ७३ दातव्यमदीनेना (दातव्यं मुदितेना); इन्दु. ३ कृरवत्.

(४) अप. १।१२२ ह्यर्थवस्तुना (ह्यन्नवस्तु वा); मक. १२ ह्यर्थवस्तुना (ह्यथ वस्तुना); स्मृच. (क.) १३ (यथोत्पन्नैस्तु संतोषः कर्तव्यश्चागतैर्धनैः । परार्थं नाभिलाषेत साऽस्पृहा परिकीर्तिता ॥): (ख.) ३३–३४ (यथोपपन्नैः संतोषः कर्तव्यः स्वागतैर्द्विजैः । परार्थं नाभिलाषेन साऽस्पृहा परिकीर्तिता ॥); चव्र. ९ (यथोपपन्ने संतोषः कर्तव्योऽप्यल्पवस्तुनि । परस्याचिन्तयन्नर्थं साऽस्पृहा परिकीर्तिता ॥); कृर. १६ व्यो ह्यर्थवस्तुना (व्योऽप्यथ वस्तुना); पप्र. ३४; मुक्ता. ७३ (यथोत्पन्नैस्तु संतोषः कर्तव्यः स्वार्जितैर्धनैः । परार्थं नाभिलाषेत साऽस्पृहा परिकीर्तिता ॥); इन्दु. ३ ह्यर्थवस्तुना (ह्यल्पवस्तुनि) यित्वाऽर्थं (यन्नर्थं).

### कात्यायनः

अष्टकादयः पुरुषसंस्काराः

[1]संस्काराः पुरुषस्यैते स्मर्यन्ते गौतमादिभिः ।
अतोऽष्टकादयः कार्याः सर्वे कालक्रमादितः ॥
सकृदप्यष्टकादीनि कुर्यात्कर्माणि यो द्विजः ।
स पङ्क्तिपावको भूत्वा लोकान्प्रैति घृतश्च्युतः ॥

संस्काराणां कालातिपाते प्रायश्चित्तम्

[2]देवतानां विपर्यासे जुहोतिषु कथं भवेत् ।
सर्वप्रायश्चित्तं हुत्वा क्रमेण जुहुयात्पुनः ॥

[3]संस्कारा अतिपद्येरन् स्वकालाचेत् कथञ्चन ।
हुत्वैतदेव कर्तव्या ये तूपनयनादधः ॥

( १ ) उपनयनकालातिपत्तौ व्रात्यस्तोमाद्येव ।

स्मृच. २४

( २ ) एतदेव सर्वप्रायश्चित्तमेव ।

मुक्ता. ८४

कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च ।
कालातीतानि कृत्वा तु विदध्यादुत्तराणि च ॥

( १ ) कास्मृ. ३।१०८,१०९.

( २ ) कास्मृ. ३।९२ ; अप. १।१३ सर्वं ( सर्वे ) क्रमेण ( क्रमशो ) ; स्मृच. ( क. ) २४ सर्वप्रा. ... क्रमेण ( प्रायश्चित्तमतो हुत्वा क्रमशो ) : ( ख. ) ६१ क्रमेण ( क्रमशो ) ; मपा. ३६२ ; संत. ९१२ सर्वं ( सर्वे ) हुत्वा ( कृत्वा ).

( ३ ) कास्मृ. ३।९३ ( क. ) कालाचेत् ( कालाच ), ( ख. ) अतिपद्येरन् ( अतिपत्स्येरन् ) कालाचेत् ( काल चेत् ) ; अप. १।१३ ( संस्काराश्च विद्युज्येरन् स्वकालश्च कथंचन । हुत्वा तदेव कर्तव्य तद्भूप पालयेदधः ॥ ) ; स्मृच. ( क. ) २४ अतिपद्येरन् ( अतिपत्स्येरन् ) हुत्वैतदेव ( हुत्वा तदेव ) : ( ख ) ६१ ; मपा. ३६३ स्मृच( क. )वत् ; ज्योत. ६२० अतिपद्येरन् ( अतिपत्स्येरन् ) कर्तव्या ( कुर्वीत ) ; संत. ९१२ कालाचेत् ( कालाच ) कर्तव्या ( कुर्वीत ) ; संप्र. ३३२ हुत्वैत ( कृत्वैत ) नादधः ( नात्पुरा ) ; मुक्ता. ८४ उत्तरार्धे ( हुत्वैतदेव कर्तव्य यत्तूपनयनादयः। ) ; आन. १४९ ये तूप (क्रियोप) ; संग. ६३१ सप्रवत्.

( ४ ) मुक्ता ९९ ; संग. ६३२ कृत्वा तु ( कृत्वैव ) च ( तु ) उक्त. त्रिकाण्डमण्डने प्रकीर्णककाण्डे १० इत्यवेद वचनं समुपलभ्यते ।

[1]लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते ।
प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ॥
[2]गर्भाधानादिचौलान्ते स्वकाले विधिनाऽकृते ।
प्रत्येकं पादकृच्छ्रं स्याद्द्विगुणं स्यादनापदि ॥
[3]आषोडशाद्ब्राह्मणस्य ह्यष्टकाद्व्रतहायने ।
आज्याहुतीश्च जुहुयादिमं मे वरुणद्वयम् ॥
[4]त्वं नः स त्वं न इत्याभ्यामिमं मे त्वेतया ऋचा ।
ये ते शतमयाश्चाभ्यामुदुत्तममृचाऽऽहुतीः ॥
[5]हुत्वा पृथक्पृथक्पादमर्धं चौले समाचरेत् ।
स्त्रीणामप्येवमेव स्याज्जाताद्याऽमन्त्रिका क्रिया ॥
अभ्युदिकं तु तन्त्रेण सर्वकर्माण्यनुक्रमात् ।
उपायनव्रतं कुर्याच्छूद्रतुल्योऽन्यथा भवेत् ॥
[6]सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचं त्वन्नो अग्न
इति द्वाभ्यामयाश्चाग्ने ये ते शतमुदुत्तममिति च ॥

### व्यासः

संस्काराः षोडश

[7]गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया ॥

( १ ) प्रपा. २२० ; गभा. २३३ ; संप्र. ३३२ ; मुक्ता. ९९ ; सिन्धु. ९४८ ; संग. ६३२ पश्चात्तु ( तस्मात्तु ).

( २ ) मुक्ता. ९९.

( ३ ) मुक्ता. ९९.

( ४ ) प्रपा. २२० मे त्वेतया ( मेत्येकया ) ; संप्र. ३३२ ; संग. ६३२ त्वेतया ( त्येतया ) ; संर. २६९ त्वेतया ( ह्यनया ) मृचाऽऽहुती ( मचाहुतीः ).

( ५ ) प्रपा. २२० ; संप्र. ३३२ उत्तरार्धे ( स्त्रीणामप्येवमेव स्याज्जाताद्यामन्त्रिका. क्रियाः। ) ; संग. ६३२ संप्रवत् ; संर. २६९ पू.

( ६ ) स्मृच. ( क. ) २४ ( सर्वप्रायश्चित्त पञ्चभि प्रत्यृचं 'त्वन्नो अग्न' इति द्वाभ्यां, 'अयाश्चाग्न' इति 'शतमुत्तममिति' ) : ( ख. ) ६१ ; मपा ३६३ अयाश्चाग्ने.. ...इति च ( अयाश्चाग्नेश्चेति शतमुत्तममिति वा ) ; मुक्ता. ८४ द्वाभ्याम...इति च ( द्वाभ्यां 'अयाश्चाग्ने' 'ये शतम्' 'उदुत्तम्' इति च ) ; आन. १४९ ; संग. ४२-४३ श्चित्त च ( श्चित्तं ).

( ७ ) व्यास्मृ. १।१४ ; गभा. १९४ ; सिन्धु. ११७३ ; शूक. ४८ ; रत्न. २ ; संग. ८ ; संव. ३ ; संदी. २६२ ( भागः २ ).

**कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ।**
**केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥**
**[२]त्रेताग्निसंग्रहश्चैव संस्काराः षोडश स्मृताः ॥**

अत्र वेदारम्भादीनां षण्णां कर्मणां श्रौतस्मार्तपुरुषार्थाग्निहोत्रादिकर्मानुष्ठानप्रयोजकत्वेन संस्कारत्वम् । पापनिवृत्तिपूर्वकातिशयविशेषरूपसंस्काराधायकत्वरूपं पुरुषसंस्कारकर्मत्वं तु गर्भाधानादीनां व्रतबन्धान्तानां दशानामेव । तत्र गर्भाधानस्य क्षेत्रसंस्कारद्वारा, पुंसवनसीमन्तयोः क्षेत्रसंस्कारद्वारा गर्भसंस्कारद्वारा वा, जातकर्मादीनां चौलान्तानां षण्णां शरीरसंस्कारद्वारा, उपनयनस्य तु साक्षादतिशयविशेषाधायकत्वम् । अत एवोपनयनस्य प्राधान्यम् । स्त्रीशूद्रयोस्तु विवाहस्योपनयनस्थानीयत्वात्तस्यैव मुख्यसंस्कारत्वम् । अत एव 'अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् । पिता कुर्यात् ... ... ... ॥' इति वचने विवाहादीनामनुल्लेखः संस्कारकर्मत्वेन । तत्र कर्णवेधस्य पूर्वत्रानुक्तत्वान्नवानां उपन्यासः । शिष्टपरिग्रहाच्च अस्माभिरुपन्यस्तस्तत्र । अत एव दशसंस्कारकर्मपद्धतिरिति अभियुक्तानां प्रवादः । अत एव विवाहादिविधिषु न द्वितीयाश्रवणं पुरुषे । अध्ययनमपि 'स्वाध्यायोऽध्येतव्यः' इति विधिप्रयुक्तमेव, नाध्यापनविधिप्रयुक्तमिति । न तत्रत्यया 'वेदमध्यापयेदेनम्' इति द्वितीयया पुरुषसंस्कारकर्मत्वशङ्कावकाशः । अत एव विरक्तस्य न विवाहानुष्ठानम् । तदभावाच्च नोत्तरकर्मसु तदधिकारः । 'जायमानो वै ब्राह्मणः' इत्यस्य गृहस्थो जायमान इत्यर्थ इति न तद्विरोधः । समावर्तनं तु कलौ नैष्ठिकब्रह्मचर्यनिषेधात् आवश्यकम् । तस्मात् उपनयनान्तानि दशैव पुरुषसंस्कारकर्माणि, अध्ययनादीनि तु पुरुषार्थानि, पुरुषार्थकर्मानुष्ठानप्रयोजकत्वात्तु संस्कारेषु परिगण्यन्ते इति दिक् । संदी. २६३ (भागः २)

(१) व्यास्मृ. १।१५ ; गभा. १९४ ; सिन्धु. ११७३ ; शूक. ४८ ; रत्न. २ स्नानमु ( स्नान उ ) ; संग. ८ विवाहाग्नि ( विवाहोऽग्नि ) ; संव. ३ ; संदी. २६२ ( भागः २ ).

(२) व्यास्मृ. १।१६ ह्यैव ( ह्येति ) ; गभा. १९४ ; सिन्धु. ११७३ ; शूक. ४८ ; रत्न. २ ; संग. ८ ; संव. ३ ; संदी. २६२ ( भागः २ ) ह्यैव ( ह्येति ).

### स्त्रीणां शूद्राणां च संस्काराः, तेषां संस्कारेषु समन्त्रकत्वविचारश्च

**[१]नैवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ।**
**विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश ॥**

मदनरत्ने हिरण्यगर्भदाने तु– 'गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा । कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुंगवाः ॥' इत्युक्त्वा 'जातकर्मादिकाः कुर्यात्क्रियाः षोडश चापराः ।' इत्यत्र 'स्त्रियाः जातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडाविवाहाः षट्, शूद्राणां तु षडेते पञ्चमहायज्ञाश्च इत्येकादश' इत्युक्तम् । रूपनारायणहरिहरभाष्ययोरप्येवम् । शार्ङ्गधरस्तु 'द्विजानां षोडशैव स्युः शूद्राणां द्वादशैव हि । पञ्चैव मिश्रजातीनां संस्काराः कुलधर्मतः ॥ वेदव्रतोपनयनमहानाम्नीमहाव्रतम् । विना द्वादश शूद्राणां संस्कारा नाममन्त्रतः ॥' इत्याह । अपरार्कस्तु 'गर्भाधानमृतौ पुंसः' इत्यत्राह– 'एतच्चातुर्वर्ण्यपरं, न द्विजातिमात्रपरं, तथा सत्युपनयनं विधाय वाच्यं स्यात्' इति । तेन तन्मते अष्टौ भवन्ति । ब्राह्मे तु 'विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा ।' इत्युक्तम् । अत्र सदसच्छूद्रगोचरत्वेन देशभेदात् ( ? वा ) व्यवस्था । यत्तु मनुः 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।' इति, तदर्थमाह मेधातिथिः– 'यत्सामान्यतो निषिद्धं स्तेयानृतादि, न तदतिक्रमेऽस्य पापं यथा द्विजानाम् । उपनयनरूपं संस्कारं च नार्हति ।' इति ।

ते च तूष्णीं कार्याः, 'शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति । वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥' इति व्यासोक्तेः, 'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ।' इति मरीच्युक्तेश्च । इयं परिभाषा सर्वार्था, तेन शूद्रधर्मेषु सर्वत्र विप्रेण मन्त्रः पठनीयः । सोऽपि पौराण एवेति शूलपाणिः । एवं स्त्रीणामपीति दिक् ।
सिन्धु. ११७३–७४

(१) व्यास्मृ. १।१६–१७ ; गभा. १९४ ; सिन्धु. ११७२ क्रियाः स्त्रियाः ( स्त्रियाः क्रियाः ) ; शूक. ४८ ; रत्न. २ ; संग. ८ वर्जं क्रियाः स्त्रियाः ( वर्ज्यं क्रियाविधौ ) मन्त्रतस्तस्याः ( मन्त्रवत्तस्याः ) ; संदी. २६२ ( भागः २ ).

[1]ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु ते नराः ॥
[2]शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥
[3]विकर्म चाश्रिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथा सन्तमाश्रित्येह स्वकर्मसु ॥
न चेह शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति ।
श्रुतिप्रयुक्तं तु न धर्ममश्नुते
न चास्य धर्मे प्रतिषेधनं स्मृतम् ॥

*आत्मगुणानां गौतमेन संस्कारैः सह नित्यत्वेन प्राधान्येन च समुचितानां व्याख्यानम्*

[4]आत्मवत्सर्वभूतेषु यः शिवाय हिताय च ।
वर्तते संततं हृष्टः कृत्स्ना ह्येषा दया स्मृता ॥
[5]आक्रुष्टोऽभिहतो वाऽपि
नाऽऽक्रोशेन्नापि ताडयेत् ।
अदुष्टो वाङ्मनःकायैः
सा तितिक्षा क्षमा स्मृता ॥
[6]यो धर्ममर्थं कामं वा लभते मोक्षमेव वा ।
न द्विष्यात्तं सदा प्राज्ञ अनसूयेति सा स्मृता ॥

[1]द्रव्यशौचं मनश्शौचं वाक्शौचं कायिकं तथा ।
शौचं चतुर्विधं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
[2]यदारम्भे भवेत्पीडा नित्यमत्यन्तमात्मनः ।
तद्वर्जयेद्धर्म्यमपि अनायासः स उच्यते ॥
[3]प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥
[4]आपद्यपि च कष्टायां भवेद्दीनो न कस्यचित् ।
संविभागरुचिश्च स्यादकार्पण्यं तदुच्यते ॥
[5]विवर्जयेदसंतोषं विषयेषु सदा नरः ।
परद्रव्याभिलाषं च साऽस्पृहा कथ्यते बुधैः ॥
[6]क्षमावान् जयते भूमिं दयावान् सुखमश्नुते ।
अनसूयुर्लभेत्स्वर्गं शौचेनाध्यात्ममेव च ॥
मङ्गलादपि संपूज्य इह लोके परत्र च ।
सुरसाम्यमनायासादकार्पण्यात् प्रकृतौ लयम् ॥
अस्पृहो लभते नित्यमनन्तं सुखमेव च ।
सर्वैस्तु ब्रह्मणः स्थानं संस्कारैस्तु तथैव च ॥

## सुमन्तुः

त्रैवर्णिकानां समानानि संस्कारादीनि कर्माणि

[7]ब्राह्मणक्षत्रियवैश्यानां गर्भाधानसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनव्रतचर्याध्ययनसमावर्तनविवाहयज्ञदानानि समानानि ॥

---

(१) व्यास्मृ. १।५-६.

(२) स्मृकौ. २६.

(३) मेधा. १०।१२७ श्रुति (स्मृति); गृर. ४८० न चापि सस्कारमिहार्हतीति (न चैव संस्कारमथार्हतीति) उत्तरार्धे (श्रुतिप्रयुक्तं न च धर्ममश्नुते न चैव धर्माद् प्रतिषेधन श्रुतौ॥); स्मृकौ. २६ हार्हतीति (हार्हतीति च) उत्तरार्धे (श्रुतिप्रवृत्तं न च धर्ममश्नुते न चास्य धर्मे प्रतिषेधन कृतम्।); शूदि. ६६ स्मृकौवत्.

(४) मभा. ८।२१ पुराणे इत्युक्तम्; गौमि. ८।२४ (=) यः शिवाय हिताय च (यद्धिताय शिवाय च) सततं (सतत); संप्र. १३८ गौमिवत्, बृहस्पतिः. मस्करिभाष्ये क्षान्त्यादिगुणानां लक्षणबोधकानि वचनानि व्यासनाम्ना निर्दिष्टानि, अतः इदमपि वचनं व्यासे निवेशितम्।

(५) मभा. ८।२१; गौमि ८।२४ (=) नाऽऽक्रोशेन्नापि (न क्रोशेन्न च).

(६) मभा. ८।२१; गौमि. ८।२४ (=) कामं वा (कामं च) मोक्षमेव वा (मोक्षमेव च) अनसूयेति सा स्मृता (साऽनसूया स्मृता बुधैः); मुक्ता ७३ उत्तरार्धे (न द्विष्याच्च सदा प्राज्ञः साऽनसूया स्मृता बुधैः।) बृहस्पतिः.

(१) मभा. ८।२१; गौमि. ८।२४ (=) वाक्शौच (वाचिकं).

(२) मभा. ८।२१; गौमि. ८।२४ (=) अनायासः स उच्यते (सोऽनायासः प्रकीर्तितः); मुक्ता. ७३ उत्तरार्धे (तद्वर्जयेद्धर्म्यमपि सोऽनायासः प्रकीर्तितः।) बृहस्पतिः.

(३) मभा ८।२१; गौमि ८।२४ (=).

(४) मभा. ८।२१; गौमि. ८।२४ (=) स्यादकार्पण्य तदुच्यते (स्यात्तदकार्पण्यमुच्यते).

(५) मभा ८।२१; गौमि. ८।२४ (=); संप्र. १३८ बृहस्पतिः.

(६) मभा. ८।२१.

(७) मक. ७६ यज्ञदानानि (यज्ञादीनि); हभा. १८८ वैश्याना + (वृत्तिः) न संपूर्णम्; स्मृमा. १ वैश्यानां गर्भा

## यमः

संस्कारा अष्टाचत्वारिंशत् ब्रह्मलोकफलाः

[1] अष्टाचत्वारिंशदेते संस्कारा विहिता द्विजे ।
य एतैः संस्कृतो विप्रो ब्रह्मलोकं स गच्छति ॥

'गर्भाधानमथो हि पुंसवनकं सीमन्तजातक्रियानामान्नादनचौलकोपनयनं वेदव्रतान्यप्युत । चत्वारि स्नपनं विवाहकरणं पञ्चापि यज्ञा अथो संस्थाः सप्त च सप्त सप्त गदितास्त्रिंशद्दशाप्यत्र तु ॥ एवं चानशनेन वेदपठनं कर्णे जपस्त्वोमिति प्राणोत्क्रान्तिरथौर्ध्वदेहिकमतः संव्यू (वू)- हनं भसनः । अस्थ्नां संचयनं ततः परमपि श्राद्धानि सापिण्डकं चत्वारिंशदिति स्मृतौ निगदिताः संस्कारका ह्यष्ट च ॥' इत्येतौ मामकौ संग्रहश्लोकौ । एकविंशतिः संस्थास्तु— अष्टका पार्वणश्राद्धं श्रावणी आग्रहायणी प्रौष्ठपदी चैत्री आश्वयुजीति सप्त पाकयज्ञसंस्थाः । अग्न्याधेयाग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्यनिरूढपशुबन्धसौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमात्यग्निष्टोमोक्थ्यषोडशीवाजपेयातिरात्राप्तोर्यामेति सप्त सोमसंस्थाः । यमः— 'अष्टाचत्वारिंशदेते संस्कारा विहिता द्विजे । य एतैः संस्कृतो विप्रो ब्रह्मलोकं स गच्छति ॥' इति । मनुः— 'वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥' इति । एतेषु कतिपयसंस्कारा मन्त्रवर्जं शूद्रस्यापि यथायोग्यं भवन्ति । 'श्रौतं द्विजातयः कुर्युः स्मार्तं शूद्रः समाचरेत्' इति पाद्मोक्तेः । विपा. ३७०–३७२ (भागः २)

शूद्राणाममन्त्रकाः संस्काराः

* [2] शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः ॥

---

* व्याख्यानानि 'ब्रह्मक्षत्रिय' इति याज्ञवल्क्यश्लोके (संका. पृ. ४६–४७) द्रष्टव्यानि ।

(विशां वृत्तिर्गर्भा) नामकरणान्न......समानानि (नामकरणनिष्क्रमणान्नप्राशनचौलोपनयनब्रह्मचर्याध्ययनसमावर्तनविवाहसोष्यन्तीयज्ञदानानि); स्मृकौ. २५–२६ ; शूशि. ६८ समानानि (समानि); संप्र. १३४ ; संम. ८० ; शूक. ४८ सीमन्तोन्नयन (सीमन्त); रत्न. १.

(१) विपा. ३७२ (भागः २).

(२) मप. २।१० ; ग्रक. ७३ ; स्मृच. (क.) १४

## मरीचिः

शूद्राणां संस्कारेषु मन्त्रा ब्राह्मणेन पठनीयाः

§ [1] अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥

## आङ्गिराः

संस्काराः पञ्चविंशतिः पावित्र्यस्य श्राद्धादियोग्यतायाश्च कारकाः

[2] स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥
[3] पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः ॥
[4] गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् ॥
[5] चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौ चाऽऽग्रयणमष्टका च यथातथम् ॥

---

§ व्याख्यानं 'नवैताः' इति व्यासवचने (संका. पृ. ५४) 'अयमेव विधिः' इति वराहपुराणवचने च द्रष्टव्यम् ।

(शूद्रस्यैवं विधिः कार्यो विना मन्त्रेण संस्कृतम् ।) पू. : (स.) ३५ पू. ; हभा. १८८ ; स्मृसा. १ ; प्रपा. ४ पू. ; दीक. १।१० उत्तरार्धे (न केनचित्समुत्सृष्टः स्रष्टवांस्तं प्रजापतिः ।) ; गभा. १९४ मनुः ; प्रर. १ पू. ; शूशि. ६७ ; वीमि. १।१० ; संप्र. १३३ ; चम. ३ पू. ; संम. ८ पू. ; सिन्धु. ११७३ ; शूक. ४८ ; संकौ. ११६ ; रत्न. २ ; बाल. १।१० पू. ; संग. ६२० (=) ; संर. ५. पू. ; संदी. ३ (भागः २).

(१) गभा. १९४ ; संप्र. ६०४ (=) विप्रो (विप्रा) गृह्यते (गृह्णते) ; सिन्धु. ११७४ ; रत्न. ३.

(२) प्रपा. ३ ; संप्र. १३५ ; संग. ९ सिद्धि (भूति) ; संर. ४ स्मृतिः.

(३) प्रपा. ३ ; प्रर. १ ; संप्र. १३५ ; संम. ८ योग्याः स्युः (योग्याश्च) ; प्रका. २ ; संग. ८–९ योग्याः स्युः (योग्याश्च) सुयन्त्रिताः (नियोजिताः) वीरमित्रोदये इत्युक्तम् ; संव. ३ (=) ; संर. ४.

(४) प्रपा. ३ ; प्रर. १ ; संप्र. १३५ ; संम. ८ ; प्रका. २ ; संग. ७ वीरमित्रोदये इत्युक्तम् ; संव. ३ (=) ; संर. ३ परम् (तथा).

(५) प्रपा. ३ ; प्रर. १ ; संप्र. १३५ यथातथम् (यथातथा) ; संम. ८ उत्तरार्धे (स्नानोद्वाहौ चाग्रयणमष्टकाश्च यथायथम् ।) ; प्रका. २ ; संग. ७ संमवत् , वीरमित्रोदये इत्युक्तम् संव. ३ (=) ; संर. ३ का च यथातथम् (काश्च यथायथम्).

श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥
[२]संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ॥

भूतिः ऐहिकमामुष्मिकं च फलम् । आदिशब्दात् याजनादावपि । बलिर्विष्णुबलिः । तद्व्रतानां वेदव्रतानाम्। चतुष्टयं महानाम्नीमहाव्रतोपनिषद्गोदानानीति । स्नानं समावर्तनम् । आग्रयणं नवान्नेष्टिः । अष्टकाः हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टमीषु विहितानि श्राद्धानि । यथातथा तिस्रश्चतस्रो वा । श्रावण्यां क्रियमाणं श्रवणाकर्म । एवमाश्वयुज्यां आश्वयुजीकर्म । मार्गशीर्ष्यां प्रत्यवरोहणम् । पार्वणं पर्वणि अमावास्यायां क्रियमाणं पार्वणं श्राद्धम् । उत्सर्गः उत्सर्जनं वेदानाम् । उपाकर्म वेदारम्भः । नित्यशः प्रत्यहं क्रियमाणाः पञ्च महायज्ञाः । एते च संस्काराः सर्ववर्णानां ऐहिकामुष्मिकफलानुकूलत्वेन आवश्यकाः, ब्राह्मणानां तु ब्राह्मण्याभिव्यञ्जकत्वेन विशेषतः ।

संप्र. १३६

ब्राह्मण्यं संस्कारकृतम्

[३]जन्मशारीरविद्याभिराचारेण श्रुतेन च ।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥
[४]चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ॥

(१) प्रपा. ४ ; प्रर. १ ; संप्र. १३६ ; संम. ८ ; प्रका. २ ; संग. ७ वीरमित्रोदये इत्युक्तम्; संव. ३ (=) ; संर. ३ पूर्वार्धे ( श्रावण्यामाश्वयुज्य च मार्गशीर्ष्यं च पार्वणम् । ) नित्यशः ( नित्यका. ).

(२) प्रपा. ४ , प्रर. १ ; संप्र. १३६ ; संम. ८ ; प्रका. २ ; संव. ३ (=) ; संग. ७ वीरमित्रोदये इत्युक्तम्; संर. ४ ह्येते ( एते ).

(३) पमा. २०८, २२१ ( खण्डः २ भागः १ ).

(४) अप. १।१३ पृ. २५ देवलः ; प्रक. ७४ ; हभा. १८८ कै रङ्गैः ( कै रागै ) ; पमा. २२१ ( खण्डः २ भागः १ ) ; प्रपा. ३ ; संल. ८५७ चित्रकर्म ( चित्र कर्म ) ; उत. १३३ संनवद् ; श्रात. ३२३ संनवद् ; संप्र. १३६ ; ३३८ (=) ; मुक्ता. ७२ ; रत्न. २.

## पराशरः

ब्राह्मण्यं संस्कारकृतम्

[१]चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वद्धि संस्कारैर्मन्त्रपूर्वकैः ॥

चित्रकारः प्रथमं पटादौ मषीरेखाभिः सर्वावयवसंपूर्णानि मनुष्यादिरूपाणि लिखति । न च तानि तावता दर्शनीयत्वमापद्यन्ते । पुनस्तान्येव रूपाणि नानाविधवर्णप्रक्षेपेण उन्मीलितानि दर्शनीयतामापद्यन्ते । एवं जातिब्राह्मण्यं शास्त्रीयसंस्कारैरुत्कृष्यते । मन्त्रसंस्कारेण विद्यादयोऽप्युपलक्ष्यन्ते ।

पमा. २२१ ख. २ भा. १

## जातूकर्ण्यः

संस्काराः षोडश, शूद्राणां द्वौ विवाहान्त्यकर्मणी

[२]आधानपुंससीमन्तजातनामान्नचौलकाः ।
मौञ्जी व्रतानि गोदानसमावर्तविवाहकाः ॥
अन्त्यं चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु ।
शूद्राणां चैव भवति विवाहश्चान्त्यकर्म च ॥

शूद्रस्य वैदिककर्मणि नाधिकारः, पूर्ते तु अस्ति

[४]इष्टापूर्तौ द्विजातीनां धर्मौ सामासिकौ मतौ ।
अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके ॥

## बुधः

गर्भाधानादयः पञ्च संस्काराः

[५]गर्भाधानं पुंसवनं सीमन्तोन्नयनं सूतिकागृहसंस्कारः सोष्यन्तीकर्म ॥

(१) पस्मृ. ८।१९ ( ख. ८।२७ ).

(२) शूशि. ६७ पुस ( पुंसवन ) ; संप्र. १३५ ; संदी. १ ( भाग २ ).

(३) शूशि. ६७ ; संप्र. १३४ उत्त. : १३५ ; संदी. १ ( भाग २ ).

(४) अप. १।१० पूर्ते धर्मे न ( पूर्तधर्मेण ) ; शूक. ४३ उत्त., व्यासजातूकर्ण्योक्तिः : २३९ पूर्ते धर्मे ( पूर्तधर्मे ) उत्त.

(५) प्रक. ७८ ; संप्र. १३९.

## आश्वलायनः

पञ्चविंशतिसंस्काराः, तेषां नैमित्तिकवार्षिकमासिकनित्यभेदेन चातुर्विध्यम्

अतः परं द्विजातीनां संस्कृतिर्नियतोच्यते ।
संस्काररहिता ये तु तेषां जन्मनिरर्थकम् ॥
स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति ॥
पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः ॥
गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् ॥
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टका च यथातथम् ॥
श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥
संस्कारा नियतास्त्वेता ब्राह्मणस्य विशेषतः ॥
नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः ।
सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥
मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् ।
महायज्ञाश्च नित्याः स्युः संध्यावदग्निहोत्रवत् ॥
महायज्ञस्याकरणमशुचावात्मदेशयोः ।
पूर्वमेव समुक्त्वा तु न संध्यावदिति स्थितिः ॥

संस्काराणामथैतेषां यथावदिह निर्णयः ।
देशकालानुरूपेण शास्त्रतश्च प्रचक्ष्यते ॥

समुद्वाहावसानकाः विवाहपर्यन्ता इत्यर्थः । पार्वणश्राद्धस्य मासिमासि अमावास्यायां क्रियमाणत्वात् मासिकत्वमुक्तम् । अशक्तानां तदेव वार्षिकं, वर्षेवर्षे क्रियते इति वार्षिकम् । तेन प्रत्यमावास्यं पार्वणश्राद्धकरणाशक्तेन वर्षमध्ये एकवारमेव श्राद्धं कर्तव्यमित्यर्थः सिध्यति । वर्षेवर्षे क्रियमाणा वार्षिकाः ।

संप्र. १३७

संस्काराणां सहकर्तव्यतानिर्णयः

सहैवाभ्युदयश्राद्धं स्वस्तिवाचनमेव च ।
सह कर्माणि कुर्याद्वा पृथग्वा क्रमतश्चरेत् ॥
नामनिष्क्रामणौ कार्यौ सहापदि विजानता ।
तथा पुंसवसीमन्तौ बलिसीमन्तकौ च या ॥
जातकृत्ये त्वतीते तु नाम्ना या सह संचरेत् ।
अकृतानामतीतानां निष्कृतिः स्याद्धि कर्मणाम् ॥
चौलोपनयने चैव समावर्तविवाहकौ ।
सह कर्मत्रयं जातु सामस्वपि समाचरेत् ॥
एतेभ्योऽन्यानि कर्माणि द्वावकार्यौ सहैव तु ॥

## स्मृत्यन्तरम्

संस्कारैर्गर्भादिशुद्धिः

गर्भादेः शुद्धिकरणं वेदपौराणजैः शुभैः ।
मन्त्रैर्विधानविधिना संस्कारः खलु सो मतः ॥
गर्भादेः शुद्धये सम्यक् संस्कारा गदिता ननु ।
यत्र तत्र विविच्याथ कर्तव्या विधिना बुधैः ॥
संस्कारेण विना किञ्चिद्
गर्भादीनां पवित्रता ।
नास्ति नास्तीति लोकेऽस्मिन्
मनुनाऽपि प्रकीर्त्यते ॥

(१) आश्वस्मृ. ११।१ सोच्यते (तोच्यते) ; प्रपा. ३ ; प्रर. १३० ; संर. ४.
(२) आश्वस्मृ. ११।२.
(३) आश्वस्मृ. ११।३ ; प्रर. १३०.
(४) आश्वस्मृ. ११।४ ; प्रर. १३०.
(५) आश्वस्मृ. ११।५ ; प्रर. १३० तद्व्रतानां (व्रतानां च).
(६) आश्वस्मृ. ११।६ ; प्रर. १३०.
(७) आश्वस्मृ. ११।७ ; प्रर. १३० तास्त्वेता (ता ह्येते).
(८) आश्वस्मृ. ११।७, ८ सानकाः (मानिकाः) ; प्रपा. ४ मता (तथैव) ; प्रर. १, १३० ; संप्र. १३६ ; संम. ८ ; प्रका. २ ; संर. ४.
(९) आश्वस्मृ. ११।८, ९ ; प्रपा. ४ यज्ञाश्च (यज्ञास्तु) ; प्रर. १, १३० यज्ञवत् ; संप्र. १३६ यज्ञवत् ; संम. ८ पार्वणं प्रोक्त (पार्वणोक्त) ; प्रका. २ यज्ञवत् ; संर. ४.
(१०) आश्वस्मृ. ११।९, १०.

(१) आश्वस्मृ. ११।१०, ११ ; प्रपा. ४ प्रचक्ष्ये (प्रवक्ष्ये).
(२) मुक्ता. ७।३.
(३) संर. १.
(४) संर. १.

संस्कारेण विना शुद्धिर्जायते न कदाचन ।
नृणां सम्यक् सदाचारः संस्कारः सर्वदा मतः ॥

संस्कारेषु अष्टसु पित्रादीनामधिकारः

अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् ।
पिता कुर्यात्तदन्यो वा तदभावेऽपि तत्क्रमात् ॥

संस्काराणां नित्यत्वात् प्रतिनिधिमप्याह– अष्टाविति ।

संत. ८५७

## मत्स्यपुराणम्

षोडश संस्काराः

जातकर्मादिकाः कुर्यात् क्रियाः षोडश चापराः ॥

: शूद्रस्योपनयनवर्जा गर्भाधानादिविवाहान्ता नव संस्कारा इति जयपालः । * शूक. ४८

## भागवतम्

संस्काराः शुद्धिकारकाः

कालेन स्नानशौचाभ्यां
संस्कारैस्तपसेज्यया ।
शुध्यन्ति दानैः संतुष्ट्या
द्रव्याण्यात्माऽऽत्मविद्यया ॥

श्रीधरस्वामिना स्पष्टीकृतम्– कालेन भूम्यादिः । स्नानेन देहादिः । शौचेन- अमेध्यलिप्तादिः । संस्कारैर्गर्भादिः । तपसा इन्द्रियादिः । इज्यया ब्राह्मणादिः । दानैर्द्रव्याणि । संतुष्ट्या मनः । आत्मा आत्मविद्यया इति । संव. २

## पद्मपुराणम्

संस्कारैः गर्भादीनां शुद्धिः, द्विजानां श्रौतं शूद्राणां स्मार्तं कर्म

संस्कारेण विना राजन् न शुद्धिर्जायते खलु ।
गर्भादीनां तदर्थं हि संस्कारः सर्वदा मतः ॥

संस्कारं च प्रशंसन्ति बुधाः सर्वत्र शोभनम् ।
संस्कारस्तु परं कर्म गर्भादेः शुद्धये नृणाम् ॥
शोधकः पापपुञ्जानां साधनं श्रेयसः परम् ।
दिव्यः कामफलावाप्तिहेतुः सम्यक् सुसंस्कृतः ॥
श्रौतं द्विजातयः कुर्युः स्मार्तं शूद्रः समाचरेत् ॥

## ब्रह्मपुराणम्

विवाह एव शूद्रसंस्कारः, वेदे स्मृतौ च शूद्रानधिकारः

तस्मान्नास्याधिकारोऽस्ति न वेदे न स्मृतावपि ।
विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा ॥

( १ ) मात्रशब्दात् मन्त्राणां व्यावृत्तिः । पूर्वसंस्काराणां वा, तदा च विकल्पः, विहितत्वादपि तेषाम् । अप. १।१०

( २ ) *विवाहमात्रं इत्यनेन अप्राप्तो ( ? प्रवि- )* विवाहविधिः । मात्रशब्दस्तु विहितेतरसंस्कारनिवृत्त्यर्थः । अमन्त्रास्तु अविद्यत्वात् देवतेज्यानिवृत्तयः । § ब्रक. ७४

( ३ ) मात्रशब्देन विहितेतरसंस्कारनिवृत्तिश्च । यमब्रह्मपुराणवचनाभ्यां शूद्रस्य गर्भाधानपुंसवनसीमन्तजातकर्मनामधेयनिष्क्रमणान्नप्राशनचूडाकरणविवाहान्ताः नव संस्काराः विहिताः, ते च *तूष्णीं*, इतरेषां निवृत्तिः । हभा. १८८

( ४ ) ' विवाहमात्रं... ' इति वचनं नेतरसंस्कारनिवर्तकं किन्तु मन्त्रसंबन्धनिषेधपरं, तथैवोक्तेः । दीक. १।१०

---

* शेषं सिन्धुवत् । सिन्धुव्याख्यान तु ' नवैताः कर्णवेधान्ताः ' इति *व्यासवचने* ( संका. पृ. ५४ ) *द्रष्टव्यम्* ।

( १ ) संत. ८५७, ९१२ ; श्रात ३२३.

( २ ) घस्रा. २२१ ; सिन्धु. ११७३ मदनरत्ने इत्युक्तम् ; शूक. ४८ ; रत्न ३ कुर्यात् क्रियाः ( क्रिया. कार्याः ).

( ३ ) संव. २.

( ४ ) संव. ३.

§ अशुद्धोऽयं ग्रन्थः । शुद्धस्तु शूशिव्याख्याने अनूदितस्तत्रैव द्रष्टव्यः ।

( १ ) विपा. ३७२ ( *भाग* २ ).

( २ ) अप. १।१० ; ब्रक. ७४ मात्रसंस्कारं (*मात्र संस्कारं*) ; स्मृच. ( क. ) १४, ( ख. ) ३५ ; हभा. १८८ ; स्मृसा. १ (=) ; स्मृकौ. २७ मात्रसंस्कारं ( मात्र संस्कारः ) ; दीक. १।१० ( विवाहमात्र संस्कारः शूद्रोऽपि लभते सदा ) ; गभा. १९४ मकवत् ; शूशि. ६९ लभतां ( लभते ) ; वीमि. २।१० मात्रसंस्कारं ( मात्र संस्कारः ) ; संप्र. १३४ मकवत् ; सिन्धु. ११७४ ; शूक. ४९ मकवत् ; रत्न. ३ मकवत् ; सस्मृ. ५५ मकवत् ; संदी. ४ ( भागः २ ) (=). स्मृतिसारग्रन्थे एव संपूर्णश्लोकः, अन्यग्रन्थेषु तु केवलमुत्तरार्धमेव ।

(५) अत्र सदसच्छूद्रविषयत्वेन व्यवस्था। सच्छूद्रस्य द्वादश। असच्छूद्रस्य विवाहमात्रम्। एते च तूष्णीं कार्याः। गभा. १९४

(६) मात्रशब्देन इतरसंस्काराणां निवृत्तिरुक्ता। तथा च व्याख्यातं कल्पतरौ— मात्रशब्दस्तु विवाहेतरसंस्कारनिवृत्त्यर्थः। न च मात्रपदात् मन्त्रनिवृत्तिः, अविद्यत्वादेव शूद्रस्य मन्त्राप्रसङ्गादिति। एवं च नामकरणकर्णवेधनिष्क्रमणान्नप्राशनानां वैकल्पिकमनुष्ठानमिति गम्यते। न चैवं स्मृतिबाधप्रसङ्गः, पाक्षिकनामकरणादिविधानेनापि स्मृतेश्चरितार्थत्वात्। शूशि. ६९

(७) मात्रपदेन उपनयनस्य वैदिकमन्त्रस्य वा व्यवच्छेदः, न गर्भाधानादीनामपीति मन्तव्यम्। वीमि. १।१०

(८) एवं च 'विवाहमात्रं ...' इति ब्रह्मपुराणवाक्यस्य 'न शूद्रे ...' इति मनुवाक्यस्य च तत्तद्वाक्यविहितेतरसंस्कारव्यावर्तकत्वेन न कोऽपि विरोधः। संप्र. १३४

(९) अत्र सदसच्छूद्रगोचरत्वेन देशभेदाद्वा व्यवस्था। सिन्धु. ११७४

## वराहपुराणम्

### शूद्रस्य ब्राह्मणद्वारा मन्त्रपाठः

[1]अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥

अत्राऽऽह गौडः— मन्त्रपाठस्य द्वयं कृत्यं, अदृष्टसिद्धिः अनुष्ठेयार्थप्रकाशनरूपदृष्टसिद्धिश्च। तत्र सामान्यप्राप्तनमस्काररूपमन्त्रोच्चारणेन अदृष्टं तावत्सिद्धम्। अनुष्ठेयार्थप्रकाशनार्थं तु ब्राह्मणद्वारा मन्त्रं पाठयेत्। यद्यपि शूद्रं प्रति श्रवणं श्रावणं च निषिद्धं तथापि विशेषवचनात् न तन्निषिध्यते। तथा च एकोद्दिष्टमभिधाय वराहपुराणे—'अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥' इति वचनात्। मन्त्रेण गृह्यते संबध्यते पाठकत्वेनेत्यर्थः। अमन्त्रस्येति विशेषणोपादानं यावदमन्त्रव्याप्त्यर्थम्। तेन स्त्रिया अपि क्रियमाणे कर्मणि ब्राह्मणो मन्त्रं पठेत्, तुल्यन्यायत्वात्। तस्य च अर्थप्रकाशनरूपदृष्टस्य अनुक्रमध्यानादितोऽपि संभवे ब्राह्मणद्वारकमन्त्रपाठोऽपि न आवश्यकः, तस्य दृष्टमात्रप्रयोजनकत्वात्। 'अमन्त्रस्य च (?तु) शूद्रस्य' इति चेयं परिभाषा। न च परिभाषा प्रकरणेन नियम्यते। तेन एकोद्दिष्टादन्यत्रापि स्नानदानादौ विप्रेण मन्त्रः पठितव्यः।

मदनपालस्तदन्यथा व्यचष्टे— यत्र शाखाविशेषे श्राद्धे क्षणदानाद्यनन्तरं निमन्त्रितब्राह्मणस्य मन्त्रपाठो विहितः तत्र शूद्रकर्तृकश्राद्धेऽपि निमन्त्रितेन मन्त्रपाठः कार्य इत्येषः 'विप्रो मन्त्रेण गृह्यते' इत्यस्यार्थ इति।

कल्पतरुकारस्तु— शूद्राणां वैदिकमन्त्रे एव अनधिकारः, न पौराणेष्वपि। तेन पौराणधर्माणां स्त्रीशूद्रान् प्रति विशिष्य विधानात् तेषां च मन्त्रविशिष्टतयैवोत्पन्नत्वात् अगत्या कर्माङ्गभूतपौराणमन्त्रपाठोऽप्यस्तीत्याह। तथैव मध्यदेशाचार इति। शूशि. ४९,५०

## पुराणसमुच्चयः

### संस्कारमाहात्म्यम्

[1]अरिष्टदुःखजालादि तथा दुःशकुनादिकम्।
अमाङ्गल्यादिकं यच्च संस्कारैर्नश्यति ध्रुवम्॥
अशुभं नश्यते सम्यक् शुभं हि प्रतिपद्यते।
कल्याणनिधिराख्यातः संकारस्तेन कर्मसु॥

## स्मृतिसंग्रहः

### संस्काराणां निषेकादिविवाहान्तानां पृथक् फलानि

[2]निषेकाद्बैजिकं चैनो गार्भिकं चापमृज्यते।
क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम्॥
गर्भे भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम्।
निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः॥

(१) शूशि. ४९; संम. ८२ गृह्यते (गृह्यते) उत्त.; शूक. १९ : ४९ उत्त. : ५३ मार्कण्डेयेरित्युक्तम्; वाल. १।७७ उत्त.

(१) संव. २.
(२) संर. ६.

गर्भाम्बुपानजो दोषो जातात्सर्वोऽपि नश्यति ।
आयुर्वर्चोऽभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ॥
नामकर्मफलं त्वेतत्समुद्दिष्टं मनीषिभिः ।
सूर्यावलोकनादायुरभिवृद्धिर्भवेद् ध्रुवा ॥
निष्क्रमादायुःश्रीवृद्धिरप्युद्दिष्टा मनीषिभिः ।
अन्नाशनान्मातृगर्भमलाशादपि शुध्यति ॥
बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम् ।
उपनीतेः फलं त्वेतद्द्विजतासिद्धिपूर्विका ॥
वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरिता ।
देवपित्रृणापगमो विवाहस्य फलं स्मृतम् ॥

पुंसूतिः पुंसवनम् । निषेको गर्भाधानम् । जातात् जातकर्मानुष्ठानात् । अपिशब्दस्य दोषशब्देनान्वयः । व्यवहृतिर्व्यवहारः, तस्य सिद्धिरित्यर्थः । यत्र यत्र चापी श्रूयेते ( ? चापिः श्रूयते ) तत्र बैजिकगार्भिकैनोविनाशोऽपि फल ज्ञेयम् ।

संर. ६

## स्मृत्यर्थसारः

षोडश संस्काराः, तत्कालः, तत्फलानि, स्त्रीशूद्रसंबन्धिनी संस्कारव्यवस्था, संस्कारकालातिपाते प्रायश्चित्तम् , उपनयनात्प्राक् कामचारः इत्यादेर्विचारः

[1]विप्रक्षत्रियविट्शूद्राश्चत्वारो वर्णाः । तत्र विप्रक्षत्रियविशो द्विजास्त्रिजाश्च । तेषां मातुः प्रथमं जन्म । उपनयनात् द्वितीयं जन्म । तृतीयं यज्ञदीक्षायामुत्तमं जन्म । स्त्रीणां विवाह उपनयनस्थाने । द्विजानां गर्भाधानादिकाः प्रेतेष्ट्यन्ताः *क्रिया मन्त्रतः कार्याः ।*

तत्र संस्काराः– गर्भाधानपुंसवनानवलोभनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलोपनयनसावित्रीव्रतवेदमहाव्रतारण्यव्रतानि गोदानिकस्नातकविवाहाश्चेत्यावश्यकाः षोडश प्रधानाः संस्काराः । तत्रतौं गर्भाधानं कार्यम् । रजःप्रभृतिषोडशरात्रान्त ऋतुकालः । गर्भचलनात्पुरा तृतीये चतुर्थे मासे वा पुंसवनं कार्यम् । अनवलोभनं चतुर्थे । षष्ठेऽष्टमे वा सीमन्तोन्नयनम् । जाते पुत्रे पिता स्नात्वा रात्रौ संध्ययोर्ग्रहणे वा वृद्धिश्राद्धं हिरण्येन कृत्वा जातकर्मदानादि दुरितक्षयाय प्रजापतिप्रीत्यै च कुर्यात् । जाताशौचान्तर्मध्ये च जाते जातकर्मादि कुर्यात् । मृताशौचमध्ये जाते तु तदा अशौचान्ते वा कुर्यात् । नामकरणं जातकर्मानन्तरं वा द्वादशेऽह्नि वाऽन्यस्मिन् शुभेऽह्नि वा कुर्यात् । निष्क्रमणं चन्द्रदर्शनं सूर्यदर्शनं देवनमस्कारं वा द्वादशेऽहनि तृतीये चतुर्थे मासे वा कुर्यात् । अन्नप्राशनं षष्ठेऽष्टमे वा दन्ते जाते कार्यम् । चौलं प्रथमे वर्षे तृतीये वा कार्यं बहुमतत्वात् यथाकुलधर्मं वा । एते संस्कारा बीजगर्भस्य दुरितक्षयाय यथास्वाचारं कार्याः । स्त्रीणा*महोमकास्तूष्णीं स्युः । विवाहस्तु समन्त्रकः ।* एते कालातिक्रमे व्याहृतिहोमं कृत्वा कार्याः । एतेष्वेकैकलोपे पादकृच्छ्रः कार्यः । चौले त्वर्धकृच्छ्रः । *मत्या लोपेऽनापदि च द्विगुणः ।* उपनयनात् प्राक् बाला उच्छिष्टादावप्रयता न स्युः । कामचारकामवाद[काम]भक्षाः स्युर्महापातकवर्जम् । तेषां चण्डालादिस्पर्शे सचैलं स्नानम् । *प्रागन्नप्राशनादभ्युक्षणम् ।* प्राक् चौलादाचमनम् । पश्चात्स्नानमित्येके । पित्रोः स्वधानिनयनादृते मन्त्रान् न ब्रूयुः ॥

( १ ) स्मृसार. ३ ; मुक्ता. ८४ ( एते संस्कारा बीजगर्भदोषापनुत्त्ये यथास्वाचारं कार्याः स्त्रीणां तूष्णीं स्युर्विवाहस्तु समन्त्रकः । स्वकालातिक्रमे व्याहृतिहोमपूर्वं कार्याः । एतेषामेकैकलोपे पादकृच्छ्रं मत्या लोपे द्विगुणः । ) इत्यधिकम्.

### धर्मप्रवृत्तिः

षोडश संस्काराः

[1]गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नाम निष्क्रमणं चान्नप्राशनं चौलकर्म च ॥
तथोपनयनं चैव महानाम्नी महाव्रतम् ।
उपनिषच्च गोदानं समावर्तनकं ततः ॥

( १ ) धप्र. ५७.

विवाहोऽन्त्येष्टिकं चेति
संस्काराः षोडशैव तु ।
एते वै मुनिभिः प्रोक्ताः
कर्तव्या हि द्विजन्मनाम् ॥

## शार्ङ्गधरः

द्विजशूद्रमिश्रजातीनां प्रातिस्विकानां संस्काराणां संख्या

[1]द्विजानां षोडशैव स्युः शूद्राणां द्वादशैव हि ।
पञ्चैव मिश्रजातीनां संस्काराः कुलधर्मतः ॥
[2]वेदव्रतोपनयनमहानाम्नीमहाव्रतम् ।
विना द्वादश शूद्राणां संस्कारा नाममन्त्रतः ॥

(१) गभा. १९४ ; सिन्धु. ११७४ ; शूक. ४८ ; रत्न. ३.
(२) गभा. १९४ नयन (नयनं) नाम्नीमहा (नाम्नी महा) ; सिन्धु. ११७४ ; शूक. ४८ गभावत् ; रत्न. ३.

## रेणुकारिका

षोडश संस्काराः, तेषां अधिकारी फलं च

गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ।
जातकर्माभिधानं च निष्क्रमः प्राशनं क्रमात् ॥
चूडोपनयनं वेदव्रतानां च चतुष्टयम् ।
गोदानं मेखलोन्मोको विवाहः षोडश क्रियाः ॥
त्रयोदशानामाद्यानामधिकारी पिता भवेत् ।
इतरेषां त्रयाणां स्यादधिकारी स्वयं सुतः ॥
गर्भाधानादिसंस्कारैर्विवाहान्तैः समानताम् ।
गच्छेत्सायुज्यतां विप्रो मुनीनां च सलोकताम् ॥
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

(१) रेका. २९-३२ पृ. ७३.

# विवाहः

## विवाहविधिः

### वेदाः

विवाहविधिलिङ्गम्- सतानकरपुत्रप्रार्थना,
प्रजामृतत्वं च

**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥**

नः अस्माकं सूनुः पुत्रः तनयः संतानस्य विस्तारयिता विजावा पुत्रपौत्रादिरूपेण स्वयं विजायते इति विजावा स्यात् । हे अग्ने सा प्रसिद्धा ते सुमतिः त्वदीयानुग्रहबुद्धिः अस्मे अस्मासु भूतु भवतु । ऋसा.

**प्रजाभिरग्ने अमृतत्वमश्याम् ॥**

प्रजाभिस्त्वद्दत्ताभिर्हे अग्ने अहममृतत्वं संतत्यविच्छेदलक्षणं अश्यां प्राप्नुयाम् । ऋसा.

लक्षणयुक्तो वरो भवेत् इति सूचयन्ती
सूर्यया वरणीयस्य सोमस्य प्रशंसा

**सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।**
**ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥**

सप्तमेऽनुवाके षट् सूक्तानि । तत्र ' सत्येन ' इति सप्तचत्वारिंशदृचं प्रथमं सूक्तं सवितृसुतायाः सूर्याया आर्षम् । ' नवोनवः ' इति तिस्र. ' अनृक्षराः ' इति द्वे ' गृभ्णामि ' इति द्वे ' यदश्विना पृच्छमानौ ' इत्येका ' पूषा त्वेतो नयतु ' इत्येका ' अघोरचक्षुः ' इति चैवमेता दशर्चस्त्रिष्टुभः । ' तृष्टमेतत् ' इत्येषोरोबृहत्यष्टकद्वादशाद्यष्टकवती । ' पूर्वापरं चरतः ' ' इह प्रियं प्रजया ' 'आ नः प्रजां जनयतु' इत्येतास्तिस्रो जगत्यः । शिष्टास्त्रयस्त्रिंशदनुष्टुभः । आदितः पञ्चानामृचां सोमो देवता । तत एकादशभिः सूर्या स्वविवाहं स्तुतवती । अतस्तत्र योऽर्थः प्रतिपाद्यते स एव देवतात्वेन विज्ञेयः । ' या तेनोच्यते सा देवता ' इति न्यायात् । सप्तदश्याः देवा देवता । अष्टादश्याः सोमार्कौ । एकोनविंश्याश्चन्द्रमाः । ' सुकिंशुकम् ' इत्याद्या नवर्चो विवाहमन्त्रा आशिषः प्रतिपादकाः । अतस्तत्र तत्र प्रतिपाद्योऽर्थो देवता । ' परा देहि ' , ' अश्रीरा तनूः ' इति द्वे वध्वा विवाहकाले परिहितस्य वाससः स्पर्शनिन्दिके त्यौ । ' ये वध्वश्चन्द्रम् ' इति दम्पत्योः क्षयरोगस्य नाशिनी । अतस्तद्देवताका । परिशिष्टाना षोडशानां सूर्या देवता । तथा चानुक्रान्तम्- ' सत्येन सप्तचत्वारिंशत् ' सर्वमनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः ।

सत्येन ब्रह्मणानन्तात्मना । ब्रह्मा खलु देवाना मध्ये सत्यभूतः । तेनाधःस्थितेन भूमिः उत्तभिता उपरि स्तम्भिता । यथाधो न पतेत्तथा कृता । यद्वा । सत्येन अनृतप्रतियोगिना धर्मेण भूमिरुत्तभिता उद्धृता फलिता भवतीत्यर्थः । असति सत्ये भूम्यां सस्यादयो न फलन्ति । तथा सूर्येण देवेन द्यौः उत्तभिता । सूर्यो हि द्युस्थानत्वाद्दिवं दधार । ऋतेन यज्ञेन आदित्याः अदितेः पुत्राः देवाः तिष्ठन्ति । यज्ञे यजमानदत्तेन हविराहुत्या देवा उपजीवन्ति । दिवि द्युलोके सोमः देवानामाप्यायनकारी वल्लीरूपो देवतारूपश्च अधि श्रितः अधितिष्ठति । इति स्वपतिं सोमं सूर्या स्तौति । ऋसा.

**सोमेनादित्या बलिनः सोमेन पृथिवी मही ।**
**अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥**

सोमेन आदित्याः अदितेः पुत्रा इन्द्रादयः बलिनः भवन्ति । ऐन्द्रवायवादिग्रहपरिग्रहादिति भावः । तथा

---

( १ ) ऋसं. १।१।२३ ; तैसं. ७।२।४।३ ; काठसं. १६।११ ( १३० ) ; मैसं. २।७।११ ( १३७ ) ; शुसं. १२।५१ ; शब्रा. ७।१।१।२७.

( २ ) ऋसं. ५।४।१० ; तैसं. १।४।४६।१ ; वस्मृ. १७।४ ; बौध. २।६।११।३६.

( ३ ) ऋसं. १०।८५।१ ; असं. १४।१।१.

( १ ) ऋसं १०।८५।२ ; असं. १४।१।२.

सोमेन आहुत्यात्मना अग्नौ हुतेन पृथिवी भूमिः मही महती भवति । आहुत्या वृष्टिद्वारेण सस्यादिसंपत्तेः । अथो अपि च अयं सोमः नक्षत्राणामेषाम् । न क्षं नायन्ते इति नक्षत्राः ग्रहचमसादयः । तेषामेषां उपस्थे सोमः रसात्मकः आहितः । यद्वा । प्रसिद्धानामेव नक्षत्राणामुपस्थे उपस्थाने द्युलोके सोम आहितः । 'तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत्' ( तैब्रा. ३।२।१।१ ) इत्यादिश्रुतेः । देवतारूपसोमपक्षे । सोमेन आदित्या देवा बलिनो बलवन्तो भवन्ति, तस्यैकैककलास्वादनात् । 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः' इत्यादिस्मृतेः । सोमेन पृथिवी मही । अमृतसेचनेन ओषध्याद्यभिवृद्ध्या पृथिव्या बलवत्त्वम् । चन्द्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा ।

ऋसा.

सोमं मन्यते पपिवान् यत्संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥

तं सोमं मन्यते । कः, यः पपिवान् । वर्धनकामार्थं चिकित्साद्यर्थं पीतः सोमो येन । यत् यमित्यर्थः । यं सोमं ओषधिं वल्लीरूपं संपिंषन्ति सामर्थ्याद्रासायनिकाः । न च स साक्षात्सोमः । तर्हि कः । उच्यते । सोमं हि तं मन्यन्ते यं ब्रह्माणः । यत् ब्रह्मशब्दो ब्राह्मणशब्दपर्यायोऽस्ति । 'कुतो नु चरसि ब्रह्मन्' 'तस्मै मा ब्रूया निधिपाय ब्रह्मन्' इत्यादिप्रयोगात् । ब्राह्मणा इत्यर्थः । ते च ऋत्विजो यजमानश्च यागसाधनभूतं संस्कर्तुं विदुः जानन्ति तस्य अंशम् । यद्वा । कर्मणि षष्ठी । तं सोमं कश्चन न अश्नाति । कश्चिदपि अयज्वा इति शेषः । यज्वा एनं भक्षयितुमर्हति, नान्य इत्यर्थः । एवमोषधिपक्षे । अथ चन्द्रपक्षे उच्यते । तं सोमं मन्यते पपिवान् पीतवान् यजमानः यद्यमोषधिरूपं संपिंषन्ति अभिषवग्रावभिरध्वर्य्वादयो यजमानश्च । न च स सोमः । कस्तर्हि । यं ब्रह्माणो ब्राह्मणा अभिज्ञा दैवज्ञा विदुः कथयन्ति चन्द्रमसं न तस्याश्नाति कश्चनादेवो देवेभ्योऽन्यो मनुष्यादिः । देवा अग्न्यादयो रश्मयो वा । यज्ञार्हसोमस्यासोमत्वं न निन्दायै अपि तु इतरस्य स्तुत्यै इति मन्तव्यम् । 'अपशवो वा अन्ये गोअश्वेभ्यः' ( तैसं. ५।२।९।४ ) इत्यादिवत् । एवमत्र सोम्या उभयथा योज्याः ।

ऋसा.

आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।
ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ॥

हे सोम आच्छद्विधानैः । आच्छादयन्ति विधानानि येषां विद्यन्ते ते आच्छद्विधानाः । तैः गुपितः । तथा बार्हतैः गुपितः । स्वानभ्राजाङ्घार्यादिभिः सप्तभिः सोमपालैः रक्षितः त्वम् । 'एते वा अमुष्मिन् लोके सोममरक्षन्' ( तैसं. ६।१।१०।५ ) इति ब्राह्मणम् । ग्राव्णामिच्छृण्वन् अभिषवग्राव्णां ध्वनिं शृण्वन्नेव तिष्ठसि । ते त्वां पार्थिवः पार्थिवो जनः न अश्नाति । न हि द्युस्थश्चन्द्ररूपः सोमोऽन्यैः पानयोग्यो भवति । 'चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति' ( शब्रा. ११।१।५।३ ) इति वाजसनेयकम् ।

ऋसा.

यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥

हे देव सोम यत् यदा त्वा त्वां प्रपिबन्ति ओषधिरूपं त्रिष्वपि सवनेषु ततः अनन्तरमेव पुनः आ प्यायसे । 'आ प्यायस्व सम्' (ऋसं. १।९१।१६) इति प्रातःसवने 'सं ते पयांसि' ( ऋसं. १।९१।१८ ) इत्युत्तरयोः सवनयोराप्यायसे । किञ्च वायुः तव सोमस्य रक्षिता । यथा न शुष्यति तथा । वायुः शोषकः प्रसिद्धो लोके । किंच मासः । 'मसी परिमाणे' । मस्यते परिमीयते इति मासः सोमः । स च समानां संवत्सराणां आकृतिः आकर्ता व्यवच्छेदको भवति । संवत्सरे संवत्सरे वसन्तादिकालेष्वनुष्ठीयमानत्वात् 'वसन्ते वसन्ते ज्योतिषा यजेत' इति श्रुतेः । यद्वा । सोमाधारवनस्पतिविकारमहद्द्वारेण वायुः सोमरसस्य रक्षिता भवति । 'वायुगोपा वनस्पतयः' इति श्रुतेः । एवं वल्लीरूपसोमपक्षे योजना । चन्द्रपक्षे तु । हे देव सोम यत् यदा त्वा त्वा प्रपिबन्ति

(१) ऋसं. १०।८५।३ ; असं. १४।१।३ ; गोब्रा. १।२।९ ; नि. ११।४.

(१) ऋसं. १०।८५।४ ; असं. १४।१।५.

(२) ऋसं. १०।८५।५ ; असं. १४।१।४ देव ( सोम ) ; नि. ११।५.

छदिः उपर्यपिधानं आसीत् । शुक्रौ दीप्तौ सूर्याचन्द्रमसौ अनड्वाहौ रथस्य वोढारौ आस्तां अभवताम् । यत् यदा सूर्या गृहं सोमं अयात् अगात् । ऋसा.

(१)ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः ।
श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥

हे सूर्ये देवि ते तव ऋक्सामाभ्यां अभिधानी-स्थानाभ्यां अभिहितौ गावौ गोस्थानीयौ सूर्याचन्द्रमसौ सामनौ सामानौ सन्तौ इतः गच्छतः । अनोवाहौ पत्युर्गृहं प्रति गच्छतः । ते तव श्रोत्रम् । श्रोत्रे इत्यर्थः । वरस्य गुणग्राहिणी श्रोत्रे एव चक्रे आस्ताम् । मनोरूपस्य रथस्य श्रोत्रे चक्रे अभवतामित्यर्थः । दिवि पन्थाश्चराचरः चलाचलः अत्यन्तं गमनसाधनभूतो मार्गोऽभूत् । रथ-संचारप्रदेशो द्युलोक आसीत् । ऋसा.

(२)शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं सूर्यारोहत्प्रयती पतिम् ॥

यात्याः गच्छन्त्याः ते तव अनसः चक्रे चङ्क्रमण-शीले रथाङ्गे शुची श्रोत्रे आस्ताम् । व्यानः तव व्यानो वायुः अक्षः । उभयरथचक्रच्छिद्रगामिनी या काष्ठा सा च रथस्य सर्वं भारं वहति । सोऽक्षो व्यानोऽभूत् । मन-स्मयं मनोमयं अनः शकटं सूर्या पतिं सोमं प्रति प्रयती प्रकर्षेण गच्छन्ती आरोहत् आरूढवती । पतिं प्रति जिगमिषोर्मनोरूपस्य रथस्य पत्युर्गुणश्राविणी श्रोत्रे एव चक्रे अभूतां व्यानो धारको वायुश्चेष्टकोऽक्षोऽभूदित्यर्थः । ऋसा.

(३)सूर्याया वहतुः प्रागात्सविता यमवासृजत् ।
अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ॥

सोमाय प्रदित्सितायाः सूर्याया वहतुः । कन्याप्रियार्थं दातव्यो गवादिपदार्थो वहतुः । स च प्रागात् तस्या अपि पूर्वमगच्छत् । यं वहतुं सविता अस्याः पिता अवासृजत् अवसृष्टवान् । प्रादादित्यर्थः । कदा साऽगच्छत् कदा वहतुरित्युभयोः काल उच्यते । अघासु मघास्वित्यर्थः । मघानक्षत्रेषु गावः सवित्रा दत्ता गावः सोमगृहं प्रति हन्यन्ते दण्डैस्ताड्यन्ते प्रेरणार्थम् । अर्जुन्योः फल्गुन्यो-रित्यर्थः । तयोर्नक्षत्रयोः सवितुः सकाशात् परि सोमगृहं प्रति उह्यते नीयते रथेन । ऋसा.

(१)यदश्विना पृच्छमानावयातं
त्रिचक्रेण वहतुं सूर्यायाः ।
विश्वे देवा अनु तद्वामजानन्
पुत्रः पितरावव‍ृणीत पूषा ॥

हे अश्विना अश्विनौ यत् यदा पृच्छमानौ सवितारं प्रष्टुं अयातं अगच्छतम् । केन साधनेनायातं तदुच्यते । त्रिचक्रेण चक्रत्रययुक्तेन रथेन । किं पृच्छमानौ । सूर्यायाः वहतुम् । विवाहमित्यर्थः । तत् तदानीं वां युवां सवितारं प्रति गच्छन्तौ विश्वे सर्वे देवाः अनु अजानन् अनुज्ञातवन्तः । तथा पितरौ पुत्रः अश्विनोः पुत्रः पूषा अवृणीत वृतवान् । ऋसा.

(२)यदयातं शुभस्पती वरेयं सूर्यामुप ।
क्वैकं चक्रं वामासीत्क्व देष्ट्राय तस्थथुः ॥

हे शुभस्पती उदकस्य स्वामिनौ यत् यौ अयातं अगच्छतम् । कं प्रति । वरेयं वरणीयायाः सूर्यायाः संबन्धिनं वरैर्याचितव्यं वा । सवितारमित्यर्थः । किमर्थम् । सूर्यामुप गन्तुम् । वां भवतोः संप्रति दृश्यमानमिदमेकं चक्रं क्व आसीत् पुरा । क्व वां युवां देष्ट्राय दानाय प्रवृत्तौ तस्थथुः इत्यश्विनोर्निवासं पृच्छति । ऋसा.

(३)द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः ।
अथैकं चक्रं यद्गुहा तदद्धातय इद्विदुः ॥

अथ स्वयमेव स्वात्मानं प्रति सूर्या वदति । हे सूर्ये ते तव द्वे चक्रे प्रज्ञाते पुरा दृष्टे द्वे एव चन्द्रसूर्यात्मके ऋतुथा ऋतुषु निनिर्दिष्टे चक्रे ब्रह्माणः ब्राह्मणा विदुः । अथैकं चक्रं तृतीयं संवत्सरात्मकं गुहा गुहायां निहितं

---

(१) ऋसं. १०।८५।११ ; असं. १४।१।११ नाविनः (नाविनाम्).

(२) ऋसं. १०।८५।१२ ; असं. १४।१।१२.

(३) ऋसं. १०।८५।१३ ; असं. १४।१।१३ उत्तरार्धे (मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते ।).

(१) ऋसं. १०।८५।१४ ; असं. १४।१।१४,१५ रावद् (रमद्).

(२) ऋसं. १०।८५।१५ ; असं. १४।१।१४,१५.

(३) ऋसं. १०।८५।१६ ; असं. १४।१।१६.

यत् अस्ति तदद्धातय इत्। एतन्मेधाविनाममुं पठितम् ( नि. ३।१५।२१ )। मेधाविन एव विदुः जानन्ति। ऋसा.

सूर्यायै देवेभ्यो मित्राय वरुणाय च।
ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः॥

सूर्यायै सूर्यस्य पत्न्यै देवेभ्यः अग्न्यादिभ्यः मित्राय वरुणाय च ये च भूतस्य भूतजातस्य प्रचेतसः सुमतयोऽभिमतप्रदा भवन्ति तेभ्यः सर्वेभ्य इदं नमः नमस्कारं अकरं करोमि। ऋसा.

पूर्वापरं चरतो माययैतौ
शिशू क्रीळन्तौ परि यातो अध्वरम्।
विश्वान्यन्यो भुवनाभिचष्ट
ऋतूँरन्यो विदधज्जायते पुनः॥

कश्चित् पूर्वं गच्छति सूर्यः। अन्यस्तमनुचरति चन्द्रमाः। एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेन एतौ आदित्यचन्द्रौ चरतः गच्छतः दिवि। तौ शिशू। शिशुवद्भ्रमणाज्जायमानत्वाद्वा शिशू इत्युच्येते। शिशू सन्तौ क्रीळन्तौ अन्तरिक्षे विहरन्तौ अध्वरं परि यातः यज्ञं प्रतिगच्छतः। तयोः अन्यः आदित्यः विश्वानि भुवना भुवनानि अभिचष्टे अभिपश्यति। ऋतून् वसन्तादीन् *अन्यः चन्द्रमाः विदधत्* कुर्वन् मासानर्धमासांश्च कुर्वन् पुनः जायते। यद्यप्युभयोरपि पुनर्जनिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेरुदयो नाभिप्रेतः। चन्द्रस्य तु ह्रासवृद्धिसद्भावात् पुनःपुनर्जायते इत्युक्तिर्युक्ता। 'चन्द्रमा वै जायते पुनः' ( तैब्रा. १।९।५।४ ) इत्यादिश्रुतेः। ऋसा.

नवोनवो भवति जायमानो-
ऽह्नां केतुरुषसामेत्यग्रम्।
भागं देवेभ्यो वि दधात्यायन्
प्र चन्द्रमास्तिरते दीर्घमायुः॥

अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चान्द्रमसीष्टिः। तत्र 'नवोनवः' इत्येषा याज्या। सूत्रितं च– 'नवोनवो भवति जायमानस्तरणिर्विश्वदर्शतः।' ( आश्रौ. ९।८ ) इति। अयं चन्द्रमा जायमानः प्रतिदिनं जायमानः एकै*ककलाधिक्येनोत्पद्यमानः सन् नवोनवो भवति प्रतिदिनं* नूतन एव भवति। एतत् पूर्वपक्षाद्यभिप्रायम्। तथा अह्नां दिवसानां केतुः प्रज्ञापकः, प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात्। तादृशश्चन्द्रमा उषसां प्रभातीनामग्रं एति। एतत् *कृष्णपक्षान्ताभिप्रायम्*। केचन एतं पादं आदित्यदैवत्यमाहुः। तस्मिन् पक्षेऽह्नां केतुरुषसामग्रगतिश्च प्रसिद्धे। देवेभ्यः भागं हविर्भागं वि दधाति करोति उभयपक्षान्ते। किं कुर्वन्। आयन् *प्रतिदिनं* ह्रासवृद्ध्या पक्षान्तमभिगच्छन्। एतदर्धमासाभिप्रायम्। चन्द्रमाः उक्तलक्षणो देवः दीर्घमायुः तिरते वर्धयति। ऋसा.

सुकिंशुकं शल्मलिं विश्वरूपं
हिरण्यवर्णं सुवृतं सुचक्रम्।
आ रोह सूर्ये अमृतस्य लोकं
स्योनं पत्ये वहतुं कृणुष्व॥

सुकिंशुकं शोभनकिंशुकवृक्षनिर्मितं तथा शल्मलिं शल्मलिवृक्षनिर्मितं विश्वरूपं नानारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालङ्कारयुक्तं वा सुवृतं सुष्ठुवर्तनं सुचक्रं शोभनचक्रोपेतं रथं हे सूर्ये आ रोह। *अमृतस्य लोकं* स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहनमात्मनः प्रापणं कृणुष्व कुरुष्व। अत्र निरुक्तं (१२।८)द्रष्टव्यम्। ऋसा.

विवाहे मन्त्रे गन्धर्वदेवताकन्याभाषः

उदीर्ष्वातः पतिवती ह्येषा
विश्वावसुं नमसा गीर्भिरीळे।
अन्यामिच्छ पितृषदं व्यक्तां
स ते भागो जनुषा तस्य विद्धि॥

---

(१) ऋसं. १०।८५।१७; असं. १४।२।४६.
(२) ऋसं. १०।८५।१८; असं. ७।८१।१, १४।१।२३; मैसं. ४।१२।२; तैब्रा. २।७।१२।२, २।८।९।३.
(३) ऋसं. १०।८५।१९; असं. ७।८१।२, १४।१।२४; तैसं. २।३।५।३; मैसं. ४।१२।२; काठसं. १०।१२; तैब्रा. ३।१।१।११; आश्रौ. ९।८।३; हिगृ. २।१९।१; बौध. ३।८।१०.

(१) ऋसं. १०।८५।२०; असं. १४।१।६१.
(२) ऋसं. १०।८५।२१; पारगृ. १।८।१०; शाश्रौ. १६।१३।१२; शागृ. १।१९।१.

आभिर्नृणां विवाहः स्तूयते । हे विश्वावसो अतः स्थानात् कन्यासमीपात् उदीर्ष्व उत्तिष्ठ । यतः एषा कन्या पतिवती हि संजाता, अत उदीर्ष्वेति वा अतःशब्दो योज्यः । विश्वावसुं एतन्नामानं गन्धर्वं नमसा नमस्कारेण गीर्भिः स्तुतिभिश्च ईळे स्तौमि । तर्ह्येनां विहाय कां स्वीकरोमीति यदि ब्रूषे तर्ह्यन्यां पितृषदं पितृकुले स्थितां व्यक्तां अनूढेति परिस्फुटां विगताञ्जनां वा । स्तनोद्गमादिराहित्येनाप्रौढामित्यर्थः । सः तादृशः पदार्थः ते तव भागः कल्पितः । तस्य तं भागं विद्धि जानीहि जनुषा जन्मना । लभस्वेत्यर्थः । ऋसा.

उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।
अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज ॥

अतः अस्माच्छयनाद्धे विश्वावसो कन्यास्वामिन् गन्धर्व उदीर्ष्व उद्गच्छ । 'विश्वावसुर्नाम गन्धर्वः कन्यानामधिपतिर्यतः । लभामि तेन कन्याम्' इति हि मन्त्रः । तादृश देव त्वां नमसा नमस्कारेण इळामहे स्तुमः । स त्वं अन्यां प्रफर्व्यं बृहज्जितम्बां कन्यामिच्छ । जायां मां पत्या सह पुनः सं सृज । ऋसा.

सुमिथुनत्वं जायापत्योः प्रार्थ्यते

अनृक्षरा ऋजवः सन्तु पन्था
येभिः सखायो यन्ति नो वरेयम् ।
समर्यमा सं भगो नो निनीया-
त्सं जास्पत्यं सुयममस्तु देवाः ॥

हे देवाः पन्थाः पन्थानो मार्गाः अनृक्षराः । ऋक्षरः कण्टक उच्यते । कण्टकरहिताः ऋजवोऽकुटिलाश्च सन्तु येभिः यैः पथिभिः नः अस्माकं सखायः यत्प्रेषिताः वरेयं वरैर्याचितव्यं पितरं प्रति यन्ति गच्छन्ति ते पन्था इति । किञ्च अर्यमा देवः नः अस्मान् सं निनीयात् सम्यक् प्रापयेत् । तथा भगः देवः सं निनीयात् । हे देवाः आसंगतमस्तु पतिकुलमिति शेषः । तथेदं जास्पत्यं जायापत्योर्युगलं सुयममस्तु सुमिथुनमस्तु । ऋसा.

पत्न्या योक्त्रविमोचनम्

प्र त्वा मुञ्चामि वरुणस्य पाशा-
येन त्वाबध्नात् सविता सुशेवः ।
ऋतस्य योनौ सुकृतस्य लोके-
ऽरिष्टां त्वा सह पत्या दधामि ॥

पत्न्या योक्त्रविमोचने 'प्र त्वा मुञ्चामि' इत्येषा । सूत्रितं च–'अथास्या योक्त्रं विचृतेत्प्र त्वा मुञ्चामि वरुणस्य पाशात् ।' (आश्रौ. १।११) इति । जातं प्राणिनं सवित्रा प्रेरितो वरुणः आत्मपाशैर्बध्नाति । तस्माद्वरुणस्य पाशात् हे वधु त्वा त्वां प्र मुञ्चामि येन पाशेन त्वा त्वां सविता वरुणस्य प्रेरकः सुशेवः सुसुखः अबध्नात् बन्धनं कृतवान् । यज्ञविनियोगपक्षे पत्नीं योक्त्रेण बध्नाति । बन्धनस्य वरुणोऽभिमानी । अतो वरुणपाशाद्योक्त्रात्प्र मुञ्चामि येन योक्त्रेण सविता कर्मणामनुज्ञाता देवः ऋत्विक् पाशेनाबध्नात् । तं मोचयित्वा च ऋतस्य यज्ञस्य योनौ स्थाने यागभूमौ सुकृतस्य लोके कर्मक्षेत्रे भूलोके च अरिष्टां अहिंसितां त्वां पुत्राद्यर्थं पत्या सह दधामि स्थापयामि । ऋसा.

सुपुत्रा सुभगा गृहस्वामिनी च पत्नी स्यात्

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥

इतः पितृकुलात् प्र मुञ्चामि त्वां नामुतः भर्तृगृहात् प्रमुञ्चामि । अमुतः भर्तृगृहे सुबद्धां करम् । यथेयं कन्या हे इन्द्र मीढ्वः सेक्तः सुपुत्रा सुभगा सुसौभाग्या या असति भवति तथा कुरु । ऋसा.

---

(१) ऋसं. १०।८५।२२ ; शाश्रौ. १६।१३।१३ ; आपगृ. ३।८।१०.

(२) ऋसं. १०।८५।२३; असं. १४।१।३४ पन्था (पन्थानो) ; आपगृ. २।४।२ ; शागृ. १६।१ ; कौसू. ७५।११, ७७।१.

(१) ऋसं. १०।८५।२४ ; असं. १४।१।१९, ५८ ; आश्रौ. १।११।२ ; आगृ. १।७।१७ ; आपगृ. २।५।१२ ; शाश्रौ. १।१५।९ ; शागृ. १।१५।१ ; कौसू. ७५।२३, ७६।२८.

(२) ऋसं. १०।८५।२५ ; असं. १४।१।१७, १८ ; सामब्रा. १।२।३,४ मुञ्चामि (मुञ्चतु) ; आगृ. १।७।१३ सामब्रावत् ; शागृ. १।१८।३ सामब्रावत् ; पागृ. १।६।२ सामब्रावत् ; आपगृ. २।५।२ ; मागृ. १।११।१२ सामब्रावत्.

पूषा त्वेतो नयतु हस्तगृह्या-
श्विना त्वा प्र वहतां रथेन ।
गृहान्गच्छ गृहपत्नी यथासो
वशिनी त्वं विदथमा वदासि ॥

विवाहानन्तरभाविनि प्रयाणे 'पूषा त्वेतो नयतु' इत्यनया रथादियानमारोहयेत् । सूत्रितं च 'पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत्' ( आगृ. १।८।१ ) इति । हस्तगृह्य ग्राह्यहस्तः पूषा त्वा त्वामितः नयतु प्रापयतु । अश्विना अश्विनौ त्वा त्वां रथेन प्र वहतां प्रगमयताम् । गृहान् भर्तृसंबन्धिनः गच्छ त्वं गृहपत्नी यथासः भवसि स्वगृहस्वामिनी भवसि । वशिनी सर्वेषां गृहगतानां वशं आपयित्री पत्युर्वशे वर्तमाना वा विदथं पतिगृहं आ वदासि आवदसि । गृहस्थितं भृत्यादिजनमावद ।

ऋसा.

इह प्रियं प्रजया ते समृध्यता-
मस्मिन्गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं सं सृजस्वाधा
जिव्री विदथमा वदाथः ॥

'इह प्रियम्' इत्येषा वध्वा गृहप्रवेशनी । सूत्रितं च 'इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत्' ( आगृ. १।८।८ ) इति । हे वधु ते तव इह अस्मिन् पतिकुले प्रियं प्रजया सह समृध्यताम् । अस्मिन् गृहे गार्हपत्याय गृहपतित्वाय जागृहि बुध्यस्व । एना अनेन पत्या सह तन्वं स्वीयं शरीरं सं सृजस्व संसृष्टा भव । अध अथ जिव्री जीर्णौ जायापती युवां विदथं गृहं आ वदाथः आभिमुख्येन वदतम् । ऋसा.

वध्वाः कृत्यादोषनिराकरणम्

[3]नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥

कृत्या अभिचाराभिमानिनी देवता नीललोहितं भवति । नीलं च लोहितं च तस्या रूपं भवतीत्यर्थः । सा कृत्या आसक्तिः आसक्ता अस्यां संबद्धा व्यज्यते त्यज्यते इत्यर्थः । तस्यां कृत्यायामपगतायामस्याः वध्वा ज्ञातयः एधन्ते वर्धन्ते । पतिः च बन्धेषु सांसारिकेषु बध्यते ।

ऋसा.

वधूवस्त्रस्य धनस्य च दानं ब्रह्मभ्यो विवाहे

[1]परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्व्या जाया विशते पतिम् ॥

शामुल्यं शामलमित्यर्थः । शमलं शारीरं मलम् । शरीरावच्छिन्नस्य मलस्य धारकं वस्त्रं परा देहि परात्यज । धृतप्रायश्चित्तार्थं ब्रह्मभ्यो ब्राह्मणेभ्यो वसु धनं वि भज प्रयच्छेत्यर्थः । किमर्थं वधूवासःपरित्याग इति चेत्, उच्यते । एषा कृत्या पद्वती पादवती सती जाया भूत्वी भूत्वा पतिं विशते । कृत्यारूपवासःप्रवेशात् कृत्या जाया भूत्वा विशते इत्युपचर्यते । अतस्तत्परित्यागे कृत्यैव त्यक्ता भवतीत्यर्थः । यदि वधूवासः स्वयं निधत्ते तदैवं भवतीति वधूवासःसंस्पर्शनं निन्दायुक्तम् ।

ऋसा.

[2]अश्रीरा तनूर्भवति रुशती पापयामुया ।
पतिर्यद्वध्वो३ वाससा स्वमङ्गमभिधित्सते ॥

अत्रापि वधूवासःसंस्पर्शनिन्दोच्यते । तनूः वरस्य संबन्धिनी अश्रीराः अश्रीका भवति । कथं स्याच्चेदिति उच्यते । रुशती । रुशदिति वर्णनाम । दीप्तया अमुया अनया पापया पापरूपया कृत्यया युक्ता चेत्तनूः । तदेवाह । पतिर्यत् यदि वध्वो वाससा स्वमङ्गमभिधित्सते परिधातुमिच्छति । ऋसा.

[3]ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।
पुनस्तान्यज्ञिया देवा नयन्तु यत आगताः ॥

---

( १ ) ऋसं. १०।८५।२६ ; असं. १४।१।२० पूषा ( भगः ) ; आगृ. १।८।१ ; आपगृ. २।४।९ ; कौसू. ७६।१० असवद.

( २ ) ऋसं. १०।८५।२७ ; असं. १४।१।२१ प्रजया ( प्रजायै ) ; आगृ. १।८।८ ; आपगृ. २।५।११ ; शागृ. २।१५।२२ ; कौसू. ७७।२०.

( ३ ) ऋसं. १०।८५।२८ ; असं. १४।१।२६ ; शागृ. २।१२।८ ; आपगृ. २।५।२३.

( १ ) ऋसं. १०।८५।२९ ; असं. १४।१।२५ ; आपगृ. ३।९।११ ; कौसू. ७९।२०.

( २ ) ऋसं. १०।८५।३० ; असं. १४।१।२७ अश्रीरा ( अश्लीला ) ; आपगृ. ३।९।११.

( ३ ) ऋसं. १०।८५।३१ ; असं. १४।२।१० ; आपगृ. २।५।२४ ; शागृ. २।१५।१५.

वध्वश्चन्द्रं हिरण्यरूपं वहतुं ये यक्ष्माः व्याधयः अनु यन्ति प्राप्नुवन्ति जनात् असद्विरोधिनः सकाशात् । यद्वा । जनात् यमाख्यात् । तान् पुनर्नयन्तु प्रापयन्तु यज्ञियाः यज्ञार्हाः देवाः इन्द्रादयः । यत आगताः यस्मात्ते यक्ष्मा आगताः तत्र तान्नयन्तु । ऋसा.

**मा विदन्परिपन्थिनो य आसीदन्ति दम्पती ।**
**सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥**

वध्वाः प्रयाणे ' मा विदन् ' इत्येषा जप्या । सूत्रितं च—' कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन् परिपन्थिन इति जपेत् ' ( आग्र. १।८।६ ) इति । परिपन्थिनः पर्यवस्थातारः शत्रवः मा विदन् मा प्रापयन् ये परिपन्थिनः दम्पती आसीदन्ति अभिगच्छन्ति । सुगेभिः सुगैर्मार्गैः दुर्गं दुःखेन गन्तुं शक्यं दुर्गमं देशं अतीतां अतिगच्छताम् । अरातयः अदातारः शत्रवः अप द्रान्तु अपगच्छन्तु । ऋसा.

**सुमङ्गलीरियं वधूरिमां समेत पश्यत ।**
**सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥**

इयं वधूः सुमङ्गलीः शोभनमङ्गला । अतः इमां सर्वे आशीःकर्तारः समेत संगच्छत । तां पश्यत च । तां संगताश्च दृष्ट्वा अस्यै ऊढायै सौभाग्यं दत्त्वाय दत्त्वा अथ अस्तम् । गृहनामैतत् । स्वस्वसंबन्धिनं वि परेतन विविधं परागच्छत । ऋसा.

**तृष्टमेतत्कटुकमेतदपाष्टवद्विषवन्नैतदत्तवे ।**
**सूर्यां यो ब्रह्मा विद्यात्स इद्वाधूयमर्हति ॥**

अनयाऽपि वधूवस्त्रपरित्यागः प्रतिपाद्यते । एतद्वस्त्रं तृष्टं दाहजनकम् । तथैतत्कटुकम् । तथा अपाष्ठवत् । अपाष्ठं अपस्थितमृजीषम् । तद्वत् । तथा विषवत् । नैतद्वस्त्रं अत्तवे अत्तव्यम् । अनुपयोग्यम् । यो ब्रह्मा ब्राह्मणः सूर्यामिदानीं प्रस्तुतां देवीं विद्यात् सम्यक् जानीयात् स इत् स एव वाधूयं वधूवस्त्रमर्हति । ऋसा.

( १ ) ऋसं. १०।८५।३२ ; असं. १४।१।३२, १४।१।११ ; सामब्रा. १।३।१२ ; आगृ. १।८।६ ; शागृ. १।१५।१४ ; गोगृ. २।४।२ ; आपगृ. २।५।२४ ; कौसू. ७७।२.

( २ ) ऋसं. १०।८५।३३ ; असं. १४।२।२८ ; सामब्रा. १।२।१४ ; आगृ. १।८।७ ; गोगृ. २।२।१४ ; पागृ. १।८।९ ; आपगृ. २।६।११ ; हिगृ. १।१९।४ ; मागृ. १।१२।१ ; कौसू. ७७।१०.

( ३ ) ऋसं. १०।८५।३४ ; असं. १४।१।२९ ; आपगृ. २।१७।९ इष्ट ( कृ ).

**आशसनं विशसनमथो अधिविकर्तनम् ।**
**सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुन्धति ॥**

आशसनं तूपाधानम् । तच्चान्यवर्णं भवति । विशसनं शिरसि निधीयमानम् । तादृशं दशान्ते निधीयमानं अधिविकर्तनं यत्त्रिधा वासो विकृन्तन्ति । तान्याशसनादीनि वासांस्यवस्थितानि सूर्यायाः रूपाणि भवन्ति । तानि पश्य । एवंभूतान्याशसनादीनि पुरा सूर्यास्वशरीरे स्थितान्यमङ्गलानि वासांसि विधत्ते । तानि रूपाणि सूर्याविद्ब्रह्मा तु ब्राह्मण एव तस्माद्वाससः सकाशात् शुन्धति अपनयति । ऋसा.

वरकर्तव्यं वध्वाः पाणिग्रहणम्

**गृभ्णामि ते सौभगत्वाय हस्तं**
**मया पत्या जरदष्टिर्यथासः ।**
**भगो अर्यमा सविता पुरन्धि-**
**र्मह्यं त्वादुर्गार्हपत्याय देवाः ॥**

विवाहे कन्याहस्तग्रहणे ' गृभ्णामि ' इत्येषा । सूत्रितं च— ' गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात् ' ( आग्र. १।७।३ ) इति । हे वधु ते तव हस्तमहं गृभ्णामि गृह्णामि । किमर्थम् । सौभगत्वाय सौभाग्याय । मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्या असः भवसि । भगोऽर्यमा सविता पुरन्धिः पूषा एते देवाः त्वा त्वां मह्यमदुः दत्तवन्तः । किमर्थम् । गार्हपत्याय । यथा अहं गृहपतिः स्यामिति ।

ऋसा.

( १ ) ऋसं. १०।८५।३५ ; असं. १४।१।२८ ; आपगृ. १।९।११.

( २ ) ऋसं. १०।८५।३६ ; सामब्रा. १।२।१६ ; आगृ. १।७।३ ; शागृ. १।१३।२ ; पागृ. १।६।३ ; आपगृ. २।४।१५ ; मागृ. १।१०।१५ ; गोगृ. २।२।१६ ; खागृ. १।३।११.

बीजाधानयोग्या मङ्गलभूता स्त्री

तां पूषञ्छिवतमामेरयस्व
यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विश्रयाते
यस्यामुशन्तः प्रहराम शेपम् ॥

हे पूषन् पोषकैतन्नामक देव शिवतमां अत्यन्तमङ्गलभूता तां एरयस्व आ ईरय सर्वतः प्रेरय । यस्यां ऊरौ बीजं रेतोलक्षणं मनुष्या वपन्ति आदधते । या नः अस्माकं ऊरू उशती कामयमाना विश्रयाते । यस्यामूरावुशन्तः कामयमाना वयं शेप स्पर्शनयोग्यं पुंप्रजननं प्रहराम । ऊरौ व्यञ्जनसंबन्धं करवामेत्यर्थः । ऋसा.

अग्निः पतिभ्यो जायां ददाति

तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह ।
पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥

गन्धर्वाः हे अग्ने तुभ्यमग्रे पर्यवहन् प्रायच्छन्नित्यर्थः । काम् । सूर्याम् । केन सह । वहतुना सह । त्वं च तां सूर्यां वहतुना सह सोमाय प्रायच्छः । तद्वदिदानीमपि हे अग्ने पुनः पतिभ्योऽस्मभ्यं जाया प्रजया सह दाः देहि । ऋसा.

पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥

पुनः स्वगृहीतां पत्नीं अग्निः आयुषा सह वर्चसा सह अदात् प्रायच्छत् । अस्याः अग्निदत्तायाः यः पतिः पुमान् सः दीर्घायुः सन् शरदः शतं शतसंवत्सरं जीवाति जीवतु । ऋसा.

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥

जाता कन्यां सोमः प्रथमभावी सन् विविदे लब्धवान् । गन्धर्वः उत्तरः सन् विविदे लब्धवान् । अग्निस्तृतीयः पतिः ते तव । पश्चात् मनुष्यजाः पतिः तुरीयः चतुर्थः । ऋसा.

सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

सोमः गन्धर्वाय प्रथमं ददत् प्रादात् । गन्धर्वः अग्नये प्रादात् । अथो अपि च अग्निः इमा कन्या रयिं धनं पुत्रांश्च मह्यमदात् । ऋसा.

दम्पत्योराशीर्वचनम्

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥

इहैव स्तं इहैवास्मिँल्लोके स्तं भवतम् । मा वि यौष्टं मा पृथग्भूतम् । विश्वमायुर्व्यश्नुतं प्राप्नुतम् । किञ्च पुत्रैर्नप्तृभिः पौत्रैः सह स्वे गृहे मोदमानौ भवतमिति शेषः । ऋसा.

पतिकृता जायासंबन्धिनी प्रार्थना

आ नः प्रजां जनयतु प्रजापति-
राजरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमा विश
शं नो भव द्विपदे शं चतुष्पदे ॥

गृहप्रवेशे ' आ नः प्रजां जनयतु ' इत्याद्याश्चतस्रो होमार्थाः । सूत्रितं च– 'आ नः प्रजा जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा '(आगृ. १।८।९) इति । प्रजापतिः देवः नः अस्माकं प्रजां आ जनयतु । अर्यमा

---

(१) ऋसं. १०।८५।३७ ; असं. १४।२।३८ ; आपगृ. ३।८।१०.

(२) ऋसं. १०।८५।३८ ; असं. १४।२।१ ; पागृ. १।७।३ ; आपगृ. २।५।७,९,१० ; मागृ. १।११।१२ मग्ने ( मग्ने ) ; कौसू. ७८।१०.

(३) ऋसं. १०।८५।३९ ; असं. १४।२।२ ; आपगृ. २।५।७, ९,१० ; मागृ. १।११।१२.

(४) ऋसं. १०।८५।४० ; असं. १४।२।३ पूर्वार्धे ( सोमस्य जाया प्रथमं गन्धर्वस्तेऽपरः पतिः । ) ; पागृ. १।४।१६ ; हिगृ. १।२०।२ ; आपगृ. २।४।१०.

(१) ऋसं. १०।८५।४१ ; असं. १४।२।४ ; सामब्रा. १।१।७ ; गोगृ. २।१।१९ ; पागृ. १।४।१६ ; आपगृ. २।४।१० ; हिगृ. १।२०।२ ; मागृ. १।१०।१० ; खागृ. १।३।९.

(२) ऋसं. १०।८५।४२ ; असं. १४।१।२२ ; आपगृ. २।६।१० ; शागृ. १।१६।१२.

(३) ऋसं. १०।८५।४३ ; कासं. १३।१५, ४०।१ ; मैसं. २।१३।२३ ; असं. १४।२।४० आ नः ( आवां ) ; सामब्रा. १।२।१८ ; आपश्रौ. १४।२८।४ ; माश्रौ १।६।४।२१ ; आश्रौ. १।८।५ ; आपगृ. ३।८।१० ; शागृ. १।६।६ ; बृहास्मृ. ८।७०.

च आजरसाय जरापर्यन्तं जीवनाय समनक्तु संगमयतु । सा त्वं अदुर्मङ्गली: दुर्मङ्गलरहिता सुमङ्गली । यद्वा.। या मङ्गलाचारान् दूषयति सा दुर्मङ्गली । ततोऽन्या अदुर्मङ्गली । तादृशी सती पतिलोकं पतिसमीपं आ विश प्राप्नुहि । नः अस्माकं द्विपदे शं भव । तथा च शं चतुष्पदे भव । ऋसा.

अघोरचक्षुरपतिघ्न्येधि
शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवकामा स्योना
शं नो भव द्विपदे शं चतुष्पदे ॥

हे वधु त्वं अघोरचक्षुः क्रोधादभयङ्करचक्षुः एधि भव । तथा अपतिघ्नी भव । तथा पशुभ्यः शिवा हितकरी भव सुमनाः सुवर्चाश्च भव । वीरसूः पुत्राणामेव प्रसवित्री देवकामा स्योना सुखकरा च भव । ऋसा.

इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
दशास्यां पुत्राना धेहि पतिमेकादशं कृधि ॥

हे इन्द्र त्वं इमां वधूं सुपुत्रां सुभगां च कृणु कृधि । अस्यां वध्वां दश पुत्रान् आ धेहि । पतिमेकादशं कृधि । दश पुत्राः पतिरेकादशो यथा स्यात्तथा कृधि कुरु । ऋसा.

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥

हे वधु श्वशुरादिषु त्वं सम्राज्ञी भव । देवृषु देवरेष्वित्यर्थः । ऋसा.

समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥

'समञ्जन्तु' इत्येषा वरस्य दधिप्राशने वधूवरयोर्हृदयस्पर्शने वा विनियुक्ता । तथा च सूत्रितम्—'समञ्जन्तु विश्वे देवा इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वाऽनक्ति हृदये' (आगृ. १।८।९) इति । विश्वे देवाः सर्वे देवाः नौ हृदयानि मानसानि समञ्जन्तु सम्यगञ्जन्तु । अपगतदुःखादिक्लेशानि कृत्वा लौकिकवैदिकविषयेषु प्रकाशयुक्तानि कुर्वन्त्वित्यर्थः । आपः च समञ्जन्तु । तथा मातरिश्वा नौ हृदयानि सं दधातु । आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः । धाता च सं दधातु । देष्ट्री दात्री फलानाम् । सरस्वतीत्यर्थः । सा च सं दधातु संधानं करोतु । ऋसा.

विवाहे वरकर्तव्यं योक्त्रबन्धनम्

आशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूम् ।
अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कम् ॥

या पत्नी वह्नेरनुसारिणी भूत्वा सौमनस्याद्याशासाना वर्तते तामेतां शोभनकर्मणे सुखं यथा भवति तथा बध्नामि । तैसा.

वध्वा कर्तव्या प्रार्थना बन्धविमोकश्च

सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम ।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥

हे अग्ने वयं त्वामुपसीदामः । कीदृश्यो वयं सुप्रजसः शोभनप्रजोपेताः । शोभनः पतिर्यासां ताः सुपत्न्यः । त्वत्प्रसादाददब्धासः केनाप्यतिरस्कृताः । कीदृशं त्वां सपत्नदम्भनं वैरिविनाशिनमदाभ्यं केनाप्यतिरस्कार्यम् । तैसा.

---

(१) ऋसं. १०।८५।४४ ; असं. १४।२।१७ ; सामब्रा. १।२।१७ ; गोगृ. २।२।१६ ; पागृ. १।४।१६ ; आपगृ. २।४।४ ; हिगृ. १।२०।२ ; भागृ. १।१०।९ ; शागृ. १।१६।५ ; कौसू. ७७।२२.

(२) ऋसं. १०।८५।४५ ; मामब्रा. १।२।१९ ; आपगृ. ३।५।२ ; हिगृ. १।२०।२; ऋग्वि. ३।२२।४.

(३) ऋसं. १०।८५।४६ ; असं. १४।१।४४ ( सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु । ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः ॥ ) ; मामब्रा. १।२।२० ; शागृ. १।१३।१ ; आपगृ. ३।५।२२ ; ऋग्वि. ३।२३।१.

(१) ऋसं. १०।८५।४७ ; सामब्रा. १।२।१५ ; आगृ. १।८।९ ; शागृ. १।१२।५ ; पागृ. १।४।१४ ; आपगृ. ३।८।१० ; गोगृ. २।२।१५ ; भागृ. १।३।३०.

(२) तैसं. १।१।१०।१ ; काठसं. १।१० ; असं. १४।१।४२ ; तैब्रा. ३।३।३।२ ; धैसू. २।६ ; आपश्रौ. २।५।२ ; माश्रौ. १।२।५।१२; आपगृ. २।५।८ ; कौसू. ७६।७.

(३) तैसं. १।१।१०।१,२, ३।१।३।१ ; तैब्रा. ३।२।३।१ ; आपश्रौ. २।५।८, ११।१६।१०.

[1]इमं वि ष्यामि वरुणस्य पाशं
यमबध्नीत सविता सुकेतः ।
धातुश्च योनौ सुकृतस्य लोके
स्योनं मे सह पत्या करोमि ॥

विष्यामि विमुञ्चामि । सुकेतः सुज्ञानः । सवित्रा बद्धेऽस्मिन् योक्त्ररूपे वरुणपाशे विमुक्ते सति धातुर्ब्रह्मणो योनौ स्थानेऽनुष्ठितस्य कर्मणः फलभूते लोके पत्या सह मे सुखं करोमि । तैसा.

[2]समायुषा सं प्रजया समग्ने वर्चसा पुनः ।
सं पत्नी पत्याहं गच्छे समात्मा तनुवा मम ॥

हे अग्ने अहमायुषा संगच्छे, प्रजया संगच्छे, पातिव्रत्यलक्षणेन वर्चसा संगच्छे । अनेन पत्या पुनः पुनः पत्नी *भूत्वा संगच्छे, वियोगः कदाचिदपि मा भूदित्यर्थः ।* मम शरीरेण जीवात्मा चिरं संगच्छताम् । तैसा.

पतिपत्नीसंबन्धः

[3]अर्धो वा एष आत्मनो यत्पत्नी ॥
[4]पत्नी हि सर्वस्य मित्रम् ॥

प्रजया पितृऋणमुक्तिः, अतो विवाहकर्तव्यता

[5]जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी ॥

ब्रह्मचर्येण वेदाभ्यासेन ब्रह्मचारित्वेन गुरुगृहे वसतीति ब्रह्मचारिवासी ।

तैसा. १।३।१०।१ पृ. ४८१

विवाहः दानरूपः

[6]छन्दांस्येव तद्वि वाहयति प्र वस्यसो विवाहमाप्नोति य एवं वेद । अथो देवताभ्य एव यज्ञे संविदं दधाति । तस्मादिदमन्योऽन्यस्मै ददाति ॥

यः पुमानेवमैन्द्रवायवाग्रत्वादीनां विवाहं जानाति स तेन वेदनेन *छन्दोदेवतानामेव विवाहं कृतवान् भवति ।* स्वयं च धनिकतमात्कुलाद्विवाहं प्राप्नोति । अपि च यज्ञानुष्ठानकाले देवताविषयमभिज्ञानं दधाति धारयति । यस्मादेवं छन्दसां विवाहः प्रवृत्तस्तस्माल्लोकेऽपि इदं कन्यकारूपमपत्यं अन्यः पिता अन्यस्मै जामात्रे ददाति ।

तैसा.

भगदेवताधिष्ठितं पत्नीत्वम्

[1]एयमगन् पतिकामा जनिकामोऽहमागमम् ।
अश्वः कनिक्रदद्यथा भगेनाहं सहागमम् ॥

इयं काम्यमाना स्त्री पतिकामा पतिं भर्तारं अभिलष्यन्ती आगन् मत्समीपं आगमत् । अहमपि जनिकामः जनिर्जाया ता *कामयमानः सन् आगमं तां प्राप्तवानस्मि ।* किञ्च कनिक्रदत् भृशं हेषाशब्दं कुर्वन् अश्वः यथा वडवया संगच्छते तथा अहं भगेन सह आगमम् ।

असा.

पतिवेदन भगदेवताक सौभाग्य च

[2]आ नो अग्ने सुमतिं संभलो
गमेदिमां कुमारीं सह नो भगेन ।
जुष्टा वरेषु समनेषु
वल्गुरोषं पत्या सौभगमस्त्वस्यै ॥

हे अग्ने संभलः संभाषकः समादाता वा कन्यार्थी पुरुषः नः अस्माकं कन्यावतां सुमतिं शोभनां बुद्धिं आ गमेत् आगच्छतु अस्मद्बुद्ध्यनुसारेण सर्वलक्षणसंपूर्णः अभिलषितो वरः प्राप्नोतु । यद्वा, संभलो हिंसकः पूर्वं *अभिलाषविघाती कन्या अनिच्छन् पुरुषः सुमतिं एत*त्कामनायुक्तां कल्याणीं बुद्धिं प्राप्य नः अस्मान् आ गमेत् । कन्या वरयितुमिति शेषः । आगत्य च भगेन भाग्येन सह नः अस्मदीया इमा कुमारीम् । आ गमेत् इत्यनुषङ्गः । ततः समनेषु समानमनस्केषु । यद्वा समानं *मन्यमानेषु सहृदयेषु । वरेषु वरयितृषु कन्यावरणार्थं* आगतेषु वरपक्षीयेषु । उक्तं हि वरप्रेषणं आपस्तम्बेन– 'सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात्' (आपगृ.

(१) तैसं. १।१।१०।२, ३।५।६।१ ; तैब्रा. ३।३।१०।१ ; माश्रौ. १।३।५।१७ ; आपगृ. २।४।१२ ; मागृ. १।११।२० ; आपश्रौ. ३।१०।६, ८।८।१४, १३।२०।१३.

(२) तैसं. १।१।१०।२ ; तैब्रा. ३।३।१०।२ ; आपश्रौ. ३।१०।८ ; माश्रौ. १।३।५।१८.

(३) तैसं. ६।१।८।५.

(४) तैसं. ६।२।१।२.

(५) तैसं. ६।३।१०।५.

(६) तैसं. ७।२।८।७.

(१) असं. २।३०।५.

(२) असं. २।३६।१–८.

१।४ ) इति। तेपु जुष्टा प्रीता वरयितृपुरुपसंमता सती वल्गुः रुचिरा प्रीतिजननी स्यात्। ऊर्पं ऊपति रुजति अपनुदति दुःखजातं इति ऊर्पं सुखकरम्। पत्या सह निवाससाधनं सौभगं सौभाग्यं अस्यै अस्याः कुमार्यै ( कुमार्याः ) अस्तु भवतु। पष्ठयर्थे चतुर्थी।

असा.

सोमजुष्टं ब्रह्मजुष्टमर्यम्णा संभृतं भगम्।
धातुर्देवस्य सत्येन कृणोमि पतिवेदनम्॥

सोमजुष्टं सोमदेवेन सेवितं, ब्रह्मजुष्टं ब्रह्मणा परिवृढेन गन्धर्वेण च जुष्टम्। अर्यम्णा। अत्र अर्यमशब्देन विवाहाग्निरुच्यते 'अर्यमणं नु देवं कन्या अग्निं अयक्षत' (आग्र. १।७।१३ ) इति मन्त्रवर्णात्। तेन च संभृतं स्वीकृतं भगं कन्यारूपं भागधेयं धातुः ' धाता गर्भं दधातु ते ' ( ऋसं. १०।१८४।१ ) इति प्रसिद्धस्य देवस्य सत्येन अनुज्ञारूपेण यथार्थवचनेन पतिवेदनं देवताव्यतिरिक्तस्य मनुष्यरूपस्य पत्युर्लम्भकं कृणोमि करोमि। सोमादिदेवतात्रयोपभोगानन्तरं कन्याया मानुषपतिसंबन्धः श्रुत्यन्तरे समाम्नायते ' सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः॥ ' ( ऋसं. १०।८५।४० ) इति। असा.

इयमग्ने नारी पतिं विदेष्ट
सोमो हि राजा सुभगां कृणोति।
सुवाना पुत्रान् महिषी भवाति
गत्वा पतिं सुभगा वि राजतु॥

हे अग्ने इयं अस्मदीया नारी कुमारी पतिं विदेष्ट विन्दतां लभताम्। हि यस्मात् सोमो राजा सुभगां सौभाग्ययुक्तां कृणोति करोति। पतिलाभानन्तरं पुत्रान् सुवाना जनयन्ती महिषी महनीया श्रेष्ठा भार्या भवाति भवतु। इयं पतिं गत्वा लब्ध्वा सुभगा सौभाग्ययुक्ता सती विराजतु विशेषेण तेजस्विनी भवतु।

असा.

यथाखरो मघवंश्चारुरेष
प्रियो मृगाणां सुपदा बभूव।
एवा भगस्य जुष्टेयमस्तु
नारी संप्रिया पत्याविराधयन्ती॥

मघवान् महनीयभोग्यपदार्थयुक्तः चारुः शोभनः मृगाणां आखरः निजावासप्रदेशः। स प्रदेशः प्रियः सन् यथा येन प्रकारेण सुपदाः सुखेन स्थातुं योग्यो बभूव भवति। एव एवं इयं नारी भगस्य भाग्येन जुष्टाऽस्तु। किं कुर्वती पत्या भर्त्रा सह संप्रिया संप्रियाणि सम्यक्प्रीतिकराणि भोग्यानि वस्तूनि अभिराधयन्ती अभिवर्धयन्ती। यद्वा पत्या सह संप्रिया संप्रीयमाणा अभिराधयन्ती पुत्रपश्वादिभिः समृद्धा भवन्ती।

असा.

भगस्य नावमा रोह पूर्णामनुपदस्वतीम्।
तयोपप्रतारय यो वरः प्रतिकाम्यः॥

भगस्य भाग्यस्य प्राप्तिसाधनभूतां पूर्णां अभिमतफलैः परिपूरितां अनुपदस्वतीं क्षयरहितां नावं हे कन्ये त्वं आ रोह। तया उक्तलक्षणया नावा उप अभिलष्यमाणपतिसमीपं प्रतारय आत्मानं प्रापय। प्रतिकाम्यः अयमेव मे भर्ता स्यात् इति प्रतिनियतं काम्यमानः यो वरः पतिः तस्य समीपं इति पूर्वत्र संबन्धः। असा.

आ क्रन्दय धनपते वरमामनसं कृणु।
सर्वं प्रदक्षिणं कृणु यो वरः प्रतिकाम्यः॥

हे धनपते वैश्रवण वरं वरयितारं पतिं आ क्रन्दय एषा कन्या मे जाया भूयात् इति संततं उद्घोषय। अभिधापयेत्यर्थः। यद्वा वरं आ क्रन्दय एतत्कन्याभिमुखं आह्वय। क्रदि आह्वाने। तथा आमनसं अभिमुखमनस्कं कृणु कुरु। किंच सर्वं प्राणिजातं प्रदक्षिणं प्रदक्षिणाचारं विवाहानुकूलव्यापारं कृणु कुरु। यो वरः प्रतिकाम्यः। उक्तोऽर्थः। तस्मै सर्वं प्रदक्षिणं कुरु इति संबन्धः। असा.

इदं हिरण्यं गुल्गुल्वयमौक्षो अथो भगः।
एते पतिभ्यस्त्वामदुः प्रतिकामाय वेत्तवे॥

इदं हिरण्यं हिरण्मयालङ्कारः गुग्गुलु धूपनद्रव्यविशेषः प्रसिद्धः। अयं औक्षः प्रलेपनद्रव्यम्। तत्स्वरूपं च कौशिकसूत्रभाष्यकारैर्दर्शितम्— 'आवपेत् सुरभीन् गन्धान् क्षीरं सर्पिस्तथोदके। एतदायनमित्याहुरौक्षं तु मधुना सह॥' इति ( के. ४।१०,१०।५ )। अथो अपि च तेषां अलङ्कारादीनां अधिष्ठाता ( भगः ) एतन्नामा देवः एते

सर्वैः धारणधूपनलेपनैः हे कुमारि त्वां पतिभ्यः सोमगन्धर्वाग्निभ्यः प्रतिक्रमाय प्रतिनियतं एनां कन्यां कामयमानं मानुषं पतिं वेत्तवे वेत्तुं लब्धुं अदुः दत्तवन्तः ।

असं.

आ ते नयतु सविता नयतु पतिर्यः प्रतिकाम्यः ।
त्वमस्यै धेह्योषधे ॥

हे कन्ये ते त्वां अभिलक्ष्य सविता सर्वस्य प्रेरको देवः आ नयतु वरं आगमयतु । यः प्रतिकाम्यः । उक्तोऽर्थः । पतिः सोऽपि नयतु उपयम्य त्वां स्वगृहं प्रापयतु । तथा हे ओषधे व्रीह्यात्मके त्वं अस्यै कुमार्यै धेहि पतिं विधेहि प्रयच्छेत्यर्थः ।

असं.

पत्नीवशीकरणम्

यथा वृक्षं लिबुजा
समन्तं परिषस्वजे ।
एवा परि ष्वजस्व मां यथा
मां कामिन्यसो यथा मन्नापगा असः ॥

लिबुजा व्रततिर्भवति इति यास्कः ( नि. ६।२८ )। यथा ताम्बूलादिवल्ली स्वाश्रयं वृक्षं समन्तं सर्वतः परिषस्वजे *आश्लिष्यति* । हे जाये *एव एवं मा परि ष्वजस्व* आश्लिष्य । यथा येन प्रकारेण मां कामिनी कामयमाना असः भवेः यथा च मत् सकाशात् अपगाः अपगन्त्री च नासः न भवसि । तथाऽहं त्वा अनेन प्रयोगेण वशीकरोमीत्यर्थः ।

असं.

यथा सुपर्णः प्रपतन्
पक्षौ निहन्ति भूम्याम् ।
एवा नि हन्मि ते मनो यथा
मां कामिन्यसो यथा मन्नापगा असः ॥

यथा सुपर्णः गरुत्मान् प्रपतन् स्वावासस्थानात् उत्तिष्ठन् भूम्यां स्वकीयौ पक्षौ निहन्ति वीजनवेगेन ताडयति हे योषित् एव एवमेव ते त्वदीयं मनः हृदयं नि हन्मि नितरां पीडयामि । अस्मद्वशं करोमीत्यर्थः । यथा मा इत्यादि पूर्ववत् वाक्यशेषस्य योजना ।

असं.

( १ ) असं. ६।८।१-२.

यथेमे द्यावापृथिवी
सद्यः पर्येति सूर्यः ।
एवा पर्येमि ते मनो यथा
मां कामिन्यसो यथा मन्नापगा असः ॥

इमे परिदृश्यमाने द्यावापृथिवी दिवं च पृथिवीं च [ यथा ] सूर्यः सर्वस्य प्रेरको भास्करः सद्यः शीघ्रं पर्येति परितो व्याप्नोति एव एवं हे योषित् ते त्वदीयं मनः अहं पर्येमि परितः प्राप्नोमि । यथा मां इत्यादि व्याख्यातम् ।

असं.

सांमनस्यस्य सखित्वस्य च प्रतिकृता एषणा

अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः ।
यथा संमनसौ भूत्वा सखायाविव सचावहै ॥

*धन्वनः धनुर्दण्डात् ज्यामिव यथा आरोपिता ज्यां* धानुष्कोऽवरोपयति तथा हे पुरुष ते तव हृदः हृदयात् मन्युं क्रोधं अव तनोमि अवरोपयामि । अपनयामीत्यर्थः । यथा येन प्रकारेण आवां समनसौ समानमनस्कौ परस्परानुरागयुक्तौ भूत्वा सखायाविव समानख्यानौ सुहृदाविव *सचावहै समवेतौ संगतौ* एककार्यकारिणौ भवाव । तथा त्वदीयं क्रोधं अपनयामीत्यर्थः ।

असं.

सखायाविव सचावहा अव मन्युं तनोमि ते ।
अधस्ते अश्मनो मन्युमुपास्यामसि यो गुरुः ॥

सखायौ इवेत्यादि उक्तार्थम् । हे क्रुद्ध पुरुष ते त्वदीयं मन्युं क्रोधं यो गुरुः गौरवोपेतः चालयितुं अशक्यः अश्मा अस्ति, तस्य अश्मनः अधस्तात् उपास्यामसि उपक्षिपामः ।

असं.

अभि तिष्ठामि ते मन्युं पार्ष्ण्या प्रपदेन च ।
यथावशो न वादिषो मम चित्तमुपायसि ॥

हे क्रुद्ध पुरुष ते तव मन्युं क्रोधं पार्ष्ण्या पादापरभागेन प्रपदेन पादाग्रेण च अभि तिष्ठामि उपरि तिष्ठामि । पादस्य पूर्वापरभागाभ्यां निष्पीडयामीत्यर्थः । *यथा* येन प्रकारेण अवशः परवशः सन् न वादिषः न ब्रूयाः प्रतिवचनसमर्थो न भवेः । येन च प्रकारेण मम

( १ ) असं. ६।४२।१ ; आपगृ. ८।२३।३ ; वैसू. १२।१३ ; कौसू. ३६।२८ , हिगृ. १।१५।३ ज्यामिव ( यामिव ).
( २ ) असं. ६।४२।२-३.

चित्तं मदीयं मनः उपायसि उपगच्छसि । तथा अभितिष्ठामीति संबन्धः । अस्ता.

विवाहे पतिपत्नीसमृद्ध्यर्थं हवनं प्राशनं च

[1]तेन भूतेन हविषायमा प्यायतां पुनः ।
जायां यामस्मा आवाक्षुस्तां रसेनाभि वर्धताम् ॥

तेन प्रसिद्धेन भूतेन समृद्धिकरेण हूयमानेन हविषा अयं पतिः पुनरा प्यायताम् । पुनः पुनः प्रजापश्वादिभिः समृद्धो भवतु । अस्मै पत्ये यां स्त्रियं जायां आवाक्षुः जायात्वेन समीपं आनयिषुः विवाहकर्तारः पितृमात्रादयः । तां जायां रसेन दधिमधुघृतादिना अभि वर्धतां अयं हूयमानोऽग्निरभिवर्धयतु । अस्ता.

अभि वर्धतां पयसाभि राष्ट्रेण वर्धताम् ।
रय्या सहस्रवर्चसेमौ स्तामनुपक्षितौ ॥

पूर्वमन्त्रोक्त एवार्थः अनया विव्रियते । अयं वरो वधूश्च पयसा क्षीरेण अभि वर्धताम् । गोभिः समृध्यतामित्यर्थः । तथा राष्ट्रेण अभि वर्धताम् । ग्रामादिसमृद्धिर्भवत्वित्यर्थः । सहस्रवर्चसा अपरिमिततेजसा रय्या धनेन इमौ जायापती अनुपक्षितौ अनुपक्षीणौ संपूर्णकामौ स्तां भवताम् । अस्ता.

त्वष्टा जायामजनयत् त्वष्टास्यै त्वां पतिम् ।
त्वष्टा सहस्रमायूंषि दीर्घमायुः कृणोतु वाम् ॥

त्वष्टा तनूकर्ता शिल्पकारी एतत्संज्ञो देवः जायां स्त्रियं अजनयत् उदपादयत् । जायतेऽस्यां अपत्यरूपेण पतिरिति जाया । श्रूयते हि ' तज्जाया जाया भवति यदस्यां जायते पुनः । ' ( ऐब्रा. ७।१३ ) इति । ईदृक्सामर्थ्योपेतं स्त्रीजन्म कृतवान् इत्यर्थः । हे वर अस्यै अस्या जायायास्त्वां पतिं भर्तारं त्वष्टैव अजनयत् । स्त्रीपुंससृष्टेस्त्वष्टैव कर्तेत्यर्थः । श्रूयते हि तैत्तिरीयके 'त्वष्टा वै पशूनां मिथुनानां प्रजनयिता' (तैसं. २।१।८।४ ) इति । प्रसादेवं तस्मात् हे जायापती वां युवयोः त्वष्टा देवः सहस्रसंवत्सरपरिमितानि आयूंषि एवमात्मकं दीर्घमायुः कृणोतु करोतु । अस्ता.

( १ ) अथर्व. १४।२।१-२ ; आपगृ. ३।३।१०.

इन्द्रस्य जायाप्राप्तये प्रार्थना

[1]आगच्छत आगतस्य नाम गृह्णाम्यायतः ।
इन्द्रस्य वृत्रघ्नो वन्वे वासवस्य शतक्रतोः ॥

आगच्छतः वर्तमानागमनस्य आगतस्य अस्मदन्तिकं प्राप्तस्य इन्द्रस्य नाम प्रीतिकरं वृत्रहादिनामधेयं गृह्णामि उच्चारयामि आयतः नियतोऽहं विवाहकामः । यद्वा आयतः इत्यपि षष्ठी उत्तरवाक्ये संबध्यते । आयतः आगच्छतः वृत्रघ्नः वृत्रं हतवतः इन्द्रस्य वासवस्य वसुभिरुपास्यमानस्य शतक्रतोः । शतं क्रतवः कर्माणि वीर्यप्रख्यापकानि वृत्रवधादीनि यस्य स तथोक्तः । सर्वत्र कर्मणि षष्ठी । एवंविधमिन्द्रं वन्वे अहं अभिमतफलं याचामि । अस्ता.

येन सूर्यां सावित्रीमश्विनोहतुः पथा ।
तेन मामब्रवीद् भगो जायामा वहतादिति ॥

येन पथा अध्वना अश्विना अश्विनौ एतत्संज्ञौ देवौ सावित्रीं सवितुः पुत्रीं सूर्याख्यां स्त्रियं ऊहतुः ऊढवन्तौ । विवाहकर्मणा जायात्वेन लब्धवन्तौ इत्यर्थः । तद्विवाहप्रकारश्च दाशतय्यां ' सत्येनोत्तभिता ' इति सूक्ते ( ऋसं. १०।८५ ) प्रपञ्चितः । ऐतरेयब्राह्मणे च ' प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छन् सूर्यां सावित्रीम् । तस्यै सर्वे देवा वरा आगच्छन् । तस्या एतत्सहस्रं वहतुं अन्वाकरोत् । तदेतदाश्विनं इत्याचक्षते ' ( ऐब्रा. ४।७) इत्यादिना प्रतिपादितः । तेन पथा जायां भार्यां आ वहतात् आवह आनयेति भगो देवः मां विवाहार्थिनं प्रत्यब्रवीत् । विवाहोपायं उपदिष्टवान् इत्यर्थः । अस्ता.

यस्तेऽङ्कुशो वसुदानो बृहन्निन्द्र हिरण्ययः ।
तेना जनीयते जायां मह्यं धेहि शचीपते ॥

हे इन्द्र ते तव यः अङ्कुशः अङ्कुशवद् आकर्षको हस्तः वसुधानः वसूनि धनानि धीयन्ते धार्यन्ते अस्मिन्निति वसुधानः । अत एव बृहन् महान् हिरण्ययः हिरण्मयः अत्र हिरण्यप्रचुरः । एवंविधो यो हस्तः अङ्कुश एव वा तेन साधनेन हे शचीपते शचीदेव्याः पते इन्द्र

( १ ) अथर्व. ६।८२।१-३.

जनीयते । जायन्तेऽस्यां अपत्यानीति जनिर्जाया । तां आत्मन इच्छते । यद्वा पुत्रेणोत्पत्तिर्जनिः तत्कामाय मह्यं जाया भार्यां धेहि देहि प्रयच्छ । असा.

ब्रह्मचर्यवती कन्या विवाह्या

ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ॥

अत्रापि ब्रह्मचर्यं प्रशस्यते । कन्या अकृतविवाहा स्त्री ब्रह्मचर्यं चरन्ती तेन ब्रह्मचर्येण युवानं युवत्वगुणोपेतं उत्कृष्टं पतिं विन्दते लभते । असा.

जायाया वहवो वराः एको ज्येष्ठो वरश्च

येन्मन्युर्जायामावहत् संकल्पस्य गृहादधि ।
क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत् ॥

स्वमहिमप्रतिष्ठस्य परब्रह्मणः सत्त्वरजस्तमोगुणात्मिकाया मायाशक्तेश्च प्राणिकर्मपरिपाकजनितसंबन्धवशात् जायमाना 'सोऽकामयत बहु स्यां प्रजायेय' (तैआ. ८।६) इत्यादिश्रुतिप्रतिपाद्या या पारमेश्वरी सिसृक्षावस्था सा लौकिकविवाहत्वेन रूप्यते । यत् यदा मन्युः मन्यते सर्वं जानातीति मन्युः निरावरणज्ञान ईश्वरः । अत एव तस्य सर्वदेवतात्मकत्वमाम्नायते । 'मन्युर्भगो मन्युरेवास देवो मन्युर्होता वरुणो विश्ववेदाः ।' (तैब्रा. २।४।१।११) इति । स जायां आवहत् जायतेऽस्यां सर्वं जगत् इति जाया सिसृक्षावस्थापन्ना पारमेश्वरी मायाशक्तिः । तां आभिमुख्यं प्रापयत् । भार्यात्वेन अभ्यमन्यतेत्यर्थः । लोके हि जाया कस्यचित् श्वशुरस्य गृहात् आनीयते । तद् दर्शयति—संकल्पस्येति । 'सोऽकामयत बहु स्यां प्रजायेय' (तैआ. ८।६) इति प्राथमिकः ईश्वरकृतः सकल्पः । तस्य गृहात् आवासात् । तद्द्वारादेव हि *एषा सिसृक्षावस्था समजायत इत्येवं* व्यपदिश्यते । अधिः पञ्चम्यर्थानुवादी । तदा तस्मिन् जायाया आवहने जन्याः जनसम्बन्धिनो बान्धवाः वधूवरपक्षीयाः के आसन् । सृष्टेः प्राक् कस्यचिदपि अभावात् एवं प्रश्नः । के वा वराः कन्यावरणस्य कर्तारः । को नाम तस्मिन् समये ज्येष्ठवरः प्रधानभूतो वरः उद्वाहकर्ता अभवत् । असा.

(१) असं. ११।७।१८ (११।९।१८).
(२) असं. ११।१०।१,२ (११।८।१,२).

तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे ।
त आसं जन्यास्ते वरा ब्रह्म ज्येष्ठवरोऽभवत् ॥

तस्मिन् सृष्टिसमये स्रष्टुः परमेश्वरस्य तपः स्रष्टव्यपर्यालोचनात्मकम्, 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' इति श्रुतेः (मुउ. १।१।९)। तस्य कर्म च प्राणिभिरनुष्ठितं पुण्यापुण्यात्मकं सुखदुःखफलोन्मुखं परिपक्वं कर्म च आस्ता अभवताम् । एवकारेण तदुभयव्यतिरिक्तस्य सत्ता निवार्यते । तपःकर्मणी एव सम्यगुपकरणत्वेन *तस्मिन् समये अवस्थिते इत्यर्थः । श्रूयते हि* 'तपसा चीयते ब्रह्म' (मुउ. १।१।८) 'स तपोऽतप्यत । स तपस्तप्त्वा इदꣳ सर्वमसृजत' (तैआ. ८।६) इति । तपःकर्मणोः सत्तायाः आधारं निर्दिशति । महति प्रभूते अर्णवे समुद्रे प्रलयकालीने अन्तः मध्ये । 'आपो वा इदमग्रे सलिलमासीत्' (तैब्रा. १।१।३।५) इति हि ब्राह्मणम् । अर्णांसि उदकानि विद्यन्ते अस्मिन् इति अर्णवः । 'अर्णसो लोपश्च' इति मत्वर्थीयो वकारः सलोपश्च । अनयोरेव तपःकर्मणोः वस्त्वन्तराभावात् *व्यक्तिबाहुल्यबहुत्वं उपचर्य कृतस्य प्रश्नस्य प्रतिवचनं* त आसं जन्या इति । निर्दिश्यमानप्रतिनिर्दिश्यमानयोः एकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतां उपाददते इति न्यायेन त इति प्रतिनिर्दिश्यमानापेक्षं पुंलिङ्गत्वम् । तास्तप.कर्मव्यक्तयो जन्याः विवाहप्रवृत्ता बन्धुजना आसन् । त एव वराः वरयितारश्च आसन् । यत् सिसृक्षावस्थं जगत्कारणं ब्रह्म मायाशक्तिरूपाया (जायाया) *आवहने स एव ज्येष्ठवरः अभवत् । प्रधानभूतः* उद्वाहकर्ताऽभवदित्यर्थः । असा.

विवाहे, उद्वाहे चतुर्थीकर्मणि च संबद्धा मन्त्राः

विवाहपरमेतत्काण्डम् । तत्र वक्ष्यमाणानि कर्माणि भवन्ति । तेषु तत्तन्मन्त्रविनियोगाः सूत्रकारेण प्रायोऽन्वर्थमेव कृताः, ते कौशिके दशमे अध्याये विस्तरेण प्रपञ्चितास्तत्रैव द्रष्टव्याः । अत्र तु कर्मक्रमस्य मन्त्रदिग्दर्शनम् ।

सूक्तारम्भे सूर्या नाम या सूर्यरूपा सवितृपुत्री देवी तस्या विवाहस्य कथा वर्णिता । कर्मक्रमस्तु यथा वक्ष्यते—

विवाहः । स कुमार्याः पितृगृहे । 'सत्येनोत्तभिता,' इति षोडश 'पूर्वापरम्' इति, १।२३,२४ द्वे, इत्यष्टादशभिराज्यहोमः । आगमकृद्वरं कुमारीमाशयति । हस्तगृहीतशरावसंपुटं सानुचरं कञ्चिद् वरं प्रति प्रेषयति । १।३१ ॥ ब्राह्मणप्रेषणम् । १।३१ ॥ कुमारीरक्षार्थं पालप्रेषणम् । १।३४॥ उदकग्रहणार्थं व्रजनम् ॥ अप्सु लोष्टं प्रक्षिपति । १।३७ ॥ अवगाहनम् । १।३८॥ उदकघटपूरणम् । १।३८ ॥ उदकघटं उदाहाराय प्रयच्छति । १।३९ ॥ शालायां घटनिधानम् ॥ तेनोदकेन सर्वोदकार्यकरणम् ॥ आज्यहोमः । १।१७ ॥ कुमारीकेशविचर्तनम् । १।५८ ॥ ईशानकोणे तिष्ठन्त्याः कुमार्या उष्णोदकेन आप्लवनम् । २।६५ ॥ शीतोदकेन सेचनम् । १।३५, १।४३ ॥ वाससाऽङ्गानि प्रमार्ष्टि ॥ तत् कुमारी पालाय प्रयच्छति । २।६६,६७ ॥ तद्वासस्तुम्बरदण्डेन गृहीत्वा गोपादे प्रक्षिपति ॥ अहतेन वाससा तामाच्छादयति । १।४५,५३ ॥ यज्ञोपवीतवद्वाधूयं वस्त्रं बध्नाति ॥ केशप्रलेखनम् । २।६८ ॥ योक्त्रस्य कटिप्रदेशे बन्धनम् । १।४२,२।७० ॥ ज्येष्ठीमधुमणे रक्तसूत्रेण बन्धनं अनामिकायाम् ॥ कन्यादानादनन्तरं उपाध्यायः कुमारीं हस्ते गृहीत्वा कौतुकगृहान्निर्णयति ॥ शालायां युगं धारयति । १।२० ॥ दक्षिणतस्तत् पुरुषो धारयति । कन्याया ललाटप्रदेशे हिरण्यबन्धनम् । १।४०, ४१ ॥ तदुपरि युगच्छिद्राद्उदकनिनयनम् ॥ कुमार्या अश्मारोहणम् । १।४७ ॥ तया लाजहोमः । २।६३ ॥ वरेण पाणिग्रहणम् । १।४८–५२ ॥ वरः कन्यां अग्निं त्रिः परिणयति । १।३९ ॥ सप्तलेखालेखनम् ॥ तासु वधूमुत्क्रामयति ॥ तल्प उपवेशयति । २।३१, १।६० ॥ उपविष्टायास्तस्याः पादौ सुहृत् प्रक्षालयति ॥ कुमारी कटिवेष्टित योक्त्रं मोचयति । १।५७,५८ ॥ तद्योक्त्रे भृत्याः संरमन्ते । ये जयन्ति ते बलीयांसो मन्यन्ते ॥ वधूः सर्वोपधीर्वरमूर्ध्नि पलाशपत्रेणावपति । २।५३–५८ ॥ कुमारी तल्पादुत्थापयति । १।५९, ६०,६२ ॥ इति विवाहः ॥

अथोद्वाहः । तत्र परस्य गृहे वधूनयनम् । तत्रथा–वधूवरौ यानमारोहयति । १।६१, २।३० ॥ कर्त्रा अग्रे गच्छति । २।८, १।६४ ॥ दक्षिणेन पादेन प्रक्रामति अध्वानम् । २।११, १।३४ ॥ तेनैवाह्ना यद्यन्यांस्पूढा तर्हि वधूवस्त्रस्य दशाखण्डं गृहीत्वा चतुष्पथे क्षिप्त्वा दक्षिणेन पादेन तदुपरि तिष्ठति तत्प्रायश्चित्तम् । २।७४॥ उभयोरूढयोः शुभकामः सन् जपं कुर्यात् । २।४६ ॥ अन्तरा ब्राह्मणमतिक्रमयतः ॥ यानस्य विनिष्करणम् । २।४७ ॥ अध्वनि तीर्थे आयाते लोष्टं प्रक्षिप्य तत उत्तरति । २।६॥ महावृक्षेषु दृष्टेषु जपति । २।९॥ वध्वीक्षणार्थं कुद्दक्षु स्त्रीष्वागतासु ताः प्रति जपति । २।२८॥ द्वैभेदं ( सिन्धुसंगमं ) दृष्ट्वा जपति । २।७ ॥ ओषधीनदीक्षेत्रवनेषु दृष्टेषु जपति । २।७ ॥ श्मशाने दृष्टे जपति । २।७३ ॥ अध्वनि सुप्तायां वध्वां प्रबोधयति मन्त्रेण । २।७५॥ वरपितृगृहे आसन्नागते जपति । २।१२ ॥ गृहमागते याने तत् अद्भिः संप्रोक्ष्य बलीवर्दौ विमोचयति । २।१६ ॥ निर्ऋत्यपनोदाय पत्नीशालां प्रोक्षति । २।१९॥ दक्षिणतो गृहपार्श्वे गोमयपिण्डेऽश्मानं स्थापयति । १।४७ ॥ तस्योपरि पलाशस्य यत्पर्णत्रितयं तस्मान्मध्यमपर्णं गृहीत्वा स्थापयति, तस्योपरि घृतं, घृतस्योपरि चत्वारि दूर्वाग्राणि, तदुपरि वधूं स्थापयति । १।४७॥ तस्मात् वधूं प्रपाद्य वरगृहे प्रवेशयति । २।२६, १।२१, १।६३, १।६४॥ पूर्णपात्रेण कुम्भफलेन अक्षतसहितेन प्रवेशः ॥ अग्निं प्रज्वाल्य ततो हस्तग्रहणं कृत्वा वरो वधूं परिणयति । २।१७,१८ ॥ अग्निसरस्वतीपितृसूर्यादेवमित्रवरुणेभ्यो नमस्कुर्वती अनुमन्त्रयते । २।२०,४६ ॥ कश्चित् रोहितचर्म आहरति । २।२१॥ उपस्तृतस्य तस्योपरि बल्वजं उपस्तृणीते तस्योपरि वधूमारोहयति उपवेशयति च । २।२३ ॥ दक्षिणोत्तरं उपस्थं कुरुते वधूः ॥ ब्राह्मणायनं कुमारं शुभनामकं तस्या उपस्थ उपवेशयति । २।२४ ॥ कुमाराय फलमोदकादि दत्त्वा तमुत्थापयति । २।२५ ॥ तेन भूतेनेत्यादिना वरवध्वौ क्रमेण जुहुतः । २।१–५, २।४५ ॥ संपातान् आनयति । उदपात्रे उत्तरान् संपातानानयति । उदपात्रं वरवध्वोरञ्जल्योर्निनयति । २।४५॥ तेन भूतेनेति स्थान् संपात्य तान् स्थालीपाकं च जायापती उपस्पर्शयति । तत्र एकस्मिन् स्थाने स्वजनैः सह उपविश्य मिष्टान्नस्य सहादानं कुर्यात् पतिः ॥ तेनैव

सूक्तेन यवानामाज्यमिश्राणां पूर्णाञ्जलिं जुहोति ॥ इत्युद्वाहः ॥

अथ चतुर्थिकाकर्म । तद्यथा–' सप्त मर्यादा ' इति वरो व्रीहीन् जुहोति विवाहाग्नौ ॥ ' अक्ष्यौ नौ ' इति परस्परं वरवध्वावक्षिणी अङ्क्ते । ' महीमूषु ' इति वरवध्वौ खट्वामालम्भयति आचार्यः । ' आरोहयति ' । २।३१ । तत्र च तामुपवेशयति । २।२३ ॥ संवेशयति च । २।३२ ॥ तौ वस्त्रेणाच्छादयति ॥ तावभिमुखौ करोति । २।३७ ॥ 'इहेमौ' इति । २।६४॥ वरवध्वौ त्रिः सनुदति ॥ मदुघमणि पिष्ट्वा औक्षे प्रक्षिप्य वधूवरौ परस्परं संगच्छेते । २।७१,७२ ॥ 'ब्रह्म जज्ञानं' इति अङ्गुष्ठेन वरः प्रजननदेशं स्पृशति ॥ खट्वाया उत्थापयति वरो वधूम् । २।४३ ॥ अहतवस्त्रं वरवध्वौ परिधापयति आचार्यः । २।४५,५३,५५ ॥ वधूसीमन्ते शष्पं निदधाति वरः । १।५५,५६ ॥ व्रीहियवौ सीमन्ते निदधाति अमन्त्रकम् । दर्भपिञ्जूल्या सीमन्तं विचृतति । शणशकलेन वधूकेशान् परिवेष्टयति ॥ सर्वेण काण्डेनाज्यं जुहोति वरः । प्रायश्चित्तमेतत् ॥ शुल्कद्रव्यं पृथक्करोति इदं तव इदं मामकीयमिति । १।३२ ॥ वाधूयं वस्त्रं ददत् वरमनुमन्त्रयते । १।२५–३० ॥ आचार्यस्तत्प्रतिगृह्णाति । २।४१, ४२ ॥ तत् स्थाणावासजति । २।४८ ॥ तत् गृहीत्वा गच्छति । २।४९ ॥ तद् वृक्षं प्रतिच्छादयति । २।५० ॥ सर्वे स्नानं कुर्वन्ति । २।४५ ॥ तेन वाधूयेनाच्छादयत्यात्मानमाचार्यः । २।५१ ॥ नवं वसानः २।४४ । इति जपित्वा आचार्यो गृहं गच्छति ॥ कुमार्यां नीयमानायां पितृगृहे रोदने सति ' जीवं रुदन्ति ' । १।४६ ॥ इत्यनया 'यदीमे केशिनः' । २।५९–६२ । इति चतसृभिश्चाज्यं जुहोति । तत्प्रायश्चित्तम् । इति चतुर्थिकाकर्म ॥

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥

सोमेनादित्या बलिनः सोमेन पृथिवी मही ।
अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥

सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति पार्थिवः ॥

यत् त्वा सोम प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥

आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।
ग्राव्णामिच्छृण्वन्तिष्ठसि न ते अश्नाति पार्थिवः ॥

चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् ।
द्यौर्भूमिः कोश आसीद् यदयात् सूर्या पतिम् ॥

रैभ्यासीदनुदेयी नाराशंसी न्योचनी ।
सूर्याया भद्रमिद् वासो गाथयैति परिष्कृता ॥

स्तोमा आसन् प्रतिधयः कुरीरं छन्द ओपशः ।
सूर्याया अश्विना वराग्निरासीत् पुरोगवः ॥

सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत् पत्ये शंसन्तीं मनसा सवितादादात् ॥

मनो अस्या अन आसीद् द्यौरासीदुत च्छदिः ।
शुक्रावनड्वाहावास्तां यदयात् सूर्या पतिम् ॥

ऋक्सामाभ्यामभिहितौ गावौ ते सामनावैताम् ।
श्रोत्रे ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥

शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं सूर्यारोहत् प्रयती पतिम् ॥

सूर्याया वहतुः प्रागात् सविता यमवासृजत् ।
मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते ॥

यदश्विना पृच्छमानावयातं
त्रिचक्रेण वहतुं सूर्यायाः ।
क्वैकं चक्रं वामासीत्
क देष्ट्राय तस्थथुः ॥

यदयातं शुभस्पती
वरेयं सूर्यामुप ।
विश्वे देवा अनु तद् वामजानन्
पुत्रः पितरमवृणीत पूषा ॥

द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः ।
अथैकं चक्रं यद् गुहा तदद्धातय इद् विदुः ॥

अर्यमणं यजामहे सुबन्धुं पतिवेदनम् ।
उर्वारुकमिव बन्धनात् प्रेतो मुञ्चामि नामुतः ॥

( १ ) असं. १४।१।१–६४.

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥
प्र त्वा मुञ्चामि वरुणस्य पाशाद्
येन त्वाबध्नात् सविता सुशेवाः ।
ऋतस्य योनौ सुकृतस्य लोके
स्योनं ते अस्तु सहसंभलायै ॥
भगस्त्वेतो नयतु हस्तगृह्या-
श्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो
वशिनी त्वं विदथमा वदासि ॥
इह प्रियं प्रजायै ते समृध्यता-
मस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं सं स्पृशस्वाथ
जिर्विर्विदथमा वदासि ॥
इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ ॥
पूर्वापरं चरतो माययैतौ
शिशू क्रीडन्तौ परि यातोऽर्णवम् ।
विश्वान्यो भुवना विचष्ट
ऋतूँरन्यो विदधज्जायसे नवः ॥
नवोनवो भवसि जायमानो-
ह्नां केतुरुषसामेष्यग्रम् ।
भागं देवेभ्यो वि दधास्यायन्
प्र चन्द्रमस्तिरसे दीर्घमायुः ॥
परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा जाया विशते पतिम् ॥
नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥
अश्लीला तनूर्भवति रुशती पापयामुया ।
पतिर्यद् वध्वो३ वाससः स्वमङ्गमभ्यूर्णुते ॥
आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मोत शुम्भति ॥
तृष्टमेतत् कटुकमपाष्ठवद् विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा वेद स इद् वाधूयमर्हति ॥
स इत्तत् स्योनं हरति ब्रह्मा वासः सुमङ्गलम् ।
प्रायश्चित्तिं यो अध्येति येन जाया न रिष्यति ॥
युवं भगं सं भरतं
समृद्धमृतं वदन्तावृतोद्येषु ।
ब्रह्मणस्पते पतिमस्यै रोचय
चारु संभलो वदतु वाचमेताम् ॥
इहेदसाथ न परो गमाथेमं
गावः प्रजया वर्धयाथ ।
शुभं यतीरुस्रियाः सोमवर्चसो
विश्वे देवाः क्रन्निह वो मनांसि ॥
इमं गावः प्रजया सं विशाथायं
देवानां न मिनाति भागम् ।
अस्मै वः पूषा मरुतश्च सर्वे
अस्मै वो धाता सविता सुवाति ॥
अनृक्षरा ऋजवः सन्तु पन्थानो
येभिः सखायो यन्ति नो वरेयम् ।
सं भगेन समर्यम्णा
सं धाता सृजतु वर्चसा ॥
यच्च वर्चो अक्षेषु सुरायां च यदाहितम् ।
यद् गोष्वश्विना वर्चस्तेनेमां वर्चसावतम् ॥
येन महानघ्न्या जघनमश्विना येन वा सुरा ।
येनाक्षा अभ्यषिच्यन्त तेनेमां वर्चसावतम् ॥
यो अनिध्मो दीदयदप्स्वन्तर्यं
विप्रास ईडते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा
याभिरिन्द्रो वावृधे वीर्यावान् ॥
इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि ।
यो भद्रो रोचनस्तमुदचामि ॥
आस्यै ब्राह्मणाः स्नपनी-
र्हरन्त्ववीरघ्नीरुदजन्त्वापः ।
अर्यम्णो अग्निं पर्येतु पूषन्
प्रतीक्षन्ते श्वशुरो देवरश्च ॥
शं ते हिरण्यं शमु सन्त्वापः
शं मेथिर्भवतु शं युगस्य तर्द्म ।
शं त आपः शतपवित्रा भवन्तु
शमु पत्या तन्वं सं स्पृशस्व ॥

खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्वाकृणोः सूर्यत्वचम् ॥
आशासाना सौमनसं प्रजां सौभाग्यं रयिम् ।
पत्युरनुव्रता भूत्वा सं नह्यस्वामृताय कम् ॥
यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा ।
एवा त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य ॥
सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु ।
ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः ॥
या अकृन्तन्नवयन् याश्च तत्निरे
या देवीरन्ताँ अभितोऽददन्त ।
तास्त्वा जरसे सं व्ययन्त्वा-
युष्मतीदं परि धत्स्व वासः ॥
जीवं रुदन्ति वि नयन्त्यध्वरं
दीर्घामनु प्रसितिं दीध्युर्नरः ।
वामं पितृभ्यो य इदं समीरिरे
मयः पतिभ्यो जनये परिष्वजे ॥
स्योनं ध्रुवं प्रजायै धारयामि
तेऽश्मानं देव्याः पृथिव्या उपस्थे ।
तमा तिष्ठानुमाद्या सुवर्चा
दीर्घं त आयुः सविता कृणोतु ॥
येनाग्निरस्या भूम्या
हस्तं जग्राह दक्षिणम् ।
तेन गृह्णामि ते हस्तं मा व्यथिष्ठा
मया सह प्रजया च धनेन च ॥
देवस्ते सविता हस्तं गृह्णातु
सोमो राजा सुप्रजसं कृणोतु ।
अग्निः सुभगां जातवेदाः
पत्ये पत्नीं जरदष्टिं कृणोतु ॥
गृह्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरन्धि-
र्मह्यं त्वादुर्गार्हपत्याय देवाः ॥
भगस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत् ।
पत्नी त्वमसि धर्मणाहं गृहपतिस्तव ॥
ममेयमस्तु पोष्या मह्यं त्वादाद् बृहस्पतिः ।
मया पत्या प्रजावति सं जीव शरदः शतम् ॥
त्वष्टा वासो व्यदधाच्छुभे कं
बृहस्पतेः प्रशिषा कवीनाम् ।
तेनेमां नारीं सविता भगश्च
सूर्यामिव परि धत्तां प्रजया ॥
इन्द्राग्नी द्यावापृथिवी मातरिश्वा
मित्रावरुणा भगो अश्विनोभा ।
बृहस्पतिर्मरुतो ब्रह्म सोम
इमां नारीं प्रजया वर्धयन्तु ॥
बृहस्पतिः प्रथमः सूर्यायाः
शीर्षे केशाँ अकल्पयत् ।
तेनेमामश्विना नारीं
पत्ये सं शोभयामसि ॥
इदं तद्रूपं यदवस्त योषा
जायां जिज्ञासे मनसा चरन्तीम् ।
तामन्वर्तिष्ये सखिभिर्नवग्वैः
क इमान् विद्वान् वि चचर्त पाशान् ॥
अहं वि ष्यामि मयि रूपमस्या
वेददित् पश्यन् मनसः कुलायम् ।
न स्तेयमद्मि मनसोदमुच्ये
स्वयं श्रथ्नानो वरुणस्य पाशान् ॥
प्र त्वा मुञ्चामि वरुणस्य पाशाद्
येन त्वाबध्नात् सविता सुशेवाः ।
उरुं लोकं सुगमत्र पन्थां
कृणोमि तुभ्यं सहपत्न्यै वधु ॥
उद्यच्छध्वमप रक्षो
हनाथेमां नारीं सुकृते दधात ।
धाता विपश्चित् पतिमस्यै विवेद
भगो राजा पुर एतु प्रजानन् ॥
भगस्ततक्ष चतुरः पादान्
भगस्ततक्ष चत्वार्युष्पलानि ।
त्वष्टा पिपेश मध्यतोऽनु
वर्धान्त्सा नो अस्तु सुमङ्गली ॥

सुकिंशुकं वहतुं विश्वरूपं
हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं
स्योनं पतिभ्यो वहतुं कृणु त्वम् ॥
अभ्रातृघ्नीं वरुणापशुघ्नीं बृहस्पते ।
इन्द्रापतिघ्नीं पुत्रिणीमास्मभ्यं सवितर्वह ॥
मा हिंसिष्टं कुमार्यं स्थूणे देवकृते पथि ।
शालाया देव्या द्वारं स्योनं कृण्मो वधूपथम् ॥
ब्रह्मापरं युज्यतां ब्रह्म पूर्वं
ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः ।
अनाव्याधां देवपुरां प्रपद्य
शिवा स्योना पतिलोके वि राज ॥
तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह ।
स नः पतिभ्यो जायां दा अग्ने प्रजया सह ॥
पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥
सोमस्य जाया प्रथमं गन्धर्वस्तेऽपरः पतिः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥
सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥
आ वामगन्त्सुमतिर्वाजिनीवसू
न्यश्विना हृत्सु कामा अरंसत ।
अभूतं गोपा मिथुना शुभस्पती
प्रिया अर्यम्णो दुर्यां अशीमहि ॥
सा मन्दसाना मनसा शिवेन
रयिं धेहि सर्ववीरं वचस्यम् ।
सुगं तीर्थं सुप्रपाणं शुभस्पती
स्थाणुं पथिष्ठामप दुर्मतिं हतम् ॥
या ओषधयो या नद्यो यानि क्षेत्राणि या वना ।
तास्त्वा वधु प्रजावतीं पत्ये रक्षन्तु रक्षसः ॥
एमं पन्थामरुक्षाम सुगं स्वस्तिवाहनम् ।
यस्मिन् वीरो न रिष्यत्यन्येषां विन्दते वसु ॥
इदं सु मे नरः शृणुत
ययाशिषा दम्पती वाममश्नुतः ।

ये गन्धर्वा अप्सरसश्च
देवीरेषु वानस्पत्येषु येऽधि तस्थुः ।
स्योनास्ते अस्यै वध्वै भवन्तु
मा हिंसिषुर्वहतुमुह्यमानम् ॥
ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥
मा विदन् परिपन्थिनो य आसीदन्ति दम्पती ।
सुगेन दुर्गमतीतामप द्रान्त्वरातयः ॥
सं काशयामि वहतुं ब्रह्मणा
गृहैरघोरेण चक्षुषा मित्रियेण ।
पर्याणद्धं विश्वरूपं यदस्ति
स्योनं पतिभ्यः सविता तत् कृणोतु ॥
शिवा नारीयमस्तमागन्निमं
धाता लोकमस्यै दिदेश ।
तामर्यमा भगो अश्विनोभा
प्रजापतिः प्रजया वर्धयन्तु ॥
आत्मन्वत्युर्वरा नारीयमागन्
तस्यां नरो वपत बीजमस्याम् ।
सा वः प्रजां जनयद्वक्षणाभ्यो
बिभ्रती दुग्धमृषभस्य रेतः ॥
प्रति तिष्ठ विराडसि विष्णुरिवेह सरस्वति ।
सिनीवालि प्र जायतां भगस्य सुमतावसत् ॥
उद् व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
मादुष्कृतौ व्येनसावघ्न्यावशुनमारताम् ॥
अघोरचक्षुरपतिघ्नी स्योना
शग्मा सुशेवा सुयमा गृहेभ्यः ।
वीरसूर्देवृकामा सं
त्वयैधिषीमहि सुमनस्यमाना ॥
अदेवृघ्न्यपतिघ्नीहैधि
शिवा पशुभ्यः सुयमा सुवर्चाः ।
प्रजावती वीरसूर्देवृकामा
स्योनेममग्निं गार्हपत्यं सपर्य ॥

(१) अथर्व. १४।२।१-७५.

उत्तिष्ठेतः किमिच्छन्तीदमागा
अहं त्वेडे अभिभूः स्वाद् गृहात् ।
शून्यैषी निर्ऋते याजगन्धो-
त्तिष्ठाराते प्र पत मेह रंस्थाः ॥
यदा गार्हपत्यमसपर्यैत् पूर्वमग्निं वधूरियम् ।
अधा सरस्वत्यै नारि पितृभ्यश्च नमस्कुरु ॥
शर्म वर्मैतदा हरास्यै नार्या उपस्तरे ।
सिनीवालि प्र जायतां भगस्य सुमतावसत् ॥
यं बल्वजं न्यस्यथ चर्म चोपस्तृणीथन ।
तदा रोहतु सुप्रजा या कन्या विन्दते पतिम् ॥
उप स्तृणीहि बल्वजमधि चर्मणि रोहिते ।
तत्रोपविश्य सुप्रजा इममग्निं सपर्यतु ॥
आ रोह चर्मोप सीदाग्निमेष
देवो हन्ति रक्षांसि सर्वा ।
इह प्रजां जनय पत्ये अस्मै
सुज्यैष्ठ्यो भवत् पुत्रस्त एषः ॥
वि तिष्ठन्तां मातुरस्या उपस्था-
न्नानारूपाः पशवो जायमानाः ।
सुमङ्गल्युप सीदेममग्निं
संपत्नी प्रति भूषेह देवान् ॥
सुमङ्गली प्रतरणी गृहाणां
सुशेवा पत्ये श्वशुराय शम्भूः ।
स्योना श्वश्र्वै प्र
गृहान् विशेमान् ॥
स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः ।
स्योनास्यै सर्वस्यै विशे स्योना पुष्टायैषां भव ॥
सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वा दौर्भाग्यैर्विपरेतन ॥
या दुर्हार्दो युवतयो याश्चेह जरतीरपि ।
वर्चो न्वस्यै सं दत्ताथास्तं विपरेतन ॥
रुक्मप्रस्तरणं वह्यं विश्वा रूपाणि बिभ्रतम् ।
आरोहत् सूर्या सावित्री बृहते सौभगाय कम् ॥
आ रोह तल्पं सुमनस्यमानेह
प्रजां जनय पत्ये अस्मै ।

इन्द्राणीव सुबुधा बुध्यमाना
ज्योतिरग्रा उषसः प्रति जागरासि ॥
देवा अग्रे न्यपद्यन्त पत्नीः
समस्पृशन्त तन्वस्तनूभिः ।
सूर्येव नारि विश्वरूपा महित्वा
प्रजावती पत्या सं भवेह ॥
उत्तिष्ठेतो विश्वावसो
नमसेडामहे त्वा ।
जामिमिच्छ पितृषदं न्यक्तां
स ते भागो जनुषा तस्य विद्धि ॥
अप्सरसः सधमादं मदन्ति
हविर्धानमन्तरा सूर्यं च ।
तास्ते जनित्रमभि ताः परेहि
नमस्ते गन्धर्वर्तुना कृणोमि ॥
नमो गन्धर्वस्य नमसे
नमो भामाय चक्षुषे च कृण्मः ।
विश्वावसो ब्रह्मणा ते
नमोऽभि जाया अप्सरसः परेहि ॥
राया वयं सुमनसः
स्यामोदितो गन्धर्वमावीवृताम ।
अगन्त्स देवः परमं सधस्थ-
मगन्म यत्र प्रतिरन्त आयुः ॥
सं पितरावृत्विये सृजेथां
माता पिता च रेतसो भवाथः ।
मर्य इव योषामधिरोहयैनां
प्रजां कृण्वाथामिह पुष्यतं रयिम् ॥
तां पूषं छिवतमामेरयस्व
यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विश्रयाति
यस्यामुशन्तः प्रहरेम शेपः ॥
आ रोहोरुमुप धत्स्व हस्तं
परि ष्वजस्व जायां सुमनस्यमानः ।
प्रजां कृण्वाथामिह मोदमानौ
दीर्घं वामायुः सविता कृणोतु ॥

आ वां प्रजां जनयतु प्रजापति-
रहोरात्राभ्यां समनक्त्वर्यमा।
अदुर्मङ्गली पतिलोकमा विशेमं
शं नो भव द्विपदे शं चतुष्पदे ॥
देवैर्दत्तं मनुना साकमेतद्
वाधूयं वासो वध्वश्च वस्त्रम् ॥
यो ब्रह्मणे चिकितुषे ददाति
स इद्रक्षांसि तल्पानि हन्ति ॥
यं मे दत्तो ब्रह्मभागं वधूयो-
र्वाधूयं वासो वध्वश्च वस्त्रम्।
युवं ब्रह्मणेऽनुमन्यमानौ
बृहस्पते साकमिन्द्रश्च दत्तम् ॥
स्योनाद्योनेरधि बुध्यमानौ
हसामुदौ महसा मोदमानौ।
सुगू सुपुत्रौ सुगृहौ
तराथो जीवावुषसो विभातीः ॥
नवं वसानः सुरभिः सुवासा
उदागां जीव उषसो विभातीः।
आण्डात् पतत्रीवामुक्षि
विश्वस्मादेनसस्परि ॥
शुम्भनी द्यावापृथिवी अन्तिसुम्ने महिव्रते।
आपः सप्त सुस्रुवुर्देवीस्ता नो मुञ्चन्त्वंहसः ॥
सूर्यायै देवेभ्यो मित्राय वरुणाय च।
ये भूतस्य प्रचेतसस्तेभ्य इदमकरं नमः ॥
य ऋते चिदभिश्रिषः
पुरा जत्रुभ्य आतृदः।
संधाता संधिं मघवा पुरूवसु-
र्निष्कर्ता विह्रुतं पुनः ॥
अपास्मत्तम उच्छतु नीलं
पिशङ्गमुत लोहितं यत्।
निर्दहनी या पृषातक्यस्मिन्
तां स्थाणावध्या सजामि ॥
यावतीः कृत्या उपवासने
यावन्तो राज्ञो वरुणस्य पाशाः।
व्यृद्धयो या असमृद्धयो या
अस्मिन् ता स्थाणावधि सादयामि ॥
या मे प्रियतमा तनूः
सा मे बिभाय वाससः।
तस्याग्रे त्वं वनस्पते
नीविं कृणुष्व मा वयं रिषाम ॥
ये अन्ता यावतीः सिचो
य ओतवो ये च तन्तवः।
वासो यत् पत्नीभिरुतं
तन्नः स्योनमुप स्पृशात् ॥
उशतीः कन्यला इमाः पितृलोकात् पतिं यतीः।
अव दीक्षामसृक्षत स्वाहा ॥
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन्।
वर्चो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥
बृहस्पतिना०।
तेजो गोषु प्रविष्टं यत् तेन० ॥
बृहस्पतिना०।
भगो गोषु प्रविष्टो यस्तेन० ॥
बृहस्पतिना०।
यशो गोषु प्रविष्टं यत् तेन० ॥
बृहस्पतिना०।
पयो गोषु प्रविष्टं यत् तेन ० ॥
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन्।
रसो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ॥
यदीमे केशिनो जना गृहे ते
समनर्तिषू रोदेन कृण्वन्तो३ घम्।
अग्निष्ट्वा तस्मादेनसः
सविता च प्र मुञ्चताम् ॥
यदीयं दुहिता तव विकेश्य-
रुदद् गृहे रोदेन कृण्वत्यघम्।
अग्निष्ट्वा० ॥
यज्जामयो यद्युवतयो गृहे ते
समनर्तिषू रोदेन कृण्वतीरघम्।
अग्निष्ट्वा० ॥

यत्ते प्रजायां पशुषु यद्वा
गृहेषु निष्ठितमघकृद्भिरघं कृतम् ।
अग्निष्ट्वा तस्मादेनसः
सविता च प्र मुञ्चताम् ॥
इयं नार्युप ब्रूते पूल्यान्यावपन्तिका ।
दीर्घायुरस्तु मे पतिर्जीवाति शरदः शतम् ॥
इहेमाविन्द्र सं नुद चक्रवाकेव दम्पती ।
प्रजयैनौ स्वस्तकौ विश्वमायुर्व्यश्नुताम् ॥
यदासन्द्यामुपधाने यद्वोपवासने कृतम् ।
विवाहे कृत्यां यां चक्रुरास्नाने तां नि दध्मसि ॥
यद् दुष्कृतं यच्छमलं विवाहे वहतौ च यत् ।
तत् संभलस्य कम्बले मृज्महे दुरितं वयम् ॥
संभले मलं सादयित्वा कम्बले दुरितं वयम् ।
अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषत् ॥
कृत्रिमः कण्टकः शतदन् य एषः ।
अपास्याः केश्यं मलमप शीर्षण्यं लिखात् ॥
अङ्गादङ्गाद् वयमस्या
अप यक्ष्मं नि दध्मसि ।
तन्मा प्रापत् पृथिवीं मोत
देवान् दिवं मा प्रापदुर्वन्तरिक्षम् ।
अपो मा प्रापन्मलमेतदग्ने
यमं मा प्रापत् पितॄंश्च सर्वान् ॥
सं त्वा नह्यामि पयसा पृथिव्याः
सं त्वा नह्यामि पयसौषधीनाम् ।
सं त्वा नह्यामि प्रजया धनेन
सा संनद्धा सनुहि वाजमेमम् ॥
अमोऽहमस्मि सा त्वं सामाह-
मस्म्यृक्त्वं द्यौरहं पृथिवी त्वम् ।
ताविह सं भवाव
प्रजामा जनयावहै ॥
जनियन्ति नावग्रवः पुत्रियन्ति सुदानवः ।
अरिष्टासू सचेवहि बृहते वाजसातये ॥
ये पितरो वधूदर्शा इमं वहतुमागमन् ।
ते अस्यै वध्वै संपत्न्यै प्रजावच्छर्म यच्छन्तु ॥

येदं पूर्वागन् रशनायमाना
प्रजामस्यै द्रविणं चेह दत्त्वा ।
तां वहन्त्वगतस्यानु पन्थां
विराडियं सुप्रजा अत्यजैषीत् ॥

प्र बुध्यस्व सुबुधा बुध्यमाना
दीर्घायुत्वाय शतशारदाय ।
गृहान् गच्छ गृहपत्नी यथासो
दीर्घं त आयुः सविता कृणोतु ॥

दुहितृविवाहः पित्रा कर्तव्यः इत्यत्र
त्वष्टृकृतो दुहितृविवाहः लिङ्गम्

त्वष्टा दुहित्रे वहतुं कृणोति
तेनेदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना
महो जाया विवस्वतो ननाश ॥

अस्य मन्त्रस्य ‘ अपागूहन् ’ ( १८।२।३३ ) इति उपरि *वक्ष्यमाणस्य च अर्थविवरणरूपा आख्यायिका* बृहद्देवतानुक्रमणिकाकारेण स्पष्टं प्रदर्शिता । ‘ अभवन्मिथुनं त्वष्टुः सरण्युस्त्रिशिराश्च ह । स वै सरण्युं प्रायच्छत् स्वयमेव विवस्वते ॥ ततः सरण्व्यां जज्ञाते यमयम्यौ विवस्वतः । तौ चाप्युभौ यमौ स्याता ज्यायास्ताभ्यां तु वै यमः ॥ दृष्ट्वा भर्तुः परोक्षं तु सरण्युः सदृशीं स्त्रियम् । निक्षिप्य तद्युगं तस्यामश्वा भूत्वापचक्रमे ॥ अविज्ञाता *विवस्वांस्तु तस्यामजनयन्मनुम् । राजर्षिरभवत्सोऽपि विव*स्वानिव तेजसा ॥ स विज्ञाय त्वपक्रान्तां सरण्युं त्वश्वरूपिणीम् । त्वाष्ट्रीं प्रति जगामाशु अश्वो भूत्वा सलक्षणः ॥ सरण्युश्च विवस्वन्तं विदित्वा हयरूपिणम् । मैथुनायोपचक्राम तां चाश्वामारुरोह सः । ततस्तयोस्तु योगेन शुक्रं तदपतत् भुवि । उपजिघ्रति सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥ आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः । नासत्यश्चैव दस्रश्च यौ तु तावश्विनाविति ॥ ’ त्वष्टा सिक्तस्य रेतसः पुरुषाद्याकारनिर्माता देव उच्यते । ‘ यावच्छो वै *रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति* ’ ( तैसं. १।५।

---

( १ ) अ॒सं. १८।१।५३ ; ऋसं. १०।१७।१ ति तेनेदं ( तीतीद ) ; नि. १२।११.

९।२) इत्यादिश्रुतेः। एतन्नामको देवः दुहित्रे स्वदुहितुः पुत्र्याः सरण्व्याः। षष्ठ्यर्थे चतुर्थी। वहतुं विवाहं कृणोति करोति इति तेन कारणेनेदं विश्वं भुवनं भूतजातं समेति संगतमभूत्। तद्दिदृक्षया इति शेषः। यमस्य देवस्य माता जनयित्री सरण्युः पर्युह्यमाना परिवाहं उद्वाहं त्वष्ट्रा पित्रा क्रियमाणा। महः महतः अतिशयितप्रभावस्य विवस्वतः सूर्यस्य जाया सरण्युः ननाश अदर्शनं तिरोधानं प्राप्ता। 'अपागूहन्नमृतां मर्त्येभ्यः' (१८।२।३३) इति वक्ष्यमाणत्वात्। अत्र निरुक्तम्–'त्वष्टा दुहितुर्वहनं करोतीतीदं सर्वं भुवनं समेति। यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश। रात्रिरादित्यस्य। आदित्योदयेऽन्तर्धीयते' (नि. १२।११) इति।

अस्ता.

अपागूहन्नमृतां मर्त्येभ्यः
कृत्वा सवर्णामदधुर्विवस्वते।
उताश्विनावभरद् यत् तदासी-
दजहादु द्वा मिथुना सरण्यूः॥

'त्वष्टा दुहित्रे' (१।५३) इत्यत्र इतिहासोऽभिहितः। सोऽत्र ऋगर्थप्रतिपत्तये पुनः स्मार्यते। त्वष्टृदुहिता सरण्युर्नाम विवस्वतः आदित्यात् यमौ मिथुनौ जनयाचकार। तौ च यमलौ यमश्च यमी चेत्याहुरैतिहासिकाः। माध्यमिकोऽग्निर्माध्यमिका वाक् चेति नैरुक्ताः। ततः सरण्युस्तत्तेजः असहमाना स्वसमानरूपां अन्यां प्रतिनिधाय आश्वं रूपं कृत्वा प्रदुद्राव। सोऽपि विवस्वान् *तामन्वगात् आश्वमेव रूपं कृत्वा तां समभवत्। ततः अश्विनौ* जज्ञाते। प्रतिनिहितायां सवर्णायां विवस्वत आदित्यात् मनुर्जज्ञे इत्ययमर्थोऽत्र प्रतिपाद्यते। मर्त्येभ्यः मरणधर्मभ्यो मनुष्येभ्यः अमृतान् मरणधर्मरहितान् आत्मनः देवा अपागूहन् तिरोहितानकुर्वन्। अमृतत्वप्रापकं स्वकीयं रूपं देवा मनुष्येभ्यः प्राच्छादयन्। तथा सवर्णां समानरूपां अन्यां स्त्रियं कृत्वा विवस्वते आदित्याय अदधुः अधारयन्। प्रायच्छन्नित्यर्थः। उत अपि च सरण्व्या यत् आश्वं रूपं तदानीं स्वीकृतमासीत् तत् अश्विनौ अभरत् समभरत्। उदपादयदित्यर्थः। यद्वा अश्वभूतयोः सरण्युविवस्वतोर्यद् रेत आसीत् तद् अश्विनावजनयदित्यर्थः। सा च सरण्युः त्वष्टृदुहिता निर्गमनसमये द्वा द्वौ मिथुना मिथुनौ स्त्रीपुंसात्मकौ अजहात् पर्यत्यजत्। उशब्दः अवधारणे।

अस्ता.

प्राजापत्यायाः सूर्याया विवाहः सोमेन

प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्। तस्यै सर्वे देवा वरा आगच्छन्। तस्या एतत्सहस्रं वहतुमन्वाकरोद्यदेतदाश्विनमित्याचक्षते। अनाश्विनं हैव तद्यदर्वाक्सहस्रम्। तस्मात्तत्सहस्रं वैव शंसेद्भूयो वा॥

पुरा कदाचित् प्रजापतिः कांचिद्दुहितरं सोमाय राज्ञे प्रायच्छत् विवाहार्थं दातुमुद्युक्तवान्। कीदृशीं दुहितरं सूर्यामित्येतन्नामधेययुक्तां सावित्रीं सवित्रा लब्धाम्। यद्यप्येषा सवितुः पुत्री तथापि स्नेहातिशयेन प्रजापतेर्दुहितेत्युच्यते। तस्यै दुहित्रे तल्लाभार्थं सर्वे देवा वरा भूत्वा प्रजापतेः सकाशमागमन्। स च प्रजापतिस्तस्यै दुहितृलाभार्थं एतत् वक्ष्यमाणं ऋचां सहस्रं वहतुं अन्वाकरोत्। वहनस्य विवाहस्यालङ्कारार्थं माङ्गल्यार्थं च वरस्य पुरतो वहनीयो हरिद्रागुडादिमङ्गलद्रव्यसंघो वहतुः यदेतदृक्सहस्रं याज्ञिका आश्विनसहस्रमित्याचक्षते तत्सहस्रमेव वहतुरूपेण प्रत्यभिज्ञातवान्। स देवानां मध्ये यो वरः आश्विनशस्त्रमन्त्रान् एक एव पठति तस्मै दास्यामीति प्रतिज्ञातवानित्यर्थः। सहस्रादर्वाचीना ऋचो *यस्मिन् शस्त्रे तदर्वाक्सहस्रं नास्ति यदस्ति तदाश्विन*मेव। यस्मात् आश्विनं सहस्रं प्रजापतिरङ्गीकृतवान्, तस्माद्धोता सहस्रमेव शंसेत्। ततोऽप्यधिकं वा शंसेत्, न तु न्यूनम्।

ऐब्रा.

पुत्रमहिमा विवाहकर्तव्यताज्ञापकः

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस। तस्य ह शतं जाया बभूवुः। तासु पुत्रं न लेभे। तस्य ह पर्वतनारदौ गृह ऊषतुः। स ह नारदं पप्रच्छ॥

(१) शौसं. १८।२।३३; ऋसं. १०।१७।२ इत्वा (इत्वी) ददु (ददु); नि. १२।१०.

(१) ऐब्रा. १३।१.
(२) ऐब्रा. ३३।१.

हरिश्चन्द्रो नाम राजर्षिः 'प्रस्कण्वहरिश्चन्द्रावृषी' इति पाणिनिना सूत्रितत्वात्। स च वेधसो नृपतेः पुत्रः इक्ष्वाकुवंशोद्भवो राजा पुत्रहीन आस। स च शतसंख्यानां जायानां मध्ये कस्यांचिदपि जायायां पुत्रं न लेभे। तस्य राज्ञो गृहे पर्वतनारदनामानौ यौ ऋषी तौ निवासं चक्रतुः। तयोर्मध्ये नारदमृषिमेतया गाथया राजा पप्रच्छ। ऐत्राखा.

**यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न।**
**किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारदेति॥**

तां गाथां दर्शयति– यमिति। ये देवमनुष्यादयो विजानन्ति विवेकज्ञानयुक्ताः, ये च पश्वादयो न विजानन्ति विवेकज्ञानरहिताः। ते सर्वेऽपि नु क्षिप्रं यमिमं पुत्रमिच्छन्ति तेन पुत्रेण किंस्विद्विन्दते किंनाम फलं पिता लभते हे नारद मे मह्यं तत्फलमाचक्ष्व इति राज्ञः प्रश्नः। ऐत्राखा.

**स एकया पृष्टो दशभिः प्रत्युवाच॥**

तस्योत्तरमवतारयति। स नारदः एकया गाथया पृष्टः सन् दशभिर्गाथाभिः प्रत्युत्तरमुक्तवान्। ऐत्राखा.

**ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति।**
**पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥**

उत्पन्नस्य सुखेन जीवतः पुत्रस्य मुखं पिता यदि पश्येत्, तदानीमस्मिन् पुत्रे स्वकीयमृणं लौकिकं वैदिकं च संनयति सम्यगवस्थापयति। लौकिकस्यावस्थापनात् पुत्रपौत्रादिभिर्ऋणं प्रत्यर्पणीयमिति स्मृतिकारा आहुः। वैदिकं तु 'त्रिभिर्ऋणवा जायते' इत्यादिश्रुत्युक्तं पूर्वमेवोदाहृतम्। तस्य च पुत्रावस्थापनं संप्रत्तिनामकेन कर्मणा संपद्यते। तच्च कर्म वाजसनेयिभिराम्नातम्— 'अथातः संप्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोकः' इति। ब्रह्म मया कर्तव्यं वेदाध्ययनं मयाऽनुष्ठेया यज्ञाश्च मया संपाद्या उत्तमा लोकाश्चेत्येतत्सर्वं पुत्रेण त्वयैव संपादनीयमिति पितृवाक्यस्यार्थः। सर्वमहं संपादयिष्यामीति पुत्रवाक्यस्यार्थः। अत्राप्यारण्यककाण्डे संक्षिप्य संदर्शयिष्यते— 'सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते' इति। एवमृणं पुत्रे समर्पयति। तथैवामृतत्वं मरणरहितं मुक्तिपदं च गच्छति। पुत्रार्पितलौकिकवैदिकभारस्याविघ्नेन तत्त्वज्ञानसंपादनात्। ऐत्राखा.

**यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि।**
**यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः॥**

पृथिव्यां भोगाः सस्यनिवासादयः। जातवेदसि अग्नौ भोगा दहनपचनादयः। अप्सु भोगाः स्नानपानादयः। प्राणिनामेते सर्वे भोगा यावन्तः सन्ति ततः तावद्भ्यः सर्वेभ्यो भोगेभ्यो भूयानभ्यधिकः पितुः पुत्रे भोगो विद्यते, अत्यन्तसुखहेतुत्वात्। तथा चाऽऽहुः— 'पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः' इति। ऐत्राखा.

**शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः।**
**आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी॥**

पितरो जनका उत्पन्नेन पुत्रेण शश्वत् सर्वदा लोकद्वयेऽपि बहुलमभ्यधिकं तमः ऐहिकामुष्मिकं च दुःखमत्यायन्नतिक्रामन्ति। तथा च बौधायन आह–'पुदिति नरकस्याख्या दुःखं च नरकं विदुः। पुत्तस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च॥' इति। किंच, हि यस्मात्कारणात् पितुः पुत्र उत्पन्न इत्युक्ते सति पिता स्वस्मात् स्वयमेव जज्ञे उत्पन्न इत्युक्तं भवति। ततः पिता यथा स्वयं स्वकीयं दुःखं विनाशयति तथा पुत्रोऽप्येतद्दुःखं विनाशयतीति द्रष्टव्यम्। तस्मात्स पुत्रः इरावत्यन्नयुक्ताऽतितारिणी नदीसमुद्रादेरतितरणहेतुर्नौरिति शेषः। यथा नौः दुर्घटं नद्यादिकं तारयति एवं पुत्रोऽप्यैहिकमामुष्मिकं च दुःखं तारयतीत्यर्थः। ऐत्राखा.

**किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः।**
**पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः॥**

अत्र मलाजिनश्मश्रुतपःशब्दैराश्रमचतुष्टयं विवक्षितम्। मलरूपाभ्यां शुक्र(क्र)शोणिताभ्यां संयोगान्मलशब्देन गार्हस्थ्यं विवक्षितम्। कृष्णाजिनसंयोगात् अजिनशब्देन ब्रह्मचर्यं विवक्षितम्। क्षौरकर्मराहित्यात् श्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम्। इन्द्रियनियमसद्भावात्तपःशब्देन पारिव्राज्यं विवक्षितम्। मलं गार्हस्थ्यं किं नु किं नाम सुखं करिष्यति न किंचिदित्यर्थः। एवमुत्तर-

त्रापि योज्यम् । हे ब्रह्माणो विप्रा विप्रक्षत्रियाद्याः सर्वे यूयं सुखहेतुत्वात् पुत्रमिच्छध्वम् । स वै स एव पुत्रोऽवदावदो लोकः । वदितुमयोग्यानि निन्दावाक्यानि अवदाः, तैर्वाक्यैर्नोद्यते न कथ्यते इत्यवदावदः । एवं प्रपदेन तेन कथ्यते इति । अवदावदो दोषराहित्यान्निन्दानर्ह इत्यर्थः । तादृशो लोको भोगहेतुः पुत्रः । तस्मादाश्रमेभ्योऽप्याधिक्येन पुत्रेच्छा कर्तव्या । यद्यपि हरिश्चन्द्र एवात्र प्रष्टा तथापि तेन सह ऋषीणां बहूनां समायामवस्थानात् ब्रह्माण इति संबोधनम् । ऐब्रा॰

अन्नं ह प्राणः शरणं ह वासो
रूपं हिरण्यं पशवो विवाहाः ।
सखा ह जाया कृपणं ह दुहिता
ज्योतिर्ह पुत्रः परमे व्योमन् ॥

अन्नादयो लोके सुखहेतुत्वेन प्रसिद्धाः । तथाहि, शरीरे प्राणावस्थितिहेतुत्वात् अन्नमेव प्राणः । वासः शीतोपद्रवाद्रक्षकत्वेन शरणं गृहसमानम् । हिरण्यं कर्णाभरणादिकं दृष्टिप्रियत्वाद्रूपसंपादकम् । पशवो गवाश्वादयो विवाहविशेषेण निर्वाहकाः । जाया भोगे सहकारित्वात् सखा ह सखिस्वरूपैव । एवमेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिकं अल्पमेव सुखं प्रयच्छन्ति । दुहिता ह पुत्रीति कृपणं केवलदुःखकारित्वाद्दैन्यहेतुः । तथा च स्मर्यते— 'संभवे स्वजनदुःखकारिका संप्रदानसमयेऽर्थहारिका । यौवनेऽपि बहुदोषकारिका दारिका हृदयदारिका पितुः ॥' इति । पुत्रो ह पुनस्तु ज्योतिःस्वरूपं तमोनिवारकत्वेन स हि पितरं परमे व्योमन् उत्कृष्टे आकाशे परब्रह्मस्वरूपे अवस्थापयति । 'आकाशस्तल्लिङ्गात्' (ब्रसू. १।१।२२) इत्यनेन न्यायसूत्रेण आकाशव्योमादिशब्दानां ब्रह्मपरत्वं निर्णीतम् । पुत्रस्य च ब्रह्मज्ञानहेतुत्वं पूर्वमेव 'अमृतत्वं न गच्छति' इत्यत्र प्रतिपादितम् ।

ऐब्रा॰

पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥

पत्युः आकारद्वयमस्ति । वर्तमानपुरुषाकारः एकः, रेतोरूपेण गर्भाकारो द्वितीयः । जायाया अपि आकारद्वयमस्ति । पतिरूपमाकारं प्रति जाया भवति । गर्भरूपमाकारं प्रति माता भवति । अतः स तादृशः पतिः स्वयं रेतोरूपेण गर्भो भूत्वा पूर्वमवस्थितां जायां भविष्यदाकारेण मातरं सतीं प्रविशति । तस्यां मातरि पुनर्नवो भूत्वा पूर्वमन्यस्यां मातरि उत्पन्नो जरठः । इदानीं पुनर्नूतनबालो भूत्वा तस्यामिदानींतन्यामस्यां मातरि गर्भपाके सति दशमे मास्युत्पद्यते । तस्मात्पुत्रः स्वस्मादन्यो न भवति । ऐब्रा॰

तज्जाया जाया भवति यदस्यां जायते पुनः ।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥

यत् यस्मात्कारणात् अस्यां गर्भधारिण्यां अयं पिता पुत्ररूपेण पुनर्जायते तत् तस्मात्कारणात् लोकप्रसिद्धा या जायाऽस्ति सा जायते अस्यां इति व्युत्पत्त्या जायाशब्दवाच्या भवति । किंच एषा भूत्याभूतिशब्दाभ्याममिधीयते । भवत्यस्यां पुत्ररूपेण पतिरित्येषा भूतिशब्दवाच्या, रेतोरूपेणागत्य अस्यां पुत्ररूपेण भवतीत्याभूतिशब्दवाच्या । एतत् एतस्यां स्त्रियां बीजं रेतोरूपं निधीयते प्रक्षिप्यते, तस्मादुक्ता शब्दा उपपद्यन्ते । ऐब्रा॰

देवाश्चैतामृषयश्च तेजः समभरन्महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥

एतां एतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं महत्तेजो रेतोरूपं सारं समभरन् पुत्रोत्पादनाय संपादितवन्तः । स्वयमेव संपाद्य ततो मनुष्यानित्यब्रुवन् । हे मनुष्या येयमिदानीं जायारूपेण वर्तते सेयं पुनर्वो युष्माकं पुत्ररूपे जन्मनि जननी भवति । ऐब्रा॰

नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः ।
तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति ॥

लोको लोकजन्यं सुखमपुत्रस्य नास्ति । न हि पुत्रदर्शनेन यत्सुखं तदन्यदर्शनेन क्वचिदपि दृश्यते इति यदस्ति तत् सर्वे गोमहिष्यादयो जानन्ति यस्मात् तस्मादेव कारणात् पशुजातौ जातः पुत्रो वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति । ऐब्रा॰

एष पन्था उरुगायः सुशेवो
यं पुत्रिण आक्रमन्ते विशोकाः ।
तं पश्यन्ति पशवो वयांसि च
तस्मात्ते मात्राऽपि मिथुनी भवन्ति ॥

निधिः । तादृशः ऋषीणां संबन्धी यो वेदाख्यो निधिः तस्य गोपायिता इति वेदं अनूच्यमानं आहुः बुधाः । अतस्तेषां प्रवचनं धनमिति गम्यते । शब्रासा.

पतिप्रतिष्ठितत्वात् स्त्रीणां कर्तव्यं विवाहः

[1]तेदु हापि कुमार्यः परीयुर्भगस्य भजामहा इति । या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भगस्येष्टे । तस्मादु हापि कुमार्यः परीयुर्भगस्य भजामहा इति ॥

अस्य परिगमनस्य भगप्रसिद्धिहेतुत्वमुपपादयति– तदु हापीति । तत् तदा कुमार्यः अपि तमभिमुक्तप्रकारेण परीयुः भगस्य सौभाग्यस्य । कर्मणि षष्ठी । सौभाग्यं भजामहै प्राप्नुयामहै इति अनेनाभिप्रायेण । यो ह वा इति । अम्बिका नाम या खलु रुद्रस्य स्वसा सा भगस्य ईष्टे सौभाग्यस्य स्वामिनी भवति । तस्मात् अम्बिका-सहितस्य रुद्रस्य संबन्धिनि कर्मणि भगप्राप्तिकामाः कुमार्योऽपि परीयुरित्यर्थः । शब्रासा.

[2]तासामुतासां मन्त्रोऽस्ति । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुत इति । सा यदित इत्याह ज्ञातिभ्य-स्तदाह । मामुत इति पतिभ्यस्तदाह । पतयो ह्येव स्त्रियै प्रतिष्ठा । तस्मादाह मामुत इति ॥

कुमारीणां परिगमने अन्योऽपि मन्त्रो विद्यत इत्याह– तासामिति । आसां पूर्वोक्तानां तासां कुमारीणामपि परि-गमने अन्यो मन्त्रो विद्यते । कः पुनरसाविति तं पठति– त्र्यम्बकमिति । पतिर्विद्यते लभ्यते अनेन इति पतिवेदनो रुद्रः । अन्यदुक्तार्थम् । चतुर्थपादस्य तात्पर्यमाह – सा यदित इति । इदंशब्देन पितृकुलं परामृश्यते । इतः अस्मात् पितृकुलात् ज्ञातिभ्यः सकाशादहं मुक्षीय मुक्ता भूयासम् । अमुतः अमुष्मात् कुलात् पतिसकाशात् मा मुक्षीय विप्रयुक्ता न भवेयमिति तात्पर्यार्थः । पतयो ह्येवेति । अग्निहोत्रादिधर्मेषु पत्या सहैव स्त्रिया अधि-कारः न तु स्वातन्त्र्येण, हि यतः अतः स्त्रीणां पतय एव प्रतिष्ठा आश्रयभूता इत्यर्थः । शब्रासा.

जाययैव पुरुषः पूर्णो भवति

[1]स रोक्ष्यन् जायामामन्त्रयते । जाय एहि स्वो रोहावेति । रोहावेत्याह जाया । तद्यज्जायामामन्त्र-यते । अर्धो ह वा एष आत्मनो यज्जाया । तस्मा-द्यावज्जायां न विन्दते नैव तावत्प्रजायतेऽसर्वो हि तावद्भवति । अथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्वो भवति । सर्व एतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते ॥

रोहणकाले जायामन्त्रणं विधत्ते– स रोक्ष्यन्निति । रोहणं करिष्यन् हे जाये एहि आगच्छ स्वः स्वर्गं रोहाव आरोहणं करवावेति । जायायाः प्रत्युक्तिं दर्शयति– रोहावेत्याह जायेति । अथान्वयव्यतिरेकाभ्यां जाया-सहितस्य संपूर्णावयवत्वं प्रतिपादयन्नत्र जायाऽऽमन्त्रणं विधत्ते– तद्यदिति । प्रथमपर्याये असर्व इति परिच्छेदः असंपूर्ण इत्यर्थः । ह यस्मात् यजमानस्य अर्धः एषः यत् जाया आत्मनः, तदभावे प्रजोत्पत्त्यभावः, यदा जायासाहित्यं तदा प्रजोत्पादनक्षमत्वम् । तथा च सर्वः संपूर्णावयवोऽस्त्वित्याह– एतां गतिमिति । एतां यूपा-रोहणलक्षणां गतिं गच्छानि प्राप्नवानीत्यभिप्रायेण जायाऽऽ-मन्त्रणं कार्यमिति । शब्रासा.

[2]स वै नैव रेमे । तस्मादेकाकी न रमते । स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ ॥

स इममेवाऽऽत्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी चाभवताम् । तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यः । तस्मादयमाकाशः स्त्रिया पूर्यत एव । तांसमभवन् । ततो मनुष्या अजायन्त ॥

इतश्च संसारविषय एव प्रजापतित्वं, यतः सः प्रजा-पतिः वै नैव रेमे रतिं नान्वभवत्–अरत्याविष्टोऽभू-दित्यर्थः–अस्मदादिवदेव यतः, इदानीमपि तस्मादेकाकि-त्वादिधर्मवत्त्वात् एकाकी न रमते रतिं नानुभवति । रतिर्नामेष्टार्थसंयोगजा क्रीडा । तत्प्रसक्तिन इष्टवियोगात्

(१) शब्रा. २।६।२।१३.  (२) शब्रा. २।६।२।१४.

(१) शब्रा. ५।२।१।१०.
(२) शब्रा. १४।४।२।४,५ ; बृउ. १।४।३.

मनसाकुलीभावोऽरतिरित्युच्यते । स तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं स्त्रीवस्तु ऐच्छत् गृद्धिमकरोत् । तस्य चैवं स्त्रीविषयं गृध्यतः स्त्रिया परिष्वक्तस्येवात्मनो भावो बभूव । स. तेन सत्येप्सुत्वात् एतावान् एतत्परिमाण आस बभूव ह । किंपरिमाण इत्याह—यथा लोके स्त्रीपुमांसौ अरत्यपनोदाय संपरिष्वक्तौ यत्परिमाणौ स्याता, तथा तत्परिमाणः, बभूवेत्यर्थः । स यथा तत्परिमाणमेवेममात्मानं द्वेधा द्विप्रकार अपातयत् पातितवान् । इममेवेलावधारणं मूलकारणाद्विराजो विशेषणार्थम् । न क्षीरस्य सर्वोपमर्देन दधिभावापत्तिवद्विराट् सर्वोपमर्देनैतावानास । किं तर्हि ? आत्मना व्यवस्थितस्यैव विराजः सत्यसंकल्पत्वादात्मव्यतिरिक्तं स्त्रीपुंसपरिष्वक्तपरिमाण शरीरान्तरं बभूव । स एव च विराट् तथाभूतः— 'स हैतावानास ' इति सामानाधिकरण्यात् । ततः तस्मात्पातनात् पतिश्च पत्नी चाभवता इति दम्पत्योर्निर्वचनं लौकिकयोः । अत एव तस्मात्—यस्मादात्मन एवार्धः पृथग्भूतः—येयं स्त्री– तस्मात्– इदं शरीरमात्मनोऽर्धबृगलं-अर्धं च तत् बृगलं विदलं च तदर्धबृगलं, अर्धविदलमिवेत्यर्थः, *प्राक्स्युद्वहनात् कस्यार्धबृगलमित्युच्यते–स्व आत्मन इति ।* एवमाह स्म उक्तवान् किल, याज्ञवल्क्यः–यज्ञस्य वल्को वक्ता यज्ञवल्कस्तस्यापत्यं याज्ञवल्क्यो दैवरातिरित्यर्थः । ब्रह्मणो वा अपत्यम् । यस्मादयं पुरुषार्ध आकाशः स्त्र्यर्धशून्यः, पुनरुद्वहनात्तस्यात्पूर्यते *स्त्र्यर्धेन, पुनः संपुटीकरणेनेव विदलार्धः* । तां स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवत् मैथुनमुपगतवान् । ततः तस्मात्तदुपगमनात् मनुष्या अजायन्त उत्पन्नाः । शंकर.

**आत्मैवेदमग्र आसीदेक एव । सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति । एतावान्वै कामः । नेच्छंश्चनातो भूयो विन्देत् । तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते । तस्यो कृत्स्नता ॥[1]**

*आत्मैवेदमग्र आसीत् । आत्मैव– स्वाभाविकः* अविद्वान् कार्यकरणसंघातलक्षणो वर्णी अग्रे प्राग्दारसंबन्धात् आत्मेत्यभिधीयते । तस्मादात्मनः पृथग्भूतं काम्यमानं जायादिभेदरूपं नासीत् । स एवैक आसीत्–जायाद्येषणाबीजभूताविद्यावानेक एवासीत् । स्वाभाविक्या स्वात्मनि *कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणया* अविद्यावासनया वासितः सः अकामयत कामितवान् । कथम् ? जाया कर्माधिकारहेतुभूता मे मम कर्तुः स्यात् । तया विना अहमनधिकृत एव कर्मणि । अतः कर्माधिकारसंपत्तये भवेज्जाया । *अथाहं प्रजायेय प्रजारूपेणाहमेवोत्पद्येय* । अथ वित्तं मे स्यात् कर्मसाधनं गवादिलक्षणम् । अथाहमभ्युदयनिःश्रेयससाधनं कर्म कुर्वीय– येनाहमनृणी भूत्वा देवादीनां लोकान्प्राप्नुयां, तत्कर्म कुर्वीय, काम्यानि च पुत्रवित्तस्वर्गादिसाधनानि एतावान्वै कामः एतावद्विषयपरिच्छिन्न इत्यर्थः । एतावानेव हि *कामयितव्यो* विषयः –यदुत जायापुत्रवित्तकर्माणि साधनलक्षणैषणा, लोकाश्च त्रयः–मनुष्यलोकः पितृलोको देवलोक इति– फलभूताः साधनैषणायाश्चास्याः । तदर्था हि जायापुत्र*वित्तकर्मलक्षणा साधनैषणा* । तस्मात् सा एकैव एषणा, या लोकैषणा । सा एकैव सती एषणा साधनापेक्षेति द्विधा । अतोऽवधारयिष्यति ' उभे ह्येते एषणे एव ' इति । फलार्थत्वात्सर्वारम्भस्य लोकैषणा अर्थप्राप्ता उक्तैवेति– *एतावान्वै एतावानेव काम इति अवधियते* । भोजनेऽभिहिते तृप्तिर्न हि पृथगभिधेया, तदर्थत्वात् भोजनस्य । ते एते एषणे साध्यसाधनलक्षणे कामः, येन प्रयुक्तः अविद्वान् अवश एव कोशकारवत् आत्मानं *वेष्टयति–कर्ममार्ग एवात्मानं प्रणिदधत् बहिर्मुखीभूतः* न स्वं लोकं प्रतिजानाति । तथा च तैत्तिरीयके 'अग्निमुग्धो हैव धूमतान्तः । स्वं लोकं न प्रतिप्रजानाति' इति । कथं पुनरेतावत्त्वमवधार्यते कामाना, अनन्तत्वात् । *अनन्ता हि कामाः* । इत्येतदाशङ्क्य हेतुमाह— यस्मात्–न–इच्छन्–चन–इच्छन्नपि, अतः अस्मात्फलसाधनलक्षणात्, भूयः अधिकतर, न विन्देत् न लभेत । न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं वा लब्धव्यमस्ति । लब्धव्यविषयो हि कामः । तस्य चैतद्व्यतिरेकेणा-

(१) शब्रा. १४।४।२।३०; बृउ. १।४।१७.

भावायुक्तं वक्तुं एतावान् वै काम इति । एतदुक्तं भवति– दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षणं अविद्यावत्पुरुषाधिकारविषयं एषणाद्वयं कामः । अतोऽस्माद्विदुषा व्युत्थातव्यमिति । यस्मात् एवमविद्वाननात्मकामी पूर्वः कामयामास, तथा पूर्वतरोऽपि । एषा लोकस्थितिः । प्रजापतेश्चैवमेष सर्ग आसीत्– सोऽबिभेदविद्यया, ततः कामप्रयुक्तः एकाक्यरममाणोऽरत्युपघाताय स्त्रियमैच्छत्, तां समभवत्, ततः सर्गोऽयमासीदिति हि उक्तम्– तस्मात् तत्सृष्टो एतर्हि एतस्मिन्नपि काले एकाकी सन् प्राग्दारक्रियातः कामयते – जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म कुर्वीयेत्युक्तार्थं वाक्यम्। सः एवं कामयमानः संपादयंश्च जायादीन् यावत् सः एतेषां यथोक्तानां जायादीनां एकैकमपि न प्राप्नोति, अकृत्स्नः असंपूर्णोऽहं इत्येव तावत् आत्मानं मन्यते। पारिशेष्यात्समस्तानेवैतान्संपादयति यदा, तदा तस्य कृत्स्नता । यदा तु न शक्नोति कृत्स्नतां संपादयितुं तदा अस्य कृत्स्नत्वसंपादनाय आह– तस्यो तस्य अकृत्स्नत्वाभिमानिनः कृत्स्नतेयं एवं भवति ।

शंकर. १।४।१७

पुत्रेणैव मनुष्यलोकजयः

अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा । कर्मणा पितृलोकः । विद्यया देवलोकः । देवलोको वै लोकानाꣳ श्रेष्ठः । तस्माद्विद्यां प्रशꣳसन्ति ॥

एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्मणा कृत्स्नात्मकः प्रजापतिर्भवतीति व्याख्यातम् । अनन्तरं च जायादि वित्तं परिवारस्थानीयमित्युक्तम् । तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतम् । न पुत्रादीनां लोकप्राप्तिं प्रति विशेषसंबन्धनियमः । सोऽयं पुत्रादीनां साधनानां साध्यविशेषसंबन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते– अथेति वाक्योपन्यासार्थः । त्रयः– वावेत्यवधारणार्थः– त्रय एव शास्त्रोक्तसाधनार्हा लोकाः, न न्यूना अधिका वा । के ते इत्युच्यते– मनुष्यलोकः पितृलोको देवलोक इति । तेषां सोऽयं मनुष्यलोकः पुत्रेणैव साधनेन जय्यः जेतव्यः साध्यः– यथा च पुत्रेण जेतव्यस्तथोत्तरत्र वक्ष्यामः– नान्येन कर्मणा, विद्यया वेति वाक्यशेषः । कर्मणा अग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यः, न पुत्रेण नापि विद्यया । विद्यया देवलोकः न पुत्रेण नापि कर्मणा । देवलोको वै लोकानां त्रयाणां श्रेष्ठः प्रशस्यतमः, तस्मात् तत्साधनत्वात् विद्यां प्रशंसन्ति ।

अथातः संप्रत्तिः । यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह, त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति ॥

यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञास्तेषाꣳ सर्वेषां यज्ञ इत्येकता । ये वै के च लोकास्तेषाꣳ सर्वेषां लोक इत्येकता । एतावद्वा इदꣳ सर्वम् । एतन्मा सर्वꣳ सन्नयमितोऽभुनजदिति । तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः । तस्मादेनमनुशासति । स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति । स यद्यनेन किंचिदक्ष्णयाऽकृतं भवति तस्मादेनꣳ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम । स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठति । अथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥

एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि । जाया तु पुत्रकर्मार्थत्वान्न पृथक्साधनमिति पृथक् नाभिहिता । वित्तं च कर्मसाधनत्वान्न पृथक्साधनम् । विद्याकर्मणोर्लोकजयहेतुत्वं स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धम् । पुत्रस्य तु अक्रियात्मकत्वात् केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायते । अतस्तद्वक्तव्यमिति अथ अनन्तरमारभ्यते– संप्रत्तिः संप्रदानम् । संप्रत्तिरिति वक्ष्यमाणस्य कर्मणो नामधेयम् । पुत्रे हि स्वात्मव्यापारसंप्रदानं करोति अनेन प्रकारेण पिता, तेन संप्रत्तिसंज्ञकमिदं कर्म । तत् कस्मिन्काले कर्तव्यमित्याह– स पिता यदा यस्मिन्काले प्रैष्यन् मरिष्यन् मरिष्यामीत्यरिष्टादिदर्शनेन मन्यते, अथ तदा पुत्रमाहूय आह– त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स एवमुक्तः

(१) शत. १४।४।३।२४-२६ ; बृउ. १।५।१६,१७.

पुत्रः प्रत्याह। स तु पूर्वमेवानुशिष्टो जानाति मयैतत्कर्तव्यमिति। तेनाऽऽह—अहं ब्रह्म अहं यज्ञः अहं लोक इति एतद्वाक्यत्रयम्। एतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तते—यद्वै किंच यत्किंच अवशिष्टं अनूक्तं अधीतमनधीतं च, तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पदे एकता एकत्वम्। योऽध्ययनव्यापारो मम कर्तव्य आसीदेतावन्तं कालं वेदविषयः, स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्वित्यर्थः। यथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मया अनुष्ठिताश्चाननुष्ठिताश्च, तेषां सर्वेषां *यज्ञ इत्येतस्मिन्पदे एकता एकत्वम्। मत्कर्तृका यज्ञा ये* आसन्, ते इत ऊर्ध्वं त्वं यज्ञः त्वत्कर्तृका भवन्त्वित्यर्थः। ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च, तेषां *सर्वेषां लोक इत्येकस्मिन्पदे एकता।* इत ऊर्ध्वं त्वं लोकः त्वया जेतव्यास्ते। इत ऊर्ध्वं मया अध्ययनयज्ञलोकजयकर्तव्यक्रतुस्त्वयि समर्पितः, अहं तु मुक्तोऽस्मि कर्तव्यताबन्धनविषयात् क्रतोः। स च सर्वं तथैव प्रतिपन्नवान्पुत्रः *अनुशिष्टत्वात्। तम् इमं पितुरभिप्रायं मन्वाना* आचष्टे श्रुतिः—एतावत् एतत्परिमाणं वै इदं सर्वं—यद् गृहिणा कर्तव्यं, यदुत वेदा अध्येतव्याः, यज्ञा यष्टव्याः, लोकाश्च जेतव्याः, एतन्मा सर्वं सन्नयम्—सर्वं हि इमं भारं मदधीनं मत्तोऽपच्छिद्य आत्मनि निधाय इतः अस्माल्लोकात् मा मा अभुनजत् पालयिष्यतीति—लृडर्थे लड्, छन्दसि कालनियमाभावात्। यस्मादेवं सपन्नः पुत्रः *पितरं अस्माल्लोकात्कर्तव्यताबन्धनतो मोचयिष्यति,* तस्मात्पुत्रमनुशिष्टं लोक्यं लोकहितं पितुः आहुर्ब्राह्मणाः। अत एव ह्येनं पुत्रमनुशासति लोक्योऽयं नः स्यादिति—पितरः। स पिता यदा यस्मिन्काले एवंवित् पुत्रसमर्पितकर्तव्यताक्रतुः अस्माल्लोकात् प्रैति म्रियते, अथ तदा एभिरेव प्रकृतैर्वाङ्मनःप्राणैः पुत्रमाविशति पुत्रं व्याप्नोति। अध्यात्मपरिच्छेदहेत्वपगमात् पितुर्वाङ्मनःप्राणाः स्वेन आधिदैविकेन रूपेण *पृथिव्यग्न्याद्यात्मना भिन्नघटप्रदीपप्रकाशवत्* सर्वं आविशन्ति। तैः प्राणैः सह पिताऽपि आविशति वाङ्मनःप्राणात्मभावित्वात्पितुः। *अहमस्म्यनन्ता वाङ्मनःप्राणा अध्यात्मादिभेदविस्ताराः*—इत्येवंभावितो हि पिता, तस्मात् प्राणानुवृत्तित्वं पितुर्भवतीति युक्तमुक्तम्—एभिरेव प्राणैः सह पुत्रमाविशतीति। सर्वेषां ह्यसावात्मा भवति पुत्रस्य च। एतदुक्तं भवति—यस्य पितुरेवमनुशिष्टः पुत्रो भवति सोऽस्मिन्नेव लोके वर्तते पुत्ररूपेण नैव मृतो मन्तव्य इत्यर्थः। तथा च श्रुत्यन्तरे—'सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते' इति। अथेदानीं पुत्रनिर्वचनमाह—स पुनः यदि कदाचित् अनेन पित्रा अक्ष्णया कोणच्छिद्रतोऽन्तरा अकृतं भवति कर्तव्य, तस्मात् कर्तव्यतारूपात्पित्रा अकृतात् सर्वस्माल्लोकप्राप्तिप्रतिबन्धरूपात् पुत्रो मुञ्चति मोचयति तत्सर्वं स्वयमनुतिष्ठन् *पूरयित्वा, तस्मात्पूरणेन त्रायते स पितरं यस्मात्,* तस्मात्, पुत्रो नाम। इदं तत्पुत्रस्य पुत्रत्वं—यत्पितुश्छिद्रं पूरयित्वा त्रायते। स पिता एवंविधेन पुत्रेण मृतोऽपि *सन् अमृतः अस्मिन्नेव लोके प्रतितिष्ठति एवमसौ पिता* पुत्रेणेमं मनुष्यलोकं जयति। न तथा विद्याकर्मभ्यां देवलोकपितृलोकौ। स्वरूपलाभसत्तामात्रेण। न हि विद्याकर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवत् व्यापारान्तरापेक्षया *लोकजयहेतुत्वं प्रतिपद्येते। अथ* कृतसंप्रत्तिकं पितरं एनं एते वागादयः प्राणाः दैवाः हैरण्यगर्भाः अमृताः अमरणधर्माणः आविशन्ति।

शंकर.

जायया प्रजया च पुरुषस्य पूर्णता

ऐतावान् पुरुषो यदात्मा प्रजा जाया॥[1]

आत्मा प्रजा पुत्रपौत्रादिरूपा जाया चेति यदेतत्त्रितयमस्ति एतावान् हि पुरुषः। ताला.

जायापदनिरुक्ति, पुन्नामनरकत्राण पुत्रः

तैद्यदब्रवीदामित्रो अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति। तस्माज्जाया अभवन्। तज्जायानां जायात्वं यदासु पुरुषो जायते। यच्च पुत्रः पुन्नाम नरकमनेकशततारं तस्मात् त्रातीति पुत्रः। तत्पुत्रस्य पुत्रत्वम्॥[2]

पुरुषस्य प्रजोत्पादन कर्तव्यम्

प्रेजातन्तुं मा व्यवच्छेत्सीः॥[3]

(१) ताब्रा ३।४।३, ३।१३।३.
(२) गोब्रा. १।१।२.
(३) तैउ. १।११.

आचार्येण चानुज्ञातोऽनुरूपान् दारानाहृत्य प्रजातन्तुं प्रजासंतानं मा व्यवच्छेत्सीः प्रजासंततेर्विच्छित्तिर्न कर्तव्या । शंकर.

ब्रह्मचर्योत्तरं गार्हस्थ्यम्

ब्रह्मचर्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेन् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा ॥

## बौधायनगृह्यपरिभाषासूत्रम्

ऋणापाकरणार्थं यज्ञार्थं च दाराहरणम्

अथ वै भवति 'सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन्' इति स एष हुतादिरासहस्रसंवत्सरान्तः सर्वो यज्ञो यो हि यद्वेद स्वाध्यायजपकर्ममानसेषु तेनैवास्य तद्गुणेनेष्टं भवतीति तदेतन्मन्त्रब्राह्मणं व्याख्यातम् ॥

अथ वै भवति 'देवा वै पुष्टिं नाविन्दन्तां मिथुनेऽपश्यन्' इत्येतद्विज्ञाय दारानाहृत्य सर्वयज्ञभाजो भवन्तीति व्याख्यातो यज्ञः ॥

'प्रजया पितृभ्यः' इति अथास्य प्रजा भवन्ति— 'यानुत्पादयते यानुपनयते यानध्यापयते यान् याजयते' इति सर्वोऽस्यैषा प्रजा भवतीति प्रजा व्याख्याता ॥

'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' इत्याहिताग्निरित्येवैष उक्तो भवति ॥

अथाप्युदाहरन्ति—

पुदिति नरकस्याख्या दुःखं च नरकं विदुः ।
पुदि त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥
न मांसपेशलः पुत्रो नाविद्वान् नाप्यकर्मकृन् ।
स्वयं न याति यः स्वर्गं किं पुनः पितरं तरेत् ॥
इति ॥

विज्ञायते— 'अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः ।' इति ॥

(१) आड. ४ ; स्मृच. ६४ ; दीक. ३१·६–७७ यदि वे (इति वे) (गृहाद्वा वनाद्वा०) ; संप्र. ५६२ (यदि वेतरथा.. वनाद्वा०) ; यांमि. ३।५१ (यदि वेतरथा.. वनाद्वा०) देवर:.
(२) बौगृप. ३।७।१–५.

एतस्माद्गार्हपत्य उक्तो भवति गार्हपत्यादाहवनीयस्तस्मादग्न्याधेयेनानृण आहवनीयादिति प्रणीतस्तस्मात्पशुबन्धयाज्यनृणः शालामुखीयादाग्नीध्रीय आग्नीध्रीयादपरे धिष्ण्याः ॥

'विभूरसि प्रवाहणः' इत्येते विहरणोपस्थानीयाः 'एषाऽस्य दैवी प्रजा भवति' इति तस्मात्सोमयाज्यनृणः ॥

तस्मात् गृहस्थस्य सर्व एवैते यज्ञाः तस्माद्गृहाः श्रेय इति ॥

अथाप्युदाहरन्ति —

यथा सुभूमिजो वृक्षः सुमूलः सुप्रतिष्ठितः ।
बहुशाखः सुपुष्पश्च फलवानुपयुज्यते ॥
देवदानवगन्धर्वैर्ऋषिभिः पितृभिस्तथा ।
पक्षिभिः षट्पदैश्चापि मशकैश्च पिपीलिकैः ॥
एवं हि पाकयज्ञेषु सर्वमेतत्प्रतिष्ठितम् ।
हुतः सुभूमिर्विज्ञेया मूलं प्रहुत उच्यते ॥
आहुतोऽत्र प्रतिष्ठानं यज्ञवृक्षो महोच्छ्रयः ।
बह्वग्रस्तस्य स्मृताः शाखाः सुपुष्पाः सुफलोपगाः ॥
मन्त्रब्राह्मणतत्त्वज्ञैः सुदृष्टास्ता उपासकैः ।
एवं हि यज्ञवृक्षस्य योऽभिज्ञः श्रोत्रियः स्मृतः ॥
दारस्याहरणं कुर्यात्कर्मत्येवं विपश्चितः ।
सुभूमिं च सुमूलं च सुप्रतिष्ठानमेव च ॥
वृक्षं पुष्पफलोपेतं बहुशाखं स पश्यति ।
ज्ञानं सुभूमिराचारो मूलं श्रद्धा प्रतिष्ठितिः ॥
क्षमाऽहिंसा दमः शाखाः सत्यं पुष्पफलोपगम् ।
ज्ञानोपभोग्यं बुद्धानां गृहिणां यज्ञपादपम् ॥
अकामहतया बुद्ध्या त्यक्ताहङ्कारलोभया ।
निश्चयाध्यवसायाभ्यां चक्षुर्भ्यां स तु पश्यति ॥
तस्यैको वज्रसंकाशः क्रोधः परशुरुच्यते ।
तेनैव माच्छिनन्मोहात्त्याज्यः क्रोधो गृहेष्वतः ॥
गृहा मूलं हि यज्ञानां गृहा ह्यानृण्यकारणम् ।
गृहा ह्याश्रमपूजार्थं स्थित्यर्थं च गृहाः स्मृताः ॥

(१) बौगृप. १।६।११–२२.

पाकयज्ञा हविर्यज्ञाः सोमयज्ञाश्च ते त्रयः ।
रिथता मूलेषु वृक्षेषु प्रमादी तेषु सीदति ॥
इति ॥

## आश्वलायनगृह्यपरिशिष्टम्

लक्षणादियुक्तया कन्यया विवाहः

अथोपयमनम् ॥
लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसी-मसपिण्डामसगोत्रजामविरुद्धसंबन्धामुपयच्छेत ॥

## कौषीतकिगृह्यसूत्रम्

कुमार्या सह विवाहो युक्तः कालविशेषे

उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयाद्या लक्षणसंपन्ना स्यात् ॥

## हिरण्यकेशिगृह्यसूत्रम्

पित्रनुज्ञया विवाहः समावृत्तस्य

समावृत्त आचार्यकुलान्मातापितरौ विभृयात् । ताभ्यामनुज्ञातो भार्यामुपयच्छेत् ॥

उपनयनप्रभृति ब्रह्मचार्याचार्याधीनः सन् कृतविद्यः आचार्यकुलात्समावृत्तः स्नातक इत्यर्थः । स मातापितरौ शुश्रूषयन् धान्याहरणादिना बिभृयात् पोषयेत् । मातापित्रधीनः स्यादित्यर्थः । स्नात इत्येतावता सिद्धे ' समावृत्त आचार्यकुलात् ' इति वचनं स्नातकस्यापि विद्यायाः कृच्छ्रापत्तेर्वा भूयः श्रुतार्थे वा विद्यया प्रकाशाभावे नियमेन वा धनार्थे वा पुनराचार्यकुले संवसेत्, न मातापित्रोर्भरणमिति ज्ञापनार्थम् । मातापितृभ्यामनुज्ञातो भार्यामुपयच्छेत् । तत्र ताभ्यामनुज्ञात इति वचनमननुज्ञातस्य दारसंग्रहप्रतिषेधार्थम् । कृतदारस्यापि पितुरनुज्ञामन्तरेण नास्ति चोदितेषु कर्मसु प्रवृत्तिः । अनुज्ञया आहितेषु अग्निषु कर्मणां नित्यत्वं नानुज्ञया प्रयोजनमित्युक्तम् । मातृ.

## मानवगृह्यसूत्रम्

भार्याग्रहणम्

भार्यां विन्दते ॥

भार्यां विन्दति (ते) । यद्यपि रागतः भार्यावेदने प्रवृत्तिरस्त्यपि न विधिमन्तरेण शास्त्रीयत्वं भार्यावेदनस्य लभ्यते । तस्मात् विन्देत इति प्राप्तिः(सौ) विन्दते इति छान्दसो वर्तमानोपदेशः । पञ्चमलकारो वा छन्दोवत्सूत्राणीति कृत्वा । भार्यामिति भाविनी संज्ञा ' सक्तून् पिनष्टि ' इतिवत् । अपर आह—सत्यं भाविनी चेयं संज्ञा, तथापि ' यूपं छिनत्ति ' इतिवत् संस्कारशब्दाय 'भार्यां विन्दते' इति । यथा छेदनादिना धर्मेण यूपो भवति एवं वक्ष्यमाणैर्वेदनधर्मैः भार्या(दीनि) (र्या इति) । एवं च यूपं वचनान्यनोऽनयने (!) भार्यामित्येकवचनं विवक्षितम् । एवं चेत् (न) 'वन्ध्याष्टमेऽधिवेद्याऽब्दे' (मस्मृ. ९।८१) इत्यादिनिमित्तेन विना ऊढापि द्वितीया नैव भार्याशब्दवाच्या भवति । न तया तद्धर्माधिकारो निवर्तते । तदुक्तम् ' धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत ' (आध. २।११।१२) इति । अष्टाभा.

## काठकगृह्यसूत्रम्

भार्याप्राप्तौ कालविशेषे

उदगयने भार्यां विन्देत ॥

(१) ' स्नात्वा भार्यामधिगच्छेत् ' इति स्नानानन्तरं भार्यान्वेषणप्रसङ्गः । विन्देत लभेत पर्येषेदित्यर्थः । उदगयने आदित्यस्य दक्षिणदिग्भागात् उत्तरदिग्भागाभिमुखगमने गति । उत्तरायणे इत्यर्थः । दद्यात् वरेण कन्यायां पित्रा सहजेन सेवयेत (!) । देभा.

(२) ' वेदमधीत्य स्नात्वा भार्यामधिगच्छेत् ' इति अवगतस्नानः भार्याधिगमः । उदगयने उदयगे (उदगते)

(१) आगृप. १।२२ ; मपा. ३०६ ; मर. ९८ अथोपयमनम् (अथ विवाहः) ; मका. ३५६ प्रवत् ; संर. ४११ प्रवत्.

(२) आगृप. १।२२ ; मपा. ३०६ ; गभा. ९८ (अविरुद्धसंबन्धामुपयच्छेत्) एतावदेव ; मर. ९८ (अविरुद्धसंबन्धामुपयच्छेत) एतावदेव , संप्र. ७२५ सर्व प्रवत् ; चम. १०८ सर्व प्रवत् ; संम. ५१ सर्व प्रवत् , मिन्दु. १०१९ (अविरुद्धसंबन्धामुपयच्छेत) एतावदेव ; विपा. ६८५ लक्षण्यो (लक्षण्यो) ; संकौ. १०७ सर्व प्रवत् . मका ३५६ , संग १७३ सर्व मिन्दुवत् , संत. १४३ सर्व प्रवत् ; संर ४१२ सर्व प्रवत्.

(३) कौगृ १।५.

(४) हिगृ १९।६।१ , संर ३७१, ४०२

(१) मागृ १।७।८.

(२) कागृ. १४।१.

सूत्रे अधिगच्छेत् । भरणीया भार्या । तथा कुर्याद्यथा लभेत । भार्याधिगमे यत्नः कार्यः । उदगयने नोदासीत ।

आवि.

## वाराहगृह्यसूत्रम्

अनन्यपूर्वया विवाहः

[1]'विनीतक्रोधः सहर्षः महिषीं भार्यां विन्देतानन्यपूर्वां यवीयसीम् ॥

## आग्निवेश्यगृह्यसूत्रम्

भार्याग्रहणं समावृत्तस्य

[2]अथ समावृत्ते भार्यामुपयच्छेत । प्रजातन्तुं मा व्यवच्छेत्सीरिति गुरुशासनात् ॥

## पारस्करगृह्यसूत्रम्

कुमार्या विवाहः कालविशेषे

[3]उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥

## गोभिलगृह्यसूत्रम्

समावृत्तस्य विवाहो गुर्वनुज्ञया

[4]ब्रह्मचारी वेदमधीत्य ॥

वेदमित्यावश्यकत्वाभिप्रायेण । तथा च मनुः— 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥' इति । वेदशब्दोऽयं शाखाया वेदस्याभिधायकः अङ्गानामेव वेति स्वभाष्ये चन्द्रकान्त आह अन्यमतोपन्यासेन । मृदुला.

[5]उपन्याहृत्य गुरवे ॥

उप गुरुसमीपे निभृतं विनीतं यथा स्यात्तथा गुरवे गुर्वर्थम् । तादर्थ्ये चतुर्थी ( पा. १।४।४४ ) । आहृत्य आनीय । दक्षिणामिति शेषः । अस्योत्तरेण संबन्धः । अत्र मनुः– 'न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् । स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥' इति । धर्मवित् गुरुदक्षिणादानधर्मज्ञः ब्रह्मचारी स्नानात्पूर्वं किंचिद्गोवस्त्रादिधनं गुरवे नावश्यं दद्यात् । यदि तु यदृच्छातो लभते तदा गुरवे दद्यादेव । अत एव स्नानात् पूर्वं गुरवे दानमाह आपस्तम्बः–'यदन्यानि द्रव्याणि यथालाभमपहरति दक्षिणा एव ताः । स एव ब्रह्मचारिणो यज्ञो नित्यव्रतम्' इति । स्नास्यन् पुनर्गुरुणाऽऽज्ञप्तः यथाशक्ति धनिनं याचित्वाऽपि प्रतिग्रहादिनापि गुरवेऽर्थमाहृत्य अवश्यं दद्यादित्यर्थः । उपकुर्वाणस्यायं विधिः, नैष्ठिकस्य स्नानासंभवादिति बोध्यम् । मृदुला.

[1]अनुज्ञातो दारान् कुर्वीत ॥

गुरुणा गृहवासाय अनुज्ञातः । तथा च मनुः– 'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि । उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥' इति । दारान् इति । स्नानात्प्रागेव कन्यां प्रार्थयेदित्यर्थः । तेन न आश्रमक्रमविरोधः संभवति । तथा च कात्यायनः–'यदि दत्ता भवेत्कन्या वाचा सत्येन केनचित् । सोऽन्यां समिधमाधास्यन्नादधीतैव नान्यथा ॥' इति । अन्यथा कन्यामप्राप्य । समावर्तने कृते तदुत्तरं कन्यालाभविलम्बे अनाश्रमित्वं स्यात्, तच्च अनिष्टम् । तथा च मनुः– 'अनाश्रमी न तिष्ठेत दिनमात्रमपि द्विजः । आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥' इति । तस्मात् व्रतस्थ एव कुतश्चित् कन्यां प्राप्य पुण्यदिने स्नात्वा तदुत्तरदिने विवाहं कुर्यादिति वर्तुलार्थः । कात्यायनः– 'अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति । न तदा व्रतलोपः स्यात्तेनैवान्यां समुद्वहेत् ॥ अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम् । तमग्निमात्मसात्कृत्वा क्षिप्रं स्यादुत्तराश्रमी ॥' इति । तेनैव स्नातिसमयाग्निसाधनामिनेव ।

मृदुला.

(१) वागृ. १०.

(२) आग्निगृ. १।६।१.

(३) पागृ. १।४।५ ; निप. २८७ (= ) ; उत. १४५ (कुमार्याः पाणिं गृह्णीयात्) स्मृत्यन्तरे ; ज्योत. ६०७ उत्तरार्ध ; स्मृच. ९०२ : ४० ( भागः २ ) ( पुण्याहे० ) ; संत. १६५ ; मेदी. २६ ( भागः २ ).

(४) गोगृ. ३।४।१.

(५) गोगृ. ३।४।२.

(१) गोगृ. ३।४।३.

## खादिरगृह्यसूत्रम्

समावृत्तस्य विवाहो गुर्वनुज्ञया

(१)ब्रह्मचारी वेदमधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत ॥

ब्रह्म वेदः, वेदाध्ययनार्थानि गोदानादीनि व्रतानि अग्नीन्धनादीनि च स्मृतिकारैरुक्तानि लक्षणया ब्रह्म इत्युच्यन्ते । तान्यनुतिष्ठन् एकां शाखामधीत्य अध्ययनप्रयोगं अर्थनिश्चयपर्यन्तं षडङ्गं परिसमाप्य उप गुरुसमीपं निधाय स्वयं गुरवे अभिलषितद्रव्यमार्जयित्वा तत् गुरुसमीपमाहृत्य गुरवे आचार्याय दत्त्वा तेनैव गुरुणा त्वं विवाहं स्नानं च कुरु इत्यनुज्ञातः सन् दारान् कुर्वीत भार्यां कुर्वीत । यथा आत्मानं प्रति भार्या भवति तथा कुमारीं संस्कुर्यादित्यर्थः । दारानिति बहुत्वपुंस्त्वे अविवक्षिते, आविष्टलिङ्गवचनत्वात् । एवं वृत्त्यर्थेऽध्यापने । अदृष्टार्थे तु गुरुदक्षिणामदत्त्वापि अनुज्ञामात्रादेव विवाहः, 'सहस्रं श्वेतं चाश्वं प्रदायानुज्ञातो वा' इति श्रुतेः । तदर्थं च 'उपन्याहृत्य गुरवेऽनुज्ञातो वा' इति वाशब्दं केचिदध्याहरन्ति । दक्षिणात्वात् न उदकपूर्वमिदं दानम् ।

अपरा व्याख्या वाशब्दाध्याहारेण– 'ब्रह्मचारी वेदं वाऽधीत्य' इति । द्वादशवार्षिकं षट्त्रिंशदाब्दिकं तदर्धिकं पादिकं वा ब्रह्मचारिव्रतं ब्रह्म, तच्चरित्वा वेदं सकलमनधीत्यापि विवाहः । अथवा व्रतं चरित्वा वेदं सकलमधीत्य विवाह इति । अस्मिन् व्याख्याने न अर्थावबोधपर्यन्तमध्ययनम् ।

केचिदाहुः– 'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् । तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥' (मस्मृ. ३।१) इत्यस्मिन्मानवे श्लोके वेदत्रयार्थत्वेन षट्त्रिंशदादेरुक्तत्वात्, 'वेदानधीत्य वेदौ वा वेदं वाऽपि' इति च अनेनैवोक्तत्वात्, वेदग्रहणपर्यन्त् काले ह्यशक्तोऽप्युक्त एव इति त्रिवर्षादिचरणमपि अनुज्ञातमेव इति । तदुक्तमयुक्तं वेति विचारणीयम् ।

ब्रह्मचारी इत्यस्य अपरा व्याख्या—वेदव्रतानि चत्वारि गोदानं व्रातिकं आदित्यव्रत माहानाम्निकमित्येतानि, गोदानं व्रातिकं आदित्यव्रतं माहानाम्निकं औपनिषदं इत्येतानि वा ब्रह्म, तच्चरित्वा विवाह इति । अस्यार्थस्य न्यायमूलत्वं केचिदाहुः–ब्रह्मचारिव्रतानि पुरुषसंस्कारार्थानि, न अध्ययनाङ्गानि, पुरुषोद्देशेन विधानात् । अतस्तद्विधिपर्यवसाननिबन्धनोऽयं व्रतस्नानोपदेशः । अध्ययनविधिरपि न विचारपर्यन्तः, रागत एव तत्सिद्धेः । अतस्तन्निबन्धनः वेदस्नानोपदेश इति । तदिदं मीमांसकैर्नेष्यते ।

वाक्यशेषात्सिद्धे कुर्वीत इति नान्दीमुखादेरुपसंग्रहणार्थम् । रुद्रभा.

## जैमिनिगृह्यसूत्रम्

समावृत्तस्य विवाहः पित्रनुज्ञया

(२)स्नात्वा मातापितरौ परिचरेत्, तदधीनः स्यात्, ताभ्यामनुज्ञातो जायां विन्देत ॥

## वैखानसगृह्यसूत्रम्

सवर्णया विवाहः

(३)ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां वरयेत् । समावर्तनं कृत्वा विवाहकालेऽतीते क्रियाहीनेऽप्युपनयनाप्रायश्चित्तं हुत्वा ब्राह्मं वैष्णवमाग्नेयं शतमावर्त्य हुत्वाऽन्यथं पुत्रार्थं च ब्राह्मादिषु चतुर्षु पूर्वालाभे परेण ब्राह्मणो विवाहं कुर्यात् ॥

## गौतमः

अनन्यपूर्वया सदृशा विवाहः

गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम् ॥

(१) ब्रह्मचार्यादीनां धर्मा उक्ताः, सांप्रतं गृहस्थस्य धर्मा वक्तव्या इत्यत आह — गृहस्थ इति । गृहस्थ इति भार्यासंबन्धाद्व्यपदेशः स्नातकस्य दारपरिग्रहणं तावदविकृतस्य गृहस्थधर्मस्य प्रवेशार्थः । सदृशीं जात्या *न कुल्यः,

---

(१) खागृ. १।३।१.

(१) जैगृ. १।२०. (२) वैगृ. ३।१।२.

(३) गौध ४।१ ; मभा. ; गौमि. ; मुक्ता. ११५.

* 'न कुल्यः' इति पाठः प्रामादिको भाति । 'कुल्यश्च' इति भाव्यं, अन्ये हेतुर्भेदः ।

‘ विद्या प्रणष्टा पुनरभ्युपैति जातिप्रणाशे त्विह सर्वनाशः । कुलापदेशेन यथाऽभिपूज्या तस्मात्कुलीनां स्त्रियमुद्वहेत ॥ ’ ( इति ) स्मृत्यन्तरे उत्कृष्टकुलाया एवाधिगमश्रवणात् । भार्यां भरणीयां लक्षणयुक्तामित्यर्थः । विन्देत याचेत इत्यर्थः । अनन्यपूर्वां अन्यस्य वाचाऽप्यदत्तामित्यर्थः । यवीयसीं आत्मनो हीनवयसीमित्यर्थः । मभा.

( २ ) जात्या कुलेन च सदृशीम् । § गौमि.

## हारीतः

समावृत्तस्य विवाहः

‘ गृहीतवेदाध्ययनः श्रुतिशास्त्रार्थतत्त्ववित् ।
गुरोर्दत्तवरः सम्यक् समावर्तनमारभेत् ॥
असमाननामगोत्रां कन्यां भ्रातृयुतां शुभाम् ।
सर्वावयवसंयुक्तां सद्वृत्तामुद्वहेत्ततः ॥

## बौधायनः

कर्तव्यं सत्पुत्रोत्पादनं सवर्णायां ऋणापाकरणाय कुलस्यात्मनश्च तरणाय च

प्रजाकामस्योपदेशः ॥[2]

औरसेन हि पुत्रेण ऋणापाकरणं भवति । ततस्तत्प्रशंसार्थमाह – प्रजाकामस्येति । प्रजा सत्पुत्रः, तत्कामस्योपदेशः करिष्यते । बौवि.

प्रजननिमित्ता समाख्येत्यश्विनावूचतुः ॥[3]

( १ ) प्रजननं उत्पादनं, तन्निमित्ता पुत्र इति समाख्या प्रसिद्धिरित्यर्थः । न तु दानादिनिमित्ता पुत्रसमाख्या । अतो दत्तादिरत्र प्रतिनिधिः । तत्रैते ऋचौ भवतः– ‘ परिषद्यं ह्यरणस्य रेक्णः ’ ‘ न हि ग्रभायारणः सुशेवः ’ ( ऋसं. ७।४।७,८ ) इति । बौवि.

( २ ) समाख्या अभिधा प्रजननिर्वृत्ता प्रजननेनैव निर्वृत्ता निष्पादिता । प्रजाया इति षष्ठ्यन्तमध्याहार्यम् । प्रजाया एवेदं हेतुगर्भं विशेषणम् । यतः प्रजा पुत्रादिरूपा प्रजननेनैव निष्पादिता अत एव प्रजा इति । प्रजायाः प्रजननसंबन्धं विना उत्पत्तेरभावात्तस्य च क्षेत्रं विना सर्वथैवासंभवादवश्यं विवाहः कर्तव्य इति फलितोऽर्थः । संर. ४०४

आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः ।
प्रजामुत्पादयेद्युक्तः स्वे स्वे वर्णे जितेन्द्रियः ॥[1]

( १ ) प्रजाकामस्योपदेश इत्युक्तम् । कोऽसावुपदेश इत्याह – आयुषेति । आयुःशब्देन तत्करणं लक्ष्यते । तच्च विधिवत्संध्योपासनं विप्रापवादाभाव इत्यादि । आह च – ‘ ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः । ’ ( मस्मृ. ४।९४ ) ‘ आयुर्विप्रापवादेन संध्यावन्दनहानतः । अतिथिपूजाहानाच्च नरस्यायुरपि ध्रुवम् ॥ ’ ‘ नाऽधितिष्ठेत केशांस्तु न भस्मास्थिकपालिकान् । न कार्पासास्थि न तुषान् दीर्घमायुर्जिजीविषुः ॥ ’ ( मस्मृ. ४।७८ ) इति । तथा ‘ न हीदृशमनायुष्यं लोके किंचन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ’ ( मस्मृ. ४।१३४ ) ‘ लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः । स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥ ’ ( मस्मृ. ४।७१ ) इत्येवमादि द्रष्टव्यम् । तपो दानम्, ‘ एतत् खलु वाव तप इत्याहुर्यः स्वं ददातीति ’ इति श्रुतेः । वक्ष्यमाणं वा ब्रह्मचर्यादि । स्वाध्यायेज्ये तु प्रसिद्धे एव । स्व इति स्वे स्वे वर्णे ब्राह्मणो ब्राह्मण्यामित्यादि । इन्द्रियं इह उपस्थमभिप्रेतं पुत्रकारणत्वात् । तज्जयः परदारादिवर्जनं स्वदारेष्वपि अकालवर्जनं च । एते प्रजोत्पत्त्युपाया यथाविधानं क्रियमाणाः प्रजोत्पत्त्युपाया भवन्तीत्यभिप्रायः । बौवि.

( २ ) युक्तो विहितकाल एवोपगमनेन । जितेन्द्रिय इत्यनेन ऋतुकालिकासु रात्रिषु प्रतिरात्र्यनेकवारं गमनं व्यावर्त्यते परस्त्रीगमनं च । संर. ४०४

---

§ शेष मभावत् ।

( १ ) हास्मृ. ४।१–२ ( गृहीतवेदाध्ययनः श्रुतशास्त्रार्थतत्त्ववित् । असमानार्षगोत्रां हि कन्यां सभ्रातृकां शुभाम् ॥ सर्वावयवसंपूर्णां सुवृत्तामुद्वहेन्नरः ॥ ) कलकत्तामुद्रितस्मृतिपुस्तकस्थोऽयं पाठः ।

( २ ) बौध. २।१६।१ ; निप्र. ५४२ ( भाग २ ) देश ( देशः ) ; संर. ४०३.

( ३ ) बौध. २।१६।२ ; निप्र. ५४२ ( भागः २ ) ; संर. ४०३ निमित्ता ( निर्वृत्ता ).

( १ ) बौध. २।१६।३ वर्णे ( वंशे ) व्याख्यानावसरे वर्णे इत्येव पदं गृहीतम् ; निप्र. ५४२ ( भागः २ ); मुक्ता. १६६ ; संर ४०३.

[1]ब्राह्मणस्यर्णसंयोगस्त्रिभिर्भवति जन्मतः ।
तानि विमुच्याऽऽत्मवान् भवति विमुक्तो धर्म-
संशयात् ॥

(१) ब्राह्मणग्रहणात् स्वमूलश्रुतिप्रमाणं द्रष्टव्यम् । त्रिभिः अवश्यकर्तव्यैः इति शेषः । जन्म उपनयनम्, ततः प्रभृति ऋणवान् भवति, ततः प्राक् शूद्रसमत्वात् । तानि कर्माणि ऋणानि विमुच्य यथाविधि संपाद्य आत्म-वान् स्वतन्त्रो भवति । यस्मादयं धर्मसंशयात् ' किमेतानि यथावत् सपादयितुं शक्ष्यामो न वा ' इत्येवंरूपसंशयात् विमुक्तो भवति । बौवि.

(२) जन्मतः उत्पत्तेरारभ्य तानि ऋणानि विमुच्य दूरीकृत्य । ' विमुक्तोऽधर्मसंचयात् ' इत्यत्र अधर्म-सचयादिति पदच्छेदः । ऋणापाकरणे कृते अधर्मसमुदाया-द्विमुक्तो भवति । ततः आत्मवान् आत्मस्वरूपलाभवान् भवतीत्यर्थः । संर. ४०४

[2]स्वाध्यायेन ऋषीन् पूज्य सोमेन च पुरन्दरम् ।
प्रजया च पितॄन्पूर्वाननृणो दिवि मोदते ॥

(१) केन कर्मणा तदृणमपाक्रियते इत्याह— स्वाध्यायेनेति । सोमेन सोमयागेन ।

बौवि.

(२) पूज्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेश-श्छान्दसः । स्वाध्यायेन, स्वाध्यायः अध्ययनम्, तत्सा-धनेन ब्रह्मचर्येणेत्यर्थः । सोमेन सोमद्रव्यवता यागेन । पुरन्दरशब्दस्तत्तत्कर्मसम्बन्धिदेवतोपलक्षकः । पुरन्दरः इन्द्रः । इन्द्रस्य भूयिष्ठभाक्त्वेन देवताधिपतित्वेन च मुख्यत्वात् ग्रहणम् । पितॄन्सर्वानित्यत्र सर्वग्रहण देवपितॄणामपि ग्रहणार्थम् । एतेषां पूजनेन एतैः कर्मभिः सतर्पणेन अनृणः सन् दिवि स्वर्गे मोदते हर्षयुक्तो भवति ।

सर. ४०४

---

(१) बौध २।१६।४ विमुच्या ( मुच्या ) ; संर. ४०३ सशयात् ( मचयात् ).

(२) बौध २।१६।५ ; निप्र. ३ ( भाग २ ) अनृणो दिवि मोदते ( मृतो दिवि विमोदते ) ; मुक्ता १६७, संर. ४०३ पूर्वान ( सर्वान ).

[1]पुत्रेण लोकान् जयति पौत्रेणामृतमश्नुते ।
अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहति ॥ इति ॥

(१) आयुषा युक्तः प्रजामुत्पादयेदित्युक्तम् । तत्राह —पुत्रेणेति । पुत्रेण दृष्टेन । तत्पुत्रेण तत्पौत्रेण इत्यत्रापि दृष्टेनेति शेषः । अमृतं देवैः सायुज्यम् । नाकम्, कमिति सुखम्, तदभावो दुःखम्, एतत् प्रतिषिध्यते । दुःखान-नुविद्धं सुखं, ब्रह्मणः पदमिति यावत् । ' दिवि मोदते ' इति सिद्धे पुनरुपादानं बहुपुत्रोत्पादनार्थम् । यथाहुः पौराणिकाः— ' एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ' ( मत्स्यपुराणे ) इति । बौवि.

(२) लोकान् देवलोकान् । नाकः स्वर्गः ।

संर. ४०४

[2]विज्ञायते च— ' जायमानो वै ब्राह्मणस्त्रिभि-र्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ' इति । एवमृणसंयोगं वेदो दर्शयति ॥

(१) अथेदानीं ऋणसंयोगतदपाकरणे श्रुतिप्रमाणके इत्याह— विज्ञायते चेति । तदपाकरणं चेति शेषः ।

बौवि.

(२) एतैस्त्रिभिः कर्मभिर्ऋणत्रयापाकरणं भवती-त्यत्र श्रुतिं दर्शयति— विज्ञायते च जायमानो वा इत्या-दिना । एवं एवंप्रकारेण अनृणसंयोगं अनृणसंयोगत्वम्, नान्य उपाय ऋणत्रयापाकरणेऽस्तीति वेदः ' एष वा अनृण. ' इत्यादिरूपो दर्शयति बोधयति । संर. ४०४

[3]वैन्धनमृणमोक्षं प्रजायाश्चाऽऽयत्तं पितॄणां च ।
अनुकर्षशब्दश्च प्रजां दर्शयति । अनुत्पन्नप्रजा-

---

(१) बौध. २।१६।६ ; मुक्ता. १६७ णामृत ( णानन्त्य ) रोहति ( रोहयेत् ) ; संर. ४०३ णामृत ( णानन्द ) रोहति ( रोहयेत् ).

(२) बौध. २।१६।७ ; निप्र. ५४२ ( भाग २ ) ( च० ) ( वै० ) र्ऋणवा ( र्ऋणवान् ) ; मुक्ता. १६७ ( ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्य प्रजया० ) ; संर. ४०३ वमृण ( वमनृण ).

(३) मुक्ता. १६७ ( बन्धमृणमोक्षं च प्रजायां चायत्तं पितॄणां चानुकर्षेण प्रजाया दर्शयति । अनुत्पन्न प्रजावान् भवति यावदेन प्रजासु गृह्णीते तावदेवाक्षय्यान् लोकान् जनयति ) ; संर. ४०३.

चान्भवति । यावदेनं प्रजाऽनुगृह्णीते तावदक्षय्यं लोकं जयति ॥

बन्धनं ऋणमोक्षमित्येतत्पूर्वं स्वस्येति शेषः । ऋणानपाकरणं बन्धनम् । ऋणमोक्षं ऋणापाकरणम् । एतद्द्वयं प्रजाया आयत्तं प्रजाया अधीनम् । प्रजायां सत्यां ऋणमोक्षः, तस्यामसत्यां बन्धनमित्येतत्प्रजाया अधीनमिति तदर्थः । प्रजाया इत्येतदनन्तरभूतः चशब्दः अवधारणार्थः । पितृणां च पितृणामपि । अनपाकृतर्णानां पितृणामपि बन्धनमोक्षौ प्रजाया आयत्तौ भवत इत्यर्थः । प्रजायाश्च आयत्तमित्यनेन प्रजोत्पादनस्याधीनता दर्शिता । अनुकर्षशब्दः एकांशभूतः शब्दः प्रजैकांशभूतः पुत्ररूपशब्दः प्रजां दर्शयति, न तु केवलपुनमात्रं ब्रूते, किंतु गौण्या वृत्त्या कन्यारूपा प्रजामपि ब्रूते इति । प्रजोत्पादने कृते अनुत्पन्नप्रजावान् भवति । प्रजोच्छेददोषो न भवतीति तात्पर्यार्थः । यावत् यावत्कालं एनं प्रजोत्पादकं प्रजा अनुगृह्णीते तस्मिन्ननुग्रहं करोति तावत्कालमक्षय्यं लोकं जयति । बह्वी प्रजा जाता चेत् बहुकालमक्षय्यलोकजयः, स्वल्पा चेत् स्वल्पकालमक्षय्यलोकजय इत्यर्थः ।

संर. ४०४–४०५

सत्पुत्रमुत्पाद्याऽऽत्मानं तारयति ॥

( १ ) किंच – सत्पुत्रमिति । सत्पुत्रः साधुपुत्रः अध्ययनविज्ञानानुष्ठानसंपन्नो यथा भवति तथोत्पादनीयः पुत्र इत्यर्थः । ' अनुशिष्टं लोक्यं पुत्रमाहुस्तस्मादेनमनुशास्ति ' इति श्रुतेः ।

चौवि.

( २ ) पुत्रस्य समीचीनत्वे एव आत्मनस्तारणं नान्यदेति सत्पदेन सूच्यते ।

संर. ४०५

सप्तावरान् सप्त पूर्वान् षडन्यानात्मसप्तमान् । सत्पुत्रमधिगच्छानस्तारयत्येनसो भयात् ॥

( १ ) इदं चान्यत् – सप्तावरानिति । अधिगच्छानः प्राप्नुवानः सप्त पूर्वापरानात्मपञ्चदशान् एनसः तारयति इति संबन्धः । अन्यान् असत्पुत्रान् औरसानधिगच्छानः त्रीन् प्राचः त्रीन् प्रतीच आत्मसप्तमान् तारयति ।

चौवि.

( २ ) केवलमात्मतारणमेव न, किंतु अन्येषामपि तारणमित्यस्मिन्नर्थे ब्रह्मवादिनां संमतिं दर्शयति – सप्तावरानित्यादिना अधीच्छाम इत्यन्तेन । यतस्तरणं सत्पुत्राधीनम्, अतस्तमेवाधीच्छाम इति ब्रह्मवादिन आहुरिति शेषः ।

संर. ४०५

तस्मात्प्रजासंतानमुत्पाद्य फलं प्राप्नोति ॥
तस्माद्यत्नवान् प्रजामुत्पादयेत् ॥

उपसंहरति –– यस्मात्प्रजासंतानमित्यादिना । यस्मात् प्रजासंतानमुत्पाद्य फलं यथोक्तं फलं आप्नोति, तस्मात् प्रजामवश्यमुत्पादयेत् । संतानशब्दः संततिवाचकः । संतानशब्दस्य पर्यायतां दर्शयितुं संतानवचनम् । अथवा संतानशब्दः प्रजाबाहुल्यावश्यकत्वं द्योतयितुम् । ' एष्टव्या बहवः पुत्राः ' इत्यस्ति चात्र स्मृतिरपि । फलं यथोक्तम् । आत्मवान् बलवान् । फललाभाय यथोक्तफललाभाय ।

संर. ४०५

तस्मात्सत्पुत्रं चोत्पाद्याऽऽत्मानमेवोत्पादयेदिति । विज्ञायते चाऽऽत्मा वै पुत्रनामाऽसीति । एवं द्वितीय आत्मा जीवतां द्रष्टव्यः । यः पुत्रमुत्पादयति स तथा भवति । तस्मान्नाऽऽत्मा कचिदक्षेत्रे समुत्स्रष्टव्यः । आत्मानमवमन्यते हि । यथाऽऽत्मानमुत्पादयति स तथा भवति । तस्मादादित एव क्षेत्रमन्विच्छेत्सवर्णं संस्कृतमुपदेशेन तस्मिन् दारे संयोगेन प्रजामुत्पादयेत् ॥

( १ ) बौध. २।१६।८ ; निप्र. ५४२ ( भागः २ ) ( तथा स पुत्रमुत्पाद्य तारयति ) ; मुक्ता. १६७ ; संर. ४०३.

( २ ) बौध. २।१६।९ ; निप्र. ५४३ ( भागः २ ) सप्तमान् ( सप्तवान् ) पू. ; मुक्ता. १६७ ; संर. ४०३ ( सप्तावरान् सप्त परान् षडन्यानात्मसप्तमान् सत्पुत्रमधीच्छाम इति ) एतावदेव.

( १ ) बौध. २।१६।१० ; मुक्ता. १६७ फलं प्राप्नोति ( फलमवाप्नोति ) ; संर. ४०३ तस्मात् ( यस्मात् ) शेषं मुक्तावत्.

( २ ) बौध. २।१६।११ ; ब्रक. ७९ ( तस्माद्यत्नवान् ० ) ; संप्र. १६६ ( तस्माद्यत्नवान् ० ) ; मुक्ता. १६७ ; संर. ४०३ यत्नवान् ( दात्मवान् ).

( ३ ) मुक्ता. १६७ ( आत्मना फललाभाय तस्मात् पुत्रं चोत्पाद्यात्मानमेवोत्पादयेत् इति । विज्ञायते– आत्मा वै पुत्रनामासीत्येव द्वितीय आत्मा जीवता द्रष्टव्यो यः पुत्रमुत्पादयति ) ; संर. ४०३–४०४.

यस्माद्विज्ञायते च –– 'आत्मा वै पुत्रनामाऽसि' इति श्रुतिः, तस्मात् सत्पुत्रं चोत्पाद्य आत्मानमेवोत्पादयेदित्यन्वयः । एवमेवं च जीवता पुरुषेण पुत्रो द्वितीयः स्वस्य आत्मैव द्रष्टव्यः । यो यथा पुत्रमुत्पादयति स तथा भवति । सत्पुत्रोत्पादने सन्नेव भवति । असत्पुत्रोत्पादने तु असन्नेव । अक्षेत्रे स्वीयक्षेत्रातिरिक्ते निषिद्धे बलात्कारेण उपभुक्ते च क्षेत्रे । अक्षेत्रे यः पुत्र उत्पाद्यते स आत्मावमान एव यस्मात्, तस्मात्स्वक्षेत्रे यथोक्तकाले एव आत्मानमुत्पादयेत् । केवलमवमान एव न किंतु निषिद्धक्षेत्रे पुत्रोत्पादने तद्रूपत्वमपि इत्यर्थः । आदित आदौ विवाहे एव क्षेत्रं भार्यां अनु लक्षीकृत्यैव इच्छेत् प्रजोत्पादनाय । अनेन परीक्षा सगृहीता भवति । सवर्णं सजातीयम् । आदित इत्यस्य प्रथममित्यर्थः । सार्वविभक्तिकस्तसिः । तेन क्षत्रियवैश्यजातीययोः कन्ययोरपि भार्यात्वेन संग्रहः सिद्धो भवति । उपदेशेन विधिना विवाहविधिना संस्कृतं क्षेत्रम् । दारशब्दः पुंलिङ्गे वर्तते । एकवचनं छान्दसम् । तस्मिन्दारे सवर्णे संस्कृते संयोगेन संबन्धेन विधिपूर्वकमैथुनेन । संर. ४०५

औषधमन्त्रसंयोगेन ॥

( १ ) ओषधिसंयोगेन हि प्रजा भवति, शुक्रगानां क्रिमीणामपनयनात् । तथा मन्त्रसंयोगेनापि, रक्षःपिशाचाद्यपनयनात् । 'तस्माद्यत्नवान् प्रजामुत्पादयेत्' इत्यस्य विस्तरः । बौवि.

( २ ) यदि संयोगे सत्यपि प्रजोत्पादनं न भवति तदा औषधसंयोगमन्त्रसंयोगावपि कर्तव्यौ । संयोगः प्रयोगः । संर. ४०५

तस्योपदेशः श्रुतिसामान्येनोपदिश्यते ॥

सर्ववर्णेभ्यः फलवत्त्वादिति फलवत्त्वादिति ॥

( १ ) न चैतावता – ' या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥' ( मस्मृ. १२।९५ ) इत्येवमाशङ्कनीयमित्याह – तस्योपदेश इति । तस्य प्रजोत्पादने यत्नवतः औषधाद्युपदेशोऽस्माभिरुपदिश्यते । केन मूलज्ञानेनेति ? श्रुतिसामान्येन श्रुतेः समानभावस्तुल्यता ऐकरूप्यं श्रुतिसामान्यं, तेन । किमुक्तं भवति ? ' प्रजामुत्पादयेत् ' इत्यस्याः श्रुतेः पुत्रकामेष्ट्या औषधमन्त्रादिषु चैकरूपेण आपेक्षिकत्वादिति ।

इदानीमृगश्रुतौ ब्राह्मणग्रहणं क्षत्रियवैश्ययोरपि प्रदर्शनार्थमेतदित्याह –– सर्ववर्णेभ्य इति । फलवत्त्वात् प्रयोजनवत्त्वात् । फलमिहोपनयनस्याध्ययनम्, तच्च वेदार्थज्ञानाद्युपयुक्तत्वात् त्रैवर्णिकानामित्यर्थः । यद्वा – फलवत्त्वात् औषधमन्त्रादेरपि । बौवि.

( २ ) तस्य औषधमन्त्रसंयोगस्य उपदेशेन वैद्यकमन्त्रशास्त्रोपदेशेनैव, ज्ञानमिति शेषः । श्रुतिः ' जायमानो वै ' इत्यादिश्रुतिः सामान्येन, समानानां भावः सामान्यं साधर्म्यं वेदाध्ययनवत्त्वरूपं, तेन हेतुना सर्ववर्णेभ्यः सर्ववर्णार्था दृश्यते । ' ब्राह्मणः क्षत्रियो वैश्यो वाऽपाकुर्यादृणत्रयम् ' इत्यादिस्मृतिषु इति शेषः ।

यत्रपि ' जायमानः ' इति श्रुतिः ब्राह्मणत्वपुरस्कारेणैव दृश्यते, तथापि वेदाध्ययनवत्त्वरूपसाधर्म्यमादाय सर्ववर्णेभ्यो भवति । सर्वेषां फलवत्त्वात् फलेच्छावत्त्वात् । अथवा ' जायमानः ' इति श्रुतिः केवलं सामान्ये ब्राह्मणत्वजातिमात्रसामान्ये नोपदृश्यते नैव प्रवर्तते, किंतु ब्रह्म वेदः, तदध्ययनवत्सु त्रिषु । कुतः, सर्ववर्णेभ्यः फलेच्छावत्त्वादिति । संर. ४०५–४०६

वसिष्ठः

समावृत्तस्य सदृश्याऽनन्यपूर्वया विवाहो गुर्वनुज्ञया

गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षेयामस्पृष्टमैथुनामवरवयसीं सदृशीं भार्यां विन्देत ॥

( १ ) बौध. २।१६।१२ , प्रक. ७९ संयोगेन ( योगेन ) ; संप्र १६६ प्रकवत् ; संर. ४०४ संयोगेन+( च ) .

( २ ) बौध. २।१६।१३ , संर. ४०४ ( तस्योपदेशेन श्रुतिसामान्येनोपदृश्यते )

( ३ ) बौध २।१६।१४ फलवत्त्वादिति ( फलत्वादिति ) ; संर. ४०४.

( १ ) वस्मृ ८।१ ( क. ) नार्षेया. . . वयसीं ( नार्षीमस्पृष्टमैथुनां यवीयसीं ) ; विश्व. १।५० ( गृहस्थोऽविनीतक्रोधहर्षः ) स्मृतिच : १।५१ ( गृहस्थोऽविनीतक्रोधहर्षो गुरुणा

(१) वीतरागस्य तु आत्मार्थमपि प्रवृत्त्यभावात् (गार्हस्थ्ये) नाधिकृतत्वम् । तथा च वसिष्ठः—'गृहस्थोऽविनीतक्रोधहर्षः' इति एतदेव दर्शयति । अविनीतक्रोधहर्षस्यैव गार्हस्थ्यम्, विनीतक्रोधहर्षस्तु 'यमिच्छेत् तमावसेत्' इति अस्यार्थो यतः । विश्व. १।५०

(२) गृहस्थ इति भाविनि भूतवदुपचारः तद्धर्मप्राप्त्यर्थः । तेन अकृतदारोऽपि गार्हस्थ्यसंकल्पवान् आश्रमान्तरान्निवृत्तो गृहस्थधर्मेष्वधिक्रियते ।

* अप. १।५२

गार्हस्थ्यमहिमा, ऋणापाकरणं विवाहेन

गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥
यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः ॥

विज्ञायते हि—त्रिभिर्ऋणैर्ऋणवान् ब्राह्मणो जायत इति ॥ यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इति । एष वाऽनृणो यज्वा यः पुत्री ब्रह्मचर्यवानिति ॥

कश्चिद्गृहाश्रमसमो न परोऽस्ति धर्मः
सोऽपि स्थितः सुगुणवृत्तयुताङ्गनासु ।
उद्वाहलग्नवशतो गुणवृत्तलब्धि-
स्तासां तथाविधसुलग्नमतः प्रवच्मि ॥

## विष्णुः

समावृत्तस्य विवाहः

वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत् ॥

## शङ्खः शङ्खलिखितौ च

समावृत्तस्य पित्रनुज्ञया विवाहः सदृश्या

अनुज्ञातो गुरुणा मातापित्रोरनुमतो दारानाहरेत् ॥

दारानाहरेत् सदृशानसमानार्षेयानसंबन्धानासप्तमपञ्चमात् पितृमातृबन्धुभ्यः ॥

विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम् ।
मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम् ॥

## महाभारतम्

कुलरक्षणकरः सन्तानार्थं विवाहः, संतानं पावनं तारकं च नरकात्

तपो वाऽप्यथवा यज्ञो यच्चान्यत्पावनं महत् ।
तत्सर्वं न समं तात संतत्येति सतां मतम् ॥
स तात दृष्ट्वा ब्रूयास्त्वं जरत्कारुं तपस्विनम् ।

---

* गृक., गृर., उन. अपवत् । संप्र. अपगनार्थम् ।

ज्ञान' स्नात्वा ); मेधा. ३।१० ( अस्पृष्टमैथुना सदृशीं भार्यां विन्देत ) एतावदेव ; अप. १।५२ ( पृ. ७९ ) नार्षेया ( नार्षेयी ) वयसीं ( वयसं ) ; गृक. ५ नार्षेया ( नार्षेयी ) ; उ. २।११।१६ (पृ २२१) वयसीं + (भ्रातृमती) ; गृर. ५ नार्षेया (नार्षेयी) मवरवयसीं ( मधरवयस्कां ) ; मपा. १३९ ( गृहस्थो...... स्नात्वा० ), नार्षेया ( नार्षेयी ) वयसी ( वयस्कां ) ; उत. ९४९ विनीतक्रोधहर्षो ( विनीनवेशोऽक्रोधहर्षो ) नार्षेया ( नार्षेयी ) वयसी ( वयस्कां ) ; संप्र. ७०३, ७०६ ( गृहस्थः सदृशीं भार्यां विन्देत ) एतावदेव ' ७४५ नार्षेया ( नार्षेयी ) ; मुक्ता. १२५ असमानार्षेयामस्पृष्टमैथुनामवरवयसीं भार्यां विन्देत ) एतावदेव.

(१) वस्मृ. ८।१४ ; स्मृच. ६५ ; संप्र. ५६४ स्तप्यते तपः स्तपते ततः ) ; मुक्ता. १६९ ; संम. ४३ पूर्वार्धे ( गृहस्थ एव प्रवजेत् गृहस्थः स्तूयते यत. ।).

(२) वस्मृ. ८।१५.

(३) वस्मृ. ८।१६ ; उ. १।१४।१ (=) ; मपा. २८९ एव ( तथा ) भिक्षवः ( भिक्षुकाः ) स्मृत्यन्तरम्; मुक्ता. १६५ दक्ष. ; संर. ३८५ भिक्षवः ( भिक्षुकाः ) स्मृत्यन्तरम् .

(४) वस्मृ. ११।४२, ४३.

(१) वसं. ३२।१.

(२) समु. ५ ; मर. १७; मुक्ता. १२३ ; आन. १६७. संस्कारप्रकाशादिग्रन्थेषु दक्षस्येदं वचनं, तत्रापि स्थलादिनिर्देशो द्रष्टव्यः ।

(३) ममु. ११८.

(४) उ. २।११।१६ पृ. २२१ शंखः; मुक्ता. १२५ न्धानासप्तमपञ्चमात् ( न्धान् सप्तमात् ); बाल. १।५३ पृ. १९२ पञ्चमात् ( पञ्चमान् ) .

(५) शंस्मृ. ४।१ ; संप्र. ७०४.

(६) भा. १।४५।३०–३२.

यथादृष्टमिदं चास्मै त्वयाऽऽख्येयमशेषतः ।
यथा दारान् प्रकुर्वीत स पुत्रांश्चोत्पादयेद्यथा ॥
भार्यां पतिः संप्रविश्य स यस्माज्जायते पुनः ।
जायाया इति जायात्वं पुराणाः कवयो विदुः ॥
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान् पितामहान् ॥
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य भार्या मित्रं मरिष्यतः ॥
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥
*सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।*
*पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥*
कान्तारेष्वपि विश्रामो नरस्याध्वनिकस्य वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सततं या पतिव्रता ॥
प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति ॥
एतस्मात्कारणाद्राजन् पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ॥
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद्भार्यां नरः पश्येन्मातृवत्पुत्रमातरम् ॥
भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ॥
सुसंरब्धोऽपि रामाणां न ब्रूयादप्रियं बुधः ।
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य च ॥
आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ॥

(१) भा. १।७४।३७-६२.

परिपत्य यदा सूनुर्धरणीरेणुगुण्ठितः ।
पितुराश्लिष्यतेऽङ्गानि किमिवास्त्यधिकं ततः ॥
स त्वं स्वयमनुप्राप्तं साभिलाषमिमं सुतम् ।
प्रेक्षमाणं च काक्षेण किमर्थमवमन्यसे ॥
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्मज्ञः सन् स्वमात्मजम् ॥
न वाससां न रामाणां नापां स्पर्शस्तथा सुखः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥
स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः ।
पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥
त्रिषु वर्षेषु पूर्णेषु प्रजाताऽहमरिन्दम ।
इमं कुमारं राजेन्द्र तव शोकप्रणाशनम् ॥
*आहर्ता वाजिमेधस्य शतसंख्यस्य पौरव ।*
*इति वागन्तरिक्षे मां सूतकेऽभ्यवदत् पुरा ॥*
ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः ।
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥
वेदेष्वपि वदन्तीमं मन्त्रवादं द्विजातयः ।
जातकर्मणि पुत्राणां तवापि विदितं तथा ॥
अङ्गादङ्गात् संभवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥
स्वयमुत्पाद्य वै पुत्रं सदृशं योऽवमन्यते ।
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥
[1]कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ।
उत्तमं सर्वधर्माणां तस्मात्पुत्रं न संत्यजेत् ॥
स्वपत्नीप्रभवान् पञ्च लब्धान् क्रीतान् विवर्धितान् ।
कृतानन्यासु चोत्पन्नान् पुत्रान्वै मनुरब्रवीत् ॥
धर्मकीर्त्यावहा नृणां मनसः प्रीतिवर्धनाः ।
त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् ॥
[2]वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥

(१) भा. १।७४।९७-१००.
(२) भा. १।७४।१०२.

[1]ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्चावृतं तदा ।
भस्त्रा माता पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् ॥
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥
जाया जनयते पुत्रमात्मनोऽङ्गं द्विधा कृतम् ।
तस्माद्भरस्व दुष्यन्त पुत्रं शाकुन्तलं नृप ॥
अभूतिरेषा कस्त्यज्यात् जीवन् जीवन्तमात्मजम् ॥
[2]अनपत्यतैकपुत्रत्वमित्याहुर्धर्मवादिनः ।
अग्निहोत्रं त्रयो वेदाः यज्ञाश्च सहदक्षिणाः ॥
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ।
एवमेव मनुष्येषु स्याच्च सर्वप्रजास्वपि ॥
पाण्डुरुवाच–
[3]अप्रजस्य महाभागा न द्वारं परिचक्षते ।
स्वर्गे तेनाभितप्तोऽहमप्रजस्तद्ब्रवीमि वः ॥
पित्र्यादृणादनिर्मुक्तस्तेन तप्ये तपोधनाः ।
देहनाशे ध्रुवो नाशः पितृणामेष निश्चयः ॥
ऋणैश्चतुर्भिः संयुक्ता जायन्ते मनुजा भुवि ।
पितृदेवर्षिमनुजदेयैः शतसहस्रशः ॥
एतानि तु यथाकालं यो न बुध्यति मानवः ।
न तस्य लोकाः सन्तीति धर्मविद्भिः प्रतिष्ठितम् ॥
यज्ञैश्च देवान् प्रीणाति स्वाध्यायतपसा मुनीन् ।
पुत्रैः श्राद्धैः पितॄंश्चापि आनृशंस्येन मानवान् ॥
ऋषिदेवमनुष्याणां परिमुक्तोऽस्मि धर्मतः ।
त्रयाणामितरेषां तु नाश आत्मनि नश्यति ।
पित्र्यादृणादनिर्मुक्त इदानीमस्मि तापसाः ॥
इह तस्मात् प्रजाहेतोः प्रजायन्ते नरोत्तमाः ।
यथैवाहं पितुः क्षेत्रे सृष्टस्तेन महात्मना ।
तथैवास्मिन् मम क्षेत्रे कथं वै संभवेत् प्रजा ॥
तापसा ऊचुः–
अस्ति वै तव धर्मात्मन् विद्म देवोपमं शुभम् ।
अपत्यमनघं राजन्वयं दिव्येन चक्षुषा ॥

(१) भा. १।७४।११०–११३.
(२) भा. १।१००।६७–६८. (३) भा. १।१२०।१५–४०.

दैवदिष्टं नरव्याघ्र कर्मणेहोपपादय ।
अक्लिष्टं फलमव्यग्रो विन्दते बुद्धिमान् नरः ॥
तस्मिन् दृष्टे फले तात प्रयत्नं कर्तुमर्हसि ।
अपत्यं गुणसंपन्नं लब्ध्वा प्रीतिमवाप्स्यसि ॥
वैशंपायन उवाच–
तच्छ्रुत्वा तापसवचः पाण्डुश्चिन्तापरोऽभवत् ।
आत्मनो मृगशापेन जानन्नुपहतां क्रियाम् ॥
सोऽब्रवीद्विजने कुन्तीं धर्मपत्नीं यशस्विनीम् ।
अपत्योत्पादने योगमापदि प्रसमर्थयन् ॥
अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता ।
इति कुन्ति विदुर्धीराः शाश्वतं धर्ममादितः ॥
इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः ।
सर्वमेवानपत्यस्य न पावनमिहोच्यते ॥
सोऽहमेवं विदित्वैतत् प्रपश्यामि शुचिस्मिते ।
अनपत्यः शुभाँल्लोकान्नावाप्स्यामीति चिन्तयन् ॥
मृगाभिशापान्नष्टं मे प्रजनं ह्यकृतात्मनः ।
नृशंसकारिणो भीरु यथैवोपहतं तथा ॥
इमे वै बन्धुदायादाः षट् पुत्रा धर्मदर्शने ।
षडेवाबन्धुदायादाः पुत्रास्ताञ्छृणु मे पृथे ॥
स्वयंजातः प्रणीतश्च परिक्रीतश्च यः सुतः ।
पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते ॥
दत्तः क्रीतः कृत्रिमश्च उपगच्छेत् स्वयं च यः ।
सहोढो जातरेताश्च हीनयोनिधृतश्च यः ॥
पूर्वपूर्वतमाभावे मत्वा लिप्सेत वै सुतम् ।
उत्तमादवराः पुंसः काङ्क्षन्ते पुत्रमापदि ॥
अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति साधवः ।
आत्मशुक्रादपि पृथे मनुः स्वायंभुवोऽब्रवीत् ॥
तस्मात् प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयम् ।
सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनी ॥
शृणु कुन्ति कथां चेमां शारदण्डायनीं प्रति ।
या वीरपत्नी गुरुभिर्नियुक्ताऽपत्यजन्मनि ॥
पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे ।
वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् ॥
कर्मण्यवसिते तस्मिन् सा तेनैव सहावसत् ।
तत्र त्रीन् जनयामास दुर्जयादीन्महारथान् ॥

ऋणिनो मानवा ब्रह्मन् जायन्ते येन तच्छृणु ।
क्रियाभिर्ब्रह्मचर्येण प्रजया च न संशयः ॥
तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः ।
तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा ॥
त इमे प्रसवस्यार्थे तव लोकाः समाहृताः ।
प्रजायस्व ततो लोकानुपभोक्ताऽसि शाश्वतान् ॥
पुन्नाम्नो नरकात् पुत्रस्त्रातीति पितरं मुने ।
तस्मादपत्यसंताने यतस्व द्विजसत्तम ॥
युधिष्ठिर उवाच—
कथं वै सफला वेदाः कथं वै सफलं धनम् ।
कथं वै सफला दाराः कथं वै सफलं श्रुतम् ॥
नारद उवाच—
अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥
[3]त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् ।
अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ॥
येदर्थे पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ।
उत्तारयति संतत्या दश पूर्वान् दशावरान् ॥
यक्ष उवाच—
[4]किं स्विदात्मा मनुष्यस्य किं स्विद्दैवकृतः सखा ।
उपजीवनं किं स्विदस्य किं स्विदस्य परायणम् ॥
युधिष्ठिर उवाच—
पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥
[5]बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा ब्रह्मचर्येण यज्ञेन तितिक्षया ॥
उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः ।
लभन्ते मातरो गर्भान् तान्मासान्दश बिभ्रति ।
यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि ॥
संभाविता जातबलास्ते दद्युर्यदि नः सुखम् ।
इह चामुत्र चैवेति कृपणाः फलहेतुकाः ॥
पिता ह्यात्मानमाधत्ते जायायां जज्ञियामिति ।
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥
जातकर्मणि यत् प्राह पिता यच्चोपकर्मणि ।
पर्याप्तः स दृढीकारः पितुर्गौरवनिश्चये ॥
माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ।
मातृलाभे सनाथत्वमनाथत्वं विपर्यये ॥
धर्मार्था हि यथा त्रेता वह्नित्रेता तथैव च ।
तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः ॥
पितॄन् ऋणात्तारयति पुत्र इत्यनुशुश्रुम ।
पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते ॥

एक एव पतिर्नार्याः

[6]प्रद्विषन्तीं पतिर्भार्यां किं मां द्वेक्षीति चाब्रवीत् ।
प्रद्वेष्युवाच—
भार्याया भरणाद्भर्ता पालनाच्च पतिः स्मृतः ॥
यथेष्टं कुरु विप्रेन्द्र न भरेयं पुरा यथा ।
दीर्घतमा उवाच—
अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता ॥
एक एव पतिर्नार्या यावज्जीवं परायणम् ।
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम् ॥
अभिगम्य परं नारी पतिष्यति न संशयः ।
अपतीनां तु नारीणामद्यप्रभृति पातकम् ॥
यद्यस्ति चेद्धनं सर्वं वृथाभोगा भवन्तु ताः ।
अकीर्तिः परिवादाश्च नित्यं तासां भवन्तु वै ।

कन्यादाने पितुरधिकारः

[7]अप्रदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥

(१) भा. १।२२९।११-२४.
(२) भा. २।७।११,१२.
(३) भा. ३।२।१५.
(४) भा. ३।८७।१९-२०.
(५) भा. ३।३१३।७१-७२.
(६) भा. १२।७।११-१६.
(१) भा. १२।२६६।१४. (२) भा. १३।२६६।१६.
(३) भा. १२।२६६।२६. (४) भा. १४।९०।७०,७१.
(५) भा. १३।७०।३०. (६) भा. १।१०४।१४-२०.
(७) भा. १।१०४।२५.

कन्यादानं सकृदेव

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥

सप्तपदीकर्मणा विवाहसमाप्तिः

प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ॥

यक्ष उवाच –
धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ।
एषां नित्यविरुद्धानां कथमेकत्र संगमः ॥

युधिष्ठिर उवाच –
यदा धर्मश्च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः ॥
मनोवाग्बुद्धिसंभाषा दत्ता चोदकपूर्वकम् ॥
पाणिग्रहणमन्त्राश्च प्रथितं वरलक्षणम् ।
न त्वेषा निश्चिता निष्ठा निष्ठा सप्तपदी स्मृता ॥

गार्हस्थ्यमहिमा

अर्जुन उवाच–
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
तापसैः सह संवादं शक्रस्य भरतर्षभ ॥
केचिद्गृहान् परित्यज्य वनमभ्यगमन् द्विजाः ।
अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः ॥
धर्मोऽयमिति मन्वानाः ब्रह्मचर्ये व्यवस्थिताः ।
त्यक्त्वा गृहान्पितृंश्चैव तानिन्द्रोऽन्वकृपायत ॥
तानाबभाषे भगवान् पक्षी भूत्वा हिरण्मयः ।
सुदुष्करं मनुष्यैश्च यत्कृतं विघसाशिभिः ॥
पुण्यं च वत कर्मैषां प्रशस्तं चैव जीवितम् ।
संसिद्धास्ते गतिं मुख्यां प्राप्ता धर्मपरायणाः ॥

ऋषय ऊचुः–
अहो बतायं शकुनिर्विघसाशान् प्रशंसति ।
अस्मान्नूनमयं शास्ति वयं च विघसाशिनः ॥

शकुनिरुवाच–
नाहं युष्मान्प्रशंसामि पङ्कदिग्धान्रजस्वलान् ।
उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः ॥

ऋषय ऊचुः–
इदं श्रेयः परमिति वयमेवाभ्युपास्महे ।
शकुने ब्रूहि यच्छ्रेयो भृशं वै श्रद्दधाम ते ॥

शकुनिरुवाच–
यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना ।
ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः ॥

ऋषय ऊचुः–
शृणुमस्ते वचस्तात पन्थानो विदितास्तव ।
नियोगे चैव धर्मात्मन्स्थातुमिच्छाम शाधि नः ॥

शकुनिरुवाच–
चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥
मन्त्रोऽयं जातकर्मादि ब्राह्मणस्य विधीयते ।
जीवतो यो यथाकालं श्मशाननिधनादिति ॥
कर्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः ।
अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते ॥
आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते ।
मासार्धमासा ऋतव आदित्यशशितारकम् ॥
ईहन्ते सर्वभूतानि तदृतं कर्मसङ्गिनाम् ।
सिद्धिक्षेत्रमिदं पुण्यमयमेवाश्रमो महान् ॥
अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः ।
मूढानामर्थहीनानां तेषामेनस्तु विद्यते ॥
देववंशान् पितृवंशान् ब्रह्मवंशांश्च शाश्वतान् ।
संत्यज्य मूढा वर्तन्ते ततो यान्त्यश्रुतीपथम् ॥
एतद्वोऽस्तु तपोयुक्तं ददानीत्यृषिचोदितम् ।
तस्मात्तदध्यवसतस्तपस्वितप उच्यते ॥
देववंशान् पितृवंशान् ब्रह्मवंशांश्च शाश्वतान् ।
संविभज्य गुरोश्चर्यां तद्वै दुष्करमुच्यते ॥
देवा वै दुष्करं कृत्वा विभूतिं परमां गताः ।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ॥
तपः श्रेष्ठं प्रजानां हि मूलमेतन्न संशयः ।
कुटुम्बविधिनाऽनेन यस्मिन्सर्वं प्रतिष्ठितम् ॥

(१) भा. १।२९४।२६.
(२) भा. १।२९७।२३.
(३) भा. ३।११३।१०१,१०२.
(४) भा ७।१५।१५–१६.
(५) भा. १२।११।१–२८.

एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः ।
तस्माद्वनं मध्यमं च लोकेषु तप उच्यते ॥
दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः ।
सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि ॥
दत्त्वाऽतिथिभ्यो देवेभ्यः पितृभ्यः स्वजनस्य च ।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः ॥
तस्मात् स्वधर्ममास्थाय सुव्रताः सत्यवादिनः ।
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ॥
त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः ।
वसन्ति शाश्वतीर्वर्षा जना दुष्करकारिणः ॥
ततस्ते तद्वचः श्रुत्वा तस्य धर्मार्थसंहितम् ।
उत्सृज्य नास्तिकगतिं गार्हस्थ्यं धर्ममाश्रिताः ॥
तस्मात् त्वमपि दुर्धर्ष धैर्यमालम्ब्य शाश्वतम् ।
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नरोत्तम ॥
[1]पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥
पतिव्रता पतिगतिः पतिप्रियहिते रता ।
यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥
[2]धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्रामकारिका ॥
भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिँल्लोकयात्रासहायिनी ॥
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं किञ्चिन्नरस्यार्तस्य भेषजम् ॥
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥
यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥
[3]न सा स्त्री ह्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥

(१) भा. १२।१४४।५,६,१०.
(२) भा. १२।१४४।१२–१७.
(३) भा. १२।१४५।३–५.

अग्निसाक्षिकमित्येव भर्ता वै दैवतं परम् ।
दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ॥
भस्मीभवति सा नारी यस्या भर्ता न तुष्यति ।
इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ॥
[1]मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥
नास्ति भर्तृसमो नाथो न च भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥
[2]भरणाद्धि स्त्रियो भर्ता पालनाच्चैव स्त्रियः पतिः ।
गुणस्यास्य निवृत्तौ तु न भर्ता न पुनः पतिः ॥

## मनुः

विद्यास्नातकस्य गार्हस्थ्याधिकारः

[3]वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥

(१) त्रैवेदिकमध्ययनं उक्तम् । एकद्विवेदाध्ययनमप्रासं विकल्प्यते । वेदशब्दः शाखावचनो व्याख्यातः । तिस्रः शाखा अधीयीत द्वे एका वा एकैकस्माद्वेदात्, न तु एकस्मादेव । त्रयी त्रिविद्या इति पठ्यते । अधीत्य गृहीत्वा वेदमुक्तया व्रतचर्यया गृहस्थाश्रममावसेत् । गृहस्थाश्रमस्य स्वरूपं वक्ष्यति– 'उद्वहेत द्विजो भार्याम्' इत्यादि । आवसेदनुतिष्ठेत् । अनेकार्था धातवः । आङ् मर्यादायां वर्तते । कृतदारपरिग्रहो रूढ्या गृहस्थ उच्यते ।

(१) भा. १२।१४८।६–८.
(२) भा. १२।२६६।३७.
(३) मस्मृ. ३।२ ; विध. १।३६,५२ पृ. ; मिता. १।३६ (=) निर्देशमात्रम् ; गृक. १ मातमेद (मातिदेद) ; मभा. ३।८४ पृ. : ३।२ ; उ. १।३०।१ ; चद्रा. ६८० ; चका. ७८५ गृहस्थ, क्रमेण बृहस्पतिः ; गृर. ४ गृहस्थ ; मपा. १११ मात॰ मेद (मातदेद) ; प्रपा. ३४२ पृ., पत्तारम्भ ; मर. ५ गृहस्थ ; दीक. १।२६ ; विमी. ? (=) पृ. ; वीमि. १।२६ ; संप्र. ५०५ पृ. `५५६ (=) पृ. ; संस. ११ (=) पृ. ; सूक. ३८ पृ., स्मृति, विरा ५०३ (भाग: १) पृ., देवीचरः ; प्रका. ११८ पृ., याज्ञ. १।३६ उप. ; पुम. ४८१ गृहस्थ, क्रमेण बृहस्पति ; वीवि. १।३।८ (=) गृहस्थ ; कृम. ९८५ पृ., मंत ३०३ (=) पृ. : ६६१ (=) उप. : ३६८ यथाक्रमम् (मनाहित) मातमेद (मातिदेद).

गृहशब्दो दारवचनः, तत्र तिष्ठति । तस्य यो विहितः पदार्थसमूहो विधिनिषेधात्मकः स आश्रमशब्देनोच्यते । यथा उपनीतस्य ब्रह्मचर्याश्रमः आ समावर्तनात्, कृतविवाहस्य गार्हस्थ्यमिति । अविप्लुतं अखण्डितं ब्रह्मचर्यं स्त्रीसंप्रयोगनिवृत्तिः यस्य स एवमुच्यते । वाक्यभेदश्चात्र द्रष्टव्यः आख्यातव्यवहारेण (? ताध्याहारेण), अविप्लुतब्रह्मचर्यो भवेत्, गृहस्थाश्रमं च प्रतिपद्येत । एकवाक्यतायां कदाचन विप्लवे गार्हस्थ्याधिकार एव हीयेत । अद्य पुनः पुरुषार्थतया विधानेन तदतिक्रमे प्रायश्चित्तेन युज्यते, न तु अधिकारी न भवति ।

अधीत्य आवसेदिति च पौर्वापर्यमात्रं विवक्षितं, न अध्ययनसमनन्तरभाविता विवाहस्य । ल्यप्कार्यात् पौर्वापर्यविधानात् आनन्तर्यं न शब्दार्थः । अतश्च स्वाध्यायाध्ययनविवाहयोरन्तराले व्याकरणादिशास्त्रश्रवणं वेदार्थज्ञानार्थं लभ्यते । विद्वानेव हि गार्हस्थ्येऽधिक्रियते, न यथा अध्ययनविधौ मूर्खः । यद्यपि बाल्यावस्थायां तिर्यक्समानधर्मा स्वमधिकारं प्रतिपत्तुं असमर्थः, तथापि पित्रा आचार्येण वा अनुग्राप्यते । वस्तुतः तयोरेवाधिकारः । अपत्यानुशासने पितुरधिकारः अपत्योत्पत्तिविधेः तावता अभिनिर्वर्त्यत्वात् । अनुशासनं च विधिनिषेधाधिकारद्वयप्रतिपादनम् । तत्र यत् प्रतिपाद्यमानोऽपि नावबुध्यते, तदन्ध इव हस्तग्राहिकया कार्यते । यथा अग्निसंस्पर्शकूपादिपातात् गाढहस्तावष्टम्भादिना धार्यते, एवं अदृष्टादपि मद्यपानादेः । यथा वा अनिच्छन् औषधपानादौ प्रवर्त्यते, एवं शास्त्रीयेष्वपि पदार्थेषु । यदा तु ईषद्व्युत्पन्नः, तदा एवं नियुज्येत–'इदमिदं कर्तुमर्हसि' इति । एवं सति अधीतवेदो माणवकः पित्रा आचार्येणैव एवं प्रतिबोधयितव्यः–'गृहीतवानसि वेदं त्वं इदानीं तदर्थजिज्ञासायां अधिक्रियसे, ततस्तदङ्गानि श्रोतुमर्हसि' इति । एतावता पितुः अपत्योत्पादनाधिकारनिवृ(? वृ)त्तिः । तदुक्तं 'कियता पुनरुत्पादितो भवति यावता स्वयमधिगतकृत्यो भवति' इति । अतः सिद्धमेतत्– नाधीत्यैव विवाहः यावद्वेदार्थो नाधिगतः । एवं च पदयोजना कर्तव्या– अधीत्य अध्ययने निवृत्तेऽपि अविप्लुतब्रह्मचर्यः स्यात् । प्राप्तायां च निवृत्तौ पुनर्वचनं नियमान्तराणां मधुमांसवर्जनादीनां निवृत्तिपरम् । तेन यावदध्ययनं तावत्सर्वे नियमा अनुष्ठातव्याः । समाप्ते तु अध्ययने अर्थावबोधकाले स्त्रीनिवृत्तिरेव करणीया । स्त्रीसेवा न विधातव्या । ब्रह्मचर्यशब्दो यद्यपि ब्रह्मग्रहणार्थे यद्व्रतग्रहणं तत्र व्युत्पाद्यते, तथापि स्त्रीनिवृत्तिपर एवा(परस्यैवा)स्य तत्र प्रयोग इति दर्शयिष्यामः । यथाक्रमं य एव अध्येतॄणां पाठक्रमः प्रसिद्धस्तेनैव, प्रथमं चतुःषष्टिः ततो ब्राह्मणं पितृपितामहाद्यभिजनप्रबन्धोपक्रमं भवति । न हि ईदृशे अर्थे वक्तारो न कुलेन न शीलेन न क्रमेण, इति । एतेन च एतत्प्रतिपादितं भवति––या एव पित्रादिभिः शाखा अधीता सा न त्याज्या इति ।

मेधा.

(२) शाखात्रयं द्वयं चैकां वा स्वशाखापूर्वक्रमेण मन्त्रब्राह्मणपौर्वापर्यस्थितिक्रमेण च अधीत्य अखण्डितब्रह्मचर्यः असंजातस्त्रीसंप्रयोगः गार्हस्थ्यं प्रतिपद्यते ।

गोरा.

(३) विद्यास्नानपक्षे शक्त्यपेक्षो विकल्पः । यथाक्रमं, वेदत्रयाध्ययनपक्षे ऋग्वेदादिक्रमेणैव, (द्वि) वेदाध्ययने तु यच्छाखीयसंस्कारैः संस्कृतः तस्या एव आदौ अध्ययनमित्यर्थः ।

मवि.

(४) अविप्लुतब्रह्मचर्य इति । पूर्वविहितस्त्रीसंयोगमधुमांसभक्षणवर्जनरूपब्रह्मचर्यानुवादोऽयं प्रकृताध्ययनाङ्गत्वख्यापनार्थः । पुरुषशक्त्यपेक्षश्चायं एकद्वित्रिशाखाध्ययनविकल्पः । यद्यपि व्रतानि वेदाध्ययनं च नित्यवदुपदिशता मनुना उभयस्नातक एव श्रेष्ठत्वादभिहितः, तथापि स्मृत्यन्तरात् अन्यस्नातकोऽपि बोद्धव्यः ।

* मनु.

(५) त्रिंशदधिकैकादशशतशाखानां वेदचतुष्टयपरिमाणत्वात् पुरुषायुषमध्येऽपि अध्येतुमशक्यत्वात् वेदशब्दः शाखापरः, 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायात् । ...... वेदत्रयसाध्यत्वात् सर्वकर्मणां अतो न प्रवेशः अथर्ववेदस्य ।

मच.

* शेषं मेधावद् गोरावच्च ।

इत्यादि नोपपद्येतेति। निपुणं च एतदाश्रमविकल्पावसरे पष्ठे निर्णेष्यामः। मेधा.

( २ ) गुर्वनुज्ञातः गृह्यशास्त्रविध्यनतिक्रमेण कृतगृह्योक्तस्वरूपस्नानसमावर्तनाख्यकर्मा द्विजः समानजातीयां प्रशस्तलक्षणां भार्यामुपयच्छेत्। * गोरा.

( ३ ) अत्र द्विजोपादानं उक्तविशेषणविशिष्टस्यैव तस्य उद्वाहाधिकारप्रतिपादनार्थं, न पुनर्द्विजमात्रस्य तदधिकारप्रतिपादनार्थं, उपनीतस्य असमावृत्तस्य तदधिकारापत्तेः। नापि परिसंख्यार्थं, शूद्रादीनामविवाहापत्तेः। तस्मात् कर्तृविशेषविशिष्टकर्मविधिः अयमभ्युपगन्तव्यः। ......सवर्णामिति मुख्यत्वप्रतिपादनार्थं, न असवर्णापरिसंख्यार्थं, तदुद्वाहस्यापि अभ्यनुज्ञानात्।

संप्र. ५८६

गार्हस्थ्यमहिमा

**ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।**
**एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥**

( १ ) ननु च संन्यासिककर्माणि वक्ष्यामीति प्रतिज्ञया आश्रमानुक्रमणं अप्रकृतम्। केचिदाहुः-- न संन्यास आश्रमान्तरम्, अत्रैवान्तर्भावोऽस्येति दर्शयितुम्। स च कस्मिन् ? गृहस्थेऽन्तर्भावितः, गृहे हि वासस्तस्य। अन्यैस्तु प्रव्रज्यायां, सङ्गत्यागसामान्यात्। यतो नास्यान्तर्भावे प्रयोजनम्। पुरुषधर्मैर्यतिधर्मैश्च न यागादावधिकरिष्यति। वैशेषिकैश्च स्वशब्दविधानात्। अनाश्रमित्वात् ' संवत्सरमनाश्रमी ' इति प्रायश्चित्तप्रसङ्ग इति चेत्, वचनेनैवास्या व्यवस्थाया विहितत्वात् कुतः प्रायश्चित्तप्राप्तिः। तस्मात् गृहस्थादितुल्यतया संन्यासिकं प्रशंसितुमाश्रमान्तरसंकीर्तनम्। तच्च समुच्चयं द्रढयितुम्। गृहे स्थानं अवस्थितिरेषामित्यर्थः। गृहस्थः प्रभवः स्थितिहेतुरेषामिति विग्रहः। मेधा.

( २ ) य एते ब्रह्मचर्यादय आश्रमिणः (आश्रमाः) पृथगुक्ताः एते गृहस्थजन्याः। एवं च गृहस्थव्यतिरिक्ताश्रमिभिः शास्त्रव्यतिक्रमेण ज्ञातानां नास्ति हस्तचर्याद्याश्रमाधिकारः ( १ )। गोरा.

( ३ ) इदानीं वेदसंन्यासिकस्य प्रतिज्ञाते कर्मयोगे अनन्तरं वक्तुमुचितेऽपि वेदसंन्यासिकः पञ्चमाश्रमी निराश्रमी वा, चत्वार एव आश्रमा नियताः इति दर्शयितुमुक्तानाश्रमान् अनुवदति--ब्रह्मचारीति। ब्रह्मचर्यादयो य एते पृथगाश्रमा उक्ताः, एते चत्वार एव गृहस्थजन्या भवन्ति। मनु.

( ४ ) कुटीचकाख्यानां वेदसंन्यासिकत्वेन पञ्चमाश्रमत्वं प्राप्तं इति शङ्का स्यात्तदर्थमुक्तानाश्रमान् अनुवदति--ब्रह्मचारीति। एषां नैष्ठिकोपकुर्वाणषट्कर्मत्रिकर्मवालखिल्यफेनपकुटीचकबहूदकाद्यवान्तरभेदेऽपि चत्वार एव ते इति। गृहस्थप्रभवाः गृहस्थमाश्रित्यैव प्रकर्षेण ते भवन्ति। गृहस्थस्यापि शिलोञ्छनादिवृत्तिः गृहस्थमाश्रित्यैव भवति। यद्वा गृहस्थस्यैव सर्वे चत्वारः पुत्राः, तदन्येषां पुत्राभावादिति। तथा च गौतमसूत्रम्--' तेषां गृहस्थो योनिः ' ( गौध. ३।३ ) इति। मच.

( ५ ) न केवलं चतुर्थाश्रम एव वेदसन्यासिकस्य परमगतिप्राप्त्युपायः, किन्तु यः कश्चिदप्याश्रम इति श्लोकद्वयेनाह--ब्रह्मेति। नन्द.

क्रमशः सर्वाश्रमानुष्ठानं कर्तव्यम्

**सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः।**
**यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्॥**

( १ ) सर्वेऽपि चत्वारोऽपि, अपिशब्दात् त्रयो द्वौ एक एव इति, एते उक्ताः शास्त्रानतिक्रमेणानुष्ठिताः सन्तो यथोक्तानुष्ठातारं विप्रं ब्रह्मप्राप्तिलक्षणां गतिं प्रापयन्ति। समुच्चयविकल्पपक्षाणां 'ब्रह्मचर्यं परिसमाप्य' इत्यादिश्रुतिर्मूलं दर्शितम्। बाधापक्षेऽपि ' जरामर्यं वा एतत्सत्रं यदग्निहोत्रं जुहोति यद्दर्शपूर्णमासाभ्यां यजते '

---

* मनु. गोरावत्।

( १ ) मस्मृ. ६।८७ ; व्रक. २६८ ; स्मृच. ६४ ; चका. ८२ ; पमा. ४३६ ; संम. ४२ प्रस्थो यतिस्तथा ( प्रस्थश्च भिक्षुकः ) ; पुम. ४४५ ; कृभ. २२२९ प्रस्थो यतिस्तथा प्रस्थोऽथ भिक्षुकः ).

( १ ) मस्मृ. ६।८८ ; व्रक. २६८ ; गौमि. ३।१ ; स्मृच. ६४ ; चका. ७८२ शस्त्वेते ( शश्चैते ) शास्त्र नि ( शास्त्रनि ) ; संम. ४२.

इत्यादिश्रुतिमू( तेर्मू )लत्वं, एवं च समुच्चयविकल्पबाधापक्षाणां सर्वेषां श्रुतिमूलत्वात् यथारुच्यन्यतमपक्षानुष्ठानम्। नैष्ठिकत्वस्यापि श्रुतिमूलत्वं दर्शितम्। एवं च यत्कैश्चित् 'नैष्ठिकत्वादीनां स्मार्तत्वात् गार्हस्थ्येन श्रौतेन बाधो गार्हस्थ्येऽप्यनधिकृतान्धादिविषयता च' इत्युक्तं, तदसत्, सर्वेषां प्रत्यक्षश्रुतिमूलत्वस्य दर्शितत्वात्। * गोरा.

( २ ) सर्वेऽपि क्रमशः, न व्युत्क्रमेण। यथाशास्त्रं, न तु स्वेच्छया। आश्रमधर्मपरिग्रहेण यथोक्तकारिणं मोक्षानुगुणत्वेनोक्तानां क्रमात् नैष्ठिकधर्मवेदसंन्यासमहाप्रस्थानध्यानाभ्यासानां कर्तारं परमां गतिं मोक्षं नयन्ति, न तु यत्याश्रममात्रम्। तथा च सर्वप्रभवत्वात् मोक्षहेतुत्वात् *गार्हस्थ्यं प्रशस्ततरमित्यर्थः।* मवि.

( ३ ) सर्वे धर्मा ब्रह्मचर्यादयः क्रमशः उक्तक्रमेण *निषेविताः अनुष्ठिताः यथोक्तकारिणं यथाविधि आश्रम*चतुष्टयानुष्ठातारम्। विप्रं इति मनुवचनात् विप्रदेहस्यैव संन्यासाश्रमज्ञानान्मुक्तिः, 'ब्राह्मणा विविदिषन्ति' 'ब्राह्मणाः पुत्रैषणायाश्च' 'स ब्राह्मणः केन स्यात्' इति ब्राह्मणश्रुतेः। 'गर्भस्थो वामदेवः प्रतिपेदे' इति मन्त्रलिङ्गात्, श्वेतकेतुभृग्वादिसंवादात् काश्यादिमृतानामपि अन्येषां तात्कालिकविप्रदेहः अनुमेय इति। परमामिति विशेषणात् मोक्षाख्याम्। मच.

गार्हस्थ्यमहिमा

सर्वेषामपि चैतेषां वेदश्रुतिविधानतः।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि ॥

( १ ) इदमुक्तं वर्तते। वेदशास्त्रश्रुत्या *गार्हस्थ्यस्य* विधानं प्रतिज्ञायते। इतरेषां च भर्तव्यत्वम्। गार्हस्थ्यस्य प्रत्यक्षश्रुतिविधाने नैवाश्रमान्तराणां सद्भावः। संनिहितत्वात् स्मृतिभ्यो बलीयसी श्रुतिः। अथोच्येत नैवायमभिसंबन्धः क्रियते वेदश्रुत्या विधानादिति। अयं त्वपि चैतस्मिन् विधाने गृहस्थस्य श्रैष्ठ्यं तद्भरणनिमित्तम् 'स त्रीनेतान्' इत्यनेन प्रतिपाद्यते। तत्र वक्तव्यं, कथम्? *आश्रमान्तराणां श्रुतत्वात्, श्रौतत्वे च स्पष्टे स्मृति*विरुध्यते 'प्रत्यक्षविधानाद्गार्हस्थ्यस्य' इत्यादिना। न च संबन्धान्तरसंभवः। अथोच्येत–'गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्' इति जाबालश्रुतिमपेक्ष्य सर्वाण्येव श्रुतानीति। स्मृतिविरोधस्तावदपरिहृत एव। किंच नैषा श्रुतिर्विधात्री। न ह्येतत् श्रुतम्–'एवं वने वा विहर्तव्यमिमानि वनस्थेनैव कर्माणि कर्तव्यानीमानि प्रव्रजितेन' इति। यथा आधानाद्यप्रभृत्याचरमेष्टि सर्वं गृहस्थकर्म प्रत्यक्षमुक्तं, नैवमाश्रमान्तराणाम्। केवल *नाममात्रं श्रूयते–गृही भूत्वेत्यादि। तस्मात्* पूर्वापरविरुद्धं गार्हस्थ्यं मूलमाश्रमाणामित्योपदिश्यते।

*अत्रोच्यते। सत्यं आधानाद्यप्रभृति गृहकर्माणि प्रत्यक्ष*श्रुतानि कृतदारपरिग्रहस्य। तत्र विवाहे प्रयुक्तिनिरूप*णात्। किं कर्म श्रुतिभिः प्रयुज्यते अग्निहोत्रादिस्नाहा*कारश्रुतेरर्थापत्त्योत्पत्तिविधिना उत दृष्टेन पुरुषार्थेन।

ननु रागः स्त्रीमात्रं प्रयुङ्क्ते न विवाहम्। येन विना यन्न निष्पद्यते तत्तस्य प्रयोजकमिति न्यायः। रागिणां च स्त्रीमात्रेण गृह्यकर्मनिर्वृत्तिः। किमिति विवाहमपेक्षेरन्।

सत्यम्। यदि वचनान्तरे स्त्रीमात्रे गमनं न निषिद्धं स्यात्। समानोऽपि सर्वत्र वेदाधिगमे शास्त्रतो गम्यागम्यविवेकः। अतश्च धीप्रकृतीनां न विवाहमन्तरेण स्वार्थसंपत्तिरिति युक्तैव वेदस्य प्रयोजकाशङ्का।

यद्येवं सर्वस्य न प्रयोजकानि सन्तु। सर्वेषां तस्मिन् *सत्यर्थनिर्वृत्तौ किं तेन निरूपितेन। योऽस्ति विवाह*प्रयोजकः सोऽस्तु। आश्रमान्तराणि प्रत्यक्षविधाने *गार्हस्थ्यस्य कथमुपपद्यन्त इत्येतदधिकृत्य विवाहप्रयुक्ति*चिन्ता तु केनांशेन संगच्छते।

उच्यते यावदुक्तं '*सर्वेषामर्थसिद्धिः*' इति। सत्यम्। एकेन प्रयुक्तान्यस्य प्रसङ्गादुपकारसिद्धौ न पृथक्प्रयोजककल्पना। यथा व्रीहयः पुरुषार्थेन जीवनेन प्रयुक्ताः कर्मसु विनियुज्यन्ते। न कर्मणि धनार्जनं प्रयुज्यते।

* मनु., नन्द. गोराघवम्।

( १ ) मस्मृ. ६।८९ क., ख. श्रुति ( स्मृति ); गोरा. सर्वेषामपि ( सर्वेषामेव ); मक. २६८ श्रुति ( स्मृति ); स्मृच ६५ मक्वत्; ममु. मक्वत्; संप्र. ५६२ सर्वेषामपि (चतुर्णामपि) श्रुति ( स्मृति ); मुक्ता. १६५ गोरावत्; मान. १८४ श्रेष्ठ ( सद्भिः ) शेषं गोरावत्; वीवि. २।११।३६.

यथा वा विद्या सत्यप्यवैद्यस्यानधिकारे न प्रयुज्यते, स्वाध्यायविधिनैव तत्सिद्धेः। एवमिह कामतः प्रवृत्तिसिद्धेर्न कर्मश्रुतयः प्रयोक्तव्याः। तेन अकृतविवाहमपि कृत्यकर्मविधय उपपत्स्यन्ते। अतश्च यो ब्रह्मचर्य एव कथंचित्परिपककषायः स न विवक्ष्यते। ततः स द्वितीयत्वाभावान्नाधिकरिष्यते। अतश्च श्रौतेषु अनधिकारात् तादृशस्य आश्रमान्तरता आपत्स्येत।

अन्ये मन्यन्ते। नायं धनतुल्यो विवाहः। यथा धनेन विना जीवनमनुपपन्नमिति, स वै जीवेद्धनतः, एवं न स्त्रियमन्तरेण जीवनाभाव इत्यत एव न दृष्टं नियमिनः प्रयोजनं संभवतीति धर्माधिकारार्थोऽपि प्रयुक्तो विवाहः। अवश्यं चैतदेवं विज्ञेयं अधिकारोत्पत्त्यर्थे यत्नः कर्तव्य इति। इतरथा हि कृतोत्सर्गस्याशुचित्वादधिकारापनये जननादिशुद्धकालावस्थे च संपादयतो नित्यकर्मातिक्रमः स्यात्। ततश्च केनार्थेन मृतादिशुद्धौ क्लेशामादध्यात्। तदपि विहितमेव इति चेत्? एवं तावन्मात्रस्यातिक्रमो न पुनर्विधिसहस्रस्य।

अथोच्येत—कस्य पुनर्विधेरयं व्यापारो यदधिकृतत्वसंपत्त्यर्थमधिकृतः स्यां इति पुरुषेण यत्नः कर्तव्य इत्युपदिशति। एतावदग्निहोत्रादिविषयस्ते यस्मात्रयस्तद्विषयां कर्तव्यतां गमयन्ति, न तु अग्नीनामुत्पत्तिं प्रयुञ्जते। अग्नयोऽपि काम्येषु लिप्सया प्रवर्तमानेन तदधिकारसिद्ध्यर्थमाधीयन्ते। तथाहि तेषु जातेष्वाहिताग्नित्वे यावज्जीवश्रुतयः। भार्यावतश्चाधानेऽधिकारः। यथैव अधिकारिणमात्मानं कर्तुमग्नीनाधत्ते, एवं भार्यामप्युपयच्छते। अतो न कस्यचिद्विधेरर्थो विहितो यदि नाम अग्निहोत्रादिष्वधिकारो जनयितव्यः। न च विवाहविधिरेव स्वार्थकर्तव्यतामवगमयति, नित्याग्निहोत्रादिश्रुतिवत् संस्कारकर्मत्वादधिकारश्रवणाभावाच्च।

अत्र पूर्वे वदन्ति। ऋणत्रयापाकरणश्रुतिरस्ति 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इत्यादिः। एषा श्रुतिर्जातमात्रनिबन्धना। न चात्र जन्म द्वितीयमुपनयनाख्यमभिप्रेतं, प्राकृतस्तिर्यक्समानधर्मत्वात्। जन्मनि सति यावता कालेनाधिकारावगमो भवति तदेव ऋणश्रुत्या परिगृह्यते। ततश्च विदुषः सतः सत्यधिकारे यः कन्यां याचमानो न प्राप्नुयात् यावत्सर्वतः पलितस्तस्य प्रत्याद्यावधिकारः। स श्वेतश्निश्चिनोति—यौवने एव सर्वथा याच्यते। कथयन्त्यन्ये—कृष्णकेशस्यैवाधानं भार्यामरणं वर्जयित्वा न सर्वतः पलितेनाधातव्य. श्रुत्यर्थं व्याचक्षते।

कर्मसंबन्धात् गृहस्थः श्रेष्ठः। अतः आश्रम श्रैष्ठ्यमुक्तं भवति। त्रीनेतानिति। इदमपरं श्रैष्ठ्यका यदन्येषामाश्रमाणां भरणम्। तदुक्तम् 'ज्ञानेनान्नेन इति। मेध

(२) सर्वेषामेव ब्रह्मचर्यादीनां मध्यात् गृह बाहुल्येन साक्षाद्वेदवाक्यैः कर्मविधानात् गृहस्थः श्रेष्ठ इ मन्वादिभिरुच्यते। स च यस्मात् ब्रह्मचारितापसयती भिक्षादिना अग्नि(बिभर्ति) पोषयति, यथोक्तं 'ज्ञाने नान्नेन चान्वहं गृहस्थैरेव धार्यन्ते' इति, तस्मादसौ श्रेष्ठः *गोय

(३) तदेव प्रकृतमाह—सर्वेषामिति। वेदे श्रुतिशब्दाभिधानवृत्त्या गृहस्थस्य धर्माणामेव बाहुल्येन विधानदर्शनात् इतरधर्माणां तु क्वचिदेव विधानात् वन्वत्तात्पर्यं गार्हस्थ्यधर्मे एव श्रुतेरित्यर्थः। श्रेष्ठत्वे हेत्वन्तरमाह—स त्रीनिति। त्रीनाश्रमान् बिभर्ति पुष्णाति तस्मात् गृहस्थाश्रमे परोपकारबाहुल्यात् तस्य च सत्त्वशुद्धित्वात् गृहस्थः एव श्रेष्ठः। मवि.

(४) वेदश्रुतिविधानतः वेदश्रुत्या प्रत्यक्षेण विधानतः वैदिकानामाधानादीनां कर्मणां गृहस्थमधिकृत्य विधानस्य प्रत्यक्षश्रुतिमूलत्वादित्यर्थः। मुक्ता. १६५

यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥

(१) एष एवार्थो दृष्टान्तेन दृढीक्रियते—यथेति। नद्यो गङ्गादयः, भिद्यादयो नदाः। केनचिदाधारसंनिवेशभेदेन रसभेदेन च नदीनदयोर्निर्देशभेदः। एकत्वविधानं तु रूढया। लिङ्गभेदो भार्यादारवद्वत्। संस्थितिः

* मनु., मच. गोराघव

(१) मस्मृ. ६।९० क. सस्थितिन् (संस्थितम्); स्मृच. ६५; संम. ५६३ नदीनदाः (नदीनदाः); मुक्ता. १६५

आश्रयः । समुद्रो यथा सर्वजलाश्रयः एवं गृहस्थः सर्वधर्मानधिकृतवान् । * मेधा.

(२) यथा गङ्गाशोणाद्याः सर्वे नदीनदाः समुद्रेऽवस्थानं प्राप्नुवन्ति । एवं सर्व एव ब्रह्मचार्यादय आश्रमिणः अन्नादिलाभार्थं गृहस्थविषयेऽवस्थितिं प्राप्नुवन्ति । § गोरा.

(३) संस्थितिं गृहस्थसमीपे इति कुल्लूकः । संस्थितिं मृतिं प्राप्य गृहस्थेष्वेव यान्ति जायन्ते इति वा अर्थः । गृहस्थे सति सम्यक् स्थितिं यान्ति 'एते एव गृहस्थप्रभवाः' इत्युक्तम् । गृहस्थस्य सर्वधर्मेष्वधिकृतत्वार्थमर्थवाद इति मेधातिथिः । मच.

ऋणत्रयापाकरणोत्तरमेव मोक्षाश्रमः

†आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्धते ॥
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥

## याज्ञवल्क्यः

विद्यास्नातकस्य विवाहः

¹अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥

(१) ब्रह्मचारिणो ब्रह्मचर्यविधानात् समावृत्तस्य निवृत्तिः प्राप्नोतीत्यत आह—अविप्लुतेति । समावृत्तोऽपि सन्नविप्लुतब्रह्मचर्य एवोद्वाहं कुर्यात् । ब्रह्मचर्यवचनाच्च मध्वशनादौ विप्लवः । कथं पुनः प्राग्विवाहात् विप्लवाशङ्का । परदाराभिगमनं हि निषिद्धमेव । सत्यमेवम् । वक्ष्यति तु—'यत्नात्परीक्षितः पुंस्त्वे' इति । परीक्षणोपायत्वेन विप्लवाशङ्का अस्त्येव । अन्ये तु नियोगपक्षेण विप्लवमाहुः । विश्व.

(२) स्नानानन्तरं किं कुर्यादित्यत आह—अविप्लुतेति । अविप्लुतब्रह्मचर्यः अस्खलितब्रह्मचर्यः । मिता.

(३) नैव विप्लुतं ब्रह्मचर्यं यस्य । विप्लुतिः स्खलनम् । तत्संभवे तु प्रायश्चित्ती न त्वविवाह्यः, किन्तु अयं विशेषः—यदि स्नानादधो विप्लुतस्तदा अवकीर्णिप्रायश्चित्तम् । 'अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।' इति स्मरणात् । स्नानादूर्ध्वं यदि पुनस्तदा सामान्यम् । 'मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् । व्याधिता चाधिवेत्तव्या ॥' तथा—'भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात् ॥' इत्यादिस्मरणदर्शनात् प्राप्तस्य पुनर्विवाहस्य विप्लुतब्रह्मचर्यत्वापत्तेरप्राप्तिर्मा प्रसाङ्क्षीदित्यत्र अविप्लुतब्रह्मचर्य इति पदं पूर्वत्र स्नानकर्तुर्विशेषणीयम् । अप.

(४) अविप्लुतब्रह्मचर्य इति विशेषणं ब्रह्मचर्यस्खलने कृतप्रायश्चित्तस्यैव विवाहाधिकार इति बोधयितुं, अन्यथा अनधिकारिणा कृतेनापि विवाहेन भार्यात्वानुपपत्तेः । सप्र. ५८६

स्त्रीणां सेव्यत्वम्

¹लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥

(१) याश्चैव भर्तारं अनन्यपरतयैव उपचरन्ति, ताः प्रयत्नतो भर्तृभिरपि— लोकानन्त्यदिवप्राप्तिः पुत्रपौत्रप्रपौत्रिका । श्रौतः — यस्मात्तस्मात्स्त्रियः सेव्याः । किञ्च — भर्तव्याश्च सुरक्षिताः । लोकप्राप्तिः आनन्त्यप्राप्तिः दिवप्राप्तिश्च क्रमेण पुत्रपौत्रप्रपौत्रिका यस्मात्, तस्मात्

---

* मवि. मेधागतम् ।

§ ममु. गोरावत् ।

† एषां चतुर्णां श्लोकानां व्याख्यासंग्रहः अग्रिमे आश्रमकाण्डे करिष्यते ।

(१) मस्मृ ६।३४-३७. अन्यस्थलनिर्देशः अग्रिमे आश्रमकाण्डे करिष्यते ।

(२) यास्मृ १।५२. अन्ये स्थलादिनिर्देशाः लोकव्यवहारे द्रष्टव्याः ।

(१) यास्मृ. १।७८ ; विश्व. १।७७ पूर्वार्धे (लोकानन्त्यदिवप्राप्ति पुत्रपौत्रप्रपौत्रिका ।) कर्तव्याश्च (भर्तव्याश्च) ; मिता. ; अप. लोकानन्त्यं दिवः (लोकानन्त्यदिवः) ; उत. १०७ कर्तव्याश्च (भर्तव्याश्च) ; पमि. ; सुका. १५४ ; व्यान. १८४ ; सस्मृ ५४.

स्त्रियः सेव्याः । तथा च आहुः—' पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ॥ ' इति । लोकः पृथिवी । आनन्त्यं अन्तरिक्षम् । दिवः स्वर्गः । पाठान्तरम्—' लोकानन्त्यं दिवप्राप्तिः ' इति । तस्यार्थः—दिवप्राप्तिस्तु अग्निहोत्राद्यनुष्ठानात् । लोकानन्त्यं च तदभ्यासात् । तथा च चरकाः—' न स तस्माल्लोकात् प्रच्यवते, यस्त्रिरीजानः ' इति । किंच पुत्रपौत्रप्रपौत्रिका च संततिरत एव । यस्माच्चैवं तस्मात् स्त्रियः सेव्या इत्यादि समानम् ।

विश्व.

( २ ) शास्त्रीयदारसंग्रहस्य फलमाह—लोकानन्त्यमिति । लोके आनन्त्यं वंशस्याविच्छेदः दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनम् । कथमित्याह—पुत्रपौत्रप्रपौत्रैः लोकानन्त्यं, अग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः । यस्मात् स्त्रीभ्य एतत् द्वयं भवति, तस्मात् स्त्रियः सेव्याः उपभोग्याः प्रजार्थं, रक्षितव्याश्च धर्मार्थम् । तथा च आपस्तम्बेन धर्मप्रजासंपत्तिः प्रयोजनं दारसंग्रहस्य उक्तम्—' धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीत ' ( आध. २।११।१२ ) इति वदता । रतिफलं तु लौकिकमेव ।

मिता.

( ३ ) लोकाश्च आनन्त्यं च द्यौश्च इति समाहारे द्वन्द्वः । ततः षष्ठ्येकवचनम् । तच्च लोकप्राप्त्यानन्त्यप्राप्तिद्युप्राप्तयो यथासंख्यं पुत्रपौत्रप्रपौत्रैर्भवन्ति । यस्मादेवं तस्मात् पुत्रादिहेतवः स्त्रियः सेव्या ऋतुकाले, कर्तव्याश्च सुरक्षिताः । व्यभिचारपरिहाराय रक्षाभिधानाच्च गमयति व्यभिचारोत्पन्नैः नैतत्फलं जन्यत इति । तथा श्रुतिः—' अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः । जनयितुः पुत्रो भवति सांपराये मोघं वेत्ता कुरुते तन्तुमेतम् ॥ ' ( आध. २।१३।६ ) इति । [ अप्रमत्ताः अवहिताः भूत्वा एतं तन्तुं प्रजासंतानं रक्षथ । लोडर्थे लट् । रक्षतेत्यर्थः । किमर्थम् ? वः युष्माकं क्षेत्रे परबीजानि परेरेतांसि मा वाप्सुः । व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः । मा वाप्सत उप्तानि मा भूवन्, मा उप्येरन् । ( अपर आह— परशब्दाज्जसो लुक् । परे पुरुषाः वः क्षेत्रे बीजानि मा वाप्सुरिति । ) कथमिति ? यस्मात्सांपराये परलोके जनयितुरेव पुत्रफलं भवति, वेत्ता परिणेता क्षेत्री तु एतं तन्तुं मोघं निष्प्रयोजनं कुरुते आत्मसात् करोति । —उज्ज्वला. ] द्युशब्दश्चात्र सूर्यलोके वर्तते । तथा च मनुः—' पुत्रेण लोकान् जयति पौत्रेणाऽऽनन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ॥ ' ब्रध्नः सूर्यः । पितरं प्रति विहितायाः पुत्रोत्पत्तेः तत्पितृपितामहगामि फलमिदं श्राद्धस्येव पुत्रं प्रति विहितस्य पित्रादितृप्तिः ।

अप.

( ४ ) स्वर्गलोकः, तस्य आनन्त्यं कल्पव्यापकता, दिवः सूर्यविष्टपस्य प्राप्तिश्च भवति । * वीमि.

## नारदः

गार्हस्थ्यमहिमा, लग्न-वरण-पाणिपीडन-शब्दार्थाः

सर्वाश्रमाणामाश्रेयं गृहस्थाश्रमसुत्तमम् ।
यतस्तदपि योषायां शीलवत्यां स्थितं ततः ॥
लग्नशब्दो विवाहे स्यात् वरणं फललग्नयोः ।
पाणिपीडनशब्दस्तु कन्यादाने करग्रहे ॥

## बृहस्पतिः

समावृत्तस्य विवाहः समानया

वेदानधीत्य विधिना समावृत्तोऽच्युतव्रतः ।
समानामुद्वहेत्पत्नीं कुलशीलवयोगुणैः ।
तया सह चरेद्धर्मं श्रौतं स्मार्तं समाहितः ॥

## कात्यायनः

उद्वाहिताया लक्षणम्

पित्रा मात्रा तथा भ्रात्रा दत्ता या तोयधारया ।
विप्राग्निसुहृदां साक्ष्यं कृत्वा सोद्वाहिता भवेत् ॥

---

* शेषं अपवत् ।

( १ ) ज्योना. २७।१ (पृ. ४९) स्थितं ततः ( स्थितस्ततः ); ज्योनि. १३१ पूर्वार्धे ( सर्वाश्रमाणामाश्रयो गृहस्थाश्रम उत्तमः । ) स्थितं ततः ( स्थितस्ततः ) ; संग. १६७.

( २ ) ज्योनि. १४९.

( ३ ) गृक. ५ प्रथमार्धं नास्ति ; चका. ७८५ ऽच्युत ( ऽप्लुत ) कुलशील ( यशःशील ) तृतीयार्धं नास्ति ; गृर. ५ श्रौतं स्मार्तं समाहितः ( श्रौतस्मार्तं च शक्तितः ) प्रथमार्धं नास्ति ; पुम. ४४५ कुलशील ( यशःशील ) तृतीयार्धं नास्ति.

( ४ ) संप्र. ८७० ; संर. १४१ ( = ).

तस्मात्सर्वप्रयत्नेन रक्षणीयो गृहाश्रमी ।
राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्वदा ॥

अनुकूलभार्याप्रशंसा

गृहाश्रमात्परं नास्ति यदि भार्या वशानुगा ।
तया धर्मार्थकामानां त्रिवर्गफलमश्नुते ॥
प्राकाम्ये वर्तमाना तु स्नेहान्न तु निवारिता ।
अवश्या सा भवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥
अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियंवदा ।
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी ॥
अनुकूलकलत्रस्य स्वर्गस्तस्य न संशयः ।
प्रतिकूलकलत्रस्य नरको नात्र संशयः ॥
स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम् ।
रक्त एको विरक्तोऽन्यस्तस्मात्कष्टतरं नु किम् ॥
गृहवासः सुखार्थं हि पत्नीमूलं च तत्सुखम् ।
सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्तिनी ॥
दुःखा ह्यन्या सदा खिन्ना चित्तभेदः परस्परम् ।
प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः ॥
अनुकूला ह्यवाग्दुष्टा दक्षा साध्वी प्रजावती ।
एतावद्गुणसंयुक्ता श्रीरेव स्त्री न संशयः ॥
प्रहृष्टा मनसा नित्यं स्थानमानविचक्षणा ।
भर्तुः प्रीतिकरा या तु सा भार्या त्वितरा जरा ॥
शिष्यो भार्या शिशुर्भ्राता मित्रो दासः समाश्रिताः ।
यस्यैते तु विनीताः स्युस्तस्य लोकेऽपि गौरवम् ॥

## संवर्तः

समावृत्तस्य सवर्णया विवाहः

अतो द्विजः समावृत्तः सवर्णां स्त्रियमुद्वहेत् ॥
समावृत्तः गुरुकुलादागत्य कृतस्नानाख्यसंस्कारः ।

गृक. १

(१) दस्मृ. ४।६० रा. रक्षणीयो (रक्षितव्यो) ; मुक्ता. १६५ उत्तरार्धे (राज्ञा चान्यैस्त्रिभिः पूज्यो रक्षणीयश्च सर्वदा ।).
(२) दस्मृ. ४।१-७, ११-१३.
(३) संस्मृ. ३३ ; गृक. १ (अतः परं समावृत्तः कुर्याद्दार-परिग्रहम् ।) ; गृर. ४ गृकवत् ; उत. १०६ गृकवत्.

## कश्यपः

सपत्नीकस्यैव कर्माधिकारः

दाराधीनाः क्रियाः सर्वा ब्राह्मणानां विशेषतः ।
दारान् सर्वप्रयत्नेन विशुद्धानुद्वहेत्ततः ॥
देवतानां नमस्कारः पितॄणां चोदकक्रियाः ।
दारतः संप्रवर्तन्ते दाराः स्वर्गस्य संक्रमः ।
इत्येतत्कश्यपमतं ब्रह्मणश्चानुशासनम् ॥
विशुद्धान् कुलतः स्वरूपतश्च । * गृक. ७

## सत्यव्रतः

विवाहोत्तरमपि गुरुगृहे अध्ययनकर्तव्यता

अनधीत्य द्विजो वेदं स्नात्वोद्वाह्य यथातथा ।
अधीते ब्रह्मचर्येण साङ्गं वेदं गुरोर्गृहे ॥
अनधीतवेदस्यापि समावृत्तस्य विवाहः सत्यव्रतेन दर्शितः— अनधीत्येति । चका. ८१५

## लघ्वाश्वलायनः

गार्हस्थ्यमहिमा, विद्यास्नातकस्यैव विवाहः

अकाले नैव तत्कुर्यादुपाकर्म कथंचन ।
अकृत्वा नोद्वहेत्कन्यां मोहाच्चेत् पतितो भवेत् ॥
अनारभ्योक्तकाले च वेदान् कन्यां य उद्वहेत् ।
नूतनो ब्रह्मचारी स्यात् सर्वकर्मबहिष्कृतः ॥
सर्वेषामाश्रमाणां च गृहस्थाश्रम उत्तमः ।
तमेवाश्रित्य जीवन्ति सर्वे चैवाश्रमा इह ॥

## स्मृत्यन्तरम्

विवाहमहिमा, कन्याग्रहणादि: सप्तपद्यन्तो विवाहः

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
तया हि सहितः सर्वान्पुरुषार्थान् समश्नुते ॥

* गृर. गृकवत् ।
(१) गृक. ७ ; गृर. ७ सर्वप्रयत्नेन (सर्वान् प्रयत्नेन) ; मपा. १३१ ब्राह्मणानां (ब्राह्मण्यास्तु).
(२) कस्मृ. ९।१ (दाराधीनाः क्रियाः सर्वा दाराः स्वर्गस्य साधनम् । इत्येतद् ब्रह्मणा प्रोक्तं कश्यपस्यानुशासनम् ॥) ; गृक. ७ पितॄणां (पितृणां) क्रियाः (क्रिया) ; गृर. ७.
(३) चका. ८१५ ; मिन्धु. ११६०.
(४) लघ्वाश्वस्मृ. १२।३ ; कृम. ९९०.
(५) लघ्वाश्वस्मृ. १२।४. (६) लघ्वाश्वस्मृ. १५।१.
(७) उत. १०७.

[1]मूकान्धादिषु चोद्वाहे कन्यास्वीकरणं विना ।
पाणिग्रहं विना सप्तपदादिक्रमणं विना ।
विप्रेण कारयेत् सर्वं पङ्गोः सप्तपदान्यपि ॥

## विष्णुपुराणम्

विद्यास्नातकस्य विवाहः

[2]गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै ।
गार्हस्थ्यमावसेत्प्राज्ञो निष्पन्नगुरुनिष्कृतिः ॥
[3]गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम् ।
गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ॥

## अनिर्दिष्टकर्तृकवचनानि

अपत्नीकस्य कस्यापि न कर्माधिकारः, वाग्दानादिः सप्तपञ्चाङ्गो विवाहः

[4]तस्मात्सर्वप्रयत्नेन कर्तव्यो दारसंग्रहः ॥
[5]अपत्नीको नरो भूप कर्मयोग्यो न जायते ।
ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽपि वा नृप ।
पत्नी धर्मार्थकामानां कारणं परमं नृणाम् ॥
[6]वाग्दानं च प्रदानं च वरणं पाणिपीडनम् ।
सप्तपदीति पञ्चाङ्गो विवाहः परिकीर्तितः ॥

## वराहमिहिरः

स्त्रीसङ्गमहिमा

[7]स्त्रीरत्नभोगोऽस्ति नरस्य यस्य
निःस्वोऽपि स्वं प्रत्यवनीश्वरोऽसौ ।
राज्यस्य सारोऽशनमङ्गनाश्च
तृष्णानलोद्दीपनदारु शेषम् ॥

(१) मुक्ता. १०० ; आन. १६०.
(२) विष्णु. ३।९।७.
(३) विष्णु ३।१०।१३ ; अप. १।५१ दत्त्वा च (दत्त्वाऽथ) ; व्रक. २६८ ; स्मृच ६५ उत्त., भविष्यत्पुराणे ; चक्रा. ७८४ उत्त, वामनपुराणे; पमा. ४६० उत्त., भविष्यत्पुराणम् ; दीक. १।५१ दत्त्वा च (दत्त्वा तु); वीमि १।५१ दीकवत् ; संप्र. ५६३ उत्त, भविष्यपुराणेऽपि ; चम ४८ उत्त., भविष्यत्पुराणेऽपि ; मुक्ता. १७२ विष्णुपुराणे भविष्यत्पुराणेऽपि, संम. ४२ उत्त., भविष्यत्पुराणेऽपि, बाल १।५० उत्त., भविष्यत्पुराणेऽपि.
(४) संदी ३ (भाग २).
(५) अप. १।५१. (६) धप्र. ४५ ; संग. १६७.
(७) वृसं. ७४।१७ ; ज्योनि. १३१ स्व प्रस (मो प्रस).

[1]रत्नहेमाद्यलङ्कारा भोगा मृगमदादयः ।
व्यर्थाः सर्वे न राजन्ते हर्म्याणि स्त्रियमन्तरा ॥

## चतुर्विंशतिमतम्

विद्यास्नातकस्य विवाहः सवर्णया

[2]वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्त्य सवर्णां तु लक्षण्यां स्त्रियमुद्वहेत् ॥
ज्ञानत इति । षडङ्गेतिहासपुराणादिष्वपि नियमविधिसत्त्वात् तदुपष्टम्भेन कर्मकाण्डार्थं निश्चित्य इत्यर्थः ।

पृ. ६५

लक्षण्या बाह्याभ्यन्तरलक्षणान्विताम् । चम. ८५

## चन्द्रिकायाम्

विवाहानधिकारिणः

[3]मत्तोन्मत्तजडक्लीबपतितानां द्विजन्मनाम् ।
नोद्वाहो नैव संस्कारो नाशौचं नोदकक्रिया ॥
रम्भाविवाहः कर्तव्यस्तदलाभेऽर्केशाखया ।
विवाहं मनुजाः कुर्युः इत्येतन्मनुरब्रवीत् ॥

## रत्नकोशे

स्त्रीमहिमा

[4]रत्नानीन्दुकराः स्रजः सुरभयो
हर्म्योत्पलान्यासवम् ।
ताम्बूलं मृदुला कथा च रुचिरा
गीतिर्विभूतेश्चयः ॥
यस्मान्न स्त्रियमन्तरेण हि नृणां
सर्वाण्यपि प्रीतये ।
तस्माद्ब्रूमि तदाप्तियोगसमयं
धर्माय कामाय च ॥

## शाकलकारिकाः

समावृत्तस्य गुर्वनुज्ञया विवाह, गार्हस्थ्यमहिमा, वाग्दानादि सप्तपञ्चाङ्गो विवाहः

[5]अथ शिष्यः समावृत्तः कुर्वीतानुज्ञया गुरोः ।
कन्याकुलं परीक्ष्यादौ धर्मार्थं दारसंग्रहम् ॥

(१) ज्योनि. १३१ ; सग. १६७ ज्योतिर्निबन्धे.
(२) चम. ६५ : ८५ , ९३ उत्त.
(३) मुक्ता १५३ ; आन. १८३.
(४) निसी. २.
(५) शाका. ८१ पृ. ९

सर्वेषामाश्रमाणां तु गृहस्थाश्रम एव हि ।
श्रेष्ठः स्याद्भार्यया युक्तस्तस्माद्भार्यां लभेद्द्विजः ॥
वाग्दानं फलदानं च कन्यावरणमेव च ।
पाणिग्रहणकं चैव सप्त पादास्तु पञ्चमम् ॥
एभिः पञ्चगुणैर्युक्तो विवाहो मुनिभिः स्मृतः ।
शस्तः स्याद्ब्राह्मणस्यायमिति वेदविदो विदुः ॥

## शौनककारिके

विवाह्या कन्या

लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम् ।

( १ ) शाका. १००, १०२–१०३ पृ. ११.

( ३ ) शौका. १,२ पृ. ५५ ; प्रपा. ३०२ ; विपा. ६५५ प्रथमार्धं विना : ६७४ ; संर. ५०८.

बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम् ।
आत्मनोऽवरवर्षां च विवहेद्विधिपूर्वकम् ॥

## रेणुकारिका

विवाहप्रयोजनम्

एवं समावृतो धर्मसुखसंतानवृद्धये ।
कुलोत्थामनुरूपां सल्लक्षणाढ्यामथोद्वहेत् ॥

( १ ) रेका. २६–२७ पृ. ४८.



# विवाहपदार्थः

( १ ) कः पुनरेयं विवाहो नाम, उपायतः प्राप्तायाः कन्याया दारकरणार्थः संस्कारः सेतिकर्तव्यताङ्गः सप्तर्षिदर्शनपर्यन्तः पाणिग्रहणलक्षणः । ३।२०

किमर्थस्तर्हि विवाहः—'मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः । प्रयुज्यते विवाहे तु प्रदानं स्वाम्यकारणम् ॥' अभिलषितार्थनिष्पत्तिर्मङ्गलं तत्साधनं तदर्थं प्रयुज्यते । तत्र 'प्रजापतेर्यज्ञः' इति क्रियाविशेषणत्वान्नपुंसकम् । स्वस्ति ईर्यते प्राप्यते येन तत्स्वस्त्ययनम् । यदस्य प्रियं वस्तु विद्यते तन्न नश्यतीत्यर्थः । आसां स्त्रीणाम् । तेषु विवाहेषु । यज्ञः प्रजापतेः प्रजापतेर्देवतायाः क्रियते । 'प्रजापते न त्वदेतान्यन्यः' इति विवाहे आज्यहोमाः केषांचिदाम्नाताः । उपलक्षणं चैतदन्यासामपि देवतानां पूषवरुणार्यम्णाम् । तथाहि तत्र मन्त्रवर्णाः—'पूषणं नु देवं वरुणं नु देवम्' इत्यादयो देवतान्तरप्रकाशनपराः । प्रदानादेवासत्यपि विवाहे स्वाम्यमुत्पद्यते इत्येतदत्र ज्ञाप्यते । विवाहयज्ञस्तु मङ्गलार्थ इत्याद्यविवक्षितम् । 'दारकरणं विवाहः' इति स्मर्यते । सत्यपि स्वाम्ये नैवान्तरेण विवाहं भार्या भवतीति । मेधा. ५।१५१

( २ ) विवाहशब्दो यद्यपि कन्यायाः सप्तपदातिक्रमणे मुख्यस्तथाऽपि अस्तित्वन्यायात् तत्तद्गृह्यादिशास्त्रविहिते भार्यात्वसाधके कर्मसमुदाये वर्तते । स च समुदाय उपाधिभेदात् ब्राह्मादिव्यपदेशं लभते । तदुपाधिभेदेनैव दानविवाहशब्दयोः सामानाधिकरण्यम् । यथा 'अलङ्कृत्य कन्यामुदकपूर्वं दद्यादेष ब्राह्मो विवाहः' इति । न पुनरेष विवाहशब्दार्थः । तथा सति हि 'उदगयन आपूर्यमाणे पक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' इत्युक्त्वा यदुक्तम् 'तेषां पुरस्तान्चतस्र आज्याहुतीर्जुहुयात्' इति, तन्नोपपद्यते । न हि कन्यादानात् पुरस्तादेता आहुतयः सन्ति । तस्माद्दानविवाहयोर्भेदात् तदभिधानयोः पदयोः सामानाधिकरण्यमुपचारेणैव व्याख्येयम् । यत एव दानं न विवाहः अत एव गान्धर्वादिषु विवाहेषु दानमन्तरेणैवोपयमनं कन्यास्वीकारात्मकं विवाहत्वेनाऽऽह शौनकः— 'मिथः समयं कृत्वोपयच्छेत स गान्धर्वः' । मिथः परस्परं कन्यावरौ 'अहं ते भर्ता त्वं मे भार्या' इति संप्रतिपत्तिं कृत्वा कन्यामुपयच्छेत स्वीकुर्यादिति तस्यार्थः । ततोऽत्र दानं न विद्यते, विवाहस्तु भवति । अस्य च विवाहान्तरेभ्यो भेदको धर्मः कन्यावरयोर्मिथः संप्रतिपत्तिः । एवं राक्षसपैशाचयोरपि विवाहत्वं कन्यादानरहितमेव द्रष्टव्यम् । युद्धं छद्म च तयोर्भेदकौ धर्मौ । तदाह—'हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यश्च हरेत् स राक्षसः' । तथा पैशाचमपि मनुराह—'सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचः कथितोऽधमः ॥'

एवमुपयमनपाणिग्रहणशब्दवत् परिणयनशब्दोऽपि दण्डिन्यायेनैव कर्मसमुदाये शास्त्रेषु प्रयुज्यते ।

अप. १।६१

( ३ ) अथ उद्वाहनिर्णयः । मनुशातातपौ—'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥' दारकर्मणि भार्यात्वसंपादके कर्मणि । तच्च कर्म ग्रहणरूपम्, 'सदृशान्नाहरेद्दारान्' इति यमवचनात्, 'अतः परं समावृत्तः कुर्याद्दारपरिग्रहम्' इति संवर्तवचनात्, 'भार्यां विन्देत' इत्यादिविष्ण्वादिवचनाच्च । तेन भार्यात्वसंपादकं ग्रहणं विवाहः । तस्य स्वीकाररूपज्ञानविशेषस्य समवायिविषयतयोर्भेदात् वरकन्ययोर्विवाहकर्तृत्वकर्मत्वे । अत एव 'कन्यापुत्रविवाहेषु' इति विष्णुपुराणोक्तं संगच्छते । भार्यात्वस्य स्वरूपसद्विशेषणत्वेन नैतरेतराश्रयदोष इति । विवाहसंपादकदानादिभेदात् ब्राह्मादिभेदः । अत एव 'ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता' इति याज्ञवल्क्यवचने 'स ब्राह्माभिधानो विवाहो यस्मिन्

उपलक्षणवराय आहूय यथाशक्त्यलङ्कृतकन्या दीयते' इति मिताक्षरा । वरिमन्त्रिते ग्रहणे इत्यर्थः । एवं च 'आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥' इति मन्वादिवचने यद्दानपदं तत् 'दीयते यस्मै ग्रहणाय' इति व्युत्पत्त्या 'कृत्यल्युटो बहुलम्' इति सूत्रात् सिद्धमिति ग्रहणपरम्, न तु भावसाधनम्, तथात्वे दातुरेव विवाहकर्तृत्वापत्तेः । अत्र ल्यप्रत्ययार्थग्रहणनिमित्तीभूतप्रकृत्यर्थत्यागेनैककर्तृकत्वमयासानस्य, दियतादित्यध्याहाराद्वा । यत्तु 'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥' इति मनुवचनम्, तत् विवाहगतविशेषसंस्कारार्थम् । अत एव निष्ठेत्युक्तम् । तथा च रत्नाकरः—'पाणिग्रहणिका मन्त्रा विवाहकर्माङ्गभूताः' इति व्याचष्टे । रत्नाकरधृतो लघुहारीतः—'तत्रापि पाणिग्रहणेन जायात्वम्, कृत्स्नं हि जायापतित्वं सप्तमे पदे' इति । विवाहस्तु पाणिग्रहणात्पूर्वं भवत्येवेति सुव्यक्तं हरिवंशीयत्रिशङ्कूपाख्याने—'पाणिग्रहणमन्त्राणां विघ्नं चक्रे स दुर्मतिः । येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै ॥' कृतोद्वाहा पाणिग्रहणात्पूर्वं हृता इत्यर्थः । 'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते । असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥ शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया । वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥' इति मनुवचनान्तरेऽपि उद्वाहपाणिग्रहणयोः पृथक्त्वं प्रतीयते ।

उ. १०६–१०७

( ४ ) तत्र विवाहशब्दः 'वह प्रापणे' इत्यस्माद्धातोर्भावे घञि कृते वहनं वाहः, विशिष्टो वाहो विवाहः इति व्युत्पत्त्या निष्पद्यते । वैशिष्ट्यं च प्रतिग्रहदानादिभिर्दानोपायेन स्वीकृताया होमादिरूपमन्त्रपरस्परसंस्कारकर्मभिः संस्कार्यत्वम् । तथा च विवाहपदार्थो द्विदलः स्वीकारः संस्कारश्चेति । [illegible] स्वीकृतं [illegible]—'पितृ [illegible] निष्पन्ना' इत्युपक्रम्य '[illegible]' इत्यादिना 'आचार्याय वरं दद्यात्' इत्यन्तेन सूत्रेण । [illegible] । [illegible]

धृत्वा । परिशिष्टेऽपि—'गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये । पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥' इति । परिणयः स्वीकरणम् । एवं च स्वीकृताऽप्यसंस्कृता संस्कृताऽप्यस्वीकृता वा न भार्या भवतीति निश्चीयते, विशिष्टस्य विवाहपदार्थत्वात् । तत्रोत्तरदलार्थं स्पष्टयति वसिष्ठः—'बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता । अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥' इति । अपहारोऽत्र प्रतिग्रहादिसप्तविधस्वत्वोपायानामुपलक्षणम् । पूर्वदलार्थं स्पष्टयति यमः—'नोदकेन विना चार्यं कन्यायाः पतिरुच्यते । पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥' इति । उदकं उदकपूर्वकं दानम्, 'अलङ्कृत्य कन्यामुदकपूर्वां दद्यात्' इत्याश्वलायनस्मरणात् । एतेन ब्राह्मादिपञ्चके नित्यवद्दानश्रवणात् आसुरादित्रये 'गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ।' इति नारदेन पाक्षिकदानविधानाच्च दानमपि तृतीयं दलं सिध्यति । वस्तुतस्तु उदकपदं स्वीकारपरम् । अतश्च दलद्वयमेव विवाहपदार्थः । अन्यथा दानस्यापि तत्त्वे आसुरादिष्व्याप्तेः । ततश्चानुत्वादितस्वत्वायाः कन्यायाः पाणिग्रहणसंस्कारात् पतिः स्वामी स्व(त्व ?)वान् । सप्तमे पदे पतित्वं पतिसंस्कारश्च न । ततश्च स्वीकृतायामेव संस्कारोत्पत्तिरित्यर्थः । ननु—अत्र 'भार्यात्वं सप्तमे पदे' इति वक्तव्यम्, 'उद्वहेत द्विजो भार्याम्' इत्यत्र द्वितीयया भार्याया एव संस्कार्यत्वाभिधानात् । न तु पत्युः, तस्य द्विज इति प्रथमया संस्कारकर्तृत्वप्रतीत्यैकस्य कर्तृकर्मभावविरोधेन संस्कार्यत्वायोगात्—इति चेत्, मैवम्, पतित्वस्य उद्वाहविधिमात्रभार्यात्वनान्तरीयकत्वेन तद्बोधकपतित्वशब्दोपादानेऽपि बाधकाभावात् । ननु—पतित्वं भार्यात्वानुनिष्पादीति न वक्तव्यम्, 'विन्देत सदृशं पतिम्' इत्यादिस्वविधिनिरुक्तत्वात् । यथा 'उद्वाहेन वधे भार्यां कुर्वीत' इति विध्यर्थः, तथा 'कन्याऽप्युद्वाहेन वरं कुर्वीत' इति विध्यर्थस्तुल्य एव । तस्मादनुनिष्पादि पतित्वम्—इति चेत्, सत्यम् । अस्ति विधिः, परं तु नोद्वाहविषयः, उद्वाहस्य [illegible], [illegible] । न च [illegible], [illegible]।

न चाभ्युपगमो विवाहं लक्षयिष्यति, विधौ लक्षणानङ्गीकारात् । किंच, दारभावे ऋतुदर्शनादिनिमित्तकोऽयं विधिः न सर्वकालं कन्याकर्तृकतां पतित्वस्य गमयितुमीष्टे । तस्मात् सिद्धं भार्यात्वानुनिष्पादि पतित्वमिति ।

वस्तुतस्तु शाखान्तरे तासां मन्त्रविधानाद्विनिगमनाविरहेण च पतित्वस्यैव भार्यात्वानुनिष्पादकत्वे प्रमाणाभावादुभयथाविधिदर्शनाच्चोभयमपि उद्वाहभाग्यम् । अतश्च 'पतित्वं सप्तमे पदे' इति युक्तमेवोक्तमिति । न चैवं कर्तृकर्मविरोधः, एकस्मिन् वाक्ये उभयोरनुपादानेन शाब्दबोधे तस्याभावात् । वास्तवस्य च कर्तृकर्मभावस्य 'यजेत स्वर्गकामः' इत्यत्र स्वर्गकामे गुणप्रधानभावस्येवाविरोधः । तच्च यथोक्तविधिना सप्तमपदप्रापणात् सिध्यति, 'पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥' इति मनुस्मरणात् ।

यद्वा कन्यायाः पितृगोत्राद्यथोक्तविधिना भर्तृगोत्रप्रापणं विवाहः । तदपि सप्तमपदप्रापणेनैव, 'स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे' इति स्मरणात् । इदं च शाखान्तरविषयम् । आश्वलायनानां तु त्रिरात्रादिव्रतान्ते पितृगोत्रनिवृत्त्या भर्तृगोत्रप्राप्तिर्भवतीति वेदितव्यम्, 'अत ऊर्ध्वमक्षारालवणाशिनौ' इत्युपक्रम्य 'त्रिरात्रं द्वादशरात्रं संवत्सरं वैकर्षिर्जायते' इत्याश्वलायनस्मरणात्, 'नियमान्ते एकऋषिकल्पः संपद्यते, पितृगोत्रं विहाय सा पतिगोत्रं भजते इत्यर्थः' इति वृत्तिकृद्व्याख्यानाच्च । उद्वाहशब्देऽप्ययमेवार्थः । यद्यपि परिणयनशब्दे 'परिणीयपरिणीयाश्मानमारोहयति' इत्यादिस्मृत्या अग्निप्रदक्षिणीकरणमेवार्थः प्रतीयते तथाप्यङ्गशब्दोऽप्यभिचरिताङ्गसंबन्धिप्रधानमेवाभिधत्ते । यथा 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमम् । एवं पाणिग्रहणादिशब्देऽप्यूह्येयम् । तथा चैते शब्दा यौगिकन्यायेन कर्मनामधेयानि भवन्ति ।

संप्र. ५८३–५८५

(५) तत्र विवाहशब्दः कन्यापितरं प्रति दानम्, 'अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः' इति सूत्रात् (सूत्रे) दानविवाहशब्दयोः सामानाधिकरण्यात् । वरं प्रति पाणिग्रहणादि । अन्यथा 'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः । सार्वकालमेके विवाहम् । तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात्' इत्याश्वलायनेन विवाहात्पूर्वं होम उक्तोऽसंगतः स्यात् । न हि कन्यादानात्पुरस्तादेता आहुतयः सन्ति ।

संम. ६३

---

# कुलपरीक्षा

## वेदाः

स्वसमानस्यैव जन्म स्वस्मात्

यादृशस्यो ह वै रेतो भवति तादृशं संभवति। यदि वै पुरुषस्य पुरुष एव, यदि गोर्गौरेव, यद्यश्वस्याश्व एव, यदि मृगस्य मृग एव। यस्यैव रेतो भवति तदेव संभवति॥

## आश्वलायनगृह्यसूत्रम्

मातापितृकुलयोः परीक्षायाः प्राथम्यम्

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्॥

(१) अग्रे इति प्रथममित्यर्थः। कुलं परीक्ष्य प्रथमं पश्चात् वरस्य ये गुणा वध्वाश्च। सत्स्वपि उत्तरोत्तरगुणेषु कथं कुलमग्रं प्रधानं स्यादिति। एतच्च प्रयोजनमग्रग्रहणस्य। कथं पुनस्तत् परीक्ष्यं कुलम्। तदुक्तं पुरस्तादिति। देभा.

(२) कुलशब्देन उभौ वंशौ महापातकादिरहितौ इति सिद्धौ। तथा अपस्मारादिदोषरहितौ इति। कुलमग्रे प्रथमं परीक्षेत। कथम्। ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् 'ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो वा ब्राह्मण्यं निनयेयुः पितृतश्चैके' इति। अग्रेवचनं वधूवरगुणेभ्यः कुलमेव प्रधानं स्यादित्येवमर्थम्। * गानाष्ट.

(३) संपन्नेष्वपि गुणेषु कुलमेव प्रधानं इति प्रदर्शनार्थं अग्रे इत्युक्तम्। मातृतः पितृतश्च विद्यादिभिः दशपुरुषशुद्धिः कुलम्। तत् प्रथमं परीक्षेत पश्चात् गुणान्तरमित्यर्थः। अना.

(४) अत्र अग्र इति वचनं समस्तेषु वधूवरगुणेषु कुलस्य प्राधान्यं बोधयितुम्। तथा च विष्णुः— 'ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः। कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम्॥' इति। ये मातृतः पञ्चभिः पुरुषैः पितृतश्च पञ्चभिः पुरुषैः प्रसिद्धाः विद्याचारादिसंपन्नास्तेषां कुलं ग्राह्यमिति शेषः। यथोक्तं पुरस्तात् 'दशमे येषामुभयतो नाब्राह्मण्यं पितृत एके' इत्यादिना। यद्यप्येतत् 'बुद्धिमते कन्यां प्रयच्छेत्' इति वाक्यशेषात् वरकुलविषयमिति प्रतीयते, तथापि अपेक्षातौल्येन सामर्थ्यात् कन्याकुलविषयमपीति गम्यते। संप्र. ५८६–८७

(५) महाकुलानुरोधेन सापिण्ड्यसंकोचो न तु तद्भिया अधमकुलात् कन्या स्वीकार्या इति प्रतीयते। अत एव आश्वलायनेन पूर्वं कुलपरीक्षा एवोक्ता। साप्र. ५

## हारीतः

वर्जनीयानि कुलानि, कुलपरीक्षाप्रयोजनम्

श्वित्रि कुष्ठ्युदरि यक्ष्मामयाव्यपस्मारि अनार्षेयमब्रह्म समानार्षेयं चेत्येतानि अपतितान्यपि कुलानि वर्जनीयानि भवन्ति। कुलानुरूपाः प्रजाः संभवन्तीत्यादितः षट्। अयज्ञियत्वादनार्षेयम्। अदैवत्वादब्रह्म। एककुलत्वात् समानार्षेयमिति।

---

(१) जैउमा. ३३।४.

(२) आगृ. १।५।१; अप. १।५४ (कुलमग्रे परीक्षेत मातृतः पितृतश्च) एतावदेव; गृक. २४ (ये०); स्मृच. ७८ (कुलमग्रे परीक्षेत) एतावदेव; गृर. ३१ (ये०); मपा. ३०२; गभा. ९६ (कुलमग्रे परीक्षेत) एतावदेव, गृह्यान्तरवचनम्; प्रर. ९७ स्मृचवत्; धप्र. ४४; संप्र. ५८६; चम. ८७ स्मृचवत्; शुका. ११४ स्मृचवत्; संर ४९ स्मृचवत्; विता. ६७४; संकौ. १७२; प्रका. ३४०; बाल. १।५२ (पृ. १७०) स्मृचवत्; पुम. ४४६ स्मृचवत्; कृभ. ९९२, १००८ स्मृचवत्; मैर. ५०७.

* प्रा., विता. गानावत्।

(१) अप. १।५४ श्वित्रि . . समानार्षेयं (श्वित्रिकुष्ठ्युदरियक्ष्मामयाव्यपस्मार्य[र्श्री]न[सा]नार्षेयाब्रह्मसमानार्षेयं);

तस्मात् सप्त पितृतः परीक्ष्य पञ्च मातृतो नग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत । तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेत् ॥

आमयावि अश्रोत्रेतरसंचारिरोगवत् । अत्र च श्विन्यादीनि षट् वर्जनीयानि । अत्र हेतुः—कुलानुरूपाः प्रजा भवन्तीति । अनार्षेयं अस्मर्यमाणगोत्रप्रवरम् । तस्य च वर्ज्यत्वं अयज्ञियत्वात् । अयज्ञियत्वं च यज्ञेषु अस्मर्यमाणगोत्रप्रवरस्य अनधिकारात् । अब्रह्म अविद्यमानवेदाध्ययनम् । तद्वर्ज्यत्वे हेतुः— अदैवत्वादिति, दैवकर्मशून्यत्वात् ।

* अप. ८५

* गृक, गृर. अपवत् ।

गृक. २५–२६ अयज्ञियत्वा.... समानार्षेयमिति (अयज्ञियत्वादनार्षेयाणि । अदैवत्वादब्रह्मकुलत्वात्समानार्षेयमिति ) विन्देन (विन्देत् ) व्याख्यानात्तु आदर्शपाठानुसारेण पाठः स्यादित्यनुमीयते ; उ. २।११।१६ श्विनि.... समानार्षेयमिति ( श्विनी कुष्ठुदरी यक्ष्मामयाव्यल्पायुरनार्षेयमब्रह्म समानार्षेयमित्येतान्यपनितान्यपि कुलानि वर्जनीयानि भवन्ति । कुलानुरूपा प्रजा भवन्तीति । आदितः षडयज्ञियत्वादनार्षेयम् । अवेदत्वादब्रह्म । एककुल्यत्वात् समानार्षेयमिति ) नग्निकां ( अनग्निकां ) (तस्मात् .. वरयेत्० ) ; गृर. २३–२५ ( श्विनि कुष्ठ्युदरि यक्ष्मामयाव्यनार्षेयमब्रह्मसमानार्षेयं चेत्येतान्यपनितानि । तानि कुलानि वर्जनीयानि भवन्ति । कुलानुरूपा प्रजा संभवन्ति श्विन्यादितोऽर्धं अयज्ञियत्वादनार्षेयं अदैवत्वादब्रह्मवर्चसीयमिति । तस्माद् सप्त पितृतः संवीक्ष्य पञ्च मातृतो नग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत । तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेद् । ) ' न ज्ञायन्ते तां पुत्रिकाशङ्कया न विवाहयेत् ' अयं मन्त्रो मुद्रणदोषात् लेखकप्रमादाद्वा मध्ये समागतः । ' तानि कुलानि..... भार्यां विन्देत ' अयमप्यंशो विष्णुपुराणे इत्युल्लिख्य मुद्रित । अयमपि मुद्रकप्रमाद एव ; पमा ४७८ ( कुलानुरूपा प्रजा सभवन्ति ) एतावदेव ; प्रपा. २०२ पमावत् ; ज्योत ६१२ ( तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेत् ) एतावदेव ; संप्र. ५८९ पमावत् : ७०३ ( तस्मात् लक्षणत्रयविज्ञानोपपन्नां कन्यां वरयेत् ) एतावदेव ; संकौ १७४ पमावत् ; प्रका. २४५ पमावत् .

## वसिष्ठः

कुलमहिमा

[१]अथाप्युदाहरन्ति —

विद्या प्रनष्टा पुनरभ्युपैति
कुलप्रणाशे त्विह सर्वनाशः ।
कुलापदेशेन हयोऽपि पूज्य-
स्तस्मात्कुलीनां स्त्रियमुद्वहन्ति ॥

## विष्णुः

कुलपरीक्षा कन्यादाने श्राद्धे च

[२]नाकुलीनाम् ॥

[३]ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः ।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम् ॥

कन्यादाने ब्राह्मणस्य कुलप्राधान्यप्रतिपादनपरमिदं वचनं न तु लक्षणान्तरनिषेधपरम् । * प्रपा. २११

कुलपरीक्षाप्रमाणम्

[४]अर्धं पित्रा परीक्षेत मात्रा कन्यां परीक्षयेत् ।
तृणाद्भूमिं परीक्षेत आचारेण कुलं तथा ॥

## महाभारतम्

पित्रा दत्ता ब्राह्मणकन्याऽपि क्षत्रियेण ग्राह्या

[५]ययातिरुवाच–

एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते ।
हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः ॥

* मुक्ता., विपा. प्रपावत् ।

( १ ) वस्मृ. १।३८,३९ ( क. ) कुलप्रणाशे ( जातिप्रणाशे ), ( ख. ) विद्या प्रनष्टा ( विद्याविनाशे ) कुलप्रणाशे ( जातिप्रणाशे ).

( २ ) विस्मृ. २४।११.

( ३ ) स्मृच ७८ , प्रपा. २११ , संप्र. ५८७ ; मुक्ता. १३४ सपदक्रमा ( संपद. क्रमात् ) , विपा. ७१६ सपदक्रमाः ( संपदः क्रमा. ) स्मृतिचन्द्रिकायामित्युक्तम् ; संग. १८३ (= ) ; ज्योनि १३५ ( = ) ; संर ५१२ चन्द्रिकायाम्.

( ४ ) समु. ५ ; प्रपा. २०३ ; संप्र. ५८९ ; मुक्ता. १३३ ; संम. ४९ तृणाद्भूमि ( क्रया भूमिं ) ; विपा ६७५ ; ज्ञान. १७४

( ५ ) भा. १।८१।२५–२६.

दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम ।
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् ॥
देवयान्युवाच–
दत्तां वहस्व पित्रा मां त्वं हि राजन् वृतो मया ।
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः ॥
वैशंपायन उवाच–
त्वरितं देवयान्याथ प्रेषितं पितुरात्मनः ।
श्रुत्वैव च स राजानं दर्शयामास भार्गवः ॥
दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः ।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतः स्थितः ॥
देवयान्युवाच–
राजाऽयं नाहुषस्तात दुर्गमे पाणिमग्रहीत् ।
नमस्ते देहि मामस्मै नान्यं लोके पतिं वृणे ॥
शुक्र उवाच–
वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया ।
गृहाणेमां मया दत्तां महिषीं नहुषात्मज ॥
ययातिरुवाच –
अधर्मो न स्पृशेदेवं महान् मामिह भार्गव ।
वर्णसंकरजो ब्रह्मन्निति त्वां प्रवृणोम्यहम् ॥
शुक्र उवाच –
अधर्मात्त्वां विमुञ्चामि वरयस्व यथेप्सितम् ।
अस्मिन् विवाहे मा ग्लासीरहं पापं नुदामि ते ॥
वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम् ।
अनया सह संप्रीतिमतुलां समवाप्स्यसि ॥
इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी ।
संपूज्या सततं राजन् मा चैनां शयने ह्वयेः ॥
वैशंपायन उवाच –
एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ।
शास्त्रोक्तविधिना राजा विवाहमकरोच्छुभम् ॥

शीलवति कुले कन्या प्रदेया

[1]धिक्सत्यलघुशीलानामुच्छ्रितानां यशस्विनाम् ।
नराणामृद्धसत्त्वानां कुले कन्याप्ररोहणम् ॥
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ॥
कुलत्रयं संशयितं कुरुते कन्यका सताम् ॥

(१) भा. ५।९७।१५,१६.

## मनुः

विवाहे वर्जनीयानि दश कुलानि

[1]महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥

(१) वक्ष्यमाणस्य प्रतिषेधस्य निन्दार्थवादोऽयम् । समृद्धिः संपत्तिः । धनं विभवः । महान्त्यपि प्रकृष्टान्यपि । धनविशेषणार्थमाह – गोऽजाविधनधान्यतः । तृतीयार्थे तसिः । गोऽजाविधनेन च धान्येन च । धनग्रहणं गोऽजादीनां विशेषणार्थम् । धनरूपा ये गोऽजादयः । कृष्टसंपन्नता हि धान्यम् । स्त्रीसंबन्धो विवाहः स्त्रीप्राप्त्यर्थं संबन्धः स्त्रीसंबन्धः । मेधा.

(२) इमानि दश वक्ष्यमाणानि कुलानि उत्कृष्टान्यपि वर्जयेत् । तथा गोछागाविमहिषीधान्यैः समृद्धान्यपि तच्छीलप्रजोत्पत्तिव्याधिसंक्रान्तिपरिहारार्थं शास्त्रनोदनासामर्थ्यात् अदृष्टदोषपरिहारार्थं च दारसंबन्धि(न्धे) वर्जयेत् । * गोरा.

(३) महान्ति बहुजन्यानि । गृक. २५

(४) धनं सुवर्णादि । एतेन गुणान्तरवद्वित्तवत्तयाऽपि विवाह्यतेति दर्शनम् । मवि.

(५) महान्त्यपि अग्न्याधानसहितान्यपि । माच.

[2]हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥

* मनु., मच., नन्द. गोरागतम् ।

(१) मस्मृ. ३।६ ; विध. १।५४ ; अप. १।५४ दशैतानि (दशेमानि) ; गृरु. २५ ; स्मृच. ७६ ; गृर. २१ ; पमा. ४७७ अपरार्द्ध ; प्रपा. ३०२ कुलानि (कुलानि) ; मर. १८ उत्त. ; संप्र. ५८८ ; धम. ८७ उत्त. ; शुक्ता. १३२ ; संम. ४९ ; सिन्धु. १०६६ उत्त. ; निपा. ६७५ ; संकौ. १७४ ; प्रका. ३४५ ; बाल. १।५२ (पृ. १७०), १।५४ उत्त. ; कृभ. १११५ (=) उत्त. ; संर. ५०८.

(२) मस्मृ. ३।७ ; विध. १।५४ ; अप. १।५४ रोम (लोम) ; गृक. २५ अपरार्द्ध ; स्मृच. ७६ ; गृर. २१ ; पमा. ४७७ ; प्रपा. ३०२ क्षय्याम (क्षयाम) ; मर. १८ ; दीक. १।५४ ; वीमि. १।५४ अपरार्द्ध, पृ. ; संप्र. ५८८ अपरार्द्ध ; धम. ८७ ; शुक्ता. १३२ ; संम. ४९ ; सिन्धु. १०६६ ; संकौ. १७४ ; मान. १७४ ; प्रका. ३४५ ; बाल. १।५२,५४ ;

(१) हीनाः त्यक्ताः क्रिया यस्मिन् कुले जातकर्मादयः संस्कारा न क्रियन्ते नित्याश्च पञ्चयज्ञादयः। निष्पुरुषं स्त्रीप्रसु। यत्र प्रायेण कन्या जायन्ते, न पुमांसः। निश्छन्दः वेदाध्ययनवर्जितम्। रोमशार्शसं द्वंद्वैकवद्भावेन कुलद्वयं निर्दिष्टम्। बहुदीर्घैः बाह्वादिषु लोमभिर्युतम्। अर्शांसि गुदेन्द्रियगतान्यधिमांसनिबद्धानि तानि हि रोगरूपत्वात्पीडाकराणि। क्षयः राजयक्ष्मा व्याधिः। आमयावी मन्दाग्निः, यस्य भुक्तमन्नं सम्यक् न जीर्यति। अपस्मारः स्मृतिभ्रंशाद्युपघातकृत्। श्वित्रं शरीरगता छेदवती श्वेतता। कुष्ठं प्रसिद्धम्। सर्वे एते व्याधिविशेषवचनाः शब्दा रोमशादारभ्य मत्वर्थीयप्रत्ययान्ता निर्दिष्टाः। पूर्वैर्व्याख्यातृभिः दृष्टमूलता अस्य प्रतिषेधस्य वर्णिता। मातुः कुलं द्विपदोऽनुहरन्ति। ततो हीनक्रियादीनां या प्रजा साऽपि तच्छीला स्यात्। व्याधयश्च संक्रामन्ति। एवं हि वैद्यके पठ्यते 'सर्वे संक्रामिणो रोगा वर्जयित्वा प्रवाहिकाम्'। * मेधा

(२) यागादिरहितं कुलं स्त्रीजनकं वेदशून्यं प्रचुरतरदीर्घरोमाञ्चितं अर्शआख्यव्याध्युपेतं राजयक्ष्ममन्दाग्न्यपस्मारिश्वित्रिकुष्ठीना च संबन्धीनि कुलानि वर्जयेत्। गोरा.

(३) 'व्याधयः संचारिणः' इति वैद्यकाः पठन्ति–'सर्वे सक्रामिणो रोगा वर्जयित्वा प्रवाहिकाम्' इति। अवेदमूलं कथमिदं प्रमाणमिति चेन्न। दृष्टार्थतयैव प्रामाण्यसम्भवात्। तदुक्तं भविष्यपुराणे– 'सर्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु।' मीमांसाभाष्यकारेणापि स्मृत्यधिकरणेऽभिहितम्—'ये दृष्टार्थास्ते तत्प्रमाणं, ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानम्'। + मनु.

(४) रोमशं रोमबहुलम्। तद्वर्जयेत्। कुतः? निर्ऋतिरूपत्वात्। तथाहि श्रुतिः–'निर्ऋत्यै विकृतदेहरूपं रोमशपशुमालभेत, सा ह्यस्याः स्वा तनुः' इति। § नन्द.

* अप गृक मवि स्मृच गृर. मच. माच सर. शब्दार्थो मेधावत्। + शब्दार्थो मेधावत्। § शेष मेधावत्। कृभ. १११५ (=); संर. ५०८ उत्तरार्धं (क्षयामयापस्मारीणि श्वित्रिकुष्ठिकुलानि च।).

कुलानामपकर्षस्य कारणानि

**कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥**

आसुरादिविवाहसंस्काराभाववेदानध्ययनब्राह्मणापूजनैः प्रख्यातकुलानि अपकर्षं यान्ति। तस्मादेतत् परिहरणीयम्। * गोरा.

**शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।**
**गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया॥**

(१) चित्रकर्मादिशिल्प–धनप्रयोग–केवलशूद्रापत्य–गवाश्वरथक्रयविक्रयादि– कृषि – राजसेवा–व्रात्यादियाजन–यागादिकर्माभाववृद्धि–मन्त्रानध्ययनैः क्षिप्रमेव कुलान्यपकर्षं यान्ति। + गोरा.

(२) शिल्पं चित्रादिकर्म। व्यवहारः ऋणप्रदानादि। यानैः शकटादिभिः। सेवा अन्यभावेन पराराधनम्। गृक. ३३५

(३) शिल्पादिभिस्तु कुलान्यकुलतां अल्पकुलतां यान्ति। शिल्पेन शिल्पजीवनेन। शूद्रापत्यैः केवलैः कृत्स्नैः, सवर्णविवाहे सत्यपि शूद्रापत्यमात्रोत्पत्त्या। गोभिर्गोरूपैः अश्वैरश्वरूपैः यानैः। § मवि.

**अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम्।**
**कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः॥†**

* मवि., ममु, मच, नन्द, माच. गोरावत्।
+ ममु. गोरावत्। § मच., नन्द, माच मविवत्।
† गोरा. व्याख्यानं 'शिल्पेन' इति पूर्वश्लोके द्रष्टव्यम्।

(१) मस्मृ ३।६३; स्मृच. ८७ कुविवाहैः (दुर्विवाहैः); गृर. ५२९, मपा १४४ तृतीय. पादः; विप्र. ४८७ (भागः २); संप्र. ५८९; मुक्ता. २८ न्यकुलतां यान्ति (न्याशु विनश्यन्ति): १४४ कादयः; संम. ४९; भान. १७८: १९२ मुक्तावत्; संर. ५०८ स्मृत्यन्तरम्.

(२) मस्मृ. ३।६४; गृक. ३३४; स्मृच. ७८; गृर. ५२९; मपा १२४ (=) उत्त: १४४ (=) पू.; प्रपा. ३०३ कृष्या राजोप (कृष्यारम्भोप); विप्र. ४८७ (भाग २) कृष्या राजोप (कुसीदात्रोप), संप्र. ५८९; मुक्ता. १३४; संम. ४९; विपा ६७६ प्रपावत्; संर. ५०८ स्मृत्यन्तरम्.

(३) मस्मृ. ३।६५; गृक. ३३४ (अयाज्ययाजन चैव नास्तिक्येन च कर्मणा। कुलान्यकुलतां यान्ति यानि हीनानि

अयाज्ययाजनादियाजनैः, कर्मणां श्रौतस्मार्तादीनां नास्तिक्येन – शास्त्रीयफलवत्कर्मसु फलाभावबुद्धिर्नास्तिक्यम्, – वेदाध्ययनशून्यानि कुलानि क्षिप्रमपकर्षं गच्छन्ति । अत्र च विवाहप्रकरणे विवाहनिन्दाप्रसङ्गेन क्रियालोपादयो निन्दिताः । निन्दया च एतन्न कर्तव्यमिति सर्वत्र निषेधः कल्प्यते । ममु.

कुलानामुत्कर्षस्य कारणानि

मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥

यद्यपि धनेन कुलमिति प्रवादः, तथापि वेदाध्ययनावबोधतदर्थानुष्ठानयुक्तानि पुनः कुलानि अल्पधनान्यपि उत्कृष्टकुलमध्ये गण्यतां प्राप्नुवन्ति महतीं ख्यातिमर्जयन्ति । विवाहप्रसङ्गेन प्रसक्तानुप्रसक्तिकवैतत्सर्वमुक्तम् । † गोरा.

उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत् सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥

( १ ) बहुप्रकारत्वादुत्तमस्य तदपेक्षा वीप्सा । कश्चित् जात्या उत्कृष्टः, कश्चिद्विद्यया, कश्चित् शीलेन । अथवा संबन्धिभेदात् यः कश्चित्संबन्धः केनचिदुत्तमेन योग्यः । उत्तमैरुत्तमैः जात्यादिभिरुत्कृष्टैः कन्यादानादिलक्षणान् संबन्धानाचरेत् कुर्यात् । निनीषुः नेतुं प्रापयितुमिच्छुः कुलं उत्कर्षं श्रैष्ठ्यं अधमानधमांस्त्यजेत् । उत्तमैरेव विधानात् अधमानां त्यागे सिद्धे उत्तमासंभवे मध्यमानुज्ञानार्थं त्यागवचनम् । अधमा निकृष्टाः । * मेधा.

( २ ) कुलमुत्कृष्टतां नेतुमिच्छन् श्रुताभिजनाद्युत्कृष्टैः सह अनवरतं कन्यादानादिसंबन्धानाचरेत्, अपकृष्टांस्तु संबन्धेषु परिहरेत् । उत्तमविधानादेव अधमव्यावृत्तिसिद्धौ पृथग्वचनं उत्तमाभावे समाम्यनुज्ञानार्थम् । गोरा.

( ३ ) त्यजेदित्यन्यत्यागस्य आर्थिकत्वेऽपि उत्तमालाभेऽधमोऽपि ग्राह्य इत्यर्थम् । § मन.

उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्जयन् ।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ॥

( १ ) उत्तमान् गच्छन् तैः सह संबन्धं कुर्वन् ब्राह्मणः श्रेष्ठतामेति । ब्राह्मणग्रहणं क्षत्रियवैश्ययोरपि प्रदर्शनार्थम् । प्रत्यवायेन विपरीताचरणेन हीनैः सह संबन्धेन प्रातिलोम्येन शूद्रतां गच्छति । जातेरनपायात् तत्तुल्यतां प्राप्नोतीत्युक्तं भवति । मेधा.

( २ ) उत्तमसंबन्धेषु उत्तमाननुसरन् निकृष्टांश्च वर्जयन् ब्राह्मणः श्रेष्ठत्वं प्राप्नोति । विपर्ययेन पुनर्जातेरनपायात् शूद्रतुल्यतां प्राप्नोति । + गोरा.

---

† मवि., मच., नन्द. गोरागतम् । ममु. गोरावत् ।

मन्वतः ॥ ) ; स्मृच. ७८ कुलान्याशु विनश्यन्ति ( कुलान्यकुलतां यान्ति ) ; गृर. ५२९ कर्मणाम् ( कर्मणा ) शेषं स्मृचवत् ; मपा. १२४ ( = ) ( अयाज्ययाजनैनैव नास्तिक्येन च कर्मणा । कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ ) ; प्रपा. २०२ गृरवत् ; निप्र. ४८७ ( भागः २ ) गृरवत् ; संप्र. ५८९ गृरवत् ; सुका. २८ नैवैश ( नैवैतैः ) शेषं स्मृचवत् : १३४ गृरवत् ; संम. ४९ गृरवत् ; विपा. ६७६ गृरवत् ; नन्द. स्मृचवत् ; संर. ५०८ गृरवत्.

( १ ) मस्मृ. ३।६६ ; विध. २।२४ कर्षन्ति च ( प्राप्नुवन्ति ) ; गृक. ३३४ ; गृर. ५२९ धनान्यपि ( धनानि च ) ; मपा. १२४ ( = ) ; निप्र. ४८७ ( भाग २ ) मनुबौधायनौ ; संप्र. ५०० वर्षन्ति ( यान्ति ) ; सुका. २९ मन्त्रतस्तु ( मन्त्रवन्ति ) , भाव. १९२ सुकावत्.

( २ ) मस्मृ. ४।२४४ ; गोरा. नैत्यं ( नैः सार्ध ) ; गृक. २७६ ; स्मृच. ७९ ; गृर. ४८३ ; पमा. ४७८ ; प्रपा. २०२ नित्यं ( नो नित्यं ) मधमानधमांस्त्यजेत् ( मधमानधमांस्त्यजेत् ) ; संप्र. ५८७ नित्यं ( नो नित्यं ) सह ( सदा ) ; धम. ७८ सह ( सदा ) ; सुका. १६३ ; संम. ४८ पमावत् : ४९ संरवत्, पृ. ; विपा. ६७४ प्रमावत् ; संर. ५०७ नित्यं ( नो नित्यं ) सह ( ३६ ) उत्तरार्धे ( निनीषुः कुलमुत्कर्षमधमान्वर्जयेत् ।).

* भाव. मेधागतम् ।

§ शेषं मेधागतम् ।

+ मवि., ममु., मन., नन्द., भाव. गोरागतम् ।

( १ ) मस्मृ. ४।२४५ ( ग., घ. ) पूर्वार्धे ( उत्तमानुत्तमानेव गच्छन् हीनांस्तु वर्जयन् । ) ; गोरा. पूर्वार्धे ( उत्तमानुत्तमानेव गच्छन् हीनांश्च वर्जयन् । ) ; गृक. २७९ वर्जयन् ( वर्जयेत् ) प्रत्यवायेन ( प्रत्यवाये तु ) ; गृर. ४८३ प्रत्यवायेन ( प्रत्यवाये तु ).

ग्राह्याणि कुलानि वर्जनीयानि च

विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः ।
अविप्लुतब्रह्मचर्या महाकुलसमन्विताः ॥
महाकुले ये संबद्धा महत्त्वे च व्यवस्थिताः ।
संतुष्टाः सज्जनहिताः साधवः समदर्शिनः ॥
[3]लोभरागद्वेषामर्षमानमोहादिवर्जिताः ।
अक्रोधनाः सुप्रसादाः कार्याः संबन्धिनः सदा ॥
[4]ये स्तेनाः पिशुनाः क्लीबा ये च नास्तिकवृत्तयः ।
विकर्मणा च जीवन्तो विकृताकृतयस्तथा ॥
[5]प्रवृद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा ।
ब्रह्मस्वादननित्याश्च कदर्याश्च विगर्हिताः ॥
[6]अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा ।
पतिघ्न्यश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत् ॥

---

(१) पमा. ४७८ ; प्रपा. ३०२ चर्या महा ( चर्यैमहा ) ; संप्र. ५८७ ; मुक्ता. १३२ दर्शितै ( दर्शिताः ) ; संम. ४९ ; त्रिपा. ६७४ ; संर. ५०७ दर्शितैः ( दर्शिनः ).

(२) पमा. ४७९ पूर्वार्धे ( महाकुलैश्च सबन्धा महत्त्वेन व्यवस्थिताः । ) ; प्रपा. ३०२ उत्त. ; संप्र. ५८७ ; मुक्ता. १३२ ये सबद्धा ( च सबन्धो ) ; त्रिपा. ६७४ उत्त ; संर. ५०७ समदर्शिनः ( तत्त्वदर्शिन' ) उत्त.

(३) पमा. ४७९ ; प्रपा. ३०२ मोहादिव ( मोहविव ) ; संप्र. ५८७ ; मुक्ता. १३२ उत्त. ; संम. ४९ उत्त. ; विपा. ६७४ सदा ( तथा ) शेषं प्रपावत् ; संर. ५०७ पूर्वार्धे ( रागद्वेषामर्षलोभमानमोहविवर्जिताः । ).

(४) पमा. ४७९ ; प्रपा. ३०२ ये च नास्तिकवृत्तय' ( ये वा नास्तिकबुद्धय ) ; संप्र. ५८७–५८८ ; मुक्ता. १३२ ; संम. ४९ ; त्रिपा. ६७४–७५ ये च ( ये वा ) विकृताकृतयस्तथा ( विकृता कृपणास्तथा ) ; आन. १७४ पिशुनाः ( विकृताः ).

(५) पमा. ४७९ ; प्रपा ३०२ नित्याश्च ( निन्द्याश्च ) ; संप्र. ५८८ ; मुक्ता. १३२ स्वादन ( स्वादान ) ; संम. ४९ प्रपावत् ; विपा. ६७५ स्वादननित्याश्च ( स्वादाननिष्ठाश्च ) ; आन. १७४.

(६) पमा. ४७९ प्रसवास्तथा ( प्रसवस्तथा ) ; प्रपा. ३०२ अप्रजा ( अप्रज्ञा ) प्रसवास्तथा ( प्रसुवस्तथा ) सुवासिन्य' ( सुराप्यश्च ), संप्र. ५८८ ; मुक्ता. १३२ ( अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा । पतिर्यत्र स चान्यत्र ताश्च यत्नेन वर्जयेत् ॥ ) ; संम. ४९, विपा. ६७५ स्ताश्च यत्नेन वर्जयेत् ( स्ता यत्नेन विवर्जयेत् ) ; संर. ५०७ अप्रजा ( अप्रजा ) उत्तरार्धे ( पतिघ्न्यश्च स्त्रियो यत्र तानि यत्नेन वर्जयेत् । ) देवलः.

कुलं शीलकारणम्, अज्ञाते हीनयोनिजत्वलिङ्ग शीलम्

अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥

(१) अनार्यो द्वेषमत्सरप्रधानः, निष्ठुरः स्वार्थपरः, क्रूरो लोभहिंसापरः, निष्क्रियात्मा विहितक्रियावर्जितः । एतैः स्वभावैः कलुषयोनिता व्यज्यते ।

मेधा.

(२) नैर्घृण्यपरुषभाषित्वहिंसत्वविहितप्रतिषिद्धानुष्ठानशीलत्वानि संकरजातं पुरुषं अस्मिन् लोके प्रकटी कुर्वन्ति । * गोरा.

(३) कलुषयोनित्वव्यञ्जककर्माण्याह– अनार्यतेति । निष्ठुरता परुषभाषिता । क्रूरता अनिमित्तहिंसनम् । निष्क्रियात्मता अशीतिन्यूनवयस्त्वेऽपि क्रियारहितता । कलुषयोनिजं कलुषा जात्यन्तरबीजाक्रान्ता जात्यन्तरा या योनिः ततो जातम् । मच.

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा ।
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥

(१) दुर्योनिः सङ्कीर्णजन्मा प्रकृतिं स्वां आत्मीयं कारणं न नियमेन गृह्णाति ।

मेधा.

(२) यस्मात्– पित्र्यमिति । तज्जनकयोर्दुष्टस्वभावत्वेन अकार्यकारित्वात् असौ दुष्टयोनिः पितृसम्बन्धि दुष्टभावत्वं सेवते, मातृसम्बन्धोभयगतं वा, अतो न कदाचित् असौ आत्मकारणं गोपायितुं शक्नोति ।

§ गोरा.

---

* ममु., नन्द., माच. गोरावत् ।

§ मवि., ममु., मच., नन्द. गोरावत् ।

(१) मस्मृ. १०।५८ ; मुक्ता. ७२ ; आन. १७४ अनार्यता ( अनाढ्यता ).

(२) मस्मृ. १०।५९ ; पमा. ४७८ पित्र्यं वा ( पितुर्वा ) नियच्छति ( विमुञ्चति ) ; प्रपा. ३०३ पित्र्य वा ( पितुर्वा ) ; संप्र. ५८९ प्रपावत् ; मुक्ता. ७२ पमावत् ; आन. १७४ पमावत्.

**कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः ।**
**संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥**

( १ ) तस्य शीलं येन जातः न तु यस्य क्षेत्रं स लोके प्रसिद्धः । मेधा.

( २ ) महाकुलोत्पन्नस्यापि यस्य योनिसंकरः प्रच्छन्नो भवति स जनः पितृगतं स्वभावं ईषत् वा बहु वा सेवत एव । * गोरा.

( ३ ) तदेव स्पष्टयति— कुल इति । मुख्ये विप्रादिरूपे, योनिसंकरः स्वोत्पादकयोनौ विजातीयरेतःप्रवेशात्, तच्छीलं तयोः पितृमात्रोः स्वभावम् । मच.

## याज्ञवल्क्यः

महाकुलमपि संचारिदोषदुष्टं वर्ज्यम्

**¹दशपूरुषविख्यातात् श्रोत्रियाणां महाकुलात् ।**
**स्फीतादपि न संचारिरोगदोषसमन्वितात् ॥**

( १ ) श्रोत्रियत्वेनैव ख्यातिर्गरीयसी, न राजसत्कारादिभिः । तथा च आह मनुः—' मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि । कुलसंख्यां च गच्छन्ति प्राप्नुवन्ति महद्यशः ॥ ' इति । तेन अल्पधनादपि श्रोत्रियकुलात् कन्यामुद्वहेत्, न तु धनादिसमृद्धादपि संचारिरोगसयुक्तात् दोषसंयुक्ताद्वा । मौर्ख्यादयोऽपि हि मातुलादिसंपर्कात् संचारिण एव, रोगाश्च श्वित्रकुष्ठादयः । न तु संचारिणोऽपि शिरःशूलादयः, दृष्टमूलत्वात् स्मृतेः । तथा चाह मनुः— ' महान्त्यपि समृद्धानि गोजाविधनधान्यतः । स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥ हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् । क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ ' इति । कुलग्रहणाच्च सिद्धे यत् अरोगिणीं इत्युक्तं, तत् आदरार्थम् । एवमन्येऽपि गुणदोषाः स्मृत्यन्तरपठितोक्तश्च अन्वेष्याः, प्रमाणान्तरमूलत्वात् स्मरणस्य । विश्व.

( २ ) पुरुषा एव पूरुषाः दशभिः पुरुषैः मातृतः पञ्चभिः पितृतः पञ्चभिः विख्यातं यत्कुलं तस्मात् । श्रोत्रियाणां अधीतवेदानाम् । अध्ययनं उपलक्षणं श्रुताध्ययनसंपन्नानाम् । महत् च तत् कुलं च महाकुलं पुत्रपौत्रपशुदासीग्रामादिसमृद्धं, तस्मात् कन्यका आहर्तव्या इति नियम्यते । एवं सर्वतः प्राप्तौ सत्यामपवादमाह —स्फीतादिति । संचारिणो रोगाः श्वित्रकुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेण अनुप्रविशन्तो दोषाः । पुनः हीनक्रियनिष्पौरुषत्वादयो मनुना उक्ताः । एतैः समन्वितात् स्फीतादपि पूर्वोक्तात् महाकुलादपि नाहर्तव्या ।

* मिता.

( ३ ) मातृतः पितृतः पञ्च पञ्च पुरुषा विख्याता यस्मिन् कुले तत् दशपुरुषविख्यातं, तस्मात् महाकुलात् पुत्रसस्यादिसमृद्धात् कन्यामुद्वहेदित्यर्थः ।

पमा. ४७८

## व्यासः

वरणीयकन्यायाः सत्कुललक्षणानि, कुलापकर्षकारणानि

**¹एवं स्नातकतां प्राप्तो द्वितीयाश्रमकाङ्क्षया ।**
**प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसंभवाम् ॥**
**²ख्यातनाम्नः पुत्रवतः सदाचारवतः सतः ।**
**दातुमिच्छोर्दुहितरं प्राप्य धर्मेण चोद्वहेत् ॥**
**³देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।**
**कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥**

## यमः

वर्जनीयानि चतुर्दश कुलानि

**⁴चतुर्दश कुलानीमान्यविवाह्यानि निर्दिशेत् ।**
**अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत् ॥**

* भवि., मभु., नन्द. गोरावत् ।

( १ ) मस्मृ. १०।६०.

( २ ) यास्मृ. १।५४ ; विश्व. ; मिता. ; अप. ; स्मृच. ७६ ; गृर. २३ उत्त. ; पमा. ४७८ पूरुष ( पुरुष ) पू. ; मपा. १४१ पूरुष ( पौरुष ) ; मर. १८ ; सावी. २१ पू. ; वीमि. ; संप्र. ५८७ पू. , ५८८ उत्त. ; मुक्ता. १३२.

* अप., वीमि. मितावत् ।

( १ ) व्यास्मृ. २।१. ( २ ) व्यास्मृ. २।४.

( ३ ) स्थलादिनिर्देशः अत्रैव एतस्मिन्नेव यमवचने द्रष्टव्यः ।

( ४ ) अप. १।५४ नैव वर्जयेत् ( च विवर्जयेत् ) ; गृक. २६ अपवत् ; स्मृच. ७६ अपवत् ; गृर. २५ अनार्षेयं ( अनार्षेयी ) शेषं अपवत् ; पमा. ४७७ ; प्रपा. ३०२ नीमान्यविवाह्यानि ( नीमान्यपि वाह्यानि ) ; संप्र. ५८८ ; मुक्ता. १३२ पूर्वार्धे ( कुलानीमान्यपि सदा अविवाह्यानि निर्दिशेत् । ) ; विपा. ६७५.

[1]अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् ॥
[2]हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च ।
श्वित्रिकुष्ठिकुलादीनां कुर्याद्विपरिवर्जनम् ॥
[3]सदाकामकुलं वर्ज्यं लोमशानां च यत्कुलम् ।
अपस्मारि कुलं यच्च यच्च पाण्डुकुलं भवेत् ॥

(१) ऋत्विजोऽत्र निन्द्ययाजकाः । कामकुलं कामप्रधानकुलम् । अतिवर्णं अतिकृष्णमतिगौरं वा ।

अप. १।५४

(२) *अनार्षेयमविज्ञातप्रवरम् । अत्युच्चं अतिदीर्घा* यस्मिन् कुले तदत्युच्चम् । अतिह्रस्वं अतिकुब्जा यस्मिन् । अतिशयितो वर्णो यस्मिन् तदतिवर्णम् । एतच्च रोगिकुलवर्जनं तद्रोगसंक्रान्तिभयात् ।

स्मृच. ७६

(३) अनार्षेयं अवरणीयार्षेयं चतुरार्षेयादि, 'न चतुरो वृणीते न पञ्चातिवृणीते' इति श्रुतेः । इदं च इत्थमेव व्याख्येयम् । अन्यथा गोत्राणां ऋष्यपत्यत्वेन *अनार्षेयत्वासंभवात्, प्रवररहितगोत्रासंभवाच्च* । अनार्षेयं अविज्ञातप्रवरं इति चन्द्रिकाकारः । ब्राह्मणोपादानं क्षत्रियादीनां स्वभावतः अनार्षेयत्वेऽपि अपरिहारार्थम् । ऋत्विजां कुलपरंपरागतानाम् । अत्युच्चं अतिदीर्घपुरुषम् । अतिह्रस्वं अतिह्रस्वपुरुषम् । अतिवर्णं वर्णमतिक्रान्तं अति-गौरातिकृष्णादि । सदाकामाः कामप्रधानाः तेषां कुलम् । आगमानां श्रौतस्मार्तकर्मपरित्यागेन केवलागमविहितकर्मानुष्ठातॄणां, *वामागमवर्तिनां वा* ।

संप्र. ५८९

कुलापकर्षस्य कारणानि

[1]देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

देवद्रव्यं देवतोद्देशेन यत् त्यक्तं वस्तु ।

गृक. ३३४

## संवर्तः

*कुलीना कन्या वरणीया*

[2]अतो द्विजः समावृत्तः सवर्णां स्त्रियमुद्वहेत् ।
कुले महति संभूतां लक्षणैस्तु समन्विताम् ॥

## पैठीनसिः

*कुलीना कन्या वरणीया*

[3]कुलोत्पन्नां युक्ताचारां वरयेत् ॥

## लघुशातातपः

*कुलापकर्षस्य कारणानि*

[4]देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

## पुराणम्

*कुलशीलकारणम्*

[5]मातुलान् भजते पुत्रः कन्यका भजते पितॄन् ।
यथाशीला भवेन्माता तथाशीला भवेत्सुता ॥

---

(१) अप. १।५४ ; गृक. २६ ; स्मृच. ७६ ; गृर. २५ ; पमा. ४७७ ; प्रपा. ३०२ (*अत्युच्चकमतिह्रस्वमतिवर्णं च वर्जयेत्।*) ; संप्र. ५८८ ; मुक्ता. १३२ ह्रस्वं (नीचं) ; विपा. ६७५ प्रतावत्.

(२) अप. १।५४, गृक. २६-२७ द्विपरि (द्वि परि) ; स्मृच. ७६ ; गृर. २५ द्विपरि (च परि) ; पमा. ४७७-७८ ; प्रपा. ३०२ गृरवत् ; संप्र. ५८८ गृरवत् ; मुक्ता १३२ श्वित्रिकुष्ठि (तथा श्वित्रि), विपा. ६७५ पूर्वार्धे (हीनाङ्गनधिकाङ्गं च आमयावि कुलं च यत्।).

(३) अप. १।५४, गृक २७ ; स्मृच. ७६ वर्ज्यं (वर्ज्यं) ; गृर. २५ उत्तरार्धे (अपस्मारि कुलं चैव पाण्डुरोगं कुलं भवेत्।), पमा ४७८ कामकुलं (कामिकुलं) लोम (रोम) ; प्रपा. ३०२ यच्च पाण्डुकुलं (पाण्डुरोगकुलं) ; संप्र. ५८८ लोमशानां (भागमानां), मुक्ता. १३२ कामकुलं (कामीकुलं) वर्ज्यं (वर्ज्यं) लोम (रोम), विपा. ६७५ पमावत्.

(१) गृक. ३३४ यमशातातपदानव्यासाः ; गृर. ५२९ ब्रह्मस्व (परस्व) यमादयः ; मपा. १२४ यमव्यासशातातपाः ; निप्र. ४८७ (भाग: २) ब्रह्मस्वहरणेन च (ब्राह्मणातिक्रमेण च) ब्राह्मणातिक्रमेण च (गवां चातिक्रमेण च) यमशातातपव्यासाः.

(२) संस्मृ. ३३.

(३) गृक. ९ ; गृर. १० ; स्मृसा. १३ युक्ताचारां (समानाचारां) ; संप्र. ७१५ युक्ताचारां (माध्याचारां).

(४) लशास्मृ. ७९. निबन्धग्रन्थेषु शातातप इति । स्मृतिनिर्देशः एतस्मिन् ग्रन्थे द्रष्टव्यः ।

(५) स्मृच. (व.) ७६ मातुलान् (मातुलं) तथाशीला भवेत्सुता (तथाशीलो भवेत्सुतः), (ग.) २०५ ; प्रपा. ३०३ भवेत्सुता (भवेत्सुतः) व्यासः ; पमा. ४७८ तथाशीला

## अनिर्दिष्टकर्तृकवचनानि

महाकुललक्षणम्

पुत्रपौत्राभिवृद्धिश्च श्रुताध्ययनसंपदः ।
पशुधान्यादिसंपत्तिः पितृभ्यां पञ्च पूरुषाः ॥
एतैर्गुणैश्च संयुक्तं तन्महाकुलमुच्यते ।
एवं सुलक्षणं ज्ञात्वा पुमान्नारीं समुद्वहेत् ॥
यस्य शीलं न जानीयात्स्थानं त्रिपुरुषं कुलम् ।
कन्यादाने तथा श्राद्धे न वृणीयात्कदाचन ॥
ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः ।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम् ॥

## चतुर्विंशतिमतम्

कुलीना कन्या वरणीया

कुले महति संभूतां लक्षणैश्च समन्विताम् ।
दशभिः पुरुषैः ख्यातां श्रोत्रियाणां महाकुलात् ॥

## स्मृतिमञ्जर्याम्

कुलीना कन्या वरणीया

महाकुलसमुद्भूतां सर्वावयवसुन्दरीम् ।
भ्रातृयुक्तां सुशीलां च सुपादामुद्वहेत् स्त्रियम् ॥

## कापिकामतम्

चतुर्दश कुलानि वर्जनीयानि

अनार्षेयं मतमिति चतुर्दश कुलानि वै ।
महान्त्यपि समृद्धानि यमोक्तानि विवर्जयेत् ॥

## शाकलकारिके

कन्याकुलपरीक्षा कर्तव्या

अथ शिष्यः समावृत्तः कुर्वीतानुज्ञया गुरोः ।
कन्याकुलं परीक्ष्यादौ धर्मार्थं दारसंग्रहम् ॥
कुलजां सुमुखीं स्वाङ्गीं सुनासां च मनोहराम् ।
सुनेत्रां सुभगां कन्यां निरीक्ष्य वरयेत् बुधः ॥

## रेणुकारिकाः

कुलीना कन्या वरणीया, चतुर्दश कुलानि वर्जनीयानि

एवं समावृत्तो धर्मसुखसंतानवृद्धये ।
कुलोत्थामनुरूपां सल्लक्षणाढ्यामथोद्वहेत् ॥
तत्रानार्षेयमित्यादि चतुर्दश कुलानि वै ।
महान्त्यपि समृद्धानि यमप्रोक्तानि वर्जयेत् ॥
हीनक्रियं निष्पुरुषं निच्छन्दो रोमशार्शसम् ।
कृष्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥
मातुलान् भजते पुत्रः कन्यका भजते पितॄन् ।
यथाशीला भवेन्माता तथाशीलो भवेत् सुतः ॥
उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेद्बुधः ।
निनीषुः कुलमुत्कर्षं मध्यमानधमांस्त्यजेत् ॥

---

भवेत्सुता (तथाशीलो भवेत्सुतः); संप्र. ५८९ प्रपावत्, व्यासोऽपि; मुक्ता. १३२ तथाशीला भवेत्सुता ( तथाशीलो भवेन्नरः ) हारीतः ; विपा. ६७५ तथाशीला भवेत्सुता ( तच्छीला नृप कन्यका ) भारतवचनम्.

( १ ) प्रपा. ३०६.
( २ ) संग. १८३.
( ३ ) यम. ९३.
( ४ ) प्रपा. ३०६.

( १ ) बाल. १।५३ पृ. १९६.
( २ ) शाका. ८१ पृ. ९. ( ३ ) शाका. १०१ पृ. ११.
( ४ ) रेका. २६–२७ पृ. ४८.
( ५ ) रेका. १७–२० पृ. ५०.



# गोत्रप्रवरविचारः

### * निबन्धकारकृता गोत्रप्रवरमीमांसा

( १ ) शातातपः–'आदौ गोत्रविशुद्धिः स्यात्ततः सप्तमपञ्चमम्। राशिकूटं ततश्चैव त्रेधा संबन्धलक्षणम्॥' इति। गोत्रविशुद्धिः असमानगोत्रत्वेन, 'असगोत्रा च या पितुः' इति मनुस्मरणात्। तस्याश्च 'आदौ' इत्यनेन आवश्यकत्वमुक्तम्, तदभावे अपत्यस्य चण्डालत्वस्मरणात्। तथा च बौधायनः—'आरूढपतितापत्यं ब्राह्मण्या यस्तु शूद्रजः। सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः॥' इति। गोत्रमिति प्रवरस्याप्युपलक्षणं, 'असमानार्षगोत्रजाम्' इति याज्ञवल्क्यस्मरणात्। आर्षं च गोत्रं च आर्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रः, न समानार्षगोत्रः असमानार्षगोत्रः, असमानार्षगोत्राज्जाता असमानार्षगोत्रजा। ततश्च गोत्रप्रवरयोः पृथक्पृथक् कन्यापर्युदासे निमित्तत्वं सिध्यति। तथा च गौतमः–'असमानप्रवरैर्विवाहः' इति प्रवरमात्रस्यैव पर्युदासनिमित्ततां प्रकटयति। ततश्च गोत्रभेदेऽपि प्रवरैक्ये न विवाहः। तद्यथा, यस्कवाधूलमौनमौकवार्कराष्टिशार्ष्टिसावर्णिशालङ्कायनदैवत्यायनानां गोत्राणां भेदेऽपि भार्गववैतहव्यसावेतसेति प्रवरैक्ये। तथा प्रवरभेदेऽपि गोत्रैक्ये। तद्यथा, तित्तिरिकपिभूमिस्वन्दितगण्डिताना गोत्राणां आङ्गिरससैन्यगार्ग्येति अङ्गिराः तित्तिरिः कपिभूमिरिति च इति गोत्रैक्येऽपि वैकल्पिकप्रवरभेदे ( वैकल्पिकप्रवरभेदेऽपि गोत्रैक्ये )। यत्तु हरितकुत्सपिङ्गशङ्खदर्भभैमगवाना आङ्गिरसाम्बरीषयौवनाश्वेति मान्धात्राम्बरीषयौवनाश्वेति वैकल्पिकप्रवरभेदात् असमानार्षत्वेन विवाहप्रसक्तौ गोत्रैक्येन तन्निषेध इत्याधुनिकैरुदाहृतम्, तन्न सुन्दरम्, आङ्गिरसमान्धात्रोर्विकल्पेन भेदेऽपि अम्बरीषयौवनाश्वयोर्द्वयोरभेदेन विवाहाप्रसक्त्या प्रकृतोदाहरणत्वासंभवात्। तथा च प्रवरनिर्णयकाराः स्मरन्ति – 'पञ्चाना त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः। भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्॥' इति। यत्तु समानं आर्षं यस्य तत् समानार्षं, समानार्षं च तत् गोत्रं च समानार्षगोत्रं, समानार्षगोत्रे जाता समानार्षगोत्रजा, न समानार्षगोत्रजा असमानार्षगोत्रजा इति प्राचां समासकरणं, तन्न सुन्दरम्, विशिष्टनिषेधे गोत्रैक्येऽपि प्रवरभेदे विवाहप्रसङ्गात्। यथा तित्तिरिकपिभूम्याद्युक्तोदाहरणे। न चेष्टापत्तिः, 'न सगोत्राय दुहितरं प्रयच्छेत्' इति गौतमेन गोत्रमात्रस्यैव पृथक् निषेधात्।

तत्र गोत्रलक्षणम्— अगस्त्याष्टमसप्तर्ष्यन्यतमापत्यं साक्षात्परम्पराजातं यत् तत् गोत्रमुच्यते। तथा च स्मृतिः —'जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः। वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः। एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते॥' इति। गोत्रकारिणो गोत्रप्रवर्तका इत्यर्थः। यत्प्रवर्तकता एषां तानि कानि गोत्राणि? इत्यत आह— एतेषां यान्यपत्यानीति। अत्र गोत्रभूतमपत्यं अनन्तरमपि, न तु पाणिनेरिव पारिभाषिक पौत्रप्रभृत्येव, तथात्वे प्रमाणाभावात्। न च कृत्रिमाकृत्रिमन्यायस्य अत्र प्रसङ्गोऽस्ति, कृत्रिमपरिभाषायाः तथाविधाया बौधायनाश्वलायनादीना केषांचिददर्शनात्, सत्त्वे वा पाणिनेरिव अपत्याधिकाराभावेन तस्य नियमेनाग्रहणात्। किंच, व्याकरणेऽपि अपत्याधिकारस्य असत्त्वे लौकिकगोत्रस्य अपत्यमात्रस्य ग्रहणमेव युक्तम्, अपत्याधिकारादन्यत्र लौकिकस्यैव गोत्रस्य ग्रहणं इति भाष्यकैयटपदमञ्जर्यादिषु स्थितत्वात्। दृश्यतेऽपि तत्क्वचित्। अत्र गोत्रभूता एव केचित् प्रवराः, ते च ऋष्यार्षेयशब्दवाच्या इति ऋषिभूतं सर्वं तत् इति न

---

* धर्मशास्त्रनिबन्धकृद्भिर्या गोत्रप्रवरगोचरा मीमांसा परिष्कृता तस्यां बहवो मतभेदा व्याख्यानभेदाश्च सन्तीति तत्तन्मूलवचनेषु विच्छिद्य विच्छिद्य समरेण तस्याः सम्यगाकलनं न सम्भवतीति तत्समाकलनार्थं सा अविच्छेदेन प्रथममेव सगृहीता। तथाविधाऽतिविस्तृता च मीमांसा संस्कारप्रकाश-प्रवरदर्पणयोरेवास्तीति तावेवात्र संगृहीतौ।

भ्रमितव्यम्। किंतु वंशपरम्पराप्रसिद्धमेव। यच्च सूत्रादिषु गोत्रपरिगणनं तदपि प्रसिद्धिमूलकमेव। एतदेवाभिप्रेत्य निबन्धेषु गोत्रं ऋषिवंशपरंपरा इति व्याख्यातम्।

अत्र केचित् एवं व्यानक्षते— गोत्रशब्दः संबन्धिशब्द इति किं केषां गोत्रमिति जिज्ञासायां अगस्त्याष्टमसप्तर्षीणां यान्यपत्यानि तेषां गोत्रमेते सप्त ऋषय इति। एवं च भरद्वाजादिषु शिष्टानां गोत्रव्यवहारोऽप्युपपद्यते 'भरद्वाजगोत्रा वयं, वसिष्ठगोत्रा वयम्' इत्यादिः। तन्न, संदर्भविरोधात्। नहि घट इति वक्तव्ये अनघट इति विद्वांसो वदन्ति। तेषां च गोत्रत्वे गोत्राणि अष्टसंख्याकानि स्युः। ततश्च 'गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च।' इति सूत्रविरोधः। कथं तर्हि विश्वामित्रादिषु गोत्रव्यवहारः, आरोपात्। सर्वेषां तेषां गणाना परस्परं विवाहो नास्ति इत्यवान्तरऋषिषु गोत्रत्वविवक्षायां प्रयोजनाभावात्। यत्र तु प्रयोजनमस्ति (तत्रावान्तर)ऋषिष्वेव गोत्रविवक्षा, यथा जमदग्निव्यतिरिक्तभृगुगणेषु केवलाङ्गिरोगणेषु च केषुचित्। अन्यथा तत्र गोत्रप्रवरसाम्याभावात् विवाहः प्रसज्येत। तस्मात् अगस्त्याष्टमसप्तर्ष्यपत्यमेव गोत्रम्।

तत् केषाम्? इति जिज्ञासायां केचिदेवमाहुः—पूर्वेषां परेषां चेति, तेषामुत्पादकत्वेनोत्पाद्यत्वेन चोपस्थितत्वात्। एवं च 'वत्सगोत्रा वयम्' इत्यादिव्यवहारो बहुव्रीहिणा भविष्यति। वत्सादिषु तु जमदग्निगोत्रा इत्यादिव्यवहारः षष्ठीतत्पुरुषेण। गोत्रशब्दः पुंलिङ्गोऽपि—इति, तदसत्, जमदग्निगोत्रा इत्यत्र गोत्रपदस्य सप्तर्ष्यपत्ये शक्तत्वेन प्रतिसंबन्ध्यपेक्षायां(याः) सप्तर्षिभिरेव शान्तत्वात् जमदग्नेस्तत्र प्रतिसंबन्धित्वेन अन्वयायोगात्, गोत्रशब्दे पुंलिङ्गस्य अनुशासनाभावाच्च। कथं तर्हि जमदग्निगोत्रत्वादिव्यवहारो वत्सादिषु? इदानींतनेष्विव बहुव्रीहिणा भविष्यति। अनादौ हि संसारे जमदग्नेरपि पूर्वपूर्वजमदग्न्यपत्यत्वम्। तथा च जमदग्निर्गोत्रं सप्तर्ष्यपत्यं जनकतया येषां इति व्युत्पत्त्या वत्सादिष्वपि जमदग्निगोत्रसंबन्धो निर्बाधः। तस्मात् अगस्त्याष्टमसप्तर्ष्यपत्यं तदपत्यभूतानां परेषामेव गोत्रम्।

तथापि जमदग्न्यपत्यव्यतिरिक्तभृगुगणेषु केवलाङ्गिरोगणेषु च कथं गोत्रव्यवहारः, तेषां अगस्त्याष्टमसप्तर्ष्यपत्यत्वाभावात्। किञ्च 'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तेते। तावत्समानगोत्रत्वम्' इत्युक्तेः एक एव अगस्त्याष्टमसप्तर्ष्यन्यतम एव तिसृभिः कोटिसंख्याभिः संख्यातानां वक्ष्यमाणानां गोत्राणां मध्ये यावत्संख्याकाना गोत्राणां एकद्वित्रिपञ्चसंख्यान्यतमसंख्याकेषु प्रवरेषु अनुवर्तते, तावतां गोत्राणां तत्समानगोत्रत्वम्। तत्र 'अन्यत्र भृग्वङ्गिरसां गणात्' इति पर्युदासः श्रूयते, स कथं स्यात्? तेषु गोत्रसामान्याभावे तद्वार्यस्य समानगोत्रत्वस्य सुतरामप्रसक्तेः। न च— अयं पर्युदासो जामदग्न्यभृगुगणगौतमभरद्वाजाङ्गिरोगणविषय एव स्यात्, सप्तर्ष्यपत्यत्वेन तेषां गोत्रत्वसंभवात्। समानगोत्रता चास्ति अन्यगोत्रवत् एकमात्रप्रवरानुवृत्त्याऽपि नियमाणतया वा—इति वाच्यम्। एवं हि तत्र प्रक्रियाऽस्ति— त्रिपञ्चार्षेयाणां द्वित्रिप्रवरसाम्ये एव समानगोत्रत्वम्। एवं सति क्वचित् द्वित्रिप्रवरसाम्याभावेन समानगोत्रत्वाभावे प्रवरसाम्यमेव अविवाहप्रयोजकमङ्गीकर्तव्यम्। प्रवराणामपि त्रिपञ्चार्षेयाणां द्वित्रिसंख्यानामेव साम्यं तथा वाच्यं, न तु इतरवदेकमात्रस्यापि, 'पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः। भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्॥' इति वचनात्। एवं च आपस्तम्बादिसूत्रानुरोधात् केषुचित् त्र्यार्षेयेषु जमदग्निगणेषु, पञ्चार्षेयेषु गौतमभरद्वाजगणेषु केषुचित् भृग्वङ्गिरोगणेषु द्वित्रिप्रवरसाम्याभावात् सगोत्रत्वसप्रवरत्वयोर्द्वयोरप्यभावात् विवाहप्रसङ्गः। अस्तु इति चेत् न, गौतमानां सर्वेषां, भरद्वाजानां सर्वेषां वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाह इति बौधायनेन निषिद्धत्वात्। तस्मात् तेषु सगोत्रत्वादेव अविवाहः। स्मृत्यर्थसारादिभिरप्येवमेवोक्तम्। तस्मात् 'अन्यत्र भृग्वङ्गिरसाम्' इति पर्युदासो जामदग्न्यगौतमभरद्वाजभृग्वङ्गिरोगणविषय इति (अङ्गीकारेऽपि) पूर्वोक्तानुपपत्तिस्तदवस्थैव।

अत्र आश्वलायनसूत्रवृत्तिकाराः समादधुः— जमदग्निगौतमभरद्वाजानां भृग्वङ्गिरोगणानां पूर्वापरीभूतगोत्रमध्यपाठात् गोत्रत्वात् तत्साहचर्यात् आसन्नत्वेन विवेकाग्रहात्

तद्भिन्नानामपि तद्गणानां गोत्रत्वभ्रान्तिर्भवति । तथैव च 'मित्रयुगोत्रा वयं, मुद्गलगोत्रा वयम्' इत्येवमादिप्रयोगोऽपि भवति । एवंविधभ्रान्तिरूपां प्रसक्तिमादाय अयं पर्युदासः, यथा श्राद्धे कुण्डगोलकादीनां प्रतिषेधः ।

स्मृतिचन्द्रिकाया तु गोत्रशब्दः प्रवरपरतया व्याख्यातः । युक्ता च प्रवरलक्षणा गोत्रशब्दे, प्रवरभूतानामृषीणां गोत्रापत्यत्वात् । दृष्टा च, 'यावन्तोऽनन्तर्हिताः समानगोत्रास्तावता सकृत्' इत्याश्वलायनसूत्रे समानगोत्राः समानप्रवरा इति व्याख्यानात् । युक्तं चैतत् व्याख्यानम्, प्रवराणां पूर्वमुपक्रमेण तत्साम्यस्यैवावगमात्, गोत्रलक्षणस्य तु अन्तेऽभिधास्यमानत्वात्, अग्रे च 'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्' इत्यादिना समानप्रवरत्वविषयतयैव पर्युदासाभिप्रायप्रकाशनात् । अत्र पक्षे 'एक एव' इत्यत्र न अगस्त्याष्टमसप्तर्ष्यन्यतमस्यैव ग्रहणं, किंतु प्रवरऋषिमात्रस्य । 'श्रियमाणतया वाऽपि' इत्यभियुक्तगोत्रलक्षणे तु तस्यैवेति गमयितव्यम् । अग्रे चेदं स्पष्टयिष्यते । यत्तु– न पर्युदासस्य प्राप्त्यपेक्षा यथा प्रतिषेधस्य । अन्यथा 'यजतिषु येयजामहं करोति नानुयाजेषु' इत्यादौ पर्युदासेऽपि विकल्पः प्राप्नोति । तन्निवृत्तये 'नार्षेयं वृणीते' 'नानुयाजेषु' इत्यादिषु पर्युदासे लक्षणाङ्गीकारो न स्यात्– इति, तन्न मनोरमम् । निषेधे प्रापकस्य निवर्तकस्य च वाक्यस्य भेदात् अनुवादार्थं वाक्यान्तरकृता निश्चयरूपा प्राप्तिर्यथाऽपेक्षिता न तथा पर्युदासे इति यद्यपि, तथापि यदीदं विशेषणं न स्यात् तदा प्राप्नुयादिति सम्भावनारूपा प्राप्तिर्वाच्यैव । न च तादृश्यप्यत्र प्राप्तिरस्ति ।

*अत्र गोत्राणां समानत्वं क्वचिदेकत्वं क्वचित्सादृश्यम् ।* तत्राद्यं एकैकगणान्तःपातिनां गोत्राणाम् । यथा मूलभूतस्य वत्सादेः प्रसिद्धस्य गोत्रस्यैकत्वम् । गणान्तरऋषीणामपि यत्र गोत्रत्वं तत्रापि, तेषां स्वपरम्परा प्रति एकत्वमप्रतिहतमेव । द्वितीयं तु गोत्ररूपाणामृषीणां भिन्नभिन्नगणनिविष्टानां तन्मूलभूतानामवान्तराणां वा । तदपि *अगस्त्याष्टमसप्तर्ष्यन्यतमैकऋषेरपत्यत्वरूपयाऽनुवृत्त्या ।* तदनुवृत्तिज्ञानं च बहुधा प्रवरान्तर्भावादेव । सूत्रादिगतानुक्रमणेषु तु क्वचित् तथाविधपूर्वापरीभूतगोत्रपाठान्तर्भावात् । तथा चोक्तम्–'श्रियमाणतया वाऽपि सत्तया वाऽनुवर्तनम् । एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥' इति । तद्गोत्रं तस्य ऋषेरपत्यं कथ्यते इति । *तेन रूपेण तेषां गोत्राणां समानत्वमित्यर्थः ।* 'सत्तया' इति वदता 'श्रियमाणतया' इत्यस्य बौधायनोक्तिन्मूलभूते 'एक एव ऋषिः' इति लक्षणे 'प्रवरेषु' इत्यस्य च उपलक्षणत्वेन यथा कथञ्चिदेकस्यानुवर्तनं सूचितं भवति । उत्पाद्योत्पादकभावः सत्ता, 'भू सत्तायां' इति स्मृतेः । क्वचित्तु स्वतयेति पाठः । तत्रापि यमधिकृत्य ये पठिताः ते तस्य स्वे आत्मीया इति अक्षरानुसारेण *तत्रैव पर्यवस्यति । एतदुक्तं भवति*— यथा पारिभाषिकं गोत्रं, तथा समानगोत्रत्वमपि, इतरथा तस्यानिर्वचनात् । तथाहि– यदि समानं गोत्रं येषां इति व्युत्पत्तिस्तदा येषु गोत्रभूतस्य वत्सादेरनुवृत्तिः तेषामेव वात्स्यमार्कण्डेयादीनां स्वे स्वे गणे प्रत्येकमन्योन्यं वा सगोत्रता स्यात्, न तु परस्परं वत्सविदयोः । न च क्वचिदेकगोत्रत्वं क्वचित्सदृशगोत्रत्वं समानगोत्रत्वमिति अननुगम इति वाच्यम् । *अगस्त्याष्टमसप्तर्ष्यन्यतमापत्यरूपऋषिगोत्रकत्वस्य अनुगतत्वात् ।*

ननु सूतकादौ एकगोत्रत्वेनैव शिष्टानां समानगोत्रत्वव्यवहारादत्रापि तदेवास्तु । न चैवं भिन्नभिन्नगणनिविष्टानामेकगोत्राभावेन समानगोत्रत्वाभावात् परस्परं विवाहः प्रसज्येत । एकैकगणनिविष्टानामपि सप्तर्ष्यपत्यभिन्नभृग्वङ्गिरोगणानां गणप्रवर्तकस्य ऋषेरगस्त्याष्टमसप्तर्ष्यपत्याद्यत्वेन गोत्रत्वाभावात् सगोत्रत्वाभावेऽपि *समानप्रवरत्वादेव परस्पर यथा अविवाहः, तथा अत्रापि* भविष्यति ।

अत्र वदन्ति– यत्र न गोत्रैक्यं, न वा प्रवरैक्यं, तथाविधान्यपि कानिचित् गोत्राणि सन्ति । यथा भरद्वाजगणेषु, केषुचित् च विश्वामित्रगणेषु । नच तत्र विवाहः । तदर्थं सदृशगोत्रत्वमपि समानगोत्रत्वं वाच्यम् । अन्यथा *तत्र विवाहः स्यात् । न च तत्र समानप्रवरत्वादेव न* भविष्यति, यतः सर्वैर्विश्वामित्रस्य सर्वेषु विश्वामित्रगणेषु भरद्वाजस्य च कपिष्ठलव्यतिरिक्तभरद्वाजगणेषु च श्रियमाणतया त्र्यादिप्रवरसंख्यापूरकतया च प्रवरत्वस्यापि

आवश्यकत्वादिति वाच्यम् । ' एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वम् ' इति समानगोत्रत्वलक्षणं बौधायनेन कृतम् । तच्च अगस्त्याष्टमसप्तर्षीनधिकृत्य । तत्प्रयोजनं च अगस्त्याष्टमसप्तर्ष्यनुवृत्तिरत्र यथा स्यात् इति समानगोत्रलक्षणस्य एतद्घटितत्वेनाभिधानात् समानप्रवरलक्षणे अगस्त्याष्टमसप्तर्षिभिन्नतदपत्यरूपऋषेरेव व्रियमाणत्वेन अनुवृत्तिरवगम्यते । तथा च अविवाहहेतुत्वेन ऋषिभिः निचन्द्भिर्वा गोत्रेण संकीर्णमसंकीर्णं वा समानप्रवरत्वं तत्रैवोच्यते यत्रैकादिसंख्यस्य अगस्त्याष्टमसप्तर्ष्यतिरिक्तऋषेरेव व्रियमाणत्वेन अनुवृत्तिर्दृश्यते । एतदभिप्रायेणैव यद्यपि विश्वामित्रगणमध्ये सर्वत्र विश्वामित्रानुवृत्तिरस्ति तथापि तेष्वेव केषुचिद्गणेषु आश्वलायनसूत्रे माधुच्छन्दसप्रवरानुवृत्तिदर्शनात् क्वचिदेव प्रवरैक्यं अविवाहकारणत्वेन स्मृत्यर्थसारे उक्तम् । ननु महर्षेर्यत्र सत्तयैवानुवृत्तिः तत्र तस्य न प्रवरत्वमिति स्वापत्यभूतेषु तस्य अविवाहप्रयोजकता गोत्रनिमित्तैव, यत्र पुनर्व्रियमाणत्वं तत्र प्रवरनिमित्तैवेति चेत् मैवम् । यद्यपि महर्षेस्तत्र प्रवरत्वं नास्ति तथापि तदपत्यानां अवान्तरऋषीणां व्रियमाणत्वेन प्रवरत्वाङ्गीकारात् तत्र तदभेदादेव अविवाहस्य निष्पत्तेः तत्स्थले सगोत्रताया अविवाहनिमित्ततैव न स्यात् । न च महर्षेः सत्तयाऽनुवृत्तावपि न व्रियमाणत्वं इत्येवंविधो विषयः कश्चिदस्ति । किंच महर्षेः सत्तामात्रानुवृत्त्या सगोत्रत्वे उच्यमाने भिन्नगणान्तःपातिभिः तस्य विवाहः प्रसज्येत । तस्य सत्तयाऽपि तत्रानुवृत्त्यभावेन गोत्रसाम्याभावात् । अतः सदृशगोत्रत्वं सगोत्रत्वमत्रस्य वाच्यमेव । तदयं निर्गलितोऽर्थः– यत्र महर्षिर्व्रियमाणः तत्र तस्य वरणेनानुवृत्त्या प्रवरत्वात् प्रवरसाम्यापेक्षया स्वापत्यभूतेषु ऋषिषु तदितरि साम्यस्योपस्थितत्वात् अविवाहनिमित्तं सगोत्रत्वमेव, सप्तर्षिभिन्नस्य वरणानुवृत्तौ प्रवरत्वमपि इति ।

एवं गोत्रस्वरूपं समानगोत्रत्वं च निरूपितम् । इदानीं प्रवरस्वरूपं तत्समानत्वं च निरूप्यते । तत्र ' प्रवरान् व्याख्यास्यामः ' ' समानप्रवरः ' ' एकार्षेयः प्रवरः ' ' पञ्चार्षेयः प्रवरः ' इत्यादिषु प्रवरशब्दः प्रयुज्यते इति धर्मप्रदीपः, प्रवरणं प्रवर इति भावव्युत्पत्तिः इति । भार्गवच्यावनाप्नवानौर्वजामदग्न्येति जमदग्निवत् ऊर्ववत् अप्नवानवत् च्यवनवत् भृगुवत् इति तद्धितवतिप्रत्ययान्तप्रयोगेण अग्नेः प्रकर्षेण वरणानि । प्रार्थनापर्यायः प्रवरशब्दो भावव्युत्पन्न इति प्रवरमञ्जरीकारः ।

ननु– गोत्रत्वेन परिगणिताः केचिदृषय एव गोत्रसंबन्धिनः पितृपुत्रपौत्रक्रमेणावस्थिताः प्रवराः, तथैव दर्शपूर्णमासाङ्गभूतहोत्रध्वर्य्वादिवरणविधानात् लिङ्गादवसीयते । तथा मत्स्यपुराणेऽपि ' भृगुः पुलोम्नश्च सुतां दिव्यां भार्यामविन्दत । यस्यामस्मात्ततोऽपत्यभूता द्वादश देवताः ।। पौलोम्यजनयद्विप्रान् देवानां तु कनीयसः । च्यवनं तु महाभागमप्नवानं तथाऽर्ष्टिषी ।। आप्नवानात्मजश्चैव जमदग्निस्तदात्मजः ।। ' इति तदपत्यभूता ऋषय इत्युक्तम् । ' तद्गोत्रप्रवरान् वक्ष्ये ' इत्युपक्रम्य च्यवनादीनुक्त्वा ' इत्येते प्रवरा मताः ' इत्युपसंहृतम् । तथा विष्णुपुराणेऽपि पुरुवंशानुकीर्तने दुष्यन्तात् चक्रवर्ती भरतो नाम बभूव इत्युपक्रम्य यन्नामानो यत्क्रमका यावन्तश्च भरद्वाजानां प्रवरर्षयः प्रवरसमाम्नाये श्रुताः तन्नामानस्तत्क्रमकास्तावन्तश्च पराशरेणोपदिष्टा वंशानुपूर्व्या– तत्र प्रथमोऽङ्गिरास्ततो बृहस्पतिः ततो भरद्वाजस्तत आमहय्यस्तत उरुक्षयस्ततः कपिरुत्पन्न इति । तस्मात् गोत्रीभूतानामेव वंश्याः केचिदृषयः प्रवराः कर्मकरणत्वेनोक्ता इति चेत्– सत्यं उक्ताः, परं तु विशेषणविधया, न विशेष्यतया । तथाहि –होत्रा पूर्वं ' अग्ने महाँ असि ब्राह्मण भारत ' इत्युक्त्वा यजमानार्षेयवरणं भार्गवच्यावनादिशब्दसहितं क्रियते । पश्चात् ' देवेद्धो मन्विद्धः ' इत्यादीनि निवित्पदानि प्रयुज्यन्ते । तत्र च अग्निरेव पूर्वोत्तरपदैः प्रशस्यते । तन्मध्यवर्तिभिर्भार्गवादिपदैरपि संबुद्ध्यन्तैः अग्निरेवावश्यं वक्तव्यः पूर्वोत्तरपदान्वयार्थम् । कथमित्यपेक्षायां भार्गवादिना यजमानेनोत्पादितत्वात् तत्सादृश्याद्वा उपचारात् तैः पदैः स्तूयते । तस्य चैतत्प्रयोजनं, यथा देवानुद्दिश्य भार्गवादिभिः त्वयि प्रक्षिप्तं हविः त्वया हव्यवाहनाम्ना देवानामुह्यते, स्वीक्रियते च तत् देवैः, तथा तदपत्यभूतेन मोग्यानेन तत्र चोत्पादकत्वेन मातृनिरूपेण अत एव त्वयि प्रक्षेप्यमाणेनानेनापि यजमानेन प्रक्षिप्तं त्वयि

हविस्त्वया देवेभ्यो वोढव्यं तैश्चाङ्गीकर्तव्यमित्येवं होत्रा आहवनीयोऽग्निः प्रव्रियते प्रार्थ्यते । एवमध्वर्युप्रवरेऽपि स एव आहवनीयोऽग्निः प्रव्रियते । एवं चात्र अग्निरेव प्रार्थनारूपवरणविशेष्यः, ऋषयस्तु तत्र विशेषणभूता एव ।

अध्वर्युप्रवरमन्त्रश्च 'अग्निर्देवो (दैव्यो) होता देवान् यक्षद्विद्वाश्चिकित्वन्मनुष्वद्भरतवत्' इत्येतदनन्तरं यथायोग्यं प्रवरानुक्त्वा 'ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितारः' इत्युक्त्वा यथायोग्यं 'अमुकशर्मा मानुषः' इति । अस्यार्थः— भो अस्य यज्ञस्य प्रावितारो ब्रह्मप्रभृतयो ब्राह्मणाः, यथा अग्निः देवसंबन्धी होता चिकितमनुभरतानामेतद्यजमानपूर्वजानां जमदग्न्यादीनां ब्रह्मणश्च देवता यजमानाश्चाधिकारिणो विद्वान् देवान् इन्द्रादीन् यक्षत् (आवक्षत्) च, तथा अमुकशर्मा अयं मानुषोऽपि होता तदपत्यत्वेन तत्कुलस्य यजमानस्यापि यज्ञे देवहोत्रग्न्यधिष्ठानबलेनैव विद्वान् यजतु आवहतु चेति मानुषहोत्रधिष्ठितोऽग्निरेव अनेन प्रकारेण प्रार्थ्यते । अत एव आवाहनमन्त्रे होताऽग्नेरेव आवाहने सत्कारं करोति । तथा चात्राप्यग्नेरेव प्राधान्येन वरणम् ।

ननु— एवं बहुसूत्रविरोधः प्रसज्यते । तथाहि—'इत एवोर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता वृणीते' इत्यापस्तम्बः । 'अथातोऽत ऊर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाचो होतेत्येष एवोभयोः सर्वत्रोद्देशः' इति बौधायनोक्तेः । अस्यार्थः— पुत्रः पिता पितामहः प्रपितामह इत्युत्पाद्योत्पादकतयाऽवस्थितेषु प्रवरसंकीर्तने इयन्त एव कीर्तनीया इति नियमाय । तत्र क्रमविशेष उच्यते— इतः प्रत्यक्षाद्यजमानात् ऊर्ध्वान् आरोहेणावस्थितान् जमदग्निवत् ऊर्ववत् अप्नवानवत् च्यवनवत् भृगुवत् इत्येवमध्वर्युर्वृणीते । होता तु अदसो विप्रकृष्टार्थत्वात् अमुतः यजमानविप्रकृष्टात् भृग्वादितः प्रभृति अर्वाञ्चः अवरोहेण भार्गव च्यावनाप्नवानौर्व जामदग्न्य इत्येव वृणीत इति । तत्रापि 'होता तद्धितपदामन्त्रितश्च' इति कात्यायनसूत्रात् तद्धितान्तसमुदायन्तेन होतुर्वरणम् । अध्वर्योस्तु वत्यन्तेनेति । न च और्ववदित्यादिर्मतुपो निर्देशः । तथात्वे जमदग्निवत् इत्यादौ इकारान्ते मीहिमदितिवत् वादेशो न स्यात्, मवर्णावर्णान्तान्मवर्णावर्णोपधादेव (धात्रा) 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति वादेशस्य विधानात् । एवं भृगुवदित्यादावपि । अत्र सर्वत्र मन्त्रद्वयमेव एकद्वित्रिप्रवरसंख्यानामृषीणां वरणकर्मता प्रतीयते, तेषां द्वितीयानिर्दिष्टत्वात् । नाग्नेराहवनीयस्य । 'अग्निर्देवो दैव्यो होता देवान् यक्षत्' इत्यत्रापि होतुरेव वरणकर्मता प्रतीयते, नाग्नेः । किंच यद्यपि प्रवरपदाना पूर्वोत्तरपदैकवाक्यतया स्वसामर्थ्येन च अग्न्यभिधायित्वं प्रतीयते, तथापि 'यजमानस्यार्षेयान् वृणीते' इत्युक्त्वा 'मन्त्रकृतो वृणीते यस्य यावन्तः स्युः' इति श्रुतौ स्वार्थे तद्धितमङ्गीकृत्य 'गोत्रभूतऋषेरिमे आर्षेयाः' इति व्युत्पत्त्या सतर्ष्यपत्यत्वेन वा ऋषीणामेव वरणकर्मत्वं श्रुतितः प्रतीयते । तदनुरोधेन प्रवरपदानामपि तत्परत्वमेव कथंचित् कल्प्यम्— इति चेत्, अत्र प्रवरमञ्जरीकारः— सर्वैः सूत्रकारैः 'वृणीते' इत्युक्त्वा केन प्रकारेण इति प्रकारचिन्तायां अग्निप्रकाशकमन्त्रमध्ये तद्धितवत्प्रत्ययान्ततया तत्प्रकार उक्तः । न च तत्र ऋषीणां प्रवरकर्मत्वं प्राधान्येनावगम्यते, किंतु गुणभावेन, अग्न्यलन्त्यादरयनिरूपकत्वात्, पूर्वोत्तरपदैकवाक्यत्वस्यावश्यम्भावाच्च । अग्निप्रकाशनार्थसामिधेनीमन्त्रलिङ्गात्, प्रवरविधायकब्राह्मणेभ्यश्चायमर्थोऽवगम्यते । तत्र 'अग्निं दूतं वृणीमहे' 'वृणीध्वं हव्यवाहनम्' इत्यादिभिर्मन्त्रलिङ्गैराहवनीयस्याग्नेर्वरणकर्मत्वमुच्यते, द्वितीयानिर्देशात् । तथा दर्शपूर्णमासयोः प्रवरविधिपरं तैत्तिरीयब्राह्मणम् 'वृणीध्वं हव्यवाहनम्' इत्यस्य एतमेवार्थमाह—'त्रयो वाऽग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणां त एतर्ह्याशंसन्ते मां वरिष्यते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीत आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्यै' इति । अत्राप्याहवनीयाग्नेरेव वरणकर्म, देवानां यो हव्यवाहनस्तमार्षेयमिति द्वितीयानिर्देशात् । वाजसनेयिब्राह्मणमप्येतमर्थमाह— 'अथाऽऽर्षेयं वृणीत ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापत्' इति । अस्यार्थो मञ्जर्यामुक्तः— 'आर्षेयः ऋष्यपत्यमाहवनीयमग्निः, यजमानेनोत्पादितत्वात् यजमानस्य च ऋषिसंतानत्वात् तं वृणीते । किमर्थमित्यादाद्भूय प्रो-

जनमाह– ‘ ऋषिभ्यश्चैनं यजमानं देवेभ्यश्च निवेदय-त्ययं महावीर्यो ब्राह्मणो यज्ञं प्रापदिति । यस्मादेवं सप्रयोजनः प्रवरस्तस्मादार्षेयं प्रवृणीते ’ इति । तस्मात् तदविरोधाय सूत्रकारवचनानि किंचिदध्याहृत्य व्याख्येयानि । तथाहि– इतो यजमानादूर्ध्वान् यजमानस्यार्षेयान् संकीर्त्य यजमानद्वारा तदपत्यत्वादेव तत्सादृश्येन हे अग्ने त्वं भृगुवदसीति वृणीते । तथा ‘ अमुतोऽर्वाचो होता ’ इत्यत्रापि तानेव संकीर्त्य यजमानद्वारा तदपत्यत्वादाहवनीयमेव योग्यत्वात् वृणीते प्रार्थयते–भार्गव भृगोरपत्य देवेभ्यो हव्यं वह इति । ननु– ‘ ऐन्द्या गार्हपत्यमुपतिष्ठते ’ इत्यनेन ‘कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे’ इत्येषा ऋक् ऐन्द्री गार्हपत्योपस्थाने विनियुक्ता । तत्र इन्द्रपदेन गौण्या वृत्त्या गार्हपत्यप्रकाशनं क्रियते । न च मन्त्रे यथा वृत्त्यन्तरं कल्प्यते तथा गार्हपत्यमिति द्वितीयाश्रुतेर्लक्षणयाऽधिकरणपरत्वेन गार्हपत्यसमीपे इन्द्रमुपतिष्ठते इति किं न स्यात्– इति वाच्यम् । मन्त्रब्राह्मणयोर्विरोधे मन्त्र एव ब्राह्मणप्रापितार्थप्रकाशके तदधीनप्रामाण्ये च वृत्त्यन्तरं कल्पनीयं, न ब्राह्मणे, इति ऐन्द्यधिकरणे सिद्धान्तितम् । तदाहुराचार्याः– ‘ गौणत्वं नाम यत्रे स्यान्मन्त्रब्राह्मणयोः क्वचित् । तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥ ’ इति । तन्न्यायेन विध्यनुरोधात् मन्त्रस्यैवान्यथात्वमुचितं, न तु मन्त्रानुरोधेन विधिवाक्यस्य– इति चेत्, सत्यमेतत्, तथापि भार्गवादिपदानां तद्धितप्रत्ययान्तानां अग्निप्रकाशकमन्त्रमध्यपतितानां ऋषिप्रधानत्वं न कथंचित्संभवतीति ‘ आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ’ इति न्यायेन विधेरेवान्यथात्वमाश्रयणीयम् । एतदेवाभिप्रेत्य प्रवराणामाहवनीयसंस्कारत्वं, प्रवरावृत्तिकारणत्वे यजमानाना प्रतिगोत्रं प्रवरा आवर्तेरन् । कुतः, आवापधर्मित्वात् । उप्यन्ते इत्यावापा आहवनीयाः, ‘ अग्निं समावपेयुः ’ इति वचनात् । अथवा उप्यन्ते हवींषि येषु इत्यावापा आहवनीयाः, तेषां आहवनीयानामावापाना प्रवरान्प्रति धर्मित्वात् । तेषां चाहवनीयधर्माणा प्रवराणा प्रतिप्रधानमावृत्तिर्युक्ता, प्रधानवशवर्तित्वादङ्गानाम् । अथवा मास्तु अध्याहारः । प्रार्थनात्मकवरणं प्रति ऋषीणामग्निविशेषणत्वेन अनीप्सितकर्मत्वम् । एवं च ऋषिपरप्रवरपदप्रयोगोऽपि उपपन्न इत्यग्नेरेवेप्सितकर्मत्वम् ‘ ऊर्ध्वमासीनं होतारम् ’ इत्यत्रापि होतृशब्देनाग्निरेवाभिप्रेतः, न ऋत्विग्विशेषः । ‘ अग्निर्देवो होता ’ इत्यादिषु होतृशब्दस्य अग्निपरत्वं ब्राह्मणेन विवृतम् । तस्मात् अग्नेरेव प्रार्थनं संकीर्तनं कथंचिदपि संबन्धेन प्रवरा इति कर्तृभेदेन तेष्वेव क्रमविशेषे नियमः ‘ इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाचो होता ’ इति । शब्दप्रयोगप्रकारनियमोऽपि जमदग्निवत् ऊर्ववत् इत्यादिः, ‘ भार्गव च्यावन ’ इत्यादिः ।

ननु – एतावता प्रबन्धेन यत्र आहवनीयोऽस्ति दर्शपूर्णमासादौ तदङ्गभूत एव वरणे तद्धितान्तत्वेन वत्यन्तत्वेन च होत्रध्वर्य्वोः प्रवरोच्चारणं नियतं स्यात्, न कन्यादानऋत्विग्वरणादौ, तत्र आहवनीयाभावात् । शिष्टास्तु होतृवदेव संकीर्तयन्ति, तत् कथमुपपद्यते– इति चेत् । अत्र केचित्– द्वितीयाध्यायारम्भे बौधायनेन ‘ अथातः ( उद्देशः ? ) ’ इत्युक्त्वा ‘ अत ऊर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाचो होता ’ इति दर्शपूर्णमासयोर्वरणे क्रमविशेषमुक्त्वा ‘ एष एव सर्वत्रोद्देशः ’ इति सूत्रमुक्तम् । तत्र प्रवरसकीर्तनं विहितं क्रमविशेषश्च नोक्तः कन्यादानऋत्विग्वरणादौ, तत्रापेक्षितत्वात् स विधिः प्रवर्तते इत्युच्यते । तत्रापि होतृक्रमं विधत्ते अनन्तरं, नाध्वर्युक्रमं व्यवहितम् । तथा च आहवनीयाभावेऽपि ‘भार्गवच्यावनाप्नवानौर्वजामदग्न्येतिपञ्चप्रवरः पञ्चप्रवराय कन्यां सम्प्रददे ’ इत्यादौ पञ्च प्रवरा यस्य इति बहुव्रीहिणा पञ्चप्रवरतया कीर्तनीयाहवनीययोग्यत्वात् तत्संबन्धी तद्वान् वरादिः अभिधीयते इति होतृप्रत्ययसिद्धिः । प्रवरमञ्जर्यां तु इदं सूत्रमेवं व्याख्यातम्– एष एव क्रमविशेषो होतुरध्वर्योश्च आ अध्यायपरिसमाप्तेः सर्वत्रोपदेष्टव्य इति । अत्र केचित्– पूर्वे ‘ अत ऊर्ध्वान् ’ इति सामान्येनोपदेशात्प्रत्यध्यायं च अग्रे ‘भृगूणामादितो व्याख्यास्यामः’ इत्याद्युपक्रम्य ‘ मार्कण्डेया माण्डव्याः ’ इत्यादिना तत्तत्संख्याकं गणमुक्त्वा ‘ इत्येते विदाः, तेषां पञ्चार्षेयः प्रवरो भवति, भार्गव च्यावनाप्नवानौर्व जामदग्न्येति होता, विदवत् ऊर्ववत् अप्नवानवत् च्यवनवत् भृगुवत् इत्यध्वर्युः ’ इत्येवंजातीयकसंदर्भवद्भिः सूत्रखण्ड-

शेषविशेषतोऽपि क्रमविशेषविशिष्टप्रवरवरणस्य उपदेक्ष्यमाणत्वात् 'एष एव सर्वत्रोद्देशः' इत्यस्य अनुवादमात्रतया प्रवृत्तिविशेषकरत्वाभावात् आनर्थक्यापत्तिः । तस्मात् सुष्ठु उक्तं यत्र यत्र प्रवरकीर्तनं स्मृतितः प्राप्तं तत्र तत्र हौतृप्रत्ययतासिद्ध्यै प्रवृत्तमिदं सूत्रम् । परिभाषारूपत्वाच्च न प्रकरणेन नियम्यते । यथा 'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्णते ।' इति श्राद्धप्रकरणाधीतमपीति ।

ते च प्रवरा द्विविधाः, समाना असमानाश्च । तत्र समानत्वं नाम एकद्व्यादिसंख्यैकऋषिसंबन्धित्वम् । यथा — सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डूकमाण्डूक–माण्डव्य–प्राचीनयोग्य–मार्कण्डेयादिगोत्रभेदानां भार्गवच्यावनाप्नवानौर्वजामदग्न्यानाम् । असमानास्तु नामसंख्याक्रमाणामन्यतमेनैकेन द्वाभ्यां त्रिभिर्वा भिन्नाः । तत्रापि अगस्त्याष्टमसप्तर्ष्यन्यतमैकऋषिसंबन्धादेव यथा गोत्राणां समानत्वं न तथा प्रवराणां, किंतु तदन्यैकऋषिसम्बन्धादपि । ततश्च जामदग्न्यभिन्नभृगुगणेषु केवलाङ्गिरोगणेषु च समानप्रवरत्वं भवति, तेषामगस्त्याष्टमसप्तर्ष्यपत्यबाह्यत्वात् । इदं चैतेषु एकप्रवरसाम्ये न प्रवरसाम्यं, किंतु एकगणस्थेषु सर्वप्रवरसाम्यादेव । भिन्नभिन्नगणस्थेषु तु पञ्चप्रवरेषु प्रवरत्रयसाम्येन, त्रिप्रवरेषु प्रवरद्वयसाम्येन । अत एव ये सप्तर्ष्यपत्यबाह्या वीतहव्यशुनकवाध्यश्ववैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धाः तद्विषयं सूत्रत्रयं बौधायनेनोक्तम्—'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत् समानार्षेया बहवः स्युरिति' 'द्व्यार्षेयसंनिपातेऽविवाहस्त्र्यार्षेयाणाम्' 'त्र्यार्षेयसनिपातेऽविवाहः पञ्चार्षेयाणाम्' इति । तत्र आद्यं सूत्रं मञ्जरीकृता द्वेधा व्याख्यातम् । एकं तावत्— एतेषु परिगणितेषु गोत्रेषु भृगवोऽङ्गिरसश्च जमदग्निगौतमभरद्वाजव्यतिरिक्ता वीतहव्यशुनकमित्रयुवैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धादयो भृगुत्वेनाऽऽङ्गिरसत्वेन च अभिन्ना अपि सन्तो भिन्नविवाहं कुर्वते । भिन्नवत् विवाहो भिन्नविवाहः, भिन्नश्चासौ विवाहश्चेति वा भिन्नविवाहः । यथा अगस्त्याष्टमसप्तर्षिगोत्राः परस्परं भिन्नगोत्रीयाः स्वसमानगोत्रमेव हित्वा भिन्नगोत्रैः सह विवाहं कुर्वते, एवं भृग्वङ्गिरसोऽपीत्यर्थः । अपरः प्रकारः— अभिन्नमिति छेदः । भृगवः भृगुत्वेनाभिन्ना अपि स्वं स्वं गणं त्यक्त्वा गणान्तरीयैर्भृगुभिरेवाभिन्नविवाहं कुर्वते । अभिन्नाना विवाहः अभिन्नविवाहः । एवमङ्गिरसोऽपि । तत्र भृग्वङ्गिरसोः सप्तर्षिबाह्यत्वेन तत्पक्षीयाणां गोत्रत्वाभावेन समानगोत्रत्वाभावात् मिथो विवाहे नास्ति दोषः, असमानप्रवरत्वादसमानगोत्रत्वाच्च । अस्यापवादः— न चेत् समानार्षेया बहवः स्युरिति । विदार्ष्टिषेणानां पञ्चानां ( पञ्चार्षेयाणां ) ऋषित्रयसाम्यं समानर्षिबहुत्वम् । त्र्यार्षेयाणां हरितकुत्सानां ऋषिद्वयसाम्यं समानार्षिबहुत्वम् । तदुभयं येषां नास्ति भृग्वङ्गिरसां ते परस्परं विवाहं कुर्वते कुर्युरित्यर्थः । संग्रहेऽप्युक्तम् 'पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥' इति । इदं च जमदग्निगौतमभरद्वाजरूपेष्वपि भृग्वङ्गिरोगणेषु समानप्रवरत्वे समानम् । अत एव तेषु अविवाहप्रयोजकत्वेन समानप्रवरत्वमेतद्विशेषसहितमेव प्रवरमञ्जरीकृताऽभिहितमिति । तत्रैवायं विशेषो यद्यपि वक्तुं युक्तः, तथापि तेषु एकमात्रप्रवरसाम्येऽपि सर्वेषामसाम्येऽपि वा सगोत्रत्वादेव इतरगोत्रवत् अविवाहसंभवात् नैतस्य विधानस्य तत्र व्यतिरेकतः किञ्चित्प्रयोजनमस्तीति तद्भिन्नभृग्वङ्गिरोगणविषयतया व्याख्यातम् । यत्र विशेषविधिर्नास्ति तत्रैकप्रवरसाम्येऽपि समानप्रवरत्वं, यथा भृग्वङ्गिरोगणभिन्नेषु, 'शेषेष्वेकोऽपि वारयेत्' इति वचनात् । एवं च केवलभृग्वङ्गिरसां गोत्रत्वाभावात् असंकीर्णः प्रवरसाम्यादेवाविवाहः ।

ननु एतेषां गोत्रत्वाभावे हरितमुद्गलादीनां सकलार्यावर्तवर्तिशिष्टादृताविगीतगोत्रत्वस्मृतिः कथमपलपितुं शक्या, कथं वा अगोत्रस्य प्रवरोपपत्तिः, द्वयोर्मुद्गलयोर्हरितयोरेव वा विवाहे सगोत्रविवाहनिमित्तं प्रायश्चित्तं च कथं स्यात्, कन्यादाने च हरितमुद्गलादीनां वरत्वे हरितगोत्रेत्याद्यभिलापः शिष्टैश्च कथंकारं क्रियेतेति चेत्, यदि बहुतरशिष्टानां निबन्धकृतां चाऽयमभिनिवेशस्तदैवमुपपाद्यम् । तथाहि— सत्याषाढसूत्रे परिभाषाया 'प्रवरान् व्याख्यास्यामः' इत्युक्त्वा 'तेषां गोत्राणि' इति

वचनादिति स्वरूपतः समानतया च गोत्रज्ञाने प्रवराणां हेतुत्वोक्त्या प्रवरत्वमेव गोत्रलक्षणमुक्तं भवति । ततश्च यमेवैकमधिकृत्य प्रवराम्नानं सोऽधिकृतो गोत्रम् । तस्यैव चाधिकृतस्य येषु स्वस्वगणान्तर्गतेष्वनुवृत्त्याख्यं साम्यं ते सगोत्रा इत्युक्तं भवति । तथा च हरितादिषु गोत्रव्यवहारः समञ्जसो भवति । अतः 'अन्यत्र भृग्वङ्गिरसां गणात्' इति पर्युदासोऽप्युपपन्न इत्याहुः ।

अन्ये त्वाहुः— यदुक्तं प्रवरत्वं गोत्रत्वं, यच्च तत्रोपपादकमुक्तं, तत्सर्वं स्मृतिचन्द्रिकास्मृत्यर्थसाराश्वलायनापस्तम्बकात्यायनादिसूत्रभाष्यादिसर्वप्रामाणिकनिबन्धादृतबौधायनोक्तलक्षणविरोधात् उपेक्षणीयमेव । सत्याषाढवचनं तु क्वापि निबन्धे अदर्शनादनाकरमेव । साकरत्वेऽपि बौधायनोक्तगोत्रलक्षणाविरोधाय 'एक एव ऋषिर्यावत्' इत्येतद्वचनसमानार्थतया सूत्रं व्याख्येयम्— तैः प्रवरैः समानैः गोत्राणि समानानि अविवाहकारकाणि । अवश्यं च एवमेव सूत्रं व्याख्येयम् । कथमन्यथा 'अगस्त्याष्टमानामपत्यं गोत्रम्' इत्यग्रिमसत्याषाढोक्तिविरोधः परिह्रियेत, अननुष्ठानात्मकत्वेन च लक्षणविकल्पायोगात् । तथैव तद्विवरणे व्याख्यातं च— प्रवरैः गोत्राणां गणव्यवस्था समानता चेति । तेषां गोत्रत्वाभावेऽपि 'अन्यत्र भृग्वङ्गिरसा गणात्' इति पर्युदासोऽपि उपपादित एव । तथा गोत्रव्यवहारोऽपि । यत्तु भ्रान्तिप्रसक्त्या पर्युदासोऽयं न घटते, 'जमदग्निर्भरद्वाजः' इत्यादिपूर्वग्रन्थेन सप्तर्ष्यपत्यमेव गोत्रमित्यवधारिते पुनः उत्तरग्रन्थे भ्रान्त्युत्पादके प्रमाणाभावात् । नहि लोकान्वेष्यं गोत्रत्वं, येन भ्रान्त्युत्पत्तिः स्यात्— इति, तदेतदनवधाननिबन्धनम् । यद्यपि लोकान्वेष्यं न गोत्रं, किंतु सप्तर्ष्यपत्यमेव, तथापि वस्तुतोऽगोत्ररूपाणां भृग्वङ्गिरोगणानां गोत्रसंदर्शेन पाठात् तत्सादृश्यमेवात्र भ्रान्त्युत्पादकमस्तीति न प्रमाणाभावः ।

अत्र पक्षे दृष्टान्तासंगतिः । 'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः' इति शास्त्रीयलक्षणात् कुण्डगोलके ब्राह्मण्यप्रसक्तेर्निषेध उपपन्नः । न चास्मादेवास्वरसात् समानप्रवरत्वमिति पक्षान्तरम् । सर्वत्र हि अन्यथानुपपत्तिप्रसूता लक्षणा । अत्र च उक्तरीत्योपपत्तौ सत्यां किमर्थं लक्षणास्वीकारः । तात्पर्यानुपपत्त्या लक्षणेत्याश्रयणेऽपि दृष्टान्तवैषम्यम् 'यावन्तोऽनन्तर्हिताः समानगोत्रास्तावतां सकृत्' इति आश्वलायनसूत्रे 'आर्षेयाणि गृहपतेः प्रवरित्वा ब्रह्मा( ? आत्मा )दीनां मुख्यानामेवं द्वितीयतृतीयचतुर्थानाम्' इति ग्रन्थेन वरणं क्रमेणोक्त्वा वरणे पक्षान्तरं तन्त्रमुक्तम् 'यावन्तोऽनन्तर्हिताः' इत्यादिना ग्रन्थेन । वरणं तु प्रवराणामेव, अतः समानप्रवरेषु तन्त्रमुपपद्यते इति कृत्वा लक्षणा युक्ता । केवलभृग्वङ्गिरोगणेषु गोत्रताना श्रयणेन प्रयाजाप्रीसूक्तव्यवस्था न स्यात् । कुतः ? आश्वलायनेन 'सर्वे समानगोत्राः स्युः' इति गाणगारिमतमुपन्यस्य 'कथं ह्याप्रीसूक्तानि भवेयुः' इत्यादिना तत्रानुपपत्तिं प्रतिसंधाय 'नानागोत्राः स्युः' इति शौनकमतमुपन्यस्तम् । अतश्चैवं गम्यते, गोत्रप्रयुक्ता प्रयाजादिव्यवस्था भृग्वङ्गिरसादौ तु गोत्राभावादित्याद्यनुष्ठानवैकल्यं प्रसज्येतेत्याहुः । यदि तत्रापि गोत्रशब्दस्य प्रवरपरत्वं सप्रमाणकं तदा न चाऽऽशङ्का, न चोत्तरम् । कपीनां भरद्वाजगर्गादिभिः सहाविवाहे सगोत्रत्वमेवासंकीर्णं प्रयोजकं, न प्रवरसाम्यम् । कपीनां हि प्रवरा आङ्गिरसामहीयोरुक्षय्येति । भरद्वाजानामाङ्गिरसबार्हस्पत्यभारद्वाजेति । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यसैन्येति, आङ्गिरसगार्ग्यसैन्येति वा । ऋक्षाणामाङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति । एवं शौङ्गशैशिरप्रभृतिद्व्यामुष्यायणानामपि प्रवरा उदाहर्तव्याः । यद्यपि कपिप्रवरेषु अङ्गिराः समानः, नेतरप्रवरः, तथापि अङ्गिरोगणस्थत्वात् नैकमात्रप्रवरसाम्येनाविवाहप्रयोजकं सप्रवरत्वं भवति ।

ननु— अगस्त्याष्टमसप्तर्ष्यन्यतमानुप्रवेशेन सगोत्रत्वं पूर्वमभिहितम् । तत्र कपिप्रवरेषु भारद्वाजस्य वरणाभावः । म्रियमाणतया भारद्वाजस्यानुप्रवेशाभावात् कथं कपीनां भारद्वाजगर्गादिभिः सगोत्रत्वम् । न च म्रियमाणतयाऽनुप्रवेशाभावेऽपि सत्तयाऽनुप्रवेशस्य सत्त्वात् तत्स्यात्, सत्तयाऽनुप्रवेशस्य अविवाहाप्रयोजकत्वात्, अन्यथाऽतिप्रसङ्गात् । 'अत्रेरेव परं वंशं तव वक्ष्यामि भारत । अत्रेः सोमः सुतः श्रीमान् तस्य वंशोद्भवो नृपः ॥ विश्वामित्रः सुतपसा ब्राह्मण्यं समवाप्तवान् । तस्य वंशमहं वक्ष्ये तन्मे निगदतः शृणु ॥' इति मत्स्यपुराणे विश्वा-

मिश्रस्य अत्रिवंश्यत्वाभिधानात् विश्वामित्रप्रवरेषु अत्रेः सत्तयाऽनुवृत्तेः विश्वामित्राणामत्रिभिरप्यविवाहः स्यात्। किंच, भरद्वाजस्य पुत्रो भवमन्युः, तस्य महावीर्यनरगर्भाद्याः पुत्राः। तत्र महावीर्यादुरुक्षयः, उरुक्षयात् कपिप्रभृतयः। तथा नरात् संकृतिः, संकृतेर्गुरुवीतिरन्तिदेवप्रभृतयः। तथा गर्भात् सिनिः, सिनेः सैन्यः, सैन्याद्गर्गाद्याः। तत्र यथा भरद्वाजस्य कपिप्रवरेषु सत्तयाऽनुवृत्तिः तथा संकृतिप्रवरेष्वपि तस्य सत्तासंभवात् भारद्वाजानां संकृतिभिरपि विवाहो न स्यात्। अपि च, सत्तयाऽनुवृत्तेः अविवाहनिमित्तत्वे प्रवरविकल्पव्यवस्था न स्यात्, सत्तयाऽनुवृत्त्या प्रवराणां सर्वत्र साम्यात् विकल्पस्यैवाभावात्। यदि तु म्रियमाणतयाऽनुवृत्त्या विकल्पव्यवस्थोच्यते तर्हि तादृश्या एवानुवृत्तेः अविवाहनिमित्तत्वं यत्नुमुचितम्, अन्यथाऽतिप्रसङ्गस्य दुर्वारतापत्तेः। अन्यच्च, भरद्वाजादीनामनुवृत्तिर्न सत्तार्षित्वेन, प्रमाणाभावात्, किंतु प्रवरत्वेनैव वाच्या। तथा चोक्तम्—'एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते। तावत्समानगोत्रत्वम्' इति। तथा च म्रियमाणतयैव प्रवराणां अविवाहनिमित्तत्वं, न सत्तया। अन्यथा 'त्र्यार्षेयसंनिपाते पञ्चार्षेयाणामविवाहः, द्व्यार्षेयसंनिपाते त्र्यार्षेयाणामविवाहः' इति नियमो न स्यात्, सत्तयाऽनुवृत्त्या प्रवराणां सर्वत्र साम्यात्। तथा च सगोत्रत्वेऽपि म्रियमाणतयैव अनुवृत्तिरङ्गीकार्या इति। अथ यस्मिन्वंशे य उत्पन्नस्तस्य तेन सह अविवाह इति तद्वंशोत्पन्नत्वमेव अविवाहप्रयोजकं, तर्हि भरद्वाजवंशोत्पन्नत्वात् संकृतीनामपि भरद्वाजैर्विवाहो न स्यात्। तथा अङ्गिरसो बृहस्पतिः, तस्माद्भरद्वाज इति अङ्गिरोवंश्यैर्गौतमादिभिरपि भरद्वाजानां विवाहो न स्यात्। विश्वामित्राणां अत्रिभिरपि विवाहो न स्यात्। किमपरं, आङ्गिरसानां सर्वेषां भार्गवाणां च सर्वेषां परस्परमविवाहः स्यात्। तस्मात्सत्तयाऽनुवृत्तिः अविवाहे न निमित्तमिति।

अथ वदन्ति 'भरद्वाजाश्च कपयो गर्गा रौक्षायणा इति। चत्वारोऽपि भरद्वाजा गोत्रैक्यात्तान्विवर्जयेत्॥', तथा 'भरद्वाजर्क्षकपयो गर्गा रौक्षायणा द्विजाः। पञ्चैते हि भरद्वाजा गोत्रैक्यात्तान्विवर्जयेत्॥', तथा 'कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः। नोद्वहेयुः सगोत्रत्वात् प्रवरैक्याच्च न क्वचित्॥' एवमादीनि स्मृत्यर्थसारकारादीना अतिप्रामाणिकशिष्टपरिगृहीतानां वचनानि कपिभरद्वाजयोर्विवाहनिषेधबोधकानि सन्तीति तयोरेव परस्परमविवाह इति निर्णीयते। संकृत्यादिभिस्तु तथा निषेधाभावात् भवति। न च अस्मादेव निषेधवचनात् तयोरविवाहे सिद्धे सत्तयाऽनुवृत्तिकथनमभियुक्तानां व्यर्थं स्यात्। नानेन वाक्येन निषेधः कपिभरद्वाजत्वेन उच्यते, किंतु सगोत्रत्वेन। तस्य च म्रियमाणतयाऽनुप्रवेशाभावेनासंभवात् निषेधोऽनर्थकः स्यात्। अतः तदन्यथानुपपत्त्या तद्धेतुभूते सगोत्रत्वेऽपि परमशिष्टैर्यथा म्रियमाणतयाऽनुवृत्तिः अनपभ्रष्टस्मरणपरंपरामूलककल्पसूत्रनिबद्धैव सगोत्रत्वनिमित्तमङ्गीक्रियते, तथा सत्तयाऽनुवृत्तिरपि तादृश्येव तथा इति विज्ञायत इति नास्त्यतिप्रसङ्गः। अस्ति च भरद्वाजस्य कपिषु तादृशी सा। 'भरद्वाजानां सर्वेषामविवाहः' इति बौधायनसूत्रमपि एतदभिप्रायमेव। तत्र सत्तयाऽनुवृत्तिः स्मृत्यर्थसारे उक्ता—'जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः। वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते। म्रियमाणतया वाऽपि सत्तया वाऽनुवर्तनम्। एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते॥' इति। प्रवरमञ्जरीकारेणापि—'गर्गा अपि भरद्वाजा भारद्वाजानुवर्तिनः। पञ्चप्रवरगर्गेभ्यो भिन्नेष्वस्यानुवर्तनम्। सत्तयाऽस्यैव सैन्यस्य त्रिमुनिष्वपि दर्शनात्॥' इति। तथाऽनपभ्रष्टस्मरणपरंपराऽपि। तथाहि—आपस्तम्बेन भरद्वाजद्व्यामुष्यायणशौङ्गशैशिरिक्षकान् क्रमेण उक्त्वा गर्गात् पूर्वम् 'अथ कपीनाम्' इत्यादिग्रन्थेन भारद्वाजमध्ये कपीना मुक्तत्वात्, तथा कात्यायनेन भारद्वाजान् द्विप्रकारान् गर्गानुक्त्वा तत्संलग्नतयैव कपीनामुक्तत्वात् भरद्वाजापत्यत्वनिर्णयात्। अत्रार्थे पुराणानामपि अविप्रतिपत्तिः तथैव भगवता मत्स्येन भरद्वाजगर्गौ क्रमेणोक्त्वा गर्गसंलग्नतयैव कपिरुक्तः। विष्णुपुराणं तु अत्यन्तमत्रार्थेऽनुकूलम्, अङ्गिरसो बृहस्पतिस्तस्माद् भरद्वाजस्तस्मादामहय्यस्तस्मादुरुक्षयस्ततः कपिः इति वंशानुपूर्व्या स्पष्टाभिधानात्।

ननु– स्मृत्यर्थसारादिषु गर्गादिभिः सह यो विवाहनिषेधः स गर्गान्तर्गतकपिविषयो भविष्यति । तथाहि– इह द्वौ कपी । एको गर्गवंशीयः, स सर्वात्मना गर्गसादृश्यात् गर्गान्तर्गतत्वात् तैः सह विवाहं नार्हति । अपरः केवलाङ्गिरोमध्यवर्ती उरुक्षय्यरूपविलक्षणप्रवरो भिन्नगणः सर्वभरद्वाजादिभिः सह विवाहमर्हति । अत एव 'पृषदश्वा मुद्गला विष्णुवृद्धाः कण्वोऽगस्त्यो हरितः संकृतिः कपिः । यस्कश्चैषां मिथ इष्टो विवाहः सर्वैरन्यैर्जामदग्न्यादिभिश्च ॥' इति वचनेऽपि आदिपदेन चकारेण वा गौतमभरद्वाजानामपि ग्रहणम् । अत एव आश्वलायनसूत्रे भरद्वाजकुले केषाचिद्विवाहाभावमुक्त्वा कैश्चिदिदं वचनं पठ्यते । 'एतेषां तु विशेषोऽयमामहय्याभिधानकैः । उरुक्षय्यैश्च कपिभिर्विवाहस्त्रिषु इष्यते ॥' इति स्वतन्त्रकपीनां भारद्वाजैः सह विवाहः कण्ठरवेणैवोक्तः– इति चेत्, न । गर्गवंशे कपिभूमिगोत्रमस्ति, न तु कपिगोत्रमिति न निषेधस्य तद्विषयत्वम् । अथवा गर्गवंशे एककपिव्यक्तिसत्त्वेऽपि न तन्मात्रेण निषेधस्यान्यथा सिद्धिर्वक्तुं युज्यते, निषेधवाक्येषु तुल्यकक्षयोः कपिभरद्वाजगणयोरेव निषेधप्रतीतेः । यदि च स्वतन्त्रः कपिगणो न स्यात् तदा गर्गवंशीयकपिगोत्रव्यक्तिमात्रेण निषेधस्यान्यथासिद्धिः कल्पयितुमपि शक्येत, न त्वन्यथा । किंच गर्गान्तर्गतपरतन्त्रकपेः गणवाचकगर्गपदेनैव भरद्वाजैर्विवाहनिषेधसिद्धेः कपिपदं कथं न व्यर्थं स्यात् । कथंतरां च आपस्तम्बादिप्रवरग्रन्थविरोधश्च न स्यात् । तस्मात् पृषदश्वेत्यादिवाक्यद्वयं पूर्वोक्तदोषकलापादनादरणीयमेव । न च बौधायनेन भरद्वाजगणमध्ये तस्यापाठो भरद्वाजत्वाभावसाधकः, ऋक्षेष्वतिप्रसङ्गात् । न हि सर्वे सर्वैर्निबध्यन्ते । न च पूर्वोक्तं श्लोकद्वयमाश्वलायनीयम्, भाष्यकारादिभिः अव्याख्यातत्वात्, प्रत्युत तैः कपीनां भरद्वाजत्वस्यैवोक्तत्वात्, गोत्रप्रवरानुक्रमणसमाप्त्यनन्तरमभिधानात् अनन्वितार्थत्वेनासंगतेश्च । यच्चोक्तं सत्तयाऽनुप्रवेशस्याविवाहनिमित्तत्वे प्रवरविकल्पव्यवस्था न स्यादिति, तदपि न, प्रवरेषु सत्तयाऽनुप्रवेशानङ्गीकारात् । तस्मात् कपिषु सत्तया भरद्वाजानुवृत्त्या भरद्वाजगोत्रत्वात् प्रवरभेदसत्त्वेऽपि असंकीर्णात् सगोत्रत्वादेव तदन्यैर्भरद्वाजैः सहाविवाह इति सिद्धम् । तथा च प्रवरमञ्जरीकारः शिष्टसंमतिमाह– 'शुद्धाङ्गिरोगर्गमध्ये कपयः पठिता अपि । आचार्यैरपवर्गाद्यैर्भरद्वाजाः स्युरेव ते ॥ भरद्वाजगणे यस्मादापस्तम्बोऽपठत् कपीन् । पराशरश्चतुर्थेऽंशे भरद्वाजान्वये कपीन् ॥ नामसंख्याक्रमेणैव पुराणे वैष्णवेऽवदत् । मत्स्यो हरिरिदं मात्स्ये पुराणे स्पष्टमब्रवीत् ॥ मार्गमेनमजानन्तो मूढा मन्वादिभाषितम् । भरद्वाजकपीनां तु प्रवदन्ति मिथोऽन्वयम् ॥ निबन्धिनो हि नेच्छन्ति सर्वे नारायणादयः । अविगीतसमाचारविरोधोऽपि भवेदिह ॥ गणभेदभ्रमान्मूढा विवाहं कारयन्ति चेत् । भरद्वाजत्वगर्गत्वकपित्वैः सहगोत्रताम् ॥ त्रयो मौर्ख्यान्न संवीक्ष्य गुरुतल्पगमन्वयम् । प्रयोक्तृवक्तृकर्तारः प्राप्नुवन्त्यन्वये स्फुटम् ॥ गर्गा अपि भरद्वाजा भरद्वाजानुवर्तिनः । पञ्चप्रवरगर्गेभ्यो भिन्नेष्वस्त्यानुवर्तनम् ॥ सत्तयाऽस्त्येव सैन्यस्य त्रिमुनिष्वपि दर्शनात् । द्विविधानपि गर्गांस्तानुपवर्षो महामुनिः ॥ अनुक्रम्य स्ववैवाह्यान् भरद्वाजतया जगौ । किञ्चित् त्रिमुनिगर्गाणां भरद्वाजर्षवर्णिनाम् ॥ अविवाहं स्तुवन् गार्ग्यो भरद्वाजत्वमिच्छति । अतो यथा सगोत्रत्वादग्न्यादौ वर्गपञ्चके ॥ न विवाहस्तथा सर्वभरद्वाजगणेष्वपि । समर्पित्वादनुद्वाहः सिद्ध इत्युपरम्यते ॥' एवमन्यदप्येवंजातीयकमसंकीर्णे सगोत्रत्वस्योदाहरणमूह्यम् ।

स्मृतिचन्द्रिकाकारस्त्वाह— एकस्यैव गोत्रस्य यत्र विकल्पेन प्रवरभेदः, भृग्वङ्गिरोगणान्तर्गतस्य वा त्र्यार्षेयस्य द्विप्रवरभेदः, पञ्चार्षेयस्य त्रिचतुष्प्रवरभेदः, तत्र भिन्नभिन्नप्रवरपरिग्राहिणां प्रवरभेदे सत्यप्यसंकीर्णत्सगोत्रत्वादेव परस्परमविवाह इति ।

अत्रेदं सिद्धम्— जामदग्न्यभिन्नभृग्वपत्येषु गौतमभरद्वाजभिन्नाङ्गिरोऽपत्येषु चैकैकगणान्तःपातिनामविकल्पितैकरूपप्रवराणां सर्वप्रवरैक्यात् अविवाहः । येषां तु विकल्पिता अभिन्नरूपा भिन्नभिन्नगणस्थाश्च प्रवराः, तेषां परस्परं त्र्यार्षेयपञ्चार्षेयभेदेन द्वित्रिप्रवरसाम्यात्, एकैकगणान्तःपातिनामगस्त्याष्टमसप्तर्ष्यपत्यानां गोत्रसाम्यात्, अविकल्पितप्रवराणां सर्वप्रवरसाम्याच्चाविवाहः । भृग्वङ्गिरसां तु विकल्पितप्रवराणां द्वित्रिप्रवरसाम्यात्, इतरेषामेकप्रवरैक्यादपि । भिन्नभिन्नगणनिविष्टानां तु गोत्र-

साम्याद्यायशः प्रवरैक्याच्च । भृग्वङ्गिरोगणतदतिरिक्तभेदेन प्रवरसाम्यं प्राग्वत् । कश्चित् समानगोत्रत्वादेवेति ।

संप्र. ५९०–६१५

(२) तत्र 'सगोत्राय दुहितरं न प्रयच्छेत्' 'असमानप्रवरैर्विवाहः' इति आपस्तम्बगौतमाद्यैः सगोत्रा सप्रवरा च निषिद्धा । तत्र गोत्रस्वरूपमाह प्रवरमञ्जर्यां बौधायनः— 'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः ॥ सप्तानामृषीणा-मगस्त्याष्टमाना यदपत्यं तत् गोत्रम् ।' इति । एषां यत् पुत्रपौत्राद्यपत्यं ऋषिभूतं तत्पूर्वभाविनामनन्तरभाविना च गोत्रमित्यर्थः । तदाह पाणिनिः— 'अपत्यं पौत्रप्रभृति गोत्रम्' इति । ऋषित्वं च मन्त्रद्रष्टृत्वं, 'दर्शनात्' इति यास्कोक्तेः । तेनास्मदादीना तदपत्यत्वेऽपि न गोत्रत्व-मिति । ननु— भृगुगणान्तर्गतजमदग्नेरङ्गिरोगणान्तर्गतयो-र्गौतमभरद्वाजयोश्च युक्तं गोत्रत्वं, तेषामुक्तेष्वन्तर्भावात्, उक्तभिन्नेषु तु केवलभार्गवेषु आर्ष्टिषेणादिषु केवलाङ्गि-रसेषु हरितादिषु च कथं गोत्रत्वम् ? भृग्वङ्गिरसावधिकृत्य तेषां पाठात्, तयोश्च सप्तर्ष्यनन्तर्गतेः—इति चेत्, न । तथाप्यत्रेष्टापत्तिरिति केचित् । अत एव स्मृत्यर्थसारादिभिः प्रवरैक्यादेवात्राविवाह उक्तः । सगोत्रत्वेनैव निषेधात् 'असमानार्षगोत्रजाम्' इत्यादौ समानप्रवरत्वं पुनरुक्तं स्यात् । अतो गोत्रत्वेन परिज्ञातानां मध्ये यमुपक्रम्य प्रवराम्नानं स तेषां गोत्रं, यथा 'अथ ह जामदग्न्यानाम्' इत्यादि । बौधायनोक्तिस्तु अनुवादत्वादुपलक्षणं तेन भृग्व-ङ्गिरोगणेषु सप्तर्षिभिन्नत्वेऽप्यधिकारात् गोत्रत्वम् । अत एवाह विज्ञानेश्वरः— 'गोत्रं वंशपरंपराप्रसिद्धम्' इति । भट्टाचार्या अप्याहुः— 'यथा समाने कुलीने त्रिरिति स्मरणलक्षणं गोत्रम्' इति । न च भृगोरावृत्त्या वत्सार्ष्टि-षेणयोरपि सगोत्रत्वापत्तिः, तत्र पर्युदासात् । तदाह बौधायनः— 'एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरोगणात् ॥' इति । भृग्वङ्गिरोभिन्नैकऋष्यनुवृत्तेः सगोत्रत्वं, नान्यथेत्यर्थः । अत्र अनुवृत्तिशब्दार्थमाह स्मृत्यर्थसारे— 'ध्रियमाणतया वाऽपि सत्तया वाऽनुवर्तनम् । एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥' इति । अस्यार्थः— ध्रियमाणतया प्रवरान्त-र्भावेन, यथा आद्यानां भृगूणां द्विनिप्रवरसाम्ये, सत्तया अधिकारेण उत्पादकत्वेन वा यत्र गोत्रान्तरे एकस्य ऋषेः अनुवर्तनं दृश्यते तद्गोत्रान्तरं तस्य अनुवर्तमानस्य गोत्र-मपत्यम् । तयोः सगोत्रत्वेत्यर्थः । यथा कपीना भरद्वाज-गोत्रान्वयेन । आङ्गिरसामहय्यौरुक्षयसेति हि कपि-प्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजेति भारद्वाजस्य । अत्रा-ङ्गिरोगणस्थत्वात् द्विप्रवरसाम्याभावेन असमानप्रवरत्वेऽपि सप्तर्ष्यन्तर्भूतभरद्वाजापत्यत्वेन संदेशात् भरद्वाजानुवृत्त्या कपेः सगोत्रत्वादविवाहः । वस्तुतस्तु गोत्रस्य ध्रियमाणतया अनुवृत्तिर्दुर्घटैव । न हि अघमर्षणकौशिकविश्वामित्रेति गोत्रभूतविश्वामित्रो निर्दिश्यते । एवं हि द्विप्रवरत्वापत्त्या 'विश्वामित्राणां त्र्यार्षेयः' इत्यादिनिर्देशानुपपत्तेः । न च एकस्यैव गोत्रत्वं प्रवरत्वम्, अभेदे पञ्चयापत्तेः । कथं च सप्तऋषिरूपस्य विश्वामित्रस्य गोत्रत्वं, तदपत्यत्वा-भावात् । तेन ऋष्यपत्यभूता एव तुल्यनामानो गोतमा-दय ऋषयो गोत्रत्वेन प्रवरत्वेन चोच्यन्ते । अत एव वार्तिककारैः 'भृग्वादीनां पूर्वभृग्वादिवरणसंभवादस्त्येवा-धिकारस्तेन ऋष्युदाहरणमतन्त्रम्' इत्युक्तम् । अत एव नामैकत्वेऽपि गणभेदे प्रवरभेदे च ऋषीणां भेदात् भवत्येव विवाहः, लोके एकनाम्नामपि अनेकेषां पुंसां दर्शनादित्युक्तं प्रवरमञ्जर्याम् । तेन गोत्रभूतऋषेर्भेदात् ध्रियमाणत्वेन प्रवरेष्वनुवृत्तिरिति त्रिप्रवरभूतस्यैव अन्य-प्रवरेष्वनुवृत्तिर्ज्ञेया । सत्तयाऽनुवृत्तिश्च गोत्रे एव, न तु प्रवरेषु, साक्षात्पठितानामेव प्रवरत्वादिति दिक् ।

प्रवरशब्दार्थस्तु प्रवरणानि प्रवरा इति 'अग्निर्देवो होता' इति मन्त्रे हव्यवाहसंज्ञकः ऋषिप्रकाशने (अग्निप्रकाशके) विशेषणत्वेनोपात्ता ऋषय इति प्रवरमञ्जरी । गोत्रभूतस्यर्षेः पितृपितामहप्रपितामहादयः एव प्रवराः । तेषां च पितृ-पुत्रपौत्रक्रमेण वरणं होतुः । तथा च शतपथश्रुतौ प्रवरा-नुक्रमणोक्तम्— 'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति । 'परंपरं प्रथमम्' इत्यत्र वृत्तिकृताऽपि एवमुक्तम् । अत एव 'आङ्गिरसबार्हस्पत्यभारद्वाज' इत्यादौ तथैव दृश्यते । आङ्गिरसेत्यादितद्धितस्तु यजमानस्य ऋषिसंबन्ध-बोधनार्थः । विप्रादीनामपि मन्त्रकृतामेव प्रवरत्वम्, 'यथर्षि मन्त्रकृतो वृणीते' इति सूत्रकारवचनात् ।

कातीयभिन्नशाखीयाध्वर्यूणां तु होतृप्रातिलोम्येन वरणम्, 'इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता' इत्यापस्तम्बबोधायनोक्तेः। इतः यजमानादूर्ध्वान् प्रातिलोम्येन अध्वर्युर्वृणीते, अमुतो यजमानविप्रकृष्टात् भृग्वादेरारभ्य आनुलोम्येन होता इत्यर्थः। होता तद्धितान्तं संबुद्ध्यन्तं वदेत्, 'होता तद्धितवदामन्त्रयच' इति कातीयसूत्रात्। अध्वर्युस्तु अतद्धितान्तं वत्यन्तं च, 'भृगुवदित्यध्वर्युः' इति सूत्रकाराणां सर्वत्र पाठदर्शनात्। कातीयाध्वर्योरपि पाठक्रमोऽनुलोम एव, 'परस्तादर्वाञ्चि त्रीणि' इति तत्सूत्रात्।

तत्र भृग्वङ्गिरोगणयोस्तु पञ्चप्रवरे त्रिप्रवरसाम्यात्, त्रिप्रवरे द्विप्रवरसाम्याच्चाविवाहः। एकप्रवरसाम्ये तु असमानगोत्रत्वात् भवत्येव विवाहः। यथाऽऽह मञ्जर्यां बोधायनः—'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत् समानार्षेया बहवः स्युः। द्व्यार्षेयसंनिपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसंनिपातेऽविवाहः पञ्चार्षेयाणाम्' इति। अस्यार्थः—केवलभृग्वङ्गिरसश्च भिन्नगणैर्विवाहं कुर्वते कुर्युः। लकारव्यत्ययश्छान्दसः। तेषां सत्यर्षपत्यत्वाभावेन गोत्रत्वाभावात्। यदि असमानापेक्षया प्रवरा बहवः समाना न स्युः, किंतु अल्पे समानाः, सर्वे वाऽपि असमानाः बहवो वा, तदा विवाहं कुर्युरित्यर्थः। अविवाहविषयमाह—यत्र तु असमापेक्षया समा अधिकाः, यथा त्र्यार्षेयेषु एकापेक्षया द्वावधिकौ समौ, पञ्चार्षेयेषु च द्वावपेक्ष्य त्रयोऽधिकाः समास्तदा विवाहो नेति। माधवीये स्मृत्यन्तरेऽपि—'पञ्चाना त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः। भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्॥' इति। एकोऽपि प्रवरो विवाहं वारयेदित्यर्थः। इदं तु केवलभृग्वङ्गिरोगणविषयमेव। भृग्वङ्गिरोगणान्तर्गतजमदग्निगौतमभरद्वाजेषु तु एकप्रवरसाम्ये सर्वेषामप्यसाम्ये वा सगोत्रत्वादेव न विवाहः, सत्तया गोत्रानुवृत्तेरुक्तत्वात्। भृग्वादिषु पाठः 'भृगूणां त्वेति भृग्वङ्गिरसामादध्यात्' इत्याधानविधानार्थ एव। एतेन भृग्वङ्गिरोभिन्नेषु एकप्रवरसाम्ये सप्रवरत्वं सिद्धम्।

एवं मातृगोत्राऽपि वर्ज्या, 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्॥' इति शातातपोक्तेः। इत्थं केचिदेव, 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कितः॥' इति मदनपारिजाते व्यासस्मृतेः, 'मातृगोत्रं माध्यन्दिनीयानाम्' इति सत्याषाढोक्तेश्चेति कश्चित्। वस्तुतस्तु इदं वचनं सत्याषाढसूत्रे अदर्शनात् प्रवरमञ्जरीकारेणालेखनाच्च निर्मूलमेव। प्रत्युत मातृगोत्रनिषेधस्य पाक्षिकत्वेऽपि चण्डालत्वादिदोषस्यातिगुरुत्वात् पाक्षिकदोषस्यापि परिहार्यत्वात् सर्वेषां मातृगोत्रवर्जनमिति प्रवरमञ्जर्यामुक्तम्। पुत्रिकापुत्रैरासुरादिविवाहजैश्च सर्वैः मातृगोत्रा वर्ज्या, दानस्यानिष्पत्तेः। अत एव तत्र 'पितृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया।' इति श्राद्धे पितृगोत्रं दृश्यते। शिष्टास्त्विदं मातृगोत्रवर्जनं गान्धर्वादिविवाहोढमातृपरं, तत्र पितृगोत्रानिवृत्तेः। ब्राह्मादिविवाहचतुष्टये मातामहगोत्रनिवृत्तेर्भवत्येव विवाहः। अत एव मार्कण्डेयपुराणे—'गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित्।' इति ब्राह्मादिषु भर्तृगोत्रं गान्धर्वादिषु च पितृगोत्रमुक्तम्। यदपि 'एकस्मिन् प्रवरे तुल्ये मातृगोत्रे वरस्य च। तमुद्वाहं न कुर्वीत सा कन्या भगिनी भवेत्॥' इति मञ्जर्यां वचने मातृकुलप्रवरचिन्तनमुक्तं, तदपि पुत्रिकाविषयमेव, अन्यथा 'प्रवरं पितृगोत्रेषु मातृगोत्रे न चिन्तयेत्। गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत्॥' इति मञ्जर्यां वचनविरोधः स्यात्। तत्रैव काठकगृह्येऽपि—'प्रवरान् पितृगोत्रेषु चिन्तयेत्' इति। येषामिमं मातृगोत्रा प्राप्ता तेषामपि कलौ तन्निषेध एव, 'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा।' इति हेमाद्रिमाधवीयादित्यपुराणे कलिवर्ज्येषूक्तेः।

प्रद. १०६–१०९.

निबन्धकारकृता गोत्रप्रवरमीमांसा समाप्ता।

———

वेदाः

जमदग्निसहितः ऋषिसंबन्धः

अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः॥

हे सोम पवित्रेण पूयमानः त्वं दिव्या दिव्यानि दिवि भवानि वसूनि धनानि नः अस्माकं अभि अर्ष अभिगमय। तथा पार्थिवा पार्थिवानि पृथिव्या भवानि विश्वा सर्वाणि धनानि अभिगमय। तथा येन त्वदीयेन सामर्थ्येन द्रविणं धनं वयं अभि अश्नवाम अभिव्याप्नुयाम तत् सामर्थ्यमभिगमय। किंच आर्षेयं आर्षाणामृषिपुत्राणां योग्यं धनं जमदग्निवत् जमदग्नेर्यथा त्वं प्रापयः एवं नः अस्माकमपि अभि अर्ष। यद्वा, आर्षेयं आर्षाणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतममकार्षीः एवं अस्माकं तादृशं मन्त्रं स्वादुतमं कुरु इति कुत्सो नाम ऋषिः प्रार्थयते।

ऋसा.

अग्निस्थापकानां पूर्वजानां ऋषीणां संबन्धेनाग्निवरणं पूर्वजर्षिक्रमेण

त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणाम्। त एतर्ह्या शꣳसन्ते मां वरिष्यते मामिति। वृणीध्वꣳ हव्यवाहनमित्याह। य एव देवानां तं वृणीत। आर्षेयं वृणीते। बन्धोरेव नैत्यथो संतत्यै। परस्तादर्वाचो वृणीते। तस्मात् परस्तादर्वाञ्चो मनुष्यान् पितरोऽनु प्र पिपते॥

हव्यवाहनमित्यग्निविशेषणं प्रशंसति– त्रयो वेति। देवादीनां संबन्धिनो हव्यवाहनादयोऽग्नयः प्रत्येकं मामेव वरिष्यत इत्येवमपेक्षन्ते। अतो देवा अग्नेरेव गुणसिद्ध्यर्थं हव्यवाहनं वृणीध्वं इत्युच्यते। यदुक्तं आश्वलायनेन 'सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाꣳ असि ब्राह्मण भारतेति निगदेऽवसाय यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः परं परं प्रथमम्' इति। तदेतद्विधत्ते– आर्षेयमिति। ऋषेरपत्यं आर्षेयं आत्मीयगोत्रर्षीन् तद्धितप्रत्ययान्तानामन्त्रितविभक्त्या यथाप्रवरं वृणीते। यथा, अग्ने महाँ असि ब्राह्मण भारत। भार्गवच्यावनाप्नवानौर्वजामदग्न्येति भृगुगोत्राणां पञ्चार्षेयः प्रवर इति। अनेन तत्तदपत्यतया अग्निरुपचर्यते। एवं वृणानः पुरुषः बन्धोः भृग्वादेः सकाशात् नैति नापगच्छति। अपि च इदमार्षेयवरणं अस्य पुत्रादिसंतानाय भवति। अस्मिन् वरणे प्रकारविशेषं विधत्ते– परस्तादिति। वर्तमान यजमानमपेक्ष्य पूर्वभावी यो गोत्रप्रवर्तकस्तमारभ्य तदपत्यपरंपरया अर्वाचः नीचान् वृणीते। तथैव पूर्वमुदाहृतं भृगोरपत्यं च्यवनः तस्यापत्यमप्नवानः तस्यापत्यमौर्वः तस्यापत्यं जमदग्निः तस्य संततिर्यजमान इति। तदेतत् अर्वाक्त्वम्। यस्मात् होता पूर्वभाविनमारभ्य अर्वाचो वृणीते तस्मादेव कारणात् लोकेऽपि पूर्वपूर्वभाविनः पितर उत्तरोत्तरभाविनः पुत्रान् अनुक्रमेण पालयन्ति।

तैसा.

अग्ने महाꣳ असीत्याह। महान् ह्येष यदग्निः। ब्राह्मणेत्याह। ब्राह्मणो ह्येषः। भारतेत्याह। एष हि देवेभ्यो हव्यं भरति। देवेद्ध इत्याह। देवा ह्येतमैन्धत। मन्विद्ध इत्याह। मनुर्ह्येतमुत्तरो देवेभ्य ऐन्ध। ऋषिष्टुत इत्याह। ऋषयो ह्येतमस्तुवन्। विप्रानुमदित इत्याह। विप्रा ह्येते यच्छुश्रुवांसः॥

प्रवरमन्त्रार्थं दर्शयति– अग्ने महानिति। अग्निरिति यदेषः, यस्मात् सर्वाहुत्याधारत्वेन महान् तस्मात् मन्त्रे महानसि इत्युच्यते। यस्मात् ब्राह्मणवर्णाभिमानी तस्मात् ब्राह्मण इति संबोध्यते। यस्मात् एष देवेभ्यो हव्यं भरति धारयति तस्मात् भारत इति संबोध्यते। मन्त्रे येयं 'असावसौ' इति वीप्सा तया भृग्वादीनामृषीणां नामनिर्देशोऽभिप्रेतः। स च भार्गवच्यावनेत्यादिना पूर्वानुवाके एव अस्माभिरुदाहृतः। निविल्पदेषु सत्सु प्रथम-

(१) ऋसं. ९।९७।५१ ; सासं. २।१२।६।१ (१४२८).
(२) तैसं. २।५।८।६–७.

(१) तैसं. २।५।९।१; तैसा. २।५।९।१.

स्यार्थं दर्शयति– देवेद्ध इति। यस्मात् देवाः स्वकीयेषु यागेषु एतमग्निं ऐन्धत प्रज्वलितवन्तः तस्मात् देवेद्ध इत्युच्यते। द्वितीयपदस्यार्थं दर्शयति– मन्विद्ध इति। देवेभ्य उत्तरो देवैः इन्धनादूर्ध्वं स्वकीययागे मनुः ऐन्ध। उत्तरेष्वपि पञ्चसु पदेषु प्रसिद्धार्थतां हिशब्दो द्योतयति। शुश्रुवांसः श्रुताध्ययनसंपन्ना जात्या विप्रा विद्यया विबुधाः कवयश्च भवन्ति, तैः अयमनुमदितः तोपितः शस्तः स्तुतश्च। तैब्रा.

अग्निर्देवो होतेति य एव देवानां तमवृणीत। ततो देवा अभवन्। पराऽसुराः। यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति॥

. यस्मात् प्रजापतिः ब्राह्मणाग्निवरणं कृतवान् तस्मात् देवा उत्कृष्टा अभवन्। पराभूता असुराः। तैब्रा.

गोत्रप्रवरवान् ऋषिवंशजः

ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्य९ सुधातुदक्षिणम्॥

अद्य अस्मिन् यज्ञदिने ब्राह्मणं अत्रिगोत्रोत्पन्नं राध्यासं हिरण्येन साधयानि तोपयाणीत्यर्थः। कीदृशं, ऋषिं वेदार्थज्ञम्। आर्षेयं वेदार्थविदः पुत्रम्। पितृमन्तं पित्रा सम्यगनुशिष्टम्। पैतृमत्यं पितृमत्याः सम्यगनुशिष्टायाः पतिव्रतायाः पुत्रम्। शोभनो धातुः सर्वधातुभ्य उत्तमं हिरण्यं दक्षिणा यस्य असौ सुधातुदक्षिणः तादृशम्। तैब्रा.

ब्राह्मणमद्य राध्यासमृषिमार्षेयमित्याह। एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान् तस्मादेवमाह॥

ब्राह्मणादिशब्दैर्वेदशास्त्रपारंगतो विवक्षित इति दर्शयति– ब्राह्मणमद्येति। तैब्रा. १।४।४३।२

ब्राह्मणमद्यर्ध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयँ सुधातुदक्षिणम्॥

(१) तैसं. २।५।११।८–९.
(२) तैसं. १।४।४३।२.
(३) तैमं ६।६।१।३–४.
(४) कासं. ४।९ (४८).

ब्राह्मणमद्यर्ध्यासं पितृमन्तं पैतृमत्यमिति। यो वै श्रोत्रिय आर्षेयः स पितृमान् पैतृमत्यः। तं विदेयमित्येवैतदाह। स हि सुधातुदक्षिणः। यामब्राह्मणाय ददाति वनस्पतयस्तया प्रथन्ते। यां कण्वकश्यपेभ्यो ददाति नीहारस्तया प्रथते। यां ब्राह्मणायाश्रोत्रियाय ददाति मरीचयस्तया प्रथन्ते। याँ श्रोत्रियायार्षेयाय ददाति तयामुष्मिँल्लोक ऋध्नोति। अस्मिँश्चास्य लोके पुनर्भोगाय भवति। तस्मात् स एवैष्टव्यः॥

अत्रिर्हिरण्यं ददाति। स्वर्भानुर्वा आसुरः सूर्यं तमसाऽविध्यत्। तमत्रिरेवाग्नेऽन्वविन्दत्। यदत्रिर्हिरण्यं ददाति स्वर्गस्य लोकस्य समष्ट्यै। यद्यात्रेयं न विन्देद्य आर्षेयः सँहितस्तस्मै दद्यात्। तेनैवर्ध्नोति॥

ब्राह्मणमद्य ऋध्यासं पितृमन्तं पैतृमत्यमिति। एष वै ब्राह्मणः पितृमान् पैतृमत्यो य आर्षेयः शुश्रुवान्। सुधातुदक्षिणमिति। सुधात्वेवास्य यज्ञं दधाति॥

यामार्षेयाय शुश्रुषे ददाति देवलोके तया ऋध्नोति। यामनार्षेयाय शुश्रुषे मनुष्यलोके तया॥

ब्राह्मणमद्यर्ध्यासं पितृमन्तं पैतृमत्यमिति। यो वै श्रोत्रिय आर्षेयः स पितृमान् पैतृमत्यः। तं विदेयमित्येवैतदाह। स हि सुधातुदक्षिणः। यामब्राह्मणाय ददाति वनस्पतयस्तया प्रथन्ते। यां कण्वकश्यपेभ्यो ददाति नीहारस्तया प्रथते। यां ब्राह्मणायाश्रोत्रियाय ददाति मरीचयस्तया प्रथन्ते। यां श्रोत्रियायार्षेयाय ददाति तयामुष्मिँल्लोक ऋध्नोति। अस्मिंश्चास्य लोके पुनर्भोगाय भवति। तस्मात् स एवैष्टव्यः॥

(१) कासं. २८।४.
(२) मैसं. ४।८।२.
(३) मैसं. ४।८।३.
(४) कसं. ४४।४.

अत्रिर्हिरण्यं ददाति । स्वर्भानुर्वा असुरः सूर्यं तमसाऽविध्यत् । तमत्रिरेवान्वविन्दत् । यदत्रिर्हिरण्यं ददाति स्वर्गस्य लोकस्य समष्ट्यै । यद्यात्रेयं न विन्देद्य आर्षेयः संहितस्तस्मै दद्यात् । तेनैवर्ध्नोति ॥

ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् ।

अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥

अहं अद्य अस्मिन्दिने ईदृशं ब्राह्मणं विदेयं लभेय । 'विद्लृ लाभे'। किंभूतम् ? पितृमन्तं प्रशस्तः पिता अस्य अस्तीति पितृमान्, तम् । पित्रा विना न कश्चिज्जायते । अतोऽत्र प्राशस्त्यार्थे मतुप् । विशिष्टजनकोत्पन्नमित्यर्थः । तथा पैतृमत्यं, पितुरिमे पैतरः । तद्धितप्रत्ययलोपेऽपि छान्दसी वृद्धिः । मता एव मत्याः । स्वार्थे यत् । पैतरः पितामहादयो मताः संमता जगन्मान्या यस्य स पैतृमत्यः, तम् । यद्वा पितरः पूर्वजाः मताः संमताः श्रोत्रिया यस्य स पितृमतः, पितृमत एव पैतृमत्यः । यद्वा, प्रशस्तजनकोत्पन्नः पितृमान् इत्युक्तं, तदपत्यं पैतृमत्यः । सर्वथा यस्य पितामहादयः श्रोत्रियाः स पैतृमत्य इत्यर्थः । तथा ऋषिं मन्त्राणां व्याख्यातारम् । तथा आर्षेयं ऋषिषु विख्यात आर्षेयः तं जात्या प्रवरैः ज्ञानेन सुज्ञातमित्यर्थः । तथा सुधातुदक्षिणं, शोभनो धातुः सुवर्णं दक्षिणा यस्य स सुधातुः, तम् । 'उपविश्य हिरण्यमस्मै ददात्यस्मद्राताः' इति अस्मै आग्नीध्राय दक्षिणादैवत्यं, हे दक्षिणाः यूयं अस्मद्राताः । 'रा दाने' अस्माभिः राता दत्ताः सत्यो देवत्रा देवान् प्रति गच्छत । तानेत्य तेषां तृप्तिं कृत्वा ततः दातारं प्रविशत यज्ञफलं साधयन्त्यो यजमानं प्रविशत इत्यर्थः ।
श्रुम.

अथ हिरण्यमादायाग्नीध्रमभ्यैति । ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमिति । यो वै ज्ञातो ज्ञातकुलीनः स पितृमान्पैतृमत्यः । या वै ज्ञातायापि कतिपयीर्दक्षिणा ददाति, ताभिर्महज्जयति । ऋषिमार्षेयमिति । यो वै ज्ञातोऽनूचानः स ऋषिरार्षेयः । सुधातुदक्षिणमिति । स हि सुधातुदक्षिणः ॥

सहिरण्यं आग्नीध्रं प्रति गमनं विधत्ते— अथ हिरण्यमित्यादि । दातव्यं हिरण्यं स्वीकृत्य 'ब्राह्मणमद्य' इत्यादिना मन्त्रेण आग्नीध्रमभिगच्छेत् । मन्त्रे पितृमत्पैतृमत्यशब्दयोः तात्पर्यमाह— यो वै ज्ञात इत्यादि । पितृमन्तं पैतृमत्यं इत्येताभ्यां शब्दाभ्यां ज्ञातो ज्ञातकुलीनश्च विवक्षितः । ज्ञातः प्रसिद्धः । तत्रायमभिप्रायः— पितृमानिति प्रशंसायां मतुप् इति प्रशस्तपितृमान् प्रशस्तपितृमत्त्वेन च प्रसिद्धिर्लभ्यते । पैतृमत्यः इति पितृमति कुले भवः । कुलस्य ज्ञातत्वं प्रशस्तपुरुषसंबन्धनिबन्धनम् । एवं च प्रशस्तपितृयुक्ते कुले जात इत्यनेन प्रशस्तकुलोत्पत्तिर्लभ्यते । तादृशाय ज्ञाताय याः कतिपयीः अपि दक्षिणाः ददाति ताभिर्महत् फलं जयति स्वाधीनीकरोति । तस्मादनेनाभिप्रायेण पितृमन्तं पैतृमत्यं इति शब्दप्रयोग इत्यर्थः । ऋष्यार्षेयशब्दयोः अर्थमाह— यो वा इति । अनूचानः साङ्गे प्रवचनेऽधीती । स हीति । प्रकृतत्वात् स ज्ञातः अनूचानः सुधातुदक्षिणः सुधातुर्हिरण्यं तत् दक्षिणा यस्य स तथोक्तः । प्रसिद्धाय खलु हिरण्यं दीयते ।
शतपथ.

यज्ञे स्वपितृसंबन्धः कथनीयः, ऋषिर्गोत्रम्

यस्य वा यस्य ब्रुवते यस्यैवर्षेर्ब्रुवाणो यजते तं तदिष्टं गच्छति । नेतरमुपनमति । तत्प्रवरं प्रवृणाने ब्रूयात् । देवाः पितरो देवा योऽस्मि स सन् यज इति । य एव कश्च सन् यजते तं तदिष्टमागच्छति । नेतरमुपनमति ॥

नार्षेयं वृणीते । न होतारम् । मृत्योरेवैना उत्सृजति ॥

न होतारं वृणीते । नार्षेयम् । मृत्योरेवैना उत्सृजति ॥

(१) ऋग्. ७।८६.
(२) शत. ४।३।४।१९.

(१) काठ. ३१।१५.
(२) काठ. ३६।१२.
(३) मैत्र. १।१०।१८.

नार्षेयं वृणीते । न होतारम् । यदार्षेयं वृणीते । यद्धोतारम् । प्रमायुको यजमानः स्यात् । प्रमायुको होता । तस्मान्न वृणीते । यजमानस्य होतुर्गोपीथाय ॥

[1]विश्वजनस्य च्छायासीति । विश्वजनस्य ह्येषा छाया । गोत्राद्गोत्राद्ध्येतत्संप्रसर्पन्ति ॥

ब्राह्मण्यं ऋषिविशेषसंबन्धो वा संदिग्धः, संदेहेऽपि ऋषिविशेषसंबन्धो यज्ञे वक्तव्यः

[3]विश्वजनस्य छायासीति छदिरभिनिदधाति । गोत्राद्गोत्राद्धि प्रसर्पन्ति ॥

[4]ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै प्रजापतिः सप्तदशो यज्ञेऽन्वायत्तः । यद्यनुवाक्याया एति यदि याज्यायाः । अतश्चैदेवं नैति नास्य यज्ञो व्यथते । प्रजापतौ यज्ञेन प्रतितिष्ठति । न वै तद्विद्म यदि ब्राह्मणा वा स्मोऽब्राह्मणा वा । यदि तस्य वा ऋषेः स्मोऽन्यस्य वा यस्य ब्रूमहे । यस्य ह त्वेव ब्रुवाणो यजते तं तदिष्टमागच्छति । नेतरमुपनमति । तत् प्रवरे प्रवर्यमाणे ब्रूयात् । देवाः पितरः पितरो देवाः । योऽस्मै स सन्यजे । योऽस्मि स सन् करोमि । शुनं म इष्टं शुनं शान्तं शुनं कृतं भूयात् । इति तच्च एव कश्च स सन्यजते तं तदिष्टमागच्छति । नेतरमुपनमति ॥

क्षत्रियस्य पुरोहितगोत्र ब्राह्मण्य च यज्ञे

[5]यथैवैतद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्त्येवमेवैतत्क्षत्रियस्याऽऽवेदयेत्पुरोहितस्याऽऽर्षेयेणेति ॥

अत्र शब्दो नोहितव्यः । अविकृत एव ब्राह्मणशब्दः क्षत्रियदीक्षावेदनेऽपि प्रयोक्तव्यः । यदि ब्राह्मणप्रवरोऽपेक्षितः तदानीं पुरोहितस्य ब्राह्मणस्य संबन्धिना आर्षेयेण प्रयोगः कर्तव्यः । तथा च आपस्तम्बः क्षत्रियवैश्ययोरपि ब्राह्मणशब्देनैव आवेदनं दर्शयति–'अदीक्षिष्टायं ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्तेति ब्राह्मणो वा एष जायते यो दीक्षते तस्माद्राजन्यवैश्या अपि ब्राह्मण इत्येवाऽऽवेदयति' इति । ऐब्रासा.

परोक्षमिवैष ब्रह्मणो रूपमुपनिगच्छति यत्क्षत्रियः पुरोधयैव दीक्षयैव प्रवरेणैव ॥

योऽयं क्षत्रियोऽस्ति एषोऽपि परोक्षमिव व्यवधानेनैव ब्राह्मणो भूत्वा रूपं तदीयवेषमुपनिगच्छति । पुरोधयैव पुरोहितद्वारेण दीक्षयैव दीक्षारूपसंस्कारेण च प्रवरेणैव पुरोहितगोत्रेण च ब्राह्मण्यस्य संपादितत्वादिति शेषः । ऐब्रासा.

यजमानस्य प्रवरो वक्तव्यो यज्ञे

[1]अग्ने महाँ असि ब्राह्मण भारतेति । अग्निर्वै भरतः । स वै देवेभ्यो हव्यं भरति । अथ यद्यजमानस्याऽऽर्षेयमाह । न ह वा अनार्षेयस्य देवा हविरश्नन्ति । तस्मादस्याऽऽर्षेयमाह ॥

समानगोत्रेण सहवासः

[2]ब्राह्मणे समानगोत्रे वसेत् । यत्समाने गोत्रेऽन्नाद्यं तस्योपाप्त्यै ॥

अग्निस्थापकानां पूर्वजानां ऋषीणां संबन्धेनाग्निवरणं पूर्वजपिक्रमेण

[3]ऐतद्ध वै देवा अग्निं गरिष्ठेऽयुञ्जन् यद्धोतृत्वे इदं नो हव्यं वहेति । तमेतद्गरिष्ठे युक्त्वोपामदन् वीर्यवान्वै त्वमसि, अलं वै त्वमेतस्मा असीति वीर्ये समादधतः । यथेदमप्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति तमुपमदन्ति । वीर्यवान् वै त्वमस्यलं वै त्वमेतस्मा असीति वीर्ये समादधतः । स यदत

(१) तैब्रा. ३।६।९।२.
(२) कासं. २५।१०; कसं ४०।३.
(३) मैसं. ३।८।९.
(४) मैसं १।४।११.
(५) ऐब्रा. ३४।७.

(१) ऐब्रा. ३५।५.
(२) शाब्रा. ३।२.
(३) शाब्रा. २५।१५.
(४) शब्रा. १।४।२।२–४.

ऊर्ध्वमन्वाह उपस्तौत्येवैनमेतत् । वीर्यमेवास्मिन् दधाति ॥

सामिधेन्यनुवचनानन्तरं 'अग्ने महाँ असि' इति निगदस्यानुवचनं विधित्सुः तत्प्रतिपाद्यायाः प्रशंसायाः कर्तव्यतां तदुपोद्घातत्वेन प्रतिपादयति– एतद्ध वा इति । गरिष्ठे गुरुतमे । हविर्वहनार्थे गुरुतमे तस्मिन् होतृत्वे योजयित्वा तस्योत्साहं जनयितुं उपामदन् अस्तुवन् । 'वीर्यवान् वै' इत्यादिः स्तुतिप्रकारः । अनया च स्तुत्या तं अग्निं वीर्ये सम्यक् स्थापितवन्तः । इदं लौकिकेन दृष्टान्तेन प्रतिपादयति— यथेदमिति । निगदस्यानुवचनं विधत्ते– स यदिति । अतः अस्मात् सामिधेन्यनुवचनादित्यर्थः । शब्रासा.

अग्ने महाँ असि ब्राह्मण भारतेति । ब्रह्म ह्यग्निः । तस्मादाह ब्राह्मणेति । भारतेति । एष हि देवेभ्यो हव्यं भरति । तस्माद्भरतोऽग्निरित्याहुः । एष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति । तस्माद्वेवाह भारतेति ॥

अनुवक्तव्यं निगदं पठित्वा पदशो व्याचष्टे– अग्ने महानित्यादिना । 'स त्रेधाऽऽत्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयम्' इत्यादिश्रुतेः अग्निवाय्वादित्यात्मना ब्रह्मणस्त्रेधावस्थानात् 'ब्रह्म ह्यग्निः' इति तादात्म्यप्रतिपादनम् । तस्मात् ब्रह्मणो जातत्वात् ब्राह्मण इति अग्निः स्तूयते इत्यर्थः । भारत इति पदमनूद्य द्वेधा निर्ब्रूते– एष हीत्यादिना । शब्रासा.

अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयति, अयं महावीर्यो यो यज्ञं प्रापदिति । तस्मादार्षेयं प्रवृणीते ॥

आर्षेयमित्यादि होतृकर्तृकप्रवरविधिः । शब्रासा.

परस्तादर्वाक्प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते । ज्यायसस्पतय उ चैवैतं निह्नुते । इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रः । तस्मात्परस्तादर्वाक् प्रवृणीते ॥

तत्र धर्मविशेषमाह– परस्तादर्वागिति । तस्मिन् आर्षेयप्रवरणे कूटस्थमृषिमारभ्य तत्पुत्रपौत्रादिक्रमेण अर्वाचीनं वरणं कर्तव्यं, यथा आङ्गिरसबार्हस्पत्यभारद्वाजेत्यादि । तथा च ज्यायसः, भावपरो निर्देशः, ज्यैष्ठ्यस्य पतय एवैतं निह्नुते अनेन प्रवरणेन निवेदयति । स्पष्टमन्यत् । शब्रासा.

स वै प्रवरायाश्रावयति । तद्यत्प्रवरायाश्रावयति । यज्ञो वा आश्रावणम् । यज्ञमभिव्याहृत्याथ होतारं प्रवृणा इति । तस्मात् प्रवरायाश्रावयति ॥ १ ॥

तत्र दैवहोत्रार्षेयमानुषहोतॄणां वरणं विवक्षुः आदौ तदङ्गतया आश्रावणं विधत्ते– स वै प्रवरायाश्रावयतीति । सः अध्वर्युः प्रवरार्थं आश्रावयति आश्रावयेत् । विहितमाश्रावणं प्रशंसति– तद्यत्प्रवरायेत्यादिना । आश्रावणस्य यज्ञनिर्वर्तकत्वात् यज्ञत्वम् । अथ होतारमिति । दैवं होतारं अग्निमित्यर्थः । शब्रासा.

स इध्मसंनहनान्येवाभिपद्याऽऽश्रावयति । स यद्धानारभ्य यज्ञमध्वर्युराश्रावयेत् । वेपनो वा ह स्यात् । अन्यां वाऽऽर्तिमार्च्छेत् ॥ २ ॥

आश्रावणाङ्गतया इध्मबन्धनदर्भाणां ग्रहणं विधत्ते– स इध्मसंनहनान्येवेति । एवकारो वक्ष्यमाणपक्षद्वयनिरासार्थः । विपक्षे बाधमाह– स यद्धेति । यज्ञावयवस्य कस्यचिदन्वालम्भे सति निरालम्बनत्वेन वेपनः कम्पनशीलो वा स्यात्, अन्यां वा पतनादिलक्षणां आर्तिं प्राप्नुयात् । शब्रासा.

तद्धैके वेदेः स्तीर्णायै बर्हिरभिपद्याश्रावयन्ति, इध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्ति, इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याश्रावयाम इति वदन्तः । तदु तथा न कुर्यात् । एतद्वै किञ्चिद्यज्ञस्य, यैरिध्मः संनद्धो भवति, अग्निं संमृजन्ति, तद्वेव खलु यज्ञमभिपद्याश्रावयति । तस्मादिध्मसंनहनान्येवाभिपद्याश्रावयेत् ॥ ३ ॥

तत्र केषाञ्चित् पक्षमुपन्यस्यति– तद्धैक इति । स्तीर्णायै इति षष्ठ्यर्थे चतुर्थी । तेषामभिप्रायमाविष्करोति– इदं वा इति । स्रुग्समिन्धनलक्षणस्य कार्यस्य करणात् इदं बर्हिरादिकं यज्ञस्य किंचित् अङ्गम् । स्पष्टमन्यत् । तन्निराकरोति– तदु तथेति । पक्षान्तरादस्य विशेषमाह– एतद्वा

(१) शब्रा. १।५।१।१-१३.

इति । इध्मसंनहनाग्निसंमार्जनलक्षणकार्यद्वयकरणात् एतत् इध्मसंनहनात्मकमेव यज्ञस्य किंचित् प्रशस्तमङ्गं, अतः तद्धारणपक्ष एव श्रेयानित्यर्थः । अत एव कात्यायनः आदाविध्मसंनहनान्येवाभिधाय पश्चात् पक्षान्तरं निर्दिदेश —'इध्मसंनहनान्यादायो श्रावयेत्याहास्तु श्रौषडित्यग्नीद् वेदिबर्हिरिध्मशकलमपच्छिद्यैके' ( काश्रौ. सू. ३।२१—२३ ) इति । शब्रासा.

स आश्राव्य य एव देवानां होता, तमेवाग्रे प्रवृणीतेऽग्निमेव । तदग्नये चैवैतद्देवेभ्यश्च निह्नुते । यदहाग्नेऽग्निं प्रवृणीते तदग्नये निह्नुते । अथ यो देवानां होता तमग्ने प्रवृणीते, तदु देवेभ्यो निह्नुते ॥ ४ ॥

अथ देवहोतुरग्नेर्वरणं विधत्ते– स आश्राव्येति । अग्रे आर्षेयहोतृवरण– मानुषहोतृवरणाभ्यां पूर्वम् । देवहोतारं निशिनष्टि– अग्निमेवेति । वरणस्य प्रयोजनमाह–तदग्नय इति । निह्नुते, 'नि–ह्नुङ् अपनयने' । अपनेतव्यश्चात्र तदसत्कारयुक्तोऽपराधः । तस्य क्रि( ? प्रि )यमाणत्वात् अग्नेर्निह्नवः । कथं देवानां निह्नवः स्यादिति तं प्रकारं विभज्य दर्शयति– यदहाग्नेऽग्निमित्यादिना । अग्नेर्देवहोतृत्वेन देवसंबन्धात् तद्वरणेन तेषामपि निह्नव इत्यर्थः । शब्रासा.

स आहाग्निर्देवो दैव्यो होतेति । अग्निर्हि देवानां होता । तस्मादाह, अग्निर्देवो दैव्यो होतेति । तदग्नये चैवैतद्देवेभ्यश्च निह्नुते । यदहाग्नेऽग्निमाह तदग्नये निह्नुते । अथ यो देवानां होता तमग्न आह तदु देवेभ्यो निह्नुते ॥ ५ ॥

अत्र मन्त्रपाठ एव अग्नेर्वरणं इत्याह– स आहेति । तथैव कात्यायनोऽप्याह–'अथ प्रवृणीतेऽग्निर्देवो दैव्यो होता' ( काश्रौ. सू. ३।२५ ) इत्यादिना । प्रवरविधिशेषार्थवादे यो देवाना निह्नवः संग्रहविवरणाभ्यामुक्तः, तं मन्त्रपदतात्पर्याभिधानद्वारेणापि प्रतिपादयति– अग्निर्हीत्यादिना, अग्नेर्देवहोतृत्वसमर्थनेन । शब्रासा.

देवान् यक्षद्विद्वांश्चिकित्वानिति । एष वै देवाननु विद्वान् यदग्निः । स एनाननु विद्वाननुष्ठ्या यक्षदित्येवैतदाह ॥ ६ ॥

द्वितीयं मन्त्रभागमनूद्य व्याचष्टे– देवान् यक्षदिति । विद्वान् इत्यनेन यष्टव्यदेवतापरिज्ञानं, चिकित्वान् इति परिज्ञातस्यार्थस्याविस्मरणम् । अग्नेस्तथाविधज्ञानवत्त्वं 'विद्वाँ आ वक्षि विदुषो नि षत्सि' ( ऋसं. ३।१४।२ ) इत्यादिमन्त्रेषु प्रसिद्धम् । अनुष्ठ्या अनुक्रमेणेत्यर्थः । शब्रासा.

मनुष्वद्भरतवदिति । मनुर्ह वा अग्ने यज्ञेनेजे । तदनुकृत्येमाः प्रजा यजन्ते । तस्मादाह मनुष्वदिति । मनोर्यज्ञ इत्यु वा आहुः । तस्माद्वेवाह मनुष्वदिति ॥ ७ ॥

मनुष्वदिति तृतीयमन्त्रभागगतस्य मनुष्वत्पदस्य सामर्थ्यलब्धोऽर्थः– तदनुकृत्येत्यादिः । अयमर्थः– यथा मनुः स्वकीये यज्ञे देवाननुक्रमेण इष्टवान्, एवं इमाः प्रजा अपि यजन्ते, तद्वदग्निरपि होता भूत्वा यजतु इत्यर्थः । तस्यैवाभिप्रायान्तरमाह– मनोर्यज्ञ इत्यादिना । इतिशब्दः अप्यर्थे, वैशब्दः प्रसिद्धौ । अस्मिन् पक्षे मनुष्वत् इति 'तत्र तस्यैव' (पा. सू. ५।१।११६) इति षष्ठ्यर्थे वतिः । यस्मात् मनोर्यज्ञ इत्याहुः सर्वे जनाः, अतो मनोर्यागकर्तृत्वं, मनोर्यज्ञे इव अस्मिन् यज्ञेऽपि देवान् यजतु इत्यर्थः । शब्रासा.

भरतवदिति । एष हि देवेभ्यो हव्यं भरति । तस्माद्भरतोऽग्निरित्याहुः । एष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति । तस्माद्वेवाह भरतवदिति ॥ ८ ॥

भरतवदितीति । भरतशब्दस्य अग्न्यभिधायकत्वे द्वेधा व्युत्पत्तिं दर्शयति– एष हीत्यादिना । शब्रासा.

अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयति 'अयं महावीर्यो यो यज्ञं प्रापत्' इति । तस्मादार्षेयं प्रवृणीते ॥ ९ ॥

यजमानस्यार्षेयवरणं विधत्ते– अथार्षेयमिति । अथ दैवहोतृवरणानन्तरं आर्षेयं ऋषीणां संबन्धिनं तं अध्वर्युः वृणीते वरणं कुर्यात्, अमुवदमुवदिति कीर्तयेत् । तत्प्रयोजनमाह–ऋषिभ्यश्चेति । यः यज्ञमुपक्रान्तवान् अयं यजमानः शारीरश्रुताध्ययनसंपत्त्या हि महासामर्थ्यवान् इत्येतदमुवदमुवदिति पुरातनप्रसिद्धऋषिदृष्टान्तेन गम्यते,

अतः तेभ्यः अस्य यजमानस्य सामर्थ्यमावेदितं भवति । अनान्वाधाने देवतापरिग्रहात् तत्संनिधानं सिद्धमित्यभिप्रेत्य 'ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च' इत्युक्तम् ।

शब्रासा.

परस्तादर्वाक् प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते । ज्यायसस्पतय उ चैवैतन्निह्नुते । इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रः । तस्मात्परस्तादर्वाक्प्रवृणीते ॥ १० ॥

विहितं आर्षेयवरणं अवरोहेण कर्तव्यमिति विधत्ते– परस्तादर्वागित्यादिना । ज्यायसस्पतय इति । ज्यायान् वृद्धः पूर्वमित्यर्थः, तस्य पतिः ततोऽपि ज्येष्ठः पूर्वपुरुषः । प्रत्येकविवक्षया एकवचनप्रयोगः, यः पूर्वः पूर्वः तस्मै तस्मै तत्तन्नामग्रहणेन निह्नवं कृतवान् भवतीत्यर्थः । परस्तादर्वाग्वरणमुपपादयति– इदं हीति । पिता, पुत्रः, पौत्रः, इत्यनेनैव क्रमेण उत्पत्तिरिति यत्, इदं हि लोकसिद्धं, अतस्तदनुसारेण आर्षे वरणेऽपि पूर्वपूर्वपुरुषमारभ्य अर्वाक्त्वमेव युक्तमित्यर्थः । तथा च कात्यायनः प्रवराभिधानसमये अवरोहक्रमेणैव वरणमाह– 'भृगुरच्च्यवनवदप्नवानवदूर्ववज्जमदग्निवत्' इत्यादिना ।

शब्रासा.

स आर्षेयमुक्त्वाह ब्रह्मण्वदिति । ब्रह्म ह्यग्निः । तस्मादाह ब्रह्मण्वदिति । आ च वक्षदिति । तद्या एवैतद्देवता आवोढ्वा आह ता एवैतदाहा च वक्षदिति ॥ ११ ॥

आर्षेयमिति । प्रवरशेषस्य प्रथमभागमनूद्य व्याचष्टे– ब्रह्मण्वदिति । ब्रह्म परिवृढं कर्म । तत्साधकत्वात् अग्निरपि ब्रह्म । स यथा आवहति, तद्वदित्यर्थः । आ च वक्षदिति । या एव देवताः आवोढुं आह्वातुं 'अग्निमग्न आ वह' इत्यादिना आह होता, ता एव आवहत्विति ।

शब्रासा.

ब्राह्मणा अस्य यज्ञस्य प्रावितार इति । एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचानाः । एते ह्येनं तन्वते, एत एनं जनयन्ति । तदु तेभ्यो निह्नुते । तस्मादाह ब्राह्मणा अस्य यज्ञस्य प्रावितार इति ॥ १२ ॥

तन्मन्त्रवाक्यमाह– ब्राह्मणा इति । साङ्गवेदाध्यायिनः अनूचानाः ये सन्ति, त एवात्र ब्राह्मणशब्दाभिधेया ऋत्विजः । ते प्रावितारः कर्तारः । अवतिरत्र क्रियावचनः । तन्वते इत्यस्य तात्पर्याभिधानं जनयन्ति इति । यस्मात् एतद्भागपाठात् तेभ्यो निह्नवः कृतो भवति, तस्मात् अयं मन्त्रभागः पठनीय इत्यर्थः ।

शब्रासा.

असौ मानुष इति । तदिमं मानुषं होतारं प्रवृणीते । अहोता हैष पुरा, अथैतर्हि होता ॥ १३ ॥

आर्षेयवरणानन्तरं मानुषहोतृवरणं कर्तव्यं, तत्र मन्त्रपाठ एव तद्वरणमित्याह– असाविति । तत् तेन 'असौ' इतिमन्त्रपाठेन । असौ इत्यत्र होतुर्नाम प्रथमान्तं निर्दिशेत् । तथा च कात्यायनः– 'असौ मानुष इति होतृनामग्रहणम्' ( काश्रौ. सू. ३।३१ ) इति । अहोता इति छेदः । एतर्हि एतस्मिन् मन्त्रलक्षणे वरणे सति ।

शब्रासा.

अथ प्रवरायाश्रावयति । सोऽमावेव बन्धुः ॥[1]

जुहूपभृतौ सादयित्वा प्रवरायाऽऽश्रावयेत् । आश्रावणार्थवादं प्रकृतिगतमतिदिशति– सोऽमावेव बन्धुरिति ।

शब्रासा.

सोमचमसदानं सगोत्राय

सगोत्राय ब्रह्मणे देयः सोमपीथस्याविदोहाय ॥[2]

विहितश्चमसः कस्मै कीदृशाय देय इति बुभुत्सायामाह– सगोत्रायेति । अविदोहाय अविनाशाय निर्गतफलप्रशमनत्वायेत्यर्थः । अत्र दक्षिणाविषय एव सूत्रकारः– 'संस्थितेऽहन्यृत्विग्भ्यः किंचिद्द्यात्' इति । सोमचमस एव क्रतौ दक्षिणा, तथापि ऋत्विगानमनयर्थं किंचिद्द्यादित्यर्थः ।

ताब्रा.

सामगायनसगोत्रा रक्षा

ओङ्कारस्य चोत्पत्तिर्विप्रो यो न जानाति तत्पुनरुपनयनम् । तस्माद्ब्राह्मणवचनमादर्तव्यम् । यथा[3]

( १ ) शब्रा. १।४।२।८.
( २ ) ताब्रा. १८।३।१२.
( ३ ) गोब्रा. १।१।२५.

लातव्यो गोत्रः, ब्राह्मणः पुत्रः, गायत्रं छन्दः, शुक्लो वर्णः, पुंसो वत्सः, रुद्रो देवता, ओङ्कारो वेदानाम् ॥

स्वाहा वै कुतः संभूता, केन प्रकृता, किं वाऽस्या गोत्रं, कत्यक्षरा, कतिपदा, किंपूर्वावसाना, कचित् स्थिता, किमधिष्ठाना, ब्रूहि स्वाहाया यद्दैवतं रूपं च। स्वाहा वै सत्यसंभूता, ब्रह्मणा प्रकृता, लामगायनसगोत्रा, द्वे अक्षरे, एकं पदं, त्रयश्च वर्णाः शुक्लः पद्मः सुवर्ण इति ॥

इष्टापूर्तं गोत्रोपकारकम्

आरभेथामनुसꣳरभेथाꣳ समानं पन्थामवथो घृतेन ।
यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सꣳरभेथाम् ॥

हे जायापती कर्माधिकारिणौ इह जन्मनि घृतेन द्रव्येण आरभेथां कर्मारम्भं कुरुतम्। अनुसंरभेथां परस्परमनुकूलौ संगतौ कदाचिदपि अवियुक्तावेव भवतम्। तयोरुभयोः समानं साधारणं पन्थां पुण्यलोकमार्गं अवथो रक्षतम्। वां युवयोः यत्पूर्तं पितृभ्यो दत्तं अन्नादि, यदग्नौ परिविष्टं परिप्रापितं हविः, तस्मै तदविच्छेदनं यथा क्रियेत इत्येवमर्थं संरभेथां त्वरेथा, न तु तूष्णीमासाथाम्। तच्च गोत्राय उपयुज्यते, गोत्रसंभवाः पूर्वे परे च ये सन्ति तेषां सर्वेषां इदमनुष्ठानमुपयुक्तम्।

तैआसा.

गोत्र नाम च परिचायकम्

[3]तं हाऽऽगतं पृच्छति कस्त्वमसीति। स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाऽऽह ॥

ब्राह्मण्यलिङ्गं गोत्रम्

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे। ब्रह्मचर्यं भवति विवत्स्यामि। किंगोत्रो न्वहमस्मीति ॥

सत्यकामो ह नामतः, हशब्दः ऐतिह्यार्थः, जबालाया अपत्यं जाबालः जबालां स्वां मातरं आमन्त्रयांचक्रे आमन्त्रितवान्। ब्रह्मचर्यं स्वाध्यायग्रहणाय हे भवति विवत्स्यामि आचार्यकुले, किंगोत्रोऽहं किमस्य मम गोत्रं सोऽहं किंगोत्रो नु अहमस्मीति।

शंकर.

सा हैनमुवाच। नाहमेतद्वेद तात यद्गोत्रस्त्वमसि। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नाम त्वमसि। स सत्यकाम एव जाबालो ब्रुवीथा इति ॥

एवं पृष्टा जबाला सा हैनं पुत्रमुवाच– नाहमेतत्तव गोत्रं वेद, हे तात यद्गोत्रस्त्वमसि। कस्मान्न वेत्सीत्युक्ता आह– बहु भर्तृगृहे परिचर्याजातमतिथ्यभ्यागतादि चरन्ती अहं परिचारिणी परिचरन्तीति परिचरणशीलैवाहं, परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत्। यौवने च तत्काले त्वामलभे लब्धवत्यस्मि। तदैव ते पितोपरतः, अतः अनाथा अहम्। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि, सत्यकामो नाम त्वमसि। स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः। यद्याचार्येण पृष्ट इत्यभिप्रायः।

शंकर.

स ह हारिद्रुमतं गौतममेत्योवाच। ब्रह्मचर्यं भगवति वत्स्यामि। उपेयां भगवन्तमिति ॥

तꣳ होवाच किंगोत्रो नु सोम्यासीति। स होवाच। नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि। अपृच्छं मातरम्। सा मा प्रत्यब्रवीत्। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाऽहमस्मि। सत्यकामो नाम त्वमसीति। सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥

स ह सत्यकामः हारिद्रुमतं, हरिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रतः एत्य गत्वा उवाच– ब्रह्मचर्यं भगवति पूजावति त्वयि वत्स्यामि, अतः उपेयां उपगच्छेयं शिष्यतया भगवन्तम् (इति)। इत्युक्तवन्तं तं ह उवाच

(१) गोम्रा. १।३।१६.
(२) तैआसा. २।६।२.
(३) तब्राउ. (जैउ.) ३।३।४।१.
(४) छाउ.४।४।१–५.

गौतमः—किंगोत्रो नु सोम्यासीति । विज्ञातकुलगोत्रः शिष्य उपनेतव्यः । इति पृष्टः प्रत्याह सत्यकामः । स होवाच—नाहमेतद्वेद भो, यद्गोत्रोऽहमस्मि । किं त्वपृच्छं पृष्टवानस्मि मातरम् । सा मया पृष्टा मां प्रत्यब्रवीन्माता । बह्वहं चरन्तीत्यादि पूर्ववत् । तस्या अहं वचः स्मरामि । सोऽहं सत्यकामो जाबालोऽस्मि भो इति ।

शंकर.

**तꣳ होवाच । नैतदब्राह्मणो विवक्तुमर्हति । समिधꣳ सोम्याऽऽहर । उप त्वा नेष्ये न सत्यादगा इति । तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति । ताः अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तेयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रꣳ संपेदुः ॥**

तं ह उवाच गौतमः—नैतद्वचः अब्राह्मणो विशेषेण वक्तुमर्हति आर्जवार्थसंयुक्तम् । ऋजवो हि ब्राह्मणा नेतरे स्वभावतः । यस्माच्च सत्यात् ब्राह्मणजातिधर्मात् अगाः नापेतवानसि । अतो ब्राह्मणं त्वामुपनेष्ये । अतः संस्कारार्थं होमाय समिधं सोम्य आहर, इत्युक्त्वा तमुपनीय कृशानामबलानां गोयूथान्निराकृत्य अपकृष्य चतुःशता चत्वारि शतानि गवामुवाच— इमा गाः सोम्य अनुसंव्रज अनुगच्छ । इत्युक्तस्ता अरण्यं प्रत्यभिप्रस्थापयन्नुवाच— नासहस्रेण अपूर्णेन सहस्रेण नाऽऽवर्तेय न प्रत्यागच्छेयम् । स एवमुक्त्वा गाः अरण्यं तृणोदकबहुलं द्वन्द्वरहितं प्रवेश्य स ह *वर्षगणं* दीर्घं प्रोवास प्रोषितवान् । ताः सम्यग्गावः रक्षिताः यदा यस्मिन् काले सहस्रं संपेदुः संपन्ना बभूवुः ।

शंकर.

## बौधायनश्रौतसूत्रम्

प्रवराख्यानप्रतिज्ञा

**अथातः प्रवरान् व्याख्यास्यामः ॥**

'बन्धोरेव नैत्यथो सतत्यै परस्तादर्वाचो वृणीते तस्मात्परस्तादर्वाञ्चो मनुष्यान्पितरोऽनु प्र पिपते' (तैसं. २।५।८) इति । तथा दर्शपूर्णमासयोरेव आर्षेयवरणविधिपरं वाजसनेयिब्राह्मणम्—'अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति । तस्मादार्षेयं प्रवृणीते । परस्तादर्वाक् प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते । व्यायसस्पतय उ चैवैतं निह्नुत इदं हि स पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते' (शब्रा. १।४।२।३–४) इति । तथा अन्यत्रापि प्रतिशाखमुदाहर्तव्यम् । तथा गोत्रसंबद्धान्यपि कानिचिदङ्गानि विहितानि । यथा—" 'त्वं वरुण' इति वसिष्ठराजन्यानां परिधानीया 'आजुहोत' इतीतरेषां गोत्राणाम् " इति । तथा 'नाराशंसो द्वितीयः प्रयाजो वासिष्ठशुनकानां तनूनपादितरेषां गोत्राणाम्' इति । तथा 'वासिष्ठो ब्रह्मा ज्योतिष्टोमे' इति । तथा 'भृगूणां त्वा देवानाम्' इति *भृगूणां यथर्ष्याधानं विहितम्*, 'अङ्गिरसां त्वा देवानाम्' इत्यङ्गिरसां यथर्ष्याधानमिति । तथा 'जमदग्नीनां पञ्चावत्तमन्येषां गोत्राणां चतुरवत्तम्' इति । तथा राजसूये 'भार्गवो होता भवति' इति । तथा सोमे 'आग्नेयाय प्रथमाय हिरण्यं ददाति द्वितीयाय तृतीयाय च' इत्यादीनि तत्रतत्रोदाहर्तव्यानि । तथा स्मृतिकारैरपि सर्वैः अकृताधानानामिव पतितानामिव *चाकृतविवाहानां पुंसां कर्माधिकारानर्हतां मत्वा विवाहा*-विवाहौ गोत्रप्रवरोपाधिकावेव विहितौ । यथाऽऽह याज्ञवल्क्यः—'अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् । उद्वहेत्' इति । तत्र असमानार्षजा असमानप्रवरपुरुषजा, असमानगोत्रजा भिन्नगोत्रपुरुषजा इत्यर्थः । आहाऽऽपस्तम्बः—'सगोत्राय दुहितरं न प्रयच्छेत्' इति । आह गौतमः—'असमानप्रवरैर्विवाहः' इति । तथा सगोत्रा-*गमनं गुरुतल्पसमं मत्वा गौतम एवाऽऽह*—'सखिसयोनिसगोत्रासु स्नुषायां गवि च गुरुतल्पसमं गमनम्' इति । आह बौधायनः—'सगोत्रां मत्वा चान्द्रायणं कुर्यात्' इति । आह यमः—'आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः । सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ॥' इति । तथा स्मृत्यन्तरे—'आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः । तावुभौ विद्धि चाण्डालौ सगोत्राद्यश्च जायते ॥' इति । तथा—'*मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव* च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥' इति । तथा श्राद्धे चाहाऽऽपस्तम्बः—'योनिगोत्रमन्त्रान्तेवास्य-

(१) बौश्रौप्र. ; गोप्र. ४.

संबन्धान् भोजयेत् ’ इत्येवमादीनि स्मृतिवाक्यानि तत्रतत्र द्रष्टव्यानि । यस्मादेतानि पूर्वोक्तान्यङ्गानि विवाहादीनि च कर्माणि गोत्रप्रवरतत्त्वज्ञानायत्तानि, तदभावे च यस्माद्गुरुतल्पदोषचाण्डालेत्यादिदोषप्रसक्त्या ब्राह्मण्यहानिप्रसङ्गात् मूलोच्छेदप्रसङ्गः । गोत्राणां च कोटिसंख्याश्रयपरिमितत्वाद्भूपांसूनां दिवि तारकाणामिव च दुर्ज्ञेयतां संख्यानिर्देशेन बोधायनो दर्शयति– ‘ गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥ ’ इति । अत्र सहस्राणि प्रयुतान्यर्बुदानीति तिसृषु संख्यासु बहुवचनप्रयोगाद्गोत्राणां तिस्रः कोट्यः संपद्यन्ते । तस्मात्पूर्ववृत्तात्कर्मकाण्डादनन्तरं तदपेक्षितगोत्रसमानगोत्रसमानप्रवरतत्कृताविवाहतत्त्वज्ञानाय अतो हेतोः प्रवरान् व्याख्यास्यामः, यतस्तदभावे कर्माधिकारानुपपत्तिः, कर्मप्रकरणे तेषामनुक्तत्वात् । इत्यथातःशब्दौ व्याख्यातौ । प्रवरान् व्याख्यास्यामः । सर्वेषां ब्राह्मणानां वक्ष्यमाणागस्त्याष्टमसप्तऋषिवंशपरंपराप्राप्तोपशाखासहस्रप्रयुतार्बुदानेकगोत्राणामाहिताग्नीनां सतां प्रतिपुरुषमाहवनीयस्याग्नेः हव्यवाहनाम्नः सप्तर्षीणामगस्त्याष्टमानामपत्यसंबन्धेन तत्सादृश्यसंबन्धेन वा प्रकर्षेण वरणानि प्रार्थनानि प्रवराः । ते च होतुरध्वर्योश्च विहिता द्विप्रकाराः । होतुस्तावद्यथा वत्सानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येतिपञ्चार्षेयप्रवरे पञ्चभिर्मन्त्रदृग्भिर्देवप्रसिद्धैः आहवनीयोऽग्निः संबोध्यते । तथा संबोधितोऽग्निर्देवेभ्यो हव्यं वक्ष्यति, नान्यथेति कृत्वा तमग्निं होता वृणीते प्रार्थयते । तथा तैरेव मन्त्रदृग्भिः पञ्चभिस्तद्विपर्ययक्रमेणागस्त्याष्टमसप्तर्ष्यपत्यक्रमेण सादृश्यसंबन्धेन तमेवाहवनीयमग्निमध्वर्युर्वृणीते प्रार्थयते, यथा जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अस्यायमर्थः–यथा जमदग्न्यादयो योग्यतया भोज्याभ्रतया च देवैर्ज्ञातत्वाद्देवानुद्दिश्य त्वयि हविःप्रक्षेपयोग्याः, तथाऽयमपि यजमानो वत्सस्तदपत्यत्वात्तवोत्पादकत्वेन पितृस्थानीयत्वाच्च त्वयि हविःप्रक्षेपयोग्य एवेत्याह । अध्वर्युप्रवरेऽपि स एव आहवनीयोऽग्निः प्रवियते प्रार्थ्यते । इदमेव च प्रवरपदव्याख्यानं अग्निप्रकाशनार्थसामिधेनीमन्त्रलिङ्गानि प्रवरविधायकब्राह्मणानि च दर्शयन्ति । तथाहि– सामिधेनीमन्त्रेषु ‘ अग्निं दूतं वृणीमहे ’ ‘ वृणीध्वं हव्यवाहनम् ’ इत्यादीनि मन्त्रलिङ्गानि आहवनीयस्याग्नेः प्रवरकर्मतां दर्शयन्ति, द्वितीयानिर्देशात् । तथा ‘ वृणीध्वं हव्यवाहनम् ’ इत्यस्यैव मन्त्रस्य व्याख्यानपरं तैत्तिरीयाणां दर्शपूर्णमासयोः प्रवरविधिपरं ब्राह्मणमेतमेवार्थं स्पष्टीकरोति– ‘ त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणाम् । त एतर्ह्याशंसन्ते मा वरिष्यते मामिति । वृणीध्वं हव्यवाहनमित्याह । य एव देवानां तं वृणीत । आर्षेयं वृणीते । बन्धोरेव नैत्यथो संतत्यै’ इति । अत्रापि ‘ हव्यवाहनं ’ ‘ तं ’ ‘ आर्षेयं ’ इति च तत्रतत्र द्वितीयानिर्देशात् अग्नेरेव वरितव्यतां प्रतीमः । तथा वाजसनेयिनां प्रवरविधिपरं ब्राह्मणमेतमेवार्थं प्रतिभासयति– ‘अथार्षेयं प्रवृणीत ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते’ (शब्रा. १।४।२।३) इत्यादि । अध्वर्युप्रवरविधिपरमिदं ब्राह्मणम् । अस्यायमर्थः– आर्षेयः ऋष्यपत्यमाहवनीयोऽग्निः, यजमानेनोत्पादितत्वात्, यजमानस्य ऋषिसंतानत्वात्, तं वृणीते । किमर्थमित्याशङ्क्य प्रयोजनमाह–‘ऋषिभ्यश्चैवैनं यजमानं देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापत्’ (शब्रा. १।५।१।९) इति । यस्मादेवं प्रयोजनवान् प्रवरस्तस्मादार्षेयं वृणीत इति । तस्मादा अध्यायपरिसमाप्तेः होतृप्रवरैरध्वर्युप्रवरैश्च तेषांतेषां मन्त्रदृशामपत्यसंबन्धेन सादृश्यसंबन्धेन चाग्निरेवाऽऽहवनीयः प्रार्थ्यते १ तस्य प्रकर्षेण प्रार्थनानि तैस्तैर्मन्त्रदृग्भिरेकद्वित्रिपञ्चसंख्याकैर्विशिष्टान्येकार्षेया द्व्यार्षेयास्त्र्यार्षेयाः पञ्चार्षेयाः प्रवरा इत्युच्यन्ते, न पुनः ऋषीणामेव मन्त्रदृशां प्रवरणानि प्रवरा इति ।

ननु एतस्मिन्प्रवरपदव्याख्याने सति बहूनि सूत्राणि वक्ष्यमाणानि विरुध्यन्ते । कथम् ? तथाहि–सर्वे सूत्रकारा वक्ष्यन्ति– ‘ इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोऽर्वाचो होता वृणीते ’ इति । अत्र हि मन्त्रदृशामेवैकद्वित्रिपञ्चसख्याकानामृषीणा वरणकर्मता प्रतीयते, तेषां द्वितीयानिर्दिष्टत्वात्, नाग्नेराहवनीयस्य । तथा ‘ ऊर्ध्वमासीनं होतारं वृणीते ’ ‘अग्निर्देवाना होता देवान्यक्षत् ’ इत्यत्रापि होतुरेव वरणकर्मता प्रतीयते, नाग्नेः । तत्र कथमिवाविरोध इति ।

अत ब्रूमः– पूर्वापरानभिज्ञस्येदं चोद्यम् । कथम्? तथाहि– सर्वे सूत्रकाराः 'इत ऊर्ध्वानध्वर्युर्वृणीते, अमुतोऽर्वाचो होता' इत्युक्त्वा अनन्तरं होतुरध्वर्योश्च प्रवरानाहुः– 'भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होता वृणीते, जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः' इति । न ह्यत्र ऋषीणां वरणकर्मताऽवगम्यते, तेषां तद्धितेन निर्देशात्, अध्वर्युप्रवरे च तद्वदिति वतिप्रयोगाच्च । तस्मात्तत्राप्यग्नेरेव वरणकर्मता वक्तव्येति पूर्वापराविरोधाय सूत्रान्तराविरोधाय च तानि वाक्यानि व्याचक्ष्महे– इत ऊर्ध्वानध्वर्युर्वृणीते । इतो यजमानादूर्ध्वानृषीन् संकीर्त्य तद्वत्तद्वदिति तत्साहश्यसंबन्धेनाहवनीयं वृणीत इत्यर्थः । तथा अमुतोर्वाचो होता इत्यत्रापि तानेव संकीर्त्य तदपत्यसंबन्धेन होताऽऽहवनीयमित्युभयत्राग्निरध्याहर्तव्यः । 'ऊर्ध्वमासीनं होतारम्' इत्यत्रापि होतृशब्देनाऽऽहवनीय एवाग्निरभिप्रेतः । कथम्? 'अग्निर्देवो होता देवान्यक्षत्' इत्यादिवाक्यदर्शनात् । 'अग्निर्देवो होतेति य एव देवाना तमवृणीत ततो देवा अभवन्' (तैसं. २।५।११।८–९) इति च ब्राह्मणमपि होतृशब्देन आहवनीयमेवोक्तं दर्शयति । तस्माद्यथोक्त एव प्रवरशब्दस्यार्थः ।

ते च प्रवराः पुनरपि द्विविधाः समाना असमानाश्चेति । तत्र समानाना मन्त्रदृशा ऋषीणां नामसंख्याक्रमैः समानाः प्रवरा येषा ते समानप्रवराः, यथा सावर्णिजीवन्तिजाबाल्यैतिशायनवैरोहित्यावटमण्डमाण्डव्यप्राचीनयोग्यमार्कण्डेयादिगोत्रप्रभेदानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्यस्य प्रवरस्य समानत्वात् समानप्रवरास्ते । एवं सर्वत्र । असमानप्रवरास्तु नामसंख्याक्रमाणामन्यतमेनैकेन द्वाभ्या त्रिभिर्वा भिन्नाः प्रवरा येषा त इति । तत्राविशेषेण सर्वे प्रवरा व्याख्येयत्वेन प्रतिज्ञायन्ते इति । गोप्र. २–८

सप्तर्षयोऽगस्त्यसहिता गोत्रप्रवरप्रवर्तकाः, प्रवरसंख्याभेदश्चैकत्वद्वित्वत्रित्वपञ्चत्वरूप एव

**सप्तानामृषीणामगस्त्याष्टमानां पक्षा भवन्ति ॥**

(१) बौश्रौप्र.; गोप्र. ८.



येषामिह प्रवरा व्याख्येयत्वेन प्रतिज्ञातास्ते सर्वे ब्राह्मणा एव विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपाना सप्तानामृषीणा अगस्त्याष्टमाना पक्षा भवन्ति । पक्षः वंशः वर्गः गोत्राणीत्येकार्थाः । ननु भृग्वङ्गिरसोः कस्मादिह पक्षा नोक्ताः, तेऽपि सप्तर्षिपक्षे वक्ष्यन्त एव । अत्रोच्यते– भृग्वङ्गिरसोः सप्तर्षित्वाभावात् सप्तर्षिपक्षोपदेशेनैव भृग्वङ्गिरसोः पक्षोपदेशस्य अन्यथासिद्धत्वाच्च भेदेन नोच्यन्त इति । गोप्र. ८

**त्रयः पक्षा भृगूणां पञ्चार्षेया वत्सा विदा आर्ष्टिषेणाः ॥**

यथा चैते पञ्चार्षेयास्तथा चैतान् स्वस्थाने वक्ष्यामः । गोप्र. ८

**चत्वार एवाङ्गिरसः कौमण्डा दीर्घतमा रौक्षायणा गर्गाश्च ॥**

यथा चैते नि(?)पञ्चार्षेयास्तथा स्वस्थाने वक्ष्यामः । एतत्सर्वं स्वाभिप्रायेण द्रष्टव्यं, सूत्रान्तरेषु अन्यथाऽपि दर्शनात् । गोप्र. ९

**गर्गाणां त्र्यार्षेयो विकल्पः ॥**

यथा चैवं तथा वक्ष्यामः । गोप्र. ९

**विश्वामित्रपक्षे पूरणा द्व्यार्षेयाः ॥**

**शुनकवसिष्ठा एकार्षेयाः ॥**

यथा चैवं तथा वक्ष्यामः । गोप्र. ९

**अतोऽन्ये त्रिप्रवरा भवन्ति ॥**

परिगणितेभ्यो वत्सादिभ्यो वसिष्ठान्तेभ्यो येऽन्ये वीतहव्यादयोऽगस्त्यान्ताः तिसृभिः कोटिसंख्याभिः संख्याता उत्तरत्रास्माभिर्वक्ष्यन्ते, ते सर्वे त्रिप्रवरा भवन्ति । (अयमपि स्वाभिप्राय एव, सूत्रान्तरेष्वन्यथाऽपि दर्शनात् । ?) त्रिभिर्वरणं त्रिप्रवरं, स येषा ते त्रिप्रवराः, त्र्यार्षेयप्रवराः भवन्तीत्यर्थः । स्वाभिप्रायोऽयं, एतेषामपि सूत्रान्तरेषु

(१) बौश्रौप्र., गोप्र. ८.
(२) बौश्रौप्र.; गोप्र. ९.
(३) बौश्रौप्र; गोप्र. ९.
(४) बौश्रौप्र.; गोप्र. ९.
(५) बौश्रौप्र.; गोप्र. ९.

एकार्षेयद्व्यार्षेयत्र्यार्षेयपञ्चार्षेयाणां दर्शनात् । यथा चैतदुभयं तथा वक्ष्यामः । गोप्र. ९

समानप्रवरबहुत्वे एव भृग्वङ्गिरसामविवाहः

**[१]एतेषु भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवः स्युरिति मतं बोधायनस्येति ॥**

अस्य सूत्रस्य द्विविधं व्याख्यानम् । एकं तावदुच्यते — एतेषु परिगणितेषु गोत्रेषु भृगवः अङ्गिरसश्च जमदग्निगौतमभरद्वाजव्यतिरिक्ता भृगुत्वेनाङ्गिरस्त्वेन चाभिन्ना अपि सन्तो भिन्नविवाहं कुर्वते । भिन्नवद्विवाहो भिन्नविवाहः, भिन्नश्चासौ विवाहश्चेति ( वा ) भिन्नविवाहः । यथाऽगस्त्याष्टमसप्तर्षिपक्षीयाः परस्परभिन्नगोत्रीयाः स्वं स्वं पक्षं विहाय पक्षान्तरीयैः भिन्नगोत्रैः सह विवाहं कुर्वते, तथा भृग्वङ्गिरसो जमदग्निगौतमभरद्वाजव्यतिरिक्ता वीतहव्यशुनकमित्रयुववैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धादयो भृगुत्वेनाङ्गिरस्त्वेन चाभिन्ना अपि स्वं स्वं गणं विहाय गणान्तरीयैः सह विवाहं कुर्वते इत्यर्थः ।

अपरा व्याख्या— 'अभिन्नविवाहं कुर्वते' इति सूत्रच्छेदः । *अस्यायमर्थः— भृगवो भृगुत्वेनाभिन्ना अपि* स्वं स्वं गणं विहाय गणान्तरीयैर्भृगुभिरेवाभिन्नविवाहं कुर्वते । अभिन्नानां विवाहोऽभिन्नविवाहः । एवमङ्गिरसोऽपि । तत्र भृग्वङ्गिरसोः सप्तर्षिबाह्यत्वेन तत्पक्षीयाणां गोत्राभावेन गोत्रसमानत्वाभावात् मिथो विवाहे नास्ति दोषः, असमानप्रवरत्वात्, असमानगोत्रत्वाच्च । एवं सप्तर्ष्यपत्यबाह्यानां भृग्वङ्गिरसां परस्परविवाह उक्तः । अत्रैव विशेषमाह— 'न चेत् समानार्षेया बहवः स्युः' इति । पञ्चार्षेयाणामृषित्रयसमानत्वं समानर्षिबहुत्वं, यथा आर्ष्टिषेणाना विदानां च । त्र्यार्षेयाणामृषिद्वयसमानत्वं समानर्षिबहुत्वं, यथा हरितकुत्सानाम् । तदुभयं येषां भृग्वङ्गिरसां नास्ति ते परस्परं विवाहं कुर्वत इत्यर्थः । बोधायनग्रहणमात्मनः पूजार्थं, यथा जैमिनीये सूत्रे 'जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात्' (जैसू. १२।१।७) इत्यत्र जैमिनिग्रहणं, तद्वत् । इतिकरणमध्यायसमाप्त्यर्थम् । गोप्र. ९–१०

( १ ) बौश्रौप्र. ; गोप्र. ९ ; संप्र. ६०५ ( एतेषु० ) ( इति मतं बोधायनस्येनि० ) .

होतुरध्वर्योश्च प्रवरनिर्देशक्रमो भिन्नः

**[१]अथातोऽत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोर्वाचो होतेत्येष एवोभयोः सर्वत्रोद्देशः ॥**

*अथ* प्रवरकर्तव्यतोपदेशानन्तरं *अतो* हेतोः, यतो विज्ञाते क्रमविशेषे होतुरध्वर्योश्च वरणमग्निप्रार्थनं बहूनां मन्त्रदृशां वरणं कर्तुं शक्यते, नाविज्ञाते, अतः क्रमविशेष उच्यते— अत ऊर्ध्वानित्यादिना । अयमर्थः— अतो यजमानादूर्ध्वान् मन्त्रदृग्भिरव्यवहितान् ( आ ) मूलभूतादृषेः क्रमेण संकीर्त्य तद्वत्तद्वदिति सादृश्यसंबन्धेनाऽऽहवनीयं प्रवृणीते प्रार्थयते, यथा वत्सानां जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अमुतोऽर्वाचो होता — अमुतो मूलभूतादृषेरारभ्यार्वाग्भूतान् मन्त्रदृशः अध्वर्युप्रवरक्रमविपर्ययक्रमेण तदपत्यसंबन्धेन प्रार्थयते तमेवाग्निं, यथा भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । एवमुभाभ्यां प्रार्थितोऽग्निर्यजमानयोग्यतां ज्ञात्वा तदीयं हविः देवेभ्यो दास्यति । यथा कर्माङ्गभूतानामृत्विजां वरणं तत्प्रार्थनं, यजमानेन प्रार्थिताः सन्तः कर्माङ्गानि करिष्यन्तीति, तथा होतुरध्वर्योश्च वरणमग्निप्रार्थनं, ताभ्यां प्रार्थितोऽग्निर्देवेभ्यो हव्यं वहतीति । एष एव प्रवरक्रमविशेषो होतुरध्वर्योश्चाध्यायपरिसमाप्तिपर्यन्तं सर्वत्रोपदेष्टव्यः । गोप्र. १०

अविवाहकारणं समानप्रवरत्वम्

**[२]द्व्यार्षेयसंनिपातेऽविवाहस्त्र्यार्षेयाणाम् । त्र्यार्षेयसंनिपातेऽविवाहः पञ्चार्षेयाणाम् ॥ [३]*असमानप्रवरैर्विवाहः ॥**

* सूत्रमिदं मञ्जर्यामव्याख्यातत्वात् सर्वैर्निबन्धकारैरस्योद्धारेऽपि बौधायनीयत्वस्य केनाप्यनुक्तत्वाच्च प्रक्षिप्तं भवेदिति संभावयामः ।

( १ ) बौश्रौप्र. ; गोप्र. १० ; संप्र. ६००,६०३ तोऽर्वाचो ( तोऽर्वाञ्चो ).

( २ ) बौश्रौप्र. ; स्मृच. ६८ ; मपा. १३७ ; गोप्र. ११ ; संप्र. ६०५,६१० ; मुक्ता. १२६ ; सिन्धु. १०३४ ; श्रान. १६९.

( ३ ) बौश्रौप्र. ; गोप्र. ११. एतत्सदृशमेव गौतमधर्मसूत्रे ४।२ सूत्रं वर्तते ।

'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवः स्युः' इति उक्तमधस्तात्। अनेन सूत्रेण भृग्वङ्गिरसामविवाहकारणभूतं समानत्र्यार्षेयत्वमाह। त्र्यार्षेयाणां भृगूणां द्व्यार्षेयसंनिपातादविवाहः, समानर्षित्राहुल्यात्। अङ्गिरसामपि हरितानां कुत्सानां च त्र्यार्षेयाणां द्व्यार्षेयसंनिपातादविवाहः। संनिपातः समत्वम्। तथा पञ्चार्षेयाणां भृगूणामार्ष्टिषेणानां वत्सानां बिदानां च त्र्यार्षेयसंनिपातादविवाहः। गोप्र. ११

अविवाहकारणं सगोत्रत्वम्

**एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते। तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् इति ॥**

गोत्रलक्षणमुपरिष्टाद्वक्ष्यति—'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः॥ सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते॥' इति। यत्तु पाणिनीयं गोत्रलक्षणं 'अपत्यं पौत्रप्रभृति गोत्रम्' इति, तस्य अपत्यमात्रविषयत्वेन सामान्यत्वात् बोधायनीये गोत्रलक्षणे अगस्त्याष्टमसप्तर्ष्यपत्यविषये पर्यवसानं, अन्यथा चण्डालादेरपत्यमपि पौत्रप्रभृति गोत्रं प्रसज्यत इत्यतिव्याप्तिप्रसङ्गात्, इत्यस्य बोधायनीयस्य सूत्रस्य व्याख्यानावसरे भविष्यति।

(१) बौश्रौप्र.; उ. २।११।१६ मन्यत्र भृग्वङ्गिरसां (मन्यद्भृग्वङ्गिरो), स्मृच. ६८ अन्यत्र भृग्वङ्गिरसां गणात् (ऋते भृग्वङ्गिरोगणात्); प्रपा ३०९; मपा १३७ स्मृचवत्; गोप्र. ११; गभा ९७ स्मृचवत्; संप्र. ५९३ प्रथमपादत्रयम्, ५९६ प्रतीकमात्रम्, ५९७ प्रथमपादत्रयम्, ६०७ प्रतीकमात्रम्, ६०९ प्रथमपादत्रयम्; चम १००; मुक्ता १२६ मन्यत्र भृग्वङ्गिरसां गणात् (मन्यत्राङ्गिरसो भृगो), संम. ५४, मिन्धु. १०३३, प्रद. १०७ भृग्वङ्गिरसां गणात् (भृग्वङ्गिरोगणात्), विपा. ७०० अन्यत्र... गणात् (भृगुमङ्गिरस विना) प्रवरसूत्रकार; ज्योनि. १३२ यावत्प्र (यैत्र प्र) उत्तरार्धं स्मृचवत् (=): १३३ सूत्रकार; संकौ. १८०; श्रान. १६९ स्मृचवत्, बाल. १।५३ पृ. १८५ अन्यत्र भृग्वङ्गिरसां गणात् (विना भृग्वङ्गिरोगणात्); संग. १७७ यावत्प्र (यैत्र प्र) उत्तरार्धं विपावत्, प्रवरसूत्रकार; कुभ. १०२९ प्रदवत्, चतुर्थः पादः; संर. ४१५.

गोत्रस्वरूपसिद्धप्रकारेण समानगोत्रलक्षणोपदेशपरमिदं सूत्रम्। अस्यायमर्थः— एक एवागस्त्याष्टमसप्तर्षिगोत्राणां अगस्त्याष्टमसप्तर्ष्यपत्यात्मना विसृभिः कोटिसंख्याभिः संख्यातानां वक्ष्यमाणानां प्रवरेष्वेकद्विनिपञ्चार्षेयेषु निय- माणतया सत्तया चानुवर्तते, तावतां गोत्राणां समानगोत्रत्वमुक्तं विज्ञेयम्। एतदुक्तं भवति— अगस्त्याष्टमानां सप्तर्षीणामन्यतममृषिमेकं वा सद्वितीयं वा सतृतीयं वा सपञ्चमं वा ये प्रवृण्वते, ते सर्वे समानगोत्रा इति। तत्रायं विशेषः— 'अन्यत्र भृग्वङ्गिरसां गणात्' इति। अयमर्थः— जमदग्निव्यतिरिक्तानां भृगूणां गणात् गौतमभरद्वाजव्यतिरिक्तानां अङ्गिरसां गणाच्चान्यत्र। गणादित्येकवचनं जात्यपेक्षं, गणेभ्योऽन्यत्र। अगस्त्याष्टमसप्तर्ष्यपत्यानां गणेष्वेवैकर्ष्यनुवृत्त्या समानगोत्रत्वमुक्तं विज्ञेयम्। जमदग्निगौतमभरद्वाजव्यतिरिक्तानां तु भृग्वङ्गिरसामगस्त्याष्टमसप्तर्ष्यपत्यबाह्यत्वेन गोत्रत्वासंभवात् गोत्रसिद्धप्रकारपूर्वकं समानगोत्रत्वं नास्तीति मत्वा 'अन्यत्र भृग्वङ्गिरसां गणात्' इति पर्युदासः कृतः।

ननु अप्राप्तौ प्राप्तौ कथं पर्युदासः? प्राप्त्यपेक्षत्वात्तस्य। सत्यमेवम्, अस्यत्रापि भ्रान्तिनिमित्ता अन्यत्र प्राप्तिः। कथम्? अगस्त्याष्टमसप्तर्ष्यपत्यभूतान् वत्सादीन् गोत्रशब्दं प्रयुञ्जानान् दृष्ट्वा तत्परमार्थविवेकाग्रहणात् मित्रयुवशुनकहरितरथीतरमुद्गलादयोऽपि सप्तर्षिबाह्या गोत्रशब्दं प्रयुञ्जते— मित्रयुवगोत्रोऽहमित्येवम्। इत्थं भ्रान्तिनिमित्तां प्राप्तिमपेक्ष्य पर्युदासः कृतः 'अन्यत्र भृग्वङ्गिरसां गणात्' इति।

अथवा पर्युदासस्य प्राप्त्यपेक्षैव नास्ति, एकवाक्यत्वात्। यथा 'यज्ञेषु येयजामहं करोति, नानूयाजेषु येयजामहं करोति' इत्यत्रैकवाक्यत्वात् पर्युदास इत्युक्तम् 'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' इति बाधलक्षणे, तद्वत्।

जमदग्निगौतमभरद्वाजानां त्रयाणां भृग्वङ्गिरसामपि सतामगस्त्याष्टमसप्तर्ष्यन्तर्भावादेव गोत्रत्वसिद्धेः समानगोत्रत्वं युक्तमेवेति न तत्रायं पर्युदासः। इममेव च पर्युदासाभिप्रायं उपरिष्टात् बोधायनः स्वयमेव दर्शयिष्यति— 'वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः',

‘ गौतमानां सर्वेषामविवाहः ’, ‘ भरद्वाजानां सर्वेषामविवाहः’ इति त्रिभिरेभिः सूत्रैः । ये तु सतर्प्यपत्यन्नाद्या वीतहव्यशुनकवाध्यश्ववैन्यहरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धाद्याः तद्विषयमिदं सूत्रत्रयमधस्तादुक्तम्—‘भृग्वङ्गिरसो मिथविवाहं कुर्वते न चेत्समानार्षेया बहवः स्युः’ इति, ‘ द्व्यार्षेयसंनिपातेऽविवाहस्त्र्यार्षेयाणाम् ’, ‘त्र्यार्षेयसंनिपातेऽविवाहः पञ्चार्षेयाणाम् ’ इति । इतिकरणमध्यायसमाप्तिद्योतनार्थम् ।

गोप्र. ११–१२

*पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेव शेषेष्वेकोऽपि वारयेत् ॥

सगोत्रागमने प्रायश्चित्तम्, सगोत्राया भगिनीवद्रक्षणम्,
सगोत्राया गर्भोऽदुष्टः कश्यपसगोत्रः,

सगोत्रां गत्वा चान्द्रायणं चरेत् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेत् मातृवद्भगिनीवत् । गर्भो न दुष्यति । कश्यप इति विज्ञायते । अथ संनिपाते विवाहं तदध्यायैर्वर्जयेत् । बौधायनस्य तत्प्रमाणं हि कर्तव्यम् । मानव्यो हि प्रजा इति च विज्ञायते ॥

समानगोत्रामित्यत्र समानप्रवरां चेति द्रष्टव्यं, उभयोः प्रतिषेधाविशेषात् । चान्द्रायणमित्यत्रापि प्रतिगमनं चान्द्रायणमिति द्रष्टव्यं, पुष्कलनिमित्तसद्भावात् । ‘ब्राह्मणीं न त्यजेत्’ इत्यनेन दोषदुष्टतया प्राप्तत्यागप्रतिषेधः । ‘ मातृवद्भगिनीवत् ’ इत्यत्रापि सहशयनमैथुनादिभावे च मातृभगिनीगमनतुल्यदोषप्रायश्चित्तादिभाक्त्वं विवक्षितम् । ‘ गर्भो न दुष्यति ’ इत्यत्र अबुद्धिपूर्वकृतगर्भो विवक्षितः, बुद्धिपूर्वगमनजनितस्य गर्भस्य चाण्डालत्वस्मृतेः–‘आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः । सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ॥ ’ इति । कश्यप इति विज्ञायत इति । अस्यायमर्थः— स गर्भः सगोत्रायामुत्पन्नोऽपि तदन्यगोत्रेऽपि (१) गोत्रतः कश्यपो भवतीति विज्ञायते श्रूयते शाखान्तरे । ततः श्रुतिप्रामाण्यात् अन्यगोत्रस्यापत्यमन्यगोत्रं भवतीत्यवगन्तव्यमित्यभिप्रायः । ‘ संनिपाते विवाहं तदध्यायैर्वर्जयेत्, बौधायनस्य तत्प्रमाणं हि कर्तव्यं, मानव्यो हि प्रजा इति विज्ञायते ’ इत्यनेन सूत्रेण समानगोत्राणामिव समानप्रवराणामपि अविवाहानामुक्तत्वात् अवक्तव्यत्वाद्वक्तव्यस्या( व्योऽस्या )यमर्थः— वत्स[?] यज्ञवाहान्तानां एकोनपञ्चाशदध्यायसूत्रेषु प्रत्यध्यायं [?] उक्तेषु गोत्रगणेषु प्रवरेषु सत्सु यावतां गोत्रगणानामेकस्मिन्नध्याये संनिपातः सहपाठः तावतां गोत्राणामन्यतमगोत्रविशेषः पुरुषः तदध्यायैर्विवाहं तदध्यायपठितैः सह विवाहं वर्जयेत्, समानप्रवरत्वादित्यर्थः । बोधायनस्य मतमिति चेदं पूर्वोक्तमतमिहापि स्मारयति । यदुक्तं पूर्वम्—

* श्लोकोऽयं मञ्जर्यामदर्शनात्, पौनरुक्त्यदोषात्, कतिपयैर्निबन्धकारैः संग्रहकारीयत्वेनोद्धृतत्वाच्च बौधायनीयो न स्यादिति प्रतिभाति । डॉ. कॅलण्डमहोदयसंपादिते महाप्रवराध्याये इतिकारान्तस्यास्य सत्त्वं तु ‘ एक एव ऋषिर्यावत् ’ इतिपूर्वश्लोकान्तेऽपि मञ्जरीव्याख्यानस्याध्यायसमाप्तिद्योतकस्येतिकारस्य सत्त्वात्संदिग्धप्रामाण्यम् ।

( १ ) बौश्रौप्र. ; स्मृच. ६८ संग्रहकारः; मपा. १३७ द्वयोः ( द्वये ) संग्रहकारः ; गमा. ९७ ; प्रर. ९८ ष्वेव ( ष्वेवं ) ; संप्र. ५९१ प्रवत्, प्रवरनिर्णयकाराः स्मरन्ति : ५९४ प्रवत् ( = ) : ६०६ प्रवत् , संप्रदी : ६२० प्रथमं पादत्रयम् ( = ) ; धम. ९८ प्रवत् ; संम. ५६ प्रवत् ; सिन्धु. १०३४ पञ्चानां ( पञ्चार्षे ) माधवीये स्मृत्यन्तरे ; प्रद. १०८ प्रवत्, माधवीये स्मृत्यन्तरे ; ज्योनि. १३२ प्रवत्, प्रवरमञ्जर्याम् ; संकौ. १८० प्रवत्, पादत्रयम् , स्मृनि : १८३ प्रवत् ( = ) ; याल. १।५३ ( पृ. १७९ ) द्वयोः ( द्वाग्निषु ) ष्वेव ( ष्वेवं ) वारयेत् ( वार्येत् ) ( = ) ; संग. १७७ प्रवत् , स्मृत्यन्तरे ; संव. १४३ प्रवत् ; संर. ४१८ प्रवत् ( = ) ; कृभ. १०३५ (=) निर्देशमात्रम्. प्रा. कॅलण्डमहोदयेन मुद्रिते बौधायनश्रौतसूत्रप्रवराध्याये अयं श्लोकः पठितः । गोत्रप्रवरमञ्जर्यां समुद्धृतबौधायनीयप्रवराध्याये तु नायं श्लोकः समुपलभ्यते ।

( २ ) बौश्रौप्र. विवाहं तदध्यायैः ( विवाहस्तदध्यायं ) ; उ. २।११।१६ गोत्र (उपदिशेत्) दुष्यति (दुष्यतीति) कश्यप (काश्यप) विवाहं तदध्यायैः ( अविवाहः तदध्यायं ) हि कर्तव्यम् ( कर्तव्यम् ) इति च ( इति ) ; गोप्र. ९७ चरेत् ( कुर्यात् ) इति च ( इति ) ; यौवि. २।२।३८ सगोत्रां......चरेत् ( सगोत्रां सगोत्रां गत्वा चान्द्रायणं कुर्यात् ) ( अथ संनिपाते......विज्ञायते० ) ; कृभ. १०६० ( व्रतपरिनिष्ठिते ब्राह्मणीं त्यजेन्मातृवद्भगिनीवत् ) एतावदेव : १०६१ ( गर्भस्तु काश्यपः, भोगे ( ? ) न दुष्यति काश्यप इति विज्ञायते । ) एतावदेव.

'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत् समानार्षेया बहवः स्युरिति मतं बोधायनस्य' इति, तदिहापि स्मारयति। सप्तर्ष्यपत्यबाह्यानां केवलभृग्वङ्गिरसामेव समानप्रवरतया विवाहप्रतिषेधः, न सप्तर्ष्यपत्यानां, तेषां समानगोत्रत्वादेव अविवाहसिद्धेः प्रतिषेधानर्थक्यप्रसङ्गादिति। बोधायनग्रहणमुक्तप्रयोजनम्। यत्तु बोधायनमतं तत् मानुषीभिः सर्वाभिः प्रजाभिः प्रमाणमेव कर्तव्यम्। कुत इति चेत्– मनुतुल्यत्वाद्बोधायनस्य। मनुमतं च मानवीभिः प्रजाभिरनुष्ठेयम्। कुत इत्यत्र हेतुमाह– मानव्यो हि प्रजा इति च विज्ञायते इति। एवं विज्ञायते श्रूयते तैत्तिरीयश्रुतौ अग्निप्रकरणे– 'शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनं शमयति मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजा मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीनित्याहैभ्य एवैनं लोकेभ्यः शमयति' ( तैसं. ५।१।५।६ ) इति।

गोप्र. ९७–९८

गोत्रसंख्या प्रवरसंख्या च

**गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च।**
**ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्॥**

'गोत्राणां तु सहस्राणि' इत्यनेन गोत्रसंख्यामाह तेषामतिदुर्ज्ञेयतां तारकाणां भूपांसूनामिव दर्शयितुम्। कीदृशी पुनरियं संख्या ? उच्यते– 'सहस्राणि' इत्यत्र बहुवचनात् त्र्युत्तराणि सहस्राणि प्रतीमः। तत्र सहस्रं दशगुणितं अयुतं, अयुतं दशगुणितं नियुतं, नियुतं दशगुणितं प्रयुतं, प्रयुतं दशगुणितं अर्बुदमित्युच्यते। तत्र सहस्रप्रयुतार्बुदेषु त्रिष्वपि त्रिगुणितेषु कृतेषु गोत्राणां तिस्रः कोटिसंख्याः सम्पद्यन्ते, यदि तु बहुवचनानि त्रीणि त्रिसंख्यायामेव पर्यवसितानि। यदा पुनरधिकान्यपि गोत्राणि विषयीकुर्वन्ति तदा कियन्त्यः कोटिसंख्या गोत्राणामिति न विद्मः। तत्र कथमेतावता गोत्राणां परस्परं विवेक. शक्योऽवगन्तुमित्यभिप्रायः।

अत्राह– 'श्लोकोक्तसर्वगोत्राणां कोटिसंख्यात्रयं श्रुतम्। पठितानां त्वसपूर्णं सहस्रत्रयमञ्जसा॥ ऊनपञ्चाशदेवेति प्रवराश्चावधारिताः। अधिकाश्चापि पठ्यन्ते केचित्कात्यायनादिभिः॥ व्यामोहयन्ति नः सर्वे गुरवः शरणं गतान्। आचार्यवचनं सिद्धं प्रमाणं वेदवाक्यवत्॥ तस्मात्तदर्थसिद्ध्यर्थं गोत्रसंख्या निरूप्यताम्॥' अत्र ब्रूमः– इह सर्वे प्रवराचार्याः सर्वेषु गोत्रगणेषु गोत्रगणाननुक्रम्य इतिशब्दमन्ते प्रयुञ्जते 'इत्येते वत्साः' 'इत्येते आर्ष्टिषेणाः' 'इत्येतेषामविवाहः' इति च। तत्र इतिशब्दस्य इत्थंशब्दपर्यायत्वादधिकशब्दाद्ययमर्थो गम्यते– 'एवमादयो वत्साः', 'एवमादयः आर्ष्टिषेणाः', 'एवमादीनामविवाहः' इति, अन्यथा इतिशब्दानर्थक्यात्। भरद्वाजगणे कतिचिद्गोत्रभेदाननुक्रम्य 'ये चान्ये स्तम्बस्तम्भशब्दाः' इति ब्रुवन् बोधायनः अनुक्तानपि गोत्रभेदान् दर्शयन् आत्मीयश्लोकोक्तां गोत्रसंख्यां पूरयति। तथा आपस्तम्बोऽपि तस्मिन्नेव भरद्वाजगणे कानिचिद्गोत्राण्यनुक्रम्य प्रवरं च तेषामुक्त्वा 'सर्वेषां स्तम्बशब्दानामेष प्रवरः' इति ब्रुवन् तामेव संख्यां पूरयति। तथा कात्यायनोऽपि कतिचिद्गोत्राण्यनुक्रम्य 'ये चान्ये तच्छब्दाः' इति ब्रुवन् अकथितान्यपि गोत्राणि ( अपि ? ) दर्शयति। तस्मात् पूर्वेष्वेव गोत्रगणेषु श्लोकोक्तगोत्राण्यपि कोटित्रयसंख्यानेना (ख्यातान्य)-न्तर्भूतानि पश्यन् तेषां दुर्ज्ञेयताविवक्षया 'गोत्राणां तु सहस्राणि' इति गोत्रसंख्यामुपदिष्टवानाचार्यः। ऊनपञ्चाशदेवेति स्वपाठाभिप्रायेण व्याख्येयम्। ऋषिदर्शनादित्युभयत्रापि हेतुः। पूर्वत्रानुक्तानामेतावत्संख्याकानां ऋषीणां मन्त्रार्थवादेतिहासपुराणादिषु दर्शनादिति पूर्वत्र। एतावन्त एव प्रवरा इति पूर्वाचार्यदर्शनात् इत्युत्तरत्र। तस्मात् साधूक्तम्– 'गोत्राणां तु सहस्राणि' इति। अत्र श्लोकाः– 'पुपूरयिषवः स्वोक्तं गोत्रकोटित्रयं बुधाः। तत्र तत्र प्रतिगणमितिशब्दं प्रयुञ्जते॥ एवमादीनि गोत्राणीत्येवमर्थमिह स्थितम्। ग्राहयन्नितिशब्दोऽयमर्थमानेव नान्यथा॥ इति ज्ञात्वाऽधिकशतमितिशब्दं

( १ ) बौश्रौप्र., उ. २।११।१६, पमा. ५७६ तु ( च ) देवैषां ( देतेषां ), गोप्र ६, ९७; संप्र. ५९२ पू.: ६१५; चम. १०० पमावत्; संम. ५५ पमावत्, सिन्धु. १०३५–३६; संकौ. १७९ तु ( च ) पू.; प्रका. ३४८, संर. ४१६; संदी. ७ ( भागः २ ).

प्रयुज्यते । ऊनपञ्चाशदेवेति स्वोक्तप्रवरसंख्यया ॥ तस्मात् साधूक्तमेवैतत्सूत्रकारैरिति स्थितम् ॥ '

गोप्र. ९८–१००

गोत्रलक्षणम्

[1]विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥
[2]तेषां सप्तर्षीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते ॥

' विश्वामित्रो जमदग्निः ' इत्यादिना गोत्रलक्षणमाह । न हि अविज्ञाते गोत्रस्वरूपे समानगोत्रतासिद्धिः । यदपत्यमित्यत्र अपत्यग्रहणमपत्यसामान्याभिप्रायम् । एतदुक्तं भवति–अगस्त्याष्टमसप्तर्षीणां मध्ये यस्य यस्य सप्तर्षेरपत्यापत्यसंततिपरम्पराशाखोपशाखाप्रभवं यद्यदपत्यं ऋषित्वं प्राप्तं तत्तस्य गोत्रमित्युच्यते इति । यथा विश्वामित्रगोत्राणि देवरातादीनि कतान्तान्यपत्यानि, जमदग्निगोत्राणि मार्कण्डेयादीन्य( दीनाम ? )पत्यानि, भरद्वाजस्य क्षम्यायणादीन्यपत्यानि द्रष्टव्यानि ।

अपरे तु विपरीतं गोत्रलक्षणमाहुः–– ' अगस्त्याष्टमानां यदपत्यं तत् गोत्रमित्युच्यते ' इति । यथा –– देवरातादीनां गोत्रं विश्वामित्रः । मार्कण्डेयादीनां जमदग्न्यादीनि गोत्राणीति । एतदुक्तं भवति– अगस्त्याष्टमसप्तर्षीणामष्टौ ऋषयः अष्टौ गोत्राणि सर्वेषामन्येषामिति । महाजनव्यवहारश्चैतदेव गोत्रलक्षणं सूचयति ' विश्वामित्रगोत्रा वयं, अत्रिगोत्रा वयं, भरद्वाजगोत्रा वयम् ' इत्येवमादिः । पूर्वव्याख्याने च ' विश्वामित्रगोत्राणि वयं, वसिष्ठगोत्राणि वयम् ' इत्येव व्यवहारः स्यात् । श्रुतिलिङ्गमप्येवमेव दृश्यते – गौतमः सत्यकामं पृच्छति ' किंगोत्रोऽसि सौम्य ' इति, उत्तरमपि ' नाहमेतद्वेद तात यद्गोत्रोऽहमस्मि ' इति । पूर्वव्याख्याने तु ' कस्य गोत्रं त्वमसि ' इति प्रश्नः स्यात्, उत्तरमपि ' नाहमेतद्वेद तात यस्य गोत्रमहमस्मि ' इति स्यात् । तस्मादिदमेव गोत्रलक्षणं शोभनम् । तथा अभियुक्तव्यवहारोऽपि दृश्यते – ' गोत्रं च तेजसां भानुः सिन्धुवत् सकलाना लवणानाम् ' इति ।

अत्र ब्रूमः–बोधायनमतानभिज्ञस्येदं चोद्यम् । कथम् ? ' गोत्राणां तु सहस्राणि ' इत्यधस्तने श्लोके गोत्राणि कोटित्रयसंख्यायुक्तान्युक्त्वा, कानि तानि गोत्राणि ? इत्यपेक्षायाम् ' विश्वामित्रो जमदग्निः ' इत्यादिना विश्वामित्रादीन्यगस्त्यान्तान्यष्टौ गोत्राणीत्युक्ते पूर्वापरविरोधादसंगतं स्यात् । अस्मदीये पुनः पक्षे नास्ति कश्चिद्दोषः । लोकव्यवहारः श्रुतिलिङ्गं चोभयमपि गोत्रशब्दस्योभयलिङ्गत्वात् अविरुद्धं पुत्रशब्दवत् । यथा च वसिष्ठस्य पुत्रः कुण्डिनः, तथा वसिष्ठस्य गोत्रः कुण्डिन इति ।

यदेतत्पाणिनीयं गोत्रलक्षणम् ' अपत्यं पौत्रप्रभृति गोत्रम् ' इति, तदपि अगस्त्याष्टमसप्तर्ष्यपत्यविषयमेवेति द्रष्टव्यम् । तस्य सामान्यत्वात् बोधायनीयगोत्रलक्षणस्य विशेषत्वात् सामान्यविशेषयोश्च गोबलीवर्दन्यायेन एकगोत्रोपसंहारो न्याय्यः । इतरथा चाण्डालाद्यपत्यमपि गोत्रं प्रसज्यत इत्यतिव्याप्तिदोषः स्यात् । उपसंहारे च न दोषः । तस्मात् बोधायनीयमेव गोत्रलक्षणम् ' अगस्त्याष्टमानां यदपत्यं तद्गोत्रम् ' इति ।

अत्रापीदं चिन्त्यम्– किमिदं गोत्रलक्षणं अगस्त्याष्टमसप्तर्ष्यपत्यमात्रविषयम् ? उत स्वित् ऋषिविषयमेव ग्राह्यं, अगस्त्याष्टमसप्तर्षीणां यदपत्यमृषित्वं प्राप्तं तद्गोत्रमिति । तत्रापत्यमात्रविषयत्वे सति तदपत्यसंततिजातानां

---

( १ ) बौश्रौप्र. ; प्रपा. ३०९ ; गोप्र. ११ सप्त ऋषयः ( सप्तर्षयः ) : ९७ ; सिन्धु. १०२९ ; प्रद. १०६ सप्त ऋषयः ( सप्तर्षयः ), विपा. ७०१ ; संकौ. १७९ ; ज्योनि. १३३ प्रदवत् ; प्रका. ३४८ ; संग. १७७ ; संर. ४१५.

( २ ) बौश्रौप्र. ; प्रपा. ३०९ ( सप्तर्षीणां अगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते । ) ; गोप्र. ११ तेषां सप्तर्षीणां ( सप्तानामृषीणां ) : ९७ तेषां सप्तर्षीणां ( सप्तानां सप्तर्षीणां ) ; संप्र. ५९१ अनुवादरूपेण ; चम. ९९ ( तेषां० ) मित्युच्यते ( मिति ) ; संम. ५४ ( एतेषामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते । ) ; प्रद. १०६ ( सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रम् । ), विपा. ७१५ ( एषामष्टानामृषीणां यदपत्यं तद्गोत्रमुच्यते ) ( = ) ; संकौ. १७९ ( सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते । ) ; प्रका. ३४८ संकौवत् ; संग. १७७ संकौवत् ; संर. ४१५ संकौवत् ; संदी. ५ ( भागः २ ) अनुवादरूपेण.

ऋषीणामनृषीणां च भूतभविष्यद्वर्तमानाना च संख्यातीतत्वात् 'गोनाणां तु सहस्राणि' इति श्लोकोक्तगोत्रसंख्या बाध्येत, महाजनव्यवहारश्च । न हि देवदत्तस्यापत्यं देवदत्तस्य गोत्रं यज्ञदत्तस्यापत्यं यज्ञदत्तस्य गोत्रमित्यादि व्यवहरन्ति । नापि यज्ञदत्तस्य पुत्रीं यज्ञदत्तस्य पुत्रं भिन्नगोत्रं मत्वा विवाहयन्ति । सप्तर्ष्यपत्यमाने गोत्रे सति तथा व्यवहरेयुः, तथा विवाहयेयुः । तस्मादगस्त्याष्टमसप्तर्ष्यपत्यव्रातमहासमुद्रान्तर्गतानामृषीणामेव मन्त्रदृशाममन्त्रदृशा च गोत्रत्वमत्र लक्षयितव्यमिति द्रष्टव्यं, अव्याप्त्यतिव्याप्त्योरभावात्, लोकव्यवहारानुगुण्याच । तथाहि लोकव्यवहारः— मार्कण्डेयगोत्रा वयं, याज्ञवल्क्यगोत्रा वयं, शालङ्कायनगोत्रा वयं, आपस्तम्बगोत्रा वयं, आश्वलायनगोत्रा वयं इत्यादि । याज्ञवल्क्यो येषा गोत्रं मूलकारणं ते याज्ञवल्क्यगोत्रा इति बहुव्रीहित्वात् पुंलिङ्गेन निर्देशाश्च 'सर्वे समानगोत्राः स्युरिति गाणगारिः' 'अपि नानागोत्राः स्युरिति शौनकः' इत्याद्या उ(अनु ?)पपन्ना एव भवेयुरिति साधूक्तमगस्त्याष्टमाना सप्तानां सप्तर्षीणा यदपत्यं तद्गोत्रमिति । अत्राहुः— कस्येयमृषिसंज्ञा ? किं तदृषित्वं नाम ? इति वक्तव्यमिति । अत्र ब्रूमः— गर्भाधानादिभिश्चत्वारिंशता संस्कारैः संस्कृतानामष्टभिरात्मगुणैश्चालङ्कृतानामगस्त्याष्टमापत्यानां मध्ये यस्तपसि सातत्येन क्रियमाणे जगत्प्रसिद्धः स ऋषिरित्युच्यते । तथाहि वाजिनाममिरहस्ये श्रुतिः— 'असद्वा इदमग्र आसीत् । तदाहुः किं तदसदासीदिति । ऋषयो वाव तेऽग्रेऽसदासीत् । तदाहुः के ते ऋषय इति । प्राणा वा ऋषयः । ते यत्पुराऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसाऽऽरिषँन् । तस्मादृषयः' (शत्रा, ६।१।१।१) इति । अत्र ऋषयः जगत्प्रसिद्धिं गतवन्त इत्यर्थः । इत्थंलक्षणकानामृषीणा मध्ये ये महत्त्वेन जगति प्रसिद्धाः ते महर्षय इत्युच्यन्ते, 'महर्षीणां भृगुरहम्' इति दर्शनात् । इत्थंलक्षणकानामृषीणा मध्ये येषामनेकजन्मान्तरेषु वेदाभ्यासतदर्थज्ञानतदर्थानुष्ठानसंस्कारकिणीकृतचेतसा संप्रदायमन्तरेण सुप्तोत्थितानामिव जन्मान्तराभ्यस्ता मन्त्रा ब्राह्मणानि च प्रतिभान्ति ते मन्त्रदृश इत्युच्यन्ते । तथा च तैत्तिरीयाणा स्वाध्यायब्राह्मणे ब्रह्मयज्ञविधेरर्थवादश्रुतिः— 'अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत्त ऋषयोऽभवन् तदृषीणामृषित्वम्' इति । ब्रह्म स्वयंभ्वभ्यानर्षदित्यस्यायमर्थः— वेदो नित्योऽप्याविर्बभूव इति । तेषामेव एकद्वित्रिपञ्चमन्त्राकानां प्रवरणं तदपत्यानामधस्तादवोचाम । इत्थंलक्षणकाना मन्त्रदृशा मध्ये येषामतीतानागतवर्तमानसमस्तवस्तुविज्ञप्तिरस्ति ते मुनय इत्युच्यन्ते, 'बाल्यं च पाण्डित्यं च निर्विद्याऽथ मुनिर्भवेत्' इति श्रुतेः, 'मननान्मुनिः' इति निर्वचनात् 'वाल्मीकिर्मुनिपुङ्गवः' 'मुनीनामप्यहं व्यासः' इति दर्शनात् इत्यलमतिप्रसङ्गेन । तस्मात् अगस्त्याष्टमाना सप्तऋषीणा पुत्रपौत्रप्रभृति यदपत्यमृषित्वं प्राप्तं मन्त्रदृक् अमन्त्रदृग्वा तत् तस्य गोत्रं मतम्, यथा जमदग्नेर्मार्कण्डेयादि, यथा विश्वामित्रस्य देवरातादि । एवमष्टानामृषीणां यथायथं पुत्रपौत्राद्यपत्यमृषित्वं प्राप्तं तत्तस्य गोत्रमिति द्रष्टव्यम् । गोत्रऋषीणां यदपत्यं पुत्रपौत्रादिकमृषित्वं प्राप्तं तस्यापि तदेव गोत्रम् । एतदुक्तं भवति — अगस्त्याष्टमसप्तर्ष्यपत्यानामृषीणां गोत्रत्वमुभयथाऽभिमतं, गोत्रशब्दस्य संबन्धिवचनत्वात् पुत्रशब्दवत्, पित्रादीनामृषीणा पुत्रादीनामृषीणां तदेव गोत्रमिति । एवं च सति 'मार्कण्डेयगोत्रा वयं, विश्वामित्रगोत्रा वयम्' इत्यादिलोकव्यवहारः, 'सर्वे समानगोत्रा इति गाणगारिः' 'अपि नानागोत्राः स्युरिति शौनकः' इत्याद्याः सूत्रकारव्यवहाराः, 'किंगोत्रो नु सौम्य' इत्यादीनि श्रुतिलिङ्गानि चोपपन्नानि भवन्ति पुत्रादीन् प्रति गोत्रत्वे, तथा पित्रादीन् प्रति गोत्रत्वे 'अपत्यं पौत्रप्रभृति गोत्रम्' इति पाणिनीयसूत्रं, 'अगस्त्याष्टमाना यदपत्यं तद्गोत्रम्' इति च बोधायनीय सूत्रमुपपन्नार्थं भवतीति स्थितमेतदगस्त्याष्टमानां सप्तर्षीणामपत्यमृषिसंज्ञं पित्रादीना पुत्रादीना च गोत्रमिति ।

भवन्ति चात्र श्लोकाः— 'अपत्यं पौत्रप्रभृति गोत्रमित्याह पाणिनिः । सप्तर्ष्यगस्त्यापत्यं तु गोत्रं बोधायनोऽब्रवीत् ॥ पाणिनीयं तु सामान्यं विशेषे पर्यवस्यति । बोधायनीये, तदपि सामान्यमृषिसंज्ञकम् ? ॥ सप्तर्ष्यगस्त्यापत्यं यदृषिसंज्ञं तदुच्यते । गोत्रमित्येष पिण्डार्थो गोत्रलक्षणयोर्द्वयोः ॥ ऋषीणां प्रवरानुक्त्वा पूर्वं बोधायनः

पुनः । गोत्राणां त्वित्यतः श्लोकाद्गोत्राणां वरणं ब्रुवन् ॥ ऋषीणामेव गोत्रत्वं पूर्वोक्तस्यार्थमब्रवीत् । आर्षेयवरणं चोक्त्वा गोत्राणां वरणं ब्रुवन् ॥ ऋषीणामेव गोत्रत्वं पूर्वोक्तमवदत्स्फुटम् । सतर्ष्यगस्त्यापत्यानां गोत्रत्वं द्विविधं मतम् ॥ पित्रादीनां च तद्गोत्रं पुत्रादीनां च तन्मतम् । उभयान् प्रति गोत्रत्वं गोत्रिणामिति गृह्यताम् ॥ अगस्त्याष्टमसतानां बहुशो गोत्रकारताम् । वदन् मत्स्यो हरिस्तेषां सगोत्रत्वं ब्रवीति नः ॥ '

गोप्र. १००–१०३

प्रवरज्ञानप्रयोजनम्

**नं भवत्ययाजनीयो यः प्रवरान्स्वान् परांश्च विजानाति । मन्त्रो ब्राह्मणं वेद इत्याचक्षते । तस्मात्प्रवरज्ञाने यत्नो महान् द्विजैः कार्यः । श्राद्धं विवाह ऋत्विजो देवाः स्तोत्रं गोत्रमूलानि च महाप्रवरे संतिष्ठन्ते । नित्यं पर्वणिपर्वणि स्वाध्यायी ब्रह्मलोके महीयते ब्रह्मलोके महीयत इति ॥**

न भवत्ययाजनीय इत्यनेन गोत्रप्रवरविज्ञानं सर्वपापनाशकं दर्शयति । कथम्? अयाज्ययाजनं नाम महापातकादपि गुरुतरपापं गौतमवाक्यादवगम्यते । यथा प्रायश्चित्तनिमित्तानि वदन् 'अथैतदयाज्ययाजनमनृतवचनं शिष्टस्याक्रिया प्रतिषिद्धसेवनम्' (गौध. १९।३) इत्यत्र विहिताकरणप्रतिषिद्धसेवनयोरन्तर्भूतमपि अयाज्ययाजनं पृथगेव प्रथममेव वदति दोषगौरवं पश्यन् । तदपि पापं गोत्रप्रवरविदा नास्तीत्यर्थः । मन्त्रब्राह्मणमित्यादिना प्रवराणां मन्त्रब्राह्मणयोरन्तर्भावात् प्रवरशास्त्रेषु तात्पर्यं कर्तव्यमित्याह । श्राद्धविवाहादीनि गोत्रान्तानि महाप्रवरे संतिष्ठन्ते इति वदन् महाप्रवराध्यायं स्तौति । तथाहि 'महतोत्साहनीयत्वान्महद्भिश्च परिग्रहात् । महाफलप्रदत्वाच्च महाप्रवर उच्यते ॥' नित्यं पर्वणीत्यनेन स्वाध्यायाविरुद्धेषु पर्वसु प्रवराध्यायान् पठतो ब्रह्मलोकावाप्तिलक्षणफलं दर्शयति । ननु ब्रह्मज्ञानादृते ब्रह्मलोकप्रापकं नास्ति, 'नान्यः पन्था विद्यते' इति श्रुतेः । मैवं वोचः, पञ्चाग्निविज्ञानस्य दर्शनात्, केवलकर्मणां च दर्शनात् । यथाऽऽह गौतमः– 'यस्यैते चत्वारिंशत् संस्कारा अष्टौ चाऽऽत्मगुणाः स ब्रह्मणः सायुज्यं गच्छति' (गौध. ८।२२) इति । अथवा नित्यकर्मणामङ्गत्वात् प्रवराणां, नित्यकर्मणां च मुक्तिहेतुत्वात् तद्द्वारेण मुक्तिसाधनमित्यदोषः । अथवा वसिष्ठप्रभृतीनां ब्रह्मविदां ब्रह्मकल्पानां संकीर्तनजनितात् पुण्योपचयादेव ब्रह्मज्ञानफलत्वेन ब्रह्मलोकप्राप्तिरिति सर्वमनवद्यम् ।

गोप्र. १०३–१०४

(१) बौश्रौप्र.; गोप्र. ९७ (न भवत्ययाजनीयो यः परप्रवरान् स्वांश्च जानाति । मन्त्रब्राह्मणं वेद इत्याचक्षते । तस्मात्प्रवरज्ञाने यत्नो महान् द्विजैः कार्यः । श्राद्धविवाहवृद्धयो देवाः स्तोत्रगोत्रमूलानि च महाप्रवरे संतिष्ठन्ते । नित्यं पर्वणि स्वाध्यायी ब्रह्मलोके महीयते इति ॥).

## आपस्तम्बश्रौतसूत्रम्

प्रवरव्याख्यानप्रतिज्ञा

**प्रवरान् व्याख्यास्यामः ॥**

सत्रानन्तरं तदर्थं होतृप्रवरा अध्वर्युप्रवराश्चानुक्तत्वाद्वक्ष्यन्ते– प्रवरानिति । प्रज्ञातबन्धूनां यैरग्निर्व्रियते ते प्रवराः । तानेतान् विस्तरेण प्रवरान् प्रपञ्चेन वक्ष्यामः ।

कपर्दि.

प्रवरकीर्तन बन्धुभिरपत्यसंतत्या च संबन्धस्य पालनम्

**आर्षेयं वृणीते । बन्धोरेव नैत्यथो संतत्या इति विज्ञायते ॥**

आर्षेयं ऋष्यपत्यसंबन्धं प्रार्थयते संकीर्तयति । अथवा आर्षेयमृषेरपत्यमग्निं यजमानोत्पादितत्वात् यजमानस्य ऋषिसंतानत्वात् । तं वृणीते प्रार्थयते होत्रादिरिति । एवं पूर्वऋषिसंबन्धात् नैव च्यवते । अथो अपि च संतत्यै आत्मनः पूर्वेषां च संतानायेति ।

कपर्दि.

ऋषिरूपाः प्रवराः

**न देवैर्न मनुष्यैरार्षेयं वृणीते, ऋषिभिरेवाऽऽर्षेयं वृणीत इति विज्ञायते ॥**

अपि च विज्ञायते– न देवैः प्रजापत्यादिभिः आर्षेयं वृणीते । न च मनुष्यैर्देवदत्तादिभिः आर्षेयं वृणीते ।

(१) आपश्रौ. २४।५।१–७; गोप्र. १३.

ऋषिभिरेव मन्त्रद्रष्टृभिः वसिष्ठादिभिरार्षेयं वृणीते । कपर्दि.

**आर्षेयमन्वाचष्टे, ऋषिणा हि देवाः पुरुषमनुबुध्यन्त इति विज्ञायते ॥**

अथापरं विज्ञायते— आर्षेयं प्रवरमन्वाचष्टे ऋष्यानुपूर्वीमन्वाचष्टे । कस्मात्? ऋषिणा पूर्वतनेन देवास्तदपत्यं पुरुषमनुबुध्यन्ते जानते हीति । कपर्दि.

स्वीया मन्त्रकृत एव ऋषयः प्रवरणीयाः

**यो वा अन्यः सन्नथान्यस्याऽऽर्षेयेण प्रवृणीते स वा अस्य तदपरिष्टं वीतं वृङ्क्त इति विज्ञायते ॥**

अपि च विज्ञायते— यो वै यजमानोऽन्यगोत्रः सन् अन्यस्याऽऽर्षेयेण प्रवृणीते स वा ऋषिः अस्य यजमानस्य तदिष्टं *यागफलं* वीतं *ब्राह्मणतर्पणादिफलं वृङ्क्ते* गृह्णातीति । कपर्दि.

**त्रीन् वृणीते, मन्त्रकृतो वृणीते, यथर्षि मन्त्रकृतो वृणीत इति विज्ञायते ॥**

त्रीन् वृणीते । मन्त्रकृतो मन्त्रदृशः, मन्त्राणा करणाशक्तेः, कृतौ चानित्यत्वप्रसङ्गात् । यो यो यस्य ऋषिः *यथर्षि मन्त्रकृतो* वृणीते । इति *विज्ञायते श्रुतौ* । कपर्दि.

प्रवरसंख्याभेदश्चैकत्वद्वित्वत्रित्वपञ्चत्वरूप एव

**अथैकेषामेकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीत इति विज्ञायते ॥**

(१) अथैकेषां शाखिनां श्रुतौ श्रूयते— आर्षेयं वृणीते, एकमृषिं वृणीते इति । अथ द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातीत्य षडादीन् वृणीते । कपर्दि

(२) अथैकेषां शाखिनां श्रुतौ श्रूयते— एकमार्षेयं वृणीते, एकमृषिं सङ्कीर्त्य तदपत्यमग्निं वृणीते । तथा द्वौ वृणीते, त्रीन्वृणीते इत्यत्रापि । चतुरो न वृणीते । पञ्चातीत्य षडादींश्च वृणीते । अयमर्थः— आर्षेयवरणस्य मन्त्रदृक्त्व (दृग्वत्त्वं) विशेषणत्वेनोक्तमधस्तात् । अतश्चात्मीयाना मन्त्रदृशा यथेष्टसंख्याकानामनियमेन वरणप्राप्तौ सत्या 'न चतुरो वृणीते' 'न पञ्चाति वृणीते' इति चतुर्णामतिपञ्चाना च वरणप्रतिषेध इति वर्णयन्ति । तत्र 'आर्षेयं वृणीते' इति विहिते वरणे 'एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते' इति संख्या *विदधाति वाक्यत्रयमस्यां श्रुतौ* इति कृत्वा कल्पसूत्रकारा इमामेव श्रुतिमवलम्ब्य प्रवर्तन्ते । या तु पूर्वोदाहृता श्रुतिः— '*त्रीन् वृणीते, मन्त्रकृतो वृणीते, यथर्षि मन्त्रकृतो वृणीते*' इति, तत्र 'त्रीन्वृणीते' इत्येतावन्मात्रं विधिः । इतरेषां कश्चिदुपक्रमः कश्चिदनुत्यानुवादः कश्चित् प्रतिषेध इति मत्वैनामेव श्रुतिमवलम्ब्य न्यायविद्भिराचार्यैरधिकारलक्षणे षष्ठेऽध्याये न्यार्षेयस्यैवाधिकारो निरूपितः 'अन्यार्षेयस्य हानं स्यादधिकारात्' इत्यत्र । कल्पसूत्रकाराणां च बहुत्वात् प्रयोगशास्त्रकारत्वाच्च जैमिनेरेकत्वादेकस्य बहूनां मतविरोधे सति बहूना मतमनुसर्तव्यमिति मत्वा प्रयोगार्थिनो वैदिकप्रयोगशास्त्रकारा नेवानुगता इति । गोप्र. १५

होतुरध्वर्योश्च प्रवरनिर्देशक्रमो भिन्नः

**इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होतेति विज्ञायते ॥**

इत आर्षेयादारभ्य ऊर्ध्वानार्षेयानध्वर्युर्वृणीते, यथा— जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति । अमुतो मूलप्रकृतेरारभ्य अर्वाचः अर्वाक् जातान् होता वृणीते, यथा— भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । एवं सर्वत्र । कपर्दि.

राज्ञः पुरोहितप्रवरः

**पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते ॥**

पुर एन दधातीति क्षत्रियवैश्ययोर्दार्ष्टिहोमिकः अभिजनविद्यावृत्तसहितः, तस्य प्रवरेण राजा अभिषिक्तः प्रवृणीते । दर्शपूर्णमासयोरत्र च वचनात् ब्राह्मणोऽपि राज्यं प्राप्तः पुरोहितस्य प्रवरेण प्रवृणीते । कपर्दि.

---

(१) आपश्रौ. २४।५।८ इत (*अत*) ; गोप्र. १२ ; संप्र. ६०० तोऽर्वाचो (तोऽर्वाञ्चो).

(२) आपश्रौ. २४।५।९ ; गोप्र. १२.

स्वीया मन्त्रकृत एव ऋषयः प्रवरणीयाः

[1]त्रीन् यथर्षि मन्त्रकृतो वृणीते ॥

वरणस्य पुनस्त्रित्वविधानात् द्विपितुरपि त्रय एव व्रियन्ते, न षट्। एक एकतो द्वावेकतः । यदि पञ्च, द्वावेकतस्त्रय एकतः, शुङ्गशैशिरिदर्शनात् । धूभा.

प्रवरसंख्याभेदश्चैकत्वद्वित्वत्रित्वपञ्चत्वरूप एव

अपि वैकं द्वे त्रीन् पञ्च ॥

न चतुरो वृणीते, न पञ्चाति प्रवृणीते ॥

होतुरध्वर्योश्च प्रवरनिर्देशक्रमो भिन्नः

इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता ॥

राज्ञः पुरोहितप्रवरः

पुरोहितस्य प्रवरेण राजा वृणीते ॥

## सत्याषाढश्रौतसूत्रम्

होतुरध्वर्योश्च प्रवरनिर्देशक्रमो भिन्नः

[2]इत ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीते यथर्षि मन्त्रकृतो वृणीत इति विज्ञायते ॥

यजमानस्य प्रवरगणे ये मन्त्रकृतः ऋषयः श्रूयन्ते तानूर्ध्वानितः प्रथमोत्पन्नप्रवरिणमृषिमारभ्येत्यर्थः । तथाहि कौशिके यजमाने ' मनुष्वद्भरतवत् ' इत्युक्त्वा 'कुशिकवदघमर्षणवद्विश्वामित्रवत्' इति वदेत् । ततो ' ब्रह्मण्वदा च वक्षत् ' इत्यादि । अध्वर्युग्रहणमग्नीन्निवृत्त्यर्थम् । वैज.

अमुतोऽर्वाचो ( ऽर्वाञ्चो? ) होतेति विज्ञायते ॥

होतृप्रवरे प्रसङ्गादाह– अमुत इति । अमुतः तृतीया-दर्वाचः(ञ्चः?), अर्वागञ्चन्तीत्यर्वाञ्चः, तानर्वाचः(ञ्चः?) विपरीतान् पश्चादुत्पन्नप्रभृतीन् पूर्वपूर्वान् । वैज.

द्विगोत्रस्य प्रवरनिर्देशरीतिः

[3]द्विगोत्रस्य त्रींस्त्रीनेकैकस्माद्गोत्रादुपलक्षयेत् ॥

उपलक्षयेत् उच्चारयेत् । वैज.

प्रवरनिर्देशक्रमः

[4]अथ प्रवरं प्रवृणीते । यथा यजमानस्याऽऽर्षेयं सह परेण त्रीननन्तरानमुतोऽर्वाच इत्यामन्त्रणेन भार्गववासिष्ठेति ॥

(१) आपश्रौ. २४।६।६–१०. (२) सश्रौ. २१।५१–५२. (३) सश्रौ. २१।५६. (४) सश्रौ. २१।२।८.

ऋषेरपत्यमार्षेयं आत्मीयगोत्रर्षीन् तद्धितप्रत्ययान्तानामन्त्रितविभक्त्या यथाप्रवरं वृणीते । अग्ने महाँ असि ब्राह्मण भारत भार्गवच्यावनाप्नवानौर्वजामदग्न्येति भृगुगोत्राणां पञ्चार्षेयप्रवर इति । अनेन तत्तदपत्यतयाऽग्निरुपचर्यते । अस्मिन् प्रकरणे प्रकारविशेषं विधत्ते– ' परस्तादर्वाचो वृणीते ' (तैसं. २।५।८।७) इति । वर्तमानं यजमानमपेक्ष्य पूर्वभावी यो गोत्रप्रवर्तकस्तमारभ्य तदपत्यपरम्परयाऽर्वाचो नीचान् वृणीते । तथैव पूर्वमुदाहृतम् – भृगोरपत्यं च्यवनस्तस्यापत्यमप्नवानस्तस्यापत्यमौर्वस्तस्यापत्यं जमदग्निस्तस्य संततिर्यजमान इति । तदेतदर्वाक्त्वम् । प्रच.

प्रवरसंख्याभेदश्चैकत्वद्वित्वत्रित्वपञ्चत्वरूप एव

* विज्ञायते एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चाति प्रवृणीत इति ॥

प्रवरव्याख्यानप्रतिज्ञा

[2]प्रवरान् व्याख्यास्यामः ॥

अथ गोत्रप्रवरनिर्णयः । तत्र बोधायनः– ' विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥ सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते ' इति । अत्रापत्यपदं केवलपुत्रापत्यपरं न भवति, किंतु पौत्रादिपरमपि । अत एव पाणिनिः– ' अपत्यं पौत्रप्रभृति गोत्रम् ' ( पा. सू. ४।१।१६२ ) इत्याह ।

ननु केवलभृगुगणेषु यस्कादिषु केवलाङ्गिरोगणेषु हरितादिषु च सप्तर्ष्यपत्यत्वाभावात् गोत्रत्वं न स्यादिति चेत् , न, ' एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसा गणात् ॥ ' इति बौधायनोक्तपर्युदासानुपपत्त्या तत्सिद्धेः । प्राप्तिसंभावनायां हि पर्युदासो भवति । यथा ' यजतिषु येयजामहं करोति ' इति सामान्यवाक्यादनूयाजेषु येयजामहप्राप्तिसंभावनायां ' नानूयाजेषु ' इत्यनेन ' अनूयाजव्यतिरिक्तेषु ' इत्येवं

* ' विज्ञायते ' इत्ययमंशः आदर्शपुस्तके पूर्वसूत्रान्ते मुद्रितः, स एवास्माभिः सङ्गतिलोभेनात्र समाकृष्यत ।

( १ ) सश्रौ. २१।२।९.

( २ ) सश्रौ. २१।३।१ ; चम. ९९ ; संर. ४१६.

पर्युदासः क्रियते, तथाऽत्रापीति । ' सप्तानामृषीणा-मगस्त्याष्टमानां यदपत्यं तद्गोत्रम् ' इति सूत्रं तु न लक्षणप्रदर्शकं, किंतु अयोगव्यावृत्तिमात्रप्रदर्शकमिति न पूर्वोत्तरसूत्रविरोधः । अत एव विज्ञानेश्वरमाधवमदनपारि-जातादिषु ' गोत्रं वंशपरम्पराप्रसिद्धम् ' इत्युक्तम् । उक्तं च भट्टपादैरपि— ' समानेऽपि ब्राह्मण्ये कुण्डिनोऽत्रिरिति स्मरणलक्षणं गोत्रम् ' इति । एवं च ' यन्नाभियुक्तानां गोत्रत्वप्रसिद्धिः तद्गोत्रं इत्येव निर्दिष्टं गोत्रलक्षणं मन्त्रत्वा-दिवत् सिद्धं भवति । एतेन वसिष्ठादीनां गोत्रत्वानुपपत्तिः अस्मदादीनां परंपरया तदपत्यत्वेन गोत्रत्वापत्तिश्च परिहृता भवति । यानधिकृत्य प्रवरा आम्नातास्तादृशा गणा ऊनपञ्चाशत् । तथा च बोधायनः— ' गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥ ' इति ।

अथ प्रवरसूत्रं प्रदर्श्यते । तत्र प्रतिज्ञासूत्रम् — प्रवरान् व्याख्यास्याम इति । एतच्च प्रतिज्ञानमग्निमाणा भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्यादीनां 'प्रवरः' इति-संज्ञासिद्ध्यर्थम् । प्रव्रियन्ते अग्नेर्विशेषणत्वेनोत्कीर्त्यन्ते इति प्रवराः । तान् व्याख्यास्यामः एकत्र संगृह्य कथयि-ष्यामः । अग्नेर्विशेषणत्वेनोत्कीर्तनं तु ' अग्ने महाँ२ असि ब्राह्मण भारत ' ( तैत्रा. ३।५।३।१ ) इत्यादीष्टिमन्त्रेषु प्रतिपादितम् । विवाहे उत्कीर्तनं तु स्वविशेषणत्वेनैव, अन्यस्यासंभवात् । विवाहे आर्षगोत्रोच्चारणं तु वाच-निकम् । तच्च सप्रवरत्वसगोत्रत्वशङ्कानिवारणार्थमदृष्टार्थं च भवति । शान्त्यादिकर्मसु तु वाचनिकं कुत्रचित्, कुत्रचिदाचारप्राप्तम् । प्रच.

प्रवरकीर्तनं बन्धुभिरपत्यमनत्या च सम्बन्धस्य पालकम्

**आर्षेयं वृणीते, बन्धोरेव नैत्यथो संतत्या इति विज्ञायते ॥**

*प्रवरणं कर्तव्यमित्यस्मिन्नर्थे श्रुतिं प्रदर्शयति— आर्षेय-*मिति । आर्षेयं ऋषेरपत्यं आहवनीयाग्निं यजमानेनो-त्पादितत्वात् यजमानस्यर्षिसंतानत्वात् तं वृणीते प्रार्थयते तद्गोत्रत्वायेति । एवं सति बन्धोरेव नैति पूर्वर्षिसंबन्धाच्च च्यवते । अथो अपि च संतत्यै पूर्वेषां पूर्वजानामात्मनश्च *संतानायेति विज्ञायते, श्रुतिरिति* शेषः । प्रच.

ऋषिरूपाः प्रवराः

**न देवैर्मनुष्यैरार्षेयं वृणीते, ऋषिभिरेवाऽऽर्षेयं वृणीत इति विज्ञायते ॥**

देवैर्मनुष्यैश्च आर्षेयवरणं न कर्तव्यं, किंतु ऋषिभि-रेवेत्येतदर्थे श्रुतिं दर्शयति— न देवैरिति । न देवैः प्रजापत्यादिभिरार्षेयं वृणीते, न वा मनुष्यैर्विद्वद्भिर्देव-दत्तादिभिः आर्षेयं वृणीते, किंतु ऋषिभिर्वसिष्ठादिभि-र्मन्त्रदृग्भिरेवाऽऽर्षेयं वृणीत इति विज्ञायते, श्रुतिरिति शेषः । प्रच.

**आर्षेयमन्वाचष्टे, ऋषिणा हि देवाः पुरुषमनु-बुध्यन्त इति विज्ञायते ॥**

आर्षेयोच्चारणकर्तव्यताविषये श्रुतिं दर्शयति— आर्षेय-मिति । आर्षेयमन्वाचष्टे । कस्मात् ? ऋषिणा पूर्वजेन कीर्तितेन देवप्रसिद्धेन तदपत्यं पुरुषं देवा अनुबुध्यन्ते *भोज्यालोऽयं तदपत्यत्वादिति जानन्ति हीत्यर्थः ।* प्रच.

स्वीया एव ऋषयः प्रवरणीयाः

***यो वा अन्यः सन्नन्यस्याऽऽर्षेयं वृणीते स वा अस्य तदपिरिष्टं वीतं वृङ्क्त इति विज्ञायते ॥***

स्वस्याऽऽर्षेयवरणं परित्यज्य अन्यस्याऽऽर्षेयवरणे दोष इत्येतदर्थे श्रुतिं दर्शयति— यो वा इति । यो वै यजमानो-ऽन्यगोत्रः सन्नन्यगोत्रस्याऽऽर्षेयेण प्रवृणीते स वै स एव ऋषिरस्य यजमानस्य तदिष्टं यागफलं वीतं ब्राह्मण-तर्पणादिफलं वृङ्क्ते गृह्णातीत्यर्थः । प्रच.

प्रवरसंख्याभेदः एकत्वद्वित्वत्रित्वपञ्चत्वरूप एव

**एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चाति प्रवृणीत इति विज्ञायते ॥**

आर्षेयसंख्यानियमार्थिका चतुर्वरणपञ्चातिप्रवरणनिषे-धिका च श्रुतिं दर्शयति— एकमिति । एकमार्षेयं वृणीते

( १ ) सश्रौ. २१।३।२ ; संर. ४१६.

( १ ) सश्रौ. २१।३।३ ; संर. ४१६.
( २ ) सश्रौ. २१।३।४ ; संर. ४१७.
( ३ ) सश्रौ. २१।३।५ ; संर. ४१७.
( ४ ) सश्रौ. २१।३।६ ; संर. ४१७.

एकमृषिं संकीर्त्य तदपत्यमग्निं वृणीते । तथा द्वौ वृणीते, त्रीन्वृणीते, इत्यत्रापि । चतुरो न वृणीते पञ्चातीत्य षडादीन्न वृणीत इत्यर्थः । आत्मीयानामृषीणां बहूनामनियमेन वरणप्राप्तौ सत्या ‘ एकं वृणीते ’ इत्यादयः संख्यानियमविधयः । ‘ न चतुरो वृणीते ’ ‘ न पञ्चाति प्रवृणीते ’ इत्येतद्द्व्यामुष्यायणविषयम् । द्व्यामुष्यायणस्य गोत्रद्वयस्यापि *द्व्यार्षेयत्वे चतुर्णां वरणप्रसक्तिः, त्र्यार्षेयत्वे तु षण्णां, पञ्चार्षेयत्वद्व्यार्षेयत्वादिसंनिपाते सप्तादीनामपि वरणप्रसक्तिः । तन्निषेधार्थमुक्तम् ‘न चतुरो वृणीते, न पञ्चाति प्रवृणीते ’ इति । ‘ त्रीन्वृणीते मन्त्रकृतो वृणीते यथर्षि मन्त्रकृतो वृणीते ’ इति श्रुतिमनुसृत्य प्रवृत्ते ‘ अन्यार्षेयस्य हानं स्यादधिकारात् ’ (जैसू. ६।१।१११) इत्यस्मिन्नधिकरणे मीमांसकास्तु “त्रीन् वृणीते ’ इत्ययमेव विधिः । ‘ एकं वृणीते द्वौ वृणीते ’ इत्युभयमवयुत्यानुवादः, अन्यथा वाक्यभेदापत्तेः । न च ‘ त्रीन्वृणीते ’ इत्यत्रापि वाक्यभेदतादवस्थ्याद्विधित्वासंभव इति वाच्यम्, विशिष्टविधाने वाक्यभेदाभावेन विधित्वसंभवात् । स्तुत्यर्थोऽयम् ‘एकं ’ वृणीते ’ इत्यादिरनुवादः । एकवरणद्विवरणे अप्रशस्ते अपि यदा कर्तव्ये तदा त्रिवरणस्य प्रशस्तस्य कर्तव्यत्वं किमु वक्तव्यमिति स्तुतिः । चतुर्थनिषेधपञ्चातिक्रमनिषेधाभ्यामपि त्रित्वमेव स्तूयते । न च तयोर्निषेधो विधातव्यः, प्रसक्त्यभावादेव तदप्रवृत्तेः । चतुरादयोऽत्यन्तविलम्बकारित्वादप्रशस्ताः । त्रित्वं तु न तथेति प्रशस्तम् । तस्मात्कर्मण्यधिकुर्वन् यजमानस्त्रीनेवोचारयेत्, न न्यूनं, नाप्यधिकमिति तात्पर्यार्थः” इत्याहुः । एकार्षेगार्दीनामपि मनुवत्पक्षाश्रयणेनाधिकार इति तन्त्ररत्ने ।

‘ असमानार्षगोत्रजाम् ’ इति याज्ञवल्क्योक्तमविवाहप्रयोजकं समानप्रवरत्वापरपर्यायं समानार्षत्वं द्विविधमेकप्रवरसाम्यं द्वित्रिप्रवरसाम्यं चेति । तत्राद्यं भृग्वङ्गिरोगणव्यतिरिक्तेषु । द्वितीयं भृग्वङ्गिरोगणेषु । तत्र पञ्चप्रवराणां त्रिप्रवरसाम्यं, त्रिप्रवराणां द्विप्रवरसाम्यमविवाहप्रयोजकमिति मन्तव्यम्, ‘ पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥ ’ इति वचनात् । शेषेष्वेकोऽपि प्रवरः समानश्चेत्तद्विवाहं वारयेदित्यर्थः । प्रच.

विवाहसंबन्धे द्व्यामुष्यायणस्य गोत्रद्वये सगोत्रता विचार्या

[1]नित्यानां द्व्यामुष्यायणानां द्वयोः । दत्तकादीनां तु द्व्यामुष्यायणवत् ॥

तत्र यद्यपि यश्च प्रतिग्रहीत्रा जातकर्मादिभिश्चूडादिभिर्वा संस्कृतः स एकगोत्रः । एतदभिप्रेत्यैव ‘ गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ’ ( मस्मृ. ९।१४२) इति शास्त्रमपि प्रवृत्तम् । एतदन्यस्तु प्रतिग्रहीत्रोपनयनमात्रसंस्कृतस्तदुत्तरं प्रतिगृहीतो वा देवरातवत् द्विगोत्र एवेति व्यवस्था निबन्धकारैरुक्ता, तथाप्येषा व्यवस्थाऽभिवादनश्राद्धादिगतगोत्रनिर्देशार्था, विवाहे तु दत्तकमात्रेण बीजिप्रतिग्रहीत्रोः पित्रोः गोत्रप्रवरवर्जनं कार्यम्, प्रवरमञ्जर्यादिषु निबन्धेषु तन्निषेधोक्तेरिति कौस्तुभे ।

दत्तकमीमांसाकारस्तु– ‘ दत्तकमात्रे गोत्रद्वयवर्जनं न, किंतु द्व्यामुष्यायणे दत्तकविशेषे । तथाहि, द्विविधा दत्तकादयः, नित्यद्व्यामुष्यायणा अनित्यद्व्यामुष्यायणाश्च । तत्र नित्यद्व्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्याम् ‘ अनयोरयं पुत्रः ’ इति संप्रतिपन्नाः । अनित्यद्व्यामुष्यायणास्तु ये चूडान्तैः संस्कारैर्जनकेन सस्कृताः, उपनयनादिभिश्च प्रतिग्रहीत्रा, तेषां गोत्रद्वयेनापि संस्कृतत्वात् द्व्यामुष्यायणत्वं, परं त्वनित्यम् । जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्काराभावात्तस्य परिग्रहीतृगोत्रमेव । तदिदं सर्वमभिप्रेत्य ( आह ! ) सत्याषाढः–– ‘ नित्यानां द्व्यामुष्यायणानां द्वयोः ’ इति सूत्रेण नित्यद्व्यामुष्यायणानां गोत्रद्वये प्रवरसंबन्धमुक्त्वा तमेवानित्येष्वतिदिशति– ‘ दत्तकादीनां तद्द्व्यामुष्यायणवत् ’ इति सूत्रेण । व्याख्यातं चैतत् वामरस्वामिभिः– ‘ द्व्यामुष्यायणप्रसङ्गेनानित्यानाह– दत्तकेति । तावदेव, नोत्तरसंततौ । प्रथमेनैव संस्कारः । परिग्रहीत्रा चेत्तदोत्तरस्य, पूर्ववत्वात् । तेनैवोत्तरस्य । तथा पितृभ्येण चैकार्षेयेण ये जातास्ते परिग्रहीतुरेव ’ इति ।

* ‘ द्व्यार्षेये चतुर्णां वरणप्रसक्तिः, त्र्यार्षेये तु षण्णां, पञ्चार्षेयत्वे सर्वोपरिमिताये ’ इति मूलपुस्तकपाठः । स न शुद्धः ।

(१) सत्या. १६ ( नित्यानां..... द्वयोः ० ) ; संर. ४१२.

अस्य भाष्यस्यायमर्थः— यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसंबन्धः, नोत्तरसंततेः। जनकगोत्रसबन्धे किं कारणमित्याह— प्रथमेनेति। प्रथमो जनकः, तेनैव संस्कृतत्वात्। संस्काराश्च चौलान्ताः, 'पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः॥' इति कालिकापुराणात्। व्याख्यातं चैतत्प्रागेव— अन्यस्यासाधारणीं पुत्रतां न याति, किन्तु द्व्यामुष्यायणो भवतीति। प्रथमेनासंस्कारे कथमित्यत आह— परिग्रहीत्रा चेदिति। परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणे चौलादिसंस्कारकरणेऽपि वा उत्तरस्य परिग्रहीतुरेव गोत्रम्। तत्र हेतुः— पूर्वत्वात् संस्कारकरणे प्रथमत्वात्। द्व्यामुष्यायणसंततौ दत्तकसंततौ चापेक्षितं गोत्रमाह— तेनैवेति। परिग्रहीतृगोत्रेणैवोत्तरसंततेर्गोत्रमुभयत्रापि। सगोत्रपरिग्रहमाह— तथेति। जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः, परिग्रहसंस्कारकरणादिति। यत्तु— 'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः' इति, तत्परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम्। ये तु नित्यद्व्यामुष्यायणा दत्तकादयस्तेषां गोत्रद्वयम्, 'द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः। गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा॥' इति पारिजातस्मरणात्। गोत्रद्वये जनकगोत्रे परिग्रहीतृगोत्रे च। दत्तकादीनां च द्व्यामुष्यायणत्वे इदं वचनं, '*नित्यानां द्व्यामुष्यायणानां दत्तकादीनां द्व्यामुष्यायणवत्*' इति सत्याषाढवचनं च प्रमाणम्। प्रवरमञ्जर्यामप्यनेनैवाभिप्रायेणोक्तम्— 'दत्तक्रीतकृत्रिमपुत्रिकापुत्रादीनां यथासंभवं गोत्रद्वयं सप्रवरमस्त्येव' इति। एतावता 'द्विगोत्राणां गोत्रद्वयं सप्रवरं विवाहे वर्ज्यम्' इत्याह। तत्र युक्तं ग्राह्यम्। न चेदानींतनसूत्रपुस्तके एतत्सूत्रस्यैवादर्शनात् कथमेतस्य सत्याषाढीयत्वमिति वाच्यम्, अतिप्रामाणिकेन मीमांसाभाष्यकृता शबरस्वामिना सत्याषाढीयत्वेन धृत्वैव व्याख्यातत्वेन एतदनुरोधेन इदानीन्तनसूत्रपुस्तके एतत्सूत्रस्योच्छिन्नताया एव कल्पनात्। सकर्षकाण्डमुच्छिन्नमित्यभियुक्तप्रवादोऽप्यस्ति। द्विगोत्रस्य जनकपितृगोत्रवर्जनावधेः क्वचिदपीदानीमनुपलम्भाद्यावद्विज्ञानं वर्जनम्।

सर. ४५१-४५३

माध्यन्दिनानां विवाहे मातृगोत्रविचारः

*** [1]मातृगोत्रं माध्यन्दिनीयानाम्॥**

**[2]अपुत्रायाश्च॥**

*अपुत्रायाः सापत्नमातुरपि गोत्रं वर्जनीयम् 'अपुत्रायाश्च' इति तस्यैव स्मरणात्।* सप्र. ६८४

## आश्वलायनश्रौतसूत्रम्

प्रवरसंख्या प्रवरनिर्देशक्रमश्च

**[3]यजमानस्याऽऽर्षेयान् प्रवृणीते यावन्तः स्युः॥**

आर्षेयान् प्रवृणीते यावन्तो यजमानस्य ते भवन्ति। ते च प्रवराम्नाये व्याख्याताः। गानावृ.

**परं परं प्रथमम्॥**

अस्येम आर्षेया इयन्तः, अयं परः, अयमपरः, इत्येवमादिस्मृत्यनुसारेण प्रवराम्नाय एव वरणप्रकारः पठितः, स एवेदानीम्। इयन्तो वरीतव्याः, इत्थं वरीतव्याः, इति *विधानमन्यक्षेत्रजातद्व्यामुष्यायणार्थम्।*

गानावृ.

सत्रेषु यजमानीयगोत्रप्रवरविचारः

**[4]सर्वे समानगोत्राः स्युरिति गाणगारिः, कथं ह्याप्रीसूक्तानि भवेयुः, कथं प्रयाजा इति॥**

( १ ) *उक्तानि वैतानिकानि कर्माणि सत्रपर्यन्तानि।* तेषां मध्ये तिसृभिः कोटिभिः संख्यातगोत्राणां ब्राह्मणानां प्रतिगोत्रं प्रवराः कर्तव्यत्वेन विहिताः— 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते, पञ्च वृणीते, न पञ्चाति वृणीते' इति श्रुतिभिः। सत्रेषु बहुयजमानत्वमुक्तं, 'ऋद्धिकामाः सत्रमासीरन्' 'उपेयुः' इति च बहुवचनान्तासीतोपैति? चोदितत्वात्,

---

* एतद्वचनस्य शास्त्रार्थः मनु-व्यास शातातप-वचनव्याख्यानेषु द्रष्टव्यः।

( १ ) संप्र. ६८४; धम. ९८; संम. ५४; सिन्धु. १०५७; विपा ६९७ ( मातृगोत्रसापिण्ड्यवर्जनं माध्यन्दिनीयानामेव ); संकौ. १९६; साप्र. ८; बाल. १।५३ पृ. १७६; संग. १७३ मातृगोत्र ( मातृगोत्रसापिण्ड्यवर्जन ); संर. ४५१.

( २ ) संप्र ६८४; सिन्धु. १०५७.

( ३ ) आश्वौ. १।१।३.

( ४ ) आश्वौ. २।६।१०; गोप्र. १९; त्रिपा. ७१०.

' चतुर्विंशतिपरमाः सत्रमासीरन् ' इति च संख्याश्रुतेः । बहुषु च यजमानेषु समानगोत्राश्च संभवन्ति नानागोत्राश्च । तत्रैवं सति सत्राधिकारिणो विषयीकृत्य संदेहः– किं समानगोत्रा एव सर्वे स्युः, उत नानागोत्रा अपीति । तत्र सर्वे समानगोत्राः स्युरिति गाणगारिराचार्यो मन्यते । तत्र गोत्रस्वरूपं ( समानगोत्रत्वं च ) बौधायनोक्तं द्रष्टव्यम्– ' सप्तानां सप्तर्षीणामगस्त्याष्टमानां ( यदपत्यं तद्गोत्रमित्युच्यते' ) 'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्सामानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात् ॥' इति । तदुभयं गोत्रं समानगोत्रं( त्रत्वं )च हृदये निधाय ' सर्वे समानगोत्राः स्युः ' इति प्रतिज्ञातेऽर्थे हेतुमाह– कथं ह्याप्रीसूक्तानीत्यादिना प्रयाजा इत्यन्तेन । अयमर्थः– आप्रीसूक्तानि तावत्प्रतिगोत्रं व्यवस्थितानि– "समिद्धो अग्निः ' इति शुनकानां, ' जुषस्व नः समिधम् ' इति वसिष्ठानां, 'समिद्धो अद्य' इति ( या ! ) सर्वेषाम् " इति । तथा प्रयाजा अपि 'नाराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानिवाध्र्यश्वादीनाम् ' इति प्रतिगोत्रं व्यवस्थिताः सन्तो गोत्रनानात्वपक्षे विरुध्यमानाः समानगोत्रपक्ष एव युज्यन्ते । गोप्र. १९–२०

( २ ) सत्राण्युक्तानि, तेषां च बहुयजमानत्वमुक्तम् । बहुषु च समानार्षेया भिन्नार्षेयाश्च संभवन्ति । तत्र भिन्नार्षेयाणां सत्रासनं नास्तीति गाणगारिराचार्यो मन्यते । कुतः ? ' कथं ह्याप्रीसूक्तानि भवेयुः, कथं प्रयाजा इति ' । भिन्नार्षेयत्वे सति एवमादीनि न कथंचिद्भवेयुरित्यर्थः । अतः सर्वे सत्रिणः समानगोत्राः स्युरित्युक्तम् । आर्षेयः प्रवर इति पर्यायौ । ऋषिरिति वंशनामधेयभूता यत्नविदार्ष्टिषेणादयः शब्दा उच्यन्ते । गोत्रशब्दः ' अपत्य पौत्रप्रभृति गोत्रम् ' इत्येवं पारिभाषिकोऽप्यस्ति । अन्यथा च पारिभाषिक एवास्ति । यथोक्तं भगवता बौधायनेन ' विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥ ( सप्तानामृषीणां ) अगस्त्याष्टमाना यदपत्यं तद्गोत्रमित्युच्यते ' इति । अयमर्थः– एतेषामपत्यमिति ये स्मर्यन्ते ते तद्गोत्रमित्युच्यन्ते । यथा जमदग्नेर्गोत्रं वत्सादयः, तथा गौतमस्यायास्यादय., भरद्वाजस्य दक्षगार्ग्यादयः, तथाऽन्यादीनां स्वस्ववर्ग्या इति । तथा आर्षेयगोत्रशब्दयोर्भिन्नविषयत्वं शिष्टव्यवहारे दृष्टम् । यथाऽऽह याज्ञवल्क्यः– ' अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ' इति । तथा ' गोत्रपिण्डऋषिसंबद्धा रिक्थं भजेरन् ' इत्येवं व्यवहारा बहवः सन्ति । अस्मिंस्तु सूत्रे गोत्रशब्दः आप्त्यादेरनुष्टेयत्वादनर्थकमित्येकत्वात् एकोपाधिवचनेनाभिप्रेतः । ' यावन्तोऽनन्तर्हिताः समानगोत्रास्तावतां सकृत् ' इत्यत्र सूत्रे समानप्रवरमात्रोपाधिवचनो गोत्रशब्दः प्रयुक्तः । यस्तु अगस्त्याष्टमानामन्येष्वपि गोत्रशब्दो लोके प्रयुज्यमानो दृश्यते ' मित्रयुवगोत्रोऽहम् ' ' मुद्गलगोत्रोऽहम् ' इत्येवमादिषु, स च औपचारिकः प्रयोगः । अगस्त्याष्टमानामपत्येषु अयास्यगर्गकुण्डिनादिषु गौतमभरद्वाजवसिष्ठादिषु गोत्रत्वमस्ति, तत्सामान्यदृष्ट्या मित्रयुवमुद्गलादिषु परामर्शेन लौकिकाः प्रयुञ्जते । अस्यायमर्थ इति स्मरन्ति । अतो भगवता बौधायनेन स्मृत्यन्तर उक्त एव गोत्रशब्दस्यार्थ इति निश्चिनुमः । व्याकरणस्मृतिश्चाप्यस्या न बाधिका, सामान्यविशेषरूपत्वात्तयोः । .. गानाद्र.

अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात् ॥

( १ ) ननु प्रतिगोत्रमाप्रीसूक्तप्रयाजाभ्यासः कस्मान्न भवति, प्रवरवत् । नेति ब्रूमः, समानगोत्रेष्वेवाभ्यासेन विनाऽपि चरितार्थत्वात् प्रकृतौ चानभ्यस्तत्वादिहापि तत्प्राप्तेः । यदुक्तं प्रवरवदिति, तस्योत्तरमुत्तरे वक्ष्यामः । अपि च प्रतिगोत्रमभ्यासे सति अङ्गानां क्रमलोपः प्रसज्यते, गृहपतिब्रह्मोद्गातृहोत्रध्वर्युप्रभृतियजमानधर्माणां बद्धक्रमत्वात् । तस्मात्समानगोत्रा एवेति प्राप्ते, सिद्धान्तमाह– अपि नानागोत्राः इति । अयमर्थः– नानागोत्रा अपि, न समानगोत्रा एव । कुतः ? तन्त्राणां व्यापित्वात् । तन्त्रशब्देन सत्राणां साङ्गप्रधानविषयाः प्रयोगा उच्यन्ते । ते ऋद्धिपुष्टिस्वर्गादिफलकामिनः सत्रे स्युः, पुरुषमात्रव्यापित्वात् । समानगोत्रपुरुषविषयत्वेन संकोचकल्पनायामङ्गवशेन प्रधानाधिकारसंकोचो विना वचनेन कल्पितः स्यात् । न चान्याय्यः सति निर्दोषे गत्यन्तरे ।

गोप्र. २०

( २ ) गाणगारिणा समानविधानानामेव सत्रसंबन्धे उक्ते शौनक आचार्य आह– समानगोत्राणामेव इति न नियमः, नानागोत्रा अपि सत्रमासीरन्निति । कुतः ? तन्त्राणां व्यापित्वात् । तन्त्रशब्देनात्र सर्वपुरुषसाधारणोऽङ्गसमुदाय उच्यते । तस्य च व्यापित्वमस्त्येव ।

गानावृ.

## गृहपतिगोत्रान्वया विशेषाः ॥

( १ ) गयन्तरमाह– गृहपतीति । ये गाणगारिणा समानगोत्रप्रतिज्ञासिद्ध्यर्था आप्रीसूक्तादयो विशेषा उक्तास्ते गृहपतिगोत्रानुसारेण कर्तव्याः, तत्प्रधानत्वात्, 'तन्मुख्याः सत्रमासीरन्' इत्युक्तत्वात्, आपस्तम्बवचनाच्च– 'सर्वे इष्टप्रथमयज्ञा अपि वा गृहपतिरेव' इति । तथा 'गृहपतेरेव सामिधेनीकल्पेनावदानकल्पेनेतराणि प्रकारेयुर्यानि चान्यान्येवंरूपाणि स्युः' इत्यनेन सूत्रद्वयेन गृहपतिगोत्रान्वयनेन गोत्रादिकृतान्विशेषान् दर्शयति । तस्मादविरोधः । गोप्र. २०–२१

( २ ) कथं पुनरसाधारणपदार्था इति, तत्राह– गृहपतीति । अयमर्थः– ये विशेषा असाधारणास्ते गृहपतिगोत्रान्वयाः गृहपतिविधानानुगुणाः कर्तव्याः । एतदुक्तं भवति– असमानविधानानामपि सत्रासनं भवति, प्रायेणाङ्गसमुदायस्याविरोधित्वात् । ये केचन विरोधिनस्ते गृहपतेरविरोधित्वेन कर्तव्या इति ।

गानावृ.

## तस्य राद्धिमनु राद्धिः सर्वेषाम् ॥

( १ ) ननु गृहपतिगोत्रानुसारेणाङ्गेषु कृतेषु येषामङ्गं विकलं तेषां फलसिद्धिर्न स्यादित्याशङ्क्याह– तस्य राद्धिमनु राद्धिः सर्वेषामिति । तस्य गृहपतेः फलसिद्धिं अनु पश्चात् इतरेषामपि फलसिद्धिः स्यादित्यर्थः, तत्प्रधानत्वात् । गोप्र. २१

( २ ) ननु गृहपत्यविरोधेन सत्रे कृते येषां विरोधस्तेषां फलसम्बन्धो न स्यादित्यत आह– तस्येति । तस्य गृहपतेः फलसिद्धिमनु सर्वेषां सत्रिणां फलसिद्धिर्भवत्येव । कुतः ? 'तन्मुखाः सत्राण्यासते' इति वचनात् । अत एव सूत्रकारस्त्वयमेव पक्ष इति गम्यते ।

गानावृ.

## प्रवरास्त्वावर्तेरन्नावापधर्मित्वात् ॥

( १ ) नानागोत्राणां यजमानानां प्रतिगोत्रं प्रवरा अनुवर्तेरन् । कुतः ? आवापधर्मित्वात् प्रवरधर्मित्वात् । उप्यन्त इत्यावापा आहवनीयाः, 'अग्निं समावपेयुः' इति वचनात् । अथवा– उप्यन्ते हवींषि आहवनीयेषु इत्यावापा आहवनीयाः, तेषामाहवनीयानामावापानां प्रवरान् प्रति धर्मित्वात् । तेषां चाहवनीयधर्माणां प्रवराणां प्रतिप्रधानमावृत्तिर्युक्ता, प्रधानवत्प्रवर्तित्वादङ्गानाम् । आहवनीयसंस्कारत्वं च प्रवराणामधस्तादेव व्याख्यातम् ।

ननु पूर्वापरविरुद्धमभिहितम् । कथम् ? नानागोत्रपक्षे विरुध्यमाना विशेषाः गृहपतिगोत्रान्वया इत्युक्तमधस्तात् । नैष दोषः । कथम् ? आहवनीयानां स्वतर्प्यपत्यसंबन्धसंकीर्तनेन संबोधनात्मकाः प्रवराः, प्रवरैश्च संबोधिता आहवनीया देवेभ्यो हव्यं वहन्तीत्यधस्तादुक्तं महाप्रवरभाष्ये । तत्र यदि गृहपतेरेव प्रवरः क्रियेत, नेतरेषां कश्यपविश्वामित्रात्रिगोत्राणां यजमानानाम्, (तदा) असंबोधितत्वात् तेषामाहवनीया देवेभ्यो हव्यं न वहेयुः । तस्मात्तदर्थं काश्यपविश्वामित्रात्रेयेत्यादि प्रतिगोत्रं प्रवरावृत्तिर्युक्ता । किंच– गृहपतेराहवनीयः अन्येषामनाहवनीय एव, यथा गृहपतेः पुत्रः अन्येषामपुत्रः, संबन्धिवचनत्वात्पुत्रशब्दस्य । तथा आहवनीयशब्दोऽपि संबन्धिवचन एव । अत एव आहवनीये नान्यो होमं करोति । अत एव च आहवनीयस्य प्रतिनिधिर्निषिद्धः पठ्ठे प्रतिनिधिप्रकरणे 'न देवताग्निशब्दक्रियमन्यार्थसंयोगात्' ( जैसू. ६।३।१८ ) इत्यत्र । तस्मात्साधूक्तं नानागोत्राणां प्रतिगोत्रं प्रवरा आवर्तेरन्निति । स्थितेऽधिकरणे संदेहः– किं नानागोत्राणामेव प्रवरा आवर्तेरन्, उत समानगोत्राणामपि ? इति । तत्राग्रह्यमाणविशेषत्वात् समानगोत्राणां प्रवरास्तन्त्रेणैव इत्येके मन्यन्ते । अपरे पुनरावृत्तिं मन्यन्ते, नानागोत्रव्यवायात् यजमानधर्माणां बद्धक्रमत्वात्सकृत् प्रयोगे सति क्रमकृतं वैगुण्यं प्रसज्यते इति । तथा चापस्तम्बः– 'नानागोत्रव्यवायादेव समानगोत्राणामार्षेयवरणमावर्तेतेत्येके मन्यन्ते' इति ।

गोप्र. २१–२२

( २ ) ओप्यन्त इत्यावापा आह्वनीयाः । ते च प्रवरेण धर्मेण धर्मिणः । तस्य प्रवरस्याहवनीयसंस्कारत्वा-दाहवनीयधर्म इत्युच्यते । अत आह्वनीयबहुत्वात्प्रति-प्रधानमावर्तन्ते इत्युच्यते । आवापधर्मित्वादित्ययमर्थः— आवापानामाहवनीयानां प्रवरं प्रति धर्मित्वादिति । एवं प्रवरानुक्रमगस्य प्रसङ्गमापावानन्तरं प्रवरानुक्रमिष्यति— ' जामदग्न्या वत्साः ' इत्येवमादिना ग्रन्थेन । अतस्तत्त-दनुक्रमणस्येदं प्रयोजनम्—– श्रुतावेतावन्मात्रमस्ति, कस्यांचिदेवं श्रूयते– ' आर्षेयं प्रवृणीते, यथर्षि मन्त्रकृतो वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते ' इति । आर्षेयवरणस्य मन्त्रकृत्त्वं विशेषणत्वेन चोच्यते । अतो ये आम्नातानामृषीणां मन्त्रकृत्त्वेनाम्नायन्ते तेषामेकादीनां यथेष्टसंख्याकानां वरणे प्राप्ते ' न चतुरो वृणीते, न पञ्चाति वृणीते ' इति चतुर्णामतिपञ्चानां च प्रतिषेध इति वाक्यत्रयमस्या श्रुताविति वर्णयन्ति । अन्यस्यामन्यथा श्रूयते– ' आर्षेयं प्रवृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते ' इति । अयमर्थः– ' त्रीन्वृणीते ' इत्येष एवात्र विधिः, इतरेषां कश्चिदवयुत्यानुवाद इति वर्णयन्ति । इमामेव श्रुतिमुपन्यस्य न्यायविद्भिरयमेवार्थो वर्णितः ' अत्र्यार्षेयस्य हानं स्याद-धिकारात् ' इति । पूर्वोक्तश्रुत्यनुसारेण अत्र्यार्षेयाणामप्य-धिकारोऽस्तीति कल्पकाराणां सूत्रकाराणां च प्रवृत्तिरिति सैवानुसृताऽस्माभिः । तत्र य आत्मीया ऋषयस्तेषां ये मन्त्रकृतस्ते प्रोक्तसंख्या वरितव्या इत्येतावन्मात्रं श्रुति-तोऽवगतम् । तत्रैत आत्मीया ऋषयस्तेषामेते मन्त्रकृत इति ज्ञाने न श्रुतिः, स्मृतिरेवात्र शरणम् । तत्र एताव-देव लौकिकाना स्मरणं दृश्यते वयं वत्सा वयं विदा वयमायास्या वयं रथीतरा वयं कण्वा वयं गविष्ठिरा वयमाष्टिर्षेणा वयं कुण्डिना वयं गर्गा इति, नास्माकमे-तेष्वेते मन्त्रकृतः एते अमन्त्रकृत इति स्मरन्ति । अपि च द्व्यार्षेयास्त्र्यार्षेयाः पञ्चार्षेया इति च स्मरन्ति । अपि चास्माकमङ्गिरोमुख्यः प्रवरोऽष्टादंष्ट्रमुख्यो वेति च स्मरन्ति । अथ चैतेषां ज्ञानस्य स्मरणादन्यत्प्रमाणं नास्ति । आर्षेयवरणविध्यपेक्षितं चैतज्ज्ञानम् । एवं चेत् कल्पसूत्राणां वंशनामधेयभूतमित्रयुवादिविषया श्रुति-र्लोके उपजीव्या । उद्देशेनास्यैत एतावन्तोऽस्यैको द्वावस्य पञ्चास्य त्रयो वा पञ्च वाऽस्यैको वा त्रयो वा पञ्च वेति, अस्यायं मुग्तोऽयं चेत्येवमादिपरार्थविषयत्वादिकल्पानां श्रुतिमागच्छन्तोऽयमपभ्रंशपरिहारार्थं स्वे स्वे कल्पे सूत्रे निबध्नन्ति । प्रवरादिस्वीयसंज्ञाया आपस्तम्बप्रवरानुक्रमस्य प्रयोजनमित्यवगन्तव्यम् ( १ ) । गानाद्ध.

प्रवरसंख्या प्रवरनिर्देशक्रमश्च

³तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः ॥

त्र्यार्षेयवरणपक्षे एवं भवति । गानाद्ध.

द्वौ वेतरतस्त्रीनितरतः ॥

पञ्चार्षेयप्रवरणपक्षोऽयम् गानाद्ध.

न हि चतुर्णो प्रवरोऽस्ति ॥

अत उभयतो द्वौ द्वौ न ग्रहीतव्यौ । कुतः ? चतुर्णां वरणनिषेधात् । गानाद्ध.

न पञ्चानामतिप्रवरणम् ॥

अतिपञ्चानां प्रवरनिषेधात् । तेन द्वयोरेकार्षेयत्वेऽपि द्व्यार्षेयवरणमनुज्ञातमिति गम्यते । गानाद्ध.

## आश्वलायनश्रौतसूत्रपरिशिष्टम्

अविवाहकारणं समानप्रवरत्वम्

द्व्यार्षेयाणां त्र्यार्षेयसंनिपाते अविवाहः । त्र्यार्षेयाणां पञ्चार्षेयसंनिपाते अविवाहः । ' विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥ ' सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते । 'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्व-मन्यत्र भृग्वङ्गिरसां गणादिति ॥ ' असमानप्रवरै-र्विवाहो विवाहः ॥

## कात्यायनश्रौतसूत्रम्

प्रवरसंख्या, प्रवरनिर्देशरीतिः प्रवरनिर्देशक्रमश्च

अमुवदमुवदिति यजमानार्षेयाण्याह परस्ता-दर्वाञ्चि त्रीणि ॥

---

( १ ) आश्रौ. २।६।१३.

( २ ) इदं आश्वलायनश्रौतसूत्रस्यान्ते मुद्रितम् । अत्यीयस्त्वा-त्तस्य स्थलादिकं नास्ति ।

( ३ ) काश्रौ. ३।२६.

असुवदिति आर्षेयोच्चारणम् । त्रीणीति कुतः ? 'त्रीन् वृणीते' इति वचनात् । इदं हि 'पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति लिङ्गात् । यजमानग्रहणं च ऋत्विगार्षेयव्युदासार्थम् । कर्क.

**यावन्तो वा मन्त्रकृतः ॥**

वाशब्दः पक्षान्तरपरिग्रहे । यावन्तो वा मन्त्रकृतस्तावन्तो नियमेनैव । यावन्ति यस्य प्राप्नुवन्ति तावन्ति प्रवृणीते न त्रीणीति । तत्कथम् ? 'आर्षेयं प्रवृणीते' इत्येषोऽत्र विधिः । 'एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते' इत्यनुवादः । तथा 'न चतुरो वृणीते, न पञ्चाति वृणीते' इति । आर्षेयाणि ह्येकत्वद्वित्वत्रित्वपञ्चत्वपरिच्छिन्नानि प्रावरिकाया पठ्यन्ते । तेनार्षेयं वृणीते इतीयतैव यावन्ति यस्य प्राप्नुवन्ति तावन्त्येव व्रियन्ते । त्रित्वविधानं तु केवलं एकद्वित्वयोरवचुत्वादसंभवमात्रादेवाभ्युपेयते । मन्त्रकृतो मन्त्रदृश उच्यन्ते । न हि मन्त्राणां करणं भवति, अनित्यत्वप्रसङ्गात् । तेन दर्शनार्थः कृञिति व्यवसीयते । दृश्यते चानेकार्थता धातूनाम् । 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति आत्मनेपदप्रतिपादने गन्धनादीनर्थान् कृञो दर्शयति । कर्क.

**होता तद्धितवदामन्त्रितवच्च ॥**

## कात्यायन-लौगाक्षि-श्रौतसूत्रम्

प्रवरव्याख्यानप्रतिज्ञा

**अथातः प्रवरान् व्याख्यास्यामः ॥**

इह कात्यायन-लौगाक्षिप्रणीतप्रवराध्याययोः भाष्यादर्शनात् सूत्रान्तराभियोगबलात् गुरुप्रसादाच्च यथावदिदं काण्डं व्याख्यास्याम. । इदं सूत्रं महाप्रवरभाष्ये वृत्तव्याख्यानमिति न व्याख्यायते ।

गोप्र. १६–१७

प्रवरकीर्तनं बन्धुभिरपत्यसतत्या च सबन्धस्य पालकम्

**तदेतद्ब्राह्मणं भवत्यार्षेयं वृणीते बन्धोरेव नैत्यथो संतत्या इति ॥**

इदमपि सूत्रमापस्तम्बसूत्रभाष्ये कृतव्याख्यानमेव ।

गोप्र. १७

प्रवरसंख्याभेदः एकत्वद्वित्वत्रित्वपञ्चत्वरूप एव

**एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते, पञ्च वृणीते, न पञ्चाति वृणीत इति ॥**

अत्र दर्शपूर्णमासयोरेवाऽऽर्षेयवरणविधिपरं ब्राह्मणं महाप्रवरभाष्येऽस्माभिरुदाहृतं व्याख्यातं च 'अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति । तस्मादार्षेयं प्रवृणीते । परस्तादर्वाक्प्रवृणीते' (शब्रा. १।४।२।३) इत्यादि । एतद्ब्राह्मणाभिप्रायं व्याचक्षाणेन कात्यायनेनैवमुक्तम्– 'विद्वांश्चिकित्वान्मनुवद्भरतवदमुवदमुवदिति यजमानार्षेयाण्याह । पुरस्तादर्वाञ्चि त्रीणि, यावन्तो वा मन्त्रकृतः' इति । तत्र 'पुरस्तादर्वाञ्चि त्रीणि' इत्यस्य पक्षस्य मूलभूता श्रुतिः अधस्तादेवोदाहृता 'त्रीन् वृणीते, मन्त्रकृतो वृणीते, यथर्षि मन्त्रकृतो वृणीते' इति । इदानीं 'यावन्तो वा मन्त्रकृतः' इत्यस्य पक्षस्य मूलभूतां श्रुतिं शाखान्तरगतां स्वयमेवोदाहरति– एकं वृणीत इत्येवमाद्या । व्याख्याना चैषा श्रुतिः आपस्तम्बसूत्रभाष्ये । अस्याः श्रुतेरयमभिप्रायः– यस्यैक एव मन्त्रद्रष्टास्ति स एकं तमेव वृणीते, यस्य द्वावेव स्तः स द्वावेव वृणीते, यस्य त्रयः सन्ति स त्रीनेव वृणीते, यस्य चत्वारः सन्ति स चतुरो विद्यमानानपि न वृणीते, यस्य पञ्च सन्ति स पञ्च वृणीते, यस्य षडाद्या बहवः सन्ति स पञ्चातीत्य षडादीन्न वृणीते विद्यमानानपीति । तत्र च यस्य यावन्तः सन्ति, न न्यूनाधिकाः, इत्यत्र कल्पसूत्रकारा एव शरणं प्रमाणान्तराभावाच्च । इमामेव श्रुतिमवलम्ब्य कल्पसूत्रकाराः प्रवृत्ता इत्युक्तमधस्तात् । गोप्र. १७

मनविशेषे सर्वेषां वर्णानां मानव एव एकः प्रवर., ऋषयः प्रवरा' इति सिद्धान्तः, ब्रह्मक्षत्रान्यवर्णानां मानवः प्रवरः

**अपि हैके मानवेति मनुवदित्येकैकमार्षेयं सार्ववर्णिकं प्रवृणते* । कस्य हेतोरिति । मानव्यो हि प्रजा इति ॥**

(१) काश्रौ ३।२७. (२) संप्र. ६००.
(३) गोप्र. १६.

* अत्र एकवचनान्तः पाठ आदर्शपुस्तके । मञ्जरीनस्तु बहुवचनान्न इति निश्चीयते ।

अपि ह इति पक्षान्तरपरिग्रहे। एके शाखिनस्ताण्डिनः छन्दोगाः। मानवेत्येका(कमा)र्षेयं प्रवरं होतारः प्रवृणते। एकं मनुवदित्यध्वर्यवः प्रवृणते इति। सार्ववर्णिकं सर्ववर्णेषु भवं प्रवरं प्रवृण(णी?)ते। अत्र 'अथवा एके शाखिनस्ताण्डिनश्छन्दोगा इत्थं प्रवृणते इत्यामनन्ति' इति वाक्यशेषोऽध्याहर्तव्यः। एकार्षेयमानवप्रवरणे हेतुं पृच्छति– कस्य हेतोरिति। कुतो हेतोरित्यर्थः, 'षष्ठी हेतुप्रयोगे' इति पञ्चम्यर्थे षष्ठीस्मरणात्। तत्र हेतुः– मानव्यो हि प्रजा इति। अयमर्थः– यतः सर्वासां प्रजानामाद्यो मूलभूतो मनुः 'एकं वृणीते' इति ब्राह्मणान्तरं अतस्तमेव वृणते प्रजा इति। जातिः सामर्थ्यमर्थित्वं शास्त्रापर्युदासश्च येषां त्रैवर्णिकानां प्रवराधिकाराणां ते प्रजाशब्दवाच्या द्रष्टव्याः।

गोप्र. १७–१८

**तदेतन्नोपपद्यते। न देवैर्न मनुष्यैरार्षेयं वृणीते। ऋषिभिरेवार्षेयं वृणीते॥**

अस्य ताण्डिनां पक्षस्य दूषणाय ब्राह्मणान्तरमाह– तदेतदिति। व्याख्यातं चेदं ब्राह्मणमापस्तम्बादिसूत्रभाष्ये। युक्त्या च ताण्डिदर्शनं दूषयन्ति बहुविदः। ताण्डिदर्शने हि सर्वेषां त्रैवर्णिकानां समानप्रवरत्वादविवाहः, विवाहे च वर्णसांकर्यप्रसङ्गः, गुरुतल्पदोषप्रसक्त्या चण्डालोत्पत्तिदोषप्रसक्त्या च ब्राह्मण्यनाशात् मूलोच्छेदः प्रसज्यते इति।

गोप्र. १८

**यः परार्षेयं वृणीते परं यज्ञस्याऽऽशीर्गच्छति। आवृश्च्यते वा एष ओषधीभ्यो वनस्पतिभ्यः पितृभ्य ऋषिभ्यो मनुष्येभ्यो यः परान् प्रवृणीते॥**

यः परार्षेयः सन् स्वस्मात्परस्यार्षेयेण प्रवृणीते तदीयं यज्ञफलं तमेव परं गच्छति, स एव भुङ्क्ते इत्यर्थः। किञ्च आवृश्च्यते आच्छिद्यते वा एष देवर्षिपितृमनुष्यसम्बन्धफलादिति।

गोप्र. १८

**तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानां सुगं भवति॥**

इदानीं ताण्डिभुमेरप्रामाण्यं परिहर्तुं विषयान्तरमाह –– तदेतदिति। ब्राह्मणक्षत्रियाभ्यामन्यत्र वैश्यविषया ताण्डिभूमिरित्यर्थः। न हि तत्र समानप्रवरदोषोऽस्ति, अवर्जनीयत्वादेकदेशक्षामवत्। 'वात्सप्रेति होता वत्सप्रिवदित्यध्वर्युः' इत्यत्रापि स्ववर्णप्रवरैस्तुल्यत्वात्समानप्रवरदोषो ब्राह्मणविषय एव निश्चीयते। तस्माद्ब्राह्मणानामेकद्वित्रिपञ्चार्षेयाणां होतुरध्वर्योश्च प्रवरा व्याख्येयाः।

गोप्र. १८

होतुरध्वर्योश्च प्रवरनिर्देशक्रमः

**इत एवोर्ध्वं होता प्रवृणीतेऽन्वगित्यध्वर्युः॥**
**( इति कात्यायनपाठः )**

तत्र बहूनां वरणे क्रमविशेषमाह– 'इत ... त्यध्वर्युः' इति कात्यायनः। इतः प्रवरकर्तव्यताप्रतिपादनादूर्ध्वं होता प्रवृणीते भृग्वादीन् मन्त्रद्रष्टॄन्, यथा भार्गव–च्यावन–आप्नवान–और्व–जामदग्न्य इति। अन्वगित्यध्वर्युः। होतुः प्रवरक्रममनुसरन्नध्वर्युः प्रवृणीते। इतिशब्देन तमेव प्रवरक्रमं दर्शयति, यथा भृगुवत् च्यवनवत् अप्नवानवत् ऊर्ववत् जमदग्निवत् इति। तथाहि ब्राह्मणमध्वर्युप्रवरविधिपरं वाजिनाम्– 'परस्तादर्वाक् प्रवृणीते' इति। स्वयमप्याह– 'यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि' इति।

गोप्र. १८–१९

**इत एवोर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता॥**
**( इति लौगाक्षिपाठः )**

* लौगाक्षिपाठे इति व्याख्या– 'इत एवोर्ध्वं होता' इति कात्यायनादिभिः समानम्। 'अमुतोर्वाचो होता' इत्यत्र विशेषः। भार्गव–च्यावन–आप्नवान–और्व–जामदग्न्य–इति होतुः प्रवरात् 'अमुतोऽर्वाचोऽध्वर्युः प्रवृणीते' अन्त्यमारभ्य मूलभूतादग्नेः यथा जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति। अत्र सर्वेषामाचार्याणां होतुः प्रवरक्रमः समानः। अध्वर्युप्रवरक्रमस्तु कात्यायनादन्येषामाचार्याणां समानः, कात्यायनस्य तु होतृप्रवरक्रम एव अध्वर्युप्रवरक्रम इति विशेषः।

गोप्र. १९

---

* अत्र 'लौगाक्षिपाठे ... भृगुवत्' इत्येतावान् ग्रन्थोऽशुद्धः। तथैवं समञ्जसः– 'लौगाक्षिपाठे इति व्याख्या – 'अमुतोऽर्वाचो होता' इति कात्यायनेन समानम्। 'इत एवोर्ध्वानध्वर्युः' इति अत्र विशेषः भार्गवच्यावनाप्नवानौर्वजामदग्न्येति होतुः प्रवरात्। 'इत एवोर्ध्वानध्वर्युः प्रवृणीते' अन्त्यमारभ्य आ मूलभूतादग्नेः, यथा जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति' इति।

## जैमिनिसूत्राणि

प्रवरसंख्याविधिविचारः

**अत्र्यार्षेयस्य हानं स्यात् ॥**

(१) दर्शपूर्णमासयोः श्रूयते—'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते' इति। तत्र सदेहः किं अत्र्यार्षेयस्य अधिकारः, उत नेति। किं प्राप्तम्? अत्र्यार्षेयोऽपि अधिक्रियते इति। कुतः? 'आर्षेयं वृणीते' इति सामान्यवचनम्। तस्मात् एकं वरिष्यति द्वौ वा। तच्च दर्शयति 'एकं वृणीते, द्वौ वृणीते' इति। तथा प्रतिषेधति 'न चतुरो वृणीते, न पञ्चाति वृणीते' इति। न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते। तस्मात् अत्र्यार्षेयोऽपि अधिक्रियेतेति। एवं प्राप्ते, ब्रूमः—यो न त्र्यार्षेयः स नाधिक्रियेत। कुतः? 'त्रीन् वृणीते' इति विशेषवचनात्। विधिश्च अप्राप्तत्वात्। ननु 'एकं वृणीते' इत्यपि विशेषवचनमस्ति। नेत्युच्यते, विधायिकाया विभक्तेरभावात्। ननु स्तुत्या विधास्यते, यथा 'त्रीन् वृणीते' इति। उच्यते—त्रयाणामेव स्तुतिः। सा त्रित्वं विधास्यति। 'एकं वृणीते' इति अवयुत्यानुवादोऽयं त्रयाणामेव। तत्रापि त्रित्वमेव स्तूयते विधातुम्। एवं एकवाक्येन विधानं भविष्यति इति। 'न चतुरो वृणीते, न पञ्चाति वृणीते' इति नित्यानुवादो भविष्यति। तस्मात् त्र्यार्षेयस्याधिकारो नान्यस्येति।

शाबरभाष्यम्

(२) दर्शपूर्णमासयोः 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते' इति श्रुतम्। तत्र तावत् एकं विधायकं, अन्ये अनुवादा इत्यविशदम्, अन्यथा सर्वेषां विधित्वे वाक्यभेदविकल्पयोरापत्तेः। अतः 'त्रीन् वृणीते' इत्येव विधिः। 'एकं वृणीते, द्वौ वृणीते' इत्यवयुत्यानुवादः त्रित्वस्तुत्यर्थः। 'न चतुरो वृणीते' इत्याद्यपि नित्यानुवादः तदर्थ एव। अतश्च त्र्यार्षेयवत् पञ्चार्षेयोऽपि त्रीनेव वृणीयात्। एकद्व्यार्षेययोस्तु नास्मिन् पक्षे अधिकारः। अपि तु 'अथ हैके मनुवदित्येवैकार्षेयं सार्ववर्णिकं प्रतिदिशन्ति' इति वचनान्तरविहितमनुवत्पक्षाश्रयेणैव। तदेतद्भगवतो जैमिनेर्मतं ऋष्यन्तरैरभ्युपगतम्। तथा च *कात्यायनः अनुवदति—'परस्तादर्वाञ्चि त्रीणि' इति।* आपस्तम्बोऽपि—'त्रीन् यथर्षि मन्त्रकृतो वृणीते' इति। तैस्तु पक्षान्तराण्यपि उक्तानि। 'यावन्तो वा मन्त्रकृतः' इति कात्यायनः। 'अपि वा एकं द्वौ त्रीन् पञ्च वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते' इत्यापस्तम्बः। *'यावन्तः स्युः परंपरं प्रथमम्' इत्याश्वलायनोऽपि।* तेषां चायमभिप्रायः—'आर्षेयं वृणीते' इत्ययं विधिः। इतरे अनुवादाः तत्स्तुत्यर्थाः। अतश्च 'त्रीन् वृणीते' इत्यपि अनुवाद एव। ईदृशोऽयं वरणसामान्य*विधिः, यत् तत्तदार्षेयं प्रति तत्तत्संख्याकवरणं प्राप्यते* इति स्तुतिः। इतरथा भवन्मते सामान्यवाक्येनैव वरणविधिं अभ्युपगम्याप्येकवाक्यत्वलाभाय पञ्चार्षेयस्यैव अधिकारापत्तेः त्रयाणामपि एषां अवयुत्यानुवादत्वापत्तिः। न चैवं चतुःपञ्चादीनामपि वरणप्रसक्तौ तन्निषेधेन वाक्यभेदापत्तिः, एकद्वित्रिपञ्चार्षेयाणामेव प्रवराध्याये समाम्नानेन चतुःपञ्चादेः अप्रसक्तेः। अतः अस्मिन्नपि पक्षे वाक्यभेदाद्यनापत्तेः एकद्व्यार्षेययोः अधिकारः, पञ्चार्षेयस्य पञ्चानां वरणं न विरुद्धमिति। यत्तु द्व्यामुष्यायणानां *उभयतः कुलद्वयेऽपि वरणविधानादस्ति* चतुःपञ्चादीनां प्राप्तिरिति, तन्न, आश्वलायनेन (१२।१३।४–५) द्व्यामुष्यायणाननुक्रम्य 'तेषामुभयतः प्रवृणीते एकमितरतः द्वावितरतः, द्वावेकतरतः त्रीनितरत' इति आवश्यकश्रुत्यन्तरमूलकेनैव तन्निषेधात्। *अतो भार्गवच्यावने*त्यादिविशेषरूपेण वरणपक्षेऽपि मनुवत्पक्षवदेव एकद्व्यार्षेययोरपि अधिकार इति ऋष्यन्तरमत बोध्यम्।

भाट्टदीपिका

*यजमानप्रवरवरणीयता*

**आर्षेयम् ॥**

दर्शपूर्णमासयोः 'आर्षेयं वृणीते' इति श्रुतम्। तत्र 'ऋत्विजो वृणीते' इति वरणसंस्कृतस्यर्त्विजो विशेषणमार्षेयपदं ऋषिपदस्य 'तद्धकमृषिणा' (ऐआ.

(१) जैसू. ६।१।४३.

(१) जैसू. १२।४।१–४,८.

२।२४।१२ ) ' बन्धने चर्षौ ' ( पा. ४।४।९६ ) इति श्रुतिस्मृत्योर्वेदे प्रयोगदर्शनादविच्छिन्नवेदार्थविज्ञानानुष्ठानशीलपूर्वपुरुषकत्वं बोधयति । ' अथ देवा योऽनूचानः श्रोत्रियस्तस्यापि वेद एष वै ब्राह्मण ऋषीणामार्षेयो यच्छुश्रुवानेष वै पितृमान् पैतृमत्य आर्षेयो यच्छुश्रुवान् ' इति व्यपदेशात्तादृशत्वमृत्विग्विशेषणं ' वासिष्ठो ब्रह्मा' इत्यादिवदिति प्राप्ते, 'यजमानस्याशीर्गच्छेदृषीणां हि देवाः पुरुषमनुबुध्यन्ते ' इत्यादिना यजमानपूर्वपुरुषपरत्वेन वाक्यशेषे स्तवनात् ' यो वा अन्यस्यान्यस्य प्रवरेण ' इत्यादिना यजमानेतरप्रवरानुकीर्तने निन्दाश्रवणाच्च कौषीतकिब्राह्मणे ( ३।२ ) ' अथ यद्यजमानस्याऽऽर्षेयमाह, न वा अनार्षेयस्य देवा हविरश्नन्ति ' इति विधावेव यजमानसंबन्धकीर्तनात् तदीयप्रवरर्षिनामकीर्तनपर एवायं विधिः । भाट्टचन्द्रिका

प्रवरर्षिनिर्देशरीतिसंख्याक्रमाणां निर्णयः

भृगुवसिष्ठेति ॥

प्रवरर्षीणां नाममात्रस्य भृगुवसिष्ठेत्यादिरूपस्य कथनमात्रेण विधिचारितार्थ्ये प्राप्ते, ' अग्ने महाँ२ असि ब्राह्मण भारत' इत्यस्यान्ते, ' आर्षेययोजनेन यजमानाऽऽहवनीययोः पितापुत्रभावसंबन्धेनाग्नेः स्तवनं कुर्यात् ' इत्यर्थस्य शाखान्तरपर्यालोचनलब्धस्यानुगुण्यायापत्यप्रत्ययान्तसंबुद्ध्यन्तपदानि भार्गववासिष्ठेत्यादीनि प्रयोज्यानि ।

भाट्टचन्द्रिका

त्रीन् वृणीते ॥

' मन्त्रकृतो वृणीते ' इत्येक एव विधिः । तत्र चानियमेन बहुत्वसंख्यानां त्र्यादीनां कपिञ्जलन्यायेन त्रयाणामेव वा वरणप्रसक्तौ ' न पञ्चाति प्रवृणीते ' ' न चतुरो वृणीते' इत्याभ्यां चतुःषडादिसंख्यानां निरासात् पञ्चार्षेयवरणमेवामेव विधीयते । ' एकं द्वौ त्रीन् ' इत्यवयुत्यवादस्तु स्तुतिमात्रम् । तेन सप्तार्षेयोऽपि पञ्चानामेव वरणं कुर्यात् । इतरेषां तु मनुवत्कल्पः । इति पाक्षस्य पुनराक्षेपे प्राप्ते, चतुर्वरणस्याप्यवयुत्यवादेनोपपत्तौ ' न चतुरः ' इत्यत्र नञो वैयर्थ्यापत्तेः ' न पञ्चाति प्रवृणीते ' इति वाक्येऽपि पञ्चार्षेयवरणविधेः स्पष्टस्याभावाच्च ' त्रीन् वृणीते ' इत्यस्यैव विधित्वावसायात्, तेन ' मन्त्रकृतः ' इत्यस्योपसंहारात् त्र्यार्षेयस्यैव वरणम् । भाष्यकारस्तु ' अत्र्यार्षेयस्य ' इति सूत्रे प्रकृतसूत्रे च त्रिपदं पञ्चानामप्युपलक्षणम्, परिमाणाचिख्यासेति त्रिपञ्चसंख्योपलिलक्षयिषेत्यर्थकमिति व्याचख्यौ ।

भाट्टचन्द्रिका

यथर्षि ॥

त्रयाणामार्षेयाणामनियतानुपूर्वीकतयोच्चारणम्, कल्पसूत्रेषु गोत्रभेदेन पठितानां मन्त्रकृन्नाम्नां स्मार्तत्वेन पाठक्रमविवक्षायां मानाभावादिति प्राप्ते, ' ऊर्ध्वानध्वर्युर्यच्छन्दात् ' इत्यादिना अध्वर्युप्रवरेषु तद्धितविनिर्मुक्तप्रातिपदिकानां वच्छब्दान्तानां प्रातिलोम्येन पाठविधानाद्धोतृप्रवरेषु नियतानुपूर्वीसिद्धिः ।

भाट्टचन्द्रिका

द्विगोत्रस्य प्रवरसंख्यानिर्देशरीतिः

द्विगोत्रस्य ॥

द्व्यामुष्यायणानां शैशिरादीनामुभयकीर्तने त्रित्वसंख्याधिक्यापत्तेरन्यतरत्रितयकीर्तनेनैव ' त्रीन् वृणीते ' इति विध्यर्थानुष्ठानसिद्धिरिति प्राप्ते, विकल्पस्य जघन्यतयैव ' एकतो द्वावन्यत एकम् ' इत्यादिवचनसिद्धव्यवस्थयैवार्षेयवरणम् । अत एवोभयतो द्वयोर्द्वयोर्ग्रहणे त्रित्रिग्रहणे वा चतुःषडार्षेयप्राप्तौ तन्निषेधः संगच्छते । अन्यथा चतुःषट्प्रवराणामभावादेव सिद्धेर्निषेधवैयर्थ्यापत्तिः ।

भाट्टचन्द्रिका

## आश्वलायनगृह्यपरिशिष्टम्

असगोत्राऽविरुद्धसंबन्धा च विवाह्या

लक्षण्यो[1] वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डामसगोत्रजामविरुद्धसंबन्धामुपयच्छेत ॥

( १ ) आगृप. १।२२ ; प्रपा. ३०६ ; गभा. ९८ ( अविरुद्धसंबन्धामुपयच्छेत् ) एतावदेव ; प्रर. ९८ ( अविरुद्धसंबन्धामुपयच्छेत ) एतावदेव ; संप्र. ७२५ सर्वं प्ररवत् ; चम. १०८ सर्वं प्ररवत्; संम. ५१ सर्वं प्ररवत्; मिन्धु. १०१९ ( अविरुद्धसंबन्धामुपगच्छेत ) एतावदेव ; विपा. ६८५ लक्षण्यो ( सन्ध्यगो ) ; संकौ. १९७ सर्वं प्ररवत् ; प्रका. ३५६ ; संग. १७३ सर्वं सिन्धुवत् ; संव. १४३ सर्वं प्ररवत् ; संर. ४११ सर्वं प्ररवत्.

सगोत्रत्वव्याख्या

भृगुवत्साङ्गिरसश्च प्रवरे ह्यधिकयोगे सगोत्राः । एकर्षियोग इतरे ॥

मातृगोत्रवर्जनीयत्वामतम्

[2]केचिन्मातृगोत्रजां च वर्जयित्वा तदपत्यमसगोत्रं हि स्यात् ॥

## हिरण्यकेशिगृह्यसूत्रम्

असगोत्रा विवाह्या

[3]भार्यामुपयच्छेत्सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम् ॥

समानं गोत्रं वंशेण यस्याः सा सगोत्रा, न सगोत्रा असगोत्रा, तां असगोत्राम् । मातृद्त.

## मानवगृह्यसूत्रम्

असमानप्रवरा विवाह्या

[4]बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेत समानवर्णामसमानप्रवरां यवीयसीं नग्निकां श्रेष्ठाम् ॥

असमानप्रवराम् । नामसंख्याभ्या सर्वे निषिध्यन्ते प्रवराणाम् । न नाम्नैव केवलेन सख्यया वा । ततो भिन्ननामभिः समसंख्यैर्विवाह इष्यते । भिन्नसंख्येन समाननामभिश्च । एवं च व्याख्याने ऋक्षभरद्वाजैर्भरद्वाजविवाहो भवति, नान्यथा । भृग्वङ्गिरआर्ष्टिषेणादिभिर्भृगूणाम् । अष्टावा.

## काठकगृह्यसूत्रम्

पितुर्मातुश्चासगोत्रा विवाह्या

[5]पितृगोत्रप्रवरसमां नोद्वहेत्तथा मातृगोत्रमात्रसमाम् ॥

## वाराहगृह्यसूत्रम्

असमानप्रवराणां विवाहः

[1]असमानप्रवरैर्विवाहः ॥

## आग्निवेश्यगृह्यसूत्रम्

असगोत्रा विवाह्या

[2]सर्वाङ्गिनीं मनोज्ञां यवीयसीं ब्रह्मचारिणीं कन्यामसगोत्रां मातुरसपिण्डां... ॥

## गोभिलगृह्यसूत्रम्

असगोत्रा विवाह्या

[3]असगोत्रान् ॥

गोत्रं प्रसिद्धम् । समानं गोत्रं येषा ते सगोत्राः, तद्भिन्नान् असगोत्रान् । दारान्कुर्वीतेति गतेन संबन्धः । मृदुल.

## जैमिनिगृह्यसूत्रम्

असगोत्रा विवाह्या

[4]जायां विन्देतानग्निकां समानजातीयामसगोत्रां मातुरसपिण्डां ज्यायसः कनीयसीम् ॥

## वैखानसगृह्यसूत्रम्

असगोत्रप्रवरा विवाह्या

[5]मातुरसपिण्डां पितुरसमानऋषिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा ... ॥

## गौतमः

असमानप्रवराणां विवाहः

[6]असमानप्रवरैर्विवाहः ॥

---

(१) आगृप. १।२२ ; प्रपा. ३०६ ; विपा. ६८५ (भृगुवत्साङ्गिरसश्च प्रवरार्षाधिकियोगे सगोत्राः । एकार्षियोगे इतरेतरम् ।).

(२) आगृप. १।२२ ; प्रपा. ३०६ ; विपा. ६८५ च वर्जयित्वा (निषेधन्ति) (हि०).

(३) हिगृ. १९।६।१.

(४) मागृ. १।७।८.

(५) संप्र. ६८३.

(१) वागृ. १०.

(२) आग्निगृ. १।६।१.

(३) गोगृ. ३।४।४.

(४) जैगृ. १।२०.

(५) वैगृ. ३।२.

(६) गौध. ४।२ ; विश्व. १।५३ ; मेधा. ३।५ ; मिता. १।५३ ; अप. १।५३ ; गृक. ८ ; मभा. ; गौमि. ; उ. २।११।१६ ; स्मृच. ६८ ; गृर. ९ ; स्मृसा. २३ ; वीमि. १।५४ (पृ. ११०) ; संप्र. ५९० ; चम. ९८ ; मुक्ता. १२५, १२९ ; सिन्धु १०२९ ; भान. १६९ ; बाल. १।५३ पृ. १९१, १९२ ; कृम. १०३० (=).

(१) समानप्रवरत्वं च संख्यासंज्ञयोः साम्ये भवति, तथैव प्रकरणात्। * गृक. ८

(२) समानप्रवरत्वं समानार्षेयता, तदभावः असमानप्रवरत्वं, तैः असमानप्रवरैः विवाहः कर्तव्यः। असमानप्रवरामिति वक्तव्ये एवमभिधानं यदि मातृपक्षतः सगोत्रा भवति तदानीमपि दोषाभावज्ञापनार्थम्। एवं च पितृपक्षत एव सगोत्राप्रतिषेधः। तथा च मनुः— 'असपिण्डा च या मातुरसगोत्रा च या पितुः।' (मस्मृ. ३।५) इत्यादि। मभा.

(३) समानः एकः प्रवरः येषा तैः सह न विवाहः। तद्यथा— हरितकुत्सपिङ्गशङ्खदर्भहैमकभवानां आङ्गिर-साम्बरीषयौवनाश्वेति। हारीतः कौत्सीं न उद्वहेदित्यादि-प्रवरप्रपञ्चः आपस्तम्बीये द्रष्टव्यः। गौमि.

(४) 'असमानप्रवरैर्विवाहः' इति प्रवरमात्रस्यैव पर्युदासनिमित्तनां प्रकटयति। ततश्च गोत्रभेदेऽपि प्रवरैक्ये न विवाहः। तद्यथा, यस्कवाधूलमौनमौक्रशार्कराक्षिसार्ष्टि-सावर्णिशालङ्कायनदैवन्त्यायनानां गोत्राणां भेदेऽपि भार्गव-वैतहव्यसावेतसेति प्रवरैक्ये। तथा प्रवरभेदेऽपि गोत्रैक्ये। तद्यथा, तित्तिरिकपिभूमिस्यन्दितखण्डितानां गोत्राणा-माङ्गिरसंसैन्यगार्ग्येति अङ्गिरास्तित्तिरिः कपिभूमिरिति चेति वैकल्पिकप्रवरभेदेऽपि गोत्रैक्ये। यत्तु हरितकुत्स-पिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति मान्धा-त्रम्बरीषयौवनाश्वेति वैकल्पिकप्रवरभेदात् असमानार्षत्वेन विवाहप्रसक्तौ गोत्रैक्येन तन्निषेध इत्याधुनिकैरुदाहृतम्, तन्न सुन्दरम्, आङ्गिरसमान्धात्रोर्विकल्पेन भेदेऽपि आम्बरीषयौवनाश्वयोर्द्वयोरभेदेन विवाहाप्रसक्त्या प्रकृतो-दाहरणत्वासंभवात्। तथा च प्रवरनिर्णयकाराः स्मरन्ति— 'पञ्चाना त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः। भृग्वङ्गि-रोगणेष्वेवं शेषेष्वेकोऽपि वारयेत्॥' इति। यत्तु, समानं आर्षं यस्य तत्समानार्षं, समानार्षं च तत् गोत्रं च समानार्षगोत्रं, समानार्षगोत्रे जाता समानार्ष-गोत्रजा, न समानार्षगोत्रजा असमानार्षगोत्रजा इति प्राचां व्याख्यानम्, तन्न सुन्दरम्, विशिष्टनिषेधे गोत्रैक्येऽपि प्रवरभेदे विवाहप्रसङ्गात्। यथा तित्तिरिकपिभूम्याद्युक्तो-दाहरणे। न चेष्टापत्तिः, 'न सगोत्राय दुहितरं प्रयच्छेत्' इति गौतमेन (आध. २।११।१५) गोत्रमात्रस्यैव पृथक् निषेधात्। संप्र. ५९०–५९१

* गृ. गृकप्र.।

सगोत्रागमने दोषः प्रायश्चित्तं च

**सखीसयोनिसगोत्राशिष्यभार्यासु स्नुषायां गवि च गुरुतल्पसमः॥**

सखी मित्रं, सयोनिः भगिनी, सगोत्रा एकार्षेया। एतासु शिष्यभार्यायां पुत्रभार्यायां च मैथुने आचरिते गुरुतल्पतुल्यं निष्क्रयणम्। विसमासः सख्यादिभार्योप-संग्रहार्थः। तथाऽऽह मनुः— 'गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा सयोनिषु। सख्युः पुत्रस्य च स्त्रीषु कुमारी-ष्वन्त्यजासु च॥' (मस्मृ. ११।१७०) इति। चशब्दः आश्रितादिभार्योपसंग्रहार्थः। तथाऽऽह व्याघ्रः— 'आश्रितस्यापि विदुष आहिताग्नेश्च योगिनः। आचा-र्यस्य च राज्ञश्च भार्यां प्रव्रजितां तथा॥ धात्रीं पुत्रीं च पौत्रीं च सखीं मातुस्तथैव च। पितुः सखीं तथा गत्वा गुरुतल्पव्रतं चरेत्॥' * मभा.

**अवकर इत्येके॥**

(१) एके त्ववकीर्णिव्रतं कर्तव्यमिति मन्यन्ते न तु गुरुतल्पव्रतमिति। इतिकरणः सदेहव्यावृत्त्यर्थः। यद्येवमुच्येत अवकर एके इति, ततोऽवकीर्णिनोऽपि गुरुतल्पसमो दोष इत्याशङ्का स्यादिति। सोऽयं विकल्पः अभिसंध्यपेक्षया द्रष्टव्यः। अभिसंधौ गुरुतल्पसमः, अनभिसंधौ त्ववकीर्णिव्रतमिति। एवं चात्र पारदार्य-निमित्तं कृच्छ्रं कृत्वा पुनरवकीर्णिव्रतमिति द्रष्टव्यम्। तथाऽऽह जातूकर्णिः— 'आचार्यादेस्तु भार्यासु गुरु-तल्पव्रतं चरेत्। अवकीर्णिव्रतं चैव ततः कुर्यात्समा-हितः॥' इति। गुरुतल्पसमेऽपि पारदार्यादधिकं गुरुत-ल्पादीनं कल्प्यम्। तदपि परदारप्रायश्चित्तमेव चान्द्रा-यणादधिकं द्रष्टव्यम्। चान्द्रायणस्य च वर्णक्रमेण पादहीन-कल्पना कर्तव्या। तथा च प्रजापतिः— 'आचार्यादेस्तु भार्यासु चरेच्चान्द्रायणव्रतम्। क्रमेण पादशो हीनं

* गौमि. मभागतम्।

(१) गौध. २३।१२ ; मभा. ; गौमि.

(२) गौध. २३।१३ ; मभा. ; गौमि.

वर्णानामिति च स्थितिः ॥' इति । अवकीर्णिप्रायश्चित्तमपि रहस्योक्तम्– 'तदाहुः कतिधाऽवकीर्णी' इत्यादि वक्ष्यति । मभा.

(२) एके मन्यन्ते सख्यादिगमनेऽवकरो दोषः । अत्र प्रायश्चित्तमप्यवकीर्णिव्रतं न गुरुतल्पव्रतमिति । यान्येतानि सख्यादिगमनेऽनुक्रान्तानि प्रायश्चित्तानि तेषु मरणान्तिकानि सप्रत्ययानुबन्धात्यन्ताभ्यासविषयाणि । यानि पुनरत्यन्तलघूनि तानि स्वभार्याबुद्ध्या प्रवृत्तस्य मध्ये ज्ञात्वा रेतःसेकादर्वाङ्निवृत्तविषयाणि मध्ये मध्यानि कल्प्यानि । 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्' इति मानवं तु मरणान्तिकयोग्यमहापातकादिव्यतिरिक्तविषयम् । गौमि.

## हारीतः

असगोत्रा विवाह्या

¹असमाननामगोत्रां कन्यां भ्रातृयुतां शुभाम् ।
सर्वावयवसंयुक्तां सद्वृत्तामुद्वहेत्ततः ॥

## बौधायनः

सगोत्राया विवाहे प्रायश्चित्तं कर्तव्यं च

²सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् । प्रजाता चेत् कृच्छ्राब्दपादं चरित्वा यन्म आत्मनो मिन्दाऽभूत्पुनरग्निश्चक्षुरदादित्येताभ्यां जुहुयात् ॥

(१) अप्रजाता चेच्चान्द्रायणम् । तच्च महाप्रवरेषु स्वयमेवोक्तम्–सर्वेषां 'सगोत्रां गत्वा चान्द्रायणं कुर्यात् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेन्मातृवद्भगिनीवत्' इति । बिभृयादिति शेषः । स्वयमेव ब्रवीति– 'गर्भो न दुष्यति कश्यप इति विज्ञायते' इति । मिन्दाहुती पुनः सर्वत्राविशिष्टे । अनर्दिष्टद्रव्यकत्वात् आज्यद्रव्यं प्रतीयात् । * बौवि.

(२) एतच्चाज्ञानतः, पूर्वममत्येत्युपक्रमात् । ज्ञानोत्तरं भोगे ता परित्यजेत् । कृच्छ्राब्दपादस्यैन्दवाना च शक्ताशक्तत्वेन व्यवस्था द्रष्टव्या । मत्या तु गुरुतल्पव्रताच्छुद्धिः । मर. ४१३

¹अकामतः परिणयने कृच्छ्रं, प्रजोत्पादने चान्द्रायणम् ॥

²वंशक्षयो भवेत्तस्य वंशवृद्धिर्न जायते ।
सपिण्डगोत्रां ज्ञात्वोद्वा गुरुतल्पव्रतं चरेत् ॥
तां मातृवत्पालयेच्च गर्भस्तज्जोऽन्त्यतां व्रजेत् ।
अज्ञानाच्चेन्दवैः शुध्येद्गर्भस्तज्जस्तु काश्यपः ॥

## आपस्तम्बः

सगोत्रे कन्यादानानर्हः

³सगोत्राय दुहितरं न प्रयच्छेत् ॥

कन्यागोत्रमेव गोत्रं यस्य तस्मै कन्या न देया । यथा हारीताय हारीतीम्, वात्स्याय वात्सीमित्यादि ।

उ.

समानगोत्रप्रवरया विवाहे दोषः

⁴समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥

---

(१) हास्मृ. ४।२.

(२) बौध. २।१।३८ ; अप १।५३ पृ ८० ( सगोत्रा चेदमत्योपयच्छेद्भ्रातृवदेना बिभृयात्प्रजाता चेत्कृच्छ्राब्दपाद चरेत् ) एतावदेव ; गृक. ३१ ( सगोत्रां चेदमत्योपयच्छेत् मातृवदेनां बिभृयात् ) एतावदेव ; उ. २।२१।१६ ( सगोत्रां चेदमत्योपयच्छेत मातृवदेनां बिभृयात् ) एतावदेव , गृर. २९ गृकवत् ; पमा. ४७७ ( प्रजाता ...जुहुयात्० ) : ३३७ ( भाग २ ) प्रजाता चेत् कृच्छ्राब्दपादं ( प्रजाता चेत् कृच्छ्पादम् ) ; उत. १११ गृकवत् ; संप्र. ६८० गृकवत् , सिन्धु. १०५९ ( सपिण्डां सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् ) ; चम. ९८ ( सगोत्रां चेद् मत्योपयच्छेद् मातृवदेना बिभृयात् ) एतावदेव ; प्रका. ३४९ चेदमत्योपयच्छेत् ( चेदुपयच्छेदमत्या ) ; संर. ४१३ प्रजाता ( प्रजा जाता ).

* सप्र. व्याख्यान अग्रे 'परिणीय सगोत्रां तु' इति शातातपवचने द्रष्टव्यम् ।

(१) क्रुभ. १०६०.

(२) त्रिपा. ६९८.

(३) आध. २।११।१५ ; हिध. २७।८।३० ; अप. १।५३ पृ. ८३ सगोत्राय ( सगोत्रेभ्यो ) ; संप्र. ५९१ ( न सगोत्राय दुहितरं प्रयच्छेत् ) गौतम' ; मुक्ता. १२७ ; सिन्धु. १०२८ ; श्रान. १७१ , प्रका. ३४४ , क्रुभ. १०२९ ( = ) : १०३३ निर्देशमात्रम्.

(४) स्मृच ६८ ; पमा. ४७७ चण्डालं ( सतानं ) ; मपा. १३७ ; उत. ११२ कन्यामूढ्वोप ( समुद्वाह्योप ) ; संप्र. ६८० ;

समानप्रवरत्वं संज्ञासंख्ययोः अन्यूनानतिरिक्तत्वेन । भिन्नगोत्रेऽपि समानप्रवरत्वं यथा— वात्स्यसावर्णिगोत्रयोः और्वच्यावनभार्गवजामदग्न्याप्नुवानाः प्रवराः । एकगोत्रेऽपि प्रवरान्यत्वं यथा— घृतकौशिकगोत्रस्य कुशिककौशिकघृतकौशिकाः प्रवराः, कौशिककुशिकबन्धुलाश्चेति प्रवराः । अतो गोत्रप्रवरयोः पृथक् निषेध इति । सगोत्रासमानप्रवराग्रहणं अविवाह्यस्त्रीमात्रोपलक्षणम् ।

उत. ११२

## वसिष्ठः

असमानप्रवरा विवाह्या

[1]गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षेयामस्पृष्टमैथुनामवरवयसीं सदृशीं भार्यां विन्देत ॥

समानगोत्रप्रवरया मातृगोत्रया च विवाहे प्रायश्चित्तम्

[2]परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गं द्विजश्चान्द्रायणं चरेत् ।
मातुलस्य सुतां चैव मातृगोत्रां तथैव च ॥

## विष्णुः

असगोत्रप्रवरा विवाह्या

[3]न सगोत्रां न समानार्षप्रवरां भार्यां विन्देत ॥

तर्हि ' न समानगोत्रां समानप्रवरां भार्यां विन्देत ' इत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इति चेत्, अत्रोपदिष्टातिदिष्टगोत्रस्यैव निषेधः, न तु अतिदिष्टातिदिष्टशूद्रगोत्रादेः, अन्यथातिदेशो क्षत्रियवैश्यमात्रोपादानं व्यर्थं स्यादिति ।

उत. १११

सगोत्रादिगमने दोषः प्रायश्चित्तं च

(गुरुदारगमनसमम्) स्वसुः सख्याः सगोत्रायाः उत्तमवर्णायाः कुमार्या अन्त्यजाया रजस्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्च ॥

[1]पञ्चमात्सप्तमाद्धीनां यः कन्यामुद्वहेद्द्विजः ।
गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥

## शङ्खः लिखितः शङ्खलिखितौ च

असमानगोत्रप्रवरा विवाह्या, विवाहोत्तरं कन्याया भर्तृगोत्रत्वम्

[2]दारानाहरेत्सदृशानसमानार्षेयानसंबन्धानासप्तमपञ्चमात् पितृमातृबन्धुभ्यः ॥

[4]विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम् ।
मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम् ॥

[5]विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु ।
एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ॥

---

चम. ९९ ; मुक्ता. १२७ पूर्वार्धे ( समानप्रवरां कन्यां सगोत्रामुपगम्य च । ) ; संम. ६२ ; आन. १७० पूर्वार्धे ( समानप्रवरां कन्यां सगोत्रामुपगम्य च । ) ; कृभ. १०६० बौधायनः.

( १ ) वस्मृ ८।१. शेषः स्थलादिनिर्देशः विवाहविधिप्रकरणे ( संरा. पृ. १०१ ) द्रष्टव्यः ।

( २ ) मेधा. ३।५ ; ममु. ३।५ कृत्वा तस्याः (तस्यां कृत्वा) : ३।११ निर्देशमात्रम् ( = ).

( ३ ) विस्मृ. २४।९ ; उ. २।११।१६ पृ. २२२ ( असगोत्रामसमानप्रवरां भार्यां विन्देत ) ; उत. १०६ ( भार्यां विन्देत ) एतावदेव : १०८ नार्षप्र (नप्र ) : १११ ( न समानगोत्रां समानप्रवरां भार्यां विन्देत ) : १४९ ( न समानगोत्रां न समानप्रवरां विन्देत ) ; दीक. १।५३ ( न सगोत्रां न समानप्रवरां विन्देत ) ; मुक्ता. १२५ उत्तत् ; बाल. १।५३ पृ. १९२ उत्तत्.

( १ ) विस्मृ. ३६।७.

( २ ) स्मृच. ७२ ; प्रपा. ३०७ पूर्वार्धे ( सप्तमात्पञ्चमाद्वा यः कन्यकामुद्वहेद्द्विजः । ) ; संप्र. ७०५ माद्धीनां ( माद्वां ), द्वहेद्द्विजः ( द्वहते द्विजः ) ; मुक्ता. १२६ ; सिन्धु. १००५ माद्धीना ( माद्धीमान् ) ; विपा. ६८९ माद्धीनां यः कन्यामु ( माद्वा यः कन्यकामु ) त्रां चैवमु ( त्रामपि चो ) वृद्धविष्णुः ; आन. १७० ; माप्र. ५ ; संग. १६९ विपावत्, वृद्धविष्णुः.

( ३ ) उ. २।११।१६ पृ. २२१ शंखः ; मुक्ता. १२५ न्धानासप्तमपञ्चमात् ( न्धान्सप्तमात् ) ; बाल. १।५३ पृ. १९२ पञ्चमात् ( पञ्चमान् ).

( ४ ) शंस्मृ. ४।१ ; संप्र. ७०४.

( ५ ) लिस्मृ. २५ ; विश्व. १।२२५ पृ. १५४ गोत्रे च ( गोत्रेऽथ ) उत्त. ( = ) ; स्मृच. ६९ उत्त. ( = ) ; पमा. ४६९ उत्त. ( = ) ; प्रपा. ३०७ उत्त. (=) ; धप्र. ४७ पू. वृद्धमनुः ; सादी. २३ उत्त., मनुः : ३४ उत्त. ( = ) ; संप्र. ७१७ उत्त. ( = ) ; मुक्ता. १२८ उत्त., स्मर्यते : १२९ विश्ववत्, उत्त., स्मृतिः ; सिन्धु. ९९३ उत्त., स्मृतिः ; विपा. ६९० उत्त. ( = ) ; संकौ. १९५ उत्त. ( = ) ; आन. १७४ उत्त. ( = ) ; माप्र. ९ ( एकत्वं सा गता भर्तुः ) एतावदेव

स्वगोत्रात् भ्रश्यते नारी विवाहात्सप्तमे पदे ।
भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥

## मनुः

असगोत्रा द्विजानां विवाह्या, टीकासु गोत्रलक्षणम्

अैसपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

( १ ) * यादृशी कन्या वोढव्या तामिदानीं दर्शयति । मातुः या असपिण्डा पितुश्च या असगोत्रा सा दारकर्मणि प्रशस्ता । असगोत्रा च या पितुः । गोत्रं वसिष्ठभृगुगर्गादिवंशः स्मर्यते । समानगोत्रा वसिष्ठा न वसिष्ठैर्विवहन्ते, न गर्गा गर्गैः । वासिष्ठे तु मातृसगोत्राया अपि प्रतिषेध – ' परिणीय सगोत्रां तु समानप्रवरां तथा । कृत्वा तस्याः समुत्सर्गं द्विजश्चान्द्रायणं चरेत् ॥ मातुलस्य सुतां चैव मातृगोत्रां तथैव च ॥ ' गौतमेन तु पठ्यते– ' असमानप्रवरैर्विवाहः ' (गौध. ४।२) इति । तत्र गोत्रसमत्वे सत्यपि प्रवरभेदश्चेदुच्यते विवाहः । तदयुक्तम् । यतः स्मृत्यन्तरे हि उभय निषिध्यते– ' असमानार्षगोत्रजाम् ' ( यास्मृ. १।५३ ) इति । आर्षं प्रवर इत्येकोऽर्थः । कथं पुनर्गोत्रभेदे समानार्षेयत्वम् । किमिति न भवति यदि स्मर्यते । श्रुतिस्मृतिप्रमाणकोऽयमर्थः, न प्रत्यक्षगोचरः, येन विरोधः स्यात् । के पुनरमी प्रवरा नाम ? अत्यल्पमिदमुच्यते । इदमपि वक्तव्यम्– किं पुनरेतद्ब्राह्मणत्वं नाम, तथा कतरदेतद्गोत्रं नाम । यथैव समाने पुरुषत्वे ब्राह्मणत्वादिविशेषः, एवं समाने ब्राह्मणत्वे वसिष्ठादिगोत्रभेदः । प्रतिगोत्रं च समानार्षेयाणि । यस्यैतद्गोत्रं तस्य तैः शब्दैः प्रवराश्रयणं कर्तव्यम् । एवं विवाहनिषेधेऽपि । स्मरन्ति च सूत्रकाराः गोत्रभेदसम्बन्धेन प्रवरान्– ' यस्यैतद्गोत्रं तस्येमे प्रवराः ' इति । गोत्रभेदस्तु तद्गोत्रजैरेव स्मर्यते– 'वयं पाराशराः, वयमुपमन्यवः ' इति । यद्यपि गोत्रवत्प्रवरानपि स्मरन्ति, तथापि बहुत्वात्कदाचिद्विस्मरेयुः इति गोत्रमुपलक्षणीकृत्य प्रवरस्मृतिः उपनिबद्धा । गोत्रं तु स्मरन्ति । न च तस्य किंचिदुपलक्षणमस्ति– ' य एवंरूपः तस्य इदं गोत्रम् ' इति । एतावत्तत्र स्मरणम् । यावद्गोत्रं संततिसमानजातीयत्वम् । एव च गोत्रप्रवरभेदः

---

* ' असपिण्डा च ' इतिपदव्याख्यानं अग्रे सापिण्ड्यप्रकरणे द्रष्टव्यम् ।

( = ) ; बाल. १।५३ पृ. १९५ उत्त., वृद्धमनु ; मंग. २८५ एकत्वं ( एकत्वे ) उत्त., मनुः .

( १ ) लिस्मृ. २६ विवाह्या ( उद्वाह्या ) तस्याः पिण्डोदकक्रिया ( दान पिण्डोदकक्रियाः ) ; मिता. १।२५४ भर्तृ ( स्वामि ) ( = ) ; पमा. ४६९ पू ( = ) ; प्रपा. २०७ विवाहात् ( विवाहे ) पू. ( = ) ; संत. ९०२ भर्तृ ( पति ) (=) ; धप्र. ४७ पू. , वृद्धमनुः ; स्मादी. २३,२४ पृ. , मनुः ; लता. २४४ पू. , उशना ; संप्र. ५८५ पू., स्मरणम् : ७१७ पू. (=) ' ८३६ पू , मनु ; चम. १०६ पू. , मनुः ; मुक्ता. १२९ पू ., स्मृति ; संम. ५३ ( = ) ; विपा. ६९० पू. (=) ; संकौ. १९५ पू. ( = ) ; आन. १७३, १७६ पू. (=) ; स्माप्र. ७ पू. , स्मृतिः : ८,९ पू. (=) ; बाल. १।५३ पृ. १९५ पू., वृद्धमनुः ; संग. १७५ पू. ( = ) : २८५ पू., मनुः ; कृभ. १००९,१०५८ निर्देशमात्रम् (=) : १०११ पू. (=).

( २ ) मस्मृ. ३।५ ; मेधा. दारकर्मणि मैथुने ( दारकर्मण्यमैथुनी ) , अन्ये तु अमैथुने इति पठन्ति , मिता. १।५३ पूर्वार्धे ( असपिण्डा च या मातुरसपिण्डा च या पितु । ) ; अप. १।५३ पृ. ८१ ; गृक. ७ मनुशातातपौ ; उ. २।११।१६ मेधावत् ; स्मृच. ६८ ; गृर. ८ असपिण्डा च ( असपिण्डा तु ) मनुशातातपौ ; स्मृसा १२ च या मातु ( तु या मातु ) च या पितु ( तु या पितु ) प्रशस्ता ( हि न्याय्या ) मनुशातातपौ , पमा. ४६८–४६९ ; प्रपा २०७ ; मर. १७ ; मपा १२२ : १४० निर्देशमात्रम् ; दीक १।५२ ; उत. १०६ मनुशातातपौ ; स्मादी. २३ २४ द्वितीयः पादः ; वीमि. १।५३ ; संप्र. ५९०, ६५६ द्वितीय पादः : ६९१ , धम. ९४ मूलं इत्युक्तम् ९८ द्वितीय पादः : १०६ पू. ' १०७ द्वितीयः पादः ; मुक्ता. १२४ उत्तरार्धे ( सा द्विजानां प्रशस्ता स्यौ दारकर्मण्यमैथुनी । ) : १२९ पू. , संम. ५३ मितावत् ; सिन्धु. ९९१ ; विपा. ६९० ; संकौ. १७५ पू ; आन. १६८ उत्तरार्धे ( सा द्विजानां प्रशस्ता स्यादारकर्मण्यमैथुनी । ) : १७२ पू. : १७३ निर्देशमात्रम् ; स्माप्र ७ ११ पू. : १६ निर्देशमात्रम् ; प्रका. ३४४ ; नन्द. मेधावत् ; कृभ. ८९५ द्वितीय पादः ( = ) : ८९७ पू. : ८९८ द्वितीय पादः : १०१७ : १०१८ निर्देशमात्रम् : १०५३ पू. ( = ) : १०५८ द्वितीय पादः ; संदी. ७ पू. : १० (भागः २).

ब्राह्मणानां, न राजन्यविशाम्। तथाहि कल्पसूत्रकारः— 'पौरोहित्यान् राजन्यवैश्ययोः' इति। यद्यपि गोत्रविशेषव्यपदेशे सति प्राप्तप्रतिषेधेनापि प्रवराधिकारे वचनमिदमुपपद्यते, किंतु न तेषां गोत्रस्मरणमस्ति। कस्तर्हि क्षत्रियवैश्ययोर्विवाहेऽपि बन्धूनामवरैर्नियमः। उच्यते। सर्ववर्णविषयमेतत्— 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्य.' इति। अन्ये तु गोत्रं वंशमाहुः। न तत्र अवध्यपेक्षा। यावदेतज्ज्ञायते वयमेकवंशा इति, तावदविवाहः। अस्मिन्नपि पक्षे असपिण्डा चेत्यनुवर्तते। तेन पूर्ववत् पितृष्वस्रादिदुहितृणां प्रतिषेधः। अस्मिंस्तु पक्षे समानार्षगोत्राणां प्रतिषेधो दुर्लभः। न हि तत्र एतदस्ति वयमेकवंश्या इति। उच्यते। ऐतिहासिकेन तद्दर्शनेन समर्थयन्ते। तत्र हि वर्णयन्ति। 'ऋषिर्वसिष्ठाङ्गिराद्यो वंशस्य कर्ता, तद्गोत्रास्ततः प्रसूताः प्रवराः' इति तत्पुत्रपौत्राः तपोविद्याद्यतिशयगुणयोगेन प्रख्याततमाः। स्मृत्यन्तरादेष एव नियमः। इदं त्वत्र निरूप्यम् — यदेतत्स(? दस)मानप्रवरैरिति, तत्र नामधेयतस्तावत्समानत्वं, न सख्यातः। नामधेयसमानत्वे च किं यत्र सर्वाण्येव समानानि तत्र प्रतिषेधः, उत एकस्मिन्नपि समाने? तत्र यदि समुदितानां प्रवरत्वं, तत्र समाने कस्मिंश्चित् भिन्नेऽन्यस्मिन्नन्यः समुदायः संजातः इति असमानप्रवरत्वाच्च प्रतिषेधः। एवं च उपमन्यूनां पराशराणां च स्याद्विवाहः। भिन्नं तयोर्गोत्रम्। एके उपमन्यवः अपरे पराशरा। पूर्वेण च न्यायेन प्रवरभेदः। उपमन्यूना वासिष्ठभारद्वाजैकपादिति प्रवराः। पराशराणा वासिष्ठगार्ग्यपाराशर्येति। अथ एकैकस्य प्रवरत्वं, एकस्मिन्नपि समाने प्रतिषेधः। तद्यथा माषा न भोक्तव्याः (इति) मिश्रा अपि न भुज्यन्ते। किं पुनरत्र युक्तम्, एकैकस्य प्रवरत्वम्। तथाहि— सामानाधिकरण्यं दृश्यते— 'एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते' इति। प्रतिपद्य एकः। तस्माद्येऽप्याह एषामविवाह इति। * मेधा.

(२) अत्र च पितृसगोत्रमात्रे विवाहनिषेधार्थं 'असगोत्रा च या पितुः' इति श्रुतितः पित्रा सह असगोत्रपदस्य पितुरन्वयो दर्शितः। मातृपक्षे तु यद्यपि 'असपिण्डा च मातुः' इति चकारेण असगोत्रत्वाकर्षणात् पितृपक्ष इव सामान्यतो मातुः सगोत्रमात्रे विवाहनिषेधः प्राप्तः, तथापि स्मृत्यन्तरे 'मातुः सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः॥' इत्यभिधानात् यावदस्मात् मातृकुलजात् एतन्नाम्नः अस्यां जन्मेति ज्ञायते, तावन्मातृसगोत्राणामविवाह्यत्वं, तदूर्ध्वं तु न दोष इति।

दारकर्मणि भार्यासाध्ययज्ञादिकर्मणि निमित्ते विवाहं कर्तुं प्रशस्ता अनिन्दिता, तथा मैथुने स्त्रीपुंससाधारणसाध्ये सुरतकर्मण्यपि सैव प्रशस्ता अनिन्दिता। * मवि.

(३) अत्र हि मातृपक्षे सपिण्डमात्रैः विवाहप्रतिषेधात् मातृगोत्रे विवाहाभ्यनुज्ञाऽवगम्यते। यदि च मातृगोत्रे विवाहाभ्यनुज्ञा न स्यात् पितृगोत्रवत् 'असगोत्रा च या मातुरसगोत्रा च या पितुः' इत्यवक्ष्यत्। न चैवं वदति। तस्मादस्ति मातृगोत्रे विवाह इत्येकः पक्षः। पक्षान्तरमाहुः परे स्मृतिकाराः— 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्॥' इदं स्मृत्यन्तरवचनं स्मृतिभाष्यकारैरुदाहृतं व्याख्यातं च। पुत्रिकापुत्रविषयमिदं वचनमित्येके व्याचक्षते, तस्य द्विगोत्रत्वादुभयत्रापि विवाहासंभवादिति। तदपेशलं व्याख्यानम्। यतस्तस्य पुत्रिकापुत्रस्य उभयमपि पितृगोत्रमेवेति वचनानर्थक्यं स्यात्, 'असगोत्रा च या पितुः' इत्यनेनैव अविवाहसिद्धेः। ननु च मातृगोत्रविवाहप्रतिषेधेनैव मातुलसुताविवाहप्रतिषेधसिद्धेः वचनानर्थक्यं अत्रापि स्यात्। उच्यते— मातुलग्रहणं मातृगोत्रदोषादपि दोषगौरवख्यापनार्थं संनिकृष्टतरत्वात् इत्यदोषः। अपि च— 'अगस्त्याष्टमसप्तऋषीणामपत्यं गोत्रम्' इत्युत्तरत्र वक्ष्यते। तच्चापत्यं मातापित्रोर्द्वयोरप्यविशिष्टं, जन्यजनकसंबन्धस्योभयोः अविशेषात्। अतो मातृगोत्रमपि स्वगोत्रमेव इत्युभयत्रापि अविवाह एव युक्तः। ननु च उभयगोत्रत्वे सति पुत्रस्य द्व्यामुष्यायणानामिव उभयत्र प्रवराः प्रसज्यन्ते, विवाहप्रतिषेधवत्।

* प्रपा. मेधागनम्।

* ममु. मेधागन मविगन च।

अत्र ब्रूमः— अत्र हि सर्वे प्रवराचार्याः सर्वगोत्राणां मध्ये शुङ्गशैशिरिप्रभृतीन्येव कानिचिद्गोत्राणि द्व्यामुष्यायणानि उदाहृत्य तेषामेव द्वयोर्गोत्रयोः प्रवरानाहुः। नान्येषाम्। पितृगोत्रप्रवरानेव अन्येषामाहुः। अतः सत्यपि मातृगोत्राभिप्रायेण द्विगोत्रत्वे प्रवराः पितृगोत्रविषया एव इत्यवगच्छामः। यद्यपि मनुस्मृतेः स्मृत्यन्तरस्य च तुल्यबलत्वात् संदिग्धो मातृगोत्रविवाहः, तथापि न कर्तव्यः, दोषप्रायश्चित्तयोर्गुरुत्वात्। पाक्षिकोऽपि दोषः परिहर्तव्य इति न्यायविदः। तदाहुः—'संदिग्धेऽपि परे लोके त्याज्यमेवाशुभं नरैः' इति। ननु शिष्टाः केचिदाचरन्ति। सत्यमाचरन्ति, मातुलसुताविवाहमपि आचरन्ति केचिच्छिष्टाः स्मृतिद्वयं पठन्तो व्याचक्षाणाश्च। किंच— सर्वज्ञस्य मनोर्वाक्यं मातृगोत्रविवाहसूचकं पठतामस्माकं स्मृत्यन्तरं च मातृगोत्रविवाहप्रतिषेधकं दृष्ट्वाऽपि सशयवतामाचारमात्रात् व्यामोहमूलतया संभाव्यमानात् कथमिव संशयापनोदः। तस्मात् पितृगोत्रवत् मातृगोत्रेऽपि अविवाह एव इति।

*गोप्र.* ९३–९४

(४) मातृगोत्राऽपि वर्ज्या, 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्॥' इति शातातपोक्तेः। इत्थं केचिदेव, 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कितः॥' इति मदनपारिजाते व्यासस्मृतेः, 'मातृगोत्रं माध्यन्दिनीयानाम्' इति सत्याषाढोक्तेश्चेति कश्चित्। वस्तुतस्तु– इदं वचनं सत्याषाढसूत्रे अदर्शनात् प्रवरमञ्जरीकारेणालेखनाच्च निर्मूलमेव। प्रत्युत मातृगोत्रनिषेधस्य पाक्षिकत्वेऽपि चण्डालत्वादिदोषस्यातिगुरुत्वात् पाक्षिकदोषस्यापि परिहार्यत्वात् सर्वेषां मातृगोत्रवर्जनमिति प्रवरमञ्जर्यामुक्तम्। पुत्रिकापुत्रैः असुरादिविवाहजैश्च सर्वैः मातृगोत्रा वर्ज्या, दानस्यानिष्पत्तेः। अत एव तत्र— 'पितृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया' इति श्राद्धे पितृगोत्रं दृश्यते। शिष्टास्तु इदं मातृगोत्रवर्जनं गान्धर्वादिविवाहोढमातृपरं, तत्र पितृगोत्रानिवृत्तेः। ब्राह्मादिविवाहचतुष्टये मातामहगोत्रनिवृत्तेः भवत्येव विवाहः। अत एव मार्कण्डेयपुराणे— 'गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित्' इति ब्राह्मादिषु भर्तृगोत्रं गान्धर्वादिषु च पितृगोत्रमुक्तम्। यदपि— 'एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च। तमुद्वाहं न कुर्वीत सा कन्या भगिनी भवेत्॥' इति मञ्जर्यां वचने मातृकुलप्रवरचिन्तनमुक्तं, तदपि पुत्रिकाविषयमेव, अन्यथा—'प्रवरं पितृगोत्रेषु मातृगोत्रे न चिन्तयेत्। गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत्॥' इति मञ्जर्यां वचनविरोधः स्यात्। तत्रैव काठकगृह्येऽपि 'प्रवरान् पितृगोत्रेषु चिन्तयेत्' इति। येषामियं मातृगोत्रा प्राप्ता तेषामपि कलौ तन्निषेध एव, 'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा' इति हेमाद्रिमाधवीयादिस्थपुराणे कलिवर्ज्येषूक्तेः। *प्रद.* १०९

(५) अत्रेदमाकूतम्– 'असपिण्डा च या मातुरसगोत्रा च या पितुः।' इत्यादौ गोत्रशब्दो न अगस्त्याष्टमसप्तर्ष्यपत्यत्वरूपगोत्रत्वावच्छिन्नमात्रस्य वाचकः, किन्तु ज्ञायमानैककुलोद्भवत्वविशिष्टतद्वाचकः। ततश्च यावदेककुलोद्भवत्वं ज्ञायतेऽभियुक्तोक्त्या तावच्छतपुरुषव्यवधानेऽपि न विवाहसम्बन्धः, उक्तसगोत्रत्वात्। स्थानादिभेदे तु एककुलोद्भवत्वापरिज्ञानात् नोक्तसगोत्रत्वमिति तत्र विवाहसंबन्धकरणे न दोषः, समाचारात्, 'यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्। नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते॥' इति चतुर्विंशतिमतधृतवचनेन समाचारस्य विवाहादिसंबन्धे प्रामाण्यबोधनात्। अत एव येषां अगस्त्याष्टमसप्तर्ष्यपत्यत्वरूपगोत्रत्वावच्छिन्नैक्ये एककुलोद्भवत्वापरिज्ञानेऽपि कन्यायाः परित्यागसमाचारः, तैस्तत्र सम्बन्धकरणे प्रायश्चित्तार्हतैव, सदाचाराभावात्। अत एव धर्मसिन्धौ 'कौस्तुभे तु' इत्युपक्रम्य– 'उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम्। पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः॥ सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च। एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि। विवाहयेन्मनुः प्राह पाराशर्यो यमोऽङ्गिराः॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्। नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते॥' इत्यादिवचनानां चतुर्विंशतिमतषट्त्रिंशन्मतादिषु उपलभ्यमानत्वात् सापिण्ड्यसंकोचेन विवाहस्य

चहुदेशेषु दर्शनाच्च येषा कुले देशे च अनुकल्पत्वेन सापिण्ड्यसंकोचः परम्परया समागतस्तेषां सापिण्ड्यसंकोचेन विवाहो न दोषाय । स्वकुलदेशविरुद्धेन सापिण्ड्यसंकोचेन विवाहे दोषो भवत्येव, 'अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात्' 'येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥' इत्यादिवाक्यैः स्वकुलदेशाचाराविरुद्धस्यैव शास्त्रस्य विवाहेऽनुसर्तव्यत्वात् । एवं मातुलकन्यापरिणयनेऽपि 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥' इत्यादिस्मृतीना 'तृसां जह्युर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव' इति मन्त्रलिङ्गैर्बाधात् येषा कुले मातुलकन्यापरिणयः परम्पराप्राप्तः तैः स कार्यः । 'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ।' इति मातुलकन्याविवाहस्य कलिवर्ज्यत्ववचनमपि येषा कुले देशे मातुलकन्याविवाहो नास्ति तत्परम्, मातुलकन्यापरिणयनस्य अनेकश्रुतिस्मृतिसिद्धत्वात् । अत एव मातुलकन्योद्वाहिना श्राद्धे निमन्त्रणनिषेधोऽपि स्वकुलाचारादिविरोधेन तदुद्वाहादिपरः, उक्तविधसापिण्ड्यसंकोचेन विवाहं कुर्वतां शिष्टैः श्राद्धादौ भोजनाद्याचारात्— इत्यादि—बहूपपादितमित्यन्तेन सदाचारानुरोधेन सापिण्ड्यसंकोच उक्तः ।

केचित्तु— एकनाम्ना बहूनां लोके दर्शनात् भारद्वाजादिगोत्रकारिणो मुनयोऽपि भारद्वाजादिनामानोऽनेके विद्यन्ते । ततश्च एकनामतया भिन्नस्थानवर्तिनां पाण्डेयादिकुलोद्भवानां सगोत्रत्वावभासेऽपि प्रवरभेदात् वस्तुतो न सगोत्रत्वम्, प्रवरभेदेन गोत्रभेदस्य कल्पनात् । अत एव प्रवरदर्पणे 'अत एव नामैकत्वेऽपि गणभेदे प्रवरभेदे च ऋषीणां भेदात् भवत्येव विवाहः, लोके एकनाम्नामप्यनेकेषां पुंसां दर्शनादित्युक्तं प्रवरमञ्जर्याम्' इति कमलाकरः । यद्यपि केषाचित् प्रवरैक्यमप्यवभासते तथापि तत्र प्रवराणां क्वचित्संख्याभेदः क्वचिच्च नामभेदो बोध्यः, तावताऽपि असमानप्रवरत्वस्य मुरारिमिश्रादिग्रन्थसंमतत्वात् । येषां च प्रवरसंख्यासाम्यं प्रवरनामसाम्यं च भिन्नकुलोद्भवानां दृश्यते, तेषां पूर्वजानां प्रवरज्ञानाशे प्रमाद एव, प्रवरैक्ये गोत्रैक्ये च विवाहस्य निषिद्धत्वात् — इत्याहुः ।

अन्ये तु— 'असपिण्डा च या मातुरसगोत्रा च या पितुः' इत्यादिमन्वादिवाक्येषु गोत्रपदस्य अगस्त्याष्टमसप्तर्ष्यपत्यत्वावच्छिन्नमात्रबोधकत्वेऽपि 'परिणीय सगोत्रां च' इत्यादौ 'आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः । सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥' इत्यादौ च सगोत्रादिपदस्य एककुलोद्भवत्वादिविशिष्टसगोत्रादिबोधकत्वम्, समाचारानुरोधात् । अन्यत्र तु परित्यागे प्रशस्तत्वं, अपरित्यागे किंचिद्दोषावहत्वम्, न तु पातित्यप्रयोजकत्वम् । अत एव मनुवाक्ये 'सा प्रशस्ता द्विजातीनां' इत्युत्तरार्धे प्रशस्तपदोपादानम् । गोत्रपदं च कुले 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेत चतुर्दशे । जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते ॥' इति मत्स्यपुराणेन परिभाषितम् । अत एव 'त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ।' इत्यादौ बृहस्पत्यादिवाक्ये गोत्रपदेन कुलरूपार्थस्यैव ग्रहणमिति न क्वचिदपि देशे भिन्नकुलोद्भवाना भारद्वाजादिगोत्रिणां कस्यचिन्मरणे स्नानसमाचारः । वस्तुतस्तु कात्यायनलौगाक्षिभ्यां मत्स्यपुराणे च एकैकं गणं निर्दिश्य 'एतेषामविवाहः' इत्युक्तेः भिन्नगणान्तःपातिना विवाह इष्यत इति ध्वन्यते । अन्यथा सर्वानेव गणान् निर्दिश्य अन्ते बौधायन इव 'एषां सर्वेषामविवाहः' इत्येवावक्ष्यन् । तस्मात् कात्यायनाद्यनुयायिनां माध्यन्दिनादीनां स्वस्वगणं हित्वा अन्यत्र सम्बन्धकरणे न दोषः । गणभेदपरिज्ञानं च प्रवरभेदात् । आत्रेयायन्यादीनां आङ्गिरसबार्हस्पत्यभारद्वाजेति त्रिप्रवराणा भरद्वाजापत्याना, कात्यायनादीना आङ्गिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येतिपञ्चप्रवराणां भरद्वाजानां च परस्परं विवाहसंबन्धो भवत्येव, त्रिप्रवरसाम्येऽपि संख्यासाम्याभावात् इति पूर्वमेवोक्तम् । क्वचिच्च गणभेदः प्रवरभेदश्च स्थानभेदादेव कल्प्यः । यथा गोत्रभूतभारद्वाजर्ष्यपेक्षया प्रवरभूतभारद्वाजर्षेः अभेदे 'भारद्वाजगोत्रस्य त्रयः प्रवराः' इतिप्रयोगाद्यनुपपत्त्या भिन्नत्वेन

वरदर्पणे कल्पितस्तद्वत्– इत्याहुः । शेषमग्रे निरूपयिष्यते । संदी. ७-११ ( भागः २ )

दत्तकस्य जनकगोत्रत्वविचारः

**गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः कचित् ।**
**गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥**

( १ ) इतश्च भागहरत्वं दत्त्रिमस्य नुक्तम् । यतो जनयितुः सकाशात् गोत्रं धनं च हरति, वंशादपेतत्वात् । गोत्ररिक्थग्रहणाभावे च पिण्डमपि जनयित्रे न ददाति । गोत्ररिक्थानुगो हि पिण्डो गोत्ररिक्थे अनुगच्छति । यदीये गोत्ररिक्थे गृह्येते तस्मै पिण्डोदकदानाद्यौर्ध्वदेहिकं क्रियते । व्यपैति तस्मान्निवर्तते स्वधा स्वधाकारसाधनं पिण्डश्राद्धादि लक्ष्यते । तदेतत् ददतः योऽन्यस्मै स्वपुत्रं ददाति तस्मान्निवर्तते । न तस्य कर्तव्यमित्यर्थः । एष एव न्यायः कृत्रिमादीनां सहोढापविद्धानाम् । द्व्यामुष्यायणानामुभयोपकारकत्वम् । अन्ये तु न हरेत् न हारयेदित्यन्तर्भावितण्यर्थं व्याचक्षते । तेनोभयस्यापि द्व्यामुष्यायणवदुपकर्तव्यं इत्याहुः । उत्तरस्तूपकारोपक्रमः, तमेवं गमयन्ति, यदि गोत्ररिक्थे न हरेत्पुत्रस्तदा तु. इति व्याख्येयं, न चैतद्युक्तं, तेन ह्यर्थान्तरभावे प्रमाणं वक्तव्यम् । * मेधा.

( २ ) गोत्रधने जनकसम्बन्धिनी दत्तको न कदाचित् प्राप्नुयात् । पिण्डश्च गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्यैव स पिण्डो दीयते । तस्मात्पुत्रं ददतो जनकस्य स्वधा पिण्डश्राद्धादि तत्पुत्रकर्तृकं निवर्तते ।

ममु

( ३ ) अत्र पिण्डशब्दः सापिण्ड्यपरः । श्राद्धपरत्वे 'ददतः स्वधा' इत्यनेन पौनरुक्त्यापत्तेः । अत एव शिष्टाः प्रतिग्रहीतृगोत्रेणैव तस्य सर्वक्रियानुष्ठानं कुर्वन्ति । माप्र. १३

( ४ ) दत्त्रिमः किं जनयितुर्गोत्रधनपिण्डसम्बन्धी, न वेति संशये सत्याह– गोत्रेति । गोत्ररिक्थे वसुनि ( ? गोत्रवसुनी ), 'रिक्थमृक्थं धनं वसु' इत्यमरः । ते न प्राप्नोति, अतस्तद्दत्तपिण्डोऽपि पितरं न गच्छति । तत्र हेतुः– गोत्ररिक्थानुगः पिण्डः गोत्ररिक्थनिमित्तः । ददतः जनयितुः स्वधा अपैति । स्वधेत्युपलक्षणं, ऋिक्थप्यनधिकारीति भावः । "औरसक्षेत्रजाभावे दश पुत्राः प्रकीर्तिताः" इत्युक्तेः तयोरभावे दत्त्रिमो धनभागिति गोविन्दः । तयोः सत्त्वेऽपि धनभाक् दत्त्रिमः । अन्यथा 'उपपन्न.' इत्यादि व्यर्थं विशेषणम् । अत आह मेधातिथिः– 'इदं तु वचनं सति औरसे प्राप्त्यर्थं, अन्यथा न किञ्चिदनेन क्रियते' इति ।

मच.

## याज्ञवल्क्यः

*असमानगोत्रप्रवरा विवाह्या, टीकासु गोत्रप्रवरलक्षणम्*

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥**

---

* मवि., नन्द., भाच. मेधागतम्, सप्र. मेधावत् ।

( १ ) मस्मृ. ९।१४२ ; स्मृच. ६९ कचित् ( सुतः ) ; मपा. १३५ स्मृचवत् ; उत. ११४ स्मृचवत् ; मंप्र. २०८ हरेत् ( भजेत् ) क्वचित् ( सुत ) पू. ' ६५६ पूर्ववत्, पू. (=) : ६८६,७१६ हरेत् ( भजेत् ) कचित् ( सुत. ) ; चम. ९८ हरेत् ( भजेत् ) कचित् ( सुत ) पू. (=), मुक्ता १०२ क्वचित् ( सुतः ) स्वधा ( स्वधाम् ) ; मंम. ५२ चमवत् ; संकौ. ४५ चमवत्, पू : १९४ चमवत् : २१६ चमवत्, पू. (=) ; माप्र. १ चमवत् ' ७ ( गोत्ररिक्थानुगः पिण्डो व्यपैति ) एतावदेव (=) ९, १३ चमवत्. १५, १६, १७ निर्देशमात्रम् ; प्रका. १२९ पू. (=) ; नन्द. हरेत् ( भजेत् ) ; छभ. ८८६ चमवत्, पू ८९३ चमवत् : ८९५ निर्देशमात्रम्. ८९७ चमवत्, पू. : १०२२ निर्देशमात्रम् १०५३ चमवत्, संर. ४३, ४५२ चमवत्, पू. (=).

( १ ) यास्मृ. १।५२ ; विश्व. ; मेधा ३।१० अनुवादरूपेण ; मिता. ; अप ; उ. १।३०।३ पू ' २।११।१६ पू. २२२ ; स्मृच. ६७ ; चद्रा. ६८० पू. ; पमा ४६२ ; मपा. १३२ ; प्रपा ३०६ उत्त. : ३११ पू. ; मर. १७ ; निप. २७५ उत्त. (=), गभा. ९६ ; प्रर. ९७ ; सादी. २१ पू. ; वीमि ; संप्र. ५८६ पू. ' ५८७, ६९१ चतुर्थः पादः : ७३१ द्वितीय पादः : ७३५ उत्त. ; चम. ८७ ; मुक्ता. १२५ मसपिण्डां ( मसपिण्डो ) ; संम. ४८ ; समं ६२ पू. ; सिन्धु ९९० ; विपा. ६८५ उत्त. : ७१७ पू. ; संकौ. १७२ उत्त. ; संग. १६७ उत्त., संव. १४२ ; सस्मृ. ५४ उत्त. ; मंर. ३६८ पू. : ४०६ ; संदी. ११ ( भागः २ ).

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥

( १ ) असमानार्षगोत्रजां असमानार्षेयगोत्रप्रभवाम्। असमानप्रवरामित्यर्थः । तथा गौतम.– 'असमानप्रवरैर्विवाहः ' इति । यदपि ' असमानगोत्रां ' इति मानवं, तदपि एवमेव व्याख्येयम् । ततश्च समानगोत्राणामपि असमानप्रवराणामनिषिद्धो विवाहः । यथा पञ्चार्षेयाणां त्र्यार्षेयाणां भरद्वाजानाम् ( च ) । * विश्व.

( २ ) असमानार्षगोत्रजाम् । ऋषेरिदं आर्षं नाम प्रवर इत्यर्थ. । गोत्रं वंशपरंपराप्रसिद्धम् । आर्षं च गोत्रं च आर्षगोत्रे । समाने आर्षगोत्रे यस्य असौ समानार्षगोत्र. । तस्माज्जाता समानार्षगोत्रजा । न समानार्षगोत्रजा असमानार्षगोत्रजा, ताम् । गोत्रप्रवरौ च पृथक्पृथक् पर्युदासनिमित्तम् । तेन असमानार्षजामसमानगोत्रजामिति । तथा च 'असमानप्रवरैर्विवाहः' इति गौतमः । तथा ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' ( ३.५ ) इति मनुः । तथा मातृगोत्रामपि अपरिणेयां केचिदिच्छन्ति, ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ' इति प्रायश्चित्तस्मरणात् । तथा असगोत्रामित्यनेन असपिण्डाया अपि भिन्नसतानजायाः समानगोत्राया निषेधः । तथा असमानप्रवरामित्यनेनापि असपिण्डाया असगोत्राया अपि समानप्रवराया निषेधः । असमानार्षगोत्रजामित्येतत् त्रैवर्णिकविषयम् । यद्यपि राजन्यविशां प्रातिस्विकगोत्राभावात् प्रवराभावः, तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ । तथा च ' यजमानस्यार्षेयान् प्रवृणीते ' इत्युक्त्वा 'पौरोहित्यान् राजन्यविशां प्रवृणीते ' इत्याह आश्वलायनः । सपिण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते । रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव । § मिता.

( ३ ) समानता च नामतः संख्यातश्च समुच्चयेन भवति, न तद्वैषम्ये । यत्रापि संख्यासाम्ये एकस्य द्वयोर्वा अन्यत्वं, तत्रापि असमानता एव । यत्र पुनः आङ्गिरसाम्बरीषयौवनाश्वेति मान्धाताम्बरीषयौवनाश्वेति विकल्पेन ऋषयो भवन्ति, तत्रापि वर्ज्या, समत्वस्य पाक्षिकत्वात् । न च असमानार्षग्रहणं गोत्रविशेषणम्, ' असमानप्रवरैर्विवाहः ' इति भेदस्मरणात् ।

अप.

( ४ ) समानप्रवरता च नामतः संख्यातः समुच्चये भवति । यत्र च एकस्य द्वयोर्वा अन्यत्वं संख्यान्यत्वं वा तत्रापि असमानतैव । अत्र च समानार्षगोत्रजापर्युदासः त्रैवर्णिकपरः, शूद्रस्य गोत्रादिशून्यत्वात् । यद्यपि क्षत्रियवैश्ययोरपि न गोत्रप्रवरौ, तथापि ' यजमानस्यार्षेयान् प्रवृणीते ' इत्युक्त्वा 'पौरोहित्यान् राजन्यविशां प्रवृणीते ' इत्याश्वलायनात् पुरोहितगोत्रप्रवरयोरेव तत्र पर्युदास इति । अत्र असपिण्डामित्यनेन यथाव्याख्यातेन मातृसपिण्डायाः पितृसपिण्डाया अपि, असमानार्षजामित्यनेन स्ववंश्याया अपि समानप्रवराया विगोत्रायाः सगोत्राया अपि, असमानगोत्रजामित्यनेन अस्ववंश्याया असमानप्रवरायाः सगोत्रायाः स्ववंश्याया अपि प्रायशः समानप्रवराया अपि पर्युदासः, एकेन विशेषणेन वारितस्य वारितवारकेण विशेषणे दोषाभावात् ।

वीमि.

( ५ ) तत्रार्षेये प्रमाणमाह– तथा चेति । अस्य उभयत्र अन्वयः । अग्रे चार्थस्तथाशब्दः मनुपद्योत्तरं योजनीयः । अन्यथा तद्विरोधः स्पष्ट एवेति भावः । मनुवाक्ये चौ अन्याससमुच्चायकाविति अन्यत्र स्पष्टम् । तत्र आद्यचसमुच्चितमर्थं प्रसङ्गादाह– तथेति । मातृगोत्रं द्विविधं, प्राग्विवाहात् पितुः, ऊर्ध्वं भर्तुः, ' स्वगोत्रात् भ्रश्यते ' इत्युक्तेः । तत्र पितृगोत्राया. स्वगोत्रत्वेन पितृ-

* मर. विश्वरूपम् ।

( १ ) याम्मृ. १।५३ ; विश्व. मानार्षं ( मानर्षि ) ; मेधा. ३।५ द्वितीय पादः , स्मृत्यन्तरम्; मिता. , अप.; उ. २।११।१६ पृ. २२२ , स्मृच. ६७ ; गृर. ९ ; पमा. ४६२ ; मपा. १३२: १३६ द्वितीय पादः , प्रपा ३०६ ; मर. १७ ; निप. २७५ ( = ) ; गभा. ०६ ; प्रर. ९७ ; वीमि. ; संप्र. ५९० द्वितीयः पादः ७३५ , धम. ८७ ; सुभा. १२५ ; संम. ४८ ; मिन्दु. ९९० ; निपा. ६८५ ; संकौ. १७२ ; भान. १६९ ; संग. १६७ ; संर १४२ ; शृभ. ८९७ द्वितीयः पादः : १०२८ द्वितीय. पादः ( = ) , संर. ४०६ : ४०८ द्वितीयः पादः .

§ मपा. मिताक्षरम्।

गोत्रत्वेन च निषेधसिद्धेः परिशेषात् मातृगोत्रपदेन मातामहगोत्राया निषेधः, सोऽपि न सर्वेषां, किन्तु माध्यन्दिनानामेव, 'मातृगोत्रं माध्यन्दिनीयानाम्' इति सत्याषाढोक्तेः। शिष्टाचारोऽप्येवमेव। केचित्तु सर्वेषां मन्यन्ते, उक्तसत्याषाढस्य तद्ग्रन्थेऽदर्शनात्। प्रवरमञ्जरीकारोऽप्येवमेव। अत एव 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि' इति व्यासवाक्यमपि साधारणं सगच्छते। वस्तुतस्तु शिष्टाचारानुगृहीतोक्तवचनात्तेषामेव तद्वर्जनं युक्तमिति बोध्यम्। तदेतत्सर्वमभिप्रेत्याह– केचिदिति। माध्यन्दिना एकदेशिनो वा इत्यर्थः। मनुराह। मातुलेति। *त्यक्त्वा* इति पाठः। *मातृगोत्रामित्यनेनैव* सिद्धे मातुलस्येति सापत्नमातुलपरम्।

अपिना असमानप्रवरत्वसमुच्चयः। इदं च असङ्कीर्णकपीनां भरद्वाजगणैः सह अविवाहप्रयोजकम्, तेषां अङ्गिरोगणत्वेन एकप्रवरसाम्येऽपि अपेक्षितद्वित्रिप्रवरसाम्याभावात्। हेतुगर्भं विशेषणमाह। भिन्नेति। आद्यः अपिः पूर्वसमुच्चये, द्वितीयः अपिः मिथःसमुच्चये। इदं च असंकीर्णे केवलभृग्वङ्गिरोगणेषु अविवाहप्रयोजकं, तेषां गोत्रत्वाभावेन समानगोत्रत्वस्य अप्रसक्तेः। *अत एव तेषु द्वित्रिप्रवरसाम्याभावे विवाह एव भवति।* सङ्कीर्णे तु एते प्रायशः सर्वत्रैवेति बोध्यम्। इत्येतत् उभयं तु। इद समर्थयते– यत्रपीति। राजन्यविशामिति। व्यक्त्यभिप्रायं बहुवचनम्। पुरोहितेति। षष्ठीसमासः। तेषां तस्य तौ ज्ञेयौ इत्यर्थः। यत्रापि क्षत्रियाणां मनुगोत्रं मानवैलपौरूरवसेति त्रिप्रवराः, वैश्यानां भलन्दनगोत्रं भालन्दनवात्सप्रमाङ्किलेति त्रिप्रवराः इत्यपि सूत्रे उक्तं, तथापि तन्न युक्तम्, तयोः सर्वेषां एकगोत्रप्रवरत्वात् *मिथोऽविवाहप्रसङ्गात्।* अत एव द्वितीयां तदुक्तिमेवाऽऽह– *तथा चेति।* ग्राल. पृ. १७६

सगोत्रागमने दोषः

* सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्॥

* अस्य व्याख्यासग्रह मापिण्ड्यप्रकरणे करिष्यते।

(१) याम्स्मृ ३।२३१. शेषः स्थलादिनिर्देशः सापिण्ड्यप्रकरणे द्रष्टव्यः।

## कात्यायनः

सगोत्रेण विवाहिताऽपि पुनरन्येन विवाह्या

(प्रवरैः ?) एषामविवाहः॥
वरो यद्यन्यजातीयः पतितः क्लीब एव वा।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा।
ऊढाऽपि देया साऽन्यस्मै सप्रावरणभूषणा॥

(१) यत्तु 'विकर्मस्थः ...' इत्युपक्रम्य 'ऊढाऽपि देया ...' इति कात्यायनीयं सगोत्रोढायाः पुनर्विवाहसरणं, तद्युगान्तरविषयम्। मप्र ६८१

(२) 'अत्र ऊढाऽपि' इत्यपिशब्दः कैमुतिकन्यायेन वाग्दत्ताया एवान्यस्मै दानमाचष्टे, न तूढायाः। अन्यथा सगोत्रोढाया अपि पुनर्विवाहप्रसक्तौ मातृवत् परिपालयेदिति शास्त्रं विरुध्यते। चम. ८९

## व्यासः

असमानगोत्रप्रवरा अमातृगोत्रा विवाह्या

एवं स्नातकतां प्राप्तो द्वितीयाश्रमकाङ्क्षया।
प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसंभवाम्॥
अरोगादुष्टवंशोत्थामशुल्कादानभूषिताम्।
सवर्णामसमानार्षाममातृपितृगोत्रजाम्॥
स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम्।
यवीयसीं भ्रातृमतीमसगोत्रां प्रयत्नतः॥
सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि।
जन्मनाम्नोरविज्ञाने उद्वहेदविशङ्कितः॥ *

* व्याख्यान 'असपिण्डा च' इति मनुवचनेऽपि द्रष्टव्यम्।

(१) मुक्ता १२७.

(२) संप्र. ६८०–६८१ प्रथमार्धं विना : ७३९ वरो (स तु) (=); चम. ८९ वरो (स तु) सप्राव (सहाव); मुक्ता. १३८ वरो (स तु) ऊढाऽपि (दत्ताऽपि) भूषणा (भूषणाम्); सिन्धु. ११३० एव वा (एव च) सप्राव (सहाव); कृभ. ११२९ 'विकर्मस्थ' इति निर्देशमात्रम्.

(३) व्यासस्मृ. २।१,२.

(४) उ. २।११।१६; स्मृच. ७६ पृ.; संप्र. ५८६,७४७ पृ.

(५) गृक ९; उ. २।११।१६ पृ. २२१ सगोत्रां मातुरप्येके (मातुः सगोत्रामप्येके) उद्वहे (नोद्वहे); मवि. ३।५ सगोत्रां मातुरप्येके (मातुः सगोत्रामप्येके) स्मृत्यन्तरम्; स्मृच. ६९ पृ.; मसु. ३।५; गृर १० द्देदवि (द्वेतावि); स्मृमा. १३ ज्ञाने

अत्र च मातृगोत्रमेव वर्जनीयं, न प्रवराः । तथा च काठकगृह्ये– ‘ पितृगोत्रप्रवरसमां नोद्वहेत् तथा मातृगोत्रमात्रसमाम् । ’ तथा, ‘ प्रवरान् पितृगोत्रेषु मातृगोत्रेष्वचिन्तनम् ’ इति । यत्तु, ‘ एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च । तमुद्वाहं न कुर्वीत सा कन्या भगिनी भवेत् ॥ ’ इत्यमियुक्तोदाहृतं वचनं, तत्पुत्रिकापुत्रविषयम् । इदं च मातृगोत्रवर्जनं माध्यन्दिनीयानामेव, न अन्येषाम् । तथा च वर्जनीयमित्यनुवृत्तौ सत्याषाढः– ‘मातृगोत्रं माध्यन्दिनीयानाम्’ इति । अपुत्रायाः सापत्नमातुरपि गोत्रं वर्जनीयम्, ‘ अपुत्रायाश्च ’ इति तस्यैव स्मरणात् । ननु मातृसगोत्रामित्यनुपपन्नम्, मातुः पितृगोत्रत्वेन पृथग्गोत्राभावात् । न च भूतपूर्वगत्या लक्षणया वा मातामहगोत्रं विवक्षितमिति वाच्यम्, मातामहगोत्रनिषेधेनैव सिद्धौ पृथक् मातुलसुतानिषेधानर्थक्यात् । न च प्रायश्चित्तविशेषार्थः स इति वाच्यम्, चान्द्रायणस्योभयत्र तुल्यत्वात् । तस्मात् कथं मातृसगोत्रापदं व्याख्येयमिति चेत् । अत्र केचिदाहुः– गोत्रपदेन अत्र नाम विवक्षितम्, ‘गोत्रं नाम्नि च पर्वते’ इति कोषात् । तेन मातृसनाम्नीं नोद्वहेदित्यर्थः सिध्यति, ‘ नोद्वहेद्भगिनीनाम्नीं न च मातृसनामिकाम् । मातामहीपितामह्यो पितृष्वसृसनामिकाः ॥ ’ इति स्मरणात् । तन्न भव्यम्, उदाहृतवचनस्य मूलापरिज्ञानात्, ‘ जन्मनाम्नोरविज्ञानादुद्वहेदविशङ्कितः ’ इत्यपवादे जन्मपदवैयर्थ्याच्च । न हि जन्मन पृथक् निषेधोऽस्ति । गोत्रपरत्वे तु मातामहगोत्रस्य संबन्ध्यसंबन्धिसाधारण्येन निषेधे प्राप्ते असंबन्धिनि जन्मनाम्नोरविज्ञानात् प्रतिप्रसवो घटते । किंच गोत्रपदस्य नामपरत्वे गोत्रनिषेधे प्रवरप्रतिप्रसवो नोपपद्येत– ‘ प्रवरान् पितृगोत्रेषु मातृगोत्रे न चिन्तयेत् । गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥ ’ इति । तस्मान्मातृपदं मातामहपरमेव व्याख्येयम्, तथैव शिष्टाचारात् । यत्तु मातामहगोत्रनिषेधेनैव मातुलकन्यानिषेधसिद्धौ पृथग्वचनमनर्थकमित्युक्तम्, तत्रोच्यते– यो मातुलोऽन्यस्य दत्तकीकृतस्तस्य पितृगोत्रनिवृत्तावपि मातुलत्वानिवृत्त्या पृथग्वचनं घटते । यद्यपि सपिण्डनिषेधेन अयमपि निषिद्धस्तथापि अदत्तमातुलनिषेधवद्दत्तकनिषेधोऽपि समाधेय इत्यलं पल्लवनेन । संप्र. ६८३–६८५

## यमः

सगोत्रायां मातृगोत्रायां च गमने प्रायश्चित्तम्, विवाहोत्तरं कन्याया भर्तृगोत्रता, सगोत्रजस्य चण्डालत्वम्

राज्ञीं प्रव्रजितां धात्रीं तथा वर्णोत्तमामपि ।
कृच्छ्रद्वयं प्रकुर्वीत सगोत्रामभिगम्य च ॥

अन्यासु पितृगोत्रासु मातृगोत्रगतास्वपि ।
परदारेषु सर्वेषु कृच्छ्रं सांतपनं चरेत् ॥

(२)विवाहे चैव संवृत्ते चतुर्थेऽहनि रात्रिषु ।
एकत्वं सा व्रजेद्भर्तुः पिण्डे गोत्रे च सूतके ॥

(३)आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥

‘ परिणीय सगोत्रां च ’ इत्यादौ, ‘ आरूढपतितापत्यम् ’ इत्यादौ च सगोत्रादिपदस्य एककुलोद्भवत्वादिविशिष्टसगोत्रादिबोधकत्वं, समाचारानुरोधात् । अन्यत्र तु परित्यागे प्रशस्तत्वमपरित्यागे किञ्चिद्दोषावहत्वम् । न तु पातित्यप्रयोजकत्वम् । अत एव मनुवाक्ये ‘ सा प्रशंसा द्विजातीना ’ इत्युत्तरार्धे प्रशस्तपदोपादानम् ।

संदी. १० ( भागः २ )

---

( ज्ञानात् ) . मपा. १४२ स्मृमावत्; मर. १७ पू., निप २७६ स्मृमावत् ( = ) , दीक. ११५२ , उत. १०७ पू. : ११४ गोत्रे उद्वहे ( ज्ञानेऽप्युद्वहे ) ; मच. ३१५ ; वीमि. ११५४ पू. ११२ स्मृमावत्; संप्र. ६८३ स्मृमावत् : ६८४ उत्त.; चम. १०७ पूर्वार्धं मचिवत्, उद्वहे ( तूद्वहे ) स्मृत्यन्तरम्; मुक्ता. १०६ पू. : १२७ उत्त ' १२९ निर्देशमात्रम्; सिन्धु १०५६ उत्तवत्; संस्का. १६९ पू. : १७० उत्त.; साप्र. ८ पू., वाल. ११०३ पू. १७६ पू. : कुभ. १०५८ निर्देशमात्रम् ( = ).

( १ ) यमस्मृ. ३६,३७.

( २ ) यमस्मृ. ८६.

( ३ ) गोप्र ५ : ९३ यश्च ( यस्तु ) : ९८ स्मृतिः ; संप्र. ३८८ बौधायनः : ५९० यश्च ( यस्तु ) बौधायनः : ६६१ ; शूक. २६६ ; कुभ. १०६१ शूद्रजः ( शूद्रतः ) श्चैव ( श्चैवं ) ( = ) ; संदी. १० ( भागः २ ) यश्च ( यस्तु ) ( = ).

## मरीचिः

सावित्र्युपदेष्टुः कन्या अविवाह्या

[1]सावित्रीं यस्य यो दद्यात् तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत् ॥

## शातातपः

त्रिविधः सबन्धो विवाहे विचार्यः

[2]आदौ गोत्रविशुद्धिः स्यात्ततः सप्तमपञ्चमम् ।
राशिकूटं ततश्चैव त्रेधा संबन्धलक्षणम् ॥

गोत्रविशुद्धिः असमानगोत्रत्वेन, 'असगोत्रा च या पितुः' इति मनुस्मरणात् । तस्याश्च आदौ इत्यनेन आवश्यकत्वमुक्तम्, तदभावे अपत्यस्य चण्डालत्वस्मरणात् । तथा च बौधायनः (यमः)— 'आरूढपतितापत्यं ब्राह्मण्या यस्तु शूद्रजः । सगोत्रोढासुतश्चैव चण्डालास्त्रय ईरिताः ॥' इति । गोत्रमिति प्रवरस्याप्युपलक्षणम्, 'असमानार्षगोत्रजाम्' इति याज्ञवल्क्यस्मरणात् । आर्षं च गोत्रं चार्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रः, न समानार्षगोत्रः असमानार्षगोत्रः, असमानार्षगोत्रात् जाता असमानार्षगोत्रजा । ततश्च गोत्रप्रवरयोः पृथक्पृथक् कन्यापर्युदासे निमित्तत्वं सिध्यति ।

सप्र. ५९०

समानप्रवरया सगोत्रया च विवाहे प्रायश्चित्त कर्तव्य च

[3]समानप्रवरां कन्यामेकगोत्रामथापि वा ।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥
[1]उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ॥
[2]परिणीय सगोत्रां तु समानप्रवरां तथा ।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥

( १ ) त्यागश्च उपभोगस्य, न तु तस्याः ।

अप. १।५३ पृ. ८०

( २ ) 'कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनम्' इति माधवीयः पाठः । चान्द्रायणातिकृच्छ्रे सगोत्रादिपरिणयनमात्रे । तदुपगमनापत्योत्पादनयोस्तु ब्राह्मण्यहानिरेव । तथा च आपस्तम्बः— 'समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च । तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥' इति । त्यागश्च उपभोगधर्मकार्ययोः, न तु तस्याः, मातृवत् परिपालनस्मरणात् । तथा च शातातपः— 'समानप्रवरां कन्यामेकगोत्रामथापि वा । विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥ उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत्' इति । इदं च अमत्या, 'सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात्' इति बौधायनस्मरणात् । अमतिः शास्त्रार्थपरिज्ञानं, ब्राह्मादिविवाहे कन्यादानकाले एव गोत्रादिस्वरूपपरिज्ञानात् । गान्धर्वराक्षसपैशाचेषु गोत्रादिस्वरूपापरिज्ञानं वा । यत्तु 'विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा' इत्युप-

( १ ) प्रपा. ३११ स्मृत्यन्तरम् ; संप्र. ६६० सावित्रीं ( गायत्रीं ) न विवाहयेत् ( विवहेन्न सः ) वाऽपि ( चापि ) दोषकृत् (दुष्यति) स्मृतिः ६९०-६९१ ; चम. १०८ (=) ; मुक्ता. १२७ पूर्वार्धे ( गायत्रीं यस्य यो दद्याद्यो वा दद्यादिमां द्विज । ) विवाहो नैव दोषकृत् ( विवाह नैव कारयेत् ) (=) १२९ चतुर्थपादं विना (=), विपा. ७०७ स्मृत्यन्तरम् ; संग. १८१ स्मृत्यन्तरम् ; कुभ. १०२० (=).

( २ ) संप्र. ५९०.

( ३ ) स्मृच. ६८ ; मपा १३६, गभा. ९७ ; संप्र. ६८० ; मुक्ता. १२७ ; संम. ६३ क्रमेण आपस्तम्ब ; आन. १७० ; कुभ. १०६०.

( १ ) स्मृच ६८ ततो ( तदा ) ; मपा. १३७ ; गभा. ९७ ; संप्र. ६८० : ६८१ निर्देशमात्रम् ; मुक्ता. १२७ ; संम. ६३ क्रमेण आपस्तम्बः ; आन. १७० ; कुभ. १०६०.

( २ ) मेधा. ३।५ उत्तरार्धे ( कृत्वा तस्याः समुत्सर्गं द्विजश्चान्द्रायणं चरेत् । ) वसिष्ठः, अप. १।५३ (=), उ. २।११।१६ उत्तरार्धे ( कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रो विशोधनम् । ) ; स्मृच ६८ उत्तरार्धे ( त्यागं कृत्वा ततस्तस्या द्विजश्चान्द्रायणं चरेत् । ) (=) ; पमा. ४७७ उत्तरार्धे ( कृत्वा तस्याः समुत्सर्गं तप्तकृच्छ्रं विशोधनम् । ) ; मपा. १३६ (=) ; गभा. ९७ कृत्वा ( कुर्यात् ) ; संप्र. ६८० 'कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनम् ।' इति माधवीयपाठः ; चम. ९८ उत्तरार्धे ( कृत्वा तस्याः समुत्सर्गमतिकृच्छ्रं विशोधनम् । ) ; मुक्ता. १२६ पू. (=) : १२७ चमवत्, उत्त. ; संम. ६२ आपस्तम्बः ; आन. १६९ पू., स्मरणम् ; कुभ. १०५९ ; संदी. ६ ( भागः २ ) सगोत्रां तु ( सगोत्रां च ) उत्तरार्धे ( त्यागं कृत्वा ततस्तस्यास्ततश्चान्द्रायणं चरेत् । ) (=).

क्रम्य, 'ऊढापि देया साऽन्यस्मै सप्रावरणभूषणा' इति कात्यायनीयं सगोत्रोढायाः पुनर्विवाहस्मरणं, तद्युगान्तरविषयम्, कलौ तु 'ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥' इति ब्रह्मपुराणेन साक्षात्पुनर्विवाहस्य निषेधात्। तस्मात्परिपालनं परिशेषेण कलिविषयमवतिष्ठते इत्याहुः।

अत्रेदं प्रतिभाति— 'ऊढायाः पुनरुद्वाहम्' इत्ययं निषेधो न सगोत्रोढापुनर्विवाहं विषयीकरोति, तस्या ऊढात्वाभावात्। विवाहो नाम संस्कारविशेषजनिका क्रिया। न च सगोत्रायां संस्कारा उत्पद्यन्ते, असगोत्रामित्यनेन तस्याः पर्युदस्तत्वात्। न च 'ऊढाऽपि देया साऽन्यस्मै' 'उत्सृज्य तां ततो भार्याम्' इत्यादिप्रयोगान्यथानुपपत्त्या तस्यामपि संस्कारसिद्धिः, तस्य प्रवृत्तिनिमित्तत्वादिति वाच्यम्, गौणतयाऽपि प्रयोगोपपत्तेः। संस्कारवत् क्रियामात्रस्यापि प्रवृत्तिनिमित्तत्वे विवाहशब्दस्य नानार्थत्वापत्तेः। तस्मात् सगोत्रायां संस्कारानुत्पत्त्या ऊढात्वाभावात् न पुनर्विवाहनिषेधः प्रवर्तते। निषेधस्तु 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥' इत्याद्युत्पन्नसंस्कारस्त्रीविषयत्वेनाप्युपपद्यते इति। तथा च सगोत्रोढाया पालनविवाहयोर्विकल्प एव सिध्यति।

ननु माऽस्तु 'ऊढायाः पुनरुद्वाहम्' इत्यस्य निषेधस्यायं विषयः। 'दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च' इत्यस्य तु निषेधस्य विषयो भविष्यत्येव, सगोत्रोढायां पर्युदस्तत्वेन संस्कारानुत्पत्त्या विवाहप्रसक्तावपि दानपदार्थोत्पत्तौ बाधकाभावेन एतन्निषेधप्रवृत्तेरव्याहतत्वात्, दानपूर्वकत्वात् विवाहस्य दाननिषेधे विवाहस्यापि निषेधसिद्धेः। न च दानेऽपि सगोत्रपर्युदासोऽस्ति, येन दानं न सिध्येत्। यद्यपि 'न सगोत्राय दुहितरं प्रयच्छेत्' इति दानेऽपि सगोत्रपर्युदासोऽस्त्येव, तथापि अयमदृष्टार्थो न दानपदार्थोत्पत्तौ बाधकः, तस्य पौरुषत्वात्। अत एव 'नटचारणमल्लेभ्यो दत्तं भवति निष्फलम्।' इति निष्फलत्वमेवाभिधत्ते, न दानानिष्पत्तिम्। अत एव गोभूम्यादिपदानभेदेन दत्तानपकर्म दत्ताप्रदानिकमिति संज्ञाभेदोऽप्युपपन्नः। अदृष्टं चात्र संस्कार

एव। स च भार्यात्वरूपः। तदर्थक एव दाने अयं पर्युदासो न दानमात्रे। अन्यथा दत्तपुत्रीकरणेऽपि सगोत्राय दुहितृदानं न स्यात्। तस्मात्सगोत्रेऽपि कन्यादाननिष्पत्त्या तस्याः पुनर्दानं कलौ निषिध्यते। तन्निषेधेनैव विवाहनिषेधोऽपि अर्थसिद्ध एव, दानपूर्वकत्वाद्विवाहस्य। यद्येवं तर्हि सगोत्रोढायां गान्धर्वादिविवाहः कुतो नेष्यते, तस्य दानपूर्वकत्वाभावादिति चेत्, ऊढायाः पुनर्गान्धर्वादिविवाहानिषेधेऽपि ब्राह्मादिविवाहस्यैव मया निषेधोपगमादिति प्राप्ते अभिधीयते—

दत्ताशब्दो विवाहपर एवावश्यं वाच्यः। दानमात्रपरत्वे वाग्दत्ताया वरदोषदर्शने वरान्तरायापि पुनर्दानं न स्यात्। न च तत्र शिष्टाः कलिदोषं मन्यन्ते। दानशब्दोऽप्येष लक्षणया विवाहमेवाभिधत्ते, 'ऊढायाः पुनरुद्वाहम्' इत्यनेन एकवाक्यतालाघवात्। अन्यथा श्रुत्यन्तरकल्पना स्यात्। ततश्च सगोत्रायां दानपदार्थनिष्पत्तावपि संस्कारानिष्पत्त्या ऊढात्वाभावात्कलिनिषेधाप्रवृत्त्या पुनर्विवाहः केन वारणीय इति।

यत्तु— 'दत्ताक्षता' इति वाक्यं ब्राह्मादिचतुष्टयविषयम्, ब्राह्मादिचतुर्णां दानपूर्वकत्वात् पुनर्दाननिषेधोपपत्तेः। न गान्धर्वादिविषयम्, तत्र दानाभावात्। 'ऊढायाः पुन.' इतिवाक्यं तु गान्धर्वादिचतुष्टयविषयम्, सामान्यवाक्यत्वात्— इति व्यवस्थापनम्, तदप्येतेन एकमूलकल्पनालाघवेन निरस्तम्। एतेन 'बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः।' इत्यादीन्यपि वाक्यानि सगोत्रापरतया व्याख्यातानि। संप्र. ६८०–६८२

(२) सगोत्रसप्रवरोद्वाहे प्रायश्चित्तमाह शातातपः— परिणीयेति। सगोत्रा पितृसगोत्रा 'पितृगोत्रं कुमारीणाम्' इत्युक्तेः। एवं समानप्रवरा इत्यत्रापि। सपिण्डाऽपीह बोध्या। एतच्च प्रमादेन सगोत्रादिपरिणयमात्रे।

क्रम. १०५९

समानप्रवरया मातृगोत्रया च विवाहे प्रायश्चित्तम्

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

---

(१) मेधा. ३।५ सुतामूढ्वा (सुतां रेतः) पू., परिशि.; मिता. १।५३ त्यक्त्वा (गत्वा) (=); अप. १।५२ पृ. ८२

(१) मातृगोत्रामप्यपरिणेयां केचिदिच्छन्ति—मातुलस्य ... चरेत् ॥ इति प्रायश्चित्तस्मरणात् ।

मिता. १।५३

(२) मातृगोत्रग्रहणं पितृसगोत्रत्वनिराकरणार्थम् । जन्यजनकसंबन्धस्य उभयस्य उभयत्राविशिष्टत्वात् ।

अप. १।५३ पृ. ८४

(३) मातुर्गोत्रं नाम पितृगोत्रमेव, न तु मातामहगोत्रम्, 'स्वगोत्रात् भ्रश्यते नारी विवाहात्सप्तमे पदे' इति मनुवचनात् । अयं तु विशेषोऽनुसंधेयः—या ब्राह्मादिविवाहचतुष्टयेनोढा तस्या एव वरगोत्रापत्तिः, पितृगोत्रभ्रंशश्च । या तु गान्धर्वादिचतुष्टयोढा तस्या न वरगोत्रापत्तिः, नापि पितृगोत्रभ्रंशः, दानाभावात् । तथा च मार्कण्डेयः—'ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥ आसुरादिविवाहेषु पितृगोत्रेण धर्मतः ॥' इति । अत एव 'स्वगोत्रात् भ्रश्यते' इति मनुवचनमपि ब्राह्मादिविषयमेव । *तस्मात् ब्राह्मादिविवाहोढासुतः पितृगोत्रां* नोद्वहेत् । मातामहगोत्रां तूद्वहेत्, अनिषेधात् । गान्धर्वादिविवाहोढासुतस्तु मातामहगोत्रां पितृगोत्रां च नोद्वहेत्, 'मातृगोत्रा तथैव च' इति शातातपवचनात्, 'असगोत्रा च या पितुः' इति मनुवचनाच्च । न च मातृ*गोत्रामित्यस्य मातुः उत्पत्तिकाले यद्गोत्रं तत्परतैवास्त्विति* वाच्यम् । *तथा सति मातुलस्य सुतामिति* वाक्यशेषवैयर्थ्यापत्तेः । न च प्रायश्चित्ताधिक्यार्थं तत् । 'त्यक्त्वा चान्द्रायणं चरेत्' इति वाक्यशेषे प्रायश्चित्तस्य ऐकरूप्यश्रवणात् । यथाश्रुतवादिनां मते इममेवापरितोषमाविष्कुर्वता विज्ञानेश्वरेणाप्युक्तम्—'मातृगोत्रामपि अपरिणेया केचिदिच्छन्ति' इति । एवं च 'मातुलस्य सुतामूढ्वा' इत्येतत् ब्राह्मादिविवाहोढाविषयकत्वेनैव पर्यवस्यति । तस्मात् मातुलसुतामित्येतद्गान्धर्वादिविवाहोढासुतविषयमिति पूर्वोदाहृतं माधवाचार्यादिमतमपि कथङ्कार संगच्छत इति परिभावनीयं सूरिभिः । नारायणस्त्वाह—*मातृगोत्रां कन्यात्वसमये यन्मातुर्गोत्रं न तु मातृ*त्वसमये तदुत्पन्नामित्यर्थः । अयं च निषेधो यावदस्मान्मातृकुलजात् एतन्नाम्नोऽस्या जन्मेति विशिष्य ज्ञायते तावत्पर्यन्तमेव । तदूर्ध्वं तु न दोषः । तथा च स्मर्यते—'*मातुः सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञाने तूद्वहेदविशङ्कितः* ॥' इति । अत्र पूर्वार्धेन सामान्यतो मातुः सगोत्रायाः अविवाह्यत्वं मतान्तरत्वेनोट्टङ्क्य उत्तरार्धेन विषयनिष्कर्षः क्रियते ।

चम. १०६–१०७

(४) मातृगोत्राया विवाहो निषिद्धः । यद्यपि एक*गोत्रत्वं सदृशगोत्रत्वं* चेति द्विविधसगोत्रत्वमुक्तं, तथापि मातुर्गोत्रैक्यमेव वर्ज्यम् । मातुः गोत्रं गोत्रं यस्यास्तामितिव्याख्यानेन तस्यैव प्रतीतेः । मातुश्च गोत्रद्वयम्—प्राग्विवाहात् पितृगोत्रं ऊर्ध्वं भर्तृगोत्रम् । 'स्वगोत्राद्भ्रश्यते *नारी विवाहात्सप्तमे पदे । एकत्वं सा गता* भर्तुः पिण्डे गोत्रे च सूतके ॥' इति वचनात् । पितृगोत्रस्य स्वोत्पत्तिदशायामनुवृत्त्या स्वगोत्रत्वेनैव निषेधः । *तेन परिशेषान्मातृगोत्रपदेन मातामहसगोत्रस्यैव निषेधः ।* तस्य स्वोत्पत्तिदशायामनुवर्तमानस्य सगोत्रत्वप्रयोजकत्वाभावात् । अत एव पुत्रिकाया गान्धर्वविवाहोढायां च दानाभावेन पितृगोत्रसबन्धस्यानिवृत्तेः स्वोत्पत्तिदशायामनुवृत्त्या तस्य स्वगोत्रत्वादेव निषेधः । ब्राह्मादिविवाहोढायां तु पितृगोत्रसंबन्धनिवृत्तावपि भूतपूर्वगत्या मातामहगोत्रस्यैव मातृगोत्रत्वेन निषेधः, परिशेषात् । एवं च पुत्रिकागान्धर्वादिविवाहोढासुताना सर्वेषां मातृगोत्रं वर्ज्यं

त्यक्त्वा (द्विजः) (=); उ. २।११।१६ अपवत्; स्मृच. ७०; पमा. ४६९ अपवत् : ३३७ (खण्डः २ भागः १) अपवत्; प्रपा. ३०८ अपवत्; निप. २७६ पूर्वार्धे (मातुलस्य सुता मुच्या मातृगोत्रा तथैव च ।) त्यक्त्वा (गत्वा) (=); सादी. २४ स्मृतिः : २८ त्यक्त्वा (मुक्त्वा) स्मृति; संप्र. ६८२ : ७१४–१५ अपवत्; चम. ४९ निर्देशमात्रम् : ९५, १०६ : १०७ द्वितीयः पादः; मुक्ता. १२६ मितावत्, संम. ५१ (=) : ५४ मनु; सिन्धु. १००८ : १०५६ मितावत्, त्रिपा. ६९१ अपवत्; संकौ. १७६ : १९५ (=); मान १६९ मितावत्; ज्योनि. १३२ (मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरामूढ्वा परित्यज्य प्रपालयेत् ॥) स्मृतिचन्द्रिकायां निर्णयवचनमित्युक्तम्; साप्र. ६ मितावत् (=) : १० निर्देशमात्रम् (=); कृम. १०५६, १०५९ निर्देशमात्रम् (=); मेर. ४१२ : ४५१ स्मृतिः; संदी. ९ (भागः २) (=).

ब्राह्मादिविवाहोढासुतानां सर्वेषां मातृगोत्रत्वं न वर्ज्यं किन्तु माध्यन्दिनीयानामेव । 'मातृगोत्रं माध्यन्दिनीयानाम्' इति सत्याषाढोक्तेः । शिष्टाचारोऽप्येवमेव । केचित्तु अस्य वचनस्य निर्मूलत्वात्सर्वेषां मातृगोत्रवर्जनं युक्तमिति । युक्तं तु शिष्टाचारमहत्कृतवचनात् माध्यन्दिनानामेव तद्वर्जनं, निर्मूलत्ववचनं तु प्रामाणिकानां न युक्तं पराक्रान्तं चात्र सूरिभिरित्युपरम्यते ।

संकौ. १९५–१९६

[१]एकगोत्रां विवाह्यैव समानप्रवरां तथा ।
मातुलस्य सुतां चैव भुक्त्वा चान्द्रायणं चरेत् ॥

## लघुशातातपः

असमानगोत्रप्रवरा विवाह्या, समानप्रवरया सगोत्रया च विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रजस्य चण्डालत्वम्

[२]असपिण्डा तु या मातुरसगोत्रा च या पितुः ।
सा विवाह्या द्विजातीनां दारकर्मणि मैथुने ॥
[३]विवाहयेन्न सगोत्रां समानप्रवरां तथा ।
तस्याः कथंचित्संवन्धेऽप्यतिकृच्छ्रं चरेद्द्विजः ॥
[४]उद्वहेत सगोत्रां यस्तनयां मातुलस्य च ।
ऋषिभिश्चैव तुल्यां च स तु चान्द्रायणं चरेत् ॥
[५]आरूढपतिताज्जातो ब्राह्मण्यां शूद्रजस्तु यः ।
चाण्डालौ तौ समाख्यातौ सगोत्रायश्च जायते ॥

सप्रवराज्जातोऽपि चण्डाल एव, 'असमानार्षगोत्रजाम्' इति एकयोगनिर्देशनिषेधात् ।

कृम. ८२५–८२६

## सुमन्तुः

समानप्रवरया मातृगोत्रया च विवाहे प्रायश्चित्तं कर्तव्यं च

[१]पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् ।
परित्यज्यैनां मातृवद्बिभृयात् ॥

( १ ) एतच्च अमतिपूर्वे वेदितव्यम् ।

अप. १।५३

( २ ) अयं च मातृसगोत्रानिषेधो मातृसंबन्धित्वेन जन्मपरंपरानाम्नः प्रत्यभिज्ञायां सत्याम् । गृर. १०

( ३ ) मातृसगोत्रां मातुलसगोत्राम् । विवाहमात्र इदं, मैथुनादौ तु सपिण्डापत्यदारेष्वित्यादि स्मृत्यन्तरोक्तं द्रष्टव्यम् । अत एव मातृवदिति दृष्टान्तः ।

कृम. १०२७

---

( १ ) अप. १।५२ पृ. ८४.

( २ ) लशास्मृ. ३७ ; गृक. ७ पिण्डा तु ( पिण्डा च ) विवाह्या ( प्रशस्ता ) मनुशातातपौ ; गृर. ८ गृकवत्, मनुशातातपौ ; उत. १०६ गृकवत्, मनुशातातपौ.

( ३ ) लशास्मृ. ३२.

( ४ ) लशास्मृ. ३३ ( य उद्वहेत्सगोत्रां तु ऋषिभिः चैव मातुलात् (?) । ऋषिभि. सह तुल्यः स्यात् स तु चान्द्रायणं चरेत् ॥ ) ; स्मृच. ७० शातातपः ; स्मृमा. १८१ उद्वहेत ( विवाहयेत् ) स्य च ( स्य तु ) मैर्तुल्यां च स तु ( श्चापि तुल्यां यो द्विजः ) ; संप्र. ७१५ उद्वहेत ( उद्वहेत् ) शातातपः.

( ५ ) लशास्मृ. ५९ ( आरूढपतितोत्पन्नो ब्राह्मण्यां शूद्रजश्च यः । उभौ तावपि चाण्डालौ सगोत्रायां तु जायते ॥ ) ; कृम. ८२५ स्मृत्यन्तरम्.

( १ ) अप. १।५३ ( मातुलसुतां पैतृष्वसेयीं समानार्षगोत्रां च परिणीय चान्द्रायणं चरेत् । परित्यज्यैनां बिभृयात् ) ; गृक. ९ ( पितृष्वसृसुतां मातुलसुतां मातुः सगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् । परित्यज्य चैनां बिभृयात् । ) ; गृर. १० ( पितृष्वसृसुतां मातुलसुतां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् । परित्यज्य चैनां बिभृयात् । ) ; स्मृसा. १२ ( पितृष्वसृसुतां मातुलसुतां विवाह्य समानार्षेयीं च चान्द्रायणं चरेत् । परित्यज्यैनां बिभृयात् । ) ; पमा. ३३७ (खण्डः २ भागः १) ( पितृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं च विवाह्य चान्द्रायणं चरेत् । परित्यज्य चैनां बिभृयात् । ) ; उत. १११ परित्यज्यैनां ...... मातृवद्बिभृयात् ( परित्यज्य चैनां बिभृयात् ) ; वीमि. १।५४ पृ. ११२ ( पितृष्वसृसुतां मातुलसुतां समानार्षेयीं च विवाह्य चान्द्रायणं चरेत् । परित्यज्य चैनां बिभृयात् । ) ; संप्र. ६८३ ( पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां तथैव च समानप्रवरां विवाह्य चान्द्रायणं चरेत् । ) एतावदेव ; ७१५ ( पितृष्वसृसुतां-मातृष्वसृसुतां मातृसगोत्रां समानप्रवरां च विवाह्य चान्द्रायणं चरेत् । ) एतावदेव ; सुका. १२७ समानार्षेयीं...... बिभृयात् ( उद्वाह्य चान्द्रायणं चरेत् । परित्यज्यैनां बिभृयात् । ) ; सिन्धु. १०२७.

## पैठीनसिः

समानप्रवरया सगोत्रया च विवाहे प्रायश्चित्तम्

[1]असमानार्षेयीं कन्यां वरयेत् ॥

[2]उद्वहेत सगोत्रां तु तनयां मातुलस्य च ।
ऋषिभिश्चैव तुल्योऽपि स तु चान्द्रायणं चरेत् ॥

## स्मृत्यन्तरम्

*अज्ञातगोत्रप्रवरस्य गोत्रम्, दत्तकस्य गोत्रद्वयविचारो*
विवाहे, विवाहोत्तरं कन्याया भर्तृगोत्रत्वम्

[3]असंप्रज्ञातबन्धूनामाचार्यप्रवराः स्मृताः ।
पक्षे चास्मिन् विवाहोऽपि सगोत्रैः सह नेष्यते ॥

[4]चतुर्थीहोममन्त्रैस्तु मांसमज्जास्थिभिः सह ।
एकत्वमागता भर्तुः पिण्डे गोत्रे च सूतके ।
स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे ॥

[5]गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ।
जनकस्य तु गोत्रेण ह्युपनीतो द्विगोत्रकः ॥
उपनेतुर्भजेद्गोत्रमसंप्रज्ञातगोत्रवान् ।
प्रज्ञातगोत्रस्तु भजेदुभयं दत्तपुत्रवत् ॥

दत्तादीना द्यामुष्यायणत्वेन गोत्रद्वयं परिहार्यम् ।

मुक्ता. १२९

द्व्यामुष्यायणानां गोत्रद्वये सगोत्रता विचार्या

[6]बीजिनः क्षेत्रिणश्चैव द्व्यामुष्यायणको हि सः ॥

[1]द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ॥

गोत्रद्वये जनकगोत्रे परिग्रहीतृगोत्रे च । दत्तकादीना च द्व्यामुष्यायणत्वे '*इदं नित्यानां द्व्यामुष्यायणानां दत्तकादीनां द्व्यामुष्यायणवत्*' इति सत्याषाढवचनं प्रमाणम् । प्रवरमञ्जर्यामपि अनेनैवाभिप्रायेणोक्तम् । दत्तक्रीतकृत्रिमपुत्रिकापुत्रादीनां यथासंभवं गोत्रद्वयं सप्रवरमस्त्येवेति । एतावता द्विगोत्राणां गोत्रद्वयं सप्रवरं विवाहे वर्ज्यमित्याह । द्विगोत्रस्य जनकपितृगोत्रवर्जनावश्यंः क्वचिदपि इदानीमनुपलम्भात् यावद्विज्ञानं वर्जनम् ।

संर. ४५२–४५३

सगोत्रजस्य चण्डालत्वम्

[2]आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
तावुभौ विद्धि चाण्डालौ सगोत्राद्यश्च जायते ॥

मातृ भगिन्यादिसनामिका कन्या अविवाह्या

[3]*नोद्वहेद्भगिनीनाम्नीं न च मातृसनामिकाम् ।*
*मातामहीपितामह्योः पितृष्वसृसनामिकाः ॥*

## मत्स्यपुराणम्

गोत्रस्वरूपम्

[4]सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु निवर्तेत चतुर्दशे ।
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ॥

## अनिर्दिष्टकर्तृकवचनानि

गोत्रप्रवर्तका अष्टौ ऋषयः

[5]जमदग्निर्गौतमश्च भरद्वाजोऽत्रयस्तथा ।
विश्वामित्रः कश्यपश्च वसिष्ठोऽगस्तिरष्टमः ॥

---

(१) अप. १।५३ पृ. ८२ ; गृक ८ ; उ. २।११।१६ पृ. २२१ नार्षेयीं ( नार्षेयां ) ; गृर. १० ; स्मृसा. १३ ; दीक. १।५३ नार्षेयीं ( नार्षगोत्रजां ) ; उत १०८ ; वीमि. १।५३ पृ. ११२ असमा (समा) , संप्र. ७०३, ७०७ नार्षेयीं (नार्षेया) ; मुक्ता. १२५ नार्षेयीं ( नार्षेया ) ( वरयेत् ० ) ; आन १६९ मुक्तावत् ; बाल. १।५३ पृ. १९२ उक्त.

(२) मुक्ता १२७ ; आन. १७१.

(३) प्रपा. ३११ असंप्रज्ञात ( असप्रज्ञात ) ; चम. १०८ सगोत्रै ( तद्गोत्रै ) ; विपा. ७०७ (=) ; ज्योनि. १३५ ; संग १८२ (=).

(४) साप्र. ७.

(५) मुक्ता १२९.

(६) मुक्ता. १२९.

(१) प्रपा. ३११ पूर्वार्धे ( द्व्यामुष्यायणका सर्वे दत्तकक्रीतकादयः । ) योर्यथा ( योस्तथा ) ; संप्र २०६ ; प्रद. १३२ ये स्यु ( ये च ) द्वाह शुङ्ग ( द्वाह्याः शौङ्ग ) संग्रहे ; विपा. ७०७ योर्यथा ( योस्तथा ) (=), संकौ. १९४ प्रदवत्, प्रयोगपारिजाते संग्रहे ; ज्योनि. १३५ का ये स्युर्द ( का. सर्वे द ) योर्यथा ( योस्तथा ) ; संग. १८२ विपावत् (=) ; कुभ. १०५३ प्रदवत्, संग्रहोक्ते ; संर. ४५२.

(२) गोप्र. ५. (३) संप्र. ६८४.

(४) संदी. १७ ( भाग २ ). (५) विपा. ७१५.

गोत्रादिकं वाग्दानतः पुरा वीक्षणीयम्

सापिण्ड्यं गोत्रशुद्धिं च शीलं सामुद्रिकाणि च ।
जातकादिभमेलं च वीक्ष्य वाग्दानतः पुरा ॥

असमानप्रवरयाऽसगोत्रया च विवाहः, मातृगोत्राऽपि वर्ज्या

[1]समानप्रवरां कन्यां सपिण्डां चैकगोत्रजाम् ।
नैव तां वरयेत्प्राज्ञो मातृवत् परिकीर्तिता ॥
[2]विशुद्धवंशजां कन्यां सुभगां सुमनोहराम् ।
शुद्धां यवीयसीं हृद्यामसमानार्षगोत्रजाम् ॥

विवहेदिति शेषः ।　　प्रपा. ३१५

[3]एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च ।
तमुद्वाहं न कुर्वीत सा कन्या भगिनी स्मृता ॥ *

( १ ) इति मातृकुले प्रवरचिन्तनमुक्तं, तत् आसुरादिविवाहोढापरमिति दिक् ।　　सिन्धु. १०५७

( २ ) आसुरादीति । पुत्रिकापुत्रोपलक्षणमिदम् । पुत्रिकापुत्राणां आसुरादिविवाहजानां च मातुर्दानाभावेन पितृगोत्रसंबन्धो न निवर्तते, अतः तत्सुतेन मातृगोत्रा न विवाह्या । ' प्रवरान् पितृगोत्रेषु मातृगोत्रे न चिन्तयेत् । गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥ ' इत्यपि वचनमपि तत्परमेवेत्यर्थः । दिगर्थस्तु ब्राह्मादिविवाहचतुष्टये ' स्वगोत्राद्भ्रश्यते नारी ' इति स्वगोत्रभ्रंशेऽपि तद्गोत्राविवाहः सर्वैरपि वच्यो न कार्य इत्युक्तमिति । अत्राहुः– ' उत्तरत्रापादवचनस्य निर्मूलत्वमयुक्तम् । न च सत्याषाढसूत्रे तन्नोपलभ्यते इति प्रवरमञ्जर्यामुक्तमिति वाच्य, बहुभिः प्रामाणिकैस्तस्य तत्रोक्त एव कात्यायनेनाभिधानात् (?) प्रवरमञ्जरीकारीयाऽग्रहस्य देशनात् । गुर्जरेषु तद्वचनं कुतो न प्रवर्तते ? इत्यपि न शङ्क्यं, तेषामृग्वेदादिसंबन्धेन तदाचाराचरणात् । एवं च माध्यन्दिनीयानामृग्वेदाद्यरूढानामित्यर्थः । न च सर्वेषां तद्विवाहः कलिवर्ज्यः, तस्य द्यामुष्यायणपरत्वात् । ' असगोत्रा च या पितुः ' इत्यत्र चकारेण मातुः समुच्चयेन मातुरसगोत्रेत्यस्य दत्तकपरत्वोक्त्या तदेकवाक्यत्वाच्च, ' पुरोडाशं चतुर्धा करोति ' ' आग्नेयं चतुर्धा करोति ' इत्यादाविव सामान्यतो मातृगोत्रानिषेधस्य माध्यन्दिनीयेषु उपसंहाराच्च । एवं दोषातिगुरुत्वोक्तिरपि न समञ्जसा, प्रायश्चित्तैक्यश्रवणात् । ' सगोत्रां मातुरप्येके नेच्छन्ति ' इत्यत्र इच्छन्तीत्यभिधानेन तदपरिणयपक्षेऽरुचिध्वननाच्च । एवं एकगोत्रत्वमेवाविवाहप्रयोजकं, न सदृशगोत्रत्वं, मातृगोत्रमिति विशेषोपादानात् । सगोत्रामिति निषेधेऽपि सगोत्रपदेन एकगोत्रमेव ग्राह्यम् । तेन न गणैक्यप्रयुक्तदोषः, असमानगणामिति निषेधस्य क्वाप्यनभिधानाच्च ।　　कृम. १०५८

पितृगोत्रे सप्रवरं वर्ज्यम्, मातृगोत्रमात्रं वर्ज्यम्, सगोत्रया विवाहे प्रायश्चित्तं कर्तव्यं च, विवाहे दत्तकगोत्रविचारः

[1]प्रवरान् पितृगोत्रेषु मातृगोत्रे न चिन्तयेत् ।
गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥
[2]अज्ञानाज्जातमपत्यं तु काश्यपत्वं प्रपद्यते ।
ऐन्द्रयद्वयतः शुध्येन्निन्दाहुत्या च तत्पिता ॥
[3]पितृगोत्रं कुमारीणाम् ॥
[4]होमपूर्वं तु यो दत्तः स एव जनकस्य च ।
गोत्रे न विवहेत्तस्य पुत्रादौ तु न दोषभाक् ॥
[5]दातृगोत्रसमुद्भूतां महीतृकुलसंभवः ।
उद्वहेद्दशमादूर्ध्वं नोद्वहेदिति गौतमः ॥

* स्मृ. व्यवहारे ' सगोत्रां मातुरप्येके ' इति व्याख्यावचने ( संस्का. पृ. १८४ ) द्रष्टव्यम् ।

( १ ) ज्योनि. १२१ ; संग. १६७ चैव ता ( चैव्या ) इत्येतिनिकाये पठ्यते.

( २ ) प्रपा ८५ चैकगो ( चैव गो ) ; ज्योनि. १२२.

( ३ ) प्रपा. ३१५.

( ४ ) संप्र. ६८२ पर्व्यस्मिन् ( चैकस्मिन् ) गृपा ( मोद् ) ; सिन्धु १०५७.

( १ ) संप्र. ६८३ गोत्रे न चिन्तयेत् ( गोत्रेणचिन्तनम् ) पृ. : ६८४ ; कृम. १०५७.

( २ ) कृम. १०६२.

( ३ ) कृम. १०५९.

( ४ ) शुम्हा. १२९ : १४६ उत्तरार्धे ( गोत्रेण विवहेत्तस्य पुत्रादौ न निषेधकः ) ; मान. १७५.

( ५ ) शुम्हा. १२९ संभवः ( गोत्रजः ) : १४९ ; मान. १७५.

## षट्त्रिंशन्मतम्

समानप्रवरया मातृगोत्रया मातृनामिकया सपिण्डया च विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रया विवाहे प्रायश्चित्तं कर्तव्यं च

[1]समानप्रवरां मातृसगोत्रां मातृनामिकाम् ।
परिणीय सपिण्डां वा प्रायश्चित्तीयते द्विजः ।
प्रायश्चित्तं वदन्त्यत्र युगधर्मव्यवस्थया ॥

[2]मोहोद्वाहे तु दंपत्योरेकं चान्द्रायणं स्मृतम् ।
द्वैगुण्यं ज्ञानतस्तत्र परिणीतौ विधीयते ॥

[3]कन्यादातुर्भवेत्कृच्छ्रं ज्ञानतो द्विगुणं भवेत् ।
व्रतस्य करणाशक्तौ प्रत्याम्नायं समाचरेत् ॥

[4]चीर्णव्रतां दुहितरं पिता चीर्णव्रतः शुचिः ।
भारद्वाजेषु विप्रेषु कश्यपेष्वथवा क्षिपेत् ॥

[5]दुहितृत्वेन संगृह्य भारद्वाजोऽथ कश्यपः ।
घृतकुम्भस्य गर्भे तु तामादध्याद्विधानतः ॥

[6]जातकर्माद्यावन्नप्राशनं चौलमेव च ।
विधाय मधुपर्कं च मन्त्रमात्रेण मन्त्रवित् ॥

[7]मुहूर्ते विप्रकथिते शुचिं तामप्यलंकृताम् ।
संस्कृतायार्थमानाय पत्ये तु प्रतिपादयेत् ॥

[1]वैवाहिकानथो मन्त्रानशेषानप्यतन्द्रितः ।
स्वगृह्योक्तक्रमेणैव पठेद् धृतवधूकरः ॥
[2]चतुर्थीकर्मपर्यन्तं विधिमेवं समाप्य तु ।
कृताशीर्वचनो विप्रैर्दक्षिणाभिः सुतोपयेत् ॥
[3]प्रणम्य विसृजेद्देवान् पश्चाद्भोजयते तथा ।
कृत्वेत्थं पुनरुद्वाहं न किल्बिषमवाप्नुयात् ॥
[4]अन्यथा कुरुते यस्तु संग्रहं स नराधमः ।
व्रजेत्स पितृभिः सार्धं नरकानेकविंशतिम् ॥
[5]मातृनाम्नीविवाहे तु विशेषोऽत्राभिधीयते ।
परिवर्त्यैव नामास्याः पुनरुद्वाहमाचरेत् ॥
नैवं वियोदुरेनः स्यादित्येवं मुनयो विदुः ॥
त्रिरात्रं ब्रह्मचर्यं स्यात्पुनरुद्वाहकर्मणि ॥
[6]सगोत्रापरिणीतौ तु परित्यागो विधीयते ।
रक्षित्वा जननीवत्तां गुरुतल्पव्रतं चरेत् ॥
[7]मोहाज्जातमपत्यं तु काश्यपत्वं प्रपद्यते ।
ऐन्दवद्वयतः शुध्येन्मिन्दाहुत्या च तत्पिता ॥

सगोत्राशब्दस्तु समानप्रवराया उपलक्षकः, 'समानप्रवराम्' इत्युपक्रमवाक्यात् । एवं च मातृसमाननाम्नीविवाहे पुनरुद्वाहमात्रं, न तत्परित्याग इति गम्यते । इतरत्र तु ज्ञानाज्जातमप्यपत्यं चाण्डालकेषु विनिक्षिपेत् । दुहितृत्वेनेति । भारद्वाजाय काश्यपाय वा इमाममुकनाम्नीं कन्या दुहितृत्वेन तुभ्यमहं सम्प्रददे इत्युक्त्वा दद्यादित्यर्थः । घृतकुम्भस्य गर्भे इत्यत्र सामीप्ये षष्ठी, तादृशघृतकुम्भसंभवे

(१) त्रिपा. ७०८ ; कृभ. १०६१.

(२) त्रिपा ७०८ तस्तत्र (तस्तस्य) ; संग. १८२ मोहोद्वाहे तु ( मोहादुद्वाहे ) द्वैगुण्यं ( द्विगुण ) विधानपारिजाते ; कृभ. १०६१.

(३) त्रिपा. ७०८ ; संग. १८२ व्रतस्य करणाशक्तौ ( व्रतस्याकरणासक्तौ ) विधानपारिजाते ; कृभ. १०६१.

(४) त्रिपा. ७०८ ; संग १८२ कश्यपे ( काश्यपे ) विधानपारिजाते ; कृभ. १०६१.

(५) त्रिपा. ७०८ कश्यप ( काश्यप ) गर्भे तु (गर्भे च) ; संग. १८२ गर्भे ( मार्गे ) विधानपारिजाते ; कृभ. १०६१.

(६) त्रिपा ७०८ , संग १८२ विधानपारिजाते , कृभ १०६२.

(७) त्रिपा. ७०८ संस्कृतायार्थमानाय (संस्कृतार्थयमानाय) ; संग. १८३ विधानपारिजाते ; कृभ. १०६२ संस्कृतायार्थमानाय ( संस्कारार्थाय मानाय ).

(१) त्रिपा ७०८ ; संग. १८३ मन्त्रानशेषा ( मन्त्रविशेषा ) विधानपारिजाते ; कृभ. १०६५.

(२) त्रिपा. ७०९ ; संग. १८३ विधानपारिजाते ; कृभ. १०६२.

(३) त्रिपा. ७०९ द्देवान् ( देनान् ) तथा ( ततः ) ; संग. १८३ द्देवान् ( देनान् ) विधानपारिजाते ; कृभ. १०६२.

(४) त्रिपा. ७०९ ; संग. १८३ व्रजेत्स ( व्रजेत्स्व ) विधानपारिजाते ; कृभ. १०६२.

(५) त्रिपा. ७०९ ; कृभ. १०६२.

(६) त्रिपा. ७०९ ; कृभ. १०६२ पू.

(७) त्रिपा. ७०९ ; कृभ. १०६२ मोहाज्जात ( ज्ञानाज्ज्ञान ).

तु अधिकरणत्वमेव । प्रत्याम्नायमिति । 'कृच्छ्रे गामेकिकां दद्यात्तिस्रश्चान्द्रायणे तु ताः' इति स्मृत्युक्तमित्यर्थः । ऐन्दवद्वयतः चान्द्रायणद्वयादित्यर्थः । मिन्दाहुत्येत्यत्र जाता-वेकवचनं मिन्दाहुतिद्वयेनेत्यर्थः । तन्मन्त्रस्तु 'यन्म आत्मनो मिन्दाभूत्' 'पुनरग्निश्चक्षुरदात्' 'मिन्दा च मे अमिन्दा च मे' 'तन्म उभयव्रतम्' इत्याहुतिद्वयम् । तथा च त्रिकाण्डमण्डनः— 'परिणीतसगोत्रायामज्ञाना-ज्जनितः शिशुः । काश्यपो न तु चाण्डालः पितुः कृच्छ्र-त्र(द्व)यं स्मृतम् । मिन्दाहुती द्वे जुहुयाद्व्रतान्ते दीप्त-पावके ॥' इति । पुनरुद्वाहे न उत्तरायणादिकाल-नियमः, 'सार्वकालिकमेके विवाहम्' इत्याश्वलायन-सूत्रात् । अस्य वचनस्येदशस्थल एव चरितार्थत्वादिति ।

* विपा. ७०९–७१०

## संग्रहकारः ( स्मृतिसंग्रहः )

गोत्रमुख्या अगस्त्याष्टमाः सप्तर्षयः, तेषां अवान्तरभेदाश्च

[1]भृग्वङ्गिरःकश्यपात्रिविश्वामित्रवसिष्ठकाः ।
अगस्त्योऽमी गोत्रमुख्यास्तेषां वंशास्त्वनेकशः ॥
[2]सप्तेह भृगवः सप्तदशाङ्गिरस एव च ।
ततोऽत्रयश्च चत्वारो वोद्धव्याः कश्यपास्त्रयः ॥
[3]चत्वारोऽत्र वसिष्ठाः स्युर्विश्वामित्रास्ततो दश ।
अगस्त्यस्तु चत्वार इति संग्रहकृद्वचः ॥

सगोत्रया समानप्रवरया च विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रजस्य चण्डालत्वम्, अज्ञानतः सगोत्रविवाहे सगोत्रजस्य न दोषः

[4]सगोत्रां समानप्रवरां कामतः परिणीय प्रजा-मुत्पाद्य गुरुतल्पगव्रतं चरेत्, प्रजां च चण्डालेषु निक्षिपेत् । अकामतस्तप्तकृच्छ्रं, प्रजाया भारद्वाज-गोत्रान्तर्भावः । प्रजाऽनुत्पादे चान्द्रायणम् । विवाहमात्रे कृच्छ्रं चरेत् । सर्वत्र व्रतान्ते अष्टोत्तर-शतं मिन्दाहोमः । परित्यक्तां तां जननीवद्रक्षेत् ॥

## स्मृत्यर्थसारः ।

अगस्त्याष्टमाः सप्तर्षयो गोत्रकारिणः तदपत्यानि च गोत्राणि, सप्रवरत्वलक्षणम्, सगोत्रया विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रजस्य चण्डालत्वम्

[1]अथात्र गोत्रप्रवरनिर्णयो वर्ण्यतेऽञ्जसा ।
जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥
[2]एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ॥
[3]म्रियमाणतया वाऽपि सत्तया वाऽनुवर्तनम् ।
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥

---

* कृभ. निशावत् ।

( १ ) बाल. १।५३ पृ. १८८.

( २ ) चम. १०० ( = ) ; संम. ५५.

( ३ ) चम. १०० बौधायनः ; संम. ५५ संग्रहे इत्युक्तम् ; कृभ. १०३६ अगस्त्यस्तु ( अगस्त्यश्च ) बौधायनमते कारिका इत्युक्तम्.

( ४ ) प्रपा. ३११ तल्पग ( तल्प ) निक्षिपेत् ( विनिक्षिपेत् ) अकामतः + ( प्रजाकामः ) मिन्दाहोमः ( समिदादिहोमः ) ; चम. ९९ प्रजां च ( प्रजां ) कृच्छ्रं चरेत् ( कृच्छ्रम् ) मिन्दा-होमः ( होमः ) ; विपा. ७०७ परिणीय + ( तस्यां ) परि-त्यक्तां + ( च ) प्रयोगपारिजाते; ज्योनि. १३५ प्रजां च ( प्रजां ) तप्तकृच्छ्र ( त्वब्दकृच्छ्रं ) मिन्दाहोमः ( समिधां होमः ) ; कृभ. १०५९ ('सगोत्रां समानप्रवरां च कामतः परिणीय प्रजामुत्पाद्य गुरुतल्पव्रतं चरेत्, प्रजां चण्डालेषु निक्षिपेत्, अकामतस्तु संभोगे अब्दकृच्छ्रं, कामतो गर्भाभावे गुरु-तल्पव्रतार्धम्' इति हारावली । 'अकामतः प्रजोत्पादने चान्द्रा-यणम् । प्रजाया भरद्वाजगोत्रान्तर्भावः । विवाहमात्रे कृच्छ्रम् । सर्वत्र व्रतान्तेऽष्टोत्तरशतं समिद्धोमः । तां परित्यजेत्' इति देवश-ङ्करः । ).

( १ ) स्मृसार. १४ ; पमा. ४७६ द्वितीयार्धे ( जमदग्नि-र्भरद्वाजो विश्वामित्रोऽत्रिर्गौतमौ । ) प्रथमार्धं विना, बौधायनः ; उत. ११० जमदग्निभरद्वाज ( जमदग्निर्भरद्वाजो ) कश्यपा ( काश्यपा ) स्मृतेः इत्युक्तम् ; संप्र. ५९१ जमदग्निभरद्वाज ( जमदग्निर्भरद्वाजो ) प्रथमार्धं विना, स्मृतिः : ६११ ; संम. ५४ प्रथमार्धं विना : ६१ ; गोप्र. १ बौधायनः, प्रथमार्धं विना ; संदी. ६ ( भागः २ ) संप्रवत्, प्रथमार्धं विना, स्मृतिः.

( २ ) स्मृसार. १४ ; पमा. ४७६ बौधायनः ; उत. ११० स्मृतिः ; संप्र. ५९१ स्मृतिः : ६११ ; संम. ५४,६१ ; गोप्र. १ बौधायनः ; संदी. ६ ( भागः २ ) स्मृतिः.

( ३ ) स्मृसार. १५ ; संप्र. ५९५ ( = ) : ६११ ; संम. ६२ ; सिन्धु. १०३३ ; मद. १०७ ; संकौ. १८१.

[1]समानमुनिभूयस्त्वमेकप्रवरतामपि ।
समानप्रवरत्वं च द्वेधा बौधायनोऽब्रवीत् ॥
[2]गुरोः सगोत्रप्रवरा नोद्वाह्याः क्षत्रविड्जनैः ।
स्वगोत्रायनमिश्रैश्च विप्रैराचार्यगोत्रजाः ॥
[3]दौनादिनाऽन्यगोत्राः स्युरज्ञातगुरुगोत्रिणः ॥
[4]समानप्रवरोद्वाहनिषेधः क्षत्रवैश्ययोः ।
प्रवरान्मानवेत्यस्मात्प्रवराच्चान्यगोचरः ॥

मानवेत्यादिप्रवरात् अस्माच्च भाल्न्दनेत्यादिप्रवराच्च अन्यगोचरो निषेध इत्यन्वयः । चम. १०५

[5]इत्थं सगोत्रसंबन्धविवाहविषये स्थिते ।
यदि कश्चित् ज्ञानतस्तां कन्यामूद्वापि गच्छति ॥
[6]गुरुतल्पव्रताच्छुध्येद्गर्भस्तज्जोऽन्यतां व्रजेत् ।
भोगतस्तां परित्यज्य पालयेज्जननीमिव. ॥

(१) स्मृसार. १५ ; संम. ६२.

(२) स्मृसार. १६ ; अपा. पूर्वार्धे ( गुरो स्वगोत्रप्रवरा नोद्वाह्याः क्षत्रवैश्ययोः । ) भिन्नैश्च ( भिन्नौ च ) ( = ) ; चम. १०५ पू. ( = ) : १०८ नोद्वाह्याः क्षत्रविड्जनै ( नोद्वाह्या क्षत्रवैश्ययोः ) गोत्रजाः ( गोत्रजा ) स्मृत्यन्तरम् ; संम. ६२ नोद्वाह्याः क्षत्रविड्जनैः ( नोद्वाह्या क्षत्रविड्गणैः ) ; विपा. ७०७ नोद्वाह्याः क्षत्रविड्जनै ( नोद्वाह्या क्षत्रवैश्ययो ) गोत्रजाः ( गोत्रजा ) विशेषस्मरणमित्युक्तम् ; संकौ. १९५ नोद्वाह्याः ( नोद्वाह्या ) पू. ; ज्योनि. १२५ विड्जनै ( वैश्ययोः ) ( = ) ; प्रका. ३४९ ; संग. १८२ विपावत्, विशेषस्मरणादित्युक्तम् ; कृभ. १०२० नोद्वाह्याः क्षत्रविड्जनैः ( नोद्वाह्या क्षत्रवैश्ययोः ) भिन्नैश्च ( भिन्नैस्तु ) : १०५४ संकौवत्, पू.

(३) स्मृसार. १६ ; संम. ६२ ; प्रका. ३४९.

(४) स्मृसार. १६ उत्तरार्धे ( प्रवराननवेत्यास्मात्प्रवराच्चान्यगोत्रजाः । ) ; चम. १०५ ( = ) ; संम. ६२ ; कृभ. १०५४–१०५५ ( = ).

- (५) स्मृसार. १६ ; संप्र. ६६० द्वितीय पादः ; चम. ९९ मूद्वापि ( मूद्वोप ) ; मुक्ता. १२७ चमवत्, उत्त. ; संम. ६२ चमवत् ; सिन्धु. १०५७ चमवत् ; आन. १७० चमवत्, उत्त. ; प्रका. ३४९ चमवत् ; संर. ४१३ चमवत्.

(६) स्मृसार. १६ ; चम. ९९ ; मुक्ता. १२७ च्छुध्येत् ( च्छुद्धो ) ; संम. ६२, सिन्धु. १०५८ : ११३० उत्त., ( = ) ; आन. १७१ मुक्तावत् ; प्रका. ३४९ ; कृभ. ३६० उत्त. ( = ) ; संर. ४१३.



[1]अज्ञानादैन्दवैः शुध्येत्त्रिभिर्गर्भस्तु काश्यपः ।
महद्भिर्महतो यत्नात्कृतः प्रवरनिर्णयः ॥
[2]ज्ञातव्याः प्रवरा ब्रह्मसायुज्यश्रुतितोऽन्यथा ।
गुरुतल्पमहादोषचण्डालोत्पत्तिशङ्कया ॥

## त्रिकाण्डमण्डनः

सगोत्राया विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रजस्य चण्डालत्वम्, अज्ञानतः सगोत्रविवाहे सगोत्रजस्य न दोषः

[3]सगोत्रायां प्रजां जातां चाण्डालेषु विनिक्षिपेत् ।
गुरुतल्पव्रतं कृत्वा तां रक्षेज्जननीमिव ॥
[4]उद्वाह्याज्ञानतस्तुल्यगोत्रां चान्द्रायणं चरेत् ।
परिणीतसगोत्रायामज्ञानाज्जनितः शिशुः ॥
[5]काश्यपो न तु चण्डालः पितुः कृच्छ्रद्वयं स्मृतम् ।
मिन्दाहुती द्वे जुहुयाद्व्रतान्ते दीप्तपावके ॥

उद्वाह्याज्ञानत इत्युत्तरवाक्ये अज्ञानत इति श्रवणात् पूर्वत्र ज्ञानत इत्यर्थतः सिध्यति । परिणीतसगोत्रायामित्यस्मिन् वाक्येऽपि अज्ञानादित्युक्त्या ज्ञाने तु गर्भश्चण्डाल एव, पितुः प्रायश्चित्तं नास्त्येव किन्तु मृतप्राय एव स इति सूचितं भवति । संर. ४१४

## प्रवरप्रदीपे

विवाहे मातृगोत्रविचारः

[6]पैत्रे प्रवरभिन्नत्वं चिन्तनीयं न मातृके ।
केवलं मातृकं गोत्रं वर्ज्यं कात्यायनोऽब्रवीत् ॥

(१) स्मृसार. १६ ; संप्र. ६६१ पू. ; चम. ९९ पूर्वार्धे ( अज्ञानाच्चेदैन्दवैस्तु शुध्येद्गर्भस्तु कश्यप । ) पू. ; मुक्ता. १२७ पूर्वार्धे ( अज्ञानाच्चेदैन्दवेन शुध्येद्गर्भस्तु काश्यपः । ) पू. ; सिन्धु. १०५८ पू. ; आन. १७१ मुक्तावत्, पू. ; प्रका. ३४९ पू. ; संर. ४१३ पू.

(२) संर. ४१३.

(३) संप्र. ६६१ ; संर. ४१३.

(४) विपा. ७१० उत्त. ; कृभ. १०६३ उत्त. ; संर. ४१३ शिशु ( सुत ).

(५) विपा. ७१० द्वयं ( त्रयं ) ; कृभ. १०६३ मिन्दा ( निन्दा ) ; संर. ४१३ कृच्छ्रद्वय स्मृतम् ( कृच्छ्राब्दपाततः ).

(६) ज्योनि. १३२.

गोत्रं मातुरपुत्राया वर्जयेत्प्रवरान्न तु ।
सपुत्रायास्तु नो गोत्रं प्रवरांश्च न चिन्तयेत् ॥

## कल्पसारे

सगोत्रया विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रजस्य चण्डालत्वम्, अज्ञानतः सगोत्रविवाहे सगोत्रजस्य न दोषः

[1]अमत्योढा सगोत्रा चेन्मातृवत् विभृयात्तु ताम् ।
चान्द्रायणं चरित्वाऽन्यामुपयच्छेत कन्यकाम् ॥

कृच्छ्राब्दपादं कुर्वीत प्रजाता यदि सा भवेत् ।
मिन्दाहुती द्वे जुहुयात्तस्यान्ते चरितव्रतः ।
तस्यां प्रसूतो निर्दोषः काश्यपो गोत्रतः स्मृतः ॥

ऊढा चेद्बुद्धिपूर्वं स्यात् गुरुतल्पव्रतं चरेत् ।
तस्यां प्रसूतश्चण्डालः सर्वकर्मबहिष्कृतः ॥

## विश्वादर्शे

अज्ञानतोऽपि समानगोत्रप्रवरया विवाहे प्रायश्चित्तम्

[2]अज्ञानाद्यदि चोद्वाहः प्रायश्चित्तं तथैव च ।
सगोत्रप्रवरायाश्च ततः संग्रहणे विधिः ॥

## मत्स्यसूक्ते

असमानप्रवरा विवाह्या

[3]समानप्रवरा चैव शिष्यसंततिरेव च ।
ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते ॥

## स्मृतिमहार्णवे

सगोत्रया सपिण्डया मातृगोत्रया च न विवाहः

[4]यो दुष्प्रतीतसंबन्धा मातृगोत्रद्वये च या ।
सगोत्रा च सपिण्डा च वर्ज्या सोद्वाहकर्मणि ॥

## विश्वनाथः

अविवाहकारणं सगोत्रत्वम्

[1]भृग्वङ्गिरोन्ययोः किंचिद्द्वयोर्यावत्तु वर्तनम् ।
तावत्समानगोत्रत्वमिति केचित् समूचिरे ॥

तत्रैवं सति सर्वत्र सगोत्रत्वनिबन्धने ।
अनुद्वाहे तु कुत्र स्यात् प्रवरैक्यं प्रयोजकम् ॥

## शाकलकारिका

असमानगोत्रप्रवरा विवाह्या

[2]ऊर्ध्वं चैवोक्तसापिण्ड्यादसमानार्षगोत्रजाम् ।
कन्यां समुद्वहेद्विप्रः सर्वदेशेष्वयं विधिः ॥

## शौनककारिके

असगोत्रा विवाह्या

[3]लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम् ।
बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम् ॥

आत्मनोऽवरवर्षां च विवहेद्विधिपूर्वकम् ॥

## रेणुकारिका: *

सगोत्रया समानप्रवरया मातृगोत्रया च न विवाहः, समानगोत्रलक्षणम्, समानगोत्रप्रवरया विवाहे प्रायश्चित्तं कर्तव्यं च, सगोत्रजस्य चण्डालत्वम्

[4]द्वयोः कुमारीवरयोर्मिथोऽथ
व्यङ्गाधिकाङ्गां जननीसगोत्राम् ।
त्यजेत्समानप्रवरां सगोत्रां
मातुः सपिण्डामचिकित्स्यरोगाम् ॥

(१) मुक्ता. १२७ प्रसूतो ( प्रसूते ) तत्समर्ने ( तन्समर्म ); ान. १७० अमत्योढा ( अमत्योढ्रा ) ( = ).

(२) विपा. ७०८ ; संग. १८२ ; कृत्म. १०६१ चोद्वाहः वोद्वाहः ) .

(३) उत. ११९ चैव ( वाऽपि ) ; सिन्धु. १०१९ मात्स्ये सूक्तम्.

(४) ज्योनि. १३२.

* रेणुकारिकासु प्राचीनानामृषीणां वचनानि यथाभूतानि स्वीकृतानि इत्यत्र संगृहीतैर्वचनैर्ज्ञायते । यथा—' एक एव ऋषिर्यत्र ' ' पञ्चानां त्रिषु सामान्यात् ' इत्येतौ द्वौ श्लोकौ बोधायनश्रौतसूत्रे, 'समानगोत्रप्रवराम् ' इत्ययं श्लोकः आपस्तम्बे समुपलभ्यते ।

(१) संभ. ५५.

(२) शाका. ८२ पृ. ९.

(३) शौका. १,२ पृ. ५५ ; प्रपा. ३०२ ; विपा. ६५५ प्रथमार्धं विना ; ६७४ ; संर. ५०८.

(४) रेका. ७ पृ. ४९.

ऐक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥
पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

प्रवराणां विकल्पः स्याद्यत्र वैवाहिकी क्रिया ।
प्राप्ता तत्र निषेधार्थं समानार्षमुदाहृतम् ॥
समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥

(१) रेका. ९–१२ पृ ४९–५०.



# पौराणिकी गोत्रप्रवरविशेषोत्पत्तिः

## [१]

प्रतिमन्वन्तरं वेदस्य धर्मस्य च प्रवर्तका ऋषयो
मन्त्रकर्तारः, ऋषिलक्षणम्, ऋषिप्रकाराः,
मन्वन्तरस्वरूपम्

[१]अतः शिष्टान् प्रवक्ष्यामि सतः साधूंस्तथैव च ।
सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत ।
सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रचक्षते ॥
[२]देशात्मके ये विषये कारणे चाष्टलक्षणे ।
न क्रुध्यन्ति न हृष्यन्ति जितात्मानस्तु ते स्मृताः ॥
[३]सामान्येषु च धर्मेषु तथा वैशेषिकेषु च ।
ब्रह्मक्षत्रविशो युक्ता यस्मात्तस्माद्द्विजातयः ॥
[४]वर्णाश्रमेषु युक्तस्य स्वर्गतौ सुखचारिणः ।
श्रौतस्मार्तस्य धर्मस्य ज्ञानाद्धर्मज्ञ उच्यते ॥
[५]विद्यायाः साधनात् साधुर्ब्रह्मचारी गुरोर्हितः ।
गृहाणां साधनाच्चैव गृहस्थः साधुरुच्यते ॥

---

(१) वायु. ५९।१९ ; ब्रह्माण्ड. २।३२।१९,२० सायुज्य ब्रह्मणोऽत्यन्तं ( साजात्याद्ब्रह्मगरत्वेन ) ; मत्स्य. १४५।२० अतः ( अथ ) सतः साधूंस्तथैव च ( साधूनथ ततश्च वै ) द्वितीयार्धे ( ब्राह्मणाः श्रुतिशब्दाश्च देवानां पशुमूर्तय । ) सायुज्यं ब्रह्मणोऽत्यन्तं ( संयुज्य ब्रह्मणा ह्यन्तः ).

(२) वायु. ५९।२० ; ब्रह्माण्ड. २।३२।२१.

(३) वायु. ५९।२१ ; ब्रह्माण्ड. २।३२।२२ च धर्मेषु ( तु धर्मेषु ) युक्ता यस्मात् ( यस्माद्युक्ता ) ; मत्स्य. १४५।२१ यस्मात्तस्माद्द्विजातयः ( श्रौतस्मार्तेन कर्मणा ).

(४) वायु. ५९।२२ स्वर्गतौ सुख ( स्वर्गगोसुख ) द्धर्मज्ञ ( द्धर्मः स ) ; ब्रह्माण्ड. २।३२।२३ ; मत्स्य. १४५।२२ ( वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतौ । श्रौतस्मार्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ॥ ).

(५) वायु. ५९।२३ गृहाणां ( क्रियाणां ) ; ब्रह्माण्ड. २।३२।२४ ; मत्स्य. १४५।२३ विद्यायाः ( दिव्यानां ) गृहाणां ( कारणात् )

[१]साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः ।
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥
[२]एवमाश्रमधर्माणां साधनात् साधवः स्मृताः ।
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ॥
[३]न च देवा न पितरो मुनयो न च मानवाः ।
अयं धर्मो ह्ययं नेति ब्रुवते भिन्नदर्शनाः ॥
[४]धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ ।
कुशलाकुशलं कर्म धर्माधर्माविह स्मृतम् ॥
[५]धारणा धृतिरित्यर्थाद्धातोर्धर्मः प्रकीर्तितः ।
अधारणेऽमहत्त्वे च अधर्म इति चोच्यते ॥
[६]अर्थेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।
अधर्मश्चानिष्टफलो ह्याचार्यैरुपदिश्यते ॥

---

(१) वायु. ५९।२४ ; ब्रह्माण्ड. २।३२।२५ ; मत्स्य. १४५।२४ साधनात्तपसोऽरण्ये ( तपसश्च तथाऽरण्ये ).

(२) वायु. ५९।२५ ; ब्रह्माण्ड. २।३२।२६ ऽथ भिक्षुकः ( यतिस्तथा ).

(३) वायु. ५९।२६ ; ब्रह्माण्ड. २।३२।२७ न च देवा ( अथ देवा ) मानवाः ( मानुषाः ) ब्रुवते ( विन्दते ) ; मत्स्य. १४५।२६ पूर्वार्धे ( अथ देवाश्च पितर ऋषयश्चैव मानुषाः । ) भिन्नदर्शनाः ( मौनमूर्तिना ).

(४) वायु. ५९।२७ विह स्मृतम् (विति स्मृतौ) ; ब्रह्माण्ड. २।३२।२८ ; मत्स्य. १४५।२५ (धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः । कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत् प्रभुः ॥ ).

(५) वायु. ५९।२८ ; ब्रह्माण्ड. २।३२।२९ ( धारणार्थो धृतिश्चैव धातुः शब्दे प्रकीर्तितः । अधारणामहत्त्वे च अधर्म इति चोच्यते ॥ ) ; मत्स्य. १४५।२७ ( धर्मेति धारणे धातुर्महत्त्वे चैव उच्यते । आधारणे महत्त्वे वा धर्मः स तु निरुच्यते ॥ ).

(६) वायु. ५९।२९ अर्थेष्ट ( अत्रेष्ट ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. २।३२।३० ; मत्स्य. १४५।२८ अर्थेष्ट ( तत्रेष्ट ) उत्तरार्धे ( अधर्मश्चानिष्टफल आचार्यैर्नोपदिश्यते । ).

[1]वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः ।
सम्यग्विनीता ऋजवस्तानाचार्यान् प्रचक्षते ॥
[2]स्वयमाचरते यस्मादाचारं स्थापयत्यपि ।
आचिनोति च शास्त्राणि आचार्यस्तेन चोच्यते ॥
[3]धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विधा द्विजैः ।
दाराग्निहोत्रसंबन्धादिज्या श्रौतस्य लक्षणम् ॥
[4]स्मार्तो वर्णाश्रमाचारैर्यमैः सनियमैः स्मृतः ।
पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ॥
[5]ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि च श्रुतिः ।
मन्वन्तरस्यातीतस्य स्मृत्वाऽऽचारान् मनुर्जगौ ॥
[6]तस्मात् स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागजः ।
स एष द्विविधो धर्मः शिष्टाचार इहोच्यते ॥
[7]शिषेर्धातोश्च निष्ठान्ताच्छिष्टशब्दं प्रचक्षते ।
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥
[8]मनुः सप्तर्षयश्चैव लोकसंतानकारणात् ।
धर्मार्थं ये च तिष्ठन्ति ताञ्छिष्टान्वै प्रचक्षते ॥

मन्वादयश्च ये शिष्टा ये मया प्रागुदीरिताः ॥
[1]तैः शिष्टैश्चरितो धर्मः सम्यगेव युगे युगे ॥
[2]त्रयी वार्ता दण्डनीतिरिज्या वर्णाश्रमास्तथा ।
शिष्टैराचर्यते यस्मान्मनुना च पुनः पुनः ।
पूर्वैः पूर्वगतत्वाच्च शिष्टाचारः स शाश्वतः ॥
[3]दानं सत्यं तपोऽलोभो विद्येज्याप्रजनौ दया ।
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ॥
[4]शिष्टा यस्माचरन्त्येनं मनुः सप्तर्षयश्च वै ।
मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ॥
[5]विज्ञेयः श्रवणाच्छ्रौतः स्मरणात् स्मार्त उच्यते ।
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ।
प्रत्यङ्गानि च वक्ष्यामि धर्मस्येह तु लक्षणम् ॥
[6]दृष्ट्वा तु भूतमर्थं यः पृष्टो वै न निगूहति ।
यथाभूतप्रवादस्तु इत्येतत्सत्यलक्षणम् ॥
[7]ब्रह्मचर्यं जपो मौनं निराहारत्वमेव च ।
इत्येतत्तपसो रूपं सुघोरं सुदुरासदम् ॥

---

(१) वायु. ५९।२९ श्चालोलु (श्चलोलु) ह्यदाम्भिकाः (ह्यदम्भकाः); ब्रह्माण्ड. २।३२।३१ आत्म (स्वात्म); मत्स्य. १४५।२९ ऋजव (मृदव).

(२) वायु. ५९।३० शास्त्राणि (शास्त्रार्थान्) अत्रान्यो ग्रन्थस्त्रुटित इति भाति ।; ब्रह्माण्ड. २।३२।३२.

(३) ब्रह्माण्ड. २।३२।३३ ; मत्स्य. १४५।३० श्रौतः स्मार्तो द्विधा द्विजैः (श्रौतस्मार्तौ द्विजातिभिः) न्यादिज्या (न्धनिज्या).

(४) वायु. ५९।३०, ३१ स्मृतः (युतः); ब्रह्माण्ड. २।३२।३४ ; मत्स्य. १४५।३१ पूर्वार्धे (स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।).

(५) वायु. ५९।३१, ३२ ऽऽचारान्मनु (ऽऽचारं पुन); ब्रह्माण्ड. २।३२।३५ ; मत्स्य. १४५।३२ च श्रुतिः (वै श्रुतिः) स्मृत्वाऽऽचारान् मनुर्जगौ (स्मृत्वा तन्मनुरब्रवीत्).

(६) वायु. ५९।३२, ३३ ; ब्रह्माण्ड. २।३२।३६ भागज (भाजक) द्विविधो (विविधो); मत्स्य १४५।३३ भागज (भागशः) स एष (एवं वै) इहोच्यते (स उच्यते).

(७) वायु. ५९।३३, ३४ पूर्वार्धे (शेषशब्दाच्छिष्ट इति शिष्टाचारः प्रचक्ष्यते ।); ब्रह्माण्ड. २।३२।३७ पूर्वार्धे (शेषशब्दः शिष्ट इति शेषं शिष्टं प्रचक्षते ।); मत्स्य १४५।३४.

(८) वायु. ५९।३४ तिष्ठन्ति ताञ्छिष्टान्वै (शिष्ट वै धारणार्थ); ब्रह्माण्ड. २।३२।३८ ; मत्स्य. १४५।३५ कारणात् (कारिणः) उत्तरार्धे (तिष्ठन्तीह च धर्मार्थं ताञ्छिष्टान् संप्रचक्षते ॥).

(१) वायु. ५९।३५ ; ब्रह्माण्ड. २।३२।३९ ; मत्स्य. १४५।३६ (तैः शिष्टैश्चरितो धर्मः स्थाप्यते वै युगेयुगे ।) पू.

(२) वायु. ५९।३६ ; ब्रह्माण्ड. २।३२।४०, ४१ शाश्वतः (सात्वतः); मत्स्य. १४५।३६, ३७ इज्या वर्णाश्रमास्तथा (प्रजावर्णाश्रमेष्वथा ।) मनुना च पुन. पुनः (पुनश्चैव मनुश्च वै) पूर्वगतत्वाच्च (पूर्वैर्गतत्वाच्च).

(३) वायु. ५९।३७ ; ब्रह्माण्ड. २।३२।४१,४२ ऽलोभो (ज्ञानं) ज्याप्रजनौ (ज्या प्रजनं); मत्स्य १४५।३८ पूर्वार्धे (दानं सत्यं तपो लोको विद्येज्या पूजनं दम ।).

(४) वायु. ५९।३८ ; ब्रह्माण्ड. २।३२।४२,४३ यस्मा (यत्तु); मत्स्य. १४५।३९ वै (ह).

(५) वायु. ५९।३९ ; ब्रह्माण्ड. २।३२।४३,४४; मत्स्य. १४५।४०,४१ च वक्ष्यामि (प्रवक्ष्यामि).

(६) वायु. ५९।४० तु भूत (प्रभूत), ब्रह्माण्ड २।३२।४५ ; मत्स्य. १४५।४२ पूर्वार्धे (दृष्टानुभूतमर्थं च यः पृष्टो न निगूहते ।).

(७) वायु. ५९।४१ जपो (मूर्ध) सुघोरं (सुदुरं); ब्रह्माण्ड. २।३२।४६ ; मत्स्य. १४५।४३ मौनं (तपो) सुदुरा (दुरा).

पैशूनां द्रव्यहविषामृक्सामयजुषां तथा ।
ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते ॥
[2] आत्मवत्सर्वभूतेषु या हितायाहिताय च ।
समा प्रवर्तते दृष्टिः कृत्स्ना ह्येषा दया स्मृता ॥
[3] आक्रुष्टोऽभिहतो वाऽपि नाक्रोशेद्यो न हन्ति वा ।
वाङ्मनःकर्मभिः क्षान्तिस्तितिक्षैषा क्षमा स्मृता ॥
[4] स्वामिनाऽरक्ष्यमाणानामुत्सृष्टानां च संभ्रमे ।
परस्वानामनादानमलोभ इति कीर्त्यते ॥
[5] मैथुनस्यासमाचारो ह्यचिन्तनमकल्पनम् ।
निवृत्तिर्ब्रह्मचर्यं तदच्छिद्रं दम उच्यते ॥
[6] आत्मार्थं वा परार्थं वा इन्द्रियाणीह यस्य वै ।
न मिथ्या संप्रवर्तन्ते शमस्यैतत्तु लक्षणम् ॥
[7] दशात्मके यो विषये कारणे चाष्टलक्षणे ।
न क्रुध्येत्तु प्रतिहतः स जितात्मा विभाव्यते ॥

(१) वायु. ५९।४२ ; ब्रह्माण्ड. २।३२।४७ ; मत्स्य. १४५।४४ दक्षिणानां ( दक्षिणायाः ).

(२) वायु. ५९।४३ ; ब्रह्माण्ड. २।३२।४८ समा प्रवर्तते ( प्रवर्तने समा ) ह्येषा ( ऽप्येषा ) ; मत्स्य. १४५।४५ ( आत्मवत्सर्वभूतेषु यो हिताय शुभाय च । वर्तते सततं हृष्टः क्रिया श्रेष्ठा दया स्मृता ॥ ).

(३) वायु. ५९।४४ ; ब्रह्माण्ड. २।३२।४९ ऽभिहतो ( निहतो ) वा (च) भिः क्षान्ति ( भिर्वेत्ति ) ; मत्स्य. १४५।४६ ( आक्रुष्टोऽभिहतो यस्तु नाक्रोशेत्प्रहरेदपि । अदुष्टो वाङ्मनःकायैस्तितिक्षुः सा क्षमा स्मृता ॥ ).

(४) वायु. ५९।४५ संभ्रमे ( सततु च ) इति ( इह ) ; ब्रह्माण्ड. २।३२।५० ; मत्स्य. १४५।४७ कीर्त्यते ( साङ्गितम् ).

(५) वायु. ५९।४६ ; ब्रह्माण्ड. २।३२।५१ ह्यचिन्तनमकल्पनम् ( न चिन्ता नानुजल्पनम् ) दम ( तप ) ; मत्स्य. १४५।४८ ह्यचिन्तनमकल्पनम् ( जल्पनाच्चिन्तनात्तथा ) उत्तरार्धे ( निवृत्तिर्ब्रह्मचर्यं च तदेतच्छमलक्षणम् । ).

(६) वायु. ५९।४७ ; ब्रह्माण्ड. २।३२।५२ इन्द्रि ( चेन्द्रि ) न मिथ्या ( मिथ्या न ) ; मत्स्य. १४५।४९ ( आत्मार्थे वा परार्थे वा इन्द्रियाणीह यस्य वै । विषये न प्रवर्तन्ते दमस्यैतत्तु लक्षणम् ॥ ).

(७) वायु. ५९।४८ ; ब्रह्माण्ड. २।३२।५३ क्रुध्येत्तु ( वध्येन ) विभाव्यते ( विभाव्यते ) ; मत्स्य. १४५।५० दशात्मके ( पञ्चात्मके ) क्रुध्येत्तु ( क्रुध्यते ) विभाव्यते ( भविष्यति ).

[1] यद्यदिष्टतमं द्रव्यं न्यायेनोपागतं च यत् ।
तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ॥
दानं त्रिविधमित्येतत् कनिष्ठज्येष्ठमध्यमम् ।
तत्र नैःश्रेयसं ज्येष्ठं कनिष्ठं स्वार्थसिद्धये ।
[2] कारुण्यात् सर्वभूतेषु संविभागस्तु
मध्यमः ( मम् ) ॥
[3] श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ।
शिष्टाचाराविरुद्धश्च धर्मः सत्साधुसंमतः ॥
[4] अप्रद्वेषो ह्यनिष्टेषु तथेष्टानभिनन्दनम् ।
प्रीतितापविषादेभ्यो विनिवृत्तिर्विरक्तता ॥
[5] संन्यासः कर्मणां न्यासः कृतानामकृतैः सह ।
कुशलाकुशलानां च प्रहाणं त्याग उच्यते ॥
[6] अव्यक्ताद्योऽविशेषाच्च विकारोऽस्मिन्नचेतने ।
चेतनाऽचेतनान्यत्वविज्ञानं ज्ञानमुच्यते ॥
[7] प्रत्यङ्गानां तु धर्मस्य इत्येतल्लक्षणं स्मृतम् ।
ऋषिभिर्धर्मतत्त्वज्ञैः पूर्वे स्वायम्भुवेऽन्तरे ॥

(१) वायु. ५९।४९ ; ब्रह्माण्ड. २।३२।५४ नोपागतं ( नैवागतं ) ; मत्स्य. १४५।५१ ब्रह्माण्डवत्.

(२) वायु. ५९।५० तृतीयार्धे ( कारुण्यात्सर्वभूतेभ्यः सुविभागस्तु बन्धुषु । ) ; ब्रह्माण्ड. २।३२।५५,५६.

(३) वायु. ५९।५१ संमतः ( संगतः ) ; ब्रह्माण्ड. २।३२।५६,५७ ; मत्स्य. १४५।५२ उत्तरार्धे ( शिष्टाचारप्रवृद्धश्च धर्मोऽयं साधुसमतः । ).

(४) वायु. ५९।५२ ; ब्रह्माण्ड. २।३२।५७, ५८ ष्टानभि ( ष्टस्याभि ) ; मत्स्य. १४५।५३ तथेष्टानभिनन्दनम् ( इष्टं वै नाभिनन्दति ) देभ्यो ( दानां ).

(५) वायु. ५९।५३ कर्मणां ( कर्मण' ) ; ब्रह्माण्ड. २।३२।५८, ५९ च प्रहाण त्याग ( तु प्रहाणं न्यास ) ; मत्स्य. १४५।५४ नां च प्रहाणं त्याग ( न्यां तु प्रहाणं न्यास ).

(६) वायु. ५९।५४ ; ब्रह्माण्ड. २।३२।५९, ६० पूर्वार्धे ( अव्यक्ता ये विशेषास्ते विकारेऽस्मिन्नचेतने । ) ; मत्स्य. १४५।५५ ( अव्यक्तादिविशेषान्तविकारेऽस्मिन्निवर्तते । चेतनाचेतनं ज्ञात्वा ज्ञाने ज्ञानी स उच्यते ॥ ).

(७) वायु. ५९।५५ ; ब्रह्माण्ड. २।३२।६०, ६१ ज्ञैः ( विलै ) पूर्वे ( पूर्वे ) ; मत्स्य. १४५।५६ प्रत्यङ्गानां ( प्रत्यङ्गानि ) ज्ञैः ( चैलै ) पूर्वे ( पूर्वैः ).

अत्र वो वर्णयिष्यामि विधिं मन्वन्तरस्य तु ।
तथैव चातुर्होत्रस्य चातुर्वर्ण्यस्य चैव हि ।
प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते ॥

[2]ऋचो यजूंषि सामानि यथावत्प्रतिदैवतम् ।
आभूतसंप्लवस्थायि वर्ज्यैकं शतरुद्रियम् ॥

[3]विधिर्होत्रं तथा स्तोत्रं पूर्ववत्संप्रवर्तते ।
द्रव्यस्तोत्रं गुणस्तोत्रं कर्मस्तोत्रं तथैव च ।
चतुर्थमाभिजनिकं स्तोत्रमेतच्चतुर्विधम् ॥

मन्वन्तरेषु सर्वेषु यथा देवा भवन्ति ये ।
प्रवर्तयति तेषां वै ब्रह्मा स्तोत्रं चतुर्विधम् ।

एवं मन्त्रगणानां तु समुत्पत्तिश्चतुर्विधा ॥

अथर्वर्ग्यजुषां साम्नां वेदेष्विह पृथक्पृथक् ।
ऋषीणां तप्यतामुग्रं तपः परमदुश्चरम् ॥

मन्त्राः प्रादुर्बभूवुर्हि पूर्वमन्वन्तरेष्विह ।
असंतोषाद्भयाद्दुःखान्मोहाच्छोकाच्च पञ्चधा ॥

[1]ऋषीणां तपःकार्त्स्न्येन दर्शनेन यदृच्छया ।
ऋषीणां यदृषित्वं हि तद्वक्ष्यामीह लक्षणैः ॥
अतीतानागतानां तु पञ्चधा ऋषिरुच्यते ।
अतस्त्वृषीणां वक्ष्यामि ह्यार्षस्य च समुद्भवम् ॥

[3]ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ ।
एतत्संनियतस्तस्मिन् ब्रह्मणा स ऋषिः स्मृतः ॥

[4]विवृत्तिसमकालं तु बुद्ध्याऽव्यक्तमृषिः स्वयम् ।
परं हि ऋषते यस्मात् परमर्षिस्ततः स्मृतः ॥
गत्यर्थादृषतेर्धातोर्नामनिर्वृत्तिरादितः ।
यस्मादेष स्वयंभूतस्तस्माच्च ऋषिता स्मृता ॥
ईश्वराः स्वयमुद्भूता मानसा ब्रह्मणः सुताः ।
यस्मादुत्पद्यमानैस्तैर्महान्परिगतः परः ।
यस्माद्दृषन्ति ते धीरा महान्तं सर्वतो गुणैः ।
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः ॥

---

(१) वायु. ५९।५६ वर्णयि (वर्नयि) विधिं (विधिः) तु (यः) तथैव चातुर्होत्रस्य (इतरेतरवर्णस्य); ब्रह्माण्ड. २।३२।६१, ६२ तु (य·) चातुर्वर्ण्यस्य (चातुर्विधस्य) मन्वन्तरं (मन्वन्तरे); मत्स्य. १४५।५७, ५८.

(२) वायु. ५९।५७; ब्रह्माण्ड. २।३२।६३ यथावत् (यथा च) स्थायि (स्थारि); मत्स्य. १४५।५८ पूर्वार्धमात्रम्.

(३) वायु. ५९।५८ द्रव्यस्तोत्र (द्रव्यं स्तोत्र); ब्रह्माण्ड. २।३२।६४, ६५ होत्र (होत्रः) कर्मस्तोत्रं (फलस्तोत्र) जनिकं (जनक); मत्स्य. १४५।५९,६० होत्र (स्तोत्र) स्तोत्र (होत्र) तृतीयार्धे (तथैवाभिजनस्तोत्रं स्तोत्रमेव चतुर्विधम् ।).

(४) वायु. ५९।५९ गणानां तु (गुणानां च); ब्रह्माण्ड. २।३२।६५, ६६; मत्स्य. १४५।६०, ६१ देवा भवन्ति ये (भेदा भवन्ति हि) द्वितीयार्धे (प्रवर्तयन्ति तेषां वै ब्रह्मस्तोत्रं पुनः पुनः ।) गणानां (गुणानां).

(५) वायु. ५९।६० ; ब्रह्माण्ड. २।३२।६७ दुश्चरम् (दुष्करम्), मत्स्य. १४५।६२ अथर्वर्ग्यजुषां साम्नां (अथर्व-ऋग्यजुःसाम्नां) उग्रं (तेषां).

(६) वायु. ५९।६१ उत्तरार्धे (परितोषाद्भयाद्दुःखात्सुखा-च्छोकाच्च पञ्चधा ।); ब्रह्माण्ड. २।३२।६८ न्मोहा (त्सुखा); मत्स्य. १४५।६३ बभूवुर्हि (भेदन्त्यादौ) रेष्विह (रस्य ह).

(१) वायु. ५९।६२; ब्रह्माण्ड. २।३२।६९ तपःकार्त्स्न्येन (तारकात्स्येन); मत्स्य. १४५।६४ (ऋषीणां तारका येन लक्षणेन यदृच्छया । ऋषीणां यादृशत्वं हि तद्वक्ष्यामीह लक्षणम् ॥).

(२) वायु. ५९।६३ ; ब्रह्माण्ड. २।३२।७० तु (च) ऋषि (त्वृषि) ह्यार्षस्य च (तत्र ह्यार्ष); मत्स्य. १४५।६५ तु (च) ऋषिरुच्यते (ह्यार्षकं स्मृतम्) उत्तरार्धे (तथा ऋषीणां वक्ष्यामि आर्षस्येह समुद्भवम्)।

(३) वायु. ५९।७९ ; मत्स्य. १४५।८१ (ऋषीत्येषा गतौ धातुर्विद्या सत्यं तपः श्रुतम् । एष संनिचयो यस्माद्ब्रह्मणस्तु ततस्त्वृषिः ॥).

(४) वायु ५९।८० विवृत्ति (निवृत्ति); ब्रह्माण्ड. २।३२।८६ उत्तरार्धे (परं ह्यर्षयते यस्मात्परमर्षिस्ततस्तु तत् ।); मत्स्य. १४५।८२ (निवृत्तिसमकालाच्च बुद्ध्याऽव्यक्त ऋषिस्त्वयम् । ऋषते परमं यस्मात्परमर्षिस्ततः स्मृतः ॥).

(५) वायु. ५९।८१ ; ब्रह्माण्ड. २।३२।८७,८८ निर्वृत्ति (निर्वृति) देष (देव) च्च ऋषिता (च्चाप्यृषिता) ईश्वराः (ईश्वरात्); मत्स्य. १४५।८३,८४ रादितः (कारणात्) स्मृता (मता) तृतीयार्धे (ईश्वराः स्वयमुद्भूता ब्रह्मणो मानसाः सुताः ।).

(६) वायु. ५९।८२ प्रथमार्धे (यस्मान्न हन्यते मानैर्महान्परिगतः पुरः ।) ते (ये); ब्रह्माण्ड. २।३२।८८,८९ दर्शिनः (दर्शिना); मत्स्य. १४५।८४,८५ (निवर्तमानैस्तैर्बुद्ध्या महान्परिगतः परः । यस्माद्दृषन्त्येतेन मह तस्मान्महर्षयः ॥).

[1]ईश्वराणां सुतास्तेषां मानसा औरसाश्च वै ।
अहंकारं तमश्चैव त्यक्त्वा च ऋषितां गताः ॥
[2]तस्मात्सप्तर्षयस्ते वै भूतादौ तत्त्वदर्शनात् ।
ऋषिपुत्रा ऋषीकास्तु मैथुनाद्गर्भसंभवाः ॥
[3]तन्मात्राणि च सत्यं च ऋषन्ते ते महौजसः ।
सप्तर्षयस्ततस्ते वै परमाः सत्यदर्शनाः ॥
[4]ऋषीकाणां सुतास्ते स्युर्विज्ञेया ऋषिपुत्रकाः ।
ऋषन्ति वै श्रुतं यस्माद्विशेषांश्चैव तत्त्वतः ।
तस्माच्छ्रुतर्षयस्तेऽपि श्रुतस्य परिदर्शनात् ॥
[5]अव्यक्तात्मा महात्मा चाहङ्कारात्मा तथैव च ।
भूतात्मा चेन्द्रियात्मा च तेषां तज्ज्ञानमुच्यते ।
इत्येता ऋषिजातीस्तु नामभिः पञ्च वै शृणु ॥
[6]कश्यपेषु वसिष्ठेषु तथा भृग्वङ्गिरोऽत्रिषु ।
पञ्चस्वेतेषु जायन्ते गोत्रेषु ब्रह्मवादिनः ।
यस्मादृषन्ति ब्रह्माणं तेन ब्रह्मर्षयः स्मृताः ॥
[7]धर्मस्याथ पुलस्त्यस्य क्रतोश्च पुलहस्य च ।
प्रत्यूषस्य प्रभासस्य कश्यपस्य तथा पुनः ॥

[1]देवर्षयः सुतास्तेषां नामतस्तान्निबोधत ।
देवर्षी धर्मपुत्रौ तु नरनारायणावुभौ ॥
वालखिल्याः क्रतोः पुत्राः कर्दमः पुलहस्य तु ।
[2]कुबेरश्चैव पौलस्त्यः प्रत्यूषस्याचलः स्मृतः ॥
[3]पर्वतो नारदश्चैव कश्यपस्यात्मजावुभौ ।
ऋषन्ति देवान् यस्मात्ते तस्माद्देवर्षयः स्मृताः ॥
[4]मानवे चैव ये वंशे ऐलवंशे च ये नृपाः ।
ये च ऐक्ष्वाकनाभागा ज्ञेया राजर्षयस्तु ते ॥
[5]ऋषन्ति रञ्जनाद्यस्मात्प्रजा राजर्षयस्ततः ।
ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयोऽमलाः ॥
[6]देवलोकप्रतिष्ठास्तु ज्ञेया देवर्षयः शुभाः ।
इन्द्रलोकप्रतिष्ठास्तु सर्वे राजर्षयो मताः ॥
[7]अग्निजाल्या च तपसा मन्त्रव्याहरणैस्तथा ।
एवं ब्रह्मर्षयः प्रोक्ता दिव्या राजर्षयस्तु ये ॥
[8]देवर्षयस्तथाऽन्ये च तेषां वक्ष्यामि लक्षणम् ।
भूतभव्यभवज्ज्ञानं सत्याभिव्याहृतं तथा ॥
[9]संतुष्टाश्च स्वयं ये तु संबुद्धा ये च वै स्वयम् ।
तपसेह प्रसिद्धा ये गर्भे यैश्च प्रवेदितम् ॥

---

(१) वायु. ५९।८३ सुता ( शुभा ) वै ( ते ) ; ब्रह्माण्ड. २।३२।९० तमश्चैव त्यक्त्वा च ( तपश्चैव ऋषन्ति ) ; मत्स्य. १४५।८५ सा औ ( साश्वी ) पूर्वार्धमात्रम्.

(२) वायु. ५९।८४ पूर्वार्धे ( तस्मात्तु ऋषयस्ते वै भूतादौ तत्त्वदर्शिनाः । ) ; ब्रह्माण्ड. २।३२।९१ ; मत्स्य. १४५।८६ पूर्वार्धे ( ऋषिस्तस्मात्परत्वेन भूतादिर्ऋषयस्ततः । ).

(३) वायु. ५९।८५ ; ब्रह्माण्ड. २।३२।९२ वै परमाः सत्य ( च परसत्यस्य ).

(४) वायु. ५९।८६ ऋषीकाणां ( ऋषीणां च ) स्ते स्युः ( स्ते तु ) ; ब्रह्माण्ड. २।३२।९३,९४ वै श्रुत ( ते ऋतं ) तृतीयार्धे ( तस्मात्सप्तर्षयस्तेऽपि श्रुतेः परमदर्शनात् । ) ; मत्स्य. १४५।८७, ८८ ( परत्वेन ऋषन्ते वै भूतादीनृषिकास्ततः । ऋषिकाणां सुता ये तु विज्ञेया ऋषिपुत्रकाः । श्रुत्वा ऋषं परत्वेन श्रुतास्तस्माच्छ्रुतर्षयः ॥ ).

(५) वायु. ५९।८७ ; ब्रह्माण्ड. २।३२।९४, ९५ महात्मा चाह ( महानात्माऽह ) स्तु ( स्ता ) ; मत्स्य. १४५।८८, ८९ चाह ( चाऽह ) तृतीयार्धे ( इत्येवमृषिजातिस्तु पञ्चधा नामविश्रुता । ).

(६) वायु. ६१।८१ ; ब्रह्माण्ड. २।३५।९०,९१.

(७) वायु. ६१।८२ ; ब्रह्माण्ड. २।३५।९२ प्रभासस्य ( च देवस्य ).

(१) वायु. ६१।८३ ; ब्रह्माण्ड. २।३५।९३.

(२) वायु. ६१।८४ ; ब्रह्माण्ड. २।३५।९४ स्याचलः स्मृतः ( स्य दलः सुतः ).

(३) वायु. ६१।८५ ; ब्रह्माण्ड. २।३५।९५ पर्वतो नारदश्चैव ( नारदः पर्वतश्चैव ).

(४) वायु. ६१।८६ चैव ये ( वैषये ) ऐल ( ऐड ) ये च ( ऐडा ) ; ब्रह्माण्ड. २।३५।९६.

(५) वायु. ६१।८७ ऽमलाः ( मताः ) ; ब्रह्माण्ड. २।३५।९७.

(६) वायु. ६१।८८ स्तु ज्ञेया ( श्च ज्ञेया ) ; ब्रह्माण्ड. २।३५।९८.

(७) वायु. ६१।८९ ; ब्रह्माण्ड. २।३५।९९ ल्या च ( ल्याऽथ ) एवं ( ये च ) राजर्षयस्तु ( देवर्षयश्च ).

(८) वायु. ६१।९० ; ब्रह्माण्ड. २।३५।१०० देवर्षयस्तथाऽन्ये च ( राजर्षयस्तथा चैव ) भूतभव्यभवज्ज्ञानं ( भूतं भव्य भवज्ज्ञानं ).

(९) वायु. ६१।९१ संतुष्टाश्च ( संबुद्धास्तु ) संबुद्धा ( संबद्धा ) प्रवेदितम् ( प्रणोदितम् ) ; ब्रह्माण्ड. २।३५।१०१.

मन्त्रव्याहारिणो ये च ऐश्वर्यात्सर्वगाश्च ये ।
इत्येत ऋषिभिर्युक्ता देवद्विजनृपास्तु ये ॥
एतान्भावानधिगता ये वै त ऋषयो मताः ।
सप्तैते सप्तभिश्चैव गुणैः सप्तर्षयः स्मृताः ॥
[3]दीर्घायुषो मन्त्रकृत ईश्वरा दिव्यचक्षुषः ।
बुद्धाः प्रत्यक्षधर्माणो गोत्रप्रावर्तकाश्च ये ॥
षट्कर्मनिरता नित्यं शालीना गृहमेधिनः ।
तुल्यैर्व्यवहरन्ति स्म ह्यदुष्टैः कर्महेतुभिः ॥
अग्राम्यैर्वर्तयन्ति स्म रसैश्चैव स्वयंकृतैः ।
कुटुम्बिनो बुद्धिमन्तो वनान्तरनिवासिनः ॥
कृतादिषु युगाख्यासु सर्वैरेव पुनः पुनः ।
वर्णाश्रमव्यवस्थानं क्रियते प्रथमं तु वै ॥
प्राप्ते त्रेतायुगमुखे पुनः सप्तर्षयस्त्विह ।
प्रवर्तयन्ति ये वर्णानाश्रमांश्चैव सर्वशः ।
तेषामेवान्वये वीरा उत्पद्यन्ते पुनः पुनः ॥

( १ ) वायु. ६१।९२ ; ब्रह्माण्ड. २।३५।१०२ उत्तरार्धे ( *एते राजर्षयो युक्ता देवद्विजनृपाश्च ये ।* ).
( २ ) वायु. ६१।९३ नधिगता ( नधीयाना ) वै त ( चैत ); ब्रह्माण्ड. २।३५।१०३.
( ३ ) वायु. ६१।९४ ; ब्रह्माण्ड. २।३५।१०४ रा दिव्य ( राद्दिव्य ) ये ( ते ).
( ४ ) वायु. ६१।९५ कर्मनि ( कर्माभि ) शालीना ( शालिनो ) ह्यदुष्टै ( अदुष्टै ) ; ब्रह्माण्ड. २।३५।१०५.
( ५ ) वायु ६१।९६ बुद्धिमन्तो वना ( *ऋद्धिमन्तो बाह्या* ) ; ब्रह्माण्ड. २।३५।१०६.
( ६ ) वायु ६१।९७ ख्यासु सर्वैरेव ( ख्येषु सर्वेष्वेव ) क्रियते ( क्रियन्ते ) ; ब्रह्माण्ड. २।३५।१०७.
( ७ ) वायु ६१।९८ ; ब्रह्माण्ड. २।३५।१०८, १०९.

जायमाने पिता पुत्रे पुत्रः पितरि चैव हि ।
एवं संततविच्छेदाद्वर्तयन्त्यायुगक्षयात् ।
अष्टाशीतिसहस्राणि प्रोक्तानि गृहमेधिनाम् ॥
अर्यम्णो दक्षिणं ये तु पितृयाणं समाश्रिताः ।
दाराग्निहोत्रिणस्ते वै ये प्रजाहेतवः स्मृताः ॥
गृहमेधिनस्त्वसंख्येयाः श्मशानान्याश्रयन्ति ते ।
अष्टाशीतिसहस्राणि निहिता उत्तरापथे ॥
[5]ये श्रूयन्ते दिवं प्राप्ता ऋषयो ह्यूर्ध्वरेतसः ।
मन्त्रब्राह्मणकर्तारो जायन्ते च युगक्षयात् ॥
सप्तर्षयो मनुर्देवाः पितरश्च चतुष्टयम् ।
मूलं मन्वन्तरस्यैते तेषां चैवान्वयाः प्रजाः ॥
[6]ऋषीणां देवताः पुत्राः पितरो देवसूनवः ।
ऋषयो देवपुत्राश्च इति शास्त्रविनिश्चयः ॥
मनोः क्षत्रं विशश्चैव सप्तर्षिभ्यो द्विजातयः ।
एतन्मन्वन्तरं प्रोक्तं समासान्न तु विस्तरात् ॥

( १ ) वायु. ६१।९९ संततवि ( समेत्यावि ) ; ब्रह्माण्ड. २।३५।१०९, ११०.
( २ ) वायु. ६१।१०० दक्षिणं ( दक्षिणा ) ; ब्रह्माण्ड. २।३५।१११.
( ३ ) वायु. ६१।१०१ नस्त्वसंख्येयाः ( नां च सङ्ख्येयाः ) रापथे ( रायणे ) ; ब्रह्माण्ड. २।३५।११२.
( ४ ) वायु. ६१।१०२ च युगक्षयात् ( ह युगक्षये ) ; ब्रह्माण्ड. २।३५।११३.
( ५ ) वायु. ६२।२० चैवान्वयाः ( चैवान्तरे ) ; ब्रह्माण्ड. २।३६।२१.
( ६ ) वायु. ६२।२१ ; ब्रह्माण्ड. २।३६।२२ शास्त्र ( शास्त्रे ).
( ७ ) वायु. ६२।२२ ; ब्रह्माण्ड. २।३६।२३ सान्न तु ( साच्च न ).

[२]

ऋषयो मन्त्रकर्तारः प्रवरा ब्राह्मणक्षत्रियवैश्यानाम्

भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः ।
मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चेति ते दश ।
ब्रह्मणो मानसा ह्येत उद्भूताः स्वयमीश्वराः ॥

( १ ) वायु. ५९।८८ ; ब्रह्माण्ड २।३२।९६, ९७ ; मत्स्य. १४५।९०, ९१ ह्येति ( ह्यपि ) उद्भूताः ( उत्पन्नाः ).

परत्वेनर्षयो यस्मात्मृतास्तस्मान्महर्षयः ।
ईश्वराणां सुता ह्येते ऋषयस्तान्निबोधत ॥

( १ ) वायु. ५९।८९ पूर्वार्धे ( प्रवर्तत ऋषेर्यस्मान्महांस्तस्मा- न्महर्षयः । ) सुता ह्येते ( सुतास्त्वेते ) ; ब्रह्माण्ड. २।३२।९७, ९८; मत्स्य. १४५।९१, ९२ स्मृता ( मता ) ह्येते ( स्त्वेषां ).

[1]काव्यो बृहस्पतिश्चैव कश्यपश्च्यवनस्तथा ।
उतथ्यो वामदेवश्च अगस्त्यः कौशिकस्तथा ॥
[2]कर्दमो वालखिल्याश्च विश्रवाः शक्तिवर्धनः ।
इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः ॥
[3]ऋषिपुत्रानृषीकांस्तु गर्भोत्पन्नान्निबोधत ।
वत्सरो नग्नहूश्चैव भारद्वाजस्तथैव च ॥
[4]बृहदुक्थः शरद्वांश्च अगस्त्यश्चौशिजस्तथा ॥
[5]ऋषिर्दीर्घतमाश्चैव बृहदुक्थः शरद्वतः ।
वाजश्रवाः शुचिश्चैव वश्याश्वश्च पराशरः ॥
[6]दधीचः शङ्खमांश्चैव राजा वैश्रवणस्तथा ।
इत्येते ऋषिकाः प्रोक्तास्ते सत्याद्दषितां गताः ॥
[7]ईश्वरा ऋषयश्चैव ऋषिकाश्चैव ये स्मृताः ।
एते मन्त्रकृतः सर्वे कृत्स्नशस्तान्निबोधत ॥

[1]भृगुः काव्यः प्रचेतास्तु दधीचो ह्यात्मवानपि ।
और्वोऽथ जमदग्निश्च विदः सारस्वतस्तथा ॥
[2]आर्ष्टिषेणो युधाजिच्च वीतहव्यसुवर्चसौ ।
वैन्यः पृथुर्दिवोदासो वाध्यश्वो गृत्सशौनकौ ॥
एकोनविंशतिर्ह्येते भृगवो मन्त्रवादिनः ॥
[3]अङ्गिरा वेधसश्चैव भारद्वाजोऽथ वाष्कलिः ।
ऋतवाकस्तथा गर्गः शिनिः संकृतिरेव च ॥
[4]गुरुवीतश्च मान्धाता अम्बरीषस्तथैव च ।
युवनाश्वः पौरुकुत्सस्त्रसदस्युः सदस्युमान् ॥
[5]औहार्योऽथाजमीढश्च ऋषभो बलिरेव च ।
पृषदश्वो विरूपश्च कण्वश्चैवाथ मुद्गलः ॥
[6]उतथ्यश्च भरद्वाजस्तथा वाजश्रवा अपि ।
आयास्यश्च सुवित्तिश्च वामदेवस्तथैव च ॥

---

(१) वायु. ५९।९० श्च्यवन (श्चोशना) अगस्त्यः कौशिक (श्चयोज्यश्चौशिज); ब्रह्माण्ड. २।३२।९८, ९९ अगस्त्य कौशिक (अपास्यश्चौशिज); मत्स्य. १४५।९२, ९३.

(२) वायु. ५९।९१ पूर्वार्धे (कर्दमो विश्रवाः शक्तिर्वालखिल्यस्तथाधराः ।) तपसा (ज्ञानत); ब्रह्माण्ड. २।३२।९९, १०० पूर्वार्धे (कर्दमो विश्रवाः शक्तिर्वालखिल्यास्तथार्वनः ।) ऋषित्तां (चर्षितां); मत्स्य. १४५।९३, ९४.

(३) वायु. ५९।९२; ब्रह्माण्ड. २।३२।१००, १०१ नग्नहू (नगृहू); मत्स्य. १४५।९४, ९५ ऋषिपुत्रान् (तेषां पुत्रान्) उत्तरार्धे (वत्सरो नग्नहूश्चैव भरद्वाजश्च वीर्यवान् ।).

(४) वायु. ५९।९३.

(५) वायु. ५९।९३, ९४ उत्तरार्धे (वाजश्रवाः सुवित्तश्च सुवाश्वेषपरायणः ।); ब्रह्माण्ड. २।३२।१०१, १०२; मत्स्य. १४५।९५, ९६ बृहदुक्थ (बृहदक्षाः) उत्तरार्धे (वाजिश्रवाः सुचिन्तश्च शावश्च सपराशरः ।).

(६) वायु. ५९।९४; ब्रह्माण्ड. २।३२।१०२, १०३ शङ्खमांश्चैव (शंसापाश्चैव); मत्स्य. १४५।९६, ९७ दधीचः शङ्खमांश्चैव (श्यङ्गी च शङ्खपाच्चैव) प्रोक्तास्ते सत्याद् (सर्वे सत्येन).

(७) वायु. ५९।९५ पूर्वार्धे (ईश्वरा ऋषिकाश्चैव ये चान्ये वै तथा स्मृताः ।); ब्रह्माण्ड. २।३२।१०३, १०४; मत्स्य. १४५।९७,९८ (ईश्वरा ऋषयश्चैव ऋषीका ये च विश्रुताः । एवं मन्त्रकृतः सर्वे कृत्स्नशश्च निबोधत ॥).

(१) वायु. ५९।९६; ब्रह्माण्ड. २।३२।१०४, १०५ स्तु दधीचो (श्च ऋचीको); मत्स्य. १४५।९८,९९ काव्यः प्रचेतास्तु (काश्यपः प्रचेता) और्वो (ऊर्वो) विदः (वेदः).

(२) वायु. ५९।९७ (अष्टिषेणो ह्यरूपश्च वीतहव्यः सुमेधसः । वैन्यः पृथुर्दिवोदासः पश्चास्यो गृत्समाश्रमः । एकोनविंशदित्येत ऋषयो मन्त्रवादिनः ॥); ब्रह्माण्ड. २।३२।१०५,१०६; मत्स्य. १४५।९९,१०० प्रथमार्धे (आर्ष्टिषेणश्च्यवनश्च वीतहव्यः सवेधसः ।) वाध्यश्वो (ब्रह्मवान्) वादिनः (कृत्तमाः).

(३) वायु. ५९।९८ उत्तरार्धे (तथाऽमृतस्तथा गार्ग्यः शैनी संहृतिरेव च ।); ब्रह्माण्ड. २।३२।१०७ वेधसश्चैव (वैचकश्चैव); मत्स्य. १४५।१०१ (अङ्गिराश्चैव त्रितश्च भरद्वाजोऽथ लक्ष्मणः । कृतवाचस्तथा गर्गः स्मृतिसंकृतिरेव च ॥).

(४) वायु. ५९।९९ गुरुवीतश्च (पुरुकुत्सोऽथ); ब्रह्माण्ड. २।३२।१०८ गुरुवीतश्च (पुरुकुत्सश्च) अम्ब (ह्यम्ब) पौरु (पौर) दस्युः सद (दस्युश्च द); मत्स्य. १४५।१०२ उत्तरार्धे (युवनाश्वः पुरुकुत्सः स्वश्रवस्तु सदस्यवान् ।).

(५) वायु. ५९।१००; ब्रह्माण्ड. २।३२।१०९ यौऽथा (यौ ह्य) ऋषभो बलि (तुश्चयः कपि) पृषदश्वो विरूपश्च (बृशादर्भौ विरूपाश्व); मत्स्य. १४५।१०३ पूर्वार्धे (अजमीढोऽस्वहार्यश्च ह्युत्कलः कविरेव च ।) कण्व (काव्य).

(६) वायु. ५९।१०१; ब्रह्माण्ड. २।३२।११० आयास्यश्च सुवित्तिश्च (अयास्यश्चऋतवीं च); मत्स्य. १४५।१०४ भरद्वाजस्तथा वाज (शरद्वांश्च तथा वाजि) आयास्यश्च सुवित्तिश्च (अपस्यौषः सुचित्तिश्च).

[1]असिजो बृहदुक्थश्च ऋषिर्दीर्घतमास्तथा ।
कक्षीवांश्च त्रयस्त्रिंशत्स्मृता ह्याङ्गिरसा वराः ।
एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत ॥
[2]कश्यपश्चैव वत्सारो नैध्रुवो रैभ्य एव च ।
असितो देवलश्चैव षडेते ब्रह्मवादिनः ॥
[3]अत्रिरर्चिसनश्चैव श्यावाश्वश्च गविष्ठिरः ।
वाग्भूतको मुनिर्धीमांस्तथा पूर्वातिथिश्च यः ।
इत्येते चात्रयः प्रोक्ता मन्त्रकारा महर्षयः ॥
[4]वसिष्ठश्चैव शक्तिश्च तथैव च पराशरः ।
चतुर्थ इन्द्रप्रमतिः पञ्चमस्तु भरद्वसुः ॥
[5]षष्ठश्च मैत्रावरुणिः कुण्डिनः सप्तमस्तथा ।
इति सप्त वसिष्ठाश्च विज्ञेया ब्रह्मवादिनः ॥
[6]सुद्युम्नश्चाष्टमश्चैव नवमोऽथ बृहस्पतिः ।
दशमस्तु भरद्वाजो मन्त्रब्राह्मणकारकाः ॥

[1]विश्वामित्रस्तु गाधेयो देवरातस्तथोद्‌लः ।
तथा विद्वान्मधुच्छन्दा ऋषिश्चान्योऽघमर्षणः ॥
[2]अष्टको लोहितश्चैव कतः कीलश्च तावुभौ ।
देवश्रवास्तथा रेणुः पूरणोऽथ धनञ्जयः ॥
[3]शिशिरश्च महातेजाः शालङ्कायन एव च ॥
[4]त्रयोदशैते धर्मिष्ठा विज्ञेयाः कुशिका वराः ॥
[5]अगस्त्योऽथो दृढायुश्च विध्मवाहस्तथैव च ।
ब्रह्मिष्ठागस्तयो ह्येते त्रयः परमकीर्तयः ॥
[6]मनुर्वैवस्वतश्चैव ऐलो राजा पुरूरवाः ।
क्षत्रियाणां वरा ह्येते विज्ञेया मन्त्रवादिनः ॥
[7]भलन्दनश्च वत्सश्च मङ्कीलश्चैव ते त्रयः ।
एते मन्त्रकृतश्चैव वैश्यानां प्रवराः स्मृताः ॥
[8]इत्येषा नवतिः प्रोक्ता मन्त्रा यैर्ऋषिभिः कृताः ।
ब्राह्मणाः क्षत्रिया वैश्या ऋषिपुत्रान्निबोधत ॥
[9]ऋषीकाणां सुता ह्येते ऋषिपुत्राः श्रुतर्षयः ॥

---

(१) वायु. ५९।१०२ असिजो ( औगजो ) तमा ( तपा ) ह्याङ्गिरसा ( अङ्गिरसो ) ; ब्रह्माण्ड. २।३२।१११,११२ ; मत्स्य. १४५।१०५, १०६ पूर्वार्धे ( ऋषिजो बृहच्छुक्थश्च ऋषिर्दीर्घतमा अपि ) ह्याङ्गिरसा ( ह्यङ्गिरसां ).

(२) वायु. ५९।१०३ नैध्रुवो ( विभ्रमो ) ; ब्रह्माण्ड. २।३२।११२,११३ ; मत्स्य. १४५।१०६, १०७ कश्यपश्चैव ( काश्यप' सह– ) रैभ्य ( नित्य ).

(३) वायु. ५९।१०४ श्यावाश्वश्च गविष्ठिरः ( श्यामावांश्चाथ निष्ठुरः ) वाग्भूतको ( बल्गूतको ) ; ब्रह्माण्ड. २।३२।११३,११४ र्चिस ( र्वस ) द्वितीयार्धे ( आत्रिहोत्र ऋषिर्धीमांस्तथा पूर्वातिथिश्च स' । ) ; मत्स्य. १४५।१०७–१०९ ( अत्रिरर्धस्वनश्चैव शावास्योऽथ गविष्ठिर' । कर्णकश्च ऋषिः सिद्धस्तथा पूर्वातिथिश्च यः । इत्येते त्वत्रय' प्रोक्ता मन्त्रकृत्षण्महर्षयः ॥ ).

(४) वायु. ५९।१०५ ; ब्रह्माण्ड. २।३२।११५ मस्तु ( मश्च ) ; मत्स्य. १४५।१०९, ११० तथैव च ( तृतीयश्च ) चतुर्थ इन्द्रप्रमति' ( ततस्तु इन्द्रप्रतिम' ).

(५) वायु. ५९।१०६ ( षष्ठस्तु मैत्रावरुण' कुण्डिनः सप्तमस्तथा । एते सप्तर्षयो विप्रा ब्रह्मक्षेत्रनिवासिन ॥ ) ; ब्रह्माण्ड. २।३२।११६ , मत्स्य १४५।११०, १११ ( षष्ठस्तु मित्रावरुणः सप्तम कुण्डिनस्तथा । इत्येते सप्त विज्ञेया वासिष्ठा ब्रह्मवादिन ॥ ).

(६) वायु ५९।१३१.

(१) ब्रह्माण्ड. २।३२।११७ ; मत्स्य. १४५।१११, ११२ श्रस्तु ( त्रश्च ) स्तथोद्‌लः ( स्तथा बलः ).

(२) ब्रह्माण्ड. २।३२।११८ ; मत्स्य. १४५।११२, ११३ ( अष्टको लोहितश्चैव भृतकीलश्च माम्बुधिः । देवश्रवा देवरातः पुराणश्च धनञ्जयः ॥ ).

(३) मत्स्य. १४५।११३.

(४) ब्रह्माण्ड २।३२।११९ ; मत्स्य. १४५।११४ ( त्रयोदशैते विज्ञेया ब्रह्मिष्ठाः कौशिका वरा' । ).

(५) ब्रह्माण्ड. २।३२।११९, १२० गस्तयो ( गस्तपा ) ; मत्स्य. १४५।११४, ११५ पूर्वार्धे ( अगस्त्योऽथ दृढद्युम्नो इन्द्रबाहुस्तथैव च । ).

(६) ब्रह्माण्ड. २।३२।१२०, १२१ उत्तरार्धे ( क्षत्रियाणां वरावेतौ विज्ञेयौ मन्त्रवादिनौ । ) ; मत्स्य. १४५।११५, ११६.

(७) ब्रह्माण्ड. २।३२।१२१, १२२ मङ्कील ( सङ्कील ) ; मत्स्य. १४५।११६, ११७ ( भलन्दकश्च वासाश्व' सङ्कीलश्चैव ते त्रय' । एते मन्त्रकृतो ज्ञेया वैश्यानां प्रवराः सदा ॥ ).

(८) ब्रह्माण्ड. २।३२।१२२ ; मत्स्य. १४५।११७, ११८ पूर्वार्धे ( इति द्विनवतिः प्रोक्ता मन्त्रा यैश्च बहिष्कृताः । ).

(९) मत्स्य. १४५।११८.

# [ ३ ]

श्रौतसूत्रीयप्रवराध्यायोक्ता वैवस्वतमन्वन्तरीयाः सप्तर्षयः

[१] भरद्वाजः कश्यपो गौतमश्च
विश्वामित्रो जमदग्निर्वसिष्ठः ।
यश्चोदितो भास्करेऽभूत् प्रनष्टे
सोऽप्यत्रात्रिर्भगवानाजगाम ॥

[२] सप्तर्षीन्संप्रवक्ष्यामि सांप्रतं ये दिवि स्थिताः ॥
[३] गाधिजः कौशिको धीमान्विश्वामित्रो महातपाः ।
भार्गवो जमदग्निश्च ह्यौर्वपुत्रः प्रतापवान् ॥
[४] बृहस्पतिसुतश्चापि भरद्वाजो महायशाः ।
औतथ्यो गौतमो विद्वान् शरद्वान्नाम धार्मिकः ॥
[५] स्वायंभुवोऽत्रिर्भगवान् ब्रह्मकोशस्तु पञ्चमः ।
षष्ठो वसिष्ठपुत्रस्तु वसुमाँल्लोकविश्रुतः ॥
[६] वत्सरः काश्यपश्चैव सप्तैते साधुसंमताः ।
एते सप्तर्षयश्चोक्ता वर्तन्ते सांप्रतेऽन्तरे ॥
[७] इक्ष्वाकुश्च नृगश्चैव धृष्टः शर्यातिरेव च ।
नरिष्यन्तश्च विख्यातो नाभागो दिष्ट एव च ॥

[१] करूषश्च पृषध्रश्च प्रांशुश्च नवमः स्मृतः ।
मनोर्वैवस्वतस्यैते नव पुत्राः सुधार्मिकाः ।
कीर्तिता वै तथा ह्येते सप्तमं चैतदन्तरम् ॥

[२] अत्रिर्वसिष्ठो भगवान् कश्यपश्च महानृषिः ।
गौतमोऽथ भरद्वाजो विश्वामित्रस्तथैव च ॥

तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
सप्तमो जमदग्निश्च ऋषयः सांप्रतं दिवि ॥

[३] अत्रिश्चैव वसिष्ठश्च कश्यपो गौतमस्तथा ।
भरद्वाजस्तथा योगी विश्वामित्रः प्रतापवान् ॥

जमदग्निश्च सप्तैते सांप्रतं ते महर्षयः ।
कृत्वा धर्मव्यवस्थानं प्रयान्ति परमं पदम् ॥

[४] वसिष्ठः कश्यपोऽथात्रिर्जमदग्निः स गौतमः ।
विश्वामित्रभरद्वाजौ सप्त सप्तर्षयोऽभवन् ॥

---

( १ ) भा. ९।२२३।५१.

( २ ) वायु. ६४।२४ ; ब्रह्माण्ड. २।३८।२६ दिवि स्थिताः ( दिवं श्रिताः ).

( ३ ) वायु. ६४।२५ ह्यौर्वे (ऊरु) ; ब्रह्माण्ड. २।३८।२६, २७.

( ४ ) वायु. ६४।२६ महायशाः ( महातपाः ) ; ब्रह्माण्ड. २।३८।२७, २८.

( ५ ) वायु. ६४।२७ ; ब्रह्माण्ड. २।३८।२८, २९ तु पञ्चमः ( स पञ्चमः ).

( ६ ) वायु. ६४।२८ वत्सरः ( वत्सारः ) चोक्ता ( सिद्धा ); ब्रह्माण्ड. २।३८।२९, ३०.

( ७ ) वायु. ६४।२९ कुदच नृगश्चैव ( कुरुचैव नाभागो ) नाभागो दिष्ट ( नाभ उद्दिष्ट ) ; ब्रह्माण्ड. २।३८।३०, ३१ ; मार्के. ७९।११ इक्ष्वाकुश्च नृगश्चैव ( इक्ष्वाकुर्नाभगश्चैव ) नाभागो ( नाभगो ) ; विष्णु. ३।१।३३, ३४ कुरुच नृगश्चैव ( कुरुचैव नाभागो ) नाभागो दिष्ट ( नभ उद्दिष्ट ).

( १ ) वायु. ६४।३० प्रांशुश्च ( वसुमान् ) सुधार्मिकाः ( प्रकीर्तिताः ) तथा ( मया ) ; ब्रह्माण्ड. २।३८।३१, ३२ ; मार्के. ७९।१२, १३ ( करूषश्च पृषध्रश्च वसुमाँल्लोकविश्रुतः । मनोर्वैवस्वतस्यैते नव पुत्राः प्रकीर्तिताः । वैवस्वतमिदं ब्रह्मन् कथितं ते मयाऽन्तरम् ॥ ) ; विष्णु. ३।१।३४, ३५ प्रांशुश्च नवमः स्मृतः (वसुमाँल्लोकविश्रुतः) पुत्राः सु (पुत्राश्च) तृतीयार्धं नास्ति.

( २ ) मार्के. ७९।९, १० ( अत्रिश्चैव वसिष्ठश्च काश्यपश्च महानृषिः । गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ तथैव पुत्रो भगवानृचीकस्य महात्मनः । जमदग्निस्तु सप्तैते मुनयोऽत्र तथाऽन्तरे ॥ ) ; हरि. १।७।३४, ३५ ; शिवध. ५८।३०, ३१ भगवान् ( भव्यश्च ) सप्तमो जमदग्निश्च ( जमदग्निः सप्तमस्तु ) तृतीयार्धं नास्ति ; ब्रह्म. ५।३४, ३५.

( ३ ) मत्स्य. ९।२७, २८ ते महर्षयः ( ये महर्षयः ) ; पद्म. ५।७।१०५–१०७.

( ४ ) विष्णु. ३।१।३२, ३३ ; कूर्म. १।५२।२५, २६ ( वसिष्ठः कश्यपश्चात्रिर्जमदग्निश्च गोतमः । विश्वामित्रो भरद्वाजः सप्त सप्तर्षयोऽभवन् ॥ ).

[४]

अब्राह्मणानामपि ऋषीणां तपसा ब्राह्मणगोत्रत्वम्,
चत्वारि मूलगोत्राणि

[1]ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् ।
बहूनीह हि लोके वै गोत्राणि मुनिसत्तम ॥
यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः ।
शूद्रयोनौ समुत्पन्ना वियोनौ च तथाऽपरे ॥

पराशर उवाच —

राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना ।
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥
उत्पाद्य पुत्रान् मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ॥
पितामहश्च मे पूर्वमृष्यशृङ्गश्च काश्यपः ।
वटस्ताण्ड्यः कृपश्चैव कक्षीवान् कमठादयः ॥
यवक्रीतश्च नृपते द्रोणश्च वदतां वरः ।
आयुर्मतङ्गो दत्तश्च द्रुपदो मत्स्य एव च ॥
एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽऽश्रयात् ।
प्रतिष्ठिता वेदविदो दमे तपसि चैव हि ॥
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
अङ्गिरा. कश्यपश्चैव वसिष्ठो भृगुरेव च ॥
कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
नामधेयानि तपसा तानि च ग्रहणं सताम् ॥

गोत्रहीनां क्षत्रियाणामपि तपसा ब्राह्मणगोत्रत्वम्

ऋषय ऊचुः—

[2]किंलक्षणेन धर्मेण तपसेह श्रुतेन वा ।
ब्राह्मण्यं समनुप्राप्तं विश्वामित्रादिभिर्नृपैः ॥
[3]येन येनाभिधानेन ब्राह्मण्यं क्षत्रिया गताः ।
विशेषं ज्ञातुमिच्छामस्तपसा दानतस्तथा ॥

(१) भा. १२।२९६।१०–१८, बाल. १।५३ पृ. १८८ (१२।२९६।१७,१८).

(२) वायु. ९१।१०४; ब्रह्माण्ड. ३।६६।७६,७७.

(३) वायु ९१।१०५, ब्रह्माण्ड. ३।६६।७७,७८ च्छाम-स्तपसा (च्छामि तपसो).

[1]एवमुक्तस्ततो वाक्यमब्रवीदिदमर्थवत् ।
अन्यायोपगतैर्द्रव्यैराहूय द्विजसत्तमान् ।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥
[2]धर्मं चैतं समाख्याय पापात्मा पुरुषाधमः ।
ददाति दानं विप्रेभ्यो लोकानां दम्भकारणात् ॥
[3]जपं कृत्वा तथा तीव्रं धनलोभान्निरङ्कुशः ।
रागमोहान्वितो ह्यन्ते पावनार्थं ददाति यः ॥
[4]तेन दत्तानि दानानि अफलानि भवन्त्युत ।
तस्य धर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ॥
[5]एवं लब्ध्वा धनं मोहाद्ददतो यजतश्च ह ।
संक्लिष्टकर्मणो दानं न तिष्ठति दुरात्मनः ॥
[6]न्यायागतानां द्रव्याणां तीर्थे संप्रतिपादनम् ।
कामाननभिसंधाय यजते च ददाति च ॥
[7]स दानफलमाप्नोति तच्च दानं सुखोदयम् ।
दानेन भोगानाप्नोति स्वर्गं सत्येन गच्छति ॥
[8]तपसा तु सुतप्तेन लोकान्विष्टभ्य तिष्ठति ।
विष्टभ्य स तु तेजस्वी लोकेष्वानन्त्यमश्नुते ॥
[9]दानाच्छ्रेयस्तथा यज्ञो यज्ञाच्छ्रेयस्तथा तपः ।
सत्यं तु तपसः श्रेयस्तस्माज्ज्ञानं गुरु स्मृतम् ॥

(१) वायु. ९१।१०६; ब्रह्माण्ड. ३।६६।७८,७९.

(२) वायु ९१।१०७.

(३) वायु ९१।१०८; ब्रह्माण्ड. ३।६६।८०.

(४) वायु. ९१।१०९; ब्रह्माण्ड. ३।६६।८१ अफलानि (ह्यफलानि).

(५) वायु. ९१।११०; ब्रह्माण्ड. ३।६६।८२ सक्लिष्टकर्मणो (सङ्क्लिष्ट कर्मणा).

(६) वायु. ९१।१११; ब्रह्माण्ड. ३।६६।८३.

(७) वायु. ९१।११२; ब्रह्माण्ड. ३।६६।८४.

(८) वायु ९१।११३ सुतप्तेन (सुगुप्तेन); ब्रह्माण्ड. ३।६६।८५ पू.

(९) वायु. ९१।११४ सत्य तु तपस' श्रेयः (सन्यास-स्तपस श्रेयान्); ब्रह्माण्ड. ३।६६।८५ उत्त.

[1]श्रूयन्ते हि तपःसिद्धाः क्षत्त्रोपेता द्विजातयः ।
विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः ॥
[2]काश्यश्च पुरुकुत्सश्च शलो गृत्समदः प्रभुः ।
आर्ष्टिषेणोऽजमीढश्च भार्गव्योमस्तथैव च ॥

(१) वायु. ९११११५ क्षत्त्रो (क्षात्त्रो); ब्रह्माण्ड. ३।६६।८६ श्रूयन्ते (श्रूयते).

(२) वायु. ९१।११६ (कपेश्च पुरुकुत्सश्च सत्यश्चानूहवानृथुः । आर्ष्टिषेणोऽजमीढश्च भागान्योऽन्यस्तथैव च ॥); ब्रह्माण्ड. ३।६६।८७.

[1]कक्षीवांश्चैवौशिजश्च नृपश्च शिशिरस्तथा ।
रथीतरः शौनकश्च विष्णुवृद्धादयो नृपाः ॥
[2]क्षत्त्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः ।
एते राजर्षयः सर्वे सिद्धिं सुमहतीं गताः ॥

(१) वायु. ९१।११७ पूर्वार्धे (कक्षीवश्चैव शिजयस्तथाऽन्ये च महारथाः ।) तरः शौनकश्च (तरश्च रुन्दश्च); ब्रह्माण्ड. ३।६६।८८ रथीतरः (रथान्तरः).

(२) वायु. ९१।११८ क्षत्त्रो (क्षात्त्रो); ब्रह्माण्ड. ३।६६।८९ सुमहतीं (तु महतीं).

## [५]

## वंशकरा ब्रह्मपुत्राः

षड् ब्रह्मपुत्रास्तेषां वंशाश्च

[1]मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ॥
त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः ।
बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ॥
अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥
राक्षसास्तु पुलस्त्यस्य वानराः किंनरास्तथा ।
पुलहस्य मृगाः सिंहा व्याघ्राः किंपुरुषास्तथा ॥
क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः ।
विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥
दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ।
ब्रह्मणः पृथिवीपाल पुत्रः पुत्रवतां वरः ॥
[2]मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः ।
जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥

ब्रह्मपुत्रो भृगुः, तद्वंशश्च संक्षेपतः

[3]यं कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ॥
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान् भृगुः ।
भृगोः पुत्रः कविर्विद्वाञ्छुक्रः कविसुतो ग्रहः ॥

(१) भा. १।६६।४–१०.

(२) भा. १।६६।२४.

(३) भा. १।६६।४१–४९.

[1]त्रैलोक्यप्राणयात्रार्थे वर्षावर्षे भयाभये ।
स्वयंभुवा नियुक्तः सन् भुवनं परिधावति ॥
योगाचार्यो महाबुद्धिर्दैत्यानामभवद्गुरुः ।
सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ॥
तस्मिन्नियुक्ते विभुना योगक्षेमाय भार्गवे ।
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥
च्यवनं दीप्ततपसं धर्मात्मानं मनीषिणम् ।
यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ॥
आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः ।
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥
महातपा महातेजा बाल एव गुणैर्युतः ।
ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत् ॥
जमदग्नेस्तु चत्वार आसन् पुत्रा महात्मनः ।
रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ।
सर्वशस्त्रास्त्रकुशलः क्षत्रियान्तकरो वशी ॥
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि बभूवुर्भृगुविस्तरः ॥
पूजितः प्रवरो वंशो भृगूणां भृगुनन्दन ।
इमं वंशमहं ब्रह्मन् भार्गवं ते महामुने ।
निगदामि कथायुक्तं पुराणाश्रयसंयुतम् ॥

(१) भा. १।५।६–११.

भृगुर्महर्षिर्भगवान् ब्रह्मणा वै स्वयंभुवा ।
चरुणस्य क्रतौ जातः पावकादिति नः श्रुतम् ॥

भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः ।
च्यवनस्यापि दायादः प्रमतिर्नाम धार्मिकः ॥

प्रमतेरप्यभूत्पुत्रो घृताच्यां रुरुरित्युत ।
रुरोरपि सुतो जज्ञे शुनको वेदपारगः ॥

प्रमद्वरायां धर्मात्मा तव पूर्वपितामहात् ।
तपस्वी च यशस्वी च श्रुतवान् ब्रह्मवित्तमः ।
धर्मिष्ठः सत्यवादी च नियतो नियतेन्द्रियः ॥

नव ब्रह्मपुत्रा धर्मप्रवर्तका गृहमेधिन

[1]एवं भूतानि सृष्टानि चराणि स्थावराणि च ।
यदाऽस्य ताः प्रजाः सृष्टा न व्यवर्धन्त धीमतः ॥

[2]अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् ।
भृगुं पुलस्त्यं पुलहं क्रतुमाङ्गिरसं तथा ॥

[3]मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसम् ।
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥

[4]तेषां ब्रह्मात्मकानां वै सर्वेषां ब्रह्मवादिनाम् ।
ततोऽसृजत्पुनर्ब्रह्मा रुद्रं रोषात्मसंभवम् ॥

[5]संकल्पं चैव धर्मं च पूर्वेषामपि पूर्वजः ।
अग्रे ससर्ज वै ब्रह्मा मानसानात्मनः समान् ॥

[6]मानसश्च रुचिर्नाम विज्ञेयो ब्रह्मणः सुतः ।
प्राणात्स्वादसृजद्दक्षं चक्षुर्भ्यां च मरीचिनम् ॥

[1]भृगुस्तु हृदयाज्जज्ञे ऋषिः सलिलजन्मनः ।
शिरसोऽङ्गिरसं चैव श्रोत्रादत्रिस्तथैव च ॥

[2]पुलस्त्यं च तथोदानाद्व्यानाच्च पुलहं पुनः ।
समानजं वसिष्ठं तु अपानान्निर्ममे क्रतुम् ॥

[3]अभिमानात्मकं भद्रं निर्ममे नीललोहितम् ।
इत्येते ब्रह्मणः पुत्राः प्राणजा द्वादश स्मृताः ॥

[4]इत्येते मानसाः पुत्रा विज्ञेया ब्रह्मणः सुताः ।
भृग्वादयस्तु ये सृष्टा नवैते ब्रह्मवादिन ॥

[5]गृहमेधिनः पुराणास्ते धर्मस्तैः प्राक्प्रवर्तितः ।
द्वादशैते प्रवर्तन्ते सह रुद्रेण वै प्रजाः ॥

[6]तस्यां कन्याश्चतुर्विंशद्दक्षस्त्वजनयत्प्रभुः ।
सर्वास्ताश्च महाभागाः सर्वाः कमललोचनाः ॥

[7]योगपत्न्यश्च ताः सर्वाः सर्वास्ता योगमातरः ।
सर्वाश्च ब्रह्मवादिन्यः सर्वा विश्वस्य मातरः ॥

[8]श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदशी ॥

[9]पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ।
द्वाराण्येतानि चैवास्य विहितानि स्वयंभुवा ॥

---

( १ ) वायु. ९।६७.

( २ ) वायु. ९।६८ ; ब्रह्माण्ड १।५।७० ( भृग्वङ्गिरा मरीचिश्च पुलस्त्य पुलहः क्रतु । ) उत्त

( ३ ) वायु. ९।६९ ; ब्रह्माण्ड. १।५।७०, ७१ पूर्वार्धे ( दक्षोऽत्रिश्च वसिष्ठश्च सोऽसृजन्नव मानसान् । ).

( ४ ) वायु ९।७० ; ब्रह्माण्ड. १।५।७१, ७२ पूर्वार्धे ( ब्रह्मा यथात्मकानां तु सर्वेषां ब्रह्मयोगिनाम् । ).

( ५ ) वायु. ९।७१ ; ब्रह्माण्ड. १।५।७२ पूर्वेषामपि पूर्वजः ( सर्वेषामेव पर्वतौ ) पू.

( ६ ) वायु. ९।१०० ; ब्रह्माण्ड. १।५।७४ ( प्राणाद्दक्षोऽसृजद्वाच चक्षुर्भ्यां च मरीचिनम् ।) पू.

( १ ) वायु. ९।१०१ ; ब्रह्माण्ड. १।५।७४, ७५ भृगुस्तु ( भृगुश्च ) जन्मनः ( योनिनः ) शिरसोऽङ्गिरस चैव ( शिरसश्चाङ्गिराश्चैव ).

( २ ) वायु ९।१०२ ; ब्रह्माण्ड. १।५।७५, ७६ ( पुलस्त्यश्च तथोदानाद्व्यानात्तु पुलहस्तथा । समानतो वसिष्ठश्च ह्यपानान्निर्ममे क्रतुम् ॥ ).

( ३ ) वायु. ९।१०३ ; ब्रह्माण्ड. १।५।७६ पुत्राः प्राणजा ( श्रेष्ठा. पुत्रा वै ) उत्त.

( ४ ) वायु. ९।१०४ ; ब्रह्माण्ड १।५।७७ भृग्वादयस्तु ये सृष्टा ( धर्मादयः प्रथमजा ) नवैते ( न च ते ).

( ५ ) वायु. ९।१०५ ; ब्रह्माण्ड. १।५।७८ ( गृहमेधिपुराणास्ते विज्ञेया ब्रह्मण सुताः । द्वादशैते प्रसूयन्ते सह रुद्रेण च द्विजाः ॥ ).

( ६ ) वायु. १०।२३ ; ब्रह्माण्ड. २।९।४७,४८.

( ७ ) वायु. १०।२४ ; ब्रह्माण्ड. २।९।४८,४९.

( ८ ) वायु १०।२५ ; ब्रह्माण्ड. २।९।४९,५० क्रिया तथा ( तथा क्रिया ) वपुः ( वसुः ) दशी ( दश ).

( ९ ) वायु १०।२६ ; ब्रह्माण्ड. २।९।५०,५१ पत्न्यर्थे ( पत्न्यर्थं ).

ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ।
ख्यातिः सत्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥

संनतिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ।
तास्ततः प्रत्यपद्यन्त पुनरन्ये महर्षयः ॥

रुद्रो भृगुर्मरीचिश्च अङ्गिराः पुलहः क्रतुः ।
पुलस्त्योऽत्रिर्वसिष्ठश्च पितरोऽग्निस्तथैव च ॥

सतीं भवाय प्रायच्छत् ख्यातिं च भृगवे तथा ।
मरीचये च संभूतिं स्मृतिमङ्गिरसे ददौ ॥

प्रीतिं चैव पुलस्त्याय क्षमां वै पुलहाय च ।
क्रतवे संनतिं नाम अनसूयां तथाऽत्रये ॥

ऊर्जां ददौ वसिष्ठाय स्वाहां वै ह्यग्नये ददौ ।
स्वधां चैव पितृभ्यस्तु तास्वपत्यानि मे शृणु ॥

भृगुवंशः

सूत उवाच—
भृगोः ख्यातिर्विजज्ञेऽथ ईश्वरौ सुखदुःखयोः ।
शुभाशुभप्रदातारौ सर्वप्राणभृतामिह ।
देवौ धाताविधातारौ मन्वन्तरविचारिणौ ॥

तयोर्ज्येष्ठा तु भगिनी देवी श्रीर्लोकभाविनी ।
सा तु नारायणं देवं पतिमासाद्य शोभनम् ।
नारायणात्मजौ साध्वी बलोत्साहौ व्यजायत ॥

तस्यास्तु मानसाः पुत्रा आसन् व्योमविचारिणः ।
ये वहन्ति विमानानि देवानां पुण्यकर्मणाम् ॥

मेरुकन्ये स्मृते भार्ये विधातुर्धातुरेव च ।
आयतिर्नियतिश्चैव तयोः पुत्रौ दृढव्रतौ ॥

पाण्डुश्चैव मृकण्डुश्च ब्रह्मकोशौ सनातनौ ।
मनस्विन्यां मृकण्डोश्च मार्कण्डेयो बभूव ह ॥

सुतो वेदशिरास्तस्य मूर्धन्यायामजायत ।
पीवर्यां वेदशिरसः पुत्रा वंशकराः स्मृताः ।
मार्कण्डेया इति ख्याता ऋषयो वेदपारगाः ॥

पाण्डोश्च पुण्डरीकायां द्युतिमानात्मजोऽभवत् ।
उन्नतश्च द्युतिमतः स्वनवांश्च तावुभौ ।
तयोः पुत्राश्च पौत्राश्च भार्गवाणां परस्परम् ॥

मरीचिवंशः, द्वौ गोत्रकरौ तत्र यज्ञवामः काश्यपश्च

स्वायंभुवेऽन्तरेऽतीते मरीचेः शृणुत प्रजाः ।
पत्नी मरीचेः संभूतिर्विजज्ञे साऽऽत्मसंभवम् ॥

प्रजापतेः पूर्णमासं कन्याश्चेमा निबोधत ।
कृष्टिर्वृष्टिस्त्विषा चैव तथा चोपचितिः शुभा ॥

---

(१) वायु. १०।२७ ; ब्रह्माण्ड. २।९।५१,५२ ताभ्यः (याऽन्याः) ख्यातिः सत्यथ (सती ख्यातिश्च).

(२) वायु. १०।२८ ; ब्रह्माण्ड. २।९।५२,५३ तास्ततः प्रत्यपद्यन्त (तास्तत्र प्रत्यगृह्णन्त).

(३) वायु. १०।२९ ; ब्रह्माण्ड. २।९।५३,५४.

(४) वायु. १०।३० ; ब्रह्माण्ड. २।९।५४,५५ च संभूतिं (तु संभूतिं).

(५) वायु. १०।३१ ; ब्रह्माण्ड. २।९।५५,५६.

(६) वायु १०।३२ मे शृणु (वक्ष्ये) ; ब्रह्माण्ड. २।९।५६,५७ मे ह (मेता).

(७) वायु. २८।१ ; ब्रह्माण्ड. २।११।१,२ च (वै) धाता (धातृ).

(८) वायु. २८।२ ; ब्रह्माण्ड. २।११।२,३ शोभनम् (शोभना) तृतीयार्धे (नारायणात्मजौ तस्या बलोत्साहौ व्यजायताम् ।).

(१) वायु. २८।३ आसन् व्योमविचारिणः (ये चान्ये दिव्यचारिणः) ; ब्रह्माण्ड. २।११।४,५ तस्यास्तु (तस्यास्ते) पञ्चमात् श्लोकात्प्राक् 'बलस्य तेजः पुत्रस्तु उन्मादस्य तु संशयः ।' इत्यधिकम् ।

(२) वायु. २८।४ मेरु (दे तु) ; ब्रह्माण्ड. २।११।५,६ मेरुकन्ये (मेरुकन्ये).

(३) वायु. २८।५ ; ब्रह्माण्ड. २।११।६,७ पाण्डुश्चैव मृकण्डुश्च (प्राणश्चैव मृकण्डश्च) मृकण्डोश्च (मृकण्डस्य).

(४) वायु. २८।६ ; ब्रह्माण्ड. २।११।७,८ मूर्धन्यायाम् (धूम्रपत्न्या) इति ख्याता (समाख्याता).

(५) वायु. २८।७,८ द्वितीयार्धे (उत्पन्नौ द्युतिमन्तश्च स्वनवानश्च तावुभौ ।) ; ब्रह्माण्ड. २।११।९, १० पाण्डोश्च (प्राणस्य) परस्परम् (परस्परात्).

(६) वायु. २८।८,९ ; ब्रह्माण्ड. २।११।१०,११ [illegible] ([illegible]) साऽऽत्मजम् ([illegible]).

(७) वायु. २८।९ कृष्टिर्वृष्टि (तुष्टिः पुष्टि) चोप (चात्र) ; ब्रह्माण्ड. २।११।११, १२.

[1]पूर्णमासः सरस्वत्यां द्वौ पुत्रावुदपादयत् ।
विरजं चैव धर्मिष्ठं पर्वसं चैव तावुभौ ॥
[2]विरजस्यात्मजो विद्वान् सुधामा नाम विश्रुतः ।
सुधामा स तु वैराजः प्राच्यां दिशि समाश्रितः ॥
[3]लोकपालः सुधर्मात्मा गौरीपुत्रः प्रतापवान् ।
पर्वसः सर्वगणानां प्रविष्टः स महायशाः ॥
[4]पर्वसः पर्वसायां तु जनयामास वै सुतौ ।
यज्ञवामं च श्रीमन्तं सुतं काश्यपमेव च ।
तयोर्गोत्रकरौ पुत्रौ तौ जातौ धर्मनिश्चितौ ॥

अङ्गिरोवंशः

[5]स्मृतिश्चाङ्गिरसः पत्नी जज्ञे तावात्मसंभवौ ।
पुत्रौ कन्याश्चतस्रश्च पुण्यास्ता लोकविश्रुताः ॥
[6]सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ।
तथैव भरताग्निं च कीर्तिमन्तं च तावुभौ ॥
[7]अग्नेः पुत्रं तु पर्जन्यं सद्वती सुपुवे प्रभुम् ।
हिरण्यरोमा पर्जन्यो मारीच्यामुदपादयत् ।
आभूतसंप्लवस्थायी लोकपालः स वै स्मृतः ॥
[8]जज्ञे कीर्तिमतश्चापि धेनुका तावकल्मषौ ।
वरिष्ठं धृतिमन्तं चाप्युभावङ्गिरसां वरौ ।
तयोः पुत्राश्च पौत्राश्च येऽतीता वै सहस्रशः ॥

अत्रिवंशः

[1]अनसूयाऽपि जज्ञे तान् पञ्चाऽऽत्रेयानकल्मषान् ।
कन्यां चैव श्रुतिं नाम माता शङ्खपदस्य या ॥
[2]कर्दमस्य तु पत्नी सा पौलहस्य प्रजापतेः ।
सत्यनेत्रश्च हव्यश्च आपोमूर्तिः शनैश्चरः ॥
[3]सोमश्च पञ्चमस्तेषामासीत्स्वायंभुवेऽन्तरे ।
यामेऽतीते सहातीताः पञ्चात्रेयाः प्रकीर्तिताः ॥
[4]तेषां पुत्राश्च पौत्राश्च आत्रेयाणां महात्मनाम् ।
स्वायंभुवेऽन्तरेऽतीताः शतशोऽथ सहस्रशः ॥

पुलस्त्यवंशः

[5]प्रीत्यां पुलस्त्यभार्यायां दत्तालिस्तत्सुतोऽभवत् ।
पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायंभुवेऽन्तरे ।
मध्यमो देवबाहुश्च विनीतो नाम ते त्रयः ॥
[6]स्वसा यवीयसी तेषां सद्वती नाम विश्रुता ।
पर्जन्यजननी शुभ्रा पत्नी त्वग्नेः स्मृता शुभा ॥
[7]पौलस्त्यस्य ऋषेश्चापि प्रीतिपुत्रस्य धीमतः ।
दत्तालेः सुपुवे पत्नी सुजङ्घीं च बहून् सुतान् ।
पौलस्त्या इति विख्याताः स्मृताः स्वायंभुवेऽन्तरे ॥

पुलहवंशः

[8]क्षमा तु सुपुवे पुत्रान्पुलहस्य प्रजापतेः ।
त्रेताग्निवर्चसः सर्वे येषां कीर्तिः प्रतिष्ठिता ॥

---

(१) वायु. २८।१० ; ब्रह्माण्ड. २।११।१२, १३ द्वौ पुत्राउ (पुत्रौ द्वाउ) पर्वम (पर्वश्च)

(२) वायु २८।११ सुधामा स तु (सुधामसुतो) ; ब्रह्माण्ड. २।११।१३,१४ प्राच्यां दिशि समाश्रित॰ (प्राचीं दिशमुपाश्रितः)

(३) वायु. २८।१२ ; ब्रह्माण्ड. २।११।१४, १५ सुधर्मा (स धर्मा) पर्वसः सर्वगणानां (पर्वशः पर्वगणना).

(४) वायु २८।१३ ; ब्रह्माण्ड. २।११।१५, १६ स॰ पर्वसायां (श॰ पर्वशायां) द्विनीयार्धे (यज्ञुर्धामं च धीमन स्तम्भकाश्यपमेव च ।) तौ जातौ धर्म (जातौ सन्याम).

(५) वायु. २८।१४ ; ब्रह्माण्ड. २।११।१७ श्चाङ्गि (रत्वङ्गि) तावात्मसभवौ (सा ह्यात्मसंभवान्).

(६) वायु. २८।१५ ; ब्रह्माण्ड. २।११।१८.

(७) वायु. २८।१६ सद्वती (सद्भूती) ; ब्रह्माण्ड. २।११।१९, २० पुत्र तु (पुत्र च) प्रभुम् (तथा) पादयत् (पद्यत).

(८) वायु. २८।१७, १८ ; ब्रह्माण्ड. २।११।२०, २१ तावक (वीतक) वरिष्ठ (चरिष्णु) चाप्युभा (च उभा) येऽतीता (अतीता).

. (१) वायु. २८।१८, १९ ; ब्रह्माण्ड. २।११।२२ याऽपि जज्ञे तान् (या विजज्ञे वै) या (सा).

(२) वायु २८।१९, २० पत्नी-सा पौलहस्य (या पत्नी पुलहस्य) शनैश्चरः (शनीश्वरः) ; ब्रह्माण्ड. २।११।२३.

(३) वायु. २८।२० ; ब्रह्माण्ड. २।११।२४ यामेऽतीते (यामदेवैः)

(४) वायु. २८।२१ आत्रेयाणां महात्मनाम् (ह्यत्रिणा वै महात्मना) ऽतीता॰ (यामे) ; ब्रह्माण्ड. २।११।२५.

(५) वायु. २८।२२ ; ब्रह्माण्ड. २।११।२६, २७ दत्तालि (दानाग्नि) विनीतो नाम (अत्रिनामा च).

(६) वायु २८।२३ ; ब्रह्माण्ड. २।११।२७, २८ त्वग्नेः (चाग्नेः).

(७) वायु. २८।२४ सुजङ्घी च (सुजङ्घादीन्) ; ब्रह्माण्ड. २।११।२८, २९ ऋषेश्चापि (च महर्षेः) दत्तालेः (दानाच्च).

(८) वायु. २८।२५ त्रेताग्नि (ते चाग्नि) ; ब्रह्माण्ड. २।११।३० पुलहस्य (पुलस्त्यस्य).

कर्दमश्चाम्बरीपश्च सहिष्णुश्चेति ते त्रयः ।
ऋषिर्धनकपीवांश्च शुभा कन्या च पीवरी ॥

कर्दमस्य श्रुतिः पत्नी आत्रेय्यजनयत्स्वयम् ।
पुत्रं शङ्खपदं चैव कन्यां काम्यां तथैव च ॥

स वै शङ्खपदः श्रीमाँल्लोकपालः प्रजापतिः ।
दक्षिणस्यां दिशि रतः काम्यां दत्त्वा प्रियव्रते ॥

काम्या प्रियव्रताल्लेभे स्वायंभुवसमान्सुतान् ।
दश कन्याद्वयं चैव यैः क्षत्रं संप्रवर्तितम् ॥

पुत्रो धनकपीवांश्च सहिष्णुर्नाम विश्रुतः ।
यशोधरा विजज्ञे वै कामदेवं सुमध्यमा ॥

क्रतोः क्रतुसमान् पुत्रान् विजज्ञे संनतिः शुभा ।
नैषां भार्याऽस्ति पुत्रो वा सर्वे ते ह्यूर्ध्वरेतसः ।
षष्टयेतानि सहस्राणि वालखिल्या इति श्रुताः ॥

अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ।
आभूतसंप्लवात्सर्वे पतङ्गसहचारिणः ॥

स्वसारौ तु यवीयस्यौ पुण्या सत्यवती च ते ।
पर्वसस्य स्नुपे ते वै पूर्णमाससुतस्य वै ॥

वसिष्ठवंशः

ऊर्जायां तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे ।
ज्यायसी च स्वसा तेषां पुण्डरीका सुमध्यमा ॥
जननी सा द्युतिमतः पाण्डोस्तु महिषी प्रिया ।
तस्यास्तु ये यवीयांसो वासिष्ठाः सप्त विश्रुताः ॥
रजो गर्तोर्ध्वबाहुश्च सवनः पवनश्च यः ।
सुतपाः शुक्र इत्येते सर्वे सप्तर्पयः स्मृताः ॥
रजसो वाऽप्यजनयन्मार्कण्डेयी यशस्विनी ।
प्रतीच्यां दिशि राजन्यं केतुमन्तं प्रजापतिम् ॥
गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनाम् ।
स्वायंभुवेऽन्तरेऽतीतास्त्वग्रेस्तु शृणुत प्रजाः ॥
इत्येष ऋषिसर्गस्तु सानुबन्धः प्रकीर्तितः ।
विस्तरेणानुपूर्व्या चाप्यग्रेस्तु शृणुत प्रजाः ॥

मन्त्रधरा लोकसंतानकरा ब्रह्मपुत्राः सप्तर्षयः प्रतिमन्वन्तरम्

ऋषय ऊचुः–

श्रुत्वा पादं द्वितीयं तु क्रान्तं सूतेन धीमता ।
अतस्तृतीयं पप्रच्छ पादं वै शांशपायनः ॥
पादः क्रान्तो द्वितीयोऽयमनुपङ्गेण यस्त्वया ।
तृतीयं विस्तरात्पादं सोपोद्घातं प्रकीर्तय ।
एवमुक्तोऽब्रवीत्सूतः प्रहृष्टेनान्तरात्मना ॥

(१) वायु. २८।२६ ; ब्रह्माण्ड. २।११।३१ श्चाम्बरीपश्च (श्चोर्वरीवांश्च) धनकपीवांश्च (कनकपीठश्च).

(२) वायु. २८।२७ स्वयम् (सुतान्) ; ब्रह्माण्ड. २।११।३२ चैव (नाम).

(३) वायु. २८।२८ ; ब्रह्माण्ड. २।११।३३ काम्यां दत्त्वा (काम्या दत्ता).

(४) वायु. २८।२९ ; ब्रह्माण्ड. २।११।३४.

(५) वायु. २८।३० यशोधरा (यशोधारी) देवं (देवः) ; ब्रह्माण्ड. २।११।३५ पूर्वार्धे (पुत्रं कनकपीठस्य सहिष्णुं नाम विश्रुतम् ।).

(६) वायु. २८।३१ प्रथमार्धे (क्रतोः क्रतुसमः पुत्रो विजज्ञे संनतिः शुभा ।) ; ब्रह्माण्ड. २।११।३६, ३७ शुभा (शुभान्) नैषां भार्याऽस्ति (तेषां न भार्या) ह्यूर्ध्व (ऊर्ध्व) षष्टयेतानि (तानि षष्टि).

(७) वायु. २८।३२ ; ब्रह्माण्ड. २।११।३७, ३८.

(८) वायु. २८।३३ पुण्या सत्यवती (पुण्यात्मसुमती) ; ब्रह्माण्ड. २।११।३८, ३९ तु यवी (तयवी) पर्वसस्य (पर्वशस्य) स्य वै (स्य तु).

(१) वायु. २८।३४ ; ब्रह्माण्ड. २।११।३९, ४० पुत्रा वै (वासिष्ठाः) स्वसा (सुता).

(२) वायु. २८।३५ तस्यास्तु ये (अस्यां त्विमे) ; ब्रह्माण्ड. २।११।४०, ४१ पाण्डोस्तु (प्राणस्य).

(३) वायु. २८।३६ पूर्वार्धे (रजःपुत्रोऽर्ध्वबाहुश्च सवनश्चाधनश्च यः ।) ; ब्रह्माण्ड. २।११।४१, ४२ रजो (रजो) शुक्र (शङ्कुः).

(४) वायु. २८।३७ ; ब्रह्माण्ड. २।११।४२, ४३ रजसो वाऽप्यज (रत्नो वराङ्गज) राजन्यं (राजानं).

(५) वायु. २८।३८ ; ब्रह्माण्ड. २।११।४३, ४४ तीतास्त्वग्रे (तीतान्यग्रे).

(६) वायु. २८।३९ ; ब्रह्माण्ड, २।११।४४, ४५ उत्तरार्धे (विस्तरेणानुपूर्व्याच्च अग्रेऽन्यदाख्यतः परम् ।).

(७) वायु. ६५।१.

(८) वायु. ६५।२ ; ब्रह्माण्ड. ३।१।१ पूर्वार्धे (पादः क्रान्तो द्वितीयस्तु अनुषङ्गेन नस्त्वया ।) प्रकीर्तय (प्रवर्तय) तृतीयार्धं नास्ति.

सूत उवाच–

[1]कीर्तयिष्ये तृतीयं वः सोपोद्घातं सविस्तरम् ।
पादं समुच्चयाद्विप्रा गदतो मे निबोधत ॥
[2]मनोर्वैवस्वतस्येमं सांप्रतस्य महात्मनः ।
विस्तरेणानुपूर्व्या च निसर्गं शृणुत द्विजाः ॥
[3]चतुर्युगैकसप्तत्या संख्यातं पूर्वमेव तु ।
सह देवगणैश्चैव ऋषिभिर्दानवैः सह ॥
[4]पितृगन्धर्वयक्षैश्च रक्षोभूतगणैस्तथा ।
मानुषैः पशुभिश्चैव पक्षिभिः स्थावरैः सह ॥
[5]मन्वादिकं भविष्यान्तमाख्यानैर्बहुविस्तरम् ।
वक्ष्ये वैवस्वतं सर्गं नमस्कृत्य विवस्वते ॥
[6]आद्ये मन्वन्तरेऽतीताः सर्गाः प्रावर्तकाश्च ये ।
स्वायंभुवेऽन्तरे पूर्वं सप्ताऽऽसन् ये महर्षयः ।
चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वते पुनः ॥
[7]दक्षस्य च ऋषीणां च भृग्वादीनां महौजसाम् ।
शापान्महेश्वरस्यासीत्प्रादुर्भावो महात्मनाम् ॥
[8]भूयः सप्तर्षयस्ते च उत्पन्नाः सप्त मानसाः ।
पुत्रत्वे कल्पिताश्चैव स्वयमेव स्वयंभुवा ॥
[9]प्रजासंतानकृद्भिस्तैरुत्पद्यद्भिर्महात्मभिः ।
पुनः प्रवर्तितः सर्गो यथापूर्वं यथाक्रमम् ॥

(१) वायु. ६५।२ वः (च) च्चया (दया); ब्रह्माण्ड. ३।१।२.

(२) वायु. ६५।४; ब्रह्माण्ड. ३।१।३ सांप्रतस्य (सांप्रतं तु).

(३) वायु. ६५।५ संख्यातं (संख्यात'); ब्रह्माण्ड. ३।१।४.

(४) वायु ६५।६; ब्रह्माण्ड. ३।१।५ गणैस्तथा (महोरगैः).

(५) वायु ६५।७; ब्रह्माण्ड. ३।१।६ विस्तरम् (भिर्युतम्) नमस्कृत्य (नमस्कृत्वा).

(६) वायु. ६५।८ पूर्वे (पूर्णे); ब्रह्माण्ड. ३।१।७, ८ सर्गाः प्रा (सर्गप्रा) श्च ये (स्तु ये).

(७) वायु. ६५।९; ब्रह्माण्ड. ३।१।८, ९.

(८) वायु ६५।१०; ब्रह्माण्ड. ३।१।९, १० स्ते च (स्त्वेवं).

(९) वायु. ६५।११; ब्रह्माण्ड. ३।१।१०, ११ रुत्पद्य (रुत्पद).

[1]तेषां प्रसूतिं वक्ष्यामि विशुद्धज्ञानकर्मणाम् ।
समासव्यासयोगाभ्यां यथावदनुपूर्वशः ॥
[2]येषामन्वयसंभूतैर्लोकोऽयं सचराचरः ।
पुनः स पूरितः सर्गो ग्रहनक्षत्रमण्डितः ॥
[3]एतच्छ्रुत्वा वचस्तस्य मुनीनां संशयोऽभवत् ।
ततस्तं संशयाविष्टाः सूतं संशयनिश्चये ।
सत्कृत्य परिपप्रच्छुर्मुनयः संशितव्रताः ॥

ऋषय ऊचुः–

[4]कथं सप्तर्षयः पूर्वमुत्पन्नाः सप्त मानसाः ।
पुत्रत्वे कल्पिताश्चैव तन्नो निगद सत्तम ।
ततोऽब्रवीन्महातेजाः सूतः पौराणिकः शुभम् ॥

सूत उवाच–

[5]कथं सप्तर्षयः सिद्धा ये वै स्वायंभुवेऽन्तरे ।
मन्वन्तरं समासाद्य पुनर्वैवस्वतं किल ॥
[6]भवाभिशापात्संविद्धा अप्राप्तास्ते तदा तपः ।
उपपन्ना जने लोके सकृदागमनास्तु ते ॥
[7]ऊचुः सर्वे ततोऽन्योन्यं जनलोके महर्षयः ।
एत एव महाभागा वारुणे वितते क्रतौ ॥
सर्वे वयं प्रसूयामश्चाक्षुषस्यान्तरे मनोः ।
पितामहात्मजाः सर्वे ततः श्रेयो भविष्यति ॥
[8]एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः ।
[9]स्वायंभुवेऽन्तरे शप्ताः सत्यार्थं ते भवेन तु ।
जज्ञिरे वै पुनस्ते ह जनलोकाद्दिवं गताः ॥

(१) वायु. ६५।१२; ब्रह्माण्ड. ३।१।११, १२.

(२) वायु. ६५।१३; ब्रह्माण्ड. ३।१।१२ पुनः स पूरितः सर्गो (पुनरापूरितः सर्वो).

(३) वायु. ६५।१४

(४) वायु ६५।१५; ब्रह्माण्ड. ३।१।१३ तृतीयार्धं नास्ति.

(५) वायु. ६५।१६; ब्रह्माण्ड. ३।१।१४ कथं (पूर्वे) सिद्धा (प्रोक्ता) मन्वन्तरं समा (मनोरन्तरमा).

(६) वायु. ६५।१७ अप्रा (ह्यप्रा) गमनास्तु (गामिनस्तु).

(७) वायु. ६५।१८ एत एव (ऊचुरेव); ब्रह्माण्ड. ३।१।१६ ततो (सदा) क्रतौ (ऽध्वरे).

(८) वायु. ६५।१९; ब्रह्माण्ड. ३।१।१७ तन्नः (तत्र).

(९) वायु ६५।२० प्रथमार्धं नास्ति।; ब्रह्माण्ड. ३।१।१८,१९ शप्ताः सत्यार्थं (प्राप्ताः ष्टपर्व) तृतीयार्धे (जज्ञिरे ह पुनस्ते वै जनलोकादिहागताः॥).

देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् ।
ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया ।
ऋषयो जज्ञिरे पूर्वं द्वितीयमिति नः श्रुतम् ॥
भृगुरङ्गिरा मरीचिः पुलस्त्यः पुलहः क्रतुः ।
अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ॥
तथाऽस्य वितते यज्ञे देवाः सर्वे समागताः ।
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ॥
मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः ।
ऋग्वेदश्चाभवत्तत्र पदक्रमविभूषितः ॥
यजुर्वेदश्च वृत्ताढ्य ओंकारवदनोज्ज्वलः ।
स्थितो यज्ञार्थसंपृक्तसूक्तब्राह्मणमन्त्रवान् ॥
सामवेदश्च वृत्ताढ्यः सर्वगेयपुरःसरः ।
विश्वावस्वादिभिः सार्धं गन्धर्वैः संभृतोऽभवत् ॥
ब्रह्मवेदस्तथा घोरैः कृत्याविधिभिरन्वितः ।
प्रत्यङ्गिरसयोगैश्च द्विशरीरशिरोऽभवत् ॥
लक्षणानि स्वराः स्तोभा निरुक्तस्वरभक्तयः ।
आश्रयस्तु वषट्कारो निग्रहप्रग्रहावपि ॥
दीप्तिमूर्तिरिला देवी दिशश्च सदिगीश्वराः ।
देवकन्याश्च पत्न्यश्च तथा मातर एव च ॥
आययुः सर्व एवैते देवस्य यजतो मखे ।
मूर्तिमन्तः सुरूपाख्या वरुणस्य वपुर्भृतः ॥

(१) वायु. ६५।२१ ; ब्रह्माण्ड. ३।१।१९,२० रे पूर्वं (रे पूर्वे).
(२) वायु. ६५।२२ ; ब्रह्माण्ड. ३।१।२१ भृगुरङ्गिरा मरीचि (भृग्वङ्गिरा मरीचिश्च) अष्टौ (ह्यष्टौ).
(३) वायु. ६५।२३ ; ब्रह्माण्ड. ३।१।२२.
(४) वायु. ६५।२४ ; ब्रह्माण्ड. ३।१।२३ पद (यथ).
(५) वायु. ६५।२५ ; ब्रह्माण्ड. ३।१।२४ पृक्त (वृक्तः).
(६) वायु. ६५।२६ ; ब्रह्माण्ड. ३।१।२५.
(७) वायु. ६५।२७ ; ब्रह्माण्ड. ३।१।२६ कृत्या (कृत्वा).
(८) वायु. ६५।२८ ; ब्रह्माण्ड. ३।१।२७ लक्षणानि स्वराः (लक्षणा विस्तराः).
(९) वायु. ६५।२९ पूर्वार्धे (दीप्ता दीप्तिरिला देवी दिशः प्रदिशागीश्वराः ।) ; ब्रह्माण्ड. ३।१।२८.
(१०) वायु. ६५।३० आययुः सर्व (आयुः सर्वत) मखे (मुखे) सुरू (स्वरू) ; ब्रह्माण्ड. ३।१।२९.

स्वयंभुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ।
ब्रह्मर्षिभावभूतस्य विधानाच्च न संशयः ॥
धृत्वा जुहाव हस्ताभ्यां स्रुवेण परिगृह्य च ।
आज्यवज्जुहुयांचक्रे मन्त्रवच्च पितामहः ॥
ततः स जनयामास भूतग्रामं प्रजापतिः ।
तस्यार्वाक्तेजसश्चैव जज्ञे लोकेषु तैजसम् ।
तमसा भाव्यव्याप्यत्वं तथा सत्त्वं तथा रजः ॥
सगुणात्तेजसो नित्यं आकाशे तमसि स्थितम् ।
तमसस्तेजसत्वाच्च सर्वभूतानि जज्ञिरे ॥ (?)
यदा तस्मिन्नजायन्त काले पुत्रास्तु कर्मजाः ।
*आज्यस्थाल्यामुपादाय स्वशुक्रं हुतवांश्च ह ॥*
शुक्रे हुतेऽथ तस्मिंस्तु प्रादुर्भूता महर्षयः ।
ज्वलन्तो वपुषा युक्ताः स्वप्रभावैः स्वकैर्गुणैः ॥
हुते चाग्नौ सकृच्छुक्रे ज्वालाया निःसृतः कविः ।
हिरण्यगर्भस्तं *दृष्ट्वा ज्वालां भित्त्वा विनिःसृतम् ।*
भृगुस्त्वमिति होवाच यस्मात्तस्मात्स वै भृगुः ॥
महादेवस्तथोद्भूतं दृष्ट्वा ब्रह्माणमब्रवीत् ।
ममैष पुत्रकामस्य दीक्षितस्य त्वया प्रभो ।
विजज्ञे प्रथमं देव मम पुत्रो भवत्वयम् ॥

(१) वायु. ६५।३१ ; ब्रह्माण्ड. ३।१।३० ब्रह्मर्षिभावभूतस्य (ब्रह्मर्षिभाविनोऽर्थस्य).
(२) वायु. ६५।३२ धृत्वा जुहाव हस्ताभ्यां (कृत्वा जुहाव स्रुग्भ्यां च) ; ब्रह्माण्ड. ३।१।३१ आज्यवज्जुहुयां (आस्रवज्जुहुयां).
(३) वायु. ६५।३३ तस्यैव जज्ञे (सत्तस्य यज्ञे) ; ब्रह्माण्ड. ३।१।३२,३३ भावव्याप्यत्वं तथा (भावि याप्यत्वं यथा).
(४) वायु. ६५।३४.
(५) वायु. ६५।३५ ; ब्रह्माण्ड. ३।१।३३ पूर्वार्धं नास्ति ।
(६) वायु ६५।३६ स्वप्रभावैः स्वकैर्गुणैः (सप्त वै प्रसवैर्गुणैः) ; ब्रह्माण्ड. ३।१।३४.
(७) वायु. ६५।३७ ; ब्रह्माण्ड. ३।१।३५, ३६ निःसृतम् (निर्गतम्) होवाच (चोवाच).
(८) वायु. ६५।३८ त्वया प्रभो (त्वयं प्रभोः) विजज्ञे प्रथमं देव (विजज्ञेऽथ भृगुर्देवो) ; ब्रह्माण्ड. ३।१।३६, ३७ थोद्भूतं (थोद्भूतः).

[1]तथेति समनुज्ञातो महादेवः स्वयंभुवा ।
पुत्रत्वे कल्पयामास महादेवस्तदा भृगुम् ।
वारुणा भृगवस्तस्मात्तदपत्यं च स प्रभुः ॥
[2]द्वितीयं च ततः शुक्रमङ्गारेष्वजुहोत्प्रभुः ।
अङ्गारेष्वङ्गिरोऽङ्गानि संहितानि ततोऽङ्गिराः ॥
[3]संभूतिं तस्य तां दृष्ट्वा वह्निर्ब्रह्माणमब्रवीत् ।
रेतोधास्तुभ्यमेवाहं द्वितीयोऽयं ममास्त्विति ॥
[4]एवमस्त्विति सोऽप्युक्तो ब्रह्मणा सद्सस्पतिः ।
तस्मादङ्गिरसश्चापि आग्नेया इति नः श्रुतम् ॥
[5]षट्कृत्वस्तु पुनः शुक्रे ब्रह्मणा लोककारिणा ।
हुते समभवंस्तत्र षड्ब्रह्माण इति श्रुतिः ॥
[6]मरीचिः प्रथमस्तत्र मरीचिभ्यः समुत्थितः ।
क्रतौ तस्मिन्सुतो जज्ञे यतस्तस्मात्स वै क्रतुः ॥
[7]अहं तृतीय इत्यत्रिस्तस्मादत्रिः स कीर्त्यते ।
केशैश्च निचितैर्भूतः पुलस्त्यस्तेन स स्मृतः ॥
[8]केशैर्लम्बैः समुद्भूतस्तस्मात्तु पुलहः स्मृतः ।
वसुमध्यात्समुत्पन्नो वसुमान्वसुधाश्रयः ॥
[9]वसिष्ठ इति तत्त्वज्ञैः प्रोच्यते ब्रह्मवादिभिः ।
इत्येते ब्रह्मणः पुत्रा मानसाः षण्महर्षयः ॥

[1]लोकस्य संतानकरास्तैरिमा वर्धिताः प्रजाः ।
प्रजापतय इत्येवं पठ्यन्ते ब्रह्मणः सुताः ॥
[2]अपरे पितरो नाम एतैरेव महर्षिभिः ।
उत्पादिता ऋषिगणाः सप्त लोकेषु विश्रुताः ॥
मारीचा भार्गवाश्चैव तथैवाङ्गिरसोऽपरे ।
[3]पौलस्त्याः पौलहाश्चैव वासिष्ठाश्चैव विश्रुताः ।
आत्रेयाश्च गणाः प्रोक्ताः पितॄणां लोकविश्रुताः ॥
[4]एते समासतः ख्याताः पुनरन्ये गणास्त्रयः ।
अमूर्ताश्चाप्रकाशाश्च ज्योतिष्मन्तश्च विश्रुताः ॥
[5]तेषां राजा यमो देवो यमैर्विहतकल्मषः ।
अपरे प्रजानां पतयस्तान् शृणुध्वमतन्द्रिताः ॥
[6]कर्दमः कश्यपः शेषो विक्रान्तः सुश्रवास्तथा ।
बहुपुत्रः कुमारश्च विवस्वान् सशुचिश्रवाः ॥
[7]प्रचेतसोऽरिष्टनेमिर्बहुलश्च प्रजापतिः ।
इत्येवमादयोऽन्येऽपि बहवश्च प्रजेश्वराः ॥
[8]कुशोच्चया वालखिल्याः संभूताः परमर्षयः ।
मनोजवाः सर्वगताः सार्वभौमाश्च तेऽभवन् ॥
[9]जाताश्च भस्मनो ह्यन्ये ब्रह्मर्षिगणसंमताः ।
वैखानसा मुनिगणास्तपःश्रुतपरायणाः ॥

---

(१) वायु. ६५।३९ स्तदा (स्तथा); ब्रह्माण्ड. ३।१।३८, ३९.

(२) वायु. ६५।४० च (तु) ष्वजुहो (ष्वपत); ब्रह्माण्ड. ३।१।३९, ४०.

(३) वायु. ६५।४१ ; ब्रह्माण्ड. ३।१।४०, ४१.

(४) वायु. ६५।४२ ; ब्रह्माण्ड. ३।१।४१, ४२ तस्मादङ्गिरसश्चापि (जग्राहाग्निस्त्वङ्गिरस).

(५) वायु. ६५।४३, ब्रह्माण्ड. ३।१।४२, ४३ कृत्वस्तु (कृत्वा तु) स्तत्र षड् (स्तस्मिन्षड्).

(६) वायु. ६५।४४ ; ब्रह्माण्ड. ३।१।४३, ४४ प्रथमः (प्रथमं) सुतो ((क्रतु).

(७) वायु. ६५।४५ इत्यत्रि (इत्यर्थ) निचितै (निशितै); ब्रह्माण्ड. ३।१।४४, ४५.

(८) वायु. ६५।४६ ; ब्रह्माण्ड. ३।१।४५,४६ स्मात्तु (स्मात्स) वसुमान्वसुधाश्रय (वशी च वसुमान् स्वयम्).

(९) वायु ६५।४७ ; ब्रह्माण्ड. ३।१।४६,४७.

(१) वायु. ६५।४८ ; ब्रह्माण्ड. ३।१।४७,४८ रास्तै (रा ये).

(२) वायु. ६५।४९ ; ब्रह्माण्ड. ३।१।४८,४९ (अपरे पितरो नाम एतैरेव महर्षिभि. । उत्पादिता देवगणा॰ सप्त लोकेषु विश्रुता॰ । अजेयाश्च गणाः सप्त सप्तलोकेषु विश्रुताः ॥).

(३) वायु. ६५।५० ; ब्रह्माण्ड. ३।१।५०,५१ लोकविश्रुताः (लोकवर्धना॰).

(४) वायु. ६५।५१ तः ख्याता॰ पुनरन्ये (तस्तात पुरैव तु) श्चाप्र (श्च प्र).

(५) वायु. ६५।५२ ; ब्रह्माण्ड. ३।१।५२,५३.

(६) वायु. ६५।५३ ; ब्रह्माण्ड. ३।१।५३,५४ कर्दमः कश्यपः (कश्यप. कर्दमः) सशुचिश्रवाः (स शुचिव्रतः).

(७) वायु. ६५।५४ ; ब्रह्माण्ड. ३।१।५४,५५ बहवश्च (बहवो वै).

(८) वायु. ६५।५५ ; ब्रह्माण्ड. ३।१।५५,५६ सार्वभौमाश्च (सर्वभोगाश्च).

(९) वायु. ६५।५६ जाताश्च भस्मनो ह्यन्ये (जाता भस्मन्यपोहित्या) ; ब्रह्माण्ड. ३।१।५६, ५७.

[1]नस्तो द्वावस्य चोत्पन्नावश्विनौ रूपसंमितौ ।
विदुर्जन्मर्क्षरजसो तथा तन्नेत्रसंचरात् ॥
[2]अन्ये प्रजानां पतयः श्रोतोभ्यस्तस्य जज्ञिरे ।
ऋषयो रोमकूपेभ्यस्तथा स्वेदमलोद्भवाः ॥
[3]अयने ऋतवो मासार्धमासाः पक्षसंधयः ।
वत्सरा ये त्वहोरात्राः पित्र्यं ज्योतिश्च दारुणम् ॥
[4]रौद्रं लोहितमित्याहुर्लोहितं कनकं स्मृतम् ।
तत्तैजसमिति प्रोक्तं धूमाश्च पशवः स्मृताः ॥
[5]येऽर्चिषस्तस्य ते रुद्रास्तथादित्याः समुद्गताः ।
अङ्गारेभ्यः समुत्पन्ना अर्चिषो दिव्यमानुषाः ॥
[6]आदिभूतोऽस्य लोकस्य ब्रह्मा त्वं ब्रह्मसंभवः ।
सर्वकामदमित्याहुस्तत्र वाक्यमुदाहरन् ॥
[7]ब्रह्मा सुरगुरुस्तत्र त्रिदशैः संप्रसादितः ।
इमे वै जनयिष्यन्ति प्रजाः सर्वाः प्रजेश्वराः ॥
[8]सर्वे प्रजानां पतयः सर्वे चापि तपस्विनः ।
त्वत्प्रसादादिमाँल्लोकान् धारयेयुरिमाः क्रियाः ॥
[9]त्वद्वंशवर्धनाः शश्वत्तव तेजोविवर्धनाः ।
भवेयुर्वेदविद्वांसः सर्वे वाक्पतयस्तथा ॥

[1]वेदमन्त्रधराः सर्वे प्रजापतिसमुद्भवाः ।
श्रयन्तु ब्रह्म सत्यं तु तपश्च परमं भुवि ॥
[2]सर्वे हि वयमेते च तवैव प्रसवः प्रभो ।
ब्रह्म च ब्राह्मणाश्चैव लोकाश्चैव चराचराः ॥
[3]मरीचिमादितः कृत्वा देवाश्च ऋषिभिः सह ।
अपत्यानीति संचिन्त्य तेऽपत्यं कामयामहे ॥
[4]तस्मिन् यज्ञे महाभागा देवाश्च ऋषयश्च ये ।
एते त्वद्वंशसंभूताः स्थानकालाभिमानिनः ॥
[5]तव तेनैव रूपेण स्थापयेयुरिमाः प्रजाः ।
युगादिनिधनाश्चापि स्थापयन्तु इति द्विजाः ॥
[6]ततोऽब्रवील्लोकगुरुः परमित्यभिधारयन् ।
एतदेव विनिर्दिश्चरय मया सृष्टा न संशयः ।
भवतां वंशसंभूताः पुनरेते महर्षयः ॥

सविस्तरो भृगुवंशः, तदीयगोत्राणि च

[7]तेषां भृगोः कीर्तयिष्ये वंशं पूर्वं महात्मनः ।
विस्तरेणानुपूर्व्या च प्रथमस्य प्रजापतेः ॥
[8]भार्ये भृगोरप्रतिमे उत्तमाभिजने शुभे ।
हिरण्यकशिपोः कन्या दिव्या नाम परिश्रुता ।
पुलोम्नश्चापि पौलोमी दुहिता वरवर्णिनी ॥

---

(१) वायु. ६५।५७ नस्तो द्वावस्य (श्रोतोभ्यस्तस्य) उत्तरार्धे (विदुर्जन्माक्षरजसो विमला नेत्रसंभवाः ।); ब्रह्माण्ड. ३।१।५७, ५८ संमितौ (संमतौ).

(२) वायु. ६५।५८ अन्ये (ज्येष्ठाः); ब्रह्माण्ड. ३।१। ५८, ५९.

(३) वायु. ६५।५९ पूर्वार्धे (दारगा हि स्ते मासा निर्यामा पक्षसंधयः ।); ब्रह्माण्ड. ३।१।५९, ६०.

(४) वायु. ६५।६० उत्तरार्धे (तन्मैत्रमिति विज्ञेयं धूमश्च पशवः स्मृताः ।); ब्रह्माण्ड. ३।१।६०, ६१.

(५) वायु. ६५।६१ समुद्गता (समुद्भवाः) अर्चिषो (ज्योतिषो); ब्रह्माण्ड. ३।१।६१, ६२.

(६) वायु. ६५।६२ भूतोऽस्य (मानस्य) त्वं ब्रह्मसंभवः (ब्रह्मसमुद्भवः) वाक्य (कन्या); ब्रह्माण्ड. ३।१।६२, ६३.

(७) वायु. ६५।६३ प्रसादितः (प्रसीदति); ब्रह्माण्ड. ३।१।६३,६४.

(८) वायु. ६५।६४ त्वत्प्र (तत्प्र); ब्रह्माण्ड. ३।१।६४, ६५.

(९) वायु. ६५।६५ (इन्द्रं संवर्धयामास तव तेजो विवर्धनन् । देवेषु वेदनिर्वासः सर्वे राजर्षयस्तथा ॥); ब्रह्माण्ड. ३।१।६५,६६.

(१) वायु. ६५।६६ धराः (पराः) समुद्भवाः (गुणोद्भवाः) श्रयन्तु (अनन्त) तु (च); ब्रह्माण्ड. ३।१।६६,६७.

(२) वायु. ६५।६७; ब्रह्माण्ड. ३।१।६७,६८.

(३) वायु. ६५।६८ नीति (नीह); ब्रह्माण्ड. ३।१।६८, ६९ पत्यं (पत्ये).

(४) वायु. ६५।६९ ऋषयश्च ये (ऋषिभिः सह) एते त्वद्वंशसंभूताः (एतद्वंशसमुद्भूताः); ब्रह्माण्ड. ३।१।६९,७०.

(५) वायु. ६५।७० तव (न च) उत्तरार्धे (युगादिनिधनाश्चैव स्थापयेयुरिमाः प्रजाः ।); ब्रह्माण्ड. ३।१।७०,७१.

(६) वायु. ६५।७१ भिधार (विचार) एतदेव (एवं देवा); ब्रह्माण्ड. ३।१।७१,७२.

(७) वायु. ६५।७२; ब्रह्माण्ड. ३।१।७३.

(८) वायु. ६५।७३ माभि (मेऽभि); ब्रह्माण्ड. ३।१। ७४, ७५ श्चापि (श्चैव).

[1]भृगोस्त्वजनयद्दिव्या पुत्रं ब्रह्मविदां वरम् ।
देवासुराणामाचार्यं शुक्रं कविवरं ग्रहम् ॥
[2]शुक्र एवोशना नित्यमतः काव्योऽपि नामतः ।
*पितॄणां मानसी कन्या सोमपानां यशस्विनी ।*
शुक्रस्य भार्या गौर्नाम विजज्ञे चतुरः सुतान् ॥
[3]ब्राह्मेण तेजसा युक्तः स जातो ब्रह्मवित्तमः ।
तस्यामेव तु चत्वारः पुत्राः शुक्रस्य जज्ञिरे ॥
[4]त्वष्टा वरूत्री द्वावेतौ शण्डामर्कौ च तावुभौ ।
तेजसाऽऽदित्यसंकाशा ब्रह्मकल्पाः प्रभावतः ॥
[5]रंजनः पृथुरश्मिश्च विद्वान् यश्च बृहद्गिराः ।
वरूत्रिणः सुता ह्येते ब्रह्मिष्ठा दैत्ययाजकाः ॥
[6]इज्याधर्मविनाशार्थं मनुमेत्याभ्ययाजयन् ।
निरस्यमानं वै धर्मं दृष्ट्वेन्द्रो मनुमब्रवीत् ॥
[7]एतैरेव तु कामं त्वां प्रापयिष्यामि याजनम् ।
*श्रुत्वेन्द्रस्य तु तद्वाक्यं तस्माद्देशादपाक्रमन् ॥*
[8]तिरोभूतेषु तेष्विन्द्रो मनुपत्नीमचेतनाम् ।
ग्रहेण मोचयित्वा च ततश्चानुससार ताम् ॥
[9]तंत इन्द्रविनाशाय यतमानान् मुनींस्तु तान् ।
तानागतान्पुनर्दृष्ट्वा दुष्टानिन्द्रो विहस्य तु ।
*ततस्तानदहत्क्रुद्धो वेद्यर्धे दक्षिणे ततः ॥*

[1]तेषां तु धृष्यमाणानां तत्र शालावृकैः सह ।
शीर्षाणि न्यपतंस्तानि खर्जूरा ह्यभवंस्ततः ॥
[2]एवं वरूत्रिणः पुत्रा इन्द्रेण निहताः पुरा ।
*जयन्त्यां देवयानी च शुक्रस्य दुहिताऽभवत् ॥*
[3]त्रिशिरा विश्वरूपस्तु त्वष्टुः पुत्रोऽभवन्महान् ।
यशोधरायामुत्पन्नो वैरोचन्यां महायशाः ।
विश्वरूपानुजश्चैव विश्वकर्मा च यः स्मृतः ॥
[4]भृगोस्तु भृगवो देवा जज्ञिरे द्वादशात्मजाः ।
दिव्याऽनुसुषुवे कन्या काव्यस्यैवानुजा प्रभोः ॥
[5]भुवनो भावनश्चैव अन्त्यश्चान्त्यायनस्तथा ।
क्रतुः शुचिः स्वमूर्धा च व्याजश्च वसुदश्च यः ।
प्रभवश्चाव्ययश्चैव द्वादशोऽधिपतिः स्मृतः ॥
[6]इत्येते भृगवो देवाः स्मृता द्वादश यज्ञियाः ।
पौलोम्यजनयत्पुत्रं ब्रह्मिष्ठं वशिनं द्विजम् ॥
*[7]व्यादितः सोऽष्टमे मासि गर्भः क्रूरेण रक्षसा ।*
च्यवनाच्च्यवनः सोऽथ चेतनात्तु प्रचेतनः ।
प्रचेताश्च्यवनः क्रोधाद्दग्धवान् पुरुषादकान् ॥
[8]जनयामास पुत्रौ द्वौ सुकन्यायां स भार्गवः ।
आप्नवानं दधीचं च तावुभौ साधुसंमतौ ॥

(१) वायु. ६५।७४ पुत्र ब्रह्म (काव्यं वेद) कविवरं (कविसुतं), ब्रह्माण्ड. ३।१।७५, ७६.

(२) वायु. ६५।७५ पूर्वार्धे (स शुक्रश्चोशना ख्यातः स्मृतः काव्योऽपि नामतः ।) गौर्नाम (गोनाम); ब्रह्माण्ड. ३।१।७६, ७७.

(३) वायु ६५।७६.

(४) वायु. ६५।७७ तेजसा (ते तदा); ब्रह्माण्ड. ३।१।७८ वरूत्री द्वावेतौ (चैव वरत्री च).

(५) वायु. ६५।७८ यश्च (यस्य) दैत्य (सुर); ब्रह्माण्ड. ३।१।७९ रञ्जन° (रजतः) वरूत्रिण (वरत्रिण°)

(६) वायु ६५।७९ याज (योज); ब्रह्माण्ड. ३।१।८०.

(७) वायु. ६५।८० क्रमन् (क्रमत्); ब्रह्माण्ड. ३।१।८१.

(८) वायु. ६५।८१ मनुपत्नीमचेतनाम् (धर्मपत्नीं च चेतनाम्) च ततश्चानु (तु ततः सोऽन्तु); ब्रह्माण्ड. ३।१।८२.

(९) वायु ६५।८२ मुनींस्तु (यतींस्तु) तानाग (तत्राग) विहस्य (प्रहण्य) तृतीयार्धे (सुष्वाप देवदेवस्य वेद्यां वै दक्षिणे ततः ॥); ब्रह्माण्ड ३।१।८३,८४.

(१) वायु. ६५।८३ धृष्य (भक्ष्य) रा ह्यभ (राण्यभ); ब्रह्माण्ड. ३।१।८४,८५

(२) वायु. ६५।८४ जयन्त्यां (यजन्त्या); ब्रह्माण्ड. ३।१।८५,८६ वरूत्रिण° (वरत्रिण°).

(३) वायु. ६५।८५ श्चैव (श्चापि) च यः (यम°); ब्रह्माण्ड. ३।१।८६,८७.

(४) वायु. ६५।८६ उत्तरार्धे (देव्यां तान्सुषुवे सर्वान्काव्यश्चैवात्मजान् प्रभु ॥); ब्रह्माण्ड. ३।१।८७.

(५) वायु. ६५।८७ (भुवनो भावनश्चैव अन्यश्चान्यायनस्तथा । क्रतुः श्रवाश्च मूर्धा च व्यजयो व्यसुपश्च यः । प्रसवश्चाप्यजश्चैव द्वादशोऽधिपतिः स्मृतः ॥); ब्रह्माण्ड. ३।१।८९,९०.

(६) वायु. ६५।८८ यज्ञियाः (याज्ञिकाः) वशिनं द्विजम् (वसिन विभुम्); ब्रह्माण्ड. ३।१।९०, ९१.

(७) वायु. ६५।८९ व्यादितः (व्याधितः) रक्षसा (कर्मणा) चेतनात्तु प्रचेतनः (चेतनस्तु प्रचेतसः) तृतीयार्धे (प्राचेतसाच्च्यवनक्रोधाद्दध्वान पुरुषादकम् ॥); ब्रह्माण्ड. ३।१।९१,९२.

(८) वायु. ६५।९० या स (यां च) आप्नवान (आत्मवान); ब्रह्माण्ड. ३।१।९३.

सारस्वतः सरस्वत्यां दधीचस्योदपद्यत ।
ऋची पत्नी महाभागा आप्नवानस्य नाहुषी ॥
तस्यामौर्वऋषिर्जज्ञे ऊरुं भित्त्वा महायशाः ।
और्वस्यासीदृचीकस्तु दीप्तोऽग्निसमतेजसा ॥
जमदग्निर्ऋचीकस्य सत्यवत्यामजायत ।
भृगोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा ॥
जमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत ।
रेणुका जमदग्नेस्तु शक्रतुल्यपराक्रमम् ।
ब्रह्मक्षत्रमयं रामं सुषुवेऽमिततेजसम् ॥
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि भार्गवाणां परस्परात् ॥
[6]ऋष्यन्तरेषु वै बाह्या बहवो भार्गवाः स्मृताः ।
वत्सा विदा आर्ष्टिषेणा यस्का वैन्याश्च शौनकाः ।
मित्रयुः सप्तमा ह्येते पक्षा ज्ञेयास्तु भार्गवाः ॥

अङ्गिरोवंशः सविस्तरः, तदीयगोत्राणि च

शृणुताङ्गिरसो वंशमग्नेः पुत्रस्य धीमतः ।
यस्यान्ववाये संभूता भारद्वाजाः सगौतमाः ।
देवाश्चाङ्गिरसो मुख्यास्त्विपुमन्तो महौजसः ॥
सुरूपा चैव मारीची कार्दमी च तथा स्वराट् ।
पथ्या च मानवी कन्या तिस्रो भार्यास्त्वथर्वणः ।
इत्येताऽङ्गिरसः पत्न्यस्तासु वक्ष्यामि संततिम् ॥

अथर्वणस्तु दायादास्तासु जाताः कुलोद्वहाः ।
उत्पन्ना महता चैव तपसा भावितात्मनः ॥
बृहस्पतिं सुरूपायां गौतमं सुषुवे स्वराट् ।
अयास्यं वामदेवं च उतथ्यमुशिजं तथा ॥
धृष्णिः पुत्रस्तु पथ्यायाः संवर्तश्चैव मानसः ।
कितवश्चाप्ययास्यस्य शरद्वांश्चाप्युतथ्यजः ॥
अथोशिजो दीर्घतमा बृहदुक्थो वामदेवजः ।
धृष्णेः पुत्रः सुधन्वा तु ऋषभश्च सुधन्वनः ॥
रथकाराः स्मृता देवा ऋभवो ये परिश्रुताः ।
बृहस्पतेर्भरद्वाजो विश्रुतः समहायशाः ॥
आङ्गिरसस्तु संवर्तो देवानङ्गिरसः शृणु ।
बृहस्पतेर्यवीयांसो देवा ह्यङ्गिरसः स्मृताः ॥
औरसाङ्गिरसः पुत्राः सुरूपायां विजज्ञिरे ।
आहार्यायुर्दनुर्दक्षो दमः प्राणस्तथैव च ।
हविष्मांश्च हविष्णुश्च ऋतुः सत्यश्च ते दश ॥
अयास्याश्चाप्युतथ्याश्च वामदेवास्तथौशिजाः ।
भारद्वाजाः सांकृतयो गर्गाः कण्वरथीतराः ॥

(१) वायु. ६५।९१ दधीचस्योदपद्यत (दधीचाच्चोपपद्यते) ऋची (रुची) आप्न (आत्म); ब्रह्माण्ड. ३।१।९४.

(२) वायु. ६५।९२ (तस्य तूर्वोऋषिर्जज्ञे ऊरू भित्त्वा महायशाः । और्वश्चासीदृचीकस्तु दीप्ताग्निसदृशप्रभः ॥); ब्रह्माण्ड. ३।१।९५.

(३) वायु. ६५।९३ स्यामजा (त्यां व्यजा) उत्तरार्धे (भृगोश्च चरुपर्यासे रौद्रवैष्णवयोस्तथा ।); ब्रह्माण्ड. ३।१।९६.

(४) वायु. ६५।९४; ब्रह्माण्ड. ३।१।९७, ९८ ग्नेस्तु (ग्नेश्च).

(५) वायु. ६५।९५; ब्रह्माण्ड. ३।१।९८, ९९.

(६) वायु. ६५।९६ द्वितीयार्धे (वत्सो विश्वोऽर्ष्टिषेणश्च पाण्डः पथ्यः सशौनकः ।) मित्रयुः (गोत्रेण); ब्रह्माण्ड. ३।१।९९,१००.

(७) वायु. ६५।९७; ब्रह्माण्ड. ३।१।१०१,१०२ स्त्विषु (स्त्विषि).

(८) वायु. ६५।९८; ब्रह्माण्ड. ३।१।१०२,१०३ तृतीयार्धं (द्वय) तृतीयार्धं नास्ति.

(१) वायु. ६५।९९ त्मनः (त्मनाम्); ब्रह्माण्ड. ३।१।१०३, १०४.

(२) वायु. ६५।१०० बृहस्पतिं (बृहस्पतिः) गौतमं (गौतमः) अयास्यं (अवन्ध्यं); ब्रह्माण्ड. ३।१।१०४,१०५ शिजम् (शितिम्).

(३) वायु. ६५।१०१ धृष्णिः (धिष्णुः) पथ्यायाः (पथ्यायां) कितवश्चाप्ययास्यस्य (विचित्तिश्च तथा यस्य); ब्रह्माण्ड. ३।१।१०५,१०६.

(४) वायु. ६५।१०२ अथोशिजो (अशिजो) धृष्णेः (धिष्णोः) सुधन्वा तु (सुधन्वान); ब्रह्माण्ड. ३।१।१०६,१०७.

(५) वायु. ६५।१०३ ऋभवो (ऋषयो); ब्रह्माण्ड. ३।१।१०७,१०८.

(६) वायु. ६५।१०४; ब्रह्माण्ड. ३।१।१०८ ह्यङ्गिरसः (आङ्गिरसाः) पूर्वार्धं नास्ति.

(७) वायु. ६५।१०५ आहार्या (औदार्या) दमः (दर्भः); ब्रह्माण्ड. ३।१।१०९,११० आहार्या (आधार्या) हविष्मांश्च (हविष्याश्च).

(८) वायु. ६५।१०६ (अयस्यस्तु उतथ्यश्च वामदेवस्तथोशिजः । भारद्वाजाः शाङ्कृतिका गार्ग्यकान्वरथीतराः ॥); ब्रह्माण्ड. ३।१।११०,१११.

[1]मुद्गला विष्णुवृद्धाश्च हरिताः कपयस्तथा ।
तथा रूक्षभरद्वाजा आर्षभाः कितवस्तथा ॥
[2]एते चाङ्गिरसां पक्षा विज्ञेया दश पञ्च च ।
ऋष्यन्तरेषु वै वाह्या बह्वोऽङ्गिरसः स्मृताः ॥

मरीचिवंशः

[3]मरीचेरपि वक्ष्यामि भेदमुत्तमपूरुषम् ।
यस्यान्ववाये संभूतं जगत्स्थावरजङ्गमम् ॥
[4]मरीचिरापश्चकमे ताभिर्ध्यायन्प्रजेप्सया ।
पुत्रः सर्वगुणोपेतः प्रजावान् प्रभवेदिति ।
संयुज्यात्मानमेवं तु तपसा भवितः प्रभुः ॥
[5]आहृताश्च ततः सर्वा आपः समभवंस्तदा ।
तासु प्रणिहितात्मानमेकं सोऽजनयत्प्रभुः ॥
[6]पुत्रमप्रतिमं नाम्नाऽरिष्टनेमिं प्रजापतिम् ।
पुत्रं मरीचिस्तपसि निरतः सोऽप्यतीतपत् ॥
[7]प्रध्याय हि सतीं वाचं पुत्रार्थी सलिले स्थितः ।
सप्त वर्षसहस्राणि ततः सोऽप्रतिमोऽभवत् ॥

कश्यपोत्पत्तिः कश्यपशब्दव्युत्पत्तिश्च

[8]कश्यपः सवितुर्विद्वांस्तेजसा ब्रह्मणा समः ।
मन्वन्तरेषु सर्वेषु ब्रह्मणोंऽशेन जायते ॥

[1]कन्यानिमित्तमत्युक्तो दक्षेण कुपितः प्रभुः ।
अपिबत्स तदा कश्यं कश्यं मद्यमिहोच्यते ॥
[2]ह्रास्ये कशिर्हि विज्ञेयो वाङ्मनः कश्यमुच्यते ।
कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः ॥
[3]कशेति नाम यद्वाचो वाचा क्रूरमुदाहृतम् ।
दक्षाभिशप्तः कुपितः कश्यपस्तेन सोऽभवत् ॥
[4]तस्माच्च कश्यपायोक्तो ब्रह्मणा परमेष्ठिना ।
तस्मै प्राचेतसो दक्षः कन्यास्ताः प्रत्यपादयत् ।
सर्वाश्च ब्रह्मवादिन्यः सर्वा वै लोकमातरः ॥
[5]इत्येतमृषिसर्गं तु पुण्यं यो वेद वारुणम् ।
आयुष्मान् पुण्यवाञ्छुद्धः सुखमाप्नोत्यनुत्तमम् ।
धारणाच्छ्रवणाच्चैव सर्वपापैः प्रमुच्यते ॥

दक्षवंशः

[6]अथाब्रुवन्पुनः सर्वे मुनयो रोमहर्षणम् ।
विनिवृत्ते प्रजासर्गे षष्ठे वै चाक्षुषस्य ह ।
निसर्गः संप्रवृत्तोऽयं मनोर्वैवस्वतस्य ह ॥
सूत उवाच--
[7]प्रजाः सृजेति व्यादिष्टः स्वयं दक्षः स्वयंभुवा ।
ससर्ज सर्वभूतानि गतिमन्ति ध्रुवाणि च ॥
[8]उपस्थितेऽन्तरे ह्यस्मिन् मनोर्वैवस्वतस्य ह ॥
ततः प्रवृत्तो दक्षस्तु प्रजाः स्रष्टुं चतुर्विधाः ।
जरायुजाण्डजाश्चैव उद्भिज्जाः स्वेदजास्तथा ॥

---

(१) वायु. ६५।१०७ कपय (वायव) रूक्षभ (भाक्षा भ) कितव (किंभया); ब्रह्माण्ड. ३।१।१११,११२.

(२) वायु ६५।१०८ चाङ्गिरसां (ह्यङ्गिरस); ब्रह्माण्ड. ३।१।११२,११३.

(३) वायु. ६५।१०९ मरीचेरपि (मारीचं परि) भेद (वंश); ब्रह्माण्ड. ३।१।११३,११४.

(४) वायु. ६५।११० प्रभवेदिति (सुरुचिरिति) तृतीयार्धे (संयुज्यते प्रजास्तायाँ मनसा भाविता प्रभुः।); ब्रह्माण्ड. ३।१।११४,११५ ताभिर्ध्यां (नाभिध्या).

(५) वायु. ६५।१११ आहृता (आहूता) भवंस्तदा (वसत्प्रभुः) मेकं (मेकः); ब्रह्माण्ड. ३।१।११६.

(६) वायु ६५।११२ (पुत्रमप्रतिमं नाम्नाऽरिष्टनेमिः प्रजापतिः। पुत्रं मरीचं सूर्याभं वर्षौ वेदो व्यजीजनत्॥); ब्रह्माण्ड. ३।१।११७

(७) वायु. ६५।११३ प्रध्याय हि सतीं (प्रध्यायन् हि सर्तां); ब्रह्माण्ड. ३।१।११८.

(८) वायु. ६५।११४ ह्यांनेजसा ब्रह्मणा (ह्यांसेन स ब्रह्मणः) णोंऽशेन (णांऽशेन); ब्रह्माण्ड. ३।१।११९.

(१) वायु. ६५।११५ मत्युक्तो (मित्युक्ते) तः प्रभु (ताः प्रजाः); ब्रह्माण्ड. ३।१।१२०.

(२) वायु. ६५।११६ पूर्वार्धे (ह्यश्वेस्मा हि विज्ञेया वाङ्मनः कश्य उच्यते।); ब्रह्माण्ड. ३।१।१२१ पानात्तु (पानां तु).

(३) वायु. ६५।११७ कशेति (करोति) वाचा (वाचं): ब्रह्माण्ड. ३।१।१२२.

(४) वायु. ६५।११८ पायोक्तो (यैनोक्तो) द्वितीयार्धे (तस्मादस्य कश्यपाय कन्यास्ताः प्रत्यपादयत्।) सर्वा वै (सर्वास्ता); ब्रह्माण्ड. ३।१।१२३, १२४.

(५) वायु. ६५।११९; ब्रह्माण्ड. ३।१।१२४, १२५ त्यनुत्तमम् (ति शाश्वतम्) च्चैव (श्चापि).

(६) वायु. ६५।१२०; ब्रह्माण्ड. ३।२।१ प्रथमतृतीयार्धे न स्तः।

(७) वायु. ६५।१२१ स्वयं (दक्षो); ब्रह्माण्ड. ३।२।१,२.

(८) वायु. ६५।१२१-१२५.

दश वर्षसहस्राणि तप्त्वा घोरं महत्तपः ।
संभावितो योगबलैरणिमाद्यैर्विशेषतः ॥
आत्मानं व्यभजच्छ्रीमान्मनुष्योरगराक्षसान् ।
देवासुरसगन्धर्वान्दिव्यसंहननप्रजान् ।
ईश्वरानात्मनस्तुल्यान् रूपद्रविणतेजसा ॥
तथैवान्यानि मुदितो गतिमन्ति ध्रुवाणि च ॥
[1]मानसानि च भूतानि स पूर्वमसृजत्प्रभुः ॥
[2]ऋषीन्देवान्सगन्धर्वान्मनुष्योरगराक्षसान् ।
यक्षभूतपिशाचांश्च वयःपशुमृगांस्तथा ॥
[3]यदाऽस्य मनसा सृष्टा न व्यवर्धन्त ताः प्रजाः ।
अपध्याता भगवता महादेवेन धीमता ॥
[4]मैथुनेन च भावेन सिसृक्षुर्विविधाः प्रजाः ।
असिक्नीं चावहत्पत्नीं वीरणस्य प्रजापतेः ॥
[5]सुतां सुमहता युक्तां तपसा लोकधारिणीम् ।
यया धृतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥
[6]अत्राप्युदाहरन्तीमौ श्लोकौ प्राचेतसं प्रति ।
दक्षस्योद्वहतो भार्यामसिक्नीं वीरणीं पराम् ॥
[7]कूपानां नियुतं दक्षः सर्पिणां साभिमानिनाम् ।
नदीगिरिषु सर्जस्ताः पृष्ठतोऽनुययौ प्रभुः ॥
[8]तं दृष्ट्वा ऋषिभिः प्रोक्तं प्रतिष्ठास्यति वै प्रजाः ।
प्रथमाऽत्र द्वितीया तु दक्षस्येह प्रजापतेः ॥

[1]तथाऽगच्छद्यथाकालं कूपानां नियुते तु सः ।
असिक्नीं वैरणीं यत्र दक्षः प्राचेतसोऽवहत् ॥
[2]अथ पुत्रसहस्रं स वैरण्याममितौजसम् ।
असिक्न्यां जनयामास दक्षः प्राचेतसः प्रभुः ॥
[3]तांस्तु दृष्ट्वा महातेजाः स विवर्धयिषुःप्रजाः ।
देवर्षिः प्रियसंवादो नारदो ब्रह्मणः सुतः ।
नाशाय वचनं तेषां शापायैवात्मनोऽब्रवीत् ॥
[4]यैः स वै प्रोच्यते विप्रः कश्यपस्येति कृत्रिमः ।
दक्षशापभयाद्भीतो ब्रह्मर्षिस्तेन कर्मणा ॥
[5]यैः कश्यपसुतस्याथ परमेष्ठी व्यजायत ।
मानसः कश्यपस्यासीद्दक्षशापवशात्पुनः ॥
[6]तस्मात्स काश्यपस्याथ द्वितीयो मानसोऽभवत् ।
स हि पूर्वं समुत्पन्नो नारदः परमेष्ठिनः ॥
[7]येन दक्षस्य पुत्रास्ते हर्यश्वा इति विश्रुताः ।
धर्मार्थं नाशिताः सर्वे विधिना च न संशयः ॥
[8]तस्योद्यतस्तदा दक्षः क्रुद्धः शापाय वै प्रभुः ।
ब्रह्मर्षीन् वै पुरस्कृत्य याचितः परमेष्ठिना ॥
[9]ततोऽभिसंधिं चक्रे वै दक्षश्च परमेष्ठिना ।
कन्यायां नारदो मह्यं तव पुत्रो भवेदिति ॥

(१) वायु. ६५।१२५ ( मानसान्येव भूतानि सिसृक्षुर्विविधाः प्रजाः । ) ; ब्रह्माण्ड. ३।२।२.

(२) वायु. ६५।१२६ ; ब्रह्माण्ड. ३।२।३ देवान्स ( देवांश्च ).

(३) वायु. ६५।१२७ ; ब्रह्माण्ड. ३।२।४.

(४) वायु. ६५।१२८ ; ब्रह्माण्ड. ३।२।५ मैथुनेन च ( स मैथुनेन ) चावहत्पत्नीं ( आवहद्भार्यां ).

(५) वायु. ६५।१२९ ; ब्रह्माण्ड. ३।२।६.

(६) वायु. ६५।१३० ; ब्रह्माण्ड. ३।२।७ येनसं ( येनमो ) वीरणीं पराम् ( वैरणीं पुरा. ).

(७) वायु. ६५।१३१ ; ब्रह्माण्ड. ३।२।८ दक्षः ( दक्षं ) षु सर्जस्ताः ( ष्वसज्जन्तं ) प्रभु ( प्रभुन् ).

(८) वायु. ६५।१३२ ; ब्रह्माण्ड. ३।२।९ उत्तरार्धे ( प्रथमोऽत्र द्वितीयस्तु दक्ष स हि प्रजापतिः ॥ ).

(१) वायु. ६५।१३३ ; ब्रह्माण्ड. ३।२।१० पूर्वार्धे ( अथागच्छद्यथाकालं मह्रीनां नियुतं तु यद् । ) यत्र ( तत्र ).

(२) वायु. ६५।१३४ जसम् ( जसौ ) ; ब्रह्माण्ड. ३।२।११.

(३) वायु. ६५।१३५ ; ब्रह्माण्ड. ३।२।१२, १३ षुःप्रजाः ( षुः प्रजाः ) र्षिः प्रि ( र्षिप्रि ).

(४) वायु. ६५।१३६.

(५) वायु. ६५।१३७ स्यासीद् ( स्येह द ) वशा ( भया ) ; ब्रह्माण्ड. ३।२।१३, १४.

(६) वायु. ६५।१३८ पूर्वं (पूर्वे) ; ब्रह्माण्ड. ३।२।१४,१५.

(७) वायु. ६५।१३९ धर्मार्थं ( निन्दार्थं ) विधिना च ( विनष्टाश्च ) ; ब्रह्माण्ड. ३।२।१५, १६ येन दक्षस्य पुत्रास्ते ( तेन दक्षस्य पुत्रा वै ).

(८) वायु. ६५।१४० शापाय ( नाशाय ) ; ब्रह्माण्ड. ३।२।१६,१७.

(९) वायु. ६५।१४१ संधिं चक्रे वै दक्षश्च ( संधितं चक्रे दक्षस्तु ) भवेदिति ( भवत्विति ) ; ब्रह्माण्ड. ३।२।१७,१८.

ततो दक्षः सुतां प्रादात् प्रियां वै परमेष्ठिने ।
तस्मात्स नारदो जज्ञे भूयः शापभयादृपिः ॥

कश्यपप्रजापतेर्विश्वाधिपत्यव्यवस्था

एवं प्रजासु सृष्टासु कश्यपेन महात्मना ।
प्रतिष्ठितासु सर्वासु स्थावरासु चरासु च ॥
अभिषिच्याधिपत्येषु तेषां मुख्यान् प्रजापतिः ।
ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ॥
द्विजानां वीरुधां चैव नक्षत्राणां ग्रहैः सह ।
यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत् ॥
बृहस्पतिं तु विश्वेषां ददावङ्गिरसां पतिम् ।
भृगूणामधिपं चैव काव्यं राज्येऽभ्यषेचयत् ॥
आदित्यानां पुनर्विष्णुं वसूनामथ पावकम् ।
प्रजापतीनां दक्षं च मरुतामथ वासवम् ॥
दैत्यानामथ राजानं प्रह्लादं दितिनन्दनम् ।
नारायणं तु साध्यानां रुद्राणां वृषभध्वजम् ॥
विप्रचित्तिं च राजानं दानवानामथाऽऽदिशत् ।
अपां तु वरुणं राज्ये राज्ञां वैश्रवणं पतिम् ।
यक्षाणां राक्षसानां च पार्थिवानां धनस्य च ॥
वैवस्वतं पितॄणां च यमं राज्येऽभ्यषेचयत् ।
सर्वभूतपिशाचानां गिरिशं शूलपाणिनम् ॥
शैलानां हिमवन्तं च नदीनामथ सागरम् ।
गन्धर्वाणामधिपतिं चक्रे चित्ररथं तदा ॥

उच्चैःश्रवसमश्वानां राजानं चाभ्यषेचयत् ।
मृगाणामथ शार्दूलं गोवृषं च ककुद्मिनाम् ॥
पक्षिणामथ सर्वेषां गरुडं पततां वरम् ।
गन्धानां मरुतां चैव भूतानामशरीरिणाम् ॥
शब्दाकाशबलानां च वायुं बलवतां वरम् ।
सर्वेषां दंष्ट्रिणां शेषं नागानामथ वासुकिम् ॥
सरीसृपाणां सर्पाणां पन्नगानां च तक्षकम् ।
सागराणां नदीनां च मेघानां वर्षितस्य च ।
आदित्यानामन्यतमं पर्जन्यमभिषिक्तवान् ॥
सर्वाप्सरोगणानां च कामदेवं तथा प्रभुम् ।
ऋतूनामथ मासानामार्तवानां तथैव च ॥
पक्षाणां च विपक्षाणां मुहूर्तानां च पर्वणाम् ।
कलाकाष्ठाप्रमाणानां गतेरयनयोस्तथा ।
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुम् ॥
प्रजापतेर्विरजसः पूर्वस्यां दिशि विश्रुतम् ।
पुत्रं नाम्ना सुधन्वानं राजानं सोऽभ्यषेचयत् ॥
दक्षिणस्यां दिशि तथा कर्दमस्य प्रजापतेः ।
पुत्रं शङ्खपदं नाम राजानं सोऽभ्यषेचयत् ॥
पश्चिमस्यां दिशि तथा रजसः पुत्रमच्युतम् ।
केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ॥

(१) वायु. ६५।१४२ शाप (शान्तो) ; ब्रह्माण्ड. ३।२।१८.
(२) वायु. ७०।१ ; ब्रह्माण्ड. ३।८।१ स्थावरासु चरासु (चरासु स्थावरासु).
(३) वायु. ७०।२ मुख्यान् (मुख्य) ; ब्रह्माण्ड. ३।८।२ व्यादे (आदे).
(४) वायु. ७०।३ द्विजानां वीरुधां चैव (द्विजातीनां वीरुधां च) ; ब्रह्माण्ड. ३।८।३.
(५) वायु. ७०।४ ; ब्रह्माण्ड. ३।८।४.
(६) वायु. ७०।५ ; ब्रह्माण्ड. ३।८।५.
(७) वायु. ७०।६ , ब्रह्माण्ड. ३।८।६ वृषभ (च वृष).
(८) वायु. ७०।७ ; ब्रह्माण्ड. ३।८।७, ८ अपां तु (अपां च) पतिम् (तथा)
(९) वायु. ७०।८ ; ब्रह्माण्ड. ३।८।८, ९.
(१०) वायु. ७०।९ ; ब्रह्माण्ड. ३।८।९, १० तदा (तथा).

(१) वायु. ७०।१० ककुद्मिनाम् (चतुष्पदाम्) ; ब्रह्माण्ड. ३।८।१०, ११.
(२) वायु. ७०।११ मरुतां (मारुतं) ; ब्रह्माण्ड. ३।८।११, १२.
(३) वायु. ७०।१२ ; ब्रह्माण्ड. ३।८।१२, १३ दंष्ट्रिणां (समतान्).
(४) वायु. ७०।१३ पन्नगानां च (नागानां चैव) ; ब्रह्माण्ड. ३।८।१३, १४.
(५) वायु. ७०।१४ तथा प्रभुम् (तथैव च) ; ब्रह्माण्ड. ३।८।१५.
(६) वायु. ७०।१५ ; ब्रह्माण्ड. ३।८।१६, १७.
(७) वायु. ७०।१६ [illegible] (दि [illegible]) सुधन्वानं (सुधा-मान) ; ब्रह्माण्ड. ३।८।१७, १८.
(८) ब्रह्माण्ड. ३।८।१८, १९.
(९) वायु. ७०।१७ ; ब्रह्माण्ड. ३।८।१९, २० [illegible] (कान्य).

तथा हिरण्यरोमाणं पर्जन्यस्य प्रजापतेः ।
उदीच्यां दिशि दुर्धर्षपुत्रं राज्येऽभ्यषेचयत् ॥
मनुष्याणामधिपतिं चक्रे वैवस्वतं मनुम् ।
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते ॥
स्वायंभुवेऽन्तरे पूर्वं ब्रह्मणा तेऽभिषेचिताः ।
नृपा ह्येतेऽभिषिच्यन्ते मनवो ये भवन्ति वै ॥
मन्वन्तरेष्वतीतेषु गता ह्येतेषु पार्थिवाः ।
एवमन्येऽभिषिच्यन्ते प्राप्ते मन्वन्तरे पुनः ।
अतीतानागताः सर्वे स्मृता मन्वन्तरेश्वराः ॥
राजसूयेऽभिषिक्तश्च पृथुरेभिर्नरोत्तमः ।
वेददृष्टेन विधिना कृतो राजा प्रतापवान् ॥

कश्यपस्य गोत्राणि

एतानुत्पाद्य पुत्रांस्तु प्रजासंतानकारणात् ।
पुनरेव महाभागः प्रजानां पतिरीश्वरः ॥
कश्यपो गोत्रकामस्तु चचार परमं तपः ।
पुत्रौ गोत्रकरौ मह्यं भवेतामिति चिन्तयन् ॥
तस्य प्रध्यायमानस्य कश्यपस्य महात्मनः ।
ब्रह्मणोंऽशौ सुतौ पश्चात् प्रादुर्भूतौ महौजसौ ॥
वत्सारश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ।
वत्सारान्निध्रुवो जज्ञे रैभ्यश्च सुमहायशाः ॥
[1]रैभ्यस्य रैभ्यो विज्ञेयो निध्रुवस्य निबोधत ।
च्यवनस्य सुकन्यायां सुमेधाः समपद्यत ॥
[2]निध्रुवस्य तु या पत्नी माता वै कुण्डपायिनाम् ।
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ॥
शाण्डिल्यानां वरः श्रीमान् देवलः सुमहायशाः ।
निध्रुवाः शाण्डिला रैभ्यास्त्रयः पक्षास्तु कश्यपाः ॥

पुलस्त्यवंशः

येऽत्रिप्रभृतयो देवा देवलस्य प्रजास्त्विमाः ।
चतुर्युगे त्वतिक्रान्ते मनोर्ह्येकादशे प्रभोः ।
अथावशिष्टे तस्मिंस्तु द्वापरे संप्रवर्तिते ॥
मरुत्तस्य नरिष्यन्तस्तस्य पुत्रो दमः किल ।
राज्यवर्धनकस्तस्य सुधृतिस्तत्सुतो नरः ॥
[6]केवलश्च ततस्तस्य बन्धुमान् वेगवांस्ततः ।
बुधस्तस्याभवद्यस्य तृणबिन्दुर्महीपतिः ॥
[7]त्रेतायुगमुखे राजा तृतीये स बभूव ह ।
तस्य चेलविला कन्यालम्बुषागर्भसंभवा ।
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥

(१) ब्रह्माण्ड. ३।८।२०,२१.

(२) वायु. ७०।१८ ; ब्रह्माण्ड. ३।८।२१,२२.

(३) वायु. ७०।१९ ; ब्रह्माण्ड. ३।८।२३ द्वौरे ( क्षेत्रे ).

(४) वायु ७०।२० ; ब्रह्माण्ड. ३।८।२४, २५.

(५) वायु. ७०।२१ नैरोतनः ( नैरोतवे ) ; ब्रह्माण्ड. ३।८।२५,२६ कृतो राजा ( ह्यभिराजः ).

(६) वायु. ७०।२२ ; ब्रह्माण्ड. ३।८।२६,२७.

(७) वायु. ७०।२३ दिशि चिन्तयन् ( मिमाचिन्तयत् ) ; ब्रह्माण्ड. ३।८।२७,२८ ; लिङ्ग १।६३।४९ परमं ( स पुनः ) उत्तरार्धे ( पुत्रौ गोत्रकरौ मह्यं भवतामिति चिन्तयन् ॥ ).

(८) वायु. ७०।२४ ; ब्रह्माण्ड. ३।८।२८,२९ ; लिङ्ग. १।६३।५० तस्य प्रध्या ( तस्यैवं ध्या ) ब्रह्मणोंऽशौ ( ब्रह्मवेत्तारौ ).

(९) वायु. ७०।२५ रैभ्यश्च तु ( रैभ्यश्च स ) ; ब्रह्माण्ड. ३।८।२९, ३० ; लिङ्ग. १।६३।५१ वत्सार ( वत्सार ) वत्सारान्नि ( वत्सारान्नि ) रैभ्य ( रैभ ).

(१) वायु. ७०।२६ रैभ्यस्य रैभ्यो विज्ञेयो ( रैभ्यस्य रैभ्या विज्ञेया ) ; ब्रह्माण्ड. ३।८।३०, ३१ ; लिङ्ग. १।६३।५२ पूर्वार्धे ( रैभ्यस्य रैभ्या विज्ञेया नैध्रुवस्य वदामि वः । ) शुक ( शुक्र ).

(२) वायु. ७०।२७ ; ब्रह्माण्ड. ३।८।३१, ३२ ; लिङ्ग. १।६३।५३ निध्रुवस्य तु या ( नैध्रुवस्य तु सा ).

(३) वायु. ७०।२८ वरः श्रीमान् ( वचः शुभा ) पक्षास्तु ( पक्षाश्च ) ; ब्रह्माण्ड. ३।८।३२, ३३ ; लिङ्ग. १।६३।५४ वराः ( वरा. ) निध्रुवाः शाण्डिल्या ( शाण्डिल्यश्च नैध्रुवा ).

(४) वायु. ७०।२९ यत्रि ( यत्र ) प्रभोः ( प्रभाः ) वर्तिते ( वर्तते ) ; ब्रह्माण्ड. ३।८।३३, ३४ देवलस्य प्रजास्त्विमाः ( देवलस्य प्रजास्तिमाः ) ; लिङ्ग. १।६३।५५, ५६ प्रथमार्धे ( नवप्रकृतयो देवाः पुलस्त्यस्य वदामि वः । ) स्मृति ( प्रति ) द्वौस ( देवा ) प्रभाव ( अपीत ).

(५) वायु. ७०।३० मरुत्तस्य नरि ( मानसस्य च रि ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।८।३५, लिङ्ग. १।६३।५६ ( मानसस्य नरिष्यन्तः पुत्र आसीत्तमः किल । ) उत्तरार्धं नास्ति.

(६) वायु ७०।३० ( मानसस्य तावत्तृणबिन्दुरिति श्रुतः । ) उत्त. ; ब्रह्माण्ड. ३।८।३६ ; लिङ्ग. १।६३।५७ ( तस्य तस्य तावत्तृणबिन्दुरिति श्रुतः । ) उत्त.

(७) वायु. ७०।३१ स बभूव ( संबभूव ) द्वितीयार्धे ( तस्य

तस्यां जातो विश्रवास्तु पौलस्त्यकुलवर्धनः ।
बृहस्पतिर्बृहत्कीर्तिर्देवाचार्यस्तु कीर्तितः ॥

कन्यां तस्योपयेमे स नाम्ना वै देववर्णिनीम् ।
पुष्पोत्कटां च वाकां च सुते माल्यवतस्तथा ॥

[3]कैकसीं मालिनः कन्यां तासां तु शृणुत प्रजाः ।
ज्येष्ठं वैश्रवणं तस्य सुषुवे देववर्णिनी ॥

[4]दिव्येन विधिना युक्तमार्षेण च श्रुतेन च ।
राक्षसेन च रूपेण आसुरेण बलेन च ॥

[5]त्रिपादं सुमहाकायं स्थूलशीर्षं महाहनुम् ।
अष्टदंष्ट्रं हरिच्छ्मश्रुं शङ्कुकर्णं विलोहितम् ॥

ह्रस्वबाहुं प्रबाहुं च पिङ्गलं सुविभीषणम् ।
वैवर्तज्ञानसंपन्नं संबुद्धं चैव संभवात् ॥

एवंविधं सुतं दृष्ट्वा विश्वरूपधरं तथा ।
पिता दृष्ट्वाऽब्रवीत्तत्र कुबेरोऽयमिति स्वयम् ॥

कन्या त्विडिविला रूपेणाप्रतिमाऽभवत् । ) ; ब्रह्माण्ड. ३।८।३७ तृतीयार्धं नास्ति ; लिङ्ग. १।६३।५७, ५८ स बभूव ( संबभूव ) द्वितीयार्धे ( तस्य कन्या त्विलविला रूपेणाप्रतिमाऽभवत् । ).

( १ ) वायु. ७०।३२, ३३ ( ऋषिरिडिविलायां तु विश्रवा समपद्यत । तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्धनाः । बृहस्पतेर्बृहत्कीर्तिर्देवाचार्यस्य कीर्तिता ॥ ) ; ब्रह्माण्ड. ३।८।३८ ; लिङ्ग. १।६३।५९ ( ऋषिरैलविलो यस्यां विश्रवाः समपद्यत । तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्धनाः ॥ ).

( २ ) वायु. ७०।३३, ३४ तथा ( स्थिते ) ; ब्रह्माण्ड. ३।८।३९ ; लिङ्ग. १।६३।६० ( बृहस्पतेः शुभा कन्या नाम्ना वै देववर्णिनी । पुष्पोत्कटा बलाका च सुते माल्यवतः स्मृते ॥ ).

( ३ ) वायु. ७०।३४, ३५ ; ब्रह्माण्ड. ३।८।४० ; लिङ्ग. १।६३।६१ कैकसीं ( ककसी ) कन्यां ( कन्या ) तु ( वै ) तस्य ( तस्मात् ).

( ४ ) वायु. ७०।३५ षेण च ( षेणैव ) ; ब्रह्माण्ड. ३।८।४१.

( ५ ) वायु. ७०।३६ हनुम् ( तनुम् ) ; ब्रह्माण्ड. ३।८।४२.

( ६ ) वायु. ७०।३७ चैव संभवात् ( ज्ञानसंपदा ) ; ब्रह्माण्ड. ३।८।४३.

( ७ ) वायु ७०।३८ ; ब्रह्माण्ड. ३।८।४४ त्तत्र ( त्तं तु ) पूर्वार्धं नास्ति .

कुत्सायां किति शब्दोऽयं शरीरं वेरमुच्यते ।
कुवेरः कुशरीरत्वान्नाम्ना तेन च सोऽङ्कितः ॥

यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव ।
तस्माद्वैश्रवणो नाम नाम्ना लोके भविष्यति ॥

ऋद्ध्यां कुबेरोऽजनयद्विश्रुतं नलकूबरम् ।
रावणं कुम्भकर्णं च कन्यां शूर्पणखां तथा ।
विभीषणचतुर्थांस्तान् कैकस्यजनयत् सुतान् ॥

शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूर्धजः ।
चतुष्पाद्विंशतिभुजो महाकायो महाबलः ॥

जात्याऽञ्जननिभो दंष्ट्री लोहितग्रीव एव च ।
राक्षसेनौजसा युक्तो रूपेण च बलेन च ॥

सत्यबुद्धिर्दृढतनू राक्षसैरेव रावणः ।
निसर्गाद्दारुणः क्रूरो रावणाद्रावणस्तु सः ॥

[7]हिरण्यकशिपुस्त्वासीत्स राजा पूर्वजन्मनि ।
चतुर्युगानि राजाऽत्र त्रयोदश स राक्षसः ॥

ताः पञ्चकोट्यो वर्षाणामाख्याताः संख्यया द्विजैः ।
नियुतान्येकषष्टिश्च संख्या विद्भिरुदाहृता ॥

( १ ) वायु. ७०।३९ ; ब्रह्माण्ड. ३।८।४४, ४५ तेन च ( वै तेन ).

( २ ) वायु. ७०।४० ; ब्रह्माण्ड. ३।८।४५, ४६ लोके ( तेन ).

( ३ ) वायु. ७०।४१ ; ब्रह्माण्ड. ३।८।४६, ४७ शूर्पणखां ( शूर्पनखीं ) र्थांस्तान् ( र्थास्तु ) ; लिङ्ग. १।६३।६२ ( कैकसी चाप्यजनयद्रावणं राक्षसाधिपम् । कुम्भकर्णं शूर्पनखां धीमन्तं च बिभीषणम् ॥ ) प्रथमार्धं नास्ति.

( ४ ) वायु. ७०।४२ ; ब्रह्माण्ड. ३।८।४८.

( ५ ) वायु. ७०।४३ राक्षसेनौजसा ( राजसेनो यथा ) ; ब्रह्माण्ड. ३।८।४९ जात्या ( जात्य ).

( ६ ) वायु. ७०।४४ ; ब्रह्माण्ड. ३।८।५० सत्यबुद्धिर्दृढतनू ( सत्त्वबुद्धिजितैर्यश्च ) र्गाद्दा ( र्गदा ) रावणाद्राव ( रावणो द्राव ).

( ७ ) वायु. ७०।४५ ; ब्रह्माण्ड. ३।८।५१ स्त्वासीत्स राजा ( र्यासीद्रावणः ) राजाऽत्र ( राजाऽभूद् ).

( ८ ) वायु. ७०।४६ ; ब्रह्माण्ड. ३।८।५२ आख्याताः ( संख्याताः ) द्विजैः ( द्विजाः ) उत्तरार्धे ( नियुतान्येकषष्टिं च शरदां गणितानि वै ॥ ).

[1]षष्टिं शतसहस्राणि वर्षाणां तु स रावणः ।
देवतानामृषीणां च घोरं कृत्वा प्रजागरम् ॥

[2]त्रेतायुगे चतुर्विंशे रावणस्तपसः क्षयात् ।
रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ॥

[3]महोदरः प्रहस्तश्च महापार्श्वः खरस्तथा ।
पुष्पोत्कटायाः पुत्रास्ते कन्या कुम्भीनसी तथा ॥

[4]त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः ।
कन्याऽनुपालिका चैव वाकायाः प्रसवः स्मृतः ॥

[5]इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश ।
दारुणाभिजनाः सर्वे देवैरपि दुरासदाः ॥

[6]सर्वे लब्धवराः शूराः पुत्रपौत्रसमन्विताः ।
यक्षाणां चैव सर्वेषां पौलस्त्या ये च राक्षसाः ॥

[7]आगस्त्यवैश्वामित्राणां क्रूराणां ब्रह्मरक्षसाम् ।
वेदाध्ययनशीलानां तपोव्रतनिषेविणाम् ॥

[8]तेषामैडविलो राजा पौलस्त्यः सव्यपिङ्गलः ।
इतरे वै यक्षगुणास्तेन रक्षोगणास्त्रयः ॥

(१) वायु. ७०।४७ ; ब्रह्माण्ड. ३।८।५३ शत ( चैव ) तु स ( वै स ).

(२) वायु. ७०।४८ ; ब्रह्माण्ड. ३।८।५४.

(३) वायु. ७०।४९ महापार्श्वः ( महादंष्ट्रः ) ; ब्रह्माण्ड. ३।८।७१ ; लिङ्ग. १।६३।६३, ६४ ( पुष्पोत्कटा [illegible] [illegible] । महोदरं प्रहस्तं च महापार्श्वं खरं तथा । कुम्भीनसीं तथा कन्यां [illegible] [illegible] प्रजाः ॥ ).

(४) वायु. ७०।५० कन्याऽनुपालिका ( कन्या [illegible] ) [illegible] ( [illegible] ) ; ब्रह्माण्ड. ३।८।५६ [illegible] ( [illegible] ), लिङ्ग. १।६३।६४, ६५ उत्तरार्धे ( कन्या [illegible] [illegible] प्रसवः स्मृतः । ).

(५) वायु. ७०।५१ ; ब्रह्माण्ड. ३।८।५७ ; लिङ्ग. १।६३। ६५, ६६ ( [illegible] ).

(६) वायु. ७०।५२ [illegible] ( [illegible] ) ; ब्रह्माण्ड. ३।८।५८ [illegible] ( [illegible] ).

(७) वायु. ७०।५३ ; ब्रह्माण्ड. ३।८।५९.

(८) वायु. ७०।५४ ; ब्रह्माण्ड. ३।८।६० [illegible] ( [illegible] ) [illegible] ( [illegible] ).

[1]यातुधाना ब्रह्मधाना वार्ताश्चैव दिवाचराः ।
निशाचरगणास्तेषां चत्वारः कविभिः स्मृताः ॥

[2]पौलस्त्या नैर्ऋताश्चैव आगस्त्याः कौशिकास्तथा ।
इत्येताः सप्त तेषां वै जातयो राक्षसाः स्मृताः ॥

[3]तेषां रूपं प्रवक्ष्यामि स्वभावेन व्यवस्थितम् ।
वृत्ताक्षाः पिङ्गलाश्चैव महाकाया महोदराः ॥

[4]अष्टदंष्ट्राः शङ्कुकर्णा ऊर्ध्वरोमाण एव च ।
आकर्णदारितास्याश्च मुञ्जधूमोर्ध्वमूर्धजाः ॥

[5]स्थूलशीर्षाः सिताभाश्च ह्रस्वकाश्च प्रबाहुकाः ।
ताम्रास्या लम्बजिह्वोष्ठा लम्बभ्रूस्थूलनासिकाः ॥

[6]नीलाङ्गा लोहितग्रीवा गम्भीराक्षा विभीषणाः ।
महाघोरस्वराश्चैव विकटा बद्धपिण्डिकाः ॥

[7]स्थूलाश्च तुङ्गनासाश्च शिलासंहनना दृढाः ।
दारुणाभिजनाः क्रूराः प्रायशः क्लिष्टकर्मिणः ॥

[8]सकुण्डलाङ्गदापीडा मुकुटोष्णीषधारिणः ।
विचित्रवस्त्राभरणाश्चित्रस्रगनुलेपनाः ॥

[9]अन्नादाः पिशिताशाश्च पुरुषादाश्च ते स्मृताः ।
इत्येतद्रूपसाधर्म्यं राक्षसानां बुधैः स्मृतम् ।
न समस्तबलं युद्धं यतो मायाकृतं हि तत् ॥

(१) वायु. ७०।५५ ; ब्रह्माण्ड. ३।८।६१.

(२) वायु. ७०।५६ ; ब्रह्माण्ड. ३।८।६२.

(३) वायु. ७०।५७ ; ब्रह्माण्ड. ३।८।६३ स्वभावेन ( स्वामाभ्येन ).

(४) वायु. ७०।५८ ; ब्रह्माण्ड. ३।८।६४ आकर्णदारि ( आकर्णे दारि ) धूमो ( धूम्रो ).

(५) वायु. ७०।५९ ; ब्रह्माण्ड. ३।८।६५ काश्च प्रबाहुकाः ( [illegible] ).

(६) वायु. ७०।६० ; ब्रह्माण्ड. ३।८।६६ [illegible] ( [illegible] ).

(७) वायु. ७०।६१ ; ब्रह्माण्ड. ३।८।६७.

(८) वायु. ७०।६२ ; ब्रह्माण्ड. ३।८।६८ उत्तरार्धे ( [illegible] ॥ ).

(९) वायु. ७०।६३ ; ब्रह्माण्ड. ३।८।६९, ७० बुधैः स्मृतम् ( स्मृतं बुधैः ) उत्तरार्धे ( न [illegible] बुद्धी [illegible] [illegible] ॥ ).

पुलहवंशः

[1]पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ।
भूताः पिशाचाः सर्पाश्च सूमरा हस्तिनस्तथा ॥
[2]वानराः किन्नराश्चैव मयुकिंपुरुषास्तथा ।
येऽन्ये चैव परिक्रान्ता मायाक्रोधवशानुगाः ॥
[3]अनपत्यः क्रतुर्ह्यस्मिन्स्मृतो वैवस्वतेऽन्तरे ।
न तस्य पत्न्यः पुत्रा वा तेजः संक्षिप्य च स्थितः ॥

अत्रिवंशः, अत्रिपुत्रगोत्राणि च

[4]अत्रेर्वंशं प्रवक्ष्यामि तृतीयस्य प्रजापतेः ।
तस्य पत्न्यश्च सुन्दर्यो दशैवासन् पतिव्रताः ॥
[5]पूरोः पुत्रो महावीर्यो राजाऽऽसीज्जनमेजयः ।
प्रचिन्वांस्तु सुतस्तस्य यः प्राचीमजयद्दिशम् ॥
[6]प्रचिन्वतः प्रवीरोऽभून्मनस्युस्तस्य चात्मजः ।
राजा चाभयदो नाम मनस्योरभवत्सुतः ॥

तथैवाभयदस्यासीत्सुधन्वा तु महीपतिः ।
सुधन्वनो बहुगवः संयातिस्तस्य चात्मजः ॥
[2]संयातेस्तु रहंयाती रौद्राश्वस्तस्य चात्मजः ।
रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥
[3]ऋचेयुः प्रथमस्तेषां कृकणेयुस्तथैव च ।
कक्षेयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च ॥
दशार्णेयुर्जलेयुश्च स्थलेयुश्च महायशाः ।
धनेयुश्च वनेयुश्च पुत्रिकाश्च दश स्त्रियः ॥
[4]भद्रा शूद्रा च मद्रा च शलदा मलदा तथा ।
तला खला च सप्तैता या च गोचपला स्मृता ।
तथा तामरसा चैव रत्नकूटा च ता दश ॥

(१) वायु. ७०।६४ सूमरा ( भ्रमरा ); ब्रह्माण्ड. ३।८।७०, ७१ पिशाचा सर्पाश्च ( सर्पाः पिशाचाश्च ); लिङ्ग. १।६३।६६, ६७ पुलहस्य ( पुलस्त्यस्य ) व्यालाश्च ( व्याघ्राश्च ) सूमरा ( सूकरा ).

(२) वायु. ७०।६५ ; ब्रह्माण्ड. ३।८।७१, ७२ मयु ( मायुः ) उत्तरार्धे ( प्रागप्येते परिक्रान्ता मया क्रोधवशान्वया' ॥ ); लिङ्ग. १।६३।६७ मयुकि ( ये च किं ) उत्तरार्धं नास्ति.

(३) वायु. ७०।६६ ह्यस्मि ( स्तस्मि ) पत्न्यः पुत्रा ( पुत्रः पौत्रो ) च स्थितः ( वा स्थितः ); ब्रह्माण्ड. ३।८।७२, ७३ ; लिङ्ग. १।६३।६८ ह्यस्मि ( स्तस्मि ) उत्तरार्धं नास्ति.

(४) वायु. ७०।६७ ; ब्रह्माण्ड. ३।८।७३, ७४ पत्न्यश्च ( पत्न्यस्तु ); लिङ्ग. १।६३।६८ ( अत्रेः पत्न्यो दशैवासन् सुन्दर्यश्च पतिव्रताः । ) पूर्वार्धं नास्ति.

(५) वायु. ९९।१२० महावीर्यो ( महाबाहू ) प्रचिन्वांस्तु ( अविद्धस्तु ); मत्स्य. ४९।१ वीर्यो ( तेजा ) ऽऽसीज्ज ( स ज ) प्रचिन्वांस्तु ( प्राचीत्वन' ) मजय (मकरो) ; हरि. १।३१।५.

(६) वायु. ९९।१२१ ( अविद्धतः प्रवीरस्तु मनस्युरभवत्सुतः । राजाऽथो जयदो नाम मनस्योरभवत्सुतः ॥ ); मत्स्य. ४९।२ ( प्राचीत्वनस्य तनयो मनस्युश्च तथाऽभवत् । राजा पीतायुधो नाम मनस्योरभवत्सुतः ॥ ); हरि. १।३१।६ ; ब्रह्म. १३।३ प्रचिन्वतः प्र ( पूरोः पुत्र सु ).

(१) वायु. ९९।१२२ ( दायादस्तस्य चाप्यासीद्धुन्धुर्नाम महीपतिः । धुन्धोर्बहुगवी पुत्र. संजातिस्तस्य चात्मज ॥ ); मत्स्य. ४९।३ ( दायादस्तस्य चाप्यासीद्धुन्धुर्नाम महीपति' । धुन्धोर्बहुविध' पुत्रः सपातिस्तस्य चात्मज ॥ ); हरि. १।३१।७ सयाति ( शम्याति ) ; ब्रह्म. १३।४ तु महीपति' ( नाम पार्थिव' ) उत्तरार्धे (सुधन्वन' सुबाहुश्च रौद्राश्वस्तस्य चात्मज' । ).

(२) वायु. ७०।६८ रौद्राश्वस्य ( भद्राश्वस्य ) उत्त. : ९९।१२३ पूर्वार्धे (संजातेरथ रौद्राश्वस्तस्य पुत्रान्निबोधत।); ब्रह्माण्ड. ३।८।७४ रौद्राश्वस्य ( भद्राश्वस्य ) उत्त. ; मत्स्य. ४९।४ ( संयातेस्तु रहवर्चा भद्राश्वस्तस्य चात्मज' । भद्राश्वस्य घृताच्यां तु दशाप्सरसि सूनव ॥ ); हरि. १।३१।८ सयातेस्तु रहयानी ( शम्यातेस्तु रहस्याती ); लिङ्ग. १।६३।६९ सर्वं ब्रह्माण्डवत्.

(३) वायु. ९९।१२४, १२५ ( रजेयुश्च कृतेयुश्च कक्षेयु स्थण्डिलेयु च । घृतेयुश्च जलेयुश्च स्थलेयुश्चैव सप्तम ॥ धर्मेयु' सनतेयुश्च वनेयुर्दशमस्तु सः ॥ ); मत्स्य. ४९।५, ६ ( औचेयुश्च हृषेयुश्च कक्षेयुश्च सनेयुकः । घृतेयुश्च विनेयुश्च स्थलेयुश्चैव सप्तम' । धर्मेयु संनतेयुश्च पुण्येयुश्चेति ते दश ॥ ); हरि. १।३१।९, १० ; ब्रह्म. १३।५, ६ ( रौद्राश्वस्य दशार्णेयु' कृकणेयुस्तथैव च । कक्षेयु' स्थण्डिलेयुश्च संनतेयुस्तथैव च ॥ ऋचेयुश्च जलेयुश्च स्थलेयुश्च महाबलः । धनेयुश्च वनेयुश्च पुत्रकाश्च दश स्त्रियः ॥ )

(४) वायु. ७०।६८, ६९ तला ( वेन्या ) तामरसा ( मानरसा ) ' ९९।१२५, १२६ भद्रा ( रुद्रा ) शलदा मलदा ( शुभा जामलजा ) गोचपला ( गोपजला ) कूटा ( कूटी ); ब्रह्माण्ड. ३।८।७५, ७६ शलदा ( शलभा ) द्वितीयार्धे (वश्या हला च सप्तैता या च गोचपला: स्मृता' । ); हरि. १।३१।११ ( रुद्रा शूद्रा च भद्रा च मलदा मलहा तथा । खलदा चैव राजेन्द्र नलदा सुरसाऽपि च । तथा गोचपला तु स्त्रीरत्नकूटा च ता दश ॥ );

[1]आत्रेयवंशकृत्तासां भर्ता नाम्ना प्रभाकरः ।
भद्रायां जनयामास सोमं पुत्रं यशस्विनम् ॥
[2]स्वर्भानुना हते सूर्ये पतमाने दिवो महीम् ।
तमोऽभिभूते लोकेऽस्मिन् प्रभा येन प्रवर्तिता ॥
[3]स्वस्ति तेऽस्त्विति चोक्तः स पतन्निह दिवाकरः ।
ब्रह्मर्षेर्वचनात्तस्य न पपात दिवो महीम् ॥
[4]ततः प्रभाकरेत्युक्तः प्रभुरत्रिर्महर्षिभिः ॥
[5]अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ।
यज्ञेष्वत्रेर्धनं चैव सुरैर्यस्य प्रवर्तितम् ॥

लिङ्ग. १।६३।६९, ७० ( भद्राभद्रा च जलदा मन्दानन्दा तथैव च । बलाबला च विप्रेन्द्रा या च गोपाबला स्मृता । तथा तामरसा चैव वरक्रीडा च वै दश ॥ ); ब्रह्म. १३।७, ८ द्वितीयार्धे ( रुलदा च ततो विप्रा नलदा सुरसाऽपि च । ) तामरसा चैव ( गोचपला च स्त्री - ).

(१) वायु. ७०।७० : ९९।१२७ आत्रेयवंशकृत्तासां ( आत्रेयो वशतरतासां ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।८।७६, ७७ पूर्वार्धे ( तत्र यो वंशकृत्त्वासौ तस्य नाम प्रभाकरः । ) भद्रा ( भद्रा ) ; हरि. १।३१।१२ पूर्वार्धे ( ऋषिर्जातोऽत्रिवंशे तु तासां भर्ता प्रभाकरः । ) भद्रा ( रुद्रा ) सोमं पुत्रं ( सुतं सोमं ) ; लिङ्ग. १।६३।७१,७४ कृत्तासां भर्ता नाम्ना ( प्रभवास्तासां भर्ता ) ; ब्रह्म. १३।८,९ पूर्वार्धे ( ऋषिर्जातोऽत्रिवंशे च तासां भर्ता प्रभाकरः । ) सोमं पुत्र ( सुतं सोमं ).

(२) वायु. ७०।७१ ; ब्रह्माण्ड. ३।८।७७,७८ ; हरि. १।३१।१३ लोकेऽस्मिन् ( लोके च ) प्रवर्तिता ( प्रकल्पिता ) ; लिङ्ग. १।६३।७१,७२ ना हते ( पिहिते ) पतमाने ( पतितेऽस्मिन् ) ; ब्रह्म. १३।९,१० लोकेऽस्मिन् ( लोके च ).

(३) वायु. ७०।७२ ; ब्रह्माण्ड. ३।८।७८,७९ चोक्तः स ( चोक्तो वै ) ; हरि. १।३१।१४ चोक्तः स पतन्निह ( चोक्तो वै पतमानो ) ब्रह्मर्षेर्वचनात्तस्य ( वचनात्तस्य विप्रर्षेः ) ; लिङ्ग. १।६३।७२,७३ (स्वस्त्यस्तु हि तवेत्युक्ते पतन्निह दिवाकरः । ब्रह्मर्षेर्वचनात्तस्य पपात न विभुर्दिवः ) ; ब्रह्म. १३।१०,११ चोक्तः स पतन्निह ( चोक्त्वा वै पतमानो ) ब्रह्मर्षेर्वचनात्तस्य ( वचनात्तस्य विप्रर्षेः ).

(४) लिङ्ग. १।६३।७३.

(५) वायु. ७०।७३ उत्तरार्धे ( यज्ञेष्वत्रिधनश्चैव सुरैर्यश्च प्रवर्तितः । ? ) ; ब्रह्माण्ड. ३।८।७९,८० श्चैर्धनं (निधनं) ; हरि. १।३१।१५ ; ब्रह्म. १३।११,१२ उत्तरार्धे ( यज्ञेष्वत्रेर्धनं चैव देवैर्यस्य प्रतिष्ठितम् । ).

[1]स तासु जनयामास पुत्रिकासु सनामकान् ।
दश पुत्रान् महासत्त्वांस्तपस्युग्रे रतांस्तथा ॥
[2]ते तु गोत्रकरा विप्रा ऋषयो वेदपारगाः ।
स्वस्त्यात्रेया इति ख्याताः किन्त्वत्रिधनवर्जिताः ॥
[3]तेषां द्वौ ख्यातयशसौ ब्रह्मिष्ठौ सुमहौजसौ ।
दत्तो ह्यनुमतो ज्येष्ठो दुर्वासास्तस्य चानुजः ॥
[4]यवीयसी स्वसा तेषाममला ब्रह्मवादिनी ।
[5]अत्राप्युदाहरन्तीमं श्लोकं पौराणिकाः पुरा ॥
अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषम् ।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते ॥
[6]तस्य गोत्रान्वयाज्जाताश्चत्वारः प्रथिता भुवि ।
श्यावाश्वा मुद्गलाश्चैव वाग्भूतकगविष्ठिराः ।
एतेऽत्रीणां तु चत्वारः स्मृताः पक्षा महौजसः ॥

(१) वायु. ७०।७४ ( स तास्वजनयत्पुत्रानात्मतुल्याननामकान् । दश तास्वेव महता तपसा भावितप्रभाः ॥ ) ; ब्रह्माण्ड. ३।८।८०,८१ पुत्रिकासु सनामकान् ( पुत्रानात्मसमानकान् ) उत्तरार्धे ( दश तान् वै सुमहता तपसा भावितः प्रभुः । ) ; हरि. १।३१।१६ महासत्त्वान् ( महात्मा स ) तथा ( सदा ) ; लिङ्ग. १।६३।७४ पुत्रिकासु सनामकान् ( पुनः पुत्रांस्तपोधनः ) उत्तरार्धं नास्ति ; ब्रह्म. १३।१२,१३ सु सनामकान् ( स्वात्मकामजान् ).

(२) वायु. ७०।७५ ( स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः । ) पूर्वार्धं नास्ति ; ब्रह्माण्ड. ३।८।८१ सर्वं वायुवत् ; हरि. १।३१।१७ विप्रा (राजन्) ; लिङ्ग. १।६३।७५ सर्वं वायुवत् ; ब्रह्म. १३।१३,१४ किन्त्वत्रि ( किंचात्रि ).

(३) वायु. ७०।७५,७६ द्वौ ख्यात ( विख्यात ) दत्तो ह्यनुमतो ( दत्तात्रेयस्तयस्य ) ; ब्रह्माण्ड. ३।८।८२ ; लिङ्ग. १।६३।७५,७६ सुम ( च म ) ह्यनुमतो ( ह्यत्रिवरो ).

(४) वायु. ७०।७६ स्वसा तेषाममला ( सुता तस्यामवला ) ; ब्रह्माण्ड. ३।८।८३ स्वसा तेषाममला ( सुता तेषामवला ) ; लिङ्ग. १।६३।७६ उत्तरार्धं नास्ति.

(५) वायु. ७०।७७ ; ब्रह्माण्ड. ३।८।८४.

(६) वायु. ७०।७८ न्वयाज्जा ( न्वये जा ) श्यावाश्वा ( श्यावाश्व ) वाग्भूतक ( वल्गारक ) ऽत्रीणां ( नृणां ) जसः ( जसाम् ) ; ब्रह्माण्ड. ३।८।८५,८६ ; लिङ्ग. १।६३।७७,७८ गोत्रान्वयाज्जा ( गोत्रद्वये जा ) द्वितीयार्धे ( श्यावश्च प्रत्वसश्चैव ववल्गुश्चाथ गह्वरः । ) एतेऽत्रीणां तु ( आत्रेयाणां च ) महौजसः ( महात्मनाम् ).

वसिष्ठवंशः वसिष्ठप्रमुखगोत्राणि च

[1]कश्यपान्नारदश्चैव पर्वतोऽरुन्धती तथा ।
जज्ञिरे च त्वरुन्धत्यास्तान्निबोधत सत्तमाः ॥

[2]नारदस्तु वसिष्ठायारुन्धतीं प्रत्यपादयन् ।
ऊर्ध्वरेता महातेजा दक्षशापात्तु नारदः ॥

[3]पुरा देवासुरे तस्मिन्संग्रामे तारकामये ।
अनावृष्टया हते लोके व्यग्रे शक्रे सुरैः सह ।
वसिष्ठस्तपसा धीमान् धारयामास वै प्रजाः ॥

[4]अन्नौषधं मूलफलमोषधीश्च प्रवर्तयन् ।
तास्तेन जीवयामास कारुण्यादौषधेन तु ॥

[5]अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयत्सुतम् ।
स्वाङ्गजं जनयच्छक्तिरदृश्यन्त्यां पराशरम् ॥

[6]रक्षसा भक्षिते शक्तौ रुधिरेण तु वै तदा ॥

[7]काल्यां पराशराज्जज्ञे कृष्णद्वैपायनः प्रभुः ।
द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ॥

[1]उत्पद्यन्त पडिमे पीवर्यां शुकसूनवः ।
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ॥

[2]कन्या कीर्तिमती चैव योगमाता धृतव्रता ।
जननी ब्रह्मदत्तस्य पत्नी सा त्वणुहस्य च ॥

[3]श्वेतः कृष्णश्च गौरश्च श्यामो धूम्रस्तथाऽरुणः ।
नीलो बादरिकश्चैव सर्वे चैते पराशराः ।
पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम् ॥

[4]अत ऊर्ध्वं निबोध त्वमिन्द्रप्रमतिसंभवम् ।
वसिष्ठस्य कपिञ्जल्यां घृताच्यामुदपद्यत ।
कुणीति यः समाख्यात इन्द्रप्रमतिरुच्यते ॥

[5]पृथोः सुतायाः संभूतः पुत्रस्तस्याभवद्वसुः ।
उपमन्युः सुतस्तस्य यस्येमे ह्यौपमन्यवः ॥

[6]मित्रावरुणयोश्चैव कुण्डिनेयाः परिश्रुताः ।
एकार्षेयास्तथा चान्ये वसिष्ठा नाम विश्रुताः ।
एते पक्षा वसिष्ठानां स्मृता ह्येकादशैव तु ॥

---

( १ ) वायु. ७०।७९ ; ब्रह्माण्ड. ३।८।८६,८७ कश्यपान्ना ( काश्यपो ना ) उत्तरार्धे ( जज्ञिरे मानसा ह्येतेऽरुन्धत्यास्तन्निबोधत । ) ; लिङ्ग. १।६३।७८,७९ ( काश्यपो नारदश्चैव पर्वतोऽनुद्धनस्तथा । जज्ञिरे मानसा ह्येते अरुन्धत्या निबोधत ॥ ) .

( २ ) वायु. ७०।८० ; ब्रह्माण्ड. ३।८।८७,८८ ; लिङ्ग. १।६३।७९,८०.

( ३ ) वायु. ७०।८१ ; ब्रह्माण्ड. ३।८।८८,८९ शक्रे ( शस्ते ) धारया ( जीवया ) ; लिङ्ग. १।६३।८०,८१ तस्मिन्संग्रामे ( युद्धे घोरे वै ) व्यग्रे शक्रे सुरैः ( ह्युग्रे लोकेश्वरैः ) .

( ४ ) वायु ७०।८२ ; ब्रह्माण्ड. ३।८।९० पूर्वार्धे ( अनेकफलमूलिन्य औषधीश्च प्रवर्तयन् । ) तु ( सः ) ; लिङ्ग. १।६३।८२ अन्नौषध ( अन्नोदक ) तास्तेन ( तानेनान् ) तु ( च ) .

( ५ ) वायु. ७०।८३ यत्सुतम् ( यद्द्विजाः ) स्वाङ्गज ( सागर ) क्तिरदृश्यन्त्यां ( क्तेरदृश्यन्ती ) ; ब्रह्माण्ड. ३।८।९१ ; लिङ्ग. १।६३।८३ ( अरुन्धत्यां वसिष्ठस्तु सुतानुत्पादयच्छतम् । ज्यायसो जनयच्छक्तेरदृश्यन्ती पराशरम् ॥ ) .

( ६ ) लिङ्ग. १।६३।८४.

( ७ ) वायु. ७०।८४ काल्यां ( काली ) नः प्रभु ( नं प्रभुम् ) , ब्रह्माण्ड. ३।८।९२ ; लिङ्ग. १।६३।८४, ८५ ( काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुम् । द्वैपायनो ह्यरण्यां वै शुकमुत्पादयत्सुतम् ॥ ).

( १ ) वायु. ७०।८५ पूर्वार्धे ( उत्पद्यन्ते च पीवर्यां पडिमे शुकसूनवः । ) ; ब्रह्माण्ड. ३।८।९३ ; लिङ्ग. १।६३।८५, ८६ पूर्वार्धे ( उपमन्युं च पीवर्यां विद्धीमे शुकसूनवः । ) गौरश्च ( गौरस्तु ).

( २ ) वायु. ७०।८६ धृतव्रता ( दृढव्रता ) सा त्वणु ( सात्वणु ) ; ब्रह्माण्ड. ३।८।९४ ; लिङ्ग. १।६३।८६, ८७ त्वणु ( त्वनु ).

( ३ ) वायु. ७०।८७ प्रथमद्वितीयार्धयोः ( श्वेताः कृष्णाश्च गौराश्च श्यामा धूम्राः समूल्किाः । कृष्णपा दारकाश्चैव नीलाश्चैव पराशराः ॥ ) परा ( पारा ) ; ब्रह्माण्ड. ३।८।९५, ९६ ( श्वेताः कृष्णाश्च गौराश्च श्यामधूम्राश्च चूडिनः । कृष्मारा दारिकाश्चैव नीलाश्चैव पराशराः ॥ ) परा ( पारा ) ; लिङ्ग. १।६३।८७, ८८.

( ४ ) वायु. ७०।८८ त्वमिन्द्रप्रमति ( ध्यमिन्द्रप्रतिम ) च्यामुद ( च्यां सम ) कुणीति यः ( कुणीतियः ) प्रमतिरु ( प्रतिम उ ) ; ब्रह्माण्ड. ३।८।९६, ९७ ; लिङ्ग. १।६३।८९,९० त्वमिन्द्रप्रमति ( ध्वमिन्द्रप्रमिति ) कपिञ्जल्यां ( कपिञ्जल्यो ) कुणीति ( त्रिमूर्तिः ) प्रमति ( प्रमिति ).

( ५ ) वायु. ७०।८९ स्तौर ( उर ) ; ब्रह्माण्ड. ३।८।९८ सुतायाः (सुतायां) ; लिङ्ग. १।६३।९०, ९१ सुतायाः ( सुतायां ) पुत्र ( भद्र ) यस्येमे ( बहवो ).

( ६ ) वायु ७०।९० कुण्डिनेयाः ( कुण्डिनो ये ) स्तथा चान्ये ( स्तथैवान्ये ) श्चैव ( एका ) ; ब्रह्माण्ड. ३।८।९९, १०० ;

[1]इत्येते ब्रह्मणः पुत्रा मानसा ह्यष्ट विश्रुताः ।
भ्रातरः सुमहाभागा येषां वंशाः प्रतिष्ठिताः ॥
[2]त्रीन् लोकान्धारयन्तीमान् देवर्षिगणसंकुलान् ।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।
यैर्व्याप्ता पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥

नव ब्रह्मपुत्रास्तेषां वंशाश्च

[3]यदाऽस्य ताः प्रजाः सर्वा न व्यवर्धन्त धीमतः ।
अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् ॥
[4]भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ।
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसम् ॥
[5]नैव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥
[6]प्रसूत्यां च तथा दक्षश्चतस्रो विंशतिं तथा ।
ससर्ज कन्यास्तासां च सम्यङ्नामानि मे शृणु ॥
[7]श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।
बुद्धिर्लज्जा वपुः शान्तिः ऋद्धिः कीर्तिस्त्रयोदशी ॥
[1]पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः प्रभुः ।
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ॥
[2]ख्यातिः सत्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ।
सन्नतिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ॥
[3]भृगुर्भवो मरीचिश्च तथा चैवाङ्गिरा मुनिः ।
पुलस्त्यः पुलहश्चैव क्रतुश्चर्षिवरस्तथा ॥
[4]अत्रिर्वसिष्ठो वह्निश्च पितरश्च यथाक्रमम् ।
ख्यात्याद्या जगृहुः कन्या मुनयो मुनिसत्तमाः ॥
[5]भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्विष्णुपरिग्रहः ।
तथा धातृविधातारौ ख्यात्यां जातौ सुतौ भृगोः ॥
[6]आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ।
धाताविधात्रोस्ते भार्ये तयोर्जातौ सुतावुभौ ॥

---

लिङ्ग. १।६३।९१, ९२ कुण्डिनेयाः ( कौण्डिन्या ये ) वसिष्ठा ( वासिष्ठा ) ह्येकादशैव तु ( दश महात्मनाम् ).

( १ ) वायु. ७०।९१ ; ब्रह्माण्ड. ३।८।१००, १०१ ह्यष्ट ( ह्यष्ट ) ; लिङ्ग. १।६३।९३ ह्यष्ट विश्रुताः ( विश्रुता भुवि ) उत्तरार्धे ( भर्तारश्च महाभागा एषां वंशाः प्रकीर्तिताः ॥ ).

( २ ) वायु. ७०।९२ ; ब्रह्माण्ड. ३।८।१०१,१०२ यैर्व्याप्ता पृथिवी सर्वा ( व्याप्ता यैस्तु त्रयो लोकाः ) ; लिङ्ग. १।६३।९४, ९५ प्रथमार्धे ( त्रिलोकधारणे शक्ता देवर्षिकुलसंभवाः । ) यैर्व्याप्ता पृथिवी सर्वा ( यैस्तु व्याप्तास्त्रयो लोकाः ) .

( ३ ) मार्क. ५०।४ ; विष्णु. १।७।४ ; पद्म. ५।३।१५८, १५९ नोऽस्य ( नाऽस्य ) .

( ४ ) मार्क. ५०।५ ; विष्णु. १।७।५ मानसम् ( मानसान् ) ; पद्म. ५।३।१५९,१६० पुलस्त्य पुलहं ( च पुलहं चैव ) मानसम् ( मानसान् ) .

( ५ ) मार्क. ५०।६; विष्णु. १।७।६ ; पद्म. ५।३।१६०.

( ६ ) मार्क. ५०।१९,२० विंशतिं तथा ( तिस्रथा ) ; विष्णु. १।७।२० च तथा ( च तदा ) सां च ( सां तु ) ; गरुड. १।५।२६ ( चतुर्विंशतिकन्यास्य सृष्टवान् दश उत्तमाः । ) ; पद्म. ५।३।१७४ पूर्वार्धे ( प्रसूत्यां च तदा जातास्चत्वारो विंशतिस्तथा । ) सां च ( सां तु ) .

( ७ ) मार्क. ५०।२०,२१ ऋद्धिः ( सिद्धिः ) ; विष्णु. १।७।२१ ; गरुड. १।५।२७ लक्ष्मीः ( क्षमा ) ; पद्म. ५।३।१७५ तुष्टिः पुष्टिः ( पुष्टिस्तुष्टिः ) ऋद्धिः ( सिद्धिः ) .

( १ ) मार्क. ५०।२१, २२ पत्न्यर्थं ( पत्न्यर्थे ) ; विष्णु. १।७।२२ यवीयस्य ( कनीयस्य ) ; गरुड. १।५।२८ णीः प्रभुः ( णीप्रभुः ) उत्तरार्धं नास्ति ; पद्म. ५।३।१७६ यणीः ( यणीं ) शिष्टा ( सृष्टा ).

( २ ) मार्क. ५०।२२,२३ क्षमा तथा ( तथा क्षमा ) सन्नति ( संतति ) ; विष्णु. १।७।२३ ; गरुड. १।५।२८,२९ ; पद्म. ५।३।१७७ सत्यथ ( शान्त्यथ ).

( ३ ) मार्क. ५०।२३, २४ श्चर्षिवरस्तथा ( श्च ऋषयस्तथा ) ; विष्णु. १।७।२४ ; गरुड. १।५।२९, ३० ; पद्म. ५।३।१७८ भवो ( भर्गो ) पुलस्त्यः ( अहं च ).

( ४ ) मार्क. ५०।२४, २५ अत्रिर्वसिष्ठो वह्निश्च ( वसिष्ठोऽत्रिस्तथा वह्नि ) ; विष्णु. १।७।२५ सत्तमाः ( सत्तम ) ; गरुड. १।५।३०, ३१ ; पद्म. ५।३।१७९ मुनिसत्तमाः ( राजसत्तम ).

( ५ ) मार्क. ५२।१४, १५ ( देवौ धाताविधातारौ भृगोः ख्यातिरसूयत । श्रियं च देवदेवस्य पत्नी नारायणस्य या ॥ ) ; विष्णु. १।१०।२ ; गरुड. १।५।८ ( भृगोर्धाताविधातारौ जनयामास सा शुभा । श्रियं च जनयामास पत्नी नारायणस्य या ॥ ) ; कूर्म. १३।१ ( भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया । देवौ धाताविधातारौ मेरोर्जामातरौ शुभौ ॥ ) ; अग्नि. २०।९ ( देवौ धाताविधातारौ भृगोः ख्यातिरसूयत । श्रियं च पत्नी विष्णोर्या स्तुता शक्रेण हृदये ॥ ).

( ६ ) मार्क. ५२।१५, १६ ; विष्णु. १।१०।३ धाताविधात्रोस्ते भार्ये ( भार्ये धातृविधात्रोस्ते ) ; गरुड. १।५।९, १० मेरोः ( मनोः ) ; कूर्म. १३।२ उत्तरार्धे ( तयोर्धातृविधातृभ्यां यौ च जातौ सुतावुभौ ॥ ) ; अग्नि. २०।१० ( धातुर्विधातुर्द्वौ पुत्रौ ).

[1]प्राणश्चैव मृकण्डुश्च पिता मम महायशाः ।
मनस्विन्यामहं तस्मात् पुत्रो वेदशिरा मम ।
धूम्रवत्यां समभवत् प्राणस्यापि निबोध मे ॥

[2]प्राणस्य द्युतिमान् पुत्र उत्पन्नस्तस्य चात्मजः ।
अजराश्च तयोः पुत्राः पौत्राश्च बहवोऽभवन् ॥

[3]पत्नी मरीचेः संभूतिः पौर्णमासमसूयत ।
विरजाः पर्वतश्चैव तस्य पुत्रौ महात्मनः ॥

[4]वंशसंकीर्तने पुत्रान् वदिष्येऽहं द्विजोत्तम ।
स्मृतिश्चाङ्गिरसः पुत्रान् प्रसूता कन्यकास्तथा ॥

[5]सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ।
अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ॥

सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् ।
प्रीत्यां पुलस्त्यभार्यायां दत्तोलिस्तत्सुतोऽभवत् ॥
[1]पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायंभुवेऽन्तरे ।
कर्दमश्चार्ववीरश्च सहिष्णुश्च सुतत्रयम् ॥
[2]क्षमा तु सुषुवे भार्या पुलहस्य प्रजापतेः ।
क्रतोस्तु सन्नतिर्भार्या वालखिल्यानसूयत ॥
[3]षष्टिर्यानि सहस्राणि ऋषीणामूर्ध्वरेतसाम् ।
अङ्गुष्ठपर्वमात्राणां ज्वलद्भास्करतेजसाम् ॥
[5]ऊर्जायां तु वसिष्ठस्य सप्ताजायन्त वै सुताः ।
रजो गात्रोर्ध्वबाहुश्च सवलश्चानघस्तथा ॥
[6]सुतपाः शुक्र इत्येते सर्वे सप्तर्षयः स्मृताः ॥

---

(१) मार्क. ५२।१६, १७ ; विष्णु. १।१०।४ (प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः । ततो वेदशिरा जज्ञे प्राणस्यापि सुतं शृणु ॥) ; गरुड. १।५।१० (प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ।) एतावदेव ; कूर्म. १३।३ (प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः । तथा वेदशिरा नाम) ; अग्नि. २०।१० (क्रमात्प्राणो मृकण्डुकः । मार्कण्डेयो मृकण्डोश्च जज्ञे वेदशिरास्ततः ॥).

(२) मार्क. ५२।१८ ; विष्णु. १।१०।५ (प्राणस्य द्युतिमान्पुत्रो राजवांश्च ततोऽभवत् । ततो वंशो महाभाग विस्तारं भार्गवो गतः ॥) ; कूर्म. १३।३ (प्राणस्य द्युतिमान् सुतः ।).

(३) मार्क. ५२।१९ ; विष्णु. १।१०।६ पर्वतश्चैव (सर्वगश्चैव) ; गरुड. १।५।११ विष्णुवत् ; कूर्म. १३।४,५ (मरीचेरपि संभूतिः पौर्णमासमसूयत । विरजाः पर्वतश्चैव पौर्णमासस्य तौ सुतौ ॥) ; अग्नि. २०।११ (पौर्णमासश्च संभूत्यां मरीचेरभवत्सुतः ।) उत्तरार्धं नास्ति.

(४) मार्क. ५२।२० पूर्वार्धे (तयोः पुत्रांस्तु वक्ष्येऽहं वंशसंकीर्तने द्विज ।) पुत्रान् (पत्नी) ; विष्णु. १।१०।७ ; गरुड. १।५।१२ (स्मृतेश्चाङ्गिरसः पुत्राः प्रसूताः कन्यकास्तथा ।) पूर्वार्धं नास्ति ; कूर्म. १३।८ (स्मृतिश्चाङ्गिरसः पुत्री जज्ञे लक्षणसंयुता ।) पूर्वार्धं नास्ति ; अग्नि. २०।११ (स्मृत्यामङ्गिरसः पुत्राः).

(५) मार्क. ५२।२१ ; विष्णु. १।१०।८ ; गरुड. १।५।१२,१३ ; कूर्म. १३।७,९ पूर्वार्धे (सिनीवालीं कुहूं चैव राकामनुमतीमपि ।) ; अग्नि. २०।११,१२ (सिनीवाली कुहूस्तथा । राका चानुमतिश्चात्रेरनसूयाऽप्यजीजनत् ।).

(१) मार्क. ५२।२२ दत्तोलि (दत्तोऽन्य) ; विष्णु. १।१०।९ दत्तोलि (दम्भोलि) ; गरुड. १।५।१३,१४ ; कूर्म. १३।८,९ उत्तरार्धे (प्रीत्यां पुलस्त्यो भगवान् दम्भोलिमसृजत्प्रभुः ।) ; अग्नि. २०।१२,१३ चैव (पुत्रं).

(२) मार्क. ५२।२३ ; विष्णु १।१०।१० चार्ववीरश्च (चोर्वरीवांश्च) ; गरुड. १।५।१४ कर्दमश्चार्व (कर्मदश्चार्थ) पूर्वार्धं नास्ति ; कूर्म. १३।६,१० उत्तरार्धे (कर्दमं च वरीयांसं सहिष्णुं मुनिसत्तमम् ॥) ; अग्नि. २०।१३ (क्षमायां पुलहाज्जाताः सहिष्णुः सर्वपादिकः ।).

(३) मार्क. ५२।२४ ; विष्णु. १।१०।११ क्रतोस्तु (क्रतोश्च) ; गरुड. १।५।१५ क्रतोस्तु सन्नति (क्रतोश्च सुमति) ; कूर्म. १३।११ (पुत्राणां षष्टिसाहस्रं संततिः सुषुवे क्रतोः । ते चोर्ध्वरेतसः सर्वे वालखिल्या इति स्मृताः ॥) ; अग्नि. २०।१४ (सन्नत्यां च क्रतोरासन्वालखिल्या महौजसः ।)

(४) मार्क. ५२।२५ उत्तरार्धं नास्ति ; विष्णु. १।१०।१२ ऋषीणा (मुनीना) ; गरुड. १।५।१६ तेजसाम् (वर्चसाम्) ; अग्नि. २०।१४ (अङ्गुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्रिणः ।).

(५) मार्क. ५२।२५, २६ ; विष्णु. १।१०।१३ वै तु (वै च) सवल (सवन) ; गरुड. १।५।१७ सवल (शरल) ; कूर्म. १३।१२, १३ पूर्वार्धे (वसिष्ठश्च तपोर्जायां सप्त पुत्रानजीजनत् ।) गात्रो (मात्रो) सवलश्चानघ (सवनश्चानघ) ; अग्नि. २०।१५ (ऊर्जायां च वसिष्ठाच्च राजा गात्रोर्ध्वबाहुकः । सवनश्चानघः शुक्रः सुतपाः सप्त चर्षयः ॥).

(६) मार्क. ५२।२६, २७ शुक्र (शुभ) ; विष्णु. १।१०।१४ वः स्मृताः (येऽमलाः) ; गरुड. १।५।१८ वः स्मृताः (येऽमलाः) ; कूर्म. १३।१३ (सुतपाः शुक्र इत्येते सप्त पुत्रा महौजसः ।).

सप्त ब्रह्मपुत्रा वंशकराः

[1] मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठं च महातेजाः सोऽसृजत्सप्त मानसान् ॥
[2] सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥
[3] नारायणात्मकानां वै सप्तानां ब्रह्मजन्मनाम् ।
ततोऽसृजत् पुनर्ब्रह्मा रुद्रं रोषात्मसंभवम् ॥

[1] सनत्कुमारं च विभुं पूर्वेषामपि पूर्वजम् ।
सप्तैते जनयन्ति स्म प्रजा रुद्रश्च भारत ॥
[2] स्कन्दः सनत्कुमारश्च तेजः संक्षिप्य तिष्ठतः ।
तेषां सप्त महावंशा दिव्या देवगणान्विताः ।
क्रियावन्तः प्रजावन्तो महर्षिभिरलङ्कृताः ॥

( १ ) हरि. १।१।३३ ; शिवध. ५१।१६ इं च ( इं तु ) ; ब्रह्म. १।४३,४४ रसं ( रसौ ) ; भविष्य. १।२।६१,६२ ( पुलह क्रतुं पुलस्त्यं च अत्रिमङ्गिरसं तथा । मरीचिं चापि राजेन्द्र योऽसावाद्यः प्रजापतिः ॥ ) ; अग्नि. १७।१५ उत्तरार्धे ( वसिष्ठं मानसान्सप्त ब्राह्मणानिति निश्चितम् । ) .

( २ ) हरि. १।१।३४ ; शिवध. ५१।१७ ; ब्रह्म. १।४४.

( ३ ) हरि. १।१।३४,३५ ; शिवध. ५१।१७ रुद्रं रोषात्मसंभवम् ( रुद्रानेवात्मसम्भवान् ) ; ब्रह्म. १।४५ वै ( तु ) पुनर्ब्र ( पुरा ब्र ) ; अग्नि. १७।१४ ( सनत्कुमारं रुद्रं च ससर्ज क्रोधसंभवम् । ) पूर्वार्धं नास्ति.

( १ ) हरि १।१।३५,३६ ; शिवध. ५१।१८ विभुं पूर्वेषा ( ऋषिं सर्वेषा ) उत्तरार्धे ( सप्त त्वेते प्रजायन्ते पश्चाद्रुद्राश्च सर्वतः । ) ; ब्रह्म. १।४६ उत्तरार्धे ( सप्तस्वेता अजायन्त प्रजा रुद्राश्च भो द्विजाः । ) ; अग्नि. १७।१६ रुद्रश्च भारत ( रुद्राश्च सत्तम ) पूर्वार्धं नास्ति.

( २ ) हरि. १।१।३६,३७ ; शिवध. ५१।१९ ( अतः सनत्कुमारस्तु तेजः संक्षिप्य तिष्ठति । तेषां सप्त महावंशा दिव्यदेवर्षिपूजिताः ॥ ) ; ब्रह्म. १।४७,४८.

## [ ६ ]

दीर्घतमा गौतमः, गौतमगोत्रं च क्षत्रियाणामन्तर्भावेश

[1] जामदग्न्येन रामेण पितुर्वधममृष्यता ।
क्रुद्धेन च महाभागे हैहयाधिपतिर्हतः ॥
शतानि दश बाहूनां निकृत्तान्यर्जुनस्य वै ।
लोकस्याचरितो धर्मस्तेनाति किल दुश्चरः ॥
पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता ।
निर्दग्धं क्षत्रमसकृद्रथेन जयता महीम् ॥
एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना ।
त्रिः सप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥
एवं निःक्षत्रिये लोके कृते तेन महर्षिणा ।
ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः ॥
उत्पादितान्यपत्यानि ब्राह्मणैर्नियतात्मभिः ।
पाणिग्राहस्य तनय इति वेदेषु निश्चितम् ॥
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः ।
लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ॥

ततः पुनः समुदितं क्षत्रं समभवत्तदा ।
इमं चैवात्र वक्ष्येऽहमितिहासं पुरातनम् ॥
अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा ।
ममता नाम तस्यासीद्भार्या परमसंमता ॥
उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतां सोऽन्वपद्यत ॥
उवाच ममता तं तु देवरं वदतां वरम् ।
अन्तर्वत्नी अहं भ्रात्रा ज्येष्ठेनारम्यतामिति ॥
अयं च मे महाभाग कुक्षावेव बृहस्पते ।
औतथ्यो वेदमत्रैव षडङ्गं प्रत्यधीयत ॥
अमोघरेतास्त्वं चापि नूनं भवितुमर्हसि ।
तस्मादेवंगतेऽद्य त्वमुपारमितुमर्हसि ॥
एवमुक्तस्तया सम्यग्बृहत्तेजा बृहस्पतिः ।
कामात्मानं तदात्मानं न शशाक नियच्छितुम् ॥
संबभूव ततः कामी तया सार्धमकामया ।
उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत ॥

( १ ) भा. १।१०४।१-५६.

भोस्तात कन्यस वदे द्वयोर्नास्त्यत्र संभवः ।
अल्पावकाशो भगवन् पूर्वं चाहमिहागतः ॥
अमोघरेताश्च भवान्न पीडां कर्तुमर्हति ।
अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पतिः ॥
जगाम मैथुनायैव ममतां चारुलोचनाम् ।
शुक्रोत्सर्गे ततो बुद्ध्वा तस्या गर्भगतो मुनिः ॥
पद्भ्यामारोधयन्मार्गं शुक्रस्य च बृहस्पतेः ।
स्थानमप्राप्तमथ तच्छुक्रं प्रतिहतं तदा ॥
पपात सहसा भूमौ ततः क्रुद्धो बृहस्पतिः ।
तं दृष्ट्वा पतितं शुक्रं शशाप स रुषान्वितः ॥
उतथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ।
यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति ॥
एवमात्थ वचस्तस्मात् तमो दीर्घं प्रवेक्ष्यसि ।
स वै दीर्घतमा नाम शापादृषिरजायत ॥
बृहस्पतेर्बृहत्कीर्तेर्बृहस्पतिरिवौजसा ।
जात्यन्धो वेदवित्प्राज्ञः पत्नीं लेभे स विद्यया ॥
तरुणीं रूपसंपन्नां प्रद्वेषीं नाम ब्राह्मणीम् ।
स पुत्राञ्जनयामास गौतमादीन् महायशाः ॥
ऋषेरुतथ्यस्य तदा संतानकुलवृद्धये ।
धर्मात्मा च महात्मा च वेदवेदाङ्गपारगः ॥
गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः ।
प्रावर्तत तदा कर्तुं श्रद्धावांस्तमशङ्कया ॥
ततो वितथमर्यादं तं दृष्ट्वा मुनिसत्तमाः ।
क्रुद्धा मोहाभिभूतास्ते सर्वे तत्राश्रमौकसः ॥
अहोऽयं भिन्नमर्यादो नाश्रमे वस्तुमर्हति ।
तस्मादेनं वयं सर्वे पापात्मानं त्यजामहे ॥
इत्यन्योऽन्यं समाभाष्य ते दीर्घतमसं मुनिम् ।
पुत्रलाभा च सा पत्नी न तुतोष पतिं तदा ॥
प्रद्विषन्तीं पतिर्भार्यां किं मां द्वेक्षीति चाब्रवीत् ।

प्रद्वेष्युवाच–

भार्याया भरणाद्भर्ता पालनाच्च पतिः स्मृतः ॥
अहं त्वद्भरणाशक्ता जात्यन्धं ससुतं तदा ।
नित्यकालं श्रमेणार्ता न भरेयं महातपः ॥

भीष्म उवाच–

तस्यास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः ।
प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा ॥
नीयतां क्षत्रियकुले धनार्थश्च भविष्यति ।

प्रद्वेष्युवाच–

त्वया दत्तं धनं विप्र नेच्छेयं दुःखकारणम् ॥
यथेष्टं कुरु विप्रेन्द्र न भरेयं पुरा यथा ।

दीर्घतमा उवाच–

अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता ॥
एक एव पतिर्नार्या यावज्जीवं परायणम् ।
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम् ॥
अभिगम्य परं नारी पतिष्यति न संशयः ।
अपतीनां तु नारीणामद्यप्रभृति पातकम् ॥
यद्यस्ति चेद्धनं सर्वं वृथाभोगा भवन्तु ताः ।
अकीर्तिः परिवादाश्च नित्यं तासां भवन्तु वै ॥
इति तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता ।
गङ्गायां नीयतामेष पुत्रा इत्येवमब्रवीत् ॥
लोभमोहाभिभूतास्ते पुत्रास्तं गौतमादयः ।
काष्ठे समुद्रे प्रक्षिप्य गङ्गायां समवासृजन् ॥
न स्यादन्धश्च वृद्धश्च भर्तव्योऽयमिति स्म ते ।
चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् ॥
सोऽनुस्रोतस्तदा राजन् प्लवमान ऋषिस्ततः ।
जगाम सुबहून् देशानन्धस्तेनोडुपेन ह ॥
तं तु राजा बलिर्नाम सर्वधर्मविशारदः ।
अपश्यन्मज्जनगतः स्रोतसाऽभ्याशमागतम् ॥
जग्राह चैनं धर्मात्मा बलिः सत्यपराक्रमः ।
ज्ञात्वा चैनं स वव्रेऽथ पुत्रार्थं मनुजर्षभ ॥
संतानार्थं महाभाग भार्यासु मम मानद ।
पुत्रान् धर्मार्थकुशलानुत्पादयितुमर्हसि ॥
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ।
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ॥
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ।
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥
तस्यां काक्षीवदादीन् स शूद्रयोनावृषिर्वशी ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥

काक्षीवदादीन् पुत्रांस्तान् दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममैते इति वीर्यवान् ॥
नेत्युवाच महर्षिस्तं ममैवैत इति ब्रुवन् ।
शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ॥
अन्धं वृद्धं च मां मत्वा सुदेष्णा महिषी तव ।
अवमन्य ददौ मूढा शूद्रां धात्रेयिकां हि मे ॥
ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
बलिः सुदेष्णां भार्यां च तस्मै स प्राहिणोत्पुनः ॥
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।
भविष्यन्ति कुमारास्ते तेजसाऽऽदित्यवर्चसः ॥
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामकथिता भुवि ॥
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ॥
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च स्मृताः ।
एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः ॥
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ।
जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ॥
एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ॥

ऋषय ऊचुः–

[1]कथं बलेः सुताः पञ्च जनिताः क्षेत्रजाः प्रभो ।
ऋषिणा दीर्घतमसा ह्येतन्नप्रब्रूहि पृच्छताम् ॥

सूत उवाच–

[2]उशिजो नाम विख्यात आसीद्धीमानृषिः पुरा ।
भार्या वै ममता नाम बभूवास्य महात्मनः ॥

(१) वायु ९९।३५ ह्येतन्न (एतन्नो) ; ब्रह्माण्ड. ३।७४।३५; मत्स्य. ४८।३०,३१ (कथ बलेः सुता जाताः पञ्च तस्य महात्मनः । किनाम्नी महिषी तस्य जनिता कतम ऋषिः ॥ कथं चोत्पादितास्तेन तन्नः प्रब्रूहि पृच्छताम् । माहात्म्यं च प्रभावं च निखिलेन वदस्व तत् ॥ ) .

(२) वायु. ९९।३६ उशिजो (अशिजो) ; ब्रह्माण्ड. ३।७४।३६ ; मत्स्य. ४८।३२ पूर्वार्धे ( अयोशिज इति ख्यात आसीद्विद्वानृषिः पुरा । ) भार्या ( पत्नी ) .

[1]उशिजस्य कनीयांस्तु पुरोधा यो दिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतां सोऽभ्यपद्यत ॥
[2]उवाच ममता तं तु बृहस्पतिमनिच्छती ।
अन्तर्वत्न्यस्मि ते भ्रातुर्ज्येष्ठस्यास्य च भामिनी ॥
[3]अयं हि मे महान् गर्भो रोरवीति बृहस्पते ।
अजस्रं ब्रह्म चाभ्यस्य षडङ्गं वेदमुद्गिरन् ॥
[4]अमोघरेतास्त्वं चापि न मां भजितुमर्हसि ।
अस्मिन्नेव गते काले यथा वा मन्यसे प्रभो ॥
[5]एवमुक्तस्तया सम्यग्बृहत्तेजा बृहस्पतिः ।
कामात्मानं महात्माऽपि नात्मानं सोऽभ्यधारयत् ॥
[6]संबभूवैव धर्मात्मा तया सार्धं बृहस्पतिः ।
उत्सृजन्तं तदा रेतो गर्भस्थः सोऽभ्यभाषत ॥
[7]शुक्रं त्याक्षीश्च मा जीव द्वयोर्नेहास्ति संभवः ।
अमोघरेतास्त्वं चापि पूर्वं चाहमिहागतः ॥

(१) वायु. ९९।३७ उशिजस्य (अशिजस्य) ; ब्रह्माण्ड. ३।७४।३७ ; मत्स्य. ४८।३३ ( उशिजस्य यवीयान्वै भ्रातृपत्नीमकामयत् । बृहस्पतिर्महातेजा ममतामेत्य कामतः ॥ ) .

(२) वायु. ९९।३८ ; ब्रह्माण्ड. ३।७४।३८ ; मत्स्य. ४८।३४ बृहस्पतिमनिच्छती ( देवर वरवर्णिनी ) स्यास्य च भामिनी ( स्य तु विरम्यताम् ) .

(३) वायु. ९९।३९ महान् गर्भो रोरवीति ( महागर्भो रोचतेऽति ) *अजस्रं ( अशिजं )* ; ब्रह्माण्ड. ३।७४।३९ ; मत्स्य. ४८।३५ ( अयं तु मे महाभाग गर्भः कुक्ष्येद्बृहस्पते । औशिजो भ्रातृजन्यस्ते सोपाङ्गं वेदमुद्गिरन् ॥ ) .

(४) वायु. ९९।४० ; ब्रह्माण्ड. ३।७४।४० गते ( यथा ) प्रभो ( विभो ) ; मत्स्य. ४८।३६ चैव ( चैव ) .

(५) वायु. ९९।४१ ; ब्रह्माण्ड. ३।७४।४१ ; मत्स्य. ४८।३७ स्तया ( स्तथा ) उत्तरार्धे ( कामात्मा स महात्माऽपि न मनः सोऽभ्यवारयत् । ).

(६) वायु. ९९।४२ ; ब्रह्माण्ड. ३।७४।४२ सोऽभ्य ( सोऽस्य ) ; मत्स्य. ४८।३८ सार्धं बृहस्पतिः ( सार्धमकामया ) उत्तरार्धे ( उत्सृजन्तं तु तद्रेतो वाचं गर्भोऽभ्यभाषत । ).

(७) वायु. ९९।४३ ; ब्रह्माण्ड. ३।७४।४३ ; मत्स्य. ४८।३९ पूर्वार्धे ( भो तात वाचामधिप द्वयोर्नास्तीह संस्थितिः । ).

शशाप तं तदा क्रुद्ध एवमुक्तो बृहस्पतिः ।
उशिजस्य सुतं भ्रातुर्गर्भस्थं भगवानृषिः ॥

[2]यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति ।
मामेवमुक्तवान्मोहात्तमो दीर्घं प्रवेक्ष्यसि ॥

[3]ततो दीर्घतमा नाम शापादृषिरजायत ।
अथौशिजो बृहत्कीर्तिर्बृहस्पतिरिवौजसा ॥

[4]ऊर्ध्वरेतास्ततश्चापि न्यवसद्भ्रातुराश्रमे ।
गोधर्मं सौरभेयात्तु वृषभाच्छ्रुतवान् प्रभोः ॥

[5]प्रसादतो वृषेन्द्रस्य गोधर्मं जगृहेऽथ सः ।
मनसैव तदा दध्रे तद्विधस्तत्परायणः ॥

[6]ततो यवीयसः पत्नीमौतथ्यस्याभ्यमन्यत ।
विचेष्टमानां रुदतीं दैवात्संमूढचेतनः ॥

[7]अवलेपं तु तं मत्वा शरद्वांस्तस्य नाक्षमत् ।
गोधर्मं वै बलं कृत्वा स्नुषां स ह्यभ्यमन्यत ॥

(१) वायु. ९९।४४ उशिजस्य (अशिजं त); ब्रह्माण्ड. ३।७४।४४; मत्स्य. ४८।४० शशाप त तदा (सोऽशपत्त ततः) उशिजस्य सुत (पुत्र ज्येष्ठस्य वै).

(२) वायु. ९९।४५; ब्रह्माण्ड. ३।७४।४५, मत्स्य. ४८।४१ सर्वभूतेप्सिते सति (गर्भस्थोऽपि निषेधसि) मोहात्तमो (तस्मात्तमो).

(३) वायु. ९९।४६ अथौ (अथा), ब्रह्माण्ड. ३।७४।४६; मत्स्य. ४८।४२ अथौशिजो (अतोऽशजो).

(४) वायु. ९९।४७ प्रभो (प्रभो); ब्रह्माण्ड. ३।७४।४७; मत्स्य. ४८।४३ (ऊर्ध्वरेतास्ततोऽसौ वै वसते भ्रातुराश्रमे। स धर्मान् सौरभेयांस्तु वृषभात् श्रुतवांस्तत. ॥)

(५) वायु. ९९।५७ (प्रसादिते गते तस्मिन् गोधर्मं भक्तितस्तु तम्। मनसैव तदादत्ते तन्निष्ठस्तत्परायण. ॥); ब्रह्माण्ड. ३।७४।५७, मत्स्य. ४८।५२ (प्रसादिते गते तस्मिन् गोधर्मं भक्तितस्तु स। मनसैव समादध्यौ तन्निष्ठस्तत्परो हि स ॥).

(६) वायु ९९।५८; ब्रह्माण्ड. ३।७४।५८; मत्स्य. ४८।५३ औतथ्यस्याभ्यमन्यत (गौतमस्याभ्यपद्यत) उत्तरार्धं नास्ति.

(७) वायु ९९।५९ ह्यभ्य (सम), ब्रह्माण्ड. ३।७४।५९, मत्स्य. ४८।५३,५४ (कृतावलेपां तां मत्वा सोऽनड्वानिव न क्षमः। गोधर्मं तु पर मत्वा स्नुषां तामभ्यपद्यत ॥).

[1]विपर्ययं तु तं दृष्ट्वा शरद्वान्प्रविचिन्त्य च ।
भविष्यमर्थं ज्ञात्वा च महात्मा त्वयमत्य तम् ॥

[2]प्रोवाच दीर्घतमसं क्रोधात्संरक्तलोचनः ।
गम्यागम्यं न जानीषे गोधर्मात्प्रार्थयन् स्नुषाम् ॥

[3]दुर्वृत्तं त्वां त्यजाम्येष गच्छ त्वं स्वेन कर्मणा ।
यस्मात्त्वमन्धो वृद्धश्च भर्तव्यो दुरनुष्ठितः ।
तेनासि त्वं परित्यक्तो दुराचारोऽसि मे मतिः ॥

सूत उवाच—

[4]कर्मण्यस्मिंस्ततः क्रूरे तस्य बुद्धिरजायत ।
निर्भर्त्स्य चैव बहुशो बाहुभ्यां परिगृह्य च ।
काष्ठे समुद्गे प्रक्षिप्य गङ्गाम्भसि समुत्सृजत् ॥

[5]उह्यमानः समुद्गस्तु सप्ताहं स्रोतसा तदा ।
तं सस्त्रीको बलिर्नाम राजा धर्मार्थतत्त्ववित् ।
अपश्यन्मज्जमानं तु स्रोतसाऽभ्याशमागतम् ॥

[6]तं गृहीत्वा स धर्मात्मा बलिर्वैरोचनस्तदा ।
अन्तःपुरे जुगोपैनं भक्ष्यैर्भोज्यैश्च तर्पयन् ॥

(१) वायु. ९९।६० प्रविचिन्त्य च (प्रत्यचिन्तयत्) त्वयमत्य तम् (त्व न मृत्युताम्); ब्रह्माण्ड. ३।७४।६०; मत्स्य. ४८।५५ (भाव्यमर्थं तु तं ज्ञात्वा माहात्म्यात्तमुवाच सः। विपर्ययं तु त्वं लब्ध्वा अनड्वानिव वर्तसे ॥).

(२) वायु. ९९।६१; ब्रह्माण्ड. ३।७४।६१; मत्स्य. ४८।५६ स्नुषाम् (सुताम्) पूर्वार्धं नास्ति.

(३) वायु. ९९।६२ त्व त्वां (तत्त्वं); ब्रह्माण्ड ३।७४।६२,६३ मतिः (मतः); मत्स्य. ४८।५६,५७ म्येष (म्यद्य) नुष्ठितः (धिष्ठितः) तृतीयार्धं नास्ति.

(४) वायु. ९९।६३ काष्ठे समुद्गे (कोष्ठे समुद्रे); ब्रह्माण्ड. ३।७४।६३, ६४ वायुवत्; मत्स्य. ४८।५४, ५७ चैव बहुशो (चैनं दृष्ट्वा च) परि (सम्प्र) प्रथमार्धं नास्ति.

(५) वायु. ९९।६४; ब्रह्माण्ड. ३।७४।६५, ६६ साऽभ्या (सोऽभ्या), मत्स्य. ४८।५८ (तमुह्यमानं वेगेन स्रोतसोऽभ्याशमागत·।) प्रथमद्वितीयार्धे न स्त·.

(६) वायु. ९९।६५; ब्रह्माण्ड. ३।७४।६६, ६७; मत्स्य. ४८।५८, ५९ त गृहीत्वा (जग्राह तं) चन (चनि) भक्ष्यैर्भो (भक्ष्यभो).

महायोगी स तु वलिर्बद्धो यः स महामनाः ।
पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि ॥

अङ्गं स जनयामास वङ्गं सुह्मं तथैव च ।
पुण्ड्रं कलिङ्गं च तथा वालेयं क्षत्रमुच्यते ॥

वालेया ब्राह्मणाश्चैव तस्य वंशकराः प्रभोः ।
बलेस्तु ब्रह्मणा दत्ता वराः प्रीतेन धीमतः ॥

महायोगित्वमायुश्च कल्पस्य परिमाणकम् ।
संग्रामे चाप्यजेयत्वं धर्मे चैव प्रभावतः ॥

त्रैलोक्यदर्शनं चैव प्राधान्यं प्रसवे तथा ।
बले चाप्रतिमत्वं वै धर्मतत्त्वार्थदर्शनम् ॥

चतुरो नियतान् वर्णांस्त्वं वै स्थापयिता भुवि ।
इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ ॥

कालेन महता विद्वान् स्वं वै स्थानमुपागतः ।
तेषां जनपदाः पञ्च अङ्गा वङ्गाः ससुह्मकाः ।
कलिङ्गाः पुण्ड्रकाश्चैव ... ... ... ॥

---

शुनः शुनपसो ( शुनपस्तनयो ) मनुष्य ( मानुष ) वै ( तु ) प्रजेप्सया ( प्रजेच्छया ) ; हरि. १।३१।३२ फेनस्य ( फेनात्तु ) उत्तरार्धं ( जातो मानुषयोनौ तु स राजा काञ्चनेषुधिः । ) ; ब्रह्म. १३।२८,२९ फेनस्य ( फेनस्य ) शुनः ( ततः ) उत्तरार्धं हरिवत्.

( १ ) वायु. ९९।२७ पञ्च वंशकरान् ( चातुर्वर्ण्यकरान् ) ; ब्रह्माण्ड. ३।७४।२६,२७ वायुवत् ; मत्स्य. ४८।२४ ( महायोगी तु स वलिर्बद्धो बन्धैर्महात्मना । पुत्रानुत्पादयामास क्षेत्रजान् पञ्च पार्थिवान् ॥ ) ; हरि. १।३१।३३ बद्धो यः स महामनाः ( बभूव नृपतिः पुरा ) ; ब्रह्म. १३।२९,३० हरिवत्.

( २ ) वायु. ९९।२८ ; ब्रह्माण्ड. ३।७४।२७,२८ पुण्ड्रं ( शुद्धं ) वालेयं ( वालेयं ) ; मत्स्य. ४८।२५ क्षत्र ( क्षेत्र ) ; हरि. १।३१।३४ ( अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च । पुण्ड्रः कलिङ्गश्च तथा वालेयं क्षत्रमुच्यते ॥ ) ; ब्रह्म. १३।३०,३१ हरिवत्.

( ३ ) वायु. ९९।२९ धीमतः ( धर्मिणः ) ; ब्रह्माण्ड. ३।७४। २८,२९ वालेया ( वालेया ) ; मत्स्य. ४८।२५,२६ बलेस्तु ( बलेश्च ) दत्ता वराः ( दत्तो वरः ) ; हरि. १।३१।३५ प्रभोः ( भुवि ) धीमतः ( भारत ) ; ब्रह्म. १३।३१, ३२ प्रभोः (भुवि) उत्तरार्धे ( बलेश्च ब्रह्मणा दत्तो वरः प्रीतेन भो द्विजाः । ).

( ४ ) वायु. ९९।३० कल्पस्य ( कल्पायुः ) प्रभावतः ( प्रभावना ) ; ब्रह्माण्ड. ३।७४।२९, ३० वा ( वा ) ; मत्स्य. ४८। २६, २७ चैव प्रभावतः ( चैवोत्तमा मतिः ) ; हरि. १।३१।३६ णकम् ( णतः ) चा ( वा ) प्रभावतः ( प्रधानता ) ; ब्रह्म. १३।३२, ३३ णकम् ( णतः ) प्रभावतः ( प्रधानताम् ).

( १ ) वायु. ९९।३१ ; ब्रह्माण्ड. ३।७४।३०, ३१ बले चा ( बलेश्चा ) ; मत्स्य. ४८।२७, २८ ( त्रैकाल्यदर्शनं चैव प्राधान्यं प्रसवे तथा । जयं चाप्रतिमं युद्धे धर्मे तत्त्वार्थदर्शनम् ॥ ) ; हरि. १।३१।३७ ; ब्रह्म. १३।३३, ३४ चैव ( चापि ).

( २ ) वायु. ९९।३२ ता भुवि ( तेति च ) ; ब्रह्माण्ड. ३।७४।३१, ३२ ता भुवि ( तेति वै ) ; मत्स्य. ४८।२८ स्त्वं वै ( स वै ) भुवि ( प्रभुः ) उत्तरार्धं नास्ति ; हरि. १।३१।३८ वै ( च ) ; ब्रह्म. १३।३४, ३५ वै ( च ) ता भुवि ( तेति च ).

( ३ ) वायु. ९९।३३, ३४ द्वितीयतृतीयार्धयोः ( तेषां जनपदाः स्फीता वङ्गाङ्गसुह्मकास्तथा । पुण्ड्राः कलिङ्गाश्च तथा...॥) ; ब्रह्माण्ड. ३।७४।३२, ३३ वै ( च ) द्वितीयतृतीयार्धयोः ( तेषां जनपदा अङ्गवङ्गाश्च सुह्मकाः । पुण्ड्राः कलिङ्गाश्च तथा... ॥ ) ; मत्स्य. ४८।२९ ( तेषां च पञ्च दायादा वङ्गाङ्गाः सुह्मकास्तथा । पुण्ड्राः कलिङ्गाश्च तथा... ॥ ) प्रथमार्धं नास्ति ; हरि. १।३१। ४१, ४२ प्रथमार्धे ( कालेन महता राजन् स्वं च स्थानमुपागमत् । ) ; ब्रह्म. १३।३५, ३६ प्रथमार्धे ( कालेन महता विप्राः स्वं च स्थानमुपागमत् । ).

[७]

वैवस्वतमनुपुत्राः ब्रह्मक्षत्रादयः, मनुः इला पुरूरवाः
इति वंशक्रमः, नाभागो भलन्दनो
वत्सप्रिश्चेति वैश्यप्रवराः

धर्मात्मा स मनुर्धीमान् यत्र वंशः प्रतिष्ठितः ।
मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् ॥
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ।
तत्राभवत्तदा राजन् ब्रह्म क्षत्रेण संगतम् ॥
ब्राह्मणा मानवास्तेषां साङ्गं वेदमदीधरन् ।
वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ॥
करूषमथ शर्यातिं तथैवात्राष्टमीमिलाम् ।
पृषध्रनवमानाहुः क्षत्रधर्मपरायणान् ॥
नाभागारिष्टदशमान् मनोः पुत्रान् महाबलान् ।
पञ्चाशतं मनोः पुत्रास्तथैवान्येऽभवन् क्षितौ ॥
अन्योन्यभेदात्ते सर्वे विनेशुरिति नः श्रुतम् ।
पुरूरवास्ततो विद्वानिलायां समपद्यत ॥
सा वै तस्याभवन्माता पिता चेति हि नः श्रुतम् ।
त्रयोदश समुद्रस्य द्वीपानभ्नन् पुरूरवाः ॥
अमानुषैर्वृतः सत्त्वैर्मानुषः सन् महायशाः ।
विप्रैः स विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः ॥
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ।
सनत्कुमारस्तं राजन्ब्रह्मलोकादुपेत्य ह ॥
अनुदर्शयां ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ ।
ततो महर्षिभिः क्रुद्धैः सद्यः शप्तो व्यनश्यत ॥
लोभान्वितो मदबलान्नष्टसंज्ञो नराधिपः ।
स हि गन्धर्वलोकस्थ उर्वश्या सहितो विराट् ॥
आनिनाय क्रियार्थेऽग्नीन् यथावद्विहितांस्त्रिधा ।
षट् पुत्रा जज्ञिरेऽथैलादायुर्धीमानमावसुः ॥
दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ॥
सूत उवाच—
ततो मन्वन्तरेऽतीते चाक्षुषे दैवतैः सह ।
वैवस्वताय महते पृथिवीराज्यमादिशत् ॥

(१) भा. १।७५।१३–२५
(२) वायु. ८५।१ ; ब्रह्माण्ड ३।६०।१.

तस्य वैवस्वतो वक्ष्ये सांप्रतस्य महात्मनः ।
आनुपूर्व्येण वै विप्राः कीर्त्यमानं निबोधत ॥
मनोर्वैवस्वतस्येह सर्गमादाय सांप्रतम् ॥
मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः ।
इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥

(१) वायु. ८५।२.
(२) वायु. ८५।३.
(३) वायु. ६४।२९,३० (इक्ष्वाकुश्चैव नाभागो धृष्ट शर्यातिरेव च । नरिष्यन्तश्च विख्यातो नाभ उद्दिष्ट एव च ॥ करूषश्च पृषध्रश्च वसुमान्नवमः स्मृत. । मनोर्वैवस्वतस्यैते नव पुत्राः प्रकीर्तिताः ॥ ) : ८५।३,४ प्रथमार्धे ( मनो. प्रथमजस्यासन्नव पुत्रास्तु तत्समा. ।) कुश्चैव नाभागो ( कुर्नृगश्चैव ) गारिष्ट ( गोऽरिष्ट ) ; ब्रह्माण्ड. २।३८।३०–३२ (इक्ष्वाकुश्च नृगश्चैव धृष्ट शर्यातिरेव च । नरिष्यन्तश्च विख्यातो नाभागो दिष्ट एव च ॥ करूषश्च पृषध्रश्च प्रांशुश्च नवमः स्मृत । मनोर्वैवस्वतस्यैते नव पुत्राः सुधार्मिकाः ॥ ) : ३।६०।२,३ प्रथमार्धे ( तस्माद्वैवस्वतात्पुत्रा जज्ञिरे दश तत्समाः । ) कुश्चैव नाभागो ( कुश्च नृगश्चैव ) गारिष्ट ( गो दिष्ट ) ; मार्क. ७९।११, १२ ( इक्ष्वाकुर्नाभगश्चैव धृष्ट शर्यातिरेव च । नरिष्यन्तश्च विख्यातो नाभगो दिष्ट एव च ॥ कुरूषश्च पृषध्रश्च वसुमाँल्लोकविश्रुतः । मनोर्वैवस्वतस्यैते नव पुत्राः प्रकीर्तिता ॥): १११।४,५ ( इक्ष्वाकुर्नाभगोऽरिष्टो महाबलपराक्रम. । नरिष्यन्तोऽथ नाभाग. पृषध्रो धृष्ट एव च । एते पुत्रा मनोस्तस्य पृथग्राज्यस्य पालका. ॥ ) ; मत्स्य. ११।४०, ४१ ( मनोर्वैवस्वतस्यासन् दश पुत्रा महाबलाः । इलस्तु प्रथमस्तेषां पुत्रेष्ट्यां समजायत ॥ इक्ष्वाकुः कुशनाभश्च अरिष्टो धृष्ट एव च । नरिष्यन्तः करूषश्च शर्यातिश्च महाबलः ॥ पृषध्रश्चाथ नाभागः सर्वे ते दिव्यमानुषा ॥ ) ; विष्णु. ४।१।७ ( मनोरिक्ष्वाकुनृगधृष्टशर्यातिनरिष्यन्तप्रांशुनाभागनेदिष्ठकरूषपृषध्राख्याः पुत्रा बभूवुः । ) ; हरि. १।१०।१,२ धृष्ट (धृष्णुः) नरिष्यन्तस्तथा ( नरिष्यंश्च तथा ) मानवाः स्मृताः ( भरतर्षभ ) ; लिङ्ग. १।६५।१७–१९ ( मनोस्तु प्रथमस्यासन्नव पुत्रास्तु तत्समाः । इक्ष्वाकुर्नभगश्चैव धृष्णुः शर्यातिरेव च ॥ नरिष्यन्तश्च वै धीमान्नाभागोऽरिष्ट एव च । करूषश्च पृषध्रश्च नवैते मानवाः स्मृता ॥ ) ; शिवध. ६०।१,२ ( इक्ष्वाकु शिबिनाभागौ धृष्णुः शर्यातिरेव च । नरिष्यन्तोऽथ नाभागः करूषश्च प्रियव्रतः ॥ ) प्रथमार्धे न पाठान्तरम् ; गरुड. १।१३८।२,३ ( इक्ष्वाकुशर्याती नृगो धृष्टः पृषध्रकः । नरिष्यन्तश्च नाभागो

नरिष्यन्तस्तथा प्रांशुर्नाभागारिष्ट एव च ।
करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ॥
ब्रह्मणा तु मनुः पूर्वं चोदितस्तु निबोधत ।
स्रष्टुं प्रचक्रमे कामं निष्फलं समवर्तत ॥
अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः ।
मित्रावरुणयोर्विप्राः पूर्वमेव महामतिः ॥
अनुत्पन्नेषु नवसु पुत्रेष्वेतेषु भो द्विजाः ।
तस्यां च वर्तमानायामिष्टयां च द्विजसत्तमाः ॥
[4]मित्रावरुणयोरंशे मनुराहुतिमाजुहोत् ।
आहुत्यां हूयमानायां देवगन्धर्वमानुषाः ॥

तुष्टिं तु परमां जग्मुर्मुनयश्च तपोधनाः ।
अहोऽस्य तपसो वीर्यमहोऽस्य श्रुतमद्भुतम् ॥
तत्र दिव्याम्बरधरा दिव्याभरणभूषिता ।
दिव्यसंहनना चैव इला जज्ञे इति श्रुतिः ॥
तामिलेत्येव होवाच मनुर्दण्डधरस्तदा ।
अनुगच्छस्व मां भद्रे तमिला प्रत्युवाच ह ॥
धर्मयुक्तमिदं वाक्यं पुत्रकामं प्रजापतिम् ॥
इलोवाच–
[5]मित्रावरुणयोरंशे जाताऽस्मि वदतां वर ।
तयोः सकाशं यास्यामि मा नो धर्मो हतो वधीत् ॥
[6]सैवमुक्त्वा मनुं देवं मित्रावरुणयोरिला ।
गत्वाऽन्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत् ॥
[7]अंशेऽस्मि युवयोर्जाता देवौ किं करवाणि वाम् ।
मनुनैवाहमुक्ताऽस्मि अनुगच्छस्व मामिति ॥

---

दिष्टः शशक एव च ॥ ); पद्म. ५।८।७५-७७ ( मनोर्वैवस्वतस्यासन्दश पुत्रा महाबलाः । इलस्तु प्रथमस्तेषां पुत्रेषु समजायत ॥ इक्ष्वाकुः कुशनामश्च अरिष्टो धृष्ट एव च । नरिष्यन्तः करूषश्च शर्यातिश्च महाबलः । पृषध्रश्चाथ नाभागः सर्वे ते दिव्यमानुषाः ॥ ) ; ब्रह्म. ७।१,२ तृतीयचतुर्थार्धयोः ( नरिष्यन्तश्च षष्ठो वै प्रांशू रिष्टश्च सप्तमः । करूषश्च पृषध्रश्च नवैते मुनिसत्तमाः ॥ ) ; कूर्म. १।२०।४-६ ( मनोस्तु प्रथमस्यासन्नव पुत्रास्तु तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥ नरिष्यन्तश्च नाभागो ह्यरिष्टः करूषस्तथा । पृषध्रश्च महातेजा नवैते शक्रसंनिभाः ॥ ) ; अग्नि. २७३।५,६ (मनोर्वैवस्वतस्यासन्पुत्रा वै नव तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥ नरिष्यन्तस्तथा प्रांशुर्नाभागादिष्ट सत्तमाः ॥ करूषश्च पृषध्रश्च अयोध्यायां महाबलाः ॥ ).

( १ ) वायु. ८५।५ ; ब्रह्माण्ड. ३।६०।४ निबोधत ( प्रबोधितम् ) उत्तरार्धे ( यष्टुं प्रचक्रमे काम हयमेधेन भूपतिः । ).

( २ ) वायु. ८५।६ ( अथाकरोत्पुत्रकामः परामिष्टिं प्रजापतिः । ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।६०।५ सर्वं वायुवत् ; हरि. १।१०।३ योर्विप्राः ( योस्तात ) महामतिः ( विशाम्पते ) ; शिवध. ६०।२ उत्तरार्धं नास्ति ; ब्रह्म. ७।३.

( ३ ) हरि. १।१०।४ भो द्विजा ( भारत ) तस्यां च ( तस्यां तु ) च द्विजसत्तमाः ( भरतसत्तम ) ; शिवध. ६०।३ ( अनुत्पन्नेषु पुत्रेषु तत्रेष्ट्यां संबभूव ह । ) एतावदेव ; ब्रह्म. ७।४ नवसु ( बहुषु ).

( ४ ) वायु. ८५।६ माजुहोत् ( मात्यत् ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।६०।५ मनुराहुति माजुहोत् ( अनलाहुतिमेव यत् ) उत्तरार्धं नास्ति ; हरि. १।१०।५ मनु ( मुनि ) ; ब्रह्म. ७।५ माजुहोत् ( मावपत् ) उत्तरार्धं नास्ति.

( १ ) हरि. १।१०।६.

( २ ) वायु. ८५।७ संहनना ( सनद्दना ) इला ( इडा ) ; ब्रह्माण्ड. ३।६०।६ श्रुतिः ( श्रुतम् ) ; हरि. १।१०।७ ; शिवध. ६०।३,४ इति श्रुतिः ( ऽथ विश्रुता ) ; ब्रह्म. ७।५,६.

( ३ ) वायु. ८५।८ ऐलेव ( ऐल्यथ ) तदा ( स्थतः ) गच्छस्व मां भद्रे ( गच्छामि भद्रं ते ) ; ब्रह्माण्ड. ३।६०।७ ऐलेव ( ऐल्यथ ) स्तदा ( स्ततः ) मां भद्रे ( भद्रं ते ) ; हरि. १।१०।८ ; शिवध. ६०।४,५ मिले ( मिडे ) स्तदा ( स्तथा ) भद्रे तमिला ( एहि तमिडा ) ; ब्रह्म. ७।६,७.

( ४ ) वायु. ८५।९ वाक्यं ( वाच्यं ) ; ब्रह्माण्ड. ३।६०।८ ; हरि. १।१०।८ ; शिवध. ६०।५ ; ब्रह्म. ७।७.

( ५ ) वायु. ८५।९,१० ; ब्रह्माण्ड. ३।६०।८,९ मा नो (माऽनो ) ; हरि. १।१०।९ मा नो ( न मां ) ; शिवध. ६०।६ मा नो धर्मो हतो वधीत् ( न मेऽधर्मो हि तद्भवेत् ) ; ब्रह्म. ७।८ मा नो धर्मो हतो वधीत् ( न मां धर्महतां कुरु ).

( ६ ) वायु. ८५।१०, ११ पूर्वार्धे ( सैवमुक्त्वा पुनर्देवी तयोरन्तिकमागमत् । ) ; ब्रह्माण्ड. ३।६०।९, १० पूर्वार्धे ( एवमुक्त्वा पुनर्देवी तयोरन्तिकमागमत् । ) ; हरि. १।१०।१० ; शिवध. ६०।७ पूर्वार्धे ( एवमुक्त्वा ययौ सा तु मित्रावरुणयोस्तः । ) ; ब्रह्म. ७।९.

( ७ ) वायु. ८५।११, १२ ; ब्रह्माण्ड. ३।६०।१०, ११ ऽस्मि ( ऽस्मिन् ) ; हरि. १।१०।११ नैवाहमुक्ताऽस्मि ( ना चाहमुक्ता वै ) ; शिवध. ६०।८ (अहमस्मि युवयोर्जाता वक्तं किं

तथा तु वदतीं साध्वीमिलामाश्रित्य तावुभौ ।
[1]देवौ च मित्रावरुणाविदं वचनमूचतुः ॥

अनेन तव धर्मज्ञे प्रश्रयेण दमेन च ।
सत्येन चैव सुश्रोणि प्रीतौ स्वो वरवर्णिनि ॥

आवयोस्त्वं महाभागे ख्यातिं कन्येति यास्यसि ।
मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि ॥

सुद्युम्न इति विख्यातस्त्रिषु लोकेषु पूजितः ।
जगत्प्रियो धर्मशीलो मनोर्वंशविवर्धनः ॥

मानवः स तु सुद्युम्नः स्त्रीभावमगमत्प्रभुः ।
सा तु देवी वरं लब्ध्वा निवृत्ता पितरं प्रति ॥

---

करवाणि वाम् ।) उत्तरार्धं नास्ति ; ब्रह्म. ७।१० नैवाहमुक्ताऽस्मि ( ना चाहमुक्ता वा ).

( १ ) वायु. ८५।१२, १३ मिला ( मिडा ) ; ब्रह्माण्ड. ३।६०।११, १२ वदतीं ( स्ववतीं ) मिला ( मिडा ), हरि. १।१०।१२ ( *तां तथावादिनीं साध्वीमिलां धर्मपरायणाम् । मित्रश्च वरुणश्चोभावूचतुर्यन्निबोध तत् ॥* ) ; शिवध. ६०।८ ( तां तथावादिनीं साध्वीं मित्रावरुणावूचतु' ॥ ) ; ब्रह्म. ७।११ ( तौ तथावादिनीं साध्वीमिलां धर्मपरायणाम् । मित्रश्च वरुणश्चोभावूचतुस्तां द्विजोत्तमा' ॥ ).

( २ ) वायु ८५।१३,१४ ; ब्रह्माण्ड. ३।६०।१२,१३ स्वो ( स्वौ ) ; हरि. १।१०।१३ धर्मज्ञे ( धर्मेण ) ; शिवध. ६०।९ स्नो ( द्वौ ) ; ब्रह्म. ७।१२ हरिवत्

( ३ ) वायु. ८५।१४ कन्येति ( कन्या प्र ) उत्तरार्धं नास्ति ; ब्रह्माण्ड ३।६०।१३ कन्येति ( कन्ये प्र ) उत्तरार्धं नास्ति ; हरि. १।१०।१४ करः ( धर' ) ; शिवध ६०।१० कन्येति यास्यसि ( चैत्र गमिष्यसि ) ; ब्रह्म. ७।१३,१४.

( ४ ) वायु. ८५।१५ ; ब्रह्माण्ड. ३।६०।१४ ; हरि. १।१०।१५ पूजित' ( शोभने ) ; शिवध. ६०।११ पूजितः (विश्रुतः) ; ब्रह्म. ७।१४,१५ हरिवत्.

( ५ ) वायु ८५।१६ ; ब्रह्माण्ड. ३।६०।१५ ; हरि १।१०।१६ ( निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकम् । ) पूर्वार्धं नास्ति ; शिवध ६०।१२ ( निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकम् । ) पूर्वार्धं नास्ति ; ब्रह्म. ७।१५ ( निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकात् । ) पूर्वार्धं नास्ति.

बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता ।
सोमपुत्राद्बुधाच्चास्यामैलो जज्ञे पुरूरवाः ॥

बुधात्सा जनयित्वा तु सुद्युम्नत्वं पुनर्गता ।
सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ॥
उत्कलश्च गयश्चैव विनताश्वस्तथैव च ।
उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम् ॥
[4]दिक्पूर्वा तस्य राजर्षेर्गयस्य तु गया पुरी ।
प्रविष्टे तु मनौ तस्मिन् प्रजाः सृष्ट्वा दिवाकरम् ॥

---

( १ ) वायु. ८५।१७ स्यामैलो ( स्या ऐलो ) ; ब्रह्माण्ड. ३।६०।१६ नान्तर ( नोत्तर ) ; हरि. १।१०।१६,१७ च्चास्यामैलो ( द्राजस्तस्यां ) ; लिङ्ग. १।६५।२४ योपमन्त्रिता ( य प्रवर्तिता ) स्यामैलो ( पि ऐलो ) ; शिवध. ६०।१२,१३ उत्तरार्धे ( सोमस्य पुत्रस्तस्यां तु पुत्रो जज्ञे पुरूरवाः । ) ; ब्रह्म. ७।१६ च्चास्यामैलो ( द्विप्रास्तस्यां ) .

( २ ) वायु. ८५।१८ म्नत्व पुनर्गता ( म्नं पुनरागता ) ; ब्रह्माण्ड. ३।६०।१७ ; मत्स्य. १२।१६ (पुनः पुत्रत्रयमभूत्सद्युम्नस्यापराजितम् ।) पूर्वार्धं नास्ति ; हरि. १।१०।१७, १८ पूर्वार्धे ( *जनयित्वा तत. सा तमिला सुद्युम्नतां गता ।* ) ; लिङ्ग. १।६५।२६ ( पुत्रत्रयमभूत्तस्य सुद्युम्नस्य द्विजोत्तमाः । ) पूर्वार्धं नास्ति ; शिवध. ६०।१३, १४ पूर्वार्धे ( जनयित्वा तु सा पुत्र पुनः सुद्युम्नकं गता । ) ; गरुड. १।१३८।४ ( सुतास्त्रयश्च सुद्युम्नात् ) ; पद्म. ५।८।१२१ सर्वं मत्स्यवत् ; ब्रह्म. ७।१७ हरिवत्.

( ३ ) वायु. ८५।१९ ; ब्रह्माण्ड. ३।६०।१८ विनताश्वः ( विनतश्च ) विनताश्वस्य ( विनतस्यापि ) ; मत्स्य १२।१७ ( उत्कलो वै गयस्तद्वद्धरिताश्वश्च वीर्यवान् । उत्कलस्योत्कला नाम ॥ ) ; हरि. १।१०।१८, १९ श्वस्तथैव च ( श्वश्च भारत ) त्कलं राष्ट्र (त्कला राजन् ) पश्चिमम् (पश्चिमा) ; लिङ्ग. १।६५।२६,२७ ; शिवध. ६०।१४, १५ श्वस्तथैव च ( श्वश्च वीर्यवान् ) त्कलं राष्ट्रं ( त्कला विप्र ) पश्चिमम् ( पश्चिमा ) ; गरुड. १।१३८।४ ( उत्कलो विनतो गय' ) ; पद्म. ५।८।१२२ ( उत्कलोऽथ गयस्तद्वद्धरिताश्वश्च वीर्यवान् । उत्कलस्योत्कला नाम ॥ ) ; ब्रह्म. ७।१८ स्तथैव च ( श्च भो द्विजाः ) त्कल राष्ट्र ( त्कला विप्रा ) पश्चिमम् ( पश्चिमा' ) ; कूर्म. १।२०।९ ( *उत्कलं च गय चैव विनत च तथैव च ।* ) ; अग्नि. २७३।८ ( सुद्युम्नादुत्कलगयौ विनताश्वत्रयो नृपाः । उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमा ॥ ).

( ४ ) वायु. ८५।१९, २० दिक्पूर्वा तस्य ( दिक्ष्ववातस्य ) प्रविष्टे तु ( प्रविसृष्टे ) करम् ( करः ) ; ब्रह्माण्ड. ३।६०।१९ ;

देशधा तद्धत्क्षत्रमकरोत्पृथिवीमिमाम् ॥
यूपाङ्किता वसुमती यस्येयं सवनाकरा ॥
इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ।
कन्याभावात्तु सुद्युम्नो नैव भागमवाप्तवान् ॥
वसिष्ठवचनाच्चासीत्प्रतिष्ठाने महाद्युतिः ।
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः ॥

तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः ।
मानवेयो महाभागः स्त्रीपुंसोर्लक्षणैर्युतः ॥
मानवः स तु सुद्युम्नः स्त्रीभावमगमत्पुनः ॥
धृतवान्य इलेत्येवं सुद्युम्नेति च विश्रुतः ॥
एतच्छ्रुत्वा तु ऋषयः पप्रच्छुस्तदनन्तरम् ।
मानवः स तु सुद्युम्नः स्त्रीभावमगमत्कथम् ॥

सूत उवाच–

पुरा महेश्वरं द्रष्टुं कुमाराः सनकादयः ।
इलावृतं समाजग्मुर्देदृशुर्वृषभध्वजम् ॥

उमया रममाणं तं विलोक्य पिहिते स्थले ।
प्रतिजग्मुस्ततः सर्वे व्रीडिताऽभूच्छिवाऽप्यथ ॥

प्रोवाच वचनं देवी प्रियहेतोः प्रियं प्रिया ।
इमं ममाश्रमं देव यः पुमान् संप्रवेक्ष्यति ।
भविष्यति ध्रुवं नारी स तुल्याऽप्सरसां शुभा ॥

तत्र सर्वाणि भूतानि पिशाचाः पशवश्च ये ।
स्त्रीभूताः सह रुद्रेण क्रीडन्त्यप्सरसो यथा ॥

---

मत्स्य. १२।१७, १८ ( गयस्य तु गया मता । हरिताश्वस्य दिक्पूर्वा ) ; हरि. १।१०।१९, २० तस्य राजर्षेः ( भरतश्रेष्ठ ) उत्तरार्धे ( प्रविष्टे तु मनौ तात दिवाकरमरिन्दम । ) ; लिङ्ग. १।६५।२७ ( गया गयस्य चाख्याता पुरी परमशोभना । ) उत्तरार्धं नास्ति ; शिवध. ६०।१५, १६ ( दिक्पूर्वा मुनिशार्दूल गयस्य तु गया स्मृता । प्रविष्टे तु मनौ ताते दिवाकरमतं मुने ॥ ) ; पद्म. ५।८।१२२, १२३ ( गयस्य तु गया मता । हरिताश्वस्य दिक्पूर्वा विज्ञाता ॥ ) ; ब्रह्म. ७।१९ ( दिक्पूर्वा मुनिशार्दूला गयस्य तु गया स्मृता । प्रविष्टे तु मनौ विप्रा दिवाकरमरिन्दमम् ॥ ) ; अग्नि. २७३।९ तस्य राजर्षेः ( राजर्षेस्य ) तु ( च ) उत्तरार्धं नास्ति.

( १ ) वायु. ८५।२० त्क्षत्र ( त्क्षेत्र ) ; ब्रह्माण्ड. ३।६०।२० तद्धत् ( तद्धा ) ; हरि. १।१०।२० ; शिवध. ६०।१६ ( दशधा तत्र तत् क्षेत्रमकरोत्पृथिवीं मनुः । ) ; ब्रह्म. ७।२० तद्धत् ( तत्पुनः ).

( २ ) हरि. १।१०।२१.

( ३ ) वायु. ८५।२१ पूर्वार्धे ( इक्ष्वाकुरेव दायादानन्यान् दश समाप्नुयात् । ) नैव ( नैनं ) वासवान् ( वाप्नुयात् ) ; ब्रह्माण्ड. ३।६०।२०,२१ पूर्वार्धे ( इक्ष्वाकुरेव दायादो भाग दशममाप्तवान् । ) ; मत्स्य. १२।१९ उत्तरार्धं नास्ति ; हरि. १।१०।२१,२२ वात्तु ( वाच्च ) नैव भाग ( नैनं गुण ) ; लिङ्ग. १।६५।२८,२९ वात्तु ( वाच्च ) ; शिवध. ६०।१७ ज्येष्ठ ( श्रेष्ठ ) उत्तरार्धं नास्ति ; पद्म. ५।८।१२४ उत्तरार्धं नास्ति ; ब्रह्म. २।२०,२१ नैव भाग ( नैनद्राज्य ).

( ४ ) वायु. ८५।२२ ष्ठाने ( ष्ठा नौ ) ; ब्रह्माण्ड. ३।६०।२१,२२ ; मत्स्य. १२।१८ ( प्रतिष्ठानेऽभिषिच्याथ स पुरूरवसं सुतम् । ) उत्तरार्धं नास्ति ; हरि. १।१०।२२,२३ महाद्युतिः ( महात्मनः ) महात्मनः ( कुरूद्वह ) ; लिङ्ग. १।६५।२९,३० च्चासी ( च्छासी ) ; शिवध. ६०।१७,१८ च्चासी ( दासी ) महाद्युतिः ( महात्मनः ) उत्तरार्धे ( प्रतिष्ठा धर्मराजस्य सुद्युम्नोऽथ दृष्टो द्वी । ) ; पद्म. ५।८।१२३ ष्ठा गम्भवत् ; ब्रह्म. ७।२१,२२ च्चासी ( च्छासी ) महाद्युतिः ( महात्मनः ) महात्मनः

द्विजोत्तमाः ) ; अग्नि. २७३।९ ( वसिष्ठवाक्यात्सुद्युम्नः प्रतिष्ठानमवाप ह । ) उत्तरार्धं नास्ति.

( १ ) वायु. ८५।२३ द्राज्यं ( द्राष्ट्रं ) उत्तरार्धे ( मानवेभ्यो महाभागा स्त्रीपुंसोर्लक्षणं प्रति । ) ; हरि. १।१०।२३, २७ महाभागः ( महाराज ) ; लिङ्ग. १।६५।३०, ३१ र्युतः ( र्ण्वितः ) ; शिवध. ६०।१८, १९ उत्तरार्धे ( मानवो यो मुनिश्रेष्ठ स्त्रीपुंसोर्लक्षणः प्रभुः । ) ; ब्रह्म. ७।२२, २३ महाभागः ( मुनिश्रेष्ठाः ) ; अग्नि. २७३।१० ( तत्पुरूरवसे प्रादात्सुद्युम्नो राज्यमाप्य तु । ) उत्तरार्धं नास्ति.

( २ ) वायु. ८५।२३.

( ३ ) हरि. १।१०।२७ सुद्युम्नेति च ( सुद्युम्नस्त्वेति ) ; ब्रह्म. ७।२३ य इले ( तामिले ).

( ४ ) वायु. ८५।२४ ; ब्रह्माण्ड. ३।६०।२२ तदनन्तरम् ( गतज प्रति ).

( ५ ) ब्रह्माण्ड ३।६०।२३, २४.

( ६ ) वायु. ८५।२५ इमं ममाश्रमं ( सभे ममाश्रमे ) स तुल्या ( सा तुल्या ) ब्रह्माण्ड. ३।६०।२५, २६.

( ७ ) वायु. ८५।२६ ; ब्रह्माण्ड. ३।६०।२६, २७.

[1] उमावनं प्रविष्टस्तु स राजा मृगयां गतः ।
पिशाचैः सह भूतैस्तु रुद्रे स्त्रीभावमास्थिते ॥

[2] तस्मात्स राजा सुद्युम्नः स्त्रीभावं लब्धवान् पुनः ।
महादेवप्रसादाच्च मानवत्वमवाप्तवान् ॥

[3] नारिष्यन्ताः शकाः पुत्रा नाभागस्य तु भो द्विजाः ।
अम्बरीषोऽभवत्पुत्रः पार्थिवर्षभसत्तमः ॥

[4] धृष्टस्य धार्ष्टकं क्षत्रं रणधृष्टं बभूव ह ॥

[5] शार्यातेर्मिथुनं त्वासीदानर्तो नाम विश्रुतः ।
पुत्रः सुकन्या कन्या च भार्या या च्यवनस्य तु ॥

(१) वायु. ८५।२७ रुद्रे (रुद्रैः) ; ब्रह्माण्ड. ३।६०।२७, २८.

(२) वायु. ८५।२८ मानवत्वमवाप्तवान् (गाणपत्यमवाप्नुयात्) ; ब्रह्माण्ड. ३।६०।२८.

(३) मत्स्य. १२।२० (नरिष्यन्तस्य पुत्रोऽभूच्छुचो नाम महाबलः । नाभागस्याम्बरीषस्तु ॥) ; हरि. १।१०।२८ पूर्वार्धे (नरिष्यतः शकाः पुत्रा नाभागस्य तु भारत ।) ; शिवध. ६०।१९,२० (नरिष्यतः शकाः पुत्रा नाभागस्य सुतोऽभवत् । अम्बरीषस्तु वार्ष्णेयो बाह्लीकं क्षेत्रमावसत् ॥) ; पद्म. ५।८।१२५ (नरिष्यन्तस्य पुत्रोऽभूच्छुको नाम महाबलः । नाभागस्याम्बरीषस्तु ॥) ; ब्रह्म. ७।२४ ; अग्नि. २७३।१०,११ (नरिष्यतः शकाः पुत्रा नाभागस्य च वैष्णवः । अम्बरीषः प्रजापालो ॥).

(४) मत्स्य. १२।२०,२१ (धृष्टस्य च सुतत्रयम् । धृष्टकेतुश्चित्रनाथो रणधृष्टश्च वीर्यवान् ॥) ; हरि. १।१०।२९ धृष्टस्य (धृष्णोस्तु) ; पद्म. ५।८।१२५,१२६ (धृष्टस्य तु सुतत्रयम् । धृष्टकेतुश्छत्रनाथो रणधृष्टश्च वीर्यवान् ॥) ; ब्रह्म. ७।२५ रणधृष्ट (रणद्रुम) ; अग्नि. २७३।११ (धार्ष्टकं धृष्टतः कुलम् ।).

(५) वायु. ८६।२३ नर्तो (नार्तो) ; ब्रह्माण्ड. ३।६१।१८,१९ तु (च) ; मत्स्य. १२।२१ (आनर्तो नाम शर्याते: सुकन्या चैव दारिका ।) ; हरि १।१०।२९,३० त्वासी (चाभी) उत्तरार्धे (पुत्रः कन्या सुकन्या च या पत्नी च्यवनस्य ह ।) ; लिङ्ग. १।६६।४७ (आनर्तो नाम शर्याते: सुकन्या नाम दारिका ।), शिवध. ६०।२०,२१ भार्या या (या पत्नी) तु (हि) ; पद्म. ५।८।१२६ मत्स्यवत्, ब्रह्म ७।२७,२८ उत्तरार्धं हरिवत् ; अग्नि २७३।११ (सुकन्यानर्तौ शर्यातेर्वैरोऽथानर्ततो नृपः ।).

[1] आनर्तस्य तु दायादो रेवो नाम महाद्युतिः ॥
[2] नाभागारिष्टपुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ।
करूषस्य च कारूषाः क्षत्रिया युद्धदुर्मदाः ॥
[3] प्रांशोरेकोऽभवत्पुत्रः प्रजानिरिति विश्रुतः ॥
[4] पृषध्रो हिंसयित्वा तु गुरोर्गां निश्यभक्षयत् ।
शापाच्छूद्रत्वमापन्नो नवैते परिकीर्तिताः ॥
[5] वैवस्वतस्य तनया मनोर्वै भरतर्षभ ।
क्षुवतश्च मनोस्तात इक्ष्वाकुरभवत्सुतः ॥

(१) वायु. ८६।२४ (आनार्तस्य तु दायादो रेवो नाम्ना तु वीर्यवान् ।) ; ब्रह्माण्ड. ३।६१।१९ महाद्युति' (सुवीर्यवान्) ; हरि. १।१०।३० ; शिवध. ६०।१२ तु (हि) ; ब्रह्म. ७।२८ रेवो (रैवो).

(२) वायु. ८६।२ च (तु) पूर्वार्धं नास्ति, ब्रह्माण्ड. ३।६१।२ सर्वं वायुवत्; मत्स्य. १२।२४ (करूषस्य तु कारूषा बहवः प्रथिता भुवि ।) पूर्वार्धं नास्ति ; हरि. १।११।९ ; लिङ्ग. १।६६।५१ (करूषस्य तु कारूषाः सर्वे प्रख्यातकीर्तयः ।) पूर्वार्धं नास्ति ; शिवध. ६०।३०, ३१ पूर्वार्धे (नाभागरिष्टस्य सुतौ यौ तौ ब्राह्मणसंगतौ ।) करूषस्य च (कारूषस्य तु) ; पद्म. ५।८।१२९ (कारूषास्तु करूषस्य बहवः प्रथिता भुवि ।) पूर्वार्धं नास्ति ; ब्रह्म. ७।२५, २६, पूर्वार्धे (नाभागधृष्टपुत्राश्च क्षत्रिया वैश्यतां गताः ।) : ७।४२ भागा (भाग) ; अग्नि. २७३।१७ गारिष्ट (गस्य च) च (तु).

(३) वायु. ८६।४ ; ब्रह्माण्ड. ३।६१।४ प्रजानिरिति विश्रुत' (प्रजापतिसमो नृपः) ; हरि. १।११।१० प्रजानिरिति विश्रुतः (प्रजातिरिति नः श्रुतम्) ; शिवध. ६०।३१ (प्रांशुरेकोऽभवत्पुत्र' प्रजातेरिति नः श्रुतम्) ; ब्रह्म. ७।२६ प्रजानिरिति विश्रुतः (प्रजापतिरिति स्मृतः).

(४) वायु. ८६।१,२ गां निश्यभ (गांवमभ) नवैते परिकीर्तिताः (च्यवनस्य महात्मनः) ; ब्रह्माण्ड. ३।६१।१, २ निश्यभक्षयत् (निशि तत्क्षये) नवैते परिकीर्तिताः (च्यवनस्य महात्मनः) ; मत्स्य. १२।२५ (पृषध्रो गोवधाच्छूद्रो गुरुशापादजायत ।) ; हरि. १।११।१०, ११ निश्यभक्षयत् (जनमेजय) ; लिङ्ग १।६६।५२ पूर्वार्धे (पृषिनो हिंसयित्वा गां गुरोः प्राप मुकुल्मषम् ।) नवैते परिकीर्तिता' (च्यवनस्येति विश्रुतः) ; शिवध. ६०।३२ निश्यभक्षयत् (मुनिसत्तम) ; पद्म. ५।८।१३० मत्स्यवत् ; ब्रह्म. ७।४३ निश्यभक्षयत् (द्विजसत्तमा') ; अग्नि. २७३।१८ (शूद्रत्वं च पृषध्रोऽगात् हिंसयित्वा गुरोश्च गाम् ।).

(५) हरि. १।११।११,१२ ; शिवध. ६०।३३ (पूर्वजस्तु मनोर्विप्र इक्ष्वाकुरभवत्सुतः ।) पूर्वार्धं नास्ति ; ब्रह्म. ७।४४

पराशर उवाच–

[1]मैत्रेय श्रूयतामयमनेकयज्विवीरशूरभूपालालङ्कृतो ब्रह्मादिर्मानवो वंशः। तथा चोच्यते– ब्रह्माद्यं यो मनोर्वंशमहन्यहनि संस्मरेत्। तस्य वंशसमुच्छेदो न कदाचिद्भविष्यति॥ तस्य वंशानुपूर्वीमशेषपापप्रक्षालनाय मैत्रेयैतां शृणु॥ तद्यथा, सकलजगतामनादिभूत ऋग्यजुःसामादिमयो भगवद्विष्णुमयस्य ब्रह्मणो मूर्तिरूपं हिरण्यगर्भो ब्रह्माण्डतो भगवान्ब्रह्मा प्रागवभूव॥ ब्रह्मणश्च दक्षिणाङ्गुष्ठजन्मा दक्षः प्रजापतिर्दक्षस्याप्यदितिरदितेर्विवस्वान् विवस्वतो मनुर्मनोरिक्ष्वाकुनृगधृष्टशर्यातिनरिष्यन्तप्रांशुनाभागनेदिष्ठकरूषपृषध्राद्याः पुत्रा बभूवुः॥ इष्टिं च मित्रावरुणयोर्मनुः पुत्रकामश्चकार॥ तत्रापहुते होतुरुपचारादिला नाम कन्या बभूव॥ सैव मित्रावरुणप्रसादात् सुद्युम्नो नाम मनोः पुत्रो मैत्रेयासीत् पुनश्चेश्वरकोपात् स्त्री सती सोमसूनोर्बुधस्याश्रमसमीपे बभ्राम॥ सानुरागश्च तस्यां बुधः पुरूरवसमात्मजमुत्पादयामास॥ जाते च तस्मिन्नमिततेजोभिः परमर्षिभिरिष्टिमय ऋङ्मयो यजुर्मयः साममयोऽथर्वमयः सर्वमयो मनोमयो ज्ञानमयोऽकिञ्चिन्मयो भगवान् यज्ञपुरुषस्वरूपी सुद्युम्नस्य पुंस्त्वमभिलषद्भिर्यथावदिष्टः॥ तत्प्रसादादिला पुनरपि सुद्युम्नोऽभवत्तस्याप्युत्कलगयविनतसंज्ञास्त्रयः पुत्रा बभूवुः, सुद्युम्नस्तु स्त्रीपूर्वकत्वाद्राज्यभागं न लेभे॥ तत्पित्रा तु वसिष्ठवचनात् प्रतिष्ठानं नाम नगरं सुद्युम्नाय दत्तं तच्चासौ पुरूरवसे प्रादात्। पृषध्रस्तु गुरुगोवधात् शूद्रत्वमगमत्॥ करूषात् कारूषा महाबलाः क्षत्रिया बभूवुः॥ नाभागो नेदिष्ठपुत्रस्तु वैश्यतामगमत्॥ तस्मात् भलन्दनः पुत्रोऽभवद्भलन्दनाद्वत्सप्रिरुदारकीर्तिर्वत्सप्रेः प्रांशुरभवत् प्रजानिश्च प्रांशोरेकोऽभवत्। ततश्च खनित्रस्तस्माच्च क्षुपः क्षुपाच्चातिबलपराक्रमो विंशोऽभवत्ततो विविंशस्तस्माच्च खनीनेत्रस्ततश्चातिभूतिरतिभूतेर्भूरिबलपराक्रमः करन्धमः पुत्रोऽभवत्तस्मादप्यविक्षिरविक्षेरप्यतिबलः पुत्रो मरुत्तोऽभवत्॥

श्रीशुक उवाच—

[1]श्रूयतां मानवो वंशः प्राचुर्येण परंतप।
न शक्यते विस्तरतो वक्तुं वर्षशतैरपि॥
परावरेषां भूतानामात्मा यः पुरुषः परः।
स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन॥
तस्य नाभेः समभवत् पद्मकोशो हिरण्मयः।
तस्मिञ्जज्ञे महाराज स्वयंभूश्चतुराननः॥
मरीचिर्मनसस्तस्य जज्ञे तस्यापि कश्यपः।
दाक्षायण्यां ततोऽदित्यां विवस्वानभवत्सुतः॥
ततो मनुः श्राद्धदेवः संज्ञायामास भारत।
श्रद्धायां जनयामास दश पुत्रान् स आत्मवान्॥
इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान्।
नरिष्यन्तं पृषध्रं च नभगं च कविं विभुः॥
अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल।
मित्रावरुणयोरिष्टिं प्रजार्थमकरोत् प्रभुः॥
तत्र श्रद्धा मनोः पत्नी होतारं समयाचत।
दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता॥
प्रेषितोऽध्वर्युणा होता ध्यायंस्तत्सुसमाहितः।
हविषि व्यचरत्तेन वषट्कारं गृणन्द्विजः॥
होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत्।
तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम्॥
भगवन्किमिदं जातं कर्म वो ब्रह्मवादिनाम्।
विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया॥
यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः।
कुतः संकल्पवैषम्यमनृतं विबुधेष्विव॥
तन्निशम्य वचस्तस्य भगवान् प्रपितामहः।
होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम्॥
एतत्संकल्पवैषम्यं होतुस्ते व्यभिचारतः।
तथापि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा॥
एवं व्यवसितो राजन् भगवान् स महायशाः।

मनोर्वै मत्स्यम (मुनेर्वै मुनिसत्तमाः) अ मनोस्तान (स्तु मनोर्विना).

(१) विष्णु. ४।१।३–१७.

(१) भाग. ९।१।७–२६.

अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥
तस्मै कामवरं तुष्टो भगवान्हरिरीश्वरः ।
ददाविलाभवत्तेन सुद्युम्नः पुरुषर्षभः ॥
स एकदा महाराज विचरन्मृगयां वने ।
वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥
प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ।
दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥
स कुमारो वनं मेरोरधस्तात्प्रविवेश ह ।
यत्रास्ते भगवान् शर्वो रममाणः सहोमया ॥
तस्मिन्प्रविष्ट एवासौ सुद्युम्नः परवीरहा ।
अपश्यत्स्त्रियमात्मानमश्वं च वडवां नृप ॥
अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ।
स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान्बुधः ॥
साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ।
स तस्यां जनयामास पुरूरवसमात्मजम् ॥
एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ।
सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥
स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः ।
सुद्युम्नस्याशयन्पुंस्त्वमुपाधावत शंकरम् ॥
तुष्टस्तस्मै स भगवानृषये प्रियमावहन् ।
स्वां च वाचमृतां कुर्वन्निदमाह विशांपते ॥

मासं पुमान् स भविता मासं स्त्री तव गोत्रजः ।
इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥
आचार्यानुमहात्कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।
पालयामास जगतीं नाभ्यनन्दन्स्म तं प्रजाः ॥
तस्योत्कलो गयो राजन्विमलश्च सुतास्त्रयः ॥
एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ।
पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥
ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ।
इक्ष्वाकुपूर्वजान्पुत्राँल्लेभे स्वसदृशान्दश ॥

नरिष्यन्तक्षत्रवंशे ब्रह्मकुलोत्पत्तिः

[2]चित्रसेनो नरिष्यन्तादृक्षस्तस्य सुतोऽभवत् ।
तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥
वीतिहोत्रस्त्विन्द्रसेनात् तस्य सत्यश्रवा अभूत् ।
उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥
ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः ।
कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥
ततो ब्रह्मकुलं जातमग्निवेश्यायनं नृप ।
नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥
नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ।
भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥

(१) भाग. ९।१।३४-४१.

(१) भाग. ९।२।१,२.
(२) भाग. ९।२।१९-२२.

## [८]

अत्रिकुले वैन्यवंशः

सूत उवाच–
चाक्षुषस्य विसर्गं तु समासाच्छृणुत द्विजाः ।
यस्यान्ववाये संभूतः पृथुर्वैन्यः प्रतापवान् ॥
प्रजानां पतयश्चान्ये दक्षः प्राचेतसस्तथा ॥
[3]वैराजात्पुरुषाद्वीरं शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ वीरात्काम्या व्यजायत ॥

स्वायंभुवो मनुर्धीमांस्तपस्तप्त्वा सुदुश्चरम् ।
पत्नीमेवाप रूपाढ्यामनन्तां नाम नामतः ।
प्रियव्रतोत्तानपादौ मनुस्तस्यामजीजनत् ॥
[2]प्रियव्रतोत्तानपादौ मनोः स्वायंभुवस्य तु ।
द्वौ पुत्रौ सुमहावीर्यौ धर्मज्ञौ कथितौ तव ॥

(१) वायु. ६२।७१ विसर्गं ( निसर्गं ) च्छृणुत द्विजाः ( च्छ्रोतुमर्हथ ) यस्या ( तस्या ) ; ब्रह्माण्ड. २।३६।८३.
(२) वायु. ६२।७२ ; ब्रह्माण्ड. २।३६।८४.
(३) हरि. १।२।५ ; शिवध. ५२।५ ( वैराजः पुरुषाद्वीरं शतरूपा व्यजायत । प्रियव्रतोत्तानपादौ वीरकायामजायताम् ॥ ) ; ब्रह्म. २।५.
(१) मत्स्य. ४।३३,३४.
(२) विष्णु. १।११।१ ; कूर्म. १।१४।१ उत्तरार्धे ( धर्मज्ञौ तौ महावीर्यौ शतरूपा व्यजीजनत् । ).

[1]उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ॥
[2]दत्तकः स तु पुत्रोऽस्य राजा ह्यासीत्प्रजापतेः ।
स्वायंभुवेन मनुना दत्तोऽत्रेः कारणं प्रति ॥
[3]मन्वन्तरमथासाद्य भविष्यच्चाक्षुषस्य ह ।
षष्ठं तदनुवक्ष्यामि उपोद्घातेन वै द्विजाः ॥
[4]उत्तानपादाच्चतुरः सूनृता सुषुवे सुतान् ॥

[5]धर्मस्य कन्या सुश्रोणी सूनृता नाम विश्रुता ।
उत्पन्ना चापि धर्मेण ध्रुवस्य जननी शुभा ।
धर्मस्य पत्न्यां लक्ष्म्यां वै उत्पन्ना सा शुचिस्मिता ॥

[6]ध्रुवं च कीर्तिमन्तं च आयुष्मन्तं वसुं तथा ।
उत्तानपादोऽजनयत्कन्ये द्वे च शुचिस्मिते ।
मनस्विनीं स्वरां चैव तयोः पुत्राः प्रकीर्तिताः ॥

[1]ध्रुवात्सृष्टिं च भव्यं च भूमिस्तौ सुषुवे नृपौ ।
छायायां सृष्टिराधत्त पञ्च पुत्रानकल्मषान् ॥
[2]प्राचीनगर्भं वृषभं वृकं च वृकलं धृतिम् ।
पत्नी प्राचीनगर्भस्य सुवर्चा सुषुवे नृपम् ।
नाम्नोदारधियं पुत्रमिन्द्रो यः पूर्वजन्मनि ॥
[3]संवत्सरसहस्रान्ते सकृदाहारमाहरत् ।
एवं मन्वन्तरं युक्त इन्द्रत्वं प्राप्तवान् प्रभुः ॥
[4]उदारधेः सुतं भद्राऽजनयत्सा दिवञ्जयम् ।
रिपुं रिपुञ्जयं जज्ञे वराङ्गी सा दिवञ्जयात् ॥
[5]रिपुं रिपुञ्जयं वीरं वृकलं वृकतेजसम् ।
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ॥

---

(१) वायु. ६२।७२; ब्रह्माण्ड. २।३६।८३; हरि. १।२।७; ब्रह्म. २।७.

(२) वायु. ६२।७३ दत्तकः स (दक्षकस्य); ब्रह्माण्ड. २।३६।८५ पतेः (पतिः).

(३) वायु. ६२।७४ ष्यच्चा (ष्यं चा); ब्रह्माण्ड. २।३६।८६.

(४) वायु. ६२।७५ (उत्तानपादाच्चतुरा सूनृता वित्त-भाविनी ।); ब्रह्माण्ड. २।३६।८७ सुषुवे सुतान् (ऽसूत भामिनी); मत्स्य. ४।३५ (उत्तानपादात्तनयान्प्राप मन्थर-गामिनी ।); हरि. १।२।७ सुषुवे (ऽजनयत्); शिवध. ५२।७ (उत्तानपादोऽजनयत्पुत्रान् शक्रसमान्प्रभुः ।); ब्रह्म. २।७.

(५) वायु. ६२।७५,७६ सुश्रोणी (धर्मज्ञा) चापि (चाधि); ब्रह्माण्ड. २।३६।८७,८८; मत्स्य. ४।३४ (धर्मस्य कन्या चतुरा सूनृता नाम भामिनी ॥) एतावदेव; हरि. १।२।८ चापि धर्मेण (वाजिमेधेन) तृतीयार्धं नास्ति; शिवध. ५२।७,८ सूनृता (सुनीतिः) शुभा (तथा) तृतीयार्धं नास्ति; ब्रह्म. २।८ सर्वं हरिवत्.

(६) वायु. ६२।७७ आयुष्मन्तं (अयसन्तं); ब्रह्माण्ड. २।३६।८९,९० आयु (त्वायु) मनस्विनीं स्वरां (स्वरा मनस्विनी); मत्स्य. ४।३५,३६ (अपस्यतिमपस्यन्तं कीर्तिमन्तं ध्रुवं तथा । उत्तानपादोऽजनयत्सूनृतायां प्रजापतिः ॥) तृतीयार्धं नास्ति; विष्णु. १।११।३ (सुनीतिर्नाम या राजंस्तस्याभून्महिषी द्विज । स नातिप्रीतिमांस्तस्यां तस्याश्चाभूद्ध्रुवः सुतः ॥); हरि. १।२।९ (ध्रुवं च कीर्तिमन्तं च शिवं शान्तमयस्पतिम् । उत्तानपादोऽजनयत्सूनृतायां प्रजापतिः ॥) तृतीयार्धं नास्ति; ब्रह्म. २।९ कन्ये द्वे च शुचिस्मिते (सूनृतायां प्रजापतिः).

(१) वायु. ६२।८२ पू., ८४ पू. सृष्टिं (पुष्टिं) तौ (सा) सृष्टि (पुष्टि); ब्रह्माण्ड. २।३६।९६ पू., ९८ पू.; मत्स्य. ४।३८ (धन्या नाम मनोः कन्या ध्रुवाच्छिष्ट (त्सृष्टि) मजीजनत् । अग्निकन्या तु सुच्छाया शिष्टात्सा सुषुवे सुताम् ॥); विष्णु. १।१३।१ (ध्रुवात् श्लिष्टिं च भव्यं च भव्याच्छम्भुर्व्यजायत । श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥); हरि. १।२।१४ (तस्माच्छ्लिष्टिं च भव्यं च ध्रुवाच्छम्भुर्व्यजायत । श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥); शिवध. ५२।१०,११ (तस्मात्पुष्टिं च धान्यं च ध्रुवात्पुत्रौ व्यजायत । पुष्टेरावन्तसुच्छाया पञ्च पुत्रानकल्मषान् ॥); ब्रह्म. २।१४ हरिवत्; कूर्म. १।१४।३ (ध्रुवाच्छिष्टिश्च भव्यश्च भव्याच्छम्भुर्व्यजायत । शिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥); अग्नि. १८।६ (तस्माद्वृद्धिश्च भव्यश्च ध्रुवाच्छम्भुर्व्यजायत । वृद्धेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥).

(२) वायु. ६२।८४,८५ वृषभं (वृषकं); ब्रह्माण्ड. २।३६।९८, ९९.

(३) वायु. ६२।८६ युक्त (युक्तं) प्रभुः (विभुः); ब्रह्माण्ड. २।३६।१०० हरत् (हरन्).

(४) वायु. ६२।८७; ब्रह्माण्ड. २।३६।१०१ सा दि (तु दि).

(५) वायु. ६२।८८ उत्तरार्धमात्रम्; ब्रह्माण्ड. २।३६।१०२ उत्तरार्धमात्रम्; मत्स्य. ४।३९ (कृशं रिपुं जयं वृत्तं वृकं च वृकतेजसम् । चक्षुरं ब्रह्मदौहित्र्यां वीरिण्यां स रिपुंजयः ॥); विष्णु १।१३।२ वीरं (विप्रं); हरि. १।२।१५ वीरं (पुण्यं); शिवध. ५२।११, १२ वीरं (विप्रं) राधत्त बृहती (रावन्तमहिषी); ब्रह्म. २।१५ चाक्षुषं (चक्षुषं); कूर्म. १।१४।५, ६ वीरं वृकलं (विप्रं कपिलं) वृकते (वृषते) बृहती (महिषी); अग्नि. १८।७ वीरं वृकलं (पुण्यं वृकस).

तस्य पुत्रो मनुर्विद्वान् ब्रह्मक्षत्रप्रवर्तकः ॥
[1]अजीजनत्पुष्करिण्यां वैरण्यां चाक्षुषो मनुम् ।
प्रजापतेरात्मजायां वीरणस्य महात्मनः ॥
[2]मनोरजायन्त दश नड्वलायां महौजसः ।
कन्यायां सुमहावीर्या वैराजस्य प्रजापतेः ॥
[3]ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः ।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ।
अभिमन्युश्च दशमो नड्वलायां मनोः सुताः ॥

(१) वायु. ६२।८८ ; ब्रह्माण्ड. २।३६।१०२.

(२) वायु. ६२।८९ अजी (व्यजी) वैरण्यां चाक्षुषो (वारण्यां चाक्षुषं) वीरणस्य (अरण्यस्य) ; ब्रह्माण्ड. २।३६।१०२ (व्यजीजनत्पुष्करिणी वारुणी चाक्षुषं मनुम् ।) उत्तरार्धं नास्ति ; मत्स्य. ४।४० (वीरणस्यात्मजायां तु चक्षुर्मनुमजीजनत् ।) ; विष्णु. १।१३।३ वैरण्यां (वारुण्यां) वीरणस्य महात्मनः (अनरण्यस्य धीमतः) ; हरि. १।२।१६ वैरण्यां (वीरण्या) वीरणस्य (अरण्यस्य) ; शिवध. ५२।१२ वैरण्यां (वरुणं) मनुम् (मनु) उत्तरार्धं नास्ति ; ब्रह्म. २।१६ वैरण्या चाक्षुषो (वैरिण्यां चाक्षुषं) ; कूर्म. १।१४।६,७ पूर्वार्धे (सोऽजीजनत्पुष्करिण्यां सुरूपं चाक्षुषं मनुम् ।) ; अग्नि. १८।८ वैरण्यां (वीरिण्यां) उत्तरार्धं नास्ति.

(३) वायु. ६२।९० नड्वलायां महौजसः (लड्लायां शुभाः सुताः) सुमहावीर्या (वै महाभाग) ; ब्रह्माण्ड. २।३६।१०५ महौजसः (सुताः शुभाः) वैराजस्य (विरजस्य) ; मत्स्य. ४।४०,४१ (मनुर्वै राजकन्यायां नड्वलायां स चाक्षुषः । जनयामास तनयान् दश शूरानकल्मषान् ॥) ; विष्णु. १।१३।४ सुमहावीर्या (द्विजशार्दूल) ; हरि. १।२।१७ सुमहावीर्या (अभवच्छ्रेष्ठ) ; शिवध. ५२।१३ सुमहावीर्या (हि मुनिश्रेष्ठ) ; ब्रह्म. २।१७ सुमहावीर्या (मुनिशार्दूल) ; कूर्म. १।१४।७,८ नड्वलायां (सुतास्ते सु) वीर्या (वीर्यो) ; अग्नि. १८।८ महौजस (सुतोत्तमा) उत्तरार्धं नास्ति.

(४) वायु. ६२।९१ पूरु (पुरु) नड्व (नद) ; ब्रह्माण्ड. २।३६।१०६,१०७ पूरुः (पुरु) कवि (कृतिः) ते नव (वै नव) ; मत्स्य. ४।४१,४२ कवि. (हवि) श्चेति ते नव (श्चापराजितः) न्युश्च (न्युस्तु) मनो सुताः (अजायत) ; विष्णु. १।१३।५,६ कवि (शुचिः) मनोः सुताः (महौजस), हरि. १।२।१८,१९ पूरुः (पुरु) सत्यवाक् (सत्यवान्) यो मनो. सुताः (याः सुता स्मृताः) ; शिवध. ५२।१४ (ऊरुः पूरु शतद्युम्नस्तपस्वी सत्यजित्कवि । अग्निष्टोमोऽतिरात्रश्चातिमन्युः सुयशा दश ॥) ; ब्रह्म. २।१८,१९ ऊरु पूरुः (कुत्सः पुरु) मनो सुता (महौजसः) ; कूर्म. १।१४।८,९ कविः (शुचिः) श्चेति ते नव (श्चाभिमन्युरू) ; अग्नि. १८।९ श्चेति ते नव (श्चातिमन्युकः).

[1]ऊरोरजनयत्पुत्रान् षडाग्नेयी महाप्रभान् ।
अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥
[2]अङ्गात्सुनीथाऽपत्यं वै वेनमेकं व्यजायत ।
अपचारेण वेनस्य प्रकोपः सुमहानभूत् ॥
[3]प्रजार्थमृषयो यस्य ममन्थुर्दक्षिणं करम् ।
वेनस्य पाणौ मथिते संबभूव महान्नृपः ॥
[4]वैन्यो नाम महीपालो यः पृथुः परिकीर्तितः ॥

(१) वायु. ६२।९२ ख्यातिं (स्वातिं) क्रतुमङ्गिरस गयम् (क्रतुमङ्गिरसं शिवम्) ; ब्रह्माण्ड. २।३६।१०७,१०८ क्रतुमङ्गिरसं गयम् (गयं शुक्र मजाजिनौ) ; मत्स्य ४।४३ महाप्र (तु सुप्र) ; विष्णु १।१३।६,७ स गयम् (सोपिजौ) ; हरि. १।२।१९ ; शिवध. ५२।१५ ऊरो (रूरो) प्रभान् (प्रभा) मङ्गिरसं गयम् (माङ्गिरसमृजिम्) ; ब्रह्म. २।१९,२० ऊरो (पुरो) ख्यातिं (स्वातिं) गयम् (मयम्) ; कूर्म. १।१४।९,१० प्रभान् (बलान्) मङ्गिरसं गयम् (माङ्गिरसं शिवम्) ; अग्नि. १८।१० ख्याति (स्वातिं).

(२) वायु. ६२।९३ ; ब्रह्माण्ड. २।३६।१०८,१०९ उत्तरार्धे (तस्यापराधद्विनस्य प्रकोपस्तु महानभूत् ।) ; मत्स्य. ४।४४ (पितृकन्या सुनीथा तु वेनमङ्गादजीजनत् ।) उत्तरार्धं नास्ति ; विष्णु. १।१३।७ उत्तरार्धं नास्ति ; हरि. १।२।२० व्यजा (अजा) चारेण (चारात्तु) ; शिवध. ५२।१६ ऽपत्य (भार्या) व्यजा (असू) प्रकोपः (कोपस्तु) ; ब्रह्म. २।२०,२१ ; कूर्म. १।१४।१० (अङ्गाद्वेनोऽभवत्पश्चात्) ; अग्नि. १८।११ उत्तरार्धे (अरक्षकः पापरतः स हतो मुनिभि. कुशैः ।).

(३) वायु. ६२।९४ यस्य (तस्य) ; ब्रह्माण्ड. २।३६।१०९,११० उत्तरार्धे (जनितस्तस्य पाणौ तु मथिते रूपवान् पृथुः ।) ; मत्स्य. ४।४४ (वेनमन्याथिनं विप्रा ममन्थुस्तत्कराद्भूत् । पृथुर्नाम महातेजा स पुत्रो द्वावजीजनत् ॥) ; विष्णु. १।१३।८ उत्तरार्धे (वेनस्य मथिते पाणौ स बभूव महामतिः ।) ; हरि. १।२।२१ सबभूव महान्नृप (बभूव मुनिभिः पृथुः) ; शिवध. ५२।१७ यस्य (तस्य) महान्नृपः (तत. पृथुः) ; ब्रह्म. २।२१,२२ पाणौ मथिते (मथिते पाणौ) ; कूर्म. १।१४।१० (वैन्यो वेनादजायत ।) ; अग्नि. १८।१२ यस्य (ऽथास्य) उत्तरार्धे (वेगस्य मथिते पाणौ संबभूव पृथुर्नृपः ।).

(४) वायु ६२।९४ ; ब्रह्माण्ड. २।३६।११० (जनयित्वा सुतं तस्य पृथुं प्राथनपौरुषम् ।) ; विष्णु. १।१३।९ कीर्तितः

[1]तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः ।
करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥
[2]स धन्वी कवची जातस्तेजसा निर्दहन्निव ।
पृथुर्वैन्यः सर्वलोकान्ररक्ष क्षत्रपूर्वजः ॥
[3]येन दुग्धा मही पूर्वं जनानां हितकारणात् ॥
[4]अत्रिवंशसमुत्पन्नो ह्यङ्गो नाम प्रजापतिः ।
तस्य पुत्रोऽभवद्वेनो नात्यर्थं धार्मिकस्तथा ॥

[1]पुनर्महर्षयस्तस्य पाणिं वेनस्य दक्षिणम् ।
अरणीमिव संरब्धा ममन्थुर्जातमन्यवः ॥
[2]पृथुस्तस्मात्समुत्पन्नः कराज्ज्वलनसंनिभः ।
पृथोः करतलाद्वाऽपि यस्माज्जातः पृथुस्ततः ।
दीप्यमानः स्ववपुषा साक्षादग्निरिव ज्वलन् ॥
[3]ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
पृथुरेव नमस्कार्यो ब्रह्मयोनिः सनातनः ॥

(कीर्तने); कूर्म. १।१४।११ (योऽसौ पृथुरिति ख्यातः प्रजापालो महाबलः ।).

(१) ब्रह्माण्ड. २।३६।१११ (अब्रुवंस्त्वेष वो राजा ऋषयो मुदिताः प्रजाः ।) उत्तरार्धं नास्ति ; हरि. १।२।२२ मुनयः (ऋषयः) ; ब्रह्म. २।२२।२३ ; अग्नि. १८।१३.

(२) वायु. ६२।९४ निर्दहन्निव (प्रज्वलन्निव) ; ब्रह्माण्ड. २।३६।१११, ११२ जातः (जज्ञे) सर्वं (तदा) ; हरि. १।२।२३ जातः (खड्गी) सर्वलोकान् (तदा चेमां) ; शिवध. ५२।१८ निर्दहन्निव (ऽऽदित्यसंनिभः) सर्वलोकान् ररक्ष (तदा पृथ्वीमरक्षत्) ; ब्रह्म. २।२३,२४ तेजसा निर्दहन्निव (ज्वलज्ज्वलनसंनिभः) सर्वलोकान् (तथा चेमां) ; अग्नि. १८।१४ सर्वलोकान् (प्रजाः सर्वा).

(३) वायु. ६२।९६ (तेनेयं गौर्महाराज्ञा दुग्धा सस्यानि धीमता ।) ; ब्रह्माण्ड. २।३६।११४ वायुवत् ; विष्णु. १।१३।९ ; हरि. १।२।२५ (तेनेयं गौर्महाराज दुग्धा सस्यानि भारत ।) ; ब्रह्म. २।२५ (तेनेयं गौर्मुनिश्रेष्ठा दुग्धा सस्यानि भूभृता ।) ; कूर्म. १।१४।११ जनानां हितकारणात् (प्रजानां हितकाम्यया) ; अग्नि. १८।१६ (दुग्धा गौस्तेन सस्यार्थं प्रजानां जीवनाय च ।).

(४) वायु. ६२।१०७ तस्य (यस्य) ; ब्रह्माण्ड. २।३६।१२६, १२७ ; हरि. १।५।१, २ ह्यो ह्यङ्गो (त्वरत्वङ्गो) धार्मिकस्तथा (धर्मकोविदः) ; शिवध. ५६।१, २ ह्यो ह्यङ्गो (त्वरत्वङ्गो) कस्तथा (कोऽभवत्) ; ब्रह्म. ४।२८, २९ वंश (वंशे) शेषं हरिवत्.

(१) वायु. ६२।१२५ संरब्धा (संरम्भात्) ; ब्रह्माण्ड. २।३६।१४६ ; हरि. १।५।२१ पुनर्महर्षयस्तस्य (ततः पुनर्महात्मानः) जातमन्यवः (ते महर्षयः) ; शिवध. ५६।१८, १९ संरब्धा (संधाय) शेषं हरिवत् ; ब्रह्म. ४।४८ पुनर्महर्षयस्तस्य (ततः पुनर्महात्मानः).

(२) वायु. ६२।१२६ कराज्ज्वलनसंनिभः (करास्फालनतेजस) रिव ज्व (रिवोज्ज्व) ; ब्रह्माण्ड. २।३६।१४७, १४८ ज्वलनसंनिभः (ज्वलजसंनिभात्) नः स्व (नश्च) ; हरि. १।५।२२ समुत्पन्नः (समुत्तस्थौ) द्वितीयार्धं नास्ति ; शिवध. ५६।१९, २० पूर्वार्धे (पृथुस्तस्मात्समुत्तस्थौ कराज्जलजसंनिभात् ।) रिव ज्वलन् (समोज्वलः) द्वितीयार्धं नास्ति ; ब्रह्म. ४।४९ द्वितीयार्धं नास्ति.

(३) वायु. ६३।६ ; ब्रह्माण्ड. २।३७।६,७ ; हरि. १।६।४८,४९ ; शिवध. ५७।२३ (ब्राह्मणैश्च महाभागैर्वेदैः शूद्रैर्मनीषिभिः ।) उत्तरार्धं नास्ति ; ब्रह्म. ५।४।११६.

[९]

क्षत्रियोद्भूतो ब्राह्मणो विश्वामित्रगोत्रगतः

[1]अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद । स होवाचाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति । नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरासतेति । स ह देवरातो वैश्वामित्र आस । तस्यैते कापिलेयबाभ्रवाः । स होवाचाजीगर्तः सौयवसिस्त्वं वेहि विह्वयावहा इति । स होवाचाजीगर्तः सौयवसिः— 'अङ्गिरसो जन्मनाऽस्याजीगर्तिः श्रुतः कविः । ऋषे पैतामहात्तन्तोर्माऽपगाः पुनरेहि माम् ॥' इति । स होवाच शुनःशेपः— 'अदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत । गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः ॥' इति । स होवाचाजीगर्तः सौयवसिः— 'तद्वै मा तात तपति पापं

(१) ऐब्रा. ७।१७।५–९.

कर्म मया कृतम् । तदहं निह्नुवे. तुभ्यं प्रतियन्तु शता गवाम् ॥' इति । स होवाच शुनःशेपः— 'यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम् । नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतम् ॥' इति । असंधेयमिति ह विश्वामित्र उपपपाद । स होवाच विश्वामित्रः— 'भीम एव सौयवसिः शासेन विशिशासिषुः । अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम् ॥' इति । स होवाच शुनःशेपः— 'स वै यथा नो ज्ञपयाऽऽ राजपुत्र तथा वद । यथैवाऽऽङ्गिरसः सन्नुपेयां तव पुत्रताम् ॥' इति । स होवाच विश्वामित्रः— 'ज्येष्ठो मे त्वं पुत्राणां स्यास्तवश्रेष्ठा प्रजा स्यात् । उपेया दैवं मे दायं तेन वै त्वोपमन्त्रय ॥' इति । स होवाच शुनःशेपः— 'संज्ञानानेषु वै ब्रूयात्सौहार्दाय मे श्रिये । यथाऽहं भरतऋषभोपेयां तव पुत्रताम् ॥' इति । अथ ह विश्वामित्रः पुत्रानामन्त्रयामास— 'मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः । ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वम् ॥' इति ।

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः । तद्ये ज्यायांसो न ते कुशलं मेनिरे ।ताननु व्याजहारान्तान्वः प्रजा भक्षीष्टेति । त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूलिबा इत्युदन्त्या बहवो वैश्वामित्रा दस्यूनां भूयिष्ठाः । स होवाच मधुच्छन्दाः पञ्चाशता सार्धम्— 'यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् । पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसि ॥' इति । अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव— 'ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ । ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ॥ पुर एत्रा वीरवन्तो देवरातेन गाथिनाः । सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम् ॥ एष वः कुशिका वीरो देवरातस्तमन्वित । युष्मांश्च दायं म उपेता विद्यां यामु च विद्मसि ॥ ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः । देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः ॥ अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः । जह्नूनां चाऽऽधिपत्ये दैवे वेदे च गाथिनाम् ॥' तदेतत्परऋक्शतगार्थं शौनःशेपमाख्यानम् ॥

भीष्म उवाच—

श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा ।
ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च ॥
भरतस्यान्वये चैवाजमीढो नाम पार्थिवः ।
बभूव भरतश्रेष्ठ यज्वा धर्मभृतां वरः ॥
तस्य पुत्रो महानासीज्जह्नुर्नाम नरेश्वरः ।
दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ॥
*तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः ।*
सिन्धुद्वीपाच्च राजर्षिर्बलाकाश्वो महाबलः ॥
वल्लभस्तस्य तनयः साक्षाद्धर्म इवापरः ।
कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ॥
कुशिकस्यात्मजः श्रीमान् गाधिर्नाम जनेश्वरः ।
अपुत्रः प्रसवेनार्थी वनवासमुपावसत् ॥
कन्या जज्ञे सुतात्तस्य वने निवसतः सतः ।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ॥
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसंभवः ।
ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥
स तां न प्रददौ तस्मै ऋचीकाय महात्मने ।
दरिद्र इति मत्वा वै गाधिः शत्रुनिबर्हणः ॥
प्रत्याख्याय पुनर्यातमब्रवीद्राजसत्तमः ।
शुल्कं प्रदीयतां मह्यं ततो वत्स्यसि मे सुताम् ॥

ऋचीक उवाच—

किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप ।
दुहितुर्ब्रूह्यसंसक्तो मा भूत्तत्र विचारणा ॥

गाधिरुवाच—

चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् ।
एकतः श्यामकर्णानां सहस्रं देहि भार्गव ॥

भीष्म उवाच—

ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः ।
अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् ॥

(१) भा. १३।४।१-६२; बाल. १।५३ पृ. १८४-१८५ (१३।४।४९ तः ६०) : पृ. १८७ (१३।४।८).

एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम्।
सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ॥
तथेति वरुणो देव आदित्यो भृगुसत्तमम्।
उवाच यत्र ते छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥
ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्चसाम्।
गङ्गाजलात् समुत्तस्थौ सहस्रं विपुलौजसाम् ॥
अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमम्।
अश्वतीर्थं तदद्यापि मानवैः परिचक्ष्यते ॥
ततो वै गाधये तात सहस्रं वाजिनां शुभम्।
ऋचीकः प्रददौ प्रीतः शुल्कार्थे तपतां वरः ॥
ततः स विस्मितो राजा गाधिः शापभयेन च।
ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ॥
जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तमः।
सा च तं पतिमासाद्य परं हर्षमवाप ह ॥
स तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत।
छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥
मात्रे तत्सर्वमाचख्यौ सा कन्या राजसत्तम।
अथ तामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीम् ॥
ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति।
अपत्यस्य प्रदानेन समर्थश्च महातपाः ॥
ततः सा त्वरितं गत्वा तत्सर्वं प्रत्यवेदयत्।
मातुश्चिकीर्षितं राजन् ऋचीकस्तामथाब्रवीत् ॥
गुणवन्तमपत्यं सा अचिराज्जनयिष्यति।
मम प्रसादात् कल्याणि मा भूत्ते प्रणयोऽन्यथा ॥
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते महान्।
अस्मद्वंशकरः श्रीमान् सत्यमेतद्ब्रवीमि ते ॥
ऋतुस्नाता च साऽश्वत्थं त्वं च वृक्षमुदुम्बरम्।
परिष्वजेथाः कल्याणि तत एवमवाप्स्यथः ॥
चरुद्वयमिदं चैव मन्त्रपूतं शुचिस्मिते।
त्वं च सा चोपभुञ्जीतं ततः पुत्राववाप्स्यथः ॥
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥
तामुवाच ततो माता सुतां सत्यवतीं तदा।
पुत्रि पूर्वोपपन्नायाः कुरुष्व वचनं मम ॥
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः।
एनं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥
व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥
स्वमपत्यं विशिष्टं हि सर्व इच्छत्यनाविलम्।
व्यक्तं भगवता चात्र कृतमेवं भविष्यति ॥
ततो मे त्वच्चरौ भावः पादपे च सुमध्यमे।
कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय ॥
तथा च कृतवत्यौ ते माता सत्यवती च सा।
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥
दृष्ट्वा गर्भमनुप्राप्तां भार्यां स च महानृषिः।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ॥
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति।
व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ॥
मया हि विश्वं यद्ब्रह्म त्वच्चरौ संनिवेशितम्।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ॥
त्रैलोक्यविख्यातगुणं त्वं विप्रं जनयिष्यसि।
सा च क्षत्रं विशिष्टं वै तत एतत्कृतं मया ॥
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे।
तस्मात् सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति ॥
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि।
न हि ते तत्कृतं साधु मातृस्नेहेन भाविनि ॥
सा श्रुत्वा शोकसंतप्ता पपात वरवर्णिनी।
भूमौ सत्यवती राजन् छिन्नेव रुचिरा लता ॥
प्रतिलभ्य च सा संज्ञां शिरसा प्रणिपत्य च।
उवाच भार्या भर्तारं गाधेयी भार्गवर्षभम् ॥
प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदां वर।
प्रसादं कुरु विप्रर्षे न मे स्यात् क्षत्रियः सुतः ॥
कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति।
न तु मे स्यात् सुतो ब्रह्मन्नेष मे दीयतां वरः ॥
एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः।
ततः सा जनयामास जमदग्निं सुतं शुभम् ॥
विश्वामित्रं चाजनयद्गाधिभार्या यशस्विनी।
ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षेर्ब्रह्मवादिनम् ॥

ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥
तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥
मधुच्छन्दश्च भगवान् देवरातश्च वीर्यवान् ।
अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ॥
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः ।
उलूको यमदूतश्च तथर्षिः सैन्धवायनः ॥
वल्गुजङ्घश्च भगवान् गालवश्च महानृषिः ।
ऋषिर्वज्रस्तथा ख्यातः सालङ्कायन एव च ॥
लीलाढ्यो नारदश्चैव तथा कूर्चामुखः स्मृतः ।
वादुलिर्मुसलश्चैव वक्षोग्रीवस्तथैव च ॥
आङ्घ्रिको नैकदृक्चैव शिलायूपः शितः शुचिः ।
चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ॥
श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा ।
कारीषिरथ संश्रुत्यः परपौरवतन्तवः ॥
महानृषिश्च कपिलस्तथर्षिस्ताडकायनः ।
तथैव चोपगहनस्तथर्षिश्चासुरायणः ॥
मार्दमर्षिर्हिरण्याक्षो जङ्घारिर्बाभ्रवायणिः ।
भूतिर्विभूतिः सूतश्च सुरकृत्तु तथैव च ॥
अरालिर्नाचिकश्चैव चाम्पेयोज्जयनौ तथा ।
नवतन्तुर्बकनखः सेयनो यतिरेव च ॥
अम्भोरुहश्चारुमत्स्यः शिरीषी चाथ गार्दभिः ।
ऊर्जयोनिरुदापेक्षी नारदी च महानृषिः ॥
विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ।
तथैव क्षत्रियो राजन् विश्वामित्रो महातपाः ॥
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ।
एतत्ते सर्वमाख्यातं तत्त्वेन भरतर्षभ ॥
विश्वामित्रस्य वै जन्म सोमसूर्याग्नितेजसः ।
यत्र यत्र च संदेहो भूयस्ते राजसत्तम ।
तत्र तत्र च मां ब्रूहि छेत्तास्मि तव संशयम् ॥
एकोऽग्निः पूर्वमासीद्वै ऐलस्तं त्रीनकल्पयत् ॥

एवंप्रभावो राजाऽऽसीदैलस्तु द्विजसत्तमाः ।
देशे पुण्यतमे चैव महर्षिभिरलङ्कृते ॥[1]
राज्यं स कारयामास प्रयागे पृथिवीपतिः ।
उत्तरे यामुने तीरे प्रतिष्ठाने महायशाः ॥[2]
तस्य पुत्रा बभूवुर्हि षडिन्द्रोपमतेजसः ।
गन्धर्वलोके विदिता आयुर्धीमानमावसुः ।
विश्वायुश्च श्रुतायुश्च शतायुश्चोर्वशीसुताः ॥[3]

---

(१) वायु. ९१।४८ स्तं त्रीन ( स्त्रीन्तान ); ब्रह्माण्ड. ३।६६।१९ ; हरि. १।२६।४७ ( एकोऽग्निः पूर्वमेवासीदैलस्त्रेतामकारयत् । ) ; अग्नि. २७४।१४ ( एकोऽग्निरभवत्पूर्वं तेन त्रेता प्रवर्तिता । ).

(१) वायु. ९१।४९ ; ब्रह्माण्ड. ३।६६।२० ; हरि. १।२६। ४८ द्विजसत्तमाः ( नरसत्तम ) रलङ्कृते ( रभिष्टुते ) ; लिङ्ग. १।६६।५५ ( ऐलः पुरूरवा नाम रुद्रभक्तः प्रतापवान् । चक्रे त्वकण्टकं राज्यं देशे पुण्यतमे द्विजाः ॥ ) ; ब्रह्म. १०।९,१० द्विजसत्तमाः ( नरसत्तमः ) रलङ्कृते ( रभिष्टुते ).

(२) वायु. ९१।५० ; ब्रह्माण्ड. ३।६६।२१ ; हरि. १।२६।४९ यामुने ( जाह्नवी ) ; लिङ्ग. १।६६।५६ (उत्तरे यमुनातीरे प्रयागे मुनिसेविते । प्रतिष्ठानाधिपः श्रीमान् प्रतिष्ठाने प्रतिष्ठितः ॥ ) ; ब्रह्म. १०।९,१० यामुने ( जाह्नवी ).

(३) वायु. ९१।५१,५२ श्रुतायुश्च शतायु ( शतायुश्च गतायु ) ; ब्रह्माण्ड. ३।६६।२२, २३ तृतीयार्धे ( विश्वावसुः श्रुतायुश्च शतायुश्चोर्वशीसुताः । ) ; मत्स्य. २४।३३, ३४ ( अजीजनत्सुतानष्टौ नामतस्तान्निबोधत । आयुर्दृढायुरश्वायुर्धनायुर्धृतिमान् वसुः ॥ शुचिविद्यः शतायुश्च सर्वे दिव्यबलौजसः ॥ ) ; विष्णु. ४।७।१ (तस्याप्यायुर्धीमानमावसुविश्वावसुश्रुतायुश्रुतायुसंज्ञाः षडभवन्पुत्राः ॥ ) ; हरि. १।२७।१, २ ( ऐलपुत्रा बभूवुस्ते सर्वे देवसुतोपमाः । दिवि जाता महात्मान आयुर्धीमानमावसुः ॥ विश्वायुश्चैव धर्मात्मा श्रुतायुश्च तथाऽपरः । दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ॥ ) ; लिङ्ग. १।६६।५७, ५८ ( तस्य पुत्राः सप्त भवन् सर्वे विततेजसः । गन्धर्वलोकविदिता भवमक्ता महाबलाः ॥ आयुर्मायुरमायुश्च विश्वायुश्चैव वीर्यवान् । श्रुतायुश्च शतायुश्च दिव्याश्चैवोर्वशीसुताः ॥ ) ; गरुड. १।१३९।२ ( बुधपुत्रात्पुरूरवसः षट्पुत्रास्तु श्रुतात्मकः । विश्वावसुः शतायुश्च आयुर्धीमानमावसुः ॥ ) ; पद्म. ५।१२।८६,८७ ( अजीजनत्सुतानष्टौ नामतस्तान्निबोधत । आयुर्दृढायुरश्वायुर्धनायुर्धृतिमान् वसुः । दिविजातः श्रुतायुश्च सर्वे दिव्यबलौजसः ॥ ) ; ब्रह्म. १०।११,१२ ( ऐलपुत्रा बभूवुस्ते सप्त देवसुतोपमाः । गन्धर्वलोके विदिता आयुर्धीमानमावसुः ॥ विश्वायुश्चैव धर्मात्मा श्रुतायुश्च तथाऽपरः । दृढायुश्च वनायुश्च बह्वायुश्चोर्वशीसुताः ॥ ) ; अग्नि. २७४।१५

अमावसोस्तु वै जातो भीमो राजाऽथ विश्वजित् ॥
श्रीमान्भीमस्य दायादो राजाऽऽसीत्काञ्चनप्रभः ।
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः ॥

सुहोत्रस्याभवज्जह्नुः केशिन्या गर्भसंभवः ।
आजह्रे यो महत्सत्रं सर्वमेधं महामखम् ॥

प्रतिगत्य ततो गङ्गा वितते यज्ञकर्मणि ।
प्लावयामास तं देशं भाविनोऽर्थस्य दर्शनात् ॥

गङ्गया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ।
सौहोत्रिरब्रवीद्गङ्गां क्रुद्धो राजा द्विजोत्तमाः ॥

एष ते विफलं यत्नं पिबन्नम्भः करोम्यहम् ।
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि ॥

राजर्षिणा ततः पीतां गङ्गां दृष्ट्वा महर्षयः ।
उपनिन्युर्महाभागा दुहितृत्वेन जाह्नवीम् ॥

युवनाश्वस्य पुत्रीं तु कावेरीं जह्नुरावहत् ।
युवनाश्वस्य शापेन गङ्गार्धेन विनिर्ममे ॥

कावेरीं सरितां श्रेष्ठां जह्नुभार्यामनिन्दिताम् ।
जह्नुस्तु दयितं पुत्रं सुनहं नाम धार्मिकम् ।
कावेर्यां जनयामास अजकस्तस्य चात्मजः ॥

---

( आयुर्दृढायुरश्वायुर्धनायुर्धृतिमान्वसुः । दिविजातः शतायुश्च सुषुवे चोर्वशी नृपात् ॥ ).

(१) वायु. ९१।५२ ; ब्रह्माण्ड. ३।६६।२३ ; हरि. १।२७।२ वै जातो ( दायादो ) विश्व ( नम्र ) ; गरुड. १।१३९।४ ( अमावसोर्भीमनामा ) ; ब्रह्म. १०।१३ वै जातो ( दायादो ) विश्वजित् ( राजराट् ).

(२) वायु. ९१।५३ ; ब्रह्माण्ड. ३।६६।२४; हरि. १।२७।३ ; गरुड. १।१३९।४ ( भीमपुत्रश्च काञ्चनः । काञ्चनस्य सुहोत्रोऽभूत् ) ; ब्रह्म. १०।१३, १४.

(३) वायु. ९१।५४ केशिन्या ( कौशिका ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।६६।२५ केशिन्या ( केशिनी ) उत्तरार्धं नास्ति ; हरि. १।२७।४ सुहोत्रस्या ( सौहोत्रिर ) मेधं ( मेध ) : १।३२।४३ पूर्वार्धे ( अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् । ) ; गरुड. १।१३९।४ ( जह्नुश्चाभूत्सुहोत्रतः. ) ; ब्रह्म. १०।१४,१५ सर्व ( सर्प ) : १३।८२,८३ पूर्वार्धे ( अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् । ) मेधं महामखम् ( मेधमखं विभुः ).

(४) वायु. ९१।५४,५५ ; ब्रह्माण्ड. ३।६६।२५,२६ प्लावया ( सारया ) ; हरि. १।२७।५ ( पतिलोभेन यं गङ्गा पतित्वेऽभिससार ह । नेच्छतः प्लावयामास तस्य गङ्गा च तत्सदः ॥ ) : १।३२।४४ पतिरे ( विनीता ) शेषं पूर्ववत् ; ब्रह्म. १०।१५,१६ ( पतिलोभेन यं गङ्गा पतित्वेन समार ह । नेच्छतः प्लावयामास तस्य गङ्गा तदा सदः ॥ ) : १३।८३,८४ पतिलोभेन ( विनीय ) तदा सदः ( च तत्सदः ) शेषं पूर्ववत्.

(५) वायु. ९१।५५,५६ उत्तरार्धे ( सौहोत्रिरिदः क्रुद्धो गङ्गां संरम्भितः । ) ; ब्रह्माण्ड. ३।६६।२६,२७ रब्रवीद्गङ्गां क्रुद्धो ( रपि संक्रुद्धो गङ्गां ) ; हरि. १।२७।६ गङ्गया ( स तया ) राजा द्विजोत्तमाः ( भारतसत्तम ) : १।३२।४५ ( स तया प्लावितं दृष्ट्वा यज्ञवाटं परन्तप । जह्नुरप्यब्रवीद्गङ्गां क्रुद्धो भरतसत्तम ॥ ) ; ब्रह्म. १०।१६,१७ गङ्गया ( स तया ) रब्रवी ( रशाप ) : १३।८४,८५ गङ्गया ( तत्तया ) उत्तरार्धे ( जह्नुरप्यब्रवीद्गङ्गां क्रुद्धो विप्रास्तदा नृपः । ).

(१) वायु. ९१।५६,५७ पूर्वार्धे ( एतत्ते विफलं सर्वं पीतमम्भः करोम्यहम् । ) ; हरि. १।२७।७ : १।३२।४६ पूर्वार्धे ( एष ते त्रिषु लोकेषु संक्षिप्यापः पिबाम्यहम् । ) ; ब्रह्म. १०।१७,१८ : १३।८५ हरिवत्.

(२) वायु. ९१।५७, ५८ महर्षयः ( सुरर्षयः ) ; ब्रह्माण्ड. ३।६६।२७, २८ राजर्षिणा ततः ( तदा राजर्षिणा ) महर्षयः ( सुरर्षयः ) ; हरि. १।२७।८ भागा ( भार्गा ) : १।३२।४७ राजर्षिणा ततः पीतां ( ततः पीतां महात्मानो ) त्वेन ( त्वाय ) ; ब्रह्म. १०।१८,१९ राजर्षिणा ततः ( जह्नुराजर्षिणा ) भागा ( भार्गा ) : १३।८६ राजर्षिणा ततः पीतां ( ततः पीतां महात्मानो ).

(३) वायु. ९१।५८, ५९ युव ( यौव ) पुत्रीं ( पौत्रीं ) गङ्गार्धेन ( गङ्गा येन ) ; ब्रह्माण्ड. ३।६६।२८,२९ युवनाश्वस्य पुत्रीं ( यौवनाश्वस्य पौत्रीं ) : हरि. १।२७।९ : १।३२।४८ उत्तरार्धे ( गङ्गाशापेन देहार्धं यस्याः पश्चान्नदीकृतम् । ) ; ब्रह्म. १०।१९,२० विनिर्ममे ( विनिर्गता ) : १३।८७ हरिवत्.

(४) वायु. ९१।५९, ६० स्तु ( स्य ) सुनहं ( सुहोत्रं ) ; ब्रह्माण्ड. ३।६६।३०, ३१ ; हरि. १।२७।९, १० जह्नुभा ( जह्नोर्भा ) : १।३२।४९ ( जह्नोस्तु दयितः पुत्रस्त्वजको नाम वीर्यवान् । ) एतावदेव ; ब्रह्म. १०।२०,२१ जह्नुभा ( जह्नोर्भा ) सुनहं ( सुनयं ) : १३।८८ ( जह्नोस्तु दयितः पुत्रो अजको नाम वीर्यवान् । ) एतावदेव.

अजकस्य तु दायादो बलाकाश्वो महायशाः ।
बभूव मृगयाशीलः कुशस्तस्यात्मजः स्मृतः ॥
कुशपुत्रा बभूवुर्हि चत्वारो देववर्चसः ।
कुशिकः कुशनाभश्च कुशाम्बो मूर्तिमांस्तथा ॥
पह्लवैः सह संवृद्धो राजा वनचरैस्तदा ।
कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभम् ।
लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् ॥
पूर्णे वर्षसहस्रे वै शतक्रतुरपश्यत ।
तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः ।
समर्थः पुत्रजनने स्वयमेवास्य शाश्वतः ॥
पुत्रत्वं कल्पयामास स्वयमेव पुरन्दरः ।
गाधिर्नामाऽभवत्पुत्रः कौशिकः पाकशासनः ॥

पौरुकुत्स्यभवद्भार्या गाधिस्तस्यामजायत ।
गाधेः कन्या महाभागा नाम्ना सत्यवती शुभा ।
तां गाधिः काव्यपुत्राय ऋचीकाय ददौ प्रभुः ॥
तस्याः प्रीतस्तु वै भर्ता भार्गवो भृगुनन्दनः ।
पुत्रार्थं साधयामास चरुं गाधेस्तथैव च ॥
उवाचाहूय तां भार्यामृचीको भार्गवस्तदा ।
उपयोज्यश्चरुरयं त्वया मात्रा च ते शुभे ॥
तस्यां जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः ।
अजेयः क्षत्रियैर्युद्धे क्षत्रियर्षभसूदनः ॥
तवापि पुत्रं कल्याणि धृतिमन्तं तपोधनम् ।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ॥
एवमुक्त्वा तु तां भार्यामृचीको भृगुनन्दनः ।
तपस्यभिरतो नित्यमरण्यं प्रविवेश ह ॥

---

(१) वायु. ९१।६१ बभूव मृगयाशीलः (बभूवुश्च गयः शीलः); ब्रह्माण्ड. ३।६६।३१; हरि. १।२७।११ महायशाः (महीपतिः) जः स्मृतः (जोऽभवत्): १।३२।४९, ५० महायशाः (महीपतिः) कुशस्तस्यात्मजः स्मृतः (कुशिकस्तस्य चात्मजः); ब्रह्म. १०।२२ हरिवत्: १३।८८, ८९ हरिवत्.

- (२) वायु. ९१।६२ बुर्हि (बुश्च) देव (वेद) उत्तरार्धे (कुशाश्च कुशनाभश्च अमूर्तरयसो वसुः।); ब्रह्माण्ड. ३।६६।३२ बुर्हि (बुश्च) उत्तरार्धे (कुशाम्बः कुशनाभश्च अमूर्तरयसो वसुः।); हरि. १।२७।१२; ब्रह्म. १०।२३.

(३) वायु. ९१।६३ (कुशस्तम्बस्तपस्तेपे पुत्रार्थी राजसत्तमः।) एतावदेव; ब्रह्माण्ड. ३।६६।३३ (कुशिकस्तु तपस्तेपे पुत्रार्थी राजसत्तमः।) एतावदेव; हरि. १।२७।१३: १।३२।५०, ५१ संवृद्धो (सरुद्धो) समप्रभम् (सर्व प्रभु); ब्रह्म. १०।२४, २५ पह्लवैः (बलौः) चरैः (चरः) समप्रभम् (सर्व प्रभु): १३।८९, ९० तदा (सह) समप्रभम् (सर्व विभुम्).

(४) वायु. ९१।६३, ६४ पश्यत (मस्यत) मुग्रतपसं (दुर्गं नाम्ने); ब्रह्माण्ड. ३।६६।३३, ३४; हरि. १।२७।१४, १५ शक्रस्तुर (तं तु शक्रो ह) तमुग्र (मग्रुम) स्वयमेवास्य शाश्वतः (स्वमेवाऽस्य समभवत्); ब्रह्म. १०।२५, २६ शतक्रतुर (तः शक्रो ह) तमुग्र (मग्रुम).

(५) वायु. ९१।६५; ब्रह्माण्ड. ३।६६।३५; हरि. १।२७।१५, १६ (पुत्रत्वे कल्पयामास देवेन्द्रः सुरोत्तमः। स गाधिरभवद्राजा मघवान्कौशिकः स्वयम् ॥)। १।३२।५१ पूर्वार्ध, पूर्वार्धं नास्ति; ब्रह्म. १०।२७ (पुत्रार्थे कल्पयामास देवेन्द्रः सुरोत्तम। स गाधिरभवद्राजा मघवान्कौशिकः स्वयम् ॥): १३।९१ (स गाधिरभवद्राजा मघवा कौशिकः स्वयम्।) पूर्वार्धं नास्ति.

(१) वायु. ९१।६६ स्यभव (स्याऽभव) द्वितीयार्धे (पूर्वकन्यां महाभागां नाम्ना सत्यवतीं शुभाम्।) काव्यपुत्राय (पुत्रकाम्याय); ब्रह्माण्ड. ३।६६।३६, ३७ गाधि (गाधे) गाधेः (पूर्वे) काव्यपुत्राय (पुत्रकामाय); हरि. १।२७।१६, १७ काव्य (भृगु); ब्रह्म. १०।२८, २९ पौरुकुत्स्यभव (पौरु यस्याम).

(२) वायु. ९१।६७ तस्याः प्रीतस्तु (तस्यां पुत्रस्तु) पुत्रार्थं (पुत्रार्थे); ब्रह्माण्ड. ३।६६।३७ पुत्रार्थं (पुत्रार्थे); हरि. १।२७।१८ प्रीतस्तु वै (प्रीतिमभवत्); ब्रह्म. १०।२९, ३० प्रीतस्तु (प्रीतः स).

(३) वायु. ९१।६८ उवाचाहूय तां भार्यां (तथा चाहूय निभृतं); ब्रह्माण्ड. ३।६६।३८, ३९ उवाचाहूय तां भार्यां (अथाब्रवीत् प्रियां स्वां) शुभे (शुभा); हरि. १।२७।१९ भार्यां (भर्ता) च ते शुभे (सर्वं त्वं); ब्रह्म. १०।३०, ३१ च ते (सर्व); वायु. १।५३ पृ. १८७ हरिवत्.

(४) वायु. ९१।६९; ब्रह्माण्ड. ३।६६।३९, ४० तस्यां (तस्या); हरि. १।२७।२० युद्धे (संख्ये); ब्रह्म. १०।३१, ३२ हरिवत्.

(५) वायु. ९१।७०; ब्रह्माण्ड. ३।६६।४०, ४१; हरि. १।२७।२१ धृतिम् (निधिम्); ब्रह्म. १०।३२, ३३.

(६) वायु. ९१।७१ तपस्य (त्वरसा); ब्रह्माण्ड. ३।६६।४१, ४२; हरि. १।२७।२२; ब्रह्म. १०।३३, ३४.

गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात् ।
तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः ॥

चरुद्वयं गृहीत्वा तु ऋषेः सत्यवती तदा ।
भर्तुर्वचनमव्यग्रा हृष्टा मात्रे न्यवेदयत् ॥

माता तु तस्यै दैवेन दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञानादात्मनः सा चकार ह ॥

अथ सत्यवती गर्भं क्षत्रियान्तकरं शुभम् ।
धारयामास दीप्तेन वपुषा घोरदर्शना ॥

तामृचीकस्ततो दृष्ट्वा योगेनाप्यवमृश्य च ।
तदाऽब्रवीद्द्विजश्रेष्ठः स्वां भार्यां वरवर्णिनीम् ॥

मात्राऽसि वञ्चिता भद्रे चरुव्यत्यासहेतुना ।
जनिष्यति हि पुत्रस्ते क्रूरकर्माऽतिदारुणः ॥

माता जनिष्यते चापि तथाभूतं तपोधनम् ।
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितम् ॥

(१) वायु. ९१।७२ ; ब्रह्माण्ड. ३।६६।४२,४३ ; हरि. १।२७।२३ काश्रम (कावास) नरेश्वरः (जनेश्वरः) ; ब्रह्म. १०।३४,३५.

(२) वायु. ९१।७३ ; ब्रह्माण्ड. ३।६६।४३,४४ ; हरि. १।२७।२४ तु (तद्) उत्तरार्धे (चरुमादाय यत्नेन सा तु मात्रे न्यवेदयत् ।) ; ब्रह्म. १०।३५,३६ तु (सा) उत्तरार्धे हरिवत्.

(३) वायु. ९१।७४ ; ब्रह्माण्ड. ३।६६।४४,४५ स्वं चरुं (स्वचरुं) ; हरि. १।२७।२५ तु तस्यै (व्यत्यस्य) दात्मनः सा (दात्मसंस्थं) ; ब्रह्म. १०।३६,३७ तस्यै (तस्या) दात्मनः सा (दात्मनःपं).

(४) वायु. ९१।७५ ; ब्रह्माण्ड. ३।६६।४५,४६ ; हरि. १।२७।२६ शुभम् (तदा) दर्शना (दर्शनम्) ; ब्रह्म. १०।३७,३८ गर्भं (गर्भे) शुभम् (तदा).

(५) वायु. ९१।७६ प्यव (प्यनु) ; ब्रह्माण्ड. ३।६६।४६,४७ तामृ (ताम्) ; हरि. १।२७।२७ तामृ (ताम्) प्यवमृश्य (प्यनुगम्य) तदाऽब्र (ताम) ; ब्रह्म. १०।३८,३९ तामृ (ताम्) प्यवमृश्य (प्युपगम्य) तदा (ततो).

(६) वायु. ९१।७७ मात्राऽसि (मन्या स) ; ब्रह्माण्ड. ३।६६।४७, ४८ ; हरि. १।२७।२८ ; ब्रह्म. १०।३९,४०.

(७) वायु. ९१।७८ चापि (चाऽपि) ; ब्रह्माण्ड. ३।६६।४८,४९ ; हरि. १।२७।२९ माता (भ्राता) तथाभूतं तपोधनम् (महाभागस्तपोधन) तत्र (तस्मिन्) ; ब्रह्म. १०।४०,४१ हरिवत्.

एवमुक्ता महाभागा भर्त्रा सत्यवती तदा ।
प्रसादयामास पतिं सुतो मे नेदृशो भवेत् ।
ब्राह्मणापसदस्त्वत्त इत्युक्तो मुनिरब्रवीत् ॥

[2]नैष संकल्पितः कामो मया भद्रे तथा त्वया ।
उग्रकर्मा भवेत्पुत्रः पितुर्मातुश्च कारणात् ॥

पुनः सत्यवती वाक्यमेवमुक्ताऽब्रवीदिदम् ।
इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ॥

शमात्मकमृजुं भर्तः पुत्रं मे दातुमर्हसि ।
काममेवंविधः पौत्रो मम स्यात्तव सुव्रत ॥

यद्यन्यथा न शक्यं वै कर्तुमेवं द्विजोत्तम ।
ततः प्रसादमकरोत्स तस्यास्तपसो बलात् ॥

पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि ।
त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ॥

ततः सत्यवती पुत्रं जनयामास भार्गवम् ।
तपस्यभिरतं दान्तं जमदग्निं शमात्मकम् ॥

(१) वायु. ९१।७९ मुक्ता (मुक्त्वा) स्त्वत्त (स्त्वन्य) ; ब्रह्माण्ड. ३।६६।४९,५० ; हरि. १।२७।३० ; ब्रह्म. १०।४१, ४२.

(२) वायु. ९१।८० ; ब्रह्माण्ड. ३।६६।५१ नैष (नैव) ; हरि. १।२७।३१ तथा त्वया (तथाऽस्त्विति) ; ब्रह्म. १०।४२ हरिवत्.

(३) वायु. ९१।८१ मुक्ता (मुक्त्वा) ; ब्रह्माण्ड. ३।६६।५२ ; हरि. १।२७।३१, ३२ ; ब्रह्म. १०।४४ वायुवत्.

(४) वायु. ९१।८२ पौत्रो (पुत्रो) स्यात्तव सुव्रत (स्यात्तु वद प्रभो) ; ब्रह्माण्ड. ३।६६।५३ ; हरि. १।२७।३२,३३ भर्तः (त्वं मे) मे दातुम (दातुमिहा) सुव्रत (च प्रभो) ; ब्रह्म. १०।४५ हरिवत्.

(५) वायु. ९१।८३ यद्य (मन्य) मेवं (मेव) ; ब्रह्माण्ड. ३।६६।५४ ; हरि. १।२७।३३,३४ मेवं (मेतद्) ; ब्रह्म. १०।४६ हरिवत्.

(६) वायु. ९१।८४ ; ब्रह्माण्ड. ३।६६।५५ ; हरि. १।२७।३४ पुत्रे (भद्रे) ; ब्रह्म. १०।४७.

(७) वायु. ९१।८५ ततः (तस्मात्) ; ब्रह्माण्ड. ३।६६।५६ वायुवत् ; हरि. १।२७।३५ ; ब्रह्म. १०।४८ दान्तं (शान्तं) ; भाग. ९।१५ पृ. १८७.

[1]भृगोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा ।
जमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत ॥
[2]विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः ।
प्राप्य ब्रह्मर्षिसमतां जगाम ब्रह्मणा वृत. ॥
[3]सा हि सत्यवती पुण्या सत्यव्रतपरायणा ।
कौशिकीति समाख्याता प्रवृत्तेयं महानदी ॥
[4]परिश्रुता महाभागा कौशिकी सरितां वरा ।
इक्ष्वाकुवंशप्रभवो रेणुर्नाम नराधिपः ॥
[5]तस्य कन्या महाभागा कामली नाम रेणुका ।
रेणुकायां तु कामल्यां तपोविद्यासमन्वितः ।
आर्चीको जनयामास जामदग्न्यं सुदारुणम् ॥
[6]सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ।
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥
[7]और्वस्यैवमृचीकस्य सत्यवत्यां महामनाः ।
जमदग्निस्तपोवीर्याज्जज्ञे ब्रह्मविदां वरः ।
मध्यमश्च शुनःशेपः शुनःपुच्छः कनिष्ठकः ॥

---

(१) वायु. ९१।८६ ; ब्रह्माण्ड. ३।६६।५७ ; हरि. १।२७।३६ जमना (यजना) वस्याग्नेः (वेऽथांशे) ; ब्रह्म. २०।४९ ( भृगोर्जगत्यां वंशेऽस्मिन् जमदग्निरजायत । ) ; बाल. १।५३ पृ. १८७ जमनाद्वैष्णवस्याग्ने ( यजनाद्वैष्णवोऽप्यंशो ).

(२) वायु. ९१।८७ ; ब्रह्माण्ड. ३।६६।५८.

(३) वायु. ९१।८८ ; ब्रह्माण्ड. ३।६६।५९ कीति(की तु) ; हरि. १।२७।३७ व्रत ( धर्म ) ; ब्रह्म. १०।४९,५० हरिवत्.

(४) वायु. ९१।८९ उत्तरार्धे ( इक्ष्वाकुवंशे त्वभवद्रेणुर्नाम पार्थिवः । ) ; ब्रह्माण्ड. ३।६६।६० श्रुता ( सुता ) रेणुर्नाम नराधिपः (रेणुको नाम पार्थिव॰) ; हरि. १।२७।३८ पूर्वार्धं नास्ति ; ब्रह्म. १०।५० पूर्वार्धं नास्ति.

(५) वायु. ९१।९० विद्या ( धृति ) जामदग्न्य ( जनदग्निः ) ; ब्रह्माण्ड. ३।६६।६१,६२ कामली ( कमली ) द्वितीयार्धे ( रेणुकायां कमल्यां तु तपोधृतिसमाधिना । ) जामदग्न्यं ( जमदग्निः ) ; हरि. १।२७।३८,३९ ; ब्रह्म. १०।५१,५२ ; बाल. १।५३ पृ. १८७ कामल्यां ( कमल्यां ) प्रथमार्धं विना.

(६) वायु. ९१।९१ ; ब्रह्माण्ड. ३।६६।६२,६३ ; हरि. १।२७।४० धान्तग ( धानुग ) ; ब्रह्म. १०।५२,५३.

(७) वायु. ९१।९२ ; ब्रह्माण्ड. ३।६६।६३, ६४ शेपः ( शेफः ) ; हरि. १।२७।४१,४२ मनाः ( यशाः ) शेपः ( शेफः ) : १।३२।५३ ( ऋचीकाज्जमदग्निस्तु सत्यवत्यामजायत । ) एतावदेव ; ब्रह्म. १०।५३,५४ हरिवत् ; संम. ६१ मनाः ( यशा॰ ) वीर्यात् ( वीर्यो ) ष्ठक॰ ( ष्ठकम् ) ; संकौ. १९३ मनाः ( यशा॰ ) वीर्यात् ( वीर्यो ) ; बाल. १।५३ पृ. १८७ सैवमृ ( स्यैव ऋ ) मनाः ( यशाः ) तपो ( सुतो ) ; कृम. १०५१ सकौवत् ; संर. ४४९ संकौवत् .

[1]विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः ।
जनयामास पुत्रं तु तपोविद्याशमात्मकम् ।
प्राप्य ब्रह्मर्षिसमतां योऽयं ब्रह्मर्षितां गतः ॥
[2]विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ।
जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्धनः ॥
[3]विश्वामित्रस्य पुत्रस्तु शुनःशेपोऽभवन्मुनिः ।
हरिश्चन्द्रस्य यज्ञे तु पशुत्वे नियतः स वै ॥
[4]दैवैर्दत्तः शुनःशेपो विश्वामित्राय वै पुनः ।
दैवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् ॥
[5]विश्वामित्रस्य तु सुता देवरातादयः स्मृताः ।
प्रख्यातास्त्रिषु लोकेषु तेषां नामानि मे शृणु ॥
[6]देवरातः कतिश्चैव यस्मात्कात्यायनाः स्मृताः ।
शालावत्यां हिरण्याक्षो रेणोर्जज्ञेऽथ रेणुकः ॥

---

(१) हरि. १।२७।४२,४३ ब्रह्मर्षितां ( समर्थितां ) ; ब्रह्म. १०।५५,५६ ; बाल. १।५३ पृ. १८७ हरिवत् .

(२) वायु. ९१।९३ ; ब्रह्माण्ड. ३।६६।६५ कादेश ( कान्वय ) ; हरि. १।२७।४४ : १।३२।५२,५३ ( विश्वामित्रस्तु गाधेयो राजा विश्वरथस्तदा । विश्वकृद्विश्वजिच्चैव तथा सत्यवती नृप ॥ ) ; ब्रह्म. १०।५६,५७ ; बाल. १।५३ पृ १८७.

(३) वायु. ९१।९४ ; ब्रह्माण्ड. ३।६६।६६ शेपो ( शेफो ) ; हरि. १।२७।५५ शेपो ( शेफो ) मुनिः ( किल ) हरिश्चन्द्रस्य ( हरिदश्वस्य ) नियतः स वै ( विनियोजितः ) ; ब्रह्म. १०।६५ हरिवत् ; बाल. १।५३ पृ १८७ मुनिः ( किल ) हरिश्चन्द्रस्य (हरिदश्वस्य ) नियत. स वै ( विनियोजितः ).

(४) वायु. ९१।९५ ; ब्रह्माण्ड ३।६६।६७ शेपो( शेफो ) ; हरि. १।२७।५६ ब्रह्माण्डवत् ; ब्रह्म. १०।६६ ब्रह्माण्डवत् ; संम. ६१ वै पुनः ( भार्गवः ) ; संकौ. १९३ संमवत् ; बाल. १।५३ पृ. १८७ ; कृम. १०५१ समवत् ; संर. ४४९ समवत्.

(५) हरि. १।२७।४५ : १।३२।५४ ; ब्रह्म. १०।५७,५८ तु (च) नामानि मे शृणु ( नामान्यत॰ परम् ) ; बाल. १।५३ पृ. १८७ तु सुता ( पुत्रास्तु ) प्रख्या ( विख्या ) मे शृणु ( संशृणु ).

(६) हरि. १।२७।४६ देवरातः (देवश्रवा॰ ) रेणुकः (रेणुमान्): १।३२।५५ पूर्ववत् ; ब्रह्म. १०।५८,५९ ; बाल. १।५३ पृ. १८७

सांकृतिर्गालवश्चैव मुद्गलश्चैव विश्रुतः ।
मधुच्छन्दो जयश्चैव देवलश्च तथाऽष्टकः ॥

[2]कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः ।
तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम् ॥

[3]पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च ।
पार्थिवा देवरातश्च शालङ्कायन-बाष्कलाः ॥

[4]लोहिता यामदूताश्च तथा कारूपकाः स्मृताः ।
सौश्रुताः कौशिकाश्चैव तथाऽन्ये सैन्धवायनाः ॥

[1]देवला रेणवश्चैव याज्ञवल्क्याः समर्पणाः ।
औदुम्बरा ह्यभिष्णातास्तारकायनचुञ्चुलाः ॥

[2]शालावत्या हिरण्याक्षाः सांकृत्या गालवास्तथा ।
नारायणिर्नरश्चान्यो विश्वामित्रस्य धीमतः ॥

[3]ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः ।
पौरवस्य मुनिश्रेष्ठा ब्रह्मर्षेः कौशिकस्य च ॥

[4]संबन्धोऽप्यस्य वंशेऽस्मिन्ब्रह्मक्षत्रस्य विश्रुतः ।
विश्वामित्रात्मजानां तु शुनःशेपोऽग्रजः स्मृतः ॥

---

देवरातः कति ( देवश्रवाः कत ) रेणोर्जज्ञेऽथ रेणुकः ( जज्ञे रणौ तु रेणुमान् ).

( १ ) वायु. ९१।९६ ( मधुच्छन्दो नयश्चैव कृतदेवौ ध्रुवाष्टकौ । ) पूर्वार्धं नास्ति ; ब्रह्माण्ड. ३।६६।६८ (मधुच्छन्दादयश्चैव कृतदेवौ ध्रुवाष्टकौ । ) पूर्वार्धं नास्ति ; हरि. १।२७।४७ श्चैव विश्रुतः ( श्चेति विश्रुताः ) : १।३२।५६ ( सांकृत्यो गालवो राजन् मौद्गल्यश्चेति विश्रुताः । ) उत्तरार्धं नास्ति; ब्रह्म. १०।५९,६० ; बाल. १।५३ पृ. १८७ श्चैव विश्रुतः ( श्चेति विश्रुताः ) च्छन्दो जय ( च्छन्दादय ).

( २ ) वायु. ९१।९७ हारित ( पूरण ) स्य ते सुताः (सुतास्तु वै) ख्यातानि गोत्राणि ( गोत्राणि बहुधा ) ; ब्रह्माण्ड. ३।६६।६९ वायुवत् ; हरि. १।२७।४८ ते ( वै ) : १।३२।५६ पूर्वार्धं नास्ति ; ब्रह्म. १०।६०,६१ ; बाल. १।५३ पृ. १८७ हारित ( पूरित ) ते ( वै ).

( ३ ) वायु. ९१।९८,९९ पाणिनो बभ्रवश्चैव ( बभ्रवः पाणिनश्चैव) शालाङ्कायनबाष्कलाः ( याज्ञवल्क्याः समर्पणाः) ; ब्रह्माण्ड. ३।६६।७०,७१ पाणिन ( पणिन ) शेषं वायुवत् ; हरि. १।२७।४९ : १।३२।५७ बाष्कलाः ( सौश्रवाः ) ; ब्रह्म. १०।६१,६२ ; बाल. १।५३ पृ. १८७ पाणिनो ( पाणिना ) ध्यान ( कर ).

( ४ ) वायु. ९१।९९,१०२ पूर्वार्धे ( लोहिण्या रेणवश्चैव तथा कारीषवः स्मृताः । ) सौश्रुताः कौशिकाश्चैव ( कौशिकाः सौश्रुताश्चैव ) ; ब्रह्माण्ड. ३।६६।७१,७४ पूर्वार्धे ( लोहिण्यो रेणवश्चैव तथा कारीषवः स्मृताः । ) सौश्रुताः कौशिकाश्चैव ( कौशिकाः सौश्रुताश्चैव ) ; हरि. १।२७।५० कारूपकाः ( कारिषवः ) चैव ( राजन् ) : १।३२।५८ लोहिता ( लोहित्या ) कारूपकाः ( कारीषयः ) सौश्रुताः ( विश्रुताः ) चैव ( राजन् ) ; ब्रह्म. १०।६२ याम ( यम ) सौश्रुताः ( सौश्रवाः ) मूलपुस्तकस्य टिप्पण्यां द्रष्टव्यम् ; बाल. १।५३ पृ. १८७ लोहिता याम ( लौहित्या यम ) कारूपकाः ( कारिषयः ) चैव ( राजन् ).

( १ ) वायु. ९१।९८,१०० ( उदुम्बरा उदुम्लानास्तारकायमसुञ्चताः । देवला यामदूताश्च सालङ्कायनबाष्कलाः ॥ ) ; ब्रह्माण्ड. ३।६६।७०,७२ ( उदुम्बराश्च मातङ्यास्तालकायनचान्द्रवाः । देवला यामदूताश्च शालङ्कायनबाष्कलाः ॥ ) ; हरि. १।२७।५१ ल्क्याः सम ( ल्क्याधम ) ; ब्रह्म. १०।६२ मूलपुस्तकटिप्पण्याम् , ल्क्याः समर्पणाः ( ल्क्याश्च मर्षणः ) उत्तरार्धे ( औदुम्बराम्बुभिष्णावास्तारकायणचुञ्चुलाः । ) ; बाल. १।५३ पृ. १८७ ल्क्याः सम ( ल्क्याधम ) ष्णाता ( ग्लाना ) चुञ्चु ( चञ्चु ).

( २ ) वायु. ९१।१००,१०१ सांकृत्या ( स्यङ्कृता ) तथा ( स्मृताः ) नारायणिर्नरश्चान्यो ( ददातिबादराश्चान्ये ) ; ब्रह्माण्ड. ३।६६।७२,७३ ( श्यामायना हिरण्याक्षाः सांकृता गालवाः स्मृताः । लालाट्या बादराश्चान्ये विश्वामित्रस्य धीमतः ॥ ) ; हरि. १।२७।५२ नारायणिर्नरश्चान्यो ( बादरायणिनश्चान्ये ) ; ब्रह्म. १०।६२ मूलपुस्तकटिप्पण्याम् ; बाल. १।५३ पृ. १८७ नारायणिर्नरश्चान्यो ( बादरायणयश्चैव ).

( ३ ) वायु. ९१।१०१,१०२ श्च कौशिका बहवः ( स्ते बहवः कौशिकाः ) उत्तरार्धे ( पौरोरवस्य पुण्यस्य महर्षेः कौशिकस्य तु । ) ; ब्रह्माण्ड. ३।६६।७३,७४ पूर्वार्धं वायुवत् , पौरवस्य मुनिश्रेष्ठा ( योगेश्वरस्य पुण्यस्य ) च ( वै ) ; हरि. १।२७।५३ मुनिश्रेष्ठा ( महाराज ) : १।३२।५९ मुनिश्रेष्ठा ( महाराज ) च ( ह ) ; ब्रह्म. १०।६३ पूर्वार्धंस्तु मूलपुस्तकटिप्पण्यां द्रष्टव्यः ; बाल. १।५३ पृ. १८७ मुनिश्रेष्ठा ( महाराज ).

( ४ ) वायु ९१।९६ आत्मजानां तु ( श्रस्य पुत्राणां ) पूर्वार्धं नास्ति ; ब्रह्माण्ड. ३।६६।६८,७४ आत्मजानां तु ( श्रस्य पुत्राणां) शेपो ( शेफो ) पूर्वार्धं नास्ति ; हरि. १।२७।५३, ५४ शेपो ( शेफो ) : १।३२।६० ऽप्यस्य ( त्रस्य ) शेपो ( शेफो ; ब्रह्म. १०।६३,६४ शेपो ( शेफो ) ; बाल. १।५३ आत्मजानां ( श्रसुतानां ).

भार्गवः कौशिकत्वं हि प्राप्तः स मुनिसत्तमः ।
दृषद्वतीसुतश्चापि विश्वामित्रात्तथाऽष्टकः ।
अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया ॥
[2]विश्वामित्रपुत्रस्तु भार्गव एव शुनःशेपो नाम देवैर्दत्तः ततश्च देवरातनामाऽभवत् ॥ ततश्चान्ये मधुच्छन्दजयकृतदेवदेवाष्टककच्छपहारीतकाख्याः विश्वामित्रपुत्रा बभूवुः ॥ तेषां च बहूनि कौशिकगोत्राणि ऋष्यन्तरेषु वैवाह्यानि भवन्तीति ॥
[3]ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥
श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतञ्जयः ।
रयस्य सुत एकश्च जयस्य तनयोऽमितः ॥
भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ।
तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ।
जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ॥
ततः कुशः कुशस्यापि कुशाम्बुर्मूर्तयो वसुः ।
कुशनाभश्च चत्वारो गाधिरासीत्कुशाम्बुजः ॥

(१) वायु. ९१।१०३ लौहिः (यो हि) प्रथमार्धं नास्ति ; ब्रह्माण्ड. ३।६६।७५ प्रथमार्धं नास्ति ; हरि. १।२७।५४, ५७, ५८ : १।३२।६१,६२ तथा (दथा) ; ब्रह्म. १०।६२,६७, ६८ विश्वामित्रात्तथा (वैश्वामित्रस्तथा) ; बाल. १।५३ पृ. १८७ मात्तथाऽष्टकः (मस्तथा मतः).

(२) विष्णु. ४।७।१६—१८.

(३) भाग. ९।१५।१—४.

गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥
विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप ।
मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ॥
पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ।
आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥
यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ।
स्तुत्वा देवान् प्रजेशादीन्मुमुचे पाशबन्धनात् ॥
यो रातो देवयजने देवैर्गाधिषु तापसः ।
देवरात इति ख्यातः शुनःशेपः स भार्गवः ॥
ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ।
अशपत्तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥
स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ।
यन्नो भवान्संजानीते तस्मिंस्तिष्ठामहे वयम् ॥
ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि ।
विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम् ॥
एष वः कुशिका वीरो देवरातस्तमन्वित ।
अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥
एवं कौशिकगोत्रे तु विश्वामित्रैः पृथग्विधम् ।
प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम् ॥

(१) भाग. ९।१६।२८—३७ ; बाल. १।५३ पृ. १८५ (९।१६।२९).

# [ १० ]

क्षत्रियकुलोद्भूता ब्राह्मणवर्णा अम्बरीषरथीतरादयो यौवनाश्वमान्धातृहरितादयो विष्णुवृद्धादयश्चाङ्गिरसाः

[1]नभगस्य च दायादो नाभागो नाम वीर्यवान् ॥
[2]अम्बरीषस्तु नाभागिर्विरूपस्तस्य चात्मजः ।
पृषदश्वो विरूपस्य तस्य पुत्रो रथीतरः ॥

(१) वायु. ८८।५, ब्रह्माण्ड ३।६३।५.

(२) वायु. ८८।६ ; ब्रह्माण्ड. ३।६३।६.

[1]एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः ।
रथीतराणां प्रवराः क्षात्रोपेता द्विजातयः ॥
[2]मान्धाता युवनाश्वस्य त्रिलोकविजयी सुतः ॥

(१) वायु. ८८।७ ; ब्रह्माण्ड. ३।६३।७ क्षात्रो (क्षेत्रो).

(२) वायु. ८८।६७ (मान्धाता यौवनाश्वो वै त्रैलोक्यविजयी नृपः ।) ; ब्रह्माण्ड. ३।६३।६८ वायुवत् ; हरि. १।१२।६ ; शिवध. ६०।७६ त्रिलोकविजयी सुतः (त्रिषु लोकेषु विश्रुतः) ; ब्रह्म. ७।९२.

[1]अत्राप्युदाहरन्तीमं श्लोकं पौराणिका द्विजाः ।
यावत्सूर्य उदयति यावच्च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥

[2]अत्राप्युदाहरन्तीमं श्लोकं वंशविदो जनाः ।
यौवनाश्वं महात्मानं यज्वानममितौजसम् ।
मान्धाता तु तनुर्विष्णोः पुराणज्ञाः प्रचक्षते ॥

[3]तस्य चैत्ररथी भार्या शशबिन्दोः सुताऽभवत् ।
साध्वी बिन्दुमती नाम रूपेणाप्रतिमा भुवि ॥

[4]पतिव्रता च ज्येष्ठा च भ्रातॄणामयुतस्य सा ।
तस्यामुत्पादयामास मान्धाता त्रीन्सुतान् प्रभुः ॥

[5]पुरुकुत्समम्बरीषं मुचुकुन्दं च विश्रुतम् ।
अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ॥

[6]हरितो युवनाश्वस्य हारितास्तु यतः स्मृताः ।
एते ह्यङ्गिरसः पुत्राः क्षात्रोपेता द्विजातयः ॥

[1]पुरुकुत्ससुतस्त्वासीत्त्रसदस्युर्महीपतिः ।
नर्मदायां समुत्पन्नः संभूतस्तस्य चात्मजः ॥

[2]संभूतस्यात्मजः पुत्रो ह्यनरण्यः प्रतापवान् ।
रावणेन हतो योऽसौ त्रिलोकीविजये पुरा ॥

[3]त्रसदश्वोऽनरण्यस्य हर्यश्वस्तस्य चात्मजः ।
हर्यश्वात्तु दृषद्वत्यां जज्ञे वसुमना नृपः ॥

[4]तस्य पुत्रोऽभवद्राजा त्रिधन्वा नाम धार्मिकः ।
आसीत्त्रिधन्वनश्चापि विद्वांस्त्रय्यारुणः प्रभुः ॥

---

(१) वायु. ८८।६७,६८ न्तीम श्लोक (न्तीमौ श्लोकौ); ब्रह्माण्ड. ३।६३।६९, ७० उदयति (उदयते); विष्णु. ४।२।१९ प्रथमार्धे (भवति चात्र श्लोकः) उदयति (उदेति स); भाग. ९।६।७३ विष्णुवत्, प्रथमार्ध नास्ति.

(२) वायु. ८८।६९.

(३) वायु. ८८।७० ; ब्रह्माण्ड. ३।६३।७०,७१ ; हरि. १।१२।७ णाप्रतिमा (णासदृशी); शिवध. ६०।७६,७७ न्दोः सुता (न्दुसुता) उत्तरार्धे (शशबिन्दोर्मती नाम रूपेणाप्रतिमाऽभवत् ।); ब्रह्म. ७।९३ हरिवत्.

(४) वायु. ८८।७१ ; ब्रह्माण्ड. ३।६३।७१,७२ ; हरि. १।१२।८ त्रीन् सुतान् प्रभुः (द्वौ सुतौ नृप); शिवध. ६०।७७, ७८ सा (च) त्रीन् सुतान् प्रभुः (द्वौ सुतौ तदा); ब्रह्म. ७।९४ सा (वै) त्रीन् सुतान् प्रभुः (द्वौ सुतौ द्विजा.).

(५) वायु. ८८।७२ ; ब्रह्माण्ड. ३।६३।७२,७३ ; विष्णु. ४।२।१९ (पुरुकुत्समम्बरीषं च मुचुकुन्दं च तस्यामपत्यत्रयमुत्पादयामास ।); हरि. १।१२।९ (पुरुकुत्सं च धर्मज्ञं मुचुकुन्दं च धार्मिकम् ।) उत्तरार्धं नास्ति ; लिङ्ग. १।६५।४० पूर्वार्धं नास्ति ; शिवध. ६०।७८ सर्वं हरिवत् ; ब्रह्म. ७।९५ (पुरुकुत्सं च धर्मज्ञं मुचुकुन्दं च पार्थिवम् ।) उत्तरार्धं नास्ति ; कूर्म. १।२०।२६ पूर्वार्धं नास्ति.

(६) वायु. ८८।७३ तु यतः (शूरयः) ; लिङ्ग. १।६५।४०,४१ हारि (हरि) पुत्राः क्षात्रो (पक्षे क्षत्रो); कूर्म. १।२०।२७ हारितास्तु यतः स्मृताः (हारितस्तत्सुतोऽभवत्) उत्तरार्धं नास्ति.

(१) वायु. ८८।७४ सुतस्त्वासीत् (स्य दायादः) महीपतिः (महायशाः); ब्रह्माण्ड. ३।६३।७३ पूर्वार्धं नास्ति ; हरि. १।१२।९,१० समुत्पन्न. (अथोत्पन्नः); लिङ्ग. १।६५।४१, ४२ पूर्वार्धं वायुवत्, संभूत (संभूति); शिवध. ६०।७९ ; ब्रह्म. ७।९५,९६ हरिवत् ; कूर्म. १।२०।२७,२८ पूर्वार्धं वायुवत्, संभूतस्तस्य चात्मजः (संभूतिस्तत्सुतः स्मृतः).

(२) वायु. ८८।७५ रावणेन हतो योऽसौ (रावणो निहतो येन); ब्रह्माण्ड. ३।६३।७४ योऽसौ त्रिलोकीविजये (येन त्रैलोक्यं विजित); लिङ्ग. १।६५।४३,४४ (संभूतिरपरं पुत्रमनरण्यमजीजनत् । रावणेन हतो योऽसौ त्रैलोक्यविजये द्विजाः ॥); कूर्म. १।२०।२८ (विष्णुवृद्धः सुतस्तस्य त्वनरण्योऽभवत्ततः ।) उत्तरार्धं नास्ति.

(३) वायु. ८८।७६ मना (मनो); ब्रह्माण्ड ३।६३।७५ त्रसदश्वो (तेन दृषद्यो) वसुमना (च सुमतिः); लिङ्ग. १।६५।४४,४५ त्रसद (वृषद); कूर्म. १।२०।२८ (वृषदश्वोऽनरण्यस्य हर्यश्वस्तत्सुतोऽभवत् ।) उत्तरार्धं नास्ति.

(४) वायु. ८८।७७ त्रिध (त्रैध); ब्रह्माण्ड. ३।६३।७६ रुणः (रुणिः) ; हरि. १।१२।११ (संभूतस्य तु दायादः सुधन्वा नाम पार्थिवः । सुधन्वनः सुतश्चासीत् त्रिधन्वा रिपुमर्दनः । राज्ञस्त्रिधन्वनस्त्वासीद्विद्वांस्त्रय्यारुणः सुतः ॥); लिङ्ग. १।६५।४५ नाम धार्मिकः (भवभावितः) उत्तरार्धं नास्ति : १।६६।२ णः प्रभुः (णो नृपः) पूर्वार्धं नास्ति ; शिवध. ६०।८० (संभूतस्य तु दायादस्त्रिधन्वाऽरिप्रमर्दनः । राज्ञस्त्रिधन्वनस्त्वासीद्विद्वांस्त्रय्यारुणिः प्रभुः ॥); ब्रह्म. ७।९६,९७ पूर्वार्धे (संभूतस्य तु दायादस्त्रिधन्वा रिपुमर्दनः ।) आसीत् त्रिधन्वनश्चापि (राज्ञस्त्रिधन्वनस्त्वासीत्).

[1]तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः ।
तेन भार्या विदर्भस्य हृता हत्वा दिवौकसः ।
पाणिग्रहणमन्त्रेषु निष्ठां संप्रापितेष्विह ॥

[2]विष्णुवृद्धः सुतस्तस्य विष्णुवृद्धा यतः स्मृताः ।
एते ह्यङ्गिरसः पुत्राः क्षात्रोपेताः समाश्रिताः ॥

[3]इक्ष्वाकोः पुत्रतामाप विकुक्षिर्नाम देवराट् ।
ज्येष्ठः पुत्रशतस्यासीद्दश पञ्च च तत्सुताः ॥

[4]मेरोरुत्तरतस्ते तु जाताः पार्थिवसत्तमाः ।
चतुर्दशोत्तरं चान्यच्छतमस्य तथाऽभवत् ॥

[5]मेरोर्दक्षिणतश्चैते राजानः संप्रकीर्तिताः ।
ज्येष्ठः ककुत्स्थनामाऽभूत्तत्सुतस्तु सुयोधनः ॥

[1]तस्य पुत्रः पृथुर्नाम विश्वकश्च पृथोः सुतः ।
आर्द्रस्तस्य च पुत्रोऽभूद्युवनाश्वस्ततोऽभवत् ॥

[2]श्रावस्तश्च महातेजा वत्सकस्तत्सुतोऽभवत् ।
निर्मिता येन श्रावस्ती गौडदेशे द्विजोत्तमाः ॥

[3]श्रावस्ताद्बृहदश्वोऽभूत्कुवलाश्वस्ततोऽभवत् ।
धुन्धुमारत्वमगमद्धुन्धुं हत्वा महासुरम् ॥

[4]तस्य पुत्रास्त्रयो जाता दृढाश्वो दण्ड एव च ।
कपिलाश्वश्च विख्यातो धौन्धुमारिः प्रतापवान् ॥

[5]दृढाश्वस्य प्रमोदश्च हर्यश्वस्तस्य चात्मजः ।
हर्यश्वस्य निकुम्भोऽभूत्संहताश्वस्ततोऽभवत् ॥

---

(१) वायु. ८८।७८,७९ कसः (कसान्); ब्रह्माण्ड. ३।६३।७७,७८ संप्रा (न प्रा); हरि. १।१२।१२,१३ द्वितीयतृतीयार्धयोः (पाणिग्रहणमन्त्राणां विघ्नं चक्रे सुदुर्मतिः । येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै ॥); लिङ्ग. १।६६।३,४ हत्वा दिवौकसः (हत्वाऽमितौजसम्) संप्रा (अप्रा); शिवध. ६०।८१,८२ द्वितीयतृतीयार्धयोः (पाणिग्रहणमन्त्राणां विघ्नं चक्रे महात्मभिः । येन भार्या हृता पूर्वं कृतोद्वाहा परस्य वै ॥); ब्रह्म. ७।९७,९८ द्वितीयतृतीयार्धयोः (पाणिग्रहणमन्त्राणां विघ्नं चक्रे सुदुर्मतिः । येन भार्या कृतोद्वाहा हृता चैव परस्य ह ॥).

(२) वायु. ८८।८९; लिङ्ग. १।६५।४२,४३ पुत्राः क्षात्रो (पक्षे क्षत्रो).

(३) मत्स्य. १२।२६; लिङ्ग. १।६५।२१,२२ पूर्वार्धे (इक्ष्वाकोरभवद्वीरो विकुक्षिर्धर्मवित्तमः ।); कूर्म. १।२०।१०,११ पूर्वार्धे (इक्ष्वाकोश्चाभवद्वीरो विकुक्षिर्नाम पार्थिवः ।) ज्येष्ठः पुत्रशत (ज्येष्ठपुत्रः स त); पद्म. ५।८।१३०,१३१ (इक्ष्वाकुपुत्रा नाम्नाऽथ विकुक्षिनिमिदण्डकाः । श्रेष्ठाः पुत्रशतस्यासन् दश पञ्च च तत्सुताः ॥).

(४) मत्स्य. १२।२७; पद्म. ५।८।१३१,१३२ स्ते तु (स्तेऽपि).

(५) मत्स्य. १२।२८ चैते (ये ये) स्त्थनामा (त्स्थो नाम्ना) लिङ्ग. १।६५।३२ (अभूज्ज्येष्ठः ककुत्स्थश्च ककुत्स्थात्तु सुयोधनः ।) पूर्वार्धं नास्ति; पद्म. ५।८।१३२,१३३ ज्येष्ठः (ज्येष्ठात्); कूर्म. १।२०।११ (तेषां ज्येष्ठः ककुत्स्थोऽभूत्काकुत्स्थस्तु सुयोधनः) पूर्वार्धं नास्ति.

(१) मत्स्य. १२।२९ विश्वक (विश्वग) आर्द्र (इन्दु); लिङ्ग. १।६५।३३ (ततः पृथुर्मुनिश्रेष्ठा विश्वकः पार्थिवस्तथा । विश्वकस्यार्द्रको धीमान्युवनाश्वस्तु तत्सुतः ॥); पद्म. ५।८।१३३,१३४ विश्वकश्च (विश्वावसुः); कूर्म. १।२०।१२ (सुयोधनात्पृथुः श्रीमान् विश्वकश्च पृथोः सुतः । विश्वकादार्द्रको धीमान् युवनाश्वश्च तत्सुतः ॥).

(२) मत्स्य. १२।३०; लिङ्ग. १।६५।३४ श्रावस्त (श्रावस्ति) वत्सकस्तत्सुतो (वत्सकस्तु ततो) श्रावस्ती (शावस्ती); पद्म. ५।८।१३४,१३५ श्राव (शाव) द्विजोत्तमाः (नराधिप); कूर्म. १।२०।१९ (तस्य पुत्रोऽभवद्वीरः सावस्तिरिति विश्रुतः । निर्मिता येन सावस्तिर्गौडदेशे महापुरी ॥).

(३) मत्स्य. १२।३१ धुन्धु हत्वा महासुरम् (धुन्धुनाम्ना हतः पुरा); लिङ्ग. १।६५।३५ श्रावस्ताद् (वैशाख) स्ततोऽभवत् (स्तु तत्सुतः) मगमद् (मापन्नो) सुरम् (बलम्), पद्म. ५।८।१३५,१३६ श्राव (शाव) धुन्धुं हत्वा महासुरम् (धुन्धुमारो च यः पुमान्); कूर्म. १।२०।२० (तस्माच्च बृहदश्वोऽभूत्तस्मात्कुवलयाश्वकः । धुन्धुमारः समभवद् धुन्धुं हत्वा महासुरम् ॥).

(४) मत्स्य १२।३२; लिङ्ग. १।६५।३६ (धुन्धुमारस्य तनयास्त्रयो लोकविश्रुताः । दृढाश्वश्चैव चण्डाश्वः कपिलाश्वश्च ते स्मृताः ॥); पद्म. ५।८।१३६,१३७; कूर्म. १।२०।२१ (धुन्धुमारस्य तनयास्त्रयः प्रोक्ता द्विजोत्तमाः । दृढाश्वश्चैव दण्डाश्चः कपिलाश्वस्तथैव च ॥).

(५) मत्स्य. १२।३३; लिङ्ग. १।६५।३७ दश (दृश्व) चात्मजः (वै सुतः) भूत्सं (भूत्तु) स्ततोऽभवत् (स्तु तत्सुतः); पद्म. ५।८।१३७,१३८; कूर्म. १।२०।२२ दश (दृश्व) उत्तरार्धे (हर्यश्वस्य निकुम्भस्तु निकुम्भात्संहताश्वकः ।);

[1]अकृताश्वो रणाश्वश्च संहताश्वसुतावुभौ ।
युवनाश्वो रणाश्वस्य मान्धाता च ततोऽभवत् ॥
[2]मान्धातुः पुरुकुत्सोऽभूद्धर्मसेतुश्च पार्थिवः ।
मुचुकुन्दश्च विख्यातः शक्रमित्रः प्रतापवान् ॥
[3]पुरुकुत्सस्य पुत्रोऽभूद्वसुदो नर्मदापतिः ।
संभूतिस्तस्य पुत्रोऽभूत्त्रिधन्वा च ततोऽभवत् ॥
[4]त्रिधन्वनः सुतो जातस्त्रय्यारुण इति स्मृतः ।
तस्य सत्यव्रतो नाम तस्मात्सत्यरथः स्मृतः ॥
[5]तस्य पुत्रो हरिश्चन्द्रो हरिश्चन्द्राच रोहितः ।
रोहिताच्च वृको जातो वृकाद्बाहुरजायत ॥
[6]सगरस्तस्य पुत्रोऽभूद्राजा परमधार्मिकः ।
द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा ॥
[7]ताभ्यामाराधितः पूर्वमौर्वोऽग्निः पुत्रकाम्यया ।
और्वस्तुष्टस्तयोः प्रादाद्यथेष्टं वरमुत्तमम् ॥

[1]एका षष्टिसहस्राणि सुतमेकं तथाऽपरा ।
गृह्णातु वंशकर्तारं प्रभाऽगृह्णाद्बहूंस्तदा ॥
[2]एकं भानुमती पुत्रमगृह्णादसमञ्जसम् ।
ततः षष्टिसहस्राणि सुषुवे यादवी प्रभा ॥
[3]खनन्तः पृथिवीं दग्धा विष्णुना येऽश्वमार्गणे ।
असमञ्जसस्तु तनयो योंऽशुमान्नाम विश्रुतः ॥
[4]तस्य पुत्रो दिलीपस्तु दिलीपात्तु भगीरथः ।
येन भागीरथी गङ्गा तपः कृत्वाऽवतारिता ॥
[5]भगीरथस्य तनयो नाभाग इति विश्रुतः ।
नाभागस्याम्बरीषोऽभूत्सिन्धुद्वीपस्ततोऽभवत् ॥
[6]नभगस्यात्मजो नाभागः, तस्य अम्बरीषः, अम्ब-

---

अग्नि. २७३।२३ ( हर्यश्वाच्च निकुम्भोऽभूत्संहताश्वो निकुम्भतः । ).

( १ ) मत्स्य. १२।३४ ; लिङ्ग. १।६५।३८ पूर्वार्धे ( कृशाश्वोऽथ रणाश्वश्च संहताश्वात्मजावुभौ । ) च ततोऽभवत् ( तस्य वै सुतः ) ; पद्म. ५।८।१३८,१३९ ; कूर्म. १।२०।२३ ( कृताश्वोऽथ रणाश्वश्च संहिताश्वस्य वै सुतौ । युवनाश्वो रणाश्वस्य शक्रतुल्यबलो युधि ॥ ) ; अग्नि. २७३।२३,२४ अकृताश्वो ( अकृशाश्वो ) च ततोऽभवत् ( युवनाश्वनः ).

( २ ) मत्स्य. १२।३५ सेतुश्च ( सेनश्च ) शक्रमित्रः ( शत्रुजिच्च ) ; पद्म. ५।८।१३९,१४० ; अग्नि. २७३।२४ ( मान्धातुः पुरुकुत्सोऽभून्मुचुकुन्दो द्वितीयकः । ).

( ३ ) मत्स्य. १२।३६ ; पद्म. ५।८।१४०,१४१ वसुदो ( संभूतो ).

( ४ ) मत्स्य. १२।३७ ; पद्म. ५।८।१४१,१४२ त्रय्या ( त्रैया ) ; कूर्म. १।२१।१,२ ( तस्य पुत्रोऽभवद्विद्वांस्त्रय्यारुण इति स्मृतः । तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः ॥ ).

( ५ ) मत्स्य. १२।३८ ; पद्म. ५।८।१४२,१४३ ; कूर्म. १।२१।३ ( हरिश्चन्द्रस्य पुत्रोऽभूद्रोहितो नाम वीर्यवान् । रोहितस्य वृकः पुत्रस्तस्माद्बाहुरजायत ॥ ).

( ६ ) मत्स्य. १२।३९ ; लिङ्ग. १।६६।१४,१५ ; पद्म. ५।८।१४३, १४४ ; कूर्म. १।२१।४.

( ७ ) मत्स्य. १२।४० ; लिङ्ग. १।६६।१५, १६ ; पद्म. ५।८।१४४, १४५ ; कूर्म. १।२१।५ ( ताभ्यामाराधितो वह्निः प्रददौ वरमुत्तमम् । ).

( १ ) मत्स्य. १२।४१ ; लिङ्ग. १।६६।१६, १७ तथाऽपरा ( परा तथा ) गृह्णातु ( अगृह्णात् ) बहूंस्तदा ( सुतान् बहून् ) ; पद्म. ५।८।१४५,.१४६ एका ( एक ) स्तदा ( स्तथा ).

( २ ) मत्स्य. १२।४२ ; लिङ्ग. १।६६।१७,१८ मती (मतिः) यादवी ( सा तु वै ) ; पद्म. ५।८।१४६,१४७ ; कूर्म. १।२१।५,६ उत्तरार्धे ( प्रभा षष्टिसहस्रं तु पुत्राणां जगृहे शुभा । ) ; अग्नि. २७३।२८ ( प्रभा षष्टिसहस्राणां सुतानां जननी ह्यभूत् । तुष्टादौर्वान्नृपादेकं भानुमत्यसमञ्जसम् ॥ ).

( ३ ) मत्स्य. १२।४३ ; लिङ्ग. १।६६।१८,१९ विष्णुना येऽश्वमार्गणे ( विष्णुहुङ्कारमार्गणैः ) असस्तु ( असस्य ) योंऽशु ( सोंऽशु ) ; पद्म. ५।८।१४७,१४८ सस्तु त ( सस्त ) योंऽशु ( अंशु ) ; कूर्म. १।२१।६ ( असमञ्जसपुत्रोऽभूदंशुमान्नाम पार्थिवः । ) पूर्वार्धं नास्ति ; अग्नि. २७३।२९ विष्णुना येऽश्वमार्गणे ( कपिलेनाथ सागराः ).

( ४ ) मत्स्य. १२।४४ ; लिङ्ग. १।६६।१९,२० पद्म. ५।८।१४८,१४९ ; कूर्म. १।२१।७ ; अग्नि. २७३।२९,३० ( असमञ्जसोंऽशुमांश्च दिलीपोंऽशुमतोऽभवत् । भगीरथो दिलीपात्तु येन गङ्गाऽवतारिता ॥ ).

( ५ ) मत्स्य. १२।४५ ; लिङ्ग. १।६६।२०,२१ ( भगीरथसुतश्चापि श्रुतो नाम बभूव ह । नाभागस्तस्य दायादो भवभक्तः प्रतापवान् । अम्बरीषः सुतस्तस्य सिन्धुद्वीपस्ततोऽभवत् ॥ ) ; पद्म. ५।८।१४९,१५० षोऽभूत् ( षस्तु ) ; कूर्म. १।२१।९,१० ( भगीरथसुतश्चापि श्रुतो नाम बभूव ह । नाभागस्तस्य दायादः सिन्धुद्वीपस्ततोऽभवत् ॥ ) ; अग्नि. २७३।३०,३१ ( भगीरथात्तु नाभागो नाभागादम्बरीषकः । सिन्धुद्वीपोऽम्बरीषात्तु ॥ ).

( ६ ) विष्णु. ४।२।२.

रीषाश्वाद् विरूपोऽभवत् । विरूपात् पृषदश्वो जज्ञे ततश्च रथीतरः । तत्रायं श्लोकः —

एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥

पैकुत्स्थस्याप्यनेनाः पुत्रोऽभूदनेनसः पृथुः पृथो-र्विश्वगश्वस्तस्य चार्द्रोऽभूदार्द्रस्य युवनाश्वस्तस्य श्रावस्तो यः श्रावस्तीं पुरीं निवेशयामास । श्रावस्तस्य बृहदश्वस्तस्यापि कुवलयाश्वो योऽसावुदङ्कस्य महर्षेरपकारिणं धुन्धुनामानमसुरं वैष्णवेन तेजसाऽऽप्यायितः पुत्रसहस्रैरेकविंशतिभिः परिवृतो जघान धुन्धुमारसंज्ञां चावाप । तस्य च समस्ता एव पुत्रा धुन्धुमुखनिश्वासाग्निना विप्लुष्टा विनेशुः ॥ दृढाश्वचन्द्राश्वकपिलाश्वास्त्रयः केवलमवशेषिताः । दृढाश्वाद्धर्यश्वस्तस्मान्निकुम्भो निकुम्भात्संहताश्वस्ततः कृशाश्वस्तस्माच्च प्रसेनजित्ततो युवनाश्वोऽभवत् । …… गर्भश्च युवनाश्वोदरेऽभवत् । …… स तु मान्धाता चक्रवर्ती सप्तद्वीपां महीं बुभुजे ॥

यौवनाश्वस्य मान्धातुः पुरुकुत्सनामा पुत्रः ॥

पुरुकुत्साय च भवतः संततिविच्छेदो न भविष्यतीत्युरगपतयो वरं ददुः ॥ पुरुकुत्सो नर्मदायां त्रसदस्युमजीजनत् । त्रसदस्युतः संभूतस्ततोऽनरण्यस्तं रावणो दिग्विजये जघान । अनरण्यस्य पृषदश्वः पृषदश्वस्य हर्यश्वः पुत्रोऽभवत् । तस्य च वसुमनास्तस्यापि त्रिधन्वा त्रिधन्वनस्त्र्य्यारुणस्तस्मात्सत्यव्रतो योऽसौ त्रिशङ्कुसंज्ञामवाप ॥

अम्बरीषस्य मान्धातुस्तनयस्य युवनाश्वः पुत्रोऽभूत् । तस्माद्धरितो यतोऽङ्गिरसो हारिताः ॥

नाभागादम्बरीषोऽभून्महाभागवतः कृती ॥

विरूपः केतुमान् शम्भुरम्बरीषसुतास्त्रयः ।

(१) विष्णु. ४।२।१२-१८.
(२) विष्णु. ४।३।७.
(३) विष्णु. ४।३।१२-१३.
(४) विष्णु. ४।३।५.
(५) भाग. ९।४।१३.
(६) भाग. ९।६।१-२.



विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥
रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ।
अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥
एते क्षेत्रे प्रसूता वै पुनस्त्वाङ्गिरसाः स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥

पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ।
शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥

पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ।
ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः ॥

पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ।
विश्वगन्धिस्ततश्चन्द्रो युवनाश्वस्तु तत्सुतः ॥
शावस्तस्तत्सुतो येन शावस्ती निर्ममे पुरी ।
बृहदश्वस्तु शावस्तिस्ततः कुवलयाश्वकः ॥
यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली ।
सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥
धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ।
धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥
दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ।
दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥
बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित् ।
युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥
भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ।
इष्टिं स्म वर्तयांचक्रुरैन्द्रीं ते सुसमाहिताः ॥
राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ।
दृष्ट्वा शयानान्विप्रांस्तान् पपौ मन्त्रजलं स्वयम् ॥
उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥
राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ।
ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥
ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ।
युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥

(१) भाग. ९।६।११-१२.
(२) भाग. ९।६।२०-३४.

कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ।
मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥
न ममार पिता तस्य विप्रदेवप्रसादतः ।
युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥
त्रसदस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ।
यस्मात्त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥
यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥
शशविन्दोर्दुहितरि विन्दुमत्यामधान्नृपः ।
पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ।
तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥

( १ ) भाग. ९।६।३८.

मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ।
पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ।
हारीतस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे ॥
नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ।
तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥
गन्धर्वानवधीत्तत्र वध्यान् वै विष्णुशक्तिधृक् ।
नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥
त्रसदस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ।
हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ त्रिबन्धनः ॥
तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ॥

( १ ) भाग. ९।७।१–५.

## [ ११ ]

क्षत्रियकुलोद्भूता वीतहव्यगृत्समदशुनकशौनकार्ष्टिषेण-
धन्वन्तरिवत्सदिवोदासमित्रयुमैत्रायणा ब्राह्मणवर्णाः
प्रवराः, तथा क्षत्रियकुलोद्भवाः शैन्यगर्गसंकृति-
कप्युरुक्षयकण्वमेधातिथिमुद्गला आङ्गिरसा
ब्राह्मणवर्णाः प्रवराः, तथा शारद्वता
गौतमा अपि क्षत्रियकुलीना
ब्राह्मणवर्णाः प्रवराः

यथागतं महाराज मुक्त्वा विषमिवोरगः ।
भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ॥
वीतहव्यो महाराज ब्रह्मवादित्वमेव च ।
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ॥
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ।
ऋग्वेदे वर्तते चाग्र्या श्रुतिर्यस्य महात्मनः ॥
यत्र गृत्समदो राजन् ब्राह्मणैः स महीयते ।
स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत् ॥
पुत्रो गृत्समदस्यापि सुचेता अभवद्द्विजः ।
वर्चाः सुतेजसः पुत्रो विहव्यस्तस्य चात्मजः ॥
विहव्यस्य तु पुत्रस्तु वितत्यस्तस्य चात्मजः ।
वितत्यस्य सुतः सत्यः सन्तः सत्यस्य चात्मजः ॥

( १ ) भा. १३।३०।५७–६७..

श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः ।
तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः ।
प्रकाशस्य च वागिन्द्रो बभूव जयतां वरः ॥
तस्यात्मजश्च प्रमितिर्वेदवेदाङ्गपारगः ।
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ॥
प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत ।
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ॥
एवं विप्रत्वमगमद्वीतहव्यो नराधिपः ।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥
तथैव कथितो वंशो मया गार्त्समदस्तव ।
विस्तरेण महाराज किमन्यदनुपृच्छसि ॥
आयोः पुत्रा महात्मानः पञ्चैवासन् महाबलाः ।
स्वर्भानुतनयायां च प्रभायां जज्ञिरे नृपाः ॥

( १ ) वायु. ९२।१ आयोः ( एते ) त्वासन् ( स्मन: ) तनयायां च ( तनया विप्राः ) ; ब्रह्माण्ड. ३।६७।१ च ( ते ) ; हरि. १।२८।१ पूर्वार्धे ( आयोः पुत्रास्तथा पञ्च सर्वे वीरा महारथाः । ) नृपाः ( नृप ) ; लिङ्ग. १।६६।५९ पूर्वार्धे ( आयुषस्तनया वीराः पञ्चैवासन्महौजसः । ) च ( ते ) ; महा. १।१।१ पूर्वार्धे ( आयोः पुत्राश्च ते पञ्च सर्वे वीरा महारथाः । ) ; कूर्म. १।२२।२ पूर्वार्धे स्मिन्नव, च ( वै ) जज्ञिरे नृपाः ( इति नः श्रुतम् ).

नहुषः प्रथमस्तेषां क्षत्रवृद्धस्ततः स्मृतः ।
रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुताः ॥

क्षत्रवृद्धात्मजस्तत्र सुनहोत्रो महायशाः ।
सुनहोत्रस्य दायादास्त्रयः परमधार्मिकाः ॥

काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः ।
पुत्रो गृत्समदस्यापि शुनको यस्य शौनकः ॥

ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ।
एतस्य वंशे संभूता विचित्रैः कर्मभिर्द्विजाः ॥

शलात्मजो ह्यार्ष्टिषेणस्तनयस्तस्य काश्यकः ।
शौनकाश्चार्ष्टिषेणाश्च क्षत्त्रोपेता द्विजातयः ॥

काशस्य काशिपो राजा पुत्रो दीर्घतपास्तथा ।
धन्वस्तु दीर्घतपसो विद्वान् धन्वन्तरिस्ततः ॥

तपसोऽन्ते सुमहतो जातो वृद्धस्य धीमतः ।
पुनर्धन्वन्तरिर्देवो मानुषेष्विह जज्ञिवान् ॥
अथैनमृषयः प्रोचुः सूतं वाक्यमिदं पुनः ॥

ऋषय ऊचुः—

कथं धन्वन्तरिर्देवो मानुषेष्विह जज्ञिवान् ।
एतद्वेदितुमिच्छामस्तन्नो ब्रूहि परन्तप ॥

सूत उवाच—

धन्वन्तरेः संभवोऽयं श्रूयतामिह वै द्विजाः ।
स संभूतः समुद्रात्तु मथ्यमानेऽमृते पुरा ॥
उत्पन्नः कलशात्पूर्वं सर्वतश्च श्रिया वृतः ।
सद्यःसंसिद्धकार्यं तं दृष्ट्वा विष्णुरवस्थितः ।
अब्जस्त्वमिति होवाच तस्मादब्जस्तु स स्मृतः ॥
अब्जः प्रोवाच विष्णुं तं तनयोऽस्मि तव प्रभो ।
विधत्स्व भागं स्थानं च मम लोके सुरोत्तम ॥

एवमुक्तः स दृष्ट्वा तु तथ्यं प्रोवाच तं प्रभुः ।
कृतो यज्ञविभागो हि यज्ञियैर्हि सुरैः पुरा ॥

---

(१) वायु. ९२।२ क्षत्रवृद्धः (पुत्रधर्मा) उत्तरार्धं नास्ति; ब्रह्माण्ड. ३।६७।२ ; हरि. १।२८।२ पूर्वार्धे (नहुषः प्रथमं जज्ञे वृद्धशर्मा ततः परम् ।); लिङ्ग. १।६६।६० (नहुषः प्रथमस्तेषां) एतावदेव ; ब्रह्म ११।२ हरिवत् ; कूर्म. १।२२।८ सर्वं लिङ्गवत्.

(२) वायु. ९२।२,३ क्षत्र (धर्म) स्तत्र सुन (श्चैत्र सुत) सुन (सुत); ब्रह्माण्ड. ३।६७।३ स्तत्र (श्चैत्र); हरि. १।२९।६ ; ब्रह्म. ११।२२.

(३) वायु. ९२।३,४ ; ब्रह्माण्ड. ३।६७।४ ; हरि. १।२९।७ शौनकः (शौनकाः); ब्रह्म. ११।३३.

(४) वायु. ९२।४,५ ; ब्रह्माण्ड. ३।६७।५ ; हरि. १।२९।८ उत्तरार्धं नास्ति ; ब्रह्म. ११।३४ उत्तरार्धं नास्ति.

(५) वायु. ९२।५,६ स्तनयस्तस्य काश्यकः (श्चरन्तस्तस्य चात्मजः) क्षत्त्रो (क्षात्रो); ब्रह्माण्ड. ३।६७।६ तनयस्तस्य काश्यकः (शिशिरस्तस्य चात्मजः); हरि. १।२९।८ (शलात्मजश्चार्ष्टिषेणस्तनूजस्तस्य काशकः ।) उत्तरार्धं नास्ति ; ब्रह्म. ११।३४ (शलात्मज आर्ष्टिषेणस्तनयस्तस्य काश्यपः ।) उत्तरार्धं नास्ति.

(६) वायु. ९२।६,७ काशिपो राजा (काशयो राष्ट्रः) धन्वस्तु (धर्मश्च); ब्रह्माण्ड. ३।६७।७ काशस्य (काश्यस्य) धन्वस्तु (धन्वश्च); हरि. १।२९।९ काशिपो राजा (काशयो राजन्) : १।३२।२१ काशस्य काशिपो राजा (काशेश्च काशयो राजन्) धन्वस्तु (बभूव) तत (सुतः) ; ब्रह्म. ११।३५ धन्वस्तु (धनुस्तु).

(१) वायु. ९२।७ सोऽन्ते सुमहतो (सा सुमहातेजा) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।६७।८ सुमहतो (महातेजा) उत्तरार्धं नास्ति ; हरि. १।२९।१० ; ब्रह्म. ११।३६ जज्ञिवान् (जन्मनि).

(२) वायु. ९२।७ मिदं (मिम); ब्रह्माण्ड. ३।६७।८.

(३) वायु. ९२।८ स्तन्नो (स्तनो) परन्तप (प्रिय तथा); ब्रह्माण्ड. ३।६७।९ कथ (कश्च) ; हरि. १।२९।११ उत्तरार्धे (एतद्वेदितुमिच्छामि तन्मे ब्रूहि यथातथम् ।).

(४) वायु ९२।९ द्रात्तु (द्रान्ते), ब्रह्माण्ड. ३।६७।१० वायुवत् ; हरि. १।२९।१२ इह वै द्विजाः (भरतर्षभ) स संभूत (जातः स हि) ऽमृते पुरा (पुराऽमृते).

(५) वायु. ९२।१० कलशात् (सकलात्) द्वितीयार्धे (सर्वसंसिद्धकार्यं तं दृष्ट्वा विष्टम्भितः स्थितः ।) अब्ज (अज); ब्रह्माण्ड ३।६७।११, १२ ; हरि. १।२९।१३,१४ द्वितीयार्धे (अभ्यसन् सिद्धिकार्ये हि विष्णु दृष्ट्वा हि तस्थिवान् ।).

(६) वायु. ९२।११ ; ब्रह्माण्ड. ३।६७।१२,१३ ; हरि. १।२९।१४,१५ तं (वै) तनयोऽसि तव (तव पुत्रोऽस्मि वै) सुरोत्तम (सुरेश्वर).

(७) वायु. ९२।१२ तं प्र (स प्र) गो हि (गन्तु) पुरा (तथा), ब्रह्माण्ड. ३।६७।१३,१४ तं प्र (स प्र) गो हि यज्ञियै (गस्तु दैतेयै) पुरा (तथा) ; हरि. १।२९।१५,१६ तु (वै).

[1]देवेषु विनियुक्तं च विधिहोत्रे महर्षिभिः ।
न शक्यमिह होमं वै तुभ्यं कर्तुं कदाचन ॥

[2]अर्वाग्भूतोऽसि देवानां पुत्र त्वं तु न हीश्वरः ।
द्वितीयायां तु संभूत्यां लोके ख्यातिं गमिष्यसि ॥

[3]अणिमादियुता सिद्धिर्गर्भस्थस्य भविष्यति ।
तेनैव च शरीरेण देवत्वं प्राप्स्यसि प्रभो ।
चरुमन्त्रैर्घृतैर्गन्धैर्यक्ष्यन्ति त्वां द्विजातयः ॥

[4]अष्टधा त्वं पुनश्चैव आयुर्वेदं विधास्यसि ।
अवश्यंभावी ह्यर्थोऽयं प्राग्दृष्टस्त्वब्जयोनिना ॥

[5]द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः ।
इमं तस्मै वरं दत्त्वा विष्णुरन्तर्दधे पुनः ॥

[6]द्वितीये द्वापरे प्राप्ते सौनहोत्रः स काशिराट् ।
पुत्रकामस्तपस्तेपे नृपो दीर्घतपास्तथा ॥

[1]प्रपद्ये देवतां तां तु या मे पुत्रं प्रदास्यति ।
अब्जं देवं तु पुत्रार्थे ह्यारिराधयिषुर्नृपः ॥
[2]वरेण च्छन्दयामास प्रीतो धन्वन्तरिर्नृपम् ।
यदिच्छसि वरं ब्रूहि तत्ते दास्यामि सुव्रत ॥
नृप उवाच—
[3]भगवन्यदि तुष्टस्त्वं पुत्रो मे ख्यातिमान्भव ।
तथेति समनुज्ञाय तत्रैवान्तरधीयत ॥
[4]तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ।
काशिराजो महाराजः सर्वरोगप्रणाशनः ॥
[5]आयुर्वेदं भरद्वाजात्प्राप्येह समिषक्क्रियम् ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥
[6]धन्वन्तरिसुतश्चापि केतुमानिति विश्रुतः ।
अथ केतुमतः पुत्रो जज्ञे भीमरथो नृपः ॥
[7]पुत्रो भीमरथस्यापि जातो धीमान् प्रजेश्वरः ।
दिवोदास इति ख्यातो वाराणस्यधिपोऽभवत् ॥

---

(१) वायु. ९२।१३ देवेषु विनि (वेदेषु विधि) होमं (होमो) तुभ्यं (तुल्यं); ब्रह्माण्ड. ३।६७।१४,१५ देवेषु विनि (वेदेषु विधि); हरि. १।२९।१६,१७ च विधि -( हि विद्धि) मिह होमं (मुपहोमाः).

(२) वायु. ९२।१४ पूर्वार्धे (अर्वाक्सुतोऽसि हे देव नाममन्त्रोऽसि वै प्रभो ।); ब्रह्माण्ड. ३।६७।१५,१६ पूर्वार्धे (अवार्क्सुतोऽसि हे देव तव मन्त्रो न वै प्रभो ।); हरि. १।२९।१७,१८.

(३) वायु ९२।१५ गन्धै (गन्धै); ब्रह्माण्ड. ३।६७।१६,१७ प्रथमार्धे (अणिमादियुतां सिद्धिं गतस्तत्र भविष्यसि ।) तेनैव च (एतेनैव) चरुम (चातुर्म) क्ष्यन्ति (क्ष्यन्ते); हरि. १।२९।१८,१९ दियुता (दिश्च ते) च श (त्वं श) प्राप्स्यसि (प्राप्स्यसे) घृतैर्गन्धै (र्मन्त्रैर्जाप्यै).

(४) वायु. ९२।१६ अष्टधा (अथ च) प्राग्दृष्ट (प्राक्सृष्ट); ब्रह्माण्ड ३।६७।१८ अष्टधा (अथ वा) आयु (ह्यायु) अवश्यं (अवश्य); हरि. १।२९।२० श्चैव (श्चैवं).

(५) वायु. ९२।१७ इमं (तस्माद्) पुनः (ततः); ब्रह्माण्ड. ३।६७।१९ वायुवत्; हरि. १।२९।२१.

(६) वायु. ९२।१८ स का (मका); ब्रह्माण्ड. ३।६७।२०; हरि. १।२९।२२ होत्रः (होत्रिः) नृपो (धिन्वन्) स्तथा (स्तदा).

(१) वायु. ९२।१९ अब्जं (अजं) पूर्वार्धे नास्ति; ब्रह्माण्ड. ३।६७।२१ पूर्वार्धे नास्ति; हरि. १।२९।२३ उत्तरार्धे (अब्ज देवं सुतार्थाय तदाराधितवान्नृपः ।).

(२) वायु. ९२।१९ उत्तरार्धे नास्ति; ब्रह्माण्ड. ३।६७।२१ उत्तरार्धे नास्ति; हरि. १।२९।२४ पूर्वार्धे (ततस्तुष्टः स भगवानब्जः प्रोवाच तं नृपम् ।).

(३) वायु. ९२।२० ख्याति (धृति); ब्रह्माण्ड. ३।६७।२२ ख्यातिमान् भव (गतिमान् भवेः) रधीयत (रधात्प्रभु); हरि. १।२९।२५.

(४) वायु. ९२।२१; ब्रह्माण्ड. ३।६७।२३; हरि. १।२९।२६ राज्ञः (राज); ब्रह्म. ११।३७.

(५) वायु. ९२।२२ द्वाजात्प्राप्येह (द्वाजश्चकार); ब्रह्माण्ड. ३।६७।२४; हरि. १।२९।२७ समिषक्क्रियम् (भिषजां क्रियाम्); ब्रह्म. ११।३८ क्रियम् (क्रियः).

(६) वायु. ९२।२३ जज्ञे (विभो); ब्रह्माण्ड. ३।६७।२५; हरि. १।२९।२८ न्तरिसुतश्चापि (न्तरेस्तु तनयः) जज्ञे (वीरो) नृपः (स्मृतः) : १।३२।२२ न्तरिसुतश्चापि (न्तरेस्तु तनयः) जज्ञे (वीरो); ब्रह्म, ११।३९ हरिवद्; १३।६५,६६ न्तरिसुतश्चापि (न्तरेस्तु तनयः) अथ (तथा) जज्ञे भीमरथो नृपः (विद्वान् भीमरथः स्मृतः).

(७) वायु. ९२।२३ पूर्वार्धं नास्ति; ब्रह्माण्ड. ३।६७।२६; हरि. १।२९।२९ पुत्रो (सुतो) जातो धीमान् (दिवोदासः)

[1]दिवोदासाद्दृषद्वत्यां वीरो जज्ञे प्रतर्दनः।
तेन पुत्रेण बालेन प्रहृतं तस्य वै पुनः॥
[2]वैरस्यान्तं महाराज्ञा तदा तेन विधित्सता।
प्रतर्दनस्य पुत्रौ द्वौ वत्सो गर्गश्च विश्रुतौ॥
वत्सपुत्रो ह्यलर्कस्तु संनतिस्तस्य चात्मजः।
अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसंगरः।
अलर्कं प्रति राजर्षिं श्लोको गीतः पुरातनैः॥
[4]षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च।
युवा रूपेण संपन्न आसीत्काशिकुलोद्वहः।
लोपामुद्राप्रसादेन परमायुरवाप्तवान्॥

तस्यासीत्सुमहद्राज्यं रूपयौवनशालिनः॥
[2]शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसम्।
रम्यामावासयामास पुरीं वाराणसीं नृपः॥
[3]संनतेरपि दायादः सुनीथो नाम धार्मिकः।
सुनीथस्य तु दायादः क्षेमाख्यो नाम धार्मिकः॥
[4]क्षेमस्य केतुमान्पुत्रः सुकेतुस्तस्य चात्मजः।
सुकेतोस्तनयश्चापि धर्मकेतुरिति श्रुतः॥
[5]धर्मकेतोस्तु दायादः सत्यकेतुर्महारथः।
सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः॥

---

स इति ख्यातो (सत्तु धर्मात्मा): १।३२।२३ पुत्रो (सुतो) स्यापि जातो धीमान् (स्यासीद्दिवोदासः) वाराणस्यधिपोऽभवद् (सर्वरक्षोविनाशनः); ब्रह्म. ११।४० जातो धीमान् (दिवोदासः) स इति ख्यातो (सत्तु धर्मात्मा): १३।६६,६७ (पुत्रो भीमरथस्यापि वाराणस्यधिपोऽभवत्। दिवोदास इति ख्यातः सर्वक्षत्रप्रणाशनः॥).

(१) वायु. ९२।६४; ब्रह्माण्ड. ३।६७।६७,६८; हरि. १।२९।७२ दृष (दृष): १।३२।२८,३१ (दिवोदासस्य पुत्रस्तु वीरो राजा प्रतर्दनः। तेन पुत्रेषु बालेषु प्रहृतं तस्य भारत॥); ब्रह्म. ११।४९ पुत्रेण बालेन (बालेन पुत्रेण) तस्य वै पुनः (तु पुनर्बलम्): १३।६७,७१ (दिवोदासस्य पुत्रस्तु वीरो राजा प्रतर्दनः। तेन पुत्रेण बालस्य प्रहृतं तस्य भो द्विजाः॥).

(२) वायु. ९२।६५ विश्रुतौ (विश्रुतः); ब्रह्माण्ड. ३।६७।६८,६९ महाराज्ञा (महाराज); हरि. १।२९।७३ वत्सो गर्गश्च विश्रुतौ (वत्सभार्गौ बभूवतु) पूर्वार्धं नास्ति: १।३२।२८, ३२ गर्गश्च विश्रुतौ (भार्गव एव च) राज्ञा तदा तेन (राज क्षत्रियेण); ब्रह्म. ११।५० वत्सो गर्गश्च (वत्सभर्गौ तु) पूर्वार्धं नास्ति: १३।६८,७२ गर्गश्च विश्रुतौ (भार्गव एव च) महाराज्ञा तदा तेन (मुनिश्रेष्ठाः क्षत्रियेण).

(३) वायु. ९२।६६ तृतीयार्धे (अलर्कं प्रति राजर्षिगीतश्लोकौ पुरातनौ।) द्वितीयार्धं नास्ति, ब्रह्माण्ड. ३।६७।६९,७० द्वितीयार्धं नास्ति; हरि. १।२९।७३,७४ श्लोको (लोकैः): १।३२।३२ प्रथमतृतीयार्धे न स्तः; ब्रह्म. ११।५०,५१ काशिराजस्तु (तस्य पुत्रस्तु): १३।७२ प्रथमतृतीयार्धे न स्तः.

(४) वायु. ९२।६७ आसीत्काशिकुलोद्वहः (ह्यलर्कः काशिसत्तमः); ब्रह्माण्ड. ३।६७।७०,७१ वायुवत्; हरि. १।२९।७५,७६ षष्टिवर्षश (षष्टिं वर्षश) रवाप्तवान् (रवाप स): १।३२।३३,३४ द्वहः (द्वह) रवाप्तवान् (रवाप सः); ब्रह्म. ११।५२,५३ आसीत्काशि (प्रागासीच): १३।७३,७४ षष्टि (षष्टिं) रवाप्तवान् (रवाप सः).

(१) हरि. १।२९।७६, १।३२।३३; ब्रह्म. ११।५३.

(२) वायु. ९२।६८; ब्रह्माण्ड. ३।६७।७२; हरि. १।२९।७६,७७ आवासया (निवेशया) नृपः (पुनः): १।३२।३५ शापस्यान्ते (वयसोऽन्ते) रम्यामावासया (शून्यां निवेशया) नृपः (नृप); ब्रह्म. ११।५४ आवासया (निवेशया) नृपः (पुनः): १३।७४,७५ शापस्यान्ते महाबाहुः (वयसोऽन्ते मुनिश्रेष्ठाः), आवासया (निवेशया).

(३) वायु. ९२।६९ क्षेमाख्यो (सुकेतु); ब्रह्माण्ड. ३।६७।७३; हरि. १।२९।७७,७८ क्षेमाख्यो नाम धार्मिकः (क्षेम्यो नाम महायशाः): १।३२।३६ संनतेरपि (अलर्कस्य तु) धार्मिकः (पार्थिवः) क्षेमाख्यो नाम धार्मिक (क्षेम्यो नाम महायशाः); ब्रह्म. ११।५५ क्षेमाख्यो नाम धार्मिक (क्षेमो नाम महायशा): १३।७५ (अलर्कस्य तु दायादः क्षेमको नाम पार्थिवः।).

(४) वायु. ९२।७० तोस्त (तुन) श्रुत (श्रुतिः) पूर्वार्धं नास्ति; ब्रह्माण्ड. ३।६७।७४ तोस्त (तुन); हरि. १।२९।७८,७९ क्षेमस्य (क्षेम्यस्य) श्रुतः (स्मृतः): १।३२।३६ (क्षेम्यस्य केतुमान् पुत्रो वर्षकेतुस्ततोऽभवत्।); ब्रह्म. ११।५६ श्रुतः (स्मृतः): १३।७६ (क्षेमकस्य तु पुत्रो वै वर्षकेतुस्ततोऽभवत्।).

(५) वायु. ९२।७०,७१; ब्रह्माण्ड. ३।६७।७५; हरि. १।२९।७९, ८० (वर्षकेतोस्तु दायादो विभुर्नाम प्रजेश्वरः।); ब्रह्म. ११।५७: १३।७६ (वर्षकेतोश्च दायादो विभुर्नाम प्रजेश्वरः।).

सुविभुस्तु विभोः पुत्रः सुकुमारश्च तत्सुतः ।
सुकुमारस्य पुत्रस्तु धृष्टकेतुः सुधार्मिकः ॥

धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ।
वेणुहोत्रसुतश्चापि गर्गो वै नाम विश्रुतः ॥

गर्गस्य गर्गभूमिस्तु वात्स्यो वत्सस्य धीमतः ।
एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ॥

ब्राह्मणाः क्षत्रियाश्चैव तयोः पुत्राः सुधार्मिकाः ।
विक्रान्ता बलवन्तश्च सिंहतुल्यपराक्रमाः ।
इत्येते काशयः प्रोक्ता रजेरपि निबोधत ॥

अत ऊर्ध्वं प्रवक्ष्यामि दिवोदासस्य संततिम् ।
दिवोदासस्य दायादो ब्रह्मिष्ठो मित्रयुर्नृपः ॥

मैत्रायणस्ततः सोमो मैत्रेयास्तु ततः स्मृताः ।
एते हि संश्रिताः पक्षाः क्षात्रोपेतास्तु भार्गवाः ॥

अनाधृष्यस्तु राजर्षिर्ऋचेयुश्चैकराट् सुतः ।
ऋचेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा ॥

तस्यां देव्यां स राजर्षी रन्तिनारं त्वजीजनत् ।
रन्तिनारः सरस्वत्यां पुत्रानजनयच्छुभान् ॥

त्रसुं तथा प्रतिरथं ध्रुवं चैवातिधार्मिकम् ।
गौरी कन्या च विख्याता मान्धातुर्जननी शुभा ॥

---

(१) वायु. ९२।७१,७२ श्च तत्सुतः ( स्तनः स्तृनः ) सुधा ( स धा ) ; ब्रह्माण्ड. ३।६७।७६ श्च तत्सुतः ( स्तनः स्तृनः ) ; हरि. १।२९।८०,८१ सुविभुस्तु ( आनर्तस्तु ) श्च ( स्तु ) : १।३२।२८ ( आनर्तस्तु विभोः पुत्रः सुकुमारस्ततोऽभवत् । पुत्रस्तु सुकुमारस्य सत्यकेतुर्महारथः ॥ ) ; ब्रह्म. ११।५८ सुविभुस्तु ( आनर्तस्तु ) : १३।७७ ( आनर्तस्तु विभोः पुत्रः सुकुमारस्ततोऽभवत् । सुकुमारस्य पुत्रस्तु सत्यकेतुर्महारथः ॥ ).

(२) वायु. ९२।७२,७३ गर्गो ( गार्ग्यो ) ; ब्रह्माण्ड. ३।६७।७७ वायुवत् ; हरि. १।२९।८१,८२ गर्गो वै नाम विश्रुतः ( भर्गो नाम प्रजेश्वरः ) ; ब्रह्म. ११।५९ गर्गो वै नाम विश्रुतः ( भार्गो नाम प्रजेश्वरः ).

(३) वायु. ९२।७३ गर्गस्य गर्ग ( गार्ग्यस्य गर्भ ) उत्तरार्धं नास्ति ; ब्रह्माण्ड. ३।६७।७८ गर्गस्य ( गार्ग्यस्य ) उत्तरार्धं नास्ति ; हरि. १।२९।८२,८३ पूर्वार्धे ( वत्सस्य वत्सभूमिस्तु भृगुभूमिस्तु भार्गवात् । ) : १।३२।३९,४० पूर्वार्धे ( ततोऽभवन्महातेजा राजा परमधार्मिकः । वत्सस्य वत्सभूमिस्तु भार्गभूमिस्तु भार्गवात् ॥ ) ; ब्रह्म. ११।६० पूर्वार्धे ( वत्सस्य वत्सभूमिस्तु भार्गभूमिस्तु भार्गवः । ) भार्गवे ( भार्गव ) : १३।७८,७९ ( ततोऽभवन्महातेजा राजा परमधार्मिकः । वत्सस्य वत्सभूमिस्तु भार्गभूमिस्तु भार्गवात् ॥ ).

(४) वायु. ९२।७४,७५ काशयः ( काश्यपाः ) ; ब्रह्माण्ड. ३।६७।७८,७९ काशय ( काश्यपाः ) ; हरि. १।२९।८३ काशय ( का वैश्याः ) सुधार्मिकाः ( एवमादयः ) रजेरपि निबोधत ( नहुषस्य निबोध मे ) द्वितीयार्धं नास्ति : १।३२।४० ( ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च भारतर्षभ । ) एतावदेव ; ब्रह्म. ११।६१ ( ब्राह्मणाः क्षत्रिया वैश्यास्तस्य पुत्राः सहस्रशः । इत्येते काश्यपाः प्रोक्ता नहुषस्य निबोधत ॥ ) द्वितीयार्धं नास्ति : १३।७९ ( ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च सुनिसत्तमाः । ) एतावदेव.

(१) वायु. ९९।२०५,२०६ ; मत्स्य. ५०।१२,१३ संततिम् ( वै प्रजाः ) ब्रह्मिष्ठो ( धर्मिष्ठो ) ; हरि. १।३२।७५ ब्रह्मिष्ठो ( ब्रह्मर्षि ) ; ब्रह्म. १३।९७ हरिवत्, मूलपुस्तकटिप्पण्यां द्रष्टव्यम्.

(२) वायु. ९९।२०६,२०७ पूर्वार्धे ( मैत्रेयस्तु ततो ज्ञेयो स्मृता एतेऽपि संश्रिताः । ) हि ( ऽपि ) पक्षाः ( पक्षं ) ; मत्स्य. ५०।१३,१४ पूर्वार्धे ( मैत्रायणावरः सोऽथ मैत्रेयस्तु ततः स्मृतः । ) हि संश्रिताः ( वंशजा यतेः ) क्षात्रो ( क्षत्रो ) ; हरि. १।३२।७६ क्षात्रो ( क्षत्रो ) ; ब्रह्म. १३।९७ मैत्रायणस्ततः ( मित्रयोस्तु ततः ) उत्तरार्धे ( यतेऽपि संश्रिताः पक्षं क्षत्रोपेतास्तु भार्गवम् । ).

(३) वायु. ९९।१२७,१२८ पूर्वार्धे ( अनाधृष्यस्तु राजर्षी रिपुञ्जयस्य चात्मजः । ) ऋचेयो ( रिचेयो ) ; मत्स्य. ४९।६ ऋचेयो ( औचेयो ) पूर्वार्धं नास्ति ; हरि. १।३१।१.

(४) वायु. ९९।१२८,१२९ तस्यां ( दस्यां ) रन्तिनारं ( रन्ति नाम ) ; मत्स्य. ४९।७ ( तस्यां स जनयामास अन्तिनारं महीपतिम् । अन्तिनारो मनस्विन्यां पुत्रान् अजे परान् शुभान् ॥ ) ; हरि. १।३१।२ ( तस्यां स देव्यां राजर्षिर्मतिनारो महीपतिः । मतिनारसुतास्त्रासंस्त्रयः परमधार्मिकाः ॥ ) ; ब्रह्म. १३।५१ ( ऋचेयोऽजनयो राजा मतिनारो महीपतिः । मतिनारसुतास्त्रासंस्त्रयः परमधार्मिका ॥ ).

(५) वायु. ९९।१२९,१३० तथा प्र ( तथाऽप्र ) ; मत्स्य. ४९।८ पूर्वार्धे ( अमूर्तरयं वीरं त्रिवर्तं चैव धार्मिकम् । ) च विख्याता ( तृतीया च ) ; हरि. १।३१।३ पूर्वार्धे ( तंसुमप्रतिरथः सुवाहुं चैव धार्मिकः ) त्रसुं ( त्रस ) ; ब्रह्म. १३।५१ ( तंसुमप्रतिरथः सुवाहुं चैव धार्मिकः । ) उत्तरार्धं नास्ति.

[1]सर्वे वेदविदश्चैव ब्रह्मण्याः सत्यवादिनः ।
सर्वे कृतास्त्रा बलिनः सर्वे युद्धविशारदाः ॥
[2]पुत्रः प्रतिरथस्यापि कण्वः समभवन्नृपः ।
मेधातिथिः सुतस्तस्य यस्मात्काण्वायना द्विजाः ॥
[3]ईलिनी नाम यस्यासीत्कन्या वै जनमेजय ।
ब्रह्मवादिन्यधिस्त्री सा तंसुस्तामभ्यगच्छत ॥
[4]तंसोः सुतोऽथ राजर्षिर्धर्मनेत्रो महायशाः ।
ब्रह्मवादी पराक्रान्तस्तस्य भार्योपदानवी ।
उपदानवी सुतॉल्लेभे चतुरस्त्वलिनात्मजान् ॥
[5]दुष्यन्तमथ सुष्मन्तं प्रवीरमनघं तथा ॥
[6]दुष्यन्तस्य तु दायादो भरतो नाम वीर्यवान् ।
स सर्वदमनो नाम नागायुतबलो महान् ॥
[7]चक्रवर्ती सुतो जज्ञे दुष्यन्तस्य महात्मनः ।
शकुन्तलायां भरतो यस्य नाम्ना तु भारताः ॥

[1]दुष्यन्तं प्रति राजानं वागुवाचाशरीरिणी ।
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥
[2]भरस्व पुत्रं दुष्यन्त माऽवमंस्थाः शकुन्तलाम् ।
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥
[3]भरतस्तिसृषु स्त्रीषु नव पुत्रानजीजनत् ।
नाभ्यनन्दच्च तान् राजा नानुरूपानममेत्युत ॥
[4]ततस्ता मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयम् ।
ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् ॥
[5]ततो मरुद्भिरानीय पुत्रस्तु स बृहस्पतेः ।
संक्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः ॥
[6]भरतस्तु भरद्वाजं पुत्रं प्राप्य तदाऽब्रवीत् ।
प्रजायां संहृतायां वै कृतार्थोऽहं त्वया विभो ॥

(१) हरि. १।३२।४ श्चैव ( स्तत्र ) ; ब्रह्म. १३।५२ उत्तरार्धे नास्ति.

(२) वायु. ९९।१३०, १३१ पूर्वार्धे ( धुर्योऽप्रतिरथस्यापि कण्ठस्तस्याभवत्सुतः ) काण्वा ( काण्ठा ) ; हरि. १।३२।५ स्यापि ( स्यासीत् ).

(३) वायु. ९९।१३१ ( इलिनानुयम (?) स्यासीत्कन्या साऽजनयत्सुतान् । ) ; मत्स्य. ४९।९ ( इलिना तु यमस्यासीत्कन्या याऽजनयत्सुतान् ) ; हरी. १।३२।६ नाम ( भूत ) सा ( च ) ; ब्रह्म. १३।५३ पूर्वार्धे ( इला नाम तु यस्यासीत्कन्या वै मुनिसत्तमाः । ).

(४) वायु. ९९।१३२ ( त्रसोः सुदयित पुत्र मलिनं ब्रह्मवादिनम् । उपदात ततो लेभे चतुरस्त्वनि साऽऽत्मजान् ॥ ) ; मत्स्य. ४९।९,१० प्रथमद्वितीयार्धयोः ( ब्रह्मवादपराक्रान्तान् शुभदा त्विलिना ह्यभूत् । ) स्त्वलिनात्मजान् ( स्त्विलिनात्मजात् ) ; हरि. १।३२।७,८ सुतोऽथ ( सुरोधो ) स्त्वलिना ( स्त्वैलिका ) ; ब्रह्म. १३।५४,५५ महायशाः ( प्रतापवान् ) तृतीयार्धे ( उपदानवी ततः पुत्रांश्चतुरोऽजनयच्छुभान् । ).

(५) वायु. ९९।१३३ दुष्यन्तमथ सुष्मन्तं ( सुष्मन्तमथ दुष्मन्तं ) ; मत्स्य. ४९।१० दुष्यन्तमथ सुष्मन्त ( क्ष्यन्तमथ दुष्यन्तं ) ; हरि. १।३२।८ ; ब्रह्म १३।५५.

(६) हरि १।३२।९ ; ब्रह्म. १३।५६.

. (७) वायु. ९९।१३३,१३४ सुतो ( ततो ) दुष्यन्तस्य महात्मनः ( दौष्मन्तिर्नृपसत्तमः ) भारता ( भारतम् ) ; मत्स्य. ४९।११ पूर्वार्धे ( चक्रवर्ती ततो यज्ञे दुष्यन्तात्सामितिञ्जयः । ) तु ( च ) ; हरि. १।३२।१० तु ( स्य ) ; ब्रह्म. १३।५७.

(१) वायु. ९९।१३४,१३५ ; मत्स्य. ४९।१२ दुष्यन्तं ( दौष्यन्तिं ) वागुवा ( वागूचे ) ; हरि. १।३२।११.

(२) वायु. ९९।१३५,१३६ भरस्व पुत्रं ( भर स्वपुत्र ) माऽवमस्थाः ( सत्यमाह ) लाम् ( ला ) पुत्र उन्नयति ( पुत्रं नयति ) सत्यमाह शकुन्तला ( माऽवमस्थाः शकुन्तलाम् ) ; मत्स्य. ४९।१३ द्वितीयार्धे ( रेतोधां नयते पुत्रः परेतं यमसादनात् । ) ; हरि. १।३२।१२,१३.

(३) वायु. ९९।१३७.

(४) वायु. ९९।१३८ ; मत्स्य. ४९।१४ ( भरतस्य विनष्टेषु तनयेषु पुरा किल । पुत्राणां मातृकात्कोपात्सुमहान् संक्षयः कृतः ॥ ) ; हरि. १।३२।१३,१४ ( भरतस्य विनष्टेषु तनयेषु महीपते । मातॄणां तात कोपेन मया ते कथितं पुरा ॥ ), ब्रह्म. १३।५८ ( भरतस्य विनष्टेषु तनयेषु महीपते । मातॄणां तु प्रकोपेण मया तत्कथितं पुरा ॥ ) ; अग्नि. २७८।७ ( सुतेषु मातृकोपेण नष्टेषु भरतस्य च ).

(५) वायु. ९९।१३९ ; मत्स्य. ४९।१५ तु स ( स तु ) क्रतुभिर्विभु. ( भरतस्य तु ) ; हरि. १।३२।१४ पूर्वार्धे ( बृहस्पतेराङ्गिरसः पुत्रो राजन्महामुनिः । ) ; ब्रह्म. १३।५९ ( बृहस्पतेरङ्गिरसः पुत्रो विप्रो महामुनिः । अयाजयद्भरद्वाजो मरुद्भिः क्रतुभिर्विभुः ॥ ) ; अग्नि. २७८।८ मरुद्भिः क्रतुभिर्विभुः ( क्रतुभिर्निधोऽभवत् ).

. (६) वायु. ९९।१५५ ; मत्स्य. ४९।२१ तदाऽब्र ( विभुर्ब्र ) प्रजायां संहृतायां वै ( आदावात्महिताय त्वं ).

[1] पूर्वं तु वितथे तस्य कृते वै पुत्रजन्मनि ।
ततः स वितथो नाम भरद्वाजस्तथाऽभवत् ॥
[2] तस्मादपि भरद्वाजाद्ब्राह्मणाः क्षत्रिया भुवि ।
द्व्यामुष्यायणनामानः स्मृता द्विपितरस्तु वै ॥
[3] ततोऽथ वितथे जाते भरतस्तु दिवं ययौ ।
वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ ॥
[4] स चापि वितथः पुत्रान् जनयामास पञ्च वै ।
सुहोत्रं च सुहोतारं गयं गर्गं तथैव च ।
कपिलं च महात्मानं सुहोत्रस्य सुतद्वयम् ॥
[5] कौशिकश्च महासत्त्वस्तथा गृत्समतिर्नृपः ।
तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया विशः ॥
[6] वितथस्य तु दायादो भुवमन्युर्बभूव ह ।
महाभूतोपमाः पुत्राश्चत्वारो भुवमन्युजाः ॥
[7] बृहत्क्षत्रो महावीर्यो नरो गर्गश्च वीर्यवान् ।
नरस्य संकृतिः पुत्रस्तस्य पुत्रौ महौजसौ ॥

[1] गुरुधी रन्तिदेवश्च सांकृत्यौ तावुभौ स्मृतौ ।
गर्गस्य चैव दायादः शिनिर्विद्वानजायत ॥
[2] स्मृताः शैन्यास्ततो गर्गाः क्षत्रोपेता द्विजातयः ।
महावीर्यसुतश्चापि धीमानासीदुरुक्षयः ॥
[3] तस्य भार्या विशाला तु सुषुवे वै सुतत्रयम् ।
त्र्यय्यारुणिं पुष्करिणं कपिं चैव महायशाः ॥
[4] उरुक्षयाः स्मृता ह्येते सर्वे ब्राह्मणतां गताः ।
कपेः क्षत्रवरा ह्येते त्रयः प्रोक्ता महर्षयः ।
गर्गाः सांकृतयः काप्याः क्षत्रोपेता द्विजातयः ॥
[5] संश्रिताङ्गिरसं पक्षं बृहत्क्षत्रस्य वक्ष्यति ।
बृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्मिकः ॥
[6] सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह ।
तेनेदं निर्मितं पूर्वं पुरं वै हस्तिनापुरम् ॥
[7] हस्तिनश्चापि दायादास्त्रयः परमधार्मिकाः ।
अजमीढो द्विमीढश्च पुरुमीढस्तथैव च ॥

---

(१) वायु. ९९।१५६ पूर्वार्धे ( पूर्वं तु वितथं तस्य कृतं वै पुत्रजन्म हि । ) ; मत्स्य. ४९।३२ तस्य ( तस्मिन् ) ततः स ( ततस्तु ) तथा ( नृपो ) ; हरि. १।३२।१६,१७ उत्तरार्धे ( ततोऽथ वितथो नाम भरद्वाजसुतोऽभवत् । ) ; ब्रह्म. १३।६० भरद्वाज ( भरद्वाजात् ) शेषं हरिवत्.

(२) वायु. ९९।१५७ ( तस्माद्दिव्यो भरद्वाजो ब्राह्मण्यात्क्षत्रियोऽभवत् । द्विमुष्यायणनामा स स्मृतो द्विपितर( तृक )स्तु वै ॥ ) ; मत्स्य. ४९।३३ उत्तरार्धे ( द्व्यामुष्यायणकौलीनाः स्मृतास्ते द्विविधेन च । ) .

(३) वायु. ९९।१५८ तु ( स ) उत्तरार्धं नास्ति ; मत्स्य. ४९।३४ ( ततो जाते ऽपि वितथे भरतश्च दिवं ययौ । भरद्वाजो दिवं यातो ह्यभिषिच्य सुतमृषिः ॥ ) ; हरि. १।३२।१७,१८ ; ब्रह्म. १३।६१.

(४) हरि. १।३२।१८,१९ चापि ( राजा ) ; ब्रह्म. १३।६२,६३.

(५) हरि. १।३२।२० काशिक ( काशक ) ; ब्रह्म. १३।६३,६४ पूर्वार्धे ( काशिकं च महासत्त्व तथा गृत्समतिं गुरम् । ).

(६) वायु. ९९।१५८,१५९ पुत्राश्च ( चासंश्च ) ; मत्स्य. ४९।३५ पूर्वार्धे ( दायादो वितथस्यासीद्भुवमन्युर्महायशाः । ) मन्युजाः ( मन्दाः ).

(७) वायु. ९९।१५९,१६० गर्गश्च ( गामश्च ) ; मत्स्य. ४९।३६ पुत्रौ महौजसौ ( पुत्रो महायशाः ).

(१) वायु. ९९।१६०,१६१ ( गुरुवीर्यस्त्रिदेवश्च सांकृत्याववरौ स्मृतौ । दायादाश्चापि गार्ग्यस्य शिनिबद्धाद्बभूव ह ॥ ) ; मत्स्य. ४९।३७ सांकृत्यौ ( सत्कृत्यां ) शिनि ( शिबि ).

(२) वायु. ९९।१६१,१६२ ( स्मृताश्चैने ततो गार्ग्याः क्षात्रोपेता द्विजातयः । महावीर्यसुतश्चापि भीमस्तस्मादुभक्षयः ॥ ) ; मत्स्य. ४९।३८ शैन्याः ( शैब्याः ) महावीर्यसुतश्चापि ( आहार्यतनयश्चैव ) क्षयः ( क्षवः ).

(३) वायु. ९९।१६२,१६३ कपिं चैव महायशाः ( तृतीयं सुषुवे कपिम् ) ; मत्स्य. ४९।३९ वै सुत ( पुत्रक ) उत्तरार्धे ( त्र्युषणं पुष्करिं चैव कविं चैव महायशाः । ) .

(४) वायु. ९९।१६३,१६४ त्रयः ( तयोः ) गर्गाः सांकृतयः काप्याः ( गार्ग्याः सांकृतयो वीर्याः ) क्षत्रो ( क्षात्रो ) प्रथमार्धं नास्ति ; मत्स्य. ४९।४०,४१ क्षयाः ( क्षवा ) कपेः क्षत्र ( काव्यानां तु ) सांकृ ( संकृ ) काप्याः ( कान्याः ).

(५) वायु. ९९।१६४,१६५ ; मत्स्य. ४९।४१,४२ ( संश्रिताङ्गिरसो दक्षा बृहत्क्षत्रस्य च क्षितिः । बृहत्क्षत्रस्य दायादो हस्तिनामा बभूव ह ॥ ) ; हरि. १।२०।१६ पूर्वार्धं नास्ति.

(६) वायु. ९९।१६५ पुरं ( नाम्ना ) ; मत्स्य. ४९।४२ वै हस्तिनापुरम् ( तु गजसाह्वयम् ) पूर्वार्धं नास्ति ; हरि. १।२०।१६,१७ पुरं वै हस्तिनापुरम् ( हस्तिनपुरमुत्तमम् ) .

(७) वायु. ९९।१६६ द्विमीढश्च ( द्विजमीढः ) ; मत्स्य. ४९।४३ श्चापि ( श्चैव ) धार्मिकाः ( कीर्तयः ) ; हरि. १।२०।

[1]अजमीढस्य पत्न्यस्तु तिस्रो वै यशसान्विताः ।
नीलिनी केशिनी चैव धूमिनी च वराङ्गना ॥
[2]अजमीढस्य पुत्रास्तु तासु जाताः कुलोद्वहाः ।
तपसोऽन्ते सुमहतो राज्ञो वृद्धस्य धार्मिकाः ॥
[3]भरद्वाजप्रसादेन शृणुध्वं तस्य विस्तरम् ।
अजमीढस्य केशिन्यां कण्वः समभवत्किल ।
मेधातिथिः सुतस्तस्य तस्मात्काण्वायना द्विजाः ॥
[4]अजमीढस्य नीलिन्यां नीलः समभवन्नृपः ।
नीलस्य तपसोग्रेण सुशान्तिरभ्यजायत ॥
[5]पुरुजानुः सुशान्तेस्तु पृथुस्तु पुरुजानुतः ।
भद्राश्वः पृथुदायादो भद्राश्वतनयान् शृणु ॥
[6]मुद्गलः सृञ्जयश्चैव राजा बृहदिपुस्तथा ।
यवीनरश्च विक्रान्तः काम्पिल्यश्चैव पञ्चमः ॥

[1]पञ्चैते रक्षणायालं देशानामिति विश्रुताः ।
पञ्चानां विद्धि पञ्चालान् स्फीतैर्जनपदैर्वृतान् ॥
अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः ।
[2]मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः ॥
[3]सर्वे एते महात्मानः क्षत्रोपेता द्विजातयः ।
एते ह्यङ्गिरसः पक्षं संश्रिताः काण्वमुद्गलाः ॥
[4]मुद्गलस्य सुतो ज्येष्ठो ब्रह्मिष्ठः सुमहायशाः ।
इन्द्रसेना यतो गर्भं वध्र्यश्वं प्रत्यपद्यत ॥
[5]वध्र्यश्वान्मिथुनं जज्ञे मेनकायामिति श्रुतिः ।
दिवोदासश्च राजर्षिरहल्या च यशस्विनी ॥
[6]शरद्वतस्तु दायादमहल्या समसूयत ।
शतानन्दमृपिश्रेष्ठं तस्यापि सुमहायशाः ॥

---

१७,१८ ; ब्रह्म १३।८०,८१ पूर्वार्धे ( सुहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रय । ) तथैव च ( च वीर्यवान् ).

( १ ) वायु. ९९।१६७ तिस्रो वै यशसान्विता. ( शुभाः कुरुकुलोद्वहाः ) ; मत्स्य. ४९।४४ वै यशसान्विता ( कुरुकुलोद्वहाः ) उत्तरार्धे ( नीलिनी धूमिनी चैव केशिनी चैव विश्रुता । ); हरि. १।३२।४२ ; ब्रह्म. १३।८१,८२ नीलिनी ( नीली च ) ङ्गना ( ङ्गनाः ).

( २ ) वायु. ९९।१६८ ; मत्स्य. ४९।४५ पूर्वार्धे ( स तासु जनयामास पुत्रान्वै देववर्चस । ) सुमहतो राज्ञो ( महातेजा जाता ).

( ३ ) वायु ९९।१६९,१७० कण्वः ( कण्ठः ) त्काण्वा ( त्कण्ठा ) ; मत्स्य ४९।४६,४७ शृणुध्वं तस्य विस्तरम् ( विस्तर तेषु मे शृणु ) अज ( आज ).

( ४ ) वायु. ९९।१९४ ; मत्स्य. ५०।१ रभ्यजायत ( रुदपद्यत ) ; हरि. १।३२।६३ ( अजमीढस्य नीलिन्यां सुशान्तिरुदपद्यत । ) ; ब्रह्म. १३।९३ ( अजमीढात्तु नील्यां वै सुशान्तिरुदपद्यत । ).

( ५ ) वायु. ९९।१९५ पृथु ( रिक्ष ) नुतः ( नुजः ) उत्तरार्धे ( ततस्तु रिक्षदायादो भेदाच्च तनयास्त्विमे । ) ; मत्स्य. ५०।२ ; हरि. १।३२।६४ ( पुरुजानिः सुशान्तेस्तु बाह्याश्वः पुरुजानितः । बाह्याश्वतनयाः पञ्च बभूवुरमरोपमाः ॥ ) ; ब्रह्म. १३।९३,९४ ( पुरुजातिः सुशान्तेश्च बाह्याश्वः पुरुजातितः । बाह्याश्वतनयाः पञ्च स्फीता जनपदावृताः ॥ )

( ६ ) वायु ९९।१९६ सृञ्जय ( शृञ्जय ) यवीनरश्च ( यवीयांश्चापि ) ; मत्स्य. ५०।३ ल सृञ्जयश्चैव ( लश्च जयश्चैव ) यवी ( जवी ) काम्पिल्य ( कपिल ) ; हरि. १।३२।६५ तथा ( स्मृतः ) काम्पिल्यश्चैव ( कृमिलाश्वश्च ) ; ब्रह्म. १३।९४,९५ काम्पिल्यश्चैव ( कृमिलाश्वश्च ) ; अग्नि. २७८।२० मुद्गल ( मुकुलः ) उत्तरार्धे ( यवीनरश्च कृमिलः पाञ्चला इति विश्रुताः । ).

( १ ) वायु. ९९।१९७ ( पञ्चानां रक्षणार्थाय पितैतानभ्यभाषत । पञ्चानां विद्धि पञ्चैतान् स्फीता जनपदा युताः ॥ ) ; मत्स्य. ५०।४ ( पञ्चानां चैव पञ्चालानेनाञ्जनपदान् विदुः । पञ्चालरक्षिणो ह्येते देशानामिति नः श्रुतम् ॥ ) ; हरि. १।३२।६६ ; ब्रह्म. १३।९५,९६ उत्तरार्धे ( पञ्चानां ते तु पञ्चालाः स्फीता जनपदावृताः । ).

( २ ) वायु. ९९।१९८ ( मुद्गलस्यापि मौद्गल्याः ) एतावदेव ; मत्स्य. ५०।५ ( मुद्गलस्यापि मौद्गल्याः ) एतावदेव ; हरि. १।३२।६७ ; ब्रह्म. १३।९६,९७.

( ३ ) वायु. ९९।१९८, १९९ क्षत्रोपेता ( क्षात्रोपेत ) पक्षं ( पक्षे ) काण्व ( कण्ठ ) प्रथमपाद विना ; मत्स्य. ५०।५ प्रथमपाद विना ; हरि. १।३२।६८ मुद्गलाः ( मौद्गल्याः ).

( ४ ) वायु. ९९।१९९,२०० वध्र्यश्वं ( वध्यश्वं ) ; मत्स्य. ५०।६ ज्येष्ठो ( जज्ञे ) उत्तरार्धे ( इन्द्रसेनः सुतस्तस्य विन्ध्याश्वस्तस्य चात्मजः । ) ; हरि. १।३२।६९ मुद्गलस्य ( मौद्गलस्य ) ब्रह्मिष्ठः ( ब्रह्मर्षिः ) सेना ( सेनो ) ; ब्रह्म. १३।९७ वध्र्यश्वं ( वध्र्यश्च ) पूर्वार्धे नास्ति.

( ५ ) वायु. ९९।२००,२०१ वध्र्यश्वा ( वध्यश्वा ) मेनकायामिति ( मेनका इति नः ) ; मत्स्य. ५०।७ वध्र्यश्वा ( विन्ध्याश्वा ) ; हरि. १।३२।७० वध्र्यश्वा ( वध्नश्वा ).

( ६ ) वायु. ९९।२०१,२०२ शर ( शार ) ; मत्स्य. ५०।८ सम ( सेत्र ) यशाः ( तपाः ) ; हरि. १।३२।७१ द्वतस्तु ( द्वतस्य ).

पुत्रः[1] सत्यधृतिर्नाम धनुर्वेदस्य पारगः ।
तस्य सत्यधृतेः शुक्रं दृष्ट्वाऽप्सरसमग्रतः ॥
प्रचस्कन्दे[2] शरस्तम्बे मिथुनं समपद्यत ।
कृपया तच्च जग्राह शन्तनुर्मृगयां गतः ॥
कृपः[3] स्मृतः स वै तस्माद्गौतमी च कृपी तथा ।
एते शारद्वताः प्रोक्ता उतथ्या गौतमान्वयाः ॥

पुरूरवसो[4] ज्येष्ठः पुत्रो यस्त्वायुर्नामा राहोर्दुहितरमुपयेमे । तस्यां स पञ्च पुत्रान् जनयामास नहुषक्षत्रवृद्धरम्भरजिसंज्ञाः । तथैव अनेनाः पञ्चमः पुत्रोऽभूत् । क्षत्रवृद्धात्सुनहोत्रः पुत्रोऽभवत् । काशलेशगृत्समदास्त्रयोऽस्याभवन् । गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्तयिताऽभूत् ॥ काशस्य काशिराजस्ततो दीर्घतमाः पुत्रोऽभवत् । धन्वन्तरिस्तु दीर्घतमसोऽभूत् । स हि संसिद्धिकरणः सकलसंभूतिष्वशेषज्ञानवित् ॥ भगवता नारायणेन चातीतसंभूतायास्मै वरो दत्तः ॥ काशिराजगोत्रेऽवतीर्य त्वमष्टधा सम्यगायुर्वेदं करिष्यसि यज्ञभाक् च भविष्यसीत्यभिहितः ॥ तस्य च धन्वन्तरेः पुत्रः केतुमान् केतुमतोऽभीरथस्तस्यापि दिवोदासस्ततः प्रतर्दनः स च भद्रश्रेण्यां वंशविनाशादशेषाः शत्रवोऽनेन जिता इति शत्रुजिदभवत् ॥ तेन च प्रीतिमताऽऽत्मपुत्रो वत्स वत्सेत्यभिहितस्ततो वत्सोऽसावभवत् ॥ सत्यव्रततया ऋतध्वजसंज्ञामवाप । पुनश्च कुवलयनामानमश्वं लेभे । कुवलयाश्व इत्यस्यां पृथिव्यां प्रथितः ॥ तस्य च वत्सस्य पुत्रोऽलर्को नामाभवत् । यस्यायमद्यापि श्लोको गीयते—

षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
अलर्कादपरो नान्यो बुभुजे मेदिनीं युवा ॥

तथाऽलर्कस्य संनतिर्नामात्मजोऽभवत् । ततः सुनीथस्तस्य सुकेतुस्ततो धर्मकेतुस्ततः सत्यकेतुस्तस्माद्विभुस्तत्तनयः सुविभुस्ततश्च सुकुमारस्तस्यापि धृष्टकेतुस्ततश्च वैनहोत्रस्ततश्च भार्गो भार्गस्य भार्गभूरतश्चातुर्वर्ण्यप्रवृत्तिरित्येते काश्यो भूपतयः कथिताः ॥

रजेः[1] पुत्रशतान्यतुलवीर्यसाराण्यासन् ॥

पुरोर्जनमेजयः[2] पुत्रस्तस्यापि प्रचिन्वान् प्रचिन्वतः प्रवीरस्तस्मान्मनस्युर्मनस्योश्चाभयस्तस्यापि सुद्युम्नस्ततो बहुगवस्तस्य संयातिः संयातेरहंयातिस्ततो रौद्राश्वः । ऋतेयुः कक्षेयुः स्थण्डिलेयुर्घृतेयुर्जलेयुः स्थलेयुः संततेयुर्धनेयुर्वनेयुर्नामानो रौद्राश्वस्य दशात्मजा बभूवुः ॥ ऋतेयो रन्तिनारः पुत्रोऽभूत्तंसुमप्रतिरथं ध्रुवं च रन्तिनारः पुत्रमवाप । अप्रतिरथात्कण्वस्तस्यापि मेधातिथिर्यतः कण्वायना द्विजा बभूवुः । तंसोरनिलस्ततो दुष्यन्ताद्याश्चत्वारः पुत्रा बभूवुः । दुष्यन्ताच्च चक्रवर्ती भरतोऽभवत् । यन्नामहेतुर्देवैः श्लोको गीयते—

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्यन्त माऽवमंस्थाः शकुन्तलाम् ॥
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥

भरतस्य च पत्नीनां ये नव पुत्रा बभूवुः । नैते ममानुरूपाः पुत्रा इत्यभिहितास्तन्मातरो जघ्नुः परित्यागभयात् । ततोऽस्य पुत्रजन्मनि वितथे पुत्रार्थिनो मरुत्स्तोमयाजिनो दीर्घतमसा पार्ष्ण्य-

(१) वायु. ९९।२०२,२०३ ; मत्स्य. ५०।९ पुत्र (सुतः) उत्तरार्धे (आसीत्सत्यधृतेः शुक्रममोघं धार्मिकस्य तु ।) ; हरि. १।३२।७२ सत्य (सत्त) शुक्रं (रेतो).

(२) वायु. ९९।२०३,२०४ ; मत्स्य. ५०।१०,११ (स्कन्नं रेतः सत्यधृतेर्दृष्ट्वा चाप्सरसं जले । मिथुनं तत्र संभूतं तस्मिन् सरसि संभृतम् ॥ ततः सरसि तस्मिंस्तु क्रममाणं महीपतिः । दृष्ट्वा जग्राह कृपया शन्तनुर्मृगयां गतः ॥ ); हरि. १।३२।७३ प्रचस्कन्दे (अस्रवद्).

(३) वायु. ९९।२०४,२०५ उतथ्या (कतथ्या) ; मत्स्य. ५०।१२ (एते शारद्वताः पुत्रा आख्याता गौतमा वराः ।) पूर्वार्धं नास्ति ; हरि. १।३२।७४ उतथ्या गौतमान्वयाः (एते ते गौतमाः स्मृताः).

(४) विष्णु. ४।८।१–८.

(१) विष्णु. ४।९।१.

(२) विष्णु. ४।१९।१–१८.

पास्तबृहस्पतिवीर्यान् उतथ्यपत्नीममतासमुत्पन्नो भरद्वाजाख्यो नाम पुत्रो मरुद्भिर्दत्तः ॥ तस्यापि नामनिर्वचनश्लोकः पठ्यते--

मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥इति॥

भरद्वाजश्च वितथे पुत्रजन्मनि मरुद्भिर्दत्तस्ततो वितथसंज्ञामवाप ॥ वितथस्य भवन्मन्युः पुत्रोऽभूद् बृहत्क्षत्रमहावीर्यनरगर्गाख्या भवन्मन्युपुत्राः । नरस्य संकृतिः संकृते रुचिरधीरन्तिदेवौ । गर्गाच्छिनिस्ततो गार्ग्याः शैन्याः क्षत्रोपेता द्विजातयो बभूवुः ॥ महावीर्यादुरुक्षयो नाम पुत्रोऽभूत्तस्य त्रय्यारुणपुष्करिणौ कपिश्च पुत्रत्रयमभूत् । तच्च त्रितयमपि पश्चात् विप्रतामुपजगाम । बृहत्क्षत्रस्य सुहोत्रः सुहोत्राद्धस्तिनरो य इदं हस्तिनापुरमारोपयामास । अजमीढद्विमीढपुरुमीढास्त्रयो हस्तिनरतनयाः । अजमीढात्कण्वान्मेधातिथिर्यतः काण्वायना द्विजाः ॥ अजमीढस्यान्यः पुत्रो बृहद्दिपुर्बृहदिपोर्बृहद्धनुस्तश्च बृहत्कर्मा तस्माज्जयद्रथस्ततोऽपि विश्वजित्ततः सेनजिद्रुचिराश्वकाश्यदृढधनुर्वत्सहनुसंज्ञाः सेनजितः पुत्राः । रुचिराश्वतः पृथुसेनस्तस्मात्पारः पारान्नीपस्तस्यैकशतं पुत्राणां तेषां प्रधानः काम्पिल्याधिपतिः समरः ॥ समरस्यापि पारसम्पारसदश्वास्त्रयः पुत्राः, पारात्पृथुः पृथोः सुकृतिः सुकृतेर्विभ्राजस्तस्माचानुहो यः शुकदुहितरं कृत्वीं नामोपयेमे ॥ अनुहात् ब्रह्मदत्तस्ततो विष्वक्सेनस्तस्योदक्सेनो भल्लाटस्तस्यात्मजो द्विमीढो द्विमीढस्य यवीनरस्तस्यापि धृतिमांस्ततश्च दृढनेमिस्तस्माच सुपार्श्वस्ततः सुमतिस्ततश्च सन्नतिमान्सन्नतिमतः कृतोऽभूयं हिरण्यनाभो योगमध्यापयामास यश्चतुर्विंशतिं प्राच्यसामगानां चकार संहिताः ॥ कृताचोग्रायुधो येन प्राचुर्येण नीपक्षयः कृतः ॥ उग्रायुधात्क्षेम्यस्तस्मात्सुवीरस्तस्य नृपञ्जयस्ततो बहुरथ इत्येते पौरवाः । अजमीढस्य नीलिनी नाम पत्नी तस्यां नीलसंज्ञः पुत्रोऽभवत् । तस्माच्छान्तिः शान्तेः सुशान्तिः सुशान्तेः पुरुजानुस्ततश्चक्षुस्ततो हर्यश्वस्तस्मान्मुद्गलसृञ्जयबृहदिपुप्रवीरकाम्पिल्याः, पञ्चानामेतेषां विषयाणां रक्षणायाल्मेते मत्पुत्रा इति पित्राऽभिहिता अतः पञ्चालाः । मुद्गलाच मौद्गल्याः क्षत्रोपेता द्विजातयो बभूवुः । मुद्गलाद्बध्न्यश्वो बध्न्यश्वाद्दिवोदासोऽहल्या च मिथुनमभूत् । शरद्वतोऽहल्यायां शतानन्दोऽभवत् । शतानन्दात्सत्यधृतिर्धनुर्वेदान्तगो जज्ञे । सत्यधृतेस्तु वराप्सरसमुर्वशीं दृष्ट्वा रेतः स्कन्नं तच्छरस्तम्बे पपात ॥ तच्च द्विधा गतमपत्यद्वयं कुमारः कन्यका चाभवत् । मृगयामुपगतः शान्तनुर्दृष्ट्वा कृपया जग्राह । ततः स कुमारः कृपः कन्या चाश्वत्थाम्नो जननी कृपी द्रोणपत्न्यभवत् । दिवोदासस्य मित्रयुर्मित्रयोः च्यवनो नाम राजा च्यवनात् सुदासस्ततः सौदासः सहदेवस्तस्यापि सोमकस्ततो जन्तुः शतपुत्रज्येष्ठोऽभवत् । तेषां यवीयान् पृषतः पृषताद्द्रुपदस्तस्माद्धृष्टद्युम्नस्तस्माद्धृष्टकेतुः । अजमीढस्यान्य ऋक्षनामा पुत्रोऽभूत् । ऋक्षात्संवरणः संवरणात्कुरुर्यः इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार ॥

शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ।
बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥
एते वै मैथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥
यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ।
नहुषः क्षत्रवृद्धश्च रजी रम्भश्च वीर्यवान् ॥
अनेना इति राजेन्द्र शृणु क्षत्रवृधोऽन्वयम् ।
क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः ॥
काश्यः कुशो गृत्समद इति गृत्समदादभूत् ।
शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥
काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमःपिता ।
धन्वन्तरिर्दीर्घतम आयुर्वेदप्रवर्तकः ॥
यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ।
तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥

(१) भाग. ९।२१।२६,२७.
(२) भाग. ९।१७।१-९.

दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ।
स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ।
तथा कुवलयाश्वेति प्रोक्तोऽलर्कोदयस्ततः ॥
पौरोवंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ।
यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥
जन्मेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः ।
प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥
तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ।
संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥
ऋतेयुस्तस्य कुक्षेयुः स्थण्डिलेयुः कृतेयुकः ।
जलेयुः संततेयुश्च धर्मसत्यव्रतेयवः ॥
दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥
ऋतेयो रन्तिभारोऽभूत्त्रयस्तस्यात्मजा नृप ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥
तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ।
पुत्रोऽभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥
त्रयस्त्रिंशच्छतं ह्यश्वान्बद्ध्वा विस्मापयन्नृपान् ।
दौष्यन्तिरत्यगान्मायां देवानां गुरुमाययौ ॥
भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ।
नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥
तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥
वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ।
महावीर्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥
गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ।
रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥
गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद् ब्रह्म प्रवर्तत ।
दुरितक्षयो महावीर्यात्तस्य त्र्यारुणिः कविः ॥
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ।
बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धस्तिनापुरम् ॥

अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ।
अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥
अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।
बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥
तत्सुतो विशदस्तस्य सेनजित्समजायत ।
रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥
रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः ।
पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥
स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ।
स योगी गवि भार्यायां विष्वक्सेनमधात्सुतम् ॥
जैगीषव्योपदेशेन योगतन्त्रं चकार ह ।
उदक्स्वनस्ततस्तस्माद्भल्लादो बार्हदीषवाः ॥
यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ।
नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् ॥
सुपार्श्वात्सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः ।
कृतिर्हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् ॥
संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ।
तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः ॥
ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ।
नलिन्यामजमीढस्य नीलः शान्तिः सुतस्ततः ॥
शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ।
भर्म्याश्वस्तनयास्तस्य पञ्चासन्मुद्गलादयः ॥
यवीनरो बृहदिषुः काम्पिल्यः संजयः सुताः ।
भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥
विषयाणामलमिमे इति पञ्चालसंज्ञिताः ।
मुद्गलाद्ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥
मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ।
अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥
तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ।
शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल ॥
शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम् ।
तद्दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ।
कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥

(१) भाग. ९।२०।१-७. (२) भाग. ९।२०।७.
(३) भाग. ९।२०।२९. (४) भाग. ९।२०।२५.
(५) भाग. ९।२१।१,२. (६) भाग. ९।२१।१९-२९.

# गोत्रप्रवरगणना



## भृगुकाण्डम्

मञ्जर्युक्ता गोत्रप्रवरकाण्डविषयानुक्रमणिका

तत्र कल्पसूत्रपुराणस्मृतिकारैः एकेनैव क्रमेण गोत्रप्रवरकाण्डानि उपदिष्टानि । येनैव क्रमेण तान्युपदिष्टानि तेनैव क्रमेण तानि वक्ष्यमाणानि भूदेवानामबहुश्रुतानामुपकाराय सुग्रहणाय च अनुक्रमिष्यामः ।

आदितस्तावद्गोत्रप्रवरोपदेशकर्तव्यताहेतुसंदर्भगर्भाणि परिभाषासूत्रकाण्डान्युपदिष्टानि, तेषु च गोत्रप्रवरतत्सङ्ख्याविधिपराः प्रत्यक्षश्रुतयः तैत्तिरीयाः शाखान्तरीयाश्च ।

परिभाषासूत्रकाण्डेभ्योऽनन्तरं भृगूणां गोत्रप्रवरतत्संख्योपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । ते वत्सा विदा आर्ष्टिषेणा यस्काः शुनका मित्रयुवा वैन्या इत्येवमाद्या गोत्रगणा उपदिष्टाः । प्रतिगणं च प्रवराः तत्संख्याश्चोपदिष्टाः । वत्सार्ष्टिषेणविदानां त्रयाणां गणानां परस्परं स्वे स्वे गणे चाविवाहश्चोपदिष्टः । यस्कादीनां वैन्यान्तानां स्वं स्वं गणं वर्जयित्वा परस्परं च पूर्वोक्तैः वक्ष्यमाणैश्च सर्वैः सह विवाह उपदिष्टः ।

भृगुसूत्रकाण्डेभ्योऽनन्तरं आङ्गिरसानां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डानि त्रिविधान्युपदिष्टानि— गौतमानां गोत्रप्रवरोपदेशपराणि सूत्राणि, तदनन्तरं भरद्वाजगोत्रप्रवरोपदेशपराणि सूत्रकाण्डानि, तदनन्तरं केवलाङ्गिरसानां प्रवरोपदेशपराणि काण्डानि । तत्र गौतमसूत्रकाण्डेषु आयास्या गौतमा औचथ्या गौतमा औशिजा गौतमा राहूगणा गौतमाः सोमराजकयो गौतमा वामदेवा गौतमा बृहदुक्था गौतमा इति बहुभेदा गौतमगणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । गौतमानां सर्वेषामविवाहश्चोपदिष्टः ।

गौतमसूत्रकाण्डेभ्योऽनन्तरं भरद्वाजगोत्रसूत्रकाण्डानि । तेषु च केवलभरद्वाजाः शुङ्गशैशिरयो द्व्यामुष्यायणा ऋक्षाः कपयो गर्गा इत्येवमादयो भरद्वाजगणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । भरद्वाजगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः ।

भरद्वाजगणेभ्योऽनन्तरं केवलाङ्गिरसानां प्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च हरितकुत्सकण्वरथीतरमुद्गलसंकृतिविष्णुवृद्धादयो गणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । तेषु च हरितकुत्सानां परस्परमविवाहः, कण्वादीनां परस्परं विवाहश्चोपदिष्टः ।

अतः परमत्रीणां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु केवलात्रयो वाग्भूतका गविष्ठिरा अतिथयः पुत्रिकापुत्राश्चेत्यादयो गोत्रगणाः, प्रतिगणं च प्रवरा उपदिष्टाः । अत्रिगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः ।

अत्रिगणानन्तरं विश्वामित्रगोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च देवराता रौक्षका लोहका लोहिताः श्रौमताः कता धनञ्जया अघमर्षणाः पूरणा इन्द्रकौशिका आजायना रेवणा इत्याद्या गणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । विश्वामित्रगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः ।

तदनन्तरं काश्यपानां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च निध्रुवा रेभाः शाण्डिल्या लौगाक्षा इत्याद्या गणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । कश्यपगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः ।

तदनन्तरं वसिष्ठानां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च केवलवसिष्ठा उपमन्यवः पराशराः कुण्डिनाः सकृतयश्चेति च गणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । वसिष्ठगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः ।

तदनन्तरमगस्तीनां गोत्रप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च इध्मवाहाः साम्भवाहाः सोमवाहा यज्ञवाहा माहेन्द्राः पौर्णमासाश्चेति गोत्रगणाः, प्रतिगणं च प्रवरास्तत्संख्याश्चोपदिष्टाः । अगस्तिगणानां सर्वेषां परस्परमविवाहश्चोपदिष्टः ।

तदनन्तरं क्षत्रियाणामात्मीयप्रवरः पुरोहितप्रवरश्चोपदिष्टः । पुरोहितगोत्रैः पुरोहितप्रवरैश्च सह क्षत्रियाणामविवाहो नोपदिष्टः, प्राप्त्यभावात् ।

तदनन्तरं वैश्यानां क्षत्रियवत् आत्मीयप्रवरः पुरोहितप्रवरश्चोपदिष्टः ।

तदनन्तरं सार्ववर्णिकमानवप्रवरोपदेशपराणि सूत्रकाण्डान्युपदिष्टानि । तेषु च त्रयाणां वर्णानामविशेषेण एकार्षेयो मानवः प्रवर उक्तः ।

सर्वान्ते च समानगोत्रसमानप्रवरादियाथार्थ्यविदां प्रवराध्यायाध्ययनस्य च ब्रह्मविदां वेदाध्ययनस्येव ब्रह्मलोकादिफलप्राप्त्युपदेशपराणि शास्त्रसमाप्तिसूत्रकाण्डान्युपदिष्टानि । तेषु चोपदिष्टेषु सत्सु पर्यवसिताः प्रवराध्यायाः ।

अस्यां च काण्डानुक्रमण्यां परिगणितेषु गणेषु एकैकस्मिन् गणे यावन्ति गोत्राणि यन्नामकानि यत्क्रमकानि चान्तर्भवन्ति विद्यन्ते तानि सर्वाणि सूत्रपाठक्रमानुसारेणैव परिगणितानि ज्ञातव्यानीति । तथा प्रवरसंख्या पञ्चार्षेयत्र्यार्षेयद्व्यार्षेयैकार्षेयविभागे सूत्रपाठक्रमानुसारेणैव ज्ञातव्या । इति वक्ष्यमाणं सर्वमनुक्रान्तं जिज्ञासानिवृत्तये सुखग्रहणाय च । गोप्र. २-४

## बौधायनश्रौतसूत्रम् ।

### वत्साः

भृगूणामादितो व्याख्यास्यामः—

१ ( वात्स्याः ) २ मार्कण्डेयाः ३ माण्डूकेयाः ४ माण्डव्याः ५ कांसयः ६ आलेखनाः ७ दार्भायणाः ८ शार्कराक्ष्याः ९ दैवतायनाः १० शौनकायनाः ११ माधुकेयाः १२ पार्षिकाः १३ साङ्काः १४ प्रान्तायनाः १५ पैलाः १६ पैङ्गलायनाः १७ दाभ्रेपयः १८ वाह्यकयः १९ वैश्वानरयः २० वैहीनरयः २१ विरोहिताः २२ वार्हाः २३ गौष्टायनाः २४ यष्टेपयः २५ काशकृत्स्नाः २६ वाग्भूतयाः २७ ऋतभागाः २८ ऐतिशायनाः

( १ ) बौश्रौप्र. ; गोप्र. २२ ; संप्र. ६१६–६१७ ; संम. ५५–५६; प्रद. ११० ; संकौ. १८३ ; बाल. १।५२ (पृ. १८३) ; संर. ४२७–४२८.

१ प्रद. जामदग्न्या वत्साः ; बाल. वत्सः ; संर. वत्साः .

३ बौश्रौप्र. माण्डूकाः .

४ संप्र. संम. ' माण्डूकेयाः ' इत्यस्य पूर्वम् ।

५ प्रद. बाल. संर, कांसेयाः ; संप्र. काशेयाः, कांसयः ; संम. काशेयाः, कांसेयाः ; बाल. माण्डूकः, कामः, काक्षेयः इत्यधिकम् ।

८ बौश्रौप्र. गोप्र. संप्र. संम. प्रद. बाल. शार्कराक्षाः .

९ गोप्र. देवतायनाः ; संप्र. दैवन्तायनाः ; प्रद. देवतापनः ; संम. दैवत्यापनाः .

११ बौश्रौप्र. माण्डूकेयाः. अन्यग्रन्थेषु माधूकेयाः इति । शतपथब्राह्मणानुसारेण प्रा. जॉन ब्रौमहोदयेन सूचितः पाठोऽयम् ।

१२ प्रद. पार्ष्णिकः ; बाल. वार्षिकः .

१३ गोप्र. सांप्रभायनाः ; संप्र. साङ्काः , कांसा इत्यपि क्वचित् ; संम. कांसाः ; बाल. साम्वः ; संर. साकाः .

१४ संप्र. प्रद. प्रभायनाः ; संम. प्रासायनाः ; संकौ. संर. प्रात्तायनाः ; बाल. प्राक्तनायनः .

१६ संम. पैङ्गनादः ; बाल. पिङ्गलायनः .

१७ गोप्र. संप्र. प्रद. दाभ्रेपकयः ; संम. भ्रेपयः ; संकौ. बाल. दाभ्रेपकाः ; संर. दार्भ्रेपकयः .

१८ गोप्र. वाह्यकयः ; प्रद. वाह्याकिः .

१९ बाल. वैश्वाहीनरिः .

२१ संकौ. संर. वैरोहिताः ; प्रद. विलोहितः .

२२ गोप्र. संम. संकौ. संर. बाह्याः ; संप्र. बाह्याः, बभ्राः इत्यपि ; बाल. वाहकः . 'वार्हाः' इत्यस्यानन्तरं संकौ. बभ्राः ; बाल. बर्हिः, बभ्रः ; संर. बाभ्राः इत्यधिकम् ।

२३ बौश्रौप्र. गौष्टायणाः ; गोप्र. गौञ्जायनाः ; संप्र. गौञ्जायणाः ; संम. गौष्ठायणाः ; प्रद. संकौ. बाल. संर. गोष्ठायनाः .

२४ बौश्रौप्र. ऐष्टेपय ; गोप्र. संप्र. संम. ष्टैकयः ; प्रद. सैषिः ; संकौ. संर. टीकयः ; बाल. टिकिः .

२६ गोप्र. संप्र. संम. संकौ. बाल. वाद्भूतकाः ; प्रद. संर. वाद्भुतकाः .

२७ संप्र. संम. प्रद. संकौ. संर. ऋतभागाः .

२९ जानायनाः ३० पाणिनिः ३१ वाल्मिकिः ३२ स्यौलपिण्डयः ३३ शैखावताः ३४ जिहीतयः ३५ सावर्णिः ३६ वाकायनाः ३७ वालायनाः ३८ सौकृतयः ३९ मण्डवित् ४० सौविष्टयः ४१ हस्त्यमयः ४२ शौद्धकयः ४३ वैकर्णाः ४४ द्रौपजिह्वयः ४५ औरशयः ४६ काम्बलोदरयः ४७ काठोरकृत् ४८ वैहलयः ४९ विरूपाक्षाः ५० वृकाश्वाः ५१ उर्वैर्मन्यवः ५२ दैवमत्याः ५३ आर्कायणाः ५४ मार्कायणाः ५५ काह्वायनाः ५६ वायवायनिनः ५७ शार्ङ्गरवाः ५८ कारवाः ५९ चान्द्रमसाः ६० गाङ्गेयाः ६१ आनूपेयाः ६२ याह्नेयाः ६३ जावालिः ६४ पारिमण्डलिः ६५ वाहुमित्रायणाः ६६ आपिशलयः ६७ वैष्पुरेयाः

---

२९ बाल. तापनायनः ; संर. ज्ञानायनाः .

३० संर. पाणिनयः .

३२ संर. स्थौलपिण्डायनः .

३३ गोप्र. संप्र 'सवानवा' ; प्रद. संकौ. सौषानवाः ; बाल. सौषातकि' ; संर. सवानवाः .

३४ बाल. जैहीतिः .

३५ संप्र. सावर्णिकायनाः .

३७ गोप्र. संप्र. बाल. संर. वालायनाः ; प्रद. वलायना'.

३८ प्रद. बाल. सुकृतिः .

३९ गोप्र. प्रद. संकौ. संर. मण्डव'. बाल. 'मण्डवित्' इत्यस्य पूर्वं धूतवः इत्यधिकम् ।

४० संम. सौविस्तय' ; प्रद. सुविष्ठिः ; संकौ. सोविष्टयः ; बाल. सौविष्ठि' ; संर. सौविष्ट्यः .

४१ बौश्रौप्र. हस्त्याम्रय. ; गोप्र. प्रद. संकौ. बाल. हस्ताम्रय' ; संप्र. हस्त्यम्रय', हस्ताम्रयः ; संम. हस्तम्रयः, हस्ताम्रयः ; संर. हस्ताम्रः .

४२ गोप्र. सौद्धकयः ; बाल. सैद्रक'. 'शौद्धकयः' इत्यस्यानन्तरं संप्र. संकौ. शौद्धाकयः ; संम. प्रद. सौद्धाकयः ; संर. शौदकय' इत्यधिकम् ।

४३ गोप्र. संप्र. संकौ. वैकर्ण्याः ; संम. वैकर्णयः .

४४ बौश्रौप्र. *औरजिह्वयः* ; गोप्र. संप्र. संम. प्रद. द्रोणजिह्वयः ; संकौ. संर. द्रोणकजिह्वयः ; बाल. धोकजिह्वः ; जेबी. द्रौरजिह्वाः .

४५ गोप्र. अरसय' ; संप्र. संम. प्रद संकौ. संर. औरसयः ; बाल. औरसः .

४६ गोप्र संप्र. संम. काम्बरोदरय' ; संकौ. संर. कम्बलोदरय' ; बाल. कम्बलोदरः .

४७ गोप्र काम्बोरकृत् ; संप्र. कम्बोरकृत् ; संम. कण्ठोरकृत् ; प्रद. कठोरकृत ; संकौ. संर. वाकारकृत' ; बाल. कठोरकृत् .

४८ बौश्रौप्र. गोप्र. संप्र. प्रद्. वैहलिः ; संम. वैहल. 'वैहलयः' इत्यस्यानन्तरं संकौ. संर. साङ्कवा', कास्तम्बरा', *कारवा', तामसाः* ; *बाल. साङ्करवः, काम्बंवर', कारवः, तामसः* इत्यधिकम् ।

५० संम. भिकाश्वाः ; प्रद. वृकाश्वः ; बाल. वृक्षाश्वः .

५२ गोप्र. संप्र. प्रद. संकौ. संर. दैमत्या. ; संम. वैमत्याः ; बाल. द्वैमन्यः .

५३ गोप्र. *अर्यायणाः* ; *संप्र. संम. प्रद. संकौ. संर.* आर्यायणाः ; बाल. आर्यायणः .

५४ संकौ. यार्कायणाः ; संर. पाकायणाः .

५५ प्रद्. काह्वायनः .

५६ गोप्र. वायवाः, वयनीनः ; संप्र. वायवाः, वायनीनः ; संम. वायवाः, वायानिनः ; प्रद. वायव', वायनिः ; संकौ. वायनय', वायनिनः ; बाल. वायन', कायनिः ; संर. वानयश्चायनिनः . 'वायवायनिनः' इत्यस्यानन्तरं संप्र. संम. दैवमत्याः, आर्कयणा', काङ्कायनाः ; प्रद्. दैवमत्य', आर्कायण', काङ्कायनः ; बाल. बाह्वायन', दैवमन्य', आर्कायण', काङ्कायन' इत्यधिकम् ।

५७ बौश्रौप्र. शाङ्करवाः ; गोप्र. शङ्करवाः ; संम. शाङ्करवः .

५८ बौश्रौप्र. कारवः ; गोप्र. रण्डव' , संप्र. करवचन्द्रमस' ; प्रद्. करवचन्द्रमसः .

५९ गोप्र. चान्द्रमसः ; बाल. चन्द्रमसः . उपरितनं नाम द्रष्टव्यम् ।

६१ बौश्रौप्र. अनुपेयाः ; गोप्र. प्रद. नोरेयाः ; संप्र. संकौ. नौरेयाः ; संम. तोयेयाः ; बाल. गौनव' ; संर. नौपेयाः .

६२ बौश्रौप्र. प्रद बाल. याज्ञिकाः ; गोप्र. याज्ञीयाः ; संप्र. संम. संकौ. संर. याज्ञिया' . 'याह्नेयाः' इत्यस्य पूर्वं बाल. तीनेय' इत्यधिकम् ।

६३ संम. यावनिः .

६४ प्रद. बाल. इति ग्रन्थद्वये एव इदं नाम समुपलभ्यते

६६ प्रद. *आपिशालिः* .

६७ संम. वैष्टरेयाः ; प्रद. विष्टपुरिः ; संकौ. वैष्टपुरय. ; बाल. विष्टपुरिः ; संर. वैश्वपुरयः .

६८ लौहितायनाः ६९ उष्ट्राक्षाः ७० नाडायनाः ७१ शारद्वतायनाः ७२ राजितवाहाः ७३ वत्साः ७४ वात्स्यायनाः इत्येते वत्साः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव–च्यावन–आप्नवान–और्व–जामदग्न्य– इति होता । जमदग्निवद्–ऊर्ववद्–अप्नवानवत्–च्यवनवद्–भृगुवद्–इत्यध्वर्युः ॥

विदाः

१ [1]विदाः–शैलाः २ अवटाः–शैलाः ३ प्राचीनयोग्याः ४ अभयजाताः ५ काण्डरथयः ६ वैदभृताः ७ पुलस्तयः ८ आर्कायणाः ९ मार्कायणाः १० नाड्ढायणाः ११ औञ्जायनाः १२ भौञ्जायनाः १३ जामलायनाः इत्येते विदाः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव–च्यावन–आप्नवान–और्व– वैद– इति होता । विदवद्–ऊर्ववद्–अप्नवानवत्– च्यवनवद्–भृगुवद्– इत्यध्वर्युः ॥

आर्ष्टिषेणाः

१ और्ष्टिषेणाः २ नैरथयः ३ ग्राम्यायणयः ४ काण्वायनाः ५ चान्द्रायणाः ६ प्रौढकलायनाः ७ सिद्धाः ८ सुमनायनाः ९ गौराम्भिः १० आम्भिः इत्येत आर्ष्टिषेणाः । तेषां पञ्चार्षेयः प्रवरो भवति। भार्गव–च्यावन–आप्नवान–आर्ष्टिषेण–आनूप–इति होता । अनूपवद्–ऋष्टिषेणवद्–अप्नवानवत्–च्यवनवद्–भृगुवद्–इत्यध्वर्युः । वत्साः विदाः आर्ष्टिषेणाः इत्येतेषामविवाहः । एते पञ्चावत्तिनः ॥

---

६८ जेवी. लौहितायनाः .

६९ याल. उष्ट्रान्ताः .

७० गोप्र. प्रद. माल्लायनः ; संप्र. संम. संकौ. संर. माल्लायनाः ; याल. मालायनः .

७२ गोप्र. संप्र. प्रद. याल. राजनवाहाः ; संकौ. संर. रजनवाहाः .

७३ गोप्र. संप्र. वासाः ; संम. वासाः, वात्साः इति नामद्वयम् ; प्रद. वासः, वत्सः इति नामद्वयम् ; याल. श्रीवत्सः .

७४ प्रद. वात्स्यायनः ; संर. वात्सायनाः .

(१) बौधौप्र., गोप्र. २३ ; संप्र. ६१८–६१९ ; संम. ५६ ; प्रद. १११ ; संकौ. १८४ ; संर. ४२९.

१ संकौ. जेवी. विदाः–शैलाः .

२ संम. अवय–शैलाः ; प्रद. संकौ. संर. अवटाः .

४ गोप्र. अभयदाताः ; संप्र. संम. संकौ. संर. अभयदाताः ; प्रद. अभयदाता.

५ संर. काण्डरथाः .

६ गोप्र. वैदभृतयः ; संप्र. संम. वैनभृताः ; प्रद. संकौ. संर. धैनभृताः .

७ संकौ. संर. पुलस्त्यः .

८ संप्र. (०).

९ निबन्धग्रन्थेषु नोपलभ्यते । 'मार्कायणाः' इत्यस्यानन्तरं गोप्र. संप्र. लाक्ष्यणाः ; संम. लाक्षायणाः ; संकौ. संर. लाक्षायणाः इत्यधिकम् ।

१० संप्र. नाड्ढायनाः ; प्रद. नाडूायनाः ; संकौ. संर. नाड्ढायनाः ; गोप्र. संम. (०).

११ संप्र. औञ्जायनाः ; प्रद. औञ्जनाः ; संकौ. औञ्जायनाः ; संर. औञ्जायनाः ; संम. (०).

१२ बौधौप्र. मुञ्जायनाः ; संप्र. संकौ. संर. भुञ्जायनाः ; संम. (०).

१३ गोप्र. लामल्लाः ; संप्र. संम. कामलाः ; प्रद. संकौ. संर. कामलः .

(१) बौधौप्र. ; गोप्र. २३ ; संप्र. ६१९; संम. ५५ ; प्रद. ११२ ; संकौ. १८४ ; संर. ४३०.

२ संकौ. संर. नैर्ऋथयः .

३ बौधौप्र. ग्राम्यायणाः ; गोप्र. याम्यायनयः ; प्रद. ग्राम्यायणः .

४ बौधौप्र. काण्वयः ; गोप्र. कानायनाः ; संप्र. क्वचिद् कार्णायनाः क्वचिद् कात्यायनाः इति वा पाठः ; संम. प्रद. कात्यायनाः ; संकौ. कार्णायनाः ; संर. कार्णायनाः .

५ गोप्र. (०).

६ गोप्र. (०) ; संप्र. संर. पौढकल्पायनाः ; प्रद. पौढि-कल्पायनः ; संम. संकौ. पैढकल्पायनाः .

७ गोप्र. (०) ; प्रद. सिद्धः .

८ गोप्र. (०) ; प्रद. सुमुनायनः .

९ गोप्र. गौराम्भिः ; संकौ. संर. गौराम्भि .

१० गोप्र. संकौ. शाम्भिः ; संप्र. संर. (०) ; प्रद. शाम्भिः .

### यस्काः

१ यस्काः २ मौनः ३ मूकः ४ वाधूलः ५ वर्षपुष्पः ६ बालेयः ७ राजितितायिनः ८ दुर्दिनः ९ भास्करः १० जैवन्तायनः ११ वार्कलेयः १२ माध्यमेयाः १३ वाशयः १४ कौशाम्बेयाः १५ कौटिल्याः १६ सत्यकः १७ चित्रसेनाः १८ भागन्तयः १९ वार्काश्वकयः २० औक्थाः २१ और्गचितयः २२ भागुरित्थयः इत्येते यस्काः।

तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव-वैतहव्य-सावेतस-इति होता। सवेतोवद्-वीतहव्यवद्-भृगुवद्-इत्यध्वर्युः॥

### मित्रयुवः

१ [1]मित्रयुवः २ रौष्टयायनाः ३ शायण्डिनाः ४ सापिण्डनाः ५ सुराम्भिनाः ६ माल्याः ७ यावाल्याः ८ महावाल्याः ९ तार्क्ष्यायणाः १० औरुक्ष्यायणाः ११ वाजायनाः १२ मादाघयः

---

(१) बौधश्रौप्र.; गोप्र २३-२४; संप्र. ६२०; संम. ५५; प्रद. ११३; संकौ. १८५; संर. ४२९.

१ संप्र. यस्कः; संर. वीतहव्या यास्का॰.

३ संर. मौक॰.

४ गोप्र. प्रद. संकौ. वाधुलः.

५ गोप्र. संप्र. प्रद. वर्षपुष्यः.

६ गोप्र. मातलय॰; संप्र. प्रद. संकौ. भागलेयः; संम. मानूलय॰; संर. भागलेप..

७ संप्र. सका. संर. भागविज्ञेयः; संम. राजतैन॰; प्रद. राजितापिः, अस्यानन्तरं रोददिनः भागविज्ञेयः इत्यधिकम्।

८ संकौ दुर्निदः.

१० बौधश्रौप्र. दैवन्तायनः; गोप्र. संकौ. दैवतायनः; संप्र. देवन्तायन.; संम. दैवतायनः, जैवन्तायन॰ इत्यपि; प्रद. दैवन्तायनः, अस्यानन्तरं जैवतायनः इत्यधिकम्; संर. दैवजायनः.

११ बौधश्रौप्र. बाष्कलेयः; गोप्र. संम. वाकलयः; संप्र. वार्कलयः; प्रद. वार्करैलयः.

१२ प्रद. मध्यमेय॰.

१३ गोप्र. संप्र. संम. प्रद. संकौ. संर. वासय॰.

१५ संकौ. क्रौविल्या॰, संर. क्रोविल्या.

१६ संप्र. संकौ. सत्यकय॰; संम. सात्यकेयाः; प्रद. सात्यकि.; संर. सत्यकयाः.

१८ गोप्र. संप्र. संकौ. संर. (०).

१९ गोप्र. संप्र. संकौ. संर. (०); संम. तार्काश्वकेयाः; प्रद. वाकाश्वकि.

२० गोप्र. संप्र. संकौ. संर. (०); संम. औतथाः.

२१ बौधश्रौप्र. औग्रचितय॰; गोप्र. संप्र. संकौ. संर. (०); संम. और्गुचित्रय, प्रद. उर्गचित्रि॰.

२२ गोप्र. भागुरिर्नूपः; संप्र. भागुरिकयः; संम. भागुरिः; प्रद. भागुरि॰, नूप॰; संकौ भागुरि॰, छया॰; संर. भागुरिश्छपः. इत्येते यस्का॰। वीतहव्याः इति केचित्।

(१) बौधश्रौप्र.; गोप्र. २४; संप्र. ६२१; संम. ५५; प्रद. ११३; संकौ. १८५; संर. ४३०.

१ संर. वाध्न्यश्वाः. प्रा. जॉन ब्रौमहोदयेन मित्रयुवः इत्यत्र मित्रयूनो इति पाठ॰ स्वीकृतः। तन्मते मित्रयुवः इति बहुवचनान्तं रूपं व्याकरणशास्त्रदृष्टया अशुद्धम्। मित्रयवः इति आवश्यकम्। अस्माभिस्तु सर्वेषु निबन्धग्रन्थेषु मित्रयुवः इति पठितत्वात् तदेव स्वीकृतम्।

२ गोप्र. रौष्टयायनः; संम. रौक्मायणाः, रोष्टयायना॰ रौक्ष्यायनाः; प्रद. रौक्ष्यायणः; संकौ. रैष्णायनाः; संर. रैष्यानाः; जेबी. रौष्टयायनानाम्. प्रद. 'रौष्टयायनाः' इत्यस्यानन्तरं नारायंञ्जन॰, गेष्टायनः, रौक्षायन॰ इत्यधिकम्।

३ गोप्र. संप्र. प्रद. संकौ. संर. (०); संम. शायजनाः; जेबी. शायण्डीनाम्.

४ गोप्र. प्रद. सापिण्टिनः; संम. सखण्डिना॰; संकौ संर. सापिण्डिनाः; जेबी. (०).

५ गोप्र. पुराभिनायाः; संप्र. संम. संकौ. संर. सुरभिनेयाः; प्रद. सुरभितयः; जेबी. सुराम्भीनाम्.

६ संप्र. माल्यायाः; संम. माल्यादयाः.

७ बौधश्रौप्र. बाल्या॰; संप्र. संम. बाल्यायाः॰, बाल्यायाः; संकौ. संर. (०).

८ बौधश्रौप्र. संप्र. संकौ. महाबाल्याः.

९ 'तार्क्ष्यायणा' इत्यस्यानन्तर संप्र. रौक्ष्यायणाः इत्यधिकम्।

१० गोप्र. संप्र. उक्षायणाः; संम. औरक्षायणाः, उक्षायणाः इत्यपि; प्रद. औरुक्षायण॰, उक्षायणः इत्यपि; संकौ. संर. (०).

११ गोप्र. ओजायना॰; प्रद. वाञ्जायनः; संकौ. संर. (०).

१२ गोप्र. माजाधयः; प्रद. माञ्जाधिः; संप्र. संकौ. संर. (०),

१३ कैतवायनाः इत्येते मित्रयुवः । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव-वाध्र्यश्व-दैवोदास-इति होता । दिवोदासवद्-वध्र्यश्ववद्-भृगुवद्-इत्यध्वर्युः ॥

### वैन्याः

१ वैन्याः २ पार्थाः ३ वाष्कलाः ४ श्यैताः । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव-वैन्य-पार्थ-इति होता । पृथुवद्-वेनवद्-भृगुवद्-इत्यध्वर्युः ॥

### शुनकाः

१ शुनकाः २ गार्त्समदाः ३ यज्ञपयः ४ सौगन्धयः ५ खार्दमायनाः ६ गाङ्गायनाः ७ मत्स्यगन्धाः ८ चौक्षाः ९ श्रोत्रियाः १० तैत्तिरीयाः ११ पल्पूलय इत्येते शुनकाः । तेषामेकार्षेयः प्रवरो भवति । शौनक-इति होता । शुनकवद्-इत्यध्वर्युः । गार्त्समद-इति होता । गृत्समदवद्-इत्यध्वर्युरिति वा ॥

## आपस्तम्बश्रौतसूत्रम्

### वत्साः

भृगूणामेवाग्रे व्याख्यास्यामः- जामदग्न्या(ग्ना) वत्साः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव-च्यावन-आप्नवान-और्व-जामदग्न्य-इति । जमदग्निवद्-ऊर्ववद्-अप्नवानवद्-च्यवनवद्-भृगुवद्-इति । त्र्यार्षेयमु हैके भार्गव-और्व-जामदग्न्य- इति । जमदग्निवद्-ऊर्ववद्- भृगुवद्-इति । एष एवाविकृतः । सावर्णि- जीवन्ति- जामाल्य- ऐतिशायन- वैरोहित्य- अवट- मण्डु- प्राचीनयोग्यानाम् ॥

भृगूणामेवेति । प्रवरव्याख्या प्रतिज्ञाता । येषां प्रवरा वक्तव्यास्तेषां मध्ये भृगूणामेव भृगोः संततिजातानामेव ब्राह्मणानामग्रे प्रथमं व्याख्यास्यामः । किमर्थमिदमुच्यते । वक्ष्यमाणानां वत्सप्रभृतीनां वैन्यान्तानां भृगुत्वं यथा स्यात् इति, तेन तेषां ' भृगूणां त्वा ' इति यथर्ष्याधानं स्यात् इति, ' भार्गवो होता भवति ' इति, ' तेषां भार्गवः प्राशितॄणामेकः स्यात् ' इत्यत्र च ग्रहणमेषां स्यादिति । उक्तिक्रमादेव च सिद्धे अग्रवचनमग्र एव ये भृगवस्ते इह वक्ष्यन्ते, न द्व्यामुष्यायणत्वेन पश्चात् भृगुत्वमापन्ना इति ख्यापनार्थम् । एवमविद्यमानभृगुशब्दानां मित्रयूनां च भृगुत्वमेवेति ज्ञापनार्थम् । अथवा अग्रग्रहणं प्रथममेषां भृगुणा समाख्यानं पश्चादन्यैॠषिभिश्चेति ख्यापनार्थम् । तेन ' जमदग्नीनाम् ' ' और्वो गौतमः ' ' यथर्ष्याधानम् ' ' भार्गवस्य ' इत्येवमादौ तदपत्यानां ग्रहणं समाख्यानसिद्धं भवतीति । एवकारस्य तु पूर्वोक्तमेव प्रयोजनम् ।

जामदग्न्या इति । जामदग्ना भवन्ति वत्साः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव च्यावन आप्नवान और्व जामदग्न्य इति होता प्रवृणीते, जमदग्निवद्-ऊर्ववद्-अप्नवानवत्-च्यवनवद्-भृगुवद् इति अध्वर्युः प्रवृणीते । होतुः प्रवरोऽध्वर्योः प्रवर इति वाऽध्याहारः । एवं सर्वत्र ।

त्र्यार्षेयमिति । उ इत्यवधारणे । इति होता प्रवृणीते- भार्गव और्व जामदग्न्य इति । जमदग्निवद्-ऊर्ववद्-भृगुवद् इत्यध्वर्युः प्रवृणीते । 'अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य ' इत्येकवचनान्तेन प्रयोगदर्शनात् बहुवचनान्ते 'जामदग्ना वत्साः' ' जमदग्नीनां तु पञ्चावत्तम् ' इति दर्शनात् शिवादिषु गर्गादिषु च पाठोऽनुगेयः । जमदग्निशब्दस्य

१३ संकौ. कैतवानयः .

( १ ) बौश्रौप्र. ; गोप्र. २४ ; संप्र. ६२१ ; संम. ५५ ; प्रद. ११२ ; संकौ. १८५ ; संर. ४२९ .

४ बौश्रौप्र. गोप्र. संम. प्रद. (०) ; संकौ. श्यैनाः ; संर. शैनाः .

( २ ) बौश्रौप्र. ९ ; गोप्र. २४ ; संप्र. ६२१ ; प्रद. ११३ ; संकौ. १८५ .

३ प्रद. याज्ञपिः ; संकौ. यज्ञपतयः .

४ प्रद. ( ० ) .

६ गोप्र. गार्भायनाः ; संप्र. गार्भायणाः, भार्गायणाः इति क्वचित्, क्वचित् आह्नायनाः इत्यपि ; संम. भार्गायणाः इत्यपि । संकौ. गार्भायणाः ; प्रद. गाह्नायनः, गर्भायणः .

७ प्रद. मात्स्यगन्धः .

८ गोप्र. संप्र. संम. संकौ. ( ० ) ; प्रद. रवौक्षः .

९, १० संप्र. ( ० ) .

११ गोप्र. संप्र. संम. संकौ. ( ० ) .

( १ ) आपश्रौ. २४।५।१०-११, २४।६।१-५ ; गोप्र. २५ ; प्रद. १११ लेखनामान्तेन केवलं समुद्धरति , न सूत्रमन्यः.

शिवादिषु पाठाज्जामदग्नः । जमदग्निशब्दस्य गर्गादिषु पाठात् जामदग्न्यशब्दे बहुष्वपत्यप्रत्ययस्य लुक् स्यात् ।

एष एवेति । एष प्रवरोऽविकृतः स्यात् सावर्णि-जीवन्ति-जाबाल्य-ऐतिशायन-वैरोहित्य-अवट-मण्डु-प्राचीनयोग्या इत्येतेषाम्। जाबालशब्दाद्यति (१) जाबाल्याः (जाबाल्यवद्वा एष च) । एवमन्येष्वपि गोत्रप्रत्ययान्तेषु समाधिरूहितव्यः । विरोहितशब्दाद्यञि वैरोहित्याः । एवं प्राचीनयोग्याः । इह 'भृग्वङ्गिरसो भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवः' इति सर्वेषां प्रवराचार्याणा दर्शनम्। वसिष्ठाना काश्यपानां च भिन्नविवाहं गर्गा इच्छन्ति । कठानां प्रवरे चैवम्। अन्ये तेषां भिन्नविवाहं नेच्छन्ति । तत्र एतेषां त्रयाणां पक्षाणां बहूनामृषीणा समानभावाद-विवाहः । वत्सा विदा आर्ष्टिषेणा एते पञ्चावत्तिनः, एतेषामविवाह इति बौधायनमतिः । कपर्दि.

### आर्ष्टिषेणाः

अथार्ष्टिषेणानां पञ्चार्षेयो भार्गव–च्यावन–आप्न-वान–आर्ष्टिषेण–आनूप–इति । अनूपवद्–ऋष्टि-षेणवद्–अप्नवानवत्–च्यवनवद्–भृगुवद्–इति । त्र्यार्षेयमु हैके भार्गव–आर्ष्टिषेण–आनूप–इति । अनूपवद्–ऋष्टिषेणवद्–भृगुवद्–इति ॥

### यस्काः (वीतहव्याः)

अथ वीतहव्याः यास्क–वाधूल–मौन–मौकाः । तेषां त्र्यार्षेयो भार्गव–वैतहव्य–सावेदस–इति । सवेदोवद्–वीतहव्यवद्–भृगुवद्–इति ॥

अथ वीतहव्यानाम् । यास्क–वाधूल–मौन–मोक इति पाठः । 'यस्कादिभ्यो गोत्रे' इति बहुषु लोपा-नित्यत्वात् यास्क–वाधूल इत्येव बभूव प्रवरे पाठः । प्रवरान्त्ये तु मोक इत्येव पाठः । कपर्दि.

### शुनकाः (गृत्समदाः)

अथ गृत्समदाः शुनकाः । तेषामेकार्षेयो गार्त्समद–इति होता । गृत्समदवद्–इत्यध्वर्युः ॥

प्रब्रूणीत इत्युभयोः शेषः । सर्वत्र एकार्षेयेषु होता वाध्र्यश्व इति वध्र्यश्ववदित्यध्वर्युः इति ब्रवीति अन्यत्र अध्याहर्तव्यप्रदर्शनार्थम्। आचार्यशैली चैषा । कपर्दि.

### मित्रयुवः (वाध्र्यश्वाः)

अथ वाध्र्यश्वाः मित्रयुवः । तेषामेकार्षेयो वाध्र्यश्व–इति होता । वध्र्यश्ववद्–इत्यध्वर्युः ॥

मित्रयुवो वाध्र्यश्वा भवन्ति । तेषामेकार्षेयः । वाध्र्यश्व इति होता, वध्र्यश्ववद् इत्यध्वर्युः । कपर्दि.

### वैन्याः (पार्थाः)

अथ वैन्याः पार्थाः । तेषां त्र्यार्षेयो भार्गव–वैन्य–पार्थ–इति । पृथुवद्–वेनवद्–भृगुवद्–इति । इमे भृगवो व्याख्याताः ॥

वैन्याः पार्थाः वृद्धिभूताः । इमे भृगवो व्याख्याताः । तेषा चतुर्णां पक्षाणा ऋषीणामसमानत्वात् अन्योन्यतश्च पूर्वेषां च सह विवाहः । कपर्दि.

## सत्याषाढश्रौतसूत्रम्

### वत्साः

भृगूनेवाग्रे व्याख्यास्यामः । जामदग्न्या वत्साः । तेषां पञ्चार्षेयः । भार्गव–च्यावन–आप्नवान–और्व–जामदग्न्य–इति । जमदग्निवद्–ऊर्ववद्–अप्नवानवत्–च्यवनवद्–भृगुवद्–इति । त्र्यार्षेयमु हैके भार्गव–और्व–जामदग्न्य–इति । जमदग्निवद्–ऊर्ववद्–भृगुवद्–इति । एष एवाविकृतो जामाल्य–ऐतिशायन–विरोहित–माण्डव्य–अवट–मण्डु–वैद–रैतवाह–प्राचीनयोग्यानाम् ॥

### आर्ष्टिषेणाः

अथाऽऽर्ष्टिषेणानां पञ्चार्षेयः । भार्गव–च्यावन–आप्नवान–आर्ष्टिषेण–आनूप–इति । अनूपवद्–ऋष्टिषेणवद्–अप्नवानवत्–च्यवनवद्–भृगुवद्–इति । त्र्यार्षेयमु हैके भार्गव–आर्ष्टिषेण–आनूप–इति । अनूपवद्–ऋष्टिषेणवद्–भृगुवद्–इति ॥

(१) सश्रौ. २१।३।७–८ ; बाल. १५३ (पृ. १८३) गोत्रनामान्येव केवल समुद्धरति ; संर. ४१८–४१९.

### यस्काः ( वीतहव्याः )

अथ वीतहव्याः यास्क-वाधूल-मौन-मौक-राजतवाहाः । तेषां त्र्यार्षेयः । भार्गव-वैतहव्य-सावेदस-इति । सवेदोवद्-वीतहव्यवद्-भृगुवद्-इति ॥

### वैन्याः ( पार्थाः )

अथ वैन्याः पार्थाः । तेषां त्र्यार्षेयः । भार्गव-वैन्य-पार्थ-इति । पृथुवद्-वेनवद्-भृगुवद्-इति ॥

### शुनकाः ( गार्त्समदाः )

अथ गार्त्समदाः शुनकाः । तेषामेकार्षेयः । गार्त्समद-इति होता । गृत्समदवद्-इत्यध्वर्युः ॥

### मित्रयुवः ( वाध्र्यश्वाः )

अथ वाध्र्यश्वाः मित्रयुवः । तेषामेकार्षेयः । वाध्र्यश्व-इति होता । वध्र्यश्ववद्-इत्यध्वर्युः ॥

इतीमे भृगवो व्याख्याताः ॥

अथ प्रवरगणना । तत्रादौ भृगवः- एवकार इतरेषां व्यावृत्त्यर्थः । अग्रे आदौ व्याख्यास्यामः वक्ष्यामः । प्राधान्यादिति शेषः । भृगोः प्राधान्यं तु ' महर्षीणां भृगुरहम् ' इति भगवद्वाक्यात्, मोक्षधर्मेषु भृगोर्वासुदेवांशताश्रवणात्, आधानमन्त्रेषु भृगूणामेवादौ पार्थक्येन मन्त्रकथनाच्च । अथवा एवकारोऽप्यशब्देनान्वेति । अग्रे आदावेव ये भृगुत्वं प्राप्ता भृगवस्तान्वक्ष्यामः, न द्व्यामुष्यायणत्वेन पश्चाद्भृगुत्वमापन्नानिति, द्व्यामुष्यायणानामुत्तरत्र वक्ष्यमाणत्वात् ।

' जामदग्न्या वत्साः ' इत्यत्र वत्सानां जामदग्न्या इति विशेषणं अजामदग्न्यवत्सनिराकरणार्थं, पञ्चावत्तित्वप्राप्त्यर्थं, जामदग्न्याप्रीप्राप्त्यर्थं च । तेषां जामदग्न्यवत्सानां पञ्चार्षेयः प्रवरः, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । अयं च होतुः ' अमुतोऽर्वाचो होता ' इति वचनात् । अमुतः मूलभूतादृषेरारभ्य अर्वाचः अर्वाग्जातान् मन्त्रदृशः । क्रमेण तदपत्यसंबन्धेन प्रार्थयते तमग्निमित्यर्थः । जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्ययं प्रवरोऽध्वर्योः, ' अत ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीते ' इति वचनात् । अतः यजमानादूर्ध्वान् मन्त्रदृग्भिरपत्यवद्विद्यमाना मूलभूतात् ऋषेः क्रमेण संकीर्त्य तद्वत्तद्वदिति सादृश्यसंबन्धेन अग्निं वृणीते प्रार्थयते इत्यर्थः । एष एव प्रवरक्रमविशेषो होतुरध्वर्योश्च आ अध्यायपरिसमाप्तेः सर्वत्रोपदेष्टव्यः । त्र्यार्षेयमु हैके, ब्रुवते इति शेषः । त्र्यार्षेयं प्रवरमेके आचार्या ब्रुवते इत्यर्थः । उ ह इति निपातः अवधारणार्थौ वाक्यालङ्कारार्थौ वा । तं प्रवरं दर्शयति - ' भार्गवौर्वजामदग्न्येति, जमदग्निवदूर्ववद्भृगुवदिति ' इति । एनमेव प्रवरमन्येष्वतिदिशति- एष एवाविकृतो जामाल्यैतिशायनेत्यादिना प्राचीनयोग्यानामित्यन्तेन सूत्रेण । एषोऽनन्तरोक्तः पञ्चार्षेयस्त्र्यार्षेयो वा जामाल्यादीनां नवानां भवतीत्यर्थः ।

अथाऽऽर्ष्टिषेणानामित्यत्र अथशब्दः पृथगयं गण इति ज्ञापनार्थः । एवं सर्वत्र । अन्यद्गतार्थम् । ' अथ वीतहव्याः' इत्यारभ्य ' पृथुवद्वेनवद्भृगुवत् ' इत्यन्तं सूत्रं स्पष्टार्थम् ।

चतुर्विधा हि शुनकाः । केचिच्छुनकादेव जाताः । केचित् गृत्समदादेव जाताः । केचित् भृगोरपत्यं गृत्समदस्ततो जाताः । केचित् भृगोरपत्यं शुनहोत्रस्तदपत्यं गृत्समदस्ततो जाताः । तत्र गृत्समदादेव ये जातास्तेषामेवायं प्रवरो नान्येषामित्येतदर्थं गृत्समदृष्टाप्रीप्रापणार्थं च गार्त्समदा इति विशेषणम् । इतरेषां तु सूत्रान्तरोक्ताः प्रवरा ज्ञेयाः । तत्र आद्यानां शौनकार्षेयः प्रवरः । तृतीयानां भार्गवगार्त्समदेति द्व्यार्षेयः । चतुर्थानां भार्गवशौनहोत्रगार्त्समदेति त्र्यार्षेय इति । एकार्षेये ' अमुतोऽर्वाचो होता ' ' अत ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीते ' इत्यनयोर्विध्योर्व्यवस्थापकत्वाभावात् अव्यवस्थाप्राप्तौ होत्रध्वर्युग्रहणं तद्धितान्तो होतुः प्रवरो वत्प्रत्ययान्तोऽध्वर्योरित्येवं व्यवस्थेति प्रदर्शनार्थम् । मित्रयुवां वाध्र्यश्वा इति विशेषणं वाध्र्यश्वदृष्टाप्रीप्रापणार्थम् । ' वाध्र्यश्वेति होता वध्र्यश्ववदित्यध्वर्युः ' इत्यत्र होत्रध्वर्युग्रहणमुक्तव्यवस्थायास्तत्रैव प्राप्तिशङ्कानिरासार्थम् ।

इतीमे भृगवो व्याख्याता इति । उक्तानुभाषणस्येदं प्रयोजनम्- अविद्यमानभृगुशब्दानामपि शुनकमित्रयुवां भृगुत्वं यथा स्यादिति । तेन ' भृगूणां त्वा ' इति यथर्ष्याधाने ' भार्गवो होता भवति ' इत्यादौ

च उपप्रवेशसिद्धिः । जामदग्न्यवत्सानां जामा( वा )-ल्यादीनां च परस्परमविवाहः, प्रवरैक्यात् सगोत्रत्वाच्च । एवं आर्ष्टिषेणानामपि, त्रिप्रवरसाम्यात् । यद्यपि त्रिप्रवरार्ष्टिषेणानां नान्यैः सह द्विप्रवरसाम्यं तथापि पञ्चार्षेयसंगतमपि प्रवरसाम्यमेष्वविवाहप्रयोजकम्, 'वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः ' इति बौधायनोक्तेः । अजामदग्न्यवत्सार्ष्टिषेणाभ्यां सप्रवरत्वादविवाहः । वीतहव्यादीनां तु स्वं स्वं गणं हित्वा परस्परं पूर्वैः सह ( च ) विवाहो भवत्येव, द्विप्रवरसाम्याभावात् । इति भृगुगोत्रप्रवरकाण्डम् । प्रच.

## आश्वलायनश्रौतसूत्रम्

### जामदग्न्या वत्साः

जामदग्न्या वत्साः । तेषां पञ्चार्षेयः । भार्गव-च्यावन-आप्नवान-और्व-जामदग्न्य-इति ॥

इदानीं प्रवरा अनुक्रमिष्यन्ते । द्विविधा वत्सा जामदग्न्या अजामदग्न्याश्च । तत्र ये ' जामदग्न्या वत्सा वयम् ' इति स्मरन्ति, तेषां पञ्चार्षेयः प्रवरो भवति भार्गव-च्यावन-आप्नवान-और्व-जामदग्न्य-इति । *गानार्त्.*

### अजामदग्न्या वत्साः

अथ ह्यजामदग्न्यानां भार्गव-च्यावन-आप्नवान-इति ॥

ये तु ' वयं अजामदग्न्या वत्साः ' इति, तेषां त्र्यार्षेयः प्रवरो भवति भार्गव-च्यावन-आप्नवान-इति । एतेषां अजामदग्न्यत्वात् और्वजामदग्न्यशब्दौ न भवतः । अत एव तौ शब्दौ जामदग्न्यत्वप्रयुक्तौ । द्विप्रकाराणां वत्सानां परस्परमविवाहः, त्र्यार्षेयसंनिपातात् । एतदुक्तं भगवता बोधायनेन–' त्र्यार्षेयाणामविवाहः ' इति । गानार्त्.

### आर्ष्टिषेणाः

आर्ष्टिषेणानां भार्गव-च्यावन-आप्नवान-आर्ष्टिषेण-आनूप-इति ॥

आर्ष्टिषेणेति । अयमपि पञ्चार्षेयप्रवरः । गानार्त्.

### विदाः

विदानां भार्गव-च्यावन-आप्नवान-और्व-वैद-इति ॥

अयमपि पञ्चार्षेय एव । विदानां और्वशब्दसमन्वयात् जमदग्निगोत्रत्वमप्यस्ति । वत्सानां विदानां आर्ष्टिषेणानां च *क्वचित्पिसंनिपातात् क्वचित् सगोत्रत्वाच्च* परस्परमविवाहः । सर्वेषु च समानप्रवरत्वादविवाहः । सर्वत्र चैवं समानधर्मेषु । गानार्त्.

### यस्काः

१ यस्क- २ वाधूल- ३ मौन- ४ मौक- ५ शार्कराक्षि- ६ सार्ष्टि- ७ सावर्णि- ८ शालङ्कायन- ९ जैमिनि- १० जैव( दैव )न्त्यायनानां भार्गव-वैतहव्य-सावेतस-इति ॥

अयं गणः त्र्यार्षेयः । यस्कादीनां दशानां परस्परमविवाहः । प्रवरेषु क्वचिच्छाखान्तरात् पदविपर्यासो वर्णविपर्यासो वा पदान्यत्वं वाऽस्ति, न तेन प्रवरान्यत्वं भवतीत्यवगन्तव्यम् । गानार्त्.

### श्यैताः ( वैन्याः )

श्यैतानां भार्गव-वैन्य-पार्थ-इति ॥

त्र्यार्षेयोऽयम् । गानार्त्.

### मित्रयुवः

मित्रयुवां वाध्र्यश्व-इति । त्रिप्रवरं वा भार्गव-दैवोदास-वाध्र्यश्व-इति ॥

मित्रयुवां एकार्षेयोऽयं त्र्यार्षेयो वा प्रवरो भवति । *अयं प्रवरविकल्पः सर्वेषां मित्रयुवां, भेदेन स्मरणाभावात् ।* वत्सानां तु स्मरणादेव वत्सभावतद्भेदात् तत्प्रवरस्य व्यवस्था युक्ता । यत्तु तद्विशेषभेदेन प्रवरभेदग्रहणमिति, तदयुक्तम्, *अगृह्यमाणस्य भेदस्य सत्त्वे* प्रमाणाभावात् । प्रवरभेदः प्रमाणमिति चेत्, नैतत्साधकं, प्रयोगविकल्पेनापि संभवात् । अतो भेदाग्रहणात् *व्यवस्थाया प्रमाणं* नास्तीति विकल्प एव प्रवरयोः इत्यध्यवसितम् । एवमेव त्र्यार्षेयपञ्चार्षेयविकल्पे आद्यपदविकल्पे वाऽन्यस्मिन्नप्येवं-

( १ ) आश्वौ. २।६।१० ; गोप्र. २८.

विधे ऋषिभेदग्रहणे सति व्यवस्था नास्तीति निश्चीयते ।

गानाद्व.

## शुनकाः

शुनकानां गृत्समद–इति । त्रिप्रवरं वा, भार्गव–शौनहोत्र–गार्त्समद–इति ॥

एकार्षेयोऽयं त्र्यार्षेयो वा शुनकानां प्रवरः ।

गानाद्व.

## कात्यायन–लौगाक्षि–श्रौतसूत्रम्

### जामदग्न्या वत्साः

भृगूणामादितो व्याख्यास्यामः—

१ * भृगवः २ जमदग्नयः ३ वत्साः ४ दार्भिः ५ नाडायनाः ६ वागायन– ७ आनुसातकि– ८ जैह्वाति– ९ पैल–१० शौनकायनि– ११ जीवन्ति– १२ काम्बलोदरि– १३ वैहीनरि– १४ वैरोहित्य– १५ रेखायनि– १६ पार्पति– १७ वैश्वानरि– १८ वैरूपाक्षि– १९ पार्णिलि– २० वृकाश्वकानां २१ उच्चैर्मन्यु– २२ सात्यकर्णि– २३ वैष्टपुरेयि– २४ वालाकि– २५ तौलकेशिनां २६ ऋतभाग– २७ आर्तभाग– २८ मार्कण्डेय– २९ मण्डु– ३० माण्डव्य– ३१ माण्डूकेय– ३२ आजिहीन– ३३ आतिथीनां ३४ स्थौमाङ्गोरि– ३५ स्थौलपिण्डि– ३६ सौखवर्हि– ३७ शार्कराक्षि– ३८ देवमतीनां ३९ आर्कायण– ४० आह्वायन– ४१ गाङ्गायन– ४२ गेह्वायन– ४३ गोष्ठायन– ४४ वैशम्पायन– ४५ शार्ङ्गरव– ४६ गालव– ४७ चाणूकेय–

---

(१) गोप्र. २५–२६ ; सप्र. ६१७, ६२४ ; प्रद. ११० ; संकौ. १८३ ; बाल. १।५३ ( पृ. १८३ ) ; संर. ४२८.

* संप्र. संकौ. बाल. संर. इत्यादिनिबन्धग्रन्थैः पूर्वोक्तेषु बौधायनोक्तेषु गणेषु संगृहीतानां गोत्रनाम्नां कात्यायनाद्युक्तेषु गणेषु न पुनः संग्रहः कृत । अतः तानि तानि नामानि तत्र तत्र सन्तीति ज्ञेयम् ।

४ संप्र. संकौ. संर. ( ० ).

५ गोप्र. संप्र. प्रद. संकौ. संर. नालायनाः ; बाल. मालायनः .

६ बाल. भागायनः .

७ प्रद. अनुसातकिः ; संकौ. संर. अनुमातकयः ; बाल. आनुसातकिः .

८ प्रद. जैह्नजि ; संकौ. संर. जैह्नयः ; बाल. जैह्नानिः .

९ गोप्र. पल ; संप्र. पैल.

१० गोप्र. शौनकायनि.

१३ गोप्र. वैहानरि ; संकौ. संर. वैहायनाः .

१६ गोप्र. पार्वति ; प्रद. बाल. पार्वतिः .

१९ गोप्र. संप्र. पाणिनि ; प्रद. पाणिनिः ; संर. पाणिनिः .

२१ गोप्र. उच्चयमान ; संप्र. संकौ. बाल. संर. उच्चयमानाः ; प्रद. रुचमानः .

२२ प्रद. सात्यकर्णिः .

२४ प्रद. वालाकिः ; संकौ. बालाकयः ; बाल. वाल्किः ; संर. कालाकयः .

२५ गोप्र. तौल्केशीनाम् ; संर. ताल्केशिनः .

२९ गोप्र. मण्ड ; संप्र. माण्डूकेय.

३२,३३ गोप्र. आजिहातिथीनाम् ; संप्र. आजिहीतिथय, आजिहीतातिथीनाम् ; प्रद. आजिहीतिथिः ; संकौ. आजिहीताः, आतिथयः ; बाल. आजिह्नितः अतिथिः ; संर. आजीहिताः, आतिथयः .

३४ गोप्र. स्थौमागौरि ; संप्र. संकौ. संर. स्थौमाङ्गिरय ; प्रद. बाल. स्थौमाङ्गारिः .

३५ गोप्र. स्थौल ; संप्र. स्थौल्सौनाः ; प्रद. संकौ. बाल. संर. स्थौलाः .

३६ संप्र. बर्हिषः ; प्रद. सौखोबर्हिः ; संकौ. संर. सौखाः बर्हिषः ; बाल. सौखः, बर्हिः .

३८ प्रद. बाल. ( ० ).

४० निबन्धकाराणां मते काह्वायनाः इति ।

४१ गोप्र. गार्ग्यायन ; संप्र. गार्गायनाः ; प्रद. बाल. गार्गायनः ; संकौ. संर. गार्ग्यायनाः .

४२ गोप्र. गेह्वायन ; संप्र. गार्गायनाः ; बाल. गेह्वायनः .

४३ गोप्र. गेष्ठायन ; संप्र. गेष्ठायन, गेष्ठायनाः इति ; बाल. गेष्ठायनः .

४५ गोप्र. शार्ङ्गव.

४६ गोप्र. गैलव.

४७ प्रद. चाणूकेय ; संकौ. बाल. संर. चाणूकेयाः .

४८ वैकर्णि– ४९ साङ्कृत्य– ५० ऐतिशायनानां ५१याज्ञेय–५२ भ्राम्रेय–५३ भ्रात्रेय–५४ लाक्षेय– ५५ लाकुचि– ५६ ललाटि– ५७ पारिमाण्डलीनां ५८ मालायन– ५९ अविगौवि– ६० सौष्मिकीनां ६१ पैङ्गलायन –६२ सात्यकायन– ६३ कौचहस्ति– ६४ चान्द्रमस– ६५ आनुलोमि– ६६ कौटिल्य– ६७· चौक्ष– ६८ क्रौञ्चाक्षि– ६९ कांस– ७० शारद्वति– ७१ वायापलेपय– ७२ नैकर्षि– ७३ शाकल्य– ७४ उष्ट्राक्षि– ७५ वाकायनि– ७६ अनुमति– ७७ जैकजिह्वि– ७८ जैह्वारमन्य– ७९ आप्मक्रम– ८० निराणि– ८१ वासि– ८२ मादन– ८३ स्योप– ८४ स्यन्दनि– ८५ काठेरणि– ८६ लवेरणि– ८७ मौगोलि– ८८ काशकृत्स्न– ८९ माध्योदाः इत्येतेषामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति। भार्गव– च्यावन– आप्नवान– और्व– जामदग्न्य– इति । भृगुवत्– च्यवनवद्– अप्नवानवद्– ऊर्ववद्– जमदग्निवद्– इत्यध्वर्युः ॥

## विदाः

अथ १ जमदग्नयो विदाः २ प्राचीनयोग्याः

४८ गोप्र. रैकणि.

४९ संकौ. संर. सांकृतयः .

५० सप्र. रैतिकायणा', इतिकाण्वायनानाम् ; प्रद. संकौ. बाल. संर. ऐतिकायनाः .

५३ प्रद. बात्रेय' ; बाल. संर. भ्रात्रेयाः .

५५ गोप्र. लाकुश्चि ; संप्र. लाहवि: इत्यपि ; प्रद. लापुः .

५६ गोप्र. लालाटि ; प्रद. विलालाटिः ; संकौ. संर. लालाटयः .

५७ संप्र. पारिमण्डलयः .

५९ गोप्र. अतिगौवि ; सप्र. भवयः, गौवयः, औदुम्बि-गौधि ; प्रद. अवि', गौवि ; संकौ. संर. आवय', आग्नावयः ; बाल. अविः, गोविः .

६० संप्र. सोष्मिकानां इत्यपि ; संर. सैष्मिकयः .

६३ गोप्र. कौनदहस्ति ; प्रद. कोचिहस्तिः ; बाल. कौयष्टि' .

६५ गोप्र. आनुलौमि ; संप्र. अनुलोमिनः ; प्रद. अनुलोमिः ; संकौ. संर. आनुलोमिन' ; बाल. औदुलोमि' .

६६ गोप्र. कौट ; संप्र. कोठा', कौञ्चाः ; प्रद. क्रौञ्चः ; संकौ. संर. क्रौञ्चाः , बाल. कौञ्चः .

६७ गोप्र. चक्षु ; संप्र. श्रौक्षाः ; प्रद. बाल. (०) ; संकौ. चैक्षा' ; संर. चेक्षाः .

६८ बाल. क्रौञ्चवाक्षः .

६९ गोप्र. कार्ना स ; संप्र. प्रद. संकौ. बाल. संर. (०) .

७० गोप्र. सारध्वजि ; संप्र. स्मरध्वजयः, सारध्वजि ; प्रद. बाल. सारध्वजि' ; संकौ. सौरध्वजय' , संर. सौरध्वजयः .

७१ संप्र. वासा' लेपना', वाध्यालेपाय ; प्रद. वाषालेप. ; संकौ. संर. वाध्यालेया' ; बाल. बाध्वलेयः .

७२ गोप्र. नैवर्षि ; बाल. मैकर्षिः .

७३ गोप्र. साककल्प.

७५,७६ गोप्र. पाकानुमति ; संप्र. संकौ. संर. पाकानुमतयः ; प्रद. बाल. पाकानुमतिः .

७७ संप्र. जैकजिह्वय' ; प्रद. अजैकजिह्वि' ; संकौ. जैकजिह्वयः ; बाल. अजैकजिह्विः ; संर. कनिष्णयः .

७८ गोप्र. वैह्वारमन्य ; संप्र. जैह्वारमनयः ; प्रद. बाल. जैह्वायनिः , संकौ. संर. जैह्वादिनय. .

७९ गोप्र. आश्मकमणि ; बाल. आशाक्रमः .

८० संकौ. संर. निरीणयः , बाल. मिगणिः .

८१ प्रद. वासिमादनः .

८२ गोप्र. मादान ; संप्र. बाल. संर. सादना' , संकौ. सदनाः . उपरितन नाम द्रष्टव्यम् ।

८३ संकौ. स्योपा. ; संर. स्योपा' .

८४ प्रद. बाल. स्पन्दति' .

८५ गोप्र. बाल. संर. कठेरणि ; संप्र. कण्ठेरणयः , प्रद. कण्ठेरणि' ; संकौ. कठेरणयः .

८६ गोप्र. संकौ संर. लवेरणि ; संप्र. मवेरणय' ; प्रद. बाल. गवेरणि' .

८७ गोप्र. सौगौलि ; संर. यौगोलय' .

८८ गोप्र. कासकृत्स्न.

८९ बाल. मध्योदः .

(१) गोप्र. २६ ; संप्र. ६१८, ६२४ ; प्रद. १११ , संकौ. १८४ ; संर. ४२९.

१ जेबी. *अथ जमदग्नयो विदाः* .

३ पौलस्त्याः ४ वेदभृताः ५ कौञ्जायनाः ६ अभयजाताः ७ त्रैकायनाः ८ अवटाः ९ भ्राजत्याः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव-और्व-जामदग्न्य-इति । भृगुवद्-ऊर्ववद्-जमदग्निवद्-इति ॥

वात्स्याः ( अजामदग्न्या वत्साः )

वात्स्यानां त्र्यार्षेयः प्रवरो भवति । भार्गव-च्यावन-आप्नवान-इति । भृगुवत्-च्यवनवद्-अप्नवानवद्-इति ॥

आर्ष्टिषेणाः

१ भृग्वन्दीपाः २ मार्गपथाः ३ ग्राम्यायणिः ४ अध्यनैकसिः ५ आपस्तम्बिः ६ भाल्विः ७ कार्दमायन- ८ आर्ष्टिषेण- ९ गर्दभयः १० अनूपाः इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव-च्यावन-आप्नवान-आर्ष्टिषेण-आनूप-इति । भृगुवत्-च्यवनवद्-अप्नवानवद्-ऋष्टिषेणवद्-अनूपवद्-इति ॥

मित्रयुवः

१ खौलायनाः २ शाकटाक्षाः ३ मैत्रेयाः अथ ४ साञ्चर्यः ५ द्रौणायनाः ६ रौक्ष्यायणाः ७ आपिशलाः ८ पाटिकायनाः ९ हांसजिह्वाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव-वाध्र्यश्व-दैवोदास-इति । भृगुवद्-वध्र्यश्ववद्-दिवोदासवद्-इति ॥

यस्काः

१ वीतहव्याः २ यस्क- ३ वाधूल- ४ मौन- ५ मौक- ६ जीवन्त्यायन- ७ अर्थलेखयः

---

४ गोप्र. संप्र. वेदभृतः ; प्रद. संकौ. संर. वेदभृत् .

५ प्रद. कौञ्जायनः .

७ प्रद. ऐकायनः .

९ गोप्र. भ्राजः ; संप्र. भ्राजेत्याः , भ्राजन्त्याः, अस्यानन्तरं भादन्त्याः, ऐकायनाः इत्यधिकम् ; प्रद. भ्राजः, भ्रत्यः ; संकौ. भ्राजः, भ्रादन्त्याः, अनन्तरं वैकायनाः इत्यधिकम् ; संर. भ्राजाः, भ्रादन्त्याः, अनन्तरं ऐकायनाः इत्यधिकम् .

( १ ) गोप्र. २६ ; संप्र. ६२४.

( २ ) गोप्र. २६ ; संप्र. ६२०, ६२४ ; प्रद. ११२ ; संकौ. १८४ ; संर. ४३०.

१ गोप्र. भृगोरदिवाः ; संप्र. भृगवन्दीपः, भृगवन्दायाः ; संकौ. भृगवन्दीपः ; संर. भृगवक्षीपः .

२ संप्र. संकौ. प्रद. संर. मार्गपथः .

३ गोप्र. ग्राम्यायनिः .

४ संप्र. नैकशिः, अध्यनैकशिः ; प्रद. नैकशिः ; संकौ. संर. [illegible] .

६ गोप्र. भाग्निः ; संप्र. भाग्निः , वाग्निः इत्यपि ; प्रद. [illegible] ; संकौ. वाग्निः ; संर. पाग्निः .

७ संप्र. प्रद. संकौ. संर. कार्दमायनिः .

९ संप्र. संकौ. गार्दभिः ; प्रद. गार्दभिः ; संर. गार्दभिः .

१० संप्र. अनूपः, अनूपाः इत्यपि.

( १ ) गोप्र. २७ ; संप्र. ६२१, ६२५ ; प्रद. ११३ ; संकौ. १८५ ; संर. ४३०.

१ गोप्र. आश्वलायनाः ; संप्र. शालायनाः, आश्वलायनाः ; संकौ. ( ० ).

२ गोप्र. साक्तिनाक्षाः ; संप्र. शाकटाक्षाः साक्तिनाक्षाः ; प्रद. शाकटाक्षः ; संकौ. शाकटाक्ष्याः ; संर. शाकटायनाः .

३ गोप्र. मैकयाः ; संप्र. मैत्रेयाः, मैकयाः .

४ संप्र. साचर्याः असाञ्चर्याः ; प्रद. साचर्यः ; संकौ. साञ्चर्याः ; संर. साचर्याः .

५ गोप्र. प्रद. संकौ. द्रौणायनाः ; संप्र. दैनायनाः द्रौणायनाः .

६ गोप्र. ( ० ) ; संप्र. गोक्षायनाः ; प्रद. गोशायनः ; संकौ. रौक्ष्यायनाः ; संर. रौक्षायनाः .

७ गोप्र. संर. अपिशलाः ; संकौ. ( ० ).

८ गोप्र. भाटिकायनाः ; संप्र. भाटिकायनाः, पाटिकायनाः इत्यपि ; संकौ. संर. आटिकायनाः .

९ गोप्र. संप्र. हासजिह्वाः ; प्रद. संकौ. संर. हंसजिह्वाः .

( २ ) गोप्र. २७ ; संप्र. ६२०, ६२५ ; प्रद. ११३ ; संकौ. १८५ ; संर. ४२९.

३ गोप्र. वधूला.

४ गोप्र. माधून ; संप्र. माधुनाः माधूनाः ; प्रद. माधुनः ; संकौ. संर. माधूनाः .

५ गोप्र. मौन ; संप्र. मौनाः मौनाः ; संकौ. संर. मौनाः .

६ गोप्र. [illegible] ; प्रद. ( ० ) ; संर. जीवन्त्यायनाः .

७ गोप्र. अर्थलेखाः ; प्रद. अर्थलेखिः ; संर. अर्थलेखाः .

८ भागलेय– ९ भागविज्ञेय– १० कौशाम्बेय– ११ घृकाश्वकि– १२ मदोकि– १३ वालेय– १४ गौरिक्षित– १५ दैर्घ्यचित– १६ पथ्यालय– १७ पौष्णावतार– १८ गोदायनाः इत्येतेषाम-विवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव– वैतहव्य– सावेदस– इति। भृगुवद्– वीतहव्य-वत्– सवेदसवद्– इति ॥

शुनकाः

१ यौज्ञपयः २ सौकराः ३ मांसगन्धाः ४ कार्द-मायनाः ५ चौक्षाः ६ श्रोत्रियाः ७ प्रत्यूपाः ८ गृत्समदाः ९ शुनकाः इत्येतेषामविवाहः। तेषा-मेकार्षेयः प्रवरो भवति। गार्त्समद– इति। गृत्स-मदवद्–इति। त्र्यार्षेयो वा। भार्गव-गार्त्समद– इति। भृगुवद्-गृत्समदवद्-इति ॥

## मानवश्रौतसूत्रम्

वत्साः

भृगूणेवाग्रे व्याख्यास्यामः– . ...

१ जामदग्न्याः– २ वात्स्याः ३ आनुशातकि– ४ वैहति– ५ पैल– ६ शौनकायनि– ७ जीवन्ति– ८ काम्यलोदरि– ९ वैहीनरि– १० वैरोहित– ११ लेख्ययनि– १२ वैशापि– १३ वैश्वानर– १४ वैरूपाक्षि– १५ पौकाशेरलानां १६ पार्णिलि– १७ घृकाश्वकानां १८ उर्धर्मन्यु– १९ सावर्णि– २० वाल्मीकि– २१ शोरलानां २२ वैष्णुरेय– २३ पालाक्षि–२४ सौलपेशिनां २५ आर्स २६ भाग-भाग– २७ आर्तभाग– २८ मार्कण्डेय २९ मण्डु– ३० माण्डव्य– ३१ विभाण्डक– ३२ माण्डूकेय– ३३ अर्चनानां ३४ श्येनगन्ध्री– ३५ स्थौल-पिण्डि– ३६ वैपापल– ३७ शार्कराक्ष– ३८ वैव-मतीनां ३९ आयण– ४० आर्पायन– ४१ आद्दुमा-यन– ४२ गाह्मायन– ४३ वैशम्पायन– ४४ वाय-व्यायन– ४५ औकुन्तायन– ४६ सौरथी– ४७ दार्भि– ४८ गालायन– ४९ शार्करव– ५० गालव– ५१ भाणूकेय– ५२ वैकर्णि– ५३ शौनकर्णि– ५४ पौण्डकर्णि– ५५ साङ्कृत्य– ५६ पैतिशायनानां ५७ भाक्षेय– ५८ भ्राष्ट्रेय– ५९ क्षमाला– ६० आण्ड– ६१ पारिमण्डलायन– ६२ आलुम्बि– ६३ कौरित– ६४ शौभगीनां ६५ पैङ्गलायन– ६६ शाल्मकायन– ६७ कौषाद्रिलि– ६८कौपदुण्डिम– ६९ शाल्यमित्र– ७० भाष्क्रमित्र– ७१ भाष्क्रमरि– ७२ आनुलोमि– ७३ कौटिल्य– ७४ कांम्य– ७५ भारद्रुत– ७६ गौरक्षो– ७७ पाशालेहेयि– ७८ निमिषि– ७९ शाकटाय– ८० वष्र्ष्टि– ८१ वामरायनि– ८२ [illegible] ८३ औशाशग– ८४ पो [illegible] दमनि– ८६ पाडार– ८७ [illegible] मातेि– ८९ काशकृत्स्न– ९० औपु– [illegible] ९२ श्रान– ९३ वैदीकारि– ९४ ९५ शाठणि: ९६ शाकल्यायनाः ९७ ९८ गोल्यायना। ९९ शाकल्यायना इति ॥ ( कात्यायन–लौगाक्षिवत्। )

११ गोप्र. घृकाश्वरि; संप्र. घृकाशपि, घृकाशरकयः; प्रव. संकौ. संर. घृकाशरकयः.

१२ संकौ. संर. गदोकयः.

१३ गोप्र. वारेय; संप्र. वरेय' वारेयि; प्रव. गवारेयः; संकौ. संर. वारेयाः.

१४ संप्र. गौरीक्षिताः; प्रव. संर. गैरिक्षिताः.

१५ संप्र. दैर्घचिताः दीर्घचिताः; प्रव. संकौ. संर. दैर्घ-चिताः.

१७ गोप्र. पौणावरार; संप्र. पौष्णाः; प्रव. पाण्यवत्सः, पौष्णावतः इत्यपि; संकौ. पौष्णायनाः; संर. पौष्णायनाः.

१८ संप्र. गोदायनाः गौदायनाः; प्रव. संकौ. संर. गोदा-यनाः.

(१) गोप्र. २७; संप्र. ६२१,६२५; प्रव. ११३; संकौ. १८५.

२ प्रव. (०).

३ संप्र. संकौ. मासगन्धाः; प्रव. मारयगन्धः.

४ गोप्र. कर्दमायनाः.

५ संकौ. चौक्षाः.

(२) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः श्री. कौन श्रीगवा-शर्मन संपादिताद् 'गोत्रप्रवरमञ्जरी' पुस्तकात् संगृहीतः।

३ पौलस्त्याः ४ वेदभृताः ५ कौञ्चायनाः ६ अभयजाताः ७ त्रैकायनाः ८ अवदाः ९ भ्राजत्याः इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव-और्व-जामदग्न्य-इति। भृगुवद्-ऊर्ववद्-जमदग्निवद्-इति ॥

वात्स्याः ( अजामदग्न्या वत्साः )

वात्स्यानां त्र्यार्षेयः प्रवरो भवति । भार्गव-च्यावन-आप्नवान-इति । भृगुवत्-च्यवनवद्-अप्नवानवद्-इति ॥

आर्ष्टिषेणाः

१ भृग्वन्दीपाः २ मार्गपथाः ३ ग्राम्यायणिः ४ अध्वनैकसिः ५ आपस्तम्बिः ६ भाल्विः ७ कार्दमायन- ८ आर्ष्टिषेण- ९ गर्दभयः १० अनूपाः इत्येतेपामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति। भार्गव-च्यावन-आप्नवान-आर्ष्टिषेण-आनूप-इति। भृगुवत्-च्यवनवद्-अप्नवानवद्-ऋष्टिषेणवद्-अनूपवद्-इति ॥

मित्रयुवः

१ खालायनाः २ शाकटाक्षाः ३ मैत्रेयाः अथ ४ साञ्चर्यः ५ द्रौणायनाः ६ रौक्यायणाः ७ आपिशलाः ८ पाटिकायनाः ९ हांसजिह्वाः इत्येतेपामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव-वाध्र्यश्व-दैवोदास-इति। भृगुवद्-वध्र्यश्ववद्-दिवोदासवद्-इति ॥

यस्काः

१ वीतहव्याः २ यस्क- ३ वाधूल- ४ मौन- ५ मौक- ६ जीवन्त्यायन- ७ अर्थलेखयः

---

४ गोप्र. संप्र. वेदभृतः ; प्रद. संकौ. संर. वेदभृद्.

५ प्रद. कौञ्चायनः.

७ प्रद. ऐकायनः.

९ गोप्र. भ्राजः ; संप्र. भ्राजोत्याः, भ्राजन्त्याः, अस्यानन्तरं भारन्त्याः, ऐकायनाः इत्यधिकम् ; प्रद. भ्राजः, भ्रदत्यः ; संकौ. भ्राजः, भ्रादन्त्याः, अनन्तरं वैकायनाः इत्यधिकम् ; संर. भ्राजाः, भ्रादन्त्याः, अनन्तरं ऐकायनाः इत्यधिकम्.

( १ ) गोप्र. २६ ; संप्र. ६२४.

( २ ) गोप्र. २६ ; संप्र. ६१९, ६२४ ; प्रद. ११२ ; संकौ. १८४ ; संर. ४३०.

१ गोप्र. भृगोर्दियाः ; संप्र. भृग्वन्दीयः, भृग्वन्दापा ; संकौ. भृग्वन्दीयः ; संर. भृग्वहीयः.

२ संप्र. संकौ प्रद. संर. मार्गपथः.

३ गोप्र. ग्राम्यायनिः.

४ संप्र. नैकशिः, अध्वनैकशिः ; प्रद. नेरशिः ; संकौ. संर. नैरशिः.

६ गोप्र. भ्रालिः ; संप्र. भाल्विः, बाल्विः इत्यपि ; प्रद. भालविः ; संकौ. पाल्विः ; संर. पाल्विः.

७ संप्र. प्रद. संकौ. संर. कार्दमायनिः.

९ संप्र. संकौ. गार्दभिः ; प्रद. गार्दभिः ; संर. गार्दभिः.

१० संप्र. अनूपः, आनूपाः इत्यपि.

( १ ) गोप्र. २७ ; संप्र. ६२१, ६२५ ; प्रद. ११३ ; संकौ. १८५ ; संर. ४३०.

१ गोप्र. आश्वलायनाः ; संप्र. खालायनाः, आश्वलायनाः ; संकौ. ( ० ).

२ गोप्र. साकिताक्षाः ; संप्र. शाकटाक्षाः साकिताक्षाः ; प्रद. शाकटाक्षः ; संकौ. शाकटाक्ष्याः ; संर. शाकटायनाः.

३ गोप्र. मैत्रयाः ; संप्र. मैत्रेयाः, मैत्रयाः.

४ संप्र. साचर्याः असाञ्चर्याः ; प्रद. साचर्यः ; संकौ. साञ्चर्याः ; संर. साचर्याः.

५ गोप्र. प्रद. संकौ. द्रोणायनाः ; संप्र. दैनायनाः द्रोणायनाः.

६ गोप्र. ( ० ) ; संप्र. गोभायनाः ; प्रद. गोपायनः ; संकौ. रौक्ष्यायनाः ; संर. रौक्षायनाः.

७ गोप्र. संर. अपिशलाः ; संकौ. ( ० ).

८ गोप्र. आटिकायनाः ; संप्र. आटिकायनाः, पाटिकायनाः इत्यपि ; संकौ. संर. आटिकायनाः.

९ गोप्र. संप्र. हासजिह्वाः ; प्रद. संकौ. संर. हंसजिह्वाः.

( २ ) गोप्र. २७ ; संप्र. ६२०, ६२५ ; प्रद. ११३ ; संकौ. १८५ ; संर. ४२९.

३ गोप्र. वधूल.

४ गोप्र. माधून ; संप्र. माधुनाः माधूनाः ; प्रद. माधुनः ; संकौ. संर. माधूनाः.

५ गोप्र. मौर ; संप्र. मौसलाः मौद्गलाः ; संकौ. संर. मौसलाः.

६ गोप्र. शान्त्यायन ; प्रद. ( ० ) ; संर. जीवन्त्यायनाः.

७ गोप्र. अर्थेश्याः ; प्रद. अर्थैशिः ; संर. अर्थेश्यपः.

८ चौराः ९ श्रौत्रियाः १० प्रत्युराः इति ॥
( मत्रराः– कात्यायन–लौगाक्षिवत् । भार्गव– शौन-होत्र– गार्त्समद– इति वा इत्यधिकम् । )

## मत्स्यपुराणम्

* सूत उवाच–
[1]ईत्याकर्ण्य स राजेन्द्र ओङ्कारस्याभिवर्णनम् ।
ततः पप्रच्छ देवेशं मत्स्यरूपं जलार्णवे ॥
मनुरुवाच–
[2]ऋषीणां नाम-गोत्राणि वंशावतरणं तथा ।
प्रवराणां तथा साम्यमसाम्यं विस्तराद्वद ॥
[3]महादेवेन ऋषयः शप्ताः स्वायम्भुवेऽन्तरे ।
तेषां वैवस्वते प्राप्ते संभवं मम कीर्तय ॥
[4]दाक्षायणीनां च तथा प्रजाः कीर्तय मे प्रभो ।
ऋषीणां च तथा वंशं भृगुवंशविवर्धनम् ॥
मत्स्य उवाच–
[5]मन्वन्तरेऽस्मिन् संप्राप्ते पूर्वं वैवस्वते तथा ।
अश्वमेधे सुविततें ब्रह्मणः परमेष्ठिनः ॥
[6]महादेवस्य शापेन त्यक्त्वा देहान् स्वयं ततः ।
ऋषयस्ते समुद्भूता हुते शुक्रे महात्मना ॥
[1]देवानां मातरो दृष्ट्वा देवपत्न्यस्तथैव च ।
स्कन्नं शुक्रं महाराज ब्रह्मणः परमेष्ठिनः ॥
[2]तज्जुहाव ततो ब्रह्मा ततो जातो हुताशनः ।
ततो जातो महातेजा भृगुश्च तपसां निधिः ॥
[3]अङ्गारेष्वङ्गिरा जातो ह्यर्चिभ्योऽत्रिस्तथैव च ।
मरीचिभ्यो मरीचिस्तु ततो जातो महातपाः ॥
[4]केशैस्तु कपिशैर्जातः पुलस्त्यश्च महातपाः ।
केशैः प्रलम्बैः पुलहस्ततो जातो महायशाः ॥
[5]वसुमध्यात्समुत्पन्नो वसिष्ठश्च तपोधनः ।
भृगुः पुलोम्नस्तु सुतां दिव्यां भार्यामविन्दत ॥
[6]तस्यामस्य सुता जाता देवा द्वादश याज्ञिकाः ।
भुवनो भौवनश्चैव सुजन्यः सुजनस्तथा ॥
[7]शुचिः क्रतुश्च मूर्धा च याज्यश्च वसुदश्च ह ।
प्रभवश्चाव्ययश्चैव दक्षोऽथ द्वादशस्तथा ॥
[8]इत्येते भृगवो नाम देवा द्वादश कीर्तिताः ।
पौलोम्यजनयद्विप्रं देवानां तु कनीयसम् ॥

---

* मत्स्य. १९५।१–४६ ; गोप्र. २८–३३ ; संप्र ६६२–६६५. [ गोत्रप्रवरऋषिनामसंग्रहः संप्र. ६१८–६२१ ; प्रद. १११–११३ ; संकौ. १८३–१८५ ; बाल. १।५३ ( पृ. १८४–१८५ ) ; संर. ४२८–४३१ इत्यत्र द्रष्टव्यः । ].

( १ ) मत्स्य. १९५।१ ; गोप्र. २८ ; संप्र. ६६२ रस्याभि ( रस्य च ).

( २ ) मत्स्य. १९५।२ ; गोप्र. २८–२९ ; संप्र. ६६२.

( ३ ) मत्स्य. १९५।३ ; गोप्र. २९ ; संप्र. ६६२.

( ४ ) मत्स्य. १९५।४ ; गोप्र. २९ ; संप्र. ६६२ दाक्षायणीनां ( दाक्षायणानां ).

( ५ ) मत्स्य. १९५।५ अश्वमेधे सुविनते ( चरितं कथ्यते राजन् ) ; गोप्र. २९ ; संप्र. ६६२ पूर्वं वैवस्वते तथा ( प्राप्ते वैवस्वते पुरा ) सुविनते ( तु वितते ).

( ६ ) मत्स्य. १९५।६ देहान् ( देहं ) तत· ( तथा ) ऋषयस्ते ( ऋषयश्च ) ; गोप्र. २९ महात्मना ( यथेच्छया ) ; संप्र. ६६२ स्वय तत· ( समन्ततः ) ऋषयस्ते ( ऋषयश्च ) महात्मना ( यथेच्छया ).

( १ ) मत्स्य. १९५।७ ; गोप्र २९ ; संप्र. ६६२.

( २ ) मत्स्य. १९५।८ जातो हुताशन· ( जाता हुताशनात् ) ; गोप्र. २९ ; संप्र. ६६२ तज्जुहाव ( तं जुहाव ) भृगुश्च ( भृगु· स ).

( ३ ) मत्स्य. १९५।९ ; गोप्र. २९ ; संप्र. ६६२ जातो ह्यर्चिभ्योऽत्रि ( जातस्तृतीयोऽत्रि ) मरीचिस्तु ( मरीचिश्च ).

( ४ ) मत्स्य. १९५।१० कपिशैर्जातः ( कपिशो जातः ) महायशा· ( महातपाः ) ; गोप्र. २९ पुलस्त्यश्च ( पुलस्त्यस्तु ) ; संप्र. ६६२ ( कुशैस्तु कपिलैर्जातः पुलस्त्यस्तु महातपा· । ) पू.

( ५ ) मत्स्य. १९५।११ वसिष्ठश्च ( वसिष्ठस्तु ) ; गोप्र. २९ पुलोम्नस्तु ( पुलोम्नश्च ) ; संप्र. ५९८ पुलोम्नस्तु ( पुलोम्नश्च ) उत्त : ६६२ गोप्रवत्.

( ६ ) मत्स्य. १९५।१२ ; गोप्र. २९–३० तस्यामस्य ( यस्मा-मस्मात् ) ; संप्र. ५९८ ( यस्यामस्मात्ततोऽपत्यभूता द्वादश देवताः । ) पू. : ६६२ पूर्वार्धे ( यस्यामस्माच्चतो जाता देवास्तु द्वादशात्मका· । ) भौवनश्चैव ( भानवश्चैव ) सुजन ( सुजव ).

( ७ ) मत्स्य. १९५।१३ शुचिः क्रतुश्च ( क्रतुर्वसुश्च ) याज्यश्च ( त्याज्यश्च ) ; गोप्र. ३० दक्षोऽथ द्वादश ( दक्षो द्वादशम ) ; संप्र. ६६३ याज्यश्च ( याजश्च ) शेषं गोप्रवत्.

( ८ ) मत्स्य. १९५।१४ उत्तरार्धे ( पौलोम्यां जनयन् विप्रा देवानां तु कनीयस· । ) ; गोप्र. ३० देवा द्वादश कीर्तिताः

### वैदाः निमथिताः

वैदा निमथिताः। तेषां पञ्चार्षेयः प्रवरो भवति। भार्गव– च्यावन– आप्नवान– वैद– नैमथित– इति होता। निमथितवद्– विदवद्– अप्नवानवत्– च्यवनवद्– भृगुवद्– इत्यध्वर्युः॥

### आवध्याः

आवध्यायना मौञ्ज्यायनाः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव– च्यावन– आवध्य– इति होता। अवध्यवत्– च्यवनवद्– भृगुवद्–इत्यध्वर्युः॥

### विदाः

अथ १ जमदग्नीनाम्। २ प्राचीनयोग्याः ३ पुलस्त्याः ४ वैदभृताः ५ कौञ्चायन– ६ अभयजाताः ७ तौगायनाः ८ आवटाः ९ शार्कर्णिनाः १० भाल्वशयः ११ भार्गवाः इति॥ ( प्रवराः– भार्गव–च्यावन–आप्नवान–। )

### आर्ष्टिषेणाः

१ भौवेयाः २ मार्गपथाः ३ ग्राम्यायणिः अथ ४ नैकसी– ५ आपस्तम्बिः ६ विमीह्लि कार्णि– ७ कार्दमिः ८ आर्ष्टिषेण– ९ गर्दभ– १० शातपथि– इति॥

### मित्रयुवः

१ आपिशायनाः २ कापिशायनाः ३ द्रौणायनाः ४ खाल्वायनाः ५ अविचक्षाः ६ मैत्रेयाः अथ ७ इयः ८ आमोदायनाः ९ आपिशलाः इति॥

### यस्काः

१ वैतहव्य– २ यास्क– ३ माधून– ४ मौक– ५ जीवन्त्यायनः ६ अथले– ७ भागलेय– ८ भागविहोय– ९ कौशाम्बेय– १० वृकाश्वकि– ११ मादाह्नि– १२ गौरिक्षित– १३ दैर्घ्यचित– १४ घालेयम् – १५ पाञ्चधनाः १६ पौष्णायताः इति॥ ( प्रवराः–मार्गव–वैतहव्य–सावेदस–। )

### शुनकाः

१ गार्त्समदः २ शुनकाः ३ यज्ञवचाः ४ सौकरिः ५ कार्दमायनाः ६ राजवाधव्याः ७ चौक्षाः ८ घोराः ९ श्रोत्रियाः १० मत्यराः इत्येते शुनकाः। इत्येतेषां ......इत्यादि॥ ( प्रवरः कात्यायन–लौगाक्षिवत्। )

### वत्सपुरोधसाः

वत्सपुरोधसानां पञ्चार्षेयः प्रवरो भवति। भार्गव – च्यावन– आप्नवान– वात्स– पौरोधस– इति होता। पुरोधसवद्– वत्सवद्– अप्नवानवत्– च्यवनवद्– भृगुवद्– इत्यध्वर्युः॥

### वेद–विश्वज्योतिषाः

वेद–विश्वज्योतिषाः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव– वेद– विश्वज्योतिष–इति होता। विश्वज्योतिषवद्– वेदवद्– भृगुवद्– इत्यध्वर्युः॥

### वैन्याः

पार्थवैन्यानां त्र्यार्षेयः प्रवरो भवति। भार्गव– वैन्य– पार्थ– इति होता। पृथुवद्– वेनवद्– भृगुवद्– इत्यध्वर्युः॥

## शुक्लयजुर्वेदपरिशिष्टम्

### आर्ष्टिषेणाः

...था १ ग्राम्यायणिः २ अप्यतेकेसि– ३ आपस्तम्बिः ४ भार्गि– ५ कार्दमिः ६ आर्ष्टिषेण– ७ गर्दभः च ८ अनूपाः इति॥

### मित्रयुवः

१ आपिशायनाः २ कापिशायनाः ३ नारोपायनाः ४ रौद्रायण– ५ आश्वलायनाः ६ अपिकक्षाः ७ मैत्रेयाः ८ अनण्डव्यः ९ आमोदायनाः १० आपिशलाः ११ वाध्न्यश्वाः इति॥

### यस्काः

१ वैतहव्य– २ यास्क– ३ माधून– ४ मौन– ५ मौक– ६ जैवन्त्यायन–७ औप्यले– ८ पालेय– ९ भालेय– १० पान्यचत– ११ मोदढव्यांजाः इति॥

### शुनकाः

१ गार्त्समदाः २ शुनकाः ३ यज्ञवच– ४ सौकरी– ५ कार्दमायनाः ६ राजवाधव्याः ७ चौक्षाः

---

( १ ) शुक्लयजुर्वेदपरिशिष्टेऽस्मिन् गोत्रप्रवरविचारः प्रा. ब्रॉन कौमरायणेन सम्पादितात् ' गोत्रप्रवरमञ्जरी ' पुस्तकात् संगृहीतः।

८ चौराः ९ श्रौत्रियाः १० प्रत्युराः इति ॥

( प्रवरा.– कात्यायन-लौगाक्षिवत् । भार्गव– शौन-होत्र– गार्त्समद– इति वा इत्यधिकम् । )

## मत्स्यपुराणम्

* सूत उवाच–

इत्याकर्ण्य स राजेन्द्र ओङ्कारस्याभिवर्णनम् ।
ततः पप्रच्छ देवेशं मत्स्यरूपं जलार्णवे ॥

मनुरुवाच–

ऋषीणां नाम-गोत्राणि वंशावतरणं तथा ।
प्रवराणां तथा साम्यमसाम्यं विस्तराद्वद ॥
महादेवेन ऋषयः शप्ताः स्वायम्भुवेऽन्तरे ।
तेषां वैवस्वते प्राप्ते संभवं मम कीर्तय ॥
दाक्षायणीनां च तथा प्रजाः कीर्तय मे प्रभो ।
ऋषीणां च तथा वंशं भृगुवंशविवर्धनम् ॥

मत्स्य उवाच–

मन्वन्तरेऽस्मिन् संप्राप्ते पूर्वं वैवस्वते तथा ।
अश्वमेधे सुविनते ब्रह्मणः परमेष्ठिनः ॥
महादेवस्य शापेन त्यक्त्वा देहान् स्वयं ततः ।
ऋषयस्ते समुद्भूता हुते शुक्रे महात्मना ॥

* मत्स्य. १९५।१-४६ ; गोप्र. २८-३३ ; संप्र. ६६२-६६५. [ गोत्रप्रवरऋषिनामसंग्रहः संप्र. ६१८-६२१ ; प्रद. १११-११३ ; संकौ. १८३-१८५ ; बाल. १५३ ( पृ. १८४-१८५ ) ; संर. ४२८-४३१ इत्यत्र द्रष्टव्यः । ].

( १ ) मत्स्य. १९५।१ ; गोप्र. २८ ; सप्र. ६६२ रस्याभि ( रस्य च ).

( २ ) मत्स्य. १९५।२ ; गोप्र. २८-२९ ; संप्र. ६६२.

( ३ ) मत्स्य. १९५।३ ; गोप्र. २९ ; संप्र. ६६२.

( ४ ) मत्स्य. १९५।४ ; गोप्र. २९ ; संप्र. ६६२ दाक्षायणीनां ( दाक्षायणानां ).

( ५ ) मत्स्य १९५।५ अश्वमेधे सुविनते ( चरित्रं कथ्यते राजन् ) ; गोप्र. २९ ; सप्र. ६६२ पूर्वं वैवस्वते तथा ( प्राप्ते वैवस्वते पुरा ) सुविनते ( तु वितते ).

( ६ ) मत्स्य. १९५।६ देहान् ( देह ) ततः ( तथा ) ऋषयस्ते ( ऋषयश्च ) ; गोप्र २९ महात्मना ( यथेच्छया ) ; संप्र. ६६२ स्वयं तत ( समन्ततः ) ऋषयस्ते ( ऋषयश्च ) महात्मना ( यथेच्छया ).

देवानां मातरो दृष्ट्वा देवपत्न्यस्तथैव च ।
स्कन्नं शुक्रं महाराज ब्रह्मणः परमेष्ठिनः ॥
तज्जुहाव ततो ब्रह्मा ततो जातो हुताशनः ।
ततो जातो महातेजा भृगुश्च तपसां निधिः ॥
अङ्गारेष्वङ्गिरा जातो ह्यर्चिर्भ्योऽत्रिस्तथैव च ।
मरीचिभ्यो मरीचिस्तु ततो जातो महातपाः ॥
केशैस्तु कपिशैर्जातः पुलस्त्यश्च महातपाः ।
केशैः प्रलम्बैः पुलहस्ततो जातो महायशाः ॥
वसुमध्यात्समुत्पन्नो वसिष्ठश्च तपोधनः ।
भृगुः पुलोम्नस्तु सुतां दिव्यां भार्यामविन्दत ॥
तस्यामस्य सुता जाता देवा द्वादश याज्ञिकाः ।
भुवनो भौवनश्चैव सुजन्यः सुजनस्तथा ॥
शुचिः क्रतुश्च मूर्धा च याज्यश्च वसुदश्च ह ।
प्रभवश्चाव्ययश्चैव दक्षोऽथ द्वादशस्तथा ॥
इत्येते भृगवो नाम देवा द्वादश कीर्तिताः ।
पौलोम्यजनयद्विप्रं देवानां तु कनीयसम् ॥

( १ ) मत्स्य. १९५।७ ; गोप्र. २९ ; संप्र. ६६२.

( २ ) मत्स्य. १९५।८ जातो हुताशनः ( जाता हुताशनात् ) ; गोप्र. २९ ; संप्र. ६६२ तज्जुहाव ( तं जुहाव ) भृगुश्च ( भृगुः स ).

( ३ ) मत्स्य. १९५।९ ; गोप्र. २९ ; संप्र. ६६२ जातो ह्यर्चिर्भ्योऽत्रि ( जातस्तृतीयोऽत्रि ) मरीचिस्तु ( मरीचिश्च ).

( ४ ) मत्स्य. १९५।१० कपिशैर्जातः ( कपिशो जातः ) महायशाः ( महातपाः ) ; गोप्र. २९.पुलस्त्यश्च ( पुलस्त्यस्तु ) ; संप्र. ६६२ ( कुशैस्तु कपिलैर्जातः पुलस्त्यस्तु महातपाः । ) पू.

( ५ ) मत्स्य. १९५।११ वसिष्ठश्च ( वसिष्ठस्तु ) ; गोप्र. २९ पुलोम्नस्तु ( पुलोम्नश्च ) ; संप्र. ५९८ पुलोम्नस्तु ( पुलोम्नश्च ) उत्त. : ६६२ गोप्रवत्.

( ६ ) मत्स्य. १९५।१२ ; गोप्र. २९-३० तस्यामस्य ( यस्यामस्मात् ) ; संप्र. ५९८ ( यस्यामस्मात्तनोऽपत्यभूता द्वादश देवता । ) पू. : ६६२ पूर्वार्धे ( यस्यामस्मात्तनो जाता देवास्तु द्वादशात्मका । ) भौवनश्चैव ( मानवश्चैव ) सुजन ( सुजव ).

( ७ ) मत्स्य. १९५।१३ शुचिः क्रतुश्च ( क्रतुर्मुश्च ) याज्यश्च ( त्याज्यश्च ) ; गोप्र. ३० दक्षोऽथ द्वादश ( दक्षो द्वादशम ) ; संप्र. ६६३ याज्यश्च ( याजश्च ) शेषं गोप्रवत्.

( ८ ) मत्स्य. १९५।१४ उत्तरार्धे ( पौलोम्यां जनयन् विप्रा देवानां तु कनीयसः । ) ; गोप्र. ३० देवा द्वादश कीर्तिताः

१ च्यवनं च महाभागमप्रवानं तथैव च ।
अप्रवानात्मजश्चौर्वो जमदग्निस्तदात्मजः ॥
२ और्वो गोत्रकरस्तेषां भार्गवाणां महात्मनाम् ।
तत्र गोत्रकरान् वक्ष्ये भृगोर्दीप्तौजसस्त्वहम् ॥

वत्साः

३ *भृगुश्च च्यवनश्चैव अप्रवानस्तथैव च ।
और्वश्च जमदग्निश्च वात्स्यो दार्भिर्नडायनः ॥
४ वैगायनो वीतिहव्यः [11]पैलश्चैवानुशातकिः ।
शौनकायनि–जीवन्ति–कौम्बोदाः पार्पतिस्तथा ॥

१ [17]वैहीनरिर्विरूपाक्षो रौहित्यायनिरेव च ।
वैश्वानरिस्तथा [21]नीलो सावर्णिश्च वृकाश्वकः ॥
२ वैष्टपुरेयिर्वालाकिस्तौलकेश्यनन्तभागिनः ।
ऋतभागोऽथ मार्कण्डेराजिहीनोऽतिथिस्तथा ॥

---

(देवास्तु द्वादशात्मकाः) ; संप्र. ५९८ द्विप्रं (द्विप्रान्) कनीयसम् (कनीयसः) उत्त. : ६६३ कनीयसम् (कनीयसाम्) .

(१) मत्स्य. १९५।१५ च्यवनं च (च्यवनं तु) मप्रवानं (माप्नुवानं) अप्नवा (आप्नुवा) ; गोप्र. ३० तथैव च (तथाप्यसौ) ; संप्र. ५९८ च्यवनं च (च्यवनं तु) तथैव च (तथाप्यसौ) अप्नवानात्मजश्चौर्वो (आप्नवानात्मजश्चैव) : ६६३ (च्यवनं तु महाभागमाप्नवानं तथाप्यसौ । आप्नवानात्मजश्चौर्वो जमदग्निस्तथाऽऽत्मजः ॥) .

(२) मत्स्य. १९५।१६. भृगोर्दीप्तौजसस्त्वहम् (भृगोर्वै दीप्तेजसा ।) ; गोप्र. ३० तत्र गोत्रकरान् (तद्गोत्रप्रवरान्) ; संप्र. ६६३ और्वो गोत्रकरस्तेषां (और्वगोत्रकरस्तस्य) शेषं गोप्रवत् .

(३) मत्स्य. १९५।१७ ; गोप्र. ३० ; संप्र. ६६३.

* इतः परं यैर्निबन्धकारैः गोत्रप्रवरनाम्नां संग्रहः कृतः, तेषां स्थलनिर्देशः प्रथममेव एकत्र दत्तः । पाठभेदाश्च तत्र तत्र द्रष्टव्याः । संप्र. ६१८ ; प्रद. १११ ; संकौ. १८४ ; बाल. १।५३ पृ. १८३ ; संर. ४२८.

३ मत्स्य. आप्नुवानः ; संप्र. आप्नवानः .

४ संप्र. ऊर्वश्च.

६ गोप्र. संप्र. वत्सः ; संकौ. भात्सः ; संर. मात्स्याः .

७ मत्स्य. दण्डिः ; गोप्र. दर्भिः .

८ प्रद. संकौ. बाल. संर. जेबी. नाडायनः .

(४) मत्स्य. १९५।१८ ; गोप्र. ३० ; संप्र. ६६३.

९ गोप्र. वैरायनः ; संप्र. वैशयनः , वैरायणः ; प्रद. संकौ. वैरायणः ; बाल. (०) ; संर. वैरायणाः .

१० गोप्र. वीतहव्यः ; संप्र. वैतिहयः , वैन्यः ; प्रद. वैतिहयः ; संकौ. वैन्यः ; बाल. वैनिहव्यः ; संर. वैन्याः .

१२ मत्स्य. चैवात्र शौनकः ; गोप्र. आनुसारकिः ; संप्र. चैवाथ सालकिः .

१३ मत्स्य. शौनकायन.

१५ मत्स्य. आवेदः ; संप्र. कम्बोदाः .

१६ मत्स्य. कार्पणिः .

(१) मत्स्य. १९५।१९ ; गोप्र. ३० ; संप्र. ६६३.

१९ गोप्र. रौहीत्यायनिः ; रोहित्यायनः ; बाल. रौहित्यायनः .

२१ गोप्र. कपानीलुः ; संप्र. कथानीलुः, कपानीलुः ; प्रद. कपाली . ... सर. कृपानीलुः ; बाल. कामालिविः ; जेबी. — नमन्युः .

२२,२३ मत्स्य. लुब्धः सावर्णिकः च सः । ; गोप्र. वासावर्णि—विकक्ष्वरः ; संप्र. वसावर्णि', विवस्वर', सावर्णिः, विकस्वरः ; प्रद. विसावर्णिः, विकस्वरः ; संकौ. सावर्णिः, विकस्वरः ; बाल. सावर्णिः, विकस्वरः ; संर. सावर्णिः, पिकस्वरः .

(२) मत्स्य. १९५।२० गोप्र. ३० ; संप्र. ६६३.

२४ मत्स्य. विष्गुः पौरोऽपि ; गोप्र. विष्णुः, पैलोऽपि ; संप्र. विष्गु', पौलोभि ; प्रद. संकौ. संर. विष्गुः ; बाल. विकः .

२५ गोप्र. वलाकिः ; संप्र. बालाकि.

२६ मत्स्य. ऐलिकः ; गोप्र. नौलिकः ; संप्र. नौलिकेल, तौलकेशिः ; प्रद. तौलिकोशिः ; संकौ. संर. तौलकेशिः ; बाल. जौल्किकेशिः .

२७ मत्स्य. अनन्तभागिनः ; गोप्र. नान्तभागिनः ; संप्र. अन्तभाविनः .

२८ मत्स्य. मृगमार्गेय ; गोप्र. सनो मार्गोऽथ ; संप्र. ऋनाभागोऽथ.

२९ मत्स्य. मार्कण्ड ; गोप्र. मार्कण्डुः ; जेबी. मार्कण्डेयाः .

३० मत्स्य. अविनः ; गोप्र. संकौ. संर. अहिनः ; संप्र. अहिनः , जहतः ; प्रद. बाल. जहिमः .

३१ मत्स्य. नीनिनः ; गोप्र. प्रद. संकौ. बाल. संर. वीनिनः ; संप्र. वीतितः, बीजिनः ; जेबी. आतिथिः .

२ मैण्डु[३२]-मौण्डव्य[३३]-मौण्डूक[३४]-फेनपाः[३५] स्तनितस्तथा[३६]।
[३७]स्थौलपिण्डिः शिखापत्तिः[३८] शार्कराक्षि[३९]स्तथैव च ॥
२ [४०]जैलधिः सेनजित्[४१]कृतन्नैः[४२] कुत्सो[४३]ऽन्यो मौद्गलायनः[४४]।
[४५]औकायणो देवमतिः[४६] मण्डूकि[४७]र्ऋषभः[४८] सुतः[४९] ॥
३ सांकृत्य[५०]श्चौतकिः[५१] सौपिर्यज्ञपिण्डायनस्तथा[५२,५३] ।
गौग्यायणो[५४] गौयनश्च[५५] ऋषिर्गार्ह्यायणस्तथा[५६] ॥

१ गोष्ठायनो[५७] वौह्ययनो[५८] वैशम्पायन[५९]गालवौ[६०] ।
वैकर्णेयः[६१] शार्ङ्गरवो[६२] याज्ञेयि[६३]र्भाल्कायनिः[६४] ॥

२ लालाटि[६५]र्लाकुचिश्चैव[६६] लाक्षेयः[६७] परिमण्डलः[६८] ।
[६९]औलुकिः [७०]सौचकिः कौत्स[७१]स्तथान्यः पैङ्गलायनिः[७२] ॥

३ शालायनि[७३]र्माल्यायनिः[७४] कौटिलेयः[७५] कौचहस्तिकः[७६] ।

---

( १ ) मत्स्य. १९५।२१ ; गोप्र. ३० ; संप्र. ६६३.

३२ मत्स्य. मण्ड ; संप्र. मण्डू.

३४ गोप्र. मण्डूक.

३५, ३६ गोप्र. जेबी. रफेनपागनिभः ; संप्र. फेनपा गनिभः, फेनपाः, स्थलिनः ; प्रद. फेनपास्तलिन ; संकौ. फेनयाः, तलिनः ; बाल. फेनयः, हलिनः ; संर. फेनयाः, तलिन .

३७ मत्स्य. स्थलपिण्डः .

३८ मत्स्य. शिजावर्णः ; गोप्र. शिषापत्तिः ; प्रद. शिखापत्तिः ; संकौ. शिखापतिः ; बाल. शिखायतिः .

३९ गोप्र. संप्र. शर्कराक्षिः .

( २ ) मत्स्य. १९५।२२ ; गोप्र. ३०–३१ ; संप्र. ६६३.

४० मत्स्य. जानधिः ; गोप्र. जलपि. प्रा. जॉन ब्रौमहाशयः सूचयति यत् इदमर्धं प्रमादेनात्र पठितम् । वस्तुतस्तु पञ्चविंशतितमश्लोकस्य पूर्वार्धादनन्तरं पठनीयमिति ।

४१ मत्स्य. सौधिकः ; गोप्र. ध्वजकृद् ; संप्र. सौध्वजिः ; प्रद. सैन्यजित् ; संकौ. संर. सेनाजित् ; बाल. सैम्यजित् .

४२ मत्स्य. शुन्य ; गोप्र. सन्यौ .

४३, ४४ गोप्र. तथाऽन्य पौगलायनिः ; संप्र. तथाऽन्यः पागलायनि, पौङ्गस्यायनिः ; प्रद. संकौ. बाल. संर. पैङ्गलायनिः .

४५ मत्स्य. माङ्कायनः ; गोप्र. संप्र. मार्कायणः .

४६ मत्स्य. देवपतिः ; गोप्र. संप्र. दिवपतिः ; प्रद. दिवपीतिः ; संकौ. संर. दिवःपतिः ; बाल. दिवस्पतिः .

४७ मत्स्य. पाण्डुरोचिः ; गोप्र. माण्डूम.

४८,४९ मत्स्य. सगालवः ; गोप्र वृषभिः स च; संप्र. वर्षभिः स च. *अन्ये निबन्धकारा उपरिदर्शितं पाठमनुसरन्ति ।*

(३) मत्स्य १९५।२३ ; गोप्र. ३१ , संप्र. ६६३. गोत्रप्रवरमञ्जर्यां संस्कारप्रकाशे च अत्र ' लवः सांकृत्यशालाकिस्तथा चैवानुशातकिः । कोपियज्ञो मित्रयज्ञस्तथा चैवामिलायनः ॥ ' इति श्लोकः पठ्यते । तदनुसारेण निबन्धकारैर्गोत्रनामसङ्ग्रहोऽपि कृतः ।

लवः— प्रद. प्लवः ; संकौ. पलव ; बाल. स्तन ; संर. पलतः पलव .

कोपियज्ञः— प्रद. बाल. कापयज्ञ .

आमिलायनः— गोप्र. मित्रलायनः .

५४ गोप्र. मार्गायनः ; जेबी. गाह्नायन.

५५ गोप्र. हायनिः ; संप्र. हायनः , हायनिः ; प्रद. बाल. हायनि ; संकौ. हायतिः ; संर. हायतिः ; जेबी. आह्लायनः .

५६ गोप्र. *गोत्सायनः ; संप्र. जेबी. गोदायन .*

( १ ) मत्स्य. १९५।२४; गोप्र. ३१; संप्र. ६६३.

५७ गोप्र. गोष्ठयायनः .

५८ गोप्र. संप्र. हायनि च; जेबी. चाणुकिः च.

५९, ६० मत्स्य. वैशम्पायन एव च.

६१ मत्स्य. गोप्र. संर. वैकर्णिनिः ; संप्र. वैकर्णेयः, वैकर्णेयिः ; प्रद. कैलवर्णधिः ; संकौ. बाल. वैकार्णिपिः .

६३ गोप्र. यज्ञेयिः .

६४ मत्स्य. भ्राष्कुरायणिः ; गोप्र. भार्ष्ककायनि ; संप्र. भाण्यकायनिः भाल्लकायनिः .

( २ ) मत्स्य. १९५।२५; गोप्र. ३१ ; संप्र. ६६४.

६५ गोप्र. लालविः ; संप्र. लालादिः .

६६ मत्स्य. नाकुलिः ; गोप्र. लाभृतिः ; संप्र. लाकुविः .

६७ मत्स्य. लौक्षिण्यो ; गोप्र. लल्यानः ; संप्र. लक्ष्मण्य, लाक्षण्यः ; प्रद्. बाल. ललाम ; संकौ. संर. लाक्ष्मणः .

६९,७०,७१,७२. *गोप्र. संप्र. ( ० ).*

( ३ ) मत्स्य. १९५।२६ ; गोप्र. ३१; संप्र. ६६४.

७३ मत्स्य. सालायनिः ; बाल. शाक्यायनिः .

७४ मत्स्य. मालयनिः ; गोप्र. मलयनिः ; संप्र. भालायनिः, *माल्यायनिः* ; प्रद्. बाल. मल्पनिः .

७५ मत्स्य. गोप्र. कौटिलि ; संप्र. कौटल , क्रौटिलिः ; प्रद. संर. कौटलि ; संकौ. कौटालिः ; बाल. कौलिः.

७६ गोप्र. कोचहस्तिकः ; संप्र. चलहस्तिक .

विदाः

१अतः परं प्रवक्ष्यामि शृणु त्वन्यान् भृगूद्वहान् ।
जमदग्निर्विदश्चैव पौलस्त्यो वैदभृत्तथा ॥
२ऋपिश्चाभयजातश्च कायनिः शार्कदायनः ।
और्वेया मारुताश्चैव सर्वेषां प्रवराः शुभाः ॥
३भृगुश्च च्यवनश्चैव अप्रवानस्तथैव च ।
परस्परमवैवाह्या ऋपयः परिकीर्तिताः ॥

आर्ष्टिषेणाः

४भृग्वन्दीपो मार्गपथो ग्राम्यायनिकर्टायनी ।
आपस्तम्बिस्तथा भाल्विर्नैकर्पिः कपिरेव च ॥

२५ इयेनयागातिः– संप्र. इयेनपागतिः ।
२६ नैकपिः– प्रद. वाल. ( ० ) ; संर. नैकधिः .
२७ शौद्रकर्गिः– संर. शौककर्णिः .
२८ निडायना – प्रद. बाल. ( ० ).
२९ श्रीवत्समण्डूका – प्रद. संकौ. बाल. संर. ( ० ).

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेद-परिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

( १ ) मत्स्य. १९५।३० ; गोप्र. ३१.
२ मत्स्य. बिदः .
४ मत्स्य. वैजभृद् ; गोप्र. वैजभृद् .
( २ ) मत्स्य. १९५।३१; गोप्र. ३१.
५ मत्स्य. उभयजातः ; गोप्र. भवजातः .
६ प्रद. कटायनि' .
८ प्रद. आर्पेय. .
९ प्रद. मरुतः .
( ३ ) मत्स्य. १९५।३२ अप्रवान ( आप्नुवान ) ; गोप्र. ३१–३२ ; संप्र. ६६४ मवैवाह्या ( मविवाह्या ).
( ४ ) मत्स्य १९५।३३; गोप्र ३२; संप्र. ६६४.
१ मत्स्य. भृगुदास ; गोप्र. संप्र. भृग्वन्दीय' .
३ मत्स्य. ग्राम्यायणि.
४ संप्र. रथायनी, चट्टायनिः ; प्रद. चद्यायनिः ; संकौ. चट्टायनिः ; संर. वदायनि' .
५ संप्र. आपस्तम्ब' .
६ मत्स्य विल्वि' ; गोप्र. भल्विः .
७ मत्स्य नैऋशि' , गोप्र नैकसिः .
८ गोप्र. कसि , संप्र. कवि , कपि ; प्रद. संकौ. संर. कविः .

१आर्ष्टिषेणो गार्दभिश्च कार्दमायनिरेव च ।
आश्वायनिस्तथाऽनूपः पञ्चार्षेयाः प्रकीर्तिताः ॥
२भृगुश्च च्यवनश्चैव अप्रवानस्तथैव च ।
आर्ष्टिषेणस्तथाऽनूपः प्रवराः पञ्च कीर्तिताः ॥
३परस्परमवैवाह्या ऋपयः परिकीर्तिताः ॥

यस्काः

४यस्कस्तथा वीतहव्यो मैथूलश्चण्डमो दमः ॥
५जीवन्त्यायनिमौनश्च पिलिश्चैव खेलिस्तथा ।
भागलिर्भागविचिश्च कौशाम्वेयिश्च कौश्यपिः ॥

( १ ) मत्स्य. १९५।३४ ; गोप्र. ३२ ; संप्र. ६६४.
१२ गोप्र. आश्वाभिः ; संप्र. आश्वायनिः, आश्वाभिः ; प्रद. आश्वायति' ; संकौ. संर. आश्वभिः .
१३ मत्स्य. तथा रुचिः ; गोप्र. अथिताथिः च ; संप्र. अथानूपः, अथिताथिः .
( २ ) मत्स्य. १९५।३५ अप्रवान ( आप्नुवान ) स्तथाऽनूपः ( स्तथा रुचिः ) ; गोप्र. ३२ स्तथाऽनूपः ( स्तथाऽनूपिः ) ; संप्र. ६६४ अप्रवान ( आप्नवान ).
( ३ ) मत्स्य. १९५।३६ ; गोप्र. ३२ ; संप्र. ६६४ मवैवाह्या ( मविवाह्या ).
( ४ ) मत्स्य. १९५।३६ ; गोप्र. ३२ ; संप्र. ६६४.
१,२ मत्स्य. यस्को वा वीनहव्यो वा ; गोप्र. यस्को वचो वीतहव्यो ; संप्र. यास्का वाचो वीतहव्याः .
३ मत्स्य. मथितः तु ; गोप्र. माथवः ; संप्र. मागन्धः .
४,५ मत्स्य. तथा दमः ; संप्र. प्रद. संर. चण्डमोदनः ; संकौ. चन्दुमोदनः .
( ५ ) मत्स्य. १९५।३७ ; गोप्र. ३३ ; संप्र. ६६४.
६ मत्स्य. जैवन्त्यायनि ; प्रद. जैवलायन' .
७ मत्स्य. मौजश्च ; गोप्र. मौलिश्च ; संप्र. मौपिलिश्च ; प्रद. मौललि.
८ संप्र. शालि' चैव, पिलिद्खिलि' .
९ मत्स्य. चलिः. उपरितनं नाम द्रष्टव्यम् ।
१० मत्स्य. भागिल. ; गोप्र. भर्गेलिः .
११ गोप्र. भार्गवत्विः च ; संप्र. गार्गवीतिः, भागवित्ति' ; संकौ. भागवतिः ; जेबी. भागविज्ञेयः .
१२ मत्स्य. कौशापिरत्तथ.
१३ प्रद. कश्यपिः ; जेबी. वृकाश्वकिः .

१४वालेयः समदागेयिः सौरिर्ज्वरिस्तथैव च ।
गार्गीयस्त्वथ जाबालिस्तथा पौष्णायनो हृपिः ॥
२मोदायनस्तथैतेपामार्षेयाः प्रवरा मताः ॥
३भृगुश्च वीतहव्यश्च तथा चैव सवेदसः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

मित्रयुवः

१खालायनिः शाकटाक्षो मैत्रेयः सौख्यस्तथा ॥
२द्रौणायनो रौक्ष्यायणापिशैली चापिकायनिः ।
हंसजिह्वस्तथैतेपामार्षेयाः प्रवरा मताः ॥
३भृगुश्चैवाथ वध्न्यश्वो दिवोदासस्तथैव च ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

---

( १ ) मत्स्य. १९५।३८ ; गोप्र. ३२ ; संप्र. ६६४.

१४ मत्स्य. वालपिः ; गोप्र. वालेयिः ; संप्र. वासेयिः, वालेयिः ; प्रद. वालेयः ; संकौ. वालेपिः ; संर. ( ० ).

१५ मत्स्य. श्रमदागेपिः ; प्रद. समदोगेयिः ; संकौ. संर. समदागपिः .

१६ मत्स्य. सौरस्थिनिः ; गोप्र. सौज्वरिः च ; प्रद. संकौ. संर. सौरिः, ज्वरिः ; जेत्री. दैर्घ्यचितः .

१७ जेत्री. गौरिक्षिनः .

१८ संप्र. प्रद. संकौ. संर. ( ० ) ; जेत्री. पञ्चालवः .

१९ मत्स्य. पौष्पायनः ; संप्र. प्रद. संकौ. संर. ( ० ) ; जेत्री. पौष्णावतः .

( २ ) मत्स्य. १९५।३९ ; गोप्र. ३२.

२० मत्स्य. रामोदश्च ; गोप्र. श्रामदश्च ; संप्र. प्रद. संकौ. संर. ( ० ).

( ३ ) मत्स्य. १९५।३९—४० ; पूर्वार्धे ( भृगुश्च वीतिहव्यश्च तथा रैवसवैवसौ ) ; गोप्र. ३२ चैव सवेदसः ( रवसवैक्सौ ) ; संप्र. ६६४ मवैवाह्या ( मविवाह्या ) उक्त.

यस्कगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा–

१ भागन्तयः— प्रद. भाङ्गतिः ; संर. भागान्तपः .

२ मानुष्टयः— प्रद. सानुष्टिः ; संर. सानुस्वयः .

३ मादायनाः— सर्वग्रन्थेषु समानम् ।

४ शालङ्कायनाः— „ „

५ तार्क्षाः— संप्र. तर्क्षाः .

६ प्राशरेयाः— प्रद. प्रवारेयः ; संकौ. संर. प्रावरेयाः .

७ शार्कराक्षिः— सर्वग्रन्थेषु समानम् ।

८ कौटिल्यः— „ „

९ पिलेभिः— „ „

१० बाह्वय— प्रद. बाह्विः ; संकौ. पाह्वयः ; संर. बाह्वियः .

११ हालेय— सर्वग्रन्थेषु समानम् ।

१२ दीर्घचित— प्रद. दीर्घचितः ; संकौ. दीर्घचितः ; संर. दीर्घचिताः .

१३ सार्ष्टिः— } प्रद. सार्ष्टिसावर्णी द्वावधिकावाश्वलायनोक्तौ ; संकौ. संर. ( ० ).
१४ सावेतसः— }

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

( १ ) मत्स्य. १९५।४० ; गोप्र. ३२ .

१ मत्स्य. गोप्र. शालयनिः .

४ मत्स्य. गोप्र. साण्टवः ; प्रद. सान्वयः .

( २ ) मत्स्य. १९५।४१ ; गोप्र. ३२ .

६ मत्स्य. रौक्मायणिः ; गोप्र. रौक्मायनः ; प्रद. रौक्षायनः .

७ मत्स्य. आपिशिः ; गोप्र. पिशली .

८ गोप्र. चापि कायनिः ; प्रद. आपिकायनः .

( ३ ) मत्स्य. १९५।४२ ; गोप्र. ३२–३३ .

मित्रयुगणे ( वाध्र्यश्वगणे ) संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा–

१ रौप्यायणाः— सर्वग्रन्थेषु समानम् ।

२ रौक्मायणः— संप्र. संकौ. संर. ( ० ) .

३ सापिण्डिनः— प्रद. सालकिः ; संकौ. संर. सालण्डिनः .

४ पिकाक्षाः— संकौ. संर. पिण्डिकाक्षाः .

५ मोदायनाः— संर. मौदायनाः .

६ कापिशायनाः— सर्वग्रन्थेषु समानम् ।

७ शाण्डेयाः— संर. शाडेयाः .

८ सक्षिताः— संकौ. संर. साक्षिताः .

९ मित्रयुवः— संर. मित्रयवः .

१० आपिशायना— सर्वग्रन्थेषु समानम् ।

११ पाटिकायना— प्रद. ( ० ) .

१२ वाध्र्यश्व— संप्र. वाध्र्यश्वः, वाध्र्यश्व इत्यपि क्वचित् ।

१३ दिवोदासः— संर. मित्रयुवो दिवोदासाः .

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

शुनकाः

१शाक्त्यायनो यज्ञपयो मत्स्यगन्धिस्तथैव च ।
प्रत्यूर्षश्च श्रोत्रियश्च चौक्षिर्वै कार्दमायनिः ॥

२तथा गृत्समदो राजन् शुनकश्च महानृषिः ।
प्रवरास्तु तथोक्तानामार्षेयाः परिकीर्तिताः ॥

३भृगुर्गृत्समदश्चैव आर्षावेतौ प्रकीर्तितौ ।
परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥

४एते तवोक्ता भृगुवंशजाता
महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं विजहाति जन्तुः ॥

( १ ) अथ इदानीमेतानि काण्डानि व्याख्यास्यामः । इहोदाहृतेषु गोत्रगणेष्वपि एकेन सूत्रकारेण अन्यैरनुक्तमधिकं यत्किञ्चित् गोत्रं वा गोत्रगणो वा गणान्तर्भूतानि वा गोत्रान्तराणि गोत्रसंख्या वा प्रवरे ऋषिक्रमविशेषो वा प्रवरविकल्पो वा तत्कृतौ विवाहाविवाहौ विशेषान्तरं वा ( यदुक्तं ) तत्सर्वं सर्वैः सूत्रकारैरुक्तमेवेति मन्तव्यं, प्रामाण्याविशेषादेकत्रोक्त्यैवार्थसिद्धेरविरोधाच्च, स्मृतिशास्त्रेषु प्रायश्चित्ताशौचदायविभागव्यवहारकाण्डेषु यद्वत् । तथा– गोत्रगणेषु परिगणितानामृषीणां नामधेयानि मात्रासंख्याक्रमैयत्तासंदेहात् संदिह्यमानरूपाणि निगमनिरुक्तव्याकरणमन्त्रार्थवादेतिहासपुराणलोकतर्केभ्यः सम्यगवधार्य तत्त्वतो यथाप्रश्नं विभजनीयानि । तथा– यत्रयत्रैव नामधेयमेकस्मिन्नेव गणे गणान्तरे वा द्विकृत्वस्त्रिकृत्वो वा पठितं, तत्रतत्र नामधेयैकत्वेऽपि तद्वाच्यस्यर्षेर्भेदोऽध्यवसातव्यः, अभेदे सति अभ्यासानर्थक्यात् एकस्मिन्नेव गणे, गणान्तरे च प्रवरभेदात् । न ह्येकस्यैव प्रवरभेदो युक्तो विना वचनेन । दृश्यते च लोके बहूनां पुरुषाणां एकमेव नामधेयं देवदत्तादिवत् । तथा यत्रयत्र एकर्षिनामधेयमेकस्मिन्नेव गणे अक्षरसंख्यामात्राक्रमाणामेकतमेनैकेन द्वाभ्यां वा विकृतं तेन सूत्रकारेण पठ्यते, तत्रतत्र नामैकदेशविकारेऽपि नामैकत्वात् नामवाच्यस्य चैकत्वं द्रष्टव्यम्, 'एकदेशविकृतमनन्यवद्भवति' इति न्यायात् । एकत्र एकप्रवरमत्वादन्यत्र तस्याध्याहारविपरिणामव्यत्यासव्यवहितकल्पनाभिः करणैः (!) सर्वाणि गोत्रकाण्डानि उक्तानि वक्ष्यमाणानि च समान्येवेति कृत्वा व्याख्यास्यामः ।

भृगूणामादितो व्याख्यास्याम इति । भृगोः प्राधान्यात् । प्राधान्यं च 'महर्षीणां भृगुरहम्' इति स्मृतेः, मोक्षधर्मेषु च भृगोर्वासुदेवांशतास्मरणात् । आदितो ये भृगवस्तान् वक्ष्यामः, न ह्यामुष्यायणत्वेन पश्चात् भृगुत्वमापन्नानिति दर्शयितुं वा, ह्यामुष्यायणानामुत्तरत्र वक्ष्यमाणत्वात् । इह गणाः प्रवराश्च निगदव्याख्याता इति न व्याख्येयाः । जामदग्न्यवत्सा इत्यत्र वत्सानां जमदग्निविशेषणं पञ्चावत्तप्रापणार्थम्, 'जमदग्नीनां पञ्चावत्तम्' इत्यापस्तम्बवचनात् । 'वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः । एते पञ्चावत्तिनः' इत्यत्र पञ्चावत्तविधिपरे सूत्रे पूर्वोक्तोऽविवाहश्चोद्येय इति दर्शयति । इह वत्सादीनां त्रयाणां गणानां परस्परमविवाहः, पञ्चार्षेयत्वात् त्र्यार्षेयसंनिपाताच्च । ये च तत्र वैकल्पिकाः वत्सार्ष्टिषेणाः त्र्यार्षेयप्रवरास्तेषां परस्परमविवाहः, त्र्यार्षेयत्वात् द्व्यार्षेयसंनिपाताच्च । तदुक्तमधस्तात्– 'त्र्यार्षेयसंनिपातेऽविवाहः पञ्चार्षेयाणां द्व्यार्षेयसंनिपातेऽविवाहस्त्र्यार्षेयाणाम्' इति । अत्र श्लोकः– 'वत्सार्ष्टिषेणविदगोत्रभाजां पञ्चार्षेयप्रवरत्रये स्वे । भृग्वप्नवानच्यवनाः समाना यतस्ततो नास्ति मिथो विवाहः ॥' परेषां यस्कादीनां गणानां स्वंस्वं

( १ ) मत्स्य. १९५।४३ ; गोप्र. ३३ ; संप्र. ६६४.

१ मत्स्य. गोप्र. एकायनः .

२ मत्स्य. गोप्र. यज्ञपतिः ; संप्र. यक्षपतिः .

३ मत्स्य. मत्स्यगन्धः .

४ मत्स्य. प्रत्यह ; गोप्र. संप्र. प्रत्यूह° .

५ मत्स्य. तथा सौरि° ; गोप्र. तथा श्रोण्यः ; संप्र. तथा श्रौण्य°, श्रोण्या° ; प्रद. श्रोण्यः .

६ गोप्र. चक्षुर्वा ; संप्र. चक्षिश्च .

( २ ) मत्स्य. १९५।४४ ; गोप्र. ३३ ; संप्र. ६६४.

७ मत्स्य. मनकः , गोप्र. सनयश्च महर्षिकः ; संप्र. शुनकश्च महर्षिकः .

( ३ ) मत्स्य. १९५।४५ ; गोप्र. ३३ ; संप्र. ६६५ उत्तरार्धे ( परस्परमविवाह्या ऋषय परिकीर्तिताः । ).

( ४ ) मत्स्य. १९५।४६ येषां ( एषां ) ; गोप्र. ३३ विजहाति जन्तुः ( पुरुषो जहाति ) ; संप्र. ६६५ येषां ( तेषां ).

गणं समानप्रवरत्वाद्विहाय परस्परं पूर्वोक्तैर्वक्ष्यमाणैश्च सह विवाहोऽस्ति, सगोत्रत्वसमानप्रवरत्वयोरभावात् । इति भृगूणां विवाहाविवाहौ व्याख्यातौ ।

- अत्र सूत्रकारैश्चत्वारः प्रवराः शुनकानामुक्ताः । एकस्तावत् शुनक इत्येकार्षेयः । गार्त्समद इत्येकार्षेयोऽपरः । भार्गव गार्त्समद इति द्व्यार्षेयोऽन्यः । भार्गव शौनहोत्र गार्त्समद इति त्र्यार्षेयश्चतुर्थः । कथमेते प्रवरविकल्पा इति विचारयन्ति बहुविदः । तत्र व्रीहियवयोरिव विकल्पमेके मन्यन्ते । वंशव्यवस्थया व्यवस्थितविकल्पमपरे । कथं पुनरत्र वंशव्यवस्था ? अत्राहुः– चतुर्विधाः शुनकाः परस्परं भिन्नाः सन्ति । शुनकादेव जाताः केचित् । गृत्समदादेव जाताः केचित् । * केचिद् भृगोरपत्यं शुनकहोत्रः तदपत्यं गृत्समदः तस्मादेव जाता इति । तत्र शुनकनामधेयमात्रमेकं, वंशास्तु भिन्नाः । तेषां चतुर्विधानां शुनकानामिमे प्रवरा इति ।

ननु एवं कस्मान्न कल्प्यते– भृगोरपत्यं शुनकः, तदपत्यं शुनकहोत्रः, तदपत्यं गृत्समदः, तदपत्यं शुनकः § इत्येक एव वंश इति । नैवं युक्तम् । कुतः ? सत्याषाढवचनविरोधात् । तथाहि सत्याषाढो वदति– 'त्रीननन्तरानित ऊर्ध्वान् मन्त्रकृतोऽध्वर्युर्वृणीते, अमुतोऽर्वाचो होता' इति । अत्र अनन्तरानित्यस्यायमर्थो व्याख्यातो भाष्यकारेण मातृदत्तेन– 'मन्त्रदृग्भिरन्यैरव्यवहितान्' इति । तत्र एकवंशत्वे सति मन्त्रदृग्भिरेव व्यवधानं कल्पितं स्यात् । तस्मादुक्तो व्यवस्थितविकल्पः । एवं वक्ष्यमाणानामपि गर्गहरितकण्वरथीतरशाण्डिलादीनां वंशभेदकल्पनया प्रवरविकल्पा व्याख्येयाः । व्याख्याता भृगव इति उक्तानुभाषणस्य च प्रयोजनमविद्यमानभृगुशब्दानामपि शुनकमित्रयुवां भृगुत्वं यथा स्यादिति । तेन च प्रयोजनं 'भृगूणां त्वेति यथर्ष्याधानम्' 'भार्गवो होता भवति' इत्यादावुपप्रवेशसिद्धिरिति ।

ननु इह किमर्थं कात्यायनलौगाक्षी तत्रतत्र प्रतिगणं इत्येतेषामविवाह इति, न पुनरेकत्रैवाऽऽहतुः । असमानप्रवरैर्विवाह इति गौतमवदेकत्रैव युक्तं वक्तुम्, ग्रन्थलाघवात् । अत्र प्रवराध्यायसंप्रदायविदः परिहारमाहुः– मत्स्यपुराणे मत्स्यरूपं भगवन्तं विष्णुं तत्रतत्र गणानुक्त्वा प्रतिगणं 'एतेषामविवाहः' इति वदन्तं श्रुत्वा तत्संप्रदायात्कात्यायनलौगाक्षी तथैवाऽऽहतुरिति । अन्ये वदन्ति– बोधायनादिभिरन्यैः सूत्रकारैः समानगोत्राणामविवाह उक्तः, न समानप्रवराणामिति तद्दृढीकरणार्थं तत्रतत्राऽऽहतुरिति । अपरे वदन्ति– बहुकृत्वोऽपि तथा वेदितव्यमिति । तथाऽन्ये वदन्ति– सूत्रकारयोः शैली सेति । अवश्यमेव हि कस्यचित् काचिच्छैली भवति । यथा बोधायनः प्रथमकाण्ड एव 'इत ऊर्ध्वानध्वर्युर्वृणीते-ऽमुतोऽर्वाचो होतेत्येष एवोभयोः सर्वत्रोद्देशः' इत्युक्त्वाऽपि तत्रतत्र प्रतिगणं 'होता, अध्वर्युः' इति वदति ग्रन्थगौरवभयं त्यक्त्वा । तथा च आपस्तम्बादयोऽपि एकार्षेयवसिष्ठशुनकादीनां प्रवरेष्वेव 'होता, अध्वर्युः' इति वदन्ति । तथा आश्वलायनः प्रवरमात्रमेव सर्वत्र वदति, नान्यत् किञ्चित् । तथा कात्यायनलौगाक्षी चेति । अपरे वदन्ति– यथा भिन्नगोत्रात्समानगोत्राः संनिकृष्टा इति कृत्वा तत्रतत्र विवाहे दोषा उक्तास्तथा सगोत्रादपि समान( गोत्रः ? ) गणः संनिकृष्टतरः, एकर्ष्यपत्यत्वेन भ्रातृतुल्यत्वात्, तत्रतत्र विवाहे ततोऽपि गुरुतरो दोष इति दर्शयितुं तत्रतत्राऽऽहतुरिति । अपरे पण्डितम्मन्याः स्वमनीषया व्याचक्षते– एतेषामेवाविवाहोऽस्मिन् गणे, नान्येषामिति मत्वा तत्रतत्राऽऽहतुरिति । एवं तर्हि सूत्रकारयोः *श्रोत्रियत्वमापादितं स्यात् । कथम् ? तथा सति गणान्तरोक्तानां समानगोत्राणामपि सतां तस्मिन्नेव गणे विवाहप्रतिषेधो

* अत्र 'भृगोरपत्यं गृत्समदः, तस्मादेव जाताः केचिद्' इत्यत्र ग्रन्थत्रुटिः, अन्यथा प्रवरचतुष्ट्वोपपादकस्य वंशचतुष्टयस्यासंभवः । मा. जॉन ब्रौ-महाशयेन तु यथामुद्रित एव ग्रन्थोऽनूदितः, नापि तत्र टिप्पणी लिखिता ।

§ अत्र शुनकद्वयकल्पनं चिन्त्यं, 'भृगोरपत्यं शुनकः, तदपत्यं शुनहोत्रः, तदपत्यं गृत्समदः' इति वा, 'भृगोरपत्यं शुनहोत्रः, तदपत्यं गृत्समदः, तदपत्यं शुनकः' इति वा एकेनैव शुनकेन अभिप्रेतार्थसिद्धेः । एकवंशत्वात् वैनैकेनाप्येकेनैव एकवचनान्तं 'शुनकाः' इति समाख्याऽपि लिप्स्येत ।

* अत्र 'अश्रोत्रियत्वमापादितम्' इति वा, 'श्रोत्रियत्वं व्यापादितम्' इति वा भवितुं युक्तम् । अथवा 'आपादितम्' इत्यत्रैव 'व्यापादितम्' इत्यर्थो बोध्यः ।

न स्यात्। इष्यते च प्रतिषेधः। तस्माद्यथोक्त एवाभिप्राय इति। गोप्र, ३३–३६

(२) इदानीं गोत्राणि तद्गणाश्च संख्याविशेषविशिष्टास्तथा तत्प्रवराश्च स्वरूपतत्संख्याविकल्पविशिष्टा निरूप्यन्ते।

ननु– गोत्रप्रवराणां शाखोपशाखाभेदेनानन्त्यात् बौधायनापस्तम्बकात्यायनाश्वलायनकल्पसूत्रमत्स्यपुराणादिषु च एकत्राश्रुतानामपि अन्यत्र श्रवणात् आनन्त्यावगमात् तत्तन्महर्षिगणान्तर्गतानां गोत्राणां प्रवराणामपि स्वरूपक्रमविशेषेषु गोत्रप्रवरऋषिनामधेयवर्णेषु च सवादाभावाच्च अशक्यं सामस्त्येन निरूपणम्– इति चेत्, न, 'गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च। ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्॥' इति बौधायनोक्तप्रवरसंख्यानुसारेणैव निरूपणात्। अत एव स्मृत्यर्थसारकृता बौधायनानुसरणमेव कृतम्– 'मुनिप्रणीतप्रवरैरूनपञ्चाशता वयम्। अनन्तान्यपि गोत्राणि वर्गीकृत्याभिदध्महे॥' इत्यादिना। बौधायनवाक्यस्यार्थो मञ्जर्यां कृतः– दशगुणितं सहस्रं अयुतमुच्यते। दशगुणितं अयुतं लक्षात्मकं नियुतमुच्यते। दशगुणितं नियुतं प्रयुतमुच्यते। दशगुणितं प्रयुतं अर्बुदं कोट्यपरपर्यायमुच्यते। सहस्रप्रयुतार्बुदशब्देषु बहुत्वविशेषविवक्षायां त्रिष्वपि त्रिगुणीकृतेषु तदर्थेषु गोत्राणां तिस्रः कोटिसंख्या भवन्ति। तदविवक्षायां पुनरधिकान्यपि तानि भविष्यन्तीति कियत्यः कोटिसंख्या इति नावधारयितु शक्यते। अत्र संख्याविवक्षायां गोत्राणां सान्तत्वेऽपि अनन्तानीत्यभ्युपेत्यवादतया अपिशब्दो व्याख्येयः। मुनिप्रणीतेत्यनेन ऋषिदर्शनात् इत्यस्यार्थ उक्तः। ततश्च यद्यपि अपत्यापत्यवत्त्वभावेन साक्षात्परंपरयाऽवस्थितेषु ऋषिषु एतानि एतावन्ति च गोत्राणि, एते एतावन्तश्च प्रवरा इति विवेकेन शीघ्र निरूपयितुं न शक्यन्ते, तथापि प्रवराध्यायकर्तृभिर्ऋषिभिर्ये प्रणीताः प्रणयनेन नियमिताः ऊनपञ्चाशत्संख्यया भार्गवादिरूपेण स्वरूपविशेषतश्च परिच्छिन्नाः प्रवराः, तैर्वर्गीकृत्य अवान्तरभेदभिन्नानि कृत्वा अनन्तान्यपि गोत्राणि अभिदध्महे इति स्मृत्यर्थसारवचनस्यार्थः। वर्गाः वंशा गणा इति पर्यायाः। ननु– प्रवराणां ऊनपञ्चाशत्त्वं न नामतो नियन्तुं शक्यम्, अष्टनवतिसंख्यया आश्वलायनेन प्रतिपादनात्, आपस्तम्बकात्यायनसत्याषाढादिभिः न्यूनाधिकसंज्ञाभिरपि अभिधानात्– इति चेत्, नैष दोषः। बौधायनक्रममाश्रित्यैव ऊनपञ्चाशदिति संख्योच्यते। तत्क्रमे च वक्ष्यमाणगणानां मध्ये तत्तद्गणे व्रियमाणत्वेन समुदायीकृत्योक्तानां प्रवराणां तादृशान् समुदायानाश्रित्येति अन्यत्र गणाना न्यूनाधिकसंख्ययाऽभिधानेऽपि न काचित् क्षतिरिति बहवः। अस्माभिस्तु आश्वलायनादिप्रणीताना सर्वेषामपि गोत्रप्रवरनिबन्धनाना प्रामाण्याविशेषात् प्रसिद्ध्यविरोधाच्च बौधायनेन अनुक्तमपि क्वचित्क्वचित् गोत्रतद्गणप्रवरविकल्पादिकं आश्वलायनादिसूत्रान्तराद्युक्तोपसंहारेण (गोत्राणि प्रवराश्चोच्यन्ते?) उच्यते।

तत्र पूर्वं भृगुगणाङ्गिरोगणौ महागणौ निरूप्येते। तत्र भृगवो द्विविधाः, जामदग्न्या अजामदग्न्याश्च। तत्र जामदग्न्येषु वत्सविदौ द्वौ गणौ। द्वितीये तु पञ्च गणाः। ते च आर्ष्टिषेणाः यस्काः मित्रयुवो वैन्याः शुनका इति। एते एव केवलभृगव इति व्यवह्रियन्ते। तत्र अस्मिन् गणसप्तके पञ्चार्षेयं गणत्रयं, ततस्त्र्यार्षेयं गणत्रयं, तत एक एकार्षेयः। पृ. ६१५–६१६

तत्र ये जामदग्न्या वत्सास्तेषां पञ्चार्षेयः प्रवरः। अजामदग्न्याना वत्साना त्र्यार्षेय एव भार्गव च्यावन आप्नवानेति। पृ. ६१८

द्विविधा * अप्येते विदा जामदग्न्या एव, पञ्चार्षेयेष्वपि और्वशब्दसमन्वयात् जमदग्नेः सत्तयाऽनुवृत्तिप्रतीतेः, तस्य जामदग्न्येष्वेव दृष्टत्वात्। तथा च 'और्वजामदग्न्यशब्दौ जामदग्न्यत्वप्रयुक्तौ' इत्याश्वलायनसूत्रवृत्तिकारेणोक्तम्।

वत्सविदार्ष्टिषेणानां परस्परमविवाहः। कुतः? पञ्चार्षेयाणां भार्गवच्यावनाप्नवानेति त्र्यार्षेयसाम्यात्, त्र्यार्षेयाणां द्व्यार्षेयसाम्यात्। वत्सविदयोर्जामदग्न्यत्वेन सगोत्रत्वात् पञ्चप्रवरे त्रिप्रवरसाम्येन च न विवाहः। तत्रागस्त्याष्टमसप्तर्षेर्जमदग्नेः वत्सेषु व्रियमाणतयाऽनुवृत्तेः,

* पञ्चार्षेयप्रवरास्त्र्यार्षेयप्रवराश्च।

जमदग्निमुपक्रम्य विदानामप्युक्तत्वात् सत्तया तस्यैवानुवृत्तेः तेषां सगोत्रत्वम् । ननु– वत्सविदाभ्यामार्ष्टिषेणस्यानुद्वाहनिमित्तं न सगोत्रत्वम्, अस्याजामदग्न्यत्वात् । नापि प्रवरसाम्यम्, वत्सविदयोर्भार्गवौर्वजामदग्न्येति, आर्ष्टिषेणानां भार्गवार्ष्टिषेणानूपेति त्रिप्रवरपक्षे भेदादिति चेत् न, 'वत्सा विदा आर्ष्टिषेणा इत्येतेषामविवाहः' इति बौधायनोक्तेः । अजामदग्न्यत्वेऽप्येषाम् 'एते पञ्चावत्तिनः' इति बौधायनोक्त्यैव पञ्चावत्तिनो भवन्ति । यस्तु आर्ष्टिषेणेष्वपि केषाचित् जामदग्न्यत्वव्यवहारः, स पञ्चावत्तित्वसाम्यादविवाहसाम्याच्च । न त्वेषां वस्तुतस्तत्त्वम्, तथात्वे मानाभावात् । स्वे स्वे गणे सर्वत्राविवाह इति स्पष्टमेवेति न विचारार्हम् ।

पृ. ६१९–६२०

अत्र केचित्– शुनकानां जनकभेदेन चतुर्विधत्वात् तत्तच्छुनकवंश्यानां तत्तत्प्रवरकल्प इत्येवं व्यवस्थितविकल्प इति । शुनकादेवोत्पन्नाः केचित्, गृत्समदादेव केचित्, भृगोरपत्यं गृत्समदः, तस्मादेव केचित्, भृगोरपत्यं शुनहोत्रः, तदपत्यं गृत्समदः, तस्मादेव केचित् इति । तत्र शुनकनामधेयमात्रं एकम्, वंशास्तु भिन्ना एव । नन्वेवं भृगोरपत्यं शुनकः, तदपत्यं शुनहोत्रः, तदपत्यं गृत्समदः, तदपत्यं शुनकः इत्येक एव वंशः कस्मान्न कल्प्यते । नैतत् युज्यते । सत्याषाढवचनविरोधात् । तथाहि– सत्याषाढो वदति–'त्रीननन्तरानत ऊर्ध्वान् मन्त्रकृतोऽध्वर्युर्वृणीते, अमुतोऽर्वाञ्चो होता' इति । अत्र अनन्तरानित्यस्य अयमर्थो व्याख्यातो भाष्यकारेण मातृदत्तेन–'मन्त्रदृग्भिः अन्यैः अव्यवहितान्' इति । तत्र एकवंशत्वे सति मन्त्रदृग्भिरेव व्यवधानं भवितं स्यात् । तस्मादुक्तो व्यवस्थितविकल्पः । एवं वक्ष्यमाणानामपि गर्गहरितकण्वरथीतरशाण्डिल्यादीनां वंशभेदकल्पनया प्रवरविकल्पा व्याख्येया इति ।

तदसत् । तत्र हि वंशभेदः कल्प्यते, यत्र अनादिपरंपरया अविगीता स्मृतिः । यथा वत्सानां 'वयं जामदग्न्या वत्साः, वयं अजामदग्न्याः' इति । नैवं शुनकेषु तादृशी स्मृतिरस्ति । न च प्रवरभेद एव तत्कल्पकः, तस्य प्रयोगभेदादेवोपपत्तेः व्रीहियवयोरिव । न च तत्कल्पकमन्यत्प्रमाणमस्ति । तस्मात् अव्यवस्थित एवायं विकल्प इति वृत्तिकारः । इदानींतनेषु तु पूर्वपूर्वपरिग्रहवशात् व्यवस्था युक्ता । एतेन सर्वे विकल्पा व्याख्याताः ।

एते चत्वारोऽपि भिन्नगोत्राः स्वस्वगणे सगोत्राः *सर्वप्रवरसाम्यादविवाह्याः । प्रवरविकल्पेऽपि एकत्र* द्विप्रवरसाम्यं सर्वत्राविवाहप्रयोजकम् । विकल्पाभिधायिभिरपि कात्यायनादिभिरेतेषां अविवाह इत्युक्तत्वाच्च । अत एव साम्यात् एवंजातीयकेष्वपि गोत्रत्वप्रसिद्धिर्लौकिकानाम् ।

वैदविश्वज्योतिषां त्र्यार्षेयः प्रवरः, भार्गववैदविश्वज्योतिषेति । शाठरमाठराणां त्र्यार्षेयः प्रवरः, भार्गवशाठरमाठरेति । क्वचिदेतद्गणद्वयम् । इति बौधायनोक्तो भृगुगणनिर्णयः । संप्र. ६२२–६२३

## प्रवरसंग्रहकारः

जामदग्न्यो वीतहव्यो वैन्यो गृत्समदाह्वयः ।
वाध्र्यश्वो गौतमाख्यश्च भरद्वाजाह्वयः कपिः ॥
हारीतो मौद्गल्यकण्वौ विरूपो विष्णुवृद्धकः ।
अत्रिर्विश्वामित्रकश्च वसिष्ठः कश्यपाह्वयः ।
अगस्त्यश्चेति मुनयो ह्यष्टादश गणाः स्मृताः ॥

### जामदग्न्याः

जामदग्न्यश्च वत्सश्च श्रीवत्सश्च्यवनाह्वयः ।
आप्नवानौर्वसावर्णिजीवन्ता देवरातकः ॥

---

(१) प्रपा. २०९ माल्यश्च (माल्योऽपि); त्रिपा. ७०१ वैन्यो (वैण्यो) उत्तरार्धे (वाध्र्यश्वो गौतमश्चैव भरद्वाजः कपिस्तथा ।); ज्योनि. १३३; बाल. १५२ पृ. १७६; संग. १७७.

(२) प्रपा. २०९ प्रथमार्धे (हारीतः कण्वो मौद्गल्यो विरूपो विष्णुवर्धक ।); त्रिपा. ७०२ अत्रिर्विश्वामित्रकश्च (अत्रिर्विश्वामित्रकौ च); ज्योनि. १३३ प्रथमार्धे (हरितो मौद्गलः कण्वो विरूपो विष्णुवृद्धकः ।) अत्रिर्विश्वामित्रकश्च (अत्रिर्विश्वामित्रकौ च); बाल. १५३ पृ. १७६ हारीतो (हरितो) अत्रिर्विश्वामित्रकश्च (अत्रिर्विश्वामित्रौ च); संग. १७७–१७८ मौद्गल्यकण्वौ (मौद्गलः कण्वो) मित्रकश्च (मित्र कौत्सो).

(३) प्रपा. २०९ जामदग्न्यश्च वत्सश्च (जामदग्न्यश्च वात्स्यश्च) सावर्णिजीवन्ता (सावर्णिर्जीवन्तो); त्रिपा. ७०२ जीवन्ता

[1]वीतशायनशाखाख्यौ वैरोहित्योऽथटाह्वयः ।
मण्डुः प्राचीनयोग्यः स्यादार्ष्टिषेणस्त्वनूपकः ॥
एतानि भार्गवाख्यानि दश सप्तोत्तराणि च ।
जामदग्न्यगणे त्वस्मिन्न विवाहः परस्परम् ॥[2]

वीतहव्याः ( यस्काः )

[3]वीतहव्या यस्कमौनमौकवाधूलसंज्ञकाः ।
सावेतसः षडेतानि भार्गवाख्यो ह्ययं गणः ॥
[4]वीतहव्यस्य चान्योन्यं न कार्यं पाणिपीडनम् ॥

वैन्याः

[5]वैन्यः पार्थश्च गोत्रे द्वे भवतो, भार्गवाह्वयः ।
एष वैन्यगणस्तस्मिन्न चान्योन्यं करग्रहः ॥

गृत्समदाः ( शुनकाः )

उभे गोत्रे गृत्समदः शौनको भार्गवाह्वयः ।
गणे गृत्समदे तस्मिन् नान्योन्यं पाणिपीडनम् ॥[1]

वाध्र्यश्वाः ( मित्रयुवः )

वाध्र्यश्वो मित्रयुश्चैव गोत्रे भार्गवनामकौ ।
वाध्र्यश्वस्य गणस्तस्मिन्नुद्वाहो न परस्परम् ॥[2]
जामदग्न्यादयः पञ्च गणा भृगुगणाः स्मृताः ।
तथाप्येषां गणानां तु विवाहः स्यात्परस्परम् ॥[3]
जमदग्निगणस्यापि विश्वामित्रगणस्य च ।
न देवरातगोत्रेण विवाहः स्यात् परस्परम् ॥[4]

## स्मृत्यर्थसारः

[5]मुनिप्रणितप्रवरैरूनपञ्चाशता वयम् ।
अनन्तान्यपि गोत्राणि वर्गीकृत्यामिदध्महे ॥

---

( जीवन्तो ); ज्योनि. १३३ सावर्णिजीवन्ता (सावर्णी जीवन्तो) ; बाल. १।५३ पृ. १७७ ज्योनिवत् ; संग. १७८ सावर्णिजीवन्ता ( सावर्णिर्जीवन्तो ).

(१) प्रपा. ३०९ पूर्वार्धे (वीतशौर्यश्च शाखाख्यो वैरोहितवटाह्वयः ) मण्डुः ( मन्दू ), विपा. ७०२ शाखाख्यौ ( शाखाख्यो ) त्योऽथटा ( त्यो वटा ) मण्डुः ( मन्दु ) ; ज्योनि. १३३ पूर्वार्धे ( शीतशायनशाखाख्यो वैरोहित्यो वटाह्वयः। ) मण्डुः ( मण्डः ) स्त्वनूपकः ( स्त्वरूपक ); बाल. १।५३ पृ. १७७ पूर्वार्धे ( वीतत्सायनशाखाख्यो वैरोहित्यो वटाह्वय ) स्यादार्ष्टि ( स्यादर्ष्टि ) ; संग. १७८ पूर्वार्धे विपावत्, मण्डुः ( मण्डः ).

(२) प्रपा. ३०९ त्वस्मिन्न ( तस्मिन्न ), विपा. ७०२ ; ज्योनि. १३३ प्रपावत्; बाल. १।५३ पृ. १७७ प्रपावत्; संग. १७८ प्रपावत्.

(३) प्रपा. ३०९ ( वीतहव्या मौनमौकावपि वाधूलसंज्ञकाः । सावेदश्च षडेतानि भार्गवाख्यान्वये गणाः ॥) ; विपा. ७०२ वीतहव्या यस्क ( वीतहव्यो यास्क ) ख्यो ह्ययं ( ख्यान्वयो ) ; ज्योनि. १३३ ( वीतहव्ययस्कमौनमौकवाधूलसंज्ञकाः । सावेदश्च षडेतानि भार्गवाख्यान्वये गण ॥ ) ; बाल. १।५३ पृ. १७७ सावेतसः ( सावेदश्च ) ; संग. १७८ पूर्वार्धे विपावत्, ख्यो ह्ययं ( ख्यान्वये ).

(४) प्रपा. ३०९ ; विपा. ७०२ ; ज्योनि. १३३ चान्योन्यं ( वाऽन्योन्यं ) ; बाल. १।५३ पृ. १७७; संग १७८.

(५) प्रपा ३०९ भार्गवाह्वय ( भार्गवाह्वकौ ) उत्तरार्धे (एष वैन्यगणस्तत्र ह्यन्योन्यं न करग्रहः । ) ; विपा. ७०२ वैन्यः (वैण्यः) उत्तरार्धे ( एष वैण्यगणस्तत्र नान्योन्यं वै करग्रहः । ); ज्योनि. १३३ उत्तरार्धे ( एष वैन्यगणस्तत्र अन्योन्यं न करग्रहः । ) ; बाल. १।५३ पृ. १७७ भार्गवाह्वय (भार्गवाह्वक) ; संग. १७८ उत्तरार्धे ( एष वैन्यगणस्तत्र नान्योन्यं च करग्रहः । ).

(१) प्रपा. ३०९ ; विपा. ७०२ तस्मिन् ( चास्मिन् ) ; ज्योनि. १३३ गणे गृत्समदे ( गणो गृत्समदः ) ; बाल. १।५३ पृ. १७७ भार्गवाह्वयः ( भार्गवाह्वक ) ; संग. १७८ उभे गोत्रे ( उभयो वै ).

(२) प्रपा. ३०९ पूर्वार्धे ( वाध्र्यश्वो मित्रयुतो वै गोत्रे भार्गवनामकः । ) ; विपा. ७०२–७०३ गोत्रे ( उभौ ) ; ज्योनि. १३३ पूर्वार्धे ( द्वे वाध्र्यश्वो मित्रयुग्मो गोत्रे भार्गवनामकः । ) ; बाल. १।५३ पृ. १७७ पूर्वार्धे ( द्वे वाध्र्यश्वो मित्रयुग्यो गोत्रे भार्गवनामकः ।); संग. १७८ मित्रयुश्चैव गोत्रे ( मित्रयुश्चैव उभौ ) गणस्त ( गणे त ).

(३) प्रपा. ३०९ तथाप्येषां ( न चाप्येषां ) ; विपा. ७०३ ; ज्योनि. १३३ तथाप्येषां (न चैतेषां ) ; बाल. १।५३ पृ. १७७ प्रपावत् ; संग. १७८.

(४) प्रपा. ३१० ( विश्वामित्रा जामदग्न्या देवरातविवर्जिताः । परस्परं विवाह्याः स्युः सर्वत्रेति विनिश्चयः ॥ ) ; संप्र. ६५४ प्रयोगपारिजाते इत्युक्तम् ; चम. १०६ ( = ) ; संम. ६१ प्रयोगपारिजाते संग्रहे इति ; प्रद. १२९ प्रयोगपारिजाते यथा संग्रहे इति ; विपा. ७०६ ; ज्योनि. १३४ ; प्रका. ३४९ ; बाल. १।५३ पृ. १७८, १८८ : १८६ ( देवराता विवाह्याः स्युः सर्वत्रेति च संमता । विश्वामित्रान् जामदग्न्यान् वर्जयित्वा ततोऽन्यतः ॥ ) कृष्णीये इत्युक्तम् ; संग. १८१ पृ. ; कृभ. १०५१.( = ) ; संर. ४४९.

(५) स्मृसार. १५ ; संप्र. ६१५ ; संम. ६२ वर्गीकृ ( चाहीकृ ).

जामदग्न्यौ वत्सविदार्ष्टिषेणाः परस्परम् ।
नाप्नियुः प्रवरैक्येन सगोत्रत्वेन चादिमौ ॥
यस्का मित्रयवो वैन्याः शुनकाः प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥
उक्ताः सप्त भृगोर्वंशाः ॥

### मण्डनः

जमदग्निर्भरद्वाजो विश्वामित्रोऽत्रिगौतमौ ।
वसिष्ठः कश्यपोऽगस्तिरेषां येष्वनुवर्तनम् ।
येषां तुल्यर्षिभूयस्त्वं नोद्वहन्ति मिथश्च ते ॥

एषामष्टानां एकस्यापि येषु प्रवरेष्वनुवर्तनं साम्यं, येषां प्रवराणां त्र्यार्षे द्वयोः पञ्चार्षे त्रयाणामैक्यं तत्राविवाहः स्फुट एव । निप्र. २७७

(१) स्मृसार. १५ जामदग्न्यौ ( जामदग्न्या ); चम. १०० ( = ); संम. ६२; कुभ. १०३७ ( = ).
(२) स्मृसार. १५; चम. १०१ (=) यस्का (यास्का); संम. ६२ मित्रयवो ( मित्रयुवो ); संकौ. १८५ मित्रयवो वैन्याः ( मित्रयुवो वेन्याः ); कुभ. १०३८; संर. ४३१ संमवत्.
(३) स्मृसार. १५; संम. ६२.
(४) निप्र. २७७ मिथश्च ते ( मिथस्ततः ); संर. ४३१.

भृगूणां वीतहव्यात्प्राग्विवाहो न परस्परम् ।
वीतहव्यादयः स्वं स्वं गणं हित्वा परावरैः ॥
विवाहं कुर्वते सर्वे तेभ्यः प्राक्पठिता अपि ।
लौगाक्षीणां दिवोदासा वीतहव्याः सधर्मिणः ॥

### अनिर्दिष्टकर्तृकवचनानि

भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः ।
श्यैतादयस्त्रयस्तेषां विवाहो मिथ इष्यते ॥
भृग्वङ्गिरोऽन्यं ( न्यद् ) यत्किंचिद्दष्येर्यावत्सु वर्तनम् ।
तावत्समानगोत्रत्वमिति केचित्समूचिरे ॥
तन्नैवं सति सर्वत्र सगोत्रत्वनिबन्धने ।
अनुद्वाहे तु कुत्र स्यात्प्रवरैक्यं प्रयोजकम् ? ॥
कात्यायनेन तु गणा भृगोर्द्वादश कीर्तिताः ।
जामदग्न्याश्चतुर्भेदास्तथैवाजामदग्न्यकाः ॥
वात्स्यायना अवात्स्याश्च वैजवाः शाव ( ठ )-रादिकाः ।
विदार्ष्टिषेणा वत्सादि वेदविश्वादयस्तथा ।
पार्थश्यैता आपिशला वीतहव्याह्वगृत्समाः ॥

(१) संर. ४३१. (२) विपा. ७१४.
(३) कुभ. १०३०. (४) कुभ. १०३९.

## गौतमकाण्डम्

[ अङ्गिरसस्त्रिविधाः— गौतमाः भरद्वाजाः केवलाङ्गिरसश्चेति । ]

### बौधायनश्रौतसूत्रम्

#### आयास्याः

अङ्गिरसो व्याख्यास्यामः—

१ आयास्याः २ श्रोणीवेधाः ३ काचाक्षयः ४ मूढरथाः ५ सात्यकयः ६ तौडेयाः ७ कौमारवत्याः ८ तौडिः ९ दार्भिः १० देवकिः ११ सात्य-

(१) बौश्रौप्र.; गोप्र. ३६; संप्र. ६२६-६२७; संम. ५८; प्रद. ११४; संकौ. १८५-१८६; संर. ४३१-४३२.
२ बौश्रौप्र. आणीवेधाः; गोप्र. संप्र. आग्निवेधाः; संम. आग्निवेयाः; प्रद. श्रोणीचेपकः; संकौ. संर. श्रोणिवेधाः.
३ संम. कावाक्षयः; प्रद. वाक्षिः; संकौ. संर. ( ० ).
४ बौश्रौप्र. मूढाः.
५ गोप्र. प्रद. संकौ. संर. सत्यकयः; संप्र. संम. ( ० ).
६ बौश्रौप्र. तैदेहाः; गोप्र. स्वैदाहाः; संप्र. प्रद. संकौ. स्वैदेहाः; संम. संर. वैदेहाः.
७ गोप्र. कौमारवत्याः.
८,९ गोप्र. तौडिः दर्भिः; संप्र. ताडिः तौडेत्यपि क्वचित्, दर्भिः; संम. प्रद. ताण्डिः, दर्भिः; संकौ. तौडन्दर्भिः; संर. तौण्डदर्भिः; जैबी. तौण्डिः, दार्भिः.
१० संकौ. संर. दैवकिः.
११ गोप्र. सात्यकः; संप्र. सात्यमुग्रिकः; प्रद. सात्यमुग्रीकः.

सुमिः १२ कौबाह्याः १३ बौध्याः १४ नैकरिः १५ स्तस्तैपकिः १६ कीलालयः १७ कारुणिः १८ काठोरिः १९ काशीवाजाः २० काक्षीवाः २१ पार्थिवाः इत्येते आयास्या गौतमाः। तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–आयास्य–गौतम– इति होता । गोतमवद्– अयास्यवद्– अङ्गिरोवद्–इत्यध्वर्युः ॥

### शारद्वताः

१ शारद्वताः २ आभिजिताः ३ रौहिण्याः ४ क्षीरकरम्भाः ५ सौमुचयः ६ सौयमुनाः

---

१२ गोप्र. बाह्य ; संप्र. प्रद्. बाह्याः .

१३ गोप्र. संप्र. प्रद्. संकौ. संर. बौम्याः ; संम. बौम्याः .

१४ गोप्र. नैऋकृषिः ; संप्र. नैकरुष्टि , नैकरिः इत्यपि क्वचित्; संम. नैऋरुष्टिः ; प्रद्. नैकरिष्टिः ; संकौ. संर. नौकरिः .

१५ गोप्र. स्तैपिकिः ; संप्र. प्रद्. स्तैषकिः ; संम. स्तैकषिः .

१६ गोप्र. किलाल्यः ; संप्र. संम. किरालयः ; प्रद्. किलालिः ; संर. कीलाल्पिः .

१७ प्रद्. कारेणि ; संर. कारुणयः ; जेबी. आरुणिः .

१८ गोप्र. संप्र. संम. कठोरिः ; प्रद्. कठोरः ; संर. कटोरयः .

१९ गोप्र कासि ; संप्र. संम. काशीवाः ; प्रद्. कमीकः ; संकौ. संर काशिवाजः .

२० बौश्रौप्र. (०); गोप्र. काक्षिवाः ; संप्र. संम. काक्षीवाः ; प्रद्. काक्षिवः ; संकौ. संर. साक्षीकः .

२१ गोप्र. संम. ( ० ).

( १ ) बौश्रौप्र. ; गोप्र. ३६ ; संप्र. ६२७ ; संम. ५८ ; प्रद्. ११४ , संकौ. १८६ , संर. ४३२.

१ गोप्र. संप्र. संर. शरद्वन्ताः ; प्रद्. संम. शरद्वन्तः ; संकौ. शरद्वना .

२ गोप्र. मंप्र संकौ. अभिजिताः ; संम. अभिजितः ; प्रद्. अभिजिति .

३ संप्र. संम संकौ. संर. रोहिण्याः .

४ संम. क्षीरकरभा .

५ गोप्र. सौमुचयाः .

६ गोप्र. सौम्यायनाः ; संप्र. संम. प्रद्. संकौ. संर. सौयामुना .

७ औपविन्दवः ८ राहूगणाः ९ राणयः १० मार्पण्याः इत्येते शारद्वता गौतमाः। तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–गौतम–शारद्वत–इति होता । शरद्वद्वद्–गोतमवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

### कौमण्डाः

१ कौमण्डाः २ मामन्थरेषणाः ३ मासराक्षाः ४ काष्ठरेषयः ५ ऊर्जायनाः ६ वानजायनाः ७ वाशयः इत्येते कौमण्डा गौतमाः। तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस–औचथ्य–काक्षीवत–गौतम–कौमण्ड–इति होता । कुमण्डवद्–*गोतमवत्* –*कक्षीवद्वद्* –*उचथ्यवद्* –*अङ्गिरोवद्*–इत्यध्वर्युः ॥

एते काक्षीवता गौतमाः इत्याश्वलायनः । आयास्यौशिजा इति केचित् । औशिता इत्यपि केचित् ।

संप्र. ६२८

---

७ संम. कौपविन्दवः .

८ संप्र. संकौ. संर, रहूगणाः .

९ गोप्र. संप्र. संम. प्रद्. संकौ. गणय. ; संर. गणयाः .

१० गोप्र. माषण्य ; संप्र. माषण्याः ; संम. मयणाः ; प्रद्. मार्ष्ण्य; संकौ. संर. भाषण्याः .

( १ ) बौश्रौप्र. ; गोप्र. ३७ ; संप्र. ६२७ ; संम. ५८ ; प्रद्. ११५ ; संकौ. १८६ ; संर. ४३२.

१ संम. कौमाण्डा .

२ गोप्र., मन्थरेषणाः ; संप्र. मामन्त्रेषणाः ; संम. मानसरेषणाः ; प्रद्. मामन्थरेषण. .

३ संकौ संर. मांगुराक्षाः .

४ संम. कापत्रेरभय ; प्रद्. काष्टेरभिः ; संकौ. संर. काष्ठरेषय .

५ गोप्र. *अज्ञायनाः* ; संप्र. संम. संकौ. संर. *आज्ञायनाः* ; प्रद्. आजायनः .

६ गोप्र. संप्र संम. वाजायनाः ; प्रद् वायनः ; संकौ. वाज्ञायनाः ; संर. वाजायनाः . अस्यानन्तरं संप्र काक्षीवनाः, औशिजाः, मामुरेषयः ; प्रद्. मामुरेषिः ; संकौ. संर. काक्षीवनाः, औशिजाः, मामुरेजयः इत्यधिकम् ।

७ गोप्र. संम. ( ० ) ; संप्र. वाशरयः ; प्रद्. वाशिरिः ; संर. वाशियः .

दीर्घतमसः

दीर्घतमसां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस–औचथ्य–काक्षीवत–गौतम–दैर्घतमस–इति होता । दीर्घतमोवद्–गोतमवत्–कक्षीवद्वद्–उचथ्यवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

औशनसाः

१ औशनसाः २ दिश्याः ३ प्रशस्ताः ४ सुरूपाक्षाः ५ महोदराः ६ विकंहृताः ७ सुबुध्याः ८ निहिताः ९ गुहाः इत्येते औशनसा गौतमाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–गौतम–औशनस–इति होता । उशनोवद्–गोतमवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

कारेणुपालयः

१ कारेणुपालयः २ वास्तव्याः ३ श्वेतीयाः ४ पौङ्गिष्टयः ५ औदज्ञायनाः ६ माधुक्षाराः ७ आजगन्धयः इत्येते कारेणुपालयो गौतमाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–गौतम–कारेणुपाल–इति होता । करेणुपालवद्–गोतमवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

वामदेवाः

वामदेवानां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–गौतम–वामदेव–इति होता । वामदेववद्–गोतमवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

गौतमानां सर्वेषामेवाविवाहः ॥

## आपस्तम्बश्रौतसूत्रम्

अथाऽङ्गिरसाम् ॥

अथेत्यधिकारः । अनन्तरं भृगुभ्योऽङ्गिरसां प्रवरा वक्तुमधिक्रियन्ते । पृथगधिकारकरणं भूयस्त्वाद्वक्तव्यानाम् । पूर्वश्रोत्तरत्र च *प्रतिप्रवरमथशब्देनाधिक्रियते । अर्थवत्त्वाच ।* कपर्दि.

आयास्याः

आयास्या गौतमाः । तेषां त्र्यार्षेयः । आङ्गिरस–आयास्य–गौतम–इति । गोतमवद्–अयास्यवद्–अङ्गिरोवद्–इति ॥

औचथ्याः

अथौचथ्या गौतमाः । तेषां त्र्यार्षेयः । आङ्गिरस–औचथ्य–गौतम–इति । गोतमवद्–उचथ्यवद्–अङ्गिरोवद्–इति ॥

औशिजाः

अथौशिजा गौतमाः । तेषां त्र्यार्षेयः । आङ्गिरस–औशिज–काक्षीवत–इति । कक्षीवद्वद्–उशिजवद्–अङ्गिरोवद्–इति ॥

वामदेवाः

अथ वामदेवा गौतमाः । तेषां त्र्यार्षेयः । आङ्गिरस–वामदेव–बार्हदुक्थ–इति । बृहदुक्थवद्–वामदेववद्–अङ्गिरोवद्–इति ॥

आयास्याः केचन गौतमा भवन्ति । अथ अविद्यमाने गौतमशब्दे *'औशिजा गौतमाः' 'वामदेवा*

---

(१) बौश्रौप्र. ; गोप्र. ३७ ; संप्र. ६२८ ; प्रद. ११५ ; संकौ. १८६ ; संर. ४३३.

(२) बौश्रौप्र. ; गोप्र. ३७ ; संप्र. ६२८ ; संम. ५८ ; प्रद. ११५ ; संकौ. १८६ ; संर. ४३३.

४ गोप्र. गुरूपास्याः ; प्रद. गुरूपाक्षिः .

५ संप्र. महोदयः .

६ बौश्रौप्र. विगदकाः ; प्रद. विकंहन्तः .

७ प्रद. सुबोध्यः .

८ गोप्र. संप्र. संम. प्रद. संकौ. संर. निहताः .

९ गोप्र. संप्र. संम. प्रद. ( ० ) ; संर. गुहः .

(३) बौश्रौप्र. ; गोप्र. ३७ ; संप्र. ६२८ ; संम. ५८ ; प्रद. ११५ ; संकौ. १८६ ; संर. ४३३.

१ गोप्र. कारेणपाल्यः ; संप्र. करेणुपाल्यः ; प्रद. कारेणपालिः .

२ गोप्र. वग्नव्याः .

४ गोप्र. संप्र. संकौ. संर. पौङ्गिष्ठाः ; संम. पौङ्गिटयः ; प्रद. पौङ्गिटः .

५ गोप्र. संप्र. संम. प्रद. संकौ. संर. औदमायनाः .

६ बौश्रौप्र. मान्धुरया ; गोप्र. मान्धुशराः ; संप्र. मान्धुशराः ; प्रद. माधुश्वरः ; संकौ. माधुशारः .

७ गोप्र. अजगन्धः ; संप्र. संम. प्रद. मजगन्धदः ; संकौ. अजगन्धाः ; संर. आजगन्धाः .

(१) बौश्रौप्र. ; संप्र. ६२८ ; संकौ. १८६ ; संर. ४३३.

(२) आपश्रौ. २४।८।१०–१७; गोप्र. ३८.

गौतमाः' इत्येतयोर्गौतमशब्देन विशेषणं क्रियते अन्यैर्गौतमैरेतेषां विवाहो मा भूदिति। किंच एतेषामपि मन्त्रकृदपिर्गौतमो विद्यत इति ख्यापनार्थं च।

कपर्दि.

## सत्याषाढश्रौतसूत्रम्

### आयास्याः

अथातोऽङ्गिरसाम्। अयास्या गौतमाः। तेषां त्र्यार्षेयः। आङ्गिरस-आयास्य-गौतम-इति। गोतमवद्-अयास्यवद्-अङ्गिरोवद्-इति॥

### औतथ्याः

अथौतथ्या गौतमाः। तेषां त्र्यार्षेयः। आङ्गिरस-औतथ्य-गौतम-इति। गोतमवद्-उतथ्यवद्-अङ्गिरोवद्-इति॥

### औशिजाः

अथौशिजा गौतमाः। तेषां त्र्यार्षेयः। आङ्गिरस- औशिज- काक्षीवत-इति। कक्षीवद्वद्-उशिजवद्-अङ्गिरोवद्-इति॥

### वामदेवाः

अथ वामदेवा गौतमाः। तेषां त्र्यार्षेयः। आङ्गिरस-वामदेव-बार्हदुक्थ-इति। बृहदुक्थवद्-वामदेववद्-अङ्गिरोवद्-इति॥

*अत्र अतःशब्दो हेत्वर्थे। यतो 'भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनाऽऽदधामीति भृग्वङ्गिरसामादध्यात्' इति श्रुत्या एकस्मिन्नेव वाक्ये भृगुगोत्रिणामाधानमन्त्रं पूर्वमुक्त्वा अनन्तरं गौतमादिगोत्रिणामाधानमन्त्र उक्तः, अतो हेतोरित्यर्थः। अङ्गिरसामिति निर्धारणे षष्ठी। अङ्गिरोगणाना मध्ये ये अयास्या गौतमा अङ्गिरसस्तेषा त्र्यार्षेयः प्रवरो भवतीत्यर्थः। अयास्या इति विशेषणम् 'अयास्य उद्गाता भवति' इत्यत्र ये अयास्यगणपठितास्तेषामेव ग्रहणार्थम्। उतथ्या औशिजा वामदेवा इत्यादीनि गौतमविशेषणानि सांकर्यनिवारणार्थानि।* अन्यत् स्पष्टम्। एषां सर्वेषां गौतमाङ्गिरसा परस्परमविवाहः, गौतमस्य म्रियमाणतया सत्तया वा अनुवृत्तेः, सगोत्रत्वात् प्रायेण द्विनिप्रवरसाम्याच्च। प्रव.

(१) मश्रौ. २२।३।२; संर. ४२०.

## आश्वलायनश्रौतसूत्रम्

### आयास्याः

गौतमानां आङ्गिरस-आयास्य-गौतम-इति॥

### औचथ्याः

उचथ्यानां आङ्गिरस-औचथ्य-गौतम-इति॥

### राहूगणाः

राहूगणानां आङ्गिरस-राहूगण्य-गौतम-इति॥

### सोमराजकाः

सोमराजकानां आङ्गिरस- सौमराज्य- गौतम-इति॥

### वामदेवाः

वामदेवानां आङ्गिरस-वामदेव्य-गौतम-इति॥

### बृहदुक्थाः

बृहदुक्थानां आङ्गिरस-बार्हदुक्थ-गौतम-इति॥

### कक्षीवन्तः

कक्षीवतां आङ्गिरस-औचथ्य-गौतम-औशिज-काक्षीवत-इति॥

अयमपि मन्त्रार्षेय एव। गानार्ग्य.

### दिर्घतमसः

दीर्घतमसां आङ्गिरस-औचथ्य-दैर्घतमस-इति॥

अयं त्र्यार्षेयः। अयास्योचथ्यरहूगणसोमराजकिवामदेवबृहदुक्थकक्षीवद्दीर्घतमस इत्येते गौतमाः। उचथ्यशब्दसमन्वयात् दीर्घतमसा गौतमत्वमस्त्येव। गौतमानां सर्वेषामविवाहः। पृषदश्वा रथीतरा आङ्गिरसश्च इति च स्मरन्ति। एकयोनि(ने)र्ऋक्षाः पुनर्भारद्वाजाः।

गानार्ग्य.

## कात्यायन-लौगाक्षि-श्रौतसूत्रम्

### औचथ्याः

अङ्गिरसो व्याख्यास्यामः-

१ औचथ्या गौतमाः २ तौलेयाः ३ अभिजितः

(१) आश्रौ. १२६; गोप्र. ३९.

(२) गोप्र. ३८; संप्र. ६२७, ६२९; प्रद. ११४; संकौ. १८६; संर. ४३२.

१ संप्र. प्रद. संकौ. औतथ्याः.

२ गोप्र. तालेयाः; संकौ. संर. क्षौलेयाः.

४ नैकरय: ५ लौगाक्षि: ६ राहूगण्य: ७ क्षीरकट: इति। ८ कद्रूकराणां ९ सैन्धव- १० गतव- ११ सांकर- १२ सौमिनीनां १३ पौप्पिण्डि- १४ भागल- १५ लुण्ड- १६ कुण्डवानां १७ कारोट- १८ कारवारिणां १९ उपविन्दु: २० मान्थरेपणय: २१ रोहितायना: २२ आङ्गारका: २३ क्रोष्टा: २४ आरुणय: २५ पार्थिवा: २६ मौदहायना: २७ स्कान्द- २८ सराव- २९ कौटिल्या: ३० नरोहिला: ३१ नीचय: ३२ वासमूलय: ३३ वासपुष्पय: ३४ वासस्तेवय: ३५ वासधूपय: ३६ फाचाक्षि- ३७ क्षपा: ३८ वारपि- ३९ करेलि- ४० करालीत्येषामविवाह:। तेषां त्र्यार्षेय: प्रवरो भवति। आङ्गिरस-औचथ्य-गौतम-इति। अङ्गिरोवद्-उचथ्यवद्-गौतमवद्-इति॥

## दीर्घतमस:

[1]दैर्घतमसानां त्र्यार्षेय: प्रवरो भवति। आङ्गिरस-औचथ्य-दैर्घतमस-इति। दीर्घतमोवद्-उचथ्यवद्-अङ्गिरोवद्-इति॥

## आयास्या:

[2]आयास्या गौतमा इत्येतेषामविवाह:। तेषां त्र्यार्षेय: प्रवरो भवति। आङ्गिरस-आयास्य-गौतम-इति। गौतमवद्-अयास्यवद्-अङ्गिरोवद्-इति॥

## औशिजा:

[3]आयास्यौशिजा गौतमा इति। एतेषां पञ्चार्षेय: प्रवरो भवति। आङ्गिरस-आयास्य-औशिज-गौतम-काक्षीवत-इति। कक्षीवद्वद्-गौतमवद्-उशिजवद्-अयास्यवद्-अङ्गिरोवद्-इति॥

---

४ गोप्र. प्रद. नैरकि:; संप्र. नैकरय:.

५ संप्र. संकौ. संर. (०); प्रद. लौकाक्षि:.

६ गोप्र. करसोगिण्य:; संप्र. संकौ. संर. करमोगिण्या:; प्रद. करगोण्य:.

७ संप्र. संकौ. संर. (०); प्रद. क्षीरकण्ट:.

८ गोप्र. कद्रूकराणां; संप्र. चाद्रूकरा:; प्रद. कद्रूकरा:; संकौ. संर. (०).

१० संर. गालवा:.

११ संकौ. संर. साङ्करा:.

१२ गोप्र. जेवी. सौमिनीनां; प्रद. सोमनि:.

१३ गोप्र. यौपिण्ड; संप्र. प्रद. पौप्यण्डय:; संर. पौष्पिण्डय:.

१४ संर. गावला:.

१५ संप्र. संकौ. संर. (०).

१६ प्रद. कुण्डेब:; संर. काण्डवा:.

१७ संप्र. संकौ. कारोदा:; संर. कारोद्दा:.

१८ गोप्र. कारधारिणां; संप्र. संकौ. संर. कारावारय:.

१९ प्रद. उपविन्दु:.

२० गोप्र. प्रद. मान्थर्य:; संप्र. मान्थर्षा:, इपय:; संकौ. संर. मान्थर्षा:, इपय:.

२१ जेवी. रौहिणायना:.

२२ गोप्र. अङ्गामन; संप्र. संकौ. संर. अङ्गारका:; प्रद. (०).

२३,२४ गोप्र. [illegible]; संप्र. क्रोशयना:, वास्तोष्पय:, [illegible]; प्रद. लोष्यकानि; संकौ. संर. [illegible], [illegible], [illegible].

२६ प्रद. मैरदायन:; संकौ. मौरदायना:.

२७ गोप्र. स्कार्द; संकौ. स्कन्दा:.

२८ संप्र. [illegible]; प्रद. शार्द:.

२९ गोप्र. काटिल्या:.

३० संप्र. संकौ. संर. (०).

३१ प्रद. नीचि:; संप्र. संकौ. संर. (०).

३३ संप्र. वासपुष्पय:.

३४ प्रद. (०).

३५ प्रद. वासभूत:.

३६ गोप्र. काघाक्षि; प्रद. कायाक्षि:.

३७ संप्र. संर. क्षपा:.

३८ गोप्र. वीरपि; संर. वारल्पा:; जेवी. वीरपि.

३९ गोप्र. करेल; संकौ. करलय:.

४० संकौ. संर. (०).

(१) गोप्र. ३९; संप्र. ६२९.

(२) गोप्र. ३९; संप्र. ६२९.

(३) गोप्र. ३९; संप्र. ६२९.

## मानवश्रौतसूत्रम्

### औचथ्याः

अङ्गिरसो व्याख्यास्यामः–

१ औचथ्या गौतमाः २ तौंडेयाः ३ अभिजित– ४ घोषाय– ५ नैकाक– ६ राहूगण्याः ७ क्षैरकट– ८ ऐकत्समराणां ९ कैराति– १० सारलोपानां ११ करोति– १२ काशपारीणां १३ पौष्पिण्ड– १४ भागल– १५ वडौडवानां १६ उपबिन्दुः १७ मान्थरेपाणां १८ रौहिणायनाः १९ अमलकाः २० क्रौलयिमाः २१ क्रौचाः २२ क्रोष्टाः २३ आरुणयः २४ पार्थिवाः २५ सौदामिनि– २६ काचाक्ष– २७ कौरल्याः २८ अक्ष– २९ अपादपक्ष– ३० वासमूलि– ३१ वंशमुल्मि– ३२ शपितृ– ३३ वासपुष्पिः ३४ सौष्य– ३५ सौक्ष्मायन– ३६ कौडल्याः इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस–औतथ्य–गौतम [ औशिज–काक्षितेति ] इत्यादि ॥

### आयास्याः

आयास्यानां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस –आयास्य–गौतम इति होता। इत्यादि ॥

## शुक्लयजुर्वेदपरिशिष्टम्

### औचथ्याः

अङ्गिरसो व्याख्यास्यामः–

१ औचथ्या गौतमाः २ तौंडेय– ३ अभिजित– ४ चौद्राय– ५ निकाक्षि– ६ राहूगण्याः ७ खैटिक– ८ सौनरीणां ९ कैरात– १० शारतायीनां ११ पौष्पिण्ड्य– १२ भागल– १३ वलौद्राणां १४ औपबिन्दो– १५ मान्थरेपाः १६ रौहिणायनाः १७ आङ्गारकाः १८ क्रोलयनाः १९ क्रोष्टाः २० आरुणयः २१ पार्थिवाः......भवति। आङ्गिरस–औतथ्य–गौतम–इति होता। इत्यादि ॥

### आयास्याः

आयास्यानां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस–आयास्य–गौतम–इति होता। इत्यादि ॥

### औशिजाः

उशिजा......द्व इति होता। कक्षीवतवद्–उशिजवद्–गौतमवद्–औतथ्यवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

## मत्स्यपुराणम्

मत्स्य उवाच–

मरीचितनया राजन् सुरूपा नाम विश्रुता।
भार्या साऽङ्गिरसो देवास्तस्याः पुत्रा दश स्मृताः ॥

आत्मा ह्यायुर्मनो दक्षो दमः प्राणस्तथैव च।
हविष्मांश्च गविष्ठश्च ऋतः सत्यश्च ते दश ॥

एते चाङ्गिरसो नाम देवा वै सोमपायिनः।
सुरूपा जनयामास ऋषीन् सर्वेश्वरानिमान् ॥

बृहस्पतिं गौतमं च संवर्तं च महाऋषिम्।
आयास्यं वामदेवं च उचथ्यमुशिजं तथा ॥

इत्येते ऋषयः सर्वे गोत्रकाराः प्रकीर्तिताः।
तेषां गोत्रसमुत्पन्नान् गोत्रकारान्निबोध मे ॥

---

(१) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः प्रा. जॉन ब्रौमहाशयेन संपादितात् 'गोत्रप्रवरमञ्जरी' पुस्तकात्संगृहीतः।

(२) शुक्लयजुर्वेदपरिशिष्टोक्तो गोत्रप्रवरविचारः प्रा. जॉन ब्रौमहाशयेन संपादितात् 'गोत्रप्रवरमञ्जरी' पुस्तकात् संगृहीतः।

(१) मत्स्य. १९६।१ साऽङ्गिरसो ( चाङ्गिरसो ); गोप्र. ४६; संप्र. ६६५ साऽङ्गिरसो देवाः ( त्वङ्गिरसो देवी ).

(२) मत्स्य. १९६।२ पूर्वार्धे ( आत्मायुर्दमनो दक्षः सदः प्राणस्तथैव च। ); गोप्र. ४६ ऋतः ( क्रतुः ); संप्र. ६६५ गविष्ठश्च ऋतः ( हविष्ठश्च क्रतुः ).

(३) मत्स्य. १९६।३; गोप्र. ४६ पूर्वार्धे ( इत्येतेऽङ्गिरसो नाम देवा वै सामगायिनः। ); संप्र. ६६५ पूर्वार्धे ( इत्येतेऽङ्गिरसो नाम देवा वै सामगायनाः। ).

(४) मत्स्य. १९६।४ च महाऋषिम् ( ऋषिमुत्तमम् ) उत्तरार्धे ( उतथ्यं वामदेवं च अजस्यमृषिजं तथा। ); गोप्र. ४६ आयास्यं ( अयास्यं ); संप्र. ६६५ गौतमं ( गोतमं ) उचथ्य ( उतथ्य ).

(५) मत्स्य. १९६।५; गोप्र. ४६; संप्र. ६६५.

## औचथ्याः

१उचथ्यो गौतमश्चैव तौलेयोऽभिजितस्तथा ।
सार्धनेमिः सलौगाक्षिः क्षीरः कौष्टिकिरेव च ॥

२राहूगण्यः सौपुरिश्च कैरातिः सामलोमकिः ।
पौष्पिपिण्डिर्भार्गलश्चैव ऋपिश्चण्डान्तकस्तथा ॥

३करोटः कौरवारी च उपबिन्दुः सुरैपिणः ।

(१) मत्स्य. १९६।६ ; गोप्र. ४६ ; संप्र. ६६५.

[ गोत्रप्रवरनामसंग्रहः संप्र. ६२७–६२८ ; प्रद. ११४–११५ ; संकौ. १८६ ; संर. ४३२ इत्यत्र द्रष्टव्यः ।]

१ मत्स्य. संप्र. प्रद. संकौ. संर. उतथ्यः.

३ गोप्र. संप्र. तैलेयः.

५ गोप्र. बौधिर्नगः ; संप्र. बौधिर्निगः, बौधयः, नगाः ; प्रद. बौधिः, नगः ; संकौ. बौधयोनगाः ; संर. बोधयोनगाः.

६ गोप्र. सौगमाक्षि ; संप्र. सुगो माक्षिः, सुगोमाक्षयः ; प्रद. सुगोमाक्षिः ; संकौ. संर. सुगोमाक्षयः.

७,८, गोप्र. क्षीरयो रिकिरेव च ; संप्र. क्षिरिटोटकिरेव च, क्षीरटाष्टिकयः ; प्रद. क्षीरटः, टेकिः ; संकौ. क्षीरयष्टिकयः ; संर. क्षीरपाष्टिकयः.

(२) मत्स्य. १९६।७ ; गोप्र. ४६ ; संप्र. ६६५.

९ मत्स्य. संप्र. राहुकर्णिः ; गोप्र. राहोः कर्णिः ; प्रद. बाहुकर्णिः ; संकौ. राहूकर्णयः ; संर. राहुकर्णयः.

१० गोप्र. सौपत्रिः ; संप्र. च सौपुत्रिः ; संकौ. संर. सौपुत्रयः.

११ संप्र. संकौ. संर. (०).

१३,१४ मत्स्य. पौशाजितिर्भार्गवनो ; गोप्र. पैष्पजनिर्भार्गनवो ; संप्र. पौष्कजिर्भगत्रो ये, पौष्कजिनयः, भागलाः ; प्रद. पौष्कजिनिः, भागविति ; संकौ. पौष्कजिनयः, भागत्राश्च ; संर. पौष्कजिनयः, भागत्राः.

१५ मत्स्य. चरीद्यः ; संप्र. चण्डान्तकः, चण्डाङ्काः ; प्रद. चाडान्तकः ; संकौ. दाण्डकाः ; संर. चण्डान्तकाः.

(३) मत्स्य. १९६।८ ; गोप्र. ४६ ; संप्र. ६६५.

१६ मत्स्य. कारोटकः ; प्रद. संकौ. संर. (०).

१७ मत्स्य. सवीरी ; गोप्र. शुरपा वीरः ; संप्र. शुनपा वीरः, आमंत्रणे वैवस्य शुल्याः हरि ; प्रद. शुरपाः, वीरः ; संकौ. संर. शुनपाः.

१८ गोप्र. उपबिन्द ; संप्र. उपबिन्दः.

रौहिणायनिचोराणी क्रोष्टा चैवारुणायनिः ॥

१मौदहायनि–कौसोरु–कौटिल्याः पार्थिवास्तथा ।
रौहिणेयो निरोधश्च मूलयो वसुरेव च ॥

२कौचाक्षि–पुष्पयश्चैव क्षारकौरण्डिरेव च ।
क्षेपा विश्वन्तिरेविश्च पाचिकारेविरेव च ॥

२०,२१ मत्स्य. वाहिनीपतिवैशाली ; गोप्र. रौहिणेयानिचोराणिः ; संप्र. रौहिणेयो निवैराणिः, रौहिणायनयः ; प्रद. रौहिणः, निचौराणिः ; संकौ. संर. रौहिणायनयः ; जेवी. रौहिणायनिचोराणिः.

२२,२३ गोप्र. कोष्ठश्चैवारुणायनिः ; संप्र. कौष्ट्यैश्चारुणायनिः, क्रौष्णाः, आरुणायनयः ; प्रद. कोष्ठः, आरुणायनिः ; संकौ. क्रोष्टायनयः, अरुणायनयः ; संर. क्रौष्टायनयः, आरुणायनयः.

(१) मत्स्य. १९६।९ ; गोप्र. ४७ ; संप्र. ६६५.

२४ मत्स्य. सोमोऽन्नायनि ; गोप्र. सोमोदयनि ; संप्र. सोमोदायनिकः, सौदामनयः ; प्रद. सोमदायनः ; संकौ. संर. सौदामनयः.

२५ संप्र. सोरुः, कासोरवः ; संकौ. कासोर्णाः ; संर. कासोयाः.

२६ मत्स्य. कौशल्याः ; गोप्र. कैशिल्याः ; संप्र. कौदिल्यः, कौशल्याः ; प्रद. कौशिल्यायनः ; संकौ. संर. कौशल्याः.

२७ संप्र. पार्थिवस्तथा.

२८,२९ मत्स्य. रौहिण्यायनिरेवाग्नी ; गोप्र. जेवी. रौहिणेयानिरोधान्म ; संप्र. रौहिणेयो निरोधश्च, रौहिणेयाः, कारथेनयः ; संकौ. संर. रौहिणेयाः, काराधनयः.

३० मत्स्य. संर. मूलपः ; प्रद. राधोमूलिः.

३१ मत्स्य. पाण्डुरेव च ; गोप्र. वासुरेव च ; संप्र. वासुरेव च, वासवाः ; प्रद. संकौ. संर. वासवः.

(२) मत्स्य. १९६।१० ; गोप्र. ४७ ; संप्र. ६६६.

३२ मत्स्य. (०) ; गोप्र. काचाक्षि ; संप्र. कार्चाक्षः.

३३ मत्स्य. (०) ; गोप्र. पुष्पश्चैव ; संप्र. पुष्पवांश्चैव, पुष्पवन्तः ; प्रद. संकौ. संर. पुष्पवन्तः.

३४ मत्स्य. (०).

३५ गोप्र. क्षपः ; संप्र. क्षपाः.

३६ मत्स्य. विश्वकरोऽरिश्च ; प्रद. विश्वन्तिः, विश्वः.

३७ मत्स्य. पारिकारारिरेव च ; गोप्र. पाचिकारेविरेविराट् ; संप्र. पाशिका रेविरेव च, पशिकाः, रेवयः ; प्रद. पाशिकारेविः ; संकौ. पाचिकाः, रेवयः ; संर. पाशिकाः, रेवयः.

¹त्र्यार्षेयप्रवरा ह्येते तेषां च प्रवरान् शृणु ।
अङ्गिराश्च उचथ्यश्च उशिजश्च महानृपिः ।
परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥

(१) अथेदानीं एतानि गौतमगोत्रकाण्डानि व्याख्यास्यामः— यदुक्तमधस्तनभृगुगोत्रकाण्डव्याख्याने उपलक्षणमस्माभिः 'इहोदाहृतेषु गोत्रकाण्डेषु' इत्यारभ्य 'व्याख्यास्यामः' इत्यन्तेन भाष्येण, तत्सर्वमिहापि गौतमगोत्रकाण्डोपक्रमे द्रष्टव्यं, तुल्यत्वात् । इहोदाहृतानां गौतमगोत्रगणानां मध्ये पृषदश्वानामृक्षाणामाश्वलायनोक्तानां गौतमवरणादर्शनात् उत्तरत्र वक्ष्यमाणरथीतरभरद्वाजैश्च सह समानप्रवरत्वश्रवणात्तन्नैवोत्कर्षः, तैश्च सहाविवाहो द्रष्टव्यः; तथैवान्यैः सूत्रकारैर्वक्ष्यमाणत्वात् । इह तु गौतमगणमध्यपाठे कारणं किमप्याश्वलायनबुद्धिगम्यमस्तीति कल्प्यम् । उत्तरत्र पाठे तु विस्पष्टं कारणमस्तीत्युक्तम् । इहापि गणाः प्रवराश्च निगदव्याख्यातत्वात् न व्याख्येयाः । इह च यत्रयत्रैकस्मिन्नेव गणे प्रवरऋषीणामेकद्विनिर्संख्याविषया क्रमविषया च विप्रतिपत्तिर्दृश्यते सूत्रकाराणां तत्रतत्रोक्तप्रयोगावलम्बिनामेव ते प्रवरा इति प्रयोगकृद्व्यवस्था द्रष्टव्या । इह गौतमगणानां ऋक्षपृषदश्वगणौ वर्जयित्वा सर्वेषां स्वं स्वं गणं विहाय परस्परमविवाहो द्रष्टव्यः । कुतः, समानगोत्रत्वात् । समानगोत्रत्वं च गौतमस्य सप्तर्षेरपत्यत्वात् । स्वेषु गणेषु सुतरामविवाहः, समानप्रवरत्वात् । अपि च 'गौतमाना सर्वेषामविवाहः' इति बौधायनवचनाच्च सर्वेषामविवाहः । अत्र श्लोकः— 'गौतमानां न सर्वेषां विवाहोऽस्ति परस्परम् । सगोत्रत्वाच्च वाक्याच्च बोधायनमुखोद्गतात् ॥' इति । गोप्र. ३९-४०

(२) अङ्गिरसः त्रिविधाः— गौतमाः, भरद्वाजाः, केवलाङ्गिरसश्च । तत्र गौतमाः सप्त, भरद्वाजाः चत्वारः, केवलाङ्गिरसः षडिति । संप्र. ६२६

### प्रवरसंग्रहकारः

²गौतमोऽयास्य औचथ्यः कक्षीवानौशिजस्तथा ।
बृहदुक्थो वामदेवो गोत्राणीमानि सप्त च ।
गौतमस्य गणस्तस्मिन् विवाहो न परस्परम् ॥

### स्मृत्यर्थसारः

...... .....वक्ष्यन्तेऽङ्गिरसो गणाः ।
³गौतमाः सप्त चायास्याः शारद्वतास्तथा परे ॥
कौमण्डा दीर्घतमसस्ततः कारेणुपालयः ।
वामदेवा औशनसा गोत्रैक्याच्च नान्वियुः ॥

---

(१) मत्स्य. १९६।१०,११ त्र्यार्षेयप्रवरा ह्येते (आर्षेयाः प्रवराश्चैव) राश्च उचथ्यश्च (राः सुवचोतथ्य) इत्येते (ऋषयः); गोप्र. ४७ तेषां च (तेषां वा) उचथ्यश्च (वचोतिश्च); संप्र. ६६६ तेषां च (तेषां वा) उचथ्यश्च (वचोतिश्च) मवैवाह्या (मविवाह्या).

शारद्वतगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा—

१ औपमान्याः— प्रद. संकौ. औपमन्याः.
२ पैष्टिका— संप्र. टिका; प्रद. पैटिकिः; संर. हैटिका.
३ शौनरय— सर्वग्रन्थेषु समानम् ।
४ शालायना— प्रद. शालायिः; संकौ. शायपः; संर. शौलायपः.
५ वार्शयः— प्रद. संकौ. संर. (०).
६ सौरवः— प्रद. संकौ. संर. (०).
७ खरिका— प्रद. खरिङ्क.
८ नैकर्पय — संप्र. प्रद. सकौ. नैकपयः.
९ तौलेया— प्रद तौदेयः; संकौ. संर. तोदेयाः.
१० वाल्योदा— संकौ वाल्यौद्धः; संर. वाल्योयाः.

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

(१) प्रपा. ३०९; विपा. ७०२ औचथ्यः (औतथ्यः) गोत्राणीमानि (गोत्रनामानि); ज्योनि. १३३ औचथ्यः (औतथ्यः); बाले. १।५३ पृ. १७७; संग. १७८-१७९ गौतमोऽयास्य औचथ्य (गौतमो यास्क औतथ्य) गोत्राणीमानि (गोत्रनामानि).

(२) स्मृसार. १५; संम. ६२.

(३) स्मृसार. १५; संम. ६२ शारद्वता (शारद्वन्ता) कौमण्डा (कौमाण्डा) गोत्रैक्याच्च नान्वियु (गोत्रैरयात्रान्वियुमिथः); कृभ. १०४१ (=) चायास्याः शारद्वता (चायस्याः शारद्वन्त) दीर्घ (दैर्घ) तृतीयार्धं संमवत्.



३४ माद्रपथयः ३५ सौरोभङ्गाः ३६ शुङ्गाः ३७ देवमतयः ३८ इपुमताः ३९ औदमेघयः ४० प्रवाहणेयाः ४१ कल्मापाः ४२ राजस्तम्भिः ४३ सुधूपक्छद् ४४ वाराहयः ४५ वलभिकयः ४६ रुद्राङ्गपथाः ४७ शालाहलयः ४८ देववेलाः ४९ महावेलाः ५० निविञ्च्यायनाः ५१ धान्यायनाः ५२ शालालयः ५३ शार्दूलयः ५४ कात्कलाः

५५ वात्कलाः ५६ सैद्यकेलाः ५७ क्रौडायनाः ५८ कौण्डिन्याः ५९ ब्रह्मस्तम्भाः ६० राजस्तम्भाः ६१ अग्निस्तम्भाः ६२ वायुस्तम्भाः ६३ सूर्यस्तम्भाः ६४ सोमस्तम्भाः ६५ यमस्तम्भाः ६६ इन्द्रस्तम्भाः ६७ विष्णुस्तम्भाः ६८ यज्ञस्तम्भाः ६९ आपस्तम्भाः ७० ये चान्ये स्तम्भशब्दाः ७१ स्विष्टाः ७२ आरुणसिन्धुः ७३ कौमुदगन्धिः ७४ शक्तिः

---

३४ गोप्र. मद्राथयः ; संप्र. संम. भाद्रपथयः ; प्रद. भद्राधिः ; संकौ. भद्रादयः ; संर. भन्दादयः.

३५ गोप्र. संप्र. संम. संकौ. सौरभराः ; प्रद. सौरभः ; संर. सौरम्भराः.

३६ गोप्र. शुगाः ; प्रद. शृङ्गः.

३७ संर. देवमायः ; जेबी. दैवमतयः.

३८ प्रद. इपमतः ; संकौ. संर. इषुमत्ताः.

३९ गोप्र. वौदोदमेघय. ; प्रद. औदमेधिः.

४० संर. प्रावाहणेयाः.

४१ गोप्र. कल्माश्च ; संप्र. संम. कुल्माषाः.

४२ संकौ. संर. राजस्तवयः.

४३ गोप्र. सद्योपक्रन ; संप्र. सुधूक्रयः ; संम. सुधापक्रनः ; प्रद. सद्योपक्रतिः ; संकौ. संर. सन्धोपक्रय.

४४ गोप्र. संकौ. पराह्रयः ; प्रद. पहारिः ; संर. पराह्रायः.

४५ गोप्र. संप्र. संम. वलभीकयः ; प्रद. करभीकिः ; संकौ. बलभोकयः ; संर. वलभोकयः.

४६ बौश्रौप्र. उमाङ्गाः ; गोप्र. प्रद. रुद्राङ्गथः.

४७ प्रद. शालाहारिः ; संकौ. संर. शालह्लयः.

४८ बौश्रौप्र. दैववेलाः ; गोप्र. संप्र. संम. प्रद. संकौ. वेदवेलाः ; संर. वेदवेलाः.

४९ गोप्र. संप्र. संम. संकौ. संर. (०).

५० गोप्र संम. प्रद. संर. नृलायनाः ; संप्र. भृलायनाः ; संकौ. नृलायना.

५१ बौश्रौप्र धन्यायना ; गोप्र. संप्र. संम. (०) ; संकौ. संर. नृत्या.

५२ गोप्र. शलालय ; प्रद. शालानिः.

५३ संर. शार्दूलय.

५४ गोप्र संर. काक्षुलाः ; संप्र. संम. शाकलाः ; प्रद. कक्षुल. ; संकौ. काक्षुलः

५५ बौश्रौप्र. वाक्लाः ; गोप्र. संप्र. संम. प्रद. संकौ. संर. बाष्कलाः.

५६ गोप्र. सेध्यकैधाः ; संप्र. प्रद. सैह्विकेयाः ; संम. सल्यकेयाः ; संकौ. सह्यकेयाः ; संर. सैध्रकेयाः.

५७ बौश्रौप्र. क्रौडायणाः ; गोप्र. प्रद. संकौ. कौण्डायनाः ; संम. क्रोडायनाः ; संर. कौडायनाः.

५८ बौश्रौप्र. क्रोडिल्याः ; गोप्र. कौण्डिल्याः ; संप्र. कौण्टिल्याः ; संम. कोण्डिन्याः.

६० प्रद. (०).

६१ संप्र. संम. (०).

६२ संम. (०).

६३ संम. (०).

६४ संम. प्रद. (०).

६५ संप्र. संम. (०).

६६ संम. (०).

६७ संम. प्रद. (०).

६८ गोप्र. संप्र. संम. प्रद. संकौ. संर. (०).

७० गोप्र. ये चान्ये स्तम्भ–स्तम्बशब्दाः ; संप्र. ये चान्ये स्तम्बशब्दान्ताः स्तम्भशब्दान्ताश्च तेऽपि ; प्रद. ये चान्ये स्तम्भस्तम्बशब्दान्ताः ; संकौ. संर. ये चान्ये स्तम्भशब्दान्तास्तेऽपि.

७१ गोप्र संप्र. संम. प्रद. संकौ. संर. (०).

७२ गोप्र. संम. आरणसिन्धु ; संप्र. संकौ. संर. आरणा., सिन्धवः ; प्रद. अरुणः, सिन्धुः.

७३ गोप्र. संप्र. संम. संकौ. संर. कौमुदगन्धयः ; प्रद. कुमुदगन्धि.

७४ गोप्र. संप्र. संम. प्रद. संकौ. संर. (०).

७५ कौशिवायनाः ७६ आत्रेयायणाः ७७ भामण्याः ७८ धूमगन्धाः ७९ कुक्षाः ८० कौकाक्षयः ८१ नैतुन्दयः ८२ दार्भयः ८३ श्यामेयाः ८४ मत्स्यकाथाः ८५ कौकायनाः ८६ कारुपथयः ८७ कारीपायणाः ८८ काम्बल्याः इत्येते भरद्वाजाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–बार्हस्पत्य–भारद्वाज–इति होता । भरद्वाजवद्–बृहस्पतिवद्–अङ्गिरोवद्–इत्यध्वर्युः ॥

रौक्षायणाः ( ऋक्षाः )

१ रौक्षायणाः २ कपिलाः ३ शबलाः ४ शैपिलाः ५ विमिण्डयः ६ कौथुमाः ७ अग्निजिह्वी च ८ कर्णाः च ९ सूतश्च एते रौक्षायणाः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस–बार्हस्पत्य– भारद्वाज– वान्दन– मातवचस – इति होता । मतवचोवद्–वन्दनवद्–भरद्वाजवद्–बृहस्पतिवद्– अङ्गिरोवद्–इत्यध्वर्युः ॥

गर्गाः

१ गर्गाः २ साम्भरायणाः ३ सखीनयः ४ गान्धरायणाः ५ बाहुलकयः ६ भ्राष्ट्रकृत् ७ भ्राष्ट्रविन्दवः ८ क्रोष्टुकयः ९ सौयामुनिः १० भ्राजिनाक्षयः ११ होत्रापचयः १२ सत्यापचयः १३ काणायनाः

७५ गोप्र. संप्र. संम. संकौ. संर. शिखायनाः ; प्रद. शिक्षायणः .

७६ संकौ. संर. मात्रेयायणाः .

७७ गोप्र. भामाण्यः ; संप्र. भामान्याः ; संम. संकौ. संर. भामाण्याः ; प्रद. मामन्यः .

७८ गोप्र. संप्र. संम. संकौ. संर. ( ० ) ; प्रद. धूमगन्धिः .

७९ गोप्र. संप्र. संम. प्रद. संकौ. संर. कुक्षाः .

८० गोप्र. कौर्काक्षयः ; संम. कौकक्षियः .

८१ गोप्र. नैतुतयः ; संप्र. नेतुन्तयः ; संम. नैतुन्तयः ; प्रद. नैसुनिः ; संकौ. तैतुन्दयः ; संर. तैतुन्दयः .

८२ गोप्र. दाभयः ; प्रद. दार्भिः .

८३ संम. श्यामेयाः ; संकौ. संर. शामेयाः .

८४ गोप्र. मत्सकाथाः ; संप्र. मत्सकाथाः ; संम. मत्सकाथाः .

८५ गोप्र. संप्र. प्रद. संकौ. संर. काह्णायनाः .

८७ गोप्र. संप्र. संम. संकौ. कारिषायणाः ; प्रद. कारुयायणः ; संर. करिषायः .

८८ गोप्र. प्रद. संकौ. संर. कावल्याः ; संप्र. काम्वाल्याः .

( १ ) बौश्रौप्र. गोत्रनामसंग्रहो नास्ति ; गोप्र. ४१ ; संप्र. ६३२ ; संम. ५७ ; प्रद. ११७ ; संकौ. १८७ ; संर. ४३६ .

३ गोप्र. शिपिलाः ; संप्र. शिफिलाः ; संम. शक्तिफलाः ; प्रद. शवलः .

४ संप्र. संम. शैफिला ; प्रद. शिपिलः, शिपिलस्विः ; संकौ. संर. शिफिलाः .

५ गोप्र. वैपिण्डि ; संप्र. वैफिटाः ; संम. वैकिडाः ; प्रद. विभिण्टिः ; संकौ. विभिण्डयः .

६ गोप्र. कौतुनः ; संप्र. संकौ. संर. कौथुमाः ; प्रद. कौथमः .

७ संप्र. प्रद. संकौ. संर. अग्निजिह्वाः .

८ गोप्र. कण्वी ; संप्र. संम. कर्णिः ; प्रद. कर्ण .

९ गोप्र. संप्र. संम. सुतिः ; प्रद. सुतः ; संकौ. संर. सुताः .

( १ ) बौश्रौप्र. ; गोप्र. ४१–४२ ; संप्र. ६३२ ; संम. ५७ ; प्रद. ११६ ; संकौ. १८७ ; संर. ४३५.

३ गोप्र. सखीनाः ; संप्र. सांख्यायनाः ; संम. सोख्यनायणाः ; प्रद. सखीनः ; संर. सखीनयः .

४ बौश्रौप्र. संप्र. संम. गन्धरायणाः ; गोप्र. यौगन्धरायणाः ; संकौ. संर. माधरायणाः .

५ संप्र. संम. वालुकयः ; संकौ. संर. बाहुलयः .

६ बौश्रौप्र. भ्रष्टकाः ; गोप्र. भ्रष्टयः ; संप्र. संम. भ्राष्ट्काः ; प्रद. भ्रष्टकः ; संकौ. भ्राष्ट्रकृतः ; संर. भ्राष्ट्रकृतः, भ्राष्ट्रधृतः .

७ गोप्र. भृष्टुभिन्दयः ; संप्र. भ्राष्ट्रविन्दवाः ; संम. भ्राष्टविन्दवः ; प्रद. भाष्टुविदुः .

८ गोप्र. संर. क्रोष्टकयः ; संप्र. क्रोष्टयः ; संम. संकौ. क्रोष्टकयः ; प्रद. क्रोष्टकिः .

९ संकौ. संर. सौयामुनाः .

१० बौश्रौप्र. भ्राजिनाक्षत्रेयाः ; गोप्र. भाजिनाक्षयः ; प्रद. भ्राजिताक्षि .

११ गोप्र. होत्रपचयः ; संम. होत्रायः ; प्रद. हात्रायविः .

१२ गोप्र. सत्यपचयः ; संम. सद्यायवयः ; प्रद. सात्यायनिः ; संर. सत्यापचयाः .

१३ गोप्र. संप्र. संम. प्रद. संकौ. संर. ( ० ) .

१४ औपमर्कटायनाः १५ जाणवत् १६ पलाशशाखावन्तयः १७ सांम्रहवान् १८ तुल्यः १९ वेणुभरिः २० स्रोहलाः २१ कारिरौतिः २२ कैवल्याः २३ राजयः २४ पौलयः इत्येते गर्गाः। तेषां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवति। आङ्गिरस-बार्हस्पत्य-भारद्वाज-शैन्य-गार्ग्य-इति होता। आङ्गिरस-शैन्य-गार्ग्य-इति वा। गर्गवत्-शिनिवद्-भरद्वाजवद्-बृहस्पतिवद्-अङ्गिरोवद्-इत्यध्वर्युः। गर्गवत्-शिनिवद्-अङ्गिरोवद्-इति वा॥

कपयः *

१ कंपयः २ वैतलानां ३ ऐतिशायनानां ४ पतञ्जलानां ५ तरस्विनां ६ ताण्डिनां ७ भोजसिनां ८ शार्ङ्गरवाणां ९ करशिखण्डानां १० मौपीतकिः ११ छागलयः १२ मापशरावः १३ पौष्पयः इत्येते कपयः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- आमहीयव- औरुक्षय- इति होता। उरुक्षयवद्-अमहीयववद्-अङ्गिरोवद्-इत्यध्वर्युः॥ भरद्वाजानां सर्वेषामविवाहः॥

## आपस्तम्बश्रौतसूत्र

### केवलभरद्वाजाः

अथ भरद्वाजानां त्र्यार्षेयः। आङ्गिरस-बार्हस्पत्य-भारद्वाज- इति। भरद्वाजवद् - बृहस्पतिवद्-अङ्गिरोवद्- इति। एष एवाविकृतः कुक-आग्निवेश्य- ऊर्जायनानां सर्वेषां च स्तम्बस्तम्भशब्दानाम्॥

कुकादिशब्दानां एष एव प्रवरः अविकृतः स्यात्। ब्रह्मस्तम्बा राजस्तम्बा अग्निस्तम्बाः सोमस्तम्बाः। इह कुकाः कौकायना उच्यन्ते। कपर्दि.

### शौङ्गशैशिराः

अथ द्व्यामुष्यायणानां कुलानाम्। यथा शुङ्ग-शैशिरयः। भरद्वाजाः शुङ्गाः। कताः शैशिरयः। तेषां पञ्चार्षेयः। आङ्गिरस-बार्हस्पत्य-भारद्वाज

---

* यद्यपि कपिगणो बौधायनेन केवलाङ्गिरोमध्ये पठितः, तथापि आपस्तम्बकात्यायनलौगाक्ष्यादिभिः निबन्धकारैश्च भरद्वाजकाण्डे पठितत्वादत्रैव सगृहीतः। एव ऋक्षगर्गसंकृत्यादयोऽपि कैश्चित्सूत्रकारैरन्यत्र पठिता अपि निर्णयानुसारेण यथास्थान सगृहीताः।

१४ बौश्रौप्र. औपमल्कटायनाः ; गोप्र. संप्र. संम. प्रद. संकौ. संर. ( ० ).

१५ गोप्र. जायावताः ; संप्र. जत्राः ; संम. यत्राः ; प्रद. जायावतः ; संकौ. संर. ( ० ).

१६ गोप्र. वाटा' शाखायनय' ; संप्र. नवपलाशाः शाखावतयः ; संम. नवपलाशाः शाखाननयः ; प्रद. वाटः शाखायनि' ; संका. संर. ( ० ) ; जेबी. पलाशशाखवन्तयः .

१७,१८ बौश्रौप्र. सम्रहतुल्याः ; संप्र. संम. सम्रहकुल्याः ; प्रद. साम्रहवान् , तुल्य' .

१९ बौश्रौप्र. वैडुहानि' ; गोप्र. वेणुहानि' ; संप्र. संम. वेणुभिरिः ; प्रद. वल्हानिः ; संकौ. संर. ( ० ).

२०,२१ गोप्र. सोहर्ता, कारी पौचिक' ; संप्र. सौदम्रकारि', रौतिः ; संम. सौदम्रकारि', रौति ; प्रद. स्राहनः, कारिरात्रिः ; संकौ. संर. ( ० ).

२२ गोप्र. वाम्याः ; संप्र. संम. कौक्षास्याः ; प्रद. कैवाल्य' ; संकौ. संर. ( ० ).

२३ गोप्र. राजवतः ; संप्र. संम. राजवत्सः ; प्रद. राजिः ; संकौ. संर. ( ० ).

२४ संप्र. संम. लवाः ; प्रद. पौलि' ; संकौ. संर. ( ० ).

( १ ) बौश्रौप्र ; गोप्र. ५५ ; संप्र. ६३२ ; संम. ५८ ; प्रद. ११७ ; [ संकौ. १८७ ; संर. ४३५ ].

१ संप्र. कपि-.

२,३ संप्र. वैतलायन-, मैतिशायनाः ; संम. वैतलायनानाम्.

४ संप्र. संम. पतञ्जलीनाम् ; प्रद. ( ० ).

५ संप्र. तारस्विनाम् ; प्रद. ( ० ).

६ गोप्र. संप्र. ताडिनाम् ; प्रद. ताण्डिनः .

७ संप्र. संम. भोजसीनाम् ; प्रद. भोजसी.

८ बौश्रौप्र. शाङ्करवाणाम् ; गोप्र. कासवराणाम् ; संप्र. संम. सारङ्गरवाणाम् ; प्रद. कासस' .

९ गोप्र. करसिखण्डानाम् ; संप्र. संम. खरशिखण्डिनाम् ; प्रद. करसिखड: .

१० गोप्र. आमौसितकि ; संप्र. संम. मौशितकिः ; प्रद. मैषीतकि .

११ गोप्र. सागसख- ; संप्र. शशयः ; संम. संशयः ; प्रद. सागरः .

१२ एतन्नाम प्रा. जॉन श्री अधिकं पठति।

१३ संम. पौष्ययः ; प्रद. पौष्टिः .

( १ ) आपश्रौ. २४।६।१८–२४।७।१० ; गोप्र. ४२–४३.

-काल्य-आत्कील-इति । अत्कीलवत्-कतवद्-भरद्वाजवद्-बृहस्पतिवद्-अङ्गिरोवद्-इति । त्र्यार्षेयमु हैके । आङ्गिरस-काल्य-आत्कील-इति । अत्कीलवत्-कतवद्-अङ्गिरोवद्-इति ॥

दर्शपूर्णमासयोः द्विगोत्रस्य आर्षेयवरणमुक्तं सूत्रान्तरे- ' द्विगोत्रस्य श्रौञ्जीनेकैकस्मात् गोत्रादुपलक्षयेत् ' इति । तथा पण्णां प्रवरप्राप्तौ इह ' न पञ्चाति प्रवृणीते ' इति त्रयाणां एकस्माद्गोत्रादुपलक्षणं अपरस्मात् द्वयोः प्राप्तम्, तस्य दर्शनार्थं त्र्यार्षेयस्यैवाधिकारे च वरणेऽपि प्रदर्शनार्थं च पुरातनं द्विगोत्रमुदाहर्तुमाह- ' अथ द्व्यामुष्यायणानाम् ' इति अस्मिन्नेव प्रदेशे, भारद्वाजेन पञ्चार्षेयत्वात् उदाह्रियमाणस्य । अथ द्व्यामुष्यायणानां *द्विगोत्राणां प्रदर्शनार्थं प्रवरा उच्यन्ते । यथा शुङ्गशैशिरयः* नाम पुरातनं द्विगोत्रम् । शुङ्गाश्च शैशिराश्च शुङ्गशैशिरयः । भरद्वाजाः शुङ्गा आङ्गिरसाः, कताः शैशिरयः विश्वामित्राः । यदस्यौत्पत्तिकं गोत्रं तत्र प्रथमवरणं, इतरतो द्वितीयं इति द्व्यामुष्यायणप्रवरे । अथ द्विगोत्राणां उभयोर्गोत्रयोः अविवाहस्तत्सगोत्राणां च । कपर्दि.

### ऋक्षाः

अथ ऋक्षाणां पञ्चार्षेयः । आङ्गिरस-बार्हस्पत्य-भारद्वाज-वान्दन-मातवचस-इति । मतवचोवद्-वन्दनवद्-भरद्वाजवद्-बृहस्पतिवद्-अङ्गिरोवद्-इति । त्र्यार्षेयमु हैके । आङ्गिरस-वान्दन-मातवचस-इति । मतवचोवद्-वन्दनवद्-अङ्गिरोवद्-इति ॥

### कपयः

अथ कपीनां त्र्यार्षेयः । आङ्गिरस-आमहीय-औरुक्षय-इति । उरुक्षयवद्-अमहीयवद्-अङ्गिरोवद्-इति ॥

### गर्गाः

*अथ गर्गाणां त्र्यार्षेयः* । आङ्गिरस-*गार्ग्य-शैन्य*-इति । शिनिवद्-गर्गवद्-अङ्गिरोवद्-इति । भरद्वाजमु हैके अङ्गिरसः स्थाने । भारद्वाज-गार्ग्य-शैन्य इति । शिनिवद्-गर्गवद्-भरद्वाजवद्- इति ॥

भरद्वाजमु हैकेऽङ्गिरसः स्थान इच्छन्ति त्र्यार्षेयाः । त्र्यार्षेयस्यैवाधिकारो न पञ्चार्षेयादीनाम् । अतः अन्योऽनुज्ञायते भरद्वाजादन्येऽप्यार्षेया एषां विद्यन्त इति । तेन बृहस्पतिरपि एषामृषिरिति गम्यते तेन सह पञ्चार्षेयो नाम प्रवरः स्यात् आङ्गिरस-बार्हस्पत्य-भारद्वाज-गार्ग्य-शैन्य- इति । एवं बह्वृचानां महाप्रवराचार्याणां च वचनम्- ' त्र्यार्षेयत्वे प्रवरः पूर्वोक्तो वा स्यात् भरद्वाजादिर्वा ' । तत्र भरद्वाजस्य सप्तर्षिस्मरणात् तस्यापि परत्वमिति ' सह परेण ' इत्येतन्न विरुध्यते । तत्र प्रवरः भारद्वाज गार्ग्य शैन्य इति । शिनिवद् गर्गवद् भरद्वाजवद् इति । तत्र ऋक्षाणां गर्गाणां भारद्वाजानां परस्परं विवाहो नास्ति, समानार्षेयाणां बहुत्वात् । त्र्यार्षेयत्वे सप्त ऋषयः सन्ति इति अविवाह एव । ' त्र्यार्षेयगर्गाणां भरद्वाजऋक्षाणां चाविवाहः ' इति गार्गीयप्रवरे चोक्तम् । पञ्चार्षेयाणां वचनमन्तरेणापि अविवाहः सिद्ध इति । कपर्दि.

## सत्याषाढश्रौतसूत्रम्

### केवलभरद्वाजाः

अथ भरद्वाजानां त्र्यार्षेयः । आङ्गिरस-बार्हस्पत्य-भारद्वाज-इति । भरद्वाजवद्-बृहस्पतिवद्-अङ्गिरोवद्-इति । एष एवाविकृतस्तुभ्य-आग्निवेश्य-और्जयानानां सर्वेषां च स्तम्भस्तम्बशब्दानाम् ॥

### ऋक्षाः

अथ ऋक्षाणां पञ्चार्षेयः । आङ्गिरस-बार्हस्पत्य-भारद्वाज-वान्दन-मातवचस-इति । मतवचोवद्-वन्दनवद्-भरद्वाजवद्- बृहस्पतिवद्-अङ्गिरोवद्-इति । त्र्यार्षेयमु हैके । आङ्गिरस-वान्दन-मातवचस-इति । मतवचोवद्-वन्दनवद्-अङ्गिरोवद्-इति ॥

### शौङ्गशैशिराः

अथ द्व्यामुष्यायणानां कुलानाम् । यथा शौङ्गशैशिरयः । भरद्वाजाः शुङ्गाः । कताः शैशिरयः । तेषां पञ्चार्षेयः । आङ्गिरस-बार्हस्पत्य-भारद्वाज-

(१) सश्रौ. २१।३।१०; संर. ४२१.

काल्य-आक्षिल-इति । अक्षिलवत्-कतवद्-भरद्वाजवद्-बृहस्पतिवद्-अङ्गिरोवद्-इति । त्र्यार्षेयमु हैके । आङ्गिरस-काल्य-आक्षिल-इति । अक्षिलवत्-कतवद्-अङ्गिरोवद्-इति ॥

गर्गाः

अथ गर्गाणां त्र्यार्षेयः । आङ्गिरस-गार्ग्य-शैन्य-इति । शिनिवद्-गर्गवद्-अङ्गिरोवद्-इति । भारद्वाजमु हैके अङ्गिरसः स्थाने । भारद्वाज-गार्ग्य-शैन्य-इति । शिनिवद्-गर्गवद्-भरद्वाजवद्-इति ॥

कपयः

अथ कपीनां त्र्यार्षेयः । आङ्गिरस-माहय्यव-औरुक्षय्य-इति । उरुक्षय्यवद्-महय्युवद्-अङ्गिरोवद्-इति । तरस्वांस्तिलो विदुः शालुः पतञ्जलिर्भूयसीर्द्वन्द्वकीर्जलन्द्वः । कपेरष्टविधाः प्रजाः ॥

तुथ्य आग्निवेश्य और्जयान एतेषा, स्तम्भशब्दो यन्नामसु वर्तते ते स्तम्भशब्दाः, स्तम्बशब्दो यन्नामसु वर्तते ते स्तम्बशब्दाः, एतेषा चैषोऽनन्तरोक्तस्त्र्यार्षेय एव प्रवरो भवेदित्यर्थः । द्वाभ्या गोत्राभ्यां व्यपदेशात् द्व्यामुष्यायणानि कुलानि । ' यथा शौङ्गशैशिरयः ' इति पुरातनं द्व्यामुष्यायणकुलं इदानींतनाना द्विगोत्राणा द्वयोरपि गोत्रयोरविवाहं वक्तुं दृष्टान्तत्वेनोदाहृतम् । शुङ्गा भरद्वाजाः, कताः शैशिरयो विश्वामित्राः । भारद्वाजस्य शुङ्गस्य बीजाद्वैश्वामित्रस्य शैशिरेः क्षेत्रे उत्पन्नाः शौङ्गशैशिरा इत्युच्यन्ते । तत्संततिजाताना पञ्चार्षेयः प्रवरो द्रष्टव्यः । आङ्गिरस बार्हस्पत्य भारद्वाज काल्य आक्षिल इति होतुः । अक्षिलवत् कतवद् भरद्वाजवद् बृहस्पतिवद् अङ्गिरोवद् इति अध्वर्योः । त्र्यार्षेयमेके । आङ्गिरस काल्य आक्षिल इति होतुः । अक्षिलवत् कतवद् अङ्गिरोवद् इति अध्वर्योः । अस्मिन्प्रवरे जनयितुः पूर्वः प्रवरः प्रतिग्रहीतुरपरो यथोक्तस्तथान्येष्वपि पुत्रिकापुत्रदत्तकक्रीतकृत्रिमपुत्रादीनामपि द्वयोरपि गोत्रयोः प्रवरो ज्ञेयः, शौङ्गशैशिरीणा दृष्टान्तत्वेनोपादानात् । सर्वेषा द्व्यामुष्यायणानां गोत्रद्वयसंबन्धिवरणप्रसक्तौ व्यवस्थामाह आश्वलायनः– ' तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतो द्वौ चेतरतस्त्रीनितरतो न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणम् ' इति । ' एकमितरतो द्वावितरतः' इति त्र्यार्षेये, ' द्वौ चेतरतस्त्रीनितरतः ' इति पञ्चार्षेये । तत्र पूर्वं कस्य प्रवरः इत्याकाङ्क्षाया कात्यायनलौगाक्षी आहतुः– ' पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः ' इति । एवं वक्ष्यमाणेषु संकृत्यादिष्वपि द्रष्टव्यम् '। गर्गाणा भरद्वाजत्वं पाक्षिकभरद्वाजवरणादेव सिद्धम् ।

यद्यपि कपीनां पाठः केवलाङ्गिरोगणमध्ये सर्वेषु सूत्रपुस्तकेषु दृश्यते, तथापि स नादर्तव्यः, गोत्रप्रवरमञ्जरीप्रयोगपारिजातस्मृत्यर्थसारादिबहुग्रन्थविरोधात्, बहुस्मृतिपुराणसूत्रविरोधात्, ' भारद्वाजैः सह (अ)विवाहः, केवलाङ्गिरोभिः सह विवाहः ' इत्येतादृशस्य शिष्टाभिमताचारस्यान्यथात्वापत्तेश्च । अथ वा द्वौ कपी ज्ञेयौ । एको भरद्वाजगणस्थः, अपरः केवलाङ्गिरोगणस्थः । तथा च मण्डनः– ' भारद्वाजप्रवरणे केचिदाहुः कपी पृथक् ' इति । प्रच.

## आश्वलायनश्रौतसूत्रम्

### केवलभरद्वाजाः

भरद्वाजाग्निवेश्यानां[1] आङ्गिरस- बार्हस्पत्य- भारद्वाज-इति ॥

भरद्वाजानामाग्निवेश्यानां चायं त्र्यार्षेयः प्रवरो भवति । गानाव.

### ऋक्षाः

ऋक्षाणां आङ्गिरस- बार्हस्पत्य- भारद्वाज- वान्दन- मातवचस- इति ॥

अयं पञ्चार्षेयः प्रवरः । गानाव.

### गर्गाः

गर्गाणां[2] आङ्गिरस-बार्हस्पत्य-भारद्वाज-गार्ग्य-शैन्य-इति । आङ्गिरस-शैन्य-गार्ग्य-इति वा ॥

गर्गाणा पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवति । व्यवस्थया विकल्पो न, वर्गभेदानवगमादित्युक्तम् । एते च भरद्वाजाः । आग्निवेश्याना गर्गाणा च भरद्वाजत्वात्सर्वेषां च परस्परमविवाहः । गानाव.

(१) आश्रौ. १२।१२।११ ; गोप्र. ४५.

(२) आश्रौ. १२।१२।१२ ; गोप्र. ४५.

### कपयः

कपीनां आङ्गिरस– आमहीयव– औरुक्षयस– इति ॥

### शौङ्गशैशिराः

अथ य एते द्विप्रवाचना यथैतच्छौङ्गशैशिरयः ॥

अथेदानीमिदमुच्यते । य एते द्विप्रवाचना ऋषिद्वयव्यपदेश्याः, यथैते शौङ्गशैशिरा द्यामुष्यायणाः शौङ्गेयस्य क्षेत्रे शैशिरेयबीजोत्पन्नानां वंशाः । अन्येषां वा भिन्नार्षेयक्षेत्रजोत्पन्नानां वंशा इत्येवोदाहरणम् । शौङ्गशैशिरग्रहणं प्रदर्शनार्थम् । सर्वे ते भिन्नार्षेयाः ।

गानाष्टृ.

भरद्वाजाः शुङ्गाः, कताः शैशिरयः ॥

यस्माद्भरद्वाजाः शुङ्गाः, तेषामयं प्रवरः– आङ्गिरस– बार्हस्पत्य–भारद्वाज– इति । कताः शैशिरयः, तेषां वैश्वामित्र–कात्य–आत्कील–इति । गानाष्टृ.

तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः ॥

एवं स्थिते कथमेतेषामार्षेयप्रवरणमिति प्रसङ्गमुक्त्वा आह–तेषामिति । त्र्यार्षेयवरणपक्षे एवं भवति ।

गानाष्टृ.

द्वौ वेतरतस्त्रीनितरतः ॥

पञ्चार्षेयप्रवरणपक्षोऽयम् । गानाष्टृ.

न हि चतुर्णां प्रवरोऽस्ति ॥

अत उभयतो द्वौ द्वौ न ग्रहीतव्यौ । कुतः ? चतुर्णां वरणनिषेधात् । गानाष्टृ.

न पञ्चानामतिप्रवरणम् ॥

अतिपञ्चानां प्रवरनिषेधात् । तेन द्वयोरेकार्षत्वेऽपि द्व्यार्षेयवरणमनुज्ञातमिति गम्यते । गानाष्टृ.

आङ्गिरस–बार्हस्पत्य–भारद्वाज–कात्य–आत्कील –इति ॥

(१) आश्वौ. २।६।१२ ; गोप्र. ४५–४६ ; संकौ. १९४ (तेषामुभयतः प्रवृणीत एकमितरतो द्वावितरतो द्वौ वतरतस्त्रीनितरतो न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणम् ।) एतावदेव ; कृभ. १०५४ ( तेषामुभयतः......इत्यादि ) ; संर. ४१२ सर्वौवद् .

प्रदर्शनमात्रमेतत् । द्यामुष्यायणलक्षणमुच्यते — ' अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । आवयोरप्यसौ *रिक्थी पिण्डदाता च धर्मतः ॥* ' इति *याज्ञवल्क्य*वचनादेवंप्रकारमेव द्यामुष्यायणत्वं, नान्यथेति मन्तव्यम् । द्यामुष्यायणानां सर्वदा पक्षद्वयेऽप्यविवाहः । द्यामुष्यायणत्वाभावे वा ' ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च ' इत्यस्य वचनस्याविषयः । गानाष्टृ.

## कात्यायन–लौगाक्षि–श्रौतसूत्रम्

### केवलभरद्वाजाः

१ आत्रेयायनि– २ मार्कण्डि– ३ वालिशायनि– ४ सौपिष्ट– ५ सौगेय– ६ आग्निवेश्यानां ७ शालाथल– ८ वाराहि– ९ शौङ्गि– १० तृणकर्णि– ११ प्रावाहणेयानां १२ आश्वलायनि– १३ वावाश्रौगिरधि– १४ खारिग्रीवीणां १५ ऐपुमति– १६ साज्यङ्कि– १७ काञ्चकिकायनानां १८ नैतुन्दि–

(१) गोप्र. ४३ ; संप्र. ६३१, ६४४ ; प्रद. ११६ ; संकौ. १८७ ; संर. ४३४.

३ गोप्र. वासिनयनि ; प्रद. वाल्शिायिनिः ; संकौ. संर. वाल्शिायनाः .

४ गोप्र. चौपिष्ट ; प्रद. संकौ. संर. सौविष्टाः .

६ गोप्र. याज्ञवेश्यानाम् .

७ गोप्र. सारावरि ; संप्र. साह्वारि, सारावरि, सारावरयः ; संकौ. संर. सारावयः .

८ गोप्र. वाहि ; संप्र. प्रद. संकौ. संर. वाहयः .

९ गोप्र. संप्र. सौङ्गि ; प्रद. साङ्गिः .

१० गोप्र. रुणकर्णि ; संप्र. तूणकार्णि, तूणकर्णयः ; प्रद. संकौ. संर. तूर्णकर्णयः. संप्र. अस्यानन्तरं नूपाकर्णि इत्यधिकम् ।

१३ संप्र. वावश्रौगिर्व्यधि ; प्रद. वाताङ्गिरधिः .

१४ गोप्र. कारग्रीवाणाम् ; संप्र. कारग्रीविणाम् ; संकौ. संर. स्वारग्रीवयः ; प्रद. कारग्रीविः .

१५ गोप्र. मैथुमनि ; संप्र. प्रद. संकौ. संर. मैथुनमतयः .

१६ संप्र. साष्टङ्कि ; प्रद. स्वञ्जाङ्किः .

१७ संप्र. काचकिकायनानाम् ; प्रद. काचकिः कायनः .

१८ गोप्र. त्रैतुटि ; संप्र. तैतुरि ; प्रद. त्रैतुण्डिः .

१९ धौवकीनां २० सोमस्तम्बि– २१ ब्रह्मस्तम्बि– २२ तौल्वलि– २३ वैपुगोद्वेपीणां २४ शालुहि– २५ वालुहि– २६ सौबुद्धिक– २७ भारद्वाज– २८ औदमेघि– २९ देवमति– ३० देवागारि– ३१ देवस्थानि– ३२ हरिकर्णि– ३३ ध्राङ्गवि– ३४ ध्रौगेय– ३५ कौमुदगन्धि– ३६ सात्यमुग्रि– ३७ मात्स्यक्राथ– ३८ मालेहर– ३९ हालेहर– ४० गाङ्गोदकि– ४१ कौरुक्षेत्रि– ४२ द्रौणि– ४३ जैत्रि– ४४ जैत्वलायनानां ४५ कार्ण्यविजलिः ४६ आपस्तम्बि– ४७ सौजपृभि– ४८ पौलि– ४९ खाङ्गलायनाः इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस– बार्हस्पत्य– भारद्वाज– इति। अङ्गिरोवद्– बृहस्पतिवद्– भरद्वाजवद्–इति॥

गर्गाः पञ्चार्षेयाः

१ कौलायनाः २ कैवलयः अथो ३ वत्सतरायणाः ४ भ्राष्ट्रकृद्– ५ भ्राष्ट्रविन्दवः ६ ऐन्द्रालि– ७ सायकायनाः ८ कौलात्र– ९ क्रियाश्वा– १० क्रीव– ११ कालकृत्– १२ मातुल– १३ यावकृद्– १४ भाल्लविः १५ औपमर्कटः १६ प्रोत्सङ्गिः १७ पैङ्गलायनाः १८ श्यामाः १९ श्यामायनाः २० गार्ग्याः २१ सांपरिवाराः इत्येतेषामविवाहः।

---

१९ गोप्र. धौरितौवकीनाम् ; संप्र. धौरिधौताम्बकीनाम्, धौताम्बकय ; प्रद. धौताम्बकि ; संकौ. संर. धौनाम्बकयः.

२० गोप्र. सामस्तम्बि ; संप्र. सामस्तम्बयः, सोमस्तम्बयः, सोपस्तम्बय ; प्रद. सामस्तविः ; संकौ. संर. सामस्तम्बयः, सोमस्तम्बयः.

२१ जेबी. ( ० ).

२२ संप्र. तौल्वलि, तौच्छलि.

२३ गोप्र. वैयुगोद्वेपीणाम् ; संप्र. युगाद्वेपीणाम् ; प्रद. वैयुः गोद्वेषी.

२४ गोप्र. सालुटि ; संप्र. सालुहि, शालुहयः ; प्रद. सालहिः ; संर. शालुहव.

२५ गोप्र. वालुटि ; संकौ. संर. ( ० ).

२६ गोप्र. सौबुद्धिकाः ; संप्र. सौबुद्धिकाः, सौबुद्धय ; संकौ. संर. सौबुद्धय.

२७ गोप्र. भरद्वाज.

२९ गोप्र. परोषमिति ; संप्र. घटेषुमति ; प्रद. परेषमतिः.

३० गोप्र. देवागिरिधि ; संप्र. देवागारि, देवगारय ; प्रद. संकौ. देवगारयः ; संर. देवाङ्गरयः.

३२ संप्र. संकौ. संर. हारिकर्णय.

३३ गोप्र. भ्राङ्गवि ; संप्र. ध्वाङ्गवि ; प्रद. भ्रागविः.

३४ गोप्र संप्र. प्रद. ध्रौगय.

३७ गोप्र. प्रद. मात्स्यक्षीष ; संप्र. मात्स्यक्षीक.

३९ गोप्र. हालेद्वार ; संकौ. हालीदरा ; संर. हालोदराः.

४० गोप्र. गाङ्गोवदकि ; संप्र. गङ्गोदकय ; संकौ. गाङ्गोदयः ; संर. गङ्गोदय.

४१ संप्र. कौरुक्षेत्रि, कौरुक्षजयः ; संकौ. संर. कौरुलेत्रयाः.

४२ गोप्र. द्रोणि.

४४ संप्र जित्वमायमानाम्.

४५ संप्र. कार्ण्यविजालिः.

४८ संप्र. पौल्नि, सपौलयः ; संकौ. संर. सपौलयः.

४९ गोप्र. सङ्गलायनाः ; प्रद. खाङ्गलायनः.

(१) गोप्र. ४३ ; संप्र. ६४४ ; प्रद. ११६ ; संकौ. १८७ ; संर ४३५.

२ गोप्र. केशमर्थी ; संप्र. केशमथाः ; प्रद. कैपर्मिः.

३ गोप्र. वच्यनरायणाः ; संप्र. वाच्यनमरायणाः ; संकौ. संर. वात्सनरायणाः.

५ गोप्र. भ्राष्टमितिः ; संप्र. भ्रष्टुभिविदि.

६ संप्र. ऐन्द्रलि.

७ गोप्र. शालाङ्कायानाः ; संप्र. प्रद. शालङ्कायनाः.

८ प्रद. कौलाख्य.

९ गोप्र. क्रियास्वा; प्रद. क्रियाश्वः.

१० गोप्र. क्रित्र.

१२ संप्र. मातु ; प्रद. मातुलेय.

१३ प्रद. यावकि.

१४ गोप्र. मालपः.

१५ गोप्र. ओपकर्मयः ; संप्र. औपयकट ; प्रद. औपमर्कटिः.

१६ गोप्र. प्रध्यङ्गा ; संप्र. प्रेध्यग ; प्रद. प्रेध्यङ्गः.

१७ गोप्र. पैगलायनाः ; संप्र. प्रद. पैगलायन.

१८ संप्र. प्रद. ( ० ).

१९ गोप्र. संकौ. शामायनाः.

२० गोप्र. गर्गाः.

२१ प्रद. सापरिवारः.

तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस– बार्हस्पत्य– भारद्वाज– शैन्य– गार्ग्य– इति । अङ्गिरोवद्– बृहस्पतिवद्– भरद्वाजवत्– शिनिवद्– गर्गवद्– इति ॥

**गर्गाः त्र्यार्षेयाः**

१ तैत्तिरिः २ कपिभूमिः ३ खन्दितः ४ खण्डितः ५ *गर्गाः* इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस– शैन्य– गार्ग्य– इति । अङ्गिरोवत्– शिनिवद्– गर्गवद्– इति ॥

**कपयः**

१ कपिस्तरिः २ स्वस्तितरः ३ विन्दुः ४ दण्डिः ५ शक्तिः ६ पतञ्जलिः ७ भूयसी च ८ तैवरन्धिः ९ चैतकिः १० ऊर्ध्वास्तः ११ राजकेशी १२ कलशीकण्ठः १३ कारीरयः १४ वान्यायनाः १५ आमावास्यायनाः १६ काप्यायनाः इत्येतेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–आमहीयव–औरुक्षय–इति । अङ्गिरोवद्–अमहीयवद्–उरुक्षयवद्–इति ॥

**शौङ्गशैशिराः**

अथेमानि द्व्यामुष्यायणकुलानि भवन्ति । * भरद्वाजाः गाधाः, शौङ्गाः शैशिराः ( भरद्वाजाः शुङ्गाः, कताः शैशिराः ) इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस–बार्हस्पत्य–भारद्वाज–शौङ्ग–शैशिर–इति । अङ्गिरोवद्–बृहस्पतिवद्–भरद्वाजवत्–शुङ्गवत्–शिशिरवत् ॥

**ऋक्षाः**

१ कपिलाश्च २ शबराश्च ३ विमिण्ड–४ कौथुम–५ अग्निजिह्वी च ६ कर्णश्च ७ सूतश्च ८ ऋक्षा भरद्वाजा इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस–बार्हस्पत्य–भारद्वाज–वान्दन–मातवचस–इति । अङ्गिरोवद्–बृहस्पतिवद्–भरद्वाजवद्–वन्दनवद्–मतवचोवत् ॥

---

( १ ) गोप्र. ४३ ; संप्र. ६३२,६४४ ; प्रद. ११७ ; संकौ. १८७ ; संर. ४३६. संप्र. (पृ. ६३२ ) प्रद. संकौ. संर. एतेषां मतनेत गर्गभेदाः ।

१ गोप्र. प्रद. तित्तिरिः ; संकौ. संर. तित्तिरः .

२ गोप्र. कपिभूमिः ; प्रद. कपिः, भूमिः ; संर. कपिभुवः .

३ गोप्र. संप्र. खन्दिनः ; प्रद. स्वन्दितिः ; संकौ. संर. ( ० ).

४ गोप्र. ( ० ).

५ संप्र. प्रद. गर्गः ; संकौ. संर. ( ० ).

( २ ) गोप्र. ४३ ; संप्र. ६४४,६४६ ; प्रद. ११७ ; संकौ. १८७ ; संर. ४३५.

१ गोप्र. कपिः ; संप्र. कपिः , कपयः ; प्रद. कपिः तरिः ; संकौ. संर. कपयः .

२ गोप्र. तित्तिरिः ; संप्र. तित्तिरिः, स्वस्तिरयः ; प्रद. स्वस्तरिः ; संकौ. स्वस्तितरयः ; संर. स्वस्तितरवः .

३ गोप्र. विदिः ; संप्र. विदि, विन्दवः ; प्रद. विदुः .

४ संप्र. वण्डिः, दण्डिनः ; संकौ. दण्डिनः .

५ संप्र. शाक्तिः , दिक्ष्वशक्तयः ; संकौ. संर. दिक्ष्वशक्तयः .

७ जेवी. भोजसी.

८ गोप्र. तिवरधिः ; संप्र. तिवरन्धिः, स्तैवरन्धयः ; संकौ. तैरन्धयः ; संर. तैरेवयः .

९ संर. वैतकयः .

१० गोप्र. प्रद. अध्वासुः ; संप्र. भध्वासु, ऊर्ध्वास्ताः ; संकौ. संर. ऊर्ध्वाः .

११ संकौ. ताराजकेशिन .

* ' भरद्वाजाः ग्राधाः, शौङ्गाः शैशिराः ' इत्यनुपपन्नम् । अत्रेदं कल्प्यते– विश्वामित्रस्य गाधिपुत्रत्वाद् गाधाः नाम विश्वामित्राः । यथासंख्यं चान्वयः । तथा च शौङ्गानां भरद्वाजत्वं शैशिराणां विश्वामित्रत्वं चोक्तं भवति ।

१२ गोप्र. कलानिकटम् ; संप्र. कलासिकाम् , कलशिनः, कण्ठाः ; प्रद. कलसी, कण्ठरिः ; संकौ. संर. कलसिनः, कण्वाः .

१३ गोप्र. कोरीरयः ; संप्र. कोरिरयः, कारीरयाः ; प्रद. ( ० ) ; संकौ. कारीतय ; संर. करीतपः .

१४ गोप्र. वान्यायनः ; प्रद. ( ० ).

१५ गोप्र. ( ० ) ; संप्र. आमावास्यानाः ; प्रद. अमावास्यायनः .

१६ गोप्र. संप्र. प्रद. संकौ. संर. कात्यायनः .

( १ ) गोप्र. ४५.

( २ ) गोप्र. ४५.

## मानवश्रौतसूत्रम्

### केवलभरद्वाजाः

अथ १ आत्रेयायणि- २ माधूकर्णि- ३ वाल्कलि- ४ सौपिष्टय- ५ आग्निवेश्यानां ६ शालाथल- ७ वाराह- ८ शौङ्ग- ९ कृपनपर्ण- १० प्रावाहणेयानां ११ माश्राय- १२ व्यायोगिच्छन्दात- १३ खारिग्रीवीणां १४ ऐपुमति- १५ शय- १६ कावकिकाविकायनानां १७ नैतुन्दि- १८ लिर- १९ वैन्धङ्कीनां २० चैधकीकया- २१ चरातकि- २२ मनहालानां २३ सोमस्तम्बि- २४ तौल्वलि- २५ पौपुयावदिशीनां २६ शाल- २७ वाल्यैह- २८ देवमत- २९ हारिकर्ण- ३० द्राङ्गव- ३१ चौचेय- ३२ कौमुदगन्धि- ३३ खारिणादि- ३४ राजस्तम्बि- ३५ सामस्तम्बि- ३६ सोमस्तम्बि - ३७ औदमेघि- ३८ गाण्डकी- ३९ लौहितकी- ४० काण्डक- ४१ धाना- ४२ कुलक- ४३ सात्यमुग्रि- ४४ शैवव्यथ- ४५ भारद्वाजाः इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

### गर्गाः पञ्चार्षेयाः

१ काणायनाः २ कैवलयः अथो ३ वत्सतरायणाः ४ क्रौण्डायनाः ५ वार्द्धनयः अथो ६ वांशायनाः च ये ७ भ्राष्ट्रकृद्- ८ भ्राष्ट्रविन्दुः च ९ ऐन्द्रालि- १० सायकायनः ११ कोली च १२ क्रीकाः १३ नीसान्त्य- १४...... कृत् १५ स्नापुरावट- १६ लावकि- १७ भालुविः १८ उपमर्कटि- १९ प्रोत्सङ्गिः २० श्यामायनाः २१ यैलुकायन- २२ साम्भरभामत्......शैन्य-गार्ग्य-इति होता। इत्यादि ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

### गर्गाः त्र्यार्षेयाः

१ तैतिरिरि- २ कविः ३ भूमः ४ गर्गा इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

### कपयः

१ कपिस्तरः २ स्वरिततरः ३ विन्दुः ४ दण्डिः ५ शक्तिः ६ पतञ्जलिः ७ भोजव- ८ अरुद्धः ९ चैवद्धिशाली १० शीतकिः ११ अर्द्धे १२ राजकेशी १३ चौच्चुटी १४ शांशापि १५ कलशीकण्ठः १६ कारीरयः १७ वान्यायनाः १८ वामध्मायनाः १९ काप्याः २० कवयः इति । प्रवराः-आङ्गिरस-आमह्यव-उरुक्षयस-इति ॥

### शौङ्गशैशिराः

अथ यान्येतानि द्व्यामुष्यायणानि कुलानि भवन्ति, यथैतत् शौङ्गशैशिरयः, भरद्वाजाः शुङ्गाः, कताः शैशिरयः, इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस-बार्हस्पत्य-भारद्वाज-शौङ्ग-शैशिर-इति । इत्यादि ॥

### ऋक्षाः

रुक्षभरद्वाजानां पञ्चार्षेयः प्रवरो भवति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

## शुक्लयजुर्वेदपरिशिष्टम्

### केवलभरद्वाजाः

अथ १ आत्रेयायणि- २ माभूकर्णि- ३ वार्केलि - ४ सौपिष्टय- ५ आग्निवेश्यानां ६ शालाथल- ७ भाराह- ८ शौङ्गय- ९ क्रोणकवर्ण- १० प्रावाहणेयानां ११ आश्विन- १२ वाद्युतिच्छन्ति- १३ खारिग्रीवीणां १४ ऐपुमति- १५ साक्र- १६ काजङ्किकाजयनानी १७ नैतुन्दि- १८ भैरि- १९ वैकुन्तकाता- ( कानां ? ) २० भौवोवकेया- २१ वरातकि- २२ मालह्यनानां २३ तौल्वलि- २४ पौष्पद्वीजीना- २५ सालैहि- २६ वालैहि- २७ सौपर्थीनां २८ देवमत- २९ हरिकर्ण- ३० द्राङ्गव- ३१ औपेय- ३२ कौमुदगन्धि- ३३ खारिणादि- ३४ राजस्तम्बि- ३५ सामस्तम्बि- ३६ सौपस्तम्बि- ३७ ब्रह्मस्तम्बि- ३८ सात्यमुग्रि-

( १ ) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः प्रा. ऑन श्रीमद्वाशयेन सम्पादितात् 'गोत्रप्रवरमञ्जरी' पुस्तकात्संगृहीतः ।

( १ ) शुक्लयजुर्वेदपरिशिष्टोक्तो गोत्रप्रवरविचारः प्रा. ऑन श्रीमद्वाशयेन संपादितात् 'गोत्रप्रवरमञ्जरी' पुस्तकात् संगृहीतः ।

३९ औदमेघीनां ४० गदक– ४१ लौहीतकु– ४२ हारीत– ४३ काण्डकुप्कुनी– ४४ कुलक– ४५ शैपथ– ४६ भारद्वाजाः इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । ).

गर्गाः पञ्चार्षेयाः

१ काणायनाः २ कैवलयः अथो ३ वत्सतरायणाः ४ कोडायनाः ५ वार्धनयः अथो ६ वांशायनाः च ये ७ भ्राष्ट्रकृद् ८ भ्राष्ट्रबिन्दुः च ९ ऐन्द्रालि– १० सायकायनाः ११ क्रोठी च १२ क्रीडी च १३ काशी च १४ भालकृत् १५ माद्युरवारताः १६ कहोलकीः १७ उपमर्कटि– १८ प्रेत्सगि– १९ श्यामायन– २० पैसुकायन– २१ शाम्भरभार- मत– २२ गार्ग्य– २३ वालाकि– इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

गर्गाः त्र्यार्षेयाः

१ तैतिरिः २ कविभूसः ३ गर्गाः इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

कपयः

१ कपिस्तरः २ स्वस्तितरः ३ बिन्दुः ४ दण्डिः ५ शक्तिः ६ पतञ्जलः ७ भोजसी च ८ जलु- न्धयः ९ चितृशाली १० कुक्षितकि– ११ ऊर्ध्वश् – १२ राजकेशी १३ चोचुटिः १४ शंशिपिः १५ कलशीकण्ठः १६ कारीरयः १७ वाह...... तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–आमहीयव...द्– अङ्गिरोवद्– इत्यध्वर्युः ॥

शौङ्गशैशिराः

अथ यान्येतानि द्व्यामुष्यायणानि कुलानि भवन्ति, यथैतत् शौङ्गशैशिरयः, भरद्वाजाः शौङ्गाः, कताः शैशिरयः, इत्येतेषामविवाहः । तेषां पञ्चार्षेयः प्रवरो भवति । आङ्गिरस–बार्हस्पत्य–भारद्वाज–कात्य–आत्कील–इति ॥ इत्यादि ॥

ऋक्षाः

१ कपिलाश्च २ शयलाश्च ३ वैमिण्ड– ४ कौथुम– ५ अग्निजिह्वी च ६ कर्णश्च ७ सूतश्च ८ रुक्ष– भरद्वाजा इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

## मत्स्यपुराणम्

केवलभरद्वाजाः

१आत्रेयायणिसौपिष्टावग्निवेशैः शिलास्थलिः ।
वालिशायनिश्चैकिपिर्वाराहिर्वाष्कलिस्तथा ॥
२शौङ्गिश्च तृणकर्णिश्च प्रवाहिश्चाश्वलायनिः ।
वाह्यगच्छिर्दशौदीकिः खारिग्रीविस्तथैव च ॥
३कारकिश्च महाकापिस्तथा चोडुपतिः प्रभुः ।
कौचकिर्धूमितश्चैव पुष्पान्वेपिस्तथैव च ॥

( १ ) मत्स्य. १९६।१२ ; गोप्र. ४७ ; संप्र. ६६६.
[ गोत्रप्रवरनामसंग्रहः संप्र. ६३१ ; प्रद. ११६ ; संकौ. १८७ ; संर. ४३४ इत्यत्र द्रष्टव्यः । ]

१ गोप्र. संप्र. आत्रेयायनि.

२ मत्स्य. सौवेष्ट्यौ ; गोप्र. साविष्ट्यौ ; संप्र. सौवत्सौ, सौविद्याः ; संकौ. संर. सौविद्याः .

३ मत्स्य. अग्निवेश्यः .

४ संप्र. शिलाथिलिः, शिलालयः ; प्रद. शिलातलिः ; संकौ. शिलापलयः ; संर. शिलामलयः ; जेबी. शलाथलः .

५ मत्स्य. वालिशायनिः ; संकौ. संर. वालिशायनाः .

६ मत्स्य. चैकेपी ; संप्र. चिविपिः, विधिपयः ; प्रद. चिकीर्षिः ; संकौ. विविपथः ; संर. विविपयः .

८ मत्स्य. गोप्र. प्रद. वाष्कलिः ; संप्र. वाष्कलिः .

( २ ) मत्स्य. १९६।१३ ; गोप्र. ४७ ; संप्र. ६६६.

९ मत्स्य. गोप्र. सौढिः ; संप्र. सौठिः, सौढयः ; प्रद. सौढिः ; संकौ. सौढयः ; संर. सौढयः .

१० गोप्र. तृणवर्णिः ; प्रद. संकौ. संर. तूर्णकर्णयः .

११ मत्स्य. प्रावहिः .

१२ गोप्र. संप्र. प्रद. लभायनिः ; संकौ. संर. लाभायनयः .

१३ मत्स्य. वाराहिः ; गोप्र. वाह्यगच्छश्च ; संप्र. माह्य- गच्छिः, वाह्यगच्छयः ; प्रद. वाह्यगच्छिः .

१४ मत्स्य. वर्हिसादी च ; गोप्र. दिष्टाकिः ; प्रद. दशादकिः .

१५ मत्स्य. शिखाग्रीविः ; गोप्र. स्वारग्रीविः ; संप्र. स्वार- ग्रीवः, स्वारग्रीवयः ; प्रद. सारग्रीवी ; संकौ. संर. स्वारग्रीवयः .

( ३ ) मत्स्य. १९६।१४.

१सोमै[22]स्तम्बि[23]र्ब्रह्म[24]स्तम्बि: सौलडि[25]र्वालहिस्तथा ।
दे[26]वागारि[27]र्दैवस्था[28]निर्हारि[29]कर्णि: सरिद्भुवि: ॥
२[30]मौवेपि: सौ[31]त्यमुग्रिश्च तथा कौमु[32]दगन्धिक: ।
मौ[33]त्स्यश्चाथो मौ[34]लोहरो हालो[35]हरस्तथैव च ॥
३[36]गाङ्गोदकि: कौरु[37]पति: कौरुक्षेत्रि[38]स्तथैव च ॥
४[39]नैयकि[40]र्जैत्य[41]द्रौणिश्च जैत्वलायनिरेव च ॥
५आर्प[42]स्तम्बि: सौज[43]पृभि: गोधपिङ्ग[44]लिरेव च ।
पौलि[45]श्चैव महातेजा: शाल[46]ङ्कायनिरेव च ॥
१त्र्यार्षेय: प्रवरश्चैव सर्वेषां प्रवरोत्तम: ।
अङ्गिरा: प्रथमस्तेषां द्वितीयश्च बृहस्पति: ॥
२तृतीयश्च भरद्वाज: प्रवरा: परिकीर्तिता: ।
परस्परमवैवाह्या इत्येते परिकीर्तिता: ॥

---

(१) मत्स्य. १९६।१५.

२२ मत्स्य. सोमतन्वि: .

२३ मत्स्य. ब्रह्मतन्वि° .

२४ संप्र. शालुहय: (?) ; प्रद. साल्हि: (?) .

२५ संप्र वालुहय: (?) ; प्रद. बालुहि: (?) .

२६ मत्स्य. देवरारि: ; संप्र. प्रद. संकौ. देवगारय: ; संर. देवाङ्करय: .

(२) मत्स्य. १९६।१६.

३१ मत्स्य. सात्यमुग्रीवि: .

३२ मत्स्य. गोमेदगन्धिक° .

३३ मत्स्य. मत्स्याच्छाय: .

३४ मत्स्य. मूलहर: .

३५ मत्स्य. फलाहार: ; संकौ. हालीहरा: ; संर. हालेदरा: .

(३) मत्स्य. १९६।१७.

३६ मत्स्य. गाङ्गोदधि: ; संप्र. गङ्गोदकय° ; संकौ. गाङ्गोदय° ; संर गङ्गोदय: .

३७ संप्र. कौरुक्षजय° ; संकौ. संर. कौरलेत्रया° .

(४) मत्स्य. १९६।१७ ; गोप्र. ४७ ; संप्र. ६६६ .

३९ गोप्र व्यटाकि: ; संप्र. पटाकि: , व्यढाकय: ; प्रद. व्याढाकि ; संकौ व्यठाकय: ; संर व्यष्टकय° .

४० गोप्र. संकौ. संर. जित्यद्रोणि: ; संप्र. जित्यद्रोणि: , जिह्वाद्रोणय° .

४१ मत्स्य, जैह्वलायनि° ; गोप्र. जैक्षलायनि: ; संप्र. जैक्षलायनि: , जैह्वलायनय° ; प्रद. जैह्वलायन: ; संकौ. जैह्वलायनय° ; संर जैह्वलायनय: .

(५) मत्स्य. १९६।१८ ; गोप्र. ४७ ; संप्र. ६६६ .

४३ मत्स्य मौञ्जवृष्टि ; गोप्र. मार्जवृष्टि° ; संप्र. वाजवृष्टि° ; प्रद. भाजभृश्नि° ; संकौ. वाजवृषय° ; संर. वाजभृष्टय: .

४४ मत्स्य. मार्ष्टपिङ्गलि: ; गोप्र. संप्र. गोस्वपिङ्गलि: ; संकौ. गोरवपिङ्गल्य° ; संर. गोखपिङ्गल्य° .

४५ मत्स्य. गोप्र. संप्र. प्रद. संकौ. संर. पैल: .

४६ प्रद. शाकलायन: ; संर. शालङ्कायन:.

(१) मत्स्य. १९६।१९ पूर्वार्धे ( व्याख्येयो मारुतश्चैषां सर्वेषां प्रवरो नृप । ) ; गोप्र. ४७ रोत्तम: ( रो मत: ) ; संप्र. ६६६ द्वितीयश्च ( द्वितीयोऽथ ) .

(२) मत्स्य. १९६।२० ; गोप्र. ४७ ; संप्र. ६६६ उत्तरार्धं नास्ति.

भरद्वाजगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामान्युपलभ्यन्ते । तानि यथा—

१ साष्टकय — संकौ. साष्टङ्कय: ; संर. साष्टकय° .

२ काम्बय:— संकौ. संर. काङ्क्षय: .

३ शाङ्खायना°— संकौ. संर. खगखलायना: .

४ लेखायना.— प्रद. लखायन° .

५ विविपि:— (प्रद.) चिकिपि° इत्यस्याय पाठभेद: स्यात् .

६ कारुणायना:— सर्वत्र समानम् ।

७ चेला°— प्रद. चेलाक्ष: .

८ रूक्षा°— संकौ. संर. रक्षा: .

९ किकायना — प्रद. ( ० ) .

१० वालक्षला— प्रद. बाल्क्षगौरिव: ; संकौ. बाल्क्षा: ; संर. वालक्षा: .

११ गौरिवा°— सर्वत्र समानम् ।

१२ सौपथा — संप्र. सौपया: ; प्रद. सौयथ: .

१३ सौभरा:— प्रद. ( ० ).

१४ धौरय:— प्रद. धोरि: ; संकौ. धौरकुकुलिका: ; संर. धौरकुलिका: .

१५ कुलिका°— प्रद. कुलकि° .

१६ त्रिकाजा — प्रद. किकाज: ; संकौ. विकारा: ; संर. विकिरा° .

१७ कुपिना:— प्रद. कुपित: ; संकौ. संर. कुपिया: .

१८ मालहल्या:— प्रद ( ० ) ; संकौ. संर. मालाहला: .

१९ श्रीपथा°— सर्वत्र समानम् ।

२० आपिना:— संप्र. प्रद. संकौ. ( ० ) .

२१ निद्राङ्गवधा:— प्रद. निद्रागवध° ; संकौ. निद्राङ्गवाम्बा: .

गर्गाः पञ्चार्षेयाः

१काण्वायनाः कैवलेयस्तथा वात्स्यतैरायणाः ।
भ्राष्ट्रकृद् भ्राष्ट्रविन्दुश्च ऐन्द्रालिः सायकायनिः ॥

२२ शैखेयाः— संप्र. शैलेयाः .
२३ माधूकर्ण्याः— गोप्र. माधूकर्णः ; संकौ. माधूकवर्याः ; संर. माधुकवर्याः .
२४ काण्डण्याः— सर्वत्र समानम् ।
२५ औवेयाः— सर्वत्र समानम् ।
२६ खारणादयः— प्रद. स्वारणादिः ; संकौ. रवारणादयः .
२७ अधिकारग्रीवयः— प्रद. ( ० ) .
२८ यवकयः— प्रद. त्र्यम्बकः ; संकौ. अयवकयः ; संर. अयम्बकयः .
२९ मापायणाः— प्रद. मापायनः .
३० शक्ताः— प्रद. शाक्तलाजः ; संकौ. संर. शाक्ताः .
३१ काजाः— सर्वत्र समानम् ।
३२ सौविश्वाः— प्रद. सौवश्वः .
३३ कामुकायनाः— प्रद. कामकायनः ; संर. कमुकायनाः .
३४ सिन्धवः— प्रद. शिन्धवः .
३५ आश्वलायनाः— प्रद. ( ० ) ; संकौ. संर. आश्वलायनः .
३६ मार्कण्डेयाः— प्रद. ( ० ) ; संर. मार्कण्डेयः .
३७ सौङ्गयः— प्रद. ( ० ) ; संप्र. सौगयः .
" अत्र मूलं मृग्यम् " इति प्रवरदर्पणकारोक्तिः ।
एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेद-परिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

( १ ) मत्स्य. १९६।२१ ; गोप्र. ४८ ; संप्र. ६६६ .
[ गोत्रप्रवरनामसंग्रहः प्रद. ११६-१७ ; संकौ. १८७ ; संर. ४३५ इत्यत्र द्रष्टव्यः । ]
१ संप्र. कण्वायनाः ; जेबी. काणायनाः .
२ मत्स्य. कोपचयाः ; गोप्र. कौजवथः ; संप्र. कौजवयः ; प्रद. कैवलायनः , कौजविः ; संकौ. कौजवयः , कैवलायनाः ; संर. कौजपयः , कैवलायनाः .
३ गोप्र. वात्स्यतरायणः ; संप्र. वत्सतरायणाः ; प्रद. जेबी. वात्सतरायणः .
४ संप्र. भ्रष्टकृद् .
५ मत्स्य. राष्ट्रपिण्डी ; गोप्र. भ्रष्टविण्णी ; संप्र. अभ्रविन्दी ; प्रद. विदुः .
६ मत्स्य. लैन्द्राणिः ; गोप्र. लैन्द्रालिः ; संप्र. लन्यालिः ; प्रद. नैद्राक्षिः .
७ गोप्र. शाकल्यनः ; संप्र. प्रद. शाकलायनिः ; संकौ. संर. शाल्यनयः .

१कौडिश्चाक्षी च याष्णिश्च कालकृन्मधुरावहः ।
लावकृद्गार्हविश्चौपमर्कटः पौलिकायनः ॥
२प्रोतसङ्गिश्च तथा श्यामाः गार्ग्यः श्यामायनिस्तथा ।
वालाकिः साम्भरश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥
३अङ्गिरास्तु महातेजा देवाचार्यो बृहस्पतिः ।
भरद्वाजस्तथा गर्गः शैन्यश्च भगवानृषिः ॥

( १ ) मत्स्य. १९६।२२ ; गोप्र. ४८ ; संप्र. ६६६ .
८ मत्स्य. क्रोष्टाक्षी ; प्रद. कौलाक्षिः ; संकौ. संर. कौलिनः .
९ संप्र. वाष्मी. उपरितनं नाम द्रष्टव्यम् ।
१० मत्स्य. बहुवीती च ; संप्र. वाष्मी च .
११ मत्स्य. तालकृद् ; गोप्र. लानकृद् ; संप्र. तातकृद् ; प्रद. संकौ. संर. ( ० ) .
१२ जेबी. मातुलस्तथा.
१३ गोप्र. लायकृद् ; संप्र. लोपकृद् ; प्रद. लावय, लोपकृद् ; संकौ. संर. लोपकृनः ; जेबी. यावकृद्.
१४ मत्स्य. गालविद् ; गोप्र. भालविद् ; संप्र. गालवि ; प्रद. कालविद् ; संकौ. भाल्विदाः ; संर. भालविदः .
१५ मत्स्य. गाथी, मार्कटिः ; गोप्र.-रौपौ, मर्कटः ; संप्र. -कुपो, मर्कटः ; प्रद. गाधिः , मार्कटिः ; संकौ. संर. औपमर्कटाः .
१६ मत्स्य. पौलिकायनिः ; गोप्र. पैलिकायनः ; प्रद. पैश्चिकायनः ; संकौ. संर. पैल्वकायनाः .
( २ ) मत्स्य. १९६।२३ ; गोप्र. ४८ ; संप्र. ६६६ .
१७ मत्स्य. स्कन्दसः ; गोप्र. संप्र. गृत्सङ्गः ; प्रद. प्रैयङ्गः ( ? ) ; संकौ. प्रश्यङ्गाः ( ? ) ; संर. पैशङ्गाः ( ? ) .
१८ मत्स्य. चक्री ; गोप्र. प्रद. दामी ; संप्र. दार्भिः ; संकौ. संर. रामिनः .
१९ गोप्र. भागिः ; संप्र. गार्भिः ; प्रद. भाङ्गी ; संकौ. संर. भाङ्गिनः .
२० प्रद. श्यामायनः ; संकौ. शामायनाः ; संर. श्यामायनाः .
२१ मत्स्य. प्रद. बलाकिः ; संप्र. बालकिः ; संकौ. संर. वालाकयः .
२२ मत्स्य. साहरिः ; गोप्र. संप्र. साहनिः ; प्रद. साहरिः, सामारः ( ? ) ; संकौ. साहनयः, साम्भाराः ; संर. साहनयः, साम्भादाः .
( ३ ) मत्स्य. १९६।२४ अङ्गिरास्तु ( अङ्गिराश्च ) शैन्यश्च ( सैलश्च ) ; गोप्र. ४८ दीन्यश्च ( सैन्यश्च ) ; संप्र. ६६६ उत्तरार्धे ( भरद्वाजो गर्गसैन्यो समानप्रवरत्वतः । ) .

१परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

कपयः

२कपिस्तरः स्वस्तितरः दिक्ष्वैशक्तिः पतंञ्जलिः ॥

३भूयसी जलसिन्धिश्च विन्दुर्दर्ण्डिः कुसीदकिः ।
ऊर्ध्वास्ती राजकेशी च सौजटिः शंसपिस्तथा ॥

(१) मत्स्य. १९६।२५ ; गोप्र. ४८ ; संप्र. ६६६ (सगोत्रत्वात्मका एते परस्परमनन्वया ।).

गर्गगणे प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा–

१ वत्सचतुरायना– प्रद. (०) ; संर. वत्सचतुरायणाः.
२ सांख्यायना – सर्वत्र समानम् ।
३ कानायना.– सर्वत्र समानम् ।
४ कौण्डायना – सर्वत्र समानम् ।
५ स्कन्द– संकौ. संर. (०).
६ स्वश्च.– संकौ. संर. (०).
७ भारमताः– सर्वत्र समानम् ।
८ विश्वायवकायना – प्रद. विश्वकायनः.
९ माधुरावद्वा.– प्रद. माधुरः, वहुः ; संर. माधुरावराः.
१० भालुकृत्– संकौ. भालकृतः ; संर. (०).
११ वांमायनाः– प्रद. वासायनः.
१२ शारायणा – सर्वत्र समानम् ।
१३ कारिण.– सर्वत्र समानम् ।
१४ आस्मिन – प्रद. आदमी.
१५ क्रौडिन– प्रद. श्वकि (१).
१६ रावारना– प्रद. हीरायः, रानः ; संर. रावारताः.
१७ कार्पायणा– प्रद. (०) ; संर. कार्पायनाः.

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते।

(२) मत्स्य १९६।२५ ; गोप्र. ४८ ; संप्र. ६६६.
[गोत्रप्रवरनामसंग्रहः संप्र. ६४६ ; प्रद. ११७ ; संकौ. १८७ ; संर. ४३५ इत्यत्र द्रष्टव्यः ।].

१ मत्स्य. कपीनरः ; गोप्र. कपेतर ; संप्र. –कचेनरौ, कपेनराः ; प्रद. कपैतर ; संकौ. संर. कपेनराः.
२ गोप्र. - स्वस्तैरो ; संप्र. स्वस्तैनर-, स्वस्तयिनराः ; प्रद. स्वैस्तर- ; संकौ. गेस्तरा ; संर. स्वेस्तराः.
३ मत्स्य. दाक्षि शक्तिः ; गोप्र. दिवशक्तिः.

(३) मत्स्य. १९६।२६ ; गोप्र. ४८ ; संप्र. ६६७.

५ मत्स्य. भूयसि ; संकौ. भोजसी.

१शैलिश्च कलशीकण्ठ ऋषिः कारीरयस्तथा ।
काप्यो वार्न्यायनिश्चैव आमावास्यायनिस्तथा ॥

२भारद्वाजिः सौबुधिश्च लघ्वी देवमतिस्तथा ।

३त्र्यार्षेयः प्रवरस्तेषां कपीनां भूमिपोत्तम ॥

४अङ्गिराश्चामहय्यश्च तथा चैवाप्युरुक्षयः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

गर्गाः त्र्यार्षेयाः

५तित्तिरिः[1] कपिभूमिश्च गार्ग्यश्चैव महानृषिः ।

६ मत्स्य. जलसन्धि ; संप्र. जनसिद्धिः, जन्सिन्धयः ; प्रद. जलसिन्धकिः ; संकौ. संर. जलसिन्धयः.
८ मत्स्य. मादिः ; गोप्र. दाडः ; संप्र. दाज- ; प्रद. मादिः.
९ गोप्र. कुसीदकिः ; संप्र. कुसीदरिः ; प्रद. कुसीदः ; संकौ. संर. कुसीदरयः.
१० मत्स्य. ऊर्ध्वः तु ; गोप्र. ऊर्ध्वस्त- ; संप्र. उधतः ; प्रद. ऊर्ध्वमुः.
१२ मत्स्य. वौपडिः ; गोप्र. रोजटी ; संप्र. सौजटिः, स्तौजटयः ; प्रद. सौजटिः ; संकौ. स्त्रौजटय.
१३ गोप्र. संप्र. प्रद. संकौ. सासविः ; संर. सासवयः.

(१) मत्स्य. १९६।२७ ; गोप्र. ४८ ; संप्र. ६६७.

१४ गोप्र. संर. शलिः ; संप्र. शलि, सलयः ; प्रद. संकौ. सलयः.
१५ गोप्र. कलसी कण्वाः ; संप्र. कलसी कण्व, कलशिन, कण्ठाः ; प्रद. कलसी कण्ठरिः ; संकौ. संर. कल्सिनः कण्वा.
१७ मत्स्य. कारय ; गोप्र. क्षवजः ; संप्र. क्षव्ययः, क्षण्याः ; प्रद. क्षपेयः, काप्य ; संकौ. संर. क्षण्या.
१८ मत्स्य. प्रद. धान्यायनि ; संप्र. वाच्यायनिः, वान्यायनाः ; संकौ. संर. वान्यायनाः.
१९ मत्स्य. मावास्यायनिः एव च ; गोप्र. संप्र सावस्यायनिः एव च ; प्रद. सावस्यायनिः ; संकौ. संर. सावस्यायनयः. अस्यानन्तरं संप्र. रुक्षेया इत्यधिकम् ।

(२) मत्स्य. १९६।२८ ; गोप्र. संप्र. लोपवत्यौ ।

(३) मत्स्य. १९६।२८ (त्र्यार्षेयोऽभिमतश्चैषां प्रवरो भूमिपोत्तम ।) ; गोप्र. ४८ कपीनां (प्रवरो) ; संप्र. ६६७.

(४) मत्स्य. १९६।२९ राश्चामहय्यश्च (रा दमवाश्च) ; गोप्र. ४८ ; संप्र. ६६७ (आमहय्योऽङ्गिरा मुख्य उरुक्षयस्तृतीयकः। सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः ॥).

(५) मत्स्य. १९६।४८ ; गोप्र. ५० ; संप्र. ६६८.

१ संकौ. संर. तित्तिरः.

त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरः शुभः ॥

अङ्गिरास्तित्तिरिश्चैव कपिभूश्च महानृपिः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

ऋक्षाः

अथ ऋक्षभरद्वाजौ ऋपिश्च वन्दनस्तथा ।
ऋपिर्मतवचाश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥

अङ्गिराश्च भरद्वाजस्तथैव च बृहस्पतिः ।
ऋपिर्मतवचाश्चैव ऋपिश्च वन्दनस्तथा ।
परस्परमवैवाह्या ऋपयः परिकीर्तिताः ॥

शौङ्गशैशिराः

भरद्वाजः कतः शौङ्गः शैशिरेयस्तथैव च ।
इत्येते कथिताः सर्वे द्व्यामुष्यायणगोत्रजाः ॥

पञ्चार्षेयास्तथा ह्येषां प्रवराः परिकीर्तिताः ।
अङ्गिराश्च भरद्वाजस्तथैव च बृहस्पतिः ॥

मौद्गल्यः( ? शौङ्गश्च ) शैशिरश्चैव प्रवराः परिकीर्तिताः ।
परस्परमवैवाह्या ऋपयः परिकीर्तिताः ॥

( १ ) अथेमानि काण्डानि पिण्डीकृत्य व्याख्यास्यामः । यदुक्तमधस्तात् भृगुगोत्रकाण्डव्याख्यानारम्भे सति 'इहोदाहृतानां' इत्यारभ्य 'व्याख्यास्यामः' इत्येवमन्तेन ग्रन्थेन, तत्सर्वमिहापि स्मर्तव्यम् । अत्रोदाहृतेपु सूत्रकाण्डेपु सूत्रकाराणां पाठक्रमव्यत्यासो महानस्ति, विशेपतश्चाश्वलायनसूत्रपाठे । कथम् ? * बोधायनकात्यायनाश्वलायनादिभिः शुङ्गशैशिरयोऽन्ते पठिताः । आपस्तम्बादिभिः भरद्वाजगणमध्ये पठिताः । ऋक्षाः पुनराश्वलायनेन गौतमकाण्डमध्ये पठिता इहोत्कृष्यन्ते । कपयस्त्वङ्गिरोभ्यो वा ऋक्षेभ्यः परत उक्ता आपस्तम्बादिभिः । इतरैः सर्वैरुत्तरत उक्ताः । तथा सांकृत्यादयोऽपि बोधायनादिभिरन्ते पठिताः । वसिष्ठगणान्तस्तु आपस्तम्बादिभिरुक्ताः । तथा हरितमुद्गलादीनामपि तत्रतत्र पाठक्रमेण भेदः । एवं भेदे सिद्धे सत्यपि बोधायनापस्तम्बकात्यायनादीनां बहूनां पाठक्रमानुसारेण विवाहाविवाहौ वक्ष्यामः । तत्र केवलभरद्वाजानां प्रथमपठितानां शुङ्गशैशिरीणां भरद्वाजमाषादीनां द्व्यामुष्यायणादीनां परस्परमविवाहः । कुतः ? समानगोत्रत्वात् । समानगोत्रत्वं च सर्वेषामेषां भरद्वाजस्य सतर्पेरपत्यत्वात् वरणाच्च । 'भरद्वाजानां सर्वेषामेवाविवाहः' इति बोधायनवचनाच्चाविवाहः । गर्गाणां भरद्वाजत्वं भरद्वाजवरणादेव सिद्धम् । 'त्र्यार्षेयगर्गाणां भरद्वाजर्क्षाणां चाविवाहः' इति गार्ग्यवचनाच्चाविवाहः । कपीना भरद्वाजत्वं भरद्वाजवरणाभावादसिद्धमिति चेत्, नासिद्धम्, आपस्तम्बादिभिर्भरद्वाजगणमध्ये प्रसिद्धभरद्वाजानां ऋक्षाणां गार्ग्याणां च मध्ये पठितत्वात्, पराशरवचनाच्च । तथाहि विष्णुपुराणे चतुर्थेऽंशे एकोनविंशाध्याये पूरोर्वंशानुकीर्तनप्रस्तावे 'दुष्यन्ताच्चक्रवर्ती भरतो बभूव' इत्यारभ्य यन्नामानो यत्क्रमका यावन्तश्च कपीनां प्रवरर्षयोऽत्र श्रुताः तन्नामानः तत्क्रमकास्तावन्तश्च पराशरेणोपदिष्टा वंशानुपूर्व्यात् तत्र प्रथमोऽङ्गिराः, ततो बृहस्पतिः,

२ मत्स्य. गोप्र. संप्र. कपिभूः चैव ; प्रद. कपिः भूमिः ; जैवी. कपिभूमः .

( १ ) मत्स्य. १९६।४८ योऽभिमत ( यो हि मत ) ; गोप्र. ५०.

( २ ) मत्स्य. १९६।४९ ; गोप्र. ५० ; संप्र. ६६८ उत्तरार्धे ( परस्परमवैवाह्याः समानप्रवरत्वतः । ) पूर्वार्धे नास्ति.

( ३ ) मत्स्य. १९६।५० ऋपिश्च वन्दनस्तथा ( ऋषिवान् मानवस्तथा ) मैतवचाश्चैव ( मैत्रवरश्चैव ) ; गोप्र. ५० ( अथर्क्षभरद्वाजौ ऋषिश्चान् मानवस्तथा । ऋषिर्मैत्रवरश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥ ) ; संप्र. ६६८ ( अत्वरिश्च भरद्वाजः ऋषिश्चात्मा भवस्तथा । ऋषिर्मैत्रावरश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥ ).

( ४ ) मत्स्य. १९६।५१ अङ्गिराश्च भ ( अङ्गिराः सभ ) द्वितीयार्धे ( ऋषिर्मित्रवरश्चैव ऋषिवान् मानवस्तथा । ) ; गोप्र. द्वितीयार्धे ( ऋषिर्मैत्रवरश्चैव ऋषिरात्मभवस्तथा ) ; संप्र. ६६८ ( अङ्गिराश्च भरद्वाजस्तथैवोऽथ बृहस्पतिः । ऋषिर्मैत्रावरस्तुर्यो मुनिरात्मा भवस्तथा ॥ मत्रैवयस्त्वमुख्यत्वादवैवाह्याः परस्परम् ॥ ).

( ५ ) मत्स्य. १९६।५२ भरद्वाजः कतः ( भारद्वाजो द्रुतः ) ; गोप्र. ५१ भाग्वद.

( ६ ) मत्स्य. १९६।५३ ; गोप्र. ५१.

* बौधायनश्चौ'गुगुप्रवराध्याये शौङ्गशैशिरा नोत्कृष्यन्ते ।

( १ ) मत्स्य. १९६।५४ ; गोप्र. ५१.

ततो भरद्वाजः, ततो भरद्वाजादामहय्यः, तत उरुक्षयः, ततः कपिरुत्पन्न इति । तत्र सत्स्वेव बहुषु मन्त्रदृक्षु त्रयाणामेव वरणं सूत्रकारैरुक्तं रथीतराणामिवेत्यदोषः । तथाहि व्यासवचनम् ' इतिहासपुराणाभ्यां वेदं समुप बृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ ' इति । ' द्व्यामुष्यायणाः शुङ्गशैशिरयः ' इति पुरातनद्विगोत्रकुलं दृष्टान्तत्वेनोदाहृतं इदानींतनाना द्विगोत्राणां द्वयोरपि गोत्रयोरविवाहं वक्तुम् । भरद्वाजाः शुङ्गाः, भरद्वाजगणमध्ये पठितत्वात् । तेषां चायं प्रवर उक्तः– आङ्गिरस बार्हस्पत्य भारद्वाज इति । कताः शैशिरयो विश्वामित्राः, विश्वामित्रगणमध्ये पठितत्वात् । तेषां चायं प्रवरो वक्ष्यते– वैश्वामित्र कात्य आत्कील इति । तत्र च ' अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ ' इति याज्ञवल्क्यवचनात् द्व्यामुष्यायणाना उभयत्र प्रवरे कर्तव्ये सति षण्णा मन्त्रदृशा चतुर्णा च ' न चतुरो वृणीते न पञ्चाति वृणीते ' इति वरणप्रतिषेधात् पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरः कर्तव्यः । तत्र च ' द्विप्रवरसंनिपाते पूर्वप्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः ' इति कात्यायनलौगाक्ष्योरुत्तरत्र वचनात् भारद्वाजस्य शुङ्गस्य बीजात् वैश्वामित्रस्य कतस्य क्षेत्रोत्पन्नाः शुङ्गशैशिरय इत्युच्यन्ते । तत्संततिजानां पञ्चार्षेयः प्रवरो द्रष्टव्यः– आङ्गिरस बार्हस्पत्य भारद्वाज कात्य आत्कीलेति । त्र्यार्षेयमपि प्रवरमाहुरापस्तम्बादयः– आङ्गिरस कात्य आत्कील इति । अयमेव दृष्टान्तो द्रष्टव्यः सत्स्वपि बहुषु मन्त्रदृक्षु कतिपयानामेव च वरणमस्तीत्यत्र । एवं पुत्रिकापुत्रदत्तक्रीतपुत्रादीनामपि द्वयोरपि गोत्रयोरविवाहः प्रवरश्च द्रष्टव्यः, शुङ्गशैशिरीणां दृष्टान्तत्वेनोक्तत्वात् । 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च ' इत्येतद्गौतमवचनं द्व्यामुष्यायणादन्यविषयं द्रष्टव्यम् । द्व्यामुष्यायणाना तु पितृगोत्रमेवोभयमपि इत्युभयत्राविवाह एव । संकृत्यादीनामिह अङ्गिरसा गणेपूक्ताना उत्तरत्र आपस्तम्बादिभिः वसिष्ठगणान्ते वक्ष्यमाणत्वात् वासिष्ठस्यापि शक्तेरङ्गिरसा प्रवरेपूपदेशाच्च किं वसिष्ठाः संकृतयः ? किं वाऽङ्गिरसः ? इत्यत्र संदेहेऽन्यतरपक्षनिश्चयहेतोरभावाद्द्व्यामुष्यायणाः संकृतय इत्यवसातव्यम् , कात्यायनेन उत्तरत्र द्व्यामुष्यायणगणमध्ये प्रसिद्धद्व्यामुष्यायणैः शुङ्गशैशिरिभिः सह वक्ष्यमाणत्वात् । द्व्यामुष्यायणत्वे च संकृतीना स्वगणोक्तैरुपमन्युपराशरकुण्डिनादिभिर्वासिष्ठैः सर्वैः सह विवाहो नास्ति । तस्मादिह भरद्वाजकाण्डे केवलभरद्वाजानां ऋक्षाणा कपीना गर्गाणां द्विगोत्राणां च पञ्चानां गणाना परस्परमविवाहः, सगोत्रत्वात् बौधायनवाक्याच्च । इति व्याख्यातं भरद्वाजगोत्रकाण्डम् । गोप्र. ५१–५३

( २ ) इदानीं भरद्वाजा निरूप्यन्ते । ते च चतुर्विधाः– केवलभरद्वाजाः, रौक्षायणाः, गर्गाः, कपयः इति । तत्र प्रथमे सप्तविंशतिर्गोत्राणि, अष्ट द्वितीये, विंशतिः तृतीये, चतुर्थे द्वादश । पृ. ६३०

अथापस्तम्बोक्ता भरद्वाजाः । ते च त्रिभिर्द्व्यामुष्यायणैः सह निर्भेदा दशगणाः । पृ. ६३२

अथ कात्यायनलौगाक्षिप्रणीता भरद्वाजाः । ते च संकृतिशौङ्गशिशिरिभिः सह अष्टगणाः । पृ. ६३३

तत्र शौङ्गशिशिरयः पञ्चप्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति वा । त्रिप्रवरा वा आङ्गिरसकात्यात्कीलेति । स च भारद्वाजाच्छुङ्गाद्वैश्वामित्रस्य शैशिरेः क्षेत्रे उत्पन्नः, उभयतोगोत्रलक्षणत्वाद्द्विगोत्रमिति । सर्वैर्भरद्वाजैर्विश्वामित्रैश्च एषामविवाहः, सगोत्रत्वात् , कैश्चित् सप्रवरत्वाच्च । तदुक्तं स्मृत्यर्थसारे ' भरद्वाजेन शुङ्गेन वैश्वामित्रस्य शैशिरेः । क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते शौङ्गशैशिरिः ॥ विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः ॥ ' इति । एवं वक्ष्यमाणेष्वपि द्रष्टव्यम् । यत्तु कश्चिदाह–एवं कापिला अपि । तदुक्तं तत्रैव– 'कापिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः' इति । तदसत्, कापिलाना क्वचिदपि सूत्रे पुराणे वा प्रवरमञ्जर्यादिषु वा द्व्यामुष्यायणत्वेन अनभिधानात् । प्रक्षिप्तमिदं श्लोकार्धमिति वदन्ति । संकृतीनां कात्यायनेन प्रसिद्धद्विगोत्रशौङ्गशैशिरिणा सह पाठात् द्विगोत्रत्वं, गणद्वयमध्ये पठितत्वाच्च । वसिष्ठगणे आपस्तम्बादिभिः पठितत्वात् वासिष्ठस्य शक्तेर्विकल्पेन वरणाच्च उभयथापि वसिष्ठस्यानुवृत्तेः प्रतिसंधानात् । तथा आङ्गिरसत्वमपि, केवलाङ्गिरसा मध्ये पाठात् , बौधायनाङ्गिरसप्रवरसाम्याच्च ।

तेन एतेषां वसिष्ठगणैः सर्वैः स्वस्वगणस्थैः सह वसिष्ठैर्लौगाक्षिभिश्च सह परस्परमविवाहः, स्वगणे सगोत्रत्वात् सर्वप्रवरसाम्यात्, अन्यत्र किञ्चित्प्रवरसाम्याच्चेति। नैषां भरद्वाजता, तथा पाठाभावात्, क्वचित् पाठेऽपि वरणाभावात्। न च सत्तानुवृत्तिज्ञापकः सर्वैकवाक्यतया कपिवत् प्रसिद्धभरद्वाजसंदंशपाठोऽप्यस्ति। प्रत्युत केवलाङ्गिरससंदंशपाठस्यैव दृष्टत्वात्। पुराणगतवंशमध्यपाठस्य कल्पभेदेन नाममात्रसाम्येन वा अवश्यमुपपत्तेः। अन्यथा तस्य अव्यवस्थितत्वेन बहुविप्लवः स्यात्। एवं सति केवलाङ्गिरसमध्यपाठस्य प्रयोजनं चिन्त्यमित्याहुः। त्रिकाण्डमण्डनस्तु दिवोदासा वीतहव्या लौगाक्षिणा सधर्मिण इत्याह। तदसंबद्धम्, संबन्धलेशस्यापि तत्राभावात्।

द्व्यामुष्यायणानां प्रयाजादिव्यवस्था एवम्– शौङ्गशैशिरेस्तनूनपात्प्रयाजः, तस्य तु द्वयोरपि सत्वाद्विश्वामित्रभरद्वाजयोः आप्रीसूक्तं इति विकल्पः। संकृत्यादिषु बौधायनादिभिर्नराशंसस्योक्तेः स्वीयाप्रीसूक्ते नराशंसाभावात् आप्रीसूक्तं वसिष्ठस्यैव। एवं च आश्वलायनसूत्रमपि उपलक्षणविधया बौधायनादिभिरेकवाक्यतया व्याख्येयमिति केचिदाहुः। *यथा तनूनपाद्देवतायुक्ता* ऋक् तथा नाराशंसदैवतयुक्ताऽपि ऋगस्ति कण्वाङ्गिरसाप्रीसूक्तयोः, अत उपांशुयाजदेवतावद्विकल्पः। स च व्यवस्थितो ज्ञेयः, तत्तत्सूत्रकारपरिग्रहवशात्। तथा च येन सूत्रकारेण संकृतेर्नराशंस उक्तः तस्य वसिष्ठोक्ताप्रीसूक्तमेव, येन तनूनपादुक्तः तस्य आङ्गिरसोक्तमेव इति व्यवस्थितविकल्पः। एवमन्येषां प्रयाजव्यवस्थया आप्रीसूक्तव्यवस्थेत्यन्ये। यद्गणान्तर्वर्ती यः स्यात् तद्गणोक्ताप्रीसूक्तं तस्य इति, सूत्रकारैर्द्व्यामुष्यायणत्वेन अनुक्तत्वादित्यपरे। पृ. ६४२–६४४

अथ द्व्यामुष्यायणप्रसङ्गाद्दत्तकादिविचारः प्रस्तूयते। तत्र– इदानींतनानां दत्तकस्वयंदत्तकृत्रिमादीनामनयैव रीत्या पितृद्वयस्य सगोत्रैः सहाविवाहो द्रष्टव्यः। न च– 'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥' इत्येवंविधलक्षणलक्षितद्व्यामुष्यायणस्यैवैतदुक्तं, तस्योभयसंबन्धित्वात्, न तु दत्तकादेः, तस्यैकमात्रसंबन्धित्वादिति– वाच्यम्। एवं हि देवरातादीनामपि द्विगोत्रता न स्यात्। शौङ्गशैशिरिसंकृत्यादीनां 'अथेमानि द्व्यामुष्यायणकुलानि भवन्ति' इत्युपक्रम्याभिधानात्तेषां लक्षितद्व्यामुष्यायणत्वं स्यादपि, न तु स्वयंदत्तादिरूपाणां देवरातादीनाम्। ननु– 'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः।' इति वचनात् जनकगोत्रनिवृत्तेः कथं जनकसगोत्रैरविवाहः– इति चेत्, नैष दोषः। आर्षेयवरणाभिवादनादौ जीवतः दत्तकादेः मृतस्य च श्राद्धदेवतात्वे जनकगोत्रसंबन्धाभावार्थं तद्वचनं, न त्वविवाहार्थम्। विवाहे तु जनकसगोत्राया वरस्य जनकगोत्रसंबन्धाभावेन स्वसगोत्रत्वाभावेऽपि पितृसगोत्रत्वप्रयुक्त एव निषेधः, 'असगोत्रा च या पितुः' इति वचनात्। तत्रत्यपितृपदप्रयोजनमपि एतदेव इत्युक्तं स्मृतिचन्द्रिकाकारेण। प्रवरमञ्जरीकारस्यापि एतदभिमतम्, 'एवं पुत्रिकापुत्रदत्तक्रीतपुत्रादीनामपि द्वयोरपि गोत्रयोरविवाहः' इति तदुक्तेः। न च दत्तक्रीतादयो द्व्यामुष्यायणाः स्वतो द्विगोत्रा वा– इत्येवं प्रतिपादितं कैश्चित्। तदपरे न क्षमन्ते, 'अपुत्रेण परक्षेत्रे' इत्यादिलक्षणलक्षितस्य द्व्यामुष्यायणत्वेन लक्ष्यत्वात्। विज्ञानेश्वरेण चेदमेवं व्याख्यातम् "'*क्रियाभ्युपगमात् क्षेत्रं बीजिने यत्प्रदीयते।* तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च॥' इति मनुवाक्ये क्रिया 'अत्रोत्पन्नमपत्यमावयोरुभयोः' इति संवादरूपा विवक्षिता इति याज्ञवल्कीयमपि तद्विषयमेव इति तेषामेव द्व्यामुष्यायणता, न तु अन्यत्र। 'फलं त्वनभिसंधाय क्षेत्रिणा बीजिना तथा। प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी॥' इति मनुवाक्ये फलानभिसंधानं नाम 'अत्रोत्पन्नमपत्यमावयोरुभयोः' इत्येवंसंवादाभावरूपं विवक्षितम्। तेन तदुत्पन्नो न द्व्यामुष्यायणः, किन्तु क्षेत्रजः।" इदमेवाभिसंधाय याज्ञवल्क्योऽप्याह– 'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥ आगर्भसंभवाद्गच्छेत्पतितस्त्वन्यथा भवेत्। अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः॥' इति। तथा च उभयोरप्ययमिति संवादे दत्तकादिरपि द्व्यामुष्यायणः, तदभावे प्रतिग्रहीतुरेव। द्व्यामुष्यायणानां शौङ्गशैशिरिवन्निर्णयः।

अन्येषां तु क्षेत्रजदत्तकादीनां ' गोत्ररिक्थे जनयितुः ' इत्यादिमनुवाक्येन जनकगोत्रनिवृत्तौ न ' उभयतः प्रवृणीत ' इत्यादिना । ननु एवं जनककुले सगोत्रत्वनिमित्तो विवाहनिषेधो न स्यात् । सापिण्ड्यनिमित्त एव तर्हि भविष्यति । न चैवं ' पिण्डो व्यपैति ' इत्यस्य ' सापिण्ड्यं निवर्तते ' इति मिताक्षराव्याख्यानेन विरोधः, सामान्यवाक्यस्यास्य ' ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च ' इति गौतमवाक्येन विवाहविषये बाधितस्य आशौचविषये संकोचेन व्यवस्थापनादिति सर्वमकलङ्कम् ।

अन्ये तु शिष्टपरिगृहीतत्वात् प्रथमपक्षमेवाद्रियन्ते । युक्तश्चायम् । गोत्ररिक्थे इत्यत्र यथा सापिण्ड्य (? पिण्ड)-*शब्दस्य सामान्येन गौतमीयविशेषवचनेन तदितर*-विषयत्वं, तथा ' असगोत्रा ' इत्यत्र पितृग्रहणात् तत्र गोत्रशब्दस्यापि तदितरविषयत्वं युक्तम् । तदुक्तं प्रयोग-*पारिजाते स्मृत्यन्तरे— ' गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयो-र्यथा ' । न चात्र मातृग्रहणं व्यर्थम्, मातृद्वारक*-सापिण्ड्यस्य विवक्षितत्वादित्याहुः ।

यत्तु भरद्वाजस्य बृहस्पतेः सकाशात् ममतासंज्ञकोतथ्य-क्षेत्रजातत्वेन उतथ्यप्रवराणां गौतमानां भरद्वाजानां च सर्वेषां परस्परमविवाह इति कश्चित्, तदसत्, तस्य क्षेत्रजातत्वेऽपि द्व्यामुष्यायणत्वाभावात् । न च तत्त्वे प्रमाणमस्ति । इदमावयोरपत्यमस्त्विति संवादेन (? दस्य) विष्णुपुराणेऽनुक्तेः । प्रत्युत द्व्यामुष्यायणत्वाभावे एव प्रमाणं संभाव्यते, सर्वेषु प्रवरसूत्रेषु भरद्वाजानां द्व्यामुष्या-यणत्वेनाप्रतिपादनात् । बौधायनेन च पूर्वैर्गौतमैरुत्तरैश्च केवलाङ्गिरोभिः सह विवाहोक्त्या विष्णुपुराणमपि *(? अ) द्व्यामुष्यायणरूपक्षेत्रजत्वप्रतिपादनपरमिति* वर्ण-नीयम् । किंच, गोत्रप्रवराभिधानपरपुराणभागस्याति-संवादाभावात् पौराणिकस्य वंशानुपूर्वीमव्यगतजन्मक्रमस्य अत्यन्यवस्थितत्वात् तस्य सुतरामतिप्रसङ्गापादकत्वात् तदनुरोधेन गोत्रप्रवरनिर्णयस्य अकिंचित्करत्वादिति दिक् ।

तदत्र द्व्यामुष्यायणानामुभयेऽपि प्रवराः कीर्तनीयाः । तथा च ' उभयतः प्रवृणीतैकमितरतो द्वावितरतो द्वौ चेतरतस्त्रीनितरतो न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामति-प्रवरणमाङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ' ( इति ) आश्वलायनः । अस्यार्थः । द्व्यामुष्यायणानां प्रवरकरणे अनियमप्रसक्तौ ' उभयतः प्रवृणीत ' इति विहिते आङ्गिरसबार्हस्पत्यभारद्वाजेति पितुः वैश्वामित्रकात्यात्की-लेति क्षेत्रिण इत्येवमुभयतः षड्वरणे प्रसक्ते ' न पञ्चा-नामतिप्रवरणम् ' इति षड्वरणे प्रतिषिद्धे उभयतो-वरणविधानात् ' समं स्यादश्रुतित्वात् ' इति न्यायेन द्वयोर्द्वयोरुभयतो वरणे प्राप्ते ' न हि चतुर्णां प्रवरोऽस्ति ' इति निषिद्धे कथं तर्ह्युभयतः प्रवृणीतेत्याकाङ्क्षिते ' एकमितरतः ' इत्यादिना पक्षद्वयमुक्तम् । तत्रापि पूर्वे जनकस्य ततोऽन्यस्य । त्रयाणां च, संभवे पञ्चानां कीर्त-*नम् ( तत्रापि त्रिपक्षे जनकस्य द्वौ आद्यौ, प्राथम्यात् ।* उत्तरस्य एकः । पञ्चपक्षे च गौङ्गशिशिरिवदेव *जनकस्य त्रयः, भरद्वाजस्य ( ? इतरस्य ) द्वावाद्यावेव, प्राथम्यात्*, तद्व्यतिक्रमे कारणाभावाच ।

संप्र. ६५५–६५९

## प्रवरसंग्रहकारः

भरद्वाजः कुशस्त्वग्निर्वैश्य ऊर्जो यमः कृतः ।
शैशिरः क्षीरशुङ्गौ च वन्दनश्च बृहस्पतिः ॥
सर्वस्तम्बः कपिर्मौतयचसो गार्ग्यशैन्यकौ ।
भरद्वाजगणाः सप्तदश गोत्रमिति स्मृतम् ॥
तस्मिन् परस्परं कार्यं न कन्यापाणिपीडनम् ॥

( १ ) प्रपा. ३१० क्षीरशुङ्गौ च ( क्षीरशृङ्गश्च ) ; विपा. ७०३ पूर्वार्धे ( भरद्वाजः कुशाङ्काग्निवैश्योऽर्जेयमनः कनः । ) क्षीरशुङ्गौ च घन्दनश्च ( पक्षिशुङ्गौ च चन्दनश्च ) ; ज्योनि. १३३ पूर्वार्धे ( भारद्वाज' कुश' कग्निवैश्य उर्जयमः कृनः । ) क्षीरशुङ्गौ च ( शीरशृङ्गश्च ) ; बाल. १।५३ पृ. १७७ कुशस्त्वग्निर्वैश्य ऊर्जो ( कुशङ्काग्निर्वैश्यजर्तौ ) शैशिरः क्षीरशुङ्गौ च ( शैरिर. क्षीर-शुङ्गश्च ) ; संग. १७९ पूर्वार्धे ( भरद्वाजः कुशाङ्काग्निवैश्योऽर्जेय-मतः कत. । ) क्षीरशुङ्गौ ( पक्षिशुङ्गौ ).

( २ ) प्रपा. ३१० सर्वस्तम्बः ( सर्वःस्तम्बः ) ; विपा. ७०३ शैन्यकौ ( सैनकौ ) तस्मिन् ( अस्मिन् ) ; ज्योनि. १३३ कपि-र्मौत ( कपिर्नीत ) शैन्यकौ ( सैन्यकौ ) भरद्वाजगणाः ( भार-द्वाजगणः ) ; बाल. १।५३ पृ. १७७ शैन्यकौ ( सैन्यकौ ) गणाः ( गग· ) ; संग. १७९ तस्मिन् ( अस्मिन् ) शेषं बालवत्.

[1]कपिश्च महृदक्षीय ऋक्षयस्त्रीणि केवलम् ।
अयं कपिगणोऽन्योन्यं तस्मिन्नहि करग्रहः ॥

[2]भरद्वाजगणस्यापि विश्वामित्रगणस्य च ।
कतशैशिरशुङ्गैश्च नान्योन्यं पाणिपीडनम् ॥

[3]भरद्वाजगणस्यापि तथा कपिगणस्य च ।
विवाहो न विधेयः स्यादन्योन्यं च कदाचन ॥

[4]विश्वामित्रा भरद्वाजाः कतशुङ्गकशैशिरैः ।
वर्जिताश्चेद्विवाह्याः स्युरन्योन्यमिति निश्चयः ॥

## स्मृत्यर्थसारः

[5]भरद्वाजाः सकपयो गर्गा रौक्षायणा इति ।
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ॥

[6]भरद्वाजेन शुङ्गेन विश्वामित्रस्य शैशिरेः ।
क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते शौङ्गशैशिरिः ॥

[1]विश्वामित्रभरद्वाजैस्तज्ज्ञानां तेन नान्वयः ।
कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः ॥

न च कपिलस्य विश्वामित्रेष्वपाठात् कथं तैर्विवाहनिषेधः इति वाच्यम् । 'देवा वा इमं मह्यमरासतेति स ह देवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवाः' (३३।५) इत्यैतरेयब्राह्मणात्कपिलस्य देवरातद्वारा विश्वामित्रसंबन्धावगतेः । 'स च शुनःशेपो देवैर्दत्तत्वा-देवरात इति नामधारी, विश्वामित्रपुत्र एवास । तस्य च देवरातस्य एते कपिलगोत्रोत्पन्ना बभ्रुगोत्रोत्पन्नाश्च बन्धवोऽभवन्' इति तद्भाष्यम् ।

बाल. १।५३ पृ. १८६.

## मण्डनः

[2]भरद्वाजात्पुराऽन्योन्यं न विवाहोऽङ्गिरोगणे ।
आश्वलायनपाठे तु गौतमेषु स्थिता अपि ॥

विवाहं गौतमैः कुर्युः पृषदश्वर्क्षवंशजाः ।
बहुपाठानुसारेण भरद्वाजा हि ते स्मृताः ॥

प्लक्षाः स्युः पृषदश्वाः स्यू रथीतरसगोत्रिणः ।
उशिजा वामदेवाश्च तथा दीर्घतमादयः ॥

गौतमा एव विज्ञेया उपवर्णादिपाठतः ।
व्रियते यैर्भरद्वाजो नोद्वहन्ति मिथश्च ते ॥

कपिलोऽपि भरद्वाजो व्याडिवासिष्ठवाक्यतः ।
भरद्वाजप्रवरणे केचिदाहुः कपी पृथक् ॥

भरद्वाजोऽस्ति गर्गेष्वप्यापस्तम्बादिपाठतः ।
विश्वामित्रैर्भरद्वाजैर्नोद्वाहः शुङ्गशैशिरेः ॥

अन्येऽपि ये द्विगोत्रोत्थास्तेऽपि ताभ्यां न कुर्वते ।
नान्योन्यं हरितः कुत्सः सर्वैरन्यैर्यथारुचि ॥

शिष्टास्त्वङ्गिरसः स्वं स्वं गणं हित्वा परावरैः ।
सर्वैरुद्वाहमर्हन्ति गोत्रप्रवरभेदतः ॥

---

(१) प्रपा. ३१० ; विपा. ७०२ दक्षीय ऋक्षय ( दुक्षीय उदीय ) तस्मिन् ( अस्मिन् ) ; ज्योनि. १३३ दक्षीय ऋक्षय ( दक्षीयो रुक्षीय ) ; बाल. १।५३ पृ. १७७ दक्षीय ऋक्षय ( दक्षाय ऋक्षाय ) ; संग. २७९ विपावत् .

(२) विपा. ७०६ नान्योन्यं पाणिपीडनम् ( न विवाहः परस्परम् ) ; ज्योनि. १३४ ; बाल. १।५३ पृ. १७८ कतशैशिरशुङ्गैश्च ( कृतशैशिरशृङ्गैश्च ) .

(३) धम. १०२ च कदा ( तु कदा ) ; विपा. ७०६ भरद्वाज (भारद्वाज) ; ज्योनि. १३४-१३५ धमवत् ; बाल. १।५३ पृ. १७९ ; संग. १८१ विपावत् ; कृम. १०४२ ( = ) धमवत् .

(४) प्रपा. ३११ .

(५) स्मृसार. १५ ; संप्र. ६१० जाः सकपयो ( जाश्च कपयो ) ; धम. १०२ ( = ) ; संम. ६२ अयं श्लोकः प्रमादात् गलित इति भाति ; सिन्धु. १०५५ जाः सकपयो ( जाश्च कपयो ) त्रा गोत्रै ( जगोत्रै ) ; संकौ. १८२ सिन्धुवत् ; कृम. १०४३ ( = ) त्रा गोत्रै ( जगोत्रै ).

(६) स्मृसार. १६ शैशिरेः ( शैशिरे ) ; संप्र. ६४२ क्षेत्रे जातो ( क्षेत्रजातो ) ; धम. १०६ ( = ) ; संम. ६२ शैशिरेः ( शैशिरेः ) ; बाल. १।५३ पृ. १८६ ; कृम. १०४८ ( = ) शैशिरेः ( शैशिरे ) .

(१) स्मृसार. १६ ; संप्र. ६४२ कपिलानां ( कापिलानां ) ; धम. १०६ ( = ) पू. ; संम. ६२ ; बाल. १।५३ पृ. १८६ ; कृम. १०४९ ( = ) पू. .

(२) संर. ४६८.

## अनिर्दिष्टकर्तृकवचनानि

भृग्वङ्गिरोगणस्थेऽपि जमदग्नौ च गौतमे ।
भरद्वाजे मिथो ह्येकः पाणिग्राहं निवारयेत् ॥
भरद्वाजर्क्षकपयो गर्गा रौक्षायणा द्विजाः ।
पञ्चैते हि भरद्वाजा गोत्रैक्यान्नाभ्वियुर्मिथः ॥
कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः ।
नोद्वहेयुः सगोत्रत्वात्प्रवरैक्याच्च न कचित् ॥

कपी प्रसिद्धावुदिताविह द्वौ
स्वतन्त्र एकोऽस्त्यपरोऽस्वतन्त्रः ।
तत्र स्वतन्त्रस्य कपेर्विवाहं
मिथो भरद्वाजकुलेन चाहुः ॥

येस्यां (?) वै गौतमादीनां विवाहो नेष्यते मिथः ।
दीर्घतमास्तथौतथ्यः कक्षीवांश्चौशिजस्तथा ॥
भरद्वाजाग्निवेश्यर्क्षाः शौङ्गाः कात्याश्च शैशिराः ।
एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै ॥

पृषदश्वा मुद्गला विष्णुवृद्धाः
कण्वोऽगस्त्यो हरितः संकृतिश्च ।
यस्कश्चैषां मिथ इष्टो विवाहः
सर्वैरन्यैर्जामदग्न्यादिभिश्च ॥

एतेषां तु विशेषोऽयमामहय्याभिधानकैः ।
उरुक्षय्यैश्च कपिभिर्विवाहस्त्रिपु इष्यते ॥

(१) विपा. ७०१ प्रवरसत्रकार इत्युक्तम्; संग. १७७ स्मृत्यन्तरम्.
(२) संप्र. ६१०.
(३) संप्र. ६१०; सिन्धु. १०५५ न कचिद् (कुत्रचित्).
(४) विपा. ७१२.
(५) विपा. ७१४.
(६) संप्र. ६१२ सङ्कृतिश्च (संकृतिः कपिः); विपा. ७१४.
(७) संप्र. ६१२; संकौ. १८२ त्रिपु इष्यते (त्रिभिरिष्यते) आश्वलायनः.

शुद्धाङ्गिरोगर्गमध्ये कपयः पठिता अपि ।
आचार्यैरुपवर्षाद्यैर्भरद्वाजाः स्युरेव ते ॥
भरद्वाजगणे यस्मादापस्तम्बोऽपठत् कपीन् ।
पराशरश्चतुर्थेऽशे भरद्वाजान्वये कपीन् ॥
नामसंख्याक्रमेणैव पुराणे वैष्णवेऽवदत् ।
मत्स्यो हरिरिदं मात्स्ये पुराणे स्पष्टमब्रवीत् ॥
मार्गमेनमजानन्तो मूढा मन्वादिभाषितम् ।
भरद्वाजकपीनां तु प्रवदन्ति मिथोऽन्वयम् ॥
निबन्धिनो हि नेच्छन्ति सर्वे नारायणादयः ।
अविगीतसमाचारविरोधोऽपि भवेदिह ॥
गणभेदभ्रमान्मूढा विवाहं कारयन्ति चेत् ।
भरद्वाजत्वगर्गत्वकपित्वैः सहगोत्रताम् ॥
त्रयो मौख्यान्न संवीक्ष्य गुरुतल्पगमन्वयम् ।
प्रयोक्तृवक्तृकर्तारः प्राप्नुवन्त्यन्वये स्तुदम् ॥
गर्गा अपि भरद्वाजा भरद्वाजानुवर्तिनः ।
पञ्चप्रवरगर्गेभ्यो भिन्नेष्वस्यानुवर्तनम् ॥
सत्तयाऽस्त्येव सैन्यस्य त्रिमुनिष्वपि दर्शनात् ।
द्विविधानपि गर्गास्तानुपवर्षो महामुनिः ॥
अनुक्रम्य त्वथैवाह्यान् भरद्वाजतया जगौ ।
किञ्चित्त्रिमुनिगर्गाणां भरद्वाजर्क्षवर्णिनाम् ॥
अविवादं स्तुवन् गार्ग्यो भरद्वाजत्वमिच्छति ।
अतो यथा सगोत्रत्वादत्र्यादौ वर्गपञ्चके ॥
न विवाहस्तथा सर्वभरद्वाजगणेष्वपि ।
साप्तर्षित्वादनुद्वाहः सिद्ध इत्युपरम्यते ॥

(१) संप्र. ६१३–६१४.

# केवलाङ्गिरःकाण्डम्

## बौधायनश्रौतसूत्रम्

### हरिताः *

१ हरिताः २ कौत्साः ३ शाङ्ख्याः ४ दार्भ्याः ५ शैभङ्गः ६ भैमगवः ७ मनायुः ८ लम्बोदरः ९ महोदरः १० नैमिश्रयः ११ मिश्रोदनाः १२ कौतपाः १३ कारीपयः १४ कौलयः १५ पौलयः १६ पौण्डलः १७ मान्धूपः १८ मान्धातुः १९ माद्रकारयः इत्येते हरिताः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- आम्बरीष- यौवनाश्व- इति होता। युवनाश्ववद्-अम्बरीषवद्-अङ्गिरोवद्-इत्यध्वर्युः॥

* अत्र गणक्रमः तत्तत्पुस्तकेषु विभिन्नः। अस्माभिस्तु प्रा. जॉन ब्रौ-महाशयस्वीकृतः क्रमोऽनुसृतः।

(१) बौश्रौप्र.; गोप्र. ५४; संप्र. ६४५; संम. ५७; प्रद. ११८; संकौ. १८८; संर. ४३६.

२ गोप्र. संप्र. प्रद. संकौ. संर. (०); संम. कौत्सः.

३,४ गोप्र. सांख्यः, दभ्यः; संप्र. संकौ. संर. शङ्खदर्भयः; संम. सांख्यः, दाभ्यः; प्रद. सांख्यः, दर्भः.

५ गोप्र. प्रद. संकौ. सौभागाः; संप्र. सौभगाः; संम. भैम्यः; संर. सौभाः, मादाः.

६ गोप्र. भैरवाः; संप्र. भैमगवाः; संकौ. नेय्यगवाः; संर. नैयगवाः.

७ गोप्र. ममनायुः; संम. मलायु; प्रद. मल्यायुः; संकौ. संर. मनायवाः.

८ गोप्र. लावादरः; संप्र. प्रद. संकौ. संर. बालोदराः; संम. लम्बोदरः, बम्बोदरः.

१० गोप्र. नैमिश्रयाः; प्रद. नैमिश्रीः.

११ गोप्र. मिश्रोदराः; संप्र. संकौ. संर. मिश्रोदकाः; संम. मिश्रोदनाः, मिश्रयः.

१२ बौश्रौप्र. कौटपाः; संप्र. कौनमाः; प्रद. कानपः.

१३ संकौ. संर. करीषयः.

१४ प्रद. (०).

१५ प्रद. (०).

१६ गोप्र. पौडलः; संप्र. प्रद. पोटलाः; संम. मौद्गलः; संकौ. संर. पोटलयः, पैटशः. अस्यानन्तरं संप्र. संकौ. मारस्याः; प्रद. मौत्स्यः; संर. मत्साः इत्यधिकम्।

१७ गोप्र. माधूपः; संप्र. संकौ. संर. (०); संम. माधूप; प्रद. मधूपः.

१८ गोप्र. मान्धाव; संप्र. प्रद. मान्धाताराः; संम. मान्धातृ.

१९ गोप्र. भण्डिकारयः; संप्र. माण्डकारयः; संम. संकौ. संर. माण्डकारयः; प्रद. मण्डकारिः.

### कण्वाः

१ कण्वाः २ औपमर्कटायनाः ३ वाष्कलाः ४ शैलाहलिनः ५ मौञ्जिः ६ मौञ्जयः ७ मौञ्जिगन्धाः ८ वाजिः ९ वाजयः १० वाजश्रवसा इत्येते कण्वाः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- आजमीढ-काण्व-इति होता। कण्ववद्-अजमीढवद्- अङ्गिरोवद्-इत्यध्वर्युः॥

(१) बौश्रौप्र.; गोप्र. ५४; संप्र ६४५; संम. ५७; प्रद. ११८; संकौ. १८८; संर. ४३७.

१ संप्र. काण्वाः.

२ गोप्र. औपमर्कटयायकाः; संम. औपमयः, कठायनाः; प्रद. औपमर्कटायनिः.

३ गोप्र. कलाः; संप्र. बाकलाः; प्रद. बाष्कलः.

४ गोप्र. पौलहलिनः; संप्र. पौलाहलिनः; संम. पौलाः, हलिनः; प्रद. पौलाहलिः; संकौ. पौलाहस्तिनः; संर. पौलाः, हस्तिनः.

५,६ गोप्र. माञ्जिभाजयः; संप्र. मौञ्जिभाजयः; संम. माञ्जिः, माञ्जयः; प्रद. मौञ्जिः, माञ्जिः; संकौ. संर. मौञ्जिभाजयः.

७ संम. मौञ्जिगन्धाः; प्रद. मौञ्जिगवः; संर. मौञ्जिगन्धाः.

८,९ गोप्र. विजवाजयाः; संप्र. संम. विजिवाजयाः; प्रद. विजिगरः, वाजयः; संकौ. विजियवाजयः; संर. विजिवाजयः.

१० गोप्र. संप्र. संम. प्रद. संकौ. वाजश्रवाः; संर. वाजश्रवाश्वाः.

रथीतराः

१ रथीतराः २ हास्तिदासिः ३ काह्वायनाः ४ नैतिरक्षयः ५ शैलालयः ६ भैलिः ७ भिलीभायनाः ८ सावह्वाः ९ भैक्षवाह्नाः १० हैमगवाः इत्येते *रथीतराः । तेषां त्र्यार्षेयः प्रवरो भवति ।* आङ्गिरस–वैरूप–राथीतर–इति होता । आङ्गिरस–वैरूप–पार्षदश्व–इति वा । रथीतरवद्–विरूपवद्–अङ्गिरोवद्– इत्यध्वर्युः । पृषदश्ववद्–विरूपवद्–अङ्गिरोवद्– इति वा ॥

विष्णुवृद्धाः

१ विष्णुवृद्धाः २ शठमर्षणाः ३ भद्रणाः ४ मद्रणाः ५ शाम्बुरायणाः ६ बादरायणाः ७ वात्सप्रायणाः ८ सात्यकिः ९ सात्यकायनाः १० नैतुन्दाः ११ स्तुत्याः १२ भारुण्याः १३ वैहोढाः १४ दैवस्थानयः इत्येते विष्णुवृद्धाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस– पौरुकुत्स– त्रासदस्यव–इति होता । त्रसदस्युवत्– पुरुकुत्सवद्– अङ्गिरोवद्– इत्यध्वर्युः ॥

मुद्गलाः

१ मुद्गलाः २ हिरण्याक्षाः ३ ऋषभाः ४ मिताक्षाः ५ ऋश्याः ६ ऋश्यायनाः ७ दीर्घजङ्घाः ८ प्रलम्बजङ्घाः ९ तरुणाः १० भैन्दवाः इत्येते मुद्गलाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–भार्म्यश्व– मौद्गल्य– इति होता । मुद्गलवद्–भर्म्यश्ववद्–अङ्गिरोवद्– इत्यध्वर्युः ॥

---

(१) बौश्रौप्र. ; गोप्र. ५४ ; संप्र. ६४५ ; संम. ५७ ; प्रद. ११८ ; संकौ. १८८ ; संर. ४३७.

२ गोप्र. हस्तिदासिः ; संप्र. हास्तिदासिकाः ; संम. हास्तिदासिकाः ; प्रद. हस्ती, दासकः ; संकौ. संर. हस्तिदाः .

३ बौश्रौप्र. काण्वायनाः ; संप्र. संम. ह्वायनाः ; प्रद. ह्वायनः ; संकौ. संर. सिकाह्वायनाः .

४ संम. नैतिरक्षयः , पेशानयः ; प्रद. नैलदाक्षिः .

५ संकौ. संर. (०).

६ गोप्र. भिलिः ; संम. भिलैभिलाः ; प्रद. भिलिः ; संर. भैलयः .

७ गोप्र. भिलीभायन ; संम. भायसाः ; प्रद. भीलीभायनः ; संकौ. भिलोभायना .

८ संप्र. सावहाः ; संम. वहवाः ; प्रद. साहवः .

९ गोप्र. भैक्षवाहाः .

१० गोप्र. संम. प्रद. संकौ. संर. हेमगवाः ; संप्र. हेगवाः .

(२) बौश्रौप्र. ; गोप्र. ५५ ; संप्र. ६४५ ; संम. ५७ ; प्रद. ११९ ; संकौ. १८८ ; संर. ४३७ .

२ संप्र. संकौ शठा , मरणाः ; संम. शठाः, मठाः ; प्रद. शठ , मर्षणः ; संर. शठा , मषणाः .

३ प्रद. (०) ; संर. मन्द्रणाः .

४ संर. मन्द्रणा . अस्यानन्तरं संप्र. संकौ. संर. भद्रयः इत्यधिकम् ।

५ गोप्र. संप्र. संम. संकौ संर. (०) ; प्रद. दावरायणः .

६ प्रद. (०) .

७ गोप्र. मत्सप्रायणाः ; संम. मात्स्यप्रायणाः .

८ प्रद. (०) .

९ गोप्र. सत्यङ्कायनः ; संम. शाल्ङ्कायनाः .

१० गोप्र. नतुधाः ; संप्र. नैतुण्ड्याः ; संर. नितुन्दिनः.

१२ गोप्र. मरण्या ; प्रद. भारुण्य .

१३ बौश्रौप्र. वैहोढा ; गोप्र. वैसाडाः .

१४ गोप्र. संम. देवस्थातयः ; प्रद. देवस्थानः ; संकौ. संर. देवस्थानयः .

(१) बौश्रौप्र. ; गोप्र. ५४–५५ ; संप्र. ६४६ ; संम. ५७ ; प्रद. ११८ ; संकौ. १८८ ; संर. ४३७ .

३ संप्र. संकौ. संर. (०) .

४ गोप्र. मिताः ; संप्र. संकौ. संर. (०) ; संम. मिनाः .

५ गोप्र. गयः ; संप्र. संकौ. संर. (०) ; संम. क्षपासख्या ; प्रद. वृस .

६ गोप्र. विश्वायना ; संप्र. संकौ संर. (०) ; संम. ह्रषायणाः ; प्रद. ऋष्यायणः .

८ गोप्र. प्रद. जङ्घा ; संप्र. संकौ. संर. (०) ; संम. प्रबलजङ्घाः .

९,१० गोप्र. तरणबिन्दवः ; संप्र. स्तरणाः भिन्दयः ; संम. स्तरणभिन्दवः ; प्रद. तारणः ; संकौ. संर. तारणाः भिन्दयः .

### संकृतयः

१ [1]संकृतयः २ लमकाः ३ पौलः ४ तण्डिः ५ शम्बुः ६ शैवगवः ७ परिभवः ८ तारकायाः ९ हारिग्रीवाः १० वैतलेयाः ११ श्रौतायनाः १२ चारायणाः १३ आग्रायणाः १४ आर्पभयः १५ चान्द्रायणाः १६ आग्रापयः १७ पूतिमाषाः इत्येते संकृतयः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- सांकृत्य- गौरिवीत- इति होता। गुरिवीतवत्- संकृतिवद्-अङ्गिरोवद्-इत्यध्वर्युः ॥

(१) बौश्रौप्र.; गोप्र. ५५; संप्र. ६४६; संम. ६१; प्रद. १२८; संकौ. १९३; संर. ४४८.

२ गोप्र. संप्र. प्रद. संकौ. मल्काः; संम. मेल्काः; संर. मल्काः.

३ गोप्र. संप्र. प्रद. पौलः; संम. संकौ. संर. पौलाः.

४ संकौ. तण्डवः.

५ बौश्रौप्र. शम्बुः.

६ गोप्र. शैम्भवयः; संप्र. शैभवयः; संकौ. मौगवाः; संर. भैमगवाः.

७ गोप्र. परिभावाः; संप्र. संम. संकौ. संर. परिभवाः.

८ संकौ. संर. (०).

९ संप्र. हरिग्रीवाः; प्रद. हारग्रीवः; संकौ. हारिनिवाः; संर. हारिनियाः.

१० गोप्र. पैनायाः; संप्र. शैनायाः; संम. ऐनरेयाः, पैनायाः इत्यधिकम्; प्रद. वैनन्येयः, शैषयः इत्यधिकम्; संकौ. संर. (०).

११ प्रद. श्रोनायनः.

१२ गोप्र. संप्र प्रद. संकौ. संर. (०); संम. भारायणाः, माधन्यादनाः इत्यधिकम्।

१३ संकौ. संर. (०).

१४ बौश्रौप्र. गार्षभः; गोप्र. संप्र. संकौ. संर. (०); प्रद. भार्षभिः.

१५ गोप्र. संप्र. (०).

१६ बौश्रौप्र. भारद्वारथः; संकौ. संर. माप्ररः. प्रवरदर्पणे पूतिमाषः इति नाम (?) इत्यस्यानन्तरमेव पठितम्।

## आपस्तम्बश्रौतसूत्रम्

### हरिताः

अथ हरितानां त्र्यार्षेयः। आङ्गिरस-आम्बरीष-यौवनाश्व-इति। युवनाश्ववद्-अम्बरीषवद्-अङ्गिरोवद्-इति। मान्धातारमु हैके अङ्गिरसः स्थाने। मान्धात्र-आम्बरीष-यौवनाश्व-इति। युवनाश्ववद्-अम्बरीषवद्-मान्धातृवद्-इति ॥

मान्धातारमु हैकेऽङ्गिरसः स्थान इच्छन्ति, यतः चतुर्णो प्रवरः प्रतिषिध्यते अतस्तस्य स्मरणमनर्थकं मा भूदिति अङ्गिरसा तस्यैव विकल्पो न्याय्य इति याऽङ्गिरसो यथर्ष्याधाने कृतार्थत्वात् नैव प्रवरो न्याय्य इति।

कपर्दि.

### कुत्साः

अथ कुत्सानां त्र्यार्षेयः। आङ्गिरस-मान्धात्र-कौत्स-इति। कुत्सवद्-मान्धातृवद्-अङ्गिरोवद्-इति ॥

मान्धातुरङ्गिरसश्च तुल्यत्वात् हरितकुत्सानामविवाहः। बह्वृचानां तु 'हरितकुत्सपिशङ्गशङ्खदर्हं (१ भे) हैमगवानाम्' इति कुत्सानामपि हरितानामेव प्रवरः। तेन च सुतरामविवाहः। कपर्दि.

### कण्वाः

अथ अजमीढाः कण्वाः। तेषां त्र्यार्षेयः। आङ्गिरस-आजमीढ-काण्व-इति। कण्ववद्-अजमीढवद्-अङ्गिरोवद्-इति ॥

### रथीतराः

अथ विरूपा रथीतराः। तेषां त्र्यार्षेयः। आङ्गिरस-वैरूप-पार्षदश्व-इति। पृषदश्ववद्-विरूपवद्-अङ्गिरोवद्-इति। अष्टादंष्ट्रमु हैकेऽङ्गिरसः स्थाने। आष्टादंष्ट्र-वैरूप-पार्षदश्व-इति। पृषदश्ववद्-विरूपवद्-अष्टादंष्ट्रवद्-इति ॥

षट् ऋषयो म्रियन्ते। तत्र पञ्चार्षेयोऽपि संभवति। स तु अन्योक्तः। तस्मात्समानायामपि सगुल्यतायां व्यवस्थितेनैव विकल्पेन स्मृतिशाप्यन्ययत्या स्यादित्यगन्तव्यः(?यम्)। कपर्दि.

(१) आपश्रौ. २४।७।११-२४।८।१०.

### मुद्गलाः

अथ मुद्गलानां त्र्यार्षेयः । आङ्गिरस-भार्म्यश्व-मौद्गल्य-इति । मुद्गलवद्-भर्म्यश्ववद्-अङ्गिरोवद्-इति । तृक्षमु हैकेऽङ्गिरसः स्थाने । तार्क्ष्य-भार्म्यश्व-मौद्गल्य-इति । मुद्गलवद्-भर्म्यश्ववत्-तृक्षवद्-इति ॥

### विष्णुवृद्धाः

अथ विष्णुवृद्धानां त्र्यार्षेयः । आङ्गिरस-पौरुकुत्स-त्रासदस्यव-इति । त्रसदस्युवत्-पुरुकुत्सवद्-अङ्गिरोवद्-इति ॥

एष एवाविकृतः शठमर्षण-भद्रण-मद्रण-बादरायण-औपमित्य-औपगवि-सात्यकि-सात्यङ्कामि-आरुणि-नैतुन्दादीनाम् ॥

शठा मर्षणा भद्रणा मन्द्रणा बादरायणा औपमितय औपगवयः सात्यकयः सात्यङ्कामय आरुणयः नितुन्दयः। एष एवाविकृतः । कपर्दि.

### संकृतयः

अथ संकृतिपूतिमाषाणां त्र्यार्षेयः । शाक्त्य-सांकृत्य-गौरिवीत-इति । गुरिवीतवत्-संकृतिवत्-शक्तिवद्-इति ॥

प्रवृणीत इति शेषः । कपर्दि.

## सत्याषाढश्रौतसूत्रम् *

### संकृतयः

अथ संकृतिपूतिमाषतण्डिनां त्र्यार्षेयः । शाक्त्य-सांकृत्य-गौरिवीत-इति । गुरिवीतवत्-संकृतिवत्-शक्तिवद्-इति ॥

संकृत्यादीनां द्व्यामुष्यायणानां वसिष्ठत्वं तु वसिष्ठगणमध्ये पाठात् वासिष्ठस्य शक्तेर्वरणाच्च ।

प्रच.

* मुद्रितसत्याषाढश्रौतसूत्रपुस्तके केवलाङ्गिरोगण उच्छिन्नः । संकृतयस्तु वसिष्ठकाण्डादत्र संगृहीताः ।

(१) आपश्रौ. २४।१०।८.

(२) सश्रौ. २१।३।१४.

## आश्वलायनश्रौतसूत्रम्

### मुद्गलाः

मुद्गलानां आङ्गिरस-भार्म्यश्व-मौद्गल्य-इति । तार्क्ष्यं हैके ब्रुवते अतीत्याङ्गिरसं तार्क्ष्य-भार्म्यश्व-मौद्गल्य-इति ॥

अयं त्र्यार्षेयः । आङ्गिरसतार्क्ष्ययोर्विकल्पः । गानाग्र.

### विष्णुवृद्धाः

विष्णुवृद्धानां आङ्गिरस-पौरुकुत्स-त्रासदस्यव-इति ॥

### हरिताः

हरित- कुत्स- पिङ्ग- शङ्ख- दर्भ- भैमगवानां आङ्गिरस-आम्बरीष-यौवनाश्व-इति ॥

हरितकुत्सपिङ्गशङ्खदर्भभैमगवा इत्येतेषां षण्णामयं प्रवरो भवति । गानाग्र.

मान्धातारं हैके ब्रुवतेऽतीत्याङ्गिरसं मान्धात्र-आम्बरीष-यौवनाश्व-इति ॥

अयं वा हरितादीनां षण्णां प्रवरो भवति । गानाग्र.

### संकृतयः

संकृति- पूतिमाष- तण्डि- शम्बु- शैवगवानां आङ्गिरस-गौरिवीत-सांकृत्य-इति ॥

संकृत्यादीनां पञ्चानामयं प्रवरो भवति । गानाग्र.

शक्तिर्वा मूलम् । शाक्त्य-गौरिवीत-सांकृत्य-इति ॥

संकृत्यादीनामयं वा प्रवरो भवति । एते संकृत्यादयः प्रकरणादङ्गिरःशब्दश्रवणाच्चाङ्गिरसा इति प्रतीयन्ते । शक्तिगुरिवीतसमन्वयाद्वासिष्ठा इत्यपि प्रतीयन्ते । तथा कस्मिंश्चित्प्रवराम्नाये अङ्गिरसां प्रकरणे संकृत्यादीनुद्दिश्य आङ्गिरसमुख्यमेव प्रवरं पठ्यमानं पश्यामः । तथा कस्मिंश्चित्प्रवराम्नाये वसिष्ठानां प्रकरणे एतानेवोद्दिश्य शाक्त्यमुख्यं प्रवरं पठ्यमानं पश्यामः । एवं द्वाभ्यामपि संबन्धदर्शनादुभयोरन्यतरसंबन्धित्वमेवेत्यवगन्तुं न शक्यते । यद्येषां वंशभेदस्थितिरस्ति तदा इमे आङ्गिरसाः, इमे वासिष्ठा इत्यवगम्येत । तत्र आङ्गिरसानामयं वासिष्ठाना-

(१) आश्रौ. १२।१३।१२-१२।१३।१३.

मथमिति निवेशे विकल्पाभावः । अतो वंशाभेदात् विकल्प एव प्रवरयोः । ततः संकृत्यादीनां वसिष्ठत्वाभावे प्रमाणाभावाद्वसिष्ठैरेषामविवाहः । गानाह्व.

### कण्वाः

कण्वानां आङ्गिरस-आजमीढ-काण्व-इति । घोरमु हैके ब्रुवतेऽवक्रुय्याजमीढं, आङ्गिरस-घौर-काण्व-इति ॥

अवक्रुय्येति । अपोह्येत्यर्थः । गानाह्व.

### पृषदश्वाः (रथीतराः)

पृषदश्वानां आङ्गिरस-पार्षदश्व-वैरूप-इति ॥

अमी त्र्यार्षेया इत्यर्थः । गानाह्व.

अष्टादंष्ट्रं हैके ब्रुवतेऽतीत्याङ्गिरसम् । आष्टादंष्ट्र-पार्षदश्व-वैरूप-इति ॥

आङ्गिरसाष्टादंष्ट्रयोर्विकल्पः । अतीत्य त्यक्त्वा (तत्स्थाने) इत्यर्थः । गानाह्व.

## कात्यायनश्रौतसूत्रम्

### संकृतयः

१ संकृति- २ पूतिमाष- ३ ताण्डि- ४ शम्बु- ५ शैवगव- ६ जानकि- ७ तैराधातरव्य- ८ आर्षेमि- ९ चारायणि- १० सहिगाङ्गि- ११ लौगाक्षि- १२ तालनगहि- इत्येतेषाम- विवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-सांकृत्य- गौरिवीत- इति । अङ्गिरोवत्-संकृतिवद्- गुरिवीतवद्-इति ॥

### हरिताः

१ लोमायन- २ हरित- ३ कौत्स- ४ पैङ्ग- ५ दार्भ्य- ६ शङ्ख- ७ भैमगव- ८ हास्तिदासि- ९ वात्स्यपाणि- १० माद्रकारि- ११ लावेरणयः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-आम्बरीष-यौवनाश्व इति । मान्धात्र-आम्बरीष-यौवनाश्व-इति वा । मान्धातृवद्-अम्बरीषवद्-युवनाश्ववद्-इति ॥

### विष्णुवृद्धाः

*अथ १ विष्णुवृद्धाः २ शठमर्षण- ३ जत्रिणि- ४ कत्रिणि- ५ पुत्रिणि- ६ बादरायणा इत्येतेषा-

---

(१) आश्वौ. २।६।११.

(२) गोप्र. ४१ ; संप्र. ६४४ ; प्रद. १२८ ; संकौ. १९३ ; संर. ४४८.

३ संप्र. प्रद. संर. तण्डिः ; संकौ. तण्डनः .

४ गोप्र. साम्ब ; संप्र. (०) .

५ गोप्र. शैशठन ; संप्र. शैशयन ; प्रद. सौरवनः ; संकौ. सैरवनाः ; संर. सौरयनाः .

७ संप्र. तैराधारम्य ; प्रद. तैरथः, रारम्यः ; संकौ. तैराधाः, रम्पाः ; संर. सैराधाः, रम्पाः ; जेसी. तैराधारम्य.

८ गोप्र. कृषिभी ; संप्र. कृषिमि ; प्रद. धर्षिमि ; संकौ. संर. कृष्णयः .

९ गोप्र. चारायणि ; प्रद. चामरायणिः ; संर. चारायणयः .

१० संप्र. सहिगङ्गि ; प्रद. सहिः, गाङ्गि ; संकौ. संर. सहयः, गाङ्गयः .

११ गोप्र. लौक्षि ; संप्र. गाक्षि ; प्रद. लोगाक्षिः ; संकौ. संर. लौक्षयः .

१२ गोप्र. तालागाः ; संप्र. तालागनहि ; प्रद. तालः, नगहिः ; संकौ. तालानागहयः ; संर. तालाः, नागहयः .

(१) गोप्र. ४४ . अयं गणः अन्येषु निबन्धग्रन्थेषु नोपलभ्यते, अतः प्रा. जॉन ब्रौमहारायेन संपादितात् 'गोत्रप्रवरमञ्जरी'-पुस्तकादस्माभिः संगृहीतः ।

१ गोप्र. लोमायना .

४ गोप्र. पैग .

५ गोप्र. दाल्म्य .

७ गोप्र. हैमगव .

८ गोप्र. हारस्तदासि .

१० गोप्र. माद्रिकामि .

११ गोप्र. लवेनाः .

(२) गोप्र. ४४ . अयमपि गणोऽन्येषु निबन्धग्रन्थेषु नोपलभ्यते ।

* गोत्रप्रवरमञ्जर्याम्- 'अथ विष्णुवृद्धाः......मविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-पार्षदश्व-राथीतर-इति । अङ्गिरोवद्-पृषदश्ववद्-रथीतरवद् । रथीतराणां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-वैरूप-राथीतर-इति । अङ्गिरोवद्-विरूपवद्-रथीतरवद् । मुद्गलानां त्र्यार्षेयः प्रवरो भवति । आङ्गि-

-मविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-पौरुकुत्स-त्रासदस्यव-इति । अङ्गिरोवत्-पुरुकुत्सवत्-त्रसदस्युवत् ॥

### रथीतराः

रथीतराणां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-वैरूप-राथीतर-इति । अङ्गिरोवद्-विरूपवद्-रथीतरवत् । आङ्गिरस-पार्षदश्व-राथीतर-इति वा । अङ्गिरोवत्-पृषदश्ववद्-रथीतरवत् ॥

### वामदेवाः

* बृहदुक्था वामदेवाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-बार्हदुक्थ-वामदेव-इति । अङ्गिरोवद्-बृहदुक्थवद्-वामदेववत् ॥

### मुद्गलाः

१ [2]हिरण्यस्तम्बि- २ सात्यमुग्रि- ३ मौद्गलाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-भार्म्यश्व-मौद्गल्य-इति । अङ्गिरोवद्-भर्म्यश्ववद्-मुद्गलवत् ॥

### कण्वाः

१ [3]भेरुण्डाश्च २ भारुण्डाश्च तृतीयः ३ शाकटायनः । ततः ४ प्रागाद-५ सौनारी ६ मर्कटो ७ रमणः ८ शणः ॥ ९ कण्वाः १० मार्कटयः ११ रामणेयाः १२ शाणायनाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस-आजमीढ-काण्व-इति । अङ्गिरोवद्-अजमीढवत्-कण्ववत् ॥

संकृत्यादीनां त्रयाणां * यद्यपि भरद्वाजसंदंशोऽस्ति, तथापि ते केवलाङ्गिरसेषु उत्कृष्टव्याः, भरद्वाजस्य प्रवरेष्वननुवृत्तेः । न च क्वापि भरद्वाजा इत्युपक्रमोपसंहारो भरद्वाजत्वनिर्णायको यथाऽस्ति तथैषां भरद्वाजत्वनिश्चायकं किञ्चिदस्ति । या तु कात्यायनादीनां भरद्वाजोक्तिः सा वरणमात्राभिप्रायिका । किञ्च, एषां भरद्वाजत्वे बौधायनेन संकृत्यादिभिः सह विवाहोक्तेर्बौधायनविरोध आपद्येत । लौगाक्षिसूत्रमप्येवमेव वर्णनीयम् ।

संप्र. ६३४

## मानवश्रौतसूत्रम्

### संकृतयः

१ [1]संकृति- २ पौतिमाषि- ३ तण्डि- ४ शम्भुः ५ शैवपायनानां ६ जानकि- ७ तैतैल्यकाव्य-लालव्य- ८ आर्षभि- ९ लाङ्गन्धि- १० चारायणि......इति ॥ ( प्रवरे तु गौरिवीत इति । )

### हरिताः

... १ हरितः २ कौत्स- ३ शङ्ख- ४ दर्भ- ५ पैङ्ग- ६ भैमगव- ७ मात्रकारि- ८ गाणकारि- ९ हास्तिदासि- १० लावेरणि- ११ कालशीते- इति ॥ ( प्रवरः कात्यायनलौगाक्षिवत् । )

---

रस-पौरुकुत्स-त्रासदस्यव-इति । अङ्गिरोवत्-पुरुकुत्सवत्-त्रसदस्युवत् ।' इति पाठो मुद्रितः । प्रा. जॉन ब्रौमहाशयस्तु इमं पाठं प्रामादिकं मत्वा बौधायनाद्यनुसारिणं पाठं स्वीकृतवान् । स प्रवारमाभिरुपरि संगृहीतः ।

२ गोप्र. सत्यश्रिणि.

(१) गोप्र. ४४.

* एतेषां प्रवरेषु बृहदुक्थ-वामदेवयोरनुवर्तनादेते गौतमा इति निश्चीयते, न केवलाङ्गिरस इति ।

(२) गोप्र. ४४ ; संप्र. ६४४.

३ संप्र. मुद्गलायनाः.

(३) गोप्र. ४४ ; संप्र. ६४४–६४५ ; प्रद्. ११८ ; संकौ. १८८ ; मंर. ४३७.

१ गोप्र. भरण्डाः ; संप्र. भेरुण्डाः , भरुण्डाः ; प्रद्. भरुण्डाः ; संकौ. भारुडाः ; मंर. भरुण्डाः ; जोशी. उरुण्डः .

२ गोप्र. हिरण्डाः ; प्रद्. दारुण्डः ; ( संकौ. भरुडाः ; ) जोशी. मुरुण्डः .

३ गोप्र. तृतीया शाकटायनाः .

४,५ गोप्र. प्रागदसौनारी ; संप्र. प्रमादसौनारी ; प्रद्. प्रशादः, सौनारिः .

८ संप्र. प्रद्. सणः .

९ संप्र. कण्वः ; प्रद्. कण्व .

१० गोप्र. मार्कटयाः ; प्रद्. मर्कटिः .

* संकृतिमुद्गलकण्वानाम् ।

११ गोप्र. संप्र. रमणाः ; प्रद्. (०) .

१२ गोप्र. शाणायनाः ; संप्र. प्रद्. (०) .

(१) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः प्रा. बॉन ब्रौमहाशयेन संशोधितः 'गोत्रप्रवरमञ्जरी' पुस्तकात् संगृहीतः ।

**विष्णुवृद्धाः**

अथ १. वैष्णुवृद्धिः २. शठमर्षण– ३ छत्तृण– ४ पोतृण– ५ गोतृण– ६ बादरायणाः इति ॥ ( प्रवराः– आङ्गिरस–पौरुकुत्स–त्रासदस्यव–इति । )

**रथीतराः**

रथीतराणां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस –वैरूप–पार्षदश्व–॥ इत्यादि ।

**रपाभगाः**

* रपाभगानां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–वामदेव्य–गौतम–इति ॥ इत्यादि ।

**मुद्गलाः**

हिरण्यगर्भ– छत्रकयः मुद्गलाः इति ॥ ( प्रवराः कात्यायनलौगाक्षिवत् । )

**कण्वाः**

रुरुङ्गाक्यायना......डश्च तृतीयः शाकटायनः ।
चतुर्थो गर्दभो नारी ......
ततः प्राकीर–सौवार–मर्कटो रमणः शणः ।
कण्वाः मार्कटयो रामणेयाः शाणायनाः इति ॥
( प्रवराः कात्यायनलौगाक्षिवत् । )

## शुक्लयजुर्वेदपरिशिष्टम्

**संकृतयः**

१ संकृति– २ पूतिमाप– ३ तण्डि– ४ शम्बु– ५ शैववानाः ६ जानकि– ७ तैलदाल– ८ आर्षमि – ९ शेतन्– १० चारायणि– ११ भारोयणिन– १२ गाङ्गायनि– इति ॥ ( प्रवरे तु गौरिवीत इति । )

**हरिताः**

१ स्वाध्यायन– २ हरित– ३ कुत्स– ४ शङ्ख– ५ दर्भ– ६ पैङ्ग– ७ भैमगव– ८ माद्रगारि– ९ गाणगारि– १० हास्तिदासि– ११ वात्सेरणि– १२ कौमार– १३ हारित– १४ पालाशी– १५ मान्धाता ( र )–इति ॥ ( प्रवराः कात्यायन-लौगाक्षिवत् । )

**विष्णुवृद्धाः**

अथ १ वैष्णुवृद्धिः २ शठमर्षण– ३ क्षत्रिण– ४ छत्रिण– ५ भद्रिण– ६ बादरायणाः इति ॥ ( प्रवराः आङ्गिरस–वैरूप–पार्षदश्व–इति । )

**रथीतराः**

( कुत्स )– रथीतराणां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–पौरुकुत्स–त्रासदस्यव– ॥ इत्यादि ।

**आर्षभागिनः**

आर्षभागीनां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस–वामदेव्य–गौतम–इति ॥ इत्यादि ।

**मुद्गलाः**

१ हिरण्यगर्भाः २ छत्रयः ३ मुद्गलाः इति ॥
( प्रवराः कात्यायनलौगाक्षिवत् । )

**कण्वाः**

उरुण्डश्च मुरुण्डश्च तृतीयः शाकटायनः ।
चतुर्थो गर्दभो नारी......
ततः प्राकर–सोवरी मर्कटो रमणः शणः ।
कण्वाः मार्कटयो रामणेयाः शाणायनाः इति ॥
( प्रवराः कात्यायनलौगाक्षिवत् । )

## मत्स्यपुराणम्

**संकृतयः**

१संकृतिः पूतिमोपश्च मनुः संवेधिरेव च ।
तण्डिश्च जानकिश्चैव तैलका दर्श एव च ॥

---

* रपाभगाः शुक्लयजुर्वेदपरिशिष्टस्था आर्षभागिनश्चाभिन्नाः । एतेषां प्रवरेषु वामदेवगौतमयोरनुवर्तनादेते गौतमाः, न केवलाङ्गिरस इति निर्धार्यते ।

- ( १ ) शुक्लयजुर्वेदपरिशिष्टेऽस्मिन् गोत्रप्रवरविचारः प्रा. जीन मैनहादयेन संपादितात् ' गोत्रप्रवरमञ्जरी'पुस्तकात् संगृहीतः ।

( १ ) मत्स्य. १९६।३० ; गोप्र. संप्र. ( ० ) .
[ गोत्रप्रवरनामसंग्रहः मद्. १२८ ; संकौ. १९३ ; संर. ४४८ इत्यत्र द्रष्टव्यः । ]
२ मत्स्य. च त्रिमार्ष्टिश्च .
४ मत्स्य. संवधिरेव वा ; मद्. संबन्धिः .
६ मत्स्य. येनातकिश्चैव .
७,८ मद्. तण्ड, कादम्बः .

१चारायणिश्चार्षभिश्च ¹लौक्षिर्गार्ग्यहरिस्तथा ।
गालवश्चैव त्र्यार्षेयः सर्वेषां प्रवरो मतः ॥
२अङ्गिराः संकृतिश्चैव गौरिवीतस्तथैव च ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

हरिताः

३शात्यायनो हरितश्च कौत्सः पिङ्गस्तथैव च ।
हस्तिदासो मात्स्यमालिर्माद्रिगारिर्लवेरणिः ॥

१भैमगवः शाद्वदर्भी सर्वे त्रिप्रवरा मताः ॥
२अङ्गिराश्चाम्बरीषश्च यौवनाश्वस्तथैव च ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

* बृहदुक्थाः

३बृहदुक्थो वामदेवस्तथा त्रिप्रवरा मताः ।
अङ्गिरा बृहदुक्थश्च वामदेवस्तथैव च ।
परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥

कुत्साः

४कुत्सगोत्रोद्भवाश्चैव तथा त्रिप्रवरा मताः ।
अङ्गिरास्त्रसदस्युश्च पुरुकुत्सस्तथैव च ।

(१) मत्स्य. १९६।३१ ; गोप्र. संप्र. (०).

९ मत्स्य. नारायणिः.

१० मत्स्य. चार्षिणिः च.

१२ प्रद. हारिः गलागलिः.

१३ मत्स्य. गाल्वश्च अनेहश्च सर्वेषां प्रवरो मतः ।

(२) मत्स्य. १९६।३२ गौरिवीत ( गौरवीति ) ; गोप्र. संप्र. (०).

संकृतिगणे प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा—

१ भिह्नालयः– प्रद. भिह्नानिः.

२ विभीतकाः– प्रद. निभातकिः ; संकौ. विभीतकाः.

३ तैलयः– प्रद. (०).

४ वैयाघ्रपद्या– प्रद. वयाघ्रपदः.

५ शालायना– सर्वग्रन्थेषु समानम् ।

६ आर्षण्या.— प्रद. (०).

(३) मत्स्य. १९६।३३ ; गोप्र. ४८ ; संप्र. ६६७.

[ गोत्रप्रवरनामसमूहः संप्र. ६४५ ; प्रद. ११८ ; संकौ. १८८ ; संर. ४३६ इत्यत्र द्रष्टव्यः । ]

१ मत्स्य. कात्यायनः ; संप्र. शात्यायनः, खण्डायनाः ; प्रद. संकौ. संर. खाण्डायनाः.

२ मत्स्य. हरितकः ; गोप्र. हरिविंदयः ; संप्र. हरिकर्णः.

३,४ गोप्र. पैङ्गलश्च तथैव च ; संप्र. मात्स्यः पौगेल एव च, कुत्साहसाः, पैङ्गलाः, पिङ्गाः ; प्रद. हंसः, पैङ्गलः ; संकौ. संर. कुत्साः, हंसाः, पैङ्गलाः, पिङ्गाः.

५ मत्स्य. हण्डिदासः ; गोप्र. संप्र. प्रद. हस्तिदासः ; संकौ. संर. हस्तिदासमाः.

६ मत्स्य. वात्स्यायनिः ; गोप्र. वात्स्यमालिः ; संप्र. मात्स्यलिः, मात्स्यमाल्यः ; प्रद. मात्स्यमालिः ; संकौ. संर. मात्स्यमाल्यः.

७ मत्स्य. माद्रि, मौलिः ; गोप्र. माण्डिमालिः ; संप्र. माद्रिश्च, माण्डमाल्यः, मद्रगारव, गाणगारवः ; प्रद. उमाण्डिः, मौलिः, मद्रगारिः, गणगारिः ; संकौ. माण्डमाल्यः, मद्रागरयः, गाणगरयः ; संर. माण्डमाल्यः, मद्रगारयः, गाणगारयः.

८ मत्स्य. कुबेरणिः ; गोप्र. संप्र. प्रद. संकौ. संर. नबेरणिः.

* कात्यायन–लौगाक्षि–श्रौतसूत्रे ( सं. का. पृ. ३२७) टिप्पणी द्रष्टव्या ।

(१) मत्स्य. १९६।३४ ; गोप्र. ४९ ; संप्र. ६६७.

९ मत्स्य. भीमवेगः ; गोप्र. क्षीमवेगः ; संप्र. भीमगवः.

१०,११ मत्स्य. शाश्वदर्भिः ; गोप्र. शारदर्भिः ; संप्र. शाङ्कदर्भिः.

(२) मत्स्य. १९६।३४,३५ पूर्वार्धे ( अङ्गिरा इरदश्वश्च जीवनाश्वस्तथैव च । ) ; गोप्र. ४९ यौवनाश्व ( युवनाश्व ) ; संप्र. ६६७ ( अङ्गिरा अम्बरीषश्च यौवनाश्वस्तृतीयकः । परस्परमविवाह्याः समानप्रवरत्वतः ॥ ).

हरितगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा—

१ पलाशिनः– प्रद. पलाशिः ; संकौ. संर. पालाशिनः.

२ दार्दुलाः– प्रद. दार्दुलः ; संकौ. दान्दलाः ; संर. दादलाः.

३ हास्तिनः— संप्र. हस्तिनः.

४ कौमारहारिताः– प्रद. कौमारः हरितः ; संकौ. कौमारहारितः.

५ दुला— प्रद. दलः.

६ आम्बरीषाः– प्रद. संकौ. संर. (०).

(३) मत्स्य. १९६।३५,३६ ; गोप्र. ४९ इत्येते ( गोत्रे ते ) ; संप्र. ६६७ ( बृहदुक्थो वामदेवस्तथा त्रिप्रवरौ मतौ । अङ्गिरा बृहदुक्थो वै वामदेवस्तृतीयकः । परस्परमवैवाह्या गोत्रे स्वे परिकीर्तिताः ॥ ).

(४) मत्स्य. १९६।३७ त्रसत्रसदस्युश्च ( त्रश्च सदस्युश्च )

कुत्साः कुत्सैरवैवाह्या एवमाहुः पुराविदः ॥

रथीतराः

१रथीतराणां प्रवरास्त्र्यार्षेयाः परिकीर्तिताः ।
अङ्गिराश्च विरूपश्च तथैव च रथीतरः ।
रथीतरा अवैवाह्या नित्यमेव रथीतरैः ॥

विष्णुवृद्धाः

२विष्णुवृद्धः शठमर्षिर्जतृणः कर्तृणस्तथा ।
पुत्रवंश्च महातेजास्तथा च बार्दरायणः ॥
३त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरो नृप ।
अङ्गिराश्च विरूपश्च पृषदश्वस्तथैव च ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

मुद्गलाः

१सात्यमुग्रिर्महातेजा हिरण्यस्तम्बिमुद्गलौ ।
२त्र्यार्षेयो हि मतस्तेषां सर्वेषां प्रवरो नृप ॥
३अङ्गिराश्चैव भार्म्यश्वो मुद्गलश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

---

पुराविदः ( पुरातनाः ) ; गोप्र. ४९ कुत्सगोत्रोद्भवाश्चैव ( कुम्भगोत्रोद्भवश्चैव ) ; संप्र. ६६७ प्रथमार्धे ( कुम्भगोत्रोद्भवश्चैव तथा त्रिप्रवरो मतः । ) तथैव च ( तृतीयकः ).

( १ ) मत्स्य. १९६।३८ अवैवाह्या ( ह्यवैवाह्या ) ; गोप्र. ४९ प्रथमार्धे ( रथीतराणां प्रवरस्त्र्यार्षेयः परिकीर्तितः । ) ; संप्र. ६६७ ( ततो रथीतराणां च त्र्यार्षेयः प्रवरः स्मृतः । अङ्गिरा हि विरूपोऽपि तृतीयो हि रथीतरः । रथीतरा अवैवाह्या नित्यमेव रथीतरैः ॥ ).

( २ ) मत्स्य. १९६।३९ ; गोप्र. ४९ ; संप्र. ६६७.

[ गोत्रप्रवरनामसंग्रहः संप्र. ६४५ ; प्रद. ११९ ; संकौ. १८८ ; संर. ४३७ इत्यत्र द्रष्टव्यः । ]

१ मत्स्य. विष्णुसिद्धि ; गोप्र. संप्र. विष्णुवृद्धिः.

२ मत्स्य. शिवमतिः ; गोप्र. सत्तोमद्रिः ; संप्र. सत्तोमद्रिः.

३ गोप्र. जतृणः ; संप्र. जतृणः, जान्त्रिणाः.

४ मत्स्य. कतृणः ; संप्र. संकौ. संर. कर्तृणाः.

५ गोप्र. अत्रिवश्च ; संप्र. अत्रिराचः, पुत्रिणाः ; प्रद. संकौ. संर. पुत्रिणाः.

६ मत्स्य. वरपरायणः ; गोप्र. चवो परायणाः ; संप्र. चैवापरायणाः, शाम्बरायणाः ; प्रद. भारायणः ; संकौ. संर. शाम्बरायणाः.

( ३ ) मत्स्य. १९६।४० पृषदश्च ( पृषदर्भ ) ; गोप्र. ४९ नृप ( शुभः ) ; संप्र. ६६७–६६८ ( त्र्यार्षेयो हि मतश्चैषां सर्वेषां प्रवरो नृप । अङ्गिरा हि विरूपश्च पृषदश्वस्तृतीयकः । ऋषयोऽमी स्वगोत्रत्वादवैवाह्याः परस्परम् ॥ ).

आनन्दाश्रममुद्रितमत्स्याषाढधौतसूत्रे केवलाङ्गिरोगणो नोपलभ्यते, प्रवरदर्पणकारैस्तु गोत्रनामसंग्रहप्रसङ्गेन विष्णुवृद्धगणे हिरण्यकेशिसूत्रोक्तानि नामानि प्रदर्शितानि । तानि यथा–

१ मर्षणः.

२ उपमितिः– संप्र. संकौ. संर. औपमीतयः । ( आपस्तम्बेऽपीदम् । ).

३ नितुन्दिलः.

४ औपगविः– संकौ. संर. औपगवयः. ( आपस्तम्बेऽपीदम् । ).

५ कुशामित्रः– संर. कुशामित्र्.

६ वत्सायनः– संर. वत्सायनाः.

७ स्यवनार्पेव्यः– संर. सावनार्याः.

८ व्यायनिः– संर. वाच्यायनिनः.

९ कालम्भायनिः– संर. कायम्भायनिनः.

१० ऋणी.

विष्णुवृद्धगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामान्युपलभ्यन्ते । तानि यथा–

१ क्षत्रिणाः– प्रद. ( ० ).

२ छात्रिणाः– सर्वग्रन्थेषु समानम् ।

३ होत्रिणाः– संर. होत्रीणाः.

४ वात्रिणाः– सर्वग्रन्थेषु समानम् ।

( १ ) मत्स्य. १९६।४१ ; गोप्र. ४९ ; संप्र. ६६८.

[ गोत्रप्रवरनामसंग्रहः संप्र. ६४६, प्रद. ११८, संकौ. १८८ ; संर ४३७ इत्यत्र द्रष्टव्यः । ]

१ गोप्र. सत्यमुग्रि ; संप्र. सत्यमग्निः.

( २ ) मत्स्य. १९६।४१ ; गोप्र. ४९ यो हि मत ( योऽभिमत ) ; संप्र. ६६८ प्रवरो नृप ( प्रवरः शुभः ).

( ३ ) मत्स्य. १९६।४२ अङ्गिराश्चैव भार्म्यश्वो ( अङ्गिरा मत्स्यदग्धश्च ) ; गोप्र. ४९ भार्म्यश्वो ( भार्म्याश्वो ) ऋषयः ( इत्येते ) ; संप्र. ६६८ मुद्गलश्च महा ( मुद्गलः सुमहा ) शेषं गोप्रवत्.

(मुद्गलाः)

१हंसजिह्वो देवजिह्वो ह्यग्निजिह्वो विडादयः ।
अपाग्नेयो मुमर्यश्च पौराण्यान्तानि मौद्गलाः ॥

२त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरः शुभः ।
अङ्गिराश्चैव ताण्डिश्च मौद्गलश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

कण्वाः

३आर्यादयश्चतुरयस्तृतीयः शाकटायनः ।
ततः प्रागादसौनारी मर्कटो रमणः शणः ॥

१कण्वा मार्कटयश्चैव तथा नाडायनो ह्यपि ।
शाणायनैस्तथैवैषां त्र्यार्षेयः प्रवरो मतः ॥

२अङ्गिराश्चाजमीढश्च कण्वश्चैव महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

३एते तवोक्ताङ्गिरसस्त्रिधोक्ता
महानुभावा नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

---

( १ ) मत्स्य. १९६।४३ ; गोप्र. ५० ; संप्र. ६६८.

१ संप्र संकौ. संर. हंसजिह्वाः.

२ गोप्र. संप्र. संकौ. संर. देवजिह्वाः .

३ गोप्र. आलवाल ; संप्र. आल्वाल, आलवाल्वाः ; प्रद. आलवालः ; संकौ. आलबाला ; संर. आलेवालाः .

४ मत्स्य. विराडप. ; संप्र. विडाल्य, विडादयः ; प्रद. बिडादिः ; संकौ. संर. विडालादयः .

५ गोप्र. आयाग्नेयाः ; संप्र. आयाग्नय ; प्रद. आपाग्नेयः ; संकौ. आग्न्यादयः ; संर. अग्न्यादयः .

६ मत्स्य. ( तु ) अश्वयुश्च ; गोप्र. सुमयश्च ; संप्र. शुनपश्च , सुतय ; संकौ. सुतयः ; संर. सुनयः .

७,८ मत्स्य. परण्यस्ता विमौद्गला ; गोप्र. पाराण्यान्तानि-मौद्गलाः ; संप्र. पौराण्यान्तानि मुद्गलाः ; प्रद. पौराः .

( २ ) मत्स्य. १९६।४४,४५ प्रथमार्धे ( त्र्यार्षेयाभिमतास्तेषां सर्वेषां प्रवराः शुभाः । ) मौद्गल्यश्च ( मौद्गल्यश्च ) ; गोप्र. ५० ताण्डिश्च ( ताविश्च ) महातपाः ( महांस्तथा ) ; संप्र. ६६८ त्र्यार्षेयोऽभिमतस्तेषां ( त्र्यार्षेयो हि मतश्चैषां ) ताण्डिश्च मौद्गलश्च ( ताविश्च मौद्गल्यश्च ) तृतीयार्धे ( ऋषयोऽमी सगोत्रत्वादवैवाह्याः परस्परम् । ) .

मुद्गलगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामान्युपलभ्यन्ते । तानि यथा–

१ छत्रहया – सर्वग्रन्थेषु समानम् ।

२ कार्यभासिता – सर्वग्रन्थेषु समानम् ।

३ हिरण्यगर्भा – संप्र. हिरण्यदर्भाः .

( ३ ) मत्स्य. १९६।४५ ; गोप्र. ५० ; संप्र. ६६८ .

[ गोत्रप्रवरनामसंग्रहः संप्र. ६४५ ; प्रद. ११८ ; संकौ. १८८ ; संर ४३७ इत्यत्र द्रष्टव्यः । ]

१ मत्स्य. अपाण्डुश्च ; संप्र. पादश्च, आर्यादयः ; संकौ. संर. आर्यादयः ,

२ मत्स्य. गुरुश्चैव ; गोप्र. चतुरायः ; संप्र. चतुरः चापि ; संकौ. संर. चतुराः .

३ गोप्र. शाकटायनः .

४,५ मत्स्य. प्रागाथमा नारी ; संप्र. प्रागादसौनारी , गर्धभाः , प्राकाराः , शौवेरिणः , नारिणः ; प्रद. गर्दभः , प्रागावसुः , शैवेरिः , नारी ; संकौ. गर्दभाः , प्राकासराः , शौवेरिणः , नारिणाः ; संर. गर्दभाः , प्राकासराः , शौवेरिणः , नारीणाः .

६ मत्स्य. मार्कण्डः ; संप्र. मर्कटः , मर्कटाः .

७,८ मत्स्य. मरण , शिवः ; गोप्र. रमणः , सणः ; संप्र. रमण , समा , रामायणाः ; प्रद. आमरनाशनः ; संकौ. भरणाः , सणाः , रामायणा ; संर. रमण्य , सनाः , रामायणा .

( १ ) मत्स्य. १९६।४६ ; गोप्र. ५० ; संप्र. ६६८ .

९ मत्स्य. कडुः ; संप्र. कण्वः .

१० मत्स्य. मर्कटपः ; गोप्र. मर्कटयः ; संप्र. कर्मटयः .

११ गोप्र. गादायनो रथिः ; संप्र. गादायनो रथिः , गोदायनाः ; प्रद. गोदायनः , रथिः , नाडायनः ; संकौ. संर. गोदायनाः ; जैश्री. रामणेय .

१२ मत्स्य श्यामायनः ; गोप्र. श्यामायनिः ; संप्र. श्यामायनिः , शालायनाः , श्यामायनयः ; प्रद. श्यामायनिः , श्यामायणः ; संकौ. संर. शालायनाः , श्यामायनयः .

( २ ) मत्स्य. १९६।४७ कण्वश्चैव ( कटयश्चैव ) ; गोप्र. ५० ; संप्र. ६६८ उत्तरार्धे ( सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः । ).

( ३ ) मत्स्य. १९६।५५ त्रिधोक्ता ( सन्तु वंशे ) नृप गो ( ऋषिगो ) ; गोप्र. ५१ ; संप्र. ६६८ एते तवोक्ताङ्गि ( सर्वे त इमेऽङ्गि ) येषां ( एषां ) [illegible]

(१) इह मत्स्यपुराणोक्ते त्रिविधाङ्गिरसां प्रवरकाण्डे परिकीर्तितानां गोत्राणां मध्ये येषां प्रवरेषु गौतमः सप्तर्षिर्म्रियमाणतया सत्तया वाऽनुवर्तते तेषां परस्परमविवाहः, समानगोत्रत्वात्, 'गौतमानां सर्वेषामविवाहः' इति बौधायनवचनाच्च। तथा येषां गोत्रगणानां प्रवरेषु भरद्वाजः सप्तर्षिर्म्रियमाणतया सत्तया वाऽनुवर्तते तेषां परस्परमविवाहः, समानगोत्रत्वात्, 'भरद्वाजानां सर्वेषामविवाहः' इति बौधायनवचनाच्च। इतरेषां सप्तर्षिबाह्यानां केवलाङ्गिरसां हरितकुत्सकण्वरथीतरपृषदश्वमुद्गलविष्णुवृद्धादीनां परस्परं विवाहः, सगोत्रत्वाभावात्, स्वे स्वे गणे चाविवाहः, समानप्रवरत्वादिति समुदायार्थः। पृ. ५१

लौगाक्षिकात्यायनाश्वलायननिरुक्तानि केवलाङ्गिरसां प्रवरकाण्डान्यधस्तादेवोदाहृतानि।

अथ इमानि काण्डानि व्याख्यास्यामः— यदुक्तमधस्तात् भृगुगोत्रकाण्डव्याख्यानारम्भे 'इहोदाहृतानाम्' इत्यारभ्य 'व्याख्यास्यामः' इत्येवमन्तेन भाष्येण, तत्सर्वमिहापि स्मर्तव्यम्, प्रयोजनगौरवादिति। अत्रोदाहृतानां मध्ये हरितकुत्सकण्वरथीतरमुद्गलविष्णुवृद्धव्यतिरिक्तानां द्व्यामुष्यायणकण्वादीना भरद्वाजगणेऽन्तर्भावात् भरद्वाजैः सह अविवाह उक्तः। * पृषदश्वा (बृहदुक्था ?) रथीतरा एव इत्येके मन्यन्ते। अपरे— पृषदश्वानां (बृहदुक्थानां ?) रथीतराणा च भेदेन गणमुपदिश्य मत्स्यपुराणे पृथक्प्रवरोपदेशात् (एकप्रवरोपदेशात् ?) रथीतरेभ्योऽन्ये पृषदश्वा इति मन्यन्ते। तस्मिन्नपि पक्षे रथीतराणा पृषदश्वानां परस्परमविवाहः, त्र्यार्षेयाणां त्र्यार्षेयसंनिपातात्। संकृतीनां तु द्व्यामुष्यायणत्वात् वसिष्ठगणोक्तैः स्वगणोक्तैश्च अविवाह उक्तः।

* अत्र द्विः पृषदश्वस्थाने बृहदुक्थेति, 'पृथक्प्रवरोपदेशात्' इत्यत्र 'एकप्रवरोपदेशात्' इति च आदर्शपुस्तके प्रामादिकं मुद्रणम्। गौतमानां बृहदुक्थानां केवलाङ्गिरसां रथीतराणां च प्रायो भेदाभेदचिन्तैव न संभवति। किंच यथाश्रुते 'त्र्यार्षेयसंनिपातात्' इत्यस्मिन्हेतुर्निरुप्यते। न हि मत्स्यपुराणे बृहदुक्थरथीतरप्रवरयोस्त्र्यार्षेयसंनिपातो दृश्यते, न वा पृषदश्वरथीतरयोः प्रवरैक्यं दृश्यते। अतोऽत्र मैत्रहोदयेनाप्येतत्प्रदर्शितम्।

अथेदानीं हरितादीनां विवाहं वक्ष्यामः— हरितानां कुत्सानां च परस्परमविवाहः, त्र्यार्षेयाणां त्र्यार्षेयसंनिपातात् आपस्तम्बपाठे, * आश्वलायनपाठे च 'हरितकुत्सपिङ्गशङ्ख' इत्यादिना समानप्रवरोपदेशात्। इतरेषां कण्वरथीतरमुद्गलविष्णुवृद्धानां परस्परं च पूर्वोक्तैः वक्ष्यमाणैश्च अग्न्यादिभिः सह विवाहोऽस्ति, सगोत्रसमानप्रवरत्वयोरभावात्। इति व्याख्यातं केवलाङ्गिरसां प्रवरकाण्डम्। गोप्र. ५६–५७

(२) अथ केवलाङ्गिरस उच्यन्ते। तत्र पञ्च गणाः— विष्णुवृद्ध–कण्व–हरित–रथीतर–मुद्गलाः। तत्र आद्यो गणः त्रयोदशविधः, द्वितीय एकादशविधः, तृतीयो विंशतिधा, चतुर्थो दशधा, पञ्चमोऽष्टधा। पृ. ६३५

कात्यायन–लौगाक्षिभ्यां मुद्गलाः कण्वाः संकृतयश्च द्व्यामुष्यायणा इति त्रय एवोक्ताः। संप्र. ६३६

## प्रवरसंग्रहकारः

### हरिताः

हारीतो यौवनाश्वश्च मान्धाता कुत्सनामकः।
पिङ्गलः शङ्खदर्भौ च भैमश्च गवनामकः॥
अम्बरीषो दशैतानि हारीतस्य गणः स्मृतः।
तस्मिन्परस्परं पाणिग्रहणं न हि शोभनम्॥

* आपस्तम्बीयातिरिक्तेषु बौधायनादिप्रवरकाण्डेषु कुत्रापि त्र्यार्षेयसंनिपाताभावात् आपस्तम्बपाठे समानप्रवरोपदेशाभावाच्च आदर्शपुस्तकसंपादकविवक्षितस्य 'आपस्तम्बपाठे' इतिपदोत्तरान्वयस्यानुपपन्नत्वात्पूर्वान्वयो ज्ञेयः। तत्रापि हरितानां वैकल्पिकयोः प्रवरयोरेकैकमादाय त्र्यार्षेयसंनिपातः संपादनीयः।

(१) प्रपा. ३१० दर्भौ च भैमश्च गवनामकः (दर्भौ च भौमश्च्यवननामकः); विपा. ७०३ मान्धाता (मान्धात्रः) भैमश्च गवनामकः (भौमश्च गजनामकः); ज्योनि. १३३ हारीतो (हरितो) भैमश्च गवनामकः (भौमश्च गवनायकः); बाल. १।५३ पृ. १७७ मान्धाता (मान्धात्रः) भैमश्च (भौनश्च); संग. १७९ दर्भौ च भैमश्च गवनामकः (दर्भौ च भौमश्च गजनामकः).

(२) प्रपा. ३१० गणः स्मृतः (दश स्मृताः); विपा. ७०३ तस्मिन् (अस्मिन्) न हि शोभनम् (न शुभं मतम्); ज्योनि. १३३–१३४ हारीतस्य (हरितस्य); बाल. १।५३ पृ. १७७ हारीतस्य (हारितस्य); संग. १७९ न हि शोभनम् (न शुभं मतम्).

### मुद्गलाः

[1]मौद्गल्यतार्क्ष्यभार्म्यश्वास्त्रीणि गोत्राण्यमूनि हि ।
मौद्गल्यस्य गणस्तस्मिन्न मिथः पाणिपीडनम् ॥

### कण्वाः

[2]कण्वोऽजमीढ इत्येते गोत्रे कण्वगणः स्मृतः ।
तस्मिन्परस्परं पाणिग्रहणं न हि शोभनम् ॥

### विरूपाः ( रथीतराः )

[3]विरूपोऽष्टादंष्ट्रनामा पृषदश्वश्च मुद्गलः ।
चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः ।
परस्परं विवाहोऽस्मिन्न विधेय इतीरितम् ॥

### विष्णुवृद्धाः

[4]विष्णुवृद्धः पौरुकुत्स्यस्त्रसदस्युः कतस्तथा ।
मद्रणो भद्रणाख्यश्च वादरायणसंज्ञकः ॥
[1]सात्यकाम्यौपमित्यौ च गविः सात्यकितालुकी ।
नितुन्दश्चेति गोत्राणि त्रयोदशमितानि च ।
विष्णुवृद्धगणस्तस्मिन्न विवाहः परस्परम् ॥
[2]गौतमादिगणा अष्टौ ये तथाऽङ्गिरसो गणाः ।
तथाप्येषां गणानां तु विवाहः स्यात्परस्परम् ॥
[3]मौद्गल्यस्य गणस्यापि विरूपस्य गणस्य च ।
परस्परं न कुर्वीत पाणिपीडनसत्क्रियाम् ॥

### स्मृत्यर्थसारः

[4]केवलाङ्गिरसश्चैके विष्णुवृद्धाः सकण्वजाः ।
हारीता रथीतराश्च मुद्गलाः प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥
[5]षोडशाङ्गिरसस्त्रेधा प्रोक्ताः संकृतयस्तथा ।
संकृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः ।
स्वबर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वियुः ॥

---

( १ ) प्रपा. ३१० भार्म्यश्वा ( भार्म्याश्वा ) गणस्तस्मिन् ( गणस्तत्र ) ; विपा. ७०४ ; ज्योनि. १३४ प्रपावद् ; बाल. १।५३ पृ. १७७ तार्क्ष्यभार्म्यश्वा ( तार्क्ष्या भार्म्याश्वा ) गणस्त ( गणास्त ) ; संग. १७९ भार्म्यश्वा ( भार्म्याश्वा ) .

( २ ) प्रपा. ३१० इत्येते ( इत्येत ) ; विपा. ७०४ कण्वोऽजमीढ ( कण्वोऽजपीठ ) तस्मिन् ( अस्मिन् ) ; ज्योनि. १३४ न हि शोभनम् ( न शुभं मतम् ) ; बाल. १।५३ पृ. १७८ ज्योनिवत् ; संग. १७९ .

( ३ ) प्रपा. ३१० दंष्ट्र ( दंष्ट्रि ) मुद्गलः ( मौद्गलः ) इतीरितम् ( इतीरितः ) ; विपा. ७०४ दंष्ट्र ( दंष्ट्रि ) मुद्गलः ( मौद्गलः ) ; ज्योनि. १३४ विरूपस्य गणः ( विश्वरूपगणः ) शेषं प्रपावद् ; बाल. १।५३ पृ. १७८ ; संग. १७९ प्रपावद् .

( ४ ) प्रपा. ३१० कतस्तथा ( क्रतुस्तथा ) मद्रणो ( मग्णो ) ; विपा. ७०४ पौरुकुत्स्यस्त्रसदस्युः ( पौरुकुत्सस्त्रसदस्य ) ; ज्योनि. १३४ मद्रणो ( माग्णो ) ; बाल. १।५३ पृ. १७८ पौरुकुत्स्यस्त्रसदस्युः ( पौरुकुत्स्यस्त्रसदस्यः ) मद्रणो ( मयणो ) ; संग. १७९–१८० विपावद्.

( १ ) प्रपा. ३१० पमित्यौ ( पतित्यौ ) ; विपा. ७०४ सात्यकाम्यौपमित्यौ च ( साकल्यकाम्यौपमित्यौ ) नितुन्द ( नितुन्द ) ; ज्योनि. १३४ सात्यकाम्यौ ( सत्यकामौ ) ; बाल. १।५३ पृ. १७८ सात्यकाम्यौ (सात्यनाम्यौ) सात्यकि ( सात्विकि ) ; संग. १८० सात्यकाम्यौ ( सत्यकाम्यौ ) तालुकी ( तालुकौ ).

( २ ) प्रपा. ३१० ये तथाऽङ्गिरसो गणाः ( यस्तथाऽङ्गिरसां गणः ) तथाप्येषां ( तेष्वप्येषां ) ; विपा. ७०४ ङ्गिरसो ( ङ्गिरसां ) ; ज्योनि. १३४ पूर्वार्धे (गौतमस्य गणा ह्यष्टौ यस्तथाऽङ्गिरसो गण' ।) ; बाल. १।५३ पृ. १७८ पूर्वार्धे ( गौतमादिगणानष्टौ यस्तथाऽङ्गिरसो गण' । ) ; संग. १८० .

( ३ ) विपा. ७०६ पाणिपीडन ( पाणिग्रहण ) ; ज्योनि. १३५ मौद्गल्यस्य ( मौद्गलस्य ) ; बाल. १।५३ पृ. १७९ ; संग. १८१ मौद्गल्यस्य ( मौद्गलस्य ) पाणिपीडन ( पाणिग्रहण ) .

( ४ ) स्मृसार. १५ ; चम. १०२–१०३ (=) हारीता ( हरिता ) ; संम. ६२ चमवद् ; कृम. १०४२ (=) चमवद् .

( ५ ) स्मृसार. १५ ; संप्र. ६२६ (=) प्रथमार्धं विना ; ६५३ नान्वियुः ( वान्वयः ) प्रथमार्धं विना ; चम. १०५ (=) नान्वियुः ( नान्वय ) प्रथमार्ध विना ; संम. ६२ द्वसिष्ठैश्च ( द्वासिष्ठैश्च ) ; बाल. १।५३ पृ. १८६ चमवद् , प्रथमार्धं विना ; कृम. १०५० (=) चमवद् , प्रथमार्धं विना .

# अत्रिकाण्डम्

## बौधायनश्रौतसूत्रम्

### केवलात्रयः

अत्रीन् व्याख्यास्यामः–

१ अत्रयः २ भूरयः ३ छान्दिः ४ छान्दोगिः ५ पौष्टिकाः ६ माङ्गलयः ७ शैवाः ८ छगलाः ९ छागलाः १० तृणबिन्दुः ११ भागन्तयः १२ मालरुचः १३ व्यालयः १४ शाम्यव्यायनाः १५ कार्मर्यायणयः १६ दाक्षिः १७ तैदेहाः १८ गाधिपतयः १९ औदालकिः २० द्रोणभावाः २१ गौरिग्रीवयः २२ गाविष्ठिराः २३ शिशुपालाः २४ कृष्णात्रेयाः २५ गौरात्रेयाः २६ अरुणात्रेयाः २७ नीलात्रेयाः २८ श्वेतात्रेयाः २९ श्यामात्रेयाः ३० महात्रेयाः ३१ आत्रेयाः ३२ हालेयाः ३३ वालेयाः ३४ शौभ्रेयाः ३५ वामरथ्याः ३६ वैतभावयः ३७ शौद्रेयाः ३८ कौद्रेयाः ३९ गोपवनाः

---

(१) बौश्रौप्र. ; गोप्र. ५७ ; संप्र. ६४६ ; सम. ५९ ; प्रद. ११९ ; संकौ. १८८ ; संर. ४३८–४३९.

२ प्रद. भूमिः.

३ गोप्र. स्यादि.

४ गोप्र. स्यान्दोगि ; संप्र. छन्दोगेयाः ; प्रद. छन्दोगिः ; संकौ. संर. छान्दोगेयाः.

५ संप्र. पौष्पिकाः ; संम. पौष्ठिकाः ; संकौ. पौपिकाः ; संर. पौष्पिकाः.

६ गोप्र मौद्गुलयः ; संप्र संम. मौद्गलयः ; प्रद. माङ्गुलिः ; संकौ. संर. मोद्गलयः.

७,८ बौश्रौप्र. छगलाः (०) ; गोप्र. सैपाः, स्थपालाः ; संप्र. सौपाच्छाला ; प्रद. सोपाच्छरालः ; संम. सोपानच्छरालाः ; संकौ. संर. सौरालगलाः.

१० बौश्रौप्र. संप्र. संर. तृणबिन्दवः ; संकौ. मुतृणबिन्दवः.

११ गोप्र. भागम्पथः ; संप्र. संकौ. संर. मार्गन्तयः ; प्रद. भाहनि.

१२ बौश्रौप्र. मालकुजः ; प्रद. गालरुचः.

१३ बौश्रौप्र. व्यालकः.

१४ गोप्र. संप्र. सावच्यानयः ; संम. साम्मन्यायनाः, सावम्यायनाः ; प्रद. सवम्यानिः ; संकौ. साम्बम्यानयः ; संर. सांवम्यानयः.

१५ गोप्र. कार्मर्दायनयः ; संम. कर्मर्थीयाः, कामप्यायनिः ; प्रद. कार्म्यायनिः ; संकौ. कामर्यानयः ; संर. कामार्यानयः.

१६ संकौ. दाशायः ; संर. दाशायनाः.

१७ संप्र. संर. सैदेहाः ; संम. वैदेहाः ; प्रद. वैदेहः.

१८ बौश्रौप्र. गाणिरपतयः ; गोप्र. गाणिपटयः ; संम. गणपतयः ; संकौ. माधितयः ; संर. गाधितपाः ; जेबी. गाणपत्यः.

१९ संप्र. औद्दलिकयः ; संकौ. औदालकयः.

२० प्रद. द्रोणनाभः.

२१ प्रद. गौरग्रीविः ; संकौ. गौरिग्रीवयाः ; जेबी. गौरग्रीवयः.

२२ संप्र. माविच्छिराः ; प्रद. काविष्टिरः ; संकौ. माविष्ठिराः.

२३ संकौ. संर. शैशुपालाः.

२६ गोप्र. रक्तात्रेयाः ; संप्र. संकौ. संर. ऋक्षात्रेयाः ; संम. तृणात्रेयाः, अरणात्रेयाः.

३० गोप्र. महात्रेयः.

३१ गोप्र. गात्रेयाः ; संप्र. संकौ. संर. गालेयाः ; प्रद. दत्तात्रेय, गोलेयः ; संम. आत्रेयाः, दत्तात्रेयाः, गालेयाः ; जेबी. दत्तात्रेयाः.

३२ गोप्र. संप्र. संम. प्रद. संकौ. संर. (०).

३३ गोप्र. वैलेयाः ; संप्र. प्रद. बालेयाः ; संम. वायेयाः.

३४ गोप्र. शौभ्रेयाः ; प्रद. सौगयः.

३५ बौश्रौप्र. वामरथीनाम् ; गोप्र. संम. वामरथीनाः ; जेबी. वामरथिनः.

३६ गोप्र. संम. वैतभावाः ; संप्र. संकौ. संर. श्वेतभावाः.

३८ गोप्र. कौण्डेयाः ; प्रद. कौन्द्रेयः ; संकौ. संर. (०).

३९ प्रद. गोपरन्यः.

४० कालापचयः ४१ आनीलायनाः ४२ आनङ्गिः ४३ मानङ्गिः ४४ दौरङ्गिः ४५ सौरङ्गिः ४६ सौपुप्ययः ४७ शाह्वेयाः ४८ साकेतायनाः ४९ भारद्वाजायनाः ५० इन्द्रातिथिः इत्येते अत्रयः। तेषां त्र्यार्षेयः प्रवरो भवति। आत्रेय–आर्चनानस–श्यावाश्व–इति होता। श्यावाश्ववद्–अर्चनानसवद्–अत्रिवद्–इत्यध्वर्युः॥

## वाद्भुतकाः

[१]वाद्भुतकानां त्र्यार्षेयः प्रवरो भवति। आत्रेय–आर्चनानस–वाद्भुतक–इति होता। वद्भुतकवद्–अर्चनानसवद्–अत्रिवद्–इत्यध्वर्युः॥

## गविष्ठिराः

[२]गविष्ठिराणां त्र्यार्षेयः प्रवरो भवति। आत्रेय–आर्चनानस–गाविष्ठिर–इति होता। गविष्ठिरवद्–अर्चनानसवद्–अत्रिवद्–इत्यध्वर्युः॥

---

४० बौश्रौप्र. कालपवय' ; गोप्र. संकौ. संर. कालापचयाः ; संम. काल्पपयवयः ; प्रद. कालायसिः.

४१ बौश्रौप्र. आनीपायणाः ; गोप्र. अनीलायनाः ; संप्र. प्रद. संकौ संर. नीलायनाः ; संम. आनील्पयनाः , आनीशा-यनाः.

४२ संम. आनन्दि' ; प्रद. आङ्गिमान्.

४३ संप्र. ( ० ) ; संम. मानन्दिः ; प्रद. अङ्गिः.

४४ गोप्र. गौरङ्गि ; संप्र. संर. दौरङ्गयः , गौरङ्गय' ; संम. गौरन्दिः , दैरन्दिः ; प्रद. दौराङ्गिः , गौरगिः ; संकौ. दौरङ्गय' , घौरङ्गय.

४५ गोप्र. ष्योरङ्गिः , सौरङ्गिः ; संम. सैरन्दिः ; प्रद. सौरगिः.

४६ बौश्रौप्र. गोप्र. संम. पुष्पयः ; संप्र. संकौ. संर. पुष्पयः, सौपुष्पय' ; प्रद. पुष्पिः , सुपुष्पिः.

४७ बौश्रौप्र. शैखय' ; गोप्र. सैष्पयः ; संप्र प्रद. संकौ. संर. ( ० ) ; संम. शैफयः.

४८ संम. साकेतायनाः , शाकटायनाः ; संकौ. साकेतयनाः.

४९ गोप्र. संम. भारद्वाजनयः.

५० प्रद. चन्द्रातिथिः , इन्द्रानिधिः.

( १ ) बौश्रौप्र. ; गोप्र. ५७ वाद्भुतकानां ( वाग्भूतकानां ).

( २ ) बौश्रौप्र. ; गोप्र. ५८ गविष्ठिराणां ( गाविष्ठिराणां ).

## मुद्गलाः

[१]१ मुद्गलाः २ व्यालिसंधयः ३ और्णवापयः ४ बौधाक्षाः ५ गविष्ठिराः ६ वैजवापाः ७ शिरीषयः ८ शालिमतः ९ व्रीहिमतः १० गौरिवीतः ११ गौरिकयः १२ वाजवताः १३ वायुपूटाः इत्येते मुद्गलाः। तेषां त्र्यार्षेयः प्रवरो भवति। आत्रेय–आर्चनानस–पौर्वातिथ–इति। पूर्वातिथिवद्–अर्चनानसवद्–अत्रिवद्–इत्यध्वर्युः। अत्रीणां सर्वेषामविवाहः॥

# आपस्तम्बश्रौतसूत्रम्

## केवलात्रयः

[२]( अथ ? ) अत्रीणां त्र्यार्षेयः। आत्रेय–आर्चनानस–श्यावाश्व–इति। श्यावाश्ववद्–अर्चनानसवद्–अत्रिवद्–इति॥

---

( १ ) बौश्रौप्र. ; गोप्र. ५८ ; संप्र. ६४७ ; संम. ५९ ; प्रद. १२० ; संकौ. १८९ ; संर. ४३९.

२ बौश्रौप्र. संकौ. संर. शालिसंधयः ; गोप्र. व्याधिसंधि ; संम. व्यालिसधिः ; प्रद. व्यालसंधिः.

३ बौश्रौप्र. और्गनाभयः ; गोप्र. स्वर्णवा' ; संप्र. संम. प्रद. संकौ. अर्णवा ; संर. आर्णवाः.

४ बौश्रौप्र. दाक्षिः ; गोप्र. बोधाक्ष ; प्रद. बोधाक्षः.

५ बौश्रौप्र. संप्र. संकौ. संर. ( ० ).

६ बौश्रौप्र. वेतवाहा' ; गोप्र. संप्र संकौ. संर. वैतवाहाः ; संम. वाजकिः ; प्रद. वतभाव'.

७ गोप्र. सिरीषयः.

८ गोप्र. शालिमनः ; संप्र. संकौ. संर. शालिमनाः ; संम. शालिगताः.

९ गोप्र. संप्र. प्रद. संकौ. संर. ( ० ) ; संम. व्रीहिमताः.

१० बौश्रौप्र. गौरीषित' ; गोप्र. गौरिशौ ; संप्र. संम. संकौ. संर. गौरिताः ; जेघी. गौरिवीतिः.

११ गोप्र. संप्र. प्रद. संर. गौरकय' ; संम. गौरंवयः ; संकौ. गोरकय'.

१२ बौश्रौप्र. गोप्र. संम. वायवनाः ; संप्र. वाजवनाः ; प्रद. वायवानः.

१३ गोप्र. संप्र. संकौ, संर. ( ० ) ; संम. वाष्कलाः ; प्रद. वायुभूतिः.

( २ ) आपश्रौ. २४।८।११–१४ ; गोप्र. ५८.

अत्रीणां सर्वेषां त्र्यार्षेयः । पृथगधिकारो नैव क्रियते अथात इति अस्पत्वात् प्रवराणाम् । कपर्दि.

### गविष्ठिराः

अथ गविष्ठिराणां त्र्यार्षेयः । आत्रेय-आर्चनानस-गाविष्ठिर-इति । गविष्ठिरवद्-अर्चनानसवद्-अत्रिवद्-इति ॥

### अतिथयः ( मुद्गलाः )

अथातिथीनां त्र्यार्षेयः । आत्रेय-आर्चनानस-आतिथ-इति । अतिथिवद्-अर्चनानसवद्-अत्रिवद्-इति ॥

सर्वेषामत्रीणामविवाहः, ऋषिभूयस्त्वात् ।

कपर्दि.

एप एवाविकृतो वामरथ्य-सुमङ्गल-बैजवापीनाम् ॥

वामरथ्यानां सुमङ्गलानां बीजवापीनां च अविकृतः । कपर्दि.

## सत्यापाढश्रौतसूत्रम्

### केवलात्रयः

अथात्रीणां त्र्यार्षेयः । आत्रेय-आर्चनानस-श्यावाश्व- इति । श्यावाश्ववद्-अर्चनानसवद्-अत्रिवद्-इति ॥

### गविष्ठिराः

अथ गविष्ठिराणां त्र्यार्षेयः । आत्रेय-आर्चनानस-गाविष्ठिर-इति । गविष्ठिरवद्-अर्चनानसवद्-अत्रिवद्-इति ॥

एप एवाविकृतो *वामरथ्य-सुमङ्गल-बीजवापानाम् ॥

गतार्थम् । अत्रीणां सर्वेषामविवाहः । सगोत्रत्वात् समानप्रवरत्वाच्च । प्रच.

* भारद्वाजगृह्यसूत्रेऽपि पाठोऽयम् । स्वकल्पवत्तु गविष्ठिरस्य.. मार।

(१) सत्या. २१।३।११ ; सं. ४२१ .

## आश्वलायनश्रौतसूत्रम्

### केवलात्रयः

* अत्रीणां आत्रेय- आर्चनानस- श्यावाश्व- इति ॥

### गविष्ठिराः

गविष्ठिराणां आत्रेय-गाविष्ठिर-पौर्वातिथ-इति ॥

अत्र द्विविधा अत्रय उक्ताः, अन्यत्रान्ये च सन्ति । तेषां सर्वेषामत्रीणां परस्परमविवाहः । एवमुत्तरेष्वपि क्वचिद्द्रष्टव्यम् । गानाष्ट.

## कात्यायन-लौगाक्षि-श्रौतसूत्रम्

### केवलात्रयः

१ कार्मर्यायणि- २ शाङ्खेया अथो ३ शाला-रथाश्च ये । ४ आर्यायणा ५ वामरथ्या ६ गोपवनाः ७ तार्णबिन्दवः ॥ ८ औद्दालकिः ९ शौन-

* पाठोऽयं वैदिकपरम्परागतः कात्यायनमत्स्यपुराणसंवादी च । अस्मदादर्शगोत्रप्रवरमञ्जरीपुस्तके 'अत्रीणामात्रेयार्चनानसगाविष्ठिरेति । पूर्वातिथीनामात्रेयार्चनानसपौर्वातिथेति' इति पाठो मुद्रितः । प्रा. जॉन ब्रौमद्योदयेन तु 'अत्रीणामात्रेयार्चनानसश्यावाश्वेति । गविष्ठिराणामात्रेयार्चनानसगाविष्ठिरेति । पूर्वातिथीनामात्रेयार्चनानसपौर्वातिथेति' इति पाठोऽङ्गीकृतः । स तेन 'इण्डिया ऑफिस'गतगोत्रप्रवरमञ्जरीपुस्तके उपलब्धो बौधायनापस्तम्बसंवादी च ।

(१) आश्वौ. १२।१०।४ ; गोप्र. ५९ .

(२) गोप्र. ५८-५९ ; मंप्र. ६४६ ; प्रद. ११९ ; संकौ. १८८-१८९ ; संर. ४३९ .

१ गोप्र. कार्मर्यायनि .

२ गोप्र. शाखलयः ; मंप्र. शाम्बरयः ; प्रद. शाङ्करिः ; संकौ. शाङ्करयः ; संर. शारवरयः .

३ गोप्र. पार्शालादरथश्च ये ; संप्र. संकौ. संर. (०) ; प्रद. भौरसः , दर्पथः .

४ गोप्र. संप्र. प्रद. संकौ. संर. आक्षायनाः .

६ गोप्र. पवनाः ; संप्र. संकौ. संर. पवनाशाः .

७ गोप्र. शाकिः , दिविकिः ; मंप्र. किकिदिकयः ; प्रद. शाकिः , विदर्भिः ; संकौ. किकिदिवयः ; संर. किकिदीवयः .

८ गोप्र. मौद्गलकिः .

९ संकौ. संर. शौनकर्णकः .

कर्णिरथो १० सौश्रुतयश्च ये । ११ गौरग्रीविः १२ कैरञ्जिश्च १३ जैत्रायणाश्च ये ॥ १४ विवाहुतन्त्र – १५ वाहुमित्राश्च १६ जानुकि – १७ तैलेय– १८ वैलेय– १९ आत्रेय– २० पतञ्जनानां २१ भागमादायन– २२ सौपुष्पयः २३ छान्दोगिः इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरः । आत्रेय– आर्चनानस– श्यावाश्व– इति । अत्रिवद्–अर्चनानसवत्–श्यावाश्ववद्– इति ॥

## गविष्ठिराः

१ दाक्षिः २ व्यालिः ३ पार्णविश्च ४ भालन्दनाः ५ और्णनाभिः ६ शिलन्धरः ७ बैजवापिः ८ शिरीपश्च ९ मौञ्जकेशी १० गविष्ठिराः इत्येते दश गविष्ठिराः । एतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेय–गाविष्ठिर–पौर्वातिथ– इति । अत्रिवद्–गविष्ठिरवत्–पूर्वातिथिवत् ॥

## पुत्रिकापुत्राः

पुत्रिकापुत्रान् व्याख्यास्यामः । १ हालेय– २ वालेय– ३ कौद्रेय– ४ वामरथ्य– ५ पुत्रिका इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेय–वामरथ्य–पौत्रिक–इति । अत्रिवद्–वामरथ्यवत्–पुत्रिकवत् ॥

# मानवश्रौतसूत्रम्

## केचलात्रयः

१ कौर्मर्यायणि– २ संकिलयश्चायो ३ शखारथयश्च ये । ४ आम्रायणाः ५ वामरथ्याः ६ गोपवनाः ७ तार्णविन्दवः । ८ औद्दालकिः ९ शौनकर्णि– अथो १० वाल्गुतपयश्च ये । ११ गौरग्रीविः १२ कैरन्दिश्च अथो १३ चैत्रायणाश्च ये । १४ णाकर्ण्यायन्ति– १५ पौरिन्दि– अथो १६ वत्सारथपाश्च ये । १७ गलि– १८ छागलि– १९ भागलि …… २० वाहु– २१ दन्त्यैन्द्रेय– २२ दौत्थायात्रेयः २३ सौध्रूतकी– २४ वर्पानकी– २५ कृष्ण– २६ छन्दोगि ॥

१० प्रद. सौभृति. ; संकौ. सौभृतयः.

११ गोप्र. कौरग्रीवि ; संकौ. संर. गौरग्रीवः.

१२ प्रद. कैरजिः.

१३ गोप्र. जैत्रायगा ये च ; संप्र. जैत्रायणाः , श्वेनकयः ; प्रद. जैत्रायणः , स्वेनकिः ; संकौ. जैत्रायणाः , चेकयः ; संर. जैत्रायणाः , श्वेकय ; जेबी. चैत्रायणाश्च ये.

१४ संप्र. प्रद. संकौ. बाहुतन्त्राः ; संर. बाहुनेत्राः.

१५ गोप्र. वाहा मित्रश्वा ; संप्र. संर. वाहुमित्राः ; संकौ. बाहुमित्राः.

१६ गोप्र..जानकि.

१७ गोप्र. तौलेय ; संप्र. संकौ. संर. ( ० ).

१८ गोप्र. वौलेय ; संप्र. संकौ. संर. ( ० ).

२० संप्र. पतञ्जनाः ; प्रद. पञ्चजनः ; संर. पतञ्जनः.

२१ गोप्र भागमादयन ; संप्र. संकौ. संर. भागमादनाः ; प्रद. भागमानः.

( १ ) गोप्र. ५९ ; संप्र. ६४७ ; प्रद. १२० ; संकौ. १८९ ; संर. ४३९.

१ गोप्र. दक्ष ; संप्र. संकौ. संर. दक्षयः ; प्रद. लाक्षिः.

२ संप्र. संकौ. संर. ( ० ) ; प्रद. व्याणिः.

३ गोप्र. खदार्णकृद् ; संप्र. संकौ. संर. ( ० ) ; प्रद. भवरोधकृत्.

४ गोप्र भालवना ; संप्र. संकौ. संर. भलन्दनाः ; प्रद. नालन्दन.

५ गोप्र. अर्णनाभि.

६ गोप्र. वैवेय ; संप्र संकौ. संर. चन्द्रात्रेयाः ; प्रद. वैवेयः.

७ गोप्र. वैजवापि ; प्रद. वैजवापनः.

८ गोप्र. शिमिश्व ; संप्र. संकौ. संर. ( ० ) ; प्रद. सपिः.

९ गोप्र. मौञ्जकेशः ; संप्र. संर. मौञ्जकेशाः ; प्रद. मौञ्जकाशिः ; संकौ. मौञ्जकेशाः.

( १ ) गोप्र. ५९ ; संप्र. ६४७ ; प्रद. १२० ; संकौ. १८९ ; संर. ४३९–४४०.

१ गोप्र. हादेय.

२ गोप्र. वावेय.

३ गोप्र. कौणेय ; प्रद. केरेयः. अस्यानन्तरं संप्र. संकौ. शौभ्रेयाः ; संर. शैद्रेयाः इत्यधिकम् ।

४ अस्यानन्तरं संप्र. संकौ. संर. गोपवनाः इत्यधिकम् ।

( २ ) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः प्रा. जौन ब्रौमहाशयसंपादितात् गोत्रप्रवरमंजरी 'पुस्तकात्संगृहीतः ।

### गविष्ठिराः

१ प्राक्षिः २ दाक्षि ३ व्यालिः ४ पौर्णविः ५ और्णवापि- ६ शिलंविनः ७ मौञ्जकेशी ८ भलन्दनः ९ वैजवापि १० शिरीपश्च ११ मैयण्यः १२ दूतिः १३ सौपुष्पिः १४ सामपुष्पिः ( सोमपुष्पिः )१५ हिरण्यपुष्पिः १६ चद्रिकर्द्रकि १७ काकशीर्पि १८ काकालशीत्येतेपाम्......॥

### पुत्रिकापुत्राः

१ हालेयाः २ वालेयाः ३ दौभेयाः ४ शौभ्रेयाः ५ कौभ्रेयाः ६ वामरथ्य- ७ गोपवन- ८ विष्टिर ( गविष्टिर ? ) – ९ पुत्रिकापुत्राः ॥ ( प्रवराः–आत्रेय–गाविष्ठिर–पौत्रिक–इति । )

## शुक्लयजुर्वेदपरिशिष्टम्

### केवलात्रयः

१ कौर्मयोयणि- २ शाखयः ३ ह्या ये शाखाह्योश्च ये...... ४ गौरग्रीविः ५ कैरन्दिश्च अथो ६ चैत्रायणाश्च ये ७ नकंयण्टि ८ यौरक्यन्यो ९ चाक्षोथवाश्च ये १० शागलि ११ छागलि १२ भागलि १३ थातुचि १४ वाहुवि १५ दन्तीन्द्राय १६ दौलात्रेय १७ सौघोतकि १८ वैखानसि १९ कृष्ण २० छन्दोगि ॥

### गविष्ठिराः

१ प्राक्षिः २ दाक्षि ३ व्यालिः ४ पार्ण्णुविः (च) ५ और्णवापि ६ शिलन्धिरः ७ वैजवापि ८ शिरीपश्च ९ मौञ्जकेशी १० भालन्दनः ११ मैत्रायणयः १२ घृतिः १३ सौपुष्पि- १४ सामपुष्पि- १५ ब्रह्मपुष्पि- १६ व्याघ्रपुष्पि- १७ हिरण्यपुष्पि- १८ चन्द्रकाट्टुकि- १९ फाकशीर्पि- २० कालशिविः इत्येतेपां ...... ॥

### पुत्रिकापुत्राः

१ हालेय- २ घालेय- ३ फौद्रेय- ४ शौभ्रेय- ५ यामरथ्य- ६ गौपचन- ७ पुत्रिका ॥ ( प्रवरः कात्यायनलौगाक्षिवत् । )

---

(१) शुक्लयजुर्वेदपरिशिष्टेस्तो गोत्रप्रवरनिर्णयः मा. जॉन मौनदारायणशास्त्रिभिर ' गोत्रप्रवरमञ्जरी 'पुस्तकात् संगृहीतः ।

## मत्स्यपुराणम्

### केवलात्रयः

मत्स्य उवाच–

१अत्रिवंशसमुत्पन्नान् गोत्रकारान्निबोध मे ।
कौर्मयोयणिशाङ्खेयास्तथा शारायणाश्च ये ॥
२औद्दालकिः शौनकर्णिरथो सौक्तवराश्च ये ।
गौरग्रीविश्च कैरञ्जिरथो जैत्रायणाश्च ये ॥
३आर्धपन्था वामरथ्यो गोपनास्तृणविन्दवः ।
कौनजिह्वोद्दरग्रीवी वैडालिः शाकलायनिः ॥

---

( १ ) मत्स्य. १९७।१ ; गोप्र. ५९ ; संप्र. ६६९ वंश (गोत्र).
[ गोत्रप्रवरनामसंग्रहः संप्र. ६४६–६४७ ; प्रद. ११९ ; संकौ. १८९ ; संर. ४३९ इत्यत्र द्रष्टव्यः । ].

१ मत्स्य. कर्दमायन ; गोप्र. कर्मयोयनि ; संप्र. कामयायनिः.

२ मत्स्य. शाखेयाः ; गोप्र. संप्र. प्रद. संकौ. संर. सांख्येयः.

३ गोप्र. संप्र. संकौ. संर. सारायणाः ; प्रद. सारापणः.

( २ ) मत्स्य. १९७।२ ; गोप्र. ५९ ; संप्र. ६६९ .

४ मत्स्य. उद्दालकिः ; गोप्र. उद्दालकः .

५ मत्स्य. शौणकर्णिरथौ ; संप्र. सौनकर्णिरथो .

६ मत्स्य. शौक्तवश्च ये ; गोप्र. सौतवराश्च ये ; संप्र. सौक्तवराश्च ये , सौकचराः ; प्रद. सौल्कवरः ; संकौ. संर. सौक्तचराः .

७ मत्स्य. गौरग्रीवाः .

८ मत्स्य. गौरजिनस्तथा ; संप्र. केयोरञ्जिरथो .

९ मत्स्य. जेवी. चैत्रायणाः .

( ३ ) मत्स्य. १९७।३ ; गोप्र. ६० ; संप्र. ६६९ .

१० मत्स्य. अर्धपण्याः ; गोप्र. आर्धपथाः ; संप्र. अर्धरथः , अर्धपन्थाः ; प्रद. आर्यपथः ; संकौ. अर्धपथाः ; संर. अर्धपथाः .

११ मत्स्य. वामरथ्याः ; संप्र. वामरथः .

१२ गोप्र. गौर्धन्यः ; संप्र. गोर्धन्य, गौपन्याः ; प्रद. गौर्तन्यः ; संकौ. गौपन्याः ; संर. गौधन्याः ; जेवी. गोपवनाः . बौधायनादिष्वपि गोपवनाः इति नामोपलभ्यते ।

१३ मत्स्य. तकिबिन्दवः .

१४ मत्स्य. कर्णजिह्वो ; गोप्र. कानजिह्वो ; संप्र. कारजिह्वः , कानजिह्वाः ; संकौ. कल्जिह्वाः ; संर. कालजिह्वाः .

१५ मत्स्य. हरग्रीतिः ; गोप्र. पुरग्रीविः ; संप्र. उद्दरग्रीवः , उदरग्रीवयः .

१६ मत्स्य. ऐद्रागिः ; गोप्र. संप्र. प्रद. संकौ. संर. वैडालिः.

१७ गोप्र. शाकलायनिः ; संप्र. शकटायनिः , शाकलायनाः ; प्रद. शाकटायनः ; संकौ. संर. शाकलायनाः .

१८तैलेयश्च १९सचैलेयो २०आत्रिर्गो२१णपतिस्तथा ।
२२जैलदो २३भगपादश्च २४सौपुष्पिश्च महातपाः ॥
२छन्दोगेयस्तथैतेषां त्र्यार्षेयः प्रवरो मतः ।
३श्यावाश्वश्च तथाऽत्रिश्च तथा चैवार्चनानसः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

( १ ) मत्स्य. १९७।४ ; गोप्र. ६० ; संप्र. ६६९ .
१८ मत्स्य. गोप्र. तैलपश्च ; संप्र. नैलेयश्च .
१९ संप्र. सचैलेयो.
२० गोप्र. आत्रि ; संप्र. न्यत्रि, आत्रेया: .
२१ मत्स्य. गोणीपतिः ; गोप्र. गोणिपतः ; संप्र. गोणीपथः, गौणीपन्थाः ; प्रद. गौणिपथः ; संकौ. गौरणीपथाः ; संर. गौणीपथाः .
२२ गोप्र. प्रलग ; प्रद. जगलदः ; संकौ. संर. बलदाः .
२३ प्रद. भागलिः ; संकौ. भागपादाः ; संर. भवपादाः .
२४ गोप्र. सौपुष्टिः .
( २ ) मत्स्य. १९७।५ त्र्यार्षेयः प्रवरो मतः ( त्र्यार्षेयाः प्रवरा मताः ) ; गोप्र. ६० ; संप्र. ६६९ .
२५ मत्स्य. गोप्र. छन्दोगेयः .
( ३ ) मत्स्य. १९७।५,६ तथा चैवार्चनानसः ( आर्चनानश एव च ) ; गोप्र. ६० ; संप्र. ६७० .
अत्रिगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामान्युपलभ्यन्ते । तानि यथा—
१ शाकटायनाः— संकौ. संर. (०). शाकलायनिः इत्यस्यायं पाठभेदो भवितुमर्हति ।
२ अर्घ्यायणाः— प्रद. आर्घायणः , आर्धपन्थाः इत्यस्यायं पाठभेदो भवितुमर्हति ।
३ बादर्यायणाः— सर्वग्रन्थेषु समानम् ।
४ माङ्गलाः— प्रद. मतङ्गः .
५ बाहुपयाः— प्रद. बाहुपिः ; संकौ. संर. (०).
६ शामलयः— प्रद. शाकलिः ; संकौ. संर. (०).
७ बाहुदन्तयः— प्रद. बादन्तिः .
८ भागलयः— प्रद. (०) ; संकौ. संर. भागलेयः .
९ स्वस्त्यात्रेयाः— प्रद. संकौ. संर. (०) .
१० शैखयः— प्रद. वैशाखिः , शाकिलाक्षिः ; संकौ. शैखयः ; संर. शैखयः .
११ कीरायणाः— प्रद. रायनिः ; संकौ. संर. करायणाः .
१२ नीशायनाः— सर्वग्रन्थेषु समानम् ।
१३ दाभ्र्याः— संकौ. संर. दर्भ्याः .
१४ दुलादुपाः— प्रद. दुलाभः ; संकौ. कुयादुलाः ; संर. कुयादुलाः .
१५ भावरथाः— प्रद. (०) ; संकौ. संर. वामरथाः .
१६ गणपनयः— संकौ. संर. (०) .
१७ वैश्वानकयः— संप्र. वैश्वानकेयः .
१८ शौधूलकयः— संप्र. शलूधकयः ; प्रद. शाधूलकिः ; संकौ. शोधूलकयः .
१९ निकलाः— प्रद. (०) .
एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

## गविष्ठिराः

१दाक्षि२र्भ्यालिः ३पार्णविश्च ऊर्णनाभिः ५शिलार्दनिः ॥
२वै६जवापिः शिरीपश्च मौ७ञ्जकेशी गविष्ठिरः ।
भलन्दनस्तथैतेषां त्र्यार्षेयाः प्रवरा मताः ॥
३अत्रिर्गविष्ठिरश्चैव तथा पूर्वातिथिः स्मृतः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

( १ ) मत्स्य. १९७।६ ; गोप्र. ६० .
[ गोत्रप्रवरनामसङ्ग्रहः संप्र. ६४७ ; प्रद. १२० ; संकौ. १८९ ; संर. ४३९ इत्यत्र द्रष्टव्यः । ].
२ मत्स्य. गोप्र. बलिः .
३ मत्स्य. पर्णविः ; गोप्र. पर्नलिः ; प्रद. संकौ. संर. (०).
५ गोप्र. शलार्दनिः .
( २ ) मत्स्य. १९७।७ ; गोप्र. ६० .
६ मत्स्य. बीजवापी ; गोप्र. बीजवपी.
८ मत्स्य. गोप्र. मौञ्जकेशः .
( ३ ) मत्स्य. १९७।८ ; गोप्र. ६० .
गविष्ठिरगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । प्रवरदर्पणे तु मात्स्योक्तानीत्युक्तम् । तानि यथा—
१ पूर्वातिथयः— सर्वग्रन्थेषु समानम् ।
२ श्यामपुष्पयः— प्रद. श्यामपुष्पः .
३ शिलन्दलयः— प्रद. ललन्दलिः .
४ महापुष्पयः— सर्वग्रन्थेषु समानम् ।
५ व्याघ्रपुष्पयः— संर. वाघ्न्यपुष्पयः .
६ सौपुष्पयः— सर्वग्रन्थेषु समानम् ।
७ कृष्णशीर्षकाः— संकौ. कार्ष्णशीकयः ; संर. कार्ष्णशायकः .

मण्डनः

ओंविश्वामित्रमात्रेया नोद्वहन्ति च ते मिथः ।
द्विगोत्रा वामरथ्याद्या अत्रेस्ते पुत्रिकासुताः ॥
[2]विश्वामित्रैरत्रिभिश्च न विवाह्या धनञ्जयाः ।
यद्वा धनञ्जयौ भिन्नौ शब्दमात्रं न भिद्यते ॥

६५४ प्रथमार्धम् ; चम. १०५ ( = ) ; संम. ६२ ; बाल. ११५३ पृ. १८६ गोत्रेण ( गोत्राभ्यां ) ; कृम. १०४४ ( = ) वसिष्ठै ( वासिष्ठै ) : १०५२ ( = ) गोत्रेण ( गोत्राभ्यां ).

( १ ) संर. ४५०.

( २ ) बाल. ११५३ पृ. १८६ धनञ्जयौ ( धानञ्जयौ ) ; संर. ४५० ह्या धनञ्जयाः ( ह्यो धनञ्जय° ).

[1]विश्वामित्राः कश्यपान्तास्तेषां नान्यसमन्वयः ।
कश्यपाः स्युर्वसिष्ठान्तास्तेऽन्योन्यमविवाहिनः ॥
वसिष्ठैः कश्यपैर्नास्ति लौगाक्षीणां विवाहिता ।
वसिष्ठाः स्युरगस्त्यान्ता नोपयच्छन्ति ते मिथः ॥
विश्वामित्रैरङ्गिरोभिश्च वसिष्ठैरप्यशेषतः ।
संकृतीनां द्विवंश्यत्वान्नास्ति वैवाहिकी क्रिया ॥
तथैव जातूकर्ण्यानां वसिष्ठैरत्रिभिः सह ।
तण्ड्यादिवर्जं सर्वैर्वा संकृतीनां विवाहिता ॥
नान्योन्यमप्यगस्तीनां राजादिगुरुगोत्रतः ॥

( १ ) संर. ४५० .

—:o:—

# विश्वामित्रकाण्डम्

## बौधायनश्रौतसूत्रम्

### कुशिकाः

[1]विश्वामित्रान् व्याख्यास्यामः—

१ कुशिकाः २ पार्णजङ्घाः ३ वारक्याः ४ औदलिः ५ माणिः ६ बृहदग्निः ७ आलविः ८ आघट्टिः ९ आपद्यपाः १० अन्तकाः ११ काम-

( १ ) बौश्रौप्र. ; गोप्र. ६१ ; संप्र. ६४७ ; संम. ५८ ; प्रद. १२०-१२१ ; संकौ. १८९ ; बाल. ११५३ पृ. १८४ ; संर. ४४०.

२ संप्र. प्रद. बाल. पर्णजङ्घाः .

३ गोप्र. पारक्याः ; संम. वालुक्याः ; बाल. चारक्यः .

४ बौश्रौप्र. संम. औदरिः ; बाल. औदनिः .

५ बाल. मणिः .

७ गोप्र. आलर्विः ; संप्र. आजवयः ; संम. आलवः ; बाल. ( ० ) ; संर. आलषयः ; जेश्री. आलकिः .

८ गोप्र. आध्यद्दिः ; संप्र. संकौ. संर. आघद्दयः ; संम. आघद्दिः ; प्रद. रायद्दिः ; बाल. आश्हयः .

९ गोप्र. आपद्येय्य ; संप्र. आमस्तम्यां ; संम. आपघन्याः ; प्रद. आपघन्यः ; संकौ. आयद्भ्याः ; बाल. अपापथः ; संर. आपघप्याः .

१० गोप्र. संप्र. संम. प्रद. संकौ. बाल. संर. ( ० ) .

११ संम. कायन्दैनकाः .

न्तकाः १२ याप्कलयः १३ चिकिताः १४ लामकायनाः १५ शाल्ङ्कायनाः १६ शाङ्कायनाः १७ लौकाः १८ गौराः १९ सौगन्तयः २० यमदूताः २१ आनभिम्लानाः २२ तारकायणाः २३ चौडकाः २४ जावालयः २५ यज्ञवल्काः २६ वितण्डाः २७ भौवनयः २८ सौश्रुतयः २९ औपगहनयः ३० औदुम्बरिः ३१ भ्राष्ट्रकयः ३२ श्यामेयाः ३३ चैत्रेयाः ३४ शालावताः ३५ मयूराः ३६ सौमत्याः ३७ चित्रतन्तवः ३८ श्वेततन्तवः ३९ मनुतन्तवः ४० मान्तवः ४१ ये चान्ये अन्तुशब्दाः ४२ वाभ्रव्याः ४३ कापिलेयाः ४४ उत्सरयः इत्येते कुशिकाः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र-दैवरात-औदल-इति होता। उदलवद्-देवरातवद्-विश्वामित्रवद्-इत्यध्वर्युः ॥

१२ यौश्रौप्र. वाप्कयः ; गोप्र. वद्धकयः ; संप्र. संम. प्रद. संकौ. संर. वद्धकथाः ; याल. वद्धकयः .

– १३ संप्र. भिकिताः ; प्रद. चिन्तितः ; बाल. ( ० ) .

१४ गोप्र. लामकायनाः ; संम. संकौ. संर. कामकायनाः ; बाल. लामङ्कायनः .

१५ संप्र. शाल्कायनाः .

१६ गोप्र. साङ्कायनाः ; संप्र. स्याङ्कायनाः ; संकौ. काल्यायनाः ; बाल. स्याङ्कायनः ; संर. कास्यायनाः .

१७ गोप्र. रौकाः ; संम. ( ० ) ; प्रद. लोकः ; बाल. श्रयो लोकः .

१८ संप्र. गाराः ; संम. ( ० ) .

१९ संप्र. संकौ. बाल. संर. सौगन्तव्याः ; संम. ( ० ) ; प्रद. सौगतयः .

२० गोप्र. यमह्नताः .

२१ बौश्रौप्र. अनभिम्लाताः ; गोप्र. संप्र. प्रद. संकौ. बाल. संर. आनभिन्नाः ; संम. आनतिभ्राः .

२२ गोप्र. तारकायखाः ; प्रद. तारकायन' , वाल्कायनः .

२३ बौश्रौप्र. संकौ. बाल. संर. चौवलाः ; गोप्र. चोवलाः ; संप्र. श्रौवलाः ; संम. चार्वासाः ; प्रद. श्रोवलः .

२४ बाल. जावालः .

२५ गोप्र. संप्र. संम. प्रद. संकौ. बाल. संर. याज्ञवल्क्याः . 'यज्ञवल्काः' इत्यस्यानन्तरं जेबी. पदजालाः, जद्दचलोकाः, हालेयो याज्ञवल्क्या इति पठति ।

२६ बौश्रौप्र. संम. विदण्डाः ; गोप्र. विदढाः ; प्रद. वितन्दुः ; जेब्री. वतण्ड .

२७ गोप्र. संप्र. संकौ. संर. नुवलयः ; संम. भुवनयनाः ; प्रद. भोवनिः ; याल. भुवनः .

२८ यौश्रौप्र. सौवभ्रवयः ; गोप्र. सौश्रयः ; संम. सौश्नुतयः ; संकौ. संर. सौशूनयः ; याल. सौश्रुनः .

२९ बौश्रौप्र. गोप्र. संम. प्रद. औपदह्नयः ; बाल. औपदह्नः .

३० गोप्र. उदम्परिः ; संप्र. संकौ. उदम्परयः ; प्रद. उर्दरिः ; बाल. औदुम्बरः, दुर्दरः ; संर. उदपरयः .

३१ बौश्रौप्र. भारिष्टिकयः ; गोप्र. भाष्ठेयाः ; संप्र. भ्राष्ट्रक्याः ; संम. भ्राष्ट्रेयाः ; प्रद. माष्टकिः ; संकौ. माष्टयाः ; बाल. भ्राष्टः ; संर. भ्राष्टयाः .

३४ गोप्र. तालावताः ; संप्र. तालेचताः ; संम. साश्वताः ; प्रद. तालवतः ; संकौ. तालेचतराः ; बाल. तालेचनः ; संर. तालेचतराः .

३६ गोप्र. सौमित्याः ; संम. ( ० ) ; संर. सांमत्याः .

३७ गोप्र. श्वित्रन्तवयः ; संप्र. चित्रमतयः ; संम. चित्रभायनाः ; प्रद. चित्रन्तविः ; संकौ. संर. चित्रतवयाः ; बाल. चित्रन्तनयः .

३८ बौश्रौप्र. ( ० ) ; गोप्र. संप्र. स्येतन्तायनाः ; संम. श्येतभावनाः ; प्रद. श्वेत्यन्तायनः ; संकौ. स्याततायनाः ; बाल. श्वेतन्तायनः ; संर. सातनायनाः .

३९ गोप्र. अनूनतन्तवः ; संप्र. संकौ. संर. मनवः, तन्तवः ; संम. अनुतन्तवः ; प्रद. अनूतकिः ; बाल. ( ० ) .

४० गोप्र. ( ० ) ; बाल. मृन्तन्तुः ; संर. सान्तवः .

४१ बौश्रौप्र. ये चान्ये तन्तुशब्दाः ; गोप्र. ये चान्ये वशब्दाः ; संप्र. पक्षान्यत्वशब्दाः ; संम. ये चान्ये मतशब्दाः ; प्रद. ये चान्ये मनुशब्दान्ताः ; संकौ. यक्षाः न्यत्वशब्दाः ; बाल. अन्येऽप्यन्तुशब्दान्ताः ; संर. पक्षा नालशब्दाः .

४२ गोप्र. बाभ्रव्य .

४३ बौश्रौप्र. कलापाः ; गोप्र. संप्र. संकौ. कालायाः ; संम. कालोत्सराः ; प्रद. कालायनः ; बाल. कालायः ; संर. कालापाः .

४४ संर. उत्सरथः ; जेबी. उन्मरश्कयः .

इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरः । काश्यप–आसित–दैवल–इति । शाण्डिल–आसित–दैवल-इति वा । कश्यपवद्–असितवद्–देवलवद्–इति । शाण्डिलवद्–असितवद्–देवलवद्–इति वा ॥

## लौगाक्षयः

१ ओनष्टयः २ भागुरयः ३ शाकलयः ४ रावपालयः ५ सैकिः ६ राजवाहिः च ७ सैरन्ध्रि– ८ राजसेवकि– ९ सासुचि– १० कापुटि– ११ पिङ्गाक्षि– १२ लौगाक्षि– १३ शरद्वन्ताः इत्येते प्रातर्वसिष्ठाः नक्तं कश्यपाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । काश्यप–आवत्सार–वासिष्ठ–इति । वसिष्ठवद्–अवत्सारवत्– कश्यपवद्– ( ? कश्यपवद्–अवत्सारवद्–वसिष्ठवद्– ) इति ॥

## मानवश्रौतसूत्रम्

कश्यपान् व्याख्यास्यामः–

## निध्रुवाः

१ आम्रायण– २ श्यामायणाः ३ मैत्रायणाः ४ वृषगणाः ५ सोमभूताः ६ शौनव्याः ७ मौपकिः ८ इतिकायनाः ९ औदव्रजिः १० माठरः च ११ कैजालि अथ १२ लाक्ष्मणयः... १३ वैधकयः १४ श्लोकत्याः १५ यश्च मौमनि– १६ देवतयाः १७ गोमेयाद्र अथ १८ उत्थाखयंस्वाप १९ धूम्रायणाः २० सुचहुः च २१ अथो ऋण्यायणाः २२ कार्ष्यायणाः २३ स्वारोयणाः २४ डाकवायणाः २५ शतृभयः २६ मिर्योगादिः २७ शरकाः २८ काष्टयणाः २९ शाकादः ३० शालिहोत्राः ३१ चायमाजाननाथाः ३२ कुवमिमाः ३३ चक्रिदाः ३४ दाक्षपाणयः ३५ मारीचयः ३६ मापशराविः ३७ आग्निशर्मायणाः च ये ३८ हास्तिदासि ३९ यैलिमैलित– ४० आन्यकृति– ४१ कौपीतकि– ४२ सौमिश्री– ४३ कण्डाडाः ४४ वायनि– ४५ वारणि– ४६ वैवरी– ४७ शैवरयः ४८ जिघान– ४९ हास्तिकश्यप– ५० पैठीनस– ५१ कैकसेय– ५२ प्रतिपेय– ५३ सौश्यवसमोय– ५४ सर्यामा– ५५ वसमोप– ५६ दार्भः ५७ पाल्शायिनः ५८ फदुक– ५९ मैक्षि– इति ॥ ( प्रवरे तु नैध्रुव इति । )

## लौगाक्षयः

१ आनष्टयः २ भामरयः ३ श्येनपः ४ धाजापालयः ५ शैरी ६ सिरौदवाही च ७ शैरन्ध्रि ८ औपशवीयः ९ सौम्यप्लकोयुपी १० कालशि ११ लोकाक्ष–१२ स्व इदन्ध–इत्येतेषामविवाहः । तेषाम् ...... ॥ ( इत्यादि कात्यायनलौगाक्षिवत् । )

## शाण्डिलाः

१ शम्भुजाः २ जलिभ्रयोभौ ३ भूमपुरोध– ४ जलन्धर– ५ मुजः ६ मयूरः ७ पर्य– ८ गोष्टः ९ गर्दभीमुखः १० हिरण्यबाहुः ११ आदित्यवर्णः १२ मौदामिलुमः १३ शौदिल– १४ गोमिलः १५ मुद्गलः १६ मुकरण्डः च इत्येते १७ गुरुर्दव्यः

---

( १ ) गोप्र. ७१ ; संप्र. ६५२ ; प्रद. १२९ ; संकौ. १९२ ; संर. ४४८.

१ गोप्र. आनष्टायो ; संकौ. मनष्टयः ; संर. अनष्टयः .

२ गोप्र. प्युल्यः ; संप्र. मुुरयः ; प्रद. फाजलिः ; संकौ. संर. मिुरयः .

३ संप्र. ( ० ) ; प्रद. शाकवल्लिः ; संर. शाकुल्यः .

४ गोप्र. रावपालब ( यः ) ; संप्र. ( ० ) ; प्रद. रावलिः ; संकौ. संर. रावपाल्यः ; जेवी. भावपाल्यः .

५ प्रद. सौकिः .

६ संप्र. राजवल्यः ; संकौ. संर. राजवाप्यः .

७ गोप्र. सौरन्भि– ; संकौ. सौरन्भय ; संर. सौरन्ध्रयः .

८ गोप्र. राजशीशि– ; संप्र. ( ० ) ; प्रद. राजक्षेकिः ; संकौ. राजभाव ; संर. राजस्तवकयः .

९ प्रद. सासुनि ; संकौ. संर. सासुपयः .

१० गोप्र. कापुट– ; संकौ. संर. कापुल्य ( ? ) .

११ संप्र. ( ० ) .

१३ गोप्र. शरत्व ; जेवी. शारदाः .

( २ ) मानवश्रौतसूत्रेऽस्मिन् गोत्रप्रवरपरिशिष्टं डा. ऑन मैनराट्देन संपादितम् ' गोत्रप्रवरमञ्जरी ' पुस्तकाद्गृहीतम् ।

१८ उत्तरः १९ शान्तिकेतुः च इत्येते २० देवजातयः २१ वेदायन– २२ जङ्घरायणा– २३ शत्रूहायन– २४ औदमेघाः २५ तृणवस्त– २६ शण्डिलः २७ महाकाः २८ भल्लकः च २९ वायुकीः ३० तार्केलिः ३१ तेत्तृ ३२ चोद्रुदि ३३ सौप्मिनेयाः ॥ ( प्रवराः विकल्पश्च कात्यायन-लौगाक्षिवत् ) ।

## शुक्लयजुर्वेदपरिशिष्टम्

### निध्रुवाः

कश्यपान् व्याख्यास्यामः–

१ आम्रायणाः २ चङ्क्रायणाः ३ मावातणाः ४ वृपगणाः ५ सौतन्व ६ सोन्वा ७ मौपकिः ८ इतिकायनाः ९ औदव्रजिः १० माठरः च ११ कैजालीली अथ १२ लाक्ष्मणयः १३ शाला-थलेयाः १४ कैदिक्याः १५ शैलेश्वयः १६ सिघ्र-वाहुकायनः १७ सुपर्णात्वेतयः १८ वैकङ्कयः १९ गैकयः २० शौकयः २१ जश्च भौमानि २२ देवातवाः २३ गोमजालाः २४ थो वत्सायथ-यश्च ये २५ धूम्रायणाः २६ छन्नह्ययः २७ भ्रियो-गारि– २८ शेलगाः २९ काष्टायनाः ३० शाकादाः ३१ शालिहोत्रायणाः च ये ३२ गाद्यायनाः ३३ चान्द्रयमीमा ३४ चक्र ३५ दाक्षपाणयः ३६ मारीचयः ३७ मापशराविः ३८ आग्निशर्मा-यणाः च ये ३९ हास्तिदासि– ४० पैलग्मोलिन– ४१ आन्यकृतिः ४२ कौपीतकिः ४३ कौण्ड– ४४ वायुतिः ४५ आरणि– ४६ वौवरि– ४७ शैवयः ४८ शान्– ४९ हरित– ५० फैकसेय–५१ प्रतिपेय –५२ प्रतिश्रवसामो ५३ सहासाः ५४ वसव– ५५ सौमिथि– ५६ योयदमि– ५७ पालिशा-यनाः ५८ दर्लेरि– ५९ माहकि– ६० पार्पकि– ६१ पादपपि– ६२ पेटीनसि– ६३ फदुक– ६४ मश्चील ॥

(१) शुक्लयजुर्वेदपरिशिष्टेऽस्मिन् गोत्रप्रवरविभागः श्री. भीम मैनराजदेव संपादितात् ' गोत्रप्रवरमञ्जरी ' पुस्तकादुद्धृतः ।

### लौगाक्षयः

१ अनुष्टुभः २ भाकुरपः ३ शातयो ४ स्वाज-पालयो ५ शैरी ६ कुदवाही च ७ सौन्द्री ८ कुपजी-वया ९ सोऽस्तमि १० कायुसविक ११ लौगाक्षि १२ शरस्तम्ब इत्येतेषां त्र्यार्षेयः प्रवरो भवति । काश्यप–आवत्सार–शारस्तम्ब–इति होता...... इत्यादि ॥

### रेभाः

रैभ्यानां त्र्यार्षेयः ...... ( इत्यादि कात्यायन-लौगाक्षिवत् । ) ॥

### शाङ्खमित्राः

शाङ्खमित्राः शाकायाः रेफाया कुयला इति । काश्यप-आवत्सार-शाङ्खामित्र-इति इत्यादि ॥

### शण्डिलाः

१ शम्भुजाः २ जलुमिः चाध्वो ३ घोमपुरोधः ४ जलन्धरः ५ मुज– ६ मपूरः ७ पर्ये ८ मोष्णो ९ गर्दभीमुखः [लि] १० हिरण्यबाहुः ११ आदित्यवर्णः १२ मौधाख्युभौ १३ गोसिल– १४ गोमिलो १५ पुद्गलः १६ पृथक्खण्डः च इत्येते १७ गोकुरण्डय– १८ जुतरः १९ चातिकेतुः च इत्येते २० देवजातयः २१ वेदायन २२ जह्नप-लायन– २३ शत्रूद्दायन– २४ उदमेघः २५ तिल-मस्लि २६ शण्डिलः २७ मगलः २८ मगलः च २९ वासुकिः ३० तत्तलिः ३१ तैतिलिः ३२ वाद्बुद– ३३ शौप्मणोया इति ॥ ( प्रवराः विकल्पश्च कात्यायनलौगाक्षिवत् । )

## मत्स्यपुराणम्

मत्स्य उवाच–

मरीचेः कश्यपः पुत्रः कश्यपस्य महाकुले ।
गोत्रकारानृषीन् वक्ष्ये तेषां नामानि मे शृणु ॥

(१) मत्स्य. १९९।१ महाकुले ( तथा कुले ) ; गोत्र. ७२ ; संप्र. १७२ ऋषीन् ( अर्द ) .
[ गोत्रप्रवरनामसंग्रहः संप्र. १५० ; मद. १२४ ; संकौ. १९१ ; सैर. ७४१ इत्यत्र द्रष्टव्यः । ]

निध्रुवाः

१आर्मायणा वृपगणा मेपकिरितिकायनाः ।
उदव्रेजा मार्ठराश्च भोजावि-नयलक्षणाः ॥ (?)

२शालाथलेयाः कैरञ्जाः कन्यकाश्चासुरायणाः ।
मन्दाकिन्यां (?) वैभृगेयाः श्रुतयो भौवर्नायनाः ॥

३देवयाताः सोमयागा ह्यघरछायाभयाश्च ये ।
कार्चायनाः शत्रुहयो हृद्रोगाश्च गदायनाः ॥

४चक्रधर्मी महाचक्री दाक्षर्पाणय एव च ।

( १ ) मत्स्य. १९९।२ ; गोप्र. ७२ ; संप्र. ६७२ .
१ मत्स्य. आश्वायणि.
२ मत्स्य. ऋषिगणो ; गोप्र. संप्र. विषगणाः.
३ मत्स्य. मेषकीः ; गोप्र. मेषाविः ; संप्र. मेषः , मौषरयः ; प्रद. मौषरिः .
४ मत्स्य. इटकायनाः ; गोप्र. इटिकायनाः ; संप्र. किरिटि-कायनाः .
५ मत्स्य. उदमजाः . गोप्र. संप्र. ग्रन्थयोः इत आरभ्य " गदायनाः " इत्यन्तं नामानि नोपलभ्यन्ते ।
( २ ) मत्स्य. १९९।३ .
९ मत्स्य. शालाहलेयाः .
१० मत्स्य. कौरिष्टाः .
१४ मत्स्य. वै भृगयाः .
१५ मत्स्य. श्रोतनाः .
१६ मत्स्य. भौतपायनाः .
( ३ ) मत्स्य. १९९।४ .
१७ मत्स्य. देवयानाः .
१८ मत्स्य. गोमथानाः .
२० मत्स्य. कालायनाः .
२१ मत्स्य. शक्रयनाः .
२२ मत्स्य. बर्हियोग .
२३ जेवी. गम्यायनाः .
( ४ ) मत्स्य. १९९।५ ; गोप्र. ७२ ; संप्र. ६७२ .
२४ मत्स्य. प्रद. भरनन्दिः ; गोप्र. भरनन्दी ; संप्र. भर-नन्दिः , भरनन्दयः ; संकौ. भरनन्दयः ; संर. भरनन्दयः , भारनन्दयः .
२५ मत्स्य. संप्र. महाचक्रिः .
२६ मत्स्य. गोप्र. दाशुनायनः ; संप्र. दाशुनायनिः .

गोष्ठायना हार्करयो हास्तिदासिस्तथैव च ॥
१वात्स्यपाणिरन्यकृतो हास्तलायनिनस्तथा ।
प्रामायणः पैल्मेलिराश्ववातायनस्तथा ॥
२कौपीतकाः स्वावतका आग्निशर्मायणाश्च ये ।
मेषपाः कैकसेयाश्च तथा चैव सुबभ्रवः ॥
३पौलेयो ज्ञानराधाश्च आम्रेयाः सर्व एव तु ।
श्यामोदरा वैवशपास्तथा चैवोद्दलायनाः ॥

२७ मत्स्य. योधयानाः ; गोप्र. ग्रोष्टयनाः ; संप्र. क्रोष्टयनाः , मौष्ठायनाः ; प्रद. गोष्ठायनः ; संकौ. संर. गोष्ठायनाः .
२८ मत्स्य. कार्तिवयः ; गोप्र. संप्र. जेवी. ह्यकिरयः ; प्रद. कीरिः .
२९ मत्स्य. हस्तिदानाः ; गोप्र. हस्तिदः ; संप्र. हस्तिदाः ; प्रद. हास्तिदः .
( १ ) मत्स्य. १९९।६ ; गोप्र. ७२ ; संप्र. ६७२ .
३०,३१ मत्स्य. गोप्र. वात्स्यायनाः निकृतजाः ; संप्र. वात्स्यायनाल्पनिकृतो ; प्रद. वात्स्यायनिः .
३२ मत्स्य. गोप्र. ह्याश्वलायनिनः ; प्रद. हास्तलायनिः .
३३ मत्स्य. प्राम्रायणाः ; संप्र. ( ० ) .
३४ मत्स्य. पलमौलिः ; संप्र. ( ० ) ; प्रद. पैल्लेभिः .
३५ संप्र. ( ० ) .
( २ ) मत्स्य. १९९।७ ; गोप्र. ७२ ; संप्र. ६७२ .
३६ मत्स्य. कौवेरकाश्च ; संप्र. कौशीनकाः , कौशीनकाः ; प्रद. कौशीतकिः .
३७ मत्स्य. श्याकाराः ; संप्र. स्वापशान्ता , स्ववशान्ताः ; प्रद. स्वापः , स्वापशान्तः .
३८ मत्स्य. अग्निशर्मायणाः ; गोप्र. अग्निशर्मायणिः .
३९ संप्र. मौनिपरः .
४० मत्स्य. गोप्र. कैकरसपाः ; संप्र. कैकसयाः .
४१ मत्स्य. तु बभ्रवः ; गोप्र. सुचभ्रयः ; संप्र. सुगन्धयः ; प्रद. पशुः बभ्रुः ; संकौ. संर. बभ्रवः .
( ३ ) मत्स्य. १९९।८ ; गोप्र. ७२ ; संप्र. ६७२ .
४२ मत्स्य. प्राचेयः ; गोप्र. यौल्यः ; प्रद. पौलिः .
४३ मत्स्य. शानसंदोयाः ; गोप्र. ज्ञानराधः ; संप्र. ज्ञानरापाः , ज्ञानराधाः .
४४ मत्स्य. भाग्ना प्राशेय्य एव च ; गोप्र. अत्रायः सर्व एव तु ; संप्र. भ्रमयः सर्व एव तु ; प्रद. अम्रायः , सर्वः .
४५,४६ संप्र. श्यामायनिः , शिराश्रयः , श्यामाः , पक्षाः , नागशिरसः ; प्रद. श्यामः , नागशिः , पक्षः , नागशिराः ; संकौ. श्यामाश्रयाः , नागशिरसः ; संर. श्यामाः , पक्षाः , नागशिरसः .

२कार्ष्टायनाश्च मारीचा आजिहायनहास्तिकाः ।
वैकर्णेयाः काश्यपाश्च सासिसा हारितायनाः ॥

२मातङ्गिनः सोमभुवस्त्र्यार्षेयाः परिकीर्तिताः ।

३अवत्सारः कश्यपश्च निध्रुवश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

४७ गोप्र. बैल्वलायनः ; संप्र. पद्गोडलायनः , पद्गोडलायनाः ; प्रद. पक्षोडलायनः .

( १ ) मत्स्य. १९९।९ ; गोप्र. ७२ ; संप्र. ६७२.

४८ मत्स्य. काष्ठाहारिण- ; गोप्र. कष्टायना ; संप्र. कशायनाश्च- , काष्ठायनाः ; प्रद. काष्ठायनः ; संकौ. संर. वाष्टायना. .

४९ संप्र. मारीचाः , मारीचाः ; प्रद. मारीचः .

५० संप्र. आजिहाः, वाजिहायनाः ; संकौ. संर. वाजिवाहायनाः .

५१ संप्र. यानहास्तिकः .

५२ संप्र. विशीर्णेयाः .

५३ मत्स्य. काश्यपेयाः ; गोप्र. कश्यपाश्च.

( २ ) मत्स्य. १९९।१० ; गोप्र. ७२ ; संप्र. ६७२ .

५६ गोप्र. मतंस- ; संप्र. मतंस, मानङ्गाः ; प्रद. मनसः .

५७ मत्स्य. च भृगवः ; गोप्र. सावभृर्गवः ; संप्र. सावभृगवः, स्वासोभवः ; प्रद. भृगु .

( ३ ) मत्स्य. १९९।१०,११ पूर्वार्धे ( वत्सरः कश्यपश्चैव वसिष्ठश्च महातपाः । ) ; गोप्र. ७२ अवत्सारः कश्यपश्च ( वत्सरः कश्यपश्चैव ) ; संप्र. ६७२ .

निध्रुवगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा—

१ बाह्वकायनाः— संप्र. बह्वकायनाः ; प्रद. बाहुकायनः ; संर. बाहकायना .

२ भौमनयाः— संप्र. भौमनयः ; प्रद. (०) ; संर. भौमथाः.

३ शौकयाः— संप्र. शैरकाः ; प्रद. शौकय .

४ पाचामनयः— प्रद. पावामयः ; संकौ. संर. ( ० ) .

५ ज्ञानहस्तयः— संप्र. ज्ञातहस्तयः .

६ भूयोगराः— प्रद. भूगयौरः ; संकौ. संर. ( ० ) .

७ प्रतिधवाः— सर्वग्रन्थेषु समानम् ।

८ प्रातिथेयाः— संप्र. प्रीतिथेयाः .

९ कैजालयः— संर. कौजालय .

१० काण्डवायनाः— संप्र. काण्डवायनयः ; प्रद. संर. कुण्डवायनः .

रेभाः

१रैभाश्च सांख्यमित्राश्च त्र्यार्षेयाः परिकीर्तिताः ।
वत्सारः कश्यपश्चैव रैभश्चैव महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

लौगाक्षयः

२अतः परं प्रवक्ष्यामि द्व्यामुष्यायणगोत्रजान् ॥
३आनष्टयो भागुरयस्तानैयो राजवन्नयः ।
सैरैपी रोदवहिश्च सैरन्ध्री रोपसेर्वकिः ॥

११ कैरिह्याः— प्रद. कौरिह्य. ; संकौ. संर. ( ० ) .

१२ चाक्रायणाः— संर. शाक्रायणाः .

१३ कामेयाः— प्रद. कामेयाः .

१४ नकयः— सर्वग्रन्थेषु समानम् ।

१५ वेलणीभिक्षयाः— प्रद. वेलणिः , भिक्षिः ; संकौ. वेलणीवभिक्षयः ; संर. वैणीवाः , भिक्षवः .

१६ भूताशवः— प्रद. संकौ. संर. ( ० ) .

*एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।*

( १ ) गोप्र. ७३ रैभाश्च ( नैहास्य ) वत्सारः ( वत्सरः ) रैभश्चैव ( निध्रुवश्च ) ; संप्र. ६७२—६७३ रैभाश्च ( नैहास्य ) त्र्यार्षेयाः परि ( त्र्यार्ष्याः सर्वे प्र ) द्वितीयतृतीयार्धयोः ( अवत्सारः कश्यपो मुख्यो निध्रुवस्तु तृतीयकः । सगोत्रत्वादवैवाह्या ऋषयोऽमी परस्परम् ॥ ) . मत्स्यपुराणे नाय गणः सगृहीतः ।

( २ ) मत्स्य. १९९।११ ; गोप्र. ७३ ; संप्र. ६७३ .

( ३ ) मत्स्य. १९९।१२ ; गोप्र. ७३ ; संप्र. ६७३ .

[ गोत्रप्रवरनामसग्रहः संप्र. ६५३ ; प्रद. १२९ ; संकौ. १९३ ; संर. ४४८ इत्यत्र द्रष्टव्यः । ]

१ मत्स्य. अनसूयः ; गोप्र. अनुष्टेयाः ; संप्र. अनुष्टयः ; संकौ. अनष्टयः ; संर. अनंश्वयः .

२ मत्स्य. नाकुरयः ; गोप्र. भिकुरयाः ; संप्र. भागुरयः , भुकुरयः ; प्रद. भाकुरिः ; संकौ. संर. भिगुरयः .

३ मत्स्य. स्नानपो .

४ मत्स्य. राजवर्तपः ; संप्र. रसवत्तयः , राजवन्नयः ; प्रद. राजवत्तिः .

५ मत्स्य. शैशिः ; संप्र. सौरिः , सौरयः ; प्रद. सैरिपिः ; संकौ संर. सैरयः .

६ मत्स्य. रोदवहिः चैव ; संप्र. स्विरो वहोदाश्च ; प्रद. औदवाहिः ; संकौ. शिरोदवाहयः ; संर. स्विरोदवाहयः .

७ संकौ. सौरन्ध्रयः ; संर. सौरन्ध्रयः .

१साम्रांकिः सौंट्र–पिङ्गाक्षिः सजातम्बिस्तथैव च ॥
२दिवा वसिष्ठा इत्येते नक्तं ज्ञेयाश्च कश्यपाः ।
त्र्यार्षेयो हि मतश्चैषां सर्वेषां प्रवरः शुभः ॥
३कश्यपो वत्सरश्चैव वसिष्ठश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

शाण्डिलाः

४संपातिश्च वैलिश्चोभौ पिप्पलोऽथ जलन्धरः ॥
५सुजातपूरः पूर्वश्च कर्दमो गर्दभीमुखः ।
हिरण्यबाहुकैरातावुभौ काश्यपगोभिलौ ॥
१कुहलो वृकखण्डश्च सुकेतुश्च तथोत्तरः ।
उदमेघस्तृणबिन्दुर्महाकैरलयाश्च ये ॥
२शाण्डिला वैदानव–सौदानवौ देवजातयः ।
पैप्पलादिस्तौवरिर्वै ऋषयः परिकीर्तिताः ॥
३त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरः शुभः ॥
४असितो देवलश्चैव कश्यपश्च महातपाः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

---

८ मत्स्य. रौपसेत्रकिः ; गोप्र. रूपवत्सकिः ; संप्र. रोपवत्सकिः, औपपत्यकयः ; प्रद. औपकत्सकिः ; संकौ. औपपत्यकटाः ; संर. औपपत्यकयः .

( १ ) मत्स्य. १९९।१३ ; गोप्र. ७३ ; संप्र. ६७३ .

९ मत्स्य. यामुनिः ; संप्र. साम्नाक्षिः .

१० मत्स्य. कादु ; संप्र. साद ; प्रद. साधः .

१२ गोप्र. सचातम्बि ; संप्र. आजातम्बिः , सौतयाः ; प्रद. सजानपिः , सौशतः ; संकौ. संर. सौतपाः .

( २ ) मत्स्य. १९९।१३,१४ ( दिवावष्टाश्च इत्येते मनत्या ज्ञेयाश्च काश्यपाः । त्र्यार्षेयाश्च तथैवैषां सर्वेषां प्रवराः शुभाः ॥ ) ; गोप्र. ७३ उत्तरार्धे ( त्र्यार्षेयश्च तथैतेषां प्रवरः परिकीर्तितः । ) ; संप्र. ६७३ ज्ञेयाश्च ( ज्ञेयास्तु ) .

( ३ ) मत्स्य. १९९।१४,१५ कश्यपो वत्सरश्चैव ( वत्सरः कश्यपश्चैव ) ; गोप्र. ७३ ; संप्र. ६७३ पो वत्सर ( पोऽवत्सर ).

( ४ ) मत्स्य. १९९।१५ ; गोप्र. ७३ ; संप्र. ६७३.

[ गोत्रप्रवरनामसमहः संप्र. ६५० ; प्रद. २२५ ; संकौ. १९१ ; संर. ४७४ इत्यत्र द्रष्टव्यः । ] .

१ मत्स्य. संपातिः .

२ मत्स्य. नमः चोभौ ; प्रद. बलिः .

३ मत्स्य. पिप्पल्यः ; संप्र. पिप्पल्यः , पिप्पल्याः .

( ५ ) मत्स्य. १९९।१६ ; गोप्र. ७३ ; संप्र. ६७३.

५ मत्स्य. सुजातपूरः ; गोप्र. सुंजेतमानः ; संप्र. सुजातः , पूरः ; प्रद. सुजातिपूरः .

६ मत्स्य. पूर्वः ; संप्र. पूर्वः , पर्णमाः , पर्दभाः ; प्रद. पर्दभः ; संकौ. संर. पर्दभाः .

७ संप्र. गर्भमः .

८ संप्र. गर्भीमुखः , गर्दभाः मुखाः ( ? ) .

९ संप्र. हिरण्यबहु– .

११ गोप्र. संप्र. प्रद. कश्यप .

१२ गोप्र. शोभनौ ; संप्र. शोभिनौ.

( १ ) मत्स्य. १९९।१७ ; गोप्र. ७३ ; संप्र. ६७३ .

१३ मत्स्य. गोप्र. कुलहः ; संप्र. कुलहः , कुहलाः ; संकौ. कुहुलाः ; संर. कुहलासः .

१४ मत्स्य. वृषकण्डः ; गोप्र. वृषखण्डः ; संप्र. व्दपदण्डः , वृकस्तण्डाः ; प्रद. दृकसण्डः ; संकौ. संर. पकसण्डाः .

१५ मत्स्य. गोप्र. मृगकेतुः ; संप्र. मृगेतुः , सुकेतवः ; संकौ. संर. सुकेतवः .

१७,१८ मत्स्य. निदाघमसृणौ भत्स्याः ; गोप्र. तदपाठस्तमसवो ; संप्र. तट्टोससवत्सोग ; प्रद. तदपांसः , रथवगुः .

१९ मत्स्य. महान्तः केरलाः च ये ; संप्र. महाकैरलयाः , महाकौरलयाः ; प्रद. महाकोरलय , अयः ; संकौ. महोकौरलयः ; संर. महाकोरलयः .

( २ ) मत्स्य. १९९।१८ ; गोप्र. ७३ ऋषयः परिकीर्तिताः ( ऋषिर्वा परिकीर्तितः ) ; संप्र. ६७३ गोप्रवत् .

२० मत्स्य. शाण्डिल्यः ; गोप्र. संप्र. शण्डिलाः .

२१,२२ मत्स्य. दानवश्चैव तथा वै ; गोप्र. वैदानवकोरनवो ; संप्र. वैदीनवसौ दनवो .

२३ गोप्र. वेदपानपः ; संप्र. वै दयानवः ; प्रद. वेदपातिः .

२४ गोप्र. पिप्पलादिः ; संप्र. पैप्पलादिः , पैप्पलादयः .

२५ मत्स्य. सनवराः ; संप्र. तोमनर्पायः ; प्रद. तोवरिः .

( ३ ) मत्स्य. १९९।१९ ( त्र्यार्षेयाभिमताश्चैषां सर्वेषां प्रवराः शुभाः । ) ; गोप्र. ७३ ; संप्र. ६७३ ( ० ) .

( ४ ) मत्स्य. १९९।१९ ; गोप्र. ७४ ; संप्र. ६७३ ( ० ).

ऋषिप्रधानस्य तु कश्यपस्य
दाक्षायणीभिः सकलं प्रसूतम् ।
जगत्समग्रं मनुसिंहमुख्य
किं ते प्रवक्ष्याम्यहमुत्तरं नृप ॥

( १ ) एतेषु काण्डेषूक्तानां निध्रुवरेभशण्डिललौगाक्षिगणानां परस्परमविवाहः, सगोत्रत्वात् । सगोत्रत्वं च सर्वेषु प्रवरेषु ध्रियमाणतया सत्तया च कश्यपानुवृत्तेः, त्र्यार्षेयप्रवरेषु द्व्यार्षेयसंनिपाताच्च । लौगाक्षीणां तु द्विगोत्रत्वात् कश्यपैः सर्वैः वसिष्ठैश्चाविवाहः । इह शण्डिलाना चत्वारः प्रवरा विकल्पेन बौधायनोक्ताः । काश्यपावत्सारशाण्डिल्येति प्रथमः । काश्यपावत्सारदैवलेति द्वितीयः । काश्यपावत्सारासितेति तृतीयः । शाण्डिलासितदैवलेति चतुर्थः । तथा आपस्तम्बादिभिरुक्तौ विकल्पेन द्वौ प्रवरौ । दैवलासितेति प्रथमः । काश्यपदैवलासितेति द्वितीयः । तत्रैतेषु प्रवरेषु षट्सु पञ्च मन्त्रदृशः प्रतीयन्ते—कश्यपावत्सारशाण्डिलदेवलासिताः । ततः शण्डिलानां पञ्चार्षेयः प्रवरो वक्तव्यः काश्यपावत्सारशाण्डिल्यदैवलासित—इति, ‘यथर्षि मन्त्रकृतो वृणीते’ ‘यावन्तो वा मन्त्रदृशो वृणीते’ इति श्रुतिभ्याम्, तथा ‘यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि’ इत्युक्त्वा ‘यावन्तो वा मन्त्रकृतस्तावन्तो वृणीते’ इति कात्यायनवचनाच्च । तथापि पञ्चार्षेयप्रवरः केनापि सूत्रकारेण नोपदिष्टः । तस्मात् समानायामपि शण्डिलसमाख्यायां वंशभेदकल्पनया व्यवस्थिता एते विकल्पा द्रष्टव्याः । वंशैक्ये सति पञ्चार्षेयवरणं प्रसज्यत इत्युक्तम् । तस्माद्यथोक्त एवार्थः । ‘शुङ्गशैशिरिरित्येको द्विगोत्रः प्रोच्यते मुनिः । तद्वंशप्रभवाः प्रोक्ताः शुङ्गशैशिरयो यथा ॥ तथैकोऽहर्वसिष्ठत्वं नक्तं कश्यपतां गतः । मुनिर्द्विगोत्रस्तद्वंश्या लौगाक्ष्याद्या द्विगोत्रजाः ॥ द्वयोरपत्यसामान्याद्भवेद्वरणमेतयोः । विकल्पेनाहुराचार्या विकल्पो नान्यथा भवेत् ॥ प्रथमः प्रवरः प्रोक्तः पितुरुत्पादकस्य यः । प्रतिग्रहीतुः पाश्चात्यः शुङ्गशैशिरि( ? री )णा यथा ॥’ गोप्र. ७४

( २ ) अथ कश्यपाः । तेषां त्रयो गणाः—निध्रुवाः रेभाः शण्डिलाश्चेति । तत्र प्रथमगणे एकाशीतिर्गोत्रभेदाः, द्वितीयगणो निर्भेदः, तृतीयस्तु त्रिंशत्प्रकारः ।

पृ. ६३९

द्व्यामुष्यायणा लौगाक्ष्यादयस्त्रिप्रवराः, काश्यप–आवत्सार–वासिष्ठेति । चतुर्थप्रवरवतां शण्डिलानामन्यैः सहाविवाहे समानप्रवरत्वं न कारणं, किन्तु सगोत्रत्वमेव, तद्भिन्नानां सप्रवरत्वमपीति विवेकः ।

पृ. ६४०

लौगाक्षायणानां सर्वैः कश्यपैः सर्वैश्च वसिष्ठैः संकृतिभिश्च सह परस्परमविवाहः, सगोत्रत्वात् सप्रवरत्वाच्च । तदुक्तं स्मृत्यर्थसारे–‘वसिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः । सङ्कृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः ॥ स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वयः ॥’

लौगाक्षयस्त्रिप्रवराः काश्यपावत्सारवासिष्ठेति होता, वसिष्ठवदवत्सारवत्कश्यपवत् इत्यध्वर्युः, वासिष्ठावत्सार-

---

( १ ) मत्स्य. १९९।२० तु कश्य ( च कश्य ) दाक्षायणीभि ( दाक्षायणीभ्यः ) मुख्य ( पुण्यं ) नृप ( तु ); गोप्र. ७४ ; संप्र. ६७३ समग्र ( सहस्र ) मनुसिंह ( यदुसिंह ).

अस्मिन् शण्डिलगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा—

१ अजावंशा.— संप्र. जावंशाः ; प्रद. जावंशः ; संर. आजवंशाः .

२ गोशिला:— संप्र. गोशालाः ; प्रद. ( ० ) ; संर. गौशिलाः .

३ शत्रुगायना— संप्र. शत्रुतापनाः ; प्रद. शत्रुगायनः .

४ जीमा — प्रद. ( ० ) ; संर. जीनाः .

५ शिञ्जा.— संप्र. शञ्जाः ; प्रद. डाजः ; संर. शिञ्जाः .

६ मुञ्जमयूरा— संर. मुञ्जमयूराः .

७ मार्गीद्भर्भ — संप्र. संकौ. संर. ( ० ).

८ कुहनः— संप्र. संकौ. संर. ( ० ).

९ चटायना — संर. वटायनाः .

१० गृहल — संप्र. संकौ. संर. ( ० ).

११ मगला — प्रद. मङ्गल , संकौ. मङ्गलाः ; संर. ( ० ).

१२ मंहलाः— संप्र. प्रद. ( ० ) ; संर. मंहताः .

१३ भगला— प्रद संकौ. संर. ( ० ).

१४ धवला— संप्र. प्रद. ( ० ).

१५ भुजाजलय — प्रद भुजालः ; संकौ. भुजाजलय .

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

काश्यपेति होता, कश्यपवदवत्सारवद्वसिष्ठवदित्यध्वर्युः । एते अहर्वसिष्ठाः रात्रौ कश्यपाः । अहर्वसिष्ठा इत्यनेन विवाहातिरिक्तं वसिष्ठकार्ये वसिष्ठशब्देनोच्यते । एवं नक्तंकश्यपा इत्यपि । तेन दिनकर्मणि वसिष्ठगोत्रप्रयुक्तं प्रयाजादि कार्यं, रात्रिकर्मणि कश्यपगोत्रप्रयुक्तं तत्कार्यम् । तत्तद्द्विगोत्राणां यथा तत्तदेकगोत्रैः सहाविवाहस्तथा तत्तदेकगोत्राणामपि तत्तद्द्विगोत्रैः सहाविवाहः, यथा तत्तदेकगोत्रैः । तत्तद्द्विगोत्रविशेषाणामन्योन्यं, यथैकगोत्राणां, ( तथा ? ) द्विगोत्राणामपि वसिष्ठभरद्वाजत्वादिगोत्रस्य अविशेषात् । संप्र. ६५३, ६५५

## प्रवरसंग्रहकारः

कश्यपो रेभरैभौ च शाण्डिल्यो देवलोऽसितः ।
संकृतिः पूतिमापश्चावत्सारो नैध्रुवो दश ।
गोत्राणि कश्यपगणस्तत्रान्योन्यं न दोर्ग्रहः ॥
आनष्टयो भागुरयस्तानयो राजवारयः ।
सराश्वाहीनजाश्चैव वाह्वस्तदनन्तरम् ॥
तथा सासुचयः प्रोक्ताः सैरन्ध्यो राजसेवकाः ।
स्वापलिङ्गश्च लौगाक्षिस्तथैव शरदम्वकाः ॥
एते त्रयोदश प्रातर्वसिष्ठा निशि कश्यपाः ।
गायत्रीयोनिसंबन्धावङ्गीकृत्य प्रवर्तकाः ॥
अहर्वसिष्ठतां रात्रौ कश्यपत्वमपि स्वयम् ।
तेषां गोत्रद्वयं मुक्त्वा वासिष्ठं काश्यपं तथा ।
सर्वत्रापि विवाह्याः स्युरिति वेदविदो विदुः ॥
काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च ।
संकृतिपूतिमापाभ्यां विवाहो न परस्परम् ॥

## स्मृत्यर्थसारः

त्र्यैयश्च कश्यपगणा निध्रुवा रेभशण्डिलाः ।
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ॥
वासिष्ठैः काश्यपैर्नित्यं लौगाक्षीणामनन्वयः ।
अहर्वसिष्ठतोक्तिस्तु प्रयाजाप्त्यादिगोचरा ॥

---

( १ ) प्रपा. ३१० ( काश्यपश्च तथा वत्सरश्च नैध्रुवसंकृती । पूतिमापश्च रैभ्यश्च तथा शाण्डिल्यशाण्डिलौ । देवलश्चासितश्चैते दश काश्यपसंज्ञिताः ॥ ) ; विपा. ७०५ कश्यपगण ( काश्यपगण ) ; ज्योनि. १३४ रेभरैभौ ( रेभरौभौ ) संकृतिः ( सांकृतिः ) श्चावत्सारो ( श्च वत्सरो ) ; बाल. १।५३ पृ. १७८ श्चावत्सारो ( श्च वत्सरो ) गणस्त ( गणास्त ) ; संग. १८१ रैभौ ( रेभौ ) कश्यपगण ( काश्यपगण ).

( २ ) प्रपा. ३११ ( अनष्टयो जानिकुला ततयो राजचारयः । स्वैरंहिराजवाचश्च सैरन्ध्रीराजसेवकाः । रन्याशुचिः रन्यापुलिङ्गाक्षिलोकाक्षिशरदम्बकाः ॥ ) ; विपा. ७०६ ( आनष्टयोराकुल्यः रा- ( स्वा )नयो राजवारयः । सराश्वाहा( ही )नजाश्चैव वाह्वस्तदनन्तरम् ॥ तथा शामुनयः प्रोक्ताः सौरन्ध्या राजसेवकाः । शाश्विपुगमाश्च ( शापुलिङ्गाश्च ) लोगाक्षिस्तथैव शरदम्बकाः ॥ ) ; ज्योनि. १३५ (अनाप्तयोराकुल्यः स्वानयो राजचारयः । सरश्वावाहिनाश्चैव वाहवस्तदनन्तरम् ॥ तथाचाशुनयः प्रोक्ताः सैरन्ध्यो राजसेवकाः । स्वापलिङ्गश्च लौगाक्षिस्तथैव शरदम्वकाः ॥ ) ; बाल. १।५३ पृ. १७९ ( आनष्टयोराकुल्यः स्वानयो राजवारयः । सराश्वाहीनजाश्चैव विवाहस्तदनन्तरम् ॥ तथा साश्नुचयः प्रोक्ताः सैरन्ध्रो राजसेवकाः । शापुलिङ्गाश्च लौगाक्षिस्तथैव शरदंवकाः ॥ ) ; संग. १८१ ( आनष्टपो राकुल्यः स्वानपो राजवारपः । सराश्वाहीनजाश्चैव वाहवस्तदनन्तरम् ॥ तथाशा मुनयः प्रोक्ताः सौरन्ध्यो राजसेवकाः । सापुंलिङ्गाश्च लौगाक्षिस्तथैव शरदम्वकाः ॥ ).

( १ ) प्रपा. ३११ पू. ; विपा. ७०६ ; ज्योनि. १३५ ; बाल. १।५३ पृ. १७९ ; संग. १८१ .

( २ ) प्रपा. ३१० ; विपा. ७०६—७०७ वासिष्ठं (वसिष्ठं) ; ज्योनि. १३५ गोत्रद्वयं ( गोत्रत्रयं ) ; बाल. १।५३ पृ. १७९ ; संग. १८१ वासिष्ठं ( वसिष्ठं ).

( ३ ) प्रपा. ३१० ; चम. १०६ (=) वासिष्ठस्य ( वसिष्ठस्य ) ; संम. ६१ (=) चमवत् ; प्रद. १२९ संकृतिपूतिमापाभ्यां ( संकृतेः पूतिमापस्य ) ; विपा. ७०६ विवाहो न परस्परम् ( नान्योन्यं पाणिपीडनम् ) ; ज्योनि. १३४ ; प्रका. ३४९ ; बाल. १।५३ पृ. १७८ ; संग. १८१ विपावत्, उत्त. ; क्रम. १०५० (=).

( ४ ) स्मृसार. १५ ; संम. ६२ ; क्रम. १०४७ (=) रेभ ( रैभ ).

( ५ ) स्मृसार. १५ वासिष्ठैः ( वसिष्ठैः ) ; संप्र. ६५१ वासिष्ठैः काश्यपैः ( वसिष्ठैः कश्यपैः ) पू. ; चम. १०५ (=) आप्त्यादि ( आग्न्यादि ) ; संम. ६२ आप्त्यादि ( आपादि ) ; प्रद. १३०–१३१ उत्तरार्धे ( अहर्वासिष्ठगोत्रेषु वामरुप्यादयास्तथा ? । ) ; बाल. १।५३ पृ. १८६ संप्रवत्, पू. ; क्रम. १०५१ (=) संमवत्.

## वसिष्ठकाण्डम्

### बौधायनश्रौतसूत्रम्

**केवलवसिष्ठाः**

वसिष्ठान् एकार्षेयान् व्याख्यास्यामः--

१ चैकलिः २ वाराटकिः ३ सावलाः ४ गौरिश्रवसः ५ आश्वलायनाः ६ कपिष्ठलाः ७ शौचिवृक्षाः ८ व्याघ्रपादः ९ वाह्यकायनिः १० वाटव्याः ११ गायनिः १२ नयाप्ताः १३ जातूकर्ण्याः १४ औडुलोमि १५ कौमोजिः १६ कौलायन्ताः १७ सुन्दरहरिताः १८ काण्ठेविद्धिः १९ सौमनसायनाः २० आलम्भायनाः २१ लौमायन्याः २२ स्वस्त्याः २३ कार्पिताः २४ पार्णकायनाः २५ चौडकायनाः २६ पार्णवल्काः २७ देवनाः २८ गौरव्याः २९ श्राविष्ठायनाः ३० वाहकथयः ३१ आविक्षितयः ३२ अश्वयाजयाः ३३ पूति-

( १ ) बौश्रौप्र. ; गोप्र. ७५ ; संप्र. ६५०-६५१ ; संम. ५९ ; प्रद. १२५ ; संकौ. १९१ ; संर. ४४४-४४५.

१ गोप्र. संम. वैतलकिः ; संप्र. वैतालकवराः ; प्रद. वैतालकि ; संकौ. संर. वैतालकवयः .

२ गोप्र. वाठरकि ; संप्र. ? ; संम. वाटारकिः ; प्रद. हरकिः ; संकौ संर. रकयः .

३ गोप्र. साश्वलाः ; संप्र. रसाखलाः ; संम. संर. सारवलाः ; प्रद. सावखाः ; संकौ. सारवलाः .

४ बौश्रौप्र. संकौ. संर. गौरिश्रवसाः .

६ बौश्रौप्र. कापिष्ठा- ; गोप्र. वपिस्वान् ; संम. कपिष्ठाः .

७ गोप्र. संकौ. सौविवृक्षाः ; संप्र. साविवृक्षाः ; संम. शौविवृक्षाः ; प्रद. सौचिवृक्ष .

८ बौश्रौप्र. वैयाघ्रपद्याः ; संप्र. प्रद. संकौ. संर. व्याघ्रपादाः .

९ संम. वाह्यकायनिः ; प्रद. काम्यकायनिः ; संकौ. वाह्यकायनयः ; संर. वाह्यकायनः .

१० गोप्र. संप्र. संकौ. संर. ( ० ) ; संम. वाटव्याः ; प्रद. वाटक्य .

११ बौश्रौप्र. ( ० ) ; संप्र. संकौ. गायनयः ; संर. गायनयाः .

१२ बौश्रौप्र. संम. ( ० ) ; संप्र. संकौ. संर. नयाप्त्या .

१३ बौश्रौप्र. जातूकर्णाः .

१४ गोप्र. औभ्रोमे ; संप्र. औभ्रामयः ; संकौ. रौभ्रामयाः ; संर. रौभ्रामयाः .

१५ गोप्र. कोमोजि ; संप्र. संकौ, सर. कौमोजय .

१६ गोप्र. कोल्लायनाः .

१७ गोप्र सुन्दहरिताः ; संप्र. सुन्दरहारीताः ; संम. सुन्दहरित ; प्रद. सुदहरित ; संकौ. सुवाहारीताः ; संर. सुवाहाः हारीता .

१८ गोप्र. संम. काण्डेवृद्धिः ; संप्र. काण्टेवृद्धयः ; प्रद. काण्डवृद्धि ; संकौ. संर. काण्टवृद्धय .

१९ बौश्रौप्र. सौयवसायना ; गोप्र. सोपवत्साजः ; संप्र. सोपवत्सायनाः ; संम. सौवत्सायनाः ; प्रद. सौपवसायनः ; संकौ. संर. सौपवत्सायनाः .

२० प्रद. ( ० ) .

२१ बौश्रौप्र. संप्र. संकौ. लोमायन्याः ; गोप्र. लोमन्याः ; संम. लोमन्य ; प्रद. लोमायनः ; संर. लोमायनाः .

२२ संम. स्वस्ताः ; प्रद. स्वल्य .

२३ गोप्र. संप्र. संम. संकौ. संर. कार्पिताः ; प्रद. कारीपितः .

२४ संकौ. संर. पार्ष्णिकायनाः .

२५ गोप्र. संप्र. संम. प्रद. संकौ. संर. ( ० ).

२६ गोप्र. संम. जेबी. पार्णवल्कः .

२७ संप्र. देवशाः , देवनी- ; संम. देवल्काः .

२८ संम. नव्याः .

२९ गोप्र. संम. विश्रावनाः ; संप्र. प्रद. संकौ. संर. विश्राधनाः .

३० संम. वाहुकयः .

३१ गोप्र. आवकितय ; संप्र. संकौ. संर. अवकितयः ; संम. आविक्षियः ; प्रद. अविक्षिनिः .

३२ गोप्र. संर. वस्यगाजयाः ; संप्र. संकौ. वस्ययाजयाः ; संम. वश्यजायः ; प्रद. स्वशाजिः .

३३ संम. ( ० ) .

माषाः ३४ सप्तवैलाः ३५ वासिष्ठाः इत्येते वसिष्ठाः। तेषामेकार्षेयः प्रवरो भवति। वासिष्ठ-इति होता। वसिष्ठवद्-इत्यध्वर्युः॥

## कुण्डिनाः

१ कुण्डिनाः २ लोहायनाः ३ गुग्गुलिः ४ औपस्वस्थाः ५ वैकर्णयः ६ आविश्वाः ७ बदरः ८ अश्मरथाः ९ वाहवः १० क्रौङ्कोल्याः ११ सामङ्गलिनः १२ कापटवः १३ पैठकाः १४ नवग्रामाः १५ हिरण्याक्षायणाः १६ पैप्पलादयः १७ भाक्षिः १८ माध्यन्दिनाः १९ शान्तिः २० सौपक्षिः इत्येते कुण्डिनाः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ-मैत्रावरुण-कौण्डिन्य-इति होता। कुण्डिनवद्-मित्रावरुणवद्-वसिष्ठवद्-इत्यध्वर्युः॥

## उपमन्यवः

१ उपमन्यवः २ औपगवाः ३ माण्डलेखयः ४ कापिञ्जलाः ५ जालागताः ६ तपोलोकाः ७ त्रैवर्णाः चैव ८ पार्णागारिः ९ सुराक्षराः १० शैलालयः ११ महाकर्णायनाः १२ यालशिखाः

---

३४ गोप्र. संप्र. प्रद. सप्तवेलाः ; संम. पूर्णवेलाः ; संकौ. समवेलाः ; संर. सर्मवेलाः .

३५ गोप्र. संकौ. संर. वसिष्ठाः ; संम. विशिखाः .

( १ ) बौश्रौप्र. ; गोप्र. ७५ ; संप्र. ६५१ ; संम. ५९ ; प्रद. १२६ ; संकौ. १९१–१९२ ; संर. ४४५ .

२ संप्र. लौहायनाः ; संम. होलायनाः ; संकौ. संर. लोहितायनाः .

३ संप्र. गुगुलयः ; संम. गौणाः ; संकौ. संर. गुग्गुलयः .

४ बौश्रौप्र. औपवस्तिः ; गोप्र. प्रद. अश्वत्थः ; संप्र. संकौ. संर. अश्वत्थाः ; संम. आश्वत्थाः .

५ संप्र. संकौ. संर. नैकर्णयः ; संम. वैकर्णेयः ; प्रद. तैकर्णि .

६ बौश्रौप्र. ( ० ) ; गोप्र. आविश्व- ; संप्र. औपस्वस्थाः ; संम. आविल्वाः ; प्रद. निन्दुः ; संकौ. संर. औपवस्थाः ; जेबी. आविखाः

७ बौश्रौप्र. संप्र. संकौ. संर. ( ० ) ; संम. बदराः ; प्रद. अविरवलः .

८ गोप्र. प्रद. अश्मरथ्यः ; संप्र. अश्वरथाः ; संम. आश्मरथ्याः ; संकौ. संर. आश्मरथाः .

९ गोप्र. संम. वाहवः ; संकौ. संर. बाहवाः .

१० बौश्रौप्र. क्रौञ्चोक्याः ; गोप्र. कौङ्कोल्य– ; संम. कौङ्कोक्याः ; प्रद. कौकोल्यः ; संकौ. संर. कौङ्कोल्याः .

११ गोप्र. संम. साङ्गलिनः ; संप्र. संकौ. संर. साङ्गतिनः ; प्रद. सामङ्गलिः .

१३ गोप्र. संकौ. पेठकाः ; संप्र. पैटकानयः ; संम. प्रद. संर. पेटकाः .

१४ संप्र. ग्रामाः .

१५ गोप्र. हिरण्याक्षयाः ; संम. हिरण्याक्षाः .

१६ संम. पैप्याः , पैप्पलादयः .

१७ गोप्र. भाज्यकिः ; संप्र. संकौ. संर. सौगयोक्षिनाः ; संम. ( ० ) ; प्रद. सौगिः , अक्षिनः .

१८ गोप्र. माध्यन्दिनिः .

१९,२० बौश्रौप्र. शान्तिः , सौपतिथिः ; गोप्र. शान्तिः , सौपक्षीः ; संप्र. सोमपक्षयः ; संम. शान्तिसौपचिः ; प्रद. सौपक्षिः , स्वातिः ; संकौ. संर. सोमपक्षयः .

( १ ) बौश्रौप्र. ; गोप्र. ७५–७६ ; संप्र. ६५१ ; संम. ५९ ; प्रद. १२६ ; संकौ. १९२ ; संर. ४४५ .

२ संप्र. संर. औरलयाः ; प्रद. उपगवः ; संकौ. औदलयः .

३ गोप्र. मण्डलेखयः .

४ गोप्र. कपिञ्जलाः .

५ गोप्र. प्रद. जालागतः ; संप्र. जलागताः ; संम. जलागृहाः .

६ गोप्र. जयो लोकाः ; प्रद. जयोलोकः .

७ संम. त्रैज्ञे( व )णाः .

८ गोप्र. पार्स्तागिरि ; संप्र. पार्शगिरयः ; संम. खवेपास्ता-गुरिः ; प्रद. पाषागिरिः ; संकौ. पार्णगिरयः ; संर. पार्णागिरयः .

९ गोप्र. संप्र. साराक्षराः ; संम. स्वराक्षराः ; प्रद. सुराक्षः , सारासः ; संकौ. संर. सादाक्षराः .

१० गोप्र. मोलायः ; संप्र. मौलालयाः ; संम. मौलय , चैलहलिनः ; प्रद. लाहविः ; संकौ. संर. मौल्यालयः .

११ संप्र. संकौ. संर. महाकण्वायनाः .

१२ बौश्रौप्र. प्रद. वालशिखाः .

१३ औद्वाहमानयः १४ बालायनाः १५ भागवित्तायनाः १६ कुण्डोदरायणाः १७ लाक्ष्मणेयाः १८ कावाधयः १९ वार्काश्वकयः २० आनूक्षराभाः २१ आलम्बायनाः २२ कपिकेशाः इत्येते उपमन्यवः । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठ-ऐन्द्रप्रमद-आभरद्वसव्य-इति होता । आभरद्वसुवद्-इन्द्रप्रमदवद्-वसिष्ठवद्-इत्यध्वर्युः ॥

पराशराः

पराशराः-- १ काण्डूशयाः २ वाजयः ३ वाजन्तयः ४ वैमतायनाः । ५ गोपालिः एषां पञ्चम एते कृष्णाः पराशराः ॥

६ प्रारोहयो ७ वैकलयः ८ श्लाक्षयः ९ कौमुदादयः । १० हार्यश्विरेषां पञ्चम एते गौराः पराशराः ॥

११ खल्यायनयो १२ गोपयः १३ काल्कयः १४ श्यातयातयः । १५ वारणिरेषां पञ्चम एते-ऽरुणाः पराशराः ॥

१६ भालुक्याः १७ वादरिश्चैव १८ काह्वायनाः १९ कौकुशालयः । २० क्षैमतिरेषां पञ्चम एते नीलाः पराशराः ॥

२१ कृष्णाजिनाः २२ कपिमुखाः २३ श्यामा-

---

१३ गोप्र. संम. औद्राहमानयः ; संप्र. औद्वाह्यानयः ; प्रद. औद्वाह्यानिः ; संकौ औद्वह्नायनाः ; संर. औद्वह्नायनाः .

१४ गोप्र. संर. बलायनाः ; संप्र. आश्वलायनाः ; संम. संकौ. चलायनाः ; प्रद. वलायनः .

१५ बौश्रौप्र. भागुरित्थायनाः ; गोप्र. भागुरित्थायनाः ; संम. भागुरिः रथायनाः .

१६ संप्र. क्रुण्डोदरायणाः .

१७ गोप्र. लक्ष्मणेयाः ; संम. ( ० ) .

१८ बौश्रौप्र. काचान्तयः ; गोप्र. कावान्धयः ; संप्र. बाभ्रकयः ; संकौ. वाभ्रकयः ; संर. बाभ्रकेय' .

१९ गोप्र. वार्काश्वयः ; संप्र. संकौ. संर. वार्कयः ; संम. वार्कोश्वय' ; प्रद. वाकाश्वि .

२० बौश्रौप्र. आनूक्षरायणाः ; गोप्र. आसक्षरयः ; संप्र. संकौ. संर. ( ० ) ; संम. मानुक्षरवः ; प्रद. अनुक्षरिः .

२१ बौश्रौप्र. आल्बनाः ; गोप्र. आलवयः ; संप्र. संकौ. संर. आलवचा' ; संम. आललवाः ; प्रद. आल्वायनः .

२२ गोप्र. कपिकेशः .

( १ ) बौश्रौप्र. ; गोप्र. ७६ ; संप्र. ६५२ ; संम. ५९ ; प्रद. १२७ ; संको. १९२ ; संर. ४४६.

१ गोप्र. कुडुशयः ; संप्र. काण्डूशय ; संम. कण्डुशयः ; प्रद. कण्डूः शि- ; संकौ. काण्डशयाः .

३ गोप्र. संप्र. संम. संकौ. संर. वाजिमन्तयः ; प्रद. वाजिमतिः .

४ गोप्र. वैमतायन- ; संप्र. संर. भैमतायनाः ; प्रद. भैमतायनः ; संकौ. भौमतायना' .

५ गोप्र. मावाश्वि' ; संप्र. प्रद. संकौ. संर. गोवाश्यः ; संम. गोवाश्विः .

६ बौश्रौप्र. प्रारोहरः ; गोप्र. परोकर्थः ; संप्र. संकौ. संर. प्रागेह्या' ; संम. प्ररोह्यः .

७ गोप्र. वैकरयः .

८ गोप्र. खाराय' ; संप्र. लाक्षयः ; संकौ. संर. श्लक्षयः .

९ गोप्र. प्राम्रुदात्तय' ; संप्र. संकौ. संर. कौकुचादयः ; प्रद. कौमुदिः .

१० गोप्र. हर्यश्वः ; संप्र. संकौ. संर. हार्यश्वयः .

११ गोप्र. तुल्योयनयः ; संप्र. कल्यायनयः ; संम. खल्वायनाः ; संकौ. काल्याः पनयः ; संर. कल्पाः पनयः .

१२ संम. गोपायनाः .

१३ गोप्र. संप्र. संम. संकौ. संर. ( ० ) ; प्रद. काक्ति' .

१४ गोप्र. संर. स्यानयः ; संप्र. श्यातयः ; संम. श्यानयः ; प्रद. स्यानिः ; संकौ. स्वातयः .

१५ संप्र. संकौ. वारुणय' ; संम. आरुणिः वारुणिः ; संर. आरुणय' .

१६ संर. आलुक्या' .

१७ गोप्र. संम. वाजरिः ; संप्र. वाजरय' ; प्रद. वादरिः ; संकौ. वाजरयः ; संर. वाजरयाः .

१८ गोप्र. संप्र. काह्वयनाः ; संम. चकाह्वयनाः ; संकौ. काच्छूयनाः ; संर. काछ्रायनाः .

१९ गोप्र. संप्र. कौकुल्यः ; संम. कौहकलयः ; प्रद. कौह्वुशारिः ; संको. संर. ( ० ) .

२० बौश्रौप्र. क्षैमिरि' ; गोप्र. क्षौमतिः ; संप्र. क्षौमतयः ; संम. कमति' ; प्रद. कैमतिः ; संकौ. कैमतयः ; संर. कौमतयः .

२१ संप्र. कृष्णासिताः ; प्रद. कृष्णाजनिः .

२२ बौश्रौप्र. कापिशुभाः ; गोप्र. कपिमुखाः ; संप्र. संकौ. संर. कापिमुखाः ; प्रद. कपिमुख' .

२३ गोप्र. स्वास्यायनयः ; संप्र. स्वास्वायनय' ; संम. स्वस्वायनयः ; संकौ. संर. स्वाप्यायनयः .

यनयः २४ श्वेतयूपयः । २५ पौष्करसादिरेषां पञ्चम एते श्वेताः पराशराः ॥

२६ वाश्यायनयो २७ वार्ष्णेयाः २८ श्यामेयाः २९ श्रौतिमिः सह । ३० चौलिरेषां पञ्चम एते श्यामाः पराशराः ॥

कृष्णाः गौराः अरुणाः नीलाः श्वेताः श्यामाः ये पराशरास्तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठ-शाक्त्य-पाराशर्य-इति होता । पराशरवत्-शक्तिवद्-वसिष्ठवद्-इत्यध्वर्युः ॥

वसिष्ठानां सर्वेषामविवाहः ॥

## आपस्तम्बश्रौतसूत्रम्

### केवलवासिष्ठाः

ऐकार्षेया वसिष्ठा अन्यत्र पराशरेभ्यः ॥

एकार्षेयाः सर्वे वसिष्ठा भवन्ति । अन्यत्र उपमन्युकुण्डिनपराशरेभ्य इति हिरण्यकेशिमतिः । उपमन्यून् कुण्डिनान् पराशरान् वर्जयित्वेत्यर्थः । कपर्दि.

वासिष्ठ-इति होता । वसिष्ठवद्-इत्यध्वर्युः । त्र्यार्षेयमु हैके । वासिष्ठ-ऐन्द्रप्रमद-आभरद्वसव्य-इति । आभरद्वसुवद्-इन्द्रप्रमदवद्-वसिष्ठवद्-इति ॥

प्रवृणीत इति शेषः । किमर्थमुपमन्युप्रभृतीनां प्रतिषेधः क्रियते ? त्र्यार्षेयवत् सिद्धमनेकार्षेयत्वम् । सत्यं सिद्धं, नियमार्थं एतेभ्योऽन्येषां तद्वैकल्पिकमिति । तेन जातुकर्णिकानां वैकल्पिकत्र्यार्षेयसंबन्धः, न तु सर्वेषामेव । त्र्यार्षेयमु हैक इत्ययं प्रवर उक्तो नोपमन्यूनाम् (१) । पराशराणां कुण्डिनानां च प्रवरान्तरमेव । वासिष्ठैन्द्रप्रमदाभरद्वसव्येति आभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदिति । कपर्दि.

### पराशराः

अथ पराशराणां त्र्यार्षेयः । वासिष्ठ-शाक्त्य-पाराशर्य-इति । पराशरवद्-शक्तिवद्-वसिष्ठवद्-इति ॥

### कुण्डिनाः

अथ कुण्डिनानां त्र्यार्षेयः । वासिष्ठ-मैत्रावरुण-कौण्डिन्य-इति । कुण्डिनवद्-मित्रावरुणवद्-वसिष्ठवद्-इति ॥

## सत्याषाढश्रौतसूत्रम्

### केवलवासिष्ठाः

ऐकार्षेया वासिष्ठा अन्यत्रोपमन्युपराशरकुण्डिनेभ्यः । वासिष्ठ-इति होता । वसिष्ठवद्-इत्यध्वर्युः ॥

### उपमन्यवः

अथोपमन्यूनां त्र्यार्षेयः । वासिष्ठ-ऐन्द्रप्रमद-आभरद्वसो( सव्य )- इति । आभरद्वसुवद्-इन्द्रप्रमदवद्-वसिष्ठवद्-इति ॥

### पराशराः

अथ पराशराणां त्र्यार्षेयः । वासिष्ठ-शाक्त्य-पाराशर्य-इति । पराशरवत्-शक्तिवद्-वसिष्ठवद्-इति ॥

### कुण्डिनाः

अथ कुण्डिनानां त्र्यार्षेयः । वासिष्ठ-मैत्रावरुण-कौण्डिन्य-इति । कुण्डिनवद्-मित्रावरुणवद्-वसिष्ठवद्-इति ॥

अथ वसिष्ठगोत्रप्रवरकाण्डं विधत्ते- एकार्षेया इति । उत्तरत्र विधानादेव उपमन्युप्रभृतीनां त्र्यार्षेयत्वे सिद्धे 'अन्यत्रोपमन्युपराशरकुण्डिनेभ्यः' इति वचनं, केरा

२४ संर. श्वेतयूपयः .

२५ संप्र. पौष्करसादयः ; संम. पौष्कलसाविः ; संकौ. पौष्करसादय .

२६ गोप्र. संप्र. संम. गार्ग्यायनयः ; प्रद. गार्गायनिः ; संकौ. गार्ग्यादयः ; संर. गर्ग्यादयः .

२७ गोप्र. वार्ष्णेयः ; संप्र. स्वार्णेयाः ; संम. वार्णयः ; संकौ. संर. वार्णेया .

२८ संकौ. संर. ( ० ) .

२९ गोप्र. श्रेनुहिः ; संप्र. श्रोतहयः ; संम. श्रौनुहिः ; प्रद. श्रौतहिः ; संकौ. संर. श्रौनुहयः ; जेबी. श्रौनिहिः .

३० गोप्र. संम. चौलिः ; संप्र. चौल्याः ; संकौ. संर. चौल्यः .

(१) आपश्री. २४।१०।७-८ ; गोप्र. ७७.

(१) सश्री. २१।३।१४ ; संर. ४२४.

वसिष्ठभेदा न संकृत्यादयः, तेषा द्व्यामुष्यायणत्वादिति प्रदर्शनार्थम् ।

वासिष्ठमैत्रावरुणकौण्डिन्येत्यस्मिन्प्रवरे मित्रावरुण-संज्ञकौ कौचिद्दृषी मन्त्रदृशौ द्रष्टव्यौ, न प्रसिद्धौ देवता-विशेषौ, 'न देवैर्न मनुष्यैरार्षेयं वृणीते' इति निषेधात् । तयोश्च मित्रावरुणयोः संहतयोरेव ऋषित्वमत्र द्रष्टव्य, न प्रत्येकम्, 'न चतुरो वृणीते' इति चतुर्णां वरणप्रति-षेधात् । मत्स्यपुराणे मित्रावरुणयोर्बदर्याश्रमे तपस्यतोः आगतामुर्वशीं दृष्टवतोः शुक्रं स्कन्नं कश्चित्तोयपूर्णे कलशे गृहीतं; ततो वसिष्ठो जातः, वसिष्ठाच्च कुण्डिनो जात इति दृष्टत्वात्तयोः संहतयोरेवार्षित्वं पितृत्वं चेति द्रष्टव्यम् । एषा वसिष्ठानां परस्परमविवाहः, सगोत्रत्वात्स-प्रवरत्वाच्च । प्रच.

## आश्वलायनश्रौतसूत्रम्

### केवलवसिष्ठाः

वासिष्ठेति वसिष्ठानां येऽन्य उपमन्यु-पराशर--कुण्डिनेभ्यः ॥

उपमन्यु-पराशर-कुण्डिनेभ्योऽन्ये वसिष्ठास्तेषामयं प्रवरः । उपमन्युपराशरकुण्डिनातिरिक्ता वासिष्ठा एका-र्षेयाः परस्परमविवाह्याः । गानाष्ट.

### उपमन्यव.

उपमन्यूनां वासिष्ठ-आभरद्वसु(१सव्य)-इन्द्र-(१ ऐन्द्र) प्रमद-इति ॥

### पराशराः

पराशराणां वासिष्ठ-शाक्त्य-पाराशर्य-इति ॥

### कुण्डिनाः

कुण्डिनानां वासिष्ठ- मैत्रावरुण- कौण्डिन्य-इति ॥

एतेषा सर्वेषामविवाहः । गानाष्ट.

## कात्यायन-लौगाक्षि-श्रौतसूत्रम्

### केवलवसिष्ठाः

वासिष्ठान् व्याख्यास्यामः—

(१) आश्वौ २।६।१५ ऐन्द्रप्रमद (इन्द्रप्रमद); गोप्र. ७९.

(२) गोप्र. ७७; संप्र. ६५१; प्रद. १२५; संकौ. १९१; संर. ४४४-४४५.

वासिष्ठानां एकार्षेयः प्रवरः, येऽन्यत्रोपमन्युपरा-शरकुण्डिनजातूकर्ण्येभ्यः ॥

१ व्याघ्रपदाः २ औपवनाः ३ औपगवाः ४ वैगलाः ५ सात्वलायनाः ६ कपिष्ठलाः ७ औडु-लोमाः ८ आश्वलायनाः ९ वटीकराः १० गोपा-यनाः ११ वौधयः च १२ वाकव्याः अथ १३ वाह्य-कृत् १४ कीलीव्ययः १५ पलाशयः १६ हरितयः १७ वाकुरयः च ये १८ आयःस्थूणाः १९ शुचि-वृक्षाः २० लौमायन्याः २१ ब्रह्मपुरेयाः २२ स्वस्ति-कराः २३ काण्ठेविद्धि- २४ माण्डुलि- २५ गौधिलि - २६ यौविलि- २७ मालोहधि- २८ सौमन-

२ संप्र. (०); प्रद. औपवत .

४ गोप्र. वेगला ; संप्र. संकौ. संर. वैण्वाः ; प्रद. नैगलः .

५ संप्र. शावनायनाः .

७ गोप्र. औद्दलोमा ; संप्र. औडिलोमाः ; प्रद. औडुलोमिः .

११ गोप्र. वौवयः ; संप्र. यौवयः ; प्रद. भौतपिः ; संकौ. संर. भोवय .

१२ गोप्र. वाकव्य ; प्रद. नाकव्यः .

१३ गोप्र. सत्वबाह्यकृत ; संप्र. बाह्यकृतः ; प्रद. सत्व, वाह्यकृत् .

१४ संप्र. कालोहवयः ; प्रद. कालोहविः .

१५ संप्र. संकौ. पालिसया ; संर. यालिसयाः .

१७ संप्र. वाप्रथय. ; प्रद काकुरिः ; संकौ. संर. वाप्रथया; .

१८ गोप्र. आयस्थूणा ; संप्र. आपस्थूणेयाः ; प्रद. आपः स्थूण ; संकौ. आपस्थूणाः .

१९ गोप्र. प्रद. शितिवृक्षाः .

२० गोप्र. लौमाय-या .

२२ संप्र. संकौ. संर. स्वस्तिकाः .

२३ गोप्र. काण्डेविद्धि .

२४ संप्र. संकौ संर. पाण्डुलय .

२५ प्रद. गौधलिः ; संकौ. संर. गोधिलय ; जैबी. गुधिलि- .

२६ गोप्र. कौविवि- ; संप्र. चौविल्यः ; प्रद. कौविधिः .

२७ प्रद. मालोहदिः ; संकौ. संर. मालोहवयः .

सायन– २९ ब्रह्मवलि– ३० चौलि– ३१ गौरिश्रवस– ३२ याज्ञवल्क्याः ३३ पार्णवल्क्याः इत्येतेषामविवाहः । तेषामेकार्षेयः प्रवरो भवति । वासिष्ठ–इति । वसिष्ठवत् ( इति ) ॥

उपमन्यवः

१ शैलालयः २ महाकार्णि– ३ कौरव्याः ४ त्रैवर्णाः ५ कपिञ्जलाः ६ दावालसेवि– ७ भागवित्तायनाः च ये ८ कौमारायणाः ९ भागहयः १० कौरुकृत् – ११ भागुरायणाः १२ शार्कर्याः १३ शकावेयाः अथो १४ औलपयः च ये १५ सांख्यायनाः १६ तदुहितः अथो १७ मापशरावयः १८ दासकायनाः १९ वाह्यवाक्यः २० गौरथाः २१ कौण्डोदरयः २२ आलम्बायनाः २३ प्रालम्बायनाः २४ औपमन्यवाः २५ सायायन्यः २६ दशेरकाः २७ पादकायनाः २८ औद्वाहमानयः २९ औपलेखयः ३० ब्राह्मवलयः ३१ पार्णगारिः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठ– * आभरद्वसव्य–ऐन्द्रप्रमद–इति । इन्द्रप्रमदवद्–आभरद्वसुवद्–वसिष्ठवद्–इति ॥

कुण्डिनाः

१ औपस्वस्थाः २ स्वस्थयः च ३ लोहाः ४ लोहयः च ये ५ माध्यन्दिनाः ६ अक्षितयः ७ पैप्पलादि– ८ विधङ्कपि– ९ त्रैशृङ्गाः १० गौग्गुलयः ११ मित्रावरुणाः १२ कुण्डिनाः इत्येतेषाम–

---

२९ गोप्र. ब्रह्मवलि- ; संर. ब्रह्मवलयाः .

३० गोप्र. चौ ; संप्र. थौलय' ; संर. थौलयः .

३१ गोप्र. पौरिश्रवस- ; संप्र. संकौ. संर. पौहिश्रवसः ; प्रद. पौरश्रवः .

( १ ) गोप्र. ७८ ; संप्र. ६५१ ; प्रद. १२६ ; संकौ. १९२ ; संर. ४४५.

१ संप्र. शौलालवः ; संर. शौलालयः .

४ गोप्र. वत्रैवणाः .

६ प्रद. दावालः सिरिः .

७ गोप्र. भागवित्तायनाः चै .

८ गोप्र. कोमारायणाः ; संप्र. संकौ. संर. मारायणाः ; प्रद. सारायण' , मारायणः .

९ गोप्र. लागहयः .

१२ संप्र. संकौ. संर. शाक्कर्याः ; प्रद. शावार्यः .

१३ गोप्र. सावेषाः ( पाः ) ; संप्र. कशानेयाः ; प्रद. कशानयः ; संकौ. कशानयाः ; संर. कशायनाः .

१४ गोप्र. औलपयः चाथ ; प्रद. औलपिः आपः .

१५ गोप्र. संख्यायनाः .

१६ प्रद. दुहितः .

१७ गोप्र. मापसरावयः ; संप्र. मायशवयाः ; प्रद. मायशाविः ; संकौ. संर. माशरावव्याः .

१८ गोप्र. दानकायनाः ; संप्र. संकौ. संर. दाकायनाः ; प्रद. दासकायन' .

* गोप्र. आभरद्वसु–इन्द्रप्रमद–इति ।

१९ प्रद. वाह्यवाक्यः .

२० गोप्र. गौरथः ; संप्र. प्रद. संकौ. संर. गोरथाः .

२१ गोप्र. चौण्टावरयः ; संप्र. संर. काण्डोदरयः ; प्रद. शौण्डोदरिः ; संकौ. काडोदरयः .

२२ गोप्र. आलवायनाः .

२३ गोप्र. प्रालवायनाः .

२५ गोप्र. नयायन्यः ; संप्र. शाव्यायनाः ; प्रद. साह्यापत्यः, शांप्यायनः ; संकौ. संर. व्याघ्रायणाः .

२६ गोप्र. दसेरकाः .

२८ गोप्र. औद्वाहमतयः .

३० संप्र. प्रद. संर. ब्रह्मवलयः ; संकौ. महावलयः .

( १ ) गोप्र. ७८ ; संप्र. ६५१ ; प्रद. १२६ ; संकौ. १९२ ; संर. ४४५ .

२ गोप्र. ( च० ) ; प्रद. स्वस्तिः ; संकौ. सौस्थयः ; संर. सौस्थ्यः .

३ गोप्र. स्वलोकाः ; संप्र. आकोहालादयः ; प्रद. स्वलोक्यः .

४ गोप्र. ( ये० ) .

५ गोप्र. ( माध्यन्दिनाः ० ) .

६ गोप्र. अक्षतयः ; संप्र. संकौ. संर. ( ० ) .

८ संप्र. विधकपय' ; प्रद. विश्वङ्कशः .

९ प्रद. त्रैशृङ्कः ; संर. नशृङ्गाः .

१० गोप्र. मौद्गलगुलाय- ; प्रद. मौद्गलः गुलायः .

११ संप्र. संकौ. संर. मित्रावरुणाः .

विवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ-मैत्रावरुण-कौण्डिन्य-इति। कुण्डिनवद्-मित्रावरुणवद्-वसिष्ठवद्-इति॥

जातूकर्ण्याः

१ जातूकर्ण्याः २ बौधयः ३ पाटलयः इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ-आत्रि-जातूकर्ण्य-इति। जातूकर्ण्यवद्-अत्रिवद्-वसिष्ठवद्-इति॥

पराशराः

१ कौण्डूशयः २ वाहनयः ३ जैमयः ४ भैमतायनाः। ५ गोपालिरेषां पञ्चम एतेऽरुणाः पराशराः॥

६ आविष्ठायनाः ७ वार्ष्णेयाः ८ श्यामेयाः ९ श्लोकयाश्च ये। १० इषीकहस्त एतेषां पञ्चम एते कृष्णाः पराशराः॥

११ प्रारोहयो १२ वैकलयः १३ प्लाक्षयः १४ कौमुदादयः। १५ हार्यश्विरेषां पञ्चम एते नीलाः * पराशराः॥

१६ पाठिकाः १७ बादरिश्चैव १८ स्तम्भिन्याः १९ कौरुवादयः। २० क्षौमिरेषां पञ्चम एते श्वेताः पराशराः॥

२१ कृष्णाजिनाः २२ कपिश्रोथा २३ आकेयः २४ शानशाहयः। २५ पौष्करसादिरेषां पञ्चम एते गौराः* पराशराः॥

२६ काल्यायनिः २७ वैरिणेयाः २८ त्रैर्णेयो २९ वैल्वयूपयः। ३० तरणिरेषां पञ्चम एते धूम्राः पराशराः॥

त्रिंशत् पराशराः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ-शाक्त्य-पाराशर्य-इति। वसिष्ठवत्-शक्तिवत्-पराशरवत् (? पराशरवत्-शक्तिवद्-वसिष्ठवद्-इति)॥

इति लौगाक्षिपाठानुसारेण वसिष्ठगोत्रकाण्डमुदाहृतम्ध्वर्युक्रमविशेषज्ञापनार्थम्। गोप्र. ७९

## मानवश्रौतसूत्रम्

### केवलवसिष्ठाः

[1]वसिष्ठान् व्याख्यास्यामः। वसिष्ठानामेकार्षेयः

---

* गौराः इति मञ्जरीपाठः।

(१) गोप्र. ७८ ; संप्र. ६५२ ; प्रद. १२७.

२ गोप्र. बोधायनाः ; संप्र. अर्थबोधाः.

३ संप्र. पाटलाः.

(२) गोप्र. ७८-७९ ; संप्र. ६५२ ; प्रद. १२७ ; संकौ. २९२ ; संर. ४४६.

२ गोप्र. वाहरमः ; संप्र. वादनयः.

३ गोप्र. जैमयः ; संप्र. जेमयः ; संकौ. संर. जैनयाः.

४ गोप्र. भैमयनाः.

५ गोप्र. गोपाणिः.

७ गोप्र. वार्ष्णि-.

९ गोप्र. (ये०) ; प्रद. श्लोकमय-.

१० संप्र. उषीरुहस्ताः ; संकौ. संर. इषीरुहस्ता'.

१२ गोप्र. वाहयः ; प्रद वाहिः.

१३ गोप्र. प्राय-, प्रद. प्राक्षिः.

१४ गोप्र. कोर्कवादय' ; प्रद. कौकसादिः.

१५ गोप्र. हयश्रीः ; संप्र. हर्यश्वयः, प्रद. हर्यश्विः ; संकौ. संर. हर्यश्वय'.

* नीलाः इति मञ्जरीपाठः।

१६ संप्र. पटिकाः माण्डिवयः ; प्रद. पटिकाः माण्डिकाः ; संकौ. संर. पटिकाः माण्डिकाः.

१७ गोप्र. बादरः ; प्रद. बादरिः.

१८ गोप्र. स्तौम्भिन्याः ; प्रद. स्तभिन्नः.

२२ संप्र. कपिनोनाः ; प्रद. कपिस्तोन' ; संकौ. संर. कपिश्रोनाः.

२३ प्रद. अकम्पन्यः.

२४ गोप्र. शानया' ; संप्र. श्यानयातव' ; प्रद. तपः, श्यानयानिः ; संकौ. शानयानयाः ; संर. शानयातयाः.

२५ प्रद. पौकरसादिः.

२६ गोप्र. व्याप्यायनि ; संप्र. खाल्यायनाः ; प्रद. व्याप्यायनिः, खाल्यायन' ; संकौ. स्वाल्यायनाः ; संर. साल्यायनाः.

२७ संप्र. वार्षायणाः ; संकौ. वार्ष्यायनाः ; संर. वार्ष्यायनाः.

२८ गोप्र. प्रद. (०).

२९ संप्र. निल्वयूपयः ; संकौ. संर. निलयूपयः.

(१) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः प्रा. जैन शौर्यदाशयेन संपादितात् 'गोत्रप्रवरमञ्जरी' पुस्तकाद् संगृहीतः।

प्रवरो भवति, येऽन्य उपमन्युपराशरेभ्यः कुण्डिनेभ्यश्च ॥

१ वैयाघ्रपद्याः...... २ औपगवाः ३ वैमयः ४ सासामलायनाः ५ कपिष्ठलाः ६ औडुलोम– ७ आश्वलायन– ८ वैटारकाः ९ गोगेयनाः १० वौधायनाः ११ चूडाकव्यायनाः १२ अथ याह्यकी १३ जातूकर्ण्याः १४ हरितयः १५ अथो याङ्करयः श्चये १६ आयःस्थूणाः १७ शुचिवृक्षाः १८ लौमायन्य– १९ ब्रह्मवादि– २० ब्रह्मकृदेय– २१ ब्रह्मविदेय– २२ ब्रह्मविलेयः २३ स्वस्तिकरः २४ काण्ठेविद्धि– २५ मन्दि– २६ चौलि– २७ चौलिका– २८ कालोहली २९ सौमनसायनिः ३० आवणि ३१ चौलि ३२ गौरिश्रवस– ३३ आर्जुनाक्षाः इति ॥

उपमन्यवः

१ शैलालयः २ महाकर्णाः ३ कौरव्याः ४ अथ आत्रेपर्णाः ५ कपिञ्जलाः ६ दावलशीखी ७ भागवित्तायनाः च ये ८ डोकव्यायनाः ९ ओम् पालखी १० वावाल्कलयः ११ शान्ततपाः १२ कार्दुरिः १३ आकरमावेयाः अथो १४ लवयः च ये १५ योर्ध अथ १६ सछाग्यायन १७ आलव्यायनाः १८ कौमारायणाः १९ कौलोदकिः २० औद्राहमानयः २१ पा एयाकरि २२ लाक्ष्मणेया. २३ गाण्डूलवोद्धकि २४ सांख्यायनाः २५ औपमन्यवाः २६ कौण्डोदरि– २७ कैदर्भि– २८ नाहकि– २९ माहवि– ३० धौमायत– ३१ मौजायन– ३२ शशकायनाः इति ॥

कुण्डिनाः

१ औपस्वस्तिः २ स्वस्तयः च– ३ आलोहायनाः च ये ४ माध्यन्दिनाः ५ आक्षितयः ६ पैप्पलादि– ७ दियहृर्षी ८ कुण्डिनः ९ मित्रावरुणाः इति ॥

पराशराः

१ काण्डुशयः २ वाहतपाम् ३ जाञयः ४ मैमनायनाः । ५ गोपालिः एषां पञ्चम एते नीलाः पराशराः ॥

६ आविष्टायनाः ७ चार्ष्णायनाः ८ श्यामेय– ९ लोकायः च । १० वैक्षिः एषां पञ्चम एते गौराः पराशराः ॥

११ प्याहाहपः १२ वैद्युकयः १३ प्लाक्षयः १४ कौमुदादयः । १५ हर्श्रिः एषां पञ्चम एते रक्ताः पराशराः ॥ *

१६ कार्ष्णाजिनाः १७ कपिश्रोधाः १८ काकेयः १९ शातातपः । २० पुष्करसादिः एषां पञ्चम एते कृष्णाः पराशराः ॥

२१ खाखाह्लायनाः २२ वार्षायणि २३ पूर्णयः २४ विल्वयूपयः । २५ नार्णिः एषां पञ्चम एते शुक्लाः पराशराः ॥

एते त्रिंशत् पराशराः ॥ ( इत्यादि कात्यायन– लौगाक्षिवत् । )

## शुक्लयजुर्वेदपरिशिष्टम्

### केवलवसिष्ठाः

वैसिष्ठान् व्याख्यास्यामः । वसिष्ठानामेकार्षेयः प्रवरो भवति येऽन्य उपमन्युपराशरेभ्यः कुण्डिनेभ्यश्च ॥

१ वैयाघ्रपद्याः २ औपगवाः ३ कुलायनाः ४ कपिष्ठलाः ५ औडुलोम– ६ आश्वलायनाः ७ श्वटारक– ८ गोलायताः ९ वोधकाः १० चढाकयोथ– ११ वाक्यकि– १२ जातूकर्ण्याः १३ हरितयः १४ अथायागपयश्च १५ आयःस्थूणाः १६ शुचिवृक्षाः १७ लौमायन्याः १८ ब्रह्म– १९ ब्रह्मविलेय– २० ब्रह्मकिलेय– २१ स्वस्तिकर – २२ काण्ठेविद्धि– २३ मण्टि २४ यौलि २५ मौलि २६ रामणि २७ कौलि २८ चौलि २९ काटोहति ३० सौमनसायन– ३१ गौरिश्रवस – ३२ आर्जुनाक्षि–इति ॥

---

* शुक्लयजुर्वेदपरिशिष्टानुसारेण अत्रत्या धूम्र–पराशराः परिभ्रष्टाः ।

( १ ) शुक्लयजुर्वेदपरिशिष्टोक्तो गोत्रप्रवरनिर्णयः मा. श्रीन मैसूरादन संपादित 'गोत्रप्रवरमञ्जरी' पुस्तकात् संगृहीतः ।

### उपमन्यवः

१ शैलालयः २ महाकर्णाः ३ कौरव्यायणाः... ४ आलम्बायनाः ५ कौमारायणाः ६ कौलकिः ७ औद्वाहमानि- ८ पाराबाङ्कारि ९ गौल्योव- १० दक्षिम् ११ शाह्वायनाः १२ स्काम्भायनाः १३ औपमन्यवाः १४ कौण्डोदरि- १५ वैदर्भि- १६ तलुवि- १७ वाहुविद्ध- १८ धातुवि- १९ धौमवत- २० मौञ्जकायनाः २१ दासकायनाः इति ॥

### कुण्डिनाः

१ रौयस्वस्ति- २ स्वस्तयः च ३ ये आलोहाः ४ लोभायनाः ५ माध्यन्दिनाः ६ क्षितयः ७ पैप्पलादि- ८ जहुपि ९ कौण्डिन्याः १० मैत्रावरुणाः ११ गोगडुलयाः इति ॥

### लोहिन्याः

लोहिन्यानां फाल्गुन्याः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ-लोहिन्य-फाल्गुन्य-इति होता-इत्यादि ॥

### जातूकर्ण्याः

१ अधार्तबोध- २ जातूकर्ण्य- ३ पाटवाः इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ- आर्तबोध-पाटव-इति होता। पटवद्-रुबोधवद्-वसिष्ठवद्-इत्यध्वर्युः ॥

### पराशराः

१ कदूहयः २ वाचाहतम् ३ याञ्जयः ४ धैमैमपानयनाः। ५ गोपालिः एषां पञ्चम एते क्षामाः पराशराः ॥

६ श्राविष्ठायनाः ७ कृष्णेयाः ८ शामेयाः ९ शोकयंश्च ये। १० अक्षीणिः एषां पञ्चमः एते गौराः पराशरा. ॥

११ पलेहयाः १२ वैकयः १३ द्राञ्जकयः १४ कौकयादयो १५ ऽर्हयोश्रिः एषां पञ्चमः एते औष्णाः पराशराः ॥

१६ दधिकः. १७ वादरिः चैव १८ स्कम्भिण्यः १९ कोकुवादयाः २० ऐपीकिहल पञ्चम एते धूम्राः पराशराः। एते विंशतपराशराः ॥ (इत्यादि कात्यायनलौगाक्षिवत्।)

## मत्स्यपुराणम्

मत्स्य उवाच—

१वसिष्ठवंशजान् विप्रान् निबोध वदतो मम।
एकार्षेयस्तु प्रवरो वसिष्ठानां प्रकीर्तितः ॥
२वसिष्ठा एव वासिष्ठा अविवाह्या वसिष्ठजैः।

### केवलवसिष्ठाः

व्याघ्रपादा औपगवा वैक्लवाः सात्वलोयनाः ॥
३कपिष्ठला औडुलोमा अथलोम्न घटीकराः।
गोपायना बोधयश्च दाकव्या अथ वाह्यकाः ॥

---

(१) मत्स्य. २००।१ वसिष्ठानां (वासिष्ठानां); गोप्र. ७९; संप्र. ६७३ निबोध वदतो (सर्वान्निगदतो) एकार्षेयस्तु प्रवरो (भृगुश्चैकार्षप्रवरो).

(२) मत्स्य. २००।२; गोप्र. ७९ अविवाह्या (अवैवाह्या); संप्र. ६७३-६७४ गोत्रवत्.

[ गोत्रप्रवरनामसंग्रहः संप्र. ६५१; प्रद. १२६; संको. १९१; संर. ४४५ इत्यत्र द्रष्टव्य। ]

३ मत्स्य. वैक्लवा; गोप्र. संप्र. वैण्याः - प्रद. वैल्वयः.

४ मत्स्य. शाद्वलायनाः; गोप्र. संप्र. सात्वलायनाः.

(३) मत्स्य. २००।३; गोप्र. ७९; संप्र. ६७४.

६ मत्स्य. गोप्र. संको. संर. औदुलोमाः; संप्र. औडुलोमाः, औदुलोमाः.

७ मत्स्य. अलम्बाः च; गोप्र. अथलाः; संप्र. अथलाः, अथदाः, आथलायनाः; प्रद. आथलाः; संको. संर. आश्वायनाः.

८ मत्स्य. गठाः कठाः; गोप्र. घटाः कराः; संप्र. घटाकराः, घटाकरा; प्रद. घटाकराः.

९ मत्स्य. गोपायना.

१० मत्स्य. बोधपा; गोप्र. बोधयः; संप्र. बोधयः.

११ गोप्र. संप्र. प्रद. संको. दाकव्याः; संर. दाकव्याः.

१२ मत्स्य. अथ वाह्यकाः; संप्र. अथ वाह्यकाः.

१वालिशेयाः[13] प्रालिशेयास्ततो[14] वाग्रथेयश्च[15] ये ।
आयःस्थूणाः[16] शुचिवृक्षास्तथा[17] ब्रह्मपुरेयकाः[18] ॥
२लोमायनाः[19] स्वस्तिकराः[20] चाण्डोलि[21]गौडिलि[22]स्तथा ।
व्यालोहपिः[23] सौमनसाः[24] कौण्ठेविद्धि[25]स्तथैव च ॥
३चौलि[26] वौलि[27] ब्रह्मबलो[28] गौरिश्रवस[29] एव च ।
पार्णवो[30] याज्ञवल्क्यश्च[31] एकार्षेया महर्षयः ॥
१वसिष्ठ एषां प्रवरो ह्यवैवाह्याः परस्परम् ॥

उपमन्यवः

२शैलालेयो[1] महाकर्णः[2] कौरव्यः[3] क्रोधिनस्तथा[4] ॥
३कपिञ्जलो[5] वालशिखो[6] भार्गवित्तायनाश्च[7] ये ।
कौमारायणो भार्गहिः[9] कौरकृष्णा[10]गुरायणाः[11] ॥

---

( १ ) मत्स्य. २००।४ ; गोप्र. ७९ ; संप्र. ६७४ .

१३ मत्स्य. वालिशयाः ; गोप्र. तालीनयः ; संप्र. वालिसयाः, मालिसन्याः ; प्रद. तालिसन्य', मालिसिः ; संकौ. भलिसयाः ; संर. भ्रलिसथा' .

१४ गोप्र. पालिनयाः ; संप्र. पालिसयाः .

१५ मत्स्य. संप्र. वाग्रन्थयः ; गोप्र. वायथयः ; प्रद. वाग्रधिः .

१६ मत्स्य. आयस्थूणाः ; गोप्र. संप्र. आयस्थूणाः .

१७ मत्स्य. शीतवृत्ताः ; गोप्र. सितिवृक्षाः ; संप्र. शितिवृक्षाः .

१८ मत्स्य. माह्मपुरेयकाः ; संप्र. ब्रह्मपुरायकाः .

( २ ) मत्स्य. २००।५ ; गोप्र. ८० ; संप्र. ६७४ .

१९ गोप्र. लोमायनः ; संप्र. लोमायनाः .

२० गोप्र. संप्र. स्वस्तिकाः च .

२१ मत्स्य. शाण्डिलिः ; संप्र. चाण्डालिः, चण्डाघौः ; संकौ. संर. चण्डालयः .

२२ मत्स्य. गौडिनिः ; गोप्र. गोण्डलिः ; प्रद. गौडलिः ; संर. गौरिलय' .

२३ मत्स्य. वाडोहलि' ; गोप्र. व्यलोहपिः ; संप्र. व्यालोहकिः, व्यालोहपयः ; प्रद. व्यालोहविः ; संकौ. व्यालोहयाः ; संर. व्याल्लोहयः .

२४ मत्स्य. च सुमनाः ; गोप्र. तु सुनाश्च' ; संप्र. स्थामुनाः च , स्यामुनाश्चाः ; प्रद. सुनाश्वः ; संकौ. संर. स्यामुनाश्चाः .

२५ मत्स्य. च उपावृद्धिः ; गोप्र. सुयाविः विद्धिः एव च ; संप्र. सुपाचिः धिद्धिः एव च, सुपाचयः विदयः ; प्रद. सुपाचिः, दिदिः, सुपत्निः ; संकौ. सुपार्चया' ; संर. सुपाचयः .

( ३ ) मत्स्य. २००।६ ; गोप्र. ८० ; संप्र. ६७४ .

२६ गोप्र. धौलिः ; संप्र. मिथोनालिः, मिथोवल्याः ; प्रद. मिथोवन्धिः ; संकौ. मिथोवल्यः ; संर. मिथोवल्या' .

२७ गोप्र. वालिः ; संप्र. संकौ. संर. मौलयः ; प्रद. वोलिः .

२८ मत्स्य. गोप्र. ब्रह्मवलः ; संप्र. ब्रह्मवन्धिः .

२९ मत्स्य. पौन्दिः श्रवसः ; गोप्र. पौलिश्रवसः ; संप्र. पौल्श्रवसः .

३० मत्स्य. पौडवः ; गोप्र. पौडुवः ; संप्र. पौडेयः ; प्रद. पैडवः .

३१ गोप्र. यज्ञवल्क्यः .

( १ ) मत्स्य. २००।७ ; गोप्र. ८० रो ह्यवै ( रत्तव ) ; संप्र. ६७४ गोप्रवत् .

अस्मिन् केवलवासिष्ठगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा-

१ रावणय'– प्रद. रावणिः ; संकौ. संर. रावणेयः .

२ कौलय – सर्वग्रन्थेषु समानम् ।

३ आर्जुनाक्षयः– संप्र. संकौ. आर्जनाक्षयः ; प्रद. अर्ढु' नाक्षिः .

( २ ) मत्स्य. २००।७ ; गोप्र. ८० ; संप्र. ६७४.

[ गोत्रप्रवरनामसङ्ग्रहः संप्र. ६५१ ; प्रद. १२६ ; संकौ. १९२ ; संर. ४४५ इत्यत्र द्रष्टव्यः । ] .

१ गोप्र. सेन्गालयः ; संप्र. सौलालयः .

२ गोप्र. संप्र. प्रद. महाकण्वः .

३ संप्र. कौरव्याः .

४ गोप्र. क्रोकिनः ; संर. क्रोधिनाः .

( ३ ) मत्स्य. २००।८ ; गोप्र. ८० ; संप्र. ६७४ .

५ मत्स्य. कपिञ्जलाः .

६ मत्स्य. वाल्खिल्याः ; गोप्र. वालशिखी ; संप्र. वाल्शिखि- .

७ गोप्र. भार्गविः नायकाः ; संप्र. भार्गवी नायकाः .

८,९ मत्स्य. कौलायनः कालशिखः ; गोप्र. कौमारो रावणा' स्काल– ; संप्र. कौमारो वा रावणकाः , कौमाराः , सरावणाः ; प्रद. कौमारः, रावण', कोक्षः ; संकौ. संर. कौमाराः, सरावणाः .

१०, ११ मत्स्य. कोरकृष्णाः सुरायणाः ; गोप्र. -स्काः कृष्णास्तराणजाः ; संप्र. लाक्षीकृष्णास्तरायणाः , कालाक्षाः कृष्णास्तरायणाः ; प्रद. कृष्णः तरोगनः ; संकौ. संर. कालाक्षाः कृष्णाः तरायणाः .

१[12]शाकोह्यः [13]शाकधियः अथो [14]औलपेयश्च ये ।
[15]सांख्यायनाः [16]सुहाकाश्च अथो [17]मापशैरावयः ॥
२[18]दाकायना [19]बौलवयो [20]वाकयो [21]गौरथास्तथा ।
[22]आलम्बायनाः [23]श्यामयो ये च [24]कौण्डोदेरायणाः ॥
३[25]प्रलम्बायनाश्च ऋषय [26]औपमन्यव एव च ।
[27]सांख्यायनाश्च ऋषयस्तथा ये च [28]दशेरकाः ॥
४[29]पार्दकायन [30]उद्ग्राहा ऋषयश्चौपलेखयः[31] ।
[32]मानेयो [33]ब्रह्मवलयः [34]पार्णगारिस्तथैव च ॥
१त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरः शुभः ।
आभरद्वसुर्वसिष्ठश्च इन्द्रप्रमद एव च ॥
२परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

---

(१) मत्स्य. २००।९ ; गोप्र. ८० ; संप्र. ६७४.

१२ मत्स्य. शाकाशार्याः ; गोप्र. शाकाह्या ; संप्र. शाकाह्याः, शाकोह्याः ; प्रद. शाकह्यः ; संकौ. संर. शाकोह्याः .

१३ संप्र. शाकधियाः , शाकधियः ; प्रद. शाङ्कधियः .

१४ मत्स्य. काण्वा, उपलपाः ; गोप्र. कण्वाः , उपल्याः ; संप्र. काण्वाः , उपलयाः .

१५ मत्स्य. गोप्र. संप्र. प्रद. शाकायनाः .

१६ मत्स्य. उद्दाकाः ; गोप्र. तुहागाः ; संप्र. सुहाकाः, सुहका ; प्रद. सुहकः ; जेब्री. तुहाकाः .

१७ मत्स्य. अथ माषशरावयाः ; गोप्र. संप्र. अथ माष० .

(२) मत्स्य. २००।१० ; गोप्र. ८० ; संप्र. ६७४ .

१८ संप्र. दाकामनाः .

१९ संप्र. वालवय ; प्रद. बालकिः .

२० गोप्र. जेब्री. वाकय .

२१ मत्स्य. गोरथाः .

२२ मत्स्य. गोप्र. संकौ. संर. लम्बायनाः ; संप्र. आलम्बायनाः, लम्बायनाः .

२३ मत्स्य. गोप्र श्यामवयः ; संप्र. वाशय, श्यामयः .

२४ मत्स्य. गोप्र. क्रोडोदरायणाः ; संप्र. यवक्रोडा वरायणः (?) .

(३) मत्स्य. २००।११ ; गोप्र. ८० ; संप्र. ६७४ .

२५ गोप्र. प्रलम्बनाः ; संप्र. लम्बायनाः .

२८ मत्स्य. वै वेदशेरका ; गोप्र. दसेरकाः ; संप्र. पञ्च दशेरकाः

(४) मत्स्य. २००।१२ ; गोप्र. ८० ; संप्र. ६७४.

२९ मत्स्य संप्र. पाल्ङ्कायनः ; गोप्र. पालकायनः ; संकौ. संर. पाल्ङ्कायना .

३० संप्र. उद्ग्राहाः .

३१ मत्स्य. बलेक्षवः ; गोप्र बलेखलाः ; संप्र. बलक्षलाः, बलेखलाः ; प्रद. संकौ संर. बलेखलाः .

३२ मत्स्य. गोप्र. मानेयाः .

३३ मत्स्य. ब्रह्ममलिन ; गोप्र. ब्रह्मवलयः ; संप्र. ब्रह्मचय च, ब्रह्मचयाः ; संकौ. ब्रह्मवलयः ब्रह्मवर्याः ; संर. ब्रह्मवलयः ब्रह्मवर्याः .

३४ मत्स्य. पन्नागारिः ; गोप्र. पर्णागारिः .

(१) मत्स्य. २००।१३ (त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरस्तथा । भार्गवमुर्वसिष्ठश्च इन्द्रप्रमदिरेव च ॥) ; गोप्र. ८० आभरद्वसु (भरद्वसु) ; संप्र. ६७४ (आर्षेयो हि मतश्चैषां सर्वेषां प्रवरः शुभः । आभरद्वसुवासिष्ठा वैन्द्र प्रमद एव च ॥) .

(२) मत्स्य. २००।१४ ; गोप्र. ८० ; संप्र. ६७४.

अस्मिन् उपमन्युगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते । तानि यथा—

१ काण्वायना— प्रद. (०) ; संकौ. संर. कण्वायनाः

२ रास्पेया— प्रद. रास्केयः ; संकौ. रास्थेयाः ; संर. राश्येयाः .

३ गोपोदन्लयः— संर. गोपोदनयः .

४ चक्रदर्भय— प्रद. करचक्रदामिः .

५ कारपुरेयः— प्रद. कारपुलिः ; संकौ. कारपुरयः ; संर. कारपूरयः .

६ कौलकलेय— प्रद. कौलकि ; संकौ. कौलमय ; संर. कौलमलयः .

७ रौक्षहेमगयः— प्रद. रौक्षः , हेममणिः ; संकौ. संर. रौक्षहेमय .

८ नाहुलयः— सर्वग्रन्थेषु समानम् ।

९ बाहुलय— प्रद. बाहुलिः .

१० काजपायना— संकौ. संर. कालपायनाः .

११ मुञ्जकायनाः— संर. मुचकायनाः .

१२ स्काम्भायनाः— संकौ. स्कम्भायनाः .

१३ पार्थश्रवस — प्रद. संकौ. संर. पाथश्रवसः .

१४ धातुहय — सर्वग्रन्थेषु समानम् ।

एतेषु कानिचिन्नामानि मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च पाठभेदेनोपलभ्यन्ते ।

## कुण्डिनाः

१औपस्वस्थाः स्वस्थलयो ये लोहा लोहैयश्च ये ॥
२माध्यन्दिनो मार्क्षितयाः पैप्पलादिर्विचक्षुपः ।
त्रैशृङ्गायणो गौर्गुलिः मित्रावरुणकुण्डिनाः ॥
३त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरः शुभः ।
वसिष्ठमित्रावरुणौ कुण्डिनश्च महातपाः ॥ *
४परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

## जातूकर्ण्याः

१जातूकर्ण्यो वसिष्ठश्च दयालुः सौक्तिकः खगः ॥
२त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरः शुभः ।
जातूकर्ण्यो वसिष्ठश्च तथैवात्रिश्च पार्थिव ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

३वसिष्ठवंशेऽभिहिता मयैते
ऋषिप्रधाना नृप गोत्रकाराः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

मत्स्य उवाच–

४वसिष्ठस्तु महातेजा निमेः पूर्वपुरोहितः ।
बभूव पार्थिवश्रेष्ठ यज्ञास्तस्य समन्ततः ॥

५श्रान्तात्मा पार्थिवश्रेष्ठ विशश्राम तदा गुरुः ।
तं गत्वा पार्थिवश्रेष्ठो निमिर्वचनमब्रवीत् ॥

६भगवन् यष्टुमिच्छामि तन्मां याजय मा चिरम् ।
तमुवाच महातेजा वसिष्ठः पार्थिवोत्तमम् ॥

---

* अस्य श्लोकस्यानन्तरं मत्स्यपुराणे "दानकाया महावीर्या नागेयाः परमास्तथा । आलम्बा वायनश्चापि ये चक्रोडादयो नराः ॥" इति श्लोकोऽधिकः ।

(१) मत्स्य. २००।१४ ; गोप्र. ८० ; संप्र. ६७४.
[ गोत्रप्रवरनामसंग्रहः संप्र. ६५१ ; प्रद. १२६ ; संकौ. १९१–१९२ ; मंर. ४४५ इत्यत्र द्रष्टव्यः । ].

१ मत्स्य. औपस्थला: .

२ संप्र. स्वस्थलयाः .

३ मत्स्य. वाल्मेहा ; गोप्र. वाल्मेहाः ; संप्र. वाल्मेहाः ; प्रद. पाल्मेहः .

४ मत्स्य. मोहला: ; संप्र. लोहला:, लोमायमनाः ; संकौ. मंर. लोमायनाः .

(२) मत्स्य. २००।१५ ; गोप्र. ८१ ; संप्र. ६७५.

५ गोप्र. माध्यन्दिकः .

६ मत्स्य. मध्यायः .

८ गोप्र. रिपस्करी ; संप्र. वयस्कुरी.

९ मत्स्य. त्रैशृङ्गायन- ; गोप्र. त्रैमिश्रायन- ; संप्र. त्रैशृङ्गिः गोरनः , गोरनाः ; प्रद. गोरनः ; संकौ. संर. गोवनाः .

१० मत्स्य. शैवन्ता: ; गोप्र. सैगुरुः ; संप्र. शैगिः .

११,१२ मत्स्य. कुण्डिनश्च नरोत्तम ; गोप्र. मित्रावरुणकुण्डिनाः तथा ; संप्र. गुरावृद्धिसोपनाः .

(३) मत्स्य. २००।१६ पूर्वार्धे (त्र्यार्षेयाभिमताश्चैषां सर्वेषां प्रवरा शुभाः ।) ; गोप्र. ८१ ; संप्र. ६७५ (त्र्यार्षेयो ह्यपरैर्षां सर्वेषां प्रवरः शुभः । वासिष्ठमैत्रावरुणौ कौण्डिन्यो हि बहुत्रय ॥).

(४) मत्स्य. २००।१८ ; गोप्र. ८१ ; संप्र. ६७५.

अस्मिन् कुण्डिनगणे संप्र. संकौ. मंर. एषु ग्रन्थेषु एकं नामाधिकं समुपलभ्यते । तद्यथा–

१ उपयः— मंर. इन्द्रः .

(१) मत्स्य. २००।१८ ; गोप्र. ८१ ; संप्र. ६७५.
[ गोत्रप्रवरनामसंग्रहः संप्र. ६५२ ; प्रद. १२७ इत्यत्र द्रष्टव्यः । ].

१ मत्स्य. शिवकर्णः ; गोप्र. जातुकर्ण्यः ; संप्र. जातुकर्ण, जातूकर्ण्याः .

२ मत्स्य. वयः धैव ; संप्र. वसिष्ठः अपि.

३–५ मत्स्य. पारदः च तथैव च ; गोप्र. जारयाः च तथैव च ; प्रद. दयालुः सौमिकः खगः , पक्षपादः, भत्सः .

(२) मत्स्य. २००।१९ ऽऽ शुभः (स्तथा) ; गोप्र. ८१ ; संप्र. ६७५ (वसिष्ठात्रिभवारस्यार्षास्तथाः सर्वे द्विगोत्रजाः । जातूकर्ण्यवसिष्ठौ द्वावुपनोऽत्रिश्च पार्थिव ॥ परस्पर० ॥).

(३) मत्स्य. २००।२० नृप गोत्रकाराः (सार्वं द्विजेन्द्राः) ; गोप्र. ८१ ; संप्र. ६७५ .

(४) मत्स्य. २०१।१ बभूव (बभूवुः) वा (यज्ञ) ; गोप्र. ८१ ; संप्र. ६७५ निमेः पूर्वपुरोहितः (महान् पुरोहितो निमेः).

(५) मत्स्य. २०१।२ ; गोप्र. ८१ श्रान्तात्मा (शान्तात्मा) तदा (इत) ; संप्र. ६७५ .

(६) मत्स्य. २०१।३ ; गोप्र. ८१ ; संप्र. ६७५ मा चिरं (गते मां).

[1]केञ्चित्कालं प्रतीक्षस्व तव यज्ञेभृशं नृप ।
श्रान्तोऽस्मि राजन् विश्रम्य याजयिष्यामि ते नृप ॥
[2]एवमुक्तः प्रत्युवाच वसिष्ठं नृपसत्तमः ।
पारलौकिककार्ये तु कः प्रतीक्षितुमुत्सहेत् ॥
[3]न च मे सौहृदं ब्रह्मन् कृतान्तेन बलीयसा ।
धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ॥
[4]धर्मपथ्याशनो जन्तुर्मृतोऽपि सुखमश्नुते ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥
[5]न हि प्रतीक्षते मृत्युः कृतं वाऽपि न वा कृतम् ।
क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ॥
[6]वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।
न कालस्य प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते ॥ *
[7]आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ।
प्राणवायोश्चलत्वं च त्वया विदितमेव च ॥
[8]यदत्र जीव्यते ब्रह्मन् क्षणमात्रं तदद्भुतम् ।
शरीरं शाश्वतं मन्ये विद्याभ्यासे धनार्जने ॥

* अस्य श्लोकस्यानन्तर " भार्या मे पुत्रो मे धनपशू मे स्वजनो मे बन्धुवर्गो मे । एवं मे मे कुर्वाण पशुमिव बध्नाति नियत कालः ॥" इति श्लोक संस्कारप्रकाशे अधिकः ।

(१) मत्स्य. २०१।४ भृश नृप ( सुमत्तमै ) ; गोप्र. ८१ ; संप्र. ६७५ ( किञ्चित्कालं प्रतीक्ष्योऽहं तव यज्ञे भृशं नृप । श्रान्तोऽस्मि राजन् विश्रम्य सम्यग्याजयिताऽस्मि ते ॥ ) .

(२) मत्स्य. २०१।५ ; गोप्र. ८२ ; संप्र. ६७५ कार्ये तु ( कार्येषु ) .

(३) मत्स्य. २०१।६ ; गोप्र. ८२ ; संप्र. ६७५–६७६ न च मे ( न कस्य ) .

(४) मत्स्य. २०१।७ पथ्याशनो ( पथ्योदनो ) , गोप्र. ८२ कुर्वीत ( कुरुते ) ; संप्र. ६७६ .

(५) मत्स्य. २०१।८ वाऽपि ( चास्य ) ; गोप्र. ८२ ; संप्र. ६७६ क्षेत्रापण ( क्षेत्रग्राम ) .

(६) मत्स्य. २०१।९ ; गोप्र. ८२ न कालस्य( नैकान्तेन ) ; संप्र. ६७६ गोप्रवत् .

(७) मत्स्य. २०१।१० ; गोप्र. ८२ जनम् ( कुलम् ) उत्तरार्धे ( प्राणो वायुश्चलत्त्व च वायोर्विदितमेव ते । ) ; संप्र. ६७६ गोप्रवत् .

(८) मत्स्य २०१।११ ; गोप्र. ८२ ; संप्र. ६७६ .

[1]अशाश्वतं धर्मकार्ये ऋणवानस्मि संकटे ।
सोऽहं संभृतसंभारो भवन्मूलमुपागतः ॥
[2]न चेद्याजयसे मां त्वमन्यं यास्यामि याजकम् ।
एवमुक्तस्तदा तेन निमिना ब्राह्मणोत्तमः ॥
[3]शशाप तं निमिं क्रोधाद्विदेहस्त्वं भविष्यसि ।
श्रान्तं मां त्वं समुत्सृज्य यस्मादन्यं द्विजोत्तमम् ॥
[4]धर्मज्ञस्तु नरेन्द्र त्वं याजकं कर्तुमिच्छसि ।
निमिस्तं प्रत्युवाचाथ धर्मकार्यरतस्य मे ॥
[5]विघ्नं करोषि नान्येन याजनं च तथेच्छसि ।
शापं ददामि तस्मात्त्वं विदेहोऽथ भविष्यसि ॥
[6]एवमुक्ते तु तौ जातौ विदेहौ द्विजपार्थिवौ ।
देहहीनौ तयोर्जीवौ ब्रह्माणमुपजग्मतुः ॥
[7]तावागतौ समीक्ष्याथ ब्रह्मा वचनमब्रवीत् ।
अद्यप्रभृति ते स्थानं निमे जीव ददाम्यहम् ॥
[8]नेत्रपक्ष्मसु सर्वेषां त्वं वसिष्यसि पार्थिव ।
त्वत्संबन्धात्तथा तेषां निमेषः संभविष्यति ॥
[9]चालयिष्यन्ति तु तदा नेत्रपक्ष्माणि मानवाः ।
एवमुक्ते मनुष्याणां नेत्रपक्ष्मसु सर्वशः ॥

(१) मत्स्य. २०१।१२ ; गोप्र. ८२ ; संप्र. ६७६ ऋणवानस्मि ( तृणवत्स्वामि ) .

(२) मत्स्य. २०१।१३ ; गोप्र. ८२ ; संप्र. ६७६ यास्यामि ( याचामि ) स्तदा ( स्ततः ).

(३) मत्स्य. २०१।१४ ; गोप्र. ८२ ; संप्र. ६७६ .

(४) मत्स्य. २०१।१५ ; गोप्र. ८२ ; संप्र. ६७६ नरेन्द्र त्वं ( नरेन्द्रेन्द्र ) .

(५) मत्स्य. २०१।१६ ; गोप्र. ८३ याजन ( यजन ) उत्तरार्धे ( शापं ददासि यस्मात्त्वं विदेहोऽथ भविष्यसि ॥ ) ; संप्र. ६७६ याजनं ( यजनं ) तस्मात्त्व ( यस्मात्त्व ) .

(६) मत्स्य. २०१।१७ ; गोप्र. ८३ ; संप्र. ६७६ .

(७) मत्स्य. २०१।१८ ; गोप्र. ८३ निमे जीव ( निमेर्जीव ) ; संप्र. ६७७ तावागतौ ( आगतौ तौ ) .

(८) मत्स्य. २०१।१९ त्व वसिष्यसि पार्थिव ( मनुष्याणां भविष्यसि ) ; गोप्र. ८३ ; संप्र. ६७७ .

(९) मत्स्य. २०१।२० मुक्ते ( मुक्तो ) ; गोप्र. ८३ ; संप्र. ६७७ .

[1]जगाम निमिजीवस्तु वरदानात्स्वयंभुवः ।
वसिष्ठजीवं भगवान् ब्रह्मा वचनमब्रवीत् ॥
[2]मित्रावरुणयोः पुत्रो वसिष्ठ त्वं भविष्यसि ।
वसिष्ठेति च ते नाम तत्रापि च भविष्यति ॥
[3]जन्मद्वयमतीतं च तत्रापि त्वं स्मरिष्यसि ।
एतस्मिन्नेव काले तु मित्रश्च वरुणस्तथा ॥
[4]बदर्याश्रममासाद्य तपस्तेपतुरव्ययम् ।
तपस्यतोस्तयोरेवं कदाचिन्माधवे ऋतौ ॥
[5]पुष्पितद्रुमसंस्थाने शुभे दयितमारुते ।
उर्वशी तु वरारोहा कुर्वती कुसुमोच्चयम् ॥
[6]सुसूक्ष्मरक्तवसना तयोर्दृष्टिपथं गता ।
तां दृष्ट्वेन्दुमुखीं सुभ्रूं नीलनीरजलोचनाम् ॥
[7]उभौ चुक्षुभतुर्धैर्यात्तद्रूपपरिमोहितौ ।
तपस्यतोस्तयोर्वीर्यमक्षरच्च मृगासने ॥
[8]स्कन्नं रेतस्ततो दृष्ट्वा शापभीता वराप्सरा ।
चकार कलशे शुक्रं तोयपूर्णे मनोरमे ॥
[9]तस्मादृषिवरौ जातौ तेजसाऽप्रतिमौ भुवि ।
वसिष्ठश्चाप्यगस्त्यश्च मित्रावरुणयोः सुतौ ॥

(१) मत्स्य. २०१।२१ ; गोप्र. ८३ ; संप्र. ६७७.

(२) मत्स्य. २०१।२२ ; गोप्र. ८३ वसिष्ठ त्वं (वसिष्ठस्त्वं) ; संप्र. ६७७ गोप्रवत्.

(३) मत्स्य. २०१।२३ ; गोप्र. ८३ ; संप्र. ६७७.

(४) मत्स्य. २०१।२४ ; गोप्र. ८३ रव्ययम् (रव्ययौ) रेवं (रेव) ; संप्र. ६७७ रव्ययम् (रव्ययौ) रेवं (रेव).

(५) मत्स्य. २०१।२५ ; गोप्र. ८३ ; संप्र. ६७७.

(६) मत्स्य. २०१।२६ ; गोप्र. ८३ दृष्ट्वेन्दुमुखीं (दृष्ट्वा सुमुखीं) ; संप्र. ६७७ तयोः (ऽनयोः).

(७) मत्स्य. २०१।२७ धैर्याद् (दैवौ) मक्षरच्च (मस्खलच्च) ; गोप्र. ८४ उत्तरार्धं नास्ति ; संप्र. ६७७.

(८) मत्स्य. २०१।२८ ; गोप्र. ८४ शापभीता वराप्सरा (शापभीतौ परस्परम्) चकार (चक्रतुः) ; संप्र. ६७७ (स्कन्नं रेतस्ततो दृष्ट्वा शापभीतौ परस्परम् । तोयपूर्णे चिक्षिपतुः कलशे तौ मनोरमे ॥).

(९) मत्स्य. २०१।२९ ; गोप्र. ८४ सुतौ (द्वयोः) ; संप्र. ६७७ दृषिवरौ (त्मवरौ) प्यगस्त्यश्च (प्यगस्तिश्च) सुतौ (द्वयोः).

[1]वसिष्ठस्तूपयेमेऽथ भगिनीं नारदस्य तु ।
अरुन्धतीं वरारोहां तस्यां शक्तिमजीजनत् ॥
[2]शक्तेः पराशरः पुत्रस्तस्य वंशं निबोध मे ।
यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत ॥
[3]प्रकाशो जनितो येन लोके भारतचन्द्रमाः ।
येनाज्ञानतमोऽन्धस्य लोकस्योन्मीलनं कृतम् ।
पराशरस्य तस्य त्वं शृणु वंशमनुत्तमम् ॥

## पराशराः

[4]काण्डूशयो[1] वाहनयो[2] जैमयो[3] भैमतायनः[4] ।
गोपालिरेषां पञ्चम एते गौराः पराशराः ॥
[5]प्रारोहयो[6] वाह्यतयाः[7] प्रार्क्षयः[8] कौतुजातयः[9] ।
हार्यश्विरेषां[10] पञ्चमो नीला ज्ञेयाः पराशराः ॥

(१) मत्स्य. २०१।३० ; गोप्र. ८४ ; संप्र. ६७७-६७८.

(२) मत्स्य. २०१।३१ ; गोप्र. ८४ ; संप्र. ६७८.

(३) मत्स्य. २०१।३२ ; गोप्र. ८४ द्वितीयार्धं नास्ति ; संप्र. ६७८ द्वितीयार्धं नास्ति.

(४) मत्स्य. २०१।३३ ; गोप्र. ८४ ; संप्र. ६७८ गौराः (रक्ताः).

[ गोत्रप्रवरनामसंग्रहः संप्र. ६५२ ; प्रद. १२७ ; संकौ. १९२ ; संर. ४४६ इत्यत्र द्रष्टव्यः । ]

१ मत्स्य. काण्डशय ; गोप्र. काण्डर्षयः ; संप्र. वाड्रशयः.

२ मत्स्य. गोप्र. वाहनपः ; संप्र. वाहरयः.

३ मत्स्य. गोप्र. जैह्मपः ; संप्र. जैमतः.

४ मत्स्य. गोप्र. भौमतापनः ; संप्र. भैमतायनाः.

(५) मत्स्य. २०१।३४ एषां पञ्चमो (पञ्चमो येषां) ; गोप्र. ८४ ; संप्र. ६७८ पञ्चमो नीला ज्ञेयाः (पञ्चम एते नीलाः).

६ मत्स्य. प्रपोहयाः ; गोप्र. संप्र. प्रागेहयाः.

७ मत्स्य. वाह्यमयाः ; संप्र. बाधतयः.

८ मत्स्य. ख्यातेयाः ; गोप्र. पार्थेयाः ; संप्र. संकौ. पार्थेयाः ; प्रद. पार्थिवयः ; संर. पाथेयाः.

९ संप्र. कौरुजायनाः ; प्रद. कौरजायनः ; संकौ. संर. कारुजायनाः.

१० मत्स्य. हर्यश्विः ; गोप्र. हर्यश्वः ; संप्र. हैर्याश्विः, हर्यश्वयः ; प्रद. हर्याश्विः ; संकौ. संर. हर्याश्वयः.

(१) कृष्णाजिनाः कपिश्रेष्ठाः कार्कैयस्थाजपातयः ।
पञ्चमः पौष्करसादिः कृष्णा ज्ञेयाः पराशराः ॥

(२) आविष्टायनवाल्येयाः ईर्यामेयाश्चोकयश्च ये ।
इषीकहस्तः पञ्चम एते श्वेताः पराशराः ॥

(३) पाटिको बादरिश्चैव स्तम्भेन्याः क्रौञ्चकायनाः ।
क्षैमिरेषां पञ्चमस्तु एते श्यामाः पराशराः ॥

(४) खल्यायना वार्ष्णायनास्तैलेयाः खैल्येयूथपः ।
तन्तिरेषां पञ्चमस्तु एते धूम्राः पराशराः ॥

पराशराणां सर्वेषां त्र्यार्षेयः प्रवरो मतः ।
पराशरश्च शक्तिश्च वसिष्ठश्च महातपाः ।
परस्परमवैवाह्याः सर्व एव पराशराः ॥

(२) उक्तास्त्वेते नृप वंशमुख्याः
पराशराः सूर्यसमप्रभावाः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

(१) उक्तानामिह पञ्चानां वसिष्ठगणानां परस्परमविवाहः, समानगोत्रत्वात् । समानगोत्रत्वं च पञ्चसु प्रवरेषु वसिष्ठस्य सर्वैः सत्तया म्रियमाणतया चानुवृत्तेः । संकृत्यादीनां तु वसिष्ठैः सर्वैः स्वगणोक्तैश्च सह अविवाहः इति पूर्वमेवोक्तमाङ्गिरसकाण्डे । कुण्डिनानां तु प्रवरे वासिष्ठमैत्रावरुणकौण्डिन्येत्यत्र मित्रावरुणसंज्ञकौ ऋषी मन्त्रदृशौ द्रष्टव्यौ, न देवताविशेषौ प्रसिद्धौ ग्राह्यौ । कुतः ? 'न देवैर्न मनुष्यैरार्षेयं वृणीते । ऋषिभिरेवार्षेयं वृणीते' इति श्रुतेः । तयोश्च मित्रावरुणयोरत्र संहतं ऋषित्वं द्रष्टव्यम्, न प्रत्येकम् । कुतः ? 'न चतुरो वृणीते' इति चतुर्णां वरणप्रतिषेधात् । मत्स्यपुराणे च मित्रावरुणयोः बदर्याश्रमे तपस्यतोरागतामुर्वशीं दृष्टवतोः शुक्रं स्कन्नं कश्चित्तोयपूर्णे कलशे गृहीतं, ततो वसिष्ठो जातः, वसिष्ठात् कुण्डिन इति दृष्टत्वात् तयोर्ऋषित्वं तयो (? तथा) पितृत्वं संहतं सिद्धमिति । अत्र श्लोकः– 'वसिष्ठानां न सर्वेषां विवाहोऽस्ति परस्परम् । प्रातर्वसिष्ठसंकृत्योर्न द्वयोरपि गोत्रयोः ॥' गोप्र ८५

(२) अथ वसिष्ठस्य । ते चतुर्विधाः । तत्र आद्यगणो द्वात्रिंशद्गोत्रः, द्वितीय एकोनविंशतिः, तृतीयश्चतुर्विंशतिः, चतुर्थस्त्रिंशत् । पृ. ६४०

(१) मत्स्य. २०१।३५ ; गोप्र ८४ ; संप्र ६७८ .
२१ मत्स्य. गोप्र. संप्र. संर. काष्णायनाः ; प्रद. काष्ण्यायनः ; संकौ. काष्ट्रायनाः .
२२ मत्स्य. करिमुखाः ; संप्र. कापिमेदाः .
२३,२४ मत्स्य. काकेयस्था जपातयः ; गोप्र. कार्केयस्थानयानयाः ; संप्र. काकेयस्था नयानयाः .
२५ मत्स्य. गोप्र. संप्र. पुष्कर पञ्चमश्चैषां .
(२) मत्स्य. २०१।३६ पञ्चम एते (चैते वै पञ्च) ; गोप्र. ८४ ; संप्र. ६७८ पञ्चम एते श्वेताः (पञ्चैते श्वेता ज्ञेयाः).
२६ मत्स्य. आविष्टायन- ; संप्र. आविष्टायनाः .
२७ मत्स्य. बालेयाः ; गोप्र. वालेय- ; संप्र. वाल्येयाः .
२८ मत्स्य. स्वायष्टाः ; गोप्र. स्वायस्ताः ; संप्र. स्वायथाः .
२९ मत्स्य. चोरयाः ; गोप्र. चौपयः ; संप्र. चोकय, शैकयः ; प्रद. शौकिः ; संकौ. संर. शोकय .
(३) मत्स्य. २०१।३७ ; गोप्र. ८४ पञ्चमस्तु (पञ्चम) ; संप्र. ६७८ पञ्चमस्तु एते श्यामाः (पञ्चमश्च श्यामा एते).
२१ मत्स्य. वाटिकः ; गोप्र. पठिकाः ; संप्र. संकौ. संर. पटिका, वधिका ; प्रद. पटिकः, वधिकः .
२३ मत्स्य. स्तम्बा वै ; गोप्र. स्तम्भत्याः ; संप्र. स्तम्भम्याः .
२४ मत्स्य. क्रोधनायनाः ; गोप्र. कौञ्चका बकाः .
२५ मत्स्य. क्षैमिः .
(४) मत्स्य. २०१।३८ ; गोप्र. ८४–८५ , संप्र. ६७८.
२६ मत्स्य. खल्यायनाः ; संप्र. खल्वायनि. .
२७ संप्र. वार्ष्णायने .
२८ संप्र. नाया .
२९ मत्स्य. खलु यूथपाः , गोप्र. खलु यूथपा ; संप्र. खलु सुपातय
३० गोप्र. भाति: एषां पञ्चमः ; संप्र. एतेषां पञ्चमः ताष्टि .

(१) मत्स्य. २०१।३९ एव (एते) ; गोप्र. ८५ ; संप्र. ६७८ .
(२) मत्स्य २०१।४० ; गोप्र ८५ ; संप्र. ६७८ उक्तास्त्वेते (उक्तास्त एते).

अस्मिन् पराशरगणे संप्र. प्रद. संकौ. संर. एषु ग्रन्थेषु एकं नामाधिकं समुपलभ्यते । तद्यथा–
१ शिवय — प्रद. शिबिः .

जातूकर्ण्यानां वसिष्ठैरत्रिभिश्च सर्वैः परस्परमविवाहः। यद्यपि सूत्रकारैर्द्विगोत्रत्वेनैते त्रयो नोक्ताः, तथापि केषुचित्सूत्रेषु गणद्वये पाठात् द्विगोत्रत्ववाचोयुक्तिः।

संप्र. ६५४

## प्रवरसंग्रहकारः

[1]वसिष्ठ इन्द्रप्रमद आभरद्वसुसंकृती।
कौण्डिन्यः पूतिमापश्च गौरिवीतः पराशरः॥
[2]मैत्रावरुणिशक्ती च उपमन्युगणः स्मृतः।
एकादश वसिष्ठस्य गोत्राण्यस्मिन्न दोर्ग्रहः॥

(१) प्रपा. ३१० उत्तरार्धे (पराशरः पूतिमाषो मैत्रावरुणशक्तिकौ॥); विपा. ७०५ पूर्वार्धे (वसिष्ठ इन्द्रप्रमदो भरद्वाजस्तु संकृतिः।) कौण्डिन्यः (कौण्डन्यः); ज्योनि. १३४ द आभ (दस्त्वाभ) गौरिवीतः (गौरवीतिः): बाल. १।५३ पृ. १७८ द आभ (दस्त्वाभ); संग. १८० पूर्वार्धे (वसिष्ठ इन्द्रप्रमदो भरद्वाजस्तु संकृतिः।) गौरिवीतः (गौरीवी तु).

(२) प्रपा. ३१० (उपमन्युश्च कौण्डिण्यो गौरवीतस्तथैव च। एकादश वसिष्ठाः स्युर्न विवाह्याः परस्परम्॥); विपा. ७०५ च उपमन्युगणः स्मृतः (द्वौ उपमन्युर्गणस्तथा); ज्योनि. १३४; बाल. १।५३ पृ. १७८; संग. १८० पूर्वार्धे (मैत्रावरुणशक्ती द्वावुपमन्योर्गणः स्मृतः।).

## स्मृत्यर्थसारः

[1]वसिष्ठाः कुण्डिनाश्चैवमुपमन्युपराशराः।
वसिष्ठा इति चत्वारो गोत्रैक्यान्नान्वियुर्मिथः॥
[2]तथैव जातूकर्ण्याश्च वसिष्ठैरत्रिभिः सह॥
(नोद्वहेयुः)

## अनिर्दिष्टकर्तृकवचने

[3]वसिष्ठौ द्वौ च विज्ञेयौ ब्रह्मपुत्रोऽथ शापतः।
मैत्रावरुणिरित्येव वसिष्ठो विग्रहान्तरात्॥
[4]ब्रह्मात्मजाच्छक्तिपराशरव्यासशुकादयः।
ज्ञेयो विशेषस्त्वनयोर्द्वितीयात्कुण्डिनादयः॥

अत एव भिन्नगोत्रत्वाद्भिन्नशरीरत्वाच्च वसिष्ठवासिष्ठगणयोर्विवाहो भवति।

विपा. ७०१

(१) स्मृसार. १६ कुण्डिना (कुण्डिन); चम. १०४ (=); संम. ६२; कृभ. १०४७ (=) श्चैवमु (श्चैव उ).

(२) स्मृसार. १६; चम. १०५ (=); संम. ६२; कृभ. १०५२ (=).

(३) विपा. ७०१ मैत्रा (मित्रा) वसिष्ठो (वासिष्ठो); संग. १७७; कृभ. १०६३ *विधानपारिजाते इत्युक्तम्*.

(४) विपा. ७०१; संग. १७७ विशेष (विवेक); कृभ. १०६३ ज्ञेयो विशेष (ज्ञेया, विवेक).

---

# अगस्तिकाण्डम्

## बौधायनश्रौतसूत्रम्

### [1]केवलागस्तयः

अगस्तीन् व्याख्यास्यामः—

१ अगस्तयः २ विशालाद्याः ३ स्कालायनाः ४ औपदहनयः ५ कल्माषदण्डिः ६ धावर्णिः ७ लावर्णिः ८ लव्यार्बुदः ९ वैरिणयः

(१) बौश्रौप्र.; गोप्र. ८६; संप्र. ६५२; संम. ६०; प्रद. १२७; संकौ. १९२; संर. ४४६.

२ गोप्र. विशालाद्याः.

३ संप्र. सालायनाः; संम. कालायनाः; प्रद. खलायनः; संकौ. संर. स्फालायनाः.

४ गोप्र. औपदहयनः; संम. औदहनयः.

५ गोप्र. कुल्माषदण्डिः; संप्र. प्रद. कुल्माषाः, दण्डयः; संम. कुल्माषदण्डिनाः; संकौ. कल्मषाः, दण्डयः; संर. कल्माषाः, दण्डयः.

६ गोप्र. संप्र. संम. प्रद. संकौ. संर. (०).

७ गोप्र. लावर्णाः; संप्र. प्रद. संकौ. संर. लावणयः; संम. र्णाय्यः, सावर्णिः.

८ गोप्र. लाप्यः, बवदयः; संप्र. लाव्याः, वरण्डयः; संम. ववन्दयः; प्रद. लाव्यः, वरण्डिः; संकौ. लव्याः, वरदण्डयः; संर. लव्यार्दण्डयः.

९ गोप्र. संप्र. संम. संकौ. संर. वैरणयः; प्रद. वैरण्डिः.

१० बुद्बुदोदरयः ११ शैवपथयः १२ शाल्यातपाः १३ मौञ्जकयः १४ पाण्डुहृदाः १५ हारिग्रीवयः १६ रौहिण्याः १७ मौसलयः इत्येते अगस्तयः। तेषां त्र्यार्षेयः प्रवरो भवति। आगस्त्य-दार्ढच्युत-ऐध्मवाह-इति होता। इध्मवाहवद्-दृढच्युतिवद्-अगस्तिवद्-इत्यध्वर्युः॥

साम्भवाहाः

साम्भवाहानां त्र्यार्षेयः प्रवरो भवति। आगस्त्य-दार्ढच्युत-साम्भवाह-इति होता। साम्भवाहवद्-दृढच्युतिवद्-अगस्तिवद्-इत्यध्वर्युः॥

सोमवाहाः

सोमवाहानां त्र्यार्षेयः प्रवरो भवति। आगस्त्य-दार्ढच्युत-सौमवाह-इति होता। सोमवाहवद्-दृढच्युतिवद्-अगस्तिवद्- इत्यध्वर्युः॥

यज्ञवाहाः

यज्ञवाहानां त्र्यार्षेयः प्रवरो भवति। आगस्त्य-दार्ढच्युत-याज्ञवाह-इति होता। यज्ञवाहवद्-दृढच्युतिवद्-अगस्तिवद्-इत्यध्वर्युः॥

१० गोप्र. बुधोदयः ; संप्र. बुदोदरयः ; संम. बुधोदरयः ; प्रद. बुधोदरिः ; संकौ. मुदोदरयः ; संर. मुण्डोदरयः ; जैबी. बुद्बुदोदरि .

११ गोप्र. संप्र. प्रद. संर. सैवपथयः ; संम. सौचपथयः ; संकौ. सौवपथय' .

१२ बौश्रौप्र. शालावताः ; गोप्र. शैशाल्वातपाः ; संम. शालपानयाः ; संकौ. शाल्यानयाः ; संर. शाल्मातपाः .

१३ गोप्र. मौजकय' ; संप्र. मौञ्जिकयः ; संम. मौञ्जिकराः ; प्रद. मौञ्जिकिः ; संकौ. मौञ्जिलतः ; संर. मौञ्जिलताः .

१४ गोप्र. पाथोद्भताः ; संप्र. पार्थोद्दिता' ; संम. पथोद्भताः, शात्रयः, हृद्योमा', शाण्डिधाराः इत्यपि ; प्रद. पाथोद्भतः ; संकौ. प्राथोहताः ; संर. पादोहता' .

१५ गोप्र हारिग्रीवा' ; संप्र. संम. प्रद. हारिग्रीवाः ; संर. हारिग्रीवी.

१६ गोप्र. संकौ. संर. रोहिण्याः ; संम. रौहिण्याः ; प्रद. रौहिः .

१७ गोप्र. मौशल्य' .

( १ ) गोप्र. ८६ साम्भ ( सम्भ ) दृढच्युति ( दृढच्युत ).

( २ ) बौश्रौप्र ; गोप्र. ८६.

## आपस्तम्बश्रौतसूत्रम्

१ केवलागस्तयः

[१]अथागस्तीनामेकार्षेयः। आगस्त्य-इति होता। अगस्तिवद्-इत्यध्वर्युः॥

प्रवृणीत इति शेषः कपर्दि.

त्र्यार्षेयमु हैके। आगस्त्य-दार्ढच्युत-ऐध्मवाह-इति। इध्मवाहवद्- दृढच्युतवद्- अगस्तिवद्- इत्यध्वर्युः॥

## सत्यापाढश्रौतसूत्रम्

१ केवलागस्तयः

[२]अथागस्तीनामेकार्षेयः। आगस्त्य-इति होता। अगस्तिवद्-इत्यध्वर्युः। त्र्यार्षेयमु हैके। आगस्त्य-दार्ढच्युत-ऐध्मवाह-इति। इध्मवाहवद्-दृढच्युतवद्-अगस्तिवद्-इति॥

अगस्तीनां सर्वेषां परस्परमविवाहः, सगोत्रत्वात् समप्रवरत्वाच्च। प्रच.

## आश्वलायनश्रौतसूत्रम्

१ केवलागस्तयः

[३]अगस्तीनां आगस्त्य-दार्ढच्युत-ऐध्मवाह-इति। सोमवाहो वोत्तमः, आगस्त्य-दार्ढच्युत-सौमवाह-इति॥

उत्तमपदविकल्पः। गानार्ग्.

## आश्वलायनश्रौतसूत्रपरिशिष्टम्

[४]भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः।
श्यैतादयस्त्रयस्तेषां विवाहो मिथ इष्यते॥
षण्णां वै गौतमादीनां विवाहो नेष्यते मिथः।
दीर्घतमा औचथ्यः कक्षीवांश्चैकगोत्रजाः॥
भरद्वाजाग्निवेश्यर्क्षाः शुङ्गाः शैशिरयः कताः।
एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै॥

( १ ) आपश्रौ. २४।१०।९-१० ; गोप्र. ८६ .

( २ ) सश्रौ. २१।३।१५ ; संर. ४२५.

( ३ ) आश्रौ. २।६।१५ ; गोप्र. ८७.

( ४ ) इद आश्वलायनश्रौतसूत्रस्यान्ते मुद्रितम्। अल्पीयस्त्वात् स्थलादिकं नास्ति।

पृषदश्वा मुद्गला विष्णुवृद्धाः
कण्वोऽगस्त्यो हरितः संकृतिः कपिः।
यस्कश्चैषां मिथ इष्टो विवाहः
सर्वैरन्यैर्जामदग्न्यादिभिश्च ॥

यावत्समानगोत्राः स्युर्विश्वामित्रोऽनुवर्तते ।
तावद्वसिष्ठश्चात्रिश्च कश्यपश्च पृथक्पृथक् ॥

## कात्यायन–लौगाक्षि–श्रौतसूत्रम्

### १ केवलागस्तयः

अथागस्त्यान् व्याख्यास्यामः–

अथ १ उपकुल– २ सुकल्माप– ३ कारिणि– ४ धारिणि– ५ मौक्षकि– ६ वैरिणि– ७ कल्माषदण्डि– ८ निर्वैरिणानां ९ सौरिभाग–१०गोव्याधि– ११ शैवपथ– १२ अर्बुदानां १३ मेदिनीपक्षपाः– १४ दावतानां १५ अगदाय– १६ हारिग्रीवीणां १७ शैरिदयाः १८ वित्तमयः १९ स्वतानां इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आगस्त्य–दार्ढच्युत–ऐध्मवाह–इति होता। इध्मवाहवद्–दृढच्युतवद्–अगस्तिवद्–इत्यध्वर्युः ॥

(१) गोप्र. ८७ ; संप्र. ६५२–६५३ ; प्रद्. १२७ ; संकौ. १९२ ; संर. ४४७.
१ संप्र. संकौ. उपकुलाः , औकुलाः ; संर. उपकूगाः , औकुलाः.
३ प्रद्. कारी.
४ संप्र. संकौ. संर. वारिणयः ; प्रद्. वारिणिः .
५ गोप्र. मोक्षति ; संप्र. क्षौमितयाः ; प्रद्. क्षौमितिः ; संकौ. संर. क्षौमिनयः .
६ संप्र. संकौ. संर. वैरण्डयः ; प्रद्. निर्वैरिणः .
७ गोप्र. कल्मापदारु ; संप्र. संर. उपकल्मकायनयः ; संकौ. उपकलाः , कामनयः .
८ गोप्र. तारायनाः ; संप्र. प्रद्. संकौ. संर. १ .
९ प्रद्. सौरभागः .
१० गोप्र. गोव्यत्र ; संप्र. संर. गोन्यादयः ; संकौ. गाव्यादयः .
११ गोप्र. हैमवह ; प्रद्. हैमवाहः .
१२ गोप्र. अर्बुदाना ; संप्र. प्रद्. संकौ. संर. अर्बुदाः .
१३ प्रद्. मेदिनीपक्षकः .
१४ प्रद्. देवतः .
१५ गोप्र. अगदय ; प्रद्. अगवः .
१६ गोप्र. हारिग्रीवाणाम्.
१७ गोप्र. सौरिदयाः ; प्रद्. शैरिषः .
१८ गोप्र. वत्तमयः ; प्रद्. वित्तपः .
१९ प्रद्. अवतानः .

अस्मिन् १ केवलागस्तिगणे संप्र. प्रद्. संकौ. संर. एषु ग्रन्थेषु अधिकानि नामानि समुपलभ्यन्ते। तानि यथा –
१ सैवकाः– प्रद्. सैवकः ; संकौ. संर. सैवराः .
२ सौभरायणाः– संकौ. साभरायणाः ; संर. साम्भरायणाः.
३ वैकर्णायनाः– संकौ. संर. करूर्णायनाः .
४ मार्गायणाः– प्रद्. गार्ग्यायनः .
५ प्राचार्याः– संकौ. आचार्याः ; संर. आचर्याः .
६ शालङ्कायनयः– सर्वग्रन्थेषु समानम्।
७ वाह्यायनयः– संप्र. बाह्मायनयाः ; प्रद्. वाह्मायनः ; संकौ. वाल्यायनयः ; संर. यवाल्यायनयः .
८ वाह्मकयः– संकौ. संर. (०).
९ लाशयः– प्रद्. (०).
१० साकाक्षयः– संप्र. साकक्षयः ; प्रद्. शाकाक्षिः .
११ तण्डयः– संप्र. तन्द्रयः .
१२ लाज्यायनयः– संप्र. लाज्यामनयः ; प्रद्. लाज्यामतिः .
१३ हृद्रोगयः– प्रद्. हृद्रोगः ; संर. हृदोगयः .
१४ प्रादुराक्षयः– संकौ. प्रादुराक्षसयः ; संर. मादुराक्षयः .
१५ रम्याक्षयः– संकौ. संर. (०).
१६ पण्डोद्धताः– प्रद्. पण्डोध्वतः ; संकौ. पण्डोधृताः ; संर. पण्डोद्धताः .
१७ कुण्ड्याक्षयः– संकौ. संर. कुण्ड्याक्षयः .
१८ दैवायुधाः– प्रद्. दैवायुधः .
१९ पटहस्ताः– प्रद्. पटलः ; संकौ. संर. परहस्ताः .
२० वैह्योरन्धयः– प्रद्. वैह्योरदिः ; संकौ. संर. वैल्योरन्दयः .
२१ दामोष्णीपाः– संकौ. दामः ; संर. दामाः .
२२ तक्षराः – संकौ. संर. (०).
२३ सौम्यायनाः– संप्र. सौम्यानयाः ; प्रद्. सौम्यायनिः ; संर. सोम्यानयाः .
२४ ब्राह्मण्याः– सर्वग्रन्थेषु समानम्।
२५ पुत्रयः– " "
२६ वाशिपायणाः– प्रद्. वासिष्ठायणः ; संर. वासिपायणाः.

### २ केवलागस्तयः

१ अगस्तयः २ करम्भयः ३ कुरुनाडयः ४ कौशल्याः ५ सुमेधसः ६ मयोभुवः ७ गान्धारायणाः ८ पौलस्तयः ९ पुलहः १० क्रतुः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य-माहेन्द्र-मायोभुव-इति होता । मयोभुववद्-महेन्द्रवद्-अगस्तिवद्-इत्यध्वर्युः ॥ *

२७ शारङ्गरा — संर. शारगरः .

२८ फाण्टावताः— प्रद. पाण्डः , वचनः ; संकौ. फाटावचनाः ; संर. स्फाण्टावचना॰ .

( १ ) गोप्र. ८७ ; संप्र. ६५२ ; प्रद. १२७-१२८ ; संकौ. १९२ ; संर. ४४६.

३ गोप्र. कुनाडाः ; संप्र. संकौ. संर. ( ० ).

४ गोप्र. कौशाल्याः ; प्रद. कौसल्यः .

५ गोप्र. खमेदसः ; प्रद. खगेवसः .

६ संकौ. सोमयोभुवः .

७ संप्र. प्रद. गान्धरायणाः ; संकौ. संर. गाधरायणा॰ .

८ संप्र. प्रद. संकौ. संर. पुलस्तय. .

अस्मिन् २ केवलागस्तिगणे संप्र. संकौ. संर. एषु ग्रन्थेषु द्वे नामनी अधिके । ते यथा —

१ कार्णाटा॰— सर्वग्रन्थेषु समानम् ।

२ माहेन्द्रा — संकौ. संर. महेन्द्राः .

* संप्र. ६५२ ; प्रद. १२८ ; संकौ. १९२ ; संर. ४४७ एषु ग्रन्थेषु उल्लिखितौ अक्र-विमलिगणौ यथा-

१ अक्रा — सर्वग्रन्थेषु समानम् ।

२ शक्रा — प्रद. शाक्र॰ ; संकौ. संर. शक्राः .

३ शुक्राः— प्रद. शुक्रः ; संकौ. शुक्राः ; संर. शुक्राः .

४ हंसाः— सर्वग्रन्थेषु समानम् ।

५ श्वासा॰— प्रद. चापः ; संकौ. चासाः .

६ भासा॰— प्रद. भाष॰ ; संकौ. संर. ( ० ).

७ हिमोदका — सर्वग्रन्थेषु समानम् ।

८ हेमचर्चय॰— प्रद. हेमवर्मिः .

---

१ विमलय — प्रद. विमिलिः ; संकौ. विमिलय॰ ; संर. विमितेलय॰ .

२ मामभितकय — प्रद. मामिकिः ; संकौ. मामितकलयः ; संर. मामितेकलय॰ .

३ पाणिकाः— सर्वग्रन्थेषु समानम् ।

### पौर्णमासाः

[1]पौर्णमासाः पौरणाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य-पौर्णमास-पौरण- इति होता । पूरणवत्- पूर्णमासवद्-अगस्तिवद्-इत्यध्वर्युः ॥

इति लौगाक्ष्युक्तमगस्तिगोत्रकाण्डमुदाहृतमध्वर्युक्रमविशेषज्ञापनायैव । गोप्र. ८७

## मानवश्रौतसूत्रम्

### १ केवलागस्तयः

[2]अथागस्त्यान् व्याख्यास्यामः । १ कुकूल- २ उपक - ३ वल्क- ४ लांवकायन- ५ शालङ्कायन- ६ धारिणि- ७ धौरणि- ८ सौदन्वा- ९ सौकृत्य- १० कल्माषदण्डिः ११ अपौतरौ- १२ नुरायणानां १३ शौभंयिनाः १४ गोव्याधिला- १५ शिलाद्य- १६ शैवपथ- १७ अर्बुदानां १८ ऐदिल्माः १९ एवयायदूताः आगस्त्य-दार्ढच्युत-ऐध्मवाह-इति होता, इत्यादि ॥

### विमलयः

१ नन्दि- २ विमलि- ३ धिमलि- ४ पिनायक्षि - ५ सायकि-इत्येतेषां, इत्यादि । आगस्त्य-पिनायक्षि-शायक-इति होता, इत्यादि ॥

### अक्राः

१ प्राचीनप्रवणाः २ कापेयाः ३ अक्र- ४ शुक्र- ५ शुद्धस- ६ चाप- ७ भाप- ८ हैमवर्चि- ९ हिमोदकाः इत्येतेषां, इत्यादि । आगस्त्य-हैमवर्चि-हिमोदक-इति होता, इत्यादि ॥

१ अक्रि- २ चक्रि- ३ अर्चि- ४ चर्चि- ५ हिमोदकि- यारीणकाः इत्येतेषां, इत्यादि ।

---

४ पिनायका - संर. पिनामकाः .

५ नन्दय — संर. नन्दयोनियः .

६ विलय.— प्रद. मिल्लिः ; संकौ. अग्निया॰ .

७ चिलय — संर. ( ० ).

मानवश्रौतसूत्रे शुक्लयजुर्वेदपरिशिष्टे च इमौ गणौ समुपलभ्येते ।

( १ ) गोप्र. ८७.

( २ ) मानवश्रौतसूत्रोक्तो गोत्रप्रवरविचारः जॉन ब्रौमहाशय-सम्पादितात् ' गोत्रप्रवरमञ्जरी ' पुस्तकात्संगृहीतः ।

आगस्त्य-पिनायक-पारीणक-इति होता। पारीणकवद्, इत्यादि ॥

१ नन्दि- २ विमिलि- ३ लिचिलि- ४ मिमीसकि- ५ पिनायकि- सायक- इति होता, सायकवत्, इत्यादि ॥

अक्र- शक्र- शुक्र- जात्ये......हैमन्दकी- इत्येतेपां, इत्यादि। आगस्त्य-माहेन्द्र-मायोभुव-इति होता, इत्यादि ॥

मध्यमाः

*मध्यमपौरणाः तेषां त्र्यार्षेयः इत्यादि। आगस्त्य*-माध्यम-पुरीण-इति होता, इत्यादि ॥

## शुक्लयजुर्वेदपरिशिष्टम्

### १ केवलागस्तयः

अथागस्त्यान् व्याख्यास्यामः। १ ओकूलक- २ उपकूलक- ३ लामकायनि- ४ शालङ्कायनि- ५ धारिणि- ६ वैरिणि- ७ कल्मापदण्डिः ८ अपेतरावणानां ९ शोलप्यामन- १० गोव्याधिला- ११ शिलाह्य- १२ मेनुल- १३ मान्य- १४ भ्रान्दा - १५ हतानां १६ शैवपथ- १७ अर्बुदानां १८ आगस्त्य- १९ वैकर्णायतानां २० शारगेरवाः २१ शीर्षायणानां २२ वाथाह्येरण्डेय- २३ वैरण्डेय- २४ वहौकि- २५ नह्मायनि- २६ शफाक्षि - २७ कुब्जाक्षि- २८ रम्याक्षि- २९ प्रादुराक्षि- ३० दामोर्ष्णी ३१ वसुभराः ३२ सौभरायण- ३३ भर्गायनः ३४ शैशवाः इति ॥ (प्रवराः कात्यायनलौगाक्षिवत्।)

### २ केवलागस्तयः

१ अगस्त्यः २ करम्भयः ३ कनाठाः ४ सुरोधसः ५ योगन्धायणाः ६ पुलस्त्यः ७ पुलहाः ८ क्रतुः ९ माहेन्द्र- १० मयोभुवाः इति ॥ (प्रवराः कात्यायनलौगाक्षिवत्।)

(१) शुक्लयजुर्वेदपरिशिष्टोक्तो गोत्रप्रवरविचारः जॉन ब्रौमहादायसंपादिताद् 'गोत्रप्रवरमञ्जरी' पुस्तकात्संगृहीतः।

अक्राः

१ प्राचीनप्रवराः २ वाकायेयाः ३ अक्र- ४ शक्र -५ शुक्र- ६ हंस- ७ चाप- ८ भाप- ९ हैमवर्चि - १० हिमोदकाः इत्येतेषां, इत्यादि। आगस्त्य-हैमवर्च-हिमोदक-इति होता, इत्यादि ॥

१ अक्रि- २ चक्रि- ३ अर्चि- ४ चर्चि- ५ हिमोदकि- ६ पारिणकाः इत्येतेषां, इत्यादि। आगस्त्य- पैनाक-पारिणक-इति होता। पारीणवद्- इत्यादि ॥

१ नन्दि- २ विमलिम्- ३ चिलिमि- ४ विलेयम्- ५ मिमीत्कि- ६ पिनायक- ७ सायकाः इत्येतेषां, इत्यादि। आगस्त्य-पैनाक-सायक-इति होता, इत्यादि ॥

१ अक्र- २ शक्र- ३ शर्कह्- ४ चाप- ५ भाप - ६ हैमचर्चि- ७ होमोदकाः इत्येतेषां, इत्यादि ॥

मध्यमाः

आगस्त्य-माध्यय-पौरिण-इति होता। पूरिणवद् -मध्यमयद्-अगस्त्यवद्-इत्यध्वर्युः ॥

## मत्स्यपुराणम्

मत्स्य उवाच-

१अतः परमगस्त्यस्य वक्ष्ये वंशोद्भवान् द्विजान्।
२ केवलागस्तयः
अगस्तयः करम्भयः कौशल्यः करटस्तथा ॥
सुमेधसो मयोभुवस्तथा गान्धारकायणाः।
पौलस्त्याः पौलहाश्चैव क्रतुवंशभवास्तथा ॥

(१) मत्स्य. २०२।१; गोप्र. ८७; संप्र. ६७९.
[गोत्रप्रवरनामसंग्रहः संप्र. ६५३; प्रद. १२७-१२८; संकौ. १९२; प्रसं. ४४६ इत्यत्र द्रष्टव्यः।]
१ मत्स्य. अगस्त्यश्च.
२ मत्स्य. करम्भश्च; संप्र. करमयः.
३ मत्स्य. कौशल्याः; गोप्र. कौशाल्याः.
४ मत्स्य. शकटा; गोप्र. करटाः.
(२) मत्स्य. २०२।२; गोप्र. ८७-८८; संप्र. ६७९.
७ संप्र. गन्धारकारणाः.
९ संप्र. पौनहाः.
१० संप्र. क्रतुर्वंशस्तवस्तथा; प्रद. क्रतुः वंस्तवः.

[1]ऽयार्षेयोऽमिमतश्चैषां सर्वेषां प्रवरः शुभः ।
अगस्त्यश्च महेन्द्रश्च ऋषिश्चैव मयोभुवः ।
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

पौर्णमासाः

[2]पौर्णमासाः पारणाश्च ऽयार्षेयाः परिकीर्तिताः ॥
अगस्त्यः पौर्णमासश्च पारणश्च महातपाः ।
परस्परमवैवाह्याः पौर्णमासास्तु पारणैः ॥
[3]एवमुक्त ऋषीणां तु वंश उत्तमपौरुषः ।
अतः परं प्रवक्ष्यामि किं भवानद्य कथ्यताम् ॥

मनुरुवाच —

[4]पुलहस्य पुलस्त्यस्य क्रतोश्चैव महात्मनः ।
अगस्त्यस्य तथा चैव कथं वंशस्तदुच्यताम् ॥

मत्स्य उवाच —

[5]क्रतुः खल्वनपत्योऽस्मिन् राजन् वैवस्वतेऽन्तरे ।
इध्मवाहं स पुत्रत्वे जग्राह ऋषिसत्तमः ॥
[6]अगस्त्यपुत्रं धर्मज्ञं, आगस्त्याः क्रतवस्ततः ।
पुलहस्य तथा पुत्रास्त्रयश्च पृथिवीपते ॥
[7]तेषां ते जन्म वक्ष्यामि उत्तरत्र यथाविधि ।
पुलहस्तु प्रजां दृष्ट्वा नातिप्रीतमना: स्वकाम् ॥

[1]अगस्त्यजं दृढच्युतं पुत्रत्वे वृतवांस्ततः ।
[2]पौलहाश्च तथा राजन्नागस्त्याः परिकीर्तिताः ॥
पुलस्त्यान्वयसंभूतान् दृष्ट्वा रक्षःसमुद्भवान् ।
अगस्त्यस्य सुतं धीमान् पुत्रत्वे वृतवांस्तथा ॥
[3]पौलस्त्याश्च तथा राजन् आगस्त्याः परिकीर्तिताः ।
सगोत्रत्वादिमे सर्वे परस्परमनन्वयाः ॥

[4]एते तवोक्ताः प्रवरा द्विजानां
महानुभावा नृप वंशकाराः ।
येषां तु नाम्नां परिकीर्तनेन
पापं समग्रं पुरुषो जहाति ॥

( १ ) एतेष्वगस्तिगोत्रकाण्डेषु उदाहृतानामगस्तिगोत्रगणाना सर्वेषां परस्परं विवाहो नास्ति, सगोत्रत्वात् । समानगोत्रत्वं चाष्टमस्यागस्तेः सर्वेषु प्रवरेष्वनुवृत्तेः, त्र्यार्षेयाणां द्व्यार्षेयसंनिपाताच्च । अत्र श्लोकः—'न विवाहोऽस्त्यगस्तीनां सर्वेषामितरेतरम् । समानमुनिबाहुल्यात्सगोत्रत्वाच्च कारणात् ॥'

इह जमदग्निगौतमभरद्वाजविश्वामित्रात्रिकश्यपवसिष्ठागस्तीनां अष्टाना गोत्रकाराणामृषीणा अपत्यवर्गेषु अष्टसु समानगोत्रत्वात् परस्परमविवाहमुक्त्वा तदनन्तरं आपस्तम्बसूत्रभाष्यकारेण कपर्दिस्वामिना अपरं किञ्चिदुक्तम् । किं तदिति चेत् , तदीयभाष्यं पठामः— "इह भृग्वङ्गिरसो भिन्नविवाहं कुर्वते । न चेत्समानार्षेया बहवः स्युः इति मतं बोधायनस्य ' इत्येतत्सर्वेषां प्रवराचार्याणां मतं, न केवलं बोधायनस्यैव । वसिष्ठानां कश्यपानां विश्वामित्राणां भृग्वङ्गिरसामिव भिन्नविवाहं

( १ ) मत्स्य. २०२।३–४ पूर्वार्धे ( त्र्यार्षेयाभिमताश्चैषां सर्वेषां प्रवराः शुभाः । ) ; गोप्र. ८८ ; संप्र. ६७९ योऽभिमत ( यो हि मत ) .

( २ ) मत्स्य. २०२।४–५ ; गोप्र. ८८ पारणाश्च (पौरणाश्च) पारणश्च ( पौरणश्च ) पारणैः ( पौरणै॰ ) ; संप्र. ६७९ तृतीयार्धमात्रम् .

( ३ ) मत्स्य. २०२।६ ; गोप्र. ८८ पौरुष॰ ( पूरुषः ) ; संप्र. ६७९ ( एतदुक्तमृषीणां तु वंशमुक्तमपौरुषम् । अत॰ परं प्रवक्ष्यामि किं तवान्य कथ्यताम् ॥ ) .

( ४ ) मत्स्य. २०२।७ ; गोप्र. ८८ ; संप्र. ६७९ .

( ५ ) मत्स्य. २०२।८ स्वोऽस्मिन् ( स्वोऽभूत् ) , गोप्र. ८८ ; संप्र. ६७९ राजन् ( जन्म ) ऋषिसत्तमः ( ऋषिसत्तमम् ) .

( ६ ) मत्स्य. २०२।९ ; गोप्र. ८८ ; संप्र. ६७९ आगस्त्याः क्रतवस्ततः ( आगस्त्यं क्रतवांस्तत॰ ) उत्तरार्धे ( पुलहाच्च तथा पुत्रास्तिर्यञ्चः पृथिवीपते । )

( ७ ) मत्स्य. २०२।१० तेषां ते ( तेषां तु ) ; गोप्र. ८८ ; संप्र. ६७९ .

( १ ) मत्स्य. २०२।११ दृढच्युत ( दृढास्य तु ) ; गोप्र. ८८ ; संप्र. ६७९ .

( २ ) मत्स्य. २०२।१२ कृतवांस्तथा ( वृतवांस्ततः ) ; गोप्र. ८८–८९ ; संप्र. ६७९ पुलस्त्यान्वय ( पुलस्त्योऽन्वय ) सुत ( सुतान् ) .

( ३ ) मत्स्य. २०२।१३ ; गोप्र. ८९ पूर्वार्धमात्रम् ; संप्र. ६७९ .

( ४ ) मत्स्य. २०२।१४ येषां तु नाम्ना परिकीर्तनेन ( एषां तु नाम्ना परिकीर्तितेन ) ; गोप्र. ८९ ; संप्र. ६८० वंशकाराः ( गोत्रकारा॰ ) .

गर्गं इच्छति । कठानां प्रवरे चैवम् । अन्ये तेषां भिन्नविवाहं नेच्छन्ति । तत्रैवं तेषां ऋषिपक्षाणां स्वेस्वे पक्षे न विवाहः । कुतः ? द्वयोर्बहूनां च मतविरोधे सति भूयसां मतमनुष्ठेयं, 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् सधर्मता' इति न्यायात् । ये तु पञ्चानां ऋषिपक्षाणां भिन्नविवाहमिच्छन्ति तेषां वसिष्ठपक्षेऽप्यसमानप्रवरैः सह स्यात् । कश्यपपक्षेऽपि निध्रुवासितरेभलक्ष्मणाहर्वसिष्ठनक्तंकश्यपानां परस्परतो देवलासितशाण्डिलानां च न विवाहः । विश्वामित्रपक्षेऽप्यजानां चाविवाहः" इति । एतत्परीक्ष्यं विद्वद्भिरिति । गोप्र. ८९

(२) अथागस्त्यस्य । आगस्त्यास्त्रयः । तत्र आद्यगणे विंशतिगोत्राणि, द्वितीयतृतीयगणौ निर्भेदौ ।

आपस्तम्बस्त्वाद्यमेदमेवैकार्षमपीहते
कात्यायनश्च लौगाक्षिस्त्रीनेवाह गणानिह ॥
आहाश्वलायनस्त्वाद्यमेकमेव गणं परम्
सत्याषाढोऽप्याद्यमाह आर्षेयं चापि पाक्षिकम् ॥

संप्र. ६४१

### प्रवरसंग्रहकारः

[1]त्रीण्यगस्त्य इध्मवाहो दार्ढ्यच्युत इति स्मृतः ।
एषोऽगस्त्यगणस्तस्मिन् न विवाहः परस्परम् ॥

(१) प्रपा. ३१० ( अगस्त्यदार्ढ्यच्युनकानिध्मवाहस्तथैव च । त्रयोऽगस्त्या मिथो नैते विवाह्याः स्युः कदाचन ॥ ) ; विपा. ७०६ त्रीण्यगस्त्य इध्मवाहो ( त्रीण्यगस्त्यो वीतवहो ) ; ज्योनि. १३४ त्रीण्यगस्त्य इध्मवाहो ( त्रीण्यगस्त्यो वीतवाहो ) ; बाल. १।५३ पृ. १७८ त्रीण्यगस्त्य इध्मवाहो ( त्रीण्यगस्त्यो वाहवाहो ) ; संग. १८१ विपावद्.

### स्मृत्यर्थसारः

[1]अगस्तयः साम्भवाहाः सोमवाहा इति त्रयः ।
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ॥
[2]वर्गा एकोनपञ्चाशत्प्रसिद्धा मुनिभिः स्मृताः ।
अप्रसिद्धाः परे वंश्या अन्तर्भूता इहैव ते ॥

### मण्डनः

[3]प्रवरे ये विकल्पाश्च ते चोद्वाह्या व्यवस्थिताः ।
तया व्यवस्थया चिन्त्यौ समानप्रवरेतरौ ॥
ये स्वयं कल्पितं यक्षं कुमारा न स्मरन्ति हि ।
तेषां तदनुसारेण सगोत्रत्वादिचिन्तनम् ॥
सत्याषाढो यदत्येतदन्ये तुल्यविकल्पनम् ।
आचार्यान्तरपाठानामीपद्भेदेऽप्यभिन्नता ॥

(१) स्मृसार. १६ अगस्तयः ( अगस्त्यतः ) ; संम. ६२ ; कृम. १०४८ (=).

(२) स्मृसार. १६ ; संप्र. ६४२ (=) वंश्या ( वशा ) ; संम. ६२.

(३) संर. ४५०.

# राज-वैश्यादिगोत्रप्रवरकाण्डम्

### बौधायनश्रौतसूत्रम्

[1]क्षत्रियाणां त्र्यार्षेयः प्रवरो भवति । मानव-ऐड-पौरूरवस-इति होता । पुरूरवोवद्-इडावद्-मनुवद्-इत्यध्वर्युः ॥

(१) बौश्रौप्र. ; गोप्र. ९० ( प्रवरो० ) ऐड ( ऐल ) इडावद् ( इलवद् ) ; बाल. १।५३ पृ. १७६.

[1]वैश्यानां त्र्यार्षेयः प्रवरो भवति । भालन्दन-वात्सप्र-माङ्किल-इति होता । मङ्किलवद्-वत्सप्रिवद्- भलन्दनवद्-इत्यध्वर्युः ॥

(१) बौश्रौप्र. माङ्किल ( माङ्किल ) मङ्किलवद् ( मङ्किलवद् ) वत्सप्रिवद् ( वत्सप्रवद् ) ; गोप्र. ९० वात्सप्र-माङ्किल- ( वात्सप्रि-माङ्कील- ) मङ्किलवद् ( मङ्कीलवद् ) ; बाल. १।५३ पृ. १७६.

## आपस्तम्बश्रौतसूत्रम्

**अथ क्षत्रियाणाम् । यद्यह सार्षं प्रवृणीरन् एक एवैषां प्रवरः । मानव–ऐड–पौरूरवस–इति होता । पुरूरवोवद्–इडावद्–मनुवद्–इत्यध्वर्युः ॥**

अथ क्षत्रियाणां गोत्राणि । अथ क्षत्रियाणां त्र्यार्षेयप्रवरो भवति । अह इति विनिग्रहार्थः । यदि सर्वे क्षत्रिया एकार्षेयं प्रवरं प्रवृणीरन् सार्षं सहार्षेयेण, एक एवैषां प्रवरः । अनेन ज्ञायते पृथगार्षेया अपि क्षत्रियाः सन्तीति । कपर्दि.

**अथ येषामु ह मन्त्रकृतो न स्युः सपुरोहितप्रवरास्ते प्रवृणीरन् । अथ येषां स्युरपुरोहितप्रवरास्ते ॥**

* अथ येषां क्षत्रियाणां मन्त्रकृतः ( न ) स्युः (न) भवन्तीत्यर्थः, पुरोहितप्रवरानेव ते प्रवृणीरन्, ( अथ येषां स्युः ) आत्मीयानेव प्रवरान् ( ते ) प्रवृणीरन्नित्यर्थः । कपर्दि.

**सपुरोहितप्रवरास्त्वेवं न्यायेन ॥**

तुशब्दो विशेषणार्थः । एवशब्दोऽवधारणार्थः । अयमर्थः–क्षत्रियाणा विशेषः । पुरोहितप्रवरा एव ते भवितुमर्हन्ति न्यायेन, सर्वेषा पुरोहितस्य विद्यमानत्वात् *आत्मनः कर्मण्यनधिकारात् पुरोहितप्रधाना* एव ते भवितुमर्हन्तीति । कपर्दि.

**एकार्षेया विशः । वात्सप्र–इति होता । वत्सप्रिवद्–इत्यध्वर्युः ॥**

' विट् क्षत्रमोजीयसी स्यात् ' (?) इत्यादिव्यपदेशात् बहुवचन विश इति । सर्वे विशो वैश्या एकार्षेयाः समानार्षेया भवितुमर्हन्तीति । कपर्दि.

**पुरोहितस्य प्रवरेण राजा प्रवृणीते ॥**

*ब्राह्मणस्यापि राज्यमाप्तस्य पुरोहितप्रवर एव*, पुनर्विधानात् । धूभा.

## सत्याषाढश्रौतसूत्रम्

**अथ क्षत्रियाणां त्र्यार्षेयः । मानव–ऐड–पौरूरवस–इति । पुरूरवोवद्–इडवद्–मनुवद्– इति । अथ यदि ह सार्षाः प्रवृणीरन्नेक एवैषां प्रवरः । यद्यु वै पृथक् प्रवृणीरन् येषामु ह मन्त्रकृतो न स्युः सपुरोहितप्रवरास्ते । अथ येषां स्युरपुरोहितप्रवरास्ते । सपुरोहितप्रवरास्त्वेवं न्यायेन ॥**

**एकार्षेया विशः । वात्सप्र–इति होता । वत्सप्रवद्–इत्यध्वर्युः ॥**

*द्विविधाः क्षत्रियाः सार्षा अनार्षाश्च ।* तत्र यदि सार्षा आर्षेयवन्तो राजानः प्रवृणीरंस्तदैषां प्रवर उक्त एक एव भवति । यद्येते पृथगेव प्रवृणीरन् पुरोहितप्रवरानेव प्रवृणीरन् । *येषां राज्ञा मन्त्रकृत ऋषयः*, आर्षेया इति यावत्, न स्युर्न भवेयुस्ते सपुरोहितप्रवरा ज्ञेयाः । येषां राज्ञां यदि मन्त्रकृतः स्युः अपुरोहितप्रवरास्ते ज्ञेयाः । मन्त्रकृतो राजानः सपुरोहितप्रवरास्त्वेवं एतत्प्रकारेण न्यायेन भवन्ति, नान्यथा । कोऽसौ न्यायोऽभिमतः ? स उच्यते– सर्वेषा पुरोहितस्य विद्यमानत्वात् तेन च विना कर्मानधिकारात्, पुर एनं हितमेतत्सर्वं नयतीति पुरोहितशब्दव्युत्पत्तेः, *आत्मीयप्रवरपक्षे सर्वेषा समानप्रवरत्वाद्*विवाहः प्रसज्येत इति न्यायः । अयमेव न्यायो वैश्यानामपि द्रष्टव्यः ।

*एवं च विवाहे क्षत्रियाणा वैश्याना च पौरोहित्य*प्रवरैक्यप्रयुक्त एव निषेधः, न तु स्वप्रवरैक्यप्रयुक्त इति सिद्धम् । कर्मणि वरणादौ भवतु विकल्पः, उक्तसूत्रस्य कर्माधिकारे प्रवृत्तेः । सोऽपि व्यवस्थितः, येषा कुले यादृशं वरणमागतं तथैव कर्तुमुचितमिति विप्रेष्वपि व्यवस्थादर्शनात् । मन्त्रकृद्वता सर्वराज्ञामपुरोहितप्रवराणामपि विवाहमात्रे सपुरोहितप्रवरत्वमेवेति फलितोऽर्थः । राजभ्योऽर्पितानां दत्तानां ब्राह्मणाना राज्ञा ये प्रवरास्ते

---

* कंसचिह्नान्तर्गतो ग्रन्थस्त्रुटित इति मत्वाऽस्माभिः कल्पितः । किंच ' पुरोहितप्रवरानेव ते प्रवृणीरन् ' इति ग्रन्थस्य सूत्रत्वेन, ' आत्मीयानेव ' इत्यादेस्तद्व्याख्यानत्वेन च भाष्यपुस्तके मुद्रणप्रमादिकम् । सूत्रपुस्तके ' पुरोहित॰ ' इति सूत्रं नास्ति ।

( १ ) आपश्रौ. २४।१०।११–१६ सार्षं ( सार्ष्टिं ) वत्सप्रिवद्– ( वत्सप्रवद् ) ; गोप्र. ९० यद्यह सार्षं ( यद्युह स्यात् ) ऐड ( ऐल ) इडावद् ( इलवद् ) अथ येषामु ( येषामु ) वात्सप्र ( वात्सप्रि ).

( १ ) आपश्रौ. २१।६।१० .

( २ ) सश्रौ. २१।३।१६ ; संर. ४२५.

एव तेषाम् । एवं ब्राह्मणेभ्यः अर्पितानां राज्ञां ब्राह्मणानां ये प्रवरास्ते तेषामिति । तथा च सूत्रम्– 'तथा ब्राह्मणानां राजार्पितानां राज्ञां वा ब्राह्मणार्पितानाम्' इति । प्रव.

**पुरोहितस्य प्रवरेण राजा प्रवृणीते । पुरोहितस्याऽऽर्षेयेणाऽऽवेदयेदिति राज्ञो विज्ञायते ॥**

राज्ञोऽध्वर्युर्होता वा, स्वस्याऽऽर्षेयाभावात् । तत्रापि श्रुतिं प्रमाणयति– पुरोहितस्येति । वैज.

**निषादरथकाराश्च यमृषिमनुब्रुवते तेन तेषां प्रवरं प्रवृणीते ॥**

तेषामप्याधानमग्निहोत्रं दर्शपूर्णमासौ च वक्ष्यत्याचार्यः, तदर्थमिदमुक्तम् । तेषां पुरोहितोऽपि नास्ति । यमृषिमनुब्रुवते वंशोत्पादकत्वेन । वैज.

**तथा ब्राह्मणानां राजार्पितानां राज्ञां वा ब्राह्मणार्पितानाम् ॥**

अर्पकप्रवरेणेत्यर्थः । वैज.

## आश्वलायनश्रौतसूत्रम्

**पुरोहितप्रवरो राज्ञाम् ॥**[1]

उत्तरविवक्षार्थमेतत्, 'पौरोहित्यान् राजविशाम्' इति सिद्धत्वात् । गानावृ.

**अथ यदि सार्ष्टं प्रवृणीरन् । मानव–ऐल–पौरूरवस–इति ॥**[2]

'राजर्षीन् वा राज्ञाम्' इत्युक्तं, तस्य स्वरूपमेतेनोच्यते । यदि राज्ञां राजर्षीन् वृणीते तदेत्यर्थः । सृष्टौ भवं सार्ष्टं समुत्पत्तिरित्यर्थः । तथाहि सर्वेषां राजन्यानां मन्विलपुरूरवादयो वंशकरा इति स्मर्यन्ते, तेषां वरणमित्यर्थः । गानावृ.

**पौरोहित्यान् राजविशाम् ॥**[3]

पुरोहितस्य ये आर्षेयास्तानेव राजन्यवैश्ययोः प्रवृणीते । बहुवचनं त्रैवर्णिकस्त्रीजातानामनुलोमानां संग्रहार्थम् । गानावृ.

(१) सश्रौ. २।१।३.
(२) आश्रौ. २।६।१५ ; गोप्र. ९० सार्ष्ट (सार्षं).
(३) आश्रौ. १।३।३.

**राजर्षीन्वा राज्ञाम् ॥**

मानवैलपौरूरवसेत्येवं वा पौरोहित्यान्वा । गानावृ.

## कात्यायन–लौगाक्षि–श्रौतसूत्रम्

**पुरोहितप्रवरो राज्ञाम् । एतेनैव वैश्यप्रवरो व्याख्यातः । यदि स ऋषीन् प्रवृणीयात् मानव–ऐल–पौरूरवस–इति ब्रूयादिति ॥**[1]

## कात्यायनश्रौतसूत्रम्

**पुरोहितार्षेयेण वा ॥**[2]

एतद्राजविषयम्, पुरोहितोपपत्तेः । तथा चोत्तरसूत्रम् । कर्क.

**क्षत्रियवैश्ययोश्च नित्यम् ॥**

क्षत्रियोऽभिषेकक्रियारहितोऽभिप्रेतः, अधस्तनसूत्रारम्भवैयर्थ्यप्रसङ्गात् । अनयोर्नित्यं पुरोहितार्षेयोच्चारणम्, राज्ञस्तु विकल्पः । कर्क.

## मत्स्यपुराणम्

**मनुर्वैवस्वतश्चैव इडो राजा पुरूरवाः ।**
**क्षत्रियाणां वरा ह्येते विज्ञेया मन्त्रवादिनः ॥**
**भलन्दनश्च वत्सश्च मङ्किलश्चेति ते त्रयः ।**
**एते मन्त्रकृतो ज्ञेया वैश्यानां प्रवराः सदा ॥**[3]

(१) तत्र द्विविधाः क्षत्रियाः । केषांचित् मन्त्रकृतो न सन्ति । केषाचित् सन्ति । येषां सन्ति आत्मीयमेव ते प्रवृणीरन्, येषा तु न सन्ति ते पुरोहितप्रवरान् प्रवृणीरन् इति पक्षद्वयमुपन्यस्य पुरोहितप्रवरानेव सर्वे क्षत्रियाः प्रवृणीरन् इति सिद्धान्तमाह– सपुरोहितप्रवरास्त्वेवं न्यायेनेति । कः पुनः न्यायोऽभिप्रेतः? सोऽयमुच्यते– सर्वेषां पुरोहितस्य विद्यमानत्वात्, तेन च विना कर्मानधिकारात्, पुर एनं हितमेव सर्वं नयतीति पुरोहितशब्दव्युत्पत्तेः, आत्मीयप्रवरपक्षे सर्वेषां समानप्रवरत्वादविवाहः प्रसज्यते इति न्यायः । अयमेव न्यायो वैश्यानामपि द्रष्टव्यः, तेषा च पुरोहितस्य प्राड्विवाकस्य दार्विहोमिकस्य विद्यमानत्वात्, आत्मीयप्रवरपक्षे समानप्रवरत्वात्

(१) गोप्र. ९०.
(२) काश्रौ. ३।२८–२९.
(३) कृभ. १०५४.

अविवाहप्रसक्तेश्च । राजशब्दस्य अभिषिक्तमात्रवचनत्वात् ब्राह्मणाश्च राज्यं प्राप्ताः पुरोहितप्रवरेणैव प्रवृणीरन् इत्येके मन्यन्ते, तेषामपि पुरोहितस्य विद्यमानत्वात् । एतस्मिन् पक्षे पुरोहितसमानगोत्रैश्च सह अविवाहश्च ।

गोप्र. ९०–९१

( २ ) ऐलाद्याः पुरूरवाश्च ( ? पौरूरवसाश्च ) क्षत्रियाः । तेषा मनुर्गोत्रं, त्रि( ? त्र्य. ) प्रवराः । मानवैलपौरूरवसेति होता, मनुवदिलवत्पुरूरवोवदित्यध्वर्युरिति *कात्यायनानुयायिनः । पुरूरवोवदिलवन्मनुवदिति* लौगाक्ष्यादयः ।

वैश्याः भालन्दनादयः, तेषा भलन्दनो गोत्रम् । भालन्दनवात्सप्रमाङ्कीलेति होता, भलन्दनवत्सप्रवन्मङ्कीलवदित्यध्वर्युरिति कात्यायनादयः । मङ्कीलवत् सप्रवद्भलन्दनवदित्यध्वर्युरिति लौगाक्ष्यादयः । वात्सप्रेत्येकार्षेया इति निप्रवरा वेति दक्षः ।

तत्र द्विविधाः क्षत्रियाः, केचिद्विद्यमानमन्त्रदृशः, केचिदविद्यमानमन्त्रदृशः । तत्र विद्यमानमन्त्रदृशः स्वीयानेव प्रवरान् प्रवृणीरन् । ये तु अविद्यमानमन्त्रदृशस्ते पुरोहितप्रवरान् प्रवृणीरन् । स्वीयप्रवरसत्त्वेऽपि स्वस्वपुरोहितगोत्रप्रवरपक्ष एव मिताक्षराकारमेधातिथिप्रभृतिभिराश्रितः । आपस्तम्बेनापि पक्षद्वयमुक्त्वा निर्णीतम्– ' सपुरोहितप्रवरास्त्वेव न्यायेन ' इति । अयं च न्यायः– मन्वादिषु गोत्रप्रवरलक्षणाभावः, अगस्त्याष्टमसप्तर्षीणां ब्राह्मणत्वेन तदपत्यत्वाभावात्, क्षत्रियवैश्ययोर्गोत्रत्वाभावात् *सप्रवरत्वस्य सुतरामभावः, नापि सर्वे मन्त्रकृत* इति । यत्तु अत्र प्रवरमञ्जरीकारादय ऊचुः– सर्वेषां राजन्यवैश्यानामेकरूपगोत्रप्रवरत्वे सर्वेषां परस्परमविवाहप्रसङ्ग इति न्यायः, स विशेषरूपेण सवर्णाविवाहोपदेशेन सामान्यरूपसगोत्रसप्रवरविवाहनिषेधबाधात् सुपरिहर इत्याहुः । तस्मात् सर्वैः क्षत्रियैर्वैश्यैर्वा वरणे यः पुरोहित उपात्तस्तद्गोत्रप्रवरैरेव तेषा कर्मानुष्ठानं विवाहाविवाहौ चेति ।

संप्र. ६५९

## जैमिनिसूत्रम्

[1]निषादः ॥

*निषादस्थपतेः रथकारस्य च संकरजातित्वेन ऋषिसंततित्वाभावान्नाऽऽर्षेयवरणमिति प्राप्ते*, साक्षादृष्यपत्यत्वस्य त्रैवर्णिकेष्वप्यभावात् परंपरया तत्संबन्धे चाविच्छिन्नपारम्परिक-तत्तद्वंशस्मृतिव्यतिरिक्त-प्रमाणाप्रसरात् तस्याश्च तेष्वप्यविशिष्टत्वात् सर्वस्यैव जगत ऋषिवंश्यतायाः पुराणेषु कथनाच्च स्यादेव तेषामप्यार्षेयवरणम् ।

भाट्टचन्द्रिका

तथा ब्राह्मणानाम् ॥

क्षत्रियादिवृत्तिमाश्रिता ब्राह्मणा राजोपेताः । ब्राह्मणेन *पुत्रत्वेन क्रीता ब्राह्मणवृत्त्या जीवन्तः क्षत्रिया* ब्राह्मणोपेताः । तेषा पुरोहितप्रवरस्वप्रवरयोर्विरोधे सति विकल्पे, परेण पूर्वबाधे वा, द्विगोत्रवदुभयमेलने वा प्राप्ते, राजोपेतादीना प्रच्युतस्वकर्मणामपि ब्राह्मणत्वादिजातेरनपायात् स्वस्वजातीयमेव वरणम् । ' मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ' इत्यादयस्तु प्रायश्चित्तविधिशेषभूता निन्दार्थवादा न जातिनाशपराः ।

भाट्टचन्द्रिका

( १ ) जैसू. १५।४।६–७.

# असंप्रज्ञातबन्धुगोत्रप्रवरकाण्डम्

---

## आपस्तम्बश्रौतसूत्रम्

[१]अथासंप्रज्ञातबन्धुराचार्यामुष्यायणमनुप्रब्रवीताचार्यप्रवरं प्रवृणीत ॥

( १ ) सम्यक् ज्ञातः प्रवरो यस्य सः संप्रज्ञातबन्धुः आचार्यामुष्यायणं आचार्यप्रवरमनुप्रब्रवीत आनुपूर्व्येण ब्रूयात् । आचार्यप्रवरेण प्रवृणीत इत्यर्थः । सामर्थ्यात् ब्राह्मणस्यायं विधिः । क्षत्रियाणां पुनः असंप्रज्ञातबन्धूनां पुरोहितप्रवर एव । कपर्दि.

( २ ) अस्यायमर्थः— बन्धुः गोत्रं प्रवरो वा सम्यगप्रज्ञातो येन सः असंप्रज्ञातबन्धुः सत्यकामादिः । यथा सत्यकामो जाबालो गौतममाचार्यम् ' उपेयां भगवन्तम् ' इत्युक्त्वा शरणं प्रपन्नो गौतमेन च ' किंगोत्रो नु सोम्यासि ' इति च गोत्रं पृष्टः सन् आह— ' नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि ' इति । एवमसंप्रज्ञातबन्धुः आचार्यामुष्यायणं आचार्यगोत्रं प्रवरं वा अनुब्रवीत आनुपूर्व्यात् ब्रूयात् । ' आचार्यप्रवरं वृणीत ' इत्यनेनापि तथाऽर्थमाह । ननु ' यो वा अन्यः सन्नन्यस्याऽऽर्षेयं प्रवृणीते स वा अस्य तदपिरिष्टं वीतं वृङ्क्ते ' ( आपश्रौ. २४।५।१५ ) इत्याद्या दोषश्रुतयो बाध्येरन् । नेत्याहुः, औरसपुत्रादपि शिष्यस्य श्रेष्ठपुत्रत्वात् । यथाऽऽह आपस्तम्ब.— ' यमग्ने ( ? यस्मात् ) धर्मानाचिनोति स आचार्यः, तस्मै न द्रुह्येत कदाचन, स हि विद्यातस्तं जनयति, तच्छ्रेष्ठं जन्म, शरीरमेव मातापितरौ जनयतः ' ( आप. १।१।१४-१८ ) इति । बोधायनोऽप्याह— ' यानुपादयते यानुपनयते यानध्यापयते यान्याजयते ते सर्वे पुत्रा भवन्ति ' इति । यदि चैवमाचार्यगोत्रैः शिष्याणां न विवाहः, समानगोत्रत्वात् समानप्रवरत्वाच्च । गोप्र. ९१–९२

## सत्याषाढश्रौतसूत्रम्

[१]अथानाज्ञातबन्धोः पुरोहितप्रवरेणाऽऽचार्यप्रवरेण वा ॥

अथानाज्ञातबन्धूनां गोत्रप्रवरकाण्डं विधत्ते— न आ सम्यग्ज्ञातो बन्धुर्येन सः अनाज्ञातबन्धुः, तस्य अनाज्ञातबन्धोः । ' असंप्रज्ञातबन्धोः ' इति दर्शपूर्णमासप्रकरणस्थस्य प्रवरविधायकस्य सूत्रस्य पाठः । न सम्यक्प्रज्ञातो बन्धुर्येन सः असंप्रज्ञातबन्धुः इति तद्विग्रहः । अर्थस्तु स एव । तस्य पुरोहितस्य पूर्वोक्तस्य प्रवरेण, धर्मोपदेष्टा आचार्यः, तस्य वा प्रवरेण प्रवरणमित्यर्थः ।

ननु— ' यो वा अन्यः सन्नन्यस्याऽऽर्षेयं वृणीते स वा अस्य तदपिरिष्टं वीतं वृङ्क्ते ' ( सश्रौ. २१।३।५ ) इति निषेधस्य जागरूकत्वात् कथं पुरोहिताचार्यप्रवरप्रवरणम् ? इति चेत्, न, एतस्य प्रवरज्ञानसत्त्व एव प्रवृत्तेः । २१।३।१७

पुरोहितगोत्रप्रवरयोः आचार्यगोत्रप्रवरयोश्चाज्ञाने तु स्मृत्यन्तरे ' आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम् । दत्त्वाऽऽत्मानं तु कस्मैचित्तद्गोत्रप्रवरो भवेत् ॥ ' इति । अत्र आचार्यग्रहणं पुरोहितोपलक्षणम् । आचार्यशब्देन निषेकादिक्रियाकर्ता । द्विज इति श्रवणात् ब्राह्मणक्षत्रियवैश्यानां विधिः । यत्तु— ' गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ' इति, तत्पुरोहिताचार्ययोर्गोत्राज्ञाने सत्येव विवाहातिरिक्तविषयम् । प्रय. २१।३।१८

[२]तथाऽसंप्रज्ञातबन्धोः पुरोहितप्रवरेणाऽऽचार्यप्रवरेण वा ॥

न ज्ञायते बन्धवो वंश्या यस्य, तस्येत्यर्थः । वैज.

---

( १ ) आपश्रौ. २४।१०।१७ ; गोप्र. ९१ प्रवृणीत ( वृणीत ) ; गोप्र. ६६० मनु. प्रवृणीत ( मनुवदीत्याचार्यप्रवरं वृणीत ) बौधायनः ; गोप्रं. १९५ मनु ... प्रवृणीत ( मनुवदीत्याचार्यप्रवरं वृणीत ) बौधायनः ; सत्या. १०५९ ( अथासंप्रज्ञातबन्धुराचार्यामुष्यायणमनुप्रब्रवीताचार्यप्रवरं वृणीत ) बौधायनः .

( १ ) सश्रौ. २१।३।१७ ; सिन्धु. १०५५ ज्ञात ( ज्ञान ) ; संर. ४२६ .

( २ ) सश्रौ. २।१।२ .

### व्याघ्रः

गोत्रनाशे तु काश्यपम् ॥

### मण्डनः

स्वगोत्राद्यनभिज्ञानां विप्राणामियमेव दिक्।
गुरुवंशाविदन्यस्मै स्वं दत्त्वा तत्कुलो भवेत् ॥
यद्वा स्वप्रवराज्ञाने जमदग्नीनुपाश्रयेत् ।
गोत्रकार्येषु सर्वेषु किन्तु नैवोद्वहेत्कचित् ॥

(१) स्मृच. (श्रा.) ४८१ काश्यपम् (कश्यपः) व्याघ्रपादः; संप्र. ९१६ (गोत्राज्ञाने तु काश्यप') व्याघ्रपात्; संम. ६१; स्मृक. १५ व्याघ्रपादः.

(२) संर. ४५०.

(३) संप्र. ६६०; सिन्धु. १०५६ यद्वा स्व (स्वगोत्र) ग्नीतु (सिंधु) पू., दिवोदासीयेऽपि इत्युक्तम्; संर. ४५०.

### अनिर्दिष्टकर्तृकवचनानि

आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम् ।
दत्त्वात्मानं तु कस्मैचित्तद्गोत्रप्रवरो भवेत् ॥
यद्वा स्वगोत्रप्रवरविधुरो जमदग्निजः ।
विवाहं च न तेनैव गोत्रेण तु समाचरेत् ॥
गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमिष्यते ॥

'गोत्रस्य त्वपरिज्ञाने' इति यत् तदाचार्यगोत्रस्याप्यपरिज्ञाने विवाहातिरिक्तविषयं च शूद्रवदिति ज्ञेयम् ।
संप्र. ६६०

(१) सिन्धु. १०५५; संकौ. १९५; संर. ४२७ स्मृत्यन्तरम्.

(२) सिन्धु. १०५५.

(३) संप्र. ६६०; संकौ. १९५; धूभ. १०५६ (स्वगोत्रस्यापरिज्ञाने काश्यपं गोत्रमुच्यते।); संर. ४२७ मिष्यते (मुच्यते).



## सार्ववर्णिकप्रवरकाण्डम्

### बौधायनश्रौतसूत्रम्

मनुवदिति वा सर्वेषां गोत्राणाम् । 'मानव्यो हि प्रजाः' इति विज्ञायते ॥

### आपस्तम्बश्रौतसूत्रम्

अथाह ताण्डिन एकार्षेयं सार्ववर्णिकं समामनन्ति ॥

अह इति विनिग्रहार्थः । ताण्डिनो नाम छन्दोगाः । एकार्षेयं एकमेवाऽऽर्षेयं सार्ववर्णिकं समामनन्ति पठन्ति।
कपर्दि.

मानव-इति होता । मनुवद्-इत्यध्वर्युः । 'मानव्यो हि प्रजाः' इति हि ब्राह्मणमिति हि ब्राह्मणम् ॥

(१) मानवेति होता प्रवृणीते, मनुवदित्यध्वर्युः । कुत एतदवगम्यते । मानव्यः मा[ मानव ]जातिसामान्यान्यामित्यधिकारलक्षणयुक्ताः शब्देनोच्यन्ते । यद्यपि ताण्डिना संदर्शनेन सर्वे मानवगोत्राः प्रभवन्ति, तथापि भिन्नविवाहं कुर्वन्तीत्येव प्रवरणमात्र एव कल्पितत्वात् । यस्माद्धेतोः ब्राह्मणं प्रत्यक्षमेव श्रुतम् । द्विरुक्तिर्मङ्गलार्था । कपर्दि.

(२) हि यस्मात् एवं तैत्तिरीयाणां ब्राह्मणं प्रत्यक्षमेव पठ्यते 'मानव्यो हि प्रजाः' इति । जातः (? ज्ञानं) सामर्थ्यमर्थित्वं शास्त्रापर्युदासश्च येषां ते त्रैवर्णिकाः प्रजाशब्देनोच्यन्ते । द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्थं मङ्गलार्थं वा । गोप्र. ९५

अपि वा नार्षेयं वृणीते । मनुवदित्येव ब्रूयात् ॥

(१) बौश्रौप्र.; गोप्र. ९५ इति विज्ञायते (इति च विज्ञायते इति); संम. ६१ (=) (मानवेति वा सर्वेषाम्) एतावदेव.

(२) आपश्रौ. २४।१०।१८; गोप्र. ९५ अथाह (अथ).

(१) आपश्रौ. २।१६।१२.

## सत्याषाढश्रौतसूत्रम्

अथ ह ताण्डिन एकार्षेयं सार्ववर्णिकं समामनन्ति । मानव–इति होता । मनुवद्–इत्यध्वर्युः । 'मानव्यो हि प्रजाः' इति हि ब्राह्मणमिति हि ब्राह्मणम् ॥

सार्ववर्णिकमार्षेयं दर्शयति– ताण्डिन आचार्या एकार्षेयं मानवेत्येवंरूपं प्रवरं सार्ववर्णिकं सर्वेषां वर्णाना ब्राह्मणादीनां समामनन्ति । तत्र हेतुभूतां श्रुतिमुदाहरन्ति – 'मानव्यो हि प्रजाः' इति हि ब्राह्मणमिति । हि यस्मादेवं तैत्तिरीयशाखायां ब्राह्मणं प्रत्यक्षमेव पठ्यते अग्निचयन उखाप्रकरणे 'मानव्यो हि प्रजाः' इति, तस्मादित्यर्थः । द्विरुक्तिः प्रश्नसमाप्तिद्योतनार्था । एतत्सूत्रं वैशेषिकप्रवरनिषेधपरं न भवति, किंतु सार्ववर्णिकप्रवरस्तुतिपरम् ।

ननु एवं 'कृत्स्नमेकेषां प्रवरं प्रतिषिध्य मनुवदित्येतद्विदधाति' इत्येतत्सूत्रविरोध इति चेत्, न, अत्र प्रतिषेधशब्देन अप्राशस्त्यस्यैवोक्तत्वात् । एवं च कृत्स्नवैशेषिकप्रवराणामप्राशस्त्य उक्ते सार्ववर्णिकस्य प्रशस्तत्वमर्थात्सिद्धं भवति । वैशेषिका: प्रवरा दुर्विज्ञेया बहुप्रयासलभ्याश्च, तस्माच्च कार्याः, अयं तु लघुतरप्रयत्नलभ्यत्वात्कर्तव्य इत्येवं सार्ववर्णिकस्य प्रवरस्य प्रशस्तत्वम् । कथं पुनरयमभिप्रायो गम्यत इति चेत्, अन्यथा प्रवराध्यायानारम्भप्रसङ्गात् । आरभ्यते चायम् । अयं प्रवर: श्रौतकर्मवरणाभिवादादिष्वेव, न विवाहे, अन्यथा समानप्रवरत्वाद्विवाहाभावप्रसङ्गात् । प्रच.

कृत्स्नमेकेषां प्रवरं प्रतिषिध्य मनुवदित्येव विदधाति ॥

एकेषां शाखिनां ब्राह्मणं सर्वं प्रवरं प्रतिषिध्य अविशेषेण मनुवदित्येव ब्रूयादिति विदधाति । वक्ष्यति प्रवराध्याये 'मानव्यो हि प्रजा.' इति । वैज.

कृत्स्नस्य प्रवरस्य स्थाने मानवेत्येव ब्रूयादित्येकेषाम् ॥

(१) मध्यौ. २१।३।१८ ; सं. ४२९ .
(२) मध्यौ. २।१।३ .
(३) मध्यौ. २१।३।१९.

## आश्वलायनश्रौतसूत्रम्

सर्वेषां मानवेति संशये ॥

अज्ञाने संशये च त्रयाणां वर्णानां मानवेत्ययं शब्दः प्रवरो भवेत् । गानाह.

## कात्यायन–लौगाक्षि–श्रौतसूत्रम्

अपि हैके, मानवेति, मनुवदित्येकैकमार्षेयं सार्ववर्णिकं प्रवृणीते । कस्य हेतोरिति । 'मानव्यो हि प्रजाः' इति । तदेतन्नोपपद्यते । न दैवैर्न मनुष्यैरार्षेयं प्रवृणीते । तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानामुक्तं भवतीति ॥

व्याख्यातमेतदेव सूत्रं आदौ परिभाषाकाण्डे । तथा दर्शपूर्णमासप्रकरणे चापस्तम्बः प्रतिवर्णं प्रवरविशेषान् प्रवरदोषं चोक्त्वा पश्चादिदमाह– 'अपि वा नार्षेयं वृणीते, मनुवदित्येवं ब्रूयात्' इति । अत्र हि मानवे प्रवरकाण्डे सूत्रकाराणामभिप्रायाः पूर्वापरविरोधात् परस्परविरोधाच्च अत्यन्तदुरवबोधा इव अवभान्ति । कथमिति चेत्, बौधायनेन तावदिमं सार्ववर्णिकं प्रवरमुक्त्वा न प्रतिषिद्धो वैशिकः ( ? वैशेषिकः ) प्रवरः । कात्यायनादिभिः सार्ववर्णिकं प्रवरं दूषयित्वा वैश्यविषयत्वेनोक्तः सः । आपस्तम्बाद्यैस्तु दर्शपूर्णमासयोः इह ( च ) वैशेषिकप्रवरानुक्त्वा अन्ते सार्ववर्णिकं प्रवरमुक्त्वा न प्रतिषिद्ध इति । पूर्वापरविरोधाच्च भवति बहुविदां व्यामोहः । अतो दुरवबोधो गोत्रसूत्रकाराणामभिप्राय इति । अपि च सार्ववर्णिके प्रवरे अभ्युपगम्यमाने सति सर्वेषां वर्णानां समानप्रवरत्वात् विवाहासंभवात् वर्णसंकरप्रसङ्गात् मूलोच्छेदः प्रसज्यते । अत्र सूत्रकाराणामभिप्रायविदः परिहरन्ति– यदेतदापस्तम्बाद्युक्तं प्रतिवर्णं प्रवरप्रतिषेधपरं न भवति । किंपरं तर्हि ? वक्ष्यमाणसार्ववर्णिकप्रवरस्तुतिपरम् । कथम् ? प्रतिवर्णमुक्ता. प्रवरा दुर्ज्ञेया बहुप्रयासलभ्याश्च, तस्माच्च कार्याः, अयं तु वक्ष्यमाणो लघुतरप्रयत्नलभ्यत्वात् कर्तव्य इति स्तुतिः । कथं पुनरयमभिप्रायोऽवगम्यत इति चेत्, अन्यथा प्रवराध्यायानारम्भप्रसङ्गात् । आरब्धश्च । यत्तु

(१) माश्रौ. १।१।३ .
(२) गोप्र. ९५.

कात्यायनोक्तं एकार्षेयप्रवरप्रतिषेधनं, तत् प्रतिषेधनपरं न भवति। किं तर्हि? वर्णद्वयव्युदासेन सार्ववर्णिकप्रवरस्य वैश्यविषयत्वोपदेशपरम्, 'तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानामुक्तं भवति' इति वाक्यशेषात्। यत् पुनरेतदुक्तम्– सार्ववर्णिकप्रवरपक्षे समानगोत्रत्वात् विवाहाद्यनुपपत्तिरिति, तत्रापि ब्रूमः– योऽयं समानप्रवरैः सह प्रतिषेधः सोऽसौ वैश्य(वैशेषिक)प्रवरविषयत्वेन व्याख्येयः, सार्ववर्णिकप्रवरपक्षे तस्य अवर्जनीयत्वात् एकदेशश्रामवत्। वैश्यविषय एवायमेकार्षेयो मानवः प्रवरश्चोक्तः। गोप्र. ९६

## कात्यायनश्रौतसूत्रम्

मनुवदिति वा सर्वेषाम्[1]॥

ब्राह्मणादीनां मनुवदिति प्रवरणम्। तच्च सकृदेव, अभ्यासे कारणाभावात्। यच्चोक्तम्– 'इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रः' इति, तत्प्रदर्शनार्थम्।

कर्क.

## जैमिनिसूत्रम्

मनुवत्[2]॥

'आवृश्च्यत एष ओषधिवनस्पतिभ्यो यः परान् वृणीते' इति त्र्यार्षेयवरणं विनिन्द्य 'मनुवदित्येव ब्रूयात्' इति श्रुतम्। अयं च मनुवत्कल्पो राजन्यवैश्यपरः, तेषां ब्राह्मणर्षिसंतानत्वाभावादिति प्राप्ते, त्र्यार्षेयवरणप्रतिषेधपूर्वकं मनुवत्कल्पविधानात् तस्य च प्रसक्तिपूर्वकत्वेन तस्याश्च ब्राह्मणेष्विव 'पुरोहितस्यार्षेयेण वेदयेत्' इति वचनान्तरेण राजन्यवैश्ययोश्च सत्वात् त्रैवर्णिकानामार्षेयमनुवत्कल्पयोस्तुल्यवद्विकल्पः। वस्तुतस्तु– निन्दार्थवादस्य विधिशेषत्वेन प्रतिषेधकल्पकत्वाक्षमतया कल्पने च वाक्यभेदापत्तेर्मनुवत्कल्पस्य च त्र्यार्षेययोग्यातिरिक्तब्राह्मणेषु सावकाशत्वात् सौत्रो विकल्पशब्दो व्यवस्थितविकल्पपरः। पुरोहितस्येत्यादिकं स्वस्यैव गुणसूत्रं पञ्चावत्तातिरिक्तपरत्वेन चतुरवत्तस्येव ब्राह्मणातिरिक्तपरत्वेन मनुवत्कल्पस्य व्यवस्थाया निरासार्थम्। राजन्यवैश्ययोः पार्थक्येन विधिदर्शनाच्च तेषु मनुवत्पक्षस्य नियता प्रवृत्तिः –इत्येव व्याख्येयम्। भाट्टचन्द्रिका

## मण्डनः

मानवेति तु सर्वेषां यद्यपि प्रवरः समः[1]।
तथापि तेन साम्येन न विवाहो निषिध्यते॥

(१) काश्रौ. ३।३०. (२) जैसू. १५।४।५.

(१) संर. ४५०.

# समाप्तिसूत्रकाण्डम्

## कात्यायन-लौगाक्षि-श्रौतसूत्रम्

[1]व्याख्याताः प्रवराः। वैकृतानि व्याख्यास्यामः। अथो द्वितय्यो ब्राह्मणानां समुत्पत्तयो भवन्ति– संहतकुलीनाश्च द्व्यामुष्यायणकुलीनाश्च। तेषां समुत्पत्तिं प्रतिपत्तिं च व्याख्यास्यामः। येषां

(१) गोप्र. १०४-१०५ (व्याख्याताः प्रवराः। उत्पत्ती प्रतिपत्तीश्च व्याख्यास्यामः। अथो त्रिविधा ब्राह्मणानां समुत्पत्तयो भवन्ति। उत्पत्तिकुलीनाः संहतकुलीना द्व्यामुष्यायणकुलीनाश्च। येषां पुरस्तात् प्रजोत्पत्तिरविच्छिन्ना भवति ते उत्पत्तिकुलीनाः। ये सप्त भूय [पुरुषं] पञ्चपुरुषं वा योनिश्रुतशीलवृत्तसंपन्नाः श्रुतवन्तः पितृमातृसंततया ऋष्य आर्षेयास्ते संहतकुलीना आर्षिजीना भवन्ति। अथ दत्तकक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणानार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति। यथैतच्छौङ्गशैशिरीणां भरद्वाजौदमेधानां लौगाक्षीणां यानि चान्यान्येवंसमुत्पत्तीनि भवन्ति तेषां तथैव प्रवराः स्युः। द्विप्रवरसंनिपाते पूर्वः प्रवर उत्पादयितुः उत्तरः परिग्रहीतुः। अपि वा त्रयोऽन्ये त्रयोऽन्ये तत्र तथा कुर्यात् न पञ्चातिप्रवृणीत इति ह्याह त्रीनेव पञ्च वा प्रवृणीयात्। अथ यदि पितृव्येण ज्ञातिनैकार्षेयेण जातास्ते संहतकुलीनाः परिग्रहीतु-

पुरुषतः प्रजोत्पत्तिरविच्छिन्ना भवति ते संहत-कुलीनाः। ये सप्त भूयः पञ्चपुरुषं वा योनि-श्रुति-शील-वृत्त-संपन्नाः श्रुतवन्तश्च ते पितृमन्तः पैतृमत्या ऋषय आर्षेयास्त आर्त्विजीना भवन्ति।

अथ दत्तक-क्रीतक-कृत्रिम-पुत्रिकापुत्राः पर-परिग्रहेण नानार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति, यथैतच्छौङ्गशैशिरीणां भारद्वाजौदमेघीनां लौगाक्षीणां, यानि चान्यान्येवंसमुत्पत्तीनि कुलानि भवन्ति, तेषां तथैव प्रवराः स्युः। द्विप्रवरसंनिपाते पूर्वः प्रवर उत्पादयितुः उत्तरः परिग्रहीतुः। अपि वा त्रयोऽन्ये त्रयोऽन्ये। तत्र तथा कुर्यात्। न पञ्चातिप्रवृणीत इति। तस्मात् त्रीनेव पञ्च वा प्रवृणीयात्।

अथ यदि पितृव्येण ज्ञातिनैकार्षेयेण जातास्ते संहतकुलीनाः परिग्रहीतुरेव भवन्ति। अथ यदि तेषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युः। यद्यपि स्यादुभाभ्यामेव दद्युरित्याचार्यवचनम्। द्वे कुर्यादेकस्मिन् श्राद्धे वा पृथगुद्दिश्यैकपिण्डे द्वावनुकीर्तयेत्, परिग्रहीतारं चोत्पादयितारं चातृतीयात्पुरुषात्।

आर्षेयाज्ञानादेतेषामेव प्रवराणामाद्यं प्रवरं प्रवृणीते, प्रतिप्रश्नेन वा यं यस्योपपन्नं मन्येत तं तस्य कुर्यात्।

पुरोहितप्रवरो वा स्यादाचार्यप्रवरो वा राजन्यः। एतेनैव वैश्यस्य प्रवरो व्याख्यातः। यदि सार्ष्टिं प्रवृणीते मानव- ऐड- पौरूरवस- इति होता ब्रूयात्। पुरूरवोवद्-इडावद्-मनुवद्-इत्यध्वर्युः। यदि पित्र्यमश्नीयुर्न विवहेयुः। पुरोहितप्रवरावेव राजन्यवैश्यौ स्यातामिति ह विज्ञायते।

दिव्यं वर्षसहस्रं स्वर्गे मोदते वंशाध्यायी। यस्यैवाश्नाति वंशाध्यायी गृहे दिव्यं वर्षसहस्र-मेकैकस्यर्षेरतिथिर्भवति। नान्यस्मै वरणं दद्यात् नापुत्राय, नाशिष्याय, नासंवत्सरोपिताय। सर्वेषां पङ्क्तिपावनानामुपरिष्टाद्भवति यः प्रवराध्याय-मधीते यः प्रवराध्यायमधीते॥

---

रेव भवन्ति। अथ यदि तेषां स्वासु भार्यास्वपत्य स्याद् [ न स्याद् ] रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युः। यदि न स्याद् [ उभयोर्न स्याद् ] उभाभ्यामेव दद्युरित्याचार्यवचनं द्वे कुर्यादेकस्मिन् श्राद्धे वा पृथगनु [ द्दि ] दिश्यैकपिण्डे द्वावनुकीर्तयेत् परिग्रहीतारं चोत्पादयितारं च आतृतीयात्पुरुषात्। आर्षेयज्ञानादेतेषामेव प्रवराणामाद्यं प्रवरं प्रवृणीते, प्रतिप्रश्नेन वा यं यस्योपपन्नं मन्येत तस्य कुर्यात्। तथा पुरोहितप्रवरो वा स्यात्। एकार्षेयप्रवरो राजन्यः। एतेनैव वैश्यस्य प्रवरो व्याख्यातः। यदि सार्षं ब्रूयात् मानवैल-पौरूरवसेति होता ब्रूयात्। पुरूरवोवद्-इलवद्-मनुवद्-इत्य-ध्वर्युः। यदि पित्रीयमश्नीयुः न विवहेयुः। पुरोहितप्रवरावेव राजन्यवैश्यौ स्यातामिति ह विज्ञायते। दिव्यं वर्षसहस्रं स्वर्गे मोदते वंशाध्यायी। यस्यैवाश्नाति वंशाध्यायी गृहे दिव्यं वर्ष-सहस्रमेकैकस्य ऋषेरतिथिर्भवति। नान्यवरणे दद्यान्नापुत्राय नाशिष्याय नासंवत्सरोषिताय। सर्वेषां पङ्क्तिपावनानामुपरि-ष्टाद्भवति यः प्रवराध्यायमधीते यः प्रवराध्यायमधीते।) ; संकौ. १९४ ( पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः ) एतावदेव ; कृभ. १०५३ ( अथ ये दत्तकक्रीतकृत्रिमाः पुत्रिकापुत्राः परपरिग्रहेणार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति। यथैते शौङ्गशैशिरिणो यानि चान्यानि एवंसमुत्पत्तीनि कुलानि भवन्ति।) एतावदेव : १०५४ ( पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः ) एतावदेव ; संर. ४२२ ( पूर्वः प्रवर उत्पादयितु-रुत्तरः प्रतिग्रहीतुः ) एतावदेव ; ४५५ ( अथ ये दत्तकक्रीतकृत्रिम-पुत्रिकापुत्राः परपरिग्रहेणार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति यथा शौङ्गशैशिरीणां यानि चान्यानि समुत्पन्नानि कुलानि भवन्ति। अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्य-स्त्रिपुरुषं दद्युर्यद्युभयोर्न स्यादुभाभ्यामेव दद्युरेकस्मिन् श्राद्धे पृथगु-द्दिश्यैकपिण्डे द्वावनुकीर्तयेत्प्रतिग्रहीतारं चोत्पादयितारं चाऽऽ-तृतीयात्पुरुषात्।) एतावदेव .

# गणभेदेन प्रवरसंकलनम्

## अत्र धृता ग्रन्थसंक्षेपाः

(१) बौ. बौधायनश्रौतसूत्रम् ।
(२) आप. आपस्तम्बश्रौतसूत्रम् ।
(३) स. सत्याषाढश्रौतसूत्रम् ।
(४) आ. आश्वलायनश्रौतसूत्रम् ।
(५) का. कात्यायनश्रौतसूत्रम् ।
(६) मा. मानवश्रौतसूत्रम् ।
(७) शु. शुक्लयजुर्वेदपरिशिष्टम् ।
(८) म. मत्स्यपुराणम् ।
(९) संप्र. संस्कारप्रकाशः ।
(१०) प्रद. प्रवरदर्पणः ।
(११) संकौ. संस्कारकौस्तुभः ।
(१२) संर. संस्काररत्नमाला ।

—:०:—

## भृगवः

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १ | वत्साः ( जामदग्न्याः ) | बौ. आप. स. आ. का. मा. म. | भार्गव, च्यावन, आप्नवान, और्व, जामदग्न्य. |
| | | आप. स. | भार्गव, और्व, जामदग्न्य . |
| | वत्साः ( अजामदग्न्याः )<br>वात्स्याः ( „ ) | आ.<br>का. | भार्गव, च्यावन, आप्नवान . |
| २ | विदाः | बौ. आ. | भार्गव, च्यावन, आप्नवान, और्व, वैद . |
| | विदाः ( जमदग्नयः ) | का. | भार्गव, और्व, जामदग्न्य. |
| | | मा. म | भार्गव, च्यावन, आप्नवान. |
| ३ | *आर्ष्टिषेणाः | बौ. आप स. आ का. मा. शु. म. | भार्गव, च्यावन, आप्नवान, आर्ष्टिषेण, आनूप . |
| | | आप. स | भार्गव, आर्ष्टिषेण, आनूप. |
| ४ | यस्काः ( वीतहव्याः ) | बौ. आप. स. आ. का. मा. शु. म. | भार्गव, वैतहव्य, सावेतस ( सात्वेदस ). |

* केषांचिन्मते एते जामदग्न्याः । जमदग्नेः सत्त्वयाऽनुवृत्तेराश्रयणात्प्रवरभेदो न ।

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| ५ | मित्रयु( य )वः (वाध्र्यश्वाः, दिवोदासाः) | बौ. का. मा. शु. म. | भार्गव, वाध्र्यश्व, दैवोदास . |
| | | आ. | भार्गव, दैवोदास, वाध्र्यश्व . |
| | | आप. स. आ. | वाध्र्यश्व . |
| ६ | वैन्याः ( पार्थाः ) | बौ आप. स. मा. | भार्गव, वैन्य, पार्थ . |
| | ,, ( श्यैताः ) | आ. | ,, ,, ,, |
| ७ | शुनकाः ( गृत्समदाः ) | बौ. | शौनक . |
| | | आप. स. आ. का. मा शु. | गार्त्समद . |
| | | का मा. शु. म. | भार्गव, गार्त्समद . |
| | | आ. शु. संप्र. | भार्गव, शौनहोत्र, गार्त्समद . |
| | | संप्र. संकौ. | भार्गव, शौनक, गार्त्समद . |
| ८ | * वैदाः निमथिताः ( वैजव-निमथितौ ) | मा. | भार्गव, च्यावन, आप्नवान, वैद, नैमथित . |
| | | संप्र. प्रद. संकौ. संर. | भार्गव, च्यावन, आप्नवान, वैजव, न( ? नै )मथित . |
| ९ | आवध्यायनाः मौञ्जायनाः ( आवध्याः ) | मा. | भार्गव, च्यावन, आवध्य . |
| १० | वत्स-पुरोधसाः ( वत्स-पुरोधसौ ) | का. ( संप्र. ) मा. | भार्गव, च्यावन, आप्नवान, वात्स, पौरोधस . |
| | | का. ( संप्र. ) संप्र. प्रद. संकौ. संर. | भार्गव, वात्स, पौरोधस . |
| ११ | वेद-विश्वज्योतिषाः ( वैदाः विश्वज्योतिषाः ) ( वेद-विश्वज्योतिषः ) | मा. | भार्गव, वेद, वैश्वज्योतिष . |
| | | का. (संप्र.) संकौ. सर. | भार्गव, वैद, वैश्वज्योतिष . |
| १२ | शाठर-माठराः | का. (संप्र.) प्रद. संकौ. संर. | भार्गव, शाठर, माठर . |
| १३ | आचाम्याः ( अवाच्याः ) | का. ( संप्र. ) | भार्गव, च्यावन, आचाम्य ( आवाच्य ) . |

* इत उत्तरं सर्वे जामदग्न्याः ।

## गौतमाः ( अङ्गिरसः )

| क्रमाङ्कः | गणः | सूत्रादि | प्रवराः |
|---|---|---|---|
| १ | आयास्याः | बौ. आप. स. आ. का. मा. शु. | आङ्गिरस, आयास्य, गौतम . |
| २ | शारद्वताः ( शारद्वन्ताः ) | बौ. | आङ्गिरस, गौतम, शारद्वत . |
| ३ | * औचथ्याः (औतथ्याः) | आप. स आ. का. मा. शु. म. | आङ्गिरस, औचथ्य ( औतथ्य ), गौतम .<br>आङ्गिरस, औचथ्य, औशिज. |
| ४ | कौमण्डाः | बौ. | आङ्गिरस, औचथ्य, काक्षीवत, गौतम, कौमण्ड . |
| ५ | दीर्घतमसः | बौ.<br>आ. का. | आङ्गिरस, औचथ्य, काक्षीवत, गौतम, दैर्घतमस .<br>आङ्गिरस, औचथ्य, दैर्घतमस . |
| ६ | औशनसाः | बौ. | आङ्गिरस, गौतम, औशनस . |
| ७ | कारेणुपालयः | बौ. | आङ्गिरस, गौतम, कारेणुपाल . |
| ८ | वामदेवाः | बौ<br>आप. स.<br>आ. मा. शु.<br>का. म | आङ्गिरस, गौतम, वामदेव .<br>आङ्गिरस, वामदेव, बार्हदुक्थ्य ( क्थ ) .<br>आङ्गिरस, वामदेव्य, गौतम .<br>आङ्गिरस, बार्हदुक्थ, वामदेव . |
| ९ | औशिजाः ( औशिताः ) | आप. स.<br>संप्र. | आङ्गिरस, औशिज, काक्षीवत .<br>आङ्गिरस, औशित, काक्षीवत . |
| १० | राहूगणाः | आ. | आङ्गिरस, राहूगण्य, गौतम . |
| ११ | सोमराजकाः | आ. | आङ्गिरस, सौमराज्य, गौतम . |
| १२ | बृहदुक्थाः | †आप. आ. | आङ्गिरस, बार्हदुक्थ, गौतम . |

* शारद्वता एव " औतथ्या गौतमा इति केचित् " इति संस्कारप्रकाश( पृ. ६२७ )कारेण निरस्तम् ।

† अथ बृहदुक्था गौतमाः । तेषां त्र्यार्षेयः आङ्गिरस-बार्हदुक्थ-गौतमेति । गौतमवद्-बृहदुक्थवद्-अङ्गिरोवद्-इति वाक्यं आपस्तम्बसूत्रे दृश्यते इति प्रवरमञ्जरीसंपादकः ।

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १३ | कक्षीवन्तः | आ. मा. शु. | आङ्गिरस, औचथ्य, गौतम, औशिज, काक्षीवत . |
| १४ | आयास्यौशिजा गौतमाः | का. | आङ्गिरस, आयास्य, औशिज, गौतम, काक्षीवत . |
| १५ | * राघुवाः ( रागुवाः ) | प्रद. संकौ. संर. | आङ्गिरस, राघुव, गौतम . |

* अत्र ' मूलं चिन्त्यम् ' इति निर्णयसिन्धुकारः ।

## भरद्वाजाः ( अङ्गिरसः )

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १ | भरद्वाजाः | बौ. आप. स. आ. का. मा. शु. म | आङ्गिरस, बार्हस्पत्य, भारद्वाज . |
| २ | रौक्षायणाः ( ऋक्षाः ) | बौ. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, वान्दन, मातवचस . |
| | | आप. स. आ. का. मा शु. म. | ,, ,, ,, ,, |
| | | आप. स. | आङ्गिरस, वान्दन, मातवचस . |
| ३ | गर्गाः | बौ का. मा. शु. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, शैन्य, गार्ग्य . |
| | | आ. म. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, गार्ग्य, शैन्य . |
| | | आप. स. | आङ्गिरस, गार्ग्य, शैन्य . |
| | | आप. स | भारद्वाज, गार्ग्य, शैन्य . |
| | | संप्र. प्रद. संकौ. संर. | आङ्गिरस, शैन्य, गार्ग्य . |
| | | म. | आङ्गिरस, तैत्तिरि, कापिभुव . |
| ४ | कपयः | बौ. का. मा. शु. | आङ्गिरस, आमहीयव, औरुक्षय . |
| | | आप. | आङ्गिरस, आमहीय, औरुक्षय . |
| | | स. | आङ्गिरस, माहय्यव, औरुक्षय्य . |
| | | आ. | आङ्गिरस, आमहीयव, औरुक्षयस . |
| | | म. | आङ्गिरस, आमहय्य, औरुक्षय . |
| ५ | आत्मभुवः | प्रद. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, मन्त्रवर, आत्मभव . |
| | | सिन्धु. | आङ्गिरस, भारद्वाज, बार्हस्पत्य, मन्त्रवर, आत्मभुव . |
| ६ | शौङ्ग–शैशिरयः | आप. आ. शु. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, कात्य, आक्षील . |
| | | स. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, कात्य, आक्षिल . |
| | | का. मा. | आङ्गिरस, बार्हस्पत्य, भारद्वाज, शौङ्ग, शैशिर . |
| | | म. | आङ्गिरस, भारद्वाज, बार्हस्पत्य, मौद्गल्य, शैशिर . |
| | | आप. स. | आङ्गिरस, कात्य, आक्षील ( आक्षील ) . |
| | | संकौ. संर. | भारद्वाज, कात्य, आक्षील ( आक्षील ) . |

## विश्वामित्राः

| क्रमाङ्कः | गणः | सूत्रादि | प्रवराः |
|---|---|---|---|
| १ | कुशिकाः | बौ. आप. स. आ. का. म. | वैश्वामित्र, दैवरात, औदल . |
| २ | लोहिताः ( रोहिताः )<br>अष्टकाः | बौ.<br>आप. स. मा. शु.<br>आ.<br>का. म. | वैश्वामित्र, आष्टक, लौहित .<br>वैश्वामित्र, आष्टक .<br>वैश्वामित्र, माधुच्छन्दस, आष्टक .<br>वैश्वामित्र, लौहित, आष्टक . |
| ३ | कामकायनाः ( श्रौमताः ) | बौ. आप. आ. का म. मा. शु. | वैश्वामित्र, दैवश्रवस, दैवतरस. |
| ४ | रौक्षकाः ( रेणवः, रैणवाः ) | बौ.<br>आ. का. मा. शु. म. | वैश्वामित्र, रौक्षक, रैणव ( रैवण ) .<br>वैश्वामित्र, गाथिन, रैणव . |
| ५ | कताः | बौ. आप. आ. का. मा. शु. म.<br>स. | वैश्वामित्र, कात्य, आत्कील .<br>वैश्वामित्र, कात्य, आक्षील ( आक्षिल |
| ६ | धनञ्जयाः | बौ. आप. स. आ. का.<br>मा. शु. म.<br>शु. | वैश्वामित्र, माधुच्छन्दस, धानञ्जय .<br>वैश्वामित्र, माधुच्छन्दस, आघमर्षण .<br>वैश्वामित्र, कौशिक, आघमर्षण . |
| ७ | अजाः<br>आज्याः | बौ.<br>आप. आ. का. म. | वैश्वामित्र, माधुच्छन्दस, आज .<br>वैश्वामित्र, माधुच्छन्दस, आज्य . |
| ८ | अघमर्षणाः कुशिकाः | बौ. आप. स. आ. का. | वैश्वामित्र, आघमर्षण, कौशिक . |
| ९ | पूरणाः वारिधापयन्ताः | बौ. आप. स. का. मा. शु. (?) म.<br>आ. | वैश्वामित्र, पौरण .<br>वैश्वामित्र, दैवरात, पौरण . |
| १० | इन्द्रकौ[illegible] | बौ.<br>संप्र. संकौ संर. | वैश्वामित्र, ऐन्द्र, कौशिक .<br>वैश्वामित्र, ऐन्द्रकौशिक . |

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
| --- | --- | --- | --- |
| ११ | रौहिणाः | आ. | वैश्वामित्र, माधुच्छन्दस, रौहिण. |
| १२ | वैणवः | आ. | वैश्वामित्र, गाथिन, वैणव . |
| १३ | शालङ्कायनाः ( कौशिकाः, जह्नवः ) | आ. | वैश्वामित्र, शालङ्कायन, कौशिक . |
| १४ | आश्मरथ्याः | का.<br>मा. शु. म. | वैश्वामित्र, आश्मरथ्य, वाधूल ( वाधुल ) .<br>वैश्वामित्र, आश्मरथ्य, वान्धुल . |
| १५ | साहुलाः | मा. शु. | वैश्वामित्र, साहुल, माहुल . |
| १६ | हिरण्यरेतसः | मा. शु. | वैश्वामित्र, हैरण्यरेतस . |
| १७ | सुवर्णरेतसः | मा. शु. | वैश्वामित्र, सौवर्णरेतस . |
| १८ | कपोतरेतसः | मा. शु. | वैश्वामित्र, कापोतरेतस . |
| १९ | घृतकौशिकाः | मा. शु. | वैश्वामित्र, घृतकौशिक ( घार्तकौशिक ) . |
| २० | काथकाः ( कथकाः ) | प्रद. संकौ. संर.<br>मा<br>शु. | वैश्वामित्र, काथक, क्राथक .<br>वैश्वामित्र, काथक, कात्यक .<br>वैश्वामित्र, कथक, काथक . |
| २१ | शाठर-माठराः | मा. | वैश्वामित्र, शाठर, माठर . |

## केवलाङ्गिरसः

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १ | हरिताः | बौ. आप. आ. का मा. शु. म. | आङ्गिरस, आम्बरीष, यौवनाश्व . |
| | | आप. आ. का. | मान्धात्र, आम्बरीष, यौवनाश्व . |
| | ( कुत्साः ) | आप. | आङ्गिरस, मान्धात्र, कौत्स . |
| | ( ,, ) | म. | आङ्गिरस, त्रासदस्यव, पौरुकुत्स . |
| २ | कण्वाः | बौ. आप. आ. का. मा. शु. | आङ्गिरस, आजमीढ, काण्व . |
| | | आ. | आङ्गिरस, घौर, काण्व . |
| ३ | रथीतराः | बौ. का. म. | आङ्गिरस, वैरूप, राथीतर . |
| | | बौ आप. मा. | आङ्गिरस, वैरूप, पार्षदश्व . |
| | | आप. | आष्टादंष्ट्र, वैरूप, पार्षदश्व . |
| | | का. | आङ्गिरस, पार्षदश्व, राथीतर . |
| | ( पृषदश्वाः ) | आ. | आङ्गिरस, पार्षदश्व, वैरूप . |
| | | | आष्टादंष्ट्र, पार्षदश्व, वैरूप . |
| ४ | विष्णुवृद्धाः | बौ. आप. आ. का. मा. | आङ्गिरस, पौरुकुत्स, त्रासदस्यव . |
| | | शु. म. | आङ्गिरस, वैरूप, पार्षदश्व . |
| ५ | मुद्गलाः | बौ. आप. आ. का. मा. शु. म. | आङ्गिरस, भार्म्यश्व, मौद्गल्य . |
| | | आप. आ. | तार्क्ष्य, भार्म्यश्व, मौद्गल्य . |
| | | म. | आङ्गिरस, तार्क्ष्य ( तार्क्ष्य, तार्वि ), मौद्गल्य . |
| ६ | संकृतयः | बौ. का. मा. शु. म. | आङ्गिरस, सांकृत्य, गौरिवीत . |
| | | आ. | आङ्गिरस, गौरिवीत, सांकृत्य . |
| | | | शाक्त्य, गौरिवीत, सांकृत्य . |
| | | आप. स. | शाक्त्य, सांकृत्य, गौरिवीत . |

## अत्रयः

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
| --- | --- | --- | --- |
| १ | अत्रयः | बौ. आप. स. आ. का. म. | आत्रेय, आर्चनानस, श्यावाश्व . |
| २ | वाद्भुतकाः | बौ. | आत्रेय, आर्चनानस, वाद्भुतक . |
| ३ | गविष्ठिराः | बौ. आप. स. आ. का. म. | आत्रेय, आर्चनानस, गाविष्ठिर .<br>आत्रेय, गाविष्ठिर, पौर्वातिथ . |
| ४ | मुद्गलाः<br>अतिथयः<br>( पूर्वातिथयः )<br>वामरथ्य-सुमङ्गल-बीजवापाः | बौ.<br>आप.<br><br>आप<br><br>स. | आत्रेय, आर्चनानस, पौर्वातिथ .<br>आत्रेय, आर्चनानस, आतिथ .<br><br>आत्रेय, आर्चनानस, आतिथ .<br><br>आत्रेय, आर्चनानस, गाविष्ठिर . |
| ५ | सुमङ्गलाः | संप्र. प्रद. संकौ. संर. | आत्रेय, सुमङ्गल, श्यावाश्व . |
| ६ | धनञ्जयाः | संप्र. प्रद. संकौ. संर. | आत्रेय, आर्चनानस, धानञ्जय . |
| ७ | पुत्रिकापुत्राः | का. शु. म.<br>मा. | आत्रेय, वामरथ्य, पौत्रिक .<br>आत्रेय, गाविष्ठिर, पौत्रिक . |

## कश्यपाः

| क्रमाङ्कः | गणः | सूत्रादि | प्रवराः |
| --- | --- | --- | --- |
| १ | निध्रुवाः कश्यपाः | बौ. आप. स. आ. का. मा. शु. म. | काश्यप, आवत्सार, नैध्रुव. |
| | कश्यपाः | आ. | काश्यप, आवत्सार, आसित. |
| २ | रेभाः | बौ. आप. स. आ. शु. | काश्यप, आवत्सार, रैभ ( रैभ्य ). |
| | रैभाः शाङ्कमित्राः | का. म. | ,, ,, ,, |
| ३ | शण्डिलाः | बौ. | काश्यप, आवत्सार, शाण्डिल. |
| | | ,, | काश्यप, आवत्सार, दैवल. |
| | | ,, | काश्यप, आवत्सार, आसित. |
| | | बौ. आ. का. मा. शु. | शाण्डिल, आसित, दैवल. |
| | | आप. स. | काश्यप, दैवल, आसित. |
| | | ,, ,, | दैवल, आसित. |
| | | आ. का. मा. शु. म. | काश्यप, आसित, दैवल. |
| ४ | लौगाक्षयः ( लौकाक्षयः ) | बौ. का. मा. म. | काश्यप, आवत्सार, वासिष्ठ. |
| | | बौ. | काश्यप, आवत्सार, आसित. |
| | | शु. | काश्यप, आवत्सार, शारस्तम्ब. |
| ५ | शाङ्कमित्राः | शु. | काश्यप, आवत्सार, शाङ्कमित्र. |

## वसिष्ठाः

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १ | केवलवसिष्ठाः | बौ. आप. स. आ. का. मा. शु. आप. | वासिष्ठ .<br>* वासिष्ठ, ऐन्द्रप्रमद, आभरद्वसव्य . |
| २ | कुण्डिनाः | बौ. आप. स. आ. का. म. | वासिष्ठ, मैत्रावरुण, कौण्डिन्य . |
| ३ | उपमन्यवः | बौ. स.<br>आ. का.<br>म. | वासिष्ठ, ऐन्द्रप्रमद, आभरद्वसव्य (– द्वसु).<br>वासिष्ठ, आभरद्वसव्य, ऐन्द्रप्रमद .<br>आभरद्वसव्य, वासिष्ठ, ऐन्द्रप्रमद . |
| ४ | पराशराः | बौ. आप. स. आ. का. मा. शु. म. | वासिष्ठ, शाक्त्य, पाराशर्य . |
| ५ | जातूकर्ण्याः | का. म.<br>शु. | वासिष्ठ, आत्रि, जातूकर्ण्य .<br>वासिष्ठ, आर्तबोध, पाटव . |
| ६ | लोहित्याः | शु. | वासिष्ठ, लौहित्य, फाल्गुन्य . |

* आपस्तम्बश्रौतसूत्रे एते प्रवराः वसिष्ठानां विकल्पेन समुद्धृताः, उपमन्यूनां च समावेशो न कृतः । निबन्धकारैश्च एते एव प्रवरा वसिष्ठानां वैकल्पिकत्वेनोल्लिखिताः ।

## अगस्तयः

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १ | इध्मवाहाः | बौ. आप. स. आ. का. मा. शु. | आगस्त्य, दार्ढच्युत, ऐध्मवाह . |
| | | आप. स. | आगस्त्य . |
| २ | साम्भवाहाः | बौ. | आगस्त्य, दार्ढच्युत, साम्भवाह . |
| ३ | सोमवाहाः | बौ. आ. | आगस्त्य, दार्ढच्युत, सौमवाह . |
| ४ | यज्ञवाहाः | बौ. | आगस्त्य, दार्ढच्युत, याज्ञवाह . |
| ५ | अगस्तयः | का. शु. म. | आगस्त्य, माहेन्द्र, मायोभुव . |
| ६ | पौर्णमासाः पौरणाः | का. म. | आगस्त्य, पौर्णमास, पैरण ( पारण ). |
| ७ | आक्राः ( हिमोद्काः ) | मा. शु. | आगस्त्य, हैमवर्चि ( वर्चि ), हैमोदक. |
| ८ | पारीणकाः ( पाणिकाः ) | मा. शु. | आगस्त्य, पैनायक, पारीणक ( पाणिक ). |
| ९ | विमलयः | मा. | आगस्त्य, पिनायक्षि, शायक . |
| | | शु. | आगस्त्य, पैनाक, सायक . |
| १० | सारवाहाः | संकौ. संर. | आगस्त्य, दार्ढच्युत, सारवाह . |
| ११ | दर्भवाहाः | संकौ. संर. | आगस्त्य, दार्ढच्युत, दार्भवाह . |

# सापिण्ड्यविचारः

[ गहनस्य सापिण्ड्यनिर्णयस्य संगतसकलशास्त्रार्थाद्यथा सुखेन बोधः, न तथा प्रकीर्णेषु तत्तद्वचनेषु संगृहीतेभ्यो व्याख्यानेभ्य इति सापिण्ड्यस्य सुखावबोधार्थं तत्तन्मतप्रतिनिधिभूताः सापिण्ड्यविषयकप्रधानशास्त्रार्थाः अत्र प्रथमं संगृह्यन्ते । इतरेषां निबन्धकर्तॄणां सापिण्ड्यशास्त्रार्थो यथायथमत्रैव गतार्थाः । संगृहीतशास्त्रार्थगतस्य तत्तद्वचनव्याख्यानमात्रस्य जिज्ञासायां तत्सुखोपलम्भार्थं शास्त्रार्थेषु आदर्शपुस्तकगतपृष्ठाङ्का यथास्थानं निवेशिताः । तेन अग्रे तत्तद्वचनेषु स्थलनिर्देशटिप्पण्यां निर्दिष्टान् पृष्ठाङ्कान् दृष्ट्वा तदनुरोधेनैतच्छास्त्रार्थगतवचनव्याख्यानानि सुखेन लभ्येरन् । ]

## १ स्मृतिचन्द्रिका*

[ पृ. ६७–७४ ]

सपिण्डलक्षणम्—

[पृ. ६७] *समानः एकः पिण्डो यस्याः सा सपिण्डा ।* न सपिण्डा असपिण्डा । एकपिण्डता चैकस्या पिण्डदानक्रियायां दातृत्वेन देवतात्वेन लेपभाक्त्वेन वाऽनुप्रवेशाद्भवति । तथा च *मत्स्यपुराणम्*– ' लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपूरुषम् ॥ ' चतुर्थाद्याः प्रपितामहस्य पितृप्रभृतयः उत्तरे त्रयो लेपभाजो भवन्ति । पित्राद्यास्तु त्रयः पिण्डभागिनः पिण्डदाने देवताभूताः । तेषां सप्तमः पिण्डदाता । एवमेते सप्त सपिण्डा भवन्ति । एकपिण्डदानक्रियाऽनुप्रवेशिनः सपिण्डा इत्यर्थः ।

सपिण्डलक्षणस्य अव्याप्त्यादिदोषनिरासः–

ननु यत्रैकपिण्डक्रियानुप्रवेशात् सापिण्ड्यं तर्हि भ्रातॄणां भिन्नक्रियानुप्रवेशिनां तदभावेनान्योन्यं सापिण्ड्यं न स्यात् । मैवं, एकोद्देश्यावच्छेदेनैकक्रियान्वयित्वसंभवात् । ये हि पुत्रनिष्पाद्यक्रियानुप्रवेशिनः पित्रादयस्त एव पुत्रान्तरोत्पाद्यक्रियायामपीति व्यक्तमेकोद्देश्यान्वयित्वम् । अत एव पितामहादेः संततिजातानां पुत्रेण सह सापिण्ड्यसिद्धिः, पुत्रक्रियान्वयिनः पितामहादेस्तत्क्रियासंबन्धात् । यदा त्वेकस्यापि पितामहादेस्तत्क्रियासंबन्धो नास्ति तदोद्देश्यभेदेन क्रियाभेदात् सापिण्ड्यनिवृत्तिः । तदाह *मनुः*– ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ' इति । *गौतमोऽपि*– ' *पिण्डनिवृत्तिः सप्तमे पञ्चमे वा* ' इति । भार्यायाश्च सहकर्तृत्वात् सापिण्ड्यसिद्धिः । एवं सर्वत्र सापिण्ड्यनिवृत्त्यनुवृत्ती द्रष्टव्ये । ननु एवं तर्हि पुत्रदौहित्रयोरेकपिण्डक्रियानुप्रवेशिनोः सापिण्ड्यं प्रसज्येत । सत्यं, यद्यसौ दौहित्रः पुत्रेण सह समानगोत्रः स्यात् । अनेकगोत्रत्वमुपाधिरिति भावः । अत एव पुत्रीकरणादावस्ति दौहित्रस्यापि पुत्रेण सह सापिण्ड्यमिति वक्ष्यामः । तेन नातिप्रसक्तिः ।

मातृसपिण्डत्वमपि विवाहे कन्यापर्युदासनिमित्तम्—

[ पृ ६८ ] ननु च ' असमानार्षगोत्रजाम् ' इत्यनेनैव परिणेतुः सपिण्डायाः पर्युदासे सिद्धे किमिति पुनः ' *असपिण्डाम्* ' इत्युक्तम् ? उच्यते– सत्यमेवम्, तथापि या मातुरसपिण्डा भवति सैव उद्वाहकर्मणि प्रशस्तेति वक्तुम् । तथा च *मनुः*– ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' *या परिणेतुर्मातुश्च सपिण्डा न भवति*, या च परिणेतुः पितुश्च न सगोत्रा, सा च विवाहकर्मणि प्रशस्ता इत्यर्थः ।

पुत्रिकासुरादिविवाहोढानां पितृसापिण्ड्यनिवृत्तिः—

[ पृ. ६९ ] ननु च माता स्वदानसमकालमेव पितृसापिण्ड्यं तद्गोत्रं च हित्वा पतिसापिण्ड्यं तद्गोत्रं च प्रतिपद्यते । तत्कथम् ' असपिण्डा च या मातुः ' इति ? तदुक्तम्– ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ' इति । पतिसपिण्डैरेव पत्न्याः सापिण्ड्यं, न स्वपित्रादिभिरित्यभिप्रायः । उच्यते– सत्यम्, नास्ति मातुः

* आदर्शपुस्तकं श्री. ज. र. घारपुरेसंपादितम् ।

## अगस्तयः

| क्रमाङ्कः | गणः | सूत्रादि. | प्रवराः |
|---|---|---|---|
| १ | इध्मवाहाः | बौ. आप. स. आ. का. मा. शु. | आगस्त्य, दार्ढच्युत, ऐध्मवाह. |
| | | आप. स. | आगस्त्य. |
| २ | साम्भवाहाः | बौ. | आगस्त्य, दार्ढच्युत, साम्भवाह. |
| ३ | सोमवाहाः | बौ. आ. | आगस्त्य, दार्ढच्युत, सौमवाह. |
| ४ | यज्ञवाहाः | बौ. | आगस्त्य, दार्ढच्युत, याज्ञवाह. |
| ५ | अगस्तयः | का. शु. म. | आगस्त्य, माहेन्द्र, मायोभुव. |
| ६ | पौर्णमासाः पौरणाः | का. म. | आगस्त्य, पौर्णमास, पैरण (पारण). |
| ७ | अक्राः (हिमोदकाः) | मा. शु. | आगस्त्य, हैमवर्चि (चर्चि), हैमोदक. |
| ८ | पारीणकाः (पाणिकाः) | मा. शु. | आगस्त्य, पैनायक, पारीणक (पाणिक). |
| ९ | विमलयः | मा. | आगस्त्य, पिनायक्षि, शायक. |
| | | शु. | आगस्त्य, पैनाक, सायक. |
| १० | सारवाहाः | संकौ. संर. | आगस्त्य, दार्ढच्युत, सारवाह. |
| ११ | दर्भवाहाः | संकौ. संर. | आगस्त्य, दार्ढच्युत, दार्भवाह. |

# सापिण्डयविचारः

[ गहनस्य सापिण्ड्यनिर्णयस्य संगतसकलशास्त्रार्थाद्यथा सुखेन बोधः, न तथा प्रकीर्णेषु तत्तद्वचनेषु संगृहीतेभ्यो व्याख्यानेभ्य इति सापिण्ड्यस्य सुखावबोधार्थं तत्तन्मतप्रतिनिधिभूता सापिण्ड्यविषयकप्रधानशास्त्रार्थाः अत्र प्रथमं संगृह्यन्ते । इतरेषां निबन्धकर्तॄणां सापिण्ड्यशास्त्रार्था यथायथमत्रैव गतार्थाः । संगृहीतशास्त्रार्थगतस्य तत्तद्वचनव्याख्यानमात्रस्य जिज्ञासायां तत्सुखोपलम्भार्थं शास्त्रार्थेषु आदर्शपुस्तकगतपृष्ठाङ्का यथास्थानं निवेशिताः । तेन अग्रे तत्तद्वचनेषु स्थलनिर्देशटिप्पण्यां निर्दिष्टान् पृष्ठाङ्कान् दृष्ट्वा तदनुरोधेनैतच्छास्त्रार्थगतवचनव्याख्यानानि सुखेन लभ्येरन् । ]

## १ स्मृतिचन्द्रिका*

[ पृ. ६७–७४ ]

सपिण्डलक्षणम्–

[पृ. ६७] समानः एकः पिण्डो यस्याः सा सपिण्डा । न सपिण्डा असपिण्डा । एकपिण्डता चैकस्या पिण्डदानक्रियायां दातृत्वेन देवतात्वेन लेपभाक्त्वेन वाऽनुप्रवेशाद्भवति । तथा च मत्स्यपुराणम्– ' लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥ ' चतुर्थाद्याः प्रपितामहस्य पितृप्रभृतयः उत्तरे त्रयो लेपभाजो भवन्ति । पित्राद्यास्तु त्रयः पिण्डभागिनः पिण्डदाने देवताभूताः । तेषां सप्तमः पिण्डदाता । एवमेते सप्त सपिण्डा भवन्ति । एकपिण्डदानक्रियाऽनुप्रवेशिनः सपिण्डा इत्यर्थः ।

सपिण्डलक्षणस्य अन्याप्त्यादिदोषनिरासः–

ननु यद्येकपिण्डक्रियानुप्रवेशात् सापिण्ड्यं तर्हि भ्रातॄणां भिन्नक्रियानुप्रवेशिनां तदभावेनान्योन्यं सापिण्ड्यं न स्यात् । मैवं, एकोद्देश्यावच्छेदेनैकक्रियान्वयित्वसंभवात् । ये हि पुत्रनिष्पाद्यक्रियानुप्रवेशिनः पित्रादयस्त एव पुत्रान्तरोत्पाद्यक्रियायामपीति व्यक्तमेकोद्देश्यान्वयित्वम् । अत एव पितामहादेः संततिजातानां पुत्रेण सह सापिण्ड्यसिद्धिः, पुत्रक्रियान्वयिनः पितामहादेस्तत्क्रियासंबन्धात् । यदा त्वेकस्यापि पितामहादेस्तत्क्रियासंबन्धो नास्ति तदोद्देश्यभेदेन क्रियाभेदात् सापिण्ड्यनिवृत्तिः । तदाह मनुः– ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ' इति । गौतमोऽपि– ' पिण्डनिवृत्तिः सप्तमे पञ्चमे वा ' इति । भार्यायाश्च सहकर्तृत्वात् सापिण्ड्यसिद्धिः । एवं सर्वत्र सापिण्ड्यनिवृत्त्यनुवृत्ती द्रष्टव्ये । ननु एवं तर्हि पुत्रदौहित्रयोरेकपिण्डक्रियानुप्रवेशिनोः सापिण्ड्यं प्रसज्येत । सत्यं, यद्यसौ दौहित्रः पुत्रेण सह समानगोत्रः स्यात् । अत्रैकगोत्रत्वमुपाधिरिति भावः । अत एव पुत्रीकरणादावस्ति दौहित्रस्यापि पुत्रेण सह सापिण्ड्यमिति वक्ष्यामः । तेन नातिप्रसक्तिः ।

मातृसपिण्डत्वमपि विवाहे कन्यापर्युदासनिमित्तम्–

[ पृ ६८ ] ननु च ' असमानार्षगोत्रजाम् ' इत्यनेनैव परिणेतुः सपिण्डायाः पर्युदासे सिद्धे किमिति पुनः ' असपिण्डाम् ' इत्युक्तम् ? उच्यते– सत्यमेवम्, तथापि या मातुरसपिण्डा भवति सैव उद्वाहकर्मणि प्रशस्तेति वक्तुम् । तथा च मनुः– ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' या परिणेतुर्मातुश्च सपिण्डा न भवति, या च परिणेतुः पितुश्च न सगोत्रा, सा च विवाहकर्मणि प्रशस्ता इत्यर्थः ।

पुत्रिकासुरादिविवाहोढानां पितृसापिण्ड्यानिवृत्ति–

[ पृ. ६९ ] ननु च माता स्वदानसमकालमेव पितृसापिण्ड्यं तद्गोत्रं च हित्वा पतिसापिण्ड्यं तद्गोत्रं च प्रतिपद्यते । तत्कथम् ' असपिण्डा च या मातुः ' इति ? तदुक्तम्– ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ' इति । पतिसपिण्डैरेव पत्न्याः सापिण्ड्यं, न स्वपित्रादिभिरित्यभिप्रायः । उच्यते– सत्यम्, नास्ति मातुः

* आदर्शपुस्तकं श्री. ज. र. घारपुरेसंपादितम् ।

स्वपित्रादिभिः सह सापिण्डयं यदि तस्यास्त्यागपूर्वको विवाहः स्यात्। त्यागे हि स्वत्वनिवृत्तिरिव सापिण्ड्यसगोत्रत्वयोरपि निवृत्तिः। अनेनैवाभिप्रायेणोक्तम्—'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके' इति।

दत्तकादीनां जनकगोत्रादिनिवृत्तिः—

अत एव दत्तपुत्रादेस्त्यागेनैव पितृगोत्रादिनिवृत्तिसिद्धिः। अन्यथा 'असगोत्रा च या पितुः' इत्यत्र पितृग्रहणमनर्थकं स्यात्। उक्ता च गोत्रादिनिवृत्तिर्मनुना—'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥' इति।'

अप्रत्तानां त्रिपुरुषं सापिण्ड्यम्—

एवं च पुत्रिकाया विवाहो नैव प्रदानपूर्वक इति न तत्र सापिण्ड्यसगोत्रत्वयोर्निवृत्तिः। अत एव वसिष्ठोऽपि अप्रत्तानां त्रिपुरुषं सापिण्डयमाह—'अप्रत्तानां तु स्त्रीणां त्रिपुरुषं सापिण्ड्यम्' इति। न च पुत्रिकाविवाहेऽपि तस्याः प्रदानमस्तीति शङ्कनीयम्, प्रदानतो गोत्रादिनिवृत्तिवत् पुत्रिकात्वस्यापि निवृत्तेः, तन्निवृत्तौ च तत्कार्यकरत्वं न स्यात्। श्रूयते च तस्याः पुत्रकार्यकरत्वम्—'अभ्रातेव पुंस एति प्रतीची' (ऋसं. १।१२४।७) इति। एतदपि निरुक्ते व्याख्यातम्—'अभ्रातृकेव पुंसः पितॄनेत्यभिमुखी संतानकर्मणे पिण्डदानाय' इति। अतश्च पुत्रिकाया अप्रदानेन स्वपितृसापिण्डयं सगोत्रत्वं च सिद्धम्। अत एव लौगाक्षिः—'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम्। कुर्वीत पुत्रिकापुत्र एवमाह पितामहः॥' एवमासुरादिविवाहेष्वपि सगोत्रत्वादेरनिवृत्तिः, तत्रापि प्रदानाभावात्। अत एव मार्कण्डेयः—'ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्। भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः। आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्॥' मातुः पितृगोत्रेणेत्यर्थः। एवं च पुत्रिकाकरणादौ मातुः स्वपित्रादिसापिण्डयमसद्भावात् युक्तमुक्तम्—'असपिण्डा च या मातुः' इति।

स्वसपिण्डत्वातिरिक्तं मातृसपिण्डत्वं क्वचित्—

ननु च पुत्रस्यापि मातृसपिण्डत्वात् या मातुः सपिण्डा सा पुत्रस्यापीति किमर्थं मातृग्रहणम्? उच्यते— यदा तु पुत्रिकासुतस्यैव मातृमातामहाभ्यां परित्यागः तदा तस्य तत्सापिण्ड्यनिवृत्त्या तत्सपिण्डाया विवाहप्राप्तौ तन्मा भूदिति मातृग्रहणम्।

स्वसगोत्रत्वातिरिक्तं पितृसगोत्रत्वं क्वचित्—

एवं दत्तपुत्रादेस्त्यागेनैव पितृगोत्रनिवृत्त्या तत्सगोत्राया विवाहप्राप्तौ तन्मा प्रसाङ्क्षीदिति पितृग्रहणमिति सर्वमनवद्यम्।

मातृसगोत्रत्वमपि विवाहे कन्यापर्युदासनिमित्तम्—

मातृसगोत्रामपि केचिन्नेच्छन्ति। तदाह व्यासः—'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि' इति। एतदपि पुत्रिकाकरणविषयम्, मातुः पतिगोत्रत्वेन गोत्रान्तराभावात्। न च भूतपूर्वगत्या मातृसगोत्राप्रतिषेध इति वाच्यम्। वर्तमाने संभवति भूतपूर्वगत्याश्रयणस्यान्याय्यत्वात्। एवं च या परिणेतुर्मातुश्च न सपिण्डा भवति या च परिणेतुः पितुश्चासगोत्रा सा विवाह्या इति सिद्धम्।

मातुलकन्यायाः पैतृष्वसेय्याश्च परिणेयत्वम्—

[पृ. ७०] ननु एवं तर्हि ब्राह्मादिभिर्विवाहैः निवृत्तपितृसपिण्डभावायाः पुत्रस्य मातुलसुता परिणेया स्यात्? सत्यम्। केन वोक्तं न परिणेयेति? ननु मन्वादिभिरेव। यदाह शातातपः—'उद्वहेत सगोत्रां यस्तनया मातुलस्य च। ऋषिभिश्चैव तुल्यां च स तु चान्द्रायणं चरेत्॥' इति। मनुरपि—'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुरातस्य गत्वा चान्द्रायणं चरेत्॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान्। ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः॥' इति। आतस्य संनिकृष्टस्य सपिण्डस्येत्यर्थः। व्यासोऽपि—'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा। शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः॥' मातृतः मातृपक्षे तृतीयां मातुलसुतां, पितृपक्षे तृतीयां पैतृष्वसेयीमित्यर्थः। शुल्कं मूल्यम्। अनेन कूटस्थमारभ्य गणयेदित्युक्तं भवति। तथा च पुराणे ययातिवाक्यम्—'यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि। पापान्मातुलसंबन्धात्प्रजा वै ते भविष्यति॥' सुमन्तुरपि—

' पितृपत्न्यः सर्वा मातरः, तद्भ्रातरो मातुलाः, तद्दुहितरश्च भगिन्यः, तदपत्यानि भागिनेयानि । अन्यथा संकरकारीणि स्युः ' इति ।

उच्यते— सत्यम्, एतानि मातुलादिदुहितृविवाहनिषेधपराणि, तथापि आसुरादिविवाहेन पित्रादिभिरनिवृत्तसपिण्डभावायाः पुत्रस्य मातुलसुता परिणेतुर्मातुश्च सपिण्डेति सा तावदविवाह्या । तथा एवंविधायाः पितृष्वसुर्दुहिता परिणेतुः पितुश्च सपिण्डा सगोत्रा चेति साऽपि न परिणेया । या तु ब्राह्मादिविवाहोढा तस्याः स्वपित्रादिभिः सापिण्ड्यनिवृत्तेः तत्पुत्रस्य मातुलसुतापरिणयनं केन वार्यते ? एवं पैतृष्वसेय्यामपि द्रष्टव्यम् । तदिदमुक्तं मनुना— ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' इति । या मातृतः पितृतो वा सपिण्डा सगोत्रा च सैव परित्याज्या, नान्या इत्यभिप्रायः । अत एव व्यासः— ' मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ' इति । अत एव शातातपोऽपि मातुः सगोत्राया एव निषेधमाह— ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ' इति । न चात्र मातृसगोत्रामित्यनेनैव सपिण्डमातुलदुहितृनिषेधसिद्धेः किमर्थं मातुलसुताग्रहणमिति वाच्यम्, पक्षान्तरेऽपि समानत्वात्, तत्रापि मातृगोत्राप्रतिषेधेनैव मातुलदुहितृमात्रनिषेधसिद्धेः । अथ पक्षद्वयेन उभयविधमातुलदुहितृनिषेधः, तर्हि मातुलसुताग्रहणेनैव अलम्, किं मातृगोत्रग्रहणेन ? किंच मनुरपि पैतृष्वसेय्याः पितृसपिण्डाया एव पर्युदासमाह— ' पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् ॥ ' इति । अन्यथा भगिनीशब्दवैयर्थ्यं स्यात्, पैतृष्वसेयीमित्यनेनैव पितृष्वसृदुहितृमात्रनिषेधसिद्धेः । [ पृ. ७१ ] भगिनीवद्भगिनी सपिण्डेत्यर्थः । एवमातरशब्देऽपि द्रष्टव्यम् । न च भगिनीशब्दः पैतृष्वसेयीं न विशिनष्टीति वाच्यम्, ' एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् ' इति त्रित्वसंख्यापनात् । पैठीनसिरपि— ' पितृमातृष्वसृदुहितरो मातुलसुता धर्मतस्ता भगिन्यो वर्जयेत् ' इति । न चात्र संदेहव्युदासार्थं भगिनीग्रहणमिति वाच्यम्, ' वर्जयेत् ' इत्यादिविधिबलेनैव संदेहनिवृत्तेः । ननु च ' असपिण्डा च या मातुः ' इत्यनेनैव मातृसपिण्डादिपर्युदासे सिद्धे किमिति पुनः ' पैतृष्वसेयीं भगिनीम् ' इति तस्या एव निषेध उच्यते ? सत्यमेवम्, तथाप्यत्र पातित्यादिदोषप्रतिपादनमुखेनैकान्ततो निवृत्तिसिद्ध्यर्थम् । अन्यथा ' सा प्रशस्ता ' इति वचनात् मातृसपिण्डासगोत्रयोः अप्राशस्त्यमात्रं स्यात्, न सर्वथा वर्जनीयत्वम् । यथा ' चतुरो ब्राह्मणस्याऽऽद्यान् प्रशस्तान् कवयो विदुः ' इति चतुर्णां विवाहानां प्राशस्त्ये उक्तेऽपि न गान्धर्वादीनामेकान्ततः परित्यागः, किंतु अप्राशस्त्यमात्रम्, तथा इहापि स्यात् । अतश्च मन्वादिवचनैर्या मातृसपिण्डा मातुलसुता या च पैतृष्वसेयी पितृसपिण्डा सैवोद्वाहकर्मणि परित्याज्या, नान्येति सिद्धम् । अत एवोक्तं चतुर्विंशतिमते— ' तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ ' इति । उभयोः मातापित्रोरित्यर्थः । एवं च यानि मातुलदुहितृपरिणयनिषेधपराणि तान्यनिवृत्तस्वमातृसपिण्डभावाभिप्रायाणीति मन्तव्यम् ।

किंच एवं सति एतेषां मन्वादिवाक्यानां चैकमेव मूलं परिकल्पितं भवति । अन्यथा तेषां मूलान्तरकल्पनागौरवं स्यात् । तेन विशेषविषयतैव न्याय्या ।

मातृष्वसुलदुहितुश्च अपरिणेयत्वम्—

ननु च यदि मातुरसपिण्डतया मातुलसुता परिणेया तर्हि तथाविधा मातृष्वसा तद्दुहिता च किमिति न परिणेया ? उच्यते— सत्यम्, न ब्रूमः शास्त्रतो न परिणेयेति, किंतु लोकविरुद्धत्वात् । यच्च धर्म्यमपि लोकविरुद्धं तन्नानुष्ठेयम् । तदुक्तं मनुना (?)— ' अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ' ( याज्ञ. १।१५६ ) इति । वराहमिहिरेऽपि— ' देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या । लोकद्विष्टं पण्डिता वर्जयन्ति दैवज्ञोऽतो लोकमार्गेण यायात् ॥ ' इति ।

' मातृतः, पितृतः ' इत्यत्र मातापितृशब्दौ मातापितृबन्धुपरौ—

ननु च याज्ञवल्क्येन— ' पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । ' ( १।५३ ) इति मातृपक्षे पञ्चमादूर्ध्वमुद्वाहविधानात् कथं मातुलदुहितृपरिणयनम् ? उच्यते—

'मातुरसपिण्डामुद्वहेत्' इत्यनेन मातृबन्धुष्वपि अविशेषेण विवाहप्राप्तौ तन्मा प्रसाङ्क्षीदिति मातृतो मातृबन्धुभ्यः पञ्चमादूर्ध्वमुद्वहेदित्यविरोधः। एवं पितृबन्धुष्वपि द्रष्टव्यम्। अत एव गौतमः— 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति। बीजिनः यो नियोगादुत्पादयति तस्मादप्यूर्ध्वं सप्तमादित्यर्थः।

पितृबान्धवा मातृबान्धवाश्च—

बान्धवा अपि स्मृत्यन्तरे दर्शिताः— 'पितुः पितृष्वसुः पुत्राः पितृमातृष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥'

मातृतः षष्ठ्यादिरेव पितृतोऽष्टम्यादिरेव च कन्या विवाह्या—

यत्पुनर्वसिष्ठेनोक्तम्— 'पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुतः' इति, तत् गौतमीयैकवाक्यत्वाय पञ्चमीं सप्तमीं चातीत्योद्वहेदित्येवंपरं, न तु पुनः पञ्चमीसप्तम्योरेव उद्वाहविधिपरम्। [ पृ. ७२ ] यदपि नारदेनोक्तम्— 'पञ्चमात्सप्तमादर्वाग्बन्धुभ्यः पितृमातृतः। अविवाह्या सगोत्रा च समानप्रवरा तथा॥' (१२।७) इति, यदपि विष्णुना— 'पञ्चमात्सप्तमाद्धीनां यः कन्यामुद्वहेद्द्विजः। गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन्॥' इति, तत्रापि पञ्चमीसप्तम्योर्नाभ्यनुज्ञा, तत्र निषेधश्रवणात्। यदाह मरीचिः— 'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया। क्रियापरा अपि हि ते पतिताः शूद्रतां गताः॥' इति। एतेन यत्कैश्चिदुक्तम् 'ऊर्ध्वं सप्तम्या अलाभे सप्तमीमुद्वहेत्' इति, तदप्यपास्तम्। यदपि पैठीनसिनोक्तम्— 'त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्य विवाहः' इति, तदप्यर्वाङ्निषेधपरम्, न पुनश्चतुर्थीषष्ठ्योः विवाहाभिप्रायम्, विष्ण्वादिवचनविरोधप्रसङ्गात्।

ननु च 'असपिण्डा च या मातुः' इत्यनेन या मातुरसपिण्डा तामुद्वहेदित्युक्तेः स्वमातृपक्षेऽप्यविशेषेण विवाहप्राप्तौ तन्मा भूदिति मातृतो मातृपक्षे पञ्चमादूर्ध्वमुद्वहेदिति नियमः किं न स्यात्? अतः कथं मातुलदुहितृपरिणयनम्? एवं पितृपक्षेऽपि द्रष्टव्यम्। उक्तं च विष्णुपुराणे — 'पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम्। गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप॥' इति। पञ्चमीमतीत्येत्यर्थः। मैवम्, गौतमादिभिः बन्धुष्वेव नियमविधानात्। अथवा मा भूत् बन्धुष्वेव नियमविधानम्; तथापि उक्तप्रकारेण मन्वादिभिरेव मातुलदुहितृपैतृष्वसेयीपरिणयनाभ्यनुज्ञानात् तद्व्यतिरेकेण पक्षद्वयेऽप्ययं नियमः क्रियते इत्यविरोधः। यद्वा 'पञ्चमात्' इति याज्ञवल्कीयं पुत्रिकाकरणादिविषयमित्यनुसंधेयम्। यदत्र युक्तं तद्ग्राह्यम्। यत्तु संग्रहकारेणोक्तम्— 'स्त्रीसंततिस्तथा पुंसामविवाह्ये उभे मते। स्त्रीपुंसोस्तु विवाह्या स्यात् पञ्चमात्सप्तमात्परम्॥' इति, तदप्युक्तविषयमेवेत्यनवद्यम्।

मातुलकन्यादिपरिणेयत्वे श्रुतिः प्रमाणम्—

एवं स्मृतितः सिद्धं मातुलदुहितृपैतृष्वसेयीपरिणयनम्। किंच श्रुतिरपि इममेवार्थं श्रावयति। तथा वाजसनेये श्रूयते— 'तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायते। उत (हि) तृतीये (पुरुषे) संगच्छावहै चतुर्थे संगच्छावहै' इति। अस्यार्थः— समानात् एकस्मात् पुरुषात् अत्ता भोक्ता भर्ता आद्यश्च भोग्यो भार्यालक्षणश्च जायते। जायापती जायेते इति यावत्। ननु एकस्मादुत्पन्नयोर्जायापतित्वे भ्रातृभगिन्योरेव जायापतित्वमुक्तं स्यादित्याशङ्क्याऽऽह। उत हि तृतीये पुरुषे इत्यादि। अनेन दौहित्रपौत्रयोर्मातुलदुहितृपैतृष्वसेयीपरिणयनं उक्तं भवति, तयोः कूटस्थमारभ्य तृतीयत्वात्। संगच्छावहै विवहावहै इत्यर्थः।

अबाधितविषये अर्थवादस्य प्रमाणसिद्धार्थानुवादकत्वम्—

ननु च स्तुत्यूहनपरोऽयमर्थवादो न स्वार्थे प्रमाणम्। उच्यते— सत्यम्, अर्थवादो न स्वार्थे प्रमाणम्, किंतु यत्र प्रमाणान्तरमस्ति तत्र तत्प्रतिपादितार्थावलम्बनेन स्तुतिपरत्वं, यथा— 'वायव्यं श्वेतमालभेत भूतिकामः' इति विहितस्य स्तुतिप्रतिपादकः 'वायुर्वै क्षेपिष्ठा देवता' इति। यत्र तु नास्ति प्रमाणान्तरं, यथा— 'तृतीये पुरुषे संगच्छावहै' इति, तत्र तदनुवादान्यथानुपपत्त्या तथाविधविधिपरिकल्पनं केन वार्यते? अत एव 'त्रीणि ह वै

यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्त्यत एवोद्धपन्ति' इत्यत्र गायत्र्यादिषु प्रतीतावापोद्वापान्यथानुपपत्त्या तत्प्रापको विधिः कल्प्यते । अत एव च ' उपरि हि देवेभ्यो धारयति ' इत्यत्रापि समिदुपरि– [ पृ. ७३ ] धारणविधिः । अन्यथा तत्रापि न स्यात् । यत्र पुनः प्रमाणान्तरविरोधः न तत्र विधिकल्पनं, यथा– 'आदित्यो यूपः ' इति । अत एव– ' प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् ' इत्यत्रापि न विधिकल्पनाया अतिप्रसङ्गः, दुहितृगमने मन्वादिभिः प्रायश्चित्तविधानात् ।

महतामप्यकार्यमितरैर्नानुष्ठेयम्–

अथवा भवत्वर्थवादानुसारेण 'प्रजापतिः स्वां दुहितरं गच्छेत् ' इति विधिः । किमायातमितरेषाम् ? न हि महद्भिरकार्यं कृतमित्यनेनापि कर्तव्यमित्यत्र प्रमाणमस्ति । नहीन्द्रेण अहल्यादिपरदारगमनं कृतमित्यनेनापि गन्तव्यम् । अत एव शङ्खलिखितौ– 'सुरा पिबन्ति त्रिदशाः सा चापेया द्विजातिभिः । हरन्ति वित्तं यदिसद्धास्तच्चासिद्धे न विद्यते ॥ ' वृद्धमनुरपि– ' अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् ॥ ' इति ।

श्रुत्यन्तरेऽपि–'गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः ' ( ऋग्. १०।१०।५ ) इति । नौ आवयोः गर्भे जठरे जनिता जगतः स्रष्टा देवः दम्पती जायापती अकरोदित्यर्थः । मन्त्रोऽपि– 'आयाहीन्द्र पथिभिरीडितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥ ' इति । हे इन्द्र, पथिभिः मार्गैः ईडितेभिः प्रशस्तैः नः अस्माकं इमं यज्ञं आयाहि आगच्छ । आगत्य च इदं अस्माभिर्दीयमानं भागधेयं जुषस्व सेवस्व । अत एव यजमानाः तृप्तां आज्यादिना संस्कृतां वपां अवदानरूपां त्वामुद्दिश्य जहुः त्यक्तवन्तः । अत्र दृष्टान्तद्वयम्– यथा मातुलस्य योषा दुहिता दौहित्रस्य भागः भजनीया परिणेतुं योग्या, यथा च पैतृष्वसेयी पौत्रस्य, तथा अय ते तव भागो वपाख्यः इति मन्त्रार्थः । तेन श्रुतितोऽपि सिद्धं मातुलादिसुतापरिणयनम् ।

मातुलकन्यादिपरिणयने शिष्टाचारः प्रमाणं तत्प्रामाण्यनिरूपणं च–

किंच आचारादप्यवगच्छामः । तथा ह्याचरन्ति तावद्दाक्षिणात्यास्त्रैविद्यवृद्धा वेदार्थानुष्ठातारः शिष्टा एव मातुलसुतादिपरिणयनम् । उक्तं च तदाचारप्रामाण्यं मनुना– ' शिष्टाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ' इति । लक्षणं प्रमाणमित्यर्थः । देवलोऽपि– ' येषु देशेषु ये देवा येषु देशेषु ये द्विजाः । येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका ॥ येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः । तत्र तान्नावमन्येत धर्मस्तत्रैव तादृशः ॥ यस्मिन् देशे पुरे ग्रामे त्रैविद्यनगरेऽपि वा । यो यत्र विहितो धर्मस्तं धर्मं न विचारयेत् ॥ ' इति । ननु आचारस्यापि प्रमाणान्तराविरोधिन एव प्रामाण्यमुक्तं वसिष्ठेन– ' देशाचारकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम् ' इति । सत्यम्, आम्नायो वेद , तदविरोधिन एव प्रामाण्यमिति । न चात्र वेदविरोधोऽस्ति, प्रत्युतानुकूल एवेत्युक्तमधस्तात् । ननु च स्मृतिविरोधेऽपि आचारो दुर्बल एव, ' श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम् ' ( १।४–५ ) इति वसिष्ठस्मरणात् । अस्ति चात्र ' मातुलस्य सुतामूढ्वा ' इत्यादिस्मृतिविरोधः । तेनात्र कथमाचारस्य प्रामाण्यम् ? मैवम्, तेषां मातृसपिण्डाविषयत्वेन विरोधस्य परिहृतत्वात् । अथवा मा भूत्तेषां विशेषविषयत्वं, किंतु उदीच्यदेशे ये मातुलादिदुहितृसंबन्धानाचरन्ति तद्विषयाणीत्यविरोधः, तेषामेव दोषश्रवणात् । [ पृ. ७४ ] तथा च बौधायनः– ' पञ्चधा विप्रतिपत्तिर्दक्षिणतः । अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति । तथोत्तरत ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति । इतर इतरस्मिन् कुर्वन् दुष्यति इतर इतरस्मिन् देशप्रामाण्यात् ' इति । अयमर्थः– इतरः दाक्षिणात्यः इतरस्मिन् उत्तरदेशे मातुलसंबन्धादिकं कुर्वन् दुष्यति न स्वदेशे । तथा इतरः उदीच्यः इतरस्मिन् दक्षिणदेशे शीधुपानादिकं कुर्वन् दुष्यति, न स्वदेशे । कुतः ? देशप्रामाण्यात् देशनिबन्धनस्याचारप्रामाण्यस्येत्यर्थः । अत एव देवलः– ' यस्मिन्

देशे य आचारो न्यायदृष्टस्तु कल्पितः । तस्मिन्नेव स कर्तव्यो देशाचारः स्मृतो भृगोः ॥ ' इति । न च एवं सति उदीच्यानां स्वदेशे परदेशे वा मातुलसंबन्धाद्य-विरुद्धमिति शङ्कनीयम् । यदाह आपस्तम्बः— ' येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारै-र्नेतरे पुनः ॥ ' येषां पितृपितामहादिपरम्पराप्राप्ताः पूर्वजैश्च त्रैविद्यवृद्धैरनुष्ठिता ये आचाराः सन्ति ते एव तैराचारैरनु-ष्ठीयमानैर्न दुष्येयुः, नेतरैः ( १ रे ) । नह्युदीच्यानां तथा-विधा आचाराः । सन्ति तु दाक्षिणात्यानाम् । अतस्तैरेव स्वदेशे कार्यं नान्यैरिति सिद्धम् । देशव्यवस्थया प्रामाण्यमुक्तं वार्तिककारैः— ' सर्वेषामेवमादीना प्रतिदेशं व्यवस्थया । आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥ ' इति । यत्तु बौधायनेन ' देशप्रामाण्यात् ' इत्येवमन्तमुक्त्वा उक्तम्— ' मिथ्यैतदिति गौतमः । उभयं चैव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात् ' इति, तत्र पूर्वोक्तनिराकरणार्थं, गौतमग्रहणात्, किंतु शिष्टस्मृतिविरोधदर्शनाद्गौतमस्य मातृसपिण्डापरिणयनम(न)भिप्रेतमिति दर्शयितुम् । एवं च यदुक्तमन्यैः— ' स्यादेवं यद्यनन्तरमेव मिथ्यैतदिति न ब्रूयात् ' इति, तदप्यपास्तम् । तेन श्रुतेः स्मृतेराचाराच्च सिद्धं मातुलदुहितृपैतृष्वसेयीपरिणयनमिति सर्वमनवद्यम् ।

---

## *पराशरमाधवः

## [ पृ. ४६५–४७३ ]

सपिण्डलक्षणम्, निर्वाप्यसापिण्ड्यम्—

[ पृ. ४६५ ] असपिण्डामिति । समानः एकः पिण्डो यस्याः सा सपिण्डा, न सपिण्डा असपिण्डा, ताम् । सपिण्डता च सप्तमपुरुषपर्यवसायिनी । तत्र एकः पिण्डदाता, त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः, त्रयो लेपभाजः वृद्धप्रपितामहादयः । तथा च मत्स्यपुराणे— 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' इति । मार्कण्डेयोऽपि— ' पिता पितामहश्चैव तथैव प्रपितामहः । पिण्डसंबन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥ लेपसंबन्धिनश्चान्ये पितामह-

* आदर्शपुस्तके कलकत्तामुद्रितम् ।

प्रपितामहात् । प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः । इत्येष मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः ॥ ' इति । एतदुक्तं भवति— सप्तानां पुरुषाणां एकपिण्डक्रियानुप्रवेशः सापिण्ड्यहेतुः । तथा च देवदत्तस्य स्वकीयैः पित्रादिभिः षड्भिः सह सापिण्ड्यं, तथा पुत्रादिभिः षड्भिः सह सापिण्ड्यमिति । ननु एवं सति भ्रातृपितृव्यादिभिः सह सापिण्ड्यं न स्यात्, परिगणितेषु अनन्तर्भावात् । मैवम्, उद्देश्यदेवतैक्येन क्रियैक्यस्यात्र विवक्षितत्वात् । [ पृ. ४६६ ] देवदत्तकर्तृकक्रियायां ये देवतात्वेन अनुप्रविशन्ति, तेषा मध्ये यः कोऽपि भ्रातृपितृव्यकर्तृकक्रियायामपि अनुप्रविशति इत्यस्ति तैः सह सापिण्ड्यम् । एवं भार्याणामपि भर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृत्वात् सापिण्ड्यमिति । तदिदं निर्वाप्यसापिण्ड्यम् ।

अवयवसापिण्ड्यम्—

अपरे पुनरन्यथा सापिण्ड्यमाहुः । तथाहि— समानः एकः पिण्डः देहावयवः येषां ते सपिण्डाः । तत्र पुत्रस्य साक्षात् पितृदेहावयवान्वयेन पित्रा सह सापिण्ड्यम् । तथा पितामहादिभिरपि, पितृद्वारेण तच्छरीरावयवान्वयात् । साक्षान्मातृशरीरावयवान्वयेन मात्रा । मातामहादिभिरपि, मातृद्वारेण तच्छरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि, पितामहदेहावयवान्वयात् । तथा मातृष्वसृमातुलादिभिः सह, मातामहदेहान्वयात् । पत्न्या सह एकशरीरारम्भकतया पत्युः । एवं भ्रातृभार्याणामपि एकशरीरारम्भकैः स्वस्वपतिभिः सह एकशरीरारम्भकत्वेन । एवं तत्र तत्र साक्षात् परंपरया वा एकशरीरावयवान्वयेन सापिण्ड्यं योजनीयम् ।

मातृपक्षे पञ्चमादूर्ध्वं पितृपक्षे सप्तमादूर्ध्वं सापिण्ड्यनिवृत्तिः—

उक्तं द्विविधं सापिण्ड्यं यस्या नास्ति सेयमसपिण्डा, तामुद्वहेत् । ननु एवं सति न क्वाप्युद्वाहः संभवेत्, सर्वत्र सापिण्ड्यस्य कथंचिद्योजयितुं शक्यत्वात्, विधातृशरीरानुवृत्तेः दुष्परिहरत्वात्, ' बहु स्यां प्रजायेय ' इति श्रुतेः । नैष दोषः , अविरोधेन प्राप्तस्य सापिण्ड्यस्य सप्तसु पञ्चसु च पुरुषेषु संकुचितत्वेन तदूर्ध्वं सापिण्ड्यनिवृत्तेः । तथा च गौतमः— ' सपिण्डनिवृत्तिः सप्तमे पञ्चमे वा ' इति । याज्ञवल्क्योऽपि— [ पृ. ४६७ ]

'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा।' इति। मातृपक्षे पञ्चमात् पितृपक्षे सप्तमात् पुरुषादूर्ध्वं सापिण्ड्यं निवर्तते इत्यध्याहृत्य योजनीयम्, 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।' इति मनुस्मरणात्। एतदुक्तं भवति— पितृपक्षे कूटस्थमारभ्य तत्पुत्रादिगणनायां सप्तमादूर्ध्वं वरवध्वोर्विवाहो न दुष्यति। मातृपक्षे च कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां वरवध्वोर्माता चेत् पञ्चमी भवति, तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहो न दोषाय इति। यत्तु विष्णुपुराणवचनम्— 'पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम्। गृहस्थ उद्वहेत् कन्यां न्याय्येन विधिना नृप॥' इति, तत्र सप्तमीं पञ्चमीमतीत्य इत्यध्याहार्यम्, अन्यथा 'पञ्चमात्सप्तमादूर्ध्वम्' इति वचनविरोधात्, 'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया। क्रियापरा अपि हि ते सर्वतः शूद्रतां गताः॥' इति मरीचिवचनविरोधाच्च।

विजातीयेषु त्रिपुरुषसापिण्ड्यं मुख्यं, सजातीयेषु तद् अनुकल्पः—

यद्यपि (यदपि) पैठीनसिना कल्पद्वयमुक्तम्— 'पञ्च मातृतः परिहरेत् सप्त पितृतस्त्रीन्मातृतः पञ्च पितृतो वा' इति, तत्र द्वितीयः कल्पः असमानजातीयविषयः। यतः शङ्ख आह— 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु॥' इति। अयमर्थः— येषां एकः पिता मातरो भिन्नजातीयास्ते मातृभेदाद- [पृ. ४६८] समानजातीयाः, तथापि पित्रैक्यादस्ति सापिण्ड्यम्, तच्च त्रिषु पुरुषेष्वतीतेषु निवर्तते, इति। ननु एवं सति पितृपक्षेऽपि त्रिभिः पुरुषैः सापिण्ड्यनिवृत्तेः 'पञ्च पितृतो वा' इति वचनं विरुध्येत। एवं तर्हि 'त्रीन्मातृतः पञ्च पितृतो वा' इति पैठीनसिवचनं सजातीयेष्वेव निषेधपरम्, अनुकल्पो वाऽस्तु।

'पितृतः' इत्यनेन बीजिनोऽपि संग्रहः—

'मातृतः पितृतस्तथा' इत्यत्र पितृशब्देन बीजिनोऽपि संग्रहः। तथा च गौतमः— 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति। यो हि नियोगात् पुत्रमुत्पादयति स बीजी।

मातापितृबान्धवाः—

मातृपितृबान्धवाः स्मृत्यन्तरे दर्शिताः— 'पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥' इति।

पितृसपिण्डत्वं पितृसगोत्रत्वेन गतार्थम्—

ननु 'असपिण्डाम्' इति न वक्तव्यं, वक्ष्यमाणेन 'असमानार्षगोत्रजाम्' इत्यनेनैव सपिण्डाया विवाहनिषेधसिद्धेः। सत्यम्,

माता गान्धर्वादिविवाहोढा चेत् पितृसपिण्डत्वात्पृथक् मातृसपिण्डत्वं विवाहे कन्यापर्युदासनिमित्तम्—

तथापि या मातुरसपिण्डा भवति सैवोद्वाहकर्मणि प्रशस्ता इति वक्तव्यम्। तथा च मनुः— 'असपिण्डा च या मातुरसगोत्रा च या पितुः। [पृ. ४६९] सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥' इति। या मातुरसपिण्डा असगोत्रा च, या पितुरसगोत्रा चकारात् असपिण्डा च, सा मैथुने मिथुनसाध्ये दारकर्मणि द्विजातीनां प्रशस्ता, परिणेया इत्यर्थः। ननु अत्र मातृग्रहणं अनर्थकं, पितृगोत्रसापिण्ड्यनिषेधेनैव मातृगोत्रसापिण्ड्यनिषेधसिद्धेः, पृथक्पिण्डगोत्रयोरभावात्, 'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके। स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे॥' इति वचनात्। मैवम्, गान्धर्वादिविवाहेषु कन्याप्रदानाभावेन पितृगोत्रसापिण्ड्ययोरनिवृत्तेः। तथा च मार्कण्डेयपुराणम्— 'ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्। भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया। गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित्॥' इति।

ब्राह्मादिविवाहोढाजेन वरेण मातुलकन्या पैतृष्वसेयी च परिणेया, न गान्धर्वादिविवाहोढाजेन—

एतेन मातुलसुताविवाहविषयविवादोऽपि परास्तः। तथाहि— तन्निषेधवचनानि * गान्धर्वादिविवाहोढाजा-

* 'गान्धर्वादिविवाहोढाजा' इति, 'ब्राह्मादिविवाहोढाजा' इति च लेखकप्रमाद इति भाति, तस्य कन्यापरत्वेन अन्वयव्यतिरेकव्यभिचारापातात्। तथाहि— तस्य कन्यापरत्वे गान्धर्वा-

विषयाणि, तत्र साषिण्ड्यनिवृत्तेरभावात्, तदनुग्राहकश्रुतिस्मृतिसदाचारात्। न ब्राह्मादिविवाहोढाजाविषयाणि, तत्र साषिण्ड्यनिवृत्तेः। तानि च निषेधवचनानि-- तत्र शातातपः- 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्॥' इति। पैठीनसिरपि- 'पितृमातृस्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यस्ता वर्जयेदिति विज्ञायते'। सुमन्तुरपि- 'पितृपत्न्यः सर्वा [पृ. ४७०] मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृस्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि, अन्यथा संकरकारिण्यः' इति। व्यासः- 'मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः' इति। ननु अविशेषेण प्रवृत्तानामेषा वचनानां कथं विशेषविषयता? विशेषवचनबलादिति ब्रूमः। तथा च मनुः- 'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत्। एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान्॥' इति भगिनीपदं पैतृष्वसेय्यादिविशेषणम्। आप्तस्य इति मातुर्भ्रातृविशेषणम्। तत्र सुतां इत्यध्याहारः। आप्तस्य संनिकृष्टस्य सपिण्डस्य गान्धर्वादिविवाहोढायाः मातुर्भ्रातुरित्यर्थः। पैतृष्वसेयीमित्यत्रापि अनिवृत्तसापिण्ड्या गान्धर्वादिनोढा पितृष्वसा विवक्षिता। तथा च सति तद्दुहितुर्भगिनी इति विशेषणं सार्थकम्। ब्राह्मादिविवाहेषु सापिण्ड्यनिवृत्तेः भगिनीपदं नान्वीयात्। अयमेव न्यायो मातृष्वस्रीयायामपि योजनीयः। तस्मात् भगिन्याप्तपदोपेतमनुवचनबलादविशेषे निषेधो विशेषविषय एवोपसंह्रियते।

मातृष्वसेय्या अपरिणेयत्वं शिष्टाचारप्रामाण्यं च-

ननु ब्राह्मादिविवाहविषये मातुलसुताया इव मातृष्वसृसुताया अपि विवाहः प्राप्नुयात्। तन्न, शिष्टगर्हितत्वेन तत्र निषेधस्मृतिकल्पनात्। शिष्टगर्हितस्यानुपादेयत्वं याज्ञवल्क्य आह- [पृ. ४७१] 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' इति। यद्यपि मातुलसुतापरिणयनं उदीच्यशिष्टगर्हितं, तथापि दाक्षिणात्यशिष्टाचरितत्वेन नाविगीतोऽयं उदीच्यानामाचारः। न च दाक्षिणात्यानां रागमूलत्वं शङ्कनीयं, विधिनिषेधपरीक्षकैरेव तद्विवाहकरणात्। मातृष्वसृसुताविवाहस्तु अविगीतेन शिष्टाचारेण गर्हितः।

मातुलसुतादिपरिणेयत्वे श्रुतिः प्रमाणम्-

मातुलसुताविवाहस्य अनुग्राहिका श्रुतिः- तत्र मन्त्रवर्णः- 'आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व। तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव॥' इति। अयमर्थः- हे इन्द्र, पथिभिः ईळितेभिः स्तुतैः सह नः अस्माकं इमं यज्ञं आयाहि। आगत्य च अस्माभिर्दीयमानं भागधेयं जुषस्व। तृप्तां आज्यादिना संस्कृतां वपां त्वामुद्दिश्य जहुः त्यक्तवन्तः। तत्र दृष्टान्तद्वयम्-- यथा मातुलस्य योषा दुहिता भागिनेयस्य भागः भजनीया, भागिनेयेन परिणेतुं योग्या, यथा च पैतृष्वसेयी पौत्रस्य भागः, तथाऽयं ते तव भागः वपाख्यः, इति। वाजसनेयकेऽपि- 'तस्माद्वा समानादेव पुरुषादत्ता चाद्यश्च जायते, उत तृतीये संगच्छावहै चतुर्थे संगच्छावहै' इति। समानात् एकस्मात् पुरुषात् अत्ता भोक्ता आद्यश्च भोग्यः द्वावपि उत्पद्येते। तौ च मिथः संकल्पयतः, कूटस्थमारभ्य तृतीये चतुर्थे वा पुरुषे संगच्छावहै विवहावहै इत्यर्थः।

अनधिगताबाधितविषयस्यार्थवादस्य स्वार्थे प्रामाण्यम्-

यद्यपि अयमर्थवादः, तथापि मानान्तरविरोधाभावात् स्वार्थे प्रमाणम्, विरोधिवचनानां मातृसपिण्डाविषयत्वस्य वर्णितत्वात्। [पृ. ४७२] तस्मात् अविरुद्धार्थ-

---

दिविवाहोढत्वादि मातुलान्याः प्राप्तम्। तथा च कन्याया गान्धर्वादिविवाहोढाजत्वेऽपि वरस्यापि ब्राह्मादिविवाहोढाजत्वे विवाहनिषेधाभावादन्वयव्यभिचारः, वरस्य गान्धर्वादिविवाहोढाजत्वे कन्याया गान्धर्वादिविवाहोढाजत्वाभावेऽपि निषेधसद्भावाद्व्यतिरेकव्यभिचारश्च। किंच उक्तपदयोः कन्यापरत्वे 'मातुश्च भ्रातुराप्तस्य' इति मनुवचनस्य माधवीयव्याख्यानेन विरोधश्च। तस्मात् 'गान्धर्वादिविवाहोढाज' 'ब्राह्मादिविवाहोढाज' इति वरपरत्वमेव साधु। इदं तु ध्येयम्— वरस्य ब्राह्मादिविवाहोढाजत्वेऽपि यदि कन्यामातामहस्य वरसगोत्रत्वं मातुलान्या गान्धर्वादिविवाहोढत्वं च भवेत्, तदा सगोत्रत्वप्रयुक्तो मातुलकन्याविवाहनिषेधः स्यादेवेति।

वादेन अनुदितत्वात् उपरिधारणवत् विधिः कल्पयितुं शक्यते । तथाहि– प्रेताग्निहोत्रे श्रूयते ' अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति ' इति । तत्र पैतृकस्य हविषोऽधस्तात् समन्त्रकं समिद्धारणं विधाय तद्वाक्यशेषे समिधो हविरुपरिधारणं दैवे कर्मणि यत् श्रुतं, तत्किं अर्थवादः, उत विधीयते ? इति संशयः । तत्र अधोधारणविधिस्तावकत्वेन तदेकवाक्यतालाभादर्थवाद इति पूर्वपक्षः । प्रसिद्धं हि अर्थमनूद्य तेन स्तुतिर्युक्ता, उपरिधारणं तु न क्वापि प्रसिद्धं अतस्तावकत्वायोगाद्वाक्यभेदमभ्युपगम्यापि अपूर्वार्थत्वाद्विधिः कल्पितः । एवं ' तृतीये पुरुषे संगच्छावहे ' इत्यादावपि अपूर्वार्थत्वेन ' मातुलसुतां विवहेत् ' इति विधिः कल्प्यते । तस्मात् शास्त्रानुगृहीतोऽयं विवाहः । स्मृतयस्तु ब्राह्मादिषु सापिण्ड्यनिराकरणेन मातुलसुताविवाहप्रापकतया दर्शिताः । शिष्टाचारश्च दाक्षिणात्यानां अविगीत उदाहृतः ।

देशभेदेन मातुलकन्यादिपरिणेयत्वापरिणेयत्वव्यवस्था—

केचित्तु आसुरादिष्वपि देशविशेषेण मातुलसुताविवाहो धर्म्य इति मन्यन्ते । उदाहरन्ति च वचनानि– तत्र बौधायनः– ' पञ्चधा विप्रतिपत्तिर्दक्षिणतः, अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलदुहितृपितृष्वसृदुहितृपरिणयनमिति, तथोत्तरतः, ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति, इतर इतरस्मिन् कुर्वन् दुष्यति, इतर इतरस्मिन्, तद्देशप्रामाण्यात् ' इति । इतरः दाक्षिणात्यः इतरस्मिन् [ पृ. ४७३ ] उत्तरदेशे मातुलसंबन्धं कुर्वन् दुष्यति, न स्वदेशे । तथा इतरः उदीच्य इतरस्मिन् दक्षिणदेशे सीधुपानादिकं कुर्वन् दुष्यति, न स्वदेशे । कुतः ? देशप्रामाण्यात् देशनिबन्धनत्वादाचारस्येत्यर्थः । तथा च देवलः– ' यस्मिन् देशे य आचारो न्यायदृष्टस्तु कल्पितः । स तस्मिन्नेव कर्तव्यो न तु देशान्तरे स्मृतः ॥ यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा । यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥ ' इति ।

देवादीनामाचारो मनुष्यैर्नानुष्ठेयः—

ननु शिष्टाचारप्रामाण्ये स्वदुहितृविवाहोऽपि प्रसज्येत, प्रजापतेराचरणात् । तथा च श्रुतिः– ' प्रजापतिः स्वां दुहितरमभ्यगात् ' इति । मैवम्, ' न देवचरितं चरेत् ' इति न्यायात् । अत एव बौधायनः– ' अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् ॥ ' इति । तदेवं ब्राह्मादिविवाहव्यवस्थया देशभेदविषयव्यवस्थया च मातुलसुताविवाहः ' असपिण्डाम् ' इत्यादिशास्त्रादेव सिद्धः ।

---

## * सापिण्ड्यनिर्णयदीपिका

### [ पृ. २१-३५ ]

महेशानं नमस्कृत्य शारदां गुरुमादरात् ।
विवाहे वर्तनीयत्वात्सापिण्ड्यं प्रविविच्यते ॥

'मातृतः पञ्चमात्, पितृतः सप्तमात्' इत्यत्र व्यधिकरणे पञ्चम्यौ—

[ पृ. २१ ] इह खलु याज्ञवल्क्येन ' अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ' इत्याद्युपक्रम्य ' पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा । दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ॥ ' इत्युक्तम् । तत्र मातृतः मातृद्वारात् पञ्चमादूर्ध्वं पितृतः पितृद्वारात् सप्तमादूर्ध्वं महाकुलात् कन्यामुद्वहेदित्यर्थः प्रतीयते । न च 'मातृतः पञ्चमात् पितृतः सप्तमात्' इति सामानाधिकरण्ये पञ्चम्यौ । तथा च माता पञ्चमी पिता सप्तम इत्यर्थो लभ्यते इति वाच्यम्, स्त्रीलिङ्गेन मातृशब्देन सह पुंलिङ्गे पञ्चमशब्दे सामानाधिकरण्यायोगात् । ततो वैयधिकरण्ये पञ्चम्यौ मातृद्वारा पञ्चमात् पितृद्वारा सप्तमादिति ।

---

* आदर्शपुस्तकं श्री. ज. र. घारपुरेसंपादितम् ।

मातृपक्षे पञ्चपुरुषं पितृपक्षे सप्तपुरुषं च सापिण्ड्यम्,

मातृपक्षे गणनाप्रकारश्च—

ननु कथं मातृतः पञ्चमता, कथं पितृतः सप्तमता, कथं वा तदूर्ध्वं इति विविच्य वाच्यम्। तदुच्यते– इह हि गृहस्थो मातृतः पञ्चमात् पितृतः सप्तमादूर्ध्वं स्त्रियमुद्वहेदित्यन्वये उद्वाहकस्य यौ मातापितरौ तद्द्वारा य ऊर्ध्वसंताने पञ्चमः सप्तमश्च तदूर्ध्वं या स्त्री तामुद्वहेदित्यर्थोऽवसीयते। तत्र उद्वाहकवरमारभ्य मातृपक्षे पञ्चमपर्यन्तं पितृपक्षे सप्तमपर्यन्तं गणना कार्या। तत ऊर्ध्वम्भाविनि संताने या कन्या, सा वरेणोद्वाह्येत्यर्थः। तत्रेत्थं गणनीयम्– उद्वाहको वरः प्रथमः। तन्माता द्वितीया। तस्याश्च यौ मातापितरौ ( तौ ) तृतीयौ। तयोरुभयोरपि द्वे मातरौ पितरौ चेति चतुष्टयं चतुर्थी पङ्क्तिः। एवं तस्यापि चतुष्टयस्य मातरश्चतस्रः पितरोऽपि चत्वार इति निष्पन्नमष्टकं पञ्चमकुलम्। अत्र तृतीयपङ्क्तौ वर्तमानानि सर्वाणि तृतीयानि, चतुर्थपङ्क्तिस्थानि चतुर्थानि, पञ्चमपङ्क्तिस्थानि पञ्चमानि। द्वितीयपङ्क्तौ चैका माता, सा द्वितीया। एवं द्वितीयादिपञ्चमान्ता याः पङ्क्तय उक्तास्तत्र सर्वास्वपि पङ्क्तिषु एकैकस्मात् मातृपितृरूपदाम्पत्यादुत्पन्नाः कन्यापुत्रतत्कन्यापुत्रेत्येवंरूपाः सतानवल्ल्यो भिन्नरूपाः सन्ति। तथा च तत्संतानवल्लीस्था या कन्या सा वरेण नोद्वाह्या। किंतु यत् पूर्वकुलमुक्तं पञ्चमकुलं मातृपितृसमुदायरूपं अष्टव्यक्त्यात्मकं ततोऽप्यूर्ध्वं यत् षष्ठं कुलं मात्रष्टकं पित्रष्टकं चेति षोडशव्यक्त्यात्मकं, यानि च तदूर्ध्वभागी(वी)नि सप्तमादिकुलानि तेभ्यः प्रत्येकं दाम्पत्यादुत्पन्ना याः सतानवल्ल्यस्तन्मध्यस्था या कन्या सा वरेणोद्वाह्या। तत्रापि समानगोत्रा वर्ज्या इति मातृपक्षे गणना। उक्तं च–

[ पृ. २२ ] 'अस्या मातुश्च यत्पित्र्यं मातृकं वा यदा भवेत्। उभयं तद्धि कन्याया मातृतः परिकीर्तितम्॥'

एवं मातृपक्षे पञ्चमपर्यन्तं गणनाप्रकार उक्त.।

पितृपक्षे गणनाप्रकारः ; तत्र पितृकुले पुरुषगणना—

इदानीं पितृपक्षे सप्तमपुरुषपर्यन्तं गणनाप्रकारोऽभिधीयते। तत्र वरः प्रथमः। वरस्य पिता द्वितीयः। तस्यापि यः पिता वरस्य पितामहः स तृतीयः। तस्यापि यः पिता वरस्य प्रपितामहः स चतुर्थः। तस्यापि यः पिता वरस्य नान्दीमुखः पिता स पञ्चमः। तस्यापि यः पिता वरस्य नान्दीमुखः पितामहः स षष्ठः। तस्यापि यः पिता वरस्य नान्दीमुखः प्रपितामहः स सप्तमः।

पितामहीजनककुलगणना—

तथा च वरस्यापि पिता यो द्वितीयस्थाने उक्तः, तस्य या माता वरस्य पितामही सा तृतीया, तस्या अपि यौ मातापितरौ तच्चतुर्थं कुलं, तयोरुभयोर्द्वे मातरौ द्वौ च पितरौ इति चतुष्टयं पञ्चमकुलम्, तस्यापि चतुष्टयस्य चतस्रो मातरः पितरोऽपि चत्वार इत्यष्टकं षष्ठं कुलम्, तस्याप्यष्टकस्य अष्टौ मातरः अष्टौ पितर इति षोडशव्यक्त्यात्मकं सप्तमं कुलम्।

प्रपितामहीजनककुलगणना—

तथा च वरस्य यः पितामहः तृतीयस्थाननिविष्टस्तस्य च माता सा वरस्य प्रपितामही चतुर्थी। तस्या अपि मातापितरौ पञ्चमं कुलम्। तयोरुभयोरपि द्वे मातरौ द्वौ च पितरौ इति चतुष्टयं षष्ठं कुलम्। तस्यापि चतुष्टयस्य चतुरो मातरः पितरोऽपि चत्वार इति अष्टकं सप्तमं कुलम्।

नान्दीमुखमातृजनककुलगणना—

तथा च वरस्य यः प्रपितामहश्चतुर्थस्थाने उक्तः तस्य माता वरस्य पञ्चमी, तस्या अपि यौ मातापितरौ षष्ठौ तयोरुभयोरपि द्वे मातरौ द्वौ च पितरौ इति चतुष्टयं सप्तमं कुलम्।

नान्दीमुखपितामहीजनककुलगणना—

तथा वरस्य यो नान्दीमुखः पिता पञ्चमस्थाननिर्दिष्टः तस्य च या माता षष्ठी तस्या अपि मातापितरौ सप्तमं कुलम्।

नान्दीमुखप्रपितामहीजनककुलानि सापिण्ड्यबहिर्भूतानि—

तथा वरस्य यो नान्दीमुखः पितामहः षष्ठस्थाने उक्तस्तस्य च या माता सप्तमी तस्या अपि मातापितरौ तौ अष्टमौ। तत्र सापिण्ड्यं नास्ति, सप्तमादूर्ध्वत्वात्।

नान्दीमुखप्रपितामहमाता सापिण्ड्यबहिर्भूता—

तथा च वरस्य यो नान्दीमुखः ( प्रपितामहः ) सप्तमस्थाननिर्दिष्टस्तस्यापि या माता सा वरस्याष्टमी न

सपिण्डा, सप्तमादूर्ध्वत्वात् । सप्तमादूर्ध्वं सापिण्ड्यं नास्ति । तदुक्तम्— ' पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा एते पिण्डभाजः प्रकीर्तिताः ॥ लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ॥ ' ' प्रपितामहपूर्वकाः ' इति वा । ' पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् । ' इति पितृपक्षे गणना । उक्तं च— ' वरस्यापि पितुः पित्र्यं मातृकं वा यदा भवेत् । पित्र्यमेतद्वरस्यैतदुभयं पितृतः स्मृतम् ॥ ' इति ।

सापिण्ड्यमर्यादायामाक्षेपसमाधाने—

ननु ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ' इति मनुना सप्तमे सापिण्ड्यनिवृत्तेरुक्तत्वात् कथं सप्तमपुरुषमन्तर्भाव्य सापिण्ड्यमुच्यते इति चेत्, मैवम्, सपिण्डतायाः सप्तमे पुरुषे निवृत्तिर्भवति, न तु सा जातनिवृत्तिरिति मनुवाक्यार्थपर्यालोचनया सप्तमे [ पृ. २३ ] पुरुषे विनश्यद्वस्थस्य सापिण्ड्यस्यानिवार्यत्वात् । अन्यथा सप्तमे पुरुषे सापिण्ड्यं निवृत्तमेवेति मनुवाक्यार्थवर्णने ' सापिण्ड्यं साप्तपौरुषम् ' इति स्मृत्यन्तरविरोधः स्यात् । तथा चास्मदुक्तमेव मनुवाक्यार्थवर्णनं युक्तम् । यथा ' मृतकं सूतकं चैव दशाहे विनिवर्तते ' इत्युक्तेः दशमेऽहनि विनश्यदवस्थं सूतकं मृतकं वर्तत एव, न तु निवृत्तमिति प्रतीयते, तद्वदत्रापि । ततश्च यथा दशाहः सूतकादिनिवर्तकः एवं सप्तमः सापिण्ड्यनिवर्तक इति ।

पितामह्यादिभिः पितृद्वारकं मातृद्वारकं च साप्तपौरुषं सापिण्ड्यम्—

ननु ' सापिण्ड्यं साप्तपौरुषम् ' इति न्यायेन पितृपक्षवन्मातृपक्षेऽपि सापिण्ड्यं साप्तपौरुषं किं न स्यादिति चेत्, सत्यम्, वर्तते एव मातृपक्षेऽपि साप्तपौरुषं सापिण्ड्यम् । तथाहि— मातृपितामहीप्रपितामहीत्रयं नान्दीमुखमात्रादित्रयं च इति षट्कं स्वयं पिण्डदः सप्तम इति । न हि एतेषां सापिण्ड्यं नास्तीति ब्रह्मणा सुवचम् । ननु पितामह्यादिभिः सापिण्ड्यं न मातृपक्षीय, तत्कथमेतन्मातृपक्षीय साप्तपौरुषं सापिण्ड्यमुच्यते । मैवम्, ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके । स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ॥ ' इति मनुना मातुः पितामह्यादिभिः सापिण्ड्यस्योक्तत्वेन वरस्य पितामह्यादिभिः सापिण्ड्यस्य मातृद्वारकत्वेनापि संभवात् ।

मातामहतत्पत्न्यादिभिर्मातृद्वारकमेव पाञ्चपौरुषं सापिण्ड्यम्—

ननु यदि वरस्य पितामह्यादिभिः मातृद्वारकमपि साप्तपौरुषं, कथं तर्हि ' मातृतः पञ्चमादूर्ध्वम् ' इति मातृद्वारकं सापिण्ड्यं पञ्चमादूर्ध्वं निवर्तते इत्युच्यते इति चेत्, न । मातामहतत्पत्न्यादिभिः साकं यत्सापिण्ड्यं तद्विषयं हि पञ्चमादूर्ध्वमिति वाच्यम् । तथा च मातृद्वारकं मातामहतत्पत्न्यादिभिर्यत् सापिण्ड्यं तत् पाञ्चपौरुषं पितामह्यादिभिस्तु साप्तपौरुषं इति विवेकः ।

अनिवृत्तपितृसापिण्ड्याया एव कन्याया भर्तृसापिण्ड्यं विधीयते, तन तस्या उभयत्र सापिण्ड्यसिद्धिः—

ननु ' एकत्वं सा गता भर्तुः ' इति मनुना मातुः पितामह्यादिभिरेव सापिण्ड्यस्य उक्तत्वात् मातामह्यादिभिः ' सापिण्ड्यं पाञ्चपौरुषम् ' इति यदुक्तं तन्न सिध्येत् । मैवम् । न हि अनेन मनुवाक्येन मातामह्यादिभिः सापिण्ड्यं निषिध्यते, किंतु मातामह्यादिभिः सपिण्डाया एव तस्या अधिकं पितामह्यादिभिः सापिण्ड्यं बोध्यते इति । ततो मातुः स्वपितृपक्षे भर्तृपक्षे च सापिण्ड्यमस्त्येव । अत एव मनुना— ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' इति वाक्ये मातृसपिण्डानिषेधेन पितृसपिण्डाऽपि एकहेतुतया निषिध्यते । मातृसापिण्ड्यस्य उभयत्रासङ्गिनो निषेधे उभयविधस्यापि निषिद्धत्वात् । अन्यथा सापिण्ड्योभयविधत्वाभावे मातुरसपिण्डा इति मातृसपिण्डामात्रनिषेधेऽपि पितृसपिण्डाया निषेधासिद्धेस्तत्सिद्ध्यर्थं पितुरसगोत्रा मातुरसपिण्डा पितुश्चासपिण्डा इत्यावृत्त्या योज्यं स्यात् ।

गुणत्वाभावे एव मातृद्वारकत्वस्य पाञ्चपौरुषत्वप्रयोजकत्वम्, अत एव पितामह्यादिभिः सापिण्ड्यस्य मातृद्वारकत्वेऽपि न पाञ्चपौरुषत्वम्—

ननु पितृपक्षे यदि मातृद्वारकं सापिण्ड्यं तर्हि तत् पञ्चमादूर्ध्वं निवर्तेत, ' मातृतः पञ्चमात् ' इति वचनात् । मैवम्, पितृपक्षे विद्यमानस्यापि मातृद्वारकस्य पितृद्वारकसापिण्ड्यान्तर्गतत्वेन अप्राधान्यात्, *तथा-

* इदमत्र चिन्त्यम्— प्राधान्यस्य गुणत्वनिरूपितत्वेन गुणभूतान्यसद्भावे एव तत्संभवात्, न केवलस्य । अत एवोक्तद्वार ' ति-

धान्ये सत्येव ' मातृतः पञ्चमादूर्ध्वम् ' इत्यस्य व्यवस्थितत्वात् । ततो मातृद्वारकं यत्र सापिण्ड्यं प्रधानं तत्र पञ्चमादूर्ध्वे सापिण्ड्यनिवृत्तिः । अत एव वरस्य मातामहादिभिः सापिण्ड्ये मातृद्वारकत्वप्राधान्यमिति पञ्चमादूर्ध्वे तन्निवृत्तिः । यत्र पितृसापिण्ड्ये पितृद्वारकत्वप्राधान्यं तत्र सप्तमादूर्ध्वे सापिण्ड्यनिवृत्तिः । यथा तस्यैव वरस्य [ पृ. २४ ] पितामहादिभिः सह सप्तमादूर्ध्वे सापिण्ड्यस्य निवृत्तिरिति ।

ब्राह्मादिविवाहोढासुतस्यैव पितामहादिभिः सापिण्ड्यस्य मातृद्वारकत्वमपि, नेतरस्य—

एवं वरस्य पितृपक्षेऽपि सापिण्ड्यं मातृद्वारकमिति यत् तन्न सार्वत्रिकम्, किन्तु ब्राह्मदैवार्षप्राजापत्यैश्चतुर्भिरेव विवाहैः उत्पादितायामुत्पन्नवरस्य । यस्तु गान्धर्वपैशाचासुरराक्षसैः चतुर्भिर्विवाहैः उत्पादितायामुत्पन्नो वरः स स्वमातुर्मातामहादिभिः सापिण्ड्यं करोति द्वादशाहादौ । तस्य पितृपक्षेऽपि सापिण्ड्यं शातातपेनोक्तम्— ' तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् । आसुरादिविवाहेषु व्यूढानां योषितां स्मृतम् ॥ ' इत्यलं प्रसक्तानुप्रसक्तविचारेण । प्रकृतं त्वनुसंधीयते ।

पूर्वोक्तचतुर्थादिकुलान्तर्भूताः सर्वा व्यक्तयश्चतुर्थत्वादिना गणनीयाः—

पूर्वोक्तेषु पितृतः सप्तसु कुलेषु मध्ये चतुर्थकुले यावन्त्यो मातृपितृव्यक्तयस्ताः सर्वा वरस्य चतुर्थरूपाः । तथा पञ्चमेऽपि कुले यावत्यो व्यक्तयस्ताः सर्वाः पञ्चमरूपाः । तथा षष्ठेऽपि कुले यावत्यो व्यक्तयस्ताः सर्वाः षष्ठरूपाः । एवं सप्तमकुलस्था अपि सर्वा मातृपितृव्यक्तयस्ताः सर्वा वरस्य सप्तमरूपाः । तथा च ताभ्यः सर्वाभ्यो व्यक्तिभ्य उत्पद्यमानाः कन्यापुत्रतत्कन्यापुत्रेत्येवंरूपा यावत्यः संतानवल्ल्यः तन्मध्यस्था या कन्या सा तन्मध्यस्थेन पुत्रेण न परिणेया, सापिण्ड्यनिवृत्तेरभावात् । किन्तु सप्तमकुलादूर्ध्वे यावन्ति वरापेक्षया अष्टमनवमादिकुलानि तेभ्य उत्पद्यमाना यावत्यः संतानवल्ल्यः तन्मध्यस्था या कन्या सा वरेण परिणेया, तत्र सापिण्ड्यस्य निवृत्तत्वात् ।

गान्धर्वादिविवाहोढासुतेन मातामहसगोत्राऽपि कन्या वर्जनीया, नो इतरेण—

तत्रापि समानगोत्रा वर्जनीया, ' असगोत्रा च या पितुः ' इति मनुना निषेधात् । अन्ये तु मातामहसमानगोत्राऽपि निषिद्धेत्याहुः । स्मृतिं च उदाहरन्ति— 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ' तदयुक्तमित्यपरे । तथाहि— न तावदस्यां स्मृतौ ' मातृगोत्रा ' इति पदेन मातामहसमानगोत्रा निषिध्यते, किन्तु मातृसमानगोत्रामात्रम् । न च— मातृगोत्रं मातामहगोत्रं चैकं, ततो मातृसमानगोत्रानिषेधेन मातामहसमानगोत्रैव निषिद्धा— इति शङ्क्यम्, मातृमातामहगोत्रयोरैक्यासिद्धेः, ' स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे ' इति मनुवाक्यात् । ततश्च ' मातृगोत्रां तथैव च ' इति मातापित्रोर्गोत्रैक्येन पितृसमानगोत्रैव निषिद्धा भवतीति । वयं तु ब्रूमः— भवेदेवं यदि वरमातृमातामहयोर्गोत्रैक्यं न स्यात् । अस्ति तु तत् । या तु ब्राह्मादिचतुष्टयोढा तस्य ' अमुकगोत्रां अमुकगोत्राय संप्रददे ' इति संकल्प्य दानेन वरगोत्रापत्तिः पितृगोत्रभ्रंशश्च । या तु गान्धर्वादिचतुष्टयोढा तस्यास्तथादानाभावेन न वरगोत्रापत्तिपितृगोत्रभ्रंशौ, ' ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः । आसुरादिविवाहेषु पितृगोत्रेण धर्मतः ॥ ' इति मार्कण्डेयवचनबलेन ' स्वगोत्राद्भ्रश्यते ' इत्यादिस्मृतेः ब्राह्मादिविवाहोढाविषयत्वात् । तथा च ' मातृगोत्रां तथैव च ' इत्यस्यायमर्थः पर्यवस्यति— ब्राह्मादिविवाहोढासुतो न पितृगोत्रामुद्वहेत् । मातृगोत्रा ( ? मातामहगोत्रां ) तु उद्वहेत्, अनिषेधत्वात् । गान्धर्वोढासुतस्तु मातामहगोत्रां पितृगोत्रां च नोद्वहेत्, ' असगोत्रा च या पितुः ' इत्यादिमनुवचनात् ( ? ) ।

---

द्वारकसापिण्ड्यान्तर्गतत्वेन ' इत्यप्राधान्यहेतुरुक्तः । तथा च मातामहादिभि पितृद्वारकसापिण्ड्याभावात् विद्यमानस्य केवलमातृद्वारकसापिण्ड्यस्य प्राधान्यं दुर्वचम् । अतः ' तद्गुणत्वाभावे सत्येव ' इति वक्तुमुचितम् । अथवा प्राधान्यपदेन गुणत्वाभावो लक्ष्यो । गुणत्वाभावस्तु प्रधाने इव केवलेऽपि संभवत्येव ।

सपिण्डोद्वाहे दोषः—

एवं च मातृतः पञ्चमात् पितृतः सप्तमादूर्ध्वं कन्या परिणेयेति सिद्धम्। अन्यथा तु नारदेन दोष उक्तः— 'मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात्तथा। गृहस्थ उद्वहेत् कन्यामन्यथा गुरुतल्पगः॥' [पृ. २५] इति। एवं च अतिप्रयत्नेन प्रत्यवायभीरुभिः वंशपरंपरा शोध्या। तदुक्तं प्रवरनिर्णये— 'अतिप्रयत्नात् सापिण्ड्यं सशोध्यं पापभीरुभिः' इति।

मातृतश्चतुर्थ्यादिः पितृतः षष्ठ्यादिश्च कन्या अशक्तेन परिणेयेति सापिण्ड्यानुकल्पः—

शोधनाशक्ताना तु व्यासेन विशेष उक्तः— 'पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम्। गृहस्थ उद्वहेत् कन्यां न्याय्येन विधिना (नृप)॥' इति। वसिष्ठोऽपि— 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति। पैठीनसिरपि— 'पञ्चातीत्य मातृतः सप्तातीत्य पितृतस्त्रीन्तीत्य मातृतः पञ्चातीत्य पितृतो वा' इति। तत्र 'पञ्चातीत्य मातृतः' इति तु 'मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात्तथा' इत्यनेन समानार्थम्। 'त्रीन्तीत्य' इत्यादेरयमर्थः— वरेण या कन्या परिणेया सा मातृतस्तृतीयादूर्ध्वं पितृतः पञ्चमात् कुलादूर्ध्वं यत्कुले चतुर्थे षष्ठे च तत्र भवा याः संतानवल्ल्यस्तन्मध्यस्थेति। तथा चेयं व्यवस्था— यस्य वंशपरपराशोधने शक्तिरस्ति तेन मातृपक्षे पञ्च कुलानि पितृपक्षे सप्त कुलानि परित्यज्य तदूर्ध्वम्भाविकुलोत्पन्नाया सतानलतायां वर्तमाना कन्या परिणेया। यस्य तु तथा शक्तिर्नास्ति तेन मातृपक्षे त्रीणि पितृपक्षे पञ्च कुलान्यतिक्रम्य तदूर्ध्वम्भाविकुलोत्पन्नसंतानवल्लीस्था कन्या परिणेया।

मुख्यकल्पे सपिण्डासपिण्डकन्यावरयोरुदाहरणम्—

तत्र तावद्विवेकार्थं उभयोः कुल्ययोः सतानवल्लीनामानि निर्दिश्य निर्णयः क्रियते। प्रथमो वंशनिर्माता विष्णुशर्मा १, तत्पुत्रः शिवशर्मा २, तत्कन्या रूपवती ३, तत्पुत्रः सोमशर्मा ४, तत्कन्या सौभाग्यवती ५, तत्पुत्रः सुप्रदः ६, तत्कन्या कान्तिमती ७, तत्कन्यापुत्रौ श्रद्धावतीविरोचनौ ८, इति एका संतानवल्ली विष्णुशर्मणः। एवं वंशनिर्माता विष्णुशर्मा १, तत्कन्या विजया २, तत्पुत्रो ब्रह्मदत्तः ३, तत्कन्या सरस्वती ४, तत्पुत्रो देवदत्तः ५, तत्कन्या मेधावती ६, तत्पुत्रो धनदः ७, तत्कन्यापुत्रौ यमुनाभानू ८, इति द्वितीया सतानवल्ली। एवमेव नवमदशमादि स्वयमूह्यम्। तत्र प्रथमसंतानवल्लीस्थयोरष्टमयोः श्रद्धावतीविरोचनयोः द्वितीयसंतानवल्लीस्थैः द्वितीयादिभिः सर्वैः सह सापिण्ड्यं निवृत्तम्। तयोः तैः सह सापिण्ड्यं मूलपुरुषद्वारकं वाच्यम्। मूलपुरुषश्च सप्तमादूर्ध्वत्वादनयोर्न सपिण्डः (सापिण्ड्यम् ?) इति तत उत्पन्नानि सर्वाण्यपि संतानानि तयोरसपिण्डानि। यस्तु अयं केषाचित् घोषः 'अष्टमस्य द्वितीयादिभिः असापिण्ड्येऽपि द्वितीयादीना अष्टमेन सह सापिण्ड्यमस्त्येव' इति, तदयुक्तम्, निर्मूलत्वात्। सापिण्ड्यं हि समानपिण्डता। न च एकस्य वैषम्येऽपि अन्यस्य तत्समानं भवतीति। एवं द्वितीयसंततिस्थयोरपि अष्टमयोर्यमुनाभान्वोः प्रथमसंतानस्थैः सर्वैः सह सापिण्ड्यं निवृत्तम्। अथ उभयोरपि सततयोः परस्परं मातृपक्षे पञ्चमपुरुषपर्यन्तं सापिण्ड्यं पितृपक्षे च सप्तमपुरुषपर्यन्तं तत्सापिण्ड्यम्। तत्रायं विवेकः कथ्यते— उभयोर्मूलभूतमारभ्य परस्परं पञ्चमपर्यन्तं सापिण्ड्यं वर्तत एव। षष्ठसप्तमयोस्तु अयं विशेषः— यदि तयोः उभयसततिस्थयोः मातरौ मूलपुरुषमारभ्य पञ्चम्यौ षष्ठ्यौ च तदा तयोः षष्ठसप्तमयोः (? षष्ठयोः सप्तमयोश्च) न परस्परसंततिस्थैः सर्वै. द्वितीयतृतीयादिभिः सापिण्ड्यम्, मूलपुरुषमारभ्य पञ्चम्या मातर्युत्पन्नस्य षष्ठस्य सापिण्ड्यनिवृत्तेः। यदा पञ्चम्या मातर्युत्पन्नः षष्ठो मूलपुरुषेण तदुत्पन्नैरितरसततिस्थैश्च न सपिण्डस्तदा मूलपुरुषात् षष्ठ्या मातर्युत्पन्नः सप्तमः सुतरामसपिण्डः। यदा तु तयोः षष्ठसप्तमयोः पितरौ मूलपुरुषात् पञ्चमौ षष्ठौ च तदा तयोः षष्ठसप्तमयोः (? षष्ठयोः सप्तमयोश्च) उभयसततिस्थैः परस्परं सापिण्ड्यं न निवृत्तम्।

[पृ. २६] ननु मूलपुरुषात् पञ्चम्या मातरि उत्पन्नः षष्ठः पुमान् सप्तमस्य तस्य पिता सप्तम एव न मूलपुरुषेण तदुत्पन्नैरितरसंततिस्थैर्वा सर्वैः सह सपिण्डो भवितु-

मर्हति, पञ्चम्यां मातर्युत्पन्ने षष्ठे एव सापिण्ड्यस्य निवृत्तत्वेन तदुत्पन्ने सप्तमे सुतरां असंभवादिति चेत्, मैवम्। सप्तमस्य मूलभूतो यदि मातृद्वारा सप्तमः स्यात् तदा तेन सह सापिण्ड्यं न स्यात्। यदा तु तस्य सप्तमस्य मूलभूतः पितृद्वारा सप्तमस्तदा कथं तेन मूलभूतेन तदुत्पन्नेतरसंततिस्थैः सापिण्ड्यं निवर्तते। तथा चोक्तम्– 'वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः। पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥' इति। कूटस्थः उभयसंतानयोर्मूलपुरुषः।

अथ पूर्वोक्तसंतत्योः इतरेतरसापिण्ड्यं वर्ण्यते– सौभाग्यवत्याः पञ्चम्याः तत्पूर्वभाविनां च प्रथमादिचतुर्थान्तानां इतरसंततिस्थैर्देवदत्तरूपपञ्चमपर्यन्तैः सापिण्ड्यं न निवृत्तम्। तेन सह मातृतः पञ्चमादूर्ध्वम्भाविनो मूलपुरुषस्य सापिण्ड्याभावेन तदुत्पन्नानामपि इतरसंततिस्थानां सापिण्ड्याभावात्। मूलपुरुषद्वारकं हि तेन सह तेषां सापिण्ड्यम्। न च मूलभूतस्तेन सपिण्डः येन मूलपुरुषद्वारकं तेन सह सापिण्ड्यं स्यात्। तथा कान्तिमती सप्तमी स्वेतरसंततिस्थेषु मध्ये षष्ठ्या मेधावत्या सपिण्डा, तयोरुभयोरपि मूलमारभ्य षष्ठपञ्चमाभ्यां पितृभ्यामुत्पन्नत्वात्। तथा सैव तदपत्येन धनदेन सप्तमेनापि सपिण्डा। धनदस्य मातृतः पञ्चमादूर्ध्वम्भाविना मूलपुरुषेण सह सापिण्ड्याभावेन तदुत्पन्नैः इतरेतरसंततिस्थैः सर्वैरपि सापिण्ड्याभावात्। अष्टमयोस्तु परस्परसंततिस्थैः सर्वैरपि सापिण्ड्यं निवृत्तं इति वर्णितं प्राक्।

मातृपक्षे सपिण्डासपिण्डकन्यावरयोरुदाहरणम्–

एवं मातृतः पितृतश्च पञ्चमसप्तमपर्यन्तं सापिण्ड्येन विवाहनिषेधे प्राप्ते व्यासादिभिर्विवाहयोग्यता प्रतिप्रसूता तादृशसंशयपरंपरां शोधयितुं अशक्तान् प्रत्यवतिष्ठते। पूर्वोक्तव्यासवचने हि 'पितृपक्षात् सप्तमी मातृपक्षात् पञ्चमी कन्या परिणेया' इत्युक्तं, तत्रायं विवेकः– एकसंततौ षष्ठात् पुरुषात् प्रियमधुर्थी तदुत्पन्ना कन्या तदितरसंततिस्थैः सर्वैरपि विवाह्या। तद्यथा देवदत्तो नाम वंशनिर्माता १, तत्कन्या भद्रा २, तस्याः कन्यापुत्रौ मेधाशिवदत्तौ ३, मेधाया अपि कन्या प्रज्ञा पुत्रश्च माधवः ४, प्रज्ञायाः पुत्रः मधुरः कन्या च विद्या ५, तस्याः सुदिः

कन्या पुत्रश्च विवेकः ६, विवेकस्य कन्या सुमुखी ७, तस्या अपि कन्यापुत्रौ कान्तिसुदर्शनौ ८, इत्येका संततिः। तथा द्वितीयसंततिः एवम्– देवदत्तो वंशनिर्माता १, तस्य यज्ञदत्तः पुत्रः २, तस्यापि यशदत्तः ३, तस्यापि मित्रदत्तः पुत्रः ४, तस्य कन्यापुत्रौ कावेरीसोमदत्तौ ५, तस्य पुत्रः सोमकान्तः कन्या गौतमी ६, सोमकान्तस्य सूर्यकान्तः ७, तत्कन्यापुत्रौ सुभद्राविष्णुदत्तौ ८। अत्र द्वितीयसंततिस्थैः यज्ञदत्तादिभिः सप्तमपर्यन्तैः स्वपितृपक्षात् मूलपर्यन्तात् उत्पन्नायां तदितरसंततौ या सप्तमी विवेककन्या सुमुखी सा परिणेया, 'पितृपक्षाच्च सप्तमीम्' इति व्यासवचनात्। प्रथमसंततौ शिवदत्तादिभिस्तृतीयादिभिः स्वमातृपक्षभूतात् मूलपुरुषपर्यन्तात् उत्पन्नायां द्वितीयसंततौ वर्तमाना या कन्या कावेरी सा परिणेया, 'मातृपक्षात्तु पञ्चमीम्' इति व्यासवचनाच्च।

पञ्चम्यादिकन्यापरिणयस्यानुकल्पत्वोपपादनम्–

न च अत्र 'मातृतः पञ्चमादूर्ध्वम्' इत्यादिनारदवाक्यविरोध इति वाच्यम्, नारदादिवाक्यस्य तादृग्वंशपरंपराशोधनशक्तविषयस्य तदशक्तविषयेण व्यासवचनेन [पृ. २७] सह भिन्नविषयत्वात् विरोधानुपपत्तेः। समानविषये हि परस्परविरुद्धार्थयोर्विरोधः। न चात्र समानविषयताऽस्ति, शक्ताशक्तविषयत्वेन भिन्नविषयत्वात्। न चैतत् सप्तमपञ्चमकन्यापरिणयनस्य अशक्तविषयत्वं काल्पनिकं इति शङ्क्यम्, 'उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम्। पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः ॥ सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च। एवमुद्वाहयेत् कन्यां न दोषः शाकटायनः ॥' इति चतुर्विंशन्मते सप्तमात् पञ्चमादूर्ध्वाभावे विहितस्य सप्तम्याः पञ्चम्या या कन्यायाः परिणयनस्य अशक्तविषयत्वेन अनुकल्पत्वप्रतीतेः। सर्वत्र हि मुख्यालाभे विधीयमानानामनुकल्पत्वात् अशक्तविषयत्वमेवाऽऽभाति। तदुक्तम् – 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते। स नाप्नोति फलं चेह न परत्रेति च श्रुतिः ॥' इति। यथा अजाभावे विहितं हेमभाण्डादि। एवं मातृपक्षात् पञ्चमी परिणेया इत्युक्तम्, तथापि पितृपक्षादपि पञ्चमी परिणेया। तद्यथा– पूर्वोक्तरीत्या द्वितीयसंताने यज्ञदत्तादिभिः मातृपक्षान्मूल-

पुरुषात् उत्पन्नाया तदितरसंततौ वर्तमाना या पञ्चमी कन्या विद्या सा परिणेया, ' पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः ' इति चतुर्विंशतिमते पितृपक्षादपि पञ्चम्याः कन्यायाः परिणयनोक्तेः । तत्रापि सोमदत्तेन न परिणेया ' पञ्चमो न तु पञ्चमीम् ' इति निषेधात् ।

यत्तु व्यासवाक्ये केषांचित् व्याख्यानम्– ' मातृपक्षात् पञ्चमीं पितृपक्षात्सप्तमीं व्यतीत्योर्ध्वं कन्यामुद्वहेत् ' इति, तदयुक्तम्, ' उद्वहेत् सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ' इति चतुर्विंशन्मतैकदेशेन ' सप्तमीमुद्वहेत् ' इत्यनेन समानार्थके व्यासवाक्ये अतीत्यपदाध्याहारेण व्याख्यानायोगात् । न तु चतुर्विंशन्मतेऽपि ' सप्तमीं व्यतीत्य ' इति व्याख्यानं युक्तम्, तथा सति ' तदभावे तु सप्तमीम् ' इत्यत्र सप्तमादूर्ध्वाभावे सप्तमीं वा अतीत्योर्ध्वं कन्यामुद्वहेदित्यर्थः स्यात् । स च अयुक्तः । न हि ' मुख्यासंभवे मुख्यं कुर्यात् ' इति विधिः क्वापि दृश्यते । तस्मात् सप्तमीं पञ्चमीमुद्वहेदित्येव व्याख्यानं युक्तमिति ।

तृतीया चतुर्थी षष्ठी च कन्या परिणेयेत्यनुकल्पान्तरम्, तत्र चतुर्थी चतुर्थपञ्चमाभ्यामेव परिणेया, षष्ठी पराशरमते पञ्चमेन, पञ्चमी पञ्चमेन नैव परिणेया–

मातृतः पञ्चमादूर्ध्वम्भाविना मूलपुरुषेण सह सापिण्ड्याभावेन तदुत्पन्नैरितरसंततिस्थैः सर्वैरपि सापिण्ड्यं निवृत्तमिति वर्णितं प्राक् । तथा मातृपक्षात् पितृपक्षाद्वा तृतीया कन्या चतुर्थी वा सा परिणेया । तदुक्तं चतुर्विंशन्मते– ' तृतीया वा चतुर्थी वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥' अत्रायं विशेषः– मूलमारभ्य कन्यासंततौ चतुर्थी या कन्या सा तदितरस्थैर्द्वितीयादिसप्तमान्तैः सर्वैः न परिणेया, किन्तु चतुर्थेन पञ्चमेन वा । तदुक्तम्– ' चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमो वरः । पाराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम् ॥' इति । अत्र केचिदित्थं व्याचक्षते– "चतुर्थीं कन्यां चतुर्थः पञ्चमो वा पुमानुद्वहेत् । तथा ' चतुर्थः पुमान् पञ्चमो वा षष्ठीं वा पाराशरमते उद्वहेत् ' इति । तथा पञ्चमः पुमान् पञ्चमीं नोद्वहेत्" इति, तदयुक्तम्, सकृत् श्रुतयोः ' चतुर्थः पञ्चमः ' इति पदयोः ' चतुर्थी ' इतिपदेनान्वितयोः पुनः ' षष्ठीं ' इत्यनेनापि पदेनान्वये सति आवृत्तिकल्पनापत्तेः । न च प्रकारान्तरेण अन्वयसंभवे कल्पयितुं आवृत्तिर्युक्ता । तस्मादेवं व्याख्या– ' चतुर्थः पञ्चमो [ पृ. २८ ] वा पुमान् चतुर्थीमुद्वहेदिति पूर्वार्धान्वयः । तथा च पञ्चमः पुमान् षष्ठीं कन्यामुद्वहेत् पराशरमते ' इति । न च अत्रापि 'पञ्चमः ' इति पदस्य पुनः ' पञ्चमीं नोद्वहेत् ' इति ( इत्यनेन ) अन्वयकल्पनादावृत्तिः स्यादिति वाच्यम्, पुनःशब्दार्थे वर्तमानेन तुशब्देन पूर्वोपक्रान्तस्य ' पञ्चमः ' इति पञ्चमपदार्थस्य पौनरुक्त्यं परामृशता उपस्थितिसंभवे सति तत्सिद्ध्यर्थं पञ्चमपदस्यावृत्तिकल्पनाभावात् । तस्मादेवं न्यायोपबृंहितव्याख्यानपर्यालोचनया एवं शास्त्रार्थः– ' चतुर्थी कन्या चतुर्थेन पञ्चमेन वा पुरुषेणोद्वाह्या । तथा षष्ठी कन्या पराशरमते एव पञ्चमेन पुरुषेणोद्वाह्या, नान्यमतेन । '

पराशरान्यमते षष्ठी षष्ठेनैव परिणेया–

अत्र ' पराशरमते ' इति पदसामर्थ्यादेवं गम्यते– अन्येषां मते षष्ठी कन्या न द्वितीयतृतीयादिभिः पुरुषैः सर्वैः परिणेया इति । यत्तु ' सप्तमीं च तथा षष्ठीम् ' इति पूर्वोदाहृतचतुर्विंशन्मतवाक्ये द्वितीयतृतीयादिपुरुषविशेषं अपरामृश्य सामान्येन षष्ठ्या ( अष्टम्या वा ? ) कन्याया उद्वाहे दोषा( भावा )भिधानम्, ( तत् ) विशेषशास्त्रेण पुरुषविशेषः( षे ) व्यवतिष्ठते । तद्विशेषशास्त्रं तु चन्द्रिकायाम् ' मूलगोत्रादन्यगोत्रामुद्वहेदष्टमोऽष्टमीम् । अन्यगोत्रादन्यगोत्रां षष्ठः षष्ठीं समुद्वहेत् ॥ ' अत्र ' अष्टमोऽष्टमीम् ' इति च उभयोरष्टमत्वात् सापिण्ड्यं नास्तीत्यभिधानार्थम्, न पुनः ' अष्टमोऽष्टमीम् ' ( एव ) इति नियमार्थम्, सापिण्ड्याभावेन द्वितीयादिकामपि वोढुं योग्यस्यापि अष्टमस्य ' अष्टमीमेव ' इति नियमायोगात् । सापिण्ड्याभावस्तु उक्त एव । तथा ' पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । उभयोः पितृतश्चापि षष्ठः षष्ठीं समुद्वहेत् ॥ ' ततश्च षष्ठेनैव पुरुषेण षष्ठ्या कन्ययोद्वाहे दोषाभावः, पराशरमते तु पञ्चमेनापि पुरुषेण तदुद्वाहे दोषाभावः । अन्येन तु द्वितीया-

दिना उद्वाहे दोप एव। अन्ये तु तृतीयां चतुर्थीं च निर्वाप्यान्वयसापिण्ड्यं यत्र पितृव्यपत्न्यादिपितृकुले तत्र कुर्यादित्याहुः। तदयुक्तम्, सामान्येन प्रवृत्तस्य 'तृतीयां वा चतुर्थीं वा' इत्यादेर्विशेषान्तरावगमं विना संकोचकल्पनस्य निर्मूलत्वादिति। अत्र चतुर्थत्वं पञ्चमत्वं षष्ठत्वं च सर्वत्र उभयसंतत्योर्मूलपुरुषमारभ्य गणनया ज्ञातव्यम्।

तृतीया मातुलकन्या पितृष्वसृकन्या च अर्थात्
तृतीयेनैव परिणेया—

तथा तृतीयापि कन्या न सर्वैः परिणेया। तथाहि—मातृपक्षे हि तावत् तृतीया कन्या *मातुलकन्या मातृष्वसुः कन्या वा संभवति। तथा पितृपक्षे तृतीया कन्या पितृव्यकन्या पितृष्वसृकन्या वा, नान्यथा। तत्र स्वपितृसगोत्रा परिणेतुं न योग्या, स्वसमानगोत्रत्वात्। तथा मातृष्वसुरपि कन्या न परिणेया, तन्निषेधस्य वक्ष्यमाणत्वात्। ततः स्वमातुलस्य स्वपितृष्वसुर्वा कन्या येन परिणीयते स मूलपुरुषाद्गणने तृतीय एव। तथा स्वमातुलस्य पितृष्वसुर्वा कन्या सैव तृतीया मातृपक्षे पितृपक्षे तृतीयेनैव परिणेया, नान्येन चतुर्थादिना सपिण्डेन।

मातुलादिकन्यापरिणयविधिनिषेधयोः देशभेदेन व्यवस्था—

ननु मातुलस्य पितृष्वसुर्वा कन्यायाः परिणयनं निषिद्धम्। तथा च स्मृतिः— 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव मुक्त्वा चान्द्रायणं चरेत्॥' अत एव मनुनाऽपि 'पितृष्वस्रेयीं भगिनीं स्वस्रेयीं मातुरेव च' इत्युपक्रम्य 'तिस्र एतास्तु भार्यार्थे नोपगच्छेत्तु बुद्धिमान्' इति पितृष्वसृकन्यायाः परिणयनं निषिद्धम्। पैतृष्वस्रेयीं [ पृ. २९ ] पितृष्वसुः कन्यां तथा भगिनीं मातृष्वसारं तथा मातृष्वस्रेयीं मातृष्वसुः कन्यां तिस्रो भार्यार्थे नोपगच्छेत् न परिणयेदिति मनुवाक्यार्थः। तत्कथं मातुलकन्यापरिणयनमनुज्ञायते इति चेत्, देशभेदेनाविरोधात्। यस्मिन् देशे मातुलकन्यापरिणयनं शिष्टा आचरन्ति तद्व्यतिरिक्तदेशे मन्वादिवाक्यैस्तन्निषिध्यते, न सर्वत्र। अत एव शातातपेन देशविशेषे तथा शिष्टाचारमालोक्य मातुलादिकन्यापरिणयनमनुज्ञायते— 'मातृष्वसृसुतां केचित् पितृष्वसृसुतां तथा। विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम्॥' क्वचित् इति दाक्षिणात्याः स्वदेशे विवहन्तीत्यर्थः। अत एवाह बृहस्पतिः— 'उद्वाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः' इति। संग्रहेऽपि— 'मातुलस्य सुतायाश्च विवाहः शिष्टसंमतः' इति। एते दाक्षिणात्यानामेव अविगीता उदाहृता इति। ननु क्वचिद्देशविशेषे विवहन्तीत्युक्ते क्वचिन्न विवहन्तीत्यपि प्रतीयेत। तत्कथमेकान्तेन विवाहाभ्यनुज्ञा विधीयते इति चेत्, न। यदि तेन विवाहो नाभ्यनुज्ञातः स्यात् तर्हि अग्रे तत्स्मृतौ निषेधः स्यात्। यस्तु तन्निषेधोऽन्यतः स देशान्तरविषयः।

मातुलादिकन्यापरिणये श्रुतिः प्रमाणम्—

ननु एवं विवाहस्य निषेधः कथं देशभेदेन व्यवस्थाप्यते इति चेत् तद्विवाहस्य श्रुतिमूलकत्वादिति गृहाण। यदि देशभेदेन व्यवस्था न स्यात्तदा श्रुतौ तदभ्यनुज्ञा न स्यात्। तथाहि शतपथे दर्शपूर्णमासप्रकरणे जुहा उपभृतश्च दक्षिणोत्तराभ्यां पाणिभ्यां व्यूहनं विहितम्। व्यूहनं नाम स्थापितदेशादन्यदेशे निरसनम्। तत्र जुहूं पूर्वतो दक्षिणहस्तेन उपभृतं च वामहस्तेन पश्चात् व्यूहति इति विहिते जुहा यजमानस्थानत्वेन भक्षयितृवाचकेन अत्तृशब्देन च स्तुतिः कृता उपभृतश्च भक्षणीययाविना आद्यशब्देनाद्यमानीयस्थत्वेन स्तुतिः। तदनन्तरं उभयोः उभयहस्ताभ्यां व्यूहने प्राप्ते युगपद् व्यूहनविधानार्थं तदेवमाम्नायते— 'तदा एतस्मात्माने कर्मणि व्याक्रियते तस्मात् समानादेव पुरुषादत्ता चाद्यश्च जायते इदं हि

* अत्र तृतीया कन्या मातुलादिकन्यैव संभवतीति चिन्त्यं, तृतीयकन्याया मातृपक्षे चतुर्थादित्वापेक्षया, पितृपक्षे च द्वितीयापेक्षया चतुर्थापेक्षया च मातुलादिकन्यात्वाभावात्। अत एव तृतीयकन्याया मातुलादिकन्यात्वमुपजीव्य प्रवृत्तः 'तृतीया कन्या तृतीयेनैव परिणेया, न चतुर्थादिना' इति निष्कर्षोऽपि न क्षिप्यते। एवं तु वक्तुं उचितम्- 'मातुलादिकन्यापरिणयविधायकवचनान्तरानुरोधादत्र तृतीया कन्या मातुलादिकन्यैव ग्राह्या। तथा च सा तृतीयेनैव परिणेया, न द्वितीयचतुर्थादिनेति निष्पद्यते' इति।

चतुर्थे पुरुषे तृतीये वा संगच्छावहा इत्येवं दीव्यमाना जात्या आसते ' ( शत्रा. १।८।३।६ ) इति ।

अस्यार्थः– तदेतत् व्यूहनं समाने एककालीने कर्मणि व्याक्रियते । संपादनीयं उभयोर्व्यूहनं एककालीनं कर्म यथा स्यात्तथा कार्यं इत्यर्थः । समानत्वं स्तौति– तस्मादिति । यस्माद् व्यूहनादिकं क्रियते - तस्माद्दीव्यमाना आसते इत्यन्वयः । समानात् एकस्मादेव पुरुषात् अत्ता अदनकर्ता भोक्ता पुरुषरूपः पिण्डश्च इत्यपरं अदनीयो भोग्यस्त्रीरूपः पिण्डः एतौ जायेते उत्पद्येते । इदं जातमुभयमपि चतुर्थे पुरुषे अथवा तृतीये संगच्छावहै दाम्पत्यरूपेण संबद्ध्यावहै इत्येवंरूपया दीव्यमाना क्रीडमाना व्यवहरमाणा वा जात्यै प्रजारूपसंतत्यै आसते संतति एव पुरुषाः ( ? ) इति विपरिणामेन अनुषङ्गः । अत्र चेदं तृतीये चतुर्थे वा पुरुषे संगच्छावहै इति वदता तयोरुभयोः संबन्धो न साक्षात्, किंतु तृतीयपुरुषद्वारा चतुर्थपुरुषद्वारा चेति प्रतिपादितम् । तथा च तयोरुभयोः स्वरूपेण संबन्धरहितयोरपि तृतीयपुरुषादिद्वारके संबन्धे सति तृतीयादिपुरुषसंबन्धो द्वारभूतः श्रुत्योक्तः । स च संबन्धो दाम्पत्यरूप एव पर्यवस्यति, [ पृ. ३० ] न संबन्धमात्रम्, संबन्धमात्रत्वे वा तस्य भोक्तृत्वभोग्यतानिर्दिष्टयोः पिण्डयोः स्वरूपत एव संभवात् तृतीयादिपुरुषद्वारकत्वप्रतिपादनेन वैयर्थ्यापत्तेः । अत्रैवं स्तुतिः– तस्मात् समानात्पुरुषाज्जातयोः कयाचित् प्रणाड्या संबन्धः संभाव्यते, ततः समानत्वं प्रशस्तमिति । एवं पुरुषे तृतीये विवाहरूपसंबन्धस्य श्रुत्योक्तत्वात् मातुलादिकन्यापरिणयनं अविरुद्धमिति स्थिते तन्निषेधो देशान्तरे व्यवस्थाप्यते इति ।

मातृष्वसेय्या अपरिणेयत्वम्–

ननु एवं तृतीयत्वाविशेषात् मातृष्वसुः कन्या परिणेया स्यादिति चेत्, मैवम्, ' स्वस्रीयां मातुरेव च ' इति मनुना तन्निषेधात् । ननु अयं निषेधो देशादिभेदेन व्यवस्थापितः किं न स्यादिति चेत्, मैवम् । यदि क्वचिच्छास्त्रे विहितं क्वचिन्निषिध्यते, तत्र देशादिभेदेन व्यवस्था वाच्या । यथा मातुलकन्यापरिणयनस्य । न चात्र क्वचिद्विहितत्वे सति क्वचिन्निषिद्धत्वं व्यवस्थाकारणमस्ति ।

अनधिगताबाधितविषयार्थवादस्य प्रमाणसिद्धार्थानुवादकत्वम्–

न च अर्थवादानां स्वार्थे प्रामाण्याभावात् शतपथश्रुत्या अर्थवादरूपतया अवगतं तृतीयादिकन्यापरिणयनं न प्रामाणिकमिति वाच्यम्, अर्थवादाना स्वार्थे प्रामाण्याभावेऽपि तैरनूद्यमानस्यार्थस्य प्रमाणान्तरसिद्धत्वावश्यंभावेन प्रामाणिकत्वानपायात् । न हि प्रमाणान्तरसिद्धिं विना अर्थवादैरनुवादः संभवति । न च लोकसिद्धमेव तृतीयादिकन्यापरिणयनमनेन अर्थवादेनानूद्यते, ततो नानुवादबलेन प्रमाणान्तरसिद्धता कल्पयितुं शक्यते इति वाच्यम्, अनादेः अपौरुषेयस्य वेदस्य लोकप्रसिद्धिं आधुनिकीमपेक्ष्य अनुवादकत्वानुपपत्तेः । तस्याश्च लोकप्रसिद्धेरनादित्वेन किञ्चित्प्रमाणमूलकत्वं अवश्यं वाच्यम् । अन्यथा शिष्टानां तत्र प्रवृत्तिर्न स्यात् । केचिच्छिष्टास्तत्र न प्रवर्तन्ते इति चेत्, तर्हि देशभेदेन व्यवस्थाऽस्त्वित्यलम् ।

तृतीयादिकन्यापरिणयनस्य अनुकल्पत्वमेव,
न व्यवस्थितविकल्पत्वम्–

अत्र केचिदेवमाहुः– सप्तमपञ्चमचतुर्थादिकन्यापरिणयनाभ्यनुज्ञानं क्षत्रियादिविषयमेव, तेषामेव कृष्णार्जुनादीनां तृतीयकन्यापरिणयनस्य पुराणादौ स्मरणात् । तदयुक्तम् । ' उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् । पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः ॥ ' इतिस्मृतिबलेन पञ्चमात्सप्तमादूर्ध्वं यत्कन्यापरिणयनं तस्य मुख्यकल्पत्वं, तदभावे तु विधीयमानस्य सप्तमपञ्चमकन्यापरिणयनस्य अनुकल्पत्वं प्रतीयते । तच्च एकविषयत्वे भवति, न भिन्नविषयत्वे । भिन्नविषयत्वे तु व्यवस्थितविकल्पत्वमेव स्यात् । ततश्च एकविषयत्वे वाच्यम् । पूर्वं क्षत्रियादिविषयत्वमेवेत्युक्त्वा कृष्णार्जुनादीनां तृतीयादिकन्यापरिणयनं अयुक्तमित्युक्तं तदयुक्तम् । कुतः ' न देवचरितं चरेत् ' इति वचनात् । इदं तु मानवानाम् ।

सापिण्ड्यप्रकाराः, तत्र अवयवान्वयसापिण्ड्यम्,
तत्रैव चूडासंबन्धान्वयसापिण्ड्यान्तर्भावः–

एवं तावत् सापिण्ड्ये सत्यपि विवाहविधिनिषेधयोर्व्यवस्थाऽभिहिता । इदानीं सापत्नमात्रादेर्मातृपक्षे पितृपक्षे सापिण्ड्यं वर्तते न वेति संशयपरिहारार्थं सापिण्ड्यभेदाः प्रस्तूयन्ते । सापिण्ड्यं द्वेधा, अवयवान्वयसापिण्ड्यं निर्वाप्यान्वयसापिण्ड्यं चेति । तत्र आद्यं नाम अवयवानां शरीरसंबन्धिरक्तमज्जादीनां यः शरीरान्तरे अन्वयः प्रवेशः तद्रूपम् । तदपि स्वशरीरे शरीरान्तरावयवानां प्रवेशात् स्वशरीरावयवानां शरीरान्तरप्रवेशाद्वा इति । तत्र आद्यः कल्पो यथा– स्वशरीरे स्वमातृपितृशरीरसंबन्धिरक्तादिप्रवेशः । अस्यैव ग्रन्थान्तरे [ पृ. ३१ ] चूडासंबन्धान्वयसापिण्ड्यसंज्ञा । चूडासम्बन्धो नाम चौलकर्मकारी मातृपित्रादिः, तदन्वयः तच्छरीरावयवान्वयः, तद्रूपं सापिण्ड्यमिति । द्वितीयः कल्पो यथा– स्वशरीरावयवानां रक्तमज्जादीना स्वपुत्रादिशरीरे अन्वयः प्रवेशः इति । अस्यैव ग्रन्थान्तरे अवयवान्वयसापिण्ड्यसंज्ञा । तेन पुरुषः स्वकन्यां स्वपौत्रीं वा न परिणेतुमर्हति, स्वावयवानां तत्रान्वयेन सापिण्ड्यादिति ।

मातुः पितुश्च शरीरात् पुत्रशरीरे अवयवप्रवेशः–

ननु कथं शरीरान्तरावयवानां शरीरान्तरे प्रवेश इति चेत्, उच्यते– पुरुषस्य हि शरीरं मातृवीर्येण पितृवीर्येण परस्परयोगादारभ्यते । तत्र मातृवीर्येण धातुचतुष्टयं पितृवीर्येण धातुत्रयमिति सप्तधात्वारब्धे पुत्रादिशरीरे वर्तते एव पित्रादिशरीरावयवप्रवेश इति । तदुक्तं शङ्खेन– ' चत्वारोऽवयवा ज्ञेया मातुर्जीवकलेवरे । त्वगसृङ्मांसमेदांसि त्वस्थिमज्जावसाः पितुः ॥ '

निर्वाप्यान्वयसापिण्ड्यम्, तच्च गुरुशिष्यादेरपि–

अथ निर्वाप्यान्वयसापिण्ड्यम्– निर्वाप्यो नाम यदुद्देशेन पिण्डनिर्वपणादिकं क्रियते, तस्य योऽन्वयः पिण्डनिर्वपणाद्युद्देश्यत्वरूपः, तद्रूपसापिण्ड्यमिति । ननु तर्हि गुरुशिष्यादेरपि पिण्डनिर्वपणाद्युद्देश्यत्वात् पिण्डनिर्वापकस्य सपिण्डता स्यादिति चेत्, अत्र ब्रूमः– न हि गुरुादेः निर्वाप्यान्वयसापिण्ड्यं नास्तीति केनापि वक्तुं शक्यते । यद्यपि एतत्सापिण्ड्यं पित्रोरप्यस्ति, तथापि तत्र पित्रवयवान्वयस्य अधिकत्वात् ततो भिद्यते ।

सापत्नमातृकुले निर्वाप्यसापिण्ड्यम्,
तच्च साक्षात्ले एव त्रिपुरुषे च–

तथा सापत्नमातुर्ये पित्रादयो निर्वाप्याः तत्कुलजा कन्या न परिणेया, निर्वाप्यान्वयसापिण्ड्यात् । भवति हि सापत्नमातुर्ये पित्रादयस्तेषां मातामहादित्वेन निर्वाप्यत्वम् । न च सापत्नाया मातुः मातृत्वमेव नास्ति, ततो न तत्पितुर्मातामहत्वमिति वाच्यम्, ' बह्वीनामेकपत्नीनामेका चेत् पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ ' इति मनुना सापत्नजनन्या मातृत्वप्रतिपादनेन तत्पित्रादौ मातामहादिरूपताया अनिवार्यत्वात् । एवं श्रुतिः– ' पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ' इति । तत्रायं विशेषः–– ब्राह्मणेन त्रयाणां वर्णाना कन्याः परिणीयन्ते । तत्र एकजातीयायामुत्पन्नस्य इतरजातीयाऽपि सापत्नमाता भवति । तथापि तत्पित्रादिभिस्तस्य न सापिण्ड्यं किंतु समानजातीयाया एव सापत्नमातुः । तत्रापि त्रिपुरुषमेव, न तु मुख्यमातृवत् पञ्चपुरुषमिति । तदाह शङ्खः– ' यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥ ' अस्यार्थो विज्ञानेश्वरेण उक्तः– यद्येकस्मात् पुरुषात् जाताः बहवः पृथक्क्षेत्राः भिन्नजातीयमातृजास्तदा पृथग्जनाः पृथक्पिण्डाः असपिण्डाः, समानजातीयमातृभ्यो जातास्तु एकपिण्डाः सपिण्डाः, तथा पृथक्शौचाः मुख्यमात्रपेक्षया सूतकमृतकादौ अल्पकालादिशुद्धिरूपविशेषवन्तः, पिण्डस्तु त्रिपुरुषेषु आवर्तते पुरुषत्रयपर्यन्तं सापिण्ड्यमिति ।

पितृव्यपत्नीकुले ज्येष्ठभ्रातृपत्नीकुले च एकपुरुषं
निर्वाप्यान्वयसापिण्ड्यम्, तस्यैव
स्वावयवांशान्वयसापिण्ड्यसंज्ञा–

तथा पितृव्यपत्न्या अपि मातृस्थानत्वेन तत्पितुर्मातामहस्थानत्वेन निर्वाप्यत्वात् तेन सह पुरुषस्य [ पृ. ३२ ] निर्वाप्यान्वयसापिण्ड्यमिति । न च पितृव्यपत्न्या मातृस्थानीयत्वमप्रसिद्धमिति वाच्यम्,

( यतः ) पितृव्यस्य पितृस्थानीयत्वं मनुना उक्तम्–'भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥' एतच्च एकपुरुषकं सापिण्ड्यम्, न पुनस्त्रिपुरुषकं पञ्चपुरुषकं वा । तथा च पितृव्यपत्न्या भगिनी न परिणेया इति । अथ एकपुरुषमेव यथा सापिण्ड्यं तथा वक्ष्यते । तथा ज्येष्ठभ्राता पितृस्थानीयः । तस्य पत्नी मातृस्थानीया । तत्पिता मातामहस्थानीय इति निर्वाप्यः । अतः तत्कन्या ज्येष्ठभ्रातृपत्न्या भगिनी साऽपि नोद्वाह्या, निर्वाप्यान्वयसापिण्ड्यात् । उक्तं भ्रातुर्मनुना पितृसमत्वम्– 'ज्येष्ठभ्राता पितुः समः' इति । तदपि एकपुरुषमेव । ग्रन्थान्तरे तु एतस्यैव सापिण्ड्यस्य स्वावयवाद्यान्वयसापिण्ड्यसंज्ञा । पितृव्यज्येष्ठभ्रातरौ हि स्वस्य पितृमाता (? पिता)-मुखद्वारा स्वावयवसंबन्धित्वात् अवयवान्वयिनौ सन्तौ स्वावयवावेव, अवयवान्वयिनां ( ? नो ) हि अङ्गुल्यादेर्हस्तादिद्वारा स्वावयवत्वदर्शनात् । तयोश्च अवयवभूतयोः पितृव्यज्येष्ठभ्रात्रोरंशभूते च पत्न्यौ स्वस्यावयवाद्यौ, तदन्वयः तद्भगिनीभ्यामेव स्वावयवाद्यान्वयसापिण्ड्यमिति ।

गुरुशिष्यकुलयोस्त्रिपुरुषं निर्वाप्यसापिण्ड्यम्–

तथा गुरुशिष्यौ स्वस्य निर्वाप्यौ । अतः तत्कुलस्थकन्या निर्वाप्यान्वयसापिण्ड्यात् न परिणेया । एतच्च सापिण्ड्यं त्रिपुरुषं ज्ञेयम् । ननु एवं पितृव्यपत्नीभगिन्यादावपि पुरुषत्रयपर्यन्तं सापिण्ड्यं किं न स्यादिति चेत्, न, पितृव्यादीनां पितृस्थानापन्नत्वेऽपि गुरुसमानत्वाभावात् न तत्पत्नीपितृपक्षे गुरुकुलसमं सापिण्ड्यं गुरोराधिक्यात् । तदुक्तं मनुना– 'उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता' इति । ब्रह्मदः गायत्र्युपदेष्टा गुरुः । ग्रन्थान्तरे– 'गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः । गुरोश्च कन्यां शिष्यो वा तत्संतत्याऽपि नेष्यते ॥ पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते ॥' इति ।

सखिकुले श्वशुरकुले च एकपुरुषं निर्वाप्यसापिण्ड्यम्–

तथा सखाऽपि निर्वाप्यः, तत्कन्याऽपि नोद्वाह्या । तदुक्तम्– 'वाक्संबन्धकृतानां तु स्नेहसंबन्धिनामपि । विवाहोऽत्र न कर्तव्यो लोकगर्हापनुत्तये ॥' इति । तथा श्वशुरस्यापि निर्वाप्यत्वात् तदीयकन्यान्तरं नोद्वाह्यं इति केचिदाहुः ।

मुक्ताहारसापिण्ड्यं तस्य अवयवसापिण्ड्येऽन्तर्भावश्च–

एवं अवयवसापिण्ड्यं निर्वाप्यसापिण्ड्यं चेति द्विविधम् । चूडासंबन्धादिसापिण्ड्यं तु तदन्तर्भूतम् । ननु मुक्ताहारसापिण्ड्यं अतिरिक्तमस्ति । मुक्ताहारसापिण्ड्यं हि मुक्ताफलानां हारवत्सापिण्ड्यम् । यथा ग्रीवामारभ्य नाभिपर्यन्तं हारस्य आद्यन्तभूते ग्रीवानाभिस्थाने सूत्रस्य मुक्ताफलद्वयसंतानस्य हृदयाप्रवेशरूपे च मेलनाभावः । तथा मूलपुरुषमारभ्य उभयोः संतत्योः पञ्चमस्थाने कन्याद्वयम् । तस्माच्च उत्पन्नं पुत्रद्वयं, तत् षष्ठम् । तस्मादुत्पन्नं कन्या पुत्रश्चेति द्वयं सप्तमम् । अत्र पञ्चमयोः सापिण्ड्यं वर्तते एव । षष्ठयोस्तु विच्छेदः, षष्ठयोर्मूलपुरुषमारभ्य [ पृ. ३३ ] मातृतः षष्ठत्वात्, मातृतः षष्ठे च सापिण्ड्याभावस्य पूर्वमुक्तत्वात् । सप्तमयोस्तु न सापिण्ड्यनिवृत्तिः, तयोर्मूलपुरुषमारभ्य पितृतः सप्तमत्वात्, पितृतः सप्तमे च सापिण्ड्यनिवृत्त्यभावस्योक्तत्वात् । अत एव तदुभयोः संतत्योः सापिण्ड्यसंबन्धः आद्यन्तयोर्वर्तमानत्वे सति मध्ये विच्छिन्नत्वात् मुक्ताहारसंबन्धवद्भवतीत्येतत् मुक्ताहारसापिण्ड्यम् । न चैतदवयवसापिण्ड्ये अन्तर्भवितुमर्हति, स्वतन्त्रमेवैतत् सापिण्ड्यमिति चेत्, न अवयवसापिण्ड्ये एवान्तर्भावात् । न च तन्निवृत्तावपि एतदनुवर्तमानं ततो भिन्नमिति वाच्यम्, निवृत्त्यनुवृत्त्योरेवायोगात् । न हि मूलपुरुषमारभ्य सप्तमपर्यन्तं सापिण्ड्यमनुस्यूतमपि निवृत्तमिति भवितुमर्हति । किन्तु सापिण्ड्यसंबन्धेन संबद्धयोरुभयसंतत्योर्मध्ये यत्र व्यक्तिद्वयमेव सापिण्ड्यसंबन्धभ्रष्टम् । नैतावता सापिण्ड्यसूत्रस्य मध्ये विच्छित्तिः । यथा हारात् कस्यचिन्मणेर्भ्रंशेऽपि न सूत्रं विच्छिद्यते, तथा अत्रापि सापिण्ड्यं सूत्रस्थानं न विच्छिद्यते । यस्मिन् सापिण्ड्ये सूत्रे स्त्रीपुरुषपिण्डयो( ण्डयोः ) गुम्फे एताः संतानमाला ( मुक्ता )रूपतया व्यवतिष्ठन्ते तत्सापिण्ड्यं अवयवसापिण्ड्यात् न भिद्यते इति सिद्धं सापिण्ड्यद्वैविध्यम् ।

क्षेत्रजादिसापिण्ड्यविचारः—

एवं मातृतः पितृतश्च पञ्चमसप्तमपर्यन्तं औरसविषयम् । इदानीं क्षेत्रजादिविषयं वर्ण्यते— ' औरसः क्षेत्रजो दत्तः कृत्रिमो गूढजस्तथा । अपविद्धश्च कानीनः सहोढः क्रीतकस्तथा ॥ पौनर्भवः स्वयंदत्तस्तथा पारशवः स्मृतः ॥ ' इति । एतल्लक्षणानि मनुना उक्तानि ।

पुत्रिकापुत्रस्य दत्तके औरसे चान्तर्भावः—

ननु पुत्रिकापुत्रोऽपि अतिरिक्तोऽस्ति । स च ' अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥ ' ( इति ) वसिष्ठोक्तदानमन्त्रात् केवलमातामहसंबन्धी, ' अपुत्रोऽहं प्रदास्यामि तुभ्यं कन्यां भवानपि । पुत्रार्थी चेदिहोत्पन्नः स नौ पुत्रो भवेदिति ॥ ' ( इति ) कात्यायनोक्तदानमन्त्रात् उभयसंबन्धी ( च, इति ) चेत्, सत्यम्, तथापि प्रथमस्तावद्दानकाले मातामहेन याचितप्रायः पित्रा च उत्पत्त्यनन्तरं च दत्तप्रायो मातामहस्य दत्तः पुत्रः । ' स मे भवेत् ' इति लिङ् प्रार्थनायां, विधानात् । द्वितीयोऽपि तथैव मातामहस्य दत्त एव, पितुस्तु औरस इति ।

क्षेत्रजस्योत्पादककुले त्रिपुरुषमवयवसापिण्ड्यम्,
लम्भककुले साप्तपौरुषं निर्वाप्यसापिण्ड्यम्,
मातृकुले च पाञ्चपौरुषमवयवसापिण्ड्यम्,
प्रसक्तो जात्युत्कर्षविचारश्च—

अत्र सर्वेषु औरसव्यतिरिक्तेषु उत्पादकेन सह अवयवान्वयसापिण्ड्यं, येन लभ्यते तेन सह निर्वाप्यसापिण्ड्यमिति । तत्रायं विवेकः— क्षेत्रजस्य उत्पादकेन त्रिपुरुषमेव सापिण्ड्यं, मातृपक्षे च चतुःपुरुषं, तदवयवानां तावतामेव प्रवेशस्य उक्तत्वात् । ननु एवं औरसोऽपि तथा स्यात्, तथैव अवयवप्रवेशात् । सत्यम् । मात्रादिचतुर्भिरेव । यस्तु मात्रादिसापिण्ड्यं पाञ्चपौरुषत्वात् (१ षमिति ) ( य १ ) घोषः, स आत्मानमन्तर्भाव्य, न तु स्वबहिर्भावेन [ पृ. ३४ ] पित्रादिभिस्तु साप्तपौरुषम्, ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ' इति न्यायेन मातृपिण्डैक्ये सति मात्रवयवानामपि ( त्रित्रयपरत्वात् १ ) त्रित्रवयवत्वसिद्धेः । एतद्देशावयवसंख्यया पुरुषसापिण्ड्यमभिप्रेत्य विश्वरूपाचार्यैरुक्तम् —' निषेकाज्जायते सूतः सप्तकञ्चुकसंयुतः । चत्वारो मातृका ज्ञेया त्रयोऽस्थ्याद्याश्च पैतृकाः ॥ ' इति । मूलपुरुषसंबन्धिसप्तकञ्चुकानां तदुत्पन्नसंततौ द्वितीयादिपुरुषेषु एकैककञ्चुकनिवृत्त्या सप्तमे सर्वकञ्चुकनिवृत्तौ जात्युत्कर्षो भवति । यथा ब्राह्मणात् सप्तकञ्चुकोपेतायां शूद्रकन्यायां कन्या उत्पद्यते, तस्यामपि ब्राह्मणान्तरात् कन्यान्तरमिति ब्राह्मणान्तरादेव कन्यापरंपरायाः सप्तमे जन्मनि शूद्रमयसप्तकञ्चुकनिवृत्त्या शुद्धब्राह्मणमिति । तदुक्तम्— 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा' इति। ननु मातृपक्षे चतुर्णामवयवानां प्रवेशात् पुंसः स्वव्यतिरिक्तैश्चतुर्भिः सह सापिण्ड्यं, न तु तं पुरुषमन्तर्भाव्य चतुर्भिः, तथा पितृपक्षे सप्तानामवयवानां प्रवेशात् पुंसः स्वव्यतिरिक्तैः ( सप्तभिः ) सापिण्ड्यमुचितम्, न तु तमन्तर्भाव्य सप्तभिरिति चेत्, न, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तथाहि— मातृपक्षीयाः त्वग्रुधिरादयः चत्वारोऽवयवाः स्वातिरिक्ते पितृपक्षीयावयवत्रये प्रविष्टाः संनिपत्याऽऽरम्भका भवन्ति । ( अतः ) तदपत्यमनन्तर्भाव्य अन्यैश्चतुर्भिः सापिण्ड्यमुच्यते । पितृपक्षे पूर्वोक्ताः सप्तावयवाः कस्मिन् स्वातिरिक्ते प्रविश्य अपत्यपिण्डमारभन्ते, येन तदपत्यमनन्तर्भाव्य अन्यैः सप्तभिः सह सापिण्ड्यं वाच्यम् । तस्मात् अवयवसापिण्ड्ये अवयवसंख्याकैः पुरुषैः सह सापिण्ड्ये सति क्षेत्रजस्योत्पादकेन सह ऊर्ध्वं त्रिपुरुषपर्यन्तं सापिण्ड्यम् । यस्य तु क्षेत्रजः पुत्रस्तेन सह निर्वाप्यसापिण्ड्यं साप्तपौरुषं स्वमन्तर्भाव्य ज्ञेयम् । तस्य हि पुत्रस्य यथा पित्रादयो निर्वाप्यसपिण्डाः तथा नान्दीमुखपित्रादयोऽपि निर्वाप्यसपिण्डा एव ।

दत्तककृत्रिमयोः सापिण्ड्यविचारः—

तथा दत्तककृत्रिमयोर्यदि जनकगोत्रेणोपनयनादिसंस्कारस्तदा तयोर्जनककुले मातृतः पितृतश्च साप्तपौरुषमेव अवयवान्वयसापिण्ड्यम् ' पितृतः सप्तमात् ' इति । येन च तौ लब्धौ तत्कुले मातृतः पितृतश्च ऊर्ध्वं त्रिपुरुषमेव निर्वाप्यसापिण्ड्यम्, त्रयाणामेव तेषां पित्रादीनां निर्वाप्यत्वात् । यदा तु तयोर्नोत्पादकगोत्रेण संस्कारस्तदा, तयोर्लब्धृपितृकुले संस्कृतयोर्मातृतः पितृतश्च पाञ्च-

पौरुषं साप्तपौरुषं च निर्वाप्यसापिण्ड्यं, 'पञ्चमात्सप्तमाद्‌र्ध्वम्' इति न्यायात्। न च तेनैव न्यायेन उत्पादकगोत्रे संस्कृतयोः लब्धृकुलेऽपि साप्तपौरुषादिसापिण्ड्यापत्तिः शङ्क्या, तत्पक्षे लब्धुः पितृत्वाभावेन 'पितृतः सप्तमात्' इति न्यायाप्रसरात्। पितृत्वं हि उत्पादकत्वेन च उपनयनेन च वाच्यम्। न च एतस्मिन्पक्षे लब्धुरुभयथा पितृत्वमस्ति। ततो न दोषः।

गूढजस्य क्षेत्रिकुले एव सापिण्ड्यम्, न जनककुले; अपविद्धक्रीतकस्वयंदत्तानां दत्तकृत्रिमवत् सापिण्ड्यम्–

गूढजस्तु यस्य क्षेत्रे जातस्तेनैव सपिण्डो मातृतः पितृतः पञ्चमसप्तमपर्यन्तं, क्षेत्रिण एव संस्कारकस्य तेन पुत्रेण पितृतयाऽभिमानात्। अन्यस्य च संस्कारकत्वरहितस्य तथा न अभिमानः (तु ?)। व्रतसंस्कारकत्वं पितृत्वाभिमाने हेतुरिति मनुना उक्तम्– 'तत्र यद्‌ब्रह्मजन्मास्य [पृ. ३५] मौञ्जीबन्धनचिह्नितम्। तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥' इति। अपविद्धक्रीतस्वयंदत्तानां दत्तकृत्रिमन्यायो ज्ञेयः।

पुत्रिकापुत्रसापिण्ड्यम्–

पुत्रिकापुत्रे तु केवलमातामहसंबन्धेन मातामहादिभिः सह साप्तपौरुषं निर्वाप्यसापिण्ड्यम्, उपनयनादिसंस्कारकस्य मातामहस्य पितृत्वात्, पितृपक्षे च सापिण्ड्यस्य साप्तपौरुषत्वात्। उभयसंबन्धो यदि मातामहेन स्वगोत्रेकृतः (?) तदा तस्य पितृत्वात् तत्कुले साप्तपौरुषं सापिण्ड्यं, 'पितृतः सप्तमात्' इति न्यायात्। तथा उभयविधस्य तस्य उत्पादककुलेऽपि साप्तपौरुषमेव अवयवसापिण्ड्यं तन्न्यायादेव।

सहोढकानीनयोर्जनककुले त्रिपुरुषमवयवसापिण्ड्यम्, क्षेत्रिकुले साप्तपौरुषं निर्वाप्यसापिण्ड्यम्–

सहोढकानीनयोरुत्पादकेन सह त्रिपुरुषं अवयवान्वयसापिण्ड्यं, त्रयाणामेव तदवयवाना तच्छरीरप्रवेशात्। सन्मात्रवयवास्तु न उत्पादकसंबन्धिनः, तस्यास्तेन अविवाहितायास्तदेकपिण्डत्वाभावे तत्संबन्धितायोगात्। तथा तौ सहोढकानीनौ यस्य क्षेत्रे उत्पन्नौ तेन संस्कारतः पितृभूतेन साप्तपौरुषं सापिण्ड्यम्।

पौनर्भवस्य औरसवत् सापिण्ड्यं मातृपूर्वपतिना सापिण्ड्याभावश्च–

पौनर्भवस्तु औरसवत् ज्ञेयः। तत्रापि स्वमातुः पूर्वेण पत्या न सपिण्डः, तेन अनुत्पन्नत्वात् असंस्कृतत्वाच्च इति।

क्षेत्रजादीनां जनककुले सापिण्ड्योपपादनम्–

ननु क्षेत्रजादीनां नोत्पादकेन सह सापिण्ड्यसंबन्धः, 'यथा गोऽश्वोष्ट्रदासीषु महिष्याजाविकासु च। नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि॥' इति मनुना तेषामुत्पादकेन संबन्धाभावादिति चेत्, मैवम्, क्षेत्रजादेर्नोत्पादकद्रव्यसंबन्धः, उत्पादकस्य वा तदीयद्रव्यसंबन्ध (न्धः इति) निषेधे मनुवाक्यस्य तात्पर्यात्। सापिण्ड्यसंबन्धनिषेधपरत्वे तु 'नोत्पादकः प्रजाभागी' (इति) निषेधे अनूद्यमानमुत्पादकत्वं व्याहन्येत। उत्पादकत्वं हि गर्भप्रकृतिहेतुभूतवीर्यरूपबीजावापकत्वम्। न चैवंविधे उत्पादके अवयवान्वयात् प्रतीतं सापिण्ड्यं निराकर्तुं शक्यमिति।

निर्वाप्यसापिण्ड्ये पाञ्चपौरुषत्वादिसाधनम्–

ननु एवमपि कानीनादीनां क्षेत्रिणा सह निर्वाप्यसापिण्ड्यं मातृतः पितृतश्च पाञ्चपौरुषं साप्तपौरुषं चेति यदुक्तं तन्न सिध्येत्, पाञ्चपौरुषादिसापिण्ड्यस्य अवयवान्वयसापिण्ड्ये एव अवयवसंख्यान्यायेन पूर्वोक्तेन संभवात्। न च निर्वाप्यसापिण्ड्ये अवयवसंख्यान्याय उपपद्यते। इति चेत्, सत्यम्, तथापि अवयवान्वयसापिण्ड्ये मातृपितृपक्षीयसापिण्ड्यस्य कल्प्तं यत् पञ्चमसप्तमपुरुषकत्वं तत् निर्वाप्यसापिण्ड्येऽपि मातृ(पितृ)पक्षीयत्वाविशेषात् इष्यते। यथा यावज्जीवाग्निहोत्रे कल्प्तानामुदितहोमा(दी)नां धर्माणां कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इतिवाक्यविहिते अग्निहोत्रत्वाविशेषादतिदेशः, तद्वत्।

पारशवस्य मातृकुले पञ्चपुरुषं पितृकुले त्रिपुरुषं सापिण्ड्यम्–

पारशवस्तु मातृकुले पञ्चमपुरुषपर्यन्तं सपिण्डः। पितृकुले 'यद्येकजाता बहवः पृथक्क्षेत्राः' इति स्मृतेः त्रिपुरुषमेव सपिण्डः।

सापिण्ड्यदीपिकामेतां श्रीधरेण प्रकाशिताम् ।
प्राप्य पश्यन्तु सापिण्ड्यं विमलज्ञानचक्षुषः ॥
इति सापिण्ड्यदीपिका ॥

## संस्कारप्रकाशः

[ पृ. ६८५–७२५ ]

सपिण्डलक्षणं निर्वाप्यसापिण्ड्यखण्डनं च–

[ पृ. ६८५ ] अथ क्रमप्राप्तं सापिण्ड्यं निर्णीयते– तत्र एकपिण्डान्वयनिमित्तको विवाहादिप्रतिबन्धकः पूर्णाशौचप्रयोजको धर्मविशेषः सापिण्ड्यम् । पिण्डशब्दश्चायं नानार्थः, 'पिण्डो देहे जपापुष्पे निर्वापे सिह्लकेऽपि च' इति विश्वकोषात् । तत्र अन्नमयपिण्डविवक्षया केचित्सापिण्ड्यं वर्णयन्ति, 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' इति मत्स्यपुराणवचनात्, 'पिता पितामहश्चैव तथैव प्रपितामहः । पिण्डसंबन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥ लेपसंबन्धिनश्चान्ये ये वृद्धप्रपितामहात् । प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥ इत्येषं मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः ॥' इति मार्कण्डेयपुराणवचनाच्च । अस्यार्थः— एकस्या पिण्डदानक्रियायां दातृत्वेन यजमानस्य, देवतात्वेन पितृपितामहप्रपितामहानां, लेपभाक्त्वेन प्रपितामहस्य पितृपितामहप्रपितामहाना चानुप्रवेशात् सप्तपुरुषं व्याप्य सापिण्ड्यं भवति । एवं भ्रातॄणामपि सापिण्ड्यं योज्यम्, देवदत्तकर्तृक-[ पृ. ६८६ ] पिण्डदानक्रियायां येषामनुप्रवेशस्तेषामेव यज्ञदत्तकर्तृकपिण्डदानक्रियायामनुप्रवेशात् । एवमेषां षण्णा मध्ये यद्यत्कर्तृकपिण्डदानक्रियायां अन्यतमस्याप्यनुप्रवेशस्तेषां सर्वेषां सापिण्ड्यम् । तेन च मातुलमातामहादिभिरपि सापिण्ड्यं योज्यम्, समानोद्देश्यकपिण्डदानक्रियान्वयात् । भ्रातृभार्याणां तु स्वस्वभर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृत्वेन । एवं यमयत्र सापिण्डशब्दप्रयोगस्तत्रतत्र साक्षात्परम्परया वा एकपिण्डदानक्रियान्वयः अवगन्तव्य इति । नेदं चतुरस्रम्, विकल्पासहत्वात् । तथाहि– किमत्र पितृशब्दो जनकमात्रमभिधत्ते आहोस्वित् प्रमीतमात्रम् । न तावदाद्यः, भ्रातृपितृव्यादीनामजनकत्वेन असापिण्ड्यप्रसङ्गात्; समानोद्देश्यकपिण्डदानक्रियाद्यन्वयेन सापिण्ड्यविवक्षायां प्रमाणाभावात् । नापि सापिण्ड्यान्यथानुपपत्तिरेव मानम् । तस्य अवयवान्वयेनापि उपपत्तेः । नापि द्वितीयः, गुरुशिष्यसहाध्यायिमित्रादिभिरपि पिण्डदानक्रियान्वयेन सापिण्ड्यप्रसङ्गात् । किंच, मातामहप्रमातामहादीनां देवदत्तकर्तृकपिण्डदानक्रियायां कथमप्यनन्वयेन सर्ववादिसंप्रतिपन्नमपि सापिण्ड्यं न स्यात् । दत्तकादिपुत्राणां 'गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥' इति मनुवचने जनकपिण्डदानक्रियानिवृत्त्या तत्सापिण्ड्याभावप्रसङ्गाच्च । न चेष्टापत्तिः, 'दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥' इति, 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च' इति बृहन्मनुगौतमादिवचनविरोधात् । वस्तुतस्तु सापिण्ड्यशब्दोऽत्र नोक्तलक्षणं संबन्धविशेषमभिधत्ते, किंतु सपिण्डीकरणम्, तस्यैवोपक्रमात् । [ पृ. ६८७ ] तथाहि– मत्स्यपुराणेऽष्टादशेऽध्याये सपिण्डीकरणं प्रक्रम्य 'त्रिभिः सपिण्डीकरणैराशौकहतयेति वा ( ? ) । यदा प्राप्स्यति कालेन तदा मुच्येत बन्धनात् ॥ मुक्तोऽपि लेपभागित्वं प्राप्नोति कुशमार्जनात् । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' इति पठितम् । तत्र उपक्रमस्थसपिण्डीकरणशब्दार्थपरतयैव उपसंहारस्थः सापिण्ड्यशब्दो वर्णनीयो नाप्रस्तुतसंबन्धविशेष( पर )तयेति न्यायविदां घण्टाघोषोऽपि बाधक एव भवद्व्याख्याने ।

अवयवसापिण्ड्यस्य स्वरूप स्थापनं च–

तस्मादन्यथा सापिण्ड्यं वर्णनीयम् । तत्र प्रामाणिकाः पिण्डशब्दं शरीरपरतया व्याचक्षते । समानः एकः पिण्डः देहः येषां ते सपिण्डाः, तेषां भावः सापिण्ड्यम्, 'समानाः सप्तमैके स्युः' इति त्रिकाण्डीस्मरणात्, 'पिण्डो देहे जपापुष्पे निर्वापे सिह्लकेऽपि च' इति विश्वकोषाच्च । तच्चैकशरीरत्वं द्वयोर्बहूनां वा न

संभवतीत्यारम्भकशरीरैक्यं विवक्षितम् । तच्चावयवद्वारैव संभवति । तथा च श्रुतिः-- ' एतत्पाट्कौशिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः ' इति । अत एव स एवायं विरूढः प्रत्यक्षेणोपलभ्यते इत्यभेदोपचारः । ननु एवं अवयवान्वयसिद्धावपि तस्य सापिण्ड्यप्रयोजकत्वं कुत इति चेत् , ' यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥ दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥ ' इति, ' ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च ' इति शङ्खबृहन्मनुगौतमादि- [ पृ. ६८८ ] वाक्येषु जन्यजनकभावस्य सापिण्ड्यप्रयोजकत्वप्रतिपादनादिति ब्रूमः । तच्च एकशरीरारब्धत्वं साक्षात्पुत्रशरीरे, परम्परया पौत्रादिशरीरेष्विति पुत्रपौत्रादीनां पितृपितामहादिभिः सह सापिण्ड्यं सिध्यति । एवं पुत्रेऽपि पित्रादीनां सापिण्ड्यं सिध्यति, अवयवान्वयमात्रस्याभिप्रेतस्य उभयनिरूप्यत्वात् । भ्रात्रोः एकशरीरारब्धत्वेन । दम्पत्योस्तु एकशरीरारम्भकत्वेन । भ्रातृभार्ययोस्तु एकशरीरारब्धाभ्यां सह एकशरीरारम्भकत्वेन । एवं स्नुषाश्वशुरयोः श्वशुरशरीरारब्धेन सह पुत्रशरीरारम्भकत्वेन । एतेषां च प्रकाराणां एकशरीरावयवान्वयत्वेनानुगमः । यद्येवं तर्हि सहोदरयोः सापिण्ड्यं स्यात् , भ्रातृभार्ययोरिव एकशरीरारब्धाभ्यां भगिनीभ्यां सह स्वस्वपुत्रशरीरारम्भकत्वात् । तथा दंपत्योरिव दंपतिपित्रोरपि, कन्यापुत्रद्वारा एकशरीरारम्भकत्वात् । स्यादेतत् यदि यत्र यत्र शरीरावयवान्वयस्तत्र तत्र सापिण्ड्यमिति व्याप्तिः स्यात् । न तु एवं, किंतु यत्र यत्र सपिण्डशब्दप्रयोगस्तत्र तत्र साक्षात् परंपरया वा एकशरीरावयवान्वयः । यत्र एकशरीरावयवान्वयो नास्ति तत्र सपिण्डशब्दप्रयोगोऽपि नास्ति इत्यन्वयव्यतिरेकव्याप्तिस्वीकारेण व्यापकव्यभिचारस्यादोषत्वात् । यथा पङ्कजपदे कुमुदसाधारणो योगो रूढ्या नियम्यते तथा अत्रापि इति नातिप्रसङ्गः ।



दत्तकस्य जनककुले सर्वत्र प्रतिग्रहीतृकुले च क्वचित् सप्तपुरुषमवयवसापिण्ड्यम् ; धर्मपुत्रस्य नातिरिक्तत्वं, किंतु दत्तकत्वमेव--

ननु एवं दत्तकस्य प्रतिग्रहीत्रा पित्रा सह सापिण्ड्यं न स्यात् ; अवयवान्वयाभावात् । न चेष्टापत्तिः, लोके अनादिवृद्धव्यवहारे च सपिण्डशब्दप्रयोगसद्भावादिति चेत् , मैवम् । त्रिविधो हि दत्तकः भ्रातृपुत्रः सपिण्डः असपिण्डश्चेति । तत्र आद्ययोः पितामहमूलपुरुषयोः अवयवान्वयेन अस्त्येव पालकदत्तकयोः सापिण्ड्यमिति नास्त्येव दोषः । अन्यत्र तु अवयवान्वयाभावात् अलक्ष्यतयैव न दोषः, प्रतिग्रहीत्रवयवान्वयाभावात् । [ पृ. ६८९ ] अत एव वृद्धगौतमः-- ' स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥ ' इति । ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृता ह्येव विधिना गोत्रतां संततित्वं यान्ति, परं तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पाद्यते इत्यर्थः । स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता । अत एव देवलः-- ' धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥ ' इति केवलशब्देन सापिण्ड्यमेव निरस्तवान्, गोत्राशपिण्डानां विधानात् । ननु एतत्प्रकृतार्थानुपयोगि, धर्मपुत्रविषयत्वात् । तथाहि-- तत्तद्गोत्रेण तस्य तस्यैव गोत्रेण ये पुत्रवद्धर्मार्थं वर्धिताः तेषु पुत्रेषु केवलं अंशपिण्डविभागित्वमेव, न वर्धकसापिण्ड्यमित्यर्थात् । तेन एतत् धर्मपुत्रस्यैव वर्धकसापिण्ड्याभावं बोधयति, न दत्तकस्य इति चेत् , मैवम् , ' पुत्रान् द्वादश यानाह नृणां स्वायंभुवो मनुः ' इति परिसंख्याविरोधेन धर्मपुत्रानभ्युपगमात् , अभ्युपगमेऽपि वा पत्न्यादिषु अगणनेन अंशभागित्वासंभवात् , अप्रसक्तया सापिण्ड्यनिषेधासंगतेश्च । तस्माद्दत्तकादिपुत्रविषयमेवैतत् , अंशभागित्वप्रदर्शनात् । धर्मार्थं स्वस्यालोकतापरिहारकधर्मसंपत्त्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्नभिन्नगोत्रेणापि परिग्रहीत्रा पुत्रवत् पुत्रप्रतिनिधितया परिगृह्य ये पुत्रा वर्धितास्तेषु केवलं परिग्रहीत्रंशपिण्डविभागित्वमेव, न सापिण्ड्यमिति । तस्माच्च दत्तके परि-

ग्रहीतृसापिण्ड्यम्, किंतु जनककुले एव सातपुरुषं [ पृ. ६९० ] सापिण्ड्यमिति सिद्धम् । ननु अत्र तच्छब्देन संनिधानात् वीप्सापेक्षितश्रुतबहुत्वानां पुत्राणामेव परामर्शो गम्यते, न वर्धकानां पुत्रिणाम्, व्यवहितत्वात्, संदिग्धबहुत्वानां वीप्सान्वयायोग्यत्वात्, आत्मनि परोक्षवन्निर्देशकतच्छब्दान्वयानुपपत्तेः अपरोक्षनिर्देशकस्वशब्दस्यैवौचित्याच्च इति चेत्, मैवं वादीः, ' सर्वनाम्नां बुद्धिस्थे शक्तिः ' इति न्यायेन बुद्धिस्थताया: प्राधान्यायत्तत्वात्, प्राधान्यस्य च संस्कार्यत्वेन फलान्वयेन वा संभवात्, ' पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ' इत्यादिवचनपर्यालोचनया पुत्रकर्तृकपिण्डदानादिक्रियया पितुः संस्कार्यत्वावगमात्, ' पुत्रेण लोकान् जयति ' इत्यादिवचनबलात्पितुरेव पुत्रकरणकभावनाभाव्यलोकरूपफलयोगितया प्राधान्यात्तच्छब्देन परामर्शो युज्यते । यथा ' तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा ' इत्यत्र आमिक्षायाः संसृष्टदधिपयोरूपत्वेन सांनाय्यविकारत्वे स्थिते, पूर्वपक्षिणा सप्तमीनिर्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्दिष्टस्य दध्नः प्रधानत्वात्तस्यैव तच्छब्देन परामृष्टस्य देवतासंबन्धात् सायंदोहविकारत्वमित्युक्ते, सिद्धान्तिना कर्मीभूतेनापि दध्ना पयसो व्याप्यमानत्वेन दध्ना पयः संस्कुर्यादिति वाक्यार्थपर्यवसानेन पयस एव प्रधानत्वात् तस्यैव तच्छब्देन परामृष्टस्य देवतासंबन्ध इति प्रातर्दोहविकारत्वं साधितम् । तद्वत् प्रकृतेऽपि पितुः संस्कार्यत्वेन प्रधानत्वात् तच्छब्देन तस्यैव परामर्श इति युक्तम् ।

दत्तकस्य प्रतिग्रहीतृकुले स्वसापिण्ड्याभावेऽपि
पितृसापिण्ड्यप्रयुक्त कन्यापर्युदास इति
मतं तत्खण्डनं च–

ननु एवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथं विवाहो न स्यादिति चेत्, सगोत्रत्वादिति ब्रूमः । तर्हि तद्भगिन्यादिसंततौ विवाहोऽस्तु, सगोत्रत्वसपिण्डत्वयोरभावात् । न च आहत्य निषेधकं वचनमुपलभामहे, प्रत्युत ' सावित्री यस्य यो दद्यात्तत्कन्या न विवाहयेत् । [ पृ. ६९१ ] तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत् ॥ ' इत्यादि अनुकूलमेव मरीचिवचनमस्ति । न चेष्टापत्तिः, अविच्छिन्नाविगीतसकलदेशीयशिष्टाचारविरोधात् । तस्मात् किं तत्र अविवाहे निमित्तमिति ।

अत्राहुः– त्रिविधा हि पर्युदसनीया सपिण्डा । तत्राद्या पितुः स्वस्य च सपिण्डा । द्वितीया पितुरसपिण्डा स्वस्य सपिण्डा । तृतीया पितुः सपिण्डा स्वस्य असपिण्डा । तत्र आद्या यथा, जननीपरिणेतुर्जनकस्य या सपिण्डा सा स्वस्यापि सपिण्डा । द्वितीया यथा, पालकस्य पितुरसपिण्डा जनकस्य पितुः सपिण्डा सा पितुरसपिण्डा सती स्वस्य सपिण्डा । तृतीया यथा, पालकस्य पितुः सपिण्डा स्वस्य असपिण्डा, दत्तके पालकावयवान्वयाभावात् । एवं च पितुरपि चातुर्विध्यं सिध्यति– जननीपरिणेता सन् जनकः, क्षेत्री, बीजी, पालकश्चेति । दत्तकजनकस्तु आद्ये एवान्तर्भूतः । तत्र जनकबीजिभ्यां साक्षादवयवसंबन्धादेव औरसक्षेत्रजयोः सापिण्ड्यं, क्षेत्रिणा तु क्षेत्रद्वारा क्षेत्रजस्य सापिण्ड्यम्, क्षेत्रक्षेत्रिणोः एकशरीरत्वप्रतिपादनात् । तादृशीनां तिसृणामपि ( मध्ये ) स्वसपिण्डानाम् ' असपिण्डां यवीयसीम् ' इत्यादिवचनेनैव पर्युदासः । पालकसपिण्डा तु दत्तकस्य असपिण्डा इति न ' असपिण्डां यवीयसीम् ' इत्यनेन पर्युदसितुं शक्यते । तदर्थं 'पितुरसपिण्डा' इति वचनमन्वेष्टव्यम् । तदाह मनुः– ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' इति । अत्र वाक्ये गौणस्यापि पितुः सातपुरुषं सापिण्ड्यं विवाहे वर्जनीयमिति गम्यते, अन्यथा असपिण्डामित्यनेनैव सिद्धौ मातृपितृपदोपादानवैयर्थ्यात् । न च पितृद्वारा अष्टमस्य वरस्य मातृद्वारा [ पृ. ६९२ ] षष्ठ्याः कन्याया विवाह्यत्वं प्रसक्तं तन्मा प्रसाङ्क्षीदित्येतदर्थं पितुरसपिण्डेति वक्तव्यमिति वाच्यम्, ' पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ' इत्याद्यनेकवाक्यविरोधात् । तस्मात् पातीति पिता इति व्युत्पत्त्या प्रतिग्रहीतुरपि पितृत्वा (त्)त्सापिण्ड्यनिवर्तनाय एतद्वचनारम्भ इत्यवश्यं वक्तव्यम् । न च ' तातस्तु जनकः पिता ' इति कोशात् ' सर्वेषां शब्दाना मुख्ये संप्रत्ययः ' इति न्यायाच्च सर्वत्रापि पितृपदं जनकपरमेवेति वाच्यम्, ' ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च ' इत्यत्र गौतमवाक्ये पितृपदेनैव

बीजिनः प्राप्तत्वेन पृथग्बीजिग्रहणानर्थक्यापत्त्या गोबली-वर्दन्यायेन पितृपदस्य जनकातिरिक्तपितृपरत्वावश्यं-भावात् । ततश्च मनुवाक्ये पालकपितृसपिण्डाया अपि वर्जनीयत्वान्नोक्तदोषावसर इति ।

तन्न युक्तम्, असपिण्डादिवाक्यैरेकमूलत्वसंभवे पृथङ्मूलकल्पनागौरवात् । तथाहि— मातुः पितुश्च द्वारा या स्वस्य असपिण्डा असगोत्रा चेत्यर्थपरत्वेन 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इत्यादिवाक्यैकमूलत्व-संभवात्, गौतमवाक्ये तु पितृपदस्य जननीपरिणेतृ-जनकपरतया परक्षेत्रबीजावापकबीजिप्रतिपादनाशक्त्या गोबलीवर्दन्यायासंभवाच्च ।

क्षेत्रजादीनामौरसप्रतिनिधित्वेन क्षेत्र्यादिसपिण्डावर्जनमिति मतं तत्खण्डनं च—

अन्ये तु क्षेत्रजादीनां पुत्रप्रतिनिधित्वाभिधानात् 'प्रतिनिधिस्तद्धर्मा स्यात्' इति न्यायेन सकलौरसधर्म-प्राप्त्या क्षेत्र्यादिपितृसपिण्डावर्जनं सेत्स्यतीत्याहुः । तन्न, 'न सापिण्ड्यं विधीयते' इति निषेधेन सापिण्ड्य-स्यैवाप्राप्त्या तद्वर्जनासंभवात् । एतेन पुत्रनाम्ना औरस-धर्मातिदेशात् प्रतिग्रहीत्रादिपितृसपिण्डावर्जनसिद्धिरित्यपि अपास्तम्, 'न तौ पशौ करोति' इतिवदतिदिष्टस्य सापिण्ड्यस्य निषेधेन वर्जनासंभवात् ।

अवयवसापिण्ड्याभावे प्रतिग्रहीत्रादिभिः सह दत्तकादीनां वाचनिकं त्रिपुरुष निर्वाप्यसापिण्ड्यम्—

[ पृ. ६९३ ] तस्मात् अनन्यगत्या वचना-देव प्रतिग्रहीत्रादिपितृसपिण्डावर्जनमिति अकामेनापि अभ्युपगन्तव्यम् । तत्र हेमाद्रिः पिण्डान्वयमेवो-पादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यवातिष्ठिपत् । तथा च कार्ष्णा-जिनिः— 'यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः । प्रेताना योजनं कुर्युः स्वकीयैः पितृभिः सह ॥ द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम् । चतुर्थपुरुषे छेदं तस्मादेषां त्रिपौरुषी ॥' इति । अस्यार्थः— ये दत्त-कादयः पुत्रास्ते प्रेताना स्वप्रतिग्रहीतृमातृपित्रादीना यावन्तः पितृवर्गाः पित्रादिसमूहाः पितृपितामहप्रपिता-महादयः तावद्भिः सह योजनं कुर्युः । यावत्तावच्छब्दो-पादानात् औरसाना केवलदत्तकानां च एकैक एव पितृ-वर्गो भवति । द्व्यामुष्यायणाना तु द्वौ, जनकवर्गः प्रति-ग्रहीतृवर्गश्च । एवं त्र्यामुष्यायणानां त्रयः पितृवर्गा भवन्ति, बीजिवर्गः क्षेत्रिवर्गः प्रतिग्रहीतृवर्गश्चेति । द्व्यामु-ष्यायणे द्वितीयं वर्गमाह— स्वकीयैः पितृभिः सहेति । स्वकीयैः द्व्यामुष्यायणीयैः, न कर्तृपितृभिः, तेषां प्रेते-नानन्वयात् । पितृभिः जनकैः । दत्तकादिपुत्रेषु विशेष-माह— द्वाभ्यामिति । तत्पुत्राः दत्तकादिपुत्राः । स्वपितृ-प्रतिग्रहीतुः पितृपितामहाभ्यां सह । दत्तकादिपौत्रेषु विशेषमाह— पौत्रास्त्वेकेन तत्सममिति । दत्तकपौत्राः स्वपितुः दत्तकतत्प्रतिग्रहीतृभ्यां एकेन प्रतिग्रहीतृपित्रा सह योजनं कुर्युः । चतुर्थपुरुषे दत्तकप्रपौत्रे कर्तरि छेदं, प्रतिग्रहीतृपितुरिति शेषः । तस्मादेषा दत्तकसपिण्डता त्रिपौरुषीति सिद्धम् । एतदेवाभिप्रेत्याह संग्रहकारः— 'दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपूरुषम् । [ पृ. ६९४ ] जनकस्य कुले तद्वद्ग्रहीतुरिति धारणा ॥' इति । इदं च दत्तकस्य जनककुले त्रिपुरुषं सापिण्ड्यं 'पञ्चमी सप्तमी तद्वत्' इत्यादिबृहन्मनूक्तसप्तपुरुष-सापिण्ड्येन सह विकल्पते । तत्र कल्पद्वयं देशाचारादि-भिर्व्यवस्थापनीयम् । यद्यपि निर्वाप्यपिण्डान्वयेन सापिण्ड्यं प्राङ्निरस्तम्, तथापि अगत्या दत्तकस्य प्रतिग्रहीत्रा सह तदेवाऽऽश्रयणीयम्, अविच्छिन्नशिष्टाचारानुरोधात् ।

सापत्नमातृमातामहादिसापिण्ड्याक्षेपः—

अथ सपत्नमात्रा सह कथं सापिण्ड्यम् ? तच्छरीरावयवान्वयाभावात् । न च पितृशरीरावयवाना स्वस्मिन्नारम्भकत्वेन सपत्नमातरि च आधेयत्वेनान्वया-देकशरीरान्वयेनैव सापिण्ड्यसिद्धिरिति वाच्यम्, पित्र-वरुद्धदासीभुजिष्यादिभिरपि सापिण्ड्यापत्तेः । न च स्वसपिण्डपितृसपिण्डत्वेन सपत्नमात्रा सापिण्ड्यमिति वाच्यम्, सपत्नमातामहादिभिरपि एतत्सापिण्ड्या-पत्त्या अतिप्रसङ्गात् । यथा हि स्वसपिण्डः पिता तत्सपिण्डा सापत्नमाता इति तया सह सापिण्ड्यं तथा तत्सपिण्डेन तत्पित्रा सपत्नमातामहेनापि सम

सापिण्ड्यं केन वार्येत । अथ पितृशरीरावयवान्वयिनि सपत्नभ्रातरि सपत्नमातुरपि अवयवान्वयात् स्वारम्भकेण सहैकशरीरारम्भकतया तया सह सापिण्ड्यमिति वाच्यम् । ( यतः ) तत्रापि सपत्नमातामहादिभिः सह सापिण्ड्यप्रसङ्गः, तस्यापि स्वकन्याद्वारा दौहित्रशरीरावयवान्वयात् । अत्रोदाहरणं, यथा श्रीरामस्य पिता दशरथः तदवयवान्वयिनि भरतशरीरे केकयराजस्यापि अवयवान्वयात् रामकेकयराजयोः सापिण्ड्यमिति । एवं सपत्नमातुलादिभिरपि एकशरीरारम्भकारभ्यत्वेन सापिण्ड्यसिद्धिः । यथा साक्षात्परंपराभ्यामेकस्य भरतशरीरस्याऽऽरम्भकौ दशरथकेकयराजौ, तदारब्धत्वेन रामयुधाजितोरपि सापिण्ड्यम् । एवमेव सापत्नमातुलकन्यापुत्रादिभिरपि सापिण्ड्यमुन्नेयम् , साक्षात्परंपराविवक्षायाः सर्वशेषत्वात् । [ पृ. ६९५ ] ननु ' यत्र यत्र सपिण्डशब्दप्रयोगस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्यः ' इति मिताक्षराग्रन्थस्वरसात्सापिण्ड्यावयवान्वययोः व्याप्यव्यापकभावावगमात् सपत्नमातुलादौ एकशरीरावयवान्वयस्यत्वस्य व्यापकव्यभिचारत्वेन अदोषत्वम् । सपिण्डशब्दप्रयोगाभावादिति चेत्, मैवम् , ' पितृपत्न्यः सर्वा मातरः, तद्भ्रातरो मातुलाः, तद्भगिन्यो मातृष्वसारः, तद्दुहितरो भगिन्यः, भगिनीसपत्न्यश्च भगिन्यः, तदपत्यानि भागिनेयानि, अन्यथा संकरकारकाणीति याप्याः पतिताश्च भवन्ति ' इति सुमन्तुना सापिण्ड्यव्याप्यमातुलत्वादिव्यपदेशात् । यद्येवं तर्हि न कोऽपि दोषः, लक्ष्यलक्षणोभयसत्त्वादिति चेत्, न । तथा सति सहजसिद्धावयवान्वयरूपसापिण्ड्यसद्भावेन सापत्नमातुलादिषु सापिण्ड्यातिदेशाय वचनारम्भोऽनर्थकः स्यात् । तथा च सुमन्तुवचनारम्भान्यथानुपपत्त्यैव सपत्नमातुलादिषु अवयवान्वयरूपसापिण्ड्याभावोऽवगम्यते इत्यतिप्रसङ्गः मुख्यः । तस्माच्च सपत्नमात्रा सह सापिण्ड्यमवयवान्वयाभावात् इति प्राप्ते उच्यते –

सापत्नकुले अवयवसापिण्ड्यव्यवधारणम्–

यत्र यत्नेनादिग्रन्थस्वरसात्सपत्नमातरि सर्वजनीनसपिण्डशब्दप्रयोगान्यथानुपपत्त्या अवयवान्वयः अवश्यं वाच्यः । स च सपत्न्योरेकेन भर्त्रा सह एकशरीरारम्भकतया यथा, तथा स्वारम्भकेण सह एकशरीरारम्भकतया सपत्नमात्रा सहापि सिध्यत्येव । एवं एकतस्तत्सिद्धौ अन्यतोऽपि एकशरीरारम्भणसहकार्यारब्धत्वेन तत्सिद्धिः । यथा पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह इत्युक्ते पुत्रेऽपि ( पितुरपि ) स्वशरीरावयवान्वयेन पुत्रेण सह इत्यपि सिद्धम् । तस्मादस्ति सपत्नमात्रा सहापि अवयवान्वय इति न दोषः । न च सपत्नमातामहादिषु अतिप्रसङ्गः, इष्टापत्तेः ।

' तद्भ्रातरो मातुलाः ' इत्यादिसुमन्तुवाक्यस्य परिसंख्यात्वम् ; सपत्नमात्रादिभिः सह पितृद्वारकं सापिण्ड्यम्–

न चैवं सपत्नमातुलादिष्वपि एकशरीरारम्भकारब्धत्वादिना सहज- [ पृ. ६९६ ] सिद्धे सापिण्ड्ये ' तद्भ्रातरो मातुलाः ' इत्यादिवचनारम्भवैयर्थ्यमिति वाच्यम्, पञ्चमसप्तमादिसंख्यान्तरपरिसंख्यार्थतया सार्थक्योपपत्तेः । तथाहि— ' मातृपितृसंबद्धा आसप्तमादविवाह्याः कन्या भवन्त्यापञ्चमादन्येषाम् ' इति पूर्ववाक्ये मातृपितृसापिण्ड्येनाविवाह्यत्वे अवधिद्वयं स्वपरमतेनोपन्यस्य मातृसपत्न्यां मातृपितृत्वाभावेन सापिण्ड्यद्वारतासंभवात् तत्संबन्धिनां सापिण्ड्याभावात् अविवाह्यत्वाप्रसक्तौ ' पितृपत्न्यः सर्वा मातरः ' इत्यारभ्यते । तत्र मातृसपत्नी, सपत्नमातेत्यादिशब्दैरभिधानसंभवेऽपि यत् पितृपत्नीशब्देनोपादानं तत्तस्याः पितृद्वारकसंबन्धद्योतनाय । यच्च पत्नीशब्दोपादानं तत् पित्रवरुद्धदासीभुजिष्यादिभिः सापिण्ड्यवारणाय । यच्च सर्वशब्दोपादानं तत् विजातीयाभिरपि सापिण्ड्यद्योतनाय । तेन च तत्संबद्धानामपि आ सप्तमात् आ पञ्चमाद्वा अविवाह्यत्वप्रसक्तौ ' तद्भ्रातरो मातुलाः ' इत्यादि परिसंख्यायते, यथा एते एव अविवाह्याः, नान्ये इति, ' पञ्च पञ्चनखा भक्ष्याः ' इतिवत् । न चायं नियमः संभवति, यथोक्तरीत्या सापिण्ड्यसद्भावेन अविवाह्यत्वस्य नित्यवत्प्राप्ततया पाक्षिकत्वाभावात् । ननु अयं अपूर्वो विवाह्यत्वप्रतिषेध एव कुतो नेष्यते ? सर्वजनीनसापिण्ड्याभावेन प्रसक्तिसंभवादिति चेत्, न,

साक्षात्परंपरया स्वारम्भकेण सह एकशरीरारम्भकत्वादिना सिद्धस्य सापिण्ड्यस्य अपलपितुमशक्यत्वात् । तत्सिद्धौ च अतिप्रसङ्गभङ्गाय अवश्यापेक्षितव्यवस्थाभिधानमसत्पक्षे । अपूर्वनिषेधपक्षे तु अनपेक्षितार्थवचनं अपूर्वान्तरकल्पनाक्लेशश्चेति दोषद्वयम् । तथाहि— व्यवस्थातिक्रमे हि सपिण्डोद्वाहनिषेधाश्रितत्वेन व्यवस्थायाः सपिण्डोद्वाहनिषेधातिक्रमजन्यमेव दुरितं कल्प्यते, न पृथक् । अपूर्वनिषेधपक्षे तु सापिण्ड्याभावात् सपिण्डोद्वाहनिषेधातिक्रमजन्यदुरितदुरितान्तरकल्पनाक्लेशः [ पृ. ६९७ ] प्रकृतनिषेधातिक्रमे इति । तस्मात् स्वभावसिद्धसापिण्ड्यस्य अपलपितुमशक्यत्वात्, तदतिप्रसङ्गभङ्गाय अवश्यापेक्षितव्यवस्थाभिधानार्थमिदमुदेति इति सर्वं सुस्थम् ।

'तद्भ्रातरः' इत्यादिसुमन्तुवचनस्य व्याख्यानम्—

अथ वाक्यार्थः— तद्भ्रातरः इत्यत्र तच्छब्देन पितृपत्नी परामृश्यते, प्रधानत्वात् । तद्भगिन्यः इत्यत्रापि सैव, पूर्वपरामर्शेन संनिहितत्वात् प्रधानत्वाच्च । तद्दुहितर इत्यत्र तु न तत्परामर्शः, तद्दुहितॄणां साक्षात्पित्रारब्धत्वेन 'असपिण्डाम्' इति सामान्यवचनेनैव विषयीकरणात् एतद्विशेषवचनविषयतान्तर्भावानर्थक्यात्, किंतु सपत्नमातुलमातृष्वस्रोरेव परामर्शः । ततश्च तत्कन्यानामेवाविवाह्यत्वमत्रोच्यते इति सम्यम् । पुत्रस्यैव सपत्नमातृकुले सापिण्ड्यं, न सपत्नमातृकुलस्य पुत्रकुले इति शङ्कापनोदायाऽऽह— भगिनीसपत्न्यश्च भगिन्य इति । भगिनीसपत्नीत्वव्यपदेशेन उभयतोऽपि सापिण्ड्यप्रदर्शनात् परस्परसंततेरविवाह्यत्वं दर्शयति । तदेवाऽऽह— तदपत्यानीति । तासामपत्यानि इत्यत्रापि तच्छब्देन सपत्नमातुलमातृष्वसृदुहितॄणां भगिनीसपत्नीना च परामर्शः, पितृपत्नीपरामर्शे तु तदपत्याना भगिनीत्वेन भागिनेयत्वव्यपदेशानुपपत्तेः । ततश्च सपत्नमातुलमातृष्वसृतदुभयदुहितृतदपत्यानि भगिनीसपत्न्यपत्यानि च अविवाह्यानि इति वाक्यार्थ इति ।

सुमन्तुवचनं सापत्नकुले कूटस्थमारभ्य उभयतश्चतुर्षु पुरुषेषु सापिण्ड्यपरिच्छेदकम्, न तु शब्दोपात्तेष्वेव सापिण्ड्यविधायकम्—

ननु— अत्र उभयतः सापिण्ड्यं न सिध्यति, प्रमाणाभावात् । तथाहि—पितृपत्नीशब्दो हि सपत्नमातुः पितृद्वारकमेव सापिण्ड्यं वदति इत्युक्तमेव प्राक् । तच्च सापिण्ड्यं यत्पितुः सा पत्नी तस्यैवेति सापिण्ड्यावधिपरिच्छेदाकाङ्क्षाऽपि तस्यैव, न पितृपत्नीपक्षस्थाना, पितृपत्नीरूपसापिण्ड्यप्रतियोग्यभावात् । न हि सा तेषां पितृपत्नी भवति, येनेदं वाक्यं तत्सापिण्ड्यं परिच्छिन्द्यात् । अस्ति तु भगिनीत्वादिना तेषां तत्सापिण्ड्यम् । तत्र चास्त्येव परिच्छेदकम् 'पञ्चमात् [ पृ. ६९८ ] सप्तमादूर्ध्वम्' इत्यादि । अत एव यद्धर्मपुरस्कारेण येन सह सापिण्ड्यं तद्धर्मपुरस्कारेणैव तदुपादानं, यथा 'तद्भ्रातरो मातुलाः' इत्यादिषु तद्भ्रातृत्वादिना । यदि इदमेव वाक्यमुभयतोऽपि सापिण्ड्यपरिच्छेदकं स्यात् तर्हि पुरुषसंख्याविशेषपुरस्कारेणैव प्रवर्तेत, यथा 'पञ्चमात्सप्तमादूर्ध्वम्' इत्यादि, न तद्भ्रातृत्वादिपुरस्कारेण । प्रवर्तते च तथा, तस्मान्न उभयतः सापिण्ड्यपरिच्छेदकमिदमित्यवसीयते, किंतु यद्धर्मपुरस्कारेण यदुपादानं तस्यैवाविवाह्यत्वं प्रतिपादयति, नान्येषाम्, अन्यथा तद्भ्रातृपदादीना तत्पित्राद्युपलक्षणतापत्तेः । तथा च पुनरतिप्रसङ्गः । तद्वारणाय पञ्चमादिवाक्यमेव अलं, किमनेनारब्धेन ? इति प्राप्ते उच्यते—

नात्र पञ्चमादिवाक्यं प्रवर्तते, तस्य साक्षात्सापिण्ड्यविषयत्वात् । कुत एतदवसीयते इति चेत्, एतद्वाक्यारम्भान्यथानुपपत्त्यैव इति ब्रूमः । ततश्च परिगणितातिरिक्तेषु येषु सापत्नमातामहसापत्नमातुलपुत्रसापत्नमातृष्वसृपुत्रेषु एतद्वाक्यं न प्रवृत्तं, न च पञ्चमादिवाक्यं, तत्र विवाह्यतापत्तिरवशिष्यते । न चेष्टापत्तिः, उक्तरीत्या अवयवसंबन्धसत्त्वेन सापिण्ड्यसत्त्वेन सपिण्डानिषेधस्य अत्रापि अक्षतत्वात् । तर्हि सपिण्डानिषेधादेव न उक्तविषयेषु विवाह्यताप्रसङ्ग इति चेत्, न, सापिण्ड्यस्य

आसप्तमपुरुषमपि अविच्छेदेन परिच्छेदकाभावे निषेधस्यातिप्रसङ्गात्। तस्मादनन्यगत्या तद्भ्रात्रादिपदं तत्पित्रादीनामप्युपलक्षणं वाच्यम्। ततश्च शब्दोपात्तानां प्रचयेन यावतां कथञ्चिदुपस्थितिः तावद्दूरं सापिण्ड्यं अनेन परिच्छिद्यते इति पर्यवसन्नम्। तद्यथा– सापत्नमातामहः मूलपुरुषः प्रथमः, तत्पुत्रः सापत्नमातुलो द्वितीयः, तत्पुत्रः सापत्नमातुलपुत्रस्तृतीयः। किमस्याश्रुतस्य ग्रहणे प्रमाणमिति चेत्, 'तद्दुहितरश्च भगिन्यः' इति मातुलमातृष्वसृदुहित्रुपा- [पृ. ६९९] दानमेवेति ब्रूमः, दुहितॄणामिव पुत्राणामपि संबन्धाविशेषात्। तत्पुत्रः सापत्नमातुलेयपुत्रश्चतुर्थः। अत्रापि 'तदपत्यानि भागिनेयानि' इति मातुलमातृष्वसृदुहित्रपत्याना (इव) मातुलमातृष्वसृपुत्रापत्यानामपि उपलक्षणम्, तुल्यसंबन्धतया बाधकाभावात्। एवं सापत्नमातृकुले चतुष्पुरुषं सापिण्ड्यं सिध्यति। एवं सापत्नमातृष्वसृसंतानेऽपि ज्ञेयम्, मातुलमातृष्वस्रोर्मूलपुरुषस्य एकत्वात्। ततश्च सापत्नमातामहादेव मूलपुरुषात् तद्दुहितृसपत्नीसंताने तत्संताने च यावच्चतुर्थं परस्परमविवाह्यताप्रदर्शनेन चतुष्पुरुषं सापिण्ड्यमनेनोक्तं इति सिद्धम्, 'तद्भ्रातरो मातुलाः' 'भगिनीसपत्न्यश्च भगिन्यः' इति अन्योन्य तुल्यसंबन्धप्रतिपादनलिङ्गादुभयतः सापिण्ड्यसिद्धेः।

यत्तु मदनपारिजातेन 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति वसिष्ठवाक्यं सपत्नमातामहकुलविषयं, अवयवानुवृत्तेरभावादिति व्याख्यातं, तत् आकाशलतेव मूलानपेक्षमेव उज्जृम्भते, उक्तरीत्या अवयवानुवृत्तिसद्भावात् सापत्नादिपदाश्रवणात् सापत्नवाक्यैकवाक्यताभावात् शौमन्तवविशेषवाक्यविरोधाच्चेति। न च वसिष्ठवाक्यान्यथानुपपत्तिरेव मूलमिति वाच्यम्, अन्यथोपपत्तेर्वक्ष्यमाणत्वात्। तस्मादुक्तमेव साधीय इत्यलमतिविस्तरेण।

विवाहे मातृतः पञ्चपुरुषं पितृतः दशपुरुषं
सापिण्ड्यमिति मतम्—

अथ सापिण्ड्यपरिच्छेदकपुरुषसंख्याविशेषः– तत्र बुधस्मृतिः— 'सवर्णां भार्यामुद्वहेदतीत्य मातृतः पितृतः पञ्चमीं दशमीमन्यगोत्रजाम्' इति। मातृतः पञ्चमीं पितृतः दशमीमतीत्य इत्यन्वयः। पञ्चमीं दशमीं संख्यामिति शेषः, न कन्यामिति। तथात्वे पितृतः पितृद्वारके सापिण्ड्ये दशम्याः मातुरत्यये सापिण्ड्यस्य मातृद्वारकतापत्त्या पितृग्रहणमनर्थकं स्यात्। तस्मात् संख्यामित्येव शेषो वाच्यः।

विवाहाशौचयोर्दशपुरुषं, रिक्थे सप्तपुरुषं, श्राद्धे
त्रिपुरुषं च सापिण्ड्यमिति मतम्—

[पृ. ७००] स्वयंभूस्तु अस्यैव सापिण्ड्यस्य अविवाहाशौचयोर्द्वयोरपि आवश्यकत्वमाह– 'तत्र ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति, आसप्तमाद्रिक्थविच्छित्तिर्भवति, आतृतीयात् स्वधाविच्छित्तिर्भवति, अन्यथा सपिण्डाशौचक्रियाद्युच्छेदात् ब्रह्महतुल्या भवन्ति' इति। अस्यार्थः— पिण्डः जनकदेहः। स्वधा श्राद्धम्। तच्च न यत्किञ्चित्, किंतु प्रौष्ठपद्यां विहितं प्रपितामहपित्रादीनां नान्दीमुखं श्राद्धम्। तत्र (? तच्च) प्रपितामहपित्रादयस्त्रयः पिण्डभाजः तदूर्ध्वास्त्रयो लेपभाजः स्वपित्रादयस्त्रयः तन्निरूपकाः कर्ता च इत्येवं दशपुरुषसंबन्धि। तदुभयं येषां ते एकपिण्डस्वधाः। ते सपिण्डाः, वाक्यशेषात्। तेषां * आदशमात्, दशमं पुरुषं मर्यादीकृत्य (इति) आदशमं, तस्मादादशमात्, दशमोर्ध्वमिति यावत्। अत्र आङ् पूर्वमर्यादावचनः, 'आजन्मशुद्धानाम्' इतिवत्। धर्मस्य विवाहे सपिण्डावर्जनस्य जननमरणयोः संध्यास्नानादिवर्जनस्य च विच्छित्तिः निवृत्तिः भवति। तथा आसप्तमात् सप्तमोर्ध्वं रिक्थनिवृत्तिः। तथा तृतीयोर्ध्वं स्वधानिवृत्तिः। अन्यथा दशमपुरुषादर्वागेव अविवाह्यतापरिहारे जननमरणयोः संध्यास्नानादिवर्जननिवृत्तौ च सपिण्डानामाशौचस्य तन्निमित्तायाः पिण्डदानादिक्रियायाः आदिशब्दात् अविवाह्यतायाश्च उच्छेदात् ब्रह्महतुल्या भवन्ति। ननु एवमपि एकपिण्डस्वधानामित्यत्र विशेषणद्वयोपादानं

* अत्र 'आदशमात्' इत्यस्याव्ययीभावत्वं चिन्त्यम्, अव्ययीभावार्थस्यानुपादानत्वात् दशमपदविहितपञ्चम्याः लुप्तत्वाच्च पञ्चम्यनुपपत्तेः। 'आ दशमात्' इति निर्देशस्तु साधुः।

-न्ययम्, अन्यतरविशेषणेनैव अवयवपिण्डान्वयरूपैकतरसापिण्ड्यसिद्धेरिति चेत्, न, दत्तपुत्रे सत्यपि जनकावयवान्वये तत्कर्तृकश्राद्धसंबन्धाभावान्न दशपुरुषं सापिण्ड्यम्, किंतु 'दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥' [पृ. ७०१] इति वृहन्मनुवचनात् साप्तपुरुषमेव, तथा प्रतिगृहीते पुत्रे सत्यपि प्रतिग्रहीतृश्राद्धान्वये अवयवान्वयाभावात् न दशपुरुषं सापिण्ड्यम्, किंतु त्रिपुरुषमेव, 'यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः । प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥ द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम् । चतुर्थपुरुषे छेदं तस्मादेषा त्रिपौरुषी ॥' इति कार्ष्णाजिनिवचनादिति तद्वारणार्थमुभयोपादानात् । एषा सपिण्डता । शेषं तु दत्तकसापिण्ड्यावसरे एव व्याख्यातम् ।

रिक्थाशौचयोर्दशपुरुषं साप्तपुरुषं च वैकल्पिकं सापिण्ड्यमिति मतम्—

दशपुरुषमेव सापिण्ड्यं रिक्थाशौचयोर्द्वयोरपि प्रयोजकमित्याह भगवान् बौधायनः— 'प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रः तत्पुत्रवर्गं तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते विभक्तदायान् सकुल्यानाचक्षते' इति । तस्य प्रपौत्रस्य पुत्रवर्गः पुत्रसमुदायः । तेषां समुदायिनां पुत्रपौत्रम् । अविभक्तदायं, दायोऽत्र पिण्डः, एकपिण्डान्वयीत्यर्थः । पिण्डान्वयश्च दशपुरुष एव इत्युक्तमेव प्राक् । विभक्तदायान् विच्छिन्नपिण्डान् दशमपुरुषादूर्ध्वं सकुल्यानाचक्षते इत्यर्थः । न च, इदं केवलं रिक्थग्रहणे एव दशपुरुषं सापिण्ड्यं, आशौचे 'सपिण्डे त्वाऽऽसप्तमात्' इति तेनैव पृथक् साप्तपुरुषाभिधानादिति मन्तव्यम्, 'सपिण्डेषु आदशाहम्' इत्युपक्रम्य 'जननमरणयोः संनिपाते' इत्युपसंहारात् मध्यपठितयोः साप्तपुरुषदशपुरुषयोः सापिण्ड्ययोः संदंशपतितत्वेन उभयत्रापि उभयोरपि वैकल्पिकत्वस्य सिद्धेः । तत्र 'आसप्तमाद्रिक्थविच्छित्तिः' इति स्वयम्भूवाक्ये साप्तपुरुषस्य बौधायनवाक्ये च दशपुरुषस्य रिक्थग्रहणे वैकल्पिकमङ्गत्वं स्पष्टमेव । तेन साप्तपुरुषसपिण्डत्वे अष्टमादिभिर्न रिक्थं ग्राह्यमिति सिध्यति । आशौचे तु तयोर्वैकल्पिक- [पृ. ७०२] मङ्गत्वं स्पष्टमाह पारस्करः— 'सर्वे ज्ञातयोऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वा' इति । याज्ञवल्क्योऽपि— 'सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्यवयन्त्यप.' इति । यत्तु सप्तमदशमशब्दयोर्दिनपरतया मिताक्षराव्याख्यानं, तदसत्, पूर्वोदाहृतपारस्करवचनादर्शनात् । इदमेव सापिण्ड्यं श्रुतिलिङ्गमपि उपोद्बलयति— 'दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे । अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥' (ऋसं. १।१५८।६) ममतायाः अपत्यं पुमान् मामतेयः दीर्घतमा नाम ऋषिः कूटस्थाद्दशमे युगे द्वन्द्वे मातापितृलक्षणे अतीते जुजुर्वान् भार्यां सेवितवान् । 'जुषी प्रीतिसेवनयोः' इत्यस्य अयं प्रयोगः । कुत इत्यत आह— अर्थं गर्भलक्षणं प्रयोजनं आसादयितुं यतीनां गच्छन्तीनां अपां शुक्रशोणितरूपाणां जलानां सारथिः नेता ब्रह्मा जीवः भवति, 'स्त्रीपुंसयोश्च संयोगे विशुद्धे शुक्रशोणिते । पञ्च धातून् स्वयं पञ्च आदत्ते युगपत्प्रभुः ॥' इति स्मृतेः । तस्माद्दवयवान्वयरूपं सापिण्ड्यं दशपुरुषमनुवर्तते इति तात्पर्यम् ।

मातृपितृपक्षयोरुभयोरपि साप्तपुरुषं सापिण्ड्यमित्येके पञ्चपुरुषमितपरे च मतम्—

तथा मातृद्वारकं साप्तपुरुषं सापिण्ड्यं स्मर्यते । यथा-
८८६ सुमन्तुः— 'मातृपितृसंबद्धा आसप्तमादविवाह्याः कन्या भवन्ति आपञ्चमादन्येषाम्' इति । अत्र मातृपितृद्वारकयोरुभयोरपि सापिण्ड्ययोः स्वमते साप्तपुरुषत्वमुक्तं, परमते द्वयोरपि पञ्चपुरुषत्वमुक्तम् ।

मातृतः पञ्चपुरुषं पितृतः सप्तपुरुषं च सापिण्ड्यमिति मतम्—

[पृ. ७०३] याज्ञवल्क्यस्तु मातृतः पञ्चपुरुषं पितृतः साप्तपुरुषं सापिण्ड्यमाह— 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति । विष्णुरपि— मातृतस्त्वा पञ्चमात्पुरुषात्पितृतश्चा सप्तमात्' इति । अत्र आह न मर्यादायां, किंतु अभिव्याप्तौ । नोद्वहेदिति अनुषज्यते । गौतमोऽपि— 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति । देवलोऽपि— 'पञ्च-

मातृसप्तमादूर्ध्वं मातृतः पितृतः क्रमात् । सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥ ' इति । पैठीनसिरपि— ' असमानार्षेयां कन्यां वरयेत् पञ्च मातृतः परिहरेत् सप्त पितृतः ' इति । हारीतोऽपि— ' तस्माल्लक्षणत्रयविज्ञानोपपन्नां कन्यां वरयेत् पञ्च मातृबन्धुभ्यः सप्त पितृबन्धुभ्यः ' इति । परिहृत्य इति शेषः । नारदोऽपि— ' पञ्चमात्सप्तमादर्वाग् बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥ ' इति ।

मातृतश्चतुष्पुरुषं पितृतः षट्पुरुषं साापिण्ड्यमिति, आशौचे सप्तपुरुषमिति च मते—

वसिष्ठस्तु मातृतश्चतुष्पुरुषं पितृतः षट्पुरुषमाह— ' गृहस्थः सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः ' इति । श्लोकवसिष्ठोऽपि— ' पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ' इति । विष्णुपुराणेऽपि— ' पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम् । गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप ॥ ' इति । [पृ. ७०४] शङ्खोऽपि— ' विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम् । मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम् ॥ ' इति । चतुर्विंशतिमतेऽपि— ' ब्राह्मेण तु विवाहेन शीलरूपगुणान्विताम् । मातृतः पञ्चमीं चैव सप्तमीं पितृतस्तथा ॥ ' इति ।

आशौचमधिकृत्य मनुविष्णू षाट्पुरुषमाहतुः — 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ' इति । विष्णुरपि आशौचे तथैव पठति— ' सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ' इति । गौतमोऽपि— ' आशौचे पिण्डनिवृत्तिः सप्तमे पञ्चमे वा ' इति । वसिष्ठस्तु आशौचे सातपुरुषमाह— ' सपिण्डता च सप्तपुरुषी विज्ञायते ' इति ।

विवाहे मातृतस्त्रिपुरुषं पितृतः पञ्चपुरुषं साापिण्ड्यमिति, पक्षद्वयेऽपि त्रिपुरुषमिति, पक्षद्वयेऽपि द्विपुरुषमिति च मतानि—

पैठीनसिस्तु विवाहे एव मातृतस्त्रिपुरुषं पितृतः पञ्चपुरुषमाह— 'त्रीनतीत्य मातृतः पञ्चातीत्य पितृतो वा' इति । वरयेदित्यनुषज्यते । चतुर्विंशतिमते तु पक्षद्वयेऽपि त्रिपुरुषं द्विपुरुषं च साापिण्ड्यमुक्तम्— ' तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ आरभ्य कूटात्पुरुषात्पञ्चमो न तु पञ्चमीम् । चतुर्थीं पञ्चमीं चैव चतुर्थः षष्ठ उद्वहेत् ॥ ' इति । षट्त्रिंशन्मते तु विवाहे एव मातृतः पितृतश्च द्विपुरुषमेव साापिण्ड्यमुक्तम्— ' तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा । [पृ. ७०५] विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ ' इति ।

साापिण्ड्ये द्विपुरुषतादिपक्षाणां विरोधपरिहारे मतान्तराणि तेषां खण्डनं च—

एषां वचनानां विरोधे व्यवस्थामाह विज्ञानेश्वराचार्यः— वसिष्ठादिवचनजातं तु अर्वाङ्निषेधार्थं, न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोध इति । अत्र उपपत्तिमाह मिताक्षराटीकायां सुबोधिन्यां भट्टवीरेश्वरः— ' पञ्चमात्सप्तमाद्वा यः कन्यामुद्वहते द्विजः । गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥ ' ' पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते सर्वे ते शूद्रतां गताः ॥ ' इति विष्णुमरीच्यादिवाक्याभिहितनिन्दार्थवादानुगृहीतेन ' पञ्चमात्सप्तमादर्वाग् बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥ ' इति नारदीयादिस्पष्टनिषेधेन अर्वाग्विवाहविधायकवाक्यानामविरोधाय निषेधस्य निषेध्यापेक्षिततया एकमूलकल्पनालाघवेन च नोद्वहेदित्येकवाक्यताकरणात् सर्वस्मृतीनामविरोध इति भावः इति । नैतन्मीमांसकशिरोमणेः विज्ञानेश्वरस्य आशयविवरणं साधीयः, षोडशिग्रहणाग्रहणादिविधिनिषेधयोः विकल्पमात्रोच्छेदप्रसङ्गात् । तस्माद्विधिनिषेधयोरेकवाक्यताकरणं तेजस्तिमिरयोः संवलनमिव अशक्यमित्युपेक्षणीयम् ।

विवाहमञ्जर्यां तु अस्यैवाऽऽशयोऽन्यथा वर्णितः । तथाहि— ' असपिण्डामुद्वहेत् ' इत्यत्र तत्तद्वाक्योपात्तानां तृतीयाद्यष्टम्यन्तानामसपिण्डानां युगपत्प्राप्तौ ' पञ्चमात् सप्तमादूर्ध्वम् ' इति वचनं अर्वाचीनानां असपिण्डानां परिसंख्यार्थम् । सैव च तत्तन्निषेधवाक्यैः स्पष्टीक्रियते । तदभिप्रायेण अर्वाङ्निषेधपरमिति । न एतदपि सारम्, तृतीयाद्यष्टम्यन्तासपिण्डोद्वाहविधीनां विनिगमनाविरहेण परस्परपरिसंख्यार्थता- [पृ. ७०६] पत्तेः । वस्तुतस्तु

ऐकान्तिको निषेधः परिसंख्या वा रागप्राप्ते एव भवति, 'न कलञ्जं भक्षयेत्' 'पञ्च पञ्चनखा भक्ष्याः' इत्यादिष्विव, न शास्त्रप्राप्ते, तयोस्तुल्यबलत्वेन विकल्पापादकत्वात्। न च असावपि प्रकृते युक्तः, अष्टदोषदुष्टत्वात् गत्यन्तरसंभवाच्च।

यदपि सप्तम्यादिविधीनां न तत्तद्विधायकत्वं, 'पञ्चमे सप्तमे चैव' इत्यादिवचनविरोधात्, किंतु पञ्चमसप्तमार्वाचीननिषेधपरत्वम्, 'पञ्चमात् सप्तमादर्वाक्' इत्यादिवचनैकवाक्यत्वादिति व्याख्यातम्, तदपि न, अपदार्थत्वेन लक्षणाप्रसङ्गात्।

यदपि सप्तम्यादिविधायकवाक्येषु अतीतपदाध्याहारेण सप्तम्याद्यूर्ध्वविधायकवाक्यैकवाक्यताकरणम्, तदपि न, विष्णुगौतमवसिष्ठादिस्मृतिषु विवाहाशौचप्रकरणयोः षाट्पुरुषसाप्तपुरुषसापिण्ड्यविधायकवाक्यद्वयारम्भानर्थक्यापत्तेः, षाट्पुरुषसापिण्ड्यविधायक एव अतीतपदाध्याहारेण साप्तपुरुषसापिण्ड्यसिद्धेः। तथाहि, विष्णुस्मृतौ— 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति आशौचप्रकरणेऽभिधाय विवाहप्रकरणे 'मातृतस्त्वापञ्चमात्पुरुषात्पितृतस्त्वासप्तमाच्चोद्वहेत्' इति पुनरभिहितम्। तथा गौतमेनापि— 'पिण्डनिवृत्तिः सप्तमे पञ्चमे वा' इत्याशौचप्रकरणे अभिधाय पुनः 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति विवाहप्रकरणेऽभिहितम्। तथा वसिष्ठेनापि— 'सपिण्डता तु सप्तपुरुषी विज्ञायते' इत्याशौचप्रकरणेऽभिधाय 'गृहस्थः सदृशीं भार्यां विन्देत पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः' इति विवाहप्रकरणे चाभिहितम्। तस्मात् यथा विवाहाशौचयोः पृथक् पृथक् सापिण्ड्यं अगत्या स्वीक्रियते तथा विवाहेऽपि सापिण्ड्यभेदः स्वीक्रियताम्। अत एव सुमन्तुपैठीनस्यादिस्मृतिषु विवाहे एव [पृ. ७०७] साप्तपुरुषपाञ्चपुरुषसापिण्ड्ये अभिहिते। तथाहि— 'मातृपितृसंबद्धा आसप्तमादविवाह्याः कन्या भवन्त्यापञ्चमादन्येषाम्' इति सुमन्तुः। पैठीनसिश्च— 'असमानार्षेयां कन्यां वरयेत्, पञ्च मातृतः परिहरेत् सप्त पितृतः, त्रीनन्वीरव मातृतः पञ्चातीत्य पितृतो वा' इति। न च अत्रापि अतीतपदाध्याहारेण एकवाक्यता संभवति, साक्षादेव अतीतपदवापदयोः श्रवणात्। तस्मात् तदपि भग्नम्।

सापिण्ड्ये द्विपुरुषत्वादिपक्षाणां मुख्यकल्पानुकल्पभावेनाविरोध इति सिद्धान्तः; तत्र पितृतो दशपुरुषं मातृतः सप्तपुरुषमिति मुख्यः कल्पः, इतरेषां च तारतम्येनानुकल्पता—

तर्हि कथमेषां वाक्यानां विरोधपरिहार इति चेत्, मुख्यानुकल्पताभेदेनेति ब्रूमः। तत्र पितृतो दशपुरुषं सापिण्ड्यं मुख्यकल्पः, बुधस्वयंभूबौधायनयाज्ञवल्क्यपारस्करादिस्मृत्यनुग्रहात्, प्रत्यक्षश्रौतलिङ्गोपष्टम्भाच्च। अस्मिन् पक्षे मातृतः साप्तपुरुषं सापिण्ड्यं मुख्यः कल्पः, 'मातृपितृसंबद्धा आसप्तमादविवाह्याः कन्या भवन्ति' इति सुमन्तुस्मरणात्। तत्परिहाराशक्तौ पितृतः साप्तपुरुषादयः मातृतश्च पञ्चपुरुषादयः षट् पक्षास्त्वनुकल्पाः। तत्रापि पितृतः साप्तपुरुषपक्षो मातृतः पञ्चपुरुषपक्षश्च बहुस्मृत्यनुग्रहात् अनिषेधात् प्राशस्त्यवचनात् सकलशिष्टपरिग्रहाच्च प्रशस्तः। अन्ये तु पूर्वपूर्वासंभवे अनुकल्पतातारतम्येन व्यवस्थाप्याः। अनुकल्पता च मुख्यानुष्ठानासंभवे परानुष्ठानम्।

अनुकल्पताद्वैविध्यम्—

तत्रानुकल्पता द्विविधा, नैयायिकी वाचनिकी चेति। तत्र नैयायिकीमाह विष्णुपुराणम्— 'सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्। उद्वहेत द्विजो भार्यां न्याय्येन विधिना नृप॥' इति। न्याय्यः न्यायप्राप्तः। न्यायश्च यथा— 'न दीक्षितस्यान्नमश्नीयात्' इति निषेधे 'अग्नीषोमीये संस्थिते दीक्षितस्यान्नमश्नाति' इत्यस्य गुरुपक्षस्य प्रतिप्रसवस्यासंभवे 'क्रीतराजको भोज्यान्नः' इति [पृ. ७०८] लघुपक्षस्याप्यनुष्ठाने। वाचनिकी यथा विश्वरूपोदाहृते चतुर्विंशतिमते— 'दशभिः पुरुषैः ख्याता श्रोत्रियाणां महाकुलात्। उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम्। पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः॥ सप्तमी च तथा षष्ठी पञ्चमी च तथैव च। एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि। विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः॥ असपिण्डा च या मातुरसगोत्रा च या पितुः। सा

प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते ॥ ' इति । सप्तमादूर्ध्वं प्रशस्तः कल्पः । तदभावे सप्तमीं, तदभावे पञ्चमीं इति पक्षद्वयेऽपि अयं सर्वमतेन प्रशस्तोऽनुकल्पः । तुशब्देन पक्षान्तरं परिगृह्णाति । पितृपक्षे स्वयं वक्ष्यमाणो विधिः सप्तमीं षष्ठीं पञ्चमीं तथा । मातृपक्षे चतुर्थ्यादिकां पूर्वपूर्वाभावे एव उद्वहेत् । एवमुद्वाहे न दोष इति शाकटायनमतम् । एवं स्वमतेन पक्षद्वये अनुकल्पमुक्त्वा इदानीं मतान्तरेण पक्षद्वयेऽनुकल्पमाह– पञ्चम्यभावे चतुर्थीं, तदभावे तृतीयां, आर्थक्रमप्राबल्यात्, पक्षद्वयेऽपि उद्वहेदिति मनुपराशराङ्गिरोयमाना मतम् । कन्यागतमेव सप्तमत्वादिविशेषणं वरेऽपि ज्ञेयम्, ' असपिण्डोऽसपिण्डामुद्वहेत् ' इति असापिण्ड्यस्य उभयविशेषणत्वात् । तेन सप्तमः सप्तमीं षष्ठः षष्ठीमित्यादि सिध्यति । पञ्चमयोस्तु विशेषोऽभिहितस्तत्रैव– ' आरभ्य कूटस्थपुरुषात् पञ्चमो न तु पञ्चमीम् । [ पृ. ७०९ ] चतुर्थीं पञ्चमीं चैव चतुर्थः षष्ठ उद्वहेत् ॥ ' इति ।

द्विजातिषु सापिण्ड्यानुकल्पस्य दोषाजनकत्वेऽप्य-
प्राशस्त्यम्, शूद्रेषु तु नाप्राशस्त्यमपि –

ननु अनुकल्पेऽपि यदि दोषाभावस्तुल्यस्तर्हि को विशेषो मुख्यकल्पादित्यत आह– सा प्रशस्ता इति । सा अतीतसप्तमादिका प्रकर्षेण शस्ता । दारकर्म गृहकार्यम्, मैथुनं आधानादि । अनेन अनुकल्पस्य द्विजातीनां दोषाजनकत्वेऽपि अप्राशस्त्यमुक्तं भवति, लोकविद्वेषात् । अन्येषां तु नाप्राशस्त्यमपि, उक्तरीत्या सप्तपुरुषस्य सापिण्ड्यस्य विजातीयेष्विव शूद्रेष्वपि संकोचावश्यम्भावेन द्विजातिमात्रविषयत्वात् ।

सापिण्ड्यानुकल्पस्य शूद्रमात्रविषयकत्वमिति
मतं तत्खण्डन च–

अन्ये तु सप्तपुरुषं सापिण्ड्यं चातुर्वर्ण्यविषयं, तद्विषयमेव च अनुकल्पविधानं, तच्च द्विजेष्वपोद्यते– ' पञ्चमात्सप्तमादर्वाक् ' इत्यनेन । ततश्च द्विजानामेवायं अनुकल्पनिषेधः, नान्येषां, इति द्विजातिरिक्तविषयं सप्तम्यादिविधानमिति मन्यन्ते । तन्न सुन्दरम्, अनुकल्पविधानस्य ' श्रोत्रियाणाम् ' इत्युपक्रमेण ' द्विजातीनाम् ' इत्युपसंहारेण च द्विजातिमात्रविषयत्वेन चातुर्वर्ण्यविषयत्वासंभवात्, द्विजातिमात्रविषयत्वे च विधिनिषेधयोरष्टदोषदुष्टविकल्पापत्तेः । न चास्मन्मते सा, विधेः अनुकल्पविषयत्वेन निषेधस्य च मुख्यकल्पविषयत्वेन एकविषयत्वाभावात् । तस्माद्यथोक्तमेव साधीय इति ।

सापिण्ड्यानुकल्पस्य देशकुलभेदेन व्यवस्थितत्वम्–

ननु अनुकल्पोद्वाहे दोषाभावान्नरको न स्यात्, लोकविद्वेषस्तु मधुपर्कगोवधवत् स्यादेव इत्यत आह– यस्तु देशेति । देशकुलाचाराभ्यां अनुकल्पस्य व्यवस्थितत्वात् न लोकविद्वेषविषयता । तत्र प्रमाणमाह– वेदादिति । ' तृतीये संगच्छावहै चतुर्थे संगच्छावहै ' ( शब्रा. १।८।३।६ ) इति वेदः तृतीयचतुर्थयोरुद्वाहे प्रमाणम् । ' ते नस्त्राध्वं तेऽवत त उ नो अधि वोचत । मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः ॥ ' ( ऋसं. ८।३०।३ ) इति वेदः कुलाचारे प्रमाणमिति । भो देवाः ते यूयं नः [ पृ. ७१० ] त्राध्वं पालयध्वम् । ते यूयं नः अस्मान् अवत रक्षत । ते यूयं नः अस्मान् अधि वोचत अधिकं हितं ब्रूत । मानवात् मनुष्यानुष्ठेयात् परावतः परलोकसंबन्धिनः पित्र्यात् पितृपरंपरागतात् पथः दूरं नः अस्मान् मा नैष्ट मा नयत इति देवान् प्रति प्रार्थ्यते । तस्मात् कुलपरंपरागतेन मार्गेण सप्तमादर्वागप्युद्वाहे न दोष इति भावः ।

सापिण्ड्यरक्षायां वर्णभेदेन संकरभेदेन च व्यवस्थेत्युत्कलमतम्–

उत्कलाः पुनरिमान्येव वाक्यानि दिव्यसिंहमिश्रकृतसंस्काररत्नतिकोदाहृतोशनःस्मृतिवाक्यबलात् अन्यथैव व्यवस्थापयन्ति । तद्यथा– ' सप्त षट् पञ्च चत्वारो वर्ज्या वर्णैः क्रमान्नराः । सपिण्डतायामुद्वाहे शुद्धौ मरणजन्मनोः । त्रयोऽनुलोमजैस्त्याज्या द्वावेव प्रतिलोमजैः ॥ ' इति । नराः पुरुषाः, शीर्षाणीति यावत् ।

सापिण्ड्यरक्षायां त्रिगोत्रान्तरितत्वेन व्यवस्थेति गौडमतम्–

गौडास्तु शूलपाणिमिश्रकृतसंबन्धविवेकोदाहृतवृद्धमनुवचनानुरोधेन अन्यथैव व्यवस्थामाहुः । तद्यथा– ' असंबद्धा भवेद्या तु पिण्डेनैवोदकेन वा । सा विवाह्या

द्विजातीनां त्रिगोत्रान्तरिता च या ॥' इति। त्रिगोत्रान्तरिता मूलपुरुषगोत्राच्चतुर्थगोत्रोत्पन्नेति यावत्। तथा च स एव– 'तत्संनिकर्षे कर्तव्यं त्रिगोत्रात्परतो यदि' इति।

विजातीयसापिण्ड्यं त्रिपुरुषम्–

अथ विजातीयसापिण्ड्यनिर्णयः– तत्र शङ्खः– 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥' इति। अस्यार्थः– एकजाताः एकस्मात् ब्राह्मणादेर्जाताः, (पृथक्क्षेत्राः) पृथग्जनाः भर्त्रपेक्षया भिन्नजातीयासु परस्परं समानजातीयासु स्त्रीषु जाताः, ते एकपिण्डाः सपिण्डाः। ते पृथक्शौचाः पितृजात्यपेक्षया [पृ. ७११] विजातीयाशौचाः। पिण्डस्त्वावर्तते त्रिषु तेषां सापिण्ड्यं त्रिपुरुषमेव इत्यर्थः। ब्रह्मपुराणेऽपि– 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु ॥' इति।

मातुलादिकन्या परिणेयेति पूर्वपक्षः; तत्र प्रमाणं श्रुतयः–

अथ मातुलकन्यापरिणयननिर्णयः– तत्र तदनुष्ठातारः श्रुतिस्मृतिपुराणेतिहासशिष्टाचारान् प्रमाणानि प्रदर्शयन्ति। तत्र ऋग्वेदश्रुतिः– 'आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व। तृप्ता जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥' इति। अस्यार्थः– हे इन्द्र, ईळितेभिः पथिभिः स्तुतैर्मार्गैः नः अस्माकं अस्माभिरनुष्ठीयमानं इमं यज्ञं आयाहि आगच्छ, आगत्य च स्वीयं भागधेयं जुषस्व, 'जुषी प्रीतिसेवनयोः', प्रीतिपूर्वकं गृह्णीष्व। कोऽसौ भागधेयः? इत्यत आह– वपां तृप्तां आज्यादिभिः संस्कृता वपा यजमानाध्वर्युप्रभृतयः जहुः त्यक्तवन्तः। तत्र दृष्टान्तद्वयमवतारयति– मातुलस्येव योषा इति, पैतृष्वसेयी इव इति च। अत्र मातुलशब्दस्य संबन्धिशब्दत्वात् संबन्धी भागिनेय उपतिष्ठते। ततश्च मातुलस्य योषा मातुलकन्या, न पत्नी, पैतृष्वस्रेय्या अनन्वयापत्तेः। यथा च भागिनेयस्य भागः भजनीया परिणेतु योग्या इति यावत्, यथा च पैतृष्वसेयी पितृष्वसुर्दुहिता अर्थान्मातुलपुत्रस्य भागः, तथा इयं च वपा तव भागधेयः।

तथा श्रुत्यन्तरमपि– 'गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः। नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥' (ऋसं. १०।१०।५) इति। अस्यार्थः– त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य [पृ. ७१२] प्रेरकः विश्वरूपः सर्वात्मकः देवः दानादिगुणयुक्तः नौ आवयोः भ्रातृभगिन्योः गर्भे जनिता जनितारौ कन्यापुत्रौ दंपती जायापती कः करिष्यतीत्यर्थः। अत्र हेतुमाह– अस्य प्रजापतेः व्रतानि कर्माणि नकिः प्रमिनन्ति न केचित् प्रहिंसन्ति न लोपयन्तीत्यर्थः। अपि च नौ आवयोः अस्य प्रजापतेः कर्तव्यं दम्पतिजनकत्वं पृथिवी भूलोकः द्यौः स्वर्गलोकश्च (न?) वेद (न?) जानातीत्यर्थः। एतेनापि भ्रातृभगिन्यपत्ययोः विवाहयोग्यता सिध्यति।

वाजसनेयकेऽपि– 'तस्मात्समानादेव पुरुषादत्ता चाऽऽद्यश्च जायेते। तृतीये संगच्छावहा उत चतुर्थे संगच्छावहै' (शब्रा. १।८।३।६) इति। अस्यार्थः– तस्मादित्युक्तमर्थं दृष्टान्तेनोपसंहरति। समानात् एकस्मात् पुरुषात् कूटस्थात् अत्ता भोक्ता आद्यो भोग्यश्च जायेते। तौ च मिथः संकल्पयतः कूटस्थमारभ्य तृतीयपुरुषे आवां संगच्छावहै उत चतुर्थे पुरुषे संगच्छावहै इति।

अर्थवादानां स्वार्थविधिकल्पकत्वम्–

यद्यप्येते मन्त्रार्थवादाः परार्थत्वात् न स्वार्थविधिपराः, तथापि अप्राप्तस्वार्थस्य सिद्धवदनुवादान्यथानुपपत्त्या स्वार्थविधिकल्पका गम्यन्ते, यथा 'उपरि हि देवेभ्यो धारयति', 'सव्यं हि मनुष्या अञ्जते' इत्यादौ। न च 'प्रजापतिः स्वां दुहितरमभ्यध्यायत्', 'योषा जारमिव प्रियम्' (ऋसं. ९।३२।५) इत्यादौ विधिकल्पनातिप्रसङ्गः, तेषां रागप्राप्तत्वात्।

मातुलादिकन्यापरिणये प्रमाणं स्मृतिपुराणेतिहासाः–

अत एव एतच्छ्रुतिमूलिका स्मृतिरपि षट्त्रिंशन्मते प्रत्यक्षमेव विधिं दर्शयति– 'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा। उद्वाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा

यमः ॥' इति । चतुर्विंशतिमतेऽपि– 'तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥' इति । [पृ. ७१३] पुराणेऽपि श्रीभागवते– 'यद्यप्यनुसरन्वैरं रुक्मी कृष्णावमानितः । व्यतरद्भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् ॥ वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया । राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥' इति । तथा तत्रैव 'दौहित्रायानिरुद्धाय गौरीं रुक्म्यददाद्धरेः । रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया । जानन्न धर्मं तं यौनं स्नेहपाशानुबन्धत. ॥' इति । यत्तु अस्य 'अधर्मं जानन्' इत्यन्वयप्रतिभानात् अधर्मत्वव्याख्यानं केषांचित्, तत् भगवद्बादरायणाशयानभिज्ञाननिबन्धनमित्युपेक्षणीयम् । तथाहि– प्रत्यक्षश्रौतलिङ्गानुमितश्रुतिस्मृत्याद्यनेकप्रमाणप्रमितं तं यौनं दौहित्राय पौत्रीदानलक्षणं सबन्धं धर्मं धर्मत्वेन जानन्नाददात्, किन्तु स्वसुः प्रियचिकीर्षया स्नेहपाशानुबन्धतः एव । अत एव हरेर्बद्धवैरोऽपि इति विशेषणेन तदेवाविष्कृतम् । दौहित्राय प्रद्युम्नपरिणीतस्वदुहितृपुत्राय गौरीं गौराङ्गीं रोचनां रोचनामिव इति इत्युत्प्रेक्षा, इति शब्दार्थः । इतिहासेऽपि महाभारते– शूरकन्या कुन्तिभोजेन पुत्रीकृता पाण्डुतः अर्जुनमजीजनत् । अर्जुनश्च शूरात्मजस्वमातुलवसुदेवसुतां सुभद्रामुपयेमे इत्यपरं लिङ्गम् । तथाहि– 'अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः । गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥ तत्र चङ्क्रममाणौ तौ वसुदेवसुतां शुभाम् । स्वलंकृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ ममैषा भगिनी पार्थ सारणस्य सहोदरा । [पृ. ७१४] सुभद्रा नाम भद्रं ते पितुर्मे दयिता शुभा ॥ दुहिता वसुदेवस्य वासुदेवस्य च स्वसा । रूपेण चैव संपन्ना कमेवैषा न मोहयेत् ॥ कृतमेव तु कल्याणं सर्वं मम भवेत् ध्रुवम् । यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ अतः प्रचिन्त्य कल्याणीं प्रसह्य भगिनीं मम । हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥' 'ततः सुभद्रा सौभद्रं केशवस्य स्वसा प्रिया । जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ॥' इत्यादि ।

मातुलादिकन्यापरिणये प्रमाणं शिष्टाचारः–

आचारोऽपि अविच्छिन्नपारम्पर्येण दाक्षिणात्यशिष्टानामविगीतो विजृम्भते । तस्मात्सिद्धं मातुलपितृष्वसृकन्यापरिणयनम् ।

मातुलादिकन्यापरिणयनिषेधबलेन पूर्वपक्षाक्षेपः–

अत्र प्राच्योदीच्यप्रतीच्याः प्रत्यवतिष्ठन्ते– कथमविगानं, निषेधस्मृतीनां बहुलमुपलब्धेः । तथाहि मनुः– 'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्पुनः ॥' इति । मातुश्चाप्तस्य मात्रा भ्रातृत्वेन प्रतिपन्नस्य । तथा च लिङ्गपुराणे– 'वाक्संबन्धकृतानां तु स्नेहसंबन्धभागिनाम् । विवाहोऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते । अतो वंशा विनश्यन्ति लोके संकरकारकाः ॥' इति । शातातपः– 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । [पृ. ७१५] समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत् ॥' इति । पुनरपि स एव– 'उद्वहेत्तु सगोत्रां यस्तनयां मातुलस्य च । ऋषिभिश्चैव तुल्यां च स तु चान्द्रायणं चरेत् ॥' महाभारते ययातिवाक्यमपि– 'यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि । पापा मातुलसंबन्धात्प्रजा वै ते भविष्यति ॥' कलिनिन्दाप्रक्रमे व्यासोऽपि– 'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा । शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥' इति । सुमन्तुः– 'पितृष्वसृसुता मातृष्वसृसुतां मातृसगोत्रां समानप्रवरां च विवाह्य चान्द्रायणं चरेत्' इति । पैठीनसिः– 'कुलोत्पन्नां साध्वाचारां वरयेत् पितृष्वसृमातृष्वसृदुहितरौ मातुलसुता च धर्मतस्ता भगिन्यो वर्जयेत्' इति । भगिन्य इति अपरिणेयत्वे हेतुगर्भं विशेषणम् । अत एव भविष्योत्तरे– 'प्रथमा श्रावणे मासि तथा भाद्रपदे परा । तृतीयाऽऽश्वयुजे मासि चतुर्थी कार्तिके भवेत् ॥' इति चतस्रो यमद्वितीया उपक्रम्य, तासु– 'पितृष्व्यभगिनीहस्तात् प्रथमायां युधिष्ठिर । मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप ॥ पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् । भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् ॥ सर्वा भगिन्यः संपूज्या

अभावे प्रतिपन्नकाः ॥ ' [ पृ. ७१६. ] इति चतुर्णामपि भगिनीत्वं स्पष्टमेवाभिहितम् । तदेवं मातुलकन्यापरिणयस्य निषेधवचनकदम्बे जाग्रति कथमिव तद्विधायकस्मृत्यादेः मूलभूतश्रुत्यनुमानम् ? इति प्राप्ते अभिधीयते दाक्षिणात्यैः—

पूर्वपक्षे विधिवचनैर्निषेधवचनबाध इति पूर्वोक्ताक्षेपसमाधानम्—

प्रत्यक्षश्रौतलिङ्गाद्यनुमितश्रुत्या शीघ्रोपस्थितिकतया स्मृत्यनुमितलिङ्गाद्यनुमीयमानश्रुतेर्विषयापहारेण बाधात् अनुमानासंभवात् न एतासां स्मृतीनां स्वार्थप्रमापकत्वम्। तदुक्तं बलाबलाधिकरणे वार्तिकाचार्यैः— ' स्मृतिवैदिकलिङ्गयोर्विरोधे स्मृतेर्मूलान्तरसंभवाद्वेदलिङ्गाना च अनन्यथासिद्धत्वात् स्मृतेर्बाधः ' इति । तथा, ' बलीयो वैदिकं वैदिकनिवहायाः स्मृतेरपि ' इति च । विवृतं चैतत् राणकाचार्यैः प्रकृतमेवोदाहरणं प्रस्तुत्य ।

मातुलादिकन्यापरिणयविधिनिषेधयोर्व्यवस्थितत्वमिति पूर्वपक्ष्येकदेशिमतम् ; तत्र ब्राह्मादिविवाहेषु कन्यायाः पितृगोत्रसापिण्ड्यनिवृत्तिः, आसुरादिषु न—

अथवा विषयविशेषव्यवस्थया विरोधाभावेन विधिनिषेधवाक्यैः स्वस्वमूलभूतश्रुत्यनुमाने बाधकाभावः । तथा हि— ब्राह्मादिषु विवाहेषु दानेन कन्यायाः पितृगोत्रसापिण्ड्ये निवर्तेते, यथा दत्तपुत्रस्य । तदाह मनुः— ' गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुग. पिण्डो व्यपैति ददतः स्वधा ॥ ' इति । दत्तः पुत्रो जनयितुर्गोत्ररिक्थे न भजेत् । तथा पुत्रं ददतः पितुः पिण्डः सापिण्ड्यं स्वधा श्राद्धं च दत्तपुत्रात् व्यपैति । तत्र हेतुः— यतो गोत्ररिक्थानुगः पिण्डः, तन्निवृत्तौ निवर्तते इत्यर्थः । आसुरादिचतुर्षु पुनः दानाभावेन गोत्रसापिण्ड्ययोरनिवृत्तिरिति । अत एव मार्कण्डेयेन— ' ब्राह्मादिषु विवाहेषु या वूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥ आसुरादि विवाहेषु पितृगोत्रेण धर्मवित् ॥ ' [ पृ ७१७ ] इति गोत्रनिवृत्त्यनिवृत्ती प्रतिपाद्येते । अनेनैवाभिप्रायेण स्मृत्यन्तरेऽप्युक्तम्— ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ' इति । एवं च यानि मातुलसुतादिनिषेधकानि मन्वादिवाक्यानि तानि अनिवृत्तगोत्रसापिण्ड्येषु आसुरादिविवाहेषु सावकाशानि इति । एतेन पुत्रिकापुत्रोऽपि व्याख्यातः, ' मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् । कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ॥ ' इति लौगाक्षिस्मरणात् ।

मातुलादिकन्या न परिणेयेति सिद्धान्तः ; तत्र ' ब्राह्मादिविवाहेषु सापिण्ड्यनिवृत्तिर्दानेन ' इति प्रथमविकल्पखण्डनम्—

तन्न चतुरस्रम्, विकल्पासहत्वात् । तथाहि— ब्राह्मादिविवाहेषु सापिण्ड्यनिवृत्तिः किं दानेन, उत वचनेन, आहोस्वित् सत्यपि सापिण्ड्ये वाचनिकोऽयं विवाहः इति । न तावदाद्यः, दानेन स्वत्वनिवृत्तावपि सापिण्ड्यानिवृत्तेः । अवयवान्वयः पिण्डान्वयो वा सापिण्ड्यम् । तत्र अवयवान्वयनिवृत्तिः प्रत्यक्षबाधिता । पिण्डान्वयनिवृत्तिस्तु ' पितरो यत्र पूज्यन्ते तत्र मातामहा अपि । अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥ ' इति शास्त्रेण बाधिता । यदा तु कन्यादाने परस्वत्वापादनमात्रं, न स्वस्वत्वनिवृत्तिरिति दानत्वस्यैवाभावः विप्रादानादिष्विव, तदा सुतरां न सापिण्ड्यनिवृत्तिः ।

' ब्राह्मादिषु सापिण्ड्यनिवृत्तिर्वचनेन ' इति द्वितीयविकल्पखण्डनम्—

नापि द्वितीयः, तादृशवचनस्य श्रीमद्भिरप्यनुपन्यासात् । यत्तु— ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ', तथा ' स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे ' इति च वाक्यद्वयमुपन्यस्तं, तत्राऽऽद्ये दम्पत्योः पिण्डैक्यमात्रं बोध्यते, न पितृसापिण्ड्यनिवृत्तिः । अथ पिण्डशब्देन सापिण्ड्यमेव [ पृ. ७१८ ] उच्यते, तत्रापि तथैव, निवृत्तिपदाश्रवणात् । द्वितीयेऽपि तथैव पितृगोत्रनिवृत्तिः श्रूयते, न सापिण्ड्यनिवृत्तिः, सापिण्ड्यपदाश्रवणात् । न च गोत्रनिवृत्त्यैव सापिण्ड्यनिवृत्तिः, परस्परव्यभिचारेण व्याप्त्यभावात् ।

' मातुलादिकन्यापरिणयो वाचनिकः ' इतितृतीयविकल्पखण्डने विप्रतिपन्नवचनतात्पर्यान्तरवर्णनेन—

* यदपि चतुर्विंशतिमते ( षट्त्रिंशन्मते )– 'तृतीया

* मातुलादिकन्यापरिणयं निराकर्तुं पूर्वं विकल्पत्रयं कृत्वा ' न

मातृतः कन्यां तृतीयां पितृतस्तथा ' इत्यादिवचनं, तत् ' मातुलस्य सुतामूढ्वा ' इत्यादिना सत्प्रतिपक्षग्रस्तमेव, प्रतिलोमादिसापिण्ड्यविषयं वेति न प्रकृतोपयोगि ।

यदपि 'ब्राह्मादिषु विवाहेषु या वूढा कन्यका भवेत्। भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया । आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् ॥ ' इति मार्कण्डेयवाक्येन ब्राह्मासुरविवाहभेदेन गोत्रसापिण्ड्ययोः निवृत्त्यनिवृत्ती प्रतिपाद्येते इत्युक्तं, तदपि न, सापिण्ड्यनिवर्तकपदाश्रवणात् । गोत्रनिवृत्तिस्तु आसुरेऽपि भवत्येव, 'पूर्वं परिग्रहस्तेषां पश्चाद्धोमो विधीयते । ' इति परि( ग्रह )-शब्देन होमादिसप्तमपदप्रक्रमान्तसकलभार्यात्वोत्पादकसंस्कारविधानात्, तत्र च सप्तमे पदे पितृगोत्रनिवृत्तेरावश्यकत्वात् । तस्मात् मार्कण्डेयवाक्यं आसुरादिविवाहेषु मातुः पिण्डदानादौ पितृगोत्रप्राप्त्यर्थम् । ब्राह्मादिवचनं तु दृष्टान्तार्थमनुवाद इति सर्वं सुस्थम् ।

यत्तु ' मातुलस्येव योषा ' इत्यादिश्रौतलिङ्गानुमितश्रुतिः अत्र प्रमाणमिति, तदपि ' आयाहीन्द्र पतिभिरीळितेभिर्यज्ञमिमं नो वाजसातौ जुषस्व । तृप्ता जहुर्मातुलस्येव योऽयं भागः पैतृष्वसेयीमपामिवौघः ॥ ' [ पृ. ७१९ ] इति अपरार्केदाहृतशाखान्तरीयश्रौतलिङ्गानुमितश्रुत्या सप्रतिपक्षग्रस्तम् । तस्याश्च अर्थस्तेनैव व्याख्यातः– आयाहि इन्द्र, असदीयं यज्ञं अन्यैरपि सोमपतिभिः ईळितेभिः स्तोमार्हैः सह, आगत्य च वाजसातौ सोमरूपान्नभोजनप्रस्तावे जुषस्व, सोममिति संबध्यते । एवं प्रार्थ्य इन्द्रस्तुत्यर्थं स्वरूपार्थवादं करोति– ये सोमपतयः भवता सह आयाताः ते सकृत्सोमपानेन तृप्ताः सन्तः सोमं जहुः त्यक्तवन्तः । के कामिव, मातुलस्य सुताः पैतृष्वसेयीमिव भार्यात्वेन अत्यन्तानभिलषणीयां त्यजन्ति, स्वकीयमातुलस्य संबन्धायोग्यत्वात्, तद्वद्बधदुद्देशेन सोमं त्यक्तवन्तो निराकाङ्क्षतया । तव पुनरयं सोमभागः अपामिवौघः सातत्येन आ कर्मसमाप्तेरिति ।

यदपि ' गर्भे नु नौ जनिता दम्पती कः ' इति श्रुतेः नौ आवयोः गर्भे जनितारौ त्वष्टा देवः दम्पती करिष्यतीति व्याख्यानं, तदपि ' नौ आवां जनिता जनयिता देवः गर्भे नु गर्भे एव दम्पती कः कृतवान् ' इति विद्यारण्यश्रीपादकृतव्याख्याविरुद्धत्वात् उपेक्षणीयम् । युक्तं चैतदेव, ' ओ चिदिति चतुर्दशर्चस्य सूक्तस्य ओ चित् पञ्चूना वैवस्वतयोर्यमयम्योः संवादः पञ्चयुग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे ' इति सर्वानुक्रमे अस्याः पञ्चम्या ऋचः यमं प्रति यम्या पूर्वपक्षत्वेनाभिधानात् । सिद्धान्ते ' न वा उ ते तन्वा तन्वां( न्वं ) संपपृच्यां पापमाहुर्यः स्वसारं निगच्छात् । अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ ' ( ऋस. १०।१०।१२ ) इति । अस्यार्थः– हे सुभगे, ते तव तन्वा शरीरेण तन्वां( न्वं ) स्वीयां तनुं न वा उ नैव संपपृच्यां संपर्क( र्च )यिष्यामि । तत्र हेतुमाह– यः स्वसारं [ पृ. ७२० ] निगच्छात् गच्छति तं लोका देवाश्च पापं पापिष्ठं आहुः । तर्हि मत्संतोषः कथं स्यादित्यत आह– मत्प्रमुदः मत्तः जायमानाः प्रमुदः त्वं अन्येन पुंसा कल्पयस्व अर्जयस्व । न ते भ्राता यमः एतत्कर्म वष्टि न काङ्क्षति इति यमेन तत्प्रत्याख्यानाच्च ।

---

तावदाद्यः ' इति, 'नापि द्वितीयः ' इति चोपक्रम्य आद्यं विकल्पद्वयं निराकृतम् । अथ सत्यपि तृतीयविकल्पनिराकरणे द्वितीयविकल्पनिराकरणाद्विविक्तताबोधनायाऽऽवश्यकोऽपि 'नापि तृतीयः ' इत्युपक्रमस्तु न दृश्यते । नापि तावता अलं, ' तादृशवचनाभावात् ' इति हेतूक्तेरप्यावश्यकत्वात् । स ग्रन्थस्त्रुटित इति विभाव्यते । किंच, स ग्रन्थो यदि ' यदपि चतुर्विंशतिमते ' ( षट्त्रिंशन्मते ) इत्यतः प्राक् कल्प्यते, तदा ' यदपि– ब्राह्मादिषु विवाहेषु ' इत्यादिरग्रिमो ग्रन्थो व्याकुप्यति, द्वितीयविकल्पसंगतस्य तस्य तृतीयविकल्पेनासंगतेः । अथ ततोऽग्रे ' यत्तु– मातुलस्येव योषा ' इत्यतः प्राक् कल्प्यते, तदा ' यदपि चतुर्विंशतिमते ' ( षट्त्रिं० ) इत्यादिग्रन्थव्याकोपः, तृतीयविकल्पसंगतस्य तस्य द्वितीयविकल्पेन संगत्यभावात्, इति ग्रन्थस्य व्याकुलता प्रतीयते । तदिदं लेखकादिप्रमादप्रभवं संभवति । अतोऽत्रैवं व्यवस्था कल्प्यते– ' परस्परव्यभिचारेण व्याप्त्यभावात् ' इत्यतः परं ' यदपि– ब्राह्मादिषु ' इत्यादिः ' सर्वं सुस्थम् ' इत्यन्तो ग्रन्थः, ततः परं त्रुटितो ग्रन्थः, ततः ' यदपि चतुर्विं० ' ( षट्त्रिं० ) इत्यादिरिति ।

अथ 'तृतीये संगच्छामहे' इति शातपथश्रुत्या मातुलकन्यापरिणयः सेत्स्यतीति, तत्रोच्यते-- न तावद्विधित्वेन इदं गमकम्, उत्तमपुरुषश्रवणात्। नापि विधिकल्पनया, 'स वै सुचौ व्यूहति' इति सुग्व्यूहनविधिशेषत्वात्। यदि अप्राप्तार्थकत्वेन अन्यशेषस्यापि विधिकल्पकत्वं, तर्हि 'नापुत्रस्य लोकोऽस्ति( स्तीति ) तत्सर्वे पशवो विदुः। तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति॥' ( ऐत्रा. ३३।२ ) इत्यस्यापि पुत्रोत्पादनविधिशेषस्य मात्रादिगमनविधिकल्पकत्वं केन वार्येत। अथास्य छन्दोगश्रुतिविरोधात् न विधिकल्पकत्वं, तर्हि प्रकृते अपरार्कोदाहृतश्रुतिविरोधाच्च विधिकल्पकत्वमिति समः समाधिः।

अथ 'तस्मादु समानादेव पुरुषादत्ता चाऽऽद्यश्च जायेते' इत्यस्मात्तदर्थसिद्धिः, तदपि न, एकस्मादुत्पन्नयोः भ्रातृभगिन्योः दाम्पत्यस्य 'पापमाहुः यः स्वसारं निगच्छात्' इतिप्रत्यक्षश्रुतिबाधितत्वेन मुख्यार्थासंभवात्। अथ एकान्तरविवक्षया विवक्षितार्थसिद्धिः, तर्हि मुख्यार्थत्यागाविशेषात् शास्त्रान्तराविरोधाय पञ्चपान्तरविवक्षया 'एकपुरुषसतानजात् पञ्चमात्सप्तमादूर्ध्वमित्येवार्थः कुतो न कल्प्यते? यथा जातेष्टौ मुख्यकालबाधेन शास्त्रान्तराविरोधाय आशौचानन्तरः पर्वकालः कल्प्यते इति। न हि पञ्चम्या अव्यवहितस्यैव अपादानत्वमुच्यते; चिरनिर्गतेऽपि पुरुषे 'गौडादागतः' इत्यादिप्रयोगदर्शनात्। तेन 'वाजपेयस्य यूपः' इतिषष्ठीवत् व्यवहितसंबन्धेऽपि पञ्चम्युपपत्तेः 'यतो वंशभेदस्तमादाय गणयेत्' इत्यादिस्मृतिमूलत्वमेवास्याः श्रुतेः कल्पयितुं युक्तम्। ननु-- कल्प्यतां-- [ पृ. ७२१ ]मन्तरं, तथापि पञ्चपान्तरकल्पने किं प्रमाणम्? वाक्यशेषश्रुततृतीयचतुर्थपुरुषसख्यैव निराकाङ्क्षत्वादस्य वाक्यस्य। उपसद्दनश्चायमेवार्थः श्रुतर्विंशतिमतस्मरणेऽपि-- 'तृतीया वा चतुर्थी वा पक्षयोरुभयोरपि। विवाहयेदिति प्राहुः पाराशर्याङ्गिरोयमाः॥' इति। तस्मात्सिद्धं एतावत्येवान्तरे विवाहविधायकत्वमस्य इति चेत्, सत्यम्, तथापि मातुलकन्यापरिणयनासिद्धेः( द्धिः ), मातृष्वस्रीयादिपरिणयनप्रसङ्गात्। न च आचाराभावेन तदपरिणयनसिद्धिः, प्रत्यक्षश्रुतिविहिते अनाचारस्याप्रयोजकत्वात्। न चास्य सामान्यरूपस्यापि 'मातुलस्येव योषा' इत्यादिलिङ्गकल्पितविशेषश्रुत्युपसंहारेण नातिप्रसङ्ग इति वाच्यम्, अपरार्कोदाहृतश्रौतत्यागलिङ्गविरोधेन तदुद्वाहविधायकविशेषश्रुत्यनुमानस्यैवासंभवात्। किंच, मातुलकन्यापरिणयनपरत्वे तयोः श्रुतिस्मृत्योः तृतीयपुरुषसंकीर्तनमेव कर्तव्यं, न चतुर्थपुरुषसंकीर्तनम्, तस्य मातुलत्वाभावात्। तस्माच्चेदं मानुलकन्यापरिणयनपरत्वेन व्याख्येयम्। किं तर्हि, द्विपुरुषसापिण्ड्यकीर्तनं प्रतिलोमजविषयं व्याख्येयम्, त्रिपुरुषानुलोमजसापिण्ड्यसमभिव्याहारात्, 'त्रयोऽनुलोमजैस्त्याज्या द्वावेव प्रतिलोमजैः।' इति उशनःस्मरणात्, तेषा तथा आचारदर्शनाच्च।

मातुलादिकन्यापरिणयापरिणययोर्विकल्पतानिराकरणम्--

अथ विधिनिषेधयोः प्रत्यक्षश्रौतलिङ्गद्वयानुमितश्रुतिद्वयमूलकयोस्तुल्यबलतया विकल्प एव देशभेदेन व्यवस्थितो मन्तव्यः। तथा च बौधायनः-- 'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः। यानि दक्षिणतस्तान्यनुव्याख्यास्यामः। यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति। अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति। [ पृ. ७२२ ] तत्रेतरदितरस्मिन् कुर्वन् दुष्यति इतरदितरस्मिन्। तत्रतत्र देशप्रामाण्यमेव स्यात्' इति। अस्यार्थः-- विप्रतिपत्तिः विरुद्धार्थानुष्ठानम्। इतरदिति। दक्षिणदेशीयं कर्म उत्तरदेशे उत्तरदेशीयं च कर्म दक्षिणदेशे कुर्वन् दुष्यति, न स्वस्वदेशे, तत्रतत्र देशनिबन्धनप्रामाण्यात्, इति चेत्, न, 'मिथ्यैतदिति गौतमः। उभयमेव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात्' इति बौधायनेनैवाग्रे विकल्पनिराकरणात्।

मातुलादिकन्याविधिनिषेधयोर्निषेधानुरोधेन विरोधपरिहारः--

तर्हि कथमयं विरोधः परिहर्तव्यः? प्रमिताक्षरोक्तप्रकारेण इति ब्रूमः। तथा हि-- 'स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याता तथा तानि निर्ब्रूयाद्-

थानन्वितेऽर्थे प्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्' ( नि. २।१ ) इत्यादिनिरुक्तपरिभाषया श्रुतिस्मृतिविरुद्धस्यार्थस्य अनन्वितत्वेन प्रादेशिकविकारेण अर्थं निर्णीय अविरुद्धोऽर्थः संपादनीयः। स च यथा– 'आ नो भर प्रमगन्दस्य वेद' इत्यादौ नित्यानित्यसंयोगविरोधेन प्रसिद्धमपि राजानं प्रमगन्दपदस्य अर्थं विहाय 'प्रकृष्टं मह्यं गमयिष्यतीति यो ददाति स प्रमगन्दः' इति व्युत्पत्त्या वार्धुषिकः प्रमगन्दपदस्य अर्थः कल्प्यते। यथा वा कीकटशब्दार्थे प्रसिद्धमपि देशविशेषं विहाय 'किं कृतेन इति ये वदन्ति ते कीकटा नास्तिकाः' इति कल्प्यते। तथा 'मातुस्तुल्यं लक्षणं यस्य' इति निरुक्त्या मातुलशब्देन मातृमुखो गृह्यते। पितृष्वसाशब्देन च 'स्वसा सुअसा स्वेषु सीदति इति वा' इति च निरुक्त्या पितुः स्वे रूपे सीदति इति पितृष्वसा इति पितृसदृशमुखी इत्यर्थो निर्णयः। तथा च मातृमुखेन पुरुषेण पितृमुख्यां कन्यायामुत्पादिता कन्या यथा भजनीया भवति तथा इयं वपा तव भजनीया इत्यर्थः। [ पृ. ७२३ ] उक्तं च सामुद्रिकसारे– 'धन्या पितृमुखी कन्या धन्यो मातृमुखः सुतः। तयोर्धन्यतरोत्पन्ना कन्या भाग्येन लभ्यते ॥' इति। 'मातुलस्येव योषा पैतृष्वसेयीव' इति च दृष्टान्तद्वयं विशिष्टकन्याऽलाभे अन्यतराऽपि प्रशस्तेति गमयितुम्। यद्येवमपि 'मातुलस्य योषा पैतृष्वसेयी लोकस्य भजनीया' इत्यन्वये लोकस्य इति कर्त्रध्याहारो दोषः, तर्हि 'मातुलस्य योषा कन्या भागिनेयस्य पैतृष्वसेयी मातुलपुत्रस्य' इति भवतां अध्याहारद्वयं कथमदोषमापद्यते। वस्तुतस्तु अस्माकं ईषदपि नाध्याहारः, यतः मातुस्तुल्यं लक्षणं नाम यस्य इति व्युत्पत्त्या मातृसमाननामा पुलोमापत्यं पुलोमा गृह्यते। तस्य मातुलस्य पुलोम्नः या अपत्यं शची सा च पैतृष्वसेयी, पितॄणामग्निष्वात्तादीनां स्वसा शची, तदपत्यत्वात्। शची इन्द्राणी यथा ते भागः तथा इयं वपा ते भाग इत्यर्थः। तदेतत्सर्वं महाभारतमत्स्यपुराणादिषु स्पष्टमभिहितम्– 'पुलोमा कालका चैव वैश्वानरसुते उभे। बहुपत्ये महासत्त्वे मरीचेस्तु परिग्रहः ॥ तयोः पुत्रसहस्राणि षष्टिर्दानवनन्दनाः ॥' इत्युपक्रम्य, 'पौलोमाः कालकेयाश्च दानवास्ते महाबलाः।' इति मध्ये अभिधाय, 'वैश्वानरः पुलोमा च विद्रावणमहार्णवा।' इत्युक्त्वा, 'स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता' इत्यन्ते अभिहितम्। तथा– 'अग्निष्वात्तादिकानां तु पितॄणां सा शची स्वसा। [ पृ. ७२४ ] पुलोमा जनयामास तस्यां नाम्ना शचीं सुताम् ॥' इति। तथा– 'शच्यां तु जनयामास जयन्तं तनयं हरिः' इत्यादि। तस्मादिदमित्थमेव व्याख्येयम्, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥' इति स्मरणात्। तस्मात् एतन्मन्त्रलिङ्गकल्पितविधिवशेन मातुलकन्यापरिणयनं न कथंचन सिध्यति। यदस्य 'आगमिष्यन्ति शक्रो देवताः' ( नि. १४।३१ ) इत्याद्येतन्मन्त्रनिरुक्तत्वेन केचित्पठन्ति, तदपि सर्वदेशीयवैदिकपाठाभावेन भाष्यकारापरिग्रहेण च न प्रमाणत्वेन शङ्कनीयम्।

महतामपि मातुलादिकन्यापरिणयनं दुराचार एव–

यदपि प्रद्युम्नानिरुद्धार्जुनादीनां मातुलकन्यापरिणयनं अत्र प्रमाणमिति, तदपि विषवयोः प्रभावस्तुल्यपोः परिणयनवत्, 'कतकभरद्वाजौ व्यत्यस्य भार्ये जग्मतुः', 'वसिष्ठश्चाण्डालीमक्षमालामुपयेमे', 'प्रजापतिः स्वां दुहितरमभ्यध्यायत्' इत्यादिवत्, परशुरामस्य मातृशिरश्छेदवत्, पाण्डवानां द्रौपदीपरिणयवच्च धर्मव्यतिक्रम एव, प्रत्यक्षश्रुतिस्मृतिविरोधात्। तथा च गौतमः– 'दृष्टो धर्मव्यतिक्रमः साहसं च महताम्' इति। न च तैः कृतमिति अस्मदादिभिरपि कर्तव्यम्। तत्रापि हेतुमाह स एव– 'अवरदौर्बल्यात्' इति। अवरेषां अस्मदादीनां दुर्बलत्वात्। तथा च श्रूयते– 'तेषां तेजोविशेषेण प्रत्यवायो न विद्यते। तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः ॥' इति। 'अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्। नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् ॥' इति। भागवतेऽपि– [ पृ. ७२५ ] 'तेजीयसा न दोषाय वह्नेः सर्वभुजो यथा।' इति। अत

एव बृहस्पतिरपि– ' उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ' इति अनाचारेष्वेव तत्परिगणयति ।

दुराचारोऽपि मातुलादिकन्यापरिणयः कलौ वर्ज्यः–

सोऽपि कलौ निषिद्धः, ' गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ' इति ब्रह्मपुराणात् । मातुः सपिण्डो मातुलः । अत एव कलिनिन्दाप्रक्रमे व्यासोऽपि– ' तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा । शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥ ' इत्यलं वृद्धविरोधेन ।

वधूवरयोर्मात्रादिसाम्ये विरुद्धसंबन्धा, सा न परिणेया–

अथ विरुद्धसंबन्धा– तत्र गृह्यपरिशिष्टम्– ' अविरुद्धसंबन्धामुपयच्छेत ' इत्युपक्रम्य ' दंपत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धा, यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा च ' इति । पितृमातृसाम्ये इत्युपलक्षणम् । तेन भ्रातृभगिनीसाम्ये स्नुषाश्वशुरादिसाम्येऽपि नोद्वाहः, विरुद्धसंबन्धाविशेषात् । तद्यथा– पितृव्यपत्नीस्वसुः सुता भगिनीसमा भवति, पितृव्यशालिकाया मातृष्वसृतुल्यत्वात् । तथा स्नुषाभगिन्यपि श्वशुरेण नोद्वाह्या, स्नुषातुल्यत्वात् । एवमन्यत्राप्यूह्यम् । अत एव बौधायनः– ' मातुः सपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् । पितृव्यपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ॥ ' इति ।

---

## धर्मद्वैतनिर्णयः*

## [ पृ. ११६–१२१ ]

औपदेशिकसापिण्ड्यम्; वध्वां वरे च पृथगेव सापिण्ड्यम्, उभयतस्तन्निवृत्तिर्विवाहप्रयोजिका–

[ पृ. ११६ ] अथौपदेशिकसापिण्ड्यम् । यात्राकारणे तु कल्पे उक्ते मुख्याभावे प्रवृत्तिसाम्यादुपस्थितमातिदेशिकं सापिण्ड्यं, तन्निरूपयितुं तदपेक्षितमौपदेशिकं सापिण्ड्यं निरूप्यते । ' गणेशरामौ पितरावपि नत्वा करोत्यमुम् । औपदेशिकसापिण्ड्यनिर्णयं भट्टशंकरः ॥ ' इह खलु सर्वस्मृतिषु ' असपिण्डाम् ' इति परिणेयकन्याया विशेषणं श्रूयते । तथा ' एतैरेव गुणैर्युक्तः ' इति वरेऽपि तदतिदिश्यते । अत एव वरनिरूपितं कन्याया कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यम् । न तु संयोगवद्व्यासज्यवृत्त्युभयनिरूपितमेकमेव, यतोऽन्यतरतो निवृत्ते तस्मिन्निवर्तेत, तथा सति कन्यावरयोरुभयोरप्यसापिण्ड्यविशेषणवैयर्थ्यापत्तेरन्यतरत्रैव तदुक्त्योभयत्रोक्तेः फललाभात् । तथा च शिष्टतरदाक्षिणात्याना सर्वेषामविप्रतिपन्नो व्यवहारः ' एकतो निवृत्तं सापिण्ड्यं, नान्यतः ' इति ।

' असपिण्डाम् ' इति पर्युदासस्य निषेधतुल्यफलता–

तथा यद्यप्ययं नञ्समासबलात् पर्युदासः प्रतीयते, न प्रतिषेधः । नञो हि क्रियान्वये स भवति, ' प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ' इति तल्लक्षणात् । न च पर्युदसनीयानुष्ठाने पर्युदासेन दोषो बोध्यते ' न होतारं वृणीते ' ' नानुयाजेषु ' इतिवदविहिताप्रतिषिद्धत्वात् । तथापि इह सपिण्डाविवाहे प्रायश्चित्तस्मरणात् पर्युदासोऽप्ययं निषेधतुल्यफलः ।

न्यूनसापिण्ड्यविधयोऽर्वाङ्निषेधपरा', ब्राह्मादिषु दानेन पितृसापिण्ड्यं न निवर्तते, मातुलादिकन्यापरिणयो दुराचार एव–

अत्र प्रयोगपारिजाते सत्पुरुषान्तरालेऽपि केचिदभ्यनुज्ञाविषयो लिखिताः– षट्त्रिंशन्मते– ' तृतीयां मातृतः कन्या तृतीया पितृतस्तथा । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ ', चतुर्विंशतिमते– ' तृतीयां वा चतुर्थी वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ ' , पैठीनसिः– ' त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः ' इति । तान् दृष्ट्वा केचित्तथैवानुतिष्ठन्ति । तत् शिष्टानामसंमतम् । तथाहि– तत्र यदि तावदेवमुच्यते– ब्राह्मादिविवाहेषु दानात्सापिण्ड्यनिवृत्तेस्तत्रोत्पन्ना असपिण्डैवेति ईदृशे विषये दोषाभाव इति । ब्राह्मादिविवाहचतुष्टये च दानात् सापिण्ड्यनिवृत्तिर्माधवाचार्यैः स्मृतिरत्नावल्यादिषु मातुलकन्यापैतृष्वस्रेयीविवाहस्थापनार्थमुक्तेति । तत्तावदयुक्तम्, दानेन सापिण्ड्यनिवृत्तौ प्रमाणाभावात् । यत्तु प्रमाणमुक्तं तैः ' ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः ॥ ' इति मार्कण्डेयपुराणवाक्यं, तत्र गोत्रव्यवस्थामात्रमुक्तम्, न

* आदर्शपुस्तकं श्री. ज. र. घारपुरेसंपादितम् ।

सापिण्ड्यव्यवस्थाऽपि । अत एव विज्ञानेश्वरेण मातृसपिण्डनव्यवस्थाया ब्राह्मादिविवाहोत्पन्नस्तु पित्रा भर्त्रा श्वश्र्वा सह मातुः सपिण्डीकरणं कुर्यादित्युक्तम् । तथा ब्राह्मादिविवाहचतुष्टयेऽपि गोत्रे विकल्प एवोक्तः । न च दत्तके दानस्य दातृसापिण्ड्यनिवर्तकत्वप्रतिग्रहीतृसापिण्ड्यसंपादकत्वदर्शनात् ब्राह्मादिविवाहचतुष्टयेऽपि तथैव कल्प्यम्, सामान्यतो दृष्टस्येदृशे विषये प्रामाण्यायोगात् । पुत्रप्रतिग्रहविधेस्तु अवयवानुवृत्तिप्रयुक्तकार्यनिवृत्तिरुत्पादयितुः प्रतिग्रहीतुश्च तत्कार्यप्रवृत्तिरेव प्रयोजनं, कन्यादाने तु पितुरुद्धारादीति वैषम्यम् । यदि तु पुत्रदानप्रतिग्रहे 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥' इति मनुवाक्ये गोत्रग्रहणस्य सापिण्ड्योपलक्षकत्वाद्यथाश्रुते च सप्रवरत्वस्याप्यनिवृत्त्यापत्तेस्तद्वत्कन्यादानेऽप्युच्यते, तत इह 'स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे' इति वचने गोत्रग्रहणमुपलक्षणं सापिण्ड्यस्य स्यात्, ततश्च विवाहहोमसप्तपद्यादेरासुरादिविवाहचतुष्टयेऽपि सत्त्वात्तत्रापि सापिण्ड्यनिवृत्तिरापद्येत । तस्मात्कन्यादाने पितुरुद्धारायेव फलम् । सप्तपद्यानु- [पृ. ११७] वाचनिकी गोत्रमात्रनिवृत्तिः । सापिण्ड्यनिवृत्तिस्तु गोत्रान्तरापत्तिरिव विवाहे नैव । पुत्रप्रतिग्रहे तु पुत्रशब्दस्य संबन्धिशब्दत्वात्पुत्रं दानप्रतिग्रहाभ्यां कुर्यादिति वाक्यार्थेऽनन्यप्रयोजनकत्वेन जाते दातुरवयवानुवृत्तिनिवृत्तिप्रतिग्रहीत्रवयवानुवृत्तिप्रवृत्तिप्रयोजनमुत्पत्तिवाक्याद्यवगतमपरित्यजतैव मनुना गोत्रनिवृत्तिरप्यधिकोक्तेति वैषम्यम् ।

किंच, व्याप्यपुत्रत्वापत्तिनिवृत्तिभ्यामेव व्यापकसापिण्ड्यापत्तिनिवृत्ती अनुमेये दत्तके, न तु कन्यादाने तादृगनुमापकमस्ति । अत एव विज्ञानेश्वरेण 'प्रत्तानां प्रेतमितरे कुर्युः' इति पित्रादीनां सापिण्ड्यप्रयुक्तदशाहाशौचापवाद इत्युक्तम् । ब्राह्मादिविवाहचतुष्टये च दानेन सापिण्ड्यनिवृत्तौ मातुलस्तादिकन्या परिणेया स्यात्, तथा पुत्रिकाकरणेऽपि दानविधिसद्भावात् सापिण्ड्यनिवृत्त्यापत्तेस्तन्निवृत्तिमूलकस्य स्वमते निर्गोत्रेण मातुः सपिण्डीकरणादिक्रिया न स्यादित्यादिदूषणैरयं पक्षोऽस्माभिर्मातुलकन्यापरिणयस्य दुराचारत्वमुपपादयद्भिः शास्त्र-

दीपिकाप्रकारो निरस्तः । अथोच्यते—दानेन सापिण्ड्यानिवृत्तावपि असपिण्डामिति च निषेधे चतुर्थादौ प्रवृत्तेऽपि पट्त्रिंशन्मतचतुर्विंशतिमतपैठीनसिवाक्यैः विशेषविषयैः सामान्यविशेषन्यायेन सामान्यरूपसपिण्डानिषेधो बाध्यत इति । तदप्ययुक्तम्, असपिण्डामित्यस्य सामान्यशास्त्रत्वाभावात् । तथाहि— 'पञ्चमात्सप्तमादूर्ध्वम्' इत्येतत् 'असपिण्डाम्' इत्येतच्चान्योन्याकाङ्क्षया विवाहप्रकरणाम्नानाच्चैकवाक्यतामापद्यते सप्त नोद्वहेदिति । ततश्च सप्तापि विषयीकुर्वन् निषेधोऽयं विशेषशास्त्रमेव जातमिति न पट्त्रिंशन्मतादिभिः सामान्यविशेषन्यायेन बाध्यते । न वा सावकाशनिरवकाशन्यायेन । अयं च न्यायः 'पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात्' ( जैसू. २।२।७।२१ ) इत्यधिकरणे सिद्धः । यथा हि तत्र 'सप्तदश प्राजापत्यान्पशूनालभते' इत्यत्र कर्मैक्ये एकपशुनिष्पन्ने एकस्मिन्नेकादशावदानगणे चोदकप्राप्ते उपादीयमाने सप्तदशानां साधनतयोपादानमुक्तं बाध्येतेत्युक्तम्, एवमत्रापि पट्त्रिंशन्मतादिना तृतीयादिकन्यायामवर्ज्यमानायां 'सप्त वर्ज्याः' इति सप्तानां वर्जनमुक्तं बाध्येतेति मीमांसाधिकरणविरोधः । किंच यथा तत्र चोदकोपदेशयोर्विरोधो यागान्तरकल्पनया समाधीयते तथेहापि 'सप्त न परिणेयाः' 'तृतीया परिणेया' इत्यनयोर्विरोधो द्वितीयादिपरिणये दोषाधिक्यकल्पनया समाधीयत इति न किंचित्केनचिद्बाध्यमिति । तदेतदेवाभिप्रेत्य विज्ञानेश्वरेणोक्तम्— "यत्तु 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' 'त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः' इति, तदर्वाङ्निषेधार्थं, न पुनः प्राप्त्यर्थम्" इति । निषेधशब्दस्तु प्रयुक्तदोषविशेषप्रतिपादनार्थः । ईदृशं चोदाहरणं हेमाद्रिणोक्तम्— "वामनपुराणे— 'नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम् । पूर्णासु योषित्परिवर्जनीया ॥' इति सामान्यनिषेधेऽपि 'षष्ठ्यां तैलमनायुष्यम्' 'पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारद । तैलं मांसं व्यवायं च क्षुरं च परिवर्जयेत् ॥' इत्यादिविशेषनिषेधाद्दोषाधिक्यम्" इति । अवश्यं च संनिहिते संबन्धे दोषाधिक्यं व्यवहितसंबन्धे दोषाल्पत्वं सर्वेषामिष्टमेव । न हि भगिन्युद्वाहे पितृष्व-

पुत्र्युद्वाहे च तुल्यो दोषः। एवं प्रपितामहस्य चतुर्थपञ्चमादीनां च संततौ योज्यम्। अत एव तद्गमनेऽपि प्रायश्चित्तात्पत्वमहत्त्वे स्मृतिषूक्ते।

न्यूनसापिण्ड्यानामनुकल्पत्वनिराकरणम्—

एतेन माधवाचार्यैर्विज्ञानेश्वरमतमुक्त्वा स्वयं षट्त्रिंशन्मतादिविशेषवाक्यानां यद्गत्यन्तरं कृतं अनुकल्पो वेति तदपि परास्तम्। अनुकल्पेऽपि हि तृतीयचतुर्थपञ्चमषष्ठानां तुल्यानुकल्पत्वायोगात् [ पृ. ११८ ] आवश्यकी दोषगुरुलघुभावकल्पना। एवं चेत्तैव कल्पनाऽस्तु, किमनुकल्पत्वकल्पनयेति। किंच तैर्ब्राह्मादिविवाहे सापिण्ड्यनिषेधाप्रवृत्तेरेवोक्तत्वात्कन्यासतानं सर्वत्रापि दोषाभावाच्चानुकल्प इत्यासुरादिविवाहविषय एवानुकल्पः संमतस्तेषाम्। ब्राह्मादिविवाहे तु सापिण्ड्याभ्युपगमवादिना केषांचिदनुकल्पो नेष्ट एवेत्यलमतिप्रपञ्चेनेत्युपरम्यते।

आतिदेशिकसापिण्ड्यम्; तच्च सापत्नमातामहमारभ्य चतुष्पुरुषम्—

अथ आतिदेशिकसापिण्ड्यनिर्णयः— एवं निर्वाप्यपिण्डान्वयेन सापिण्ड्यं निरस्य एकशरीरान्वयेन विज्ञानेश्वरादिभिर्निर्णीतमौपदेशिकं सापिण्ड्यं निरूपितम्। अथेदानीमातिदेशिकं सापिण्ड्यं निरूप्यते। तच्चातिदेशिकं सापिण्ड्यमाह सुमन्तुः— 'पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युः' इति। अत्र सपत्नमातामहात्कूटस्थाच्चतुष्पुरुषं सापिण्ड्यातिदेशो वाक्यार्थस्तात्पर्यविषयीभूतः। तथाहि— विशिष्टविधिनैव यत्रैकविधिना अपरविधिराक्षेपतो लभ्यते तत्र न प्रत्येकं विधिरायास्यते। यत्र त्वेकविधिनान्याक्षेपो न लभ्यते तत्र प्रत्येकमायास्यते विधिः। तदिदं पौर्णमास्यधिकरणे आचार्यैर्विस्तारेणाग्नेयवाक्ये निरूपितम्। तद्यथा विद्वद्वाक्यविहिते कर्मणि गुणविधित्वे आग्नेयपदार्थविधिनाऽष्टाकपालपदार्थविधिराक्षेपतो न लभ्यते, यथा वा अष्टाकपालपदार्थविधिना आग्नेयपदार्थविधिः, एवमिह सुमन्तुवाक्येऽप्यन्यतरविधिनाऽन्यतरदाक्षेपतो न लभ्यते। न चात्र ग्रहवदेकमुद्देश्यतावच्छेदकमप्यस्ति सपत्नमातृभ्रात्रादिषु। तेन सपत्नमातृभ्रातरमुद्दिश्य सापिण्ड्येऽतिदिष्टे सपत्नमातृभगिनीमप्युद्दिश्यावश्यं सापिण्ड्यातिदेशाय पृथक् प्रयत्न आस्थेयः। अथापि सपत्नमातृभ्रातृभगिन्योः सपत्नमातामहापत्यत्वमेकमनुगतं ग्रहत्ववदुद्देश्यतावच्छेदकमुच्यते, एवमपि तद्दुहितॄणा तेनोद्देश्यतावच्छेदकेन क्रोडीकाराभावादवश्यं तत्र सापिण्ड्यातिदेशाय पृथक्प्रयत्नोऽङ्गीकार्य एव। एवमुत्तरत्र। ततश्च वाक्यभेदः। एवं सापिण्ड्यानुवादेनानेकेषां सपत्नमातृभ्रात्रादीनामुपादानाभ्युपगमेऽपि वाक्यभेद एव, सापिण्ड्याप्राप्तेश्च न तदनुवादसंभवः। तेनेह वाक्ये 'तद्दुहितरश्च भगिन्यः' इत्यत्र तच्छब्दपरामृष्टयोः सपत्नमातुर्भ्रातृभगिन्योर्दुहितॄणामेवोपादानेनानुपात्तानामपि सपत्नमातुर्भ्रातृभगिन्यो. पुत्राणां संग्रहः सिध्यतीति तेऽप्युपलक्ष्यन्ते दुहितृपदेन। ततश्च तदुत्तरवाक्येऽपि तदपत्यानीत्यनेन दुहित्रपत्यानीव पुत्रापत्यान्यपि गृह्यन्त इति। एतेनैव तद्दुहितरश्चेति चकारस्य सर्वत्रानुषङ्गं कृत्वा दक्षिणामिवोद्दिश्य गवादयः सापिण्ड्यमुद्दिश्य सपत्नमातुर्भ्रात्रादयः परस्परसमुच्चिता विधीयन्त इति वाक्यभेदोद्धारः परास्तः। चकारानुषङ्गक्लेशदोषप्रसङ्गश्चास्मिन्पक्षे स्यात्। अतोऽवश्यं प्राप्तत्वात्सपत्नमातृभ्रात्रादीनेवोद्दिश्याप्राप्तसापिण्ड्यातिदेशविधिर्वाच्यः। तत्र च प्रत्युद्देश्यवाक्यपरिसमाप्त्या ग्रहैकत्वाधिकरणोपपादितो वाक्यभेदो दुरुद्धर आपद्येत। तस्मादेष सुमन्तुवाक्यस्यार्थः— भ्रातृभगिनीदुहितृपत्यशब्दैः सपत्नमातामहात् कूटस्थाच्चतुर्थमभिव्याप्य सपत्नमातामहकुलं लक्षयित्वा तेन सह यस्य सापत्नमाता तस्य मातुलमातृष्वसृभगिनीभागिनेयपदैर्लक्षितं सापिण्ड्यं विधीयते इति सिद्धम्। दुहितृपदेन पुत्राणामप्युपलक्षणम्। तत्पुत्राणां च भागिनेयानीत्यनेनेति।

'असपिण्डा च या मातुः' इति मनुवचनमातिदेशिकसापिण्ड्यविषयम्, तस्य 'पञ्चमात्सप्तमादूर्ध्वम्' इति याज्ञवल्क्यवचनेन बाधश्च—

एवं सिद्धे सति यस्य सपत्नमाता तदपत्यस्यापि 'असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता

द्विजातीनां दारकर्मणि मैथुने ॥ ' इति मनुवचनादसापिण्ड्येऽपि निषेधो द्रष्टव्यः । न चास्य ' पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ' [पृ. ११९] इत्यनेन समानार्थत्वम्, लक्षणाप्रसङ्गात् । न च मातृतः पञ्चे पितृतोऽष्टमेऽपि चातिप्रसङ्गात् तत्र च शिष्टाचारविरोधाल्लक्षणा, ' पञ्चमात्सप्तमादूर्ध्वम् ' इत्यनेनैव मनुवचनस्य बाधात् । ननु पञ्चमात् सप्तमादूर्ध्वमित्यपि सामान्यवाक्यं सप्तमनवमादौ च सावकाशम् । मनुवाक्यमपि ' असपिण्डा च या मातुः ' इत्येतदौपदेशिकसापिण्ड्यविषयत्वात् सामान्यवाक्यं आतिदेशिकसापिण्ड्ये च सावकाशमिति कथमनयोर्मध्ये याज्ञवल्क्यस्यैव बलीयस्तोच्यते । उच्यते— यद्यप्यत्र सामान्यविशेषन्यायेन सावकाशनिरवकाशन्यायेन वा बाध्यबाधकभावव्यवस्था न संभवति, तथापि 'विधिस्पृष्टे निषेधो नावतरति ' इति न्यायान्तरतो मनुवाक्यमेव बाध्यते । तथाहि— यद्यप्यसपिण्डेति तत्र उपपदसंबन्धान्मातृसपिण्डाव्यतिरिक्ता दारकर्मणि प्रशस्तेति पर्युदासः प्रतीयते, तथापि यथा ' असपिण्डां यवीयसीम् ' इत्यत्र पर्युदासाश्रयणे सपिण्डापरिणये दोषो न स्यादिति तत्सिद्ध्यै निषेध एवाभ्युपेयते निषेधफलो वा पर्युदासः, एवमिहापि । ततश्चौपदेशिकसापिण्ड्यस्थले षष्ठापत्यादौ ' पञ्चमात्सप्तमादूर्ध्वम् ' इत्यभ्यनुज्ञाविधिप्रवृत्तेर्वैधीं प्राप्तिमुपजीव्य ' मातुरसपिण्डाम् ' इति निषेधप्रवृत्तिर्वाच्या । आतिदेशिकसापिण्ड्यस्थले तु कस्यचित्परिणयाभ्यनुज्ञाविधेरेवाभावाद्रागप्राप्तिमेवोपजीव्य मातुरसपिण्डामिति निषेधः प्रवर्तते । तत्रायं निषेधो विनिगमनाविरहात्पञ्चमात्सप्तमादूर्ध्वमित्यनेन विधिना तुल्यकालं प्रवर्तितुं(?) शक्नोत्येव रागतः प्राप्तिमुपजीव्येति न वैधीं प्राप्तिं यावत्प्रतीक्षते इति मातुरसपिण्डामिति निषेधस्य रागप्राप्तिविषये आतिदेशिकसापिण्ड्य एव प्रवृत्तिः । सोऽयं न्यायो हेमाद्रिणा कालनिर्णये शिवरात्रिप्रकरणे ' यदा पूर्वैव मध्यरात्रव्यापिनी तदा तस्यामुपोषितायामुत्तरदिने रात्रावप्यनुवृत्तायां चतुर्दश्यां तदन्त एव पारणा कार्या' इति साधयितुमुक्तः । ' रात्रिभोजनेऽपि बाधकाभावाच्च निषेधस्य रागतःप्राप्तभोजनविषयत्वाद्रागतःप्राप्ते विधिस्पृष्टे निषेधाप्रवृत्तेर्विधिवैषम्यविकल्पादिप्रतिप्रसङ्गादग्नीषोमीयहिंसादिवत् । उपपादयिष्यते चैतत्तैलाभ्यङ्गकालनियमप्रस्तावे ' इति । तत्रापि— ' अत्रापि काश्चित्सु तिथिषु तैलाभ्यङ्गो विहितः प्रतिषिद्धश्च ' इत्युपक्रम्य ग्रन्थः— ' निषेधस्य रागप्राप्ततैलाभ्यङ्गविषयत्वाद्विहिततैलाभ्यङ्गविषयत्वे विकल्पप्रसङ्गाद्रागप्राप्तविधिप्राप्तोभयविषयत्वे च निषेधस्यैकत्र विधिसापेक्षो निषेधोऽन्यत्र तन्निरपेक्षः ' इति विधिवैषम्यं प्रसज्येत इति । अपि च ' ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो मातृबन्धुभ्यश्च पञ्चमादुद्वहेत् ' इत्यादि गौतमीयादिविवाहविधेः पुत्रोत्पत्तिफलकतया काम्यत्वात् ' काम्यं नित्यस्य बाधकम् ' इति न्यायेनापि ' मातुः सपिण्डा नोद्वाह्या ' इति नित्यनिषेधबाधकत्वं युक्तमिति ।

अपि च सामान्यविशेषन्यायेनाप्यत्र बाध्यबाधकभावः संभवति । तथाहि— ' असपिण्डां यवीयसीम् ' इत्येतत्संनिधिबलात्तथा ' सापिण्ड्यं साप्तपूरुषम् ' इत्येतेन सह समानमूलकत्वाच्च ' पञ्चमात्सप्तमादूर्ध्वम् ' इत्येतदौपदेशिकसापिण्ड्यमात्रविषयं, नातिदेशिकसापिण्ड्यविषयमित्यविवादम् । अतो नैतत्सामान्यवाक्यं, किंतु विशेषवाक्यमेव । ' असपिण्डा च या मातुः ' इति मानवं तु औपदेशिकातिदेशिकयोः सापिण्ड्ययोः प्रवर्तमानं स्पष्टं सामान्यवाक्यमिति याज्ञवल्क्येनैव विशेषशास्त्रेण बाध्यते ।

यत्तु याज्ञवल्कीयं सावकाशं, नवमादावपि प्रवृत्तेरिति, तन्न, ऊर्ध्वशब्दस्याव्यवहित एवौत्सर्गिकप्रवृत्तेः । मानववाक्यप्रवृत्तौ हि सत्यां व्यवधानमाश्रीयेत । तत्प्रवृत्तिश्च न निश्चितेति तस्यां दशायां सामान्यविशेषभावेनैव बाधो भवति । तस्मात्सामान्यविशेषभावेनापि मानवस्यौपदेशिकसापिण्ड्यस्थले बाधः शक्य उपपादयितुं मीमांसामांसलमतिभिरिति नातिप्रसङ्गो मानवस्येति न शिष्टाचारविरोध इत्युपरम्यते ।

मनुवचनस्याऽऽतिदेशिकसापिण्ड्यविषयत्वे मदनपारिजातसंमतिः तद्ग्रन्थस्थापनं च—

[पृ. १२०] न चेदं स्वकपोलकल्पितं क्वापि निबन्धेऽनुक्तत्वादिति शङ्कनीयम्, मदनपारिजाते एव प्रतिपादनात् । तथा च तद्ग्रन्थः— ' पादं, सपत्नमातृपितृ-

कुलसपिण्डा मात्रसगोत्रापि भवति मातृसपिण्डा चेति तत्र विवाहप्राप्ताविदमुच्यते— मातुरसपिण्डेति'। अस्यायमर्थः— मातुरसपिण्डेतिपदकृत्ययोक्तेः प्रकृतत्वान्मातृशब्दस्य च संबन्धिशब्दत्वेन परिणेतृनपेक्षया मनुवाक्यप्रवृत्ते (?श्च) इह ग्रन्थे वरमातुर्या सपत्नमाता तस्या या पितृकुलसपिण्डा सा मातुर्वरमातुरसगोत्रा तस्या एव च सपिण्डा चेति। अयमेवास्यार्थः। यदि तु वरमातुर्या सपत्नमातेति न योज्यते तदा शुद्धावुत्तरौ मातृशब्दौ किंपराविति विचार्यते— किं सपत्नमातृपरावेव, उत सापिण्ड्यप्रतियोगिना या साक्षान्माता तत्पराविति। नाऽऽद्यः। इमौ हि मातृशब्दौ मनुवाक्यस्थस्य मातुरसपिण्डेत्यस्य प्रयोजनार्थमुपात्तौ। तेन षष्ठ्यन्तमातृशब्दसमानार्थौ। न च मनुवाक्ये मातृपदस्य गौणलाक्षणिकमातृपरतायां प्रमाणमस्ति। न चोपचारमन्तरेण काचिदनुपपत्तिः, मुख्यां वरमातरमेवादाय अस्मदुक्तरीत्या मातुरसपिण्डेत्यस्य तदर्थयोजनप्रवृत्तस्य चास्य ग्रन्थस्य प्रयोजनसंभवात्। न च सपत्नमाताऽपि मातृपदस्य शक्या, जनिका या स्त्री तन्मात्रस्य मातृपदशक्यत्वाल्लोके, सुमन्तुवाक्ये च 'पितृपत्न्यः सर्वा मातरः' इत्यतिदेशानर्थक्यापत्तेः। किंचाऽऽद्यपक्षेऽयमपि दोषः— 'असपिण्डा च या मातुः' इति मातृशब्द एक एवोपचारात्सपत्नमातृपरः सन् असपिण्डापदेनान्वियात्, मुख्यमातृपरतयां च चशब्दसमुच्चेयासगोत्रापदेनान्वियादिति युगपद्वृत्तिद्वयविरोधः। न चाद्यपक्षे उत्तरग्रन्थोऽपि लगति 'तथा च' इत्यादिः। न च सपत्नमातुरेव मातृत्वमाहेत्यसौ योज्य इति वाच्यम्। तथा सति 'सपत्नमातृसपिण्डेष्वपि मातुलादिव्यवहारं दर्शयति सुमन्तुः' इति फक्किका न कार्या, किन्तु 'सापत्नमातरि मातृव्यवहारं दर्शयति सुमन्तुः' इति कर्तव्या। अथ 'कथं मातृसपिण्डेत्याह' इति उत्तरग्रन्थोऽवतार्यते, तदपि न, भवता मातृसपिण्डा चेति मातृपदस्य सपत्नमातृपरत्वात्। न च सपत्नमातामहकुलजा कन्या सुमन्तुवाक्येन सपत्नमातुः सपिण्डा, किन्त्ववयवान्वयेनैवेति। अथ चेत् द्वितीयः पक्ष उच्यते— सुमन्तुवाक्योक्तसापिण्ड्यप्रतियोगिना या साक्षान्माता तत्परावुत्तरौ केवलौ मदनपारिजातग्रन्थगतौ मातृशब्दाविति, तदपि न, सुमन्तुवाक्ये यं प्रति सपत्नमाता तं प्रत्येव सपत्नमातामहकुले चतुर्थमभिव्याप्य सापिण्ड्यातिदेशाद्यस्य सपत्नमाता तत्साक्षान्मातुः स्वभर्तृस्वपितृस्वनप्तॄणामिव सपत्नमातामहकुले सापिण्ड्यस्य सुमन्तुवाक्येनानुक्तेः। अथ— यथा पूर्वमेकवाक्यतोपपत्त्यर्थं सपत्नमातृभ्रात्रादिशब्दैः सपत्नमातामहकुलमाचतुर्थं लक्ष्यत इत्युक्तम्, एवं यं प्रति सपत्नमाता तत्र तस्य च या साक्षान्माता तत्रोभयत्र व्यासक्तो यः समुदायस्तं लक्षयित्वा तस्य सपत्नमातामहकुले सापिण्ड्यं बोध्यते सुमन्तुवाक्येन। न च नोपात्ता साक्षान्माता येन पूर्वावध्यसमर्पणात् समुदायलक्षणा न स्यात्, 'पितृपत्न्यः सर्वाः' इति साक्षान्मातुरप्युपादानात्। अतो यं प्रति सपत्नमाता तत्साक्षान्मातुरपि स्वापत्यसपत्नमातामहकुले सापिण्ड्यादुक्तदूषणोद्धारो द्वितीयपक्ष इत्युच्यते— इति। मैवम्, यं प्रति सपत्नमाता तत्साक्षान्मातुर्विवाहाभावेन सापिण्ड्यातिदेशवैयर्थ्यात्, सुमन्तुवचनस्य विवाहमात्रविषयत्वेनाशौचप्रवृत्तिरूपप्रयोजनासंभवात्। यद्यपि यं प्रति सपत्नमाता तस्य पुंसः सपत्नमातामहकुलपुंसश्च परस्परं विवाहाभावेन सापिण्ड्यातिदेशवैयर्थ्यं तुल्यम्, एवं यां प्रति सपत्नमाता तस्याः कन्यायाः सपत्नमातामहकुलकन्यायाश्च, तथापि स्त्र्यपत्यपुत्रापत्ययो— [ पृ. १२१ ] स्तावद्विवाहभावाय वाक्यभेदभयादेवावश्याभ्युपेयाया सपत्नमातामहकुले लक्षणायामनुपङ्गात् पुंद्वयस्यान्योन्यं कन्याद्वयस्य चान्योन्यं निष्प्रयोजनमपि सापिण्ड्यमनिवार्यं सिध्यदपि न दोषाय। यत्तु अपत्यं प्रति सपत्नमाता तन्मात्रस्यैव सापिण्ड्यबोधनं सप्रयोजनं वाक्यभेदानापादकं चेति *तत्साक्षान्मातृव्यासक्तकुलक्षणानि बीजानि निष्प्रयोजनानि चेति वैषम्यमिति। तस्मान्मदनपारिजातग्रन्थीयौ केवलौ मातृशब्दौ यं प्रति सपत्नमाता तदीयसाक्षान्मातृपरावित्ययं द्वितीयपक्षोऽप्ययुक्त इति मदनपारिजातग्रन्थस्यान्यथाव्याख्यानासंभवादवश्यमकामेनाप्यस्मदुक्तैव व्याख्या ज्यायसी मन्तव्येति। एवं चाग्रिमेणापि मदनपारिजातग्रन्थेन संवादो भवति। स चैवं ग्रन्थः—

* ग्रन्थोऽयमशुद्धः। 'तत्साक्षान्मातृव्यासक्तसमुदायलक्षणा निर्बीजा निष्प्रयोजना चेति वैषम्यमिति' इति शुद्धिः कल्प्यते।

" यच्च वसिष्ठेनोक्तम्– 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ' इति, तत्सवर्णसपत्नमातामहकुलविषयम् " इति। तस्माद्यस्य सपत्नमाता तदपत्यस्यापि 'असपिण्डा च या मातुः ' इति मनुवाक्येन स्वजनकसपत्नमातामह-कुले आचतुर्थं विवाहनिषेधः सिद्धः।

एवं च यद्विज्ञानेश्वरमेधातिथिप्रभृतिभिर्लक्षणया 'पञ्चमात्सप्तमादूर्ध्वम् ' इत्येतत्तुल्यार्थता मनुवाक्यस्य 'असपिण्डा च या मातुः ' इत्यस्याङ्गीकृता, तत् लक्षणात् सपिण्डेत्येतावतैव च सिद्धे मातृग्रहणानर्थक्याच्च परमतमेव विभवादुक्तम्। एवं पिण्डे सपिण्डेत्यत्रापि असगोत्रा चेति चशब्देनोपात्तत्वेन मेधातिथिनोक्ते इत्यलं भूयसा (?)।

---

## निर्णयसिन्धुः*

### [ पृ. ९९१–१०२७ ]

मातुरसगोत्रा पितुरसपिण्डेति च दत्तकाभिप्रायम्–

[ पृ. ९९१ ] मनुः– ' असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' दत्रिममातृर्ग्रहीता असपिण्डोऽपि सगोत्रः, तत्कुलनिवृत्तये चकारात् मातुरसगोत्रा। दत्तस्य पितुः जनककुले पितुः असगोत्रापि सपिण्डत्वान्निषिद्धेति अन्यश्चकारः।

अवयवान्वयसापिण्ड्यम्–

असपिण्डां साफिण्ड्यरहिताम्। [ पृ. ९९२ ] तच्च एकशरीरावयवान्वयेन भवति। एकस्य हि पितुर्मातुर्वा शरीरस्य अवयवाः पुत्रपौत्रादिषु साक्षात् परम्परया वा शुक्रशोणितादिरूपेण अनुस्यूताः। यद्यपि पत्न्याः पत्या सह भ्रातृपत्नीनां च परस्परं नैतत्संभवति, तथापि आधारत्वेन एकशरीरावयवान्वयोऽस्त्येव, 'अस्थिभि-रस्थीनि ' इति मन्त्रलिङ्गात्। एकस्य हि पितृशरीरस्य अवयवाः पुत्रद्वारा तासु आहिता इति मदनरत्नपारिजातविज्ञानेश्वरादयः। वाचस्पतिशुद्धिविवेक–[ पृ. ९९३ ] शूलपाण्यादिगौडमैथिलादयोऽप्येवम्। श्रुतावपि– 'एतस्माट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थि-स्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः ' इति, ' प्रजामनु प्रजायसे ' इति च।

निर्वाप्यसापिण्ड्यम्–

चन्द्रिकापरार्कमेधातिथिमाधवादयस्तु एकपिण्डदान-क्रियान्वयित्वं सापिण्ड्यम्, ' लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥ ' इति मात्स्योक्तेः। न च पितृव्यादिषु एतन्नास्तीति वाच्यं, तत्कर्तृकश्राद्धे दैवतैक्येन तत्सत्त्वात्। देवदत्तकर्तृकश्राद्धे हि ये देवताभूतास्तेषां मध्ये यः कश्चिदन्यकर्तृकश्राद्धेऽनुप्रविशति तेषां सापिण्ड्यम्। तद्भार्याणामपि, भर्तृकर्तृकश्राद्धे सहाधिकारित्वेन तदन्वयात्, ' एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ' इति स्मृतेश्च। श्रुतीनां च वैराग्यार्थत्वात् तस्य सापिण्ड्यनिमित्तत्वे मानाभावात्। न च मातुलादिषु एतन्नास्तीति वाच्यं, मातामहरूपदैवतैक्यात्।

निर्वाप्यसापिण्ड्यपक्षे ' मातुः', पितुः ' इति नियमार्थम्–

ननु गुरुशिष्यादेरपि श्राद्धदेवतात्वात् सपिण्डत्वं स्यात्। किं बहुना ? ' सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः ' इति मार्कण्डेयपुराणाद्राज्ञोऽपि श्राद्धकर्तृत्वा-

---

* आदर्शपुस्तकं ' चौखम्भासंस्कृतग्रन्थमाला, काशी ' इत्यत्र मुद्रितम्।

कृष्णम्भट्टी– आधारत्वेनेति। आरम्यारम्भकभावेन हि एकशरीरावयवान्वयो विवक्षितः। तथा च भ्रात्रोः आरम्भकैकपितृशरीरावयवान्वयः। भर्तृभार्ययोरपि आरभ्यैकपुत्रशरीरावयवद्वारा तत्पितामहशरीरावयवान्वयः। क्वचिच्च एकावयवाधारत्वेनापि, यथा मात्रोर्भर्तृद्वारा श्वशुरावयवाधारत्वमित्यादि अन्यत्राप्यूह्यम्। ननु एवं अगम्यागमनेऽपि गन्तृगम्ययोरेकशरीरारम्भकत्वात् सापिण्ड्यापत्तिः। न च अनिषिद्धत्वं विशेषणं, रजस्वलाना भार्याणामपि निषेधादिति चेत्, न, निषिद्धव्यभिचारकान्यत्वेन विशेषणात्। व्यभिचारश्च भार्यान्यस्त्रीगमनम्। तथा च यः शरीरावयवान्वयो विवक्षितः स निषिद्धभार्याभिन्नस्त्रीगमनक इति न दोषः। निषिद्धत्वं च वेदमेयाभावप्रतियोगिकृतिसाध्यत्वं, तादृशनिवर्तनागोचरत्वं वा इत्यन्यदेतत्।

क्रम. ९९२–९९४

न्सापिण्ड्यप्रसङ्गः । सत्यम्, [ पृ. ९९४ ] 'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।' इति याज्ञवल्क्यवचनेन मातापितृसंबन्धे एव तत्सत्त्वात् । ऊर्ध्वं 'सापिण्ड्यं निवर्तते' इति शेषः । ननु पञ्चमत्वाद्यत्र नियम्यते, न मातृतः इत्यादि, वाक्यभेदात् । मैवम्, मातृकुले पञ्चमत्वस्य पितृकुले सप्तमत्वस्य च बोधने तुल्यत्वात् । पौरुषेयत्वाददोष इति चेत्, तुल्यमन्यत्रापि । अन्यकर्तृके राज्ञस्तत्पितृणा वा देवतात्वाभावाच्च । किंच अवयवान्वयपक्षे यथा योग- [ पृ. ९९५ ] रूढ्या परिहारस्तथा इहापि । तेन मातृकुले पितृकुले च एकपिण्डदानक्रियान्वयित्वं सापिण्ड्यमित्याहुः । तेन एकस्य पित्रादयः षट् पुत्रादयश्च षट् सपिण्डा भवन्ति ।

प्रतियोगिभेदेन भिन्नस्य सापिण्ड्यस्योभयतो निवृत्तिरेव विवाहप्रयोजिका—

अत्र केचित् उभयतः सापिण्ड्यनिवृत्तावेव उद्वाहः, नान्यथा इत्याहुः । शुद्धिचिन्तामणिवाचस्पतिहरदत्तादयस्तु सगोत्रत्ववत् सापिण्ड्यस्य सप्रतियोगिकत्वेन सयोगवदुभयनिरूप्यत्वात् एकतो निवृत्तौ अन्यतो निवृत्तेरावश्यकत्वात् मूलपुरुषमारभ्य अष्टमो वरः मूलपुरुषमारभ्य द्वितीयतृतीयादिकां कन्यामुद्वहेदित्याहुः । शिष्टास्तु न वधूवरयोः स्वतः सापिण्ड्यं, किंतु कूटस्थसंततित्वात् तत्सापिण्ड्येनैव । अतः अष्टमवरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात् तत्संततिस्थत्वात् वरः तां प्रति सपिण्ड एवेत्यविवाहः, सापिण्ड्यासापिण्ड्ययोः प्रतियोगिभेदेनाविरोधादित्याहुः । इदमेव च युक्तम् । आशौचेऽप्येवं सापिण्ड्यं ज्ञेयम् ।

---

स्वत इति । वधूप्रतियोगिकं वरे, वध्वा च वरप्रतियोगिकमित्यर्थः, तथा सति दीर्घत्वादिवत् तत्प्रत्यक्षापत्तेः । तत्सापिण्ड्येनैवेति तृतीयार्थो भेदः । तथा च स्वसपिण्डकूटस्थसंततित्वं सापिण्ड्यमिति भावः । इदमेव चेति । पञ्चमादूर्ध्वं वधूवरान्यतरमातृतः तत्सपिण्डकूटस्थसंततित्वात्मकं विवाहप्रतिबन्धकं सापिण्ड्यं वधूवरयोर्निवर्तते इत्यर्थः । एवं पितृतः सप्तमादित्यत्रापि । यत्र च वरोऽष्टमादिः कन्या तु द्वितीयादिका, तत्र कूटस्थस्य वधूपित्रादिसप्तमादूर्ध्वत्वाभावेन विवाहप्रतिबन्धकसापिण्ड्यसद्भाव इति भावः । अन्ये त्वाहुः— यत्र वृक्षे प्रथमतः मूलाग्रयोः कपिसंयोगः, ततो मूले तदभावः, तत्र तदानीं मूलस्य नावच्छेदकत्वं, कालानवच्छिन्नदेशादेरवच्छेदकत्वानुपगमात् । यथा अवान्तरकालावच्छिन्न एव स्थूलकालोऽवच्छेदकः, तथा तत्कालावच्छिन्नदेश एव तथेति । इदानीं मूले वृक्षः कपिसंयोगीति प्रत्ययो न प्रमा, किन्तु मूले वृक्षः कपिसंयोगीत्यादिरेव तथा, तद्वद्यं वंशो वरावच्छेदेन सापिण्ड्यवानिति प्रत्ययो न प्रमा, किंतु कन्यावच्छेदेन सापिण्ड्यवानिति प्रत्यय एव तथा । तादृशप्रमाविषयकन्यायाश्च शुद्धवरेणापि न विवाहः, 'पञ्चमे सप्तमे चैव येषा वैवाहिकी क्रिया। क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥' इति प्रयोगपारिजाते मरीचिना दोषोक्तेः । पञ्चमे सप्तमे इत्येतत् कैमुतिकन्यायेन द्वितीयतृतीयादिकन्यासंग्राहकम् । क्रियापराः स्वतः शुद्धाः, असपिण्डा इति यावत्—इत्याहुः । वस्तुतस्तु यथा असपिण्डामिति कन्याविशेषणं तथा असपिण्डः इति वरविशेषणम्, 'एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः । यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥' इति वचनेन अनन्यपूर्वकत्व—यवीयस्त्व—भ्रातृमत्व— रूपगुणत्रयभिन्नसर्वगुणान्तर्गतासपिण्डत्वलाभात् । तच्च सापिण्ड्यं कन्याया वरनिरूपितं वरे च कन्यानिरूपितं पृथगेव, न तु उभयनिरूपितं वरे, तदतिदेशवैयर्थ्यात् । एवं च उक्तस्थले वरवध्वोरुभयत्र सापिण्ड्यशून्यत्वाभावान्न विवाहः । न च सपिण्डशब्दस्य ससम्बन्धिकत्वादेव तल्लाभे अन्यत्र तदतिदेशे मानाभाव इति वाच्यं, बाधाभावस्यैव तदतिदेशे मानत्वादिति । अधिकमन्यतोऽवगन्तव्यम् । एवं सापिण्ड्यमिति । एकतः सप्तमपर्यन्तानामन्यतोऽष्टमादिजननादौ दशाहं, अष्टमादीनां च सप्तमपर्यन्तजननादौ त्रिरात्रमाशौचमित्यर्थः । एकतो निवृत्तौ निवृत्तिमत्त्वे च उभयत्रापि त्रिरात्रमेव ।

कृभ. ९९५–९९७

मण्डूकप्लुत्या साापिण्ड्यसद्भावः–

[ पृ. ९९७ ] यत्र तु मध्ये विच्छिन्नमपि सापिण्ड्यं मण्डूकप्लुतिवत् पुनरनुवर्तते । यथा कूटस्थात् पञ्चम्योः कन्ययोः पुत्रौ, तत्र निवृत्तिः, तदपत्ययोस्तु अनुवृत्तिः, तत्रापि न सापिण्ड्यासापिण्ड्ययोर्दोषः, संबन्धिभेदात् । तेन तत्र न विवाहः ।

कूटस्थमारभ्य पुरुषगणना–

[ पृ. ९९८ ] अत्र कूटस्थमारभ्य गणना कार्या । तदुक्तम्– ' वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥ ' इति । कूटस्थो मूलपुरुषः । [ पृ. ९९९ ] विश्वरूपनिबन्धे– ' एवमुक्तप्रकारेण पितृबन्धुषु सप्तमात् । ऊर्ध्वमेव विवाह्यत्वं पञ्चमान्मातृबन्धुतः ॥ संतानो भिद्यते यस्मात् पूर्वजाद्भयत्र च । तमादाय गणेद्धीमान्वरं यावच्च कन्यकाम् ॥ '

मातापितृबन्धूनारभ्य पुरुषगणना

[ पृ. १००० ] स्मृतितत्त्वे नारदः– ' आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥ ' अत्र बन्धुभ्य इति पञ्चमीनिर्देशात् पितुः पितृष्वसृपुत्रात् सप्तमीं, मातुः पितृष्वसृपुत्राच्च पञ्चमीमपि त्यजेत् । एवमन्यबन्धुषु ज्ञेयम् ।

त्रिगोत्रात्यये अर्वागपि विवाहः–

तत्रापि त्रिगोत्रात्यये अर्वागपि विवाहं कुर्यात्, वक्ष्यमाणवचनात् । त्रिगोत्रगणना च ( वधू )मातामहगोत्रापेक्षया, न तु स्वापेक्षया । अन्यथा पितुः पितामहदुहितुर्दौहित्रीपुत्री परिणेया स्यात् । [ पृ. १००१ ] वध्वा मातामहगोत्रापेक्षया तु त्रिगोत्रान्तर्गतेन ( गतत्वेन न ) विवाहप्रसङ्ग इति संबन्धतत्त्वादयो गौडग्रन्थाः । संबन्धविवेके शूलपाणिरप्याह– " पञ्चमात् सप्तमाच्चार्वागपि त्रिगोत्रान्तरिता विवाह्या, ' असबद्धा भवेन्मातुः पिण्डेनैवोदकेन वा । सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥ ' इति बृहन्मनूक्तेः, ' संनिकर्षेऽपि कर्तव्यं त्रिगोत्रात्परतो यदि । ' इति देवलोक्तेश्च " इति । एतच्च दाक्षिणात्या न मन्यन्ते ।

मातृतः पञ्चपुरुषं पितृतः सप्तपुरुषं च सापिण्ड्यम्–

[ पृ. १००२ ] यत्तु वसिष्ठः– ' पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । ' इति, यच्च विष्णुपुराणम्– पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् । गृहस्थ

---

पुत्राविति । पुत्रश्च पुत्री च इति विग्रहः । ननु कूटस्थात्पञ्चमीसंतानभूते निवृत्तस्यापि तन्मातृकुलसापिण्ड्यस्य सप्तमेऽनुवृत्त्या प्रवृत्तिः, पितुः सप्तमत्वे एव सापिण्ड्यनिवृत्तेरिति न युक्तं, ' यद् गतं तद्गतमेव ' इति न्यायात् । किंच तर्हि याज्ञवल्क्येन पञ्चम्या मातुरित्येवोक्तं भवेदित्यत्राऽऽह– संबन्धीति । पञ्चमादूर्ध्वमित्याद्यन्वयार्थमेव हि पञ्चमादित्यभिहितम् । तथा च मातृतः सापिण्ड्यं पञ्चमादूर्ध्वं निवर्तते, पितृतः सापिण्ड्यं सप्तमादूर्ध्वं निवर्तते इत्यर्थः । तत्र मातृद्वारकं सापिण्ड्यं षष्ठे निवृत्तं, पितृद्वारकं सापिण्ड्यं च सप्तमे अस्ति, संबन्धिनोर्मातापित्रोर्भेदात् सापिण्ड्यभेदात् । तत्र मण्डूकप्लुतिवदिति दृष्टान्तः प्लुतिघटकौ पूर्वोत्तरसंयोगौ द्वौ, अत्र सापिण्ड्ये द्वे, एतावन्मात्रे बोध्यः । दृष्टान्ते संबन्धी मण्डूक एकः, दार्ष्टान्तिके तु संबन्धिनौ मातापितरौ भिन्नौ इति विशेषः, ' न हि दृष्टान्ते सर्वसाम्यम् ' इति न्यायात् ।

केचित्तु सोदकत्ववत् सापिण्ड्यमखण्डमेव । तच्च दीर्घत्वादिवत् सप्रतियोगिकम् । तच्च एकगोत्रे सप्तमपर्यन्तं, भिन्नगोत्रे पञ्चमपर्यन्तमिति वदन्ति । तदसत्, भिन्नगोत्रे सप्तमपर्यन्तं सापिण्ड्यासत्त्वप्रसङ्गात् । इष्टापत्तिस्तु धार्मिकाणामनुचितेति । कृभ. ९९७–९९८

पितामहदुहितुर्दौहित्रीपुत्रीति । पितामहकन्या, तत्कन्या, तत्कन्या, तत्कन्येत्यर्थः, स्वगोत्रापेक्षया गणनाया पितामहस्य स्वगोत्रत्वात् । तद्दुहितुः द्वितीयं गोत्रं, तद्दौहित्र्या तत् चतुर्थमिति तत्पुत्र्याः त्रिगोत्रानन्तर्गतत्वापत्तिः । विवक्षयोक्तापत्तिं वारयति– वध्वा इति । मातामहगोत्रापेक्षया त्रिगोत्रात्यये इत्यस्य गोत्रवृत्तित्रित्वानाश्रयमातामहगोत्रका वधूः विवाह्या इत्यर्थः । प्रकृते च पितामहदौहित्र्या गोत्रं तृतीयं, तदेव च वधूमातामहगोत्रमिति न तद्विवाहप्रसङ्गः । कृभ. १०००–१००१

उद्वहेत्कन्यां न्याय्येन विधिना नृप ॥ ' इति, तत्पञ्चमीं सप्तमीमतीत्य इति व्याख्येयम्, 'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥ ' इति अपरार्के मरीचिवचनात् । हारलतायां शङ्खलिखितौ– 'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानं च आशौचं च तदानुगम् ॥ ' गोत्रं संतानम् । आशौचं तानभिव्याप्य गच्छति इत्यर्थः । [ पृ. १००३ ] शुद्धिविवेके शुद्धिचिन्तामणौ च ब्राह्मे– ' सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी । सपिण्डता ततः पश्चात्समानोदकधर्मता ॥ ततः कालवशात्तत्र विस्मृतौ नामगोत्रतः । समानोदकसंज्ञा तु तावन्मात्रापि नश्यति ॥ ' सप्तोर्ध्वं त्रयः सोदकाः, ततो गोत्रजाः । तत्रैव ब्राह्मे– ' अविभक्तधनास्त्वेते सपिण्डाः परिकीर्तिताः । ' तेन अविभक्तधनाभावे विभक्तः सपिण्डो धनहारी, नान्यथा इत्यर्थः । तेन विवाहे आशौचे धनग्रहणे च त्रिधा सापिण्ड्यं सिद्धम् ।

षट्पुरुषादिसापिण्ड्यपक्षा दत्तकसापत्नविजातीयादिषु व्यवस्थिताः, न त्वनुकल्पाः–

यत्तु– ' पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतस्त्रीन् मातृतः पञ्च पितृतो वा ' इति पैठीनसिस्मृतौ ' त्रीनित्यनुकल्पः ' इति माधवोक्तेः, [ पृ. १००४ ] ' पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ॥ उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् । पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः ॥ सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च । एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रदृश्यते ॥ ' इति चतुर्विंशतिमतात्, ' चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा । पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम् ॥ ' इति पराशरोक्तेश्च अनुकल्पत्वेन आपदि पञ्चम्यादिपरिणयनं कार्यमिति प्रतीयते, अत्र हि 'तदभावे' इति स्पष्टमेव अनुकल्पत्वमुक्तं, तत्र यथाश्रुतं ज्ञेयं, पूर्वोक्त- [ पृ. १००५ ] मरीचिवचोविरोधात्, वस्तुनि विकल्पासंभवात्, ' पञ्चमात्सप्तमाद्धीमान् यः कन्यामुद्वहेत् द्विजः । गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥ ' इति विष्णूक्तेः, पराशरस्य मूलाभावाच्च । तस्मात् मदनपारिजाताद्युक्तदिशा दत्तकसापत्नसंबन्धाद्यनुप्रवेशे ब्राह्मणादीनां क्षत्रियादिसपिण्डविषये वा पूर्वोक्तानि नेयानि, न तु अनुकल्प इति भ्रमितव्यम् ।

---

**सपिण्डतेति** । **सर्वेषां** ब्राह्मणादीनाम् । **गोत्रतः** कूटस्थसमानगोत्रगर्भम् । **पिण्डश्चेत्यादि** और्ध्वदेहिकोपलक्षणम् । **तदानुगं** तादृशसपिण्डतानुसारि । तथा च कूटस्थसमानगोत्रसप्तपुरुषनिष्ठसापिण्ड्यं और्ध्वदेहिकादौ अनुकूलमित्यर्थः । सापिण्ड्यं और्ध्वदेहिकादौ अनुकूलं विवाहप्रतिबन्धकं च । तत्र एतस्यैव विवाहप्रतिबन्धकत्वे यत्र कूटस्थात् षष्ठी पञ्चममातृककन्या, षष्ठः पञ्चमपितृकवरः, तौ च भिन्नगोत्रान्तर्गतौ, तत्र तयोर्विवाहप्रसङ्ग इत्यर्थः । यदि च गोत्रतः संतानात्, एवं च कूटस्थसंताने साप्तपौरुषी सपिण्डता इत्यर्थं आद्रियते, तदा कूटस्थकन्यातत्कन्यादिक्रमेण षष्ठी कन्यैव, सप्तमश्च पुरुषः, तत्राप्येतत्सत्त्वेन कूटस्थकन्यान्तरमादाय पञ्चम्या कन्यायाश्च तत्सत्त्वेन न तयोर्विवाहः । शङ्खादिवचनवशात्तु समानगोत्रसप्तपुरुषवृत्तित्वेन आशौचाद्यानुकूल्यमिति बोध्यम् । कृम. १००२–१००३

**नेयानीति** । एतेन मदनपारिजाताद्युक्तदिक् क्षोदक्षमा अस्तु वा, मा वा, तदनुसरणे भवता न दोष इति सूचितम् । **न त्विति** । अयमभिप्रायः— दशभिरित्यादिना वस्तुतो महापापातिपापोपपापादिरहितत्वश्रोत्रियत्वदानादिकर्मत्रयकर्तृत्वसपरिहारयागाद्यकर्तृत्वादियुक्तमहाकुलीनानां सप्तमीमुद्वहेदित्यभिधानेन तादृग्गुणाधिक्ये एव न दोषः, अन्यथा तु दोष इति रीत्या सप्तमोद्वाहनिन्दनात् शाकटायन इत्यभिधानेन च ' स्वरूपव्याक्रियैव पराक्रिया ' इति न्यायात् ' जर्तिल्यवाग्वा वा जुहुयात् ' इत्यादेः पयोहोमस्तुत्यर्थत्ववत् कैमुतिकन्यायेन अष्टमोद्वाहविधिस्तुत्यर्थत्वमेव पञ्चम्याद्युद्वाहविधीनामुपेयं, न तु अनुकल्पतयाऽपि तत्कर्तव्यतार्थकत्वं, ' सगोत्रां चैवमुद्वहन् ' इति दृष्टान्तेन बलवदनिष्टसाधनत्वावेदनादिति । कृम. १००५–१००६

मातुलकन्या परिणेयेति पूर्वपक्षः—

यत्तु [ पृ. १००६ ] स्मृतिचन्द्रिकामाधवादय आहुः— ' तृतीये संगच्छावहै, चतुर्थे संगच्छावहै ' इति शतपथश्रुतेः, ' तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ' इति, [ पृ. १००७ ] ' गर्भे नु नौ जनिता दम्पती कः ' इति च मन्त्रवर्णात्, ' मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा । विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम् ॥ ' इति शातातपोक्तेश्च मातुलकन्योद्वाहः कार्यः । यद्यपि पितृष्वसृकन्योद्वाहोऽपि प्राप्तः, तथाऽपि ' अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ' इति निषेधात् वचनान्तरेण तदुद्वाहस्याविधानाच्च न कार्यः । अयं तु दाक्षिणात्यशिष्टाचारात् कार्यः इति । न च पूर्वोक्तश्रुतीनामर्थवादमात्रता, मानान्तरेणासिद्धौ ' उपरि हि देवेभ्यो धारयति ' इतिवत् अनुवादानुपपत्त्या विधिकल्पनात् । यत्तु शातातपः— [ पृ. १००८ ] ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ', यच्च मनुः— ' पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुरास्तस्य गत्वा चान्द्रायणं चरेत् ॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ॥ ', यच्च व्यासः— ' मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ' इति, तत् गान्धर्वादिविवाहोढमातृविषयम्, तत्र पितृगोत्रानिवृत्तेः । अत एव मार्कण्डेयपुराणम्— ' गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित् ' इति । [ पृ. १००९ ] ब्राह्मादिविवाहे तु परिणेयैव — इति । भट्टसोमेश्वरोऽपि तृतीयेऽध्याये वाक्यपादे मातुलकन्योद्वाहमुदाहृत्य स्मृतिविरोधेन आचारप्राप्तस्यास्य वार्तिके बाधोक्तावपि पूर्वोक्तश्रौतलिङ्गबलीयस्त्वादस्य कर्तव्यतामाह ।

---

पितृगोत्रेति । पितृसापिण्ड्येत्यर्थः । यथाश्रुते ब्राह्मादिविवाहे पितृसापिण्ड्यनिवृत्त्यनभिधानेन हेतुन्यूनताप्रसङ्गात् ।

कुम. १००८–१००९

मातुलादिकन्यापरिणयप्रापकवचनानामसवर्णादिविषयत्वेन कलौ निषेधाच्च नैव परिणेयेति सिद्धान्तः—

तदेतद्वचकस्य पालकदत्त्रिममातृसोदरकन्याविषयत्वेन असवर्णमातुलकन्याविषयत्वेन युगान्तरपरत्वेन च उपपन्नमपि अविचारितरमणीयं यथा, तथास्तु, तथापि कलौ तावन्निषिद्धमेव, [ पृ. १०११ ] ' गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा । ' इत्यादिपुराणात् । माधवीये बौधायनोऽपि अस्य निन्दामाह — ' पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरत ऊर्णाविक्रयोऽनुपेतेन स्त्रिया च सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति । अथोत्तरतः सीधुपाना ' दिक्मुक्त्वा ' इतर इतरस्मिन्कुर्वन् दुष्यति इतर इतरस्मिन् ' इति । भट्टसोमेश्वरेणापि स्मृतिविरुद्धानां मातुलकन्योद्वाहादीनां

---

अविचारितरमणीयमिति । यत्तु दानेन सापिण्ड्यं निवर्तते इत्युक्तम्, तन्न, ' दद्यान्माता पिता वा ' इति हि पुंस्त्वविशिष्टमनूद्यैव संज्ञा ( विहितेति ) कन्याया दत्त्रिमसंज्ञाविरहात् दत्त्रिममनूद्य च सापिण्ड्यनिवृत्तिर्विधीयमाना न कन्याया भवति । न त्वेवं दत्त्रिमस्य सापिण्ड्यनिवृत्तौ जनककन्यादिपरिणयनं स्यात्, ' ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो मातृबन्धुभ्यश्च पञ्चमाद्बीजिनश्च सप्तमात् ' इति वचनेन जनककुलेऽपि आसप्तमं विवाहनिषेधात् । ' स्वगोत्रात् भ्रश्यते नारी विवाहात्सप्तमे पदे ' इति वचनात्तु गोत्रनिवृत्तिरिति । न च आसुरादिविवाहेऽपि सप्तपद्यादेः सत्त्वाद्गोत्रनिवृत्तिप्रसङ्ग इति वाच्यम्, पूर्वोत्तराङ्गसहितदानमेव तन्निवर्तकम् । आसुरादिषु दानाभावात् न तन्निवृत्तिरिति ।

कुम. १०१०–१०११

माधवाचार्याणामपि मातुलकन्यापरिणये निर्भरो नास्तीत्याह—माधवीये इति ।

न च तदनन्तरम् ' इतरस्मिन् कुर्वन् दुष्यति ' इति बौधायनवाक्यात् दक्षिणे मातुलकन्यापरिणये कथं दोष इति वाच्यम्, विप्रतिपत्तिपदेन अनाचारत्वोक्तेः, दुष्यतीत्यनेन अपाङ्क्तत्वविशिष्टपातकोक्तेः ।

अस्माद्वचनादप्रामाण्यं– [ पृ. १०१२ ] इत्युक्तम् । बृहस्पतिरपि– 'उद्वहते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः । मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ।। उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः ।।' इत्यनाचारत्वमाह । अत एव हेमाद्रौ मात्स्ये कर्नाटकादीनां तत्कारिणा श्राद्धे निषेधः । योपदेवेनापि लिखितं ग्राह्यम्– 'यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः । श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषम् ।।' इति । तस्मान्मातृतः पञ्च पितृतः सप्त त्यक्त्वा उद्वहेदिति [पृ.१०१३] सिद्धम् ।

सुमन्तूक्ता दशपुरुषादिसापिण्ड्यपक्षा विवाहविषया इत्येकं मतम्, आशौचविषया इति सिद्धान्तः ; तत्रापि त्रिपुरुषपक्ष अनूढकन्याविषय इति, वाग्दत्ताविषय इति च मतद्वयम्, मातृकुलविषयः कानीनकन्यकाविषयश्चेति सिद्धान्तः–

सम्बन्धविवेके सुमन्तुः– 'ब्राह्मणानामेकपिण्डस्वधानामा दशमाद्धर्मविच्छित्तिर्भवति, आ सप्तमादिक्थविच्छित्तिर्भवति, आ तृतीयात् पिण्डविच्छित्तिः । अन्यथा पिण्डशौचक्रियाविच्छेदाद्ब्रह्महतुल्यो भवति' । अस्यार्थमाह शूलपाणिः– 'जीवत्पित्रादिनिकस्य वृद्धप्रपितामहादयस्त्रयः श्राद्धदेवतात्वात् पिण्डभाजो भवन्ति, तदूर्ध्वं त्रयो नवपुरुषपर्यन्ता लेपभाजः, श्राद्धकर्ता च दशम इति दशमादूर्ध्वं सापिण्ड्यनिवृत्तिः । दशमात् इत्युपलक्षणम् । तेन पितृपितामहजीवने नवपुरुषपर्यन्तं, पितृजीवने च अष्टपुरुषपर्यन्तं सापिण्ड्यमिति ज्ञेयम् । अपुत्रधनग्रहणे सन्निहिताभावे सप्तपुरुषपर्यन्तमधिकारः । धनग्राहिणमारभ्य तृतीयः पौत्रः, तदूर्ध्वं श्राद्धविच्छेदः, अन्यथा धनहारित्वे अपुत्रश्राद्धाद्यकरणे ब्रह्महा [पृ. १०१४] इत्यर्थः । ''आ तृतीयादिति अनूढकन्याविषयम्, 'अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते' इति वसिष्ठोक्तेः । एतच्च आशौचविषयं सापिण्ड्यं, न तु विवाहादौ, तत्र पूर्वोक्तवचनैः पञ्चमत्वसप्तमत्वनियमात्'' इति मेधातिथिप्रमुखा दाक्षिणात्याः । वाग्दानोत्तरमेतदिति शुद्धिविवेकः । ''मातृकुलविषयं कानीनकन्यकाविषयं चैतत्, अन्यथा 'अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् । प्रत्ताना भर्तृसापिण्ड्यं प्राह देवः प्रजापतिः ।।' इति कौर्मेण विरोधः स्यात्'' इति रत्नाकरस्मृतितत्त्वादिगौडग्रन्थाः । युक्तं चैतत्, अन्यथा कन्योत्पत्तौ पुरुषत्रयपर्यन्तमेव सूतकं स्यात्, न ऊर्ध्वम् ।

सापत्नमातृकुले त्रिपुरुषं मातामहपर्यन्तं सापिण्ड्यम्, सापत्नमातामहसंततौ च चतुःपुरुषं वाचनिकं सापिण्ड्यम्–

सापत्नमातामहकुले तु आह मिताक्षरायां शङ्खः– 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः

---

न च सकललोकादर्शभूतस्य भगवतोऽर्जुनप्रद्युम्नादेर्मातुलकन्योद्वाहरूपदुराचारप्रवर्तकत्वं कथमिति वाच्यं, युगान्तरीयत्वेन अदोषात् । वस्तुतस्तु भगवतो नारायणत्वात् अर्जुनस्य नरत्वेन नारायणांशत्वात् रुक्मिण्यंशभूतसुभद्राविवाहो न मानुषः । शास्त्रस्य मनुष्याधिकारत्वाच्च तत्र न प्रवृत्तिः । किंच देवादिभिः कृतं मनुष्यैर्न कार्यम्, 'अनुष्ठितं च यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तत् तदुक्तं धर्ममाचरेत् ।।' इति बौधायनोक्तेः ।

क्रम. १०११–१०१२

सिद्धमिति । ननु असपिण्डापर्युदासेन सपिण्डोद्वाहनिवृत्तिर्न लभ्यते इति चेत्, न, सपिण्डोद्वाहे प्रायश्चित्ताम्नायेन सपिण्डोद्वाहनिषेधे पर्युदासपर्यवसानात्, प्रायश्चित्तस्य वा पर्युदासातिक्रमनिमित्तकत्वात् ।

क्रम. १०१३

'दशभिः पुरुषैः ख्याताद् श्रोत्रियाणां महाकुलात् । उद्वहेत्सप्तमादूर्ध्वम्' इत्यत्र तादृशमहाकुलादूर्ध्वं तदभावे सप्तमादूर्ध्वमुद्वहेदिति मतमाह–– संबन्धेति । धर्मविच्छित्तिपदार्थमाह–– सापिण्ड्यनिवृत्तिरिति । 'इत्यर्थः' इत्यन्तः शूलपाणिग्रन्थः । अत्र दशपर्यन्तं सापिण्ड्यसत्त्वं दूषयितुमाह– आ तृतीयादिति ।

एतन्मते धर्मविच्छित्तिरित्यस्य लेपकरणान्तो धर्मः, तस्य विच्छित्तिरित्यर्थः । आ सप्तमादिति च छलत उपेताशौचविषयम् । 'वाग्दानोत्तरम्' इति मतद्वयं च आशौचसापिण्ड्यप्रपञ्चः । क्रम. १०१३–१०१४

सापत्नेति । असवर्णायाः सवर्णाया वा सापत्नमातुर्जनकतया सापत्नमातामहो द्वेधा । तत्र आद्यामादाय पृथक्क्षेत्रा इति, अन्त्यामालम्ब्य पृथग्जना इति । ते एकपिण्डाः सपिण्डाः । पृथक्शौचाः ।

पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥' 'पृथक्क्षेत्राः भिन्नजातीयस्त्रीषु जाताः। पृथग्जनाः [पृ. १०१५] सजातीयभिन्नमातृषु जाताः। अत्र त्रिपुरुषं साापिण्ड्यम्' इति विज्ञानेश्वरो व्याचख्यौ। पृथ्वीचन्द्रोदये सापिण्ड्यदीपिकायां चैवम्। मदनपारिजाते तु– "पृथक्क्षेत्रजाः भिन्नमातृजाः, पृथग्जनाः भिन्नजातीयाः। एतद्विजातीयसापत्नमातृकुलविषयम्। सवर्णसापत्नमातृकुले चतुःपुरुषं सापिण्ड्यम्, 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति वसिष्ठोक्तेः। सप्तमीमिति ब्राह्मणादीनां क्षत्रियादिदारोत्पन्नपितृकुलविषयं च" इत्युक्तम्, तत्स्वकपोलकल्पितत्वात् ग्रन्थान्तरविरोधाच्च निर्मूलम्, 'पितृपत्न्यः सर्वा मातरः' इत्युक्त्वा सुमन्तुना 'तदपत्यानि [पृ. १०१६] भागिनेयानि' इति पृथङ्निषेधाच्च। अन्यथा सपिण्डत्वेन निषेधात् सापत्नमातुलत्वादिनिर्देशो व्यर्थः। अत एव तेन स्मृतिकौमुद्यां सवर्णसापत्नमातामहकुलपरत्वेन तथैव शङ्खवचनं व्याख्यातम्। तेन वासिष्ठम् 'पञ्चमीं सप्तमीमतीत्य' इति व्याख्येयम्। तस्मात् प्राच्यैव व्याख्या युक्ता। प्रयोगरत्ने भट्टैः स्मृतितत्त्वादिगौडग्रन्थेषु च सपत्नमातामहकुले यावदुक्तं वाचनिकमेव सापिण्ड्यमुक्तम्। यथाह सुमन्तुः– 'मातृपितृसंबन्धा आ सप्तमादविवाह्या भवन्ति, आ पञ्चमादन्येषां, पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि, अन्यथा संकरकारिणः स्युस्तथा अध्यापयितुरेतदेव' इति। [पृ. १०१९] आ पञ्चमादिति मातृकुले त्रिगोत्रान्तरितविषयं वेति प्राच्याः। मात्स्ये– 'समानप्रवरा चैव शिष्यसंततिरेव च। ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते ॥' 'तद्भगिन्यो मातृष्वसारः' इति तु आकरे न पठितम्।

विरुद्धसंबन्धे वाचनिको विवाहनिषेधः–

कश्चिद्वचनादविवाहः। यथा गृह्यपरिशिष्टे– 'अविरुद्धसंबन्धामुपयच्छेत' इत्युक्त्वा विरुद्धसंबन्धः स्वय-

---

शौचं तु आशौचप्रकरणे वक्ष्यति। पृथक्शौचत्वं भिन्नजातीयत्वात्। पिण्डः एकशरीरावयवान्वयः। सापिण्ड्यं त्रिषु अतीतेषु आवर्तते निवर्तते इति। अस्य तात्पर्यमाह– अत्रेति। सजातीयानां सापत्नमातामहकुले त्रिपुरुषं मातामहपर्यन्तं सापिण्ड्यं अत्र आशौचे आशौचानुकूलमित्यर्थः। एतत् त्रिपुरुषसापिण्ड्यम्। विजातीयेति। तादृशमातुः प्रसवे तदुत्पन्नमरणे वा इति यावत्। मातृतः पञ्चमीमिति। पिण्डे त्यजेदित्यर्थः। तथा च चतुःपुरुषं सापिण्ड्यमित्याशयः। पितृतः सप्तमीं त्यजेत्पिण्डे इत्यस्य विषयमाह–सप्तमीमिति।

क्रम. १०१४–१०१५

तन्मातामहसंततौ कियद्दूरं अविवाह इत्यत्राऽऽह– प्रयोगेति। मात्रिति। पिता (माता) च माता (पिता) च इति विग्रहः। अन्येषां मातृसंबन्धात् आ पञ्चमादविवाह्याः। मातरमारभ्य पञ्चमं विना चतुर्थपर्यन्तं ये संबन्धाः, ते विवाहप्रतिकूला इत्यर्थः। तत्र वरकन्यान्यतरस्य वैमातृकाणां त्वाह– आ पञ्चमादिति। एवमन्येषां पितृसंबन्धा आ सप्तमादविवाह्या इत्यत्रापि। भ्रातॄणां मातुलत्वे भगिनीनां मातृष्वसृत्वस्य अर्थसिद्धत्वेन 'तद्भगिन्यो मातृष्वसारः' इत्यस्य पाठाभावेऽपि न कश्चिद्दोषः। तद्दुहितर इति। तयोः तद्भ्रातृतद्भगिन्योर्दुहितर इत्यर्थः, तदपत्यानीति सामान्योपादानात्। अत्र केचित् 'यावद्वचनं वाचनिकम्' इति न्यायेन परिगणितेष्वेव सापिण्ड्यं, न तु सप्तमादिपर्यन्तमित्यर्थमाहुः। वस्तुतस्तु 'यावदुक्तं वाचनिकम्' इत्यस्यायमभिप्रायः– वाक्यभेदपरिहाराय सपत्नमातामहात् कूटस्थात् चतुःपुरुषं सापिण्ड्यमातिदेशिकमनेन विधीयते। अतो मातुलदुहितृष्विव तत्पुत्रेष्वपि सापिण्ड्यात् कन्यायाः सपत्नमातुलपुत्रेण न विवाहः। तद्दुहितर इत्यत्र तत्पदं मातुलतद्भगिन्योः परामर्शार्थम्। दुहितृपदं पुत्राणामप्युपलक्षणम्। तदपत्यानीति तत्पदं च दुहितृपुत्रयोः परामर्शार्थम्। तेन तदपत्यानीत्यस्य दुहित्रपत्यानि पुत्रापत्यानि च अर्थः। तदयमर्थः– मातृभगिनीदुहितृत्वशब्दः सपत्नमातामहात् कूटस्थात् चतुर्थमभिव्याप्य सपत्नमातामहकुलं लक्षयित्वा तेन सह यस्य सपत्नमाता तस्य मातुलमातृष्वसृभगिनीभागिनेयपदैर्बोधितं सापिण्ड्यं

मेवोक्तः ' यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा च ' इति । बौधायनः-' मातुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत् । पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत् ॥ ' अतो मातृष्वसुः सापत्नपुत्रकन्याऽपि अविवाह्या, [ पृ. १०२० ] ' सापत्नमातृकुलजाम् ' इति मदनपारिजातोक्तेरिति केचित् । केचित्तु ' ज्येष्ठो भ्राता पितुः समः ' इति मनूक्तेस्तत्पत्न्याः मातृत्वात् तत्पितुर्मातामहत्वात् ज्येष्ठभ्रातृपत्नीभगिनी न विवाह्या । तथा-' उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ' इति मनूक्तेः गुरुणा त्रिपुरुषं सापिण्ड्यं, सखाऽपि निर्वाप्यः, अतस्तेषां कन्या नोद्वाह्याः, ' गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः । गुरोश्च कन्या शिष्यो वा तत्संतत्याऽपि नेष्यते ॥ पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते । [ पृ. १०२१ ] वाक्संबन्धकृतानां तु स्नेहसंबन्धभागिनाम् । विवाहोऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते ॥ ' इति वचनाच्चेत्याहुः, तत्र मूलं चिन्त्यम् ।

---

विधीयते । एवं च यस्य सपत्नमाता तदपत्यस्यासापिण्ड्येऽपि निषेधः, ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' इति मानवनिषेधात् । अत्र चकारेण पितुरसपिण्डाऽपि ग्राह्या, एवं चकारेण मातुरसगोत्राऽपि ग्राह्या । तेन दत्त्रिमस्य यः प्रतिग्रहीता स तज्जनन्याऽसपिण्डोऽपि सगोत्र इति तत्कुलनिवृत्तिः । दारकर्मणि दारत्वसंपादके विवाहादौ । मथुने मिथुनसाध्येऽग्न्याधानादौ । ननु इदं ' पञ्चमात् सप्तमादूर्ध्वम् ' इत्यनेन समानार्थमेवास्तु, ( न, ) लक्षणापत्तेः । न चैवं मातृतः षष्ठे पितृतोऽष्टमे वा विवाहो न स्यात्, कन्याया मात्रादिसपिण्डत्वादिति वाच्यं, मातुः पितुर्वा सगोत्रां सपिण्डां च नोद्वहेदिति हि मनुवचनं पर्यवसन्नं, तच्च न औपदेशिकसापिण्ड्ये प्रवर्तते, षष्ठाष्टमयोः ' पञ्चमात्सप्तमादूर्ध्वम् ' इत्यभ्यनुज्ञानात्, तादृशीमपि वैधीं प्राप्तिमुपजीव्य निषेधप्रवृत्तौ विकल्पप्रवृत्तेः, किन्तु आतिदेशिक एव । तत्र कस्यचिदुद्वाहविधेरभावात् रागप्राप्तस्यैवायं निषेध इति न कस्यापि बाधः । अन्ये तु एवंविधलक्षणाङ्गीकारो व्यर्थः । यत्रैकरूपेण बुबोधयिषा ' काकेभ्यो दधि ' इत्यादौ, तत्रैव हि लक्षणा, न तु प्रकृते, सपत्नमातरि विवाहप्रसक्त्यभावेनेदृशसापिण्ड्यातिदेशवैयर्थ्यात् । तस्मात् पितृपत्नीत्वावच्छेदेन मातृत्वमतिदिश्यते इत्येक एवायं अतिदेशविधिः । तद्वशाच्च तद्भ्रात्रादिसंताने भगिनीत्वादिकथनं मुख्यभ्रात्रादिसंतानवत् विवाहप्रतिबन्धकतापरम् । एवं च तदपत्यानां भागिनेयत्वातिदेशेऽपि तत्कन्यानां न भागिनेयकन्यात्वापत्तिः, मातुलकन्यानां भगिनीत्वातिदेशेऽपि तत्सुतानां न भ्रातृत्वातिदेश इति परिगणितेष्वेव सापिण्ड्यमिति पक्षं समर्थयन्ते । तदेतदपेशलम् । एवं हि लोभेन विवाह्यानां कन्यानां बहुतरत्वं संपादयसि, सपत्नमातुलदौहित्र्या अविवाह्यत्वे सपत्नमातुलपौत्र्या विवाह्यत्वे इष्टापत्तिं च करिष्यसि, तदेतत्सर्वमनुचितमिति । तस्मात् पितृपत्न्यां मातृत्वोक्तिः तद्भ्रातरि मातुलत्वोक्तिश्च तत्पितुः कूटस्थत्वप्रकाशार्था । मातुलाद्युपादानं च द्वितीयतृतीयगणनार्थम् । मातृष्वसार इति च संतानभेदप्रदर्शनं कूटस्थत्वदृढीकाराय । तत्पाठाभावे तु मातृमातुलाभ्यामेव तद्व्यक्तिः । भगिनीत्वादिकथनं च तदुद्वाहस्यात्यन्तनिन्द्यत्वार्थम् । व्यक्तिचतुष्टयगणनं च तदग्रे उद्वाहप्रतिबन्धवारणाय । किंच मातृत्वातिदेशेऽपि तत्पुत्रादौ भ्रातृत्वाद्यतिदेशाभावे तत्पौत्रीदौहित्र्योर्विवाहः प्रसज्येत । लोकविद्विष्टत्वात् तद्वारणमिति चेत्, तर्हि मातुलपुत्र्यादिविवाहस्यापि तथैव सुवारत्वात् भगिनीत्वाद्यतिदेशमपि त्यजेः । तस्मात् तादृशकूटस्थात् पञ्चमीमुद्वहेदित्यर्थः । आतिदेशिकसापिण्ड्यमिति च विवाहप्रतिबन्धकतायां परिभाषामात्रम् । तादृशपरिभाषा च ' असपिण्डा च या मातुः ' इत्यादौ उपयोगिनी । अन्यथा वरकन्यान्यतरस्य पितृमातृसम्बन्धिसप्तमपञ्चमान्तर्गतस्य सपत्नमातृसंबन्धिचतुर्थान्तर्गतस्य च विवाहे इत्यर्थोपगमान्न कोऽपि विरोध इति ।

क्रम. १०१६–१०१९

दत्तकस्य जनककुले मातृतः पञ्चपुरुषं पितृतः सप्तपुरुषम् ;
पालककुले मातृतस्त्रिपुरुषं पितृतः पञ्चपुरुषं
सापिण्ड्यमिति मतान्तरम्–

दत्तकविषये तु उच्यते । तत्र गौतमः— ' ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात् ' इति । बन्धुग्रहणान्न दत्तकमात्रपरमिदं, किन्तु संतानेऽपि । ' एतत् क्षेत्रजादिसर्वद्व्यामुष्यायणपरम् ' इति हरदत्तः । अत्र [ पृ. १०२२ ] स्मृतिचन्द्रिका– ' नियोगाद्य उत्पादयति तस्माद्बीजिनोऽप्यूर्ध्वं सप्तमादित्यर्थः ' इति । ' दत्तकस्य जनकविषयमेतत् ' इति सापिण्ड्यमीमांसायाम् । तेन दत्तकस्य जनककुले साप्तपौरुषं, जननीकुले पाञ्चपौरुषं सापिण्ड्यम्, ' दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । सप्तमी पञ्चमी चैव गोत्रित्वं पालकस्य च ॥ ' इति बृहन्मनूक्तेः, ' बीजिनश्च ' इति गौतमोक्तेश्च । पालकपितृकुले तु पञ्चपुरुषं, पालकमातृकुले त्रिपुरुषम् । तथा च अपरार्के पैठीनसिः– ' त्रीन् मातृतः, पञ्च पितृतः पुरुषानतीत्योद्वहेत् ' इति । एतत् स एव

व्याचख्यौ– " दत्तकादीन् [ पृ. १०२३ ] पुत्रान् पितृपक्षतो निवृत्तपिण्डगोत्रार्षेयान् प्रत्येतदुच्यते ' पञ्च पितृतः ' इति, नान्यान् प्रति " इति । यत्तु वृद्धगौतमः– ' स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥ ', यच्च वसिष्ठः– ' अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः । स्वगोत्रेण स्वशाखोक्तविधिना स्यात् स्वशाखभाक् ॥ ' इति, यच्च नारदः– ' धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥ ', तत् पालककुले साप्तपौरुषं सापिण्ड्यं नेत्येवंपरं, न तु सर्वथा सापिण्ड्यनिषेधपरमिति सापिण्ड्यमीमांसायाम् । मदनपारिजातादपि दत्तकानुप्रवेशो अल्पं सापिण्ड्यं प्रतिभाति। तथाहि, तेन त्रीनतीत्य इत्युदाहृत्य यस्य माता दत्तपुत्री प्रतिग्रहीत्रा पुत्रीकृता तस्याः प्रतिग्रहीतृकुले ' त्रीनतीत्य ' इति, ' पञ्च पितृतः ' इति [ पृ. १०२४ ] यस्य दत्तपुत्रः पिता तस्य दत्तस्य यज्जनककुलं तद्विषयमित्युक्तम् ।

---

बन्धिभ्यति । बन्धिभ्यति तादर्थ्ये चतुर्थी । तथा च पालकपितृघटितसंतानभेदारम्भककूटस्थादिसमुदायार्थः पालकपितृप्रभृतिसंतानार्थश्च यः सप्तमः, तस्मादूर्ध्वमित्यर्थः । सर्वेति । यदा क्षेत्री स्वयं बन्धुभ्यः प्रार्थयते मम क्षेत्रे पुत्रमुत्पादय इति, यदा वा संतानक्षये गुरवो विधवां( जाया ) नियुञ्जते, यथा विचित्रवीर्यक्षेत्रे सत्यवती ( त्वां ) व्यास, तत्र जातः पुत्रः क्षेत्रिणो बीजिनश्च इति द्व्यामुष्यायणः, ' अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ ' इति याज्ञवल्क्यात् । अत्र उभयत्रापि यन्निवारणं द्व्यामुष्यायणत्वबीजम्, ' तथैवाक्षेत्रिणो बीजं परक्षेत्रे प्रवापिणः । कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥ क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत् प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ ' इति मनूक्तेः । स्यादेतत् नैतत् । यत्तु ' य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः । यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥ ' इति, तत्तु यदि भोगप्रवृत्ते पुत्रिकायां न न ते कार्या इत्येवंपरम् । एवं स्वयंदत्तो द्व्यामुष्या-

यणः । यथा बह्वृचब्राह्मणे देवरातः ' यथैवाङ्गिरसः सन्नुपेया तव पुत्रताम् ' इत्यादिना ' अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः ' ( ऐब्रा. ३३।५–६ ) इत्याद्यन्तेन । जातोपनयनो द्व्यामुष्यायण उक्तः, ' दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणाऽऽर्षेण जातास्ते अशंमनःकुलीना द्व्यामुष्यायणाः । ' इति पैठीनस्युक्तेः । न चेदं दत्तकमात्रविषयम्, ' गोत्ररिक्थे जनयितुः ' इत्यनेन विरोधात् । एवम् ' अन्येतु '—मते प्राक् द्व्यामुष्यायणा उक्ताः ते च इह धर्तव्याः । बीजिनोऽपि, अपिना क्षेत्री समुच्चीयते । एतन्मते द्व्यामुष्यायणान्तरानुक्तेः न्यूनता । दत्तकस्येति । अयं ग्रन्थो द्व्यामुष्यायण एव दत्तकः, संस्कारानन्तरं च स नास्ति, इति मतेन । जनकेति । न तु पालकविषयम्, तत्र न्यूनसापिण्ड्यादित्याह– तेनेति । शिष्टः सापिण्ड्यं, आर्षेयं प्रवरः । अयं ग्रन्थः केवलदत्तकाभावात् केवलसगोत्रदत्तकपरः । स्वगोत्रेणोपनायित इत्यन्वयः । गोत्रपदात् सापिण्ड्यनिवृत्तिरित्यभिमानः । अंशपिण्डविभागित्वं अंशपिण्डयोर्दातृत्वमित्यभिमानः । पृ.म. १०२१–१०२२

चस्तुतस्तु पूर्ववचसां महानिबन्धेषु क्वाप्यनुपलम्भात् अपरार्कादिलिखनाभावात् पूर्वोक्तव्यवस्थायाश्च प्रतिभाशानतुल्यत्वात् यैरेतल्लिखितं तेषामेव शोभते ।

दत्तकस्य जनकपालकोभयकुलयोस्तुल्यं मातापितृतः पञ्चपुरुषं सप्तपुरुषं च सापिण्ड्यमिति स्वमतम्—

मम तु, पालककुले एकपिण्डदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिण्ड्यम् । 'बीजिनश्च' इति गौतमोक्तेर्जनककुलेऽपि तावदेव । 'त्रीन् मातृतः' इत्यादि तु सवर्णक्षापरनमातृकुलपरम्, 'यद्येकजाता बहवः' इति शाङ्खैकवाक्यत्वादिति युक्तं प्रतिभाति । अत एवास्य द्यामुष्यायणत्वं हेमाद्रिप्रवरमञ्जरीवृत्तिकृन्नारायणादिभिरुक्तम् । भट्टसोमेश्वरेणापि — पृथायाः कुन्तिभोजस्य पालककन्यात्वेऽपि 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च' इति गौतमोक्तेः दत्त्रिमायाः पृथाया जनकस्य शूरसेनस्य कुलेऽपि साप्तपौरुषं, पालककुलेऽपि तावदेव सापिण्ड्यमुक्तम् 'अपि वा कारणाग्रहणे' (जै. सू. ४।१।३।५) इत्यत्र ।

अनुपनीतस्यैव दानमाश्रित्य उपनीतानुपनीतदानाश्रितसापिण्ड्यभेदखण्डनम् —

सापिण्ड्यदीपिकायां तु दत्तक्रीतादीना जनकगोत्रेणोपनयने कृते जनककुले साप्तपौरुषं सापिण्ड्यं, पालकमातापितृकुले त्रिपुरुषं पिण्डनिर्वापात् निर्वाप्यलक्षणं त्रिपुरुषं सापिण्ड्यम्, पालकगोत्रेणोपनयने तत्कुले साप्तपौरुषमित्युक्तम् । तन्न, 'चूडोपायनसंस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥' इति कालिकापुराणात् उपनयनोत्तरं दत्तकनिषेधात् । 'त्रिपुरुषं' इत्यत्रापि मूलं मृग्यमित्यलं बहुना ।

सर्ववर्णसाधारणं मातापितृद्वारकसापिण्ड्यवत्कन्यापरिगणनम्—

मातापितृद्वारकसापिण्ड्यवतीनां कन्यानामियं संख्या, [पृ. १०२५] रामवाजपेयिना उक्ता—

'उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्मकृद्दम्पतिद्वन्द्वं तस्य चतुष्कमष्ट च ततोऽप्यस्य क्रमात् षोडश । वंशारम्भकदम्पतिप्रमितिरित्यासप्तकक्षं रदा एकैकान्वयकन्यकाः पितृकुले त्वासप्तकक्षं ध्रुवे ॥ १ ॥

यद्यप्येकस्य बहवः सुताः स्युस्तदपीह तु ।
संबन्धसाम्यादेकैव गणितेत्यवधार्यताम् ॥ २ ॥

---

उद्वोढुरिति । वरः प्रथमः, ततो द्वितीयस्थाने स्थितं वरपितरौ द्वन्द्वं, तृतीयस्थाने पितुः पितरौ द्वन्द्वं, चतुर्थस्थाने तयोः प्रत्येकं जनके द्वन्द्वे, पञ्चमस्थाने द्वन्द्वद्वयघटकपुंद्वयस्त्रीद्वययोः जनकद्वन्द्वानि चत्वारि, षष्ठस्थाने तद्घटकाष्टसंख्यस्त्रीपुंव्यक्तिजनकानि द्वन्द्वानि अष्टौ, सप्तमस्थाने तद्घटकषोडशव्यक्तिजनकानि द्वन्द्वानि षोडश, इति रदाः दन्ताः द्वात्रिंशत् द्वन्द्वानि आसप्तकक्षं वंशारम्भकदम्पतिप्रमितिरिति अन्वयः । इतः परं तत्कन्याः प्रतिजानीते— एकैकेति । पितृकुले आसप्तकक्षं एकैकान्वयकन्यकाः ध्रुवे इत्यन्वयः । एकैकस्य द्वन्द्वस्यान्वये यदि कन्याद्वयादि, तत्र संख्यावृद्धिमाशङ्क्य समाधत्ते— यद्यपीति । सुगमम् । उक्तद्वात्रिंशद्द्वन्द्वाना मध्ये एकद्वन्द्वकुले उद्वोढुः सपिण्डकन्यानां त्रिषष्टिरूपामवान्तरसंख्यामाह— एकस्मादिति । प्रथममेकं मिथुनं, ततः पुत्रः कन्या चेति द्वन्द्वं द्वितीये स्थाने, ततः प्रत्येकं ताभ्यां पुत्रः कन्या च इति द्वन्द्वद्वयं तृतीये, ततो द्वन्द्वद्वयात् तद्रीत्यैव द्वन्द्वचतुष्टयं चतुर्थे, ततः तच्चतुष्टयात् तद्रीत्यैव द्वन्द्वाष्टकं पञ्चमे, ततः तदष्टकात् तथैव रीत्या षोडश द्वन्द्वानि षष्ठे, तेभ्यो द्वन्द्वेभ्यो द्वात्रिंशत् द्वन्द्वानि सप्तमे, इति रीत्या एकैकस्यान्वये सप्तमकक्ष यावत् अग्निऋतवः (६३) त्रिषष्टिः कन्या इत्यर्थः । ता दन्तैः द्वात्रिंशद्भिः गुणिताः रसैकखदृशः रसाः षट्, एकः, खं शून्यं, दृक् द्विः, अङ्कानां वामतो गतिः, (२०१६) षोडशाधिकसहस्रद्वयं उद्वोढुः पितुः वंशे उद्वोढुः सपिण्डा इत्यर्थः । मातुरिति । उद्वोढुरिति वर्तते । वरपितरौ द्वितीयस्थानस्थं द्वन्द्वं, तृतीयस्थाने मातुः पितरौ द्वन्द्वं, चतुर्थस्थाने द्वे द्वन्द्वे, पञ्चमस्थाने सागराः चत्वारि द्वन्द्वानि इति तस्याः मातुः आपञ्चमकक्षं अश्वमितिः सप्तसंख्या । प्रथमद्वन्द्वस्य प्रागगणनात् तत्र एकद्वन्द्वस्यान्वयः । पुत्रकन्ये इति एकं द्वन्द्वं, तस्मात् द्वन्द्वात् द्वन्द्वयुगं द्वन्द्वद्वयं, ततः अब्धयः चत्वारि द्वन्द्वानि, ततोऽष्ट

एकस्मान्मिथुनात्सुतोऽथ दुहिता द्वन्द्वद्वयं तद्द्वयात्
तस्माद्द्वन्द्वचतुष्कमष्ट च ततोऽतः षोडशाऽतो रदाः।
यावत्सप्तमकक्षमग्निकृतवः कन्या इहैकान्वये
ता दन्तैर्गुणिता रसैकखदृशो वंशे सपिण्डाः पितुः॥३॥
[ पृ. १०२६ ]
मातुर्जन्मददम्पती च मिथुनद्वन्द्वं तयोः सागराः
तस्याः पञ्चमकक्षमश्वमितिरित्येकान्वयः पुंसुते।
द्वन्द्वाद्द्वन्द्वयुगं ततोऽभ्यध इतोऽष्टौ पञ्चकक्षं शर-
क्षोण्यः सप्तगुणाः शराभ्रविधवो मातुः सपिण्डाः कुले॥
कुलद्वयस्य कन्यका युता मिथः सपिण्डकाः।
हिमांशुदृग्धरादृशो विवाहकर्मवर्जिताः॥' इति।

एतच्च सर्ववर्णसाधारणम्, 'सर्वत्र सापिण्ड्यसद्भावात्' इति [ पृ. १०२७ ] विज्ञानेश्वरोक्तेः, 'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतः क्रमात्। सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः॥' इति हरनाथधृतदेवलवचनाच्च।

सगोत्रसपिण्डादिकन्याविवाहे प्रायश्चित्तम्–

संबन्धतत्त्वे सुमन्तुः– 'पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् परित्यज्यैनां मातृवद्बिभृयात्' इति दिक्।

---

## सापिण्ड्यप्रदीपः*

[ पृ. १–१७ ]

अवयवसापिण्ड्यम्–

[ पृ. १ ] 'सापिण्ड्यं नाम एकः पिण्डः देहः आरम्भको यस्या यस्य वा सा सपिण्डा स सपिण्डः, तद्भाव इत्यर्थः' इति विज्ञानेश्वरः। एवं च एकशरीरावयवान्वयेन सापिण्ड्यम्। स च क्वचित् साक्षात् क्वचित् परंपरया। मातृष्वसृपितृष्वस्रादिभिरपि एकशरीरावयवान्वयः अस्त्येव। पतिपत्न्योस्तु एकशरीरे उभयारब्धे स्वावयवान्वयात्। भ्रातृभार्याणामपि परस्परं स्वारब्धसंतानान्वय्यवयवान्वितसंतानारम्भकत्वेन। एवं यत्र यत्र सपिण्डशब्दस्तत्र साक्षात् परंपरया वा एकशरीरावयवान्वयो द्रष्टव्यः। योगरूढिभ्यां च नातिप्रसङ्गः। सगोत्रत्वसमानाधिकरणसापिण्ड्यमेव दशाहाशौचादौ प्रयोजकमिति न मातामहादीनां दशाहाद्याशौचप्रसक्तिः। न चैवं दत्तकपुत्रे प्रतिग्रहीतृसापिण्ड्यं न स्यात्, तदवयवान्वयाभावादिति वाच्यम्, पुत्रत्वबुद्ध्या आलिङ्गनचुम्बनादिभिस्तत्रापि प्रतिग्रहीत्रवयवान्वयसत्त्वात्। अतिप्रसङ्गस्तु रूढ्यैव परिहार्यः। उत्पादकसापिण्ड्यमप्यस्त्येव। 'गोत्ररिक्थे

---

द्वन्द्वानि इति आपञ्चकक्षं शरक्षोण्यः शराः पञ्च, क्षोणी एकः, वामगत्या ( १५ ) पञ्चदश। ते सप्तगुणाः शराभ्रविधवः ( १०५ ) पञ्चाधिकशतं, उद्वोढुर्मातुः कुले उद्वोढुः सपिण्डा इत्यर्थः। कुलेति। मिथोयुताः सङ्कलिताः हिमांशुदृग्धरादृशः ( २१२१ ) स्पष्टं एकविंशत्यधिकमेकविंशतिशतं उद्वोढुर्विवाहकर्मणि वर्जिता इत्यर्थः। मातुलकन्यादिविवाहे तु ईदृशाधर्मिकोक्तसंख्याभङ्गः स्यादित्यभिप्रायः।

क्रम. १०२५–१०२७

मातृसगोत्रां मातुलसगोत्राम्। अधिकमत्र। विवाहमात्रे इदं, मैथुनादौ तु 'सपिण्डापत्यदारेषु' इत्यादि स्मृत्यन्तरोक्तं द्रष्टव्यम्। अत एव मातृवदिति दृष्टान्तः। विशेषं तु सपिण्डादिषु भार्यात्वं नोत्पद्यते, रोगिण्यादौ तदुत्पत्तौ इति मिताक्षरा।

* आदर्शपुस्तकं श्री. ज. र. घारपुरेसंपादितम्।

रोगिण्यादौ ऋक्षादिनाम्नीषु च भार्यात्वानुत्पत्तौ तज्जन्यपुत्रादेर्वर्णत्वानापत्तिभयेन भार्याभिज्ञागमने प्रायश्चित्तापत्त्या च तत्र तदुत्पत्तिस्वीकारे सपिण्डादिष्वपि मत्युद्वाहितादिवत् भार्यात्वं स्वीकार्यम्। तत्परिणेतुरिव सपिण्डादिपरिणेतुरपि निषेधबलात् पापमात्रमित्यन्ये।

परे तु यस्या गमने मरणान्तं नैमित्तिकं तदुत्पन्नस्य 'पतितोत्पन्नः पतितो भवति' इति वचनेन पातित्यात् 'अनिन्द्येषु विवाहेषु' इत्यादौ राक्षसादीनामिव पातित्यप्रयोजकनरकप्रयोजकानामपि विवाहानां ग्रहणात् न वर्णत्वम्। मत्युद्वाहादिजन्ये रोहिण्यादिजन्ये च पातित्याभावात् विवाहस्य तादृशनरकाप्रयोजकत्वाच्च वर्णत्वम्। अतः प्रथमे वैयर्थ्यात् भार्यात्वं नोपैयते, द्वितीये तदुपेयते इत्याहुः।

क्रम. १०२७

जनयितुर्न भजेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥' इति मनुवचनात्तु केषाञ्चिन्निवृत्तिरिति तेषामाशयः।

निर्वाप्यसापिण्ड्यम्—

केचित्तु एकपिण्डक्रियान्वयित्वं सापिण्ड्यम्। तथा च मात्स्ये— 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' इति। अयमर्थः — सप्तानां पुरुषाणामेकपिण्डक्रियानुप्रवेशः सापिण्ड्ये हेतुः। एवं च एकस्य देवदत्तस्य पित्रादिभिः षड्भिः पुत्रादिभिः षड्भिश्च सह सापिण्ड्यम्। उद्देश्यदेवतैक्येन क्रियैक्यस्य विवक्षणेन भ्रातृपितृव्यमातुलभागिनेयादिभिस्तद्भार्याभिश्च सह सापिण्ड्यं निर्बाधम्। भार्याणामपि भर्तृकर्तृकपिण्डदानक्रियाया सहाधिकारात् सापिण्ड्यसिद्धिः। भगिनीपितृष्वस्रादीनामपि एकपिण्डदानक्रियायोग्यत्वमस्त्येव, तस्यैव निवेशात्। अत्रापि पिण्डदधर्मपुत्रादीना सापिण्ड्यातिप्रसङ्गो मातामहकुले लेपभावपर्यन्तं तदतिप्रसङ्गश्च रूढ्यैव वारणीयः। [पृ. २] न च अप्रत्तकन्यायाः पिण्डदत्वाभावेन तस्याः पितृकुले सापिण्ड्यं न स्यात्, तस्या पिण्डदत्वाभावेऽपि तन्मरणे पित्रादीनां दशाहपिण्डदत्वेन तत्कर्तृकपिण्डदानोद्देश्यतया अन्येषा च स्वकर्मकपिण्डदानकर्तृदीयमानपिण्डोद्देश्यतया तदक्षतेः। प्रत्तानां पिण्डदाने तु न पित्रादेरधिकारः। कादाचित्कस्तु शिष्यादेरिव न सापिण्ड्यप्रयोजक इत्याहुः।

निर्वाप्यसापिण्ड्यखण्डनम्—

तत्तु मूलपुरुषादेकतः कन्या तत्कन्या तत्कन्या तत्कन्या इत्येवं पञ्चम्या कन्यायामसत्त्वादयुक्तम्। एतेन 'मात्स्यवचनेन पिण्डदेवतात्वकर्तृत्वान्यतरत्वं सापिण्ड्य इति बोध्यते' इत्यपास्तम्। पितृष्वस्रादौ अव्याप्तेश्च। एतेन 'स्वदेयपिण्डभोक्तृभोक्तृकपिण्डदातृत्व सापिण्ड्यं इति तदर्थः' इत्यपास्तमित्यन्ये।

मातृतः पञ्चपुरुषं पितृतः सप्तपुरुषं च सापिण्ड्यम्—

तस्मात् मातृकुले पितृकुले च सापिण्ड्यं तत् कियत्पर्यन्तमित्यपेक्षायां 'सापिण्ड्यं साप्तपौरुषम्' इति मात्स्येन पुंसंताने अवधिरुक्तः, 'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी' इति शङ्खेन च। मातृकुले तु 'मातृबन्धुभ्यः पञ्चमादूर्ध्वम्' इति गौतमेन, 'सप्तमात्पञ्चमादूर्ध्वं मातृतः पितृतस्तथा' इति याज्ञवल्क्येन च पञ्चमपर्यन्तमुक्तम्।

मातापितृशब्दौ साक्षाज्जननीजनकवाचकौ, तेन मण्डूकप्लुतिसापिण्ड्यसिद्धिरिति मतम्—

तत्र 'वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः। पञ्चमी चेत्तयोर्माता सापिण्ड्यं विनिवर्तते ॥' इति संग्रहकारोक्त्या सप्तमात् पितुरूर्ध्वं पञ्चम्या मातुरूर्ध्वं सापिण्ड्यनिवृत्तिरित्यर्थः। सग्रहवाक्ये तयोरन्यतरस्येत्यर्थः। 'कूटस्थात्' इति ल्यब्लोपे पञ्चमी। वाशब्द. अन्यतरार्थः। अत्र पञ्चमी माता इत्यनेन वधूवरान्यतरस्य कूटस्थात् षष्ठत्वे विवाहः कार्य इति बोधितम्। अत एव स्मृतिवाक्ये 'पञ्चमादूर्ध्वम्' इत्येवोक्तम्। एवं च वधूवरान्यतरस्य कूटस्थमारभ्य सप्तमादूर्ध्वत्वे पितृद्वारकं सापिण्ड्य निवर्तते, मातृद्वारकं तु तदन्यतरस्य कूटस्थमारभ्य पञ्चमादूर्ध्वत्वे निवर्तते इति निष्कर्षः। मातृशब्दश्च उपस्थितवधूवरान्यतरस्य साक्षाज्जनन्या वाचक एव युक्तः, लोकप्रसिद्धेः। एवं च कूटस्थात् पञ्चमीसंतानभूतषष्ठे निवृत्तस्यापि तन्मातृकुलसापिण्ड्यस्य सप्तमे पुनर्मण्डूकप्लुत्या प्रवृत्तिः, पितुः सप्तमत्वे एव सापिण्ड्यनिवृत्तेरुक्तेरिति,

मातापितृशब्दौ पितामह्यादीनां पितामहादीनामपि च वाचकौ, तेन मण्डूकप्लुतिसापिण्ड्यासंभवः गोत्रैक्ये एव आशौचोपयोगि सप्तपुरुषं सापिण्ड्य चेति सिद्धान्तः—

तन्न, एवं हि असदेहाय याज्ञवल्क्यवाक्ये पञ्चम्या इत्येवोक्तं स्यात्। तस्मात् साक्षात्परंपरासाधारण्येन कूटस्थतदपत्यचतुष्टयरूपपञ्चसमुदायघटिकाया द्वितीयादिकाया अपि मातृशब्दो वाचकः, 'तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमी ॥' [पृ. ३] इति चतुर्विंशतिमते पितामह्यादिष्वपि मातृशब्दप्रयोगात्, (स्मृतौ?) लोकप्रसिद्ध्यपेक्षया स्मार्तप्रसिद्धेर्बलवत्त्वात् 'सपिण्डता तु सर्वेषाम्' इति प्रागुक्तशङ्खवचनेन गोत्रैक्यस्यैव सप्तमपर्यन्तसापिण्ड्यप्रयोजकत्वोक्तेश्च। गोत्रभेद एव च तत्संकोचक इति

युक्तम्। स च द्वितीयाया अपि स्त्रीत्वे अविशिष्ट एव। 'संनिकर्षेऽपि कर्तव्या त्रिगोत्रात् परतो यदि'' इति शूलपाण्युदाहृतदेवलेन तथैव प्रतीतेश्च। तत्साहचर्यात् पितृशब्दोऽपि सप्तसाधारणपितृत्वेन बोधकः। ताभ्यां सप्तम्यन्ताभ्यां आद्यादित्वात् तसिः। एवं च मातृघटितसंताने संतानभेदावधिकूटस्थमारभ्य गणनायां संतानघटकात् पञ्चमादूर्ध्वे सापिण्ड्यं निवर्तते इत्यर्थः। अत एव 'मातृसंताने पञ्चमादूर्ध्वम्' इति विज्ञानेश्वरादिभिरुक्तम्। एवं च पितृसंतानं अर्थात् पुमात्मकमेव गृह्यते, शङ्खवचनैकवाक्यत्वात्, 'पितरो यत्र पूज्यन्ते' इत्यादौ साक्षाज्जनकभिन्नेऽपि पितृशब्दप्रयोगात्। पितृतः सापिण्ड्योक्तिश्चाशौचोपयोगिनीति बोध्यम्।

*कूटस्थमारभ्य पञ्चपुरुषसप्तपुरुषसापिण्ड्ययोर्वसिष्ठादिवाक्यानां पर्यवसानकथनम्, पारिभाषिकबन्धुमारभ्य गणना न कार्या—*

यत्तु वसिष्ठेन 'मातृबन्धुभ्यः पञ्चमीं सप्तमीं पितृबन्धुभ्यः' इत्युक्तं तत्र संतानभेदारम्भकप्रथमादिः समुदायो बन्धुशब्देन उक्तः। एवं च कूटस्थात् षष्ठ्येवोक्ता भवतीति न तद्विरोधः। तादर्थ्ये चतुर्थी। तत्समुदायार्थं पञ्चमीं कूटस्थात् षष्ठीमित्यर्थः। उद्भूतावयवभेदविवक्षया बहुवचनम्। 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इत्यपि मातृतः यः संतानभेदप्रतियोगी प्रथमः, ततः पञ्चमी इति व्याख्येयम्। एवं पितृत इत्यपि। एवं 'पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम्' इत्यप्येवमेव। एतेन 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति गौतमीयमपि व्याख्यातम्। 'सप्त पितृतः परिहरेत् पञ्च मातृतः' इति हारीतस्यापि पितृसंताने कूटस्थात् सप्त मातृघटितसंताने कूटस्थात् पञ्च परिहरेदित्यर्थः। 'आ सप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः। अविवाह्याः' इति नारदवाक्ये आङ् मर्यादायाम्। संतानापेक्षः 'पञ्चमात्, सप्तमात्' इति नपुंसकनिर्देशः। सप्तमपञ्चमत्वाक्रान्तसंतानरूपकन्यापर्यन्तं अविवाह्या इत्यर्थः। एतेन अत्र 'बन्धुभ्यः' इत्युक्तेः पञ्चमीनिर्देशाच्च पितुः पितृष्वसुः पुत्रात् तत्संतानभूतां सप्तमीं, मातुः पितृष्वसुः पुत्रात् पञ्चमीं च त्यजेदिति परास्तम्, पितृतः अष्टमी मातृतः षष्ठी उद्वाह्या, पितुः § पितृष्वसुर्नवमी मातुः पितृष्वसुः सप्तमी च त्याज्या इत्यस्यानौचित्यात्।

*उभयनिरूपितं व्यासज्यवृत्ति एकमेव सापिण्ड्यम्, तच्च एकतो निवृत्तौ अन्यतोऽपि निवर्तत एव—*

एवं च सगोत्राष्टमस्य अष्टमेन कूटस्थेन भिन्नगोत्रषष्ठस्य कूटस्थेन षष्ठेन सह सापिण्ड्यनिवृत्तौ तत्कूटस्थसंतानान्तरे सापिण्ड्यसभावनैव नास्ति। अत एव 'वरस्य योऽष्टमस्तस्य दौहित्री तेन विवाह्या' इति गौतमीयवृत्तौ हरदत्तोक्तिः संगच्छते। अत एव सर्वस्मृतिषु 'असपिण्डाम्' इति परिणेयकन्याविशेषणमेव श्रूयते। [ पृ. ४ ] ननु 'एतैरेव गुणैर्युक्तः' इति वरेऽपि तदतिदेशात् वरनिरूपितं, कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यं, न तु उभयनिरूपितं एकमेव व्यासज्यवृत्ति, येन अन्यतरतो निवृत्तौ निवृत्तिः स्यात्। अन्यथा वरे तदतिदेशवैयर्थ्यं स्यात् इति चेत्, न, सपिण्डशब्दस्य ससंबन्धिकत्वादेव तल्लाभे अन्यत्र तदतिदेशे मानाभावात्। किंच वधूवरयोः साक्षात्सापिण्ड्यासंभवेन स्वसपिण्डकूटस्थसपिण्डत्वमेव तद्वाच्यम्। न च एकत्र निवृत्तौ सत्यामपरत्र एतत्संभवति। किञ्च 'एतैरेव गुणैः' इत्यत्र असपिण्डत्ववत् असमानगोत्रजत्वस्यापि परामर्शे तस्याप्यतिदेशापत्तौ एकतरत्र तन्निवृत्तौ अन्यत्र तदनिवृत्तिकल्पनमपि स्यात्। यत्तु * कूटस्थसंततित्वरूपं तदित्यष्टमं वरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात् तत्संततिस्वत्वात् वरः तां प्रति सपिण्ड एव इति, तन्न, सपिण्डसंततित्वेन सापिण्ड्ये सोदकादावपि तदापत्तेः, 'अयमस्याः

---

§ अत्र पितृष्वसृशब्दद्वयं न पञ्चम्यन्तमवधिबोधकं, अपि तु षष्ठ्यन्तम्। गणना च कूटस्थमारभ्यैव कार्या। तथा च पितुः मातुश्च पितृष्वसुः सबन्धिनी तत्संतानस्था कूटस्थान्नवमी सप्तमी च त्याज्या इत्यर्थः। अन्यथा पितुर्मातुश्च पितृष्वसृपुत्रात्सप्तमी पञ्चमी च पितृष्वसारमारभ्य अष्टमी षष्ठी च स्यात्, न नवमी सप्तमी च। अत्र पितृष्वसृपदं मातृष्वसृमातुलयोरुपलक्षणं, त्रयाणां तत्पुत्राणां पारिभाषिकबन्धुत्वात्।

* अत्र 'स्वसपिण्ड' इति कूटस्थविशेषणमभिप्रेतम्।

असपिण्डः, इयं तस्य सपिण्डा ' इति व्यवहारस्य वाक्यविदामनुचितत्वाच्च, अष्टमे तत्संततित्वे सत्यपि ' पञ्चमात् सप्तमात् ' इत्यादिना सापिण्ड्याभावप्रतिपादनाच्च । तस्मादेकतो निवृत्तौ निवृत्तिरेव युक्ता । एवं च एकसंतानस्याष्टमपरसंतानस्यसप्तमयोः परस्परं त्रिरात्रं आशौचमेवोचितम् । एतेन ' एकतः सप्तमपर्यन्ताना अन्यतोऽष्टमादिजननादौ दशरात्रं, अष्टमादीनां च सप्तमपर्यन्तं जननादौ त्रिरात्रमाशौचम् ' इत्यपास्तम् । स्वसपिण्डकूटस्थसंततिस्थत्वेन सापिण्ड्यानुमानं तु न युक्तम्, सपिण्डत्वसोदकत्वयोः साकर्यापत्तेः, सपिण्डत्वाभाववदष्टमादिवृत्तित्वेन व्यभिचारनिश्चयसत्त्वाच्च । एतेन ' मात्स्यवाक्ये स्वदेयपिण्डभाक्कूटस्थसततित्वमुपलक्ष्यते । तदेव सापिण्ड्यम् । मिताक्षरामतेऽपि एतदेवोपलक्ष्यते । अत एव सापिण्ड्यं सादृश्यवत् न एकगतं इतरगततद्ध्यातं, केवलं सप्रतियोगिकमात्रम् । अत एकतः सपिण्डत्वं, इतरत्र तदभावः । सोदकत्वं च सापिण्ड्यप्रतिपक्षभूतं, न तु तदनुयायिसामान्यम् । आशौचप्रकरणे सापिण्ड्यं च जायमानम्रियमाणविशेषणमेव, न कर्तृविशेषणम् ' इति परास्तम्, सततिस्वरूपस्य सापिण्ड्यस्य सोदकेषु अभावस्य निरूपयितुमशक्यत्वात्, तस्य सप्तमादूर्ध्वं विनिवृत्तौ स्मृत्युक्ताया असगत्यापत्तेश्च, ' सापिण्ड्यं विनिवर्तते ' इति संग्रहश्लोके ' वध्वा वरस्य वा ' इत्यन्यतरार्थवाशब्देन अन्यतरस्य सप्तमादूर्ध्वत्वे सापिण्ड्यनिवृत्तेरुक्ताया असंगत्यापत्तेः । तस्मात् सर्ववचनैकवाक्यतया स्वदेयपिण्डभाक्कूटस्थसंबन्धिसप्तमपर्यन्तसततित्वमेवोपलक्षयितुं युक्तम् । एवं च सापिण्ड्यस्य म्रियमाणविशेषणत्वेऽपि न अष्टमादिमरणेऽपि एकतः सप्तमपर्यन्तानां दशरात्रप्राप्तिः । अतः सोदकत्वस्य तत्प्रतिपक्षत्वमपि उपपद्यते ।

सापिण्ड्यस्य अखण्डोपाधित्वम्-

वस्तुतः सोदकत्ववत् सापिण्ड्यमपि अखण्डमेवोपलक्ष्यम् । स्वभावाच्च सप्रतियोगिकं तत्, तच्च एकगोत्रे सप्तमपर्यन्तं, भिन्नगोत्रे पञ्चमपर्यन्तं, इति व्यवस्थैव युक्ता । [ पृ. ५ ] एवं सकलवचनसामञ्जस्ये पञ्चमकन्यापुत्रे निवृत्तं पुनस्तदपत्ये मण्डूकप्लुत्याऽनुवर्तते इत्युक्तिरसंगतैव, तद्बोधकशास्त्राभावात्, इति वदन्ति । 'सप्तमे पञ्चमे चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥ ' इति मरीचिवचनस्य कूटस्थसमानगोत्रसप्तान्तर्गतविवाहे कूटस्थभिन्नगोत्रघटितपञ्चान्तर्गतविवाहे निन्दाबोधकत्वमिति न तद्विरोधः ।

न्यूनसापिण्ड्यवचनानामर्वाङ्निषेधपरत्वमिति मिताक्षरामतम्, तेषामनुकल्पपरत्वमिति माधवमतम्—

' पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतस्त्रीन्मातृतः पञ्च पितृतो वा ' इति पैठीनसिवाक्यम् ' तदर्वाङ्निषेधपरम्, न पुनस्तत्प्राप्त्यर्थम् ' इति मिताक्षरा । ' अश्रुतनिषेधार्थकत्वकल्पने मानाभावादनुकल्पपरम् ' इति माधवः, ' दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणा महाकुलात् । उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ॥ पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः । सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च । एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥ तृतीया वा चतुर्थी वा पक्षयोरुभयोरपि । विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते ॥ ' इति चतुर्विंशतिमते ' तदभावे तु ' इत्युक्त्वा ' ( न दोषः ) शाकटायनः ' इत्याद्युक्त्या च अनुकल्पत्वस्य स्पष्टं प्रतिपादनात् । यत्तु पैठीनसिवाक्ये मिताक्षरायाम् 'परिहरेत् इति शब्दो दोषविशेषप्रतिपादनार्थ.' इति, तत् चतुर्थ्यां दोषविशेषकल्पने मानाभावात् ' न दोषः शाकटायनः ' इति वचनविरोधाच्च पैठीनसिवाक्ये वाशब्दस्वारस्याच्चोपेक्ष्यम् । तथा ' चतुर्थीमुद्वहेत् कन्या चतुर्थः पञ्चमोऽपि वा । पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम् ॥ ' इति पराशरोऽपि । अत्र चतुर्विंशतिमते ' महाकुलात् ' इत्यन्तार्धस्य प्रत्येकमनुषङ्गः । एवं च महाकुलानुरोधेन सापिण्ड्यसंकोचः, न तु तद्भिया अधमकुलात् कन्या स्वीकार्या इति प्रतीयते । अत एव आश्वलायनेन पूर्वं कुलपरीक्षोक्ता । यत्तु ' पञ्चमे सप्तमे

चैव येषां वैवाहिकी क्रिया । क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥ ' इति मरीच्युक्तम्, 'पञ्चमात्सप्तमाद्वीनां यः कन्यामुद्वहेद्द्विजः । गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥ ' इति विष्णूक्तं, तन्मुख्यसंभवे गौणपक्षानुष्ठातृविषयं सच्छूद्रान् प्रति असच्छूद्रत्वापादकं च ।

मातुलादिकन्यापरिणयस्य अनुकल्पत्वेन समर्थनं केषांचिन्मतेन—

[ पृ. ६ ] वेदाच्चैतदित्यादेरयमर्थः– यत्तृतीयादिपरिणयनमनुकल्प उक्तस्तद्वेदादेव प्रतीयते । तथा च शतपथश्रुतिः– ' तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायतेऽत उत तृतीये संगच्छावहै चतुर्थे संगच्छावहै ' इति । इयं भोक्तृभोग्ययोर्मिथः संकल्पोक्तिः । तथा ऋङ्मन्त्रेऽपि– ' तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ' इति मातुलकन्यादेर्भागिनेयादीन् प्रति भागत्वोक्त्या परिणयः सूच्यते । हे इन्द्र, असद्यज्ञे आगत्य स्वं भागं गृहाण, यतस्त्वदुद्देशेन तृप्तामाज्यादिसंस्कृतां वपा जहुः त्यक्तवन्तो वयम् । सा च ते भागः । यथा भागिनेयस्य मातुलकन्या योषा, भ्रातृपुत्रस्य पैतृष्वसेयी च यथा, तथेति तदर्थः । यद्यपि शतपथस्थोऽर्थवादस्तथाप्यस्यार्थस्याप्रसिद्धत्वात्तेन स्तुतेरसभवात् वाक्यभेदेनापूर्वार्थत्वेन 'मातुलसुता विवहेत्' इति विधिः कल्प्यः । यथा ' अधस्तात्समिधं धारयन्ननुद्रवेत् ' इत्यस्य ' उपरि हि देवेभ्यो धारयति ' इति अप्रसिद्धत्वान्न स्तावकं स्यात् अतस्तेनापि विधिः कल्प्यते, तद्वत् । न चायं रागप्राप्तस्यानुवादः, रागप्राप्तस्य भागत्वे दृष्टान्तताऽसंभवेन ऋङ्मन्त्रविरोधात् । अन्यथा दृष्टान्तवद्दार्ष्टान्तिकेऽपि विगीततासंभावना स्यात् । तस्मात्तदंशे विहितत्वं वाच्यम् । तच्च विधिकल्पनं विनाऽनुपपन्नम् । अयं च विधिः ' असपिण्डाम् ' इत्येकवाक्यतया अपूर्वविधिरेव । न च रागप्राप्ते विवाहे कथमपूर्वविधित्वम् ? ( इति वाच्यम्, ) परिसंख्यात्वेऽपि क्षत्यभावात्, परिसंख्याऽपि सकलतद्विधायकवाक्यैकवाक्यतयैवेति दिक् । ' पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुर्भ्रातुस्तथाऽऽप्तस्य गत्वा चान्द्रायणं चरेत् । एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ॥', ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव गत्वा चान्द्रायणं चरेत् ॥ ' इति मन्वादिवचनानि तु मुख्यासंभवे गौणपक्षानुष्ठातृविषयाणि । दक्षिणतोऽनाचारत्वगणनं श्राद्धे अभोजनीयत्वमप्येतद्विषयमेव । यद्वा येषां कुले देशे वा तदाचारो नास्ति तद्विषयमेतत्सर्वम् । येषां तु देशादौ तथाऽऽचारोऽस्ति तेषां न दोषः, ' येनास्य पितरो याताः ' इति मनुस्मृतेः न च मन्वादिवाक्यप्रतिषिद्धाचाराणामप्रामाण्यमेवेति स्मृतिपादस्थवार्तिकविरोधः, ' यस्तु देशानुरूपेण ' इति चतुर्विंशतिमतोक्त्या तदाचारस्य स्मृतिबोधितत्वात् । एवं ' गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ' इति कलिवर्ज्यत्वमप्यस्य स्वदेशकुलविरोधितादृशपरिणयविषयम्, मुख्यसंभवे गौणानुष्ठानविषयं वेति केचित् ।

ब्राह्मादिविवाहोढासुतनिरूपितसापिण्ड्याभावेन मातुलादिकन्यापरिणयसमर्थनमन्येषां मतेन—

[ पृ. ७ ] अन्ये तु– ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ ' इत्यनेन मातापितृसंबन्धिसपिण्डत्वसगोत्रत्वाभावयोर्विवाहप्रयोजकत्वम् । एवं च ' ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्यास्तस्याः पिण्डोदकक्रियाः । गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित् ॥ ' इति मार्कण्डेयपुराणात्, 'चतुर्थीहोममन्त्रैस्तु मांसमज्जास्थिभिः सह । एकत्वमागता भर्तुः पिण्डे गोत्रे च सूतके । स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ॥ ' इति स्मृतेः, ' अप्रत्तानां तथा स्त्रीणा सापिण्ड्यं साप्तपौरुषम् । प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः ॥ ' इति कौर्माच्च, ' यद्येकजाता बहवः ' इति शङ्खवचने पिण्डशब्दस्य सापिण्ड्यपरतया विज्ञानेश्वरेण व्याख्यानाच्च तस्याः पितृगोत्रसापिण्ड्ययोर्निवृत्तिः । एतेन दानमात्रात्सापिण्ड्यनिवृत्तौ मानाभाव इत्यपास्तम्, एकत्वं ( आ )गता ' इत्यादिवचनेन तन्निवृत्तेः । न च –इदं भर्तृसापिण्ड्यमाह, न तु पितृसापिण्ड्यनिवृत्तिम्– इति वाच्यम्, 'स्वगोत्रात् ' इत्यनेन पूर्वार्धोक्तानामुपलक्षणात्, गोत्रनिवृत्तौ तदनुगपिण्डनिवृत्तेरावश्यकत्वाच्च । अत एव दत्तकविषये सापिण्ड्यनिवृत्तौ ' गोत्ररिक्थानुगः

'पिण्डो व्यपैति ' इति सहेतुकतया तन्निवृत्तिरुक्ता । न च विवाहितानां तन्निवृत्तावपि तत्पुत्रस्य मातामहरूपदेवतैक्येन मातुलादिषु तद्दुर्वारम्, ब्राह्मादिविवाहोढापुत्राणां मातामहश्राद्धस्यैवाभावात् । अत एव कल्पसूत्रेषु तन्नोक्तम् । ' पितरो यत्र पूज्यन्ते ' इति वचनं तु गान्धर्वादिविवाहोढाविषयमेव, रिक्थादिग्राहिदौहित्रविषयं च । शिष्यादीनां पिण्डदत्वेऽपि योगरूढ्या साविण्ड्याभाववदिहापि वचनबलेन तथैव तदभावाच्च । अत एव ' पैतृष्वसेयीम् ' इति मनुवचने सपिण्डा (ण्डां) सपिण्डस्येत्यर्थकमगिन्यात्मपदं चरितार्थम् । तत्र आत्मस्य सुतामित्यध्याहारः । एवं च ब्राह्मादिविवाहोढापुत्रादेरनुकल्पत्वेन* तृतीयादिविवाहे न बाधकम् । एवं पितृष्वसृकन्याया अपि । निषेधास्तु गान्धर्वादिविवाहोढासंतानविषयाः ।

मातृसगोत्रावर्जनं गान्धर्वादिविवाहोढासुतविषयम्, दोषजनकमपि देशानुरूपं मातुलकन्यापरिणयं कुर्वतो व्यवहार्यता—

' गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ' इति ब्रह्मपुराणवाक्यविहितकलिवर्ज्यत्वं च तद्विषयमेव । मनुस्मृत्यादीनां तथाविवाहितासुतानां मातुलकन्यादिपरिणयस्तु युगान्तरकृतत्वान्न दोषाय । ये तु कृष्णप्रद्युम्नादीनां तथाऽऽचारं दृष्ट्वा कलावपि कश्चिद्देशे आसुरादिविवाहोढासुतानामपि मातुलकन्याविवाहो धर्म इति मन्यन्ते, तेषां कलिवर्ज्यत्वेन दोषे सत्यपि ' वस्तु देशानुरूपेण ' इति चतुर्विंशतिमतेन व्यवहार्यत्वं प्रतिपाद्यते । प्रद्युम्नार्जुनादौ व्यवहितसंबन्ध एवेति तु मीमांसावार्तिकादौ स्पष्टम्, तदा तु तेषां दुष्टत्वमेव नेति बोध्यम् । सर्वलोकादर्शभूतस्य धर्मव्यवस्थाप्रवर्तकस्य भगवतो दुराचारप्रवर्तकत्वमिति तु असंभवदुक्तिकमेव । [ पृ. ८ ] न च— गोवधसाहचर्यादिहितमातुलकन्यापरिणयात् प्रत्येव कलिवर्ज्यत्वबोधनं युक्तम्, अन्यथा परिसंख्यापत्तेः— इति वाच्यम्, मातृसगोत्रविवाहांशेऽप्येवमेवापत्तौ इदानींतनसकलशिष्टाचारविरोधापत्तेः । तस्मात्तद्वचने तदुभयांशे परिसंख्यैव युक्ता । ' सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि ' इति व्यासवाक्यमपि पुत्रिकापुत्रगान्धर्वादिविवाहितापुत्रविषये निषेधबोधकम्, तेषामेव मातृगोत्रप्रयुक्तेः । एवमन्येऽपि मातृगोत्रनिषेधवाक्यसंदर्भास्तत्परा एव । यत्तु ' मातृगोत्रं माध्यन्दिनीयानाम् ' इति सत्याषाढोक्तेर्ग्रंथवाक्यं माध्यन्दिनविषयमिति, तत्तु सत्याषाढग्रन्थे तस्यादर्शनाचिन्त्यम् ।

मातृष्वसेयी न परिणेया, शिष्टविरोधे मातुलसुताऽपि न परिणेया—

न चैवं मातुलसुताया इव मातृष्वसृसुताया अपि विवाहः प्रसज्येतेति वाच्यम्, शिष्टगर्हितत्वात्, 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ' इति याज्ञवल्क्योक्तेः । एवं च येषामुदीच्यादीनां मातुलकन्यापरिणयनमशिष्टगर्हितं स तैरनाचरणीय एव, उदीच्यशिष्टाचारांशभङ्गापत्त्या दाक्षिणात्यैरिव । दाक्षिणात्यैस्तु तच्छिष्टाचारानुरोधेन एव ।

आसुरादिविवाहोढासुतेनापि मातुलादिकन्या परिणेयेति मतम्; देशान्तरे न कुर्यात् —

यद्वा आसुरादिष्वपि देशविशेषेण मातुलसुतादिविवाहो धर्म्यः । तथा च बौधायनः— ' पञ्चधा विप्रतिपत्तिर्दक्षिणतः । अनुपनीतेन भार्यया च सह भोजनं, पर्युषितभोजनं, मातुलपितृष्वसृदुहितृपरिणयनमिति । अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानम् ( इति ) । इतर इतरस्मिन्कुर्वन्दुष्यति, तत्तद्देशप्रामाण्यात् । मिथ्यैतदिति गौतमः । उभयमेव नाऽऽद्रियेत, शिष्टस्मृतिविरोधात् ' इति । बृहस्पतिरपि— ' उद्वाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः । मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः ॥ उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः । प्रत्यन्तजाता गृह्णन्ति भ्रातृभार्यामभर्तृकाम् ॥ सर्वदेशव्यवहारो स्वस्वदेशानुवर्तनम् ॥ ' इति । तत्र दाक्षिणात्यादिः इतरस्मिन् उत्तरदेशे मातुलकन्यादि कुर्वन् दुष्यति, न स्वदेशे, देशविकल्पनस्य प्रामाण्यात् मन्वादेर्वा सर्वः । तस्माद्गौतमोक्तमुद्वाहेतरविषयमादि तु देशवचनानाम प्रामाण्यवर्जनेन, ' मातुलं तु यदैवे-

* अत्र ' अनुकल्पत्वेन ' इति विवक्षितम्, ब्राह्मादिविवाहेषु मातुलकन्यापरिणयस्य मुख्यकल्पत्वेन तृतीयादिविवाहस्य ' अन्ये तु ' इत्यभिप्रायात् । अथवा पूर्वोक्तरीत्या मातुलसुता सेवाद । कलिवर्ज्यस्य प्रवृत्ते द्वितीयमनुकल्पमिति बोध्यम् ।

र्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनुष्यैस्तदुक्तं धर्मं समाचरेत् ॥ ' इति बौधायनोक्तेः । तस्य व्यतिक्रमसाहसरूपत्वाच्च न श्रुत्यनुमापकत्वम् । बह्वृचब्राह्मणे तत्प्रयुक्तस्य प्रजापतिकर्मकस्य देवकर्तृकस्य दण्डस्य श्रवणाच्च तस्य व्यतिक्रमादिरूपत्वं ज्ञायते ।

ब्राह्मादिष्वपि ऐच्छिको गोत्रविकल्प इति मिताक्षरा-
मतं तत्खण्डनं च, ब्राह्मादिषु भर्तृगोत्रमेव,
आसुरादिषु पितृगोत्रमेव —

यत् (या) तु ब्राह्मादिविवाहचतुष्टयेऽपि 'स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ' इत्युक्तेः, [पृ. ९] 'पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः ' इत्युक्तेश्चैच्छिको गोत्रविकल्प इति मिताक्षरा, सा चिन्त्या, ' स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथक् ' इति जाबालिवचनात् , ' ब्राह्मादिषु विवाहेषु ' इत्यादिमार्कण्डेयपुराणवचनेन तत्समानाकारहेमाद्रयदाहृतवृद्धशातातपवचसा च व्यवस्थितविकल्पस्यैव प्रतिपादनात् । तस्मात् ब्राह्मादिषु भर्तृगोत्रमेव आसुरादिषु पितृगोत्रमेवेति व्यवस्था ।

निरुपाधिकदानमेव पितृगोत्रसापिण्ड्यनिवर्तकम्,
पुत्रिकायां न पितृगोत्रसापिण्ड्यनिवृत्तिः,
संवित्सत्त्वे एव पुत्रिकात्वम् —

ननु ' स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ' इत्युक्तेर्विवाहहोमसप्तपद्यादेरासुरादिविवाहेऽपि सत्त्वात् तत्रापि गोत्रसापिण्ड्ययोर्निवृत्तिः स्यात् । अत्र गोत्रपदं सापिण्ड्यस्याप्युपलक्षणम् , ' गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ ' इति मनुवाक्ये उत्तरार्धोपदर्शितयुक्तेः । अन्यथा सप्रवरत्वस्याप्यनिवृत्त्यापत्तेरिति चेत् , न, ' प्रत्तानां भर्तृसापिण्ड्यम् ' इति प्रागुक्तवचनेन पूर्वोत्तराङ्गसहितदानरूपविवाहस्यैव तन्निवर्तकत्वोक्तेः । तत्र सकलोत्तराङ्गसहितविवाहस्यैव तन्निवर्तकत्वे प्राप्ते ' सप्तमे पदे ' इत्यनेन तदन्तोत्तराङ्गसहितविवाहस्यैव तन्निवर्तकत्वं बोध्यते । एवं च आसुरादिषु दानाभावात्तन्निवृत्तिर्न । किंच ' एकत्वं सा गता भर्तुः ' इति पूर्वार्धे विवाहस्यैव प्रकरणादुक्तवचनाच्च सापिण्ड्यप्रयोजकत्वं कल्पममिति उत्तरार्धोक्तगोत्रनिवृत्तावपि तस्यैव प्रयोजकत्वं युक्तम् , न तु सप्तपदीमात्रस्य । तस्मान्निरुपाधिकदानमेव तन्निवर्तकम् । स्पष्टं चेदं सर्वं हेमाद्रिविज्ञानेश्वरादिग्रन्थेषु । किंच यथा दत्तकपुत्रस्थले दानादातृसापिण्ड्यनिवृत्तिः प्रतिग्रहाच्च प्रतिग्रहीतृसापिण्ड्यप्रादुर्भावः, तद्वदत्राप्युचितम् । न च तत्र स्वीयतन्निवृत्तिमात्रोद्देशेन दाने प्रवृत्तेरस्तु तन्निवृत्तिः, कन्यादाने स्वकुलोद्धाराद्युद्देशेन प्रवृत्तिरिति न तन्निवृत्तिरिति वाच्यम्, इष्टसाधनताज्ञानं विना तन्मात्रेणाप्रवृत्तेः, उक्तवचनजालेन कन्यादानेऽपि सापिण्ड्यनिवर्तकत्वानुमानात् । न चैवं पुत्रिकाकरणेऽपि दानविधिसत्त्वात्तस्यामपि मातृगोत्रादिनिवृत्तिः स्यादिति वाच्यम् , ' मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम् । प्रकुर्यात्पुत्रिकापुत्र एष धर्मः सनातनः ॥ ' इत्यादिव्यासादिवाक्यैः ' अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ' इत्यादिसंविदा च तत्र गोत्रादिनिवर्तकनिरुपाधिदानाभावात् । यत्तु विज्ञानेश्वरेण याज्ञवल्क्यवचने भ्रातृमतीमित्युक्तेः संविदं विनाऽप्यभिप्रायेण पुत्रिका भवतीति गम्यते इत्युक्तम् , तच्चिन्त्यम् , संवित्संभावनयाऽपि तथोक्तेः संभवात् ।

मातुलकन्यापरिणयविरोधिवचनानि ' असपिण्डाम् '
इति विशेषणं च आसुरादिविवाहोढासुतविषयाणि—

[ पृ. १० ] यत्तु वार्तिके मातुलकन्यापरिणयस्य दुराचारत्वमुक्तं, तत्तु आसुरादिविवाहितापुत्रविषयम् । अत एव शिष्टाचारप्रामाण्यविचारवार्तिके दाक्षिणात्यमातुलकन्याविवाहस्य स्मृतिविरुद्धत्वमाशङ्क्य " ' सर्वेषामेवमादीनां प्रतिदेशव्यवस्थया । आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥ येषा परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरे पुनः ॥ ' येषां तु पित्रादिभिरेव नानुष्ठितः स्मृतिविरुद्धस्ते परिहरन्त्येव, अपरिहरन्तो वाऽन्यैः स्वजनैः परिह्रियन्ते " इत्युक्तम् । तदप्यासुरादिविषये येषां देशे मातुलकन्यापरिणयस्य धर्म्यत्वाभिमानस्तान् प्रति । अन्येषु श्रुतिस्मृतिसंमत एव स इत्युपपादितमेव । अत एव सर्वत्र दुर्बलस्य प्रमाणस्य बाधे यदि किंचिदनर्थकं तदा विपरीतो बाधो बोध्य इति तृतीये वार्तिके उक्तम् । यत्तु ' ब्राह्मादिविवाहे सापिण्ड्यनिवृत्तौ भागिनेयी दौहित्री च परिणेया स्यात् ' इति,

तत्तु 'अस्वर्ग्यम्' इत्यादिना समाहितम्। अत एव 'प्रत्तानां भर्तृसापिण्ड्यम्' इति कौर्मेण, 'मातुर्विवाहेन तत्पितृकुले सापिण्ड्यनिवृत्तिः' इति गौडैरप्युक्तम्। तत्र विवाहो ब्राह्मादिरेव, उक्तयुक्तेः। आसुरादिविवाहितावत् पुत्रिका(-पुत्रा?)दावपि न पितृगोत्रादिनिवृत्तिः, तत्र प्रदानाभावेन परिपूर्णभार्यात्वाभावादिति मदनपारिजाते। यत्तु—दानं स्वत्वमात्रनिवर्तनस्वभावं, कन्याविषयं दानं च न तस्यापि निवर्तकं, कन्यात्वातिरिक्तस्वत्वाभावात् तस्य च दानेनानिवृत्तेर्दद्यातिर्माक्त इति, तन्न, उक्तवचनजालेन ब्राह्मादिषु गोत्रसापिण्ड्यनिवृत्तिबोधकेन ईदृग्दानस्यापि तन्निवर्तकत्वात् दत्तकवत्, अन्यथा मातृसगोत्राविवोढृसकलशिष्टानां दुराचारत्वापत्तेश्च। मातृगोत्रापरिणयननिषेधोऽपि 'मातृगोत्रां तथैव च' इत्यादिगान्धर्वादिविवाहितापुत्रविषय एव, 'मातुलस्य सुतामूढ्वा' इत्येतद्वत्। एवं च 'असपिण्डाम्' इति विशेषणं गान्धर्वादिविवाहितासुतविषयमेव, न तु ब्राह्मादिविवाहितासुतविषयम्—इति वदन्ति माधवानुयायिनः।

मातुलादिकन्यापरिणये आचारमात्रं प्रमाणमिति स्वमतम्—

वस्तुतस्तु 'पिण्डे गोत्रे च सूतके' इत्यस्य गोत्रप्रयुक्ते सूतके तत्प्रयुक्तपिण्डे च निवृत्तिरित्येवार्थः। तस्मादाचारमात्रं मातुलकन्यापरिणये प्रमाणमिति तत्त्वम्।

सापत्नकुले यावद्वचनं वाचनिकं सापिण्ड्यम्—

यत्तु सुमन्तुवाक्यम् 'पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युः' इति। माधवीये 'तद्भगिन्यो मातृष्वसारः' इति न पठितम्। आपस्तम्बधर्मसूत्रोज्ज्वलाया तु 'पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तत्सुता मातुलसुतास्तस्मात्ता नोपयन्तव्याः' इत्येवं सुमन्तुवचनं पठितम्। अत्र पितृपत्नीत्वावच्छेदेन मातृत्वातिदेश एव विधेयः, अग्रे तु तल्लब्धार्थानुवादोऽतिप्रसङ्गनिरासाय। तद्भ्रातृणा च मातुलत्वात्तत्कन्याया भगिनीत्वात्तेन तदविवाहः। अत एव 'तद्भगिन्यो मातृष्वसारः' इति न पठितम्, भ्रातॄणा मातुलत्वे तद्भगिनीना तत्त्वस्यार्थसिद्ध- [पृ. ११] त्वात्। अत एव पाठभेदे न फलभेदः। अत्र दुहितृपदेन सुता अपि। अत एवाग्रे तदपत्यानीति सामान्योक्तिः। अन्यथा भागिनेय्या तस्याविवाहो भगिन्या च विवाह इत्यसंगतं स्यात्। 'यावद्वचनं वाचनिकम्' इति परिगणितेष्वेव सापिण्ड्यं, न तु सप्तमादिपर्यन्तमिति बहवः।

सापत्नमातामहात्कूटस्थाच्चतुष्पुरुषमतिदेशिकं सापिण्ड्यमिति पूर्वपक्षः तत्खण्डनं च—

केचित्तु—अत्र वाक्यभेदपरिहाराय लक्षणया सापत्नमातामहकुले कूटस्थात्सापत्नमातामहाच्चतुष्पुरुषसापिण्ड्यमातिदेशिकं विधीयते। अतो मातुलदुहितृष्विव तत्पुत्रेष्वपि सापिण्ड्यात् कन्यायाः सापत्नमातुलपुत्रेण न विवाहः। 'तद्दुहितरः' इत्यत्र तच्छब्देन मातुलस्तद्भगिन्यश्च परामृश्यन्ते। दुहितृपदेन सापत्नमातुर्भ्रातृभगिन्योः पुत्रा अपि लक्ष्यन्ते। 'तदपत्यानि' इत्यनेन दुहित्रपत्यानीव पुत्रापत्यान्यपि गृह्यन्ते। तदयमर्थः—भ्रातृभगिनीदुहित्रपत्यशब्दैः सापत्नमातामहात् कूटस्थाच्चतुर्थमभिव्याप्य सापत्नमातामहकुलं लक्षयित्वा तेन सह यस्य सापत्नमाता तस्य मातुलमातृष्वसृभगिनीभागिनेयपदैर्लक्षितं सापिण्ड्यं विधीयते। एवं च यस्य सापत्नमाता तदपत्यस्यापि 'असपिण्डा च या मातुरसगोत्रा च या पितुः' इति मनुवचनात् सापिण्ड्याभावेऽपि निषेधो द्रष्टव्यः। अत्र चकारेण पितुरसपिण्डाऽपि गृह्यते। न चेद वचः 'पञ्चमात्सप्तमादूर्ध्वम्' इत्यनेन समानार्थम्, लक्षणाप्रसङ्गात्। न च मातृतः पञ्चे पितृतोऽष्टमेऽपि विवाहानापत्तिः। शिष्टाचारविरुद्धं 'पञ्चमात्सप्तमादूर्ध्वम्' इतियाज्ञवल्क्येन मनुवचसि च निषेधफलकोऽय पर्युदासः। तस्य च नौपदेशिकयोगरूढसापिण्ड्यविषये प्रवृत्तिः। तत्र प्रवृत्तौ हि 'पञ्चमात्सप्तमादूर्ध्वम्' इत्यभ्यनुज्ञाधिकृता वैधी प्राप्तिमुपजीव्य निषेधप्रवृत्तिर्वाच्येति शास्त्रबाधापत्तिः। आतिदेशिके तु कस्यचित्परिणयविधेरभावाद्रागप्राप्तस्यैव निषेध इति न कस्यापि बाध इति तद्विषये एवास्य प्रवृत्तिः। अत एव 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु॥' इति शङ्खवचनम्। 'पृथक्क्षेत्राः भिन्नजातीयस्त्रीषु जाताः, पृथग्जना एकजातीयभिन्नस्त्रीषु जाताः, ते एकपिण्डाः सपिण्डाः

पृथक्शौचाः। तचाशौचप्रकरणे वक्ष्यते। पृथक्शौचत्वं भिन्नजातीयपरम्। त्रिष्विति। त्रिपुरुषमेषां सापिण्ड्यमित्यर्थः' इति विज्ञानेश्वरेण व्याख्यातम्। विजातीयानां त्रिपुरुषेष्वतीतेषु निवर्तते, सजातीयानां तु सापत्नमातामहकुले त्रिपुरुषं मातामहपर्यन्तं सापिण्ड्यमिति तात्पर्यम्। तत्र तन्मातामहसंततौ कियद्दूरमविवाह इत्यस्य व्यवस्थापके सुमन्तुवाक्ये दुहित्रादिपदाना पुंलक्षणा युक्तैव– इत्याहुः।

तत्तुच्छम्। यत्र श्रुतयावच्छब्दानामेकत्रार्थे तात्पर्ये लक्षणायां *चैकरूप्येण बोद्धव्यान् प्रति प्रामाण्यं संभवति* तत्रैव लक्षणया वाक्यभेदपरिहारः। न चेह तथा। यत आद्यं वाक्यं न सापत्नमातर्युक्तसापिण्ड्यपरं, तस्या विवाहप्रसक्त्यभावेनेदृशसापिण्ड्यातिदेशो वैयर्थ्यात्। किन्तु सापत्नमातरि मुख्यमातृत्वातिदेशेन तद्भ्रात्रादिसंतानेषु मुख्यभ्रात्रादिसंतानवदेव [ पृ. १२ ] विवाहप्रतिबन्धकतापरम्। लक्षणायां च भवन्मते सापत्नपुत्रं प्रति मातुलमातृष्वसृसापिण्ड्योक्तिरफलेति नैकरूपेण प्रामाण्यसंभवः। किंच मातुलसुते तदतिदेशो व्यर्थः, सापत्नपुत्रं प्रति तस्य च सपिण्डत्वातिदेशेऽपि तं प्रत्येव तत्संतानस्य सपिण्डत्वाभावेन विवाहाप्रतिबन्धकत्वात्। न च स आशौचार्थः, सापत्नमात्रादावभिवादनार्थस्तदुपगमनयोर्मुख्यमात्रादाविव प्रायश्चित्तार्थः, तादृशमातुलमरणे आशौचार्थ इति वाच्यम्। एवं हि प्रयोजनभेदे ऐकरूप्येण प्रामाण्या*संभवः। तस्माद्वाक्यभेद एव युक्तः।* किंच '*तद्भगिन्यो* मातृष्वसारः' इति त्वन्मतेऽनर्थकम्, तृतीयचतुर्थस्थाने इव एकशीर्षसंकीर्तनेनैव चतुष्पुरुषसापिण्ड्यलाभात्। तस्मात् 'तदपत्यानि' इत्यन्ते(न्त्ये)न वाक्येन भागिनेयीत्वातिदेशोऽपि यथा तत्कन्यायां न यौक्तिको भागिनेयीकन्यात्वातिदेशः, तथा मातुलकन्यायां भगिनीत्वातिदेशोऽपि न तत्सुते भ्रातृत्वातिदेशः, 'यावद्वचनं वाचनिकम्' इत्यभियुक्तोक्तेः। विज्ञानेश्वरस्यापि शङ्खवाक्ये 'पृथक्शौचाः' इत्यारभ्य संपूर्णः श्लोको भिन्नजातीयपर इत्येव तात्पर्यम्, न तु त्वदुक्तम्, त्रिपुरुषमित्यनेन मातामहपर्यन्ततायाः अलाभाच्च। समानजातीयानां त्वेकपिण्डा इत्यनेन साप्तपौरुषं तद्बोध्यम्। भिन्नजातीये विशेषबोधकम् 'पिण्डस्त्वावर्तते' इत्यादि। अत एव माधवेन (इदं वचनं ?) 'पृथग्जनाः' इत्यस्य 'मातृभेदादसमानजातीयाः' इत्यर्थाश्रयणेन भिन्नजातीयमात्रपरतैवास्य वचनस्य व्याख्याता। त्वदुक्तव्याख्याने वचनस्य वैरूप्यं च स्यात्। एवं यस्य मातामहस्तत्सुतादिष्वपि न मनुवचनकृतनिषेधप्राप्तिः, तस्य याज्ञवल्क्यैकवाक्यत्वात्, पितुरित्यादेः पितृतः इत्यतोऽविशिष्टार्थत्वेन लक्षणाया अप्रसक्तेः, एकमूलकल्पनालाघवानुरोधेन लक्षणाया अप्युचितत्वाच्च। वस्तुतस्तद्दत्तकादिविषयमिति वक्ष्यते, *शिष्टाचाराविरुद्धयाज्ञवल्क्येन तस्य च तद्विषयताकल्पनात्।* किञ्च एवं सापत्नमातरि मातृत्वातिदेशात्तस्या मनुवचने ग्रहणापत्तौ तत्पितुः पञ्चम्यादेरपि मातृसपिण्डात्वेन तत्सापत्नपुत्रस्य निषेधापत्तौ 'पितृपत्न्यः सर्वा मातरः' इत्येव सिद्धौ शेषसुमन्तुवचनस्य वैयर्थ्यापत्तेः। तस्मात् यावद्वचनमेवाश्रयितुं युक्तम्, न तु लक्षणया चतुष्पुरुषसापिण्ड्यपरता तस्य। हरदत्तधृतपाठे तु लक्षणयाऽपि चतुष्पुरुषसापिण्ड्यं दुरुपपादम्, आशौचादिफलकत्वं चेति। "'सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत्' इत्यनेन *सपत्नीपुत्रस्य पुत्रकार्यकरत्ववत्सापत्नमातुर्न मातृत्वं नापि* तत्कार्यकरत्वं विहितम्। अतोऽमावास्यादिश्राद्धे जनन्या एव सहभावेनोद्देशः, न तत्सपत्नीनाम्। वृद्धिश्राद्धेऽपि जनन्या एवोद्देश्यत्वम्, न तत्सपत्न्याः" [ पृ. १३ ] इति वदतो हेमाद्रेरपि त्वदुक्तसुमन्तुवचनपाठः असंमतः, *किंतु हरदत्तोक्त एवेति यत्किंचिदेतत्। माधवमते तु* सुमन्तुवचनं गान्धर्वादिविषयमेवेति दिक्।

विरुद्धसंबन्धे विवाहनिषेधः–

क्वचित्तु सापिण्ड्याभावेऽपि वाचनिको विवाहनिषेधः, '*मातुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत्। पितृव्यपत्न्या भगिनीं तत्सुतां च* विवर्जयेत् ॥' इति बौधायनवचनात्, 'भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा च' इति बह्वृचगृह्यपरिशिष्टाच्च। अत्र अविवाह्येति शेषः।

केवलदत्तकस्य प्रतिग्रहीतृकुले एव सप्तपुरुषं सापिण्ड्यं
सद्गोत्रं च, जनकगोत्रसापिण्ड्ययोर्निवृत्तिरेव–

अथ दत्तकसापिण्ड्यम्– 'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः

सुतः ॥' इति मनुप्रतिपादितो दत्तकः। सः 'देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा शिशुं चाऽऽघ्राय मूर्धनि ॥' इत्यादिविधिना येन प्रतिगृहीतस्तस्य पुत्रो भवति। तत्र निरुपाधिकदानाजनकगोत्रसापिण्ड्यादिनिवृत्तिः प्रतिग्रहीतृगोत्रसापिण्ड्यादिप्राप्तिश्च, व्याप्यपुत्रत्वविधायकवचनैरेव व्यापकगोत्रसापिण्ड्यस्यापि विधेः, 'गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥' इति मनूक्तेश्च। अत्र पिण्डशब्दः सापिण्ड्यपरः, श्राद्धपरत्वे 'ददतः स्वधा' इत्यनेन पौनरुक्त्यापत्तेः। अत एव शिष्टाः प्रतिग्रहीतृगोत्रेणैव तस्य सर्वक्रियानुष्ठानं कुर्वन्ति, प्रतिग्रहीतृसपिण्डा एव च तज्जननादौ दशाहाशौचमनुतिष्ठन्ति, प्रतिग्रहीतृकुल एव तत्सपिण्डीकरणाद्याचरन्ति। अत एवास्मादेव वचनाद्दत्तकस्य जनकसापिण्ड्यनिवृत्तिरित्यमियुक्तैः सर्वैर्व्याख्यातम्।

द्व्यामुष्यायणस्य क्षेत्रजस्य उभयोः कुलयोः सप्तपुरुषसापिण्ड्यम्,
केवलस्य तु क्षेत्रिकुले एव तत्; संवित्सत्त्वे एव
क्षेत्रजस्य द्व्यामुष्यायणत्वम्—

यत्तु 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति गौतमः, तत्र 'बीजिनश्चेति' प्रतीकमुपादाय "यदा क्षेत्री वन्ध्यो रुग्णो वा प्रार्थयते 'मम क्षेत्रे पुत्रमुत्पादय' इति, यदा वा संतानक्षये गुरवो विधवायां नियुञ्जते, यथा विचित्रवीर्यक्षेत्रे सत्यवत्या व्यासं, तथा जातः पुत्रः क्षेत्रिणो बीजिनश्चेति द्व्यामुष्यायणः सः। यथाऽऽह याज्ञवल्क्यः— 'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥' इति, तद्विषयमेतत्" इति हरदत्तेन व्याख्यातम्। तथा तदेव प्रतीकमुपादाय 'यो हि नियोगात् पुत्रमुत्पादयति स बीजी' इति माधवः। मनुनाऽपि— [ पृ. १४ ] 'तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः। कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥ क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥' इत्युक्तम्। तस्यार्थः—'यदपत्यं भावि तदावयोः' इति संविदा यत्क्षेत्रं क्षेत्रस्वामिना बीजवापार्थं बीजिने दीयते तत्रोत्पन्नस्यापत्यस्य द्वावपि पितरौ फलभागिनौ। अनेन संवित्करण एव द्व्यामुष्यायणत्वमुक्तम्। 'अपुत्रेण' इत्यनेन याज्ञवल्क्यस्याप्यभिमतोऽयमर्थः। यत्तु मनुनोक्तम्— 'य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः। यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥' इति, तत्तु सत्यौरसे पुत्रे पुत्रिकाया च न ते कार्या इत्येवंपरमिति कुल्लूकभट्टेनैव व्याख्यातम्। एतेन बीजिसापिण्ड्यप्रतिपादनार्थमित्यपास्तम्।

ननु एवं वसुदेवपित्रा शूरेण कुन्तिभोजाय प्रदत्तायाः पृथाया अपत्येनार्जुनेन वसुदेवकन्याविवाहे दोषस्यैवाभावेन व्यवेतसम्बन्धादि वार्तिकोक्तमसंगतं स्यादिति चेत्, न, तस्या द्व्यामुष्यायणदत्तकत्वाभिमानेन वार्तिकप्रवृत्तेः। अत एव राणककृता तत्र 'बीजिनश्च' इत्यस्य तत्रोपन्यासः कृतः।

द्व्यामुष्यायणदत्तकप्रकाराः—

'आवयोरयम्' इति संविदा दत्तस्तु द्व्यामुष्यायणः। स तूभयगोत्र उभयसापिण्ड्यवांश्च, 'एकपिण्डे द्वावनुकीर्तयेत् प्रतिग्रहीतारं चोत्पादयितारं च' इति प्रवराध्यायवाक्यात्, 'यावन्तः पितृवर्ग्याः स्युस्तावद्भिर्दत्तकादयः। प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥' इति द्व्यामुष्यायणप्रकरणे हेमाद्र्युदाहृतकार्ष्णाजिनिवचनाच्च, संविदोभयोर्भागित्वस्योक्तमनुवाक्येन बोधनात्। न च—दातुः पुत्रान्तरसत्त्वे संवादो व्यर्थः। एकपुत्रस्य तु 'न त्वेकं पुत्रं दद्यात्' इति वसिष्ठेनैव तन्निषेधादिदमयुक्तम्। क्षेत्रजादिषु मनुवाक्येनाभिसंधिना तत्कल्पनेऽपि दत्तकादिष्वभिसंधिना तत्कल्पने मानाभावश्च— इति वाच्यम्, प्रीत्यतिशयेन तत्रापि संवादस्य संभवात् अभिसंधिना एकवस्तुन्युभयस्वामित्वस्य लोकसिद्धत्वाच्च। तथा यः कृतोपनयनो दत्तः प्रतिग्रहीत्रा चोपनयनोत्तरभाविविवाहादिसंस्कारैः संस्कृतः तस्मिन् प्रतिग्रहीतृगोत्रसंबन्धे जातेऽपि जनकगोत्रस्य न निवृत्तिः, 'अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स्वशाखाभाक् ॥' इति वसिष्ठवाक्येन उपनयनोत्तरं गृहीतस्य द्व्यामुष्यायणत्वात् गोत्रद्वयभागित्वस्यैवाविरोधात् स्वगोत्रेणेति सहयोगे तृतीया-

सत्त्वाच्चेति । सोऽपि द्व्यामुष्यायणः । एवं च उपनयनाप्राक्कृतचूडान्तसंस्कारस्यापि पुत्रस्य दत्तकस्य न द्व्यामुष्यायणत्वम्, वसिष्ठेनोपनयनोत्तरमेव शाखाद्वयभागित्वस्योक्तत्वात् । [ पृ. १५ ] द्व्यामुष्यायणत्वं तच्छाखाद्वयगोत्रद्वयभागित्वमेव । एतेन " चूडान्तसंस्कृतस्य परिग्रहे द्व्यामुष्यायणत्वमेव, गोत्रद्वयसंस्कृतत्वात् । प्रतिग्रहीत्रैव जातकर्मादिसकलसंस्कारसंस्कृतस्य चूडादिसंस्कारसंस्कृतस्य च अद्व्यामुष्यायणत्वमेव । तद्विषयमेव 'गोत्ररिक्थे' इति वचनम् " इत्यपास्तम्, वसिष्ठवाक्यविरोधात् । यत्तु कालिकापुराणे ' दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः । आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥ पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते । आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥ चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोच्यते ॥ ' इत्यादि, तत्तु ' अभावे पूर्वपूर्वेषां परान् समभिषेचयेत् ' इति पूर्वोपक्रमात् अनेकविधदत्तकादिसमवाये राज्याधिकारयोग्यतातारतम्यमात्रबोधकमिति न तद्विरोधः । एवमेव युक्तम्, अन्यथा ' गृहीत्वा पञ्चवर्षीयम् ' इत्यादिकृतचूडस्यापि परिग्रहबोधकवचनविरोधापत्तेरिति दिक् । एवं यः *सोपाधिकदानेन दत्तः प्रतिग्रहीत्रा जातकर्मादिभिः संस्कृतस्तत्रापि निरुपाधिकदानाभावेन स्वगोत्रनिवृत्तेरभावात् सोऽपि द्व्यामुष्यायणः । एतदन्यतमरूपत्वमभिसंधायैव शौङ्गशैशिरिसाङ्कृत्यादीन् प्रकृत्य 'अथेमानि द्व्यामुष्यायणकुलानि भवन्ति' इति प्रवराध्याये उक्तम् । बह्वृचब्राह्मणे ' ( ये च ? ) यथैवाङ्गिरसः सन्नुपेया तव पुत्रताम् ' इत्यादिना ' अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः ' इत्यायन्तेन जातोपनयनस्य स्वयंदत्तस्य देवरातस्य द्व्यामुष्यायणत्वमुक्तम् । ' दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणाऽऽर्षेण जातास्तेऽसमतकुलीना द्व्यामुष्यायणाः ' इत्युज्ज्वलाया हरदत्तोदाहृतपैठीनसिवाक्यं च ।

*अत्र उपाधिश्चिन्त्यः । न च संविदेव सः, तथा सति प्रथमप्रकाराभेदान्त्रित्वासंपत्तेः । नापि-द्वावेव प्रकाराविष्टौ, अयं तु प्रथमानुवाद एव- इति युज्यते, अभिमान्यनमशब्दानुपपत्तेः ।

सर्वेषां दत्तकानां द्व्यामुष्यायणत्वमिति मतं तत्खण्डनं च-

न च इदं पैठीनसिवाक्यं दत्तकमात्रविषयं, 'गोत्ररिक्थे जनयितुः ' इति मनुवचनविरोधात् । न च -गोत्रसंबन्धो हि द्वेधा, उत्पत्तिसमये जनकगोत्रानुवृत्त्या, तद्गोत्रेण संस्काराद्वा । तत्र प्रतिग्रहीत्रा संस्कारेण तद्गोत्रसंबन्धे सिद्धेऽपि औत्पत्तिकगोत्रनिवृत्तिः कथम्- इति वाच्यम्, निरुपाधिकदानेन तन्निवृत्तेः । एतद्विषयमेव 'गोत्ररिक्थे' इति वचनम् । अत एव ' क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् । पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ य एतेऽभिहिताः पुत्राः ' इत्यादि 'तस्य ते नेतरस्य तु' इति प्रागुक्तम् । ' एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥' 'श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति ।' इत्यादिभिरौरसाभावे दत्तकादीनां रिक्थसंबन्धमुक्त्वा [ पृ. १६ ] ' उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः । स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥ ' इति मनुनोक्तम् । निवृत्तजनकगोत्रत्वविनयादिगुणैर्युक्तः । इदमौरससत्त्वेऽपि, अन्यथा उपपन्न इत्यादिविशेषणवैयर्थ्यापत्तेः अपिशब्दस्वारस्याच्चेति तद्व्याख्यातारः । इतोऽपि पैठीनसेः न सर्वविषयत्वम् । ' दत्तपुत्रे यदा जाते कदाचित्त्वौरसो भवेत् । पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ ॥ ' इति स्मृत्यन्तरमप्यद्व्यामुष्यायणदत्तकविषयमेव । एतेन " दत्तकमात्रस्य द्व्यामुष्यायणत्वेऽपि ' गोत्ररिक्थे जनयितुः ' इति वाक्यं तत् जीवतो दत्तकादेरार्षेयवरणाभिवादादिषु मृतस्य श्राद्धदेवतात्वे च जनकगोत्रसंबन्धनिवृत्त्यर्थम् " इत्यपास्तम्, 'पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः' इति द्व्यामुष्यायणविषयप्रवराध्यायविरोधाच्च ।

केवलदत्तकस्यापि जनकसगोत्रासपिण्डे न विवाहः-

अद्व्यामुष्यायणदत्तकादीनां जनकगोत्रसापिण्ड्यनिवृत्तावपि जनकसगोत्रासपिण्डाविवाहो न भवति, ' असगोत्रा च या पितुः ' इति मनूक्तेः । तत्र चेन असपिण्डा च गृह्यते । अत एव मातृमातामहाभ्यां त्यक्तस्य पुत्रिकापुत्रस्य त्यागादेव सापिण्ड्यनिवृत्तौ मातृसपिण्डाविवाहप्राप्तौ इदमुच्यते- ' असपिण्डा च या मातुः ' इति मनुव्याख्यातारः । ' ये द्व्यामुष्यायणा ये च दत्तक्रीत-

कादयः । गोत्रद्वयेऽप्यनुद्वाह्याः शौङ्गशैशिरयो यथा ॥' इति संग्रहकारोक्तेश्च । अयं च निषेधो दत्तकादेरेव, न तु तत्संततेः । 'दत्तकादीनां द्यामुष्यायणवत्' इति सत्याषाढनाम्ना नवीनैः पाठाच्च ।

दत्तकजनकपुत्रीपौत्र्यौ दत्तकपुत्रेण न विवाह्ये, दत्तकपौत्रादिना जनकपौत्र्यादयो विवाह्याः—

न चैवमद्व्यामुष्यायणदत्तकपुत्रस्य दत्तकजनककन्या परिणेया स्यादिति वाच्यम्, 'पितृष्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा । आचार्यपत्नीं स्वसुतां गच्छंश्च गुरुतल्पगः ॥' इति याज्ञवल्क्येनैव परिहृतत्वात् ।

न चैवमपि 'तृतीयां वा' इति चतुर्विंशतिमतवचनेन जनकपौत्री परिणेया स्यादिति वाच्यम् । 'तृतीयां वा' इत्यस्य लिङ्गोपष्टम्भेनैव विधायकतया मातृष्वस्रीयाया इव प्रकृतेऽपि तदापत्त्यभावात् । अद्व्यामुष्यायणदत्तकपौत्रादेस्तज्जनकपौत्र्यादिविवाहस्तु भवत्येव, बाधकाभावात् । एवं च अद्व्यामुष्यायणदत्तकस्य प्रतिग्रहीतृकुले एव साप्तपौरुषं सापिण्ड्यं, न जनककुले किञ्चिदपि ।

द्व्यामुष्यायणदत्तकस्य कुलद्वये सगोत्रत्वं त्रिपुरुषसापिण्ड्यं चेति मुख्यः पक्षः, उभयत्र साप्तपुरुषसापिण्ड्यमिति पक्षान्तरम्—

द्व्यामुष्यायणदत्तकादीनां तत्सततेश्च गोत्रद्वयेऽप्यविवाहः, गोत्रद्वयसंबन्धात् । एवं तेषां सापिण्ड्यमपि कुलद्वये । तच्च त्रिपुरुषपर्यन्तम्, 'द्वे श्राद्धे कुर्यादेकं श्राद्धं वा [ पृ. १७ ] पितृनुद्दिश्यैकपिण्डे द्वौ द्वावनुकीर्तयेत् प्रतिग्रहीतारं चोत्पादयितारं चातृतीयात् पुरुषात्' इति हेमाद्र्युदाहृतप्रवराध्यायात्, 'तेषामुत्पादयितुः प्रथमः प्रवरो भवति द्वौ द्वौ निर्वापे दद्युरेकस्मिन्नेव वा द्वावनुकीर्तयेयुर्द्वितीये पुत्रस्तृतीये पौत्रः' इति तदुदाहृतहारीतसूत्राच्च । एतद्विषयमेव 'दत्तकानां तु पुत्राणां सापिण्ड्यं स्यात्त्रिपूरुषम् । जनकस्य कुले तद्वद्ग्रहीतुरिति धारणा ॥' इति संग्रहवाक्यम् । मदनपारिजाते तु उक्तहारीतसूत्रस्य 'लेपिनश्च त्रीनन्वाचक्षाण आ सप्तमादित्येके' इति शेषात् 'त्रीनन्वाचक्षाणः पित्रादिपिण्डाननुवदन् लेपिनश्च द्वौ द्वावनुकीर्तयेत् । एवं चा सप्तमात् सप्तमपर्यन्तमित्येकीयमतम्' इत्यर्थकात् कुलद्वयेऽपि साप्तपौरुषं सापिण्ड्यमिति पक्षान्तरमुक्तम् । एतदनुसारेणैव 'बीजिनश्चेति' गौतमीयं हरदत्तेन व्याख्यातम् । एवं च 'स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥' इति वृद्धगौतमनाम्ना लिखितवचनमपि "सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी' इति प्रसक्तं साप्तपौरुषं सापिण्ड्यं न विधीयते, किंतु प्रवराध्यायोक्तत्रिपुरुषमेव" इत्यर्थकं द्व्यामुष्यायणदत्तकादिविषयमेव । एतेन 'एतद्वचनबलात् प्रतिग्रहीतृकुले द्व्यामुष्यायणदत्तकस्य न साप्तपौरुषं सापिण्ड्यं, किंतु पिण्डान्वयरूपं त्रिपुरुषम् । जनककुले तु साप्तपौरुषमस्त्येव' इत्यपास्तम्, 'गोत्ररिक्थे' इति मनुवचनविरोधाच्च । एवं 'दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । सप्तमी पञ्चमी चैवं गोत्रं तत्पालकस्य च ॥' इति बृहन्मनुनाम्ना लिखितं वचनम्, तदपि 'बीजवप्तुः पालकस्य च पितृपक्षे सप्तमीपर्यन्तं, मातृपक्षे पञ्चमीपर्यन्तं, भवतीति शेषः । तच्छब्देन पूर्वोक्तसकलपरामर्शः' इति द्व्यामुष्यायणविषये हारीतोक्तपक्षान्तरानुवादकम् । यत्तु, 'धर्मार्थे वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥' इति नारदीयनाम्ना लिखितं वचनं, तदपि दानप्रतिग्रहं विनैव पुत्रवद्वर्धितेषु केवलपदेन गोत्रसंबन्धाभावपरम् । अत एव तत्तद्गोत्रेणेत्युक्तम् । तत्तत्स्वजनकगोत्रेण युता इत्यर्थः । तत्र वर्धयितृगोत्रेण संस्काराभावात् उत्पत्तिसमयप्राप्तजनकगोत्रनिवृत्तौ मानाभावात् वर्धयितृगोत्रसंबन्धाभावाच्च । वस्तुतः अनुपदोक्तवृद्धगौतमबृहन्मनुनारदवचांसि महानिबन्धेष्वदर्शनान्निर्मूलान्येव ।

केवलदत्तकसापिण्ड्यविषये अपसिद्धान्तभूतानि मतान्तराणि—

एतेन 'शुद्धदत्तकस्य प्रतिग्रहीतृकुले त्रिपुरुषं सापिण्ड्यं, जनककुले तु साप्तपौरुषं तत्' इति नन्दपण्डितोक्तिः, 'उभयकुलेऽपि साप्तपौरुषम्' इति च भट्टवासुदेवोक्तिश्चेति, 'तत् स्वजनककुले साप्तपौरुषं, पालककुले पञ्चमपर्यन्तम्' इति च गोविन्दार्णवोक्तिश्च,

' कुलद्वयेऽपि त्रिपुरुषम् ' इति च शंकरभट्टकमलाकरभट्टोक्तिस्तत्समाना अनन्तदेवोक्तिश्च परास्तेत्यास्तां तावत् ।

॥ इति सापिण्ड्यप्रदीपः ॥

## संस्कारदीपकः*

[ पृ. ११-१६ ]

अवयवान्वयसापिण्ड्यम्; तच्च मातृसंताने पञ्चपुरुषं, पितृसंताने सप्तपुरुषं च–

[ पृ. ११ ] ' अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ' इति याज्ञवल्क्यवचनेन विवाहे सपिण्डाया निषेधो गम्यते । तत्र सापिण्ड्यं एकशरीरावयवान्वयित्वरूपं विज्ञानेश्वरादिभिरुक्तम् । एकशरीरावयवान्वयित्वं च परम्परया अतिप्रसक्तं स्यात्, अतस्तदवधिं याज्ञवल्क्य आह– ' पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ' इति । अत्र मातृतः पितृतः इति पञ्चम्यन्तात् सार्वविभक्तिकस्तसिः । संताने निवर्तते इति च शेषः । पञ्चमत्वसप्तमत्वयोः अवध्याकाङ्क्षायां संतानमूलभूतः, स्वो वा अवधित्वेन अन्वेति । तथा च [ पृ. १२ ] मातृसंताने मूलपुरुषात् स्वस्माद्वा पञ्चमादूर्ध्वं सापिण्ड्यं निवर्तते, पितृसंताने च ततः सप्तमादूर्ध्वं निवर्तते इति वाक्यार्थः । योगार्थस्य उत्तरत्र संभवेऽपि रूढ्याश्रयणाच्च तत्र सपिण्डशब्दप्रवृत्तिरिति भावः । मूलपुरुषात् षष्ठः मातृसंताने मूलपुरुषस्य सपिण्डो न भवति । तुल्यन्यायात् षष्ठस्य मातृसंताने मूलपुरुषोऽपि सपिण्डो न भवति । एवं पितृसंताने मूलपुरुषादष्टमस्तस्य सपिण्डो न भवति, मूलपुरुषश्च अष्टमस्य सपिण्डो न भवति इति सिद्धम् ।

स्वसपिण्डमूलपुरुषसपिण्डत्वरूपं सापिण्ड्यं विवाहनिषेधप्रयोजकम्, न तु स्वसपिण्डसन्ततिस्थत्वम्; तस्य च एकतो निवृत्तौ अपरतो निवृत्तिरेव–

वधूवरयोश्च सापिण्ड्यं मूलपुरुषद्वारकम्, तमनन्तर्भाव्य तयोः परस्परं सापिण्ड्यसंबन्धस्य वक्तुमशक्यत्वात् । मूलपुरुषे वध्वा वरस्य वा सापिण्ड्ये निवृत्ते तद्द्वारकं सापिण्ड्यं शाखान्तरीये तदपत्ये निवर्तत एव । यथा अष्टमस्य मूलपुरुषे सापिण्ड्ये निवृत्ते शाखान्तरीये तदपत्ये अष्टमस्य सापिण्ड्यं निवर्तते । अत एव ' मूलपुरुषादष्टमः मूलपुरुषदौहित्रीमुद्वहेत् ' इति गौतमीयवृत्तौ हरदत्त आह । तुल्यन्यायात् मूलपुरुषदौहित्रोऽपि मूलपुरुषादष्टमीं उद्वोढुमर्हति, मूलपुरुषसापिण्ड्यस्यैव अष्टम्यां निवृत्तौ शाखान्तरीयतदपत्यसापिण्ड्यस्य सुतरां निवृत्तेः । मातृसंताने तु षष्ठस्य मूलपुरुषे सापिण्ड्यनिवृत्तौ शाखान्तरीये तदपत्ये तन्निवृत्तिः सुलभा । अतः षष्ठः द्वितीयादिका, द्वितीयादिको वा षष्ठीमुद्वहेत् ।

ननु– पितृसंताने द्वितीयादेः सप्तमपर्यन्तस्य सापिण्ड्यस्य मूलपुरुषे सत्वात् तत्संततिस्थत्वाच्च षष्ठयादेः कथमुद्वाहः । पूर्वोक्तमूलपुरुषदौहित्रोऽपि कथमष्टमीमुद्वहेत्, तस्या अपि सपिण्डसंततिस्थत्वात् । किंच मातृसंताने षष्ठो द्वितीयादिकाम्, पितृसंताने अष्टमः दौहित्र्यादिकां च नोद्वोढुमर्हति, वरस्य कन्यासपिण्डसंततिस्थत्वात्, तस्यापि ' एभिरेव गुणैर्युक्तः ' इति [पृ. १३] वचनेन कन्याऽसपिण्डत्वापेक्षणात् इति चेत्, अत्रोच्यते– सपिण्डसंततिस्थत्वं न विवाहनिषेधप्रयोजकम् । वचने ' असपिण्डाम् ' इत्येतावन्मात्रश्रवणेन सपिण्डत्वस्यैव उद्देश्यतावच्छेदकत्वप्रतीत्या तस्यैव तत्प्रयोजकत्वात् । स्वसपिण्डमूलपुरुषसंततिस्थत्वमेव कन्यायां वरस्य सापिण्ड्यं इति तु न युक्तिसहम्, कन्यायां मूलपुरुषसापिण्ड्ये निवृत्ते *तदपरशाखीयसापिण्ड्यानुवृत्तेः वक्तुमशक्यत्वात्*, कन्याया मूलपुरुषे सापिण्ड्यस्य निवृत्तौ वरस्य कन्यासपिण्डसंततिस्थत्वाभावेन तत्र कन्यासापिण्ड्यस्य निवृत्त्या 'अस्या असपिण्डोऽयम् ' इति व्यवहारे ' इयमस्य सपिण्डा ' इति व्यवहारस्य सर्वथाऽनुचितत्वात् । स्वपितुः मूलपुरुषादष्टमे सोदके ' नायं पितुः मूलपुरुषस्य सपिण्डः ' इति व्यवहृते स्वसापिण्ड्यस्य ' ममायं सपिण्डः ' इति व्यवहारस्य च दशाहाशौचप्रयोजकस्यापत्तेश्च । तस्मात् मातृसंताने मूलपुरुषस्य पञ्चमादूर्ध्वत्वे तद्द्वारकं वरकन्ययोः सापिण्ड्यं एकतो निवृत्तं चेत् उभयतो निवर्तते, पितृसंताने च सप्तमादूर्ध्वत्वे ।

* मादर्शपुस्तकं ' चौखम्बासंस्कृतसीरिज, काशी ' इत्यत्र मुद्रितम् ।

मण्डूकप्लुतिसापिण्ड्यनिरासः; 'मातृतः, पितृतः' इत्यादौ माता-पितृशब्दौ पितामह्यादिपितामहादिसाधारणौ; गोत्रैक्ये सप्तपुरुषं सापिण्ड्यम्, गोत्रभेदे पञ्चपुरुषमिति निष्कर्षः—

मातृद्वारकं च सापिण्ड्यं मूलपुरुषात् पञ्चमीपुत्रयो-र्निवृत्तं चेत् मण्डूकप्लुतेः नोत्तरत्रानुवर्तते, मानाभावात्। ननु उत्तरयोः सापिण्ड्यस्य पितृद्वारकत्वात् तस्य सप्तम-पर्यन्तानुवृत्तेरुक्तिरेव मानं इति चेत्, न, असमानलिङ्ग-कत्वेन 'पञ्चमात् मातृतः' इत्यनन्वयात् 'मातुः संताने पञ्चमादूर्ध्वत्वे निवृत्तिः' इत्येतावन्मात्रार्थस्यैव प्रतीत्या 'पितृतः सप्तमादूर्ध्वम्' इत्यस्य च समानगोत्रे चारि-तार्थ्यात् मण्डूकानुवृत्तिबोधने असामर्थ्यात्, 'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी' इति शङ्खवचनेन एक-गोत्र एव साप्तपौरुष्याः सपिण्डताया बोधनेन लाघवेन मूलैक्यस्य न्याय्यत्वेन तथैव कल्पयितुमुचितत्वात्, [पृ. १४] पितृद्वद्वहनीयां पितृद्वारैव संबन्धिनीं पुत्रो नोद्वहेदित्यस्य अत्यन्तानुचितत्वाच्च। 'वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः। पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते॥' इति संग्रहवाक्ये मातृशब्दो न जननीमात्रवाचकः, अपि तु 'तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातरः पूज्याः' इत्यादौ पितामह्यादिष्वपि मातृशब्दप्रयोगात् पितामह्यादि-साधारणः। तथा च मातरि कूटस्थात् पञ्चम्या, पितामह्यां चतुर्थ्यां, प्रपितामह्या तृतीयाया, वृद्धप्रपितामह्या द्वितीया-यामपि कूटस्थसापिण्ड्य निवर्तते इति तदर्थः। अतो न कश्चिद्विरोधः। एवं च मध्ये यत्र स्त्रीव्यक्तेर्न प्रवेशस्तत्रैव कूटस्थेन साप्तपौरुषं सापिण्ड्यमिति एक-गोत्र एव तत्फलितम्। अत एव 'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी' इति पूर्वोक्तं शङ्खवचनं, 'सगोत्रे खलु सापिण्ड्यं विज्ञेयं साप्तपौरुषम्। विगोत्रे तत्तु सर्वत्र विज्ञेयं पाञ्चपौरुषम्॥' इत्यापस्तम्बवचनं च संगच्छते। वधूवरयोस्तु परस्परं सापिण्ड्यस्य मूल-पुरुषद्वारकत्वात् अन्यतरस्य मूलपुरुषेण सापिण्ड्ये निवृत्ते तयोः परस्परं सापिण्ड्यं निवर्तत एवेति पूर्वोक्तं न विस्मर्तव्यम्।

पितृपक्षे साप्तपौरुषसापिण्ड्यप्रयोजनम्—

यद्यपि एकगोत्रे सगोत्रत्वादेव विवाहनिषेधः सिद्ध इति एकगोत्रे साप्तपौरुषसापिण्ड्यकथनस्य विवाहनिषेधो-पयोगो न स्पष्टं प्रतिभासते, तथापि दूरदर्शिना हृदये 'मूलपुरुषात् षष्ठः सप्तमश्च मूलपुरुषसगोत्रः मूलपुरुषात् तृतीयादिकां पञ्चमीपर्यन्तां [पृ. १५] मूलपुरुष-भिन्नगोत्रां नोद्वहेत्, मूलपुरुषात् तृतीयादिः पञ्चमपर्यन्तो मूलपुरुषभिन्नगोत्रः मूलपुरुषात् षष्ठीं सप्तमीं च मूल-पुरुषसगोत्रां नोद्वहेत्' इत्युपयोगः स्फुरत्येव, उभयत्र मूलपुरुषेण सह सापिण्ड्यस्य एकतोऽपि अनिवृत्तेः उभ-यतो निवृत्तेर्वक्तुमशक्यत्वात्। मूलपुरुषेण सह साप्त-पौरुषसापिण्ड्यानङ्गीकारे तु न पूर्वोक्तस्थलेषु विवाह-निषेधः सिध्येत्। आशौचे तु स्पष्ट एवोपयोगः। एवं द्विजेतरेष्वपि, तेषां गोत्राभावेन सगोत्रत्वप्रयुक्तनिषेधा-भावात् इत्यपि कश्चित्।

वधूवरयोः परस्परं मूलपुरुषद्वारकः मातृसंबन्धः पितृसंबन्धश्च—

वधूवरयोः मूलपुरुषेण सापिण्ड्यनिरूपिका माताऽपि चेत् तयोः स मातृसंबन्धः, पितैव चेत् पितृसंबन्धः। भिन्नगोत्रे तु मातुरवश्यं मध्ये प्रवेशात् मातृसंबन्ध एव तयोर्वक्तव्यः, एकगोत्रे एव तु पितृसंबन्धः। मूल-पुरुषस्य वरेण पितृसंबन्धित्वेऽपि मूलपुरुषभिन्नगोत्रायाः कन्याया मूलपुरुषेण मातृसंबन्धित्वात् मातृसंबन्धित्वमेव। एवं कन्यया मूलपुरुषस्य पितृसंबन्धित्वेऽपि मूलपुरुष-भिन्नगोत्रस्य तेन सह मातृसंबन्धित्वात् मातृसंबन्धित्वमेव।

स्वसपिण्डमूलपुरुषसपिण्डत्वमेव विवाहनिषेधप्रयोजकम्—

वरस्य मूलपुरुषेण पितृसापिण्ड्ये अनिवृत्ते तेनैव कन्याया मातृसापिण्ड्ये अनिवृत्ते, वरस्य मूलपुरुषेण मातृसापिण्ड्ये अनिवृत्ते तेनैव कन्यायाः पितृसापिण्ड्ये अनिवृत्ते च एकतोऽपि निवृत्तेरभावान्न तत्र विवाहः। एवं च स्वसपिण्डमूलपुरुषसपिण्डत्वमेव कन्याया स्वसा-पिण्ड्यं विवाहनिषेधप्रयोजकम्।

'चतुर्थीमुद्वहेत्' इति पराशरवचनस्य मुख्यसापिण्ड्य-तात्पर्यकं ज्ञापनम्—

'चतुर्थीमुद्वहेत् कन्यां चतुर्थः पञ्चमो वरः। परा-शरमते षष्ठीं पञ्चमो न तु पञ्चमीम्॥' इति पराशरवचने

चतुर्थीमुद्वहेदित्यत्र षष्ठादिरिति शेषः। चतुर्थः पञ्चमो वा वरः षष्ठीमुद्वहेदित्यन्वयः। तथा षष्ठादिर्वरः चतुर्थीमित्यस्योपलक्षणतया द्वितीयादिकामुद्वहेत्। चतुर्थः पञ्चमो [ पृ. १६ ] वा इत्यस्याप्युपलक्षणतया द्वितीयादिः षष्ठ्यादिकामुद्वहेत्। पञ्चमः पञ्चमीमित्यनयोरपि उपलक्षणतया पञ्चमपर्यन्तः पञ्चमीपर्यन्तां नोद्वहेत् इति वाक्यार्थः। इत्थं च आञ्जस्येन 'असपिण्डामुद्वहेत्' इति वचनेन एकवाक्यत्वसंभवे पराशरवचनस्य निर्मूलत्वकल्पनं दत्तकाद्यनुप्रवेशेन लपनं च अनुचितमेव। स्पष्टं चैतत्सर्वं मिताक्षराव्याख्यायां बालम्भट्टकृतायां, नागेशभट्टकृते सापिण्ड्यनिर्णये, सापिण्ड्यकल्पलतायां च। शिष्टाचारानुगृहीतश्चायमर्थ इत्येवं संमानितश्चायमर्थो गुरुचरणैः ( महामहोपाध्यायगङ्गाधरशास्त्रिभिः )।

रामवाजपेयिकृतवर्ज्यकन्यासंकलनमशास्त्रीयमिति कृत्वा शास्त्रीयं वर्ज्यकन्यासंकलनम्—

अत एव 'उद्वोढुः पितरौ' इत्यादिप्राचीनोक्तवर्ज्यकन्यासंकलनं परित्यज्य हरदत्तनागेशभट्टादिसंमतरीत्या वर्ज्यकन्याः संकलय्य कोष्टकेषु संबन्धप्रदर्शनपूर्वकं स्थापिताः प्रतिपत्तिसौकर्यार्थम्। यद्यपि कासांचित् सगोत्रत्वेनापि निषेधः सिध्यति, तथापि सपिण्डत्वस्यापि निषेधप्रयोजकरूपस्य तत्र सद्भावात्तदाक्रान्तानां सर्वासां परिगणय्य प्रदर्शनं कृतं इति न वैयर्थ्यमुद्भावनीयम्। विरुद्धसंबन्धत्वादिना निषिद्धाः पितृव्यपत्नीस्वस्रादयस्तु न सपिण्डत्वाक्रान्ता इति न ता अत्र प्रदर्शिता इति न न्यूनत्वशङ्कावकाशः।

संकलिताश्च कन्याः २८९। तत्र ३६ कन्याः सगोत्रत्वात् सपिण्डत्वाच्च उद्वाहे निषिद्धाः। अवशिष्टाः २५३ पुनः सपिण्डत्वेनैव इति संक्षेपः।*

* अस्माभिरन्यत्र वर्ज्यकन्यासंकलनं कृतमिति अत्र एतदीयं संकलनं न संगृहीतम्।

सापिण्ड्यशास्त्रार्थाः समाप्ताः॥

वेदाः

स्वसुर्जारः पूषा

पूषणं न्वजाश्वमुप स्तोषाम वाजिनम् ।
स्वसुर्यो जार उच्यते ॥

अजाश्वं छागवाहनं वाजिनं अन्नवन्तं बलवन्तं वा पूषणं पोषकं देवं नु अद्य उप स्तोषाम उपस्तवाम । यः पूषा स्वसुः उषसः जारः उपपतिः इति उच्यते, तं पूषणमित्यन्वयः । ऋऽसा.

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः ।
भ्रातेन्द्रस्य सखा मम ॥

मातुः निर्मात्र्या रात्रेः दिधिषुं पतिं पूषणं अब्रवं स्तौमि । स्वसुः उषसः जारश्च पूषा नः अस्माकं स्तोत्राणि शृणोतु । इन्द्रस्य भ्राता सहजातः पूषा मम स्तोतुः सखा मित्रभूतोऽस्तु । ऋऽसा.

सोदरयोः पतिपत्नीसंबन्धः सूचितो निषिद्धश्च

ओ चित्सखायं सख्या ववृत्यां
तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा
अधि क्षमि प्रतरं दीध्यानः ॥

अत्र अस्मिन्सूक्ते वैवस्वतयोर्यमयम्योः संवाद उच्यते। अस्यामृचि यमं प्रति यमी प्रोवाच । तिरः अन्तर्हित-मप्रकाशमानम् । निर्जनप्रदेशमित्यर्थः । पुरु चित् बह्वपि विस्तीर्णं च अर्णवं समुद्रैकदेशमवान्तरद्वीपं जगन्वान् गतवती यमी । चिदिति पूजार्थे । पूजितमिष्टं श्रेष्ठमित्यर्थः । सखायं गर्भवासादारभ्य सखीभूतं यमं सख्या सख्याय स्त्रीपुरुषसंपर्कजनितमित्रत्वाय ओ ववृत्यां आवर्तयामि । आभिमुख्येन स्थित्वा लज्जां परित्यज्य त्वत्संभोगं करोमीत्यर्थः । 'धर्मस्य त्वरिता गतिः' इति न्यायेन कामस्य त्वरितत्वात् । अपि च पितुः आवयोर्भविष्यतः पुत्रस्य पितृभूतस्य तवार्थाय अधि क्षमि अधि पृथिव्याम् । पृथिवीस्थानीये ममोदरे इत्यर्थः । प्रतरं प्रकृष्टम् । सर्वगुणोपेत-मित्यर्थः । नपातं गर्भलक्षणमपत्यं वेधा विधाता प्रजापतिः दीध्यानः आवयोरनुरूपस्य पुत्रस्य जननार्थमावां ध्यायन् आ दधीत, 'प्रजापतिर्धाता गर्भं दधातु ते' (ऋसं. १०।१८४।१) इत्युक्तत्वात् । ऋऽसा.

न ते सखा सख्यं वष्ट्येत-
त्सलक्ष्मा यद्विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा
दिवो धर्तार उर्विया परि ख्यन् ॥

यमः आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच । हे यमि ते तव सखा गर्भवासलक्षणेन सखीभूतो यमः एतत् ईदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं सख्यं न वष्टि न कामयते । यत् यस्मात् कारणात् यमी सलक्ष्मा समानयोनित्वलक्षणा विषुरूपा भगिनीत्वाद्विषमरूपा भवाति भवति । तस्मात्र वष्टीत्यर्थः । इदानीं 'तिरः पुरु चिदर्णवं जगन्वान्' इत्यस्य प्रतिवचनमुच्यते । महः महतः असुरस्य प्राणवतः प्रज्ञावतो वा प्रजापतेः पुत्रासः पुत्रभूताः वीराः । 'वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा' (नि. १।७) इति निरुक्तम् । शत्रूणां विविधमीरयितारः धर्तारः धारयितारः दिवः द्युलोकस्य । प्रदर्शनमेतत् । द्युप्रभृतीनां लोकानामित्यर्थः । ऋऽसा.

उशन्ति घा ते अमृतास
एतदेकस्य चित्त्यजसं मर्त्यस्य ।
नि ते मनो मनसि धाय्यस्मे
जन्युः पतिस्तन्व मा विविश्याः ॥

पुनरपि यमी यमं प्रत्युवाच । घ इति निपातोऽप्यर्थे । हे यम ते प्रसिद्धा अमृतासः प्रजापत्यादयो देवा अपि एतत् ईदृशं शास्त्रेणागम्यत्वेनोक्तं त्यजसम् । त्यज्यते परस्मै प्रदीयते इति त्यजसं दुहितृभगिन्यादिस्त्रीजातम् । उशन्ति कामयन्ते । एकस्य चित् सर्वस्य जगतः मुख्यस्यापि प्रजापत्यादेः स्वदुहितृभगिन्यादीना संबन्धोऽस्तीति शेषः । अतः कारणात् ते तव मनः चित्तं अस्मे अस्मासु ममेत्यर्थः । मनसि चित्ते नि धायि निधीयताम् । अहं त्वां कामये त्वं मामपि कामयस्वेत्यर्थः । अपि च । जन्युः

(१) ऋसं. ६।५५।४-५.
(२) ऋसं. १०।१०।१ ; असं. १८।१।१.
(१) ऋसं. १०।१०।२ ; असं. १८।१।२.
(२) ऋसं. १०।१०।३ ; असं. १८।१।३.

इति लुप्तोपममेतत् । जन्युरिव यथा जनयिता प्रजापतिः पतिः भर्ता भूत्वा स्वदुहितुः शरीरं संभोगेनाऽऽविष्टवान् तथा त्वमपि मम पतिर्भूत्वा तन्वं मदीयं शरीरं आ विविश्याः संभोगेनाऽऽविश । योनौ प्रजननप्रक्षेपोपगूहनचुम्बनादिना मां संभुङ्क्ष्वेत्यर्थः । ऋसा.

न यत्पुरा चकृमा कद्ध नूनमृता वदन्तो अनृतं रपेम ।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ॥

यमो यमीं पुनर्ब्रूते । पुरा पूर्वं प्रजापतिः यत् अगम्यागमनमपरिमितसामर्थ्योपेतत्वात् कृतवान् तथा वयं न चकृम नाकुर्म । वयं ऋता ऋतानि सत्यानि वदन्तः ब्रुवन्तः अनृतं असत्यं कद्ध कदा खलु नूनं निश्चितं रपेम वदेम । न कदाचिदपीत्यर्थः । अगम्यागमनं न कुर्म इति यावत् । अपि च अप्सु । अन्तरिक्षनामैतत् । अन्तरिक्षे स्थितः गन्धर्वः गवां रश्मीनामुदकानां वा धारयिता आदित्यः अप्या अन्तरिक्षस्था सा प्रसिद्धा योषा आदित्यस्य भार्या सरण्यूः च नः नौ आवयोः नाभिः उत्पत्तिस्थानम् । मातापितरावित्यर्थः । तत् तस्मात्कारणात् नौ आवयोः जामि बान्धवमुत्कृष्टम् । एवं सत्यावयोरगम्यागमनरूपत्वात् कर्तुमयुक्तं तस्मादेतन्न करोमीत्यभिप्रायः । ऋसा.

गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः ।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥

त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः सर्वात्मकः देवः दानादिगुणयुक्तः जनिता जनयिता प्रजापतिः गर्भे नु गर्भावस्थायामेव नौ आवां दम्पती जायापती कः कृतवान्, एकोदरे सहवासित्वात् । अस्य प्रजापतेः व्रतानि कर्माणि नकिः प्र मिनन्ति न केचित् प्रहिंसन्ति । न लोपयन्तीत्यर्थः । अतः कारणाद्गर्भावस्थायामेवाऽऽवयोः प्रजापतिकृते दम्पतित्वे सति संभोगं कुर्वित्यर्थः । अपि च नौ आवयोः अस्य इदं मातुरुदरे सहवासजनितं दम्पतित्वं पृथिवी भूमिः वेद जानाति । उत अपि च द्यौः द्युलोकोऽपि जानाति । ऋसा.

को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥

*प्रथमस्याह्नः संबन्धि अस्य इदमन्योन्यसंगमनं कः वेद* जानाति । प्रथमेऽहनि यत्क्रियते तदनुमानमाश्रित्य न कश्चिदपि ज्ञातुं शक्नोतीत्यर्थः । इह अस्मिन् प्रदेशे प्रत्यक्षतः क ईं इदं संगमनं ददर्श पश्यति कः प्र वोचत् प्रख्यापयति । न कोऽपीत्यर्थः । मित्रस्य वरुणस्य मित्रावरुणयोः बृहत् महत् धाम स्थानं अहोरात्रं यदस्ति तत्र नॄन् मनुष्यान् वीच्या नरकेण हे आहनः आहन्तर्मर्यादया हिंसितः । स्वकृतशुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातेन स्वर्गप्रापणेन निग्रहानुग्रहयोः कर्तेत्यर्थः । एवम्भूत हे यम त्वं कदु ब्रवः किं वा ब्रवीषि । ऋसा.

यमस्य मा यम्यं काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव चक्रा ॥

यमस्य तव कामः अभिलाषः यम्यं यमीं मा मां प्रति आगन् आगच्छतु । ममोपरि तव यमस्य संभोगेच्छा जायतामित्यर्थः । किमर्थम् । समाने योनौ एकस्मिन् स्थाने शय्याख्ये सहशेय्याय सहशयनार्थम् । तदनन्तरं पूर्णमनोरथा सती जायेव पत्ये यथा भार्या पत्युरर्थाय परया प्रीत्या विश्वस्ता सती रतिकामा स्वशरीरं प्रकाशयति एवं तन्वं आत्मीयं शरीरं रिरिच्यां विविच्याम् । त्वदर्थं प्रकाशयेयमित्यर्थः । किंच । चित् इति

(१) ऋसं. १०।१०।४ ; असं. १८।१।४ नूनमृता (नूनमृतं) सा नो (सा नौ).
(२) ऋसं. १०।१०।५ ; असं. १८।१।५.
(१) ऋसं. १०।१०।६ ; असं. १८।१।७.
(२) ऋसं. १०।१०।७ ; असं. १८।१।८.

पूरणः । वि वृहेव । 'वृहू उद्यमने' धर्मार्थकामान् विविधमुद्यच्छावः । तत्र दृष्टान्तः । रथ्येव चक्रा, रथस्यावयवभूते चक्रे यथा रथमुद्यच्छतस्तद्वत् ।

ऋसा.

[1] न तिष्ठन्ति न नि मिषन्त्येते
देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि
तूयं तेन वि वृह रथ्येव चक्रा ॥

यम्या प्रख्यातो यमः पुनराह । इह अस्मिन् लोके देवानां संबन्धिनः ये स्पशः अहोरात्रादयश्चाराः चरन्ति सर्वेषां शुभाशुभलक्षणकर्मप्रत्यवेक्षणार्थं परिभ्रमन्ति एते चाराः क्षणमात्रमपि चरणव्यापाररहिता न तिष्ठन्ति । न नि मिषन्ति मेषणं न कुर्वन्ति । शुभमशुभं वा यः करोति तं निरीक्षन्ते चेत्यर्थः । हे आहनः ममापहन्त्रि असद्भाषणेन दुःखयित्रि त्वं मत् मत्तः अन्येन त्वत्सदृशेन सह तूयं क्षिप्रं याहि संगच्छ । गत्वा च तेन वि वृह धर्मार्थकामानुद्यच्छ । तत्र दृष्टान्तः । रथ्येव चक्रा, यथा रथावयवभूते चक्रे रथमुद्यच्छतस्तद्वत् । ऋसा.

[2] रात्रीभिरस्मा अहभिर्दशस्येत्
सूर्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू
यमीर्यमस्य बिभृयादजामि ॥

रात्रिभिः अहभिः अहोरात्रयोः अस्मै यमाय कल्पितं भागं सर्वो यजमानः दशस्येत् प्रयच्छतु । सूर्यस्य संबन्धि चक्षुः तेजः मुहुः मुहुः अस्मै यमाय उन्मिमीयात् उदेतु । दिवा पृथिव्या द्यावापृथिवीभ्यां सह मिथुना मिथुनौ सबन्धू समानबन्धू अहोरात्रे अस्मै यमाय । एतज्ज्ञात्वा इयं यमीः यमस्य अजामि अभ्रातरं बिभृयात् धारयतु । यत्नेन परिगृह्णात्वित्यर्थः ।

ऋसा.

[3] आ घा ता गच्छानुत्तरा युगानि
यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहु-
मन्यमिच्छस्व सुभगे पतिं मत् ॥

यत्र येषु कालेषु जामयः भगिन्यः अजामि अभ्रातरं पतिं कृणवन् करिष्यन्ति वा तानि उत्तरा उत्तराणि युगानि कालविशेषाः आ गच्छान् आगमिष्यन्ति । घ इति पूरणः । यस्मादेवं तस्माद्धे सुभगे त्वमिदानीं मत् मत्तः अन्यं पतिं भर्तारं इच्छस्व कामयस्व । तदनन्तरं वृषभाय तव योनौ रेतः सेक्त्रे पुरुषाय आत्मीयं बाहुं उप बर्बृहि । शयनकाल उपबर्हणं कुरु । ऋसा.

[1] किं भ्रातासद्यदनाथं भवाति
किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वेतद्रपामि
तन्वा मे तन्वं सं पिपृग्धि ॥

यमी यमेन प्रत्याख्याता पुनराह । यत् यस्मिन् भ्रातरि सति स्वस्रादिकं अनाथं नाथरहितं भवति सः भ्राता किं असत् । किं भवति । न भवतीत्यर्थः । किंच यस्यां भगिन्यां सत्यां भ्रातरं निर्ऋतिः दुःखं निगच्छात् नियमेन गच्छति प्राप्नोति सा स्वसा किमु किं वा भवति । भ्रातृभगिन्योश्च परस्परं प्रीतिर्येन केनचिदुपायेनावश्यं कार्येत्यभिप्रायः । साऽहं काममूता कामेन मूर्च्छिता सती बहु नानाप्रकारं एतत् ईदृशमुक्तं वक्ष्यमाणं च रपामि प्रलपामि । एतज्ज्ञात्वा मे मम तन्वा शरीरेण तन्वं शरीरं सं पिपृग्धि संपर्चय संभोगेन संश्लेषय । मां सम्यग्भुङ्क्ष्व इत्यर्थः । ऋसा.

[2] न वा उ ते तन्वा तन्वं सं पपृच्यां
पापमाहुर्यः स्वसारं निगच्छात् ।
अन्येन मत्प्रमुदः कल्पयस्व
न ते भ्राता सुभगे वष्ट्येतत् ॥

यमो यमीं प्रत्युक्तवान् । हे यमि ते तव तन्वा शरीरेण तन्वं आत्मीयं शरीरं न वै सं पपृच्यां नैव संपर्चयामि । नैवाहं त्वां संभोक्तुमिच्छामीत्यर्थः । यः

(१) ऋसं. १०।१०।८ ; असं. १८।१।९.

(२) ऋसं. १०।१०।९ ; असं. १८।१।१० बिभृया (बिभृता).

(३) ऋसं. १०।१०।१० ; असं. १८।१।११ ; नि. ४।२०.

(१) ऋसं. १०।१०।११ ; असं. १८।१।१२.

(२) ऋसं. १०।१०।१२ ; असं. १८।१।१३ पूर्वार्धे (न वै ते नाथं यम्यत्राहमस्मि न ते तनूं तन्वा३ सं पपृच्याम् ।) ; १८।१।१४ तन्वा तन्वं (तनूं तन्वा) पृ.

भ्राता स्वसारं भगिनीं निगच्छात् नियमेनोपगच्छति। संभुङ्क्ते इत्यर्थः। तं पापं पापकारिणं आहुः। शिष्टा वदन्ति। एतज्ज्ञात्वा हे सुभगे सुष्ठु भजनीये हे यमि त्वं मत् मत्तः अन्येन त्वद्योग्येन पुरुषेण सह प्रमुदः संभोगलक्षणान् प्रहर्षान् कल्पयस्व समर्थय। ते तव भ्राता यमः एतत् ईदृशं त्वया सह मैथुनं कर्तुं न वष्टि न कामयते, नेच्छति। ऋसा.

बतो बतासि यम नैव ते
मनो हृदयं चाविदाम।
अन्या किल त्वां कक्ष्येव युक्तं
परि ष्वजाते लिबुजेव वृक्षम्॥

यमी प्रत्युवाच। हे यम त्वं बतः दुर्बलः असि। बत इति निपातः खेदानुकम्पयोः। अनुकम्प्यश्चासि। ते त्वदीयं मनः मनोगतं संकल्पं हृदयं च बुद्धिगतमध्यवसायं च नैव अविदाम वयं न जानीम एव। मत्तः अन्या काचित् स्त्री त्वां परि ष्वजाते किल। तत्र दृष्टान्तद्वयमुच्यते। कक्ष्येव युक्तम्। यथा कक्ष्या रज्जुः युक्तं आत्मना संबद्धमश्वं परिष्वजते तद्वत्। लिबुजेव वृक्षम्। यथा लिबुजा व्रततिः गाढं वृक्षं परिष्वजते तद्वत् च। अन्यस्याः स्त्रियामासक्तस्त्वं मां परिष्वङ्क्तुं नेच्छसीत्यर्थः। ऋसा.

अन्यमू षु त्वं यम्यन्य उ त्वां
परि ष्वजाते लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा स वा
तवाधा कृणुष्व संविदं सुभद्राम्॥

यमः पुनरप्याह। हे यमि त्वं अन्यमु अन्यं पुरुषमेव सु सुष्ठु परिष्वज। अन्य उ अन्योऽपि पुरुषः त्वा परि ष्वजाते। तत्र दृष्टान्तः। लिबुजेव वृक्षम्। यथा वल्ली गाढं वृक्षं परिष्वजते तद्वत्। तथा सति। वाशब्दः समुच्चये। त्वं तस्य च पुरुषस्य मनः इच्छ कामय। तस्य त्वं वशवर्तिनी भवेत्यर्थः। स च पुरुषः तव मनः इच्छतु। अधा अथ परस्परवशवर्तित्वानन्तरं त्वं तेन सह सुभद्रां सुकल्याणीं संविदं परस्परसंभोगसुखसंविर्त्ति कृणुष्व कुरुष्व। ऋसा.

पित्रादुहितृसंभोगलिङ्गम्

प्रथिष्ट यस्य वीरकर्ममिष्ण-
दनुष्ठितं नु नर्यो अपौहत्।
पुनस्तदा वृहति यत्कनाया
दुहितुरा अनुभृतमनर्वा॥

यथा स्वांशेन भगवान् रुद्रः प्रजापतिर्वास्तोष्पतिं रुद्रमसृजत् तदेतदादिभिस्तिसृभिर्वदति। यस्य प्रजापतेः इष्णत् एषणवत् वीरकर्मम्। लिङ्गव्यत्ययः। वीरकर्म। रेत इत्यर्थः। येन रेतसोत्पन्ना वीरा भवन्ति तादृमेतः प्रथिष्ट प्रथितमासीत् तदेतः अनुष्ठितं प्रजापतिनाऽपत्यार्थं निषिक्तं नर्यः नरेभ्यो हितो यद्वा नेतृभ्यो देवेभ्यो हितो रुद्रः अपौहत् अपोहति। तदेवाह। पुनस्तत् रेतः आ वृहति सर्वत उत्खिदति उद्गमयति पुरुषाकारेण स्वयमुत्पन्नः सन्। कीदृशं रेतः। यत् रेतः कनायाः कान्तायाः दुहितुः स्वपुत्र्याः, तस्यामित्यर्थः। तत्र प्रजापतिना अनुभृतं आः आसीत्। कीदृशो रुद्रः। अनर्वा अन्यस्मिन्नप्रत्यृतः। 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये' (ऐब्रा. १३।९) इति ब्राह्मणम्। ऋसा.

मध्या यत्कर्त्वमभवदभीके
कामं कृण्वाने पितरि युवत्याम्।
मनानग्रेतो जहतुर्वियन्ता
सानौ निषिक्तं सुकृतस्य योनौ॥

कामं यथेच्छं कृण्वाने कुर्वाणे पितरि प्रजापतौ युवत्यां दुहितरि उषसि दिवि वा। 'दिवमित्यन्ये' इति हि ब्राह्मणं प्रदर्शितम्। मध्या तयोर्मध्येऽन्तरिक्षमध्ये वा अभीके समीपे यत् कर्त्वं कर्म अभवत् मिथुनीभावाख्यं तदानीं मनानक् अल्पं रेतः जहतुः त्यक्तवन्तौ। किं कुर्वाणाविति तत्राऽऽह। वियन्तौ परस्परमभिगच्छन्तौ। प्रजापतिना सानौ समुच्छ्रिते स्थाने सुकृतस्य यज्ञस्य योनौ

(१) ऋसं. १०।१०।१३; असं. १८।१।१५ ष्वजाते (ष्वजातै); नि. ६।२८.

(२) ऋसं. १०।१०।१४; असं. १८।१।१६ षु त्वं (षु) ष्वजाते (ष्वजातै) संविदं (संविदं); नि. ११।३४.

(१) ऋसं १०।६१।५—७.

निषिक्तं आसीदित्यर्थः । ततो रुद्र उत्पन्न इत्यर्थः ।

ऋसा.

पिता यत्स्वां दुहितरमधिष्कन्
क्ष्मया रेतः संजग्मानो नि षिञ्चत् ।
स्वाध्योऽजनयन् ब्रह्म देवा
वास्तोष्पतिं व्रतपां निरतक्षन् ॥

पिता प्रजापतिः यत् यदा स्वां दुहितरं दिवमुषसं वा अधिष्कन् अध्यस्कन्दत् तदानीमेव क्ष्मया पृथिव्या सह संजग्मानः संगच्छमानः प्रजापतिरस्मिन् लोके रोहितं भूतामृश्यो भूत्वा रेतः नि षिञ्चत् निषेकमकरोत् । 'तामृश्यो भूत्वा रोहितं भूतामभ्यैत्' (ऐब्रा. १३।९) इति ब्राह्मणम् । तदानीं स्वाध्यः सुध्यानाः सुकर्माणो वा देवा ब्रह्म अजनयन् उदपादयन् । किं तद्ब्रह्मेति तदाह । वास्तोष्पतिं यज्ञवास्तुस्वामिनं व्रतपा व्रतस्य कर्मणः रक्षः-प्रभृतिभ्यः पालकं निरतक्षन् समुदपादयन् । यज्ञवास्तु-स्वामित्वं दत्त्वा कर्मरक्षकत्वेन निर्मितवन्त इत्यर्थः ।

ऋसा.

भ्रातुः पतित्वं जारत्वं वा

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥

हे योषित् यः राक्षसः भ्राता भ्रातृरूपो भूत्वा पतिः भर्तृरूपो वा भूत्वा त्वा निपद्यते अभिगच्छति । अथवा जारः उपपतिरूपो वा भूत्वा अभिगच्छति । एवंभूतः यः राक्षसादिः ते तव प्रजां जिघांसति हन्तुमिच्छति । स्पष्टमन्यत् ।

ऋसा.

मातुलकन्या पैतृष्वसेयी च विवाहार्हा

आ[2] याहीन्द्र पथिभिरीळितेभि-
र्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुलस्येव योषा
भागस्ते पैतृष्वसेयी वपामिव ॥

(१) ऋसं. १०।१६२।५; असं. २०।९६।१५; मागृ. २।१८।२.

(२) ऋमं. (खिल.) १५।६.

भ्रातृभगिनीविवाहलिङ्गम्

एष[1] ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व ॥

अम्बिकया पार्वत्या ।

तैसा.

दुहितृगमनम्

प्रजापतिर्वै[2] स्वां दुहितरमभ्यैदुषसं तस्य रेतः परापतत् ॥

पितादुहितृसंभोगलिङ्गम्

प्रजापतिर्वै[3] स्वां दुहितरमभ्यध्यायत् । दिव-मित्यन्य आहुः । उषसमित्यन्ये । तामृश्यो भूत्वा रोहितं भूतामभ्यैत् । तं देवा अपश्यन्नकृतं वै प्रजापतिः करोतीति । ते तमैच्छन्य एनमारिष्यति । एतमन्योन्यस्मिन्नाविन्दन् । तेषां या एव घोरतमा-स्तन्व आसंस्ता एकधा समभरन् । ताः संभृता एष देवोऽभवत् । तदस्यैतद् भूतवन्नाम ॥

पुरा कदाचित्प्रजापतिः स्वकीयां दुहितरमभिलक्ष्य भार्यात्वेन ध्यानमकरोत् । तस्यां दुहितरि महर्षीणां मतभेद आसीत् । अन्ये केचन महर्षयो दिवं द्युलोक-देवतां ध्यातवानित्याहुः । अपरे तु महर्षयः उषसं उषः-कालदेवतां ध्यातवानित्याहुः । ऋश्यः मृगविशेषः । तथा चाभिधानकार आह— 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इति । स प्रजापतिस्तथाविधः ऋश्योऽभूत् । सा च दुहिता रोहितं लोहितं भूता प्राप्ता । ऋतुमती जाता इत्यर्थः । तादृशीं तां दुहितरं अभ्यैत् अभिगतवान् मिथुनधर्मं प्राप्तवानित्यर्थः । तं दुहितृगामिनं प्रजापतिं देवाः परस्परमिदमब्रुवन् । अयं प्रजापतिरकृतं वै, अकर्तव्यमेव निषिद्धाचरणं करोतीति विचार्य यः पुरुषः एनं प्रजापतिं आरिष्यति, आर्तिं प्रापयितुं क्षमस्तादृशं पुरुषमैच्छन् अन्वेषणं कृतवन्तः । कृत्वा चान्योन्यस्मिं-स्तेषां मध्ये तं प्रजापतिघातकं नाविन्दन् नालभन्त त्वं

(१) तैसं. १।८।६।१; कासं. ९।७, ३६।१४; कसं. ८।१०; मैसं. १।१०।४,२०; शुसं ३।५७; तैब्रा. १।६।१०।४; शब्रा. २।६।२।९-१०; मारश्रौ. ८।१८।१, १२।२३।११.

(२) मैसं. ४।२।१२.

(३) ऐब्रा. १३।९.

हन्तुं शक्नोपि त्वं हन्तुमिति परस्परं पृष्ट्वैकैकस्य शक्तिराहित्यं निश्चितवन्तः । सर्वेषु देवेषु या एव काश्चिद्‌घोरतमास्तन्वः अत्युग्राणि शरीराण्यासंस्ताः सर्वा एकधा समभरन् मेलयित्वैकं शरीरं कृतवन्तः, ता घोरतमास्तन्वः संभृता एकत्वेन् संपादिताः सत्य एष देवोऽभवत् । एष इति हस्तेन प्रदर्श्य रुद्रोऽभिधीयते । तत् तस्मादेव कारणात् अस्य रुद्रस्य एतल्लोकप्रसिद्धं भूतवत् भूतशब्दोपेतं नाम संपन्नम् । भूतपतिरिति भूतवन्नाम । तच्च तस्य भवत्यर्थानुगमाद्युक्तम् । ऐब्रासा.

भवति वै स योऽस्यैतदेवं नाम वेद ॥

एतन्नामवेदनं प्रशंसति– भवतीति । वेदिता भवति वै भूतिमानेव संपद्यते । ऐब्रासा.

तं देवा अब्रुवन् । अयं वै प्रजापतिरकृतमकः । इमं विध्येति । स तथेत्यब्रवीत् । स वै वो वरं वृणा इति । वृणीष्वेति । स एतमेव वरमवृणीत पशूनामाधिपत्यम् । तदस्यैतत्पशुमन्नाम ॥

अथ तेन रुद्रेण सह देवानां संवादं दर्शयति– तमिति । तं रुद्रं देवा एवमब्रुवन् । हे रुद्र अयं प्रजापतिरकृतमकः निषिद्धाचरणं कृतवान्, तस्मादिमं बाणेन प्रहरेति । स रुद्रस्तदङ्गीकृत्य उत्कोचत्वेन पशूनामाधिपत्यं कृतवान् । तस्मात्कारणादस्य रुद्रस्यैतल्लोकप्रसिद्धं पशुपतिरित्येतादृशं पशुशब्दोपेतं नाम संपन्नम् । ऐब्रासा.

पशुमान् भवति योऽस्यैतदेवं नाम वेद ॥

तद्वेदनं प्रशंसति– पशुमानिति । ऐब्रासा.

सोदरभ्रातृभगिन्योर्विवाहलिङ्गम्

प्रजापतिः प्रजातिकामस्तपोऽतप्यत । तस्मात्तप्तात्पञ्चाजायन्त । अग्निर्वायुरादित्यश्चन्द्रमा उषाः पञ्चमी । तानब्रवीत् । यूयमपि तप्यध्वमिति । तेऽदीक्षन्त । तान् दीक्षितांस्तेपानानुषाः प्राजापत्याप्सरोरूपं कृत्वा पुरस्तात्प्रत्युदैत् । तस्यामेषां मनः समपतत् । ते रेतोऽसिञ्चन्त । ते प्रजापतिं पितरमेत्याब्रुवन् । रेतो वा असिञ्चाम । इदं नो मामुया भूदिति । स प्रजापतिर्हिरण्मयं चमसमकरोदिषुमात्रमूर्ध्वमेवं तिर्यञ्चम् । तस्मिन्नेतत्समसिञ्चत् । तत उदतिष्ठत्सहस्राक्षः सहस्रपात्सहस्रेण प्रतिहिताभिः ॥

( १ ) शाब्रा. ६।१.

मनोः स्वदुहित्रा विवाहः

तां॰ ह मनुरुवाच काऽसीति । तव दुहितेति । कथं भगवति मम दुहितेति । या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः । साशीरस्मि । तां मा यज्ञेऽवकल्पय । यज्ञे चेद्वै मावकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि । यामु मया काञ्चाऽऽशिषमाशासिष्यसे सा ते सर्वा समर्द्धिष्यते । इति तामेतन्मध्ये यज्ञस्यावाकल्पयत् । मध्यं॰ ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् ॥

तां ह मनुरिति । अजीजनथाः जनितवानसि । आशीरस्मि आशीर्हेतुत्वादाशीः । अवकल्पय साङ्गतया समर्थय, समर्थां कुरु । मया हेतुभूतया मय्युपहूयमानायां 'उपहूतोऽयं यजमानः' इत्येतेन होतृवचनेन यां *आशिषं आशासिष्यसे इति तां एतत् एतां* मैत्रावरुणीं मानवीं घृतपदीं मध्ये यज्ञस्य यज्ञस्यान्तः, समर्थयन् प्रयाजानुयाजान् अन्तरा । इति इडायागः । शब्रासा.

तयार्चञ्छ्राम्यंश्चचार प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिः । याम्वेनया काञ्चाऽऽशिषमाशास्त साऽस्मै सर्वा समार्द्ध्यत ॥

तयार्चन् । तया सह दर्शपूर्णमासयोर्देवार्चनन्तल्लक्षणं तपः श्राम्यन् कुर्वन् चचार । तया हेतुभूतया इमां प्रजातिं, प्रजायते इति प्रजातिः । ततः 'याम्वेनयां' इत्यादि तत्करणफलम् । शब्रासा.

सापिण्ड्यविवाहगमकम्

तेद्वा एतत् । समान एव कर्मन् व्याक्रियते । तस्मादु समानादेव पुरुषादत्ता चाद्यश्च जायेते । इदं॰ हि चतुर्थे पुरुषे तृतीये संगच्छामह इति विदेवं दीव्यमाना जात्या आसत एतस्मादु तत् ॥

( १ ) शब्रा. १।८।१।९-१०.
( २ ) शब्रा. १।८।३।६.

यस्मात् एतत् समाने अभिन्ने, व्यूहनकर्मणि विलक्षणं आक्रियते अभिव्यज्यते भोक्तृत्वं भोग्यत्वं च, तस्माद्यज्ञानुकारेण भूतेष्वपि समानात् अभिन्नात् पुरुषात् अत्ता च भोक्ता च आद्यश्च भोग्यश्च भर्ता च भार्या च जायेते । यथा समाने कर्मणि जुहूपभृतौ तथैव । ननु समानजातीययोर्विवाह एव नास्ति, कुतो भोक्तृभोग्यभावः ? पशुन्यायेन सति साऽपि कश्चिद्वर्तेत, न स यज्ञानुकारः स्यात् । किं तर्हि ? यजमानैकनानुकारः स्यात् । सत्यं, एवं व्यवहारस्य अन्याय्यस्यापि यज्ञमूलत्वात् । तमेव व्यवहारं दर्शयति– इदं हीति । ( यस्मात् इदं प्रत्यक्षं विलक्षणं आसते अधुनाऽपि ज्ञात्याः समानजातीयाः ) दीव्यमानाः रममाणाः परिलुष्टान्तःकरणाः नाकार्यकारिण इवापरिलूनाः आसते कथं दीव्यमानाः ? विदेवं दिवेर्व्यवहारार्थस्य अन्योन्यं भोक्तारो भोग्यैः सह, भोग्या भोक्तृभिः सह दीव्यामहे व्यवहृत्य व्यवहृत्य । कथं व्यवहृत्य ? व्यवहर्तृणामभिप्रायेण । व्यवहारं दर्शयति– इदं प्रत्यक्षमेव विवाहेन वयं संगच्छामहे । एकस्मादेव पुरुषान्मूलतः उत्पद्य पुनरेव कुटुम्बारम्भेण समानापत्यारम्भेण च संयुज्यामह इति भर्तॄणां भार्याणां चाभिप्रायवचनम् । एवं व्यवहारं दीव्यमाना आसते । ते क्व पुनः संगच्छामह इत्याहुः, किमनन्तर एव पुरुषे ? नेत्याह– चतुर्थे तृतीये । वाशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः । चतुर्थे वा तृतीये वा इत्यर्थः । तथा च काण्वानां 'तृतीये चतुर्थे वा' इति श्रूयते । ( तृतीये पुरुषे संगच्छामह इति, चतुर्थे संगच्छामह इति च युज्यते । ) चतुर्थे संगच्छामह इति सौराष्ट्राणां व्यवहारः । तृतीये संगच्छामह इति दाक्षिणात्यानाम् । ते हि मातुलदुहितृषु पितृष्वसृपुत्रेषु संगच्छन्ते । ते च मूलपुरुषात् गण्यमानास्तृतीया भवन्ति । तत्तैतस्माल्लिङ्गादेव दीव्यमाना आसत इति । तच्च न ज्ञात्याः न ज्ञातीयाः, सदृशाः, श्रेयसः कर्मणश्चतुरन्तरस्याभ्यन्तरा इत्यर्थः । ततः किम् ? एतस्मादेव स्रुग्व्यूहनात् कारणात् तथा भवतीति शेषः ।

एवं चानुष्ठिते कथं विवहनमिति समुदये श्रुतितो निर्णयः । स्थाली चाङ्गाराश्चैकम्, स्रुक् च स्रुवश्चेत्येकम्, आहवनीयश्च समिचेत्येकम्, आहुतिश्च स्वाहाकारश्चेत्येकमित्थं चत्वारः । चतुर्थे निवृत्ते तृतीये च निवृत्ते वयं संगच्छामह इति शिष्टानां समुदयः । चतुर्थे प्रयाजे समानीय, पञ्चमेऽनुयाजे च समानीय, ततो व्यूहनमिति देशव्यवहृत्यनुसारात्, न शास्त्रप्रवृत्तेः । यथा 'मातुलस्य सुतां केचित् पितृष्वसृसुतादिकाम् । विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम् ॥' इति । 'आ याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥' ( ऋसं. १०।१०।५ ) इति ऋग्वेदे विवहनमेव । 'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥' ( मस्मृ. ३।५ ) इति मनोः संगत्या मूलतः षण्मिथुनान्यतीत्य विवहेदिति श्रौतं विवहनम् । 'यो ह वा अग्निहोत्रे षण्मिथुनानि वेद, मिथुनेन मिथुनेन ह प्रजायते' ( शब्रा. ११।२।५।१ ) इति षण्मिथुनानि । इत्थं मिथुनसंगत्या परिणयनमिति ज्ञात्याः । न चेयं श्रुतिर्विवाहविषया, किन्त्वियत्संतानावध्यविभागप्रशंसा । यथा जुहूपभृतौ चिरकालं सह स्थिते, तथा तृतीयचतुर्थसंतानावधि सह स्थितिः । ततः किम् ? एतस्मात् एवंप्रकारेण स्रुग्व्यूहनात् तत् विवहनम् । उ इति 'अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण' ( नि. १।२।४ ) इति यास्कभणितेरुकारो विनिग्रहार्थीयः । एवं चात्र विनिग्रहार्थः । यथा मूलात् षडतीत्य ततो विवहनम् । मूलात् षष्ठे च पञ्चातीत्य, इत्येवं प्रदर्शनपरं स्त्रीमिथुने पुंमिथुने चेति तत् तथा भवतीति विशेषः । शब्रासा.

सोदरविवाहसूचिकाऽऽख्यायिका

**स वै नैव रेमे । तस्मादेकाकी न रमते । स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ ॥**

**स इममेवाऽऽत्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी चाभवताम् । तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्यः । तस्मादयमाकाशः**

( १ ) शब्रा. १४।४।२।४-५ ; बृउ. १।४।३.

स्त्रिया पूर्यत एव । ताः समभवत् । ततो मनुष्या अजायन्त ॥*

आत्मैवेदमग्र आसीदेक एव । सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति । एतावान्वै कामः । नेच्छंश्चनातो भूयो विन्देत् । तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते । तस्यो कृत्स्नता ॥

स्वसृविवाहलिङ्गम्

[2]सेयमृगस्मिन् सामन् मिथुनमैच्छत् । तामपृच्छत् का त्वमसीति । साऽहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति । तद्यत्सा चाऽमश्च तत् सामाऽभवत्तत्साम्नः सामत्वम् । तौ वै संभवावेति । नेत्यब्रवीत्स्वसा वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति । साऽब्रवीन्न वै तं विन्दामि येन संभवेयम् । त्वयैव संभवानीति । सा वै पुनीष्वेत्यब्रवीत् । अपूता वा असीति । साऽपुनीत यदिदं विप्रा वदन्ति तेन ॥

[3]सेयमृगिदं सामाऽभ्यप्लवत । तामपृच्छत् का त्वमसीति । साऽहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति । तद्यत्सा चाऽमश्च तत्साम्नः सामत्वम् । तौ वै संभवावेति । नेत्यब्रवीत्स्वसा वै मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति । सा पराप्लवत मिथुनमिच्छमाना । सा समाः सहस्रं सप्ततीः पर्यप्लवत । तदेष श्लोकः–

'स्त्री रमैवाऽग्रे संचरन्तीच्छन्ती सलिले पतिम् ।
समाः सहस्रं सप्ततीस्ततोऽजायत पश्यतः ॥' इति ।

असौ वा आदित्यः पश्यतः । एष एव तदजायत । एतेन हि पश्यति । साऽविंत्त्वा न्यप्लवत । साऽब्रवीन्न वै तं विन्दामि येन संभवेयम् । त्वयैव संभवानीति । सा वै द्वितीयामिच्छस्वेत्यब्रवीन्न वै मैकोऽयंस्यसीति । सा द्वितीयां विंत्त्वा न्यप्लवत । (तृतीयाम्) इच्छस्वैवेत्यब्रवीन्नो वाव मा द्वे उद्यंस्यथ इति । सा तृतीयां विंत्त्वा न्यप्लवत । सोऽब्रवीदत्र वै मोद्यंस्यथेति ॥

सापिण्ड्यविवाहसूचिकाऽऽख्यायिका

तदेतन्मिथुनं यद् वाक् च प्राणश्च । मिथुनं ऋक्सामे । आचतुरं वाव मिथुनं प्रजननम् । यादृशस्यो ह वै रेतो भवति तादृशं संभवति । यदि वै पुरुषस्य पुरुष एव यदि गोर्गौरेव, यद्यश्वस्याश्व एव यदि मृगस्य मृग एव । यस्यैव रेतो भवति तदेव संभवति ॥

## आश्वलायनगृह्यपरिशिष्टम्

सापिण्ड्यावधिः; पितामातृसापिण्ड्यवर्ज्यता विरुद्धसंबन्धश्च

[1]लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डामसगोत्रजामविरुद्धसंबन्धामुपयच्छेत ॥

[3]पितृतः सप्तपूरुषं सापिण्ड्यं मातृतः पञ्चपूरुषम् ॥

[4]दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति ॥

(१) पितृमातृसाम्ये इत्युपलक्षणम् । तेन भ्रातृभगिनीसाम्ये स्नुषाश्वशुरादिसाम्येऽपि नोद्वाहः, विरुद्धसंबन्धाविशेषात् । तद्यथा– पितृव्यपत्नीस्वसुः सुता भगिनीसमा

* अस्य व्याख्यानं विवाहविधौ ( संका. पृ. ९० ) द्रष्टव्यम् ।

( १ ) छाम्रा. १४।४।३।३० ; बृउ. १।४।१७ .

( २ ) जैउब्रा. १।१७।१ ( १।५३ ).

( ३ ) जैउब्रा. १।१८।१ ( १।५६ ).

( १ ) जैउब्रा. ३।३।६ ( ३।३४ ).

( २ ) आगृप. १।२२ . शेषः स्थलादिनिर्देशः गोत्रप्रवरविचारे ( संका. पृ. १७२ ) द्रष्टव्यः ।

( ३ ) आगृप. १।२२ ; प्रपा. ३०६ ; विपा. ६८५ पूरुषं (पुरुषं) .

( ४ ) आगृप. १।२२ ; प्रपा. ३०६ ; गभा. ९८ (दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धो० ) ; प्रर. ९८ ; संप्र. ७२५ संबन्धो (संबन्धाः) ; चम. १०८ ; संम. ५१ विरुद्ध (विरुद्ध) ; सिन्धु. १०१९ गमावत्; विपा. ६८५; संकौ. १९७ ( दम्पत्योर्मिथः पितृमातृसाम्ये० ) संबन्धो ( संबन्धा ) ; साप्र. ११ ( भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति ) एतावदेव ; प्रका. ३५६ ; संग. १७३ ; संव. १४१ ; संर. ४११ .

भवति; पितृव्यशालिकायाः मातृष्वसृतुल्यत्वात् । तथा स्नुषाभगिन्यपि श्वशुरेण नोद्वाह्या, स्नुषातुल्यत्वात् । एवमन्यत्राप्यूह्यम् । 'अत एव बौधायनः— " मातुः सपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् । पितृव्यपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ॥" इति ।

* संप्र. ७२५

(२) यत्र दम्पत्योः वधूवरयोः पितृमातृसाम्यं यथा वरः पितृस्थानीयो भवति वरस्य वा वधूर्मातृस्थानीया भवति तादृशो विवाहो विरुद्धसंबन्धः । तत्र यथाक्रममुदाहरणद्वयम्— भार्यास्वसुर्दुहिता शालिकापुत्री, पितृव्यपत्नीस्वसा पितृव्यपत्नीभगिनी चेति । विरुद्धसंबन्धविषये उदाहरणान्तरमपि द्रष्टव्यम् । संर. ४११

## वाराहगृह्यसूत्रम्

सापिण्ड्यावधिः, पितामातृसापिण्ड्यवर्ज्यता बीजिसापिण्ड्यवर्ज्यता च

ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः पञ्चमान्मातृबन्धुभ्यो बीजिनश्च ( विवाहः ) ॥

## आग्निवेश्यगृह्यसूत्रम्

मातृसापिण्ड्यवर्ज्यता

मातुरसपिण्डाम् ( भार्यामुपयच्छेत ) ॥

## गोभिलगृह्यसूत्रम्

मातृसापिण्ड्यवर्ज्यता

मातुरसपिण्डाम् ॥

मातुः सपिण्डा ये न भवन्ति तान् । सापिण्ड्यमुक्तपूर्वं ( २।१।१२ सूत्रे ) मनुसंधेयम् । मृदुला.

## जैमिनिगृह्यसूत्रम्

मातृसापिण्ड्यवर्ज्यता

मातुरसपिण्डाम् ( जायां विन्देत ) ॥

मातुरसपिण्डां मातुरर्धशरीरत्वात् पितुरप्युपलक्षणम् । संगतः पिण्डः शरीरं यस्याः सा सपिण्डा । वरस्य मात्रा पित्रा च रक्तधातुसंबन्धरहितामित्यर्थः । तच्च सापिण्ड्यं सप्तपुरुषमितिवत् सप्तमे शरीरे निवर्तते । तथा च मातुलदुहितुर्दुहिता पितृष्वसृदुहितुर्दुहिता इत्येवमादयः अपरिणेयाः । मातुः स्वपित्रा तस्य स्वपुत्रेण तस्य स्वदुहित्रा तस्याश्च स्वदुहित्रा धातुसंबन्धोऽस्तीति मातुलदुहितृदुहिता मातुः पञ्चमीति त्याज्या । एवमन्यत्राप्यूह्यम् । श्रीन्या.

## वैखानसगृह्यसूत्रम्

मातृसापिण्ड्यवर्ज्यता

मातुरसपिण्डां पितुरसमानर्षिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा... ... ॥

## गौतमः

सापिण्ड्यावधिः, पितृसापिण्ड्यवर्ज्यता, विरुद्धसंबन्धः

ऊर्ध्वं सप्तमात्पितृबन्धुभ्यः ॥

(१) पितृबान्धवाः पितुर्मातुलभगिन्यादयः, तेभ्यः सप्तमादूर्ध्वं विवाहः । अष्टमात् प्रभृति वा विवाहः कर्तव्य इत्यर्थः । मभा.

(२) पितरमारभ्य तद्बन्धुवर्गे गण्यमाने सप्तमात्पुरुषादूर्ध्वं जातां कन्यामुद्वहेत् । गौमि.

(३) बान्धवा अपि स्मृत्यन्तरे दर्शिताः— " पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥ " स्मृच. ७१

---

* हेग. संस्कार ।

(१) वागृ. १० .

(२) आग्निगृ. ११६ .

(३) गोगृ. ३।४।५ .

(४) जैगृ. ११२० .

(१) वैगृ. ३।२ .

(२) गौध ४।२; विश्व. १।५३; मेधा. ३।५; अप. १।५३ कर्पी (कर्पी वृ); गृक. ८; मभा.; गौमि. ४।२; उ. २।११।१९; स्मृच. ७१; गृर. ९; स्मृसा. ११; पमा. ४६८; धौमि. १।५३ पृ. १११; मंप्र. ६५७, ६८१, ६८७, ७०३, ७०६; सुभा. ११०, १२९; मिन्धु १०२१, १०२४; संकौ. ५२; व्यान. १२९; माव. १,११; बाल. १।५३ पृ. १९२; मंग. १०५ (=); हम. ८९४; संर. ४०२ .

बीजिसंबन्धवर्ज्यता, दत्तकसापिण्ड्यविचारः

**बीजिनश्च**

(१) ऊर्ध्वं सप्तमादित्यनुकर्षणार्थश्चकारः। बीजं यत् परक्षेत्रे उप्तं तस्य जातमात्रादेव (१)। अनेन असमानप्रवरत्वेन प्राप्तौ सत्यां प्रतिषेधः। मभा.

(२) बीजिनश्च सप्तमादूर्ध्वमिति चकारात्सिध्यति। यथा क्षेत्री वन्ध्यो रुग्णो वा देवरं प्रार्थयते मम क्षेत्रे पुत्रमुत्पादयेति। यद्वा संतानक्षये विधवां गुरवो नियुञ्जते। दृष्टं विचित्रवीर्यक्षेत्रे सत्यवतीवाक्यात् व्यासो धृतराष्ट्रादीनुत्पादितवानिति। यथाह याज्ञवल्क्यः— 'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥' (यास्मृ. २।१२७) इति। तद्विषयमेतद्बीजिनश्चेति। गौमि.

(३) एतच्च वाक्यान्तरस्वरसात् पितृपक्षपरम्। बीजी स्ववंशहेतुबीजयोगी। परभार्यायां बीजप्रक्षेपक इति केचित्। वीमि. १।५३ पृ. ११३

(४) 'वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते' इति वार्तिकव्याख्यावसरे न्यायसुधाकृता दत्तकविषयमेतदित्यङ्गीकृत्य कुल्या जनककुले सप्तपुरुषं सापिण्ड्यमिति व्याख्यातं, तद्विषयत्वेनैव सापिण्ड्यमीमांसायाम्। अतः कुलद्वयेऽपि सप्तपुरुषं सापिण्ड्यं प्रतीयते। पैठीनसिस्तु— 'त्रीन् मातृतः पञ्च पितृतः पुरुषानतीत्य उद्वहेत्' इत्याह। व्याख्यातमेतदपरार्के— दत्तकादिपुत्रान् पितृपक्षतो निवृत्तपिण्डगोत्रार्पेयान् प्रत्येतदुच्यते पञ्च पितृत इतीति। अतश्च प्रतिग्रहीतृपितृकुले सप्तपुरुषं सापिण्ड्यं प्रतीयते। प्रतिग्रहीतृमातृपितृकुलयोस्त्रिपुरुषं सापिण्ड्यमिति प्राञ्चः। अथात्र व्यवस्थोक्ता सापिण्ड्यदीपिकायाम्— दत्तक्रीतादीनां जनकगोत्रेणोपनयने कृते जनककुले सप्तपुरुषं सापिण्ड्यं, प्रतिग्रहीतृमातृपितृकुले निर्वाप्यपिण्डलक्षणं त्रिपुरुषं सापिण्ड्यं, प्रतिग्रहीतृमात्रेणोपनयने तत्कुले सप्तपुरुषमिति। उपनयनमात्रे कृते पञ्चपुरुषं, जातकर्माद्युपनयनान्ते कृते सप्तपुरुषमिति पैठीनसिवचःसाफल्याय व्याख्येयम्। न केवलं दत्तकस्य परिणयनार्थमेवैष सापिण्ड्योपन्यासः, किन्तु तत्संततेस्तत्पित्रादिकुलोत्पन्नैः सह संबन्धसंभवनिर्णयार्थमपि। अन्यथा पार्थसुभद्रयोरदत्तयोः संबन्धासंभवशङ्काया आचार्यकर्तृकोपन्यासस्य तदुपपत्त्यै सुधायां गौतमीयोपन्यासस्याल्पकतापत्तेः। यादृशादृत्तकस्य यथा सापिण्ड्यमुक्तं तत्संततेरपि तथैव तद्बोध्यम्। अत एव यत् मदनपारिजाते उक्तम्— दत्तपुत्र्याः सुतस्य मातुः प्रतिग्रहीतृमातुः कुले त्रिपुरुषं सापिण्ड्यं दत्तपुत्रसुतस्य स्वजनककुले पञ्चपुरुषमिति, तदपि पूर्वोक्तरीत्या दत्तकविशेषसंततिविषयत्वेन व्याख्येयम्। संकौ. ५१

सापिण्ड्यावधिः, मातृसापिण्ड्यवर्ज्यता

**मातृबन्धुभ्यः पञ्चमात् ॥**

(१) ऊर्ध्वं विन्देतेति वर्तते। मातृबान्धवाः मातुलमातृष्वस्रादयः। तत्र पञ्चमादूर्ध्वं विवाहः कर्तव्यः। मभा.

(२) मातरमारभ्य तद्बन्धुवर्गे गण्यमाने पञ्चमाच्छिरस ऊर्ध्वं जातामुद्वहेत्। गौमि.

**पिण्डनिवृत्तिः सप्तमे पञ्चमे वा ॥**

(१) गौध. ४।४; विश्व. १।५३; अप. १।५३ पृ. ८१ बीजिनश्च (बैजिनश्च); गृक. ८; मभा.; गौमि. ४।३; उ. २।११।१६; स्मृच. ७१; गृर. ९; स्मृमा. १३; पमा. ४६८; वीमि. १।५३ पृ. ११३; संप्र. ६५७, ६८६, ६८७, ७०३, ७०६; मुक्ता. १२५, १२९; सिन्धु. १०२१, १०२२, १०२४; संकौ. ५१; आन. १६९; साप्र. ३, १३, १७; बाल. १।५३ पृ. १९२; संग. १७५ (=) (बीजिनश्च सप्तमात्); कृभ. ८९४; संर. ४५३.

(१) गौध. ४।५; विश्व. १।५३; मेधा. ३।५; अप. १।५३ पृ. ८१; गृक. ८; मभा.; गौमि. ४।३; उ. २।११।१६; स्मृच. ७१; गृर. ९ पञ्चमात् + (च); स्मृसा. १३; पमा. ४६८; वीमि. १।५३ पृ. ११३; संप्र. ७०३, ७०६; मुक्ता. १२५; सिन्धु. १०२१; संकौ. ५१; आन. १६९; साप्र. २ पञ्चमात् + (ऊर्ध्वं): ३, १३; बाल. १।५३ पृ. १९० पञ्चमात् + (ऊर्ध्वं): पृ. १९२; संग. १७५ (=) मातृबन्धुभ्यः (मातृभ्यः); कृभ. ८९४; संर. ४५३ पञ्चमात् (पञ्चम्याः).

(२) गौध. १४।१२; विश्व. १।५३; मभा.; गौमि.; स्मृच. ६७; पमा. ४६६ पिण्ड (सपिण्ड): ५८९, ५९० सप्तमे पञ्चमे वा (पञ्चमे सप्तमे वा); प्रपा. ३०७ पिण्ड (सापिण्ड्य); उत. १०८; संप्र. ७०४, ७०६.

( १ ) इदानीं सापिण्ड्यस्वरूपमाह— पिण्डेति। षट् पुरुषानतीत्य सप्तमे प्राप्ते। पित्रादिभ्यस्त्रिभ्यः पिण्डदानम्। तेषु जीवत्सु येभ्यः पिता ददाति तेभ्य एव पुत्रोऽपीति अपरेभ्यस्त्रिभ्य इति षट् पुरुषाः पिण्डसंबन्धिनः। यदा जीवत्पितृकस्य न जीवन्तमति ददाति ? इति जीवत्पिता पितामहाय प्रपितामहायेति दद्यादित्याश्रीयते तदा पञ्चमे निवृत्तिः। स्त्रीणामप्येतत्तुल्यम्। पितृपक्षे वा सप्तमे निवृत्तिः, मातृपक्षे पञ्चमे इति। मभा.

( २ ) कूटस्थमारभ्य षष्ठपर्यन्तं सापिण्ड्यं, सप्तमे तु निवृत्तिः। केवलं सप्तमे सोदकत्वम्, 'सप्तमे तु निवर्तते' इत्युक्तत्वात्। ततः परं सगोत्रत्वमेव। पञ्चमे वा इति यदुक्तं, तत् औरसव्यतिरिक्तविषयम्। तत्रापि यथासंभवं द्रष्टव्यम्। एवं वा अर्थः— पितृपितामहप्रपितामहेभ्यस्तत्परमपि द्वाभ्यामित्यात्मना सह षष्ठपर्यन्तं पिण्डं दद्यात्। सप्तमे तु निवृत्तिः। पञ्चमे वा इति पुत्रिकापुत्रविषयमेतत्। अत्र बौधायनः— 'कथं खलु पुत्रिकापुत्रस्य पिण्डदानम्। एतत्तेऽमुष्मै पितः, मम पितामह, ये च त्वामनु, एतत्तेऽमुष्मै पितामह, मम प्रपितामह, ये च त्वामनु, एतत्तेऽमुष्मै प्रपितामह, मम प्रप्रपितामह, ये च त्वामनु' इति। अस्यैवं पिण्डं ददतः पञ्चमे प्राप्ते पिण्डनिवृत्तिः। मात्स्यपुराणे— 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपौरुषम्॥' इति। गौमि.

## वृद्धगौतमः

अनौरसपुत्रेषु न सापिण्ड्यम्

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते॥

गोत्रता संततित्वम्, 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इति त्रिकाण्डीस्मरणात्। न सापिण्ड्यं विधीयते इति तु सगोत्रासपिण्डस्य पुत्रीकरणे संततित्वोत्पत्तावपि अवयवान्वयरूपं सापिण्ड्यं नोत्पद्यते इति अर्थप्राप्तानुवादपरं व्याख्येयम्। पृ. २०८

ये दत्तादयः सुताः स्वगोत्रेषु स्वगोत्रमध्ये कृता ( स एव ) विधिना गोत्रतां संततित्वं यान्ति, परं तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पद्यते इत्यर्थः। स्वगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता। संप्र. ६८९

## हारीतः

सापिण्ड्यावधिः, मातापितृसापिण्ड्यवर्जना

पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः॥
सप्त पितृतः परिहरेत् पञ्च मातृतः॥
लेपिनस्त्रीनन्वाचक्षाण आसप्तमादित्येके॥

## बौधायनः

विवाहादिसंबद्धानां शास्त्रविरुद्धदेशधर्माणां प्रामाण्यविचारः, मातुलादिकन्यापरिणयचिन्ता.

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः॥

( १ ) विप्रतिपत्तिः धर्मशास्त्रविरुद्धप्रतिपत्तिः। बक.२९

( २ ) श्रौतः स्मार्तः शिष्टागम इति त्रिविधो धर्मो व्याख्येयः। तथा तत्र तत्र व्यवस्थिततया शिष्टाचरितानां धर्माणाम्—पञ्चधा विप्रतिपत्तिरिति। दक्षिणेन नर्मदां उत्तरेण कन्यातीर्थम्। उत्तरतस्तु दक्षिणेन हिमवन्तं उदग्विन्ध्यस्य। एतद्देशप्रसूतानां शिष्टानां परस्परं पञ्चधा विप्रतिपत्तिः विसंवादः, यान् पदार्थाननुतिष्ठन्ति

---

( १ ) संप्र. २०८, ६८९; सिन्धु. १०२३ गोत्रतां यान्ति (गोत्रभाग्यान्ति); साप्र. १७ स्वगोत्रेषु (स्वगोत्रेण) शेषं सिन्धुवत्; संत. ५४७; कृम. ८७१ पूर्वार्धे (स्वगोत्रेण कृता ये स्युर्दत्तक्रीतकादयः।): ८८५.

( १ ) गृक. २६; गृर. २५; संप्र. ७०२ पञ्चमीं (पञ्च) सप्तमीं (सप्त).

( २ ) साप्र. ३; बाल. ११५३ पृ. १९३.

( ३ ) मपा. ६०८; साप्र. १७ लेपिनस्त्रीन (लेपिनश्च त्रीन).

( ४ ) बौध. १।२।१; विश्व. १।५३; अप. १।५३ पृ. ८३ पञ्चधा (पञ्चविधा) (तथोत्तरतः ०); मक. २८; स्मृच. १०; ७४ (तथोत्तरतः ०); कृर. २१; पमा. ४७२ (तथोत्तरतः ०); मंप्र. ७२१; धम. ४९, ९६; सुख्या. १११; मंम. ५१; सिन्धु. १०११; विपा. ६५५; संकौ. १७१; आन. १७२; साप्र. ६ पमावत्; संग. १७१; संर. ४१२.

दाक्षिणात्याः न तानुदीच्याः, यानुदीच्याः न तान् दाक्षिणात्याः इति । बौवि.

**यानि दक्षिणतस्तानि व्याख्यास्यामः ॥**

तत्र प्रथमम्—यानीति । बौवि.

**यथैतदनुपेतेन सहभोजनं स्त्रिया सहभोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ॥**

(१) तस्य दुराचारत्वमनेन प्रतिपाद्यते । उ.२।९।१७

(२) तत्रेमान्युदाहरणानि—यथेति । मातुलदुहितृगमनं पितृष्वसृदुहितृगमनमिति संबन्धः । ऋज्वन्यत् । बौवि.

---

(१) बौध. १।२।२; विश्व. १।५३ निर्देशमात्रम्; प्रक. २८; उ. २।९।१७; स्मृच. १०; कृर. ३५; संप्र. ७२१ स्तानि व्या (स्तान्यनुव्या); चम. ९६ यानि + (तु) शेषं संप्रवत्; मुक्ता. १३१; संम. ५३ संप्रवत्; विपा. ६९५ संप्रवत्; भान. १७२; संग. १७३; संर. ४१२ संप्रवत्.

(२) बौध. १।२।३; अप. १।५३ पृ. ८२ (अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनमुच्छिष्टभोजनं पितृष्वसा-(सृ) मातुलदुहितृपरिणयनमिति); प्रक. २८–२९ दनुपेतेन (दनुपनीतेन) गमन (परिणयन); उ. २।९।१७ (यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं) एतावदेव; स्मृच. १० दनुपेतेन (दनुपनीतेन) स्त्रिया (भार्यया च): ७४ (अनुपनीतेन भार्यया च सहभोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति); कृर. ३५ (पर्युषितभोजनं०) शेषं प्रकवत्; पमा. ४७२ (अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलदुहितृ-पितृष्वसृदुहितृ-परिणयनमिति); संप्र. ७२१ प्रकवत्; चम. ४९: ९६ अशुद्धिबहुलः पाठः; मुक्ता. १३१; संम. ५३ यथैत (तथैत); सम. ११० (मातुलपितृष्वसृदुहितृगमनम्) एतावदेव; सिन्धु. १०११ यथैतदनुपेतेन सहभोजनं स्त्रिया (अनुपेतेन स्त्रिया च) गमन (परिणयन); विपा. ६९५ (यथा दक्षिणदेशे अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलसुतायाः पितृष्वसृसुतायाः परिणयश्च); संकौ. १७५ अनुवादेन निर्देशः; भान. १७२; साप्र. ८ (अनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलदुहितृपितृष्वसृदुहितृपरिणयनमिति); संग. १७३ दनुपेतेन (दनुपनीतेन); संर. ४१२.

**अथोत्तरत ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रसंयानमिति ॥**

ऊर्णायास्तद्विकारस्य च कम्बलादेर्विक्रयः । उभयतोदन्ता अश्वादयः । व्यवहारः विक्रयादिः । आयुधीयकं शस्त्रधारणम् । समुद्रसंयानं नावा द्वीपान्तरगमनम् । बौवि.

**इतरदितरस्मिन् कुर्वन् दुष्यतीतरदितरस्मिन् ॥**

(१) अयमर्थः—इतरो दाक्षिणात्यः इतरस्मिन् उदीच्ये देशेऽनुपनीतादिना सह भोजनादिकं कुर्वन् दुष्यति, न स्वदेशे । तथोदीच्यः इतरस्मिन् दक्षिणे

---

(१) बौध. १।२।४; अप. १।५३ पृ. ८२ अथोत्तरत (तथोत्तरतः पञ्च) संयान (यान); प्रक. २९ शीधु (सीधु) आयुधीयकं (आयुधीयता) सयान (यान); स्मृच. १० संयानमिति (यानम्): ७४ अथोत्त (तथोत्त) संयान (यान); कृर. ३५ शीधु (सीधु) संयान (यान); पमा. ४७२ अथोत्त (तथोत्त) ऊर्णा (ऊर्ण) शेषं कृरवत्; संप्र. ७२१–७२२ कृरवत्; चम. ९६ कृरवत्; मुक्ता. १३१; संम. ५३ कृरवत्; सिन्धु. १०११ निर्देशमात्रम्; विपा. ६९५ (तथोत्तरदेशे सिन्धुपारगमनं उभयतोदद्भिर्व्यवहार ऊर्णाविक्रय आयुधविक्रयः समुद्रयानं च । मध्यदेशे द्विजाः कर्मकराः शिल्पिनश्च । पूर्वदेशे द्विजा मत्स्यादाः स्त्रियो व्यभिचारिण्यो रजस्वलाश्च स्पृश्या इत्यादयः स्वस्वदेशे धर्मा अन्यत्र अधर्मा इति ।); भान. १७२ संयान (यान); साप्र. ८ अथोत्त (तथोत्त) शीधु (सीधु) आयुधीयकं (आयुधकं) संयानमिति (यानम्); संग. १७३ शीधुपान (सिन्धुपार) संयान (यान); बौवि.; संर. ४१२ आयुधीयकं (सायुधीयकं) शेषं कृरवत्.

(२) बौध. १।२।५; विश्व. १।५३; अप. १।५३ पृ. ८२ (इतर इतरस्मिन् कुर्वन् दुष्यतीतर इतरस्मिन्); प्रक. २९; स्मृच. १० (इतरस्मिन् कुर्वन् दुष्यतीति । इतर इतरस्मिन् ।): ७४ (इतर इतरस्मिन् देश कुर्वन् दुष्यति); कृर. ३५ (इतर इतरस्मिन् कुर्वाणो दुष्यति इतर इतरस्मिन्); पमा. ४७२ अपवत्; संप्र. ७२२ इतर (तत्रेतर); चम. ९६ संप्रवत्; मुक्ता. १३१; संम. ५३ (तत्रेतरदितरस्मिन् कुर्वन् दुष्यति) एतावदेव; सिन्धु. १०११ अपवत्; विपा. ६९५ (तत्रेतर इतरस्मिन् कुर्वन् दुष्यति) एतावदेव; संकौ. १७५ (तत्र तादितरस्मिन् कुर्वन्न दुष्यतीतर इतरस्मिन्); भान. १७२; साप्र. ८ (इतर इतरस्मिन् कुर्वन् दुष्यति) एतावदेव; बौवि.; कृभ. १०११ (इतरस्मिन् कुर्वन् दुष्यति) एतावदेव; संर. ४१२ विपावत्.

ऊर्णाविक्रयादिकं कुर्वन् दुष्यति, न स्वदेशे। कुतः, देशप्रामाण्यात् देशनिबन्धनत्वात् प्रामाण्यस्येत्यर्थः।

* स्मृच.१०

(२) दुष्यतीत्यनेन अपाङ्क्तत्वविशिष्टपातकोक्तेः।

कुम.१०११

(३) इतरत् अनुपेतेन सह भोजनादि इतरस्मिन् उत्तरापथे कुर्वन् दुष्यति तत्रत्यैः शिष्टैः दूष्यते इत्यर्थः। एवं ऊर्णाविक्रयादीनि कुर्वन् इतरत्र। तस्मादनुपेतेन सह भोजनादीनि दाक्षिणात्यैः शिष्टैः आचर्यमाणत्वात् दोषाभावाच्च तैरेव कर्तव्यानि। ऊर्णाविक्रयादीनि च उदीच्यैरेव। तदेतत् भट्टकुमारिलैर्निरूपितम्—'स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति।' इति। तथा हि—'अहिच्छत्रब्राह्मण्यः सुरां पिबन्ति.' इति च। बौवि.

तत्र तत्र देशप्रामाण्यमेव स्यात्॥

ननु किमिति व्यवस्था? यावता मूलश्रुतिरेषामविशेषेण कल्प्यते, यथा होलाकादीनाम्। यथा वा बौधायनीयं धर्मशास्त्रं कैश्चिदेव पठ्यमानं सर्वाधिकारं भवति। गौतमीयगोभिलीये छन्दोगैरेव पठ्येते, वासिष्ठं तु बह्वृचैः, अथ च सर्वाधिकाराणि। यथा वा अन्यानि शास्त्राणि यथा वा गृह्यशास्त्राणि सर्वाधिकाराणि, तद्वत् अनुपनीतसहभोजनादीन्यपि समानि कस्मान्न भवन्तीत्याशङ्क्य आह—तत्र तत्रेति। एवं व्यवस्थितविषयैव मूलश्रुतिः कल्प्यते। किं नाम अनुपपत्तिर्न कल्पयतीत्यभिप्रायः। तस्मात् व्यवस्थितविषयमेव अनुष्ठानं तद्वर्जनं च। बौवि.

[१]मिथ्यैतदिति गौतमः॥

गौतमग्रहणमादरार्थं, न आत्मीयं मतं पर्युदसितुम्। स हि एवमाह—'देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणम्'। तद्विरुद्धो देशादिधर्मो न कर्तव्यः। तद्विरुद्धश्चायम्। आह च गृत्समदः—'अनुपनीतसहभोजने द्वादशरात्रमुच्छिष्टभोजने द्विगुणम्' इति। प्रायश्चित्तविधानात् निषेधः कल्प्यते। तथा 'स्त्रिया सह भोजने त्रिरात्रोपवासो घृतप्राशनं च' इति। तथा 'पर्युषितभोजने अहोरात्रोपवासः' इति संवर्तः। तथा मातुलदुहितृगमनेऽप्याह—'सखिभार्यां समारुह्य मातुलस्याऽऽत्मजां तथा। चान्द्रायणं द्विजः कुर्यात् श्वश्रूमपि तथैव च॥' इति। तथा विवाहेऽपि—'पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुतः।' इति। आह च—'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुराप्तां च गत्वा चान्द्रायणं चरेत्॥' एवमूर्णाविक्रयादिष्वपि आम्नायविरोधः प्रसिद्धः। ऊर्णा तावदपण्येषु पठिता। शीधुपाने गौतमः—'नित्यं मद्यमपेयं ब्राह्मणस्य' (गौध. २।२६) इति। तथा उभयदन्तव्यवहारे वसिष्ठः—'अश्वश्चागमनस्यम्' (वस्मृ. २।२१) इति प्रकृत्य 'ग्राम्यपशूनामेकशफाः केशिनश्च' (वस्मृ. २।३२) इत्याह। तथा च श्रुतिः—'य उभयादत्प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेत्' इति प्रायश्चित्तम्। तथा आयुधीयकेऽपि 'परीक्षार्थोऽपि ब्राह्मण आयुधं नाऽऽददीत' इति। स्वयमेव पतनीयेषु समुद्रसंयानं (२।१।४१) पश्यति। एवमादीन्यालोच्य आम्नायैरविरुद्धाः प्रमाणमित्युक्तम्। अतः 'मिथ्यैतदिति गौतमः' इत्युपपन्नं भवति। बौवि.

[१]उभयं चैव नाऽऽद्रियेत॥

---

* पमा., संप्र., मुक्ता., सेर. स्मृचगतम्।

(१) बौध. १।२।६; अप. १।७३ पृ. ८२ (देशे प्रामाण्यात्); मक. २९; स्मृच. १०, ७४ (देशप्रामाण्यात्); हर. ३५ तत्र तत्र (तत्र); पमा. ४७२ (तद्देशप्रामाण्यात्); संप्र. ७२२; धम. ९९; (तद्देशप्रामाण्यात्); मुक्ता. १११ देश (देशे); संम. ५१ पमावत्; संकौ. १७१ धमवत्; मान. १७२ देश (देशे); मात्र. ८ पमावत्; बौवि.; सेर. ४१२ धमवत्.

(२) बौध. १।२।७; अप. १।७३ पृ.८२; मक. २९; स्मृच. ७४; हर. ३५; संप्र. ७२२; धम. ९९ ति +

(तु); मुक्ता. १११; संम. ५२; संकौ. १७१; मात्र. ८; बौवि.

(१) बौध. १।२।८; विध. १।५१ चैव (चैव); अप. १।७३ पृ. ८२ चैव (चैव); मक. २९ चैव (चैव); स्मृच. ७४ द्विजेन (द्विजो); हर. ३५ चैव [illegible] ([illegible]); संप्र. ७२२ वै चैव (चैव); धम. ९९ [illegible]; मुक्ता. १११ चैव (चैव); संम. ५१ [illegible]; संकौ. १७१ [illegible]; मान. १७१; मात्र. ८ [illegible]; बौवि.

एतदेव स्वमतमित्याह— उभयमिति । च शब्दः पक्षव्यावृत्त्यर्थः । अनुपेतादिसहभोजनं ऊर्णाविक्रयादि च उभयमपि न कर्तव्यमित्यभिप्रायः । बौवि.

शिष्टागमविरोधदर्शनात्* शिष्टस्मृतिविरोधदर्शनाच्च ॥

(१) यथा च बौधायनेन स्पष्टमेवंविधस्याचारस्य प्रामाण्यं दर्शितम्— 'पञ्चविधा विप्रतिपत्तिः...... देशे प्रामाण्यात् ।' इत्याचारबलेनैव प्रामाण्यमुक्तम् । स्यादेतत् यद्यनन्तरं न ब्रूयात्— 'मिथ्यैतदिति गौतमः । उभयं त्वेतन्नाऽऽद्रियेत । शिष्टस्मृतिविरोधात्' इति । स्मृतिविरोधश्च दर्शितः— 'ऊर्ध्वं मातृबन्धुभ्यः पञ्चमात्' इति । शिष्टविरोधश्चाविगमात् । यत् पुनरुक्तम्— 'न तत्र शिष्टा न सन्ति' इति, तदसंबद्धम्, 'शिष्टः पुनरकामात्मा' इति वसिष्ठस्मरणात् । न शिष्टाः कामकारेण शास्त्रविरोधे प्रवर्तन्ते । गौतमग्रहणं एकवाक्य(ता)प्रतिपादनार्थम्, अनिराकरणात् । तथा च वसिष्ठः— 'देशकुलाचारा आम्नायाविरुद्धाः प्रमाणम्' इति । आम्नायो वेदः । तदविरोधोऽस्तीति चेत्, नैतत्, भगिन्यादिगमनेऽपि तदविरोधदर्शनादतिप्रसक्तेः । तस्मादन्धपरम्परयाऽन्यायागतस्य व्यवहारस्य प्रामाण्यम् ।

अप. ११५३ पृ. ८२

(२) यच्च बौधायनः— 'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः' इत्युपक्रम्य दक्षिणतः पर्युषितभोजनादिभिः सह मातुलकन्यापरिणयनाद्युपन्यस्योत्तरतश्चोर्णाविक्रयाद्युपन्यस्याऽऽह — 'तत्र तदितरस्मिन् कुर्वन् दुष्यति इतर इतरस्मिन् । तत्तद्देशप्रामाण्यात् । मिथ्यैतदिति गौतमः । उभयमेव नाऽऽद्रियेत । शिष्टस्मृतिविरोधदर्शनात्' इति । तथापि प्रामाण्यादित्यन्तो ग्रन्थो मिथ्यैतदित्यादिना पर्युषितभोजनसीधुपानादेर्व्यावर्त्य मातुलकन्यापरिणयनादिविषयतया व्यवस्थाप्यते । वेदाच्चैतत् प्रतीयते इति स्मृत्या श्रुतिस्मृतिसिद्धत्वेनोपन्यस्तोक्तपरिणयने स्मृतिविरोधोपन्यासासंभवात् पर्युषितभोजनादौ कर्तव्यतासूचकश्रुतेर्विशेषतः स्मृतेश्चाभावेन स्मृतिविरोधहेतूपन्यासंभवेन च मिथ्यैतदिति तद्विषयमेवेत्यादि* सुधीभिरूह्यम् । संकौ. १७५

(३) तथा च बौधायनः— 'पञ्चधा विप्रतिपत्तिः...... विरोधदर्शनात्' इति । यद्यपि मातुलसुतादिपरिणयनं चन्द्रिकामाधवीयादौ श्रुत्युदाहरणपुरःसरं समर्थितम् । अथापि शिष्टैः 'विधेर्निषेधो बलीयान्' इतिन्यायेन वर्जनमेव शास्त्रस्याभिप्राय इति वेदितव्यम् ।

आन. १७२

(४) कस्मादित्याह— शिष्टेति । शिष्टागमविरोधस्तावत् स्वयमुदितः 'पञ्चधा विप्रतिपत्तिः' इत्यत्र । स्मृतिविरोधश्च अनुपनीतादिसहभोजने प्रायश्चित्तविधानात् । शिष्ट(स्मृति?)विरोधः मनुविरोधः । शिष्टो हि मनुः । (तद्विरोधश्च । तत्स्मृतिः शिष्टस्मृतिः । शिष्टस्मृतिविरोधः*) सोऽपि दर्शित एव । एकसूत्रतां त्वेके मन्यन्ते । यथा होलाकादयो व्यवस्थितदेशविषया अपि अव्यवस्थिताः कर्तव्याः इत्यमिमेऽपि इत्यस्य चोद्यस्य व्यवस्थितदेशश्रुत्यनुमानमुक्तम् 'तत्र तत्र देशप्रामाण्यमेव स्यात्' इति । तत्राऽऽह— 'उभयं चैव नाद्रियेत । शिष्टस्मृतिविरोधदर्शनात्' इति । स च विरोध उक्तः । तस्मादविरुद्धत्वात् होलाकाद्यनुष्ठानं सर्वाधिकारकम् । इह विरोधादनुपनीतसहभोजनादिवर्जनं सर्वाधिकारमिति विशेषः । आहुश्च न्यायविदः— 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति । बौवि.

पितृसापिण्ड्यावधिः, सापिण्ड्यनिवृत्तिः सकुल्यता च

दायभागोत्तरम्

सपिण्डता त्वासप्तमात्सपिण्डेषु ॥

* सूत्रांशोऽयं निबन्धैर्न गृहीतः, न च व्याख्यातः । आदर्शपुस्तके म्हैसूरचन्द्रिकापुस्तके च मुद्रितो विवरणेन व्याख्यातश्च । आदर्शपुस्तके तु 'शिष्टस्मृतिविरोधदर्शनात्' इत्यस्योपरिष्टात् मुद्रितः । स तु विवरणानुगृहीतम्हैसूरपुस्तकपाठप्रामाण्यात्प्रमाद इति भाति । एतत्सूत्रनियोगशिष्टोऽन्यश्चशब्दोऽपि निबन्धेषु नास्ति ।

(१) बौध. १।२।९ ; अप. ११५३ पृ. ८२ विरोधदर्शनात् (विरोधात्) ; मक. २९ ; स्मृच. ७४ ; कृर. ३५ ; संप्र. ७२२ ; चम. ९६ ; मुक्ता. १३१ शिष्ट (दृष्ट) ; संम. ५३ ; संकौ. १७५ ; आन. १७२ ; सापि. ८ अपवत् ; बौवि.

* कंसान्तर्गतो ग्रन्थोऽधिकः प्रामादिक इति भाति । अग्रिमोऽपि ग्रन्थो व्याकुल इवाऽऽभाति ।

(१) बौध. २।११।१२ ; संप्र. ७०१ अनुवादरूपेण ; बौवि.

अथ सापिण्ड्यस्वरूपमाह — सपिण्डतेति। न निवर्तते इति शेषः। तत्तु आत्मानमधिकृत्य प्रागूर्ध्वे च षट्सु पुंसु भवति। तत्संततिषु च उभयतोऽपि सप्तमे निवर्तते। सापिण्ड्यस्य संक्षेपोक्तिरेषा, विस्तरस्तु वक्ष्यते 'अपि च प्रपितामहः' इत्यत्र। ननु त्रिपुरुषमेव सापिण्ड्यं संभाव्यते, पितृपितामहप्रपितामहानां पिण्डदानवचनात्। उच्यते— पित्रादिषु त्रिषु जीवत्सु येभ्यः पिता ददाति तेभ्यः पुत्रो ददातीति परेभ्यः त्रिभ्यः पिण्डदानं संभाव्यते, अत उपपद्यते सप्तमे निवृत्तिरिति। बौवि.

अपि च प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रवर्गं* तेषां च पुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते ॥

विभक्तदायानपि सकुल्यानाचक्षते ॥

(१) दशपुरुषमेव सापिण्ड्यं रिक्थाशौचयोर्द्वयोरपि प्रयोजकमित्याह भगवान् बौधायनः — प्रपितामह इति। तस्य प्रपौत्रस्य पुत्रवर्गः पुत्रसमुदायः। तेषां समुदायिनां पुत्रपौत्रम्। अविभक्तदायं, दायः अत्र पिण्डः, एकपिण्डान्वयीत्यर्थः। पिण्डान्वयश्च दशपुरुष एव इत्युक्तमेव प्राक्। विभक्तदायान् विच्छिन्नपिण्डान् दशमपुरुषादूर्ध्वं सकुल्यान् आचक्षते इत्यर्थः। न च — इदं केवलं रिक्थग्रहणे एव दशपुरुषं सापिण्ड्यं, आशौचे 'सपिण्डेष्वासप्तमात्' इति तेनैव पृथक् सप्तपुरुषाभिधानात् — इति मन्तव्यं, 'सपिण्डेष्वादशाहम्' इत्युपक्रम्य 'जननमरणयोः संनिपाते' इत्युपसंहारात् मध्यपठितयोः सप्तपुरुषदशपुरुषयोः सापिण्ड्ययोः संदंशपतितत्वेन उभयत्रापि उभयोरपि वैकल्पिकाङ्गत्वसिद्धेः। तथ 'आसप्तमाद्रिक्थविच्छित्तिः' इति स्वयंभूवाक्ये सप्तपुरुषस्य, बौधायनवाक्ये च दशपुरुषस्य रिक्थग्रहणे वैकल्पिकमङ्गत्वं स्पष्टमेव। तेन सप्तपुरुषसपिण्डसत्त्वे अष्टमादिभिर्न रिक्थं ग्राह्यमिति सिध्यति। आशौचे तु तयोर्वैकल्पिकमङ्गत्वं स्पष्टमाह पारस्करः — 'सर्वे शातयो...'। संप्र. ७०१–७०२

(२) द्रव्यसाध्यत्वात् पिण्डदानादेर्मृतस्य रिक्थं लब्ध्वा पिण्डदानादिकं कुर्यादिति विवेक्तुं सपिण्डसकुल्यविवेकक्रमं तावदाह — अपि चेति। सापिण्ड्ये एव किञ्चिद्वक्तव्यमस्तीति मत्वा अत्र अपि चेत्याह। उक्तस्यैव विस्तारोऽयं प्रपितामह इत्यादि। परिभाषा चैषा द्रष्टव्या।

विभक्तदायानपीति एषा च परिभाषा। एतदुक्तं भवति— विभक्ताविभक्तशब्दौ व्यत्यस्तौ कार्यौ। संबन्धविशेषज्ञाने सति सपिण्डा उच्यन्ते। संबन्धमात्रज्ञाने सकुल्याः। अतश्च सकुल्या अपि सपिण्डा एव। द्रव्यपरिग्रहे तु विशेषोऽस्ति। बौवि.

विरुद्धसंबन्ध-

मातुः सपत्न्या भगिनीं तत्सुतां चापि वर्जयेत्।
पितृव्यपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ॥

(१) अतो मातृष्वसुः सापत्नपुत्रकन्या अपि विवाह्या। सिन्धु. १०१९

(२) सापत्नेति। मातृष्वसुः सपत्नी सापत्नमातृस्थानीया इत्यर्थः। पितृव्येति। अत्र परस्य वधूः मातृस्थानीयेति संबन्धविशेषः। कृम. १०१९

सापत्नमातृभगिनीं तत्सुतां चापि नोद्वहेत् ॥

धात्रीपुत्रीं धात्रीभगिनीमिष्टपुत्रीमिष्टभगिनीमिष्टमातुलसुतां ज्येष्ठभ्रातृभार्याभगिनीं स्वभार्यासहोदरामिष्टपितृष्वसृभगिनीमिष्टमातृष्वसृभगिनीं पितृव्यपत्नीभगिनीं स्नुषाभगिनीं सपत्नीमातृभगिनीं सपत्नीमातृभगिनीकन्यां परवाग्दत्तां संबन्धिनीभगिनीं संबन्धिकन्यां च नोद्वहेत् ॥

---

* अत्र नपुंसकत्वमार्षम्।

(१) बौध. १।११।७ वर्गं (वर्गे); स्मृमा. ११९ (मविभक्तदायान् सपिण्डानाचक्षते।) एतावदेव; संप्र. ७०१ (अपि च०).

(२) बौध. १।११।८; स्मृमा. ११९ (विभक्तदायान् सकुल्यान्) एतावदेव; संप्र. ७०१ दायानपि (दायान्).

(१) संप्र. ७२५; सिन्धु. १०१९ चापि (च वि); मात्र. ११ सिन्धुवत्; कृम. १०१९ निर्देशमात्रम्; संत. १३८.

(२) संत. १३४.

(१) विता. ९९८; संर. ४११ सिन्धुवत् (सिन्धु) ...

सपिण्डसगोत्रकन्योद्वाहे कर्तव्यं प्रायश्चित्तादि

[1]वंशक्षयो भवेत्तस्य वंशवृद्धिर्न जायते ।
सपिण्डगोत्रां ज्ञात्वोढ्वा गुरुतल्पव्रतं चरेत् ॥
तां मातृवत्पालयेच्च गर्भस्तज्जोऽन्त्यतां व्रजेत् ।
अज्ञानाच्चैन्दवैः शुध्येद्गर्भस्तज्जस्तु काश्यपः ॥

## आपस्तम्बः

मातृसापिण्ड्यवर्ज्यता

मातुश्च योनिसंबन्धेभ्यः ॥

मातुः योनिसंबन्धाः कन्याया मातुलादयः । चकारात् पितुरप्येवम् । तेभ्यः असगोत्रेभ्योऽपि न देया कन्यका । अत्र मनुः — ' असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी ॥ '

उ.

सगोत्रेऽसगोत्रे च सापिण्ड्यावधिभेदः

[3]सगोत्रे खलु सापिण्ड्यं विज्ञेयं साप्तपौरुषम् ।
विगोत्रे तत्तु सर्वत्र विज्ञेयं पाञ्चपौरुषम् ॥

पूर्वजरूढाचारानुसरणे न दोषः

[4]येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
त एव तैर्न दुष्येयुराचारैर्नेतरैः पुनः ॥

## वसिष्ठः

सापिण्ड्यावधिः, मातापितृसापिण्ड्यवर्ज्यता

[5]पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः ॥

( १ ) पितृबन्धुभ्यः सप्तमात् मातृबन्धुभ्यः पञ्चमादाह वसिष्ठः— ' असमानार्षेयीमस्पृष्टमैथुनामवरवयस्कां सदृशीं भार्यां विन्देत । पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः ' इति बन्धुशब्दोपादानादयमर्थो गम्यते । अन्यथा कुलादित्येव ब्रूयात् ।

मपा. १३९

( २ ) एवं ' पितृबन्धुभ्यः सप्तमीं मातृबन्धुभ्यः पञ्चमीम् ' इति वासिष्ठे ल्यब्लोपे पञ्चम्यन्तं प्राग्वत् । तादर्थ्ये चतुर्थी । तथा च तादृशसप्तमान्तसमुदायार्थो सप्तमीं कूटस्थादष्टमीमिति, तादृशपञ्चमान्तसमुदायार्थो पञ्चमीं कूटस्थात् षष्ठीमिति वाऽर्थ इत्याहुः । ' पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । ' इत्यत्र मातृतो यः संतानभेदप्रतियोगी प्रथमः ततः पञ्चमीमित्यर्थः । ' पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम् । ' इत्यादावप्येवमेव । ' सप्त पितृतः परिहरेत् पञ्च मातृतः ' इत्यत्र पितृसंताने कूटस्थात्सप्त मातृघटितसंताने कूटस्थात्पञ्च परिहरेदित्यर्थः । एवमन्यत्राप्यूह्यम् ।

कुभ. ९९९-१०००

[1]पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ॥

( १ ) इति अर्वाङ्निषेधार्थे न पुनस्तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः । एतच्च समानजातीये द्रष्टव्यम् ।

मिता. १।५३

( २ ) यच्च वसिष्ठेनोक्तम्— ' पञ्चमीं... ' इति, तत्सवर्णसापत्नमातृकुलविषयं, ब्राह्मणादीनां क्षत्रियादिदारसमुत्पन्नपितृकुलविषयं च । एकत्रावयवानुवृत्तेरभावादन्यत्र सावर्ण्याभावाच्च ।

मपा. १३९

( ३ ) क्षत्रियादीति । क्षत्रियादिदारोत्पन्नस्य यत् पितृकुलमित्यर्थः । तत् षट्पुरुषं सापिण्ड्यमित्यर्थः ।

कुभ. १०१५

( १ ) विपा. ६९८.

( २ ) आध. २।११।१६ ; हिध. २७।४।३१ ; अप. १।५३ पृ. ८३ ; उ. ; मुक्ता. १२७ ; आन. १७१ ; प्रका. ३४४.

( ३ ) वीमि. १।५३ पृ. १०९ ( = ) पाञ्चपौरुषम् ( पाञ्चपूरुषम् ) ; संदी. १४ ( भाग: २ ).

( ४ ) स्मृच ७४ ; मुक्ता. १३१ चारैर्नेतरैः (चारा नेतरे) ; साप्र. १० र्नेतरैः ( र्नेतरे ).

( ५ ) वस्मृ. ८।२ ; उ. २।११।१६ ; स्मृच. ७१ ( पञ्चमी मातृबन्धुभ्यः सप्तमी पितृबन्धुनः ) ; मपा. १३९ ; संप्र. ७०३,७०६ ; मुक्ता. १२५ ; साप्र. ३ ( मातृबन्धुभ्यः पञ्चमीं सप्तमीं पितृबन्धुभ्यः ) ; बाल. १।५३ पृ. १९२ ; बौवि. १।२।७ पृ. ८ ( = ) पितृबन्धुभ्यः ( पितृबन्धुनः ) ; कुभ. ९९९ ( पितृबन्धुभ्यः सप्तमीं मातृबन्धुभ्यः पञ्चमीं ).

( १ ) मिता. १।५३ ; मपा. १३९ ; मर. १८ ; निप. २७६ ( = ) ; सादी. २५ ; संप्र. ६९९ : ७०३ श्लोकवसिष्ठोऽपि इत्युक्तम् ; मुक्ता. १२८ ; संम. ५० ; सिन्धु. १००२, १०१५ ; संकौ. १७३,१७७ ; साप्र. ३ ; बाल. १।५२ पृ. १७४ ; कुभ. ९९९ ( = ) ; संर. ४०८.

¹सपिण्डता तु साप्तपुरुषी विज्ञायते ॥

²अप्रत्तानां तु स्त्रीणां त्रिपुरुषी त्रिदिनं विज्ञायते ॥

## विष्णुः

सापिण्ड्यावधिः, मातापितृसापिण्ड्यवर्ज्यता

³सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ॥

⁴मातृतस्त्वा पञ्चमात्पुरुषात्पितृतश्चा सप्तमात् ॥

'मातृतस्त्वा' इति विष्णुसूत्रे सप्तमीनिषेधाच्च अत्र मातृपदेन मातामहो लक्षणीयः । उ.१०८

सपिण्डसगोत्रकन्योद्वाहे दोषः

⁵पञ्चमात्सप्तमाद्धीनां यः कन्यामुद्वहेद्द्विजः ।
गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ॥

(१) वस्मृ. ४।१७ (क.) साप्तपुरुषी (सप्तपुरुषं), (ख.) (सपिण्डत्वं साप्तपुरुषं विज्ञायते।); संप्र. ७०४ तु (च): ७०६.

(२) वस्मृ. ४।१८ (क.) तु स्त्रीणां त्रिपुरुषी (स्त्रीणां त्रिपुरुषं), (ख.) (प्रत्तानां च स्त्रीणां त्रिपुरुषं विज्ञायते।); विध. १।५३ पृ. ६३ त्रिपुरुषी + (सपिण्डता) (त्रिदिनं०); मिता. ३।२४ (त्रिदिनं०); अप. ३।२४ पृ. ९०७ (अप्रत्तानां स्त्रीणां त्रिपुरुषं सापिण्ड्यम्); मभा. १४।३२ (अप्रत्तानां तु स्त्रीणां त्रिपुरुषम्); स्मृच. ६९ (अप्रत्तानां तु स्त्रीणां त्रिपुरुषं सापिण्ड्यम्); स्मृसा. ११८ (अप्रत्तानां स्त्रीणां त्रिपुरुषं सपिण्डता); वीमि. १।५४ पृ. १०९ (अप्रत्तानां कन्यानां त्रिपुरुषम्); निसा. ४२८ (अदत्तानां स्त्रीणां त्रिपुरुषी विज्ञायते); मुक्ता. १२६ त्रिपुरुषी (सापिण्ड्यं त्रिपुरुषं); सिन्धु. १०१४ (त्रिदिनं०); मान. १७२ मनुवादरूपेण: १७३ स्मृचवत्.

(३) विस्मृ. २२।५ तु (च); मिता. ३।२५४ (=); संप्र. ७०४,७०६.

(४) विस्मृ. २४।१० ; अप. १।५३ पृ. ८१ ; उ. २।११।११ पृ. २२२ (मातुः पञ्चमात् पितुः सप्तमात्); दीक. १।५३ (पुरुषात्०) तथा (तस्त्वा); उत. १०८ दीकवत्; संप्र. ७०३ ; मुक्ता. १२५ (मातुः पञ्चमादूर्ध्वं पितुः सप्तमात्); मान. १६९ मुक्तावत्; बाल. १।५३ पृ. १९१ उवत्.

(५) स्मृच. ७२ ; प्रपा. १०७ पूर्वार्धे (स्वमातामहमाता यः कन्यकामुद्वहेद्द्विजः।); संप्र. ७०५ माद्धीनां (मातृ) द्वे-द्विजः (द्वते द्विजः); मुक्ता. १२६ ; सिन्धु. १००५ माद्धीनां

(१) एतदुक्तं भवति—पितृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां सप्तमादूर्ध्वं वरवध्वोर्विवाहो न दुष्यति । मातृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनाया वरवध्वोर्माता चेत्पञ्चमी भवति तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहो न दोषायेति । प्रपा. ३०७

(२) पञ्चमादिति । कुलहीनतायां तादात्म्येन पञ्चमादिर्हेतुः । कुललक्षण एव पञ्चमाद्यन्यत्वं विवाहप्रयोजकविशेषणमिति पञ्चमत्वादिना कुलहीनेत्यर्थः । कुम. १००५

## शङ्खः शङ्खलिखितौ च

शरीरावयवान्वयसापिण्ड्यम्, सापिण्ड्यावधिः, मातापितृसापिण्ड्यवर्ज्यता

¹सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ॥

²विन्देत विधिवद्भार्यामसमानार्षगोत्रजाम् ।
मातृतः पञ्चमीं चापि पितृतस्त्वथ सप्तमीम् ॥

³पञ्चमीं चोभयतः ॥

⁴चत्वारोऽवयवा ज्ञेया मातुर्जीवकलेवरे ।
त्वगसृङ्मांसमेदांसि स्वस्थिमज्जावसाः पितुः ॥

पुरुषः स्वकन्यां स्वपौत्रीं वा न परिणेतुमर्हति, स्वावयवानां तदन्वयेन सापिण्ड्यादिति । ननु कथं शरीरान्तरावयवानां शरीरान्तरे प्रवेश इति चेत्, उच्यते —पुरुषस्य हि शरीरं मातृवीर्येण पितृवीर्येण परस्परयोगादारभ्यते । तत्र मातृवीर्येण धातुचतुष्टयं पितृवीर्येण धातुत्रयमिति सप्तधात्वारब्धे पुत्रादिशरीरे वर्तत एव पित्रादिशरीरावयवप्रवेश इति । तदुक्तं शङ्खेन — 'चत्वारोऽवयवा ज्ञेयाः' इति । शादी. ११

(माद्धीनान्); विधा. १८९ माद्धीनां च कन्यासु (मातृ च कन्यकासु) यो वैर तु (कामतो वो) स्वद्विजः; मान. १७० ; साप्र. ५ ; संप्र. १६९ विप्रवत्, स्वद्विजः.

(१) शंस्मृ. १५।२ ; विध. १।५३ पृ. ६२ (=).

(२) शंस्मृ. ४।१ ; संप्र. ७०४.

(३) विध. १।५३ उद्धृ.

(४) शादी. ११ शङ्खः; बाल. १।५३ पृ. १९१ शरीरावयवाः पितुः (बहुपाठ इति गदीकृते) शंखपाठश्च.

आशौचपिण्डोदकदानादौ निर्वाप्यसापिण्ड्यम्

[1]सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानं च आशौचं च तदानुगम् ॥
[2]यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥

(१) पृथक्क्षेत्राः, भिन्नजातीयासु स्त्रीषु (जाताः) इत्यर्थः । पृथग्जनाः पृथक्क्षेत्रसमानजातीया अपि अनेकमातृका भवन्ति, तदर्थमुभयोरुपादानम् । एकपिण्डाः सपिण्डा भवन्ति । किंतु पृथक्शौचाः स्वजातिनिमित्त एव तेषां शुद्धिकालः । ब्राह्मणस्य क्षत्रियादेः सूतकादौ दशाहः । ब्राह्मणस्य सूतके तेषां द्वादशाहश्च । तथा चान्योऽपि विशेषः— पिण्डः त्रिषु आवर्तते त्रिष्वेव भवति पुरुषेषु । समानजातीयापेक्षया क्षत्रियादीनां ब्राह्मणवत् षट्पुरुषस्य सापिण्ड्यम्, 'एकजाताः पृथक्क्षेत्राः' इत्यादिविशेषणोपादानात् । असमानजातीयापेक्षं त्रिपुरुषत्वं अनेन वाक्येन शक्यते प्रतिपादयितुम् । एष एवार्थः अनया स्मृत्या स्पष्टीक्रियते—'क्षत्रियविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः । तेषामाशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥' 'षड्भिस्त्रिभिरथैकेन' इत्यादि च । मेधा. ५।६०

(२) एकस्मात् ब्राह्मणादेः जाता एकजाताः । पृथक्क्षेत्रा भिन्नजातीयासु स्त्रीषु जाताः । पृथग्जनाः समानजातीयासु भिन्नासु स्त्रीषु जाताः । ते एकपिण्डाः सपिण्डाः, किन्तु पृथक्शौचाः । पृथक्शौचं आशौचप्रकरणे वक्ष्यामः । 'पिण्डस्त्वावर्तते त्रिषु', त्रिपुरुषमेव सापिण्ड्यमिति । *मिता. १।५३

(३) एकस्मात् ब्राह्मणादेर्जाताः, पृथक्क्षेत्राः भिन्नमातृजाः, पृथग्जनाः भिन्नजातीयाः, ते एकपिण्डाः सपिण्डाः, पृथक्शौचाः । पिण्डस्त्वावर्तते त्रिषु त्रिपुरुषमेव सापिण्ड्यमिति । एतत् भिन्नजातीयसापत्नमातृकुलविषयम् । तत्र अपकृष्टजातीयानां उत्तमजातीयविवाहप्राप्तिरेव नास्ति । अनुलोमतः प्राप्तिरस्ति । तत्र त्रिषु पुरुषेष्वेव सापिण्ड्यं युक्तम्, उत्कृष्टजातीयावयवसंयोगेतरजातीयावयवविपरिणामात् । एवं पूर्वोक्तगुणविशिष्टा परिणेयेत्युक्तम् । मपा. १४०

## लिखितः

निर्वाप्यसापिण्ड्यम्, विवाहोत्तरं भर्तृसपिण्डता
विवाहेन कन्याया गोत्रान्तरं च

[1]विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु ।
एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ॥
स्वगोत्रात् भ्रश्यते नारी विवाहात्सप्तमे पदे ॥

## महाभारतम्

मातुलकन्यापरिणये इतिहासप्रमाणम्

[3]अर्जुनस्तीर्थयात्रां पर्यटन्नवनीं प्रभुः ।
गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥
[4]तत्र चङ्क्रम्यमाणौ तौ वसुदेवसुतां शुभाम् ।
अलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तथैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥
अथाब्रवीत्पुष्कराक्षः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥

---

(१) स्मृसा. ११८ साप्त (सप्त) पू.; वीमि. १।५३ पृ. १०९ पू., शङ्खः : पृ. ११० ; सिन्धु. १००२ ; साप्र. २,३ पू., शङ्खः : १७ (=) ; बाल. १।५३ पृ. १९० प्रतीकमात्रम् : १९१ पू., शङ्खः ; कृभ. १००१ पू., शङ्खः : १००२ ; संदी. १३, १४ पू., शङ्खः.

(२) विश्व. १।५१ ; मेधा. ५।६० ; मिता. १।५३ ; स्मृसा. ११८ पृथग्जनाः (पृथग्धनाः) ; पमा. ४६७ ; मपा. १४० ; मादी. ३१ : ३५ (यद्येकजाता बहवः, पृथक्क्षेत्राः) एतावदेव, स्मृतिरित्युक्तम् ; संप्र. ६८७, ७१० ; मुक्ता. १२८ ; सिन्धु. १०१४ : १०२४ प्रतीकमात्रम् ; भान. १७१,१७२ ; साप्र. ७ प्रतीकमात्रम् : ११ ; संग. १७० ; सस्मृ. ५४. अप्रोद्धृतेषु सर्वग्रन्थेषु शङ्खस्यैव वचनम् ।

* पमा., मादी., मुक्ता., सिन्धु., भान., साप्र. मितावत् ।

(१) लिस्मृ. २५,२६. शेषः स्थलादिनिर्देशः गोत्रविचारे (संका. पृ. १७६) द्रष्टव्यः ।

(२) संप्र. ७१३ ; संग. १७२.

(३) भा. १।२१९।१४ ; संप्र. ७१३ चङ्क्रम्य (चङ्क्रम) अलङ्कृतां (स्वलङ्कृतां) ; संग. १७२ चङ्क्रम्य (च क्रम) अलङ्कृतां (स्वलङ्कृतां).

(४) भा. १।२१९।१५,१६.

ममैषा भगिनी पार्थ सारणस्य सहोदरा ।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥
अर्जुन उवाच–
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव संपन्ना कमिवैषा न मोहयेत् ॥
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥
प्राप्तौ तु क उपायः स्यात्तद्ब्रवीहि जनार्दन ।
आस्थास्यामि तथा सर्वं यदि शक्यं नरेण तत् ॥
वासुदेव उवाच–
स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतोः शूराणामिति धर्मविदो विदुः ॥
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥
वैशम्पायन उवाच–
ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान् पुरुषान् राजन् प्रेषयामासतुस्तदा ॥
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः ॥
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा ।
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ॥

(१) भा. १।२१९।१७; संग्र. ७१३–७१४ सुता (द्युमा) तृतीयार्धं नास्ति; संग. १७२ सर्वं समस्तम्.
(२) भा. १।२१९।१८; संग्र. ७१४ कमिवैषा (कमेवैषा); संग. १७२.
(३) भा. १।२१९।१९; संग्र. ७१४; संग. १७२.
(४) भा. १।२१९।२०–२२.
(५) भा. १।२१९।२३; संग्र. ७१४ स त्वमर्जुन (मत्तः प्रविन्स्य); संग. १७२ स्वयम्.
(६) भा. १।२१९।२४–२५.
(७) भा. १।२२१।६५; संग्र. ७१४ दिवा स्वम (स्वप्न दिवा); संग. १७२.

* यो मे त्वं हृदयज्जातो वयः स्वं न प्रयच्छसि ।
पापान्मातुलसंबन्धात् प्रजा वै ते भविष्यति ॥

मातुलकन्यापरिणये इतिहासप्रमाणम्.

पुलोमा कालका चैव वैश्वानरसुते उभे ।
बहुपत्ये महासत्त्वे मरीचेस्तु परिग्रहः ।
ययोः पुत्रसहस्राणि षष्टिर्दानवनन्दनाः ॥
पौलोमाः कालकेयाश्च दानवास्ते महाबलाः ॥
वैश्वानरः पुलोमा च विद्रावणमहार्णवा ॥
स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता ॥
अग्निष्वात्तादिकानां तु पितॄणां सा शची स्वसा ।
पुलोमा जनयामास तस्यां नाम्ना शची सुताम् ॥
शच्यां तु जनयामास जयन्तं तनयं हरिः ॥

विरुद्धसंबन्धः; गुरुपुत्र्या विवाहो निषिद्धः

वैशम्पायन उवाच–
समावृत्तव्रतं तं तु विसृष्टं गुरुणा तदा ।
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥
ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥
ऋषिर्यथाऽङ्गिरा मान्यः पितुर्मम महायशाः ।
तथा मान्यश्च पूज्यश्च भूयो मम बृहस्पतिः ॥
एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥
स समावृत्तविद्यो मां भक्तां भजितुमर्हसि ।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥

* ययातिः राजा स्वपुत्रान् यौवनमयाचत । तत्र तुर्वसुं निष्कर्म्य पुत्रमुद्दिश्य ययातेर्वचनमिदम् । 'पापात्' इति पदेन मातुलकन्यापरिणयनिषेधो ध्वन्यते ।
(१) भा. १।८४।९ (यो मे हृदयजातो वयः स्वं न प्रयच्छसि । तस्मात्प्रजासमुच्छेदं तुर्वसो तव यास्यति ॥); हरिवं. ७०; संग्र. ७१५ पापान्मा (पाता मा).
(२) संग्र. ७२३–७२४.
(३) भा. १।७७।१–१८; उप. ११९ (१,५,७,८,१० श्लोकाः न सन्ति).

कच उवाच–

पूज्यो मान्यश्च भगवान्यथा तव पिता मम ।
तथा त्वमनवद्याङ्गि पूजनीयतरा मम ॥
आत्मप्राणैः प्रियतमा भार्गवस्य महात्मनः ।
त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ॥
यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव ।
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ॥

देवयान्युवाच–

गुरुपुत्रस्य पुत्रो वै न तु त्वमसि मे पितुः ।
तस्मान्मान्यश्च पूज्यश्च ममापि त्वं द्विजोत्तम ॥
असुरैर्हन्यमाने च कच त्वयि पुनः पुनः ।
तदा प्रभृति या प्रीतिस्तां त्वमेव स्मरस्व मे ॥
सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ॥

कच उवाच–

अनियोज्ये नियोगे मां नियुनक्षि शुभव्रते ।
प्रसीद सुभ्रु त्वं मह्यं गुरोर्गुरुतरी शुभे ॥
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ॥
भगिनी धर्मतो मे त्वं मैवं वोचः शुभानने ।
सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम ॥
आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे ।
अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम ॥

देवयान्युवाच–

यदि मां धर्मकामार्थे प्रत्याख्यास्यसि चोदितः ।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति ॥

कच उवाच–

गुरुपुत्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः ।
गुरुणा चाभ्यनुज्ञातः काममेवं शपस्व माम् ॥
आर्षं धर्मं ब्रुवाणोऽहं देवयानि यथा त्वया ।
शप्तो नार्होऽस्मि शापस्य कामतोऽद्य न धर्मतः ॥

**मनुः**

सापिण्ड्यावधिः, शरीरावयवान्वयः सापिण्ड्यम्, विरुद्धसंबन्धः, सर्ववर्णसाधारणी सापिण्ड्य-वर्ज्यता पितृगोत्रवर्ज्यता च

**असपिण्डा च या मातुरसगोत्रा च या पितुः ।**
**सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥**

(१) यादृशी कन्या वोढव्या तामिदानीं दर्शयति । मातुः या असपिण्डा पितुश्च या असगोत्रा सा दारकर्मणि प्रशस्ता । सपिण्डग्रहणं मातृबन्धूपलक्षणार्थम् । मातुर्हि सापिण्ड्यं स्त्रीणां स्मृत्यन्तरे तृतीयपुरुषावधि । न तु त्रिभ्य ऊर्ध्वं मातृबन्धुभ्यो विवाह इष्यते । किं तर्हि ? पञ्चमादूर्ध्वम् । एवं हि गौतमः पठति– 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यः । मातृबन्धुभ्यः पञ्चमात्' (गौध. ४।३) इति, तेन यथाश्रुति समन्वयाभावात् सपिण्डशब्दः स्मृत्यन्तरवशेन मातृसंबन्धितया व्याकरणीयः । तेन एवमुक्तं स्यात्– मातुरन्वयजा या न भवति । अवधिश्च गौतमीय एव । तेन मातामहप्रमातामहयोः या अन्वये जाता सा पुत्रसंततेर्बान्धवसामीप्यात् पञ्चमीं यावन्न विवाहयितव्या । अतो मातृष्वसृतद्दुहितॄणां प्रमातामहसंततिजानां च सर्वासां प्रतिषेधो बन्धुत्वाविशेषात् ।

इहापि असगोत्रा, चशब्दात् असपिण्डा । तथा च अनुवर्त्यमानः सपिण्डशब्दः पूर्ववत् बन्धुसंबन्धोपलक्षणार्थः । तेन पितृष्वसुरन्वयस्त्रीणा अन्यासां च प्रपितामहसंततिस्त्रीणां आ सप्तमात् पुरुषात् प्रतिषेधः सिद्धो भवति । सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते ।

द्विजातिग्रहणं उपलक्षणार्थम् । शूद्रस्यापि आ सप्तमात् पितृत इत्यर्थोऽस्ति । दारकरणं दारक्रिया दारकर्म, तत्र प्रशस्ता प्रशंसया विहिता इत्यर्थः । मैथुनी मिथुने भवा मैथुनी, न मैथुनी अमैथुनी । पितुरिति संबध्यते । पितृबीजादेव उत्पन्ना जातमात्रा । नियोगो विहितः । तत उत्पन्नाया नास्ति पूर्वोक्तविशेषणैर्निषेधः । अतः पृथक् निषिध्यते अमैथुनी इति । ततो नियोगोत्पन्ना

(१) मस्मृ. ३।५. अन्य. स्थलादिनिर्देशः गोत्रप्रवरविचारे (संका. पृ. १७७) द्रष्टव्यः ।

क्रमितो न विवाह्यां, मैथुनीत्वात् । अन्ये तु अमैथुने इति पठन्ति । धर्मार्थे दारकर्मणि प्रशस्ता न मैथुने स्तुतिश्रेयम्, न प्रतिषेधः । ईदृशी या ऊढा सा सत्यपि मैथुने धर्मार्थैव भवति । मेधा.

(२) 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।' (मस्मृ.५।६०) इत्यपि वक्ष्यति । अतः मातुरसपिण्डा मातामहप्रमातामहान्वयजाता या न भवति, या चे मातामहीप्रमातामह्याद्यन्वयजाता न भवति; पितुश्च या समानगोत्रा न भवति, चशब्दात् सपिण्डा च पितृष्वस्रादिसंततिजाता या न भवति, सा द्विजातीनां मैथुनादौ दारकर्मणि योग्या । गोरा.

(३) मातुरसपिण्डा मातुलदुहित्रादिभ्योऽन्या । अत्र केचिदाहुः— दारकर्मणि, दारत्वजनके विवाहे । मैथुने मिथुनशब्दवाच्यस्त्रीपुंससाध्याधानादिकर्मणि । न केवलं स्त्रीसाध्यपाकादिकर्मणि, अपि तु उभयसाध्येऽपि सा प्रशस्ता स्यादित्यर्थः । अथवा मैथुने मिथुनसाध्ये धर्मपुत्रोत्पत्त्यादाविति । मक. ७-८

(४) समानः एकः पिण्डः जनकः येषां ते सपिण्डशब्देनात्र ग्राह्याः । तथा च साक्षात् परंपरया वा यो मातृजनकपिण्डो देहः ततः येषां जन्म ते मातुः सपिण्डा इति । मातुः पञ्चमात् परतः अर्वाक्षष्ठादिष्वपि विवाहनिषेधप्रसक्तौ स्मृत्यन्तरान्नियमः । यथा याज्ञवल्क्यः— 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति । अस्यार्थः, मातृतः परस्मात् परस्मा च मातृसहितात्सपिण्डधारायां पञ्चमादूर्ध्वं परतः स्त्रियमुद्वहेदिति । एवं च मातुः पूर्वे ये चत्वारः उत्तरोत्तरक्रमेण सपिण्डाः तथा तत्सतानेऽपि अर्वाचीनाः प्रत्येकं चत्वारश्चत्वारः तथा मातृतोऽर्वागपि चत्वारस्तत्संतानभूताश्च प्रत्येकं चत्वारः सपिण्डाः तदन्तर्भूता कन्या न विवाह्या इति सिध्यति । एवं पितृतः सप्तमात् इत्यत्रापि व्याख्येयम् । मनुना हि 'असगोत्रा च या पितुः' इति चकारात् असपिण्डा चेत्यनुकृष्टम् । तथा च तत्रापि अवध्यपेक्षायां याज्ञवल्क्यवचनादेव नियमः । तेन यथा मातृसपिण्डेषु पञ्चसंख्यावधिः तथा पितृसपिण्डेषु सप्तसंख्येति । यत्तु स्मृत्यन्तरे— 'मातृतः पञ्चमीं पितृतः सप्तमीमुद्वहेत्' इत्युक्तं, तत् मातापितरौ विहाय गणनया इति ग्राह्यम् । एतच्च प्राज्ञवल्क्यवचनार्थेन मातुः पञ्चमादूर्ध्वं पितुश्च सप्तमादूर्ध्वं विवाह्यत्वं मातृसगोत्रत्वाभाव एवेति असगोत्रा इत्यनेन दर्शितम् । अत एव च सपिण्डपदस्य एकपिण्डप्रभवपरता न तु ज्ञातिपरता, शौचीनां सगोत्रपदेन नैव लाभात् । तथा च सपिण्डपदेन मातापित्रोर्ये मातुलादयः तेऽपि लभ्यन्ते । मवि.

(५) मातुर्या सपिण्डा न भवति । सप्तमपुरुषपर्यन्तं सपिण्डतां वक्ष्यति— 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति । तेन मातामहादिवंशजा जाया न भवतीत्यर्थः । * ममु.

(६) मातुः असपिण्डा मातुलदुहित्रादिभ्यः अन्या । असपिण्डेति, समानः एकः पिण्डः देहः यस्याः सा सपिण्डा, न तथा असपिण्डा । सपिण्डता च एकदेहावयवान्वयेन भवति । तथाहि— पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह । एवं पितामहादिभिरपि पितृद्वारेण शरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वस्रमातुलादिभिरपि एकशरीरावयवान्वयात् । तथा पितृष्वस्रादिभिरपि । तथा पत्न्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामपि एकशरीरारम्भकैः स्वस्वपतिभिः सह एकशरीरारम्भकत्वेन । एवं यत्र यत्र सपिण्डशब्दः तत्र साक्षात् परंपरया (वा) एकशरीरावयवान्वयेन ज्ञेय इति मिताक्षराकारः । दारकर्मणि दारत्वजनके विवाहे । मैथुने मिथुनसाध्यधर्मपुत्रोत्पत्त्यादौ । मैथुने मिथुनशब्दवाच्यस्त्रीपुंससाध्ये स्वाश्रमादिकर्मणि । न केवल स्त्रीसाध्यपाकादिकर्मणि अपि तु उभयसाध्येऽपि । इति कल्पतरुः । ग्र. ८

निर्विभागसापिण्ड्यम्, आशौचादिषु सापिण्ड्यावधिः वर्णभेदेन, समानोदकत्वम्

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥

* नैर्ब मविवत्। मच., दीक. मनुगतम्।

(१) मस्मृ. ५।६० ; विध. ३।२० पृ. १२ ( = ) पृ. ; गोरा. ३१५ पृ. २५।६० ; मप. ३१८ पृ. ८९ ; उ. ३१५।१२ ;

(१) अन्वयसंज्ञाविज्ञानात् बान्धवग्रहणानुवृत्तेश्च अन्वयजाः सप्तमपुरुषावधयः सपिण्डा उच्यन्ते। येभ्यः पिता दद्यात्तेभ्यः पुत्र इति जीवत्पूर्वपित्रादेर्विधानात् षट् तावद्योग्यतया सपिण्डा भवन्ति। यद्यपि पितृभ्यो दीयते आत्मना सप्तमः, अतः पितामहप्रपितामहाद्याः पूर्वान्वयजातास्ते सपिण्डा इति व्यपदिश्यन्ते। पूर्वे षट् सपिण्डाः। अपरे पुत्रादयः षडेव। यत एकस्याः पिण्डदानक्रियायाः सहभावात् सपिण्डाद्युपदेशो लभ्यते। पुत्रादेरपि सहभावः पौत्रादिना क्रियमाणोऽयम्। तेन येभ्यः दीयते, यैश्च सह संप्रदानवान् भविष्यति सर्वे ते सपिण्डा व्यपदिश्यन्ते। यतः न तत्र पिण्डदानमवश्यमुपलक्षणं शङ्ख इव शङ्खवेलायामागन्तव्यमिति। तेन यावदुक्तं स्यात् – प्रपितामहस्य यः प्रपितामहः तदन्वयजा ये यावत्सप्तमाः ते सपिण्डाः। एवं स्वसंततौ पित्रादिसंततौ द्रष्टव्यम्। यत एव भेदस्तमुपादाय गणना कर्तव्या यावत्सप्तमावधि। यथा पितामहः येषामेकः ते तत आरभ्य सप्तमावधयः सपिण्डा इत्येव सर्वत्र। तदन्वयजत्वे चोपलक्षणे जातेरनाश्रयणात् विजातीया अपि क्षत्रियादयः ब्राह्मणादीनां सपिण्डा भवन्ति। अत एव तज्जननाद्याशौचे ब्राह्मणस्य दशाह एव, तेषां तु स्वकाल एव द्वादशाहादिः। अतः सर्वस्य विजातीयनिमित्ते विजातीयसपिण्डनिमित्ते वा जन्मादौ स्वकाल एव शुद्धिः। क्षत्रियादीनां ब्राह्मणापेक्षया त्रिपुरुषं सापिण्ड्यम्। तथा च शङ्खः– 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः। एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु॥' पृथक्क्षेत्रा भिन्नजातीयासु स्त्रीषु (जाताः) इत्यर्थः। पृथग्जनाः पृथक्क्षेत्रसमानजातीया अपि अनेकमातृका भवन्ति, तदर्थमुभयोरुपादानम्। एकपिण्डाः सपिण्डा भवन्ति। किन्तु पृथक्शौचाः स्वजातिनिमित्त एव तेषां शुद्धिकालः। ब्राह्मणस्य क्षत्रियादेः सूतकादौ दशाहः, ब्राह्मणस्य सूतके तेषां द्वादशाहश्च। तथा च अन्योऽपि विशेषः– पिण्डः त्रिषु आवर्तते त्रिष्वेव भवति पुरुषेषु। समानजातीयापेक्षया क्षत्रियादीनां ब्राह्मणवत् षट् पुरुषस्य सापिण्ड्यम्, 'एकजाताः पृथक्क्षेत्राः' इत्यादिविशेषणोपादानात्। असमानजातीयापेक्षं त्रिपुरुषत्वमनेन वाक्येन शक्यते प्रतिपादयितुम्। एष एवार्थः अनया स्मृत्या स्पष्टीक्रियते– 'क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः। तेषामाशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते॥' 'षड्भिस्त्रिभिरथैकेन' इत्यादि च। स्त्रीणां तु विजातीयानां भर्तृकालेन जीवति भर्तरि शुद्धिः। आह च– 'सूतौ मृते तु दासानां पत्नीनां चानुलोमतः। स्वामितुल्यं भवेच्छौचं मृते स्वामिनि पैत्रकम्॥' अन्ये पठन्ति– 'असवर्णासुतानाम्' इति प्रथमं पादम्। यद्ययमस्ति पाठस्तदा पुत्राणामपि शूद्राणां पितृगृहे व्यवस्थितानां तत्परतन्त्राणां पितृजात्यपेक्षया दशाहादिरेव शुद्धिकालः। दासाश्चात्र वैतनिका गृह्यन्ते। ये तु गर्भदासास्तेषां विष्यन्तरं श्रूयते– 'कारवः शिल्पिनो वैद्या दासीदासं तथैव च। राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः॥' इति स्पर्शने चैवमेतेषां शुचित्वं विज्ञेयम्, न पुनर्दानभोजनादिक्रियासु। यतः कर्मनिमित्ता एते शब्दाः। अतः किं विपर्यये शुद्धिः, किं सर्वाः क्रियाः प्रतिप्रसवाः, उत काश्चिदेव अभ्यनुज्ञायन्ते, यतो राज्ञश्च कार्यविघातार्थं इत्याकाङ्क्षायां यान्येव तादृशानि कर्माणि तान्येव हृदयमागच्छन्ति। तथैव च समाचारः। ननु च नात्र स्पर्शप्रतिषेधः श्रुतः, यावता स्मृत्यन्तरे पठ्यते– 'अस्थिसंचयनादूर्ध्वमङ्गस्पर्शो विधीयते'। तथाऽन्यत्र– 'त्रिभिश्चतुर्भिर्वाऽहोभिर्ब्राह्मणः स्पृश्यतामियात्। एकादशेन शुद्धिः स्यान्मृतके सूतके तथा॥' 'राज्ञः षष्ठे सप्तमे वा स्पर्शो द्वादशाहेनाङ्गशुद्धिः। वैश्यस्य स्पर्शनमष्टमे नवमे वा, पक्षेणाङ्गशुद्धिः। शूद्रस्य स्पर्शनमेकादशे द्वादशे वा, मासेनाङ्गशुद्धिः।' इति हारीतः। तथा वाक्यान्तरमपि– 'स्पर्शे क्रमेण वर्णानां त्रिचतुःपञ्चषैर्दिनैः। भोग्यान्नो दशभिर्विप्रः ज्ञेया द्वित्रिषडुत्तरैः॥' एते च विकल्पाः प्रयोजनापेक्षया गुणवदगुणापेक्षया व्यवस्थापनीयाः। सर्वेषां तावद्ब्राह्मणस्य सकृद्दाराः

स्मृच. ६७ पृ.; स्मृमा. ११८ मावगु (मावश); पमा. ४६७ पृ.: ५१०; स्मृकौ. ११ स्मृसावद्; मपा. ३०७ पृ.; मिप्र. १०४ स्मृभावद्; मादी. २२ पृ.; मप. ३१५ पृ.: ५।६०; संप्र. ७०४ पृ.; निसा. ४८२; शुप्र. १२५ पृ.; श्रात. १६८ पृ.; मन्द. ३१५ पृ.: ५।६०; माप.

त्रिचतुरैरहोभिः स्पर्शनेन दूषयन्ति । गर्भदासास्तु सद्यः । एवमितरेषामपि वर्णानाम् । यत्र इदं सद्यःशौचं तत्र सर्वत्र स्नानं वाससा च । द्रव्यस्य शुद्धिः या यस्य विहिता इति ज्ञापयिष्यते ।

कन्यानामपि त्रिपौरुषेयी सपिण्डता । 'सपुत्राणां तु स्त्रीणां त्रिपुरुषं विज्ञायते ' इति वसिष्ठः । आशौच एवैतत् । विवाहे तु विधिर्दर्शितः । स्थितमेतत्– सप्तमपुरुषो मर्यादा, षट् पुरुषाः सपिण्डा इति । सप्तमे प्राप्ते विनिवर्तते ।

समानोदकभावः समानोदकव्यपदेशः । जन्मनाम्नोरवेदने । जन्म च अयमस्मत्कुले जातः, नाम अमुष्मात् इदंनामकात्पितृपितामहादेः, उभयोरवेदने निवृत्तिः । अतश्चान्यतरे ज्ञातेऽपि अनिवृत्तोदकं ज्ञेयम् । 'अवतीर्य नदीमन्यद्वा जलाशयं नामिदघ्नममुष्मः दक्षिणाभिमुखः सव्योत्तराभ्यां पाणिभ्यामुदकं कृत्वाऽनवेक्षमाणाः प्रत्याव्रजेयुः ' इति । मेधा.

( २ ) अलौकिकत्वात् सपिण्डस्य लक्षणमाह— सपिण्डतेति । षट् पुरुषान् पितृपितामहादीनतिक्रम्य सप्तमे प्राप्ते सपिण्डत्वं निवर्तते । एवं पुत्रपौत्रादिष्वपि विज्ञेयम् । समानोदकत्वं पुनः अयमस्मत्कुले जात एवंनामा चास्मद्वंश्यः अस्य आदिपुरुषः इत्येवं जन्मनामोभयापरिज्ञाने सति निवर्तते । गोरा.

( ३ ) सपिण्डलक्षणमाह—सपिण्डता त्विति । यं पुरुषं प्रतियोगिनं कृत्वा निरूप्यते तस्य ( पितृ )पितामहप्रभृतीन् षट्पुरुषानतिक्रम्य सप्तमे पुरुषे प्राप्ते सपिण्डत्वं निवर्तते । एवं पुत्रपौत्रादिष्वप्यवगन्तव्यम् । पिण्डसम्बन्धनिबन्धना चेयं सपिण्डता । तथाहि–पितृपितामहप्रपितामहेभ्यस्त्रिभ्यः पिण्डदानं, प्रपितामहस्य पित्रादयस्त्रयः पिण्डलेपभुजश्च, तत्पूर्वस्य तु सप्तमस्य पिण्डसंबन्धो नास्तीत्यसपिण्डता । यस्य चैते षट् पुरुषाः सपिण्डाः सोऽपि तेषां सपिण्डः, पिण्डदातृत्वेन तत्पिण्डसंबन्धात् । अतः साप्तपौरुषीयं सपिण्डता । तदुक्तं मत्स्यपुराणे—'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' सगोत्रत्वे चेयं सपिण्डता । अत एव शङ्खलिखितौ— 'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।' तेन मातामहादीना एकपिण्डसंबन्धेऽपि न सपिण्डता । समानोदकत्वं पुनः अस्मत्कुले अमुकनामाऽभूदिति जन्मनामोभयापरिज्ञाने निवर्तते । * मभु.

मातुलादिकन्यापरिणयनिषेधः

[1]पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥

( १ ) पितृष्वसुर्दुहिता पैतृष्वसेयी भगिनी । मातुः स्वस्रीया मातृष्वसुर्दुहिता । मातुश्च भ्रातुर्दुहिता मातुलदुहिता । आप्तस्य सोदर्यस्येत्यर्थः । मेधा.

( २ ) पितृष्वसृमातृष्वसृदुहितरं मातुः स्व ( च ) भ्रातुः सोदरस्य दुहितरं गत्वा चान्द्रायणं चरेत् । गोरा.

( ३ ) पितृष्वसृसुतां भगिनीम् । मातुः स्वस्रेयीं मातुः या स्वसा तस्या दुहितरम् । मातुश्च य आप्तः सोदरो भ्राता तस्य सुता इति शेषः । एता अपरिणीता अज्ञानाद्गत्वा चान्द्रायणम् । मवि.

( ४ ) पैतृष्वसेयीमिति । पितृष्वसुः मातृष्वसुश्च दुहितरं भगिनीं मातुश्च सोदर्यभ्रातुर्दुहितरं सोदर्यभगिनीमिव निषिद्धगमनां गत्वा चान्द्रायणं कुर्यात् । सकृदज्ञानव्यभिचरिताविषयं, अल्पत्वात् । § मभु.

---

* मच. मभुवत् ।

§ मच., नन्द., भाच. मभुवत् ।

( १ ) मस्मृ. ११।१७१ क., ख, घ. भ्रातुराप्तस्य ( भ्रातुस्तनयां ) ; मेधा. पैतृष्वसेयीं ( पैतृष्वस्रेयीं ) ; गोरा. पैतृष्वसेयीं ( पितृष्वस्रेयीं ) ; अप. १।५३ पृ. ८२ (=) भ्रातुराप्तस्य ( भ्रातुराप्तां च ) ; गृक. १० पैतृष्वसेयीं ( पितृष्वस्रेयीं ) ; उ. २।११।१६ पृ. २२२ भ्रातुराप्तस्य ( भ्रातुस्तनयां ) ; मवि. स्वस्रीयां ( स्वस्रेयीं ) ; स्मृच. ७० ; मभु. ; गृर. १० पैतृष्वस्रेयीं ( पैतृष्वस्रेयीं ) ; पमा. ४७० मेधावत् ; सादी. २८ ( पितृष्वस्रेयीं भगिनीं स्वस्रेयीं मातुरेव च । ) पृ. : ३० ( स्वस्रीयां मातुरेव च ) एतावदेव ; मच. मेधावत् ; संप्र. १७४ ; चम ९५ ; मुक्ता. १२७ ; सिन्धु. १००८ ; त्रिपा. ६९१ पैतृष्वसेयीं ( पैतृष्वसीयीं ) ; संकौ. १७७ स्वस्रीयां ( स्वस्रीयीं ) शेषं मेधावत् ; मान. ६, १७०, १७२ अपवत् ; साप्र. ६ मातुश्च भ्रातुराप्तस्य (मातुर्भ्रातुस्तथाप्तस्य) : ७ निर्देशमात्रम् ; नन्द. मपवत् ; भाच. ; मौवि. २।२।७ पृ. ८ (=) मपवत् .

**एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् ।**
**ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥**

(१) ननु च '(अ)सपिण्डा च' इत्यनेनैव एतासां अविवाह्यत्वे सिद्धे किमर्थमिदं नोपयच्छेत इति । केचिदाहुः—'अन्यासां पक्षे अभ्यनुज्ञानार्थं (अ)सपिण्डश्लोके प्रतिषिद्धानाम् । तदयुक्तम्, 'पतति ह्युपयन्नधः' इति प्रायश्चित्ताविशेषात् । * एतस्मिंश्च प्रयोजने संभवति (अ)सपिण्डश्लोकस्य पाक्षिको बाधोऽयुक्तः । अगत्या हि विकल्प आश्रीयते । ज्ञातित्वेन बन्धुत्वेन इत्यर्थः । अनुपेयाः अविवाह्या अगम्याश्च । उपयन् विवाहयन् । अधः पतति नरकं प्राप्नोति इति यावत् । अथवा ज्ञा(जा)तितो भ्रश्यति हीनजातीयः संपद्यते । यद्यपि जातेः जीवत्पिण्डा(ण्डेऽ)नपायः तथापि तत्कर्मानधिकारादेवमुच्यते । मेधा.

(२) एता इति । तिस्र एताः पितृष्वस्रा(ष्वसृ)दुहित्रा)द्या भार्यार्थं प्राज्ञैः नोद्वहनीयाः । ज्ञातित्वादेता नोढव्याः । यस्मादेता उपगच्छन् नरकं व्रजति । 'असपिण्डा तु या मातुः' इत्यनेनैव निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन दाढर्यार्थं पुनर्वचनम् । × गोरा.

(३) अथ तासां स्वयं परिणयनं निषेधति—एता इति । भार्यार्थे भार्यानिष्पाद्यकर्मार्थे नोपयच्छेत् नोद्वहेत् । ज्ञातेयेन एकबीजिना । (चा ?) ज्ञातेयेन इति तु अन्यासामपि तादृशीनां अपरिणेयत्वार्थमुक्तम् । अधः पतति द्विजकर्मतो हीयते । प्रायश्चित्तं तु स्मृत्यन्तरोक्तम् ॥ § मचि.

औरसे दत्तकादौ निर्वाप्यसापिण्ड्यम्

**गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः क्वचित् ।**
**गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥** *

## याज्ञवल्क्यः

सापिण्डयवर्ज्यता, साफिण्ड्यावधिः, शरीरावयवान्वयरूपं निर्वाप्यपिण्डान्वयरूपं च साफिण्ड्यम्, विरुद्धसंबन्धः, मातुलादिकन्यापरिणयनिषेधः.

**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥**

(१) असपिण्डां च मातृतः पितृतश्च । विश्व.

(२) असपिण्डां, समानः एकः पिण्डः देहः यस्याः सा सपिण्डा, न सपिण्डा असपिण्डा, ताम् । सपिण्डता च एकशरीरावयवान्वयेन भवति । तथाहि— पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह । एवं पितामहादिभिरपि, पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभिरपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरपि, एकशरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि । तथा पत्न्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्याणामपि परस्परमेकशरीरारब्धैः सह एकशरीरारम्भकत्वेन । एवं यत्र यत्र सपिण्डशब्दः तत्र तत्र साक्षात् परंपरया वा

---

* अत्र एतच्छब्दपरामृष्टप्रयोजनग्रन्थस्त्रुटित इति भाति ।

× मसु. गोरावत् ।

(१) मस्मृ. ११।१७२ ; मेधा. २।१८, पृ. : ११।१७२ ; गोरा. ; अप. १।५३ पृ. ८० उत्त. : पृ. ८३ ( = ) भार्यार्थे (भार्यार्थं) यच्छेत्तु (यच्छेत) ; गृक. १० यच्छेत्तु (यच्छेत) ह्युपयन्नधः (ह्युपयन्निमाः) ; उ. २।११।१६ पृ. २२३ ; मचि. ज्ञातित्वेना (ज्ञातेयेना) ; स्मृच. ७० : ७१ पृ. ; मसु. ; गृर. ११ यच्छेत्तु (यच्छेत) ; पमा. ४७० गृरवत्, पू. ; स्मादी. ७८ (तिस्र एतास्तु भार्यार्थे नोपगच्छेत्तु बुद्धिमान् ।) पू. ; मच. भविवत् ; संप्र. ७१४ यन्नधः (यन्नुनः) शेषं गृरवत् ; मुक्ता. १२७ यन्नधः (यन्नरः) शेषं गृरवत् ; सिन्धु. १००८ पू. ; संकौ. १७७ गृरवत्, पू. ; भान. ६ मुक्तावत् : १७० भार्यार्थे (भार्यास्ता) शेषं मुक्तावत् ; १७१,१७२ ज्ञातित्वेना (ज्ञातेयेना) शेषं मुक्तावत् ; साम. ६ गृरवत्, पू. ; नन्द. ; भाच.

§ मच., नन्द., भाच. मविवत् ।

* व्याख्यानानि गोत्रप्रवरविचारे (संका. पृ. १८१) द्रष्टव्यानि ।

(१) मस्मृ. ९।१४२. शेषः स्थलादिनिर्देशः गोत्रप्रवरविचारे (संका. पृ. १८१) द्रष्टव्यः ।

(२) यास्मृ. १।५२ ; विश्व. ; मिता. ; अप. ; उ. २।११।१६ पृ. २२२ ; स्मृच. ६७ ; पमा. ४६२ ; मपा. १३२ ; प्रपा. ३०६ ; मर. १७ ; निप. २७५ ( = ) ; गभा. ९६ ; प्रर. ९७ ; वीमि. ; संप्र. ७३५ ; चम. ८७ ; मुक्ता. १२५ ; संम. ४८ ; सिन्धु. ९९८ ; विपा. ६८५ ; संकौ. १७२ ; संग. १६७ ; संच. १४२ ; सस्मृ. ५४ ; संर. ४७६ ; संदी. ११ (आयः २).

एकशरीरावयवान्वयो वेदितव्यः । यद्येवं, मातामहादीनामपि ‘ दशाहं शावमाशौचं सपिण्डेषु विधीयते ’ इत्यविशेषेण प्राप्नोति । स्यादेतत् यदि तत्र ‘ प्रत्तानामितरे कुर्युः ’ इत्यादिविशेषवचनं न स्यात् । अतश्च सपिण्डेषु यत्र विशेषवचनं नास्ति तत्र ‘ दशाहं शावमाशौचम् ’ इत्येतद्वचनमवतिष्ठते । अवश्यं चैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम्, ‘ आत्मा हि जज्ञ आत्मनः ’ इत्यादिश्रुतेः, तथा ‘ प्रजामनु प्रजायसे ’ इति च, ‘ स एवायं विरूढः प्रत्यक्षेणोपलभ्यते ’ इत्यापस्तम्बवचनाच्च, तथा गर्भोपनिषदि— ‘ एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणि मातृतः ’ इति तत्तदवयवान्वयप्रतिपादनात् । निर्वाप्यपिण्डान्वयेन तु सापिण्ड्येऽङ्गीक्रियमाणे मातृसन्ताने भ्रातृपितृव्यादिषु च *सापिण्ड्यं न स्यात्* । समुदायशक्त्यङ्गीकारेण रूढिपरिग्रहे अवयवशक्तिस्तत्र तत्रावगम्यमाना परित्यक्ता स्यात् । असत्सु अवयवार्थेषु योऽन्यत्रार्थे *प्रयुज्यते तत्रानन्यगतित्वेन समुदायः प्रसिध्यति* । परम्परया एकशरीरावयवान्वयेन तु सापिण्ड्ये यथा नातिप्रसङ्गस्तथा वक्ष्यामः ।

*अत्र च* ‘ असपिण्डाम् ’ इत्यनेन पितृष्वसृमातृष्वस्रादिदुहितृनिषेधः । ... तथा च ‘ असपिण्डाम् ’ इत्येतत् सार्ववर्णिकम्, सर्वत्र सापिण्ड्यसद्भावात् । ... सपिण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते ।

* मिता. १।५२,५३

( ३ ) मुख्यावयवानुवृत्त्यभावेऽपि द्वितीयसापिण्ड्यप्रकारं सुमन्तुः— ‘ पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि । अन्यथा संकरकारिणः स्युः ’ इति । मदनरत्ने पारिजाते माधवीये च ‘ तद्भगिन्यः ’ इति न पठितम् । अन्यग्रन्थेषु तु पठ्यते । अत्र ‘ *यावद्वचनं वाचनिकम्* ’ इतिन्यायेन परिगणितेष्वेव सापिण्ड्यं, न तु सप्तमादिपर्यन्तम् ’ इति भट्टचरणप्रभृतयो बहवः । अन्ये तु ‘ उद्देश्यतावच्छेदकानां पितृपत्नीत्वतद्भ्रातृत्वादीनां भेदेन वाक्यभेदात् तन्निवृत्त्यै लक्षणया सापत्नमातामहकुले चतुर्थपुरुषं सापिण्ड्यमातिदेशिकं विधीयते । अतश्च मातुलादिदुहितृष्विव तत्पुत्रेष्वपि सापिण्ड्यात् कन्यायाः सपत्नमातुलपुत्रेण न विवाहः ’ इत्याहुः । तन्न । यत्र हि श्रुतयावच्छब्दानामेकस्मिन्नर्थे तात्पर्यं लक्षणोत्तरं चैकरूप्येण प्रामाण्यं बोद्धव्यान्, प्रति संभवति, तत्रैव लक्षणया वाक्यभेदपरिहारः, यथा ‘ अर्धमन्तर्वेदि ’ इत्यादौ । अत्र च ‘ पितृपत्न्यः ’ इति प्रथमवाक्यमेव न सापत्नमातरि उक्तविधसापिण्ड्यपरं, नहि तस्या विवाहप्रसक्तिरस्ति येन विवाहप्रतिबन्धाय सापिण्ड्यातिदेशः क्रियेत, किंतु सापत्नमातरि मुख्यमातृत्वातिदेशेन तद्भ्रात्रादिषु तन्निरूपितमुख्यभ्रातृत्वादेव विवाहप्रतिबन्धकतापरम् । मदनपारिजाते हि— ‘ असपिण्डा च या मातुरसगोत्रा च या पितुः ’ इति मनुवाक्यव्याख्यावसरे ‘ असपिण्डा च या मातुः ’ इत्यस्य फलप्रदर्शनायोक्तम्— ‘ सपत्नमातृकुलजा स्वासपिण्डा मातृसगोत्रा मातृसपिण्डा च ’ इति । तत्र विवाहप्रसक्तावेदमुच्यते ‘ असपिण्डा च या मातुः ’ इति । तथा च सापत्नमातुः सपिण्डेष्वपि मातुलादिव्यवहारं दर्शयति सुमन्तुः ’ इत्युक्त्वा ‘ पितृपत्न्यः ’ इत्याद्युदाहृतम् । एवं वदता हि ग्रन्थकारेण सर्वेषां वाक्यानां यथाश्रुतेऽर्थे एव तात्पर्यं प्रदर्श्यते । लक्षणोत्तर च भवन्मते सापत्नपुत्रं प्रति मातुलादिसापिण्ड्योक्तिस्तादृशकन्यां प्रति दुहितृषु सापिण्ड्योक्तिफलेति नैकरूप्येण प्रामाण्यसंभवः, लक्षणातः पूर्वं च प्रतिवाक्यं मातृत्वमातुलत्वाद्यतिदेशो योग्यतया आत्रेयीवधे ब्रह्महत्याप्रायश्चित्तस्येव मातृगमनप्रायश्चित्तस्य भागिनेयीपरिणयनतदुपगमनादिप्रायश्चित्तस्य चातिदेशं व्यवस्थया कुर्वन् वैरूप्यमावहतीति न लक्षणोचिता । नहि गुणभूतवाक्याश्रितदोषभयात्प्रधानप्रयोजनबाध उचितः । उदाहृतश्लोकसुमन्तुवाक्येषु प्रतिवाक्यप्रयोजनभेदोऽभियुक्तैः— *मुख्यमात्रादाविव सपत्नमात्रादौ अभिवादनसमाननाद्यति*दिश्यते, तदुपगमने वधे वा तद्दुहित्रादिपरिणये प्रायश्चित्तं वा, तादृशे मातुलादिमरणे आशौचनिर्देशो वेति । किंच अन्तर्वेदिदेशमानविधानेन वाक्यभेदपरिहारः, बहिर्वेदिदेशे नियोगेनार्थान्तराप्राप्तेरिति वार्तिकादौ स्फुटम् ।

* सस्मृ. मिताक्षरम् ।

अत्र तु ' तदपत्यानि भागिनेयानि ' इत्येतावतैव तच्छन्दमहिम्ना पूर्ववाक्याधिगम्यसापिण्ड्यप्राप्तेः पूर्ववाक्यानि अविधायकानि स्युरिति कथं वाक्यभेदः । किंच ' तद्भगिन्यो मातृस्वसारः ' इति भवदुदाहृतपाठे तदनर्थकं भवन्मते स्यात्, तृतीयचतुर्थस्थान इव द्वितीयस्थानेऽप्येकशीर्षसंकीर्तनेनैव चतुःपुरुषसापिण्ड्यलाभात् । अनर्थकं च ' तद्भ्रातरो मातुलाः ' इत्यपि स्यात्, ' पितृपत्न्यः सर्वा मातरस्तद्भागिनेय्यो ( ? तद्दुहितरो ) भगिन्यः ' इत्येतावताऽपि तल्लाभात् । एवं श्रीमतां लक्षणाऽङ्गीकरणं स्वसिद्धान्तविरुद्धम् । तथाहि– अभ्युदयेष्टिवाक्ये स्वविष्ठदध्नोर्द्वयोरुद्देश्यतानिमित्तो वाक्यभेदो भट्टैरङ्गीकृतः, नाङ्गीकृतश्च पञ्चशरावनवाक्ये द्रव्यदेवताविधिनिमित्तो वाक्यभेदः । अनयोर्वाक्यभेदयोः को भेद इति कैश्चित्कृताक्षेपनिरासः श्रीमद्भिरित्थं कृतः– ' सह श्रपयति ' इतिवाक्यानर्थक्यभयादभ्युदयेष्टिवाक्ये तदङ्गीकार उचित इति । एवं सति प्रकृते अनेकवाक्यानर्थक्यभयात् कथं न तदङ्गीकारे श्रीमतामौचित्यबुद्धिः । अस्तु वाक्यभेदभयाच्चतुःपुरुषसापिण्ड्य( निषेध ? ) लक्षणा । चतुष्ट्वं तु न व्यक्त्यपेक्षं, भ्रातृभगिन्यादीनामानन्त्यात्, किंतु सप्तपदार्थवाक्ये यथा घटादीनां रूपादीनां च यथाक्रममेकत्वापादकद्रव्यत्वगुणत्वादिसामान्यगोचरापेक्षाबुद्ध्यात्मकं सप्तत्वं तादृशबुद्धिजन्यं वा स्वीक्रियते, तथा प्रकृतेऽपि तद्भ्रातृत्वदुहितृत्वादिसामान्यविषयापेक्षाबुद्ध्यात्मकं तज्जन्यमेव वा चतुष्ट्वादिस्वीकार्यं, न त्वनुपस्थिततदपत्यत्वादिविषयतादृशबुद्ध्यात्मकं, उपस्थितत्यागे अनुपस्थितस्वीकारे च मानाभावात् । किंच माधवेन ' असपिण्डा च या मातुरसगोत्रा च या पितुः ' इति मनुवाक्यव्याख्यानावसरे ' ब्राह्मादिषु विवाहेषु या वूढा कन्यका भवेत् । भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया । गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवित् ॥ ' इति मार्कण्डेयपुराणमुदाहृत्योक्तमातुलकन्यादिनिषेधवाक्यानि गान्धर्वादिविवाहोढोत्पन्नविषयाणि, तत्र सापिण्ड्यनिवृत्तेरभावात्, मातुलकन्यादिविवाहकर्तव्यतापोषकाणि तु श्रुतिस्मृतिसदाचारा ब्राह्मादिविवाहोढोत्पन्नविषयाः, तत्र सापिण्ड्यनिवृत्तेरित्युक्त्वा, तादृशनिषेधप्रदर्शनावसरे ' मातुलस्य सुतामूढ्वा ' इत्यादिप्राये ' पितृपत्न्यः ' इत्यादि सुमन्तुवाक्यमुदाहृतम् । तद्यथा, शातातपः— ' मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥ ' पैठीनसिः– ' पितृमातृष्वसृदुहितरो धर्मतस्ता भगिन्यस्ता वर्जयेत् ' इति । सुमन्तुरपि ' पितृपत्न्यः ' इत्यादि । व्यासः– ' मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ' इति । ततोऽविशेषप्रवृत्तानामेषां वचनानां कथं विशेषविषयतेत्याशङ्क्य ' विशेषवचनबलादिति ब्रूमः ' इति प्रतिज्ञाय मनुवाक्यमुदाहृतम्– ' पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् । एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् ॥ ' इति । अत्र च भगिनीपदं पूर्वोत्तरद्वितीयान्ताभ्यां संबध्यते । आप्तपदं च मातुर्गान्धर्वादिविवाहप्रयुक्तसापिण्ड्यपरम् । पैतृष्वसेयी गान्धर्वविवाहोढैव ( ढजैव ) विवक्षिता । अतो भगिन्यादिपदसार्थकत्वानुरोधेन मनुवचनादितरेषां विशेषविषयत्वमित्युक्तम् । स्वीकृतश्चास्य मनुवाक्यस्य भगिन्याप्तपदमहिम्नेदृशोऽभिप्रायो न्यायसुधाकारेण बलाबलाधिकरणे । एवं च माधवेन सुमन्तुवाक्यस्य पूर्वोत्तरदेशोदाहृतशातातपपैठीनसिमनुवाक्येषु मातुलसुतात्वमातृगोत्रत्वाद्युद्देश्यतावच्छेदकभेदेन वाक्यभेदस्य परिहाराय लक्षणयैकोद्देश्यतावच्छेदकस्य वक्तुमशक्यत्वात् तस्य पुंसाधारण्ये च ' द्विजश्चान्द्रायणं चरेत् ' इति, ' ता भगिन्यः ' इति, ' एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत ' इति नैमित्तिकविधेयसमर्पकपदानन्वयापत्तेरपरिहार्यो वाक्यभेदः । तथा च तत्समानविषयतया माधवोदाहृते सुमन्तुवाक्येऽपि वाक्यभेद एव माधवसंमत इति स्वीकर्तुमुचितं, प्रायपाठभङ्गस्यान्याय्यत्वात्, गान्धर्वविवाहप्रयुक्तस्वसमाधवसंमतसापिण्ड्येनैव सफलसुमन्तुवाक्यानां संभवे श्रुत्यन्तरकल्पनापादकचतुःपुरुषापूर्वपरिणेतृनिरूपितसापिण्ड्यविधिकल्पनाया अन्याय्यत्वाच, कल्प्यविधिविषयसापिण्ड्यस्यापि गौणत्वेन विधेयमुख्यत्वालाभाच, अस्मन्मते तु मातृत्वाद्यतिदेशेन विधिविषयस्य संमाननप्रायश्चित्तादेर्मुख्यत्वात् । न च सापिण्ड्यबोधन एव संकरकारित्वापादनरूपवाक्यदोषपरिहारित्यनि

शङ्क्यम्, अवश्यकर्तव्यसंमाननाशौचातिक्रमस्य अनाचारसंकरापादकत्वसंभवात्, प्रायश्चित्तनिमित्तनिषेधातिक्रमस्य तु तदापादकतायां मतद्वयेऽपि तुल्यत्वात्। ननु— एवं मदनपारिजातोक्तवसिष्ठवाक्यव्याख्या न संगच्छते। तेन हि 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति वसिष्ठवाक्यमुदाहृत्योक्तम्— 'तत् सवर्णसापत्नमातृकुलविषयं, ब्राह्मणादीनां क्षत्रियादिदारसमुत्पन्नपितृकुलविषयं च, एकत्रावयवानुवृत्तेरभावादन्यत्र सावर्ण्याभावाच्च' इति। सुमन्तुवाक्यस्य सापिण्ड्यविषयत्वे तदवधिप्रदर्शनार्थे वसिष्ठवाक्ये पञ्चमीमिति संगच्छते, अन्यथाऽनुपपन्नं स्यात्— इति चेत्, न, ईदृशवाक्यानां चतुर्विंशतिमतानुसारेणानुकल्पाद्यर्थान्तरतात्पर्यस्य प्रागेव दर्शितत्वात्, पारिजातव्याख्यायामपि तदपत्यानि भागिनेयानीति भागिनेयीत्वेन सिद्धाया इव तत्कन्याया अपि युक्त्याऽऽभासेन प्रसिद्धभागिनेयीकन्याया इवापरिणेयत्वे प्रसक्ते तन्निवृत्त्या सर्वसुमन्तुवाक्यानां यथाश्रुतेऽर्थतात्पर्यदौर्घट्ये त्वसंभवात् (१)। यथा हि सपत्नमातरि मातृत्वातिदेशपरे प्रथमवाक्ये यन्निरूपितं सपत्नमातृत्वं तं प्रत्येव भवन्मतेऽपि सापिण्ड्यातिदेशो विधीयते, न तु तत्पुत्रं प्रत्यपि, यथा चास्मन्मते मातुलत्वाद्यतिदेशोऽपि तं प्रत्येव विधीयते, न तु मातुलकन्यादौ पितुर्भगिनीत्वातिदेशेन पुत्रं प्रत्यपि यौक्तिकः पितृस्वसृत्वाद्यतिदेशः सिध्यति। यथा च तदपत्यानीत्यन्तवाक्येन भागिनेयत्वातिदेशेऽपि तत्कन्याया न यौक्तिको भागिनेयीकन्यात्वातिदेशः युक्त्याभासस्येदृशविषयसाधकतया वसिष्ठेनापि पारिजातोक्तरीत्या प्रदर्शनात्। तथा मातुलकन्याया भगिनीत्वातिदेशेऽपि न मातुलसुते भ्रातृत्वातिदेशोऽपि यावद्वचनं वाचनिकमित्येवाभियुक्तस्वीकारौचित्यादित्यलं सवर्णसपत्नमातृकुले सापिण्ड्यविचारेण। असवर्णमातृकुले तु तद्विचारस्य न कलौ प्रयोजनं, असवर्णाविवाहस्य कलिवर्ज्यत्वात्।

संकौ. १७५–१७८

पंञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥

(१) (२) पञ्चमीं मातृतः, सप्तमीं पितृतः। मातृपितृशब्दौ च ज्ञातिलक्षणार्थौ, 'मातृबन्धुभ्यः पितृबन्धुभ्यश्च' इति स्मृत्यन्तरात्। 'असपिण्डाम्' इत्यनेनैव सिद्धे विवेकार्थः पुनरारम्भः। *मा भूत् 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति विशेषवचनात्* मातृतोऽपि सप्तपुरुषी सपिण्डता। तथा च आह गौतमः— 'पिण्डनिवृत्तिः सप्तमे पञ्चमे वा' इति। अयं च तस्यार्थः— सप्तमे पितृतः पञ्चमे मातृतः इति, 'मातृबन्धुभ्यः पञ्चमात्' इत्यारम्भात्। 'तथा' इति बीजिग्रहणार्थम्। तथा चाह गौतमः— 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो *बीजिनश्च मातृबन्धुभ्यः पञ्चमात्*' इति। चशब्दैवशब्दौ छन्दःसमाधानार्थौ। यद्वा, विकल्पार्थश्चशब्दः। पञ्चमीं सप्तमीं वा मातृतः पितृतश्चोद्वहेत्, सपिण्डतायास्तदवधिकत्वात्। तथा च गौतमीयं सूत्रं अविशेषाभिधानात् समर्थितं भवति। *एवं च उभयत्र पञ्चमे विवाहः स्यात्।* यत्तु 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो मातृबन्धुभ्यः पञ्चमात्' इति, तन्मातृतः पञ्चमादेव इत्यवधारणार्थम्। पितृतस्तु सप्तमात् पञ्चमाद्वेति विकल्पः। पञ्चमादित्यनुकल्पोऽयं, अन्यानर्थक्यात्। प्रथमकल्पे च न्यूनत्वदर्शनादनुकल्पः। मातृतश्चतुर्थेऽपि इति केचित्। तत् पुनः सामान्यतोदृष्टम्। तेन उभयत्र समत्वमेवानुकल्पः। तथा च शङ्खः— 'पञ्चमीं चोभयतः' इति। यत्तु आम्नायवचनम्— 'तस्माद् समानादेव पुरुषादत्ता चाद्यं च जायते। इदं हि चतुर्थे तृतीये वा पुरुषे संगच्छावहे इति हि विदेवं दीव्यमानया जात्या सहासत' इति, तत् मन्त्र-

(१) याज्ञस्मृ. १।५३ ; विश्व. पञ्चमात्सप्तमादूर्ध्वं (पञ्चमीं सप्तमीं चैव); मिता.; अप.; उ. २।११।१६ पृ. २२२; मवि. ३।५; स्मृच. ७१; गृर. ९ तथा (क्रमात्); स्मृसा. १३ (पितृतः सप्तमीं वर्जयेन्मातृतः पचमीं तथा।); पमा. ४६७; मपा. १३८; प्रपा. ३०७; स्मृकौ. ३३; मर. १८; निप. २७६ (=); गभा. १७; प्रर. १७; सादी. २१ : २३ अनुवादरूपेण : ३४ (=) निर्देशमात्रम्; वीमि.; मंप्र. ६१२ (=) : ७०३; चम. १३; मुक्ता. १२५; संम. ५०; सिन्धु ११४; विधा. ६८८; संकौ. १७३ (=) पञ्चमात्सप्तमात् (सप्तमात्पञ्चमात्); श्रान. १६९, १७२, १७३; माप्र. २ संकौवत् : ११ निर्देशमात्रम्; संग. १६८; संव. १४२; सस्मृ. ५४; कुभ ११८ : १०१७ निर्देशमात्रम्; संर. ४०७, ४०८ (=) (सप्तमात्पञ्चमादूर्ध्वं पितृतो मातृतस्तथा।); संदी. ११ (मागः २).

विकारस्तुतिमात्रार्थत्वात् अनादत्वमिति केचित् । अथापि जान्या इत्यादिपदार्थोपपत्त्यर्थं कर्तव्यतोच्येत, तथापि देशोपसंहृतस्येत्याहुः । तत् पुनर्न्यायस्मृतिविरुद्धम् । यथाऽऽह बौधायनः— 'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः' इत्युपक्रम्य 'इतरदितरस्मिन्कुर्वन् दुष्यति इतरदितरस्मिन्' इति चोक्त्वा 'उभयं त्वेव नाद्रियेत' इत्यादि । न्यायविदश्च याज्ञिकाः— 'अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य' इति । अतः कार्यत्वे सति सर्वधर्मत्वम् । अयं चात्र वाक्यार्थः— समानात् एकस्मात् पुरुषात् अत्ता च भोक्ता, आद्यं च भोग्यं, द्वावप्युत्पद्येते । तत्रोत्पन्नमानः परिणेता क्रीडन् संकल्पयति— इदं भोग्यं चतुर्थे पुरुषे तृतीये वा भोक्ष्यामि इति । तत्र उत्पत्तिपुरुषात् पञ्चमः संभवति, तृतीयपक्षे चतुर्थः । ते च अमी श्रुतिस्मृत्यनुसारात् चत्वारः कल्पाः— ऊर्ध्वं सप्तमात् पञ्चमाद्वा इत्येकः । पञ्चमे मातृतः सप्तमे पितृतः इति द्वितीयः । उभयतः पञ्चम इति तृतीयः । चतुर्थेऽपि इति चतुर्थः । पूर्वः पूर्वः श्रेयान् । स्त्रीविषयश्चान्यः कल्पः, इदमिति सर्वनाम्नो भोग्यपरत्वात् । एवं च वरचतुर्थे न विवाहः । मन्त्रवर्णोऽप्येवमेव व्याख्येयः— 'कल्हतां मातुलस्येव योषाम्' इति, व्यवधानेऽपि षष्ठ्युपपत्तेः वाजपेयस्य यूप इतिवत् । 'पैतृष्वसेयीं वपामिव' इति च, अपत्यापत्येऽपि तद्धिताविरोधात् । श्रुतिस्मृत्यनुसाराच्च एवं कल्पनेत्येषा दिक् । भूतपूर्वगत्या च मातृतः सपिण्डत्वमिति सूत्रार्थप्रसङ्गः । ननु एवं सति क्रीतः तृतीयेऽपि प्राप्नोति, 'अप्रत्तानां तु स्त्रीणां त्रिपुरुषी सपिण्डता विज्ञायते' इति वसिष्ठवचनात् । नैवम्, तस्य आशौचमात्रविषयत्वात् । अप्रत्तानां तु पारिभाषिकं तदुक्तम् । तथा च विवाहे पञ्चमी इत्युपपन्नं भवति । अन्यथा तत् असमञ्जसं स्यात् । क्षत्रियादीनां तु ब्राह्मणादिप्रभवानां उभयतश्चतुर्थेऽपि अविरुद्धो विवाहः । क्षत्रियादिप्रभवानां तु विशेषाभावात् पूर्वोक्त एव कल्पः । तथा च शङ्खः— 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥' इति । एवमन्यान्यपि अनयैव दिशा वाक्यानि योजनीयानि । विश्व.

(२) 'असपिण्डाम्' इत्यत्र एकशरीरावयवान्वयद्वारेण साक्षात् परम्परया वा सापिण्ड्यमुक्तम्, तच्च सर्वत्र सर्वस्य यथाकथञ्चिदनादौ संसारे संभवतीत्यतिप्रसङ्ग इत्यत आह—पञ्चमात्० । मातृतः मातुः संताने पञ्चमादूर्ध्वं, पितृतः पितुः संताने सप्तमादूर्ध्वं, सापिण्ड्यं निवर्तते इति शेषः । अतश्चायं सपिण्डशब्दः अवयवशक्त्या सर्वत्र वर्तमानोऽपि निर्मन्थ्यपङ्कजादिशब्दवन्नियतविषय एव । तथा च पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट्, आत्मा च सप्तमः । संतानभेदेऽपि यतः संतानभेदः तमादाय गणयेत्, यावत्सप्तम इति सर्वत्र योजनीयम् । तथा च मातरमारभ्य तत्पितृपितामहादिगणनायां पञ्चम(पुरुष)संतानवर्तिनी मातृतः पञ्चमी इत्युपचर्यते । एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषसंतानवर्तिनी पितृतः सप्तमी इति । तथा च 'भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः । विवाहेऽभ्यादिभूतत्वाच्छाखाभेदोऽवगण्यते ॥' यद्यपि वसिष्ठेन उक्तम्— 'पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा' इति, 'त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः' इति च पैठीनसिना, तदपि अर्वाङ्निषेधार्थं, न पुनस्तत्प्राप्त्यर्थं इति सर्वस्मृतीनामविरोधः । एतच्च समानजातीये द्रष्टव्यम् । विजातीये तु विशेषः । यथाह शङ्खः— 'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः । एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥' एकस्मात् ब्राह्मणादेर्जाताः एकजाताः । पृथक्क्षेत्राः भिन्नजातीयासु भिन्नासु स्त्रीषु जाताः । पृथग्जनाः समानजातीयासु भिन्नासु स्त्रीषु जाताः । ते एकपिण्डाः, किंतु पृथक्शौचाः । पृथक्शौचं आशौचप्रकरणे वक्ष्यामः । पिण्डस्त्वावर्तते त्रिषु, त्रिपुरुषमेव सापिण्ड्यं इति । मिता.

(३) ननु सगोत्रनिराकरणेनैव सपिण्डनिषेधे प्राप्ते किमिति भेदेनाभिधाने श्लोके 'असपिण्डां यवीयसीम्' इत्युक्तम् । न । एतत्संततिजाया निराकरणार्थम् । इतरथा असमानार्षगोत्रजा तत्स्त्रीसंततिजा परिणेया भवेत् । एवं चासपिण्डता मातृपक्षेऽपि वेदितव्या । यथाऽऽह मनुः— 'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता

द्विजातीना दारकर्मणि मैथुने ॥ ' नैव सपिण्डा मातुर्या। चकारात् पितुश्च। ' असगोत्रा च या ' इत्येतावत्युच्यमाने यत् पितुर्ग्रहणं करोति तत् क्षेत्रिकापुत्राभिप्रायेण। अन्यथा– ' यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ' इति तत्सगोत्राया विवाह्यत्वं स्यात्। सा प्रशस्ता, क्व, दारकर्मणि, यद्दारैर्विना न भवति। तच्च वचनादेव मा भूदित्याह– मैथुने, मिथुननिर्वर्त्ये यदेकैकस्य निर्वर्त्यं न भवति पाकयज्ञादिकम्। अत एवाऽऽपस्तम्बः– ' पाणिग्रहणाद्धि सहत्वं कर्मसु ' इति। सहग्रहणं बलीवर्दवत् समानाधिकार इति दर्शनार्थम्। ततश्च भर्ताऽसौ मर्तव्या, अहं दानादिकं निर्वर्तयामि त्वमपि संकल्पं कुर्विति, तयापि तथैव कार्यमन्यथा दोष इति सहाधिकारः। अतश्चैकफलभोक्तृत्वं फलान्तरोद्भूतिबाधश्च। 'असपिण्डा च या मातुः ' इति मातुलादिसुतापरिणयननिषेधः, मातुः सपिण्डत्वात्। ' पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा ' इति मातृकुलात् मातामहप्रभृतीन् पञ्च पुरुषानतीत्योद्वाहः कार्यः कर्तव्य इत्यर्थः। एवं सप्त पितृकुलात्। अत्र ' न भार्यां विन्देत ' इत्यधिकारे विष्णुः– ' मातृतस्त्वा पञ्चमात् पुरुषात् पितृतश्चा सप्तमात् ' इति। ननु ' असपिण्डाम् ' इत्युक्तमेव किमर्थं पुनरुच्यते ' सप्तमात् पितृतः ' इति। सत्यम्। किन्तु बैजिनोऽपि सप्तमादिति नियमार्थम्। यथाह गौतमः– ' ऊर्ध्वं तु सप्तमात् पितृबन्धुभ्यो बैजिनश्च मातृबन्धुभ्यः पञ्चमात् ' इति। नारदोऽपि– ' सप्तमात् पञ्चमादर्वाग्बन्धुभ्यः पितृमातृतः। अविवाह्या सगोत्रा च समानप्रवरा तथा ॥ ' पैठीनसिश्च– ' असमानार्षेयीं कन्यां वरयेत्। पञ्च मातृतः परिहरेत्। सप्त पितृतः। त्रीन् मातृतः पञ्च पितृतो वा ' इति। अत्र च समानजातीये पञ्च। असमानजातीये त्रीन् इति व्यवस्थितो विकल्पः। न च सप्तमे पञ्चमे वा भवति विवाह्या। यथा– ' सप्तमे पञ्चमे चैव येषां वैवाहिकी क्रिया। ये च संतानजातास्तेऽपि पतिताः शूद्रतां गताः ॥ ' इति विष्णुः। किंच यदि असमानगोत्रत्वान्मातुलसुतापरिणयनं तदा मातृष्वसृदुहितुरपि स्यात्, समानन्यायात्। एतदपि स्मृतीनामेव केवलानां प्रामाण्यम्। यावता शिष्टस्यापि प्रामाण्यम्।

यथाऽऽह मनुः– ' वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनां वेदवित्स्मृतिशीलता ॥ ' व्यतिरेकेण साधूनामाचारं दर्शयति येन तस्य शास्त्रविरोधेऽपि प्रामाण्यं स्यात्। इतरथा शीलं चेष्टितमाचारश्चैव साधूनामिति भेदेन ग्रहणं न स्यात्। साधवश्च दर्शिताः– ' न्यायेनाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ ' इति। न च तत्र वेदविदो न सन्ति न च तैरेतन्न चरितम्। यथा च बौधायनेन स्पष्टमेवंविधस्याचारस्य प्रामाण्यं दर्शितम्– ' पञ्चविधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः। यथैतदनुपनीतेन, भार्यया च सह भोजनं पर्युषितभोजनमुच्छिष्टभोजनं पितृष्वसृमातुलदुहितृपरिणयनमिति। तथोत्तरतः पञ्च। ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति। इतर इतरस्मिन् कुर्वन् दुष्यतीतर इतरस्मिन्। देशे प्रामाण्यात् ' इत्याचारबलेनैव प्रामाण्यमुक्तम्। स्यादेतद्यद्यनन्तरं न ब्रूयात् ' मिथ्यैतदिति गौतमः। उभयं त्वेतन्नाऽऽद्रियेत। शिष्टस्मृतिविरोधात् ' इति। स्मृतिविरोधश्च दर्शितः– ' ऊर्ध्वं मातृबन्धुभ्यः पञ्चमात् ' इति। शिष्टविरोधश्चाविगमात्। यत्पुनरुक्तम् ' न तत्र शिष्टा न सन्ति ' इति तदसंबद्धम्। ' शिष्टः पुनरकामात्मा ' इति वसिष्ठस्मरणात्। न शिष्टाः कामचारेण शास्त्रविरोधे प्रवर्तन्ते। गौतमग्रहणं एकवाक्यताप्रतिपादनार्थं, अनिराकरणात्। तथा च वसिष्ठः– ' देशकुलाचारा आम्नायाविरुद्धाः प्रमाणम् ' इति। आम्नायो वेदः। तदविरोधोऽस्तीति चेत्, नैतत्, भगिन्यादिगमनेऽपि तदविरोधदर्शनादतिप्रसक्तेः। तस्मादन्धपरम्पराऽन्यायागतस्य व्यवहारस्य प्रामाण्यम्। यदपि 'आ याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व। तृप्तां जहुर्मातुलस्येव ते तत्र भागः पैतृष्वसेयीमनामिवौर॥ ' इति, तन्मन्त्राणामविधायकत्वे सत्यपि परिणयननिराकरणं द्योत्यते। कथम्। कश्चित् प्रार्थयते। आयाहीन्द्र अस्मदीयं यज्ञं अन्यैरपि सोमपतिभिरीळितेभिः स्तोत्रार्हैः सह। आगत्य च यज्ञभागो सोमरूपाभभोजनमस्तावे जुषस्व। सेममिति संरभ्यते। एवं प्रार्थ्य इन्द्रमुन्यपि स्वरूपानुवादं करोति, ये ते सोमपतयो मत्ता सदाऽऽ-

यातास्ते सकृत् सोमपानेन तृप्ताः सन्तः सोमं जहुः त्यक्तवन्तः । किमिव, यथा पैतृष्वसेयीं भगिनीं भार्यात्वेन अत्यन्तानभिलषणीयां त्यजन्ति स्वकीयमातुलस्य संबन्धायोग्यतया, तद्वद्वदुद्देशेन सोमं त्यक्तवन्तो निराकाङ्क्षतया । तव पुनरयं सोमभागोऽप्यभिवीघः, सातत्येनाऽऽकर्मसमाप्तेरिति । ततश्चानेन प्रतिषेधो दर्शितः । यदपि श्रुतौ 'तृतीयं पुरुषं गच्छामहे' इति, तदपि स्नुग्व्यूहनपरत्वेनान्यार्थवत् । अपि च 'प्रजापतिः स्वां दुहितरमभिध्यायत तस्यां रेतोऽवाकिरत्' इत्यादिश्रवणादतिप्रसक्तिं करोति । प्रायश्चित्तदर्शनाच्च— 'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुरात्तां च गत्वा चान्द्रायणं चरेत् ॥' इति । भगिनीग्रहणं संदेहनिरासार्थम् ।

न च अपरिणीताविषयत्वमाशङ्कनीयम् । येनानन्तरं वक्ति— 'एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥' इति । तथा कन्यादातुरपि नियमोऽस्ति । यथाऽऽह आपस्तम्बः— 'सगोत्रेभ्यो दुहितरं न प्रयच्छेन्मातुश्च योनिसंबन्धेभ्यः पितुश्च सप्तमात्' इति । प्रायश्चित्तस्मरणाच्च— 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत् ॥' इति । मातृगोत्रग्रहणं पितृसगोत्रव्यभिचाराकरणार्थं, जन्यजनकसंबन्धस्योभयस्योभयत्र अविशिष्टत्वात् । शातातपोऽपि— 'एकगोत्रां विवाहैव समानप्रवरां तथा । मातुलस्य सुतां चैव भुक्त्वा चान्द्रायणं चरेत् ॥' इति । यदा चेत्थं तदा न कुतश्चिद्भ्रान्तिबुद्धिर्व्याख्यानात् तत्प्रवृत्तेर्वा संदेहः कार्यः, शास्त्रस्य विविक्तत्वात् । अप.

## नारदः

आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्याः सगोत्राः स्युः समानप्रवरास्तथा ॥

(१) आङ् मर्यादायामिति केचित् । अभिविधावित्यन्ये । 'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यः' इत्यन्यत्र दर्शनात् । 'प्राक् सप्तमात्' इत्यप्रत्यक्षत्वात् । आपञ्चमान्मातृबन्धुभ्य इति चाभिविधिरेव, न विवाहमर्हन्ति पितृष्वस्रादिसंबद्धाः मातामहमातुलादिसंबद्धाश्च । सगो(त्रा १ त्र)तुल्यास्ते समानप्रवराश्चेत्यन्ये । सगोत्रा असमानप्रवरा द्रष्टव्या अस्मिन् व्याख्याने । नाभा.

(२) इति नारदीये आङ् मर्यादायां पृथक् पदम् । संतानापेक्षः सप्तमादित्यादिक्लीबनिर्देशः । अन्यथा कन्याया विशेष्यत्वात्स्त्रीत्वौचित्यम् । मातृत इति षष्ठीद्विवचनात्तसिः । आदौ शाकपार्थिवादित्वात्समासः । बन्धुभ्य इत्यत्रान्वयः । अर्थः प्राग्वत् । तथा च सप्तमत्वपञ्चमत्वाश्रयत्वकन्यारूपसंतानपर्यन्तमविवाह्या इत्यर्थः । एतेनात्र बन्धुभ्य इत्युक्तेः पञ्चमीनिर्देशाच्च पितुः पितृष्वसुः पुत्रासत्संतानभूतां सप्तमीं मातुः पितृष्वसुः पुत्रात्पञ्चमीं च त्यजेदिति निर्णयसिन्धूक्तमपास्तम् । पितृतोऽष्टमी मातृतः षष्ठी उद्वाह्या, पितुः पितृष्वस्रनवमी मातुः पितृष्वसृसप्तमी च त्याज्येत्यस्यात्यन्तानौचित्यात् संभवतीति न्यायविरोधात् मूलभूतश्रुत्यन्तरकल्पनजगौरवाच्च । एवं सर्ववाक्यानामेकवाक्यता सिद्धा ।

बाल. १।५२ पृ. १९३

सापिण्ड्यसंकोचविचारः

मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात्तथा ।
गृहस्थ उद्वहेत्कन्यामन्यथा गुरुतल्पगः ॥
तृतीयां मातृपक्षाच्च पञ्चमीं पितृतस्तथा ।
विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम् ॥

---

(१) नासं. १२।७ ; नास्मृ. १४।७ पञ्चमाच्च (पञ्चमात्तु) ; अप. १।५३ पृ. ८१ आ सप्तमात् पञ्चमाच्च (सप्तमात्पञ्चमाद्वांश्) उत्तरार्धे (अविवाह्या सगोत्रा च समानप्रवरा तथा ।) ; उ. ५।११।१९ पृ. २११ ; स्मृच. ७२ (पञ्चमात्सप्तमाद्वांश् बन्धुभ्यः पितृमातृतः । अविवाह्या सगोत्रा च समानप्रवरा तथा ॥) ; दीक. १।५२ उत्तरार्धे (अविवाह्या सगोत्रा च समानप्रवरा तथा ।) ; उन. ११० दीकवत् : ११७ पू. ; संप्र. ७०३, ७०५ स्मृचवत् : ७०६, ७०९ प्रतीकमात्रम् ; मुक्ता. १२६ स्मृचवत् ; सिन्धु. १००० दीकवत् ; मान. १७० स्मृचवत् ; माप्र. १ ; बाल. १।५३ पृ. १९३ .

(१) सादी. २४ : २५ पू. : २६ निर्देशमात्रम् ; धम. ९१ ; संम. ५० .

(२) मुक्ता. ११० विवहन्ति (विवहेयुः) ; मान. १७१ .

चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमीमपि ।
षष्ठीं तु नोद्वहेत्कन्यां पञ्चमो न तु पञ्चमीम् ।
तृतीयो वरयेत्कन्यां चतुर्थीं पञ्चमीं तथा ॥

[2]सप्तमे पञ्चमे वाऽपि येषां वैवाहिकी क्रिया ।
ते च संतानिनः सर्वे पतिताः शूद्रतां गताः ॥

## बृहस्पतिः

विवाहादिसंस्काराणां शास्त्रविरुद्धदेशधर्माणां
प्रामाण्यविचारः, मातुलादिकन्या-
परिणयनिषेधविचारः

[3]विरुद्धाः प्रतिदृश्यन्ते दाक्षिणात्येषु संप्रति ।
स्वमातुलसुतोद्वाहो मातृबन्धुत्वदूषितः ॥
[4]उद्ब्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
सापिण्ड्यमपि संकोच्य प्रत्यक्षश्रुतिदर्शनात् ॥

[5]उद्ब्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ॥

[6]मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥

[1]अप्रजातां प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ॥
सेमुद्रयानं मांसस्य भक्षणं शस्त्रजीविका ।
शीधुपानमुदीच्यानामविगीतानि धर्मतः ॥

[2]सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम् ॥
[4]देशजातिकुलानां च ये धर्मास्तत्प्रवर्तिताः ।
तथैव ते पालनीयाः प्रक्षुभ्यन्त्यन्यथा प्रजाः ॥

[5]अभर्तृकभ्रातृभार्याग्रहणं चातिदूषितम् ।
कुले कन्याप्रदानं च देशेष्वन्येषु दृश्यते ॥

इत्थं विरुद्धानाचारान् प्रभूतान्न निवर्तयेत् ।
तथा भ्रातृविवाहोऽपि पारसीकेषु दृश्यते ॥

[6]देशजात्यादिधर्मस्य प्रामाण्यमविरोधिनः ।
शास्त्रेणातो नृपः सर्वं शास्त्रं दृष्ट्वा प्रवर्तयेत् ॥

अतो ब्राह्मादिविवाहेषु निवृत्तसपिण्डभावाया मातुरसपिण्डत्वान्मातुलसुता परिणेया । एवं पैतृष्वसेय्यपि च । न च तथाविधा मातृष्वसा तद्दुहिता च किमिति न परिणेयेति वाच्यम् । शास्त्राविरोधेऽपि लोकविरुद्धत्वात् धर्म्यमपि लोकविद्विष्टं तन्नानुष्ठेयम् । तदुक्तं मनुना— ' अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ' इति ।

मुक्ता. १३१

---

(१) मुक्ता. १३० ; आन. १७१ .

(२) दीक. ११५२ ; उत. ११० ; वीमि. ११५२ पृ. ११३ सप्तमे पञ्चमे वाऽपि ( पञ्चमे सप्तमे चैव ) ते च ( ये च ) शूद्रतां गताः ( शूद्रसम्मिताः ) .

(३) स्मृच. १० ( = ) प्रतिदृश्यन्ते ( तु प्रदृश्यन्ते ) ; मुक्ता. १३० ; आन. १७२ .

(४) विपा. ६९५ ; संग. १७२ .

(५) स्मृच. १० उद्ब्यते ( उह्यते ) गवाशिनः ( करूशिनः ) ; सादी. २९ उद्ब्यते ( उह्यते ) पू. ; संप्र. ७२५ पू. ; चम. ९४, ९६ उद्ब्यते (उदूह्यते) पू. ; मुक्ता. १३० सादीवत् ; संम. ५३ पू. ; सिन्धु. १०१२ चमवत्, पू. ; आन १७२ सादीवत् ; साम्र. ८ चमवत् , पू. ; संर. ४१२ चमवत् , पू.

(६) स्मृच. १० ; चम. ९६ नार्यः ( चैव ) ; मुक्ता. १३० पूर्वे ( सर्वे ) ; संम. ५३ चमवत् ; सिन्धु. १०१२ चमवत् ; आन. १७२ मुक्तावत् ; साम्र. ८ पूर्वे ( सर्वे ) नार्यः ( चैव ) ; संर. ४१२ चमवत् .

(१) स्मृच. १० अप्रजातां ( सद्जाताः ) ; चम. ९६ ( सञ्जाताश्चापि गृह्णन्ति भ्रातृभार्यां सभर्तृकाम् । ) ; मुक्ता. १३० ; संम. ५३ ( सञ्जाताश्चापि गृह्णन्ति भ्रातृभार्याममर्तृकाम् । ) ; आन. १७२ ; साम्र. ८ संमवत् ; कुभ. १०१२ संमवत् ; संर. ४१२ संमवत्.

(२) मुक्ता. १३० स्मृतिरत्ने इत्युक्तम् ; आन. १७२ .

(३) चम. ९६ ; संम. ५३ ; साम्र. ८ ; कुभ. १०१२ ; संर. ४१२ .

(४) स्मृच. १० ; मुक्ता. १३० ( देशजातिकुलाचारधर्माः सद्भिःप्रवर्तिताः । तथैव ते पालनीयाः प्रजाः प्रक्षुभ्यतेऽन्यथा ॥ ) ; आन. १७२ ( देशजातिकुलाचारधर्माः सद्भिः प्रवर्तिताः । तथैव ते पालनीयाः प्रजाः प्रक्षुभ्यतेऽन्यथा ॥ ) .

(५) स्मृच. १०,११ ( = ) तान्न (तान्वि) ; मुक्ता. १३० दूषितम् ( दूषिते ) .

(६) स्मृच. ११ ( = ) ; मुक्ता. १३१ ण्यमवि (ण्यादवि).

## व्यासः

मातुलादिकन्यापरिणयनिषेधविचारः

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥

( १ ) मातृतो मातृपक्षे तृतीयां मातुलसुता, पितृपक्षे तृतीयां पैतृष्वसेयीमित्यर्थः । शुल्कं मूल्यम् । अनेन मूल्यस्वकूटस्समारभ्य गणयेदित्युक्तं भवति ।

स्मृच. ७०

( २ ) यः श्रुतिस्मृतिसदाचारैर्मातुलकन्यापरिणयः प्राप्तः, सोऽनेन कलौ निषिध्यते । तेन मातुलस्य सुतामूढ्वेत्यादीनि वचनानि कलिविषयाण्येव । अत एव व्यासेन कलिनिन्दाप्रक्रमे— तृतीयां मातृत इति, इत्युक्तम् । एतेन कृष्णार्जुनादीनां मातुलकन्यापरिणयोऽपि युगान्तरीयत्वान्न विरुध्यते । आधुनिकानां तु तदाचारोऽनाचार एव । अत एव बौधायनेन— 'पञ्चधा विप्रतिपत्तिर्दक्षिणतः' इत्युपक्रम्य 'यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनम्' इत्यनाचारत्वमेव प्रतिपादितमिति ।

चम. ४९

( ३ ) कलौ इति शेषः, कलौ उद्वहिष्यन्ति इति । कलौ एवं प्रवर्तिष्यते, तत् विशिष्टैः परिहर्तव्यमित्युपदेशार्थं कलौ अधर्मप्रवृत्तिवर्णनं शास्त्रेष्ववगन्तव्यम् । मातृतस्तृतीया मातुलसुतां, पितृतस्तृतीयां पैतृष्वसेयीमित्यर्थः ।

आन. १७०

मातृसापिण्ड्यवर्ज्यता

मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ॥

( १ ) यत्तु 'मातुः सपिण्डा...' इति व्यासवचनान्तरं तत् यत्नेनेति ग्रहणात् अतिशयदोषार्थं मातृसपिण्डसंततिकन्यापरंपरायाः पञ्चमीपर्यन्ताया वर्जनार्थं च । क्वचित्तु एतद्वचनस्य असुरादिविवाहपरत्वेन तादृशविवाहे समानोदकाऽपि विवाह्या इत्याह, तन्न, प्रमाणाभावात् ।

उत. ११४

( २ ) तदेतत्सर्वं गान्धर्वादिविवाहोढाविषयम् ।

चम. ९५

## देवलः

सापिण्ड्यावधिः

पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।
सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥
संनिकर्षेऽपि कर्तव्यं त्रिगोत्रात्परतो यदि ॥
धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् ।
अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥

## उशनाः

वर्णभेदेन सापिण्ड्यावधिभेदः, सापिण्ड्यवर्ज्यनाविषयः

सप्त पट् पञ्च चत्वारो वर्ज्या वर्णैः क्रमान्नराः ।
सपिण्डतायामुद्वाहे शुद्धौ मरणजन्मनोः ॥
त्रयोऽनुलोमजैस्त्याज्या द्वावेव प्रतिलोमजैः ॥

## मरीचिः

विवाहे सापिण्ड्योपेक्षणे पातित्यम्

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥

---

( १ ) स्मृच. ७० ; संप्र. ७१५, ७२५ ; चम. ४९ ; मुक्ता. १२७ ; सस. ११० ; आन. १७० .

( २ ) गृक. १० ; स्मृच. ७० ; गृर. ११ ; स्मृमा. ११ ; पमा. ४७० ; उत. ११४ ; वीमि. ११५३ पृ. ११२ ; चम. ९५ ; सिन्धु. १००८ ; संकौ. १७७ .

( १ ) उत. १०८, १११ नारदः ; संप्र. ७०३ : ७०५ निर्देशमात्रम् ; सिन्धु. १०२७ ; विपा. ६८८ क्रमात् (तथा) देवलयाज्ञवल्क्योक्तेरित्युक्तम् ; संग. १६८–१६९. शातातपेऽपि एतत्सदृशवचनं समुपलभ्यते ।

( २ ) उत. ११५ मत्स्यपुराणमित्युक्तम् ; संप्र. ७१० संनिकर्षेऽपि ( तत्संनिकर्षे ) क्रमेण बृहन्मनुः ; सिन्धु. १००१ ; साप्र. १ कर्तव्यं ( कर्तव्या ) ; याल. ११५३ पृ. १९१ साम्नवत् ; संर. ४१० .

( ३ ) संप्र. ६८९ ; सिन्धु. १०२३ नारदः ; साप्र. १७ नारदः .

( ४ ) संप्र. ७१० .

( ५ ) अप. ११५३ पृ. ८२ पञ्चमे सप्तमे ( सप्तमे पञ्चमे ) क्रियापरा अपि हि ते ( ते च संतानकारतेऽपि ) सिन्धुः ; स्मृच. ७२ येषां ( यषां ) ; पमा. ४६७ पतिताः ( सर्वतः ) ; प्रपा.

## शातातपः

सापिण्ड्यावधिः सार्ववर्णिकः, मातुलादिसुतापरिणये प्राय-
श्चित्तादिकर्तव्यता, देशभेदेन सापिण्ड्यसंकोचः

[1]पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।
सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥

[2]मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

[3]एकगोत्रां विवाह्यैव समानप्रवरां तथा ।
मातुलस्य सुतां चैव भुक्त्वा चान्द्रायणं चरेत् ॥

[4]मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा ।
विवहन्ति क्वचिद्देशे संकोच्यापि सपिण्डताम् ॥

## लघुशातातपः

सापिण्ड्यवर्ज्यता

[5]असपिण्डा तु या मातुरसगोत्रा च या पितुः ।
सा विवाह्या द्विजातीनां दारकर्मणि मैथुने ॥

३०७ पतिताः ( सर्वे ते ) ; संप्र. ७०५ प्रपावत् ; चम. ९३ पूर्वार्धे (सप्तमे पञ्चमे चैव येषां वैवाहिकक्रिया।) पतिताः शूद्रतां ( सर्वत्राशुद्धतां ) ; मुक्ता. १२७ ; संम. ५० पञ्चमे सप्तमे ( सप्तमे पञ्चमे ) ; सिन्धु. १००२ ; विपा. ६८९ पतिताः ( विज्ञेयाः ) ; संकौ. १७४ प्रपावत् ; साप्र. ५ समवत् ; प्रका. ३४६ प्रपावत् ; बाल. २।५३ पृ. १९२ वैवाहिकी (वैवाहिक) हि ते ( तु ते ) ; संग. १६९ विपावत् ; कुभ. ९९६ ; संर. ४०९, ४१० विपावत् .

( १ ) स्मृसा. १२ ; मर. १८ ; वीमि. २।५३ पृ. १०९ क्रमात् ( तथा ) . देवलेऽपि एतत्सदृशं वचनं द्रष्टव्यम् ।

( २ ) स्थलादिनिर्देशो गोत्रप्रवरविचारे ( सका. पृ. १८६ ) द्रष्टव्यः ।

( ३ ) अप. २।५३ पृ. ८४.

( ४ ) सादी. २९ ( = ) ; चम. ९४ ; मुक्ता. १३० पूर्वार्धे ( मातुलस्य सुतां केचित्पैतृष्वसृसुतादिकम् ।) स्मृतिसारे इत्युक्तम् ; सिन्धु १००७ ; विपा. ६९५ ; श्रान. १७१ पितृष्वसृसुतां तथा ( पैतृष्वसृसुतादिकम् ) स्मृतिसारवचनमित्युक्तम् ; संग. १७२ .

( ५ ) लशास्मृ. ३७. शेषः स्थलादिनिर्देशः गोत्रप्रवरविचारे ( सका. पृ. १८८ ) द्रष्टव्यः ।

## पराशरः

सापिण्ड्यावधिभेदः मतभेदेन

[1]चतुर्थीमुद्वहेत् कन्यां चतुर्थः पञ्चमोऽपि वा ।
पराशरमते षष्ठीं पञ्चमो न तु पञ्चमीम् ॥

## सुमन्तुः

सापिण्ड्यावधिभेदः मतभेदेन, विरुद्धसंबन्धः

[2]मातृपितृसंबद्धा आसप्तमादविवाह्याः कन्या भवन्ति । आपञ्चमादन्येषाम् ॥

[3]पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि । अन्यथा संकरकारिण्यः स्युः ॥

( १ ) सादी. २७ ( = ) मोऽपि वा ( मो वरः ) पराशर (पाराशर ) ; सिन्धु. १००४ ; विपा. ६९७ पराशर ( पाराशर्य ) ; साप्र. ५ ; प्रका. ३४७ ( = ) ; बाल. २।५३ पृ. १९३ ; संर. ४०९ ; संदी. १५ सादीवत्.

( २ ) गृक. १० संबद्धा ( सबन्धा ) ; गृर. ११ मातृपितृसंबद्धा ( पितृमातृसंबन्धा ) ; स्मृसा. १३ कन्या ( कन्यका ) शेषं गृकवत् ; उत. १०९ दन्येषाम् + (मतम्) शेषं गृकवत् : ११८ गृकवत् ; संप्र. ७०२, ७०७ ; सिन्धु. १०१६ (कन्या ०) ; बाल. २।५२ पृ. १७३.

( ३ ) गृक. १० (तद्भगिन्यो मातृष्वसारः०) (स्युः०) ; उ. २।१२।१६ पृ. २२३ ( *पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तत्सुता मातुलसुतास्तस्मात्ता नोपयन्तव्याः ।* ) एतावदेव ; स्मृच. ७० ( तद्भगिन्यो मातृष्वसारः० ) सकरकारिण्यः ( सकरकारीणि ) ; गृर. ११ पितृपत्न्यः सर्वाः ( सर्वाः पितृपत्न्यो ) ( तद्भगिन्यो मातृष्वसारः० ) ( स्युः० ) ; स्मृसा. १३ अन्यथा (ताः) शेषं गृरवत् ; पमा. ४६९–४७० ( स्युः० ) ; मपा. १३५ ( *तद्भगिन्यो मातृष्वसारः०* ) सकरकारिण्यः ( *संकरकारिकाः* ) ; गभा. ९७–९८ ; उत. ११८ (सर्वा- पितृपत्न्यो मातरस्तद्भ्रातरस्तु मातुलास्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ताश्च अविवाह्याः । *अन्यथा संकरकारिण्यः ।* ) ; मर. ९८ सकरकारिण्यः ( सकरकारिणः ) ; सादी. ३१ दुहितरश्च ( दुहितरो ) ( अन्यथा संकरकारिण्यः स्यु०ः ) श्रुतिरित्युक्तम् ; संप्र. २१४ ( पितृपत्न्यः सर्वा मातरः ) एतावदेव : ६९५ स्तद्दुहितरश्च ... स्युः ( *स्तद्दुहितरो भगिन्यो भगिनीसपत्न्यश्च भगिन्यस्तदपत्यानि भागिनेयानि अन्यथा संकरकारकाणीति याप्याः पतिताश्च भवन्ति* ) ; श्राप्र. १०

तथाऽध्यापयितुरेतद्देव ॥

( १ ) आपञ्चमादिति मातृसपिण्डाविषयं, ' मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः ' इति व्यासवचनात् । तद्भ्रातरः सोदराः, तत्रैव भ्रातृशब्दस्य शक्तेः । एवं च पूर्वमातस्येति विशेषणमनुवादः । एवमेव हलायुधादयः । अन्यथा एषामनन्तराभिहितानां कन्याः परिणीताः संकरकारिण्यः संकरार्थत्वादधर्मकारिण्यो भवन्ति ।

तस्याध्यापयितुस्तद्विवाहजनकमन्त्राध्यापयितुः, एतदेव संकरकारित्वमेव इत्यर्थः । गृर. ११

( २ ) यद्यपि तेषां मातुलत्वेनार्थाच्चद्दुहितृतदपत्ययोर्भगिनीत्वमागिनेयत्वे तथापि तदुपादानं तयोरेव वर्जनार्थं, अन्यार्थं पुनर्वचनमिति दर्शनात् अन्यार्थं तदितरार्थमधिकार्थमिति यावत् । आदिष्टत्वेन च मुख्यमातुलतो जघन्यता युक्तेति । अन्यथा एताः कन्यकाः परिणीताः संकरात्मकाधर्मकारिण्यो भवन्ति इति । तथाऽध्यापयितुः तत्तद्विवाहमन्त्राध्यापयितुः एतदेव संकरकारित्वमेवेत्यर्थः इति रत्नाकरः । अन्ययेत्यत्र ताः परिणीताः इति पठितं व्याख्यातं च हरिनाथोपाध्यायैः ताः कन्यका विवाहिता इति स्मृतिसारे । वस्तुतस्तु अध्यापयितुर्गुरोस्तथा कन्यका उद्वाहिताः एतदेव संकरात्मकाधर्मकारित्वं भजन्ते एवेत्यर्थः । अत एव आदिपर्वणि— ' प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् । गृहाण विधिवत्पाणिं मम मन्त्रपुरस्कृतम् ॥ ' कच उवाच— ' त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम । यथा मे स गुरुर्नित्यं मान्यः शुक्रः पिता तव ॥ देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि । गुरुपुत्रीतिकृत्वाऽहं प्रत्याचक्षे न दोषतः ॥ ' दोषतो दृष्टदोषतः । व्यक्तं मत्स्यसूक्ते— ' समानप्रवरा याऽपि शिष्यसंततिरेव च । ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते ॥ ' उत. ११८–११९

( ३ ) अत्र च ' यावद्वचनं वाचनिकम् ' इति न्यायेन परिगणितेष्वेवातिदेशिकं सापिण्ड्यम्, न तु सप्तमपञ्चमपर्यन्तमिति केचित् । चम. ९७

मातुलादिसुतापरिणये प्रायश्चित्तादिकर्तव्यता

[1]पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् । परित्यज्यैनां मातृवत् बिभृयात् ॥

( १ ) एतच्च अमतिपूर्वे वेदितव्यम् । मतिपूर्वे गुरुतरम् । अप. १।५३ पृ. ८०

( २ ) अयं च मातृसगोत्रानिषेधो मातृसंबन्धित्वेन जन्मपरंपरानाम्नः प्रत्यभिज्ञायां सत्याम् । अत एव

( सर्वाः पितृपत्न्यो मातरः ) एतावदेव ; चम. ९६–९७ ; मुक्ता. १२८ ( पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तत्सुता मातुलसुतास्तस्यसारश्च मातृष्वसारस्तत्सुता मातृस्वसृसुतास्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि तस्मात्ता नोपयन्त्या: । अन्यथा संकरकारिकाः स्युः ) ; संम. ५२ संकरकारिण्यः ( संकरकारिणः ) ; सिन्धु. १०१५ ( पितृपत्न्यः सर्वा मातरः, ... तदपत्यानि भागिनेयानि ) एतावदेव : १०१६ संमवत्; विपा. ६९१ ( तद्भगिन्यो मातृष्वसारः० ) भागिनेयानि ( भागिनेयभागिनेय्यादीनि ) ( अन्यथा संकरकारिण्य स्युः ) ; संकौ. १७१ संमवत् : १७१ निर्देशमात्रम् ; मान. १७४ मुक्तावत् ; साम. १० संमवत् : १२ निर्देशमात्रम् ; प्रका. ३४७; बाल. १।५२ पृ. १७२ ( अन्यथा संकरकारिण्यः स्युः० ) : १।५३ पृ. १९१ प्रतीकमात्रम् : १।८९ पृ. २७० प्रतीकमात्रम् ; संग. १७४ संमवत्; संव. १४१ ; संर. ४११ संमवत् .

( १ ) गृक. १० तथाऽध्या ( स्वस्याध्या ); गृर. ११ तथाऽध्या ( तस्याध्या ) ; उत. ११८ ; सिन्धु. १०१६ .

( १ ) अप. १।५३ पृ. ८० ( मातुलसुतां पैतृष्वस्रेयीं समानार्षगोत्रां च परिणीय चान्द्रायणं चरेत् । परित्यज्यैनां बिभृयात् । ) ; गृक. ९ ( मातृष्वसृसुतां० ) मातृसगोत्रां ( मातुः सगोत्रां ) त्यज्यैनां ( त्यज्य चैनां ) ( मातृवत्० ) ; गृर. १० ( मातृष्वसृसुतां० ) ( मातृसगोत्रां० ) त्यज्यैनां ( त्यज्य चैनां ) ( मातृवत्० ) ; स्मृसा. १३ ( पितृष्वसृसुतां मातुलसुतां विवाह्य समानार्षेयीं च चान्द्रायणं चरेत्, परित्यज्यैनां बिभृयात् । ) ; पमा. ३३७ ( खण्डः २ भा. १ ) ( मातृष्वसृसुतां० ) विवाह्य ( च विवाह्य ) त्यज्यैनां ( त्यज्य चैनां ) ( मातृवत्० ) ; उत. १११ त्यज्यैनां ( त्यज्य चैनां ) ( मातृवत्० ) ; वीमि. १।५३ पृ. ११२ ( पितृष्वसृसुतां मातुलसुतां समानार्षेयीं च विवाह्य चान्द्रायणं चरेत् परित्यज्य चैनां बिभृयात् ) ; संप्र. ६८१ ( पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां तथैव च समानप्रवरां विवाह्य चान्द्रायणं चरेत् ) : ७१५ ( पितृष्वसृसुतां मातृष्वसृसुतां मातृसगोत्रां समानप्रवरां च विवाह्य चान्द्रायणं चरेत् । ) ; मुक्ता. १२७ ( समानार्षेयी० ) विवाह्य ( उद्वाह्य ) ( मातृवत्० ) ; सिन्धु. १०२७ .

व्यासः– 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञाने उद्वहेताविशङ्कितः ॥' इदं च व्यासाभिधानं हलायुधेन पुत्रिकापुत्रविषयमिति यत् लिखितं तच्चिन्त्यं, लक्ष्मीधरावस्वरसात् । गृर. १०

सापिण्ड्याशौचदायभागावधिः

तत्र ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति, आसप्तमाद्रिक्थविच्छित्तिर्भवति, आतृतीयात् स्वधाविच्छित्तिर्भवति, अन्यथा सपिण्डाशौचक्रियाव्युच्छेदाद्ब्रह्महतुल्या भवन्ति ॥

एकपिण्डस्वधानां, एकः पिण्डः स्वधासम्बन्धी येषां ते तथा । धर्मविच्छित्तिरशौचादिनिवृत्तिः । सप्तममवधीकृत्य परतो दायभागनिवृत्तिः । तृतीयमवधीकृत्य परतः स्वधानिवृत्तिः । अन्यथा चतुर्थादर्वाक् पिण्डनिवृत्तौ एकादशादर्वाक् शौचनिवृत्तौ(१) पापभाक् भवतीत्यर्थः । स्मृसा. ११८

## कण्वः

क्षत्रियविषयः सापिण्ड्यावधिः

तृतीयात् क्षत्रियो मातुः पञ्चमान् पितृतः पराम् । समुद्वहेत्सवर्णां तु पञ्चमात् सप्तमात्पराम् ॥

## पैठीनसिः

सापिण्ड्यावधिविकल्पः

असमानार्षेयीं कन्यां वरयेत् ॥

पञ्च मातृतः परिहरेत्, सप्त पितृतः ॥

त्रीन् मातृतः पञ्च पितृतो वा ॥

(१) अत्र च समानजातीये पञ्च, असमानजातीये त्रीनिति व्यवस्थितो विकल्पः ।

* अप १।५३ पृ. ८२

(२) अत्र 'त्रीनतीत्य' इत्यादिकस्यायं विषयः । यस्य माता दत्तपुत्री तां यः प्रतिग्रहीता पुत्रत्वेन स्वीकरोति तत्कुलम् । यस्य दत्तपुत्रः पिता तस्य दत्रिमस्य जनककुलं च एकत्रावयवानुवृत्तेरभावादन्यत्र गोत्रानुवृत्तेरभावाच्च । मपा. १३९–१४०

(३) (त्रीन्...) इति तु आसुरादिविवाहविषयं क्षत्रियादिविषयं वा । दीक. १।५३ पृ. ८

(४) त्रीन् पञ्चेत्यासुरादिविवाहविषयं क्षत्रियादिविवाहविषयं वा इति विवेककृतः । असमानजातीया-

---

(१) संप्र. ७०० स्वयम्भूः ; स्मृसा. ११८ अन्यथा ... भवन्ति (अन्यथा पिण्डशौचाद्युच्छेदे ब्रह्महा भवति ) ; सिन्धु. १०१३ (तत्र०) स्वधावि (पिण्डवि) अन्यथा ... भवन्ति (अन्यथा पिण्डशौचक्रियाविच्छेदाद् ब्रह्महतुल्यो भवन्ति ).

(२) मुक्ता. १२८ ; आन. १७१ , १७२ पृ.

(३) स्थलादिनिर्देशः गोत्रप्रवरविचारे (संका पृ. १८९) द्रष्टव्यः ।

(४) अप. १।५३ पृ. ८२ ; गृक. ८ ; उ. २।११।१६ पृ. २२१ ; गृर. १० (पञ्च मातृतः सप्त पितृन् परिहरेत्) ; स्मृसा. १३ (मातृन् परिहरेद् पञ्च सप्त पितृनः परिहरेत्) ; पमा. ४६७ ; मपा. १३९ (परिहरेत०) ; दीक. १।५३ (परिहरेत् पञ्च मातृनः सप्त पितृतः पञ्च पितृतो वा ) ; उत. १०८ ; सादी. २५ (पञ्चातीत्य मातृतः सप्तातीत्य पितृतः ) ; वीमि. १।५३ पृ. ११२ ; संप्र. ७०३ , ७०७ ; चम. ९३ (पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतः ) ; मुक्ता. १२५ ; संम. ५० चमवत् ; सिन्धु. १००३ चमवत् ; विपा. ६९४ चमवत् ; आन. १६९ ; साप्र. ५ चमवत् ; बाल. १।५३ पृ. १९२.

* गृक, गृर., स्मृसा. अपगतम् ।

(१) मिता. १।५३ (त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः ) ; अप. १।५३ पृ. ८२ ; गृक. ८ पितृतो वा ( पितृन् इति वा ) ; उ. २।११।१६ पृ. २२१ ; स्मृच. ७२ ( त्रीन् मातृतः पञ्च पितृतः पुरुषानतीत्य विवाहः ) ; गृर. १० गृकवत् ; स्मृसा. १३ ; पमा. ४६७ : ५९० ( त्रीनतीत्य मातृतः, पञ्चातीत्य पितृतः ) ; मपा. १३९ ( त्रीनतीत्य मातृतः पञ्चातीत्य वा पितृतः ) ; मर. १८ पमावत् ; दीक. १।५३ ; उत. १०८–१०९ ; सादी. २५ ( त्रीनतीत्य मातृतः पञ्चातीत्य पितृतो वा ) ; वीमि. १।५३ पृ. ११२ वा ( इति च ) ; संप्र. ७०४ , ७०७ सादीवत् ; चम. ९३ ; मुक्ता. १२८ ( त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः ) ; संम. ५० मुक्तावत् ; सिन्धु. १००३ : १०२२ ( त्रीन् मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत् ) : १०२३ , १०२४ निर्देशमात्रम् ; विपा. ६९४ : ६९८ ( त्रीन् मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत् ) ; संकौ. ५१ विपावत् : १७२ मुक्तावत् ; आन. १७१ मुक्तावत् ; साप्र. ५ ; बाल. १।५३ पृ. १९३ ; संग. १७५ विपावत् ; संर. ४०९ मुक्तावत् : ४५३ विपावत् .

विवाहे त्रीनित्यादि व्यवस्थितविकल्पः इति रत्नाकरादयः। असमानजातीया च मूर्धाभिषिक्तादेः। वस्तुतस्तु त्रीनित्यादि अधिकदोषार्थं, अन्यथा 'मातृष्वसृपितृष्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यो भवन्ति, ता वर्जयेत्' इति पैठीनसिवचनान्तरस्य का गतिः। एवं च 'त्रीन् मातृतः' इति प्रमातामहवृद्धप्रमातामहमातृबन्ध्वपेक्षया संताने बोद्धव्यम्। एवं मातामहापेक्षया मातृस्वसृदुहितृमातुलदुहित्रोस्त्रितयान्तर्गतत्वेऽपि पृथक् निषेधः प्रमातामहवृद्धप्रमातामहमातृबन्धुसंतानत्रितयेभ्योऽपि अधिकदोषाय। एवं पितृपक्षेऽपि।

उत. १०९

मातुलादिकन्यापरिणयस्य निषेधः प्रायश्चित्तं च

(1)पितृमातृष्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यस्ता वर्जयेदिति विज्ञायते ॥

'असमानार्षेयीम्' इत्यादिपैठीनसिवाक्येनैव पितृमातृष्वसृदुहित्रादौ निषेधे सिद्धे पुनर्निषेधो दोषातिशयबोधनार्थः।

* गृर. १०

(2)उद्वहेत सगोत्रां तु तनयां मातुलस्य च।
ऋषिभिश्चैव तुल्योऽपि स तु चान्द्रायणं चरेत् ॥

परित्यज्य इति शेषः।

आन. १७१

## वृद्धमनुः

औरसेतरपुत्रेषु सापिण्ड्यं बीजत एव, सापिण्ड्यवर्ज्यता

(1)दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता।
पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य च ॥

दत्तके विशेषमाह गौतमः— दत्तेति। जनकपक्षे सप्तमी जननीपक्षे पञ्चमीत्यर्थः।

विपा. ६९८

(2)असंबद्धा भवेद्या तु पिण्डेनैवोदकेन वा।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥

## कार्ष्णाजिनिः

अनौरसपुत्रसंबद्धं सपिण्डीकरणम्

(3)यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥
(4)द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
चतुर्थपुरुषे छन्दस्तस्मादेषा त्रिपौरुषी ॥

अस्यार्थः— दत्तकादिद्व्यामुष्यायणानां यावन्तः पित्रोः संबन्धिनः पितामहवर्गाः स्युस्तत्संबन्धेन च स्वं प्रति पितृव्यादिरूपतां गताः, ये च मुख्यगौणपितृसंबन्धेन भ्रात्रादिरूपतां गताः ते सर्वे दत्तकादीनां पितृवर्गाः। तेषु मध्ये ये प्रेताः स्युस्तेषां तत्समानजातीयवर्गजैः पितृभिः सह ते दत्तकादयो योजनं सपिण्डीकरणं कुर्युः। द्व्यामुष्यायणपुत्रास्तु तेषु तेषु वर्गेषु मध्ये स्वकीयेन पित्रा

---

* स्मृसा. गृरवत्।

(1) गृक. भगिन्यस्ता (भगिन्यो); स्मृच. ७१ सुताश्च (सुता) भगिन्यस्ता (भगिन्यो) (इति विज्ञायते०); गृर. १० भगिन्यस्ता (भगिन्यो) (इति विज्ञायते०); स्मृसा. १३ (मातृष्वसृपितृष्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यो वर्जयेत्); पमा. ४६९; उत. १०९ (मातृष्वसृपितृष्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यो भवन्ति ता वर्जयेत्); संप्र. ७१५ (पितृष्वसृमातृष्वसृदुहितरो मातुलसुता च धर्मतस्ता भगिन्यो वर्जयेत्); चम. ९५ ष्वसृद् (ष्वसुर्दु) सुताश्च धर्मतस्ता (सुता धर्मतः); मुक्ता. १२७ सुताश्च धर्मतस्ता (सुता धर्मतः) (इति विज्ञायते०); संकौ. १७७ (मातुलसुताश्च०) (इति विज्ञायते०); आन. १७१ सुताश्च धर्मतस्ता (सुता च धर्मतः) (इति विज्ञायते०).

(2) मुक्ता. १२७; आन. १७१. लघुशातातपेऽपि एतत्स्मृतः श्लोको वर्तते।

(1) संप्र. ६८६, ६८७, ७०० : ६९४ तृतीयः पादः; सिन्धु. १०२२ उत्तरार्धे (सप्तमी पञ्चमी चैव गोत्रित्वं पालकस्य च।); विपा. ६९८ तद्वद्गोत्र तत्पा (मातुर्गोत्रित्वं पा) गौतमः; संकौ. ४५; माप्र. १७ उत्तरार्धे (सप्तमी पञ्चमी चैवं गोत्रं तत्पालकस्य च।); संग. १७५ विपावत्, गौतमः.

(2) उत. ११६ असंबद्धा (असंबन्धा); संप्र. ७१०; सिन्धु. १००१ भवेद्या तु (भवेन्मातुः); याल. १।५२ पृ. १९१ असंबद्धा (असंबन्धा) विवाह्या (प्रशस्ता); संर. ४१० असंबद्धा भवेद्या तु (असंबन्धा भवेन्मातुः).

(3) चश्रा. १२१; संप्र. ६९३, ७०१; साम्र. २४ पितृवर्गाः (पितृवर्ग्याः); संर. ४५५.

(4) चश्रा. १२१; संप्र. ६९३, ७०१ छन्दः (छेदः); संर. ४५६ सहाथ तत्पुत्राः (सह पितुः पुत्राः) त्रिपौरुषी (त्रिपूरुषा).

तत्पूर्वाभ्यां च द्वाभ्यां तस्य, तस्य प्रेतस्य सपिण्डीकरणं कुर्युः । द्यामुष्यायणपौत्रस्तु स्वेन पित्रा द्यामुष्यायणेन च पितामहेन तत्पित्रा चैकेन तत्समं तत्तद्वर्गोत्पन्नं तेन तेन योजयेत् । द्यामुष्यायणप्रपौत्रस्तु गौणपितृवर्गमध्यस्थितं प्रेतं योजयेत् वा न वा । एषा हि गौणपितृसंततिस्त्रिपौरुष्येव । * चश्रा. १२१–१२२

## व्याघ्रपादः

*मातुलसुतापरिणयो देशधर्मः*

उद्वहेद्दक्षिणे विद्वान् मातुलस्य तु वै सुताम् ।
उत्तरे नोद्वहेद्विप्रो ह्येष धर्मः सनातनः ॥

## वृद्धशातातपः

विवाहे वर्ज्या बान्धवप्रकाराः

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥

मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

---

* सर. चश्रागतार्थम् ।

(१) धप्र ६२ ; प्रका. ३४७ ; संग. १७२–१७३ ; कृभ. १००७ ( = ) तु वै ( च वै ).

(२) स्मृच. ७१ पितुर्मातृ (पितुमातृ) स्मृत्यन्तरम् ; गृर. ९ ( = ) पितृष्वसुः ( पितु स्वसु ) मातृष्वसुः ( मातुः स्वसुः ) ; स्मृमा. १३ ( = ) गृरवत् ; पमा. ४६८ स्मृत्यन्तरम् ; मपा. ६७४ गृरवत् ; प्रपा. ३०७ पाराशरः ; दीक. १५३ ( = ) गृरवत् ; उत. ११० ( = ) गृरवत् ; मुक्ता. १२७ माधवीये पराशरः ; भान. १७४ स्मृचवत्, माधवीयवचनमित्युक्तम् ; कृभ. १००० ( = ).

(३) स्मृच. ७१ स्मृत्यन्तरम् ; गृर. ९ ( = ) पूर्वार्धे ( मातुर्मातुः स्वसुः पुत्रा मातुः पितुः स्वसुः सुता । ) ; स्मृसा. १३ ( = ) गृरवत् ; पमा. ४६८ स्मृत्यन्तरम् ; मपा. ६७४ पितृष्वसुः ( पितु स्वसुः ) मातृष्वसुः ( मातुः स्वसुः ) ; प्रपा. ३०७ पाराशरः ; दीक. १५३ ( = ) पितृष्वसुः ( मातु स्वसु ) मातृष्वसु. ( मातुः स्वसुः ) ; उत. ११० ( = ) गृरवत् ; मुक्ता. १२७ माधवीये पराशरः, भान. १७४ माधवीयवचनमित्युक्तम् ; कृभ. १००० ( = ) बान्धवाः ( बन्धव. ).

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
विवाहो नेष्यते तत्र पितुर्मातुश्च बन्धुषु ॥

## बुधः

सापिण्ड्यावधिः

सवर्णां भार्यामुद्वहेदतीत्य मातृतः पितृतः पञ्चमीं दशमीमन्यगोत्रजाम् ॥

## आश्वलायनः

सापिण्ड्यावधिः, सापिण्ड्यसंकोचो देशभेदेन शाखाभेदेन च, मातुलादिकन्यापरिणयो देशधर्मः

*सापिण्ड्यं मुनिभिः प्रोक्तं मातृतः पितृतः क्रमात् ।
तत्सापिण्ड्यं विजानीयान्नर्मदोत्तरवासिनाम् ॥
सापिण्ड्यं( ? ) प्राहुराचार्याः संकोच्यापि सपिण्डताम् ।
ज्ञातव्यं तच्च धर्मज्ञैर्नर्मदायाश्च दक्षिणे ॥
पञ्चमी सप्तमी चैव मातृतः पितृतस्तथा ।
त्रीणि चातीत्य मातृतः पञ्चातीत्येति वै पितुः ॥
तृतीयां वा चतुर्थीं वा पञ्चमीं पितृमातृतः ।
दक्षिणे तूद्वहेत्कन्यां स्वसारं मातरं विना ॥

---

* वचनान्येतानि धर्मप्रवृत्तौ 'आचार्य' इत्युपक्रम्य संगृहीतानि । प्रयोगपारिजातवत् आश्वलायनसूत्रिणो नारायणभट्टस्य कृतौ धर्मप्रवृत्तावपि आचार्यपदेन आश्वलायन एव अभिप्रेतः स्यादिति संभावनया आश्वलायनीयत्वेनास्माभिरेतानि समगृह्यन्त । आश्वलायनस्मृतौ तु नोपलभ्यन्ते ।

(१) मपा. ६७४ पितृष्वसु (पितुः स्वसुः) मातृष्वसुः ( मातु स्वसु ), प्रपा. ३०७ पाराशरः.

(२) मुक्ता. १२७ माधवीये पराशर ; भान. १७४ माधवीयवचनमित्युक्तम्. वृद्धशातातपस्येदं वचनमिति केनापि ग्रन्थकारेण नोक्त, तथापि एतदर्थाव्याकृ विद्यमानौ द्वौ श्लोकौ वृद्धशातातपे निवेशितौ । अतः एतदर्धमपि वृद्धशातातपे निवेशितम् ।

(३) संप्र. ६९९.

(४) धप्र. ६१ ; प्रका. ३४७, संग. १६९.

(५) धप्र. ६१ ; प्रका. ३४७.

(६) धप्र. ६२ ; संग. १७२ उत्त.

मातुलस्य सुतां विप्रो दक्षिणे तां समुद्वहेत् ।
वर्जनीया प्रयत्नेन सैव वाजसनेयिभिः ॥

## स्मृत्यन्तरम्

विरुद्धसंबन्धः, विवाहेन कन्यायाः सापिण्ड्यनिवृत्तिः

[1]भ्रातुस्तु पत्नीभगिनीं तत्सुतां चैव वर्जयेत् ।
[2]पितुस्तु पत्नीभगिनीं तत्सुतां चैव वर्जयेत् ॥

[3]चतुर्थीहोममन्त्रैस्तु मांसमज्जास्थिभिः सह ।
एकत्वमागता भर्तुः पिण्डे गोत्रे च सूतके ।
स्वगोत्रात् भ्रश्यते नारी विवाहात्सप्तमे पदे ॥

[4]गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः ।
गुरोश्च कन्यां शिष्यो वा तत्संतत्याऽपि नेष्यते ।
पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते ॥

गुरोरिति । गायत्र्युपदेशाकरणेऽपि चतुर्दशविद्यास्वन्यतमस्य चतुःषष्टिकलान्यतमकलाशास्त्रस्य वाऽध्यापकस्य चेत्यर्थः । ततः तस्मात् तेन गुरुणाऽपि पुरुषत्रयपर्यन्तमित्यन्वयः, तत्संतत्या चेति पाठान्तरं सुगमम् । एवं च शिष्यसंततिरपि पुरुषत्रयपर्यन्तं ग्राह्या । भ्रात्रादेः गुर्वादिभ्रात्रादेः संततौ उद्वाहनिषेधो नेत्यर्थः । केचित्तु गायत्रीदातृमात्रस्य कन्या त्याज्या न तु गोत्रं कुलं च ' सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् । तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत् ॥ ' इति वचनादित्याहुः । एतत् स्वगोत्राज्ञानविषयमिति नारायणः ।

कृम. १०२०

(१) धप्र. ६२ ; प्रका. ३४७ ; कृम. १००७ ( = ).

(२) मुक्ता. १२९ ; भान. १७४ ( = ) पितुस्तु पत्नी (पितृष्वसृपत्नी) उद्ध. ; संर. ४११ (सापत्नमातुर्भगिनीं तत्सुतां च विवर्जयेत् । पितृष्वसृपत्नीभगिनीं तत्सुतां च विवर्जयेत् ॥ ).

(३) साप्र. ७. निर्दिष्टेऽपि एतत्सदृशं वचनं दृश्यते, तत्रापि स्थलादिनिर्देशो द्रष्टव्यः ।

(४) साप्र. ३२ दैनैव (द्विजैः) ग्रन्थान्तरे इत्युक्तम् ; धम. ९० ( = ) ; संम. ५३ ; सिन्धु. १०२० ( = ) ; कृम. १००५ ( = ) तृतीयार्धमात्रम् ; संर. ४११ द्वितीयार्धे (गुरोश्च कन्यां शिष्यस्तु नोद्वहेत कदाचन) तृतीयार्धं नास्ति.

## मार्कण्डेयपुराणम्

निर्वाप्यसापिण्ड्यावधिः, ब्राह्मादिविवाहेन विवाहिताया भर्त्रा सपिण्डता सगोत्रता च, आसुरादिविवाहेन विवाहितायाश्च पित्रा

[1]पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसंबन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥

[2]लेपसंबन्धिनश्चान्ये पितामहपितामहात् ।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥
[3]इत्येष मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः ॥
[4]उद्वहेत् पितृमात्रोस्तु सप्तमी पञ्चमी च या ॥
[5]ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥
[6]आसुरादिविवाहेषु पितृगोत्रेण धर्मवित् ॥

(१) स्मृच. ३३३ ; चश्रा. ८१ ; पमा. ४६५ ; श्राका. ५१६ ( = ) विज्ञेयाः पुरुषास्त्रयः (पितरः परिकीर्तिताः) ; संप्र. ६८५ ; मुक्ता. १२९ मार्कण्डेयः ; बाल. १।५२ पृ. १७१ नो ह्येते (नरस्त्वेते) ; संर. ४०६ बालवत्.

(२) स्मृच. ३३३ ; चश्रा. ८१ ; पमा. ४६५ पितामहात् (प्रपितामहात्) मानश्च (मानस्तु) ; संप्र. ६८५ पितामहपितामहात् (ये वृद्धप्रपितामहात्) ; मुक्ता. १२९ मानश्च (मानस्तु) मार्कण्डेयः ; बाल. १।५२ पृ. १७१ मानश्च (मानस्तु) ; संर. ४०६ बालवत्.

(३) पमा. ४६५ ; संप्र. ६८५ ; मुक्ता १२९ साप्तपौरुषः (सप्तपूरुषः) मार्कण्डेयः ; बाल. १।५२ पृ. १७१ ; संर. ४०६.

(४) गृर. ११ सप्तमी पञ्चमी च या (सप्तमीं पञ्चमीं तथा) ; उत. ११७ गृरवत् ; वीमि. १।५३ पृ. १११.

(५) अप. १।२५३ पृ. ५४२ कर्तव्या (कर्तव्याः) क्रिया (क्रियाः) मार्कण्डेयः ; स्मृच. ६९ अपवत्, मार्कण्डेयः ; पमा. ४६९ ब्राह्मादिषु (ब्राह्मयादिषु) : ७८० मार्कण्डेयः ; सादी. २४ अपवत्, मार्कण्डेयः ; संप्र. ७१६, ७१८ मार्कण्डेयः ; धम. ९५-९६ या तूढा (कन्या या) : १०७ अपवत्, मार्कण्डेयः ; मुक्ता. १२९ अपवत्, मार्कण्डेयः ; भान. १७२ अपवत्, मार्कण्डेयः ; साप्र. ७ अपवत् : ९ निर्देशमात्रम्.

(६) अप. १।२५३ पृ. ५४२ मार्कण्डेयः ; स्मृच. ६९ मार्कण्डेयः ; पमा. ४६९ आसुरादि (गान्धर्वादि) : ७८० मार्कण्डेयः ; सादी. २४ धर्मवित् (धर्मतः) मार्कण्डेयः ; संप्र. ७१६, ७१८ मार्कण्डेयः ; धम. ९६ आसुरादि (गान्धर्वादि) : १०७ धर्मवित् (धर्मतः)

न्मातुः पितृगोत्रेणेत्यर्थः । अप. १।२५३ पृ. ५४२

## मत्स्यपुराणम्

निर्वाप्यसापिण्ड्यावधिः

[1]त्रिभिः सपिण्डीकरणे अशेषप्नितये पिता ।
यदा प्राप्स्यति कालेन तदा मुच्येत बन्धनात् ॥
[2]मुक्तोऽपि लेपभागित्वं प्राप्नोति कुशमार्जनात् ॥
[3]लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

अत्र चतुर्थो वृद्धप्रपितामहः स आद्यो येषां ते तदाद्याः, तद्गुणसंविज्ञानो बहुव्रीहिः, तस्यातद्गुणसंविज्ञानाद्बलीयस्त्वात् । तद्गुणे हि श्रुतग्रहणं, अग्रहणमतद्गुणे । तस्मात् चतुर्थ-पञ्चम-षष्ठास्त्रयः पुरुषा लेपभागिनः । पित्राद्याः पितृ-पितामह-प्रपितामहास्त्रयः । एते पिण्डभागिनः । चथा.८१

[4]अग्निष्वात्तादिकानां तु पितॄणां सा शची स्वसा ।
पुलोमा जनयामास तस्यां नाम्ना शचीं सुताम् ॥

मार्कण्डेयः ; मुक्ता. १२९ मार्कण्डेयः ; मान. १७३ मार्कण्डेयः ; साप्र. ७ आसुरादि ( गान्धर्वादि ) धर्मविद् ( धर्मवत् ).

( १ ) मत्स्य. १८।२८ ; संप्र. ६८७ पूर्वार्धे ( त्रिभिः सपिण्डीकरणैराशोकहतयेति वा । ).

( २ ) मत्स्य. १८।२९ ; संप्र. ६८७ मुक्तोऽपि लेप ( युक्तोपलेप ) .

( ३ ) मत्स्य. १८।२९ ; अप. १।२४१ पृ. ५०७ ; गौमि. २४।१२ पिण्डदः सप्तमस्तेषां ( सप्तम' पिण्डदस्तेषां ) ; स्मृच. ६७ : ४७५ (श्रा.) निर्देशमात्रम् ; चश्रा. ८० भाजश्च (भागाश्च) ; पमा. ४६५ : ५८९-५९० पिण्डदः सप्तमस्तेषां ( सप्तमः पिण्डदश्चेषां ) ; मपा. १२९ ; प्रपा. ३०६ साप्तपौरुषम् ( सप्तपूरुषम् ) ; निप्र. १०४ ; उत्त. १०७ ; सादी. २२ ; संप्र. ६८५ ; चम. ९० ; मुक्ता. १२४ प्रपावत्, स्मृतेरित्युक्तम् ; संम. ५० ; सिन्धु. ९९३ ; विपा. ६८६ ; संकौ. १७२ ; आन. १६८ (=) प्रपावत् ; ज्योनि. १२१ मनुः ; साप्र. १ ; प्रका. ३४४ ; बाल. १।५२ पृ. १७१ : १।५३ पृ. १९० ( पिण्डदः सप्तमः ) एतावदेव, पृ. १९१ ( सापिण्ड्य साप्तपौरुषम् ) एतावदेव ; संग. १६८ ; संर. ४०६ मस्तेषां ( मस्त्वेषां ) .

( ४ ) संप्र. ७२३-७२४. मत्स्यपुराणस्य वा अन्यस्य वाऽयं श्लोक इति न निश्चेतुं शक्यते ।

[1]सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु निवर्तेत चतुर्दशे ।
जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते ॥

## विष्णुपुराणम्

पितृमातृसापिण्ड्यावधिः

[2]पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।
गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप ॥

## श्रीमद्भागवतम्

इतिहासे मातुलादिकन्यापरिणयोदाहरणानि

[3]वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥
यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः ।
व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥

( १ ) संदी. १० ( भागः २ ).

( २ ) विष्णु. ३।१०।२३ गृहस्थ उ ( गृहस्थस्तू ) ; स्मृच. ७२ विधिना नृप ( विधिनाऽन्यथा ) ; गृर. ११-१२ न्याय्येन ( न्यायेन ) ; स्मृमा. १४ पूर्वार्धे ( मातृपक्षात्तु पञ्चमीं पितृपक्षात्तु सप्तमीम् । ) ; पमा. ४६७ पक्षाच्च (पक्षात्तु) ; प्रपा. ३०७ (पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम् । गृहस्थ उद्वहेत् कन्यां न्यायेन विधिना नृपः॥) पराशरः ; मर. १८ पक्षाच्च (पक्षात्तु) न्याय्येन (न्यायेन) ; उत्त. १०७ (सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम् । उद्वहेत द्विजो भार्यां न्यायेन विधिना नृप ॥ ) : १०९ पूर्ववत् ( पृ. १०७ ) पाठः, पृ. ; सादी. २५ न्याय्येन ( न्यायेन ) व्यासः ; वीमि. १।५३ पृ. १११ न्याय्येन ( न्यायेन ) ; संप्र. ७०३ ( पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम् । गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप ॥ ) : ७०७ ( सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम् । उद्वहेत द्विजो भार्यां न्याय्येन विधिना नृप ॥ ) ; चम. ९३ मरवत् ; मुक्ता. १२६ पक्षाच्च ( पक्षात्तु ) विधिना नृप ( विधिनोत्तमाम् ) व्यासः ; संम. ५० पमावत् ; सिन्धु. १००२ ; विपा. ६८८ पक्षाच्च ( पक्षे तु ) न्याय्येन ( न्यायेन ) विष्णुपुराणे पराशरवचनमित्युक्तम् ; माप्र. २ (=) पक्षाच्च ( पक्षात्तु ) पृ. ; बाल. १।५३ पृ. १९२ पक्षाच्च ( पक्षात्तु ) न्याय्येन ( याम्येन ) ; कृभ. १००० (=) पमावत्, पृ. ; सर ४०९ .

( ३ ) भाग. १०।६१।२२, २३, २५ ; संप्र. ७१३ ; संग. १७१-१७२.

दौहित्राग्रानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः ।
रोचनां वद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥
जानन्नधर्मं तं यौनं स्नेहपाशानुबन्धतः ॥
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥

## लिङ्गपुराणम्

विरुद्धसंबन्धः

वाक्संबन्धकृतानां तु स्नेहसंबन्धभागिनाम् ।
विवाहोऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते ॥
अतो वंशा विनश्यन्ति लोके संकरकारकाः ॥

## ब्रह्मपुराणम्

निर्वाप्यसापिण्ड्यावधिः

सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी ।
सपिण्डता ततः पश्चात्समानोदकधर्मता ॥
ततः कालवशात्तत्र जन्मनाम्नोरवेदने ।
समानोदकसंज्ञा तु तावन्मात्राऽपि नश्यति ॥
आत्मा पिता तत्पिता च आत्मनः प्रपितामहः ।
तस्यापि यः पिता कश्चित्तथैव तु पितामहः ॥
प्रपितामहसंज्ञस्य यः कश्चित्प्रपितामहः ।
ऊर्ध्वं गणनया आद्यः सर्वेषां प्रपितामहः ॥
पितामहो द्वितीयस्तु तृतीयस्तु पिता भवेत् ।
सोदर्येण समं भ्रात्रा स्यादात्माऽपि चतुर्थकः ॥
सवर्णयोस्तथा पुत्रः पञ्चमः परिकीर्तितः ।
भ्रातुर्वा षष्ठः पौत्रश्च सप्तमः प्रपौत्र इति ॥
एवं मृतानामेतेषां संजीवंस्तु प्रपौत्रकः ॥
अविभक्तधनास्त्वेते सपिण्डाः परिकीर्तिताः ॥
भ्रातृभिर्वा ततस्त्वन्यैर्विभक्ताया: सहोदकाः ।
विभक्तार्थाः सकुल्याश्च श्राद्धादौ लेपभागिनः ॥
ब्रह्मविट्क्षत्रजातीनां सापिण्ड्यं स्यात्त्रिपूरुषम् ।
ब्राह्मणैरपि जातानामविभक्तार्थगामिनाम् ॥
विभक्तार्थानां तु तेषां मातुर्जातिरसंशयम् ॥
सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी ॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु ॥
यत्र मातुलजोद्वाही यत्र वै वृषलीपतिः ।
श्राद्धं न गच्छेत्तद्विप्राः कृतं यत्र निरामिषम् ॥

## कूर्मपुराणम्

विवाहितानां भर्त्रा सापिण्ड्यम्

अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् ।
प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः ॥

## अनिर्दिष्टकर्तृकवचनानि

मातृतः पितृतश्च सापिण्ड्यावधिः, विरुद्धसंबन्धः

सापिण्ड्यं गोत्रशुद्धिं च शीलं सामुद्रिकाणि च ।
जातकादिभमेलं च वीक्ष्य वाग्दानतः पुरा ॥
भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः ।
विवाहे ह्यादिभूतत्वाच्छाखाभेदोऽवगण्यते ॥

(१) संप्र. ७२५.

(२) सादी. ३२ (=) संबन्धभागिनाम् (संबन्धिनामपि) गर्हा प्रसज्यते (गर्हामनुतये); संप्र. ७१४; ज्योनि. १३२; बाल. १।५३ पृ. १९७.

(३) संप्र. ७१४; बाल. १।५३ पृ. १९७ अतो (ततो) लोके (लोक).

(४) स्मृसा. ११८; सिन्धु. १००३.

(५) स्मृसा. ११८; सिन्धु. १००३ जन्मनाम्नोरवेदने (विस्मृतौ नामगोत्रतः).

(६) स्मृसा. ११८.

(१) स्मृसा. ११८; सिन्धु. १००३.

(२) स्मृसा. ११८.

(३) स्मृसा. ११८; वीमि. १।५३ पृ. १०९ त्रिपौरुषी (त्रिपूरुषी).

(४) पमा. ५८९ वृद्धपराशरः; संप्र. ७११; संग. १७०.

(५) सिन्धु. १०१२.

(६) उत. १०८; सादी. २३ (सापिण्ड्यं साप्तपौरुषम्) एतावदेव, स्मृत्यन्तरम्; सिन्धु. १०१४ पितामहः (प्रजा-पतिः); साप्र ७ : ९,१० तृतीयः पादः.

(७) ज्योनि. १३१; संग. १६७ शीलं सा (शीलसा) ज्योतिर्निबन्धे इत्युक्तम्.

(८) मिता. १।५३.

[1]अस्या मातुस्तु यत्पित्र्यं मातृकं वा यदा भवेत् ।
[2]उभयं तद्धि कन्याया मातृतः परिकीर्तितम् ।
वरस्यापि पितुः पित्र्यं मातृकं वा यदा भवेत् ।
उभयं तद्वरस्यापि पितृतः परिकीर्तितम् ॥

अस्याः वध्वाः, तुरप्यर्थे, तेन वरस्यापि मातुः साक्षात्परम्परासाधारणभूतायाः यत् पित्र्यं पितृसंबन्धि कुलं मातृकं वा मातृसंबन्धि कुलं वा यदा भवेत्तदुभयं तयोर्मातृतः मातृसंबन्धि मातृपक्षे इति यावदिति प्रथमश्लोकार्थः । वरस्यापीत्यपिना कन्याया अपि । एवं च वरस्य कन्याया अपि पितुर्जनकस्य साक्षात्परंपरासाधारणस्य पित्र्यं मातृकं वा यदा भवेत् तयोस्तदुभयमपि पितृतः पितृसंबन्धि पितृपक्षे इति यावदिति द्वितीयपद्यार्थः ।

बाल. १।५३ पृ. १९४

[3]पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ।
उभयोः पितृतश्चापि षष्ठः षष्ठीं समुद्वहेत् ॥
[4]पितृव्यभार्याभगिनीं च तत्सुतां
सापत्नमातुर्भगिनीं च तत्सुताम् ।
नैवोद्वहेत्तां यदि चेत्प्रमादा-
च्चाण्डालयोनेरपि कारणं भवेत् ॥

## चतुर्विंशतिमतम्

पितामातृसापिण्ड्यावधिभेदः मतभेदेन, देशधर्मकुलधर्मप्रामाण्यम्, मातुलादिकन्यापरिणयानुमतिः

[5]पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ।
दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ॥

दशभिरिति । 'कुलममे परीक्षेत' इति कुलस्यैव गौरवात्तदनुसारेण सापिण्ड्यसंकोचः, न तु तद्वियोऽधमकुलकन्यास्वीकार इत्याशयः ।

कुभ. १००४

[1]उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ।
पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः ॥
[2]सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च ।
एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥
[3]तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥
[4]असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥
[5]यैस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।
नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत् प्रतीयते ॥

---

(१) सादी. २२ मातुस्तु (मातुश्च) ; बाल. १।५३ पृ. १९४.

(२) सादी. २२ उत्तरार्धे ( पित्र्यमेतद्वरस्यैतत् उभयं पितृतः स्मृतम् ) ; बाल. १।५३ पृ. १९४.

(३) सादी. २८ ; ज्योनि. १३२ पितृतश्चापि ( मातृतश्चैव ) स्मृतिचन्द्रिकायां निर्णयवचनमित्युक्तम्.

(४) धप्र. ६२ ; संग. १७४ धर्मप्रवृत्तौ इत्युक्तम्.

(५) संप्र ७०४ पूर्वार्धे ( मातृतः पञ्चमीं चैव सप्तमीं पितृतस्तथा । ) : ७०८ उत्त. ; चम. ९३ ख्यातात् ( ख्यातो ) ; सिन्धु. १००४ ; संकौ. १७३ उत्त. ; साप्र. ५ उत्त. ; प्रका. ३४४ उत्त., संस्कारकौस्तुभे स्मर्यते इत्युक्तम् ; बाल. १।५३ पृ. १९६ उत्त. ; संग. १६९ उत्त. ; कुभ. ९९९ (=) पू. : १०१३ (=) उत्त. ; संर. ४१० उत्त.

(१) सादी. २७ : ३० स्मृतिः ; संप्र ७०८ ; चम. ९३ पक्षे त्वय (पक्षेऽप्यय) ; सिन्धु. १००४ चमवत् ; संकौ. १७३ ; साप्र. ५ चमवत् ; प्रका. ३४४ संस्कारकौस्तुभे स्मर्यते इत्युक्तम् ; संग. १६९ ; कुभ. १०१३ प्रथमः पादः ; संर. ४१० पितृपक्षे ( पितुः पक्षे ) ; संदी. ८ ( भाग २ ) चमवत्.

(२) सादी. २७ : २८ निर्देशमात्रम् ; संप्र. ७०८ ; चम. ९३–९४ ; सिन्धु. १००४ ; संकौ. १७३ ; साप्र. ५ ; प्रका. ३४४ संस्कारकौस्तुभे स्मर्यते इत्युक्तम् ; संग. १६९ पूर्वार्धे ( सप्तमी च तथा षष्ठी पञ्चमी च तथैव च । ) ; संर. ४१०, संदी. ८ ( भागः २ ).

(३) स्मृच. ७१ ; प्रपा. ३०८ ; सादी. २७ : २८ निर्देशमात्रम् ; संप्र. ७०४, ७०८, ७१२ : ७२१ उत्तरार्धे ( विवाहयेदिति प्राहुः पाराशर्याङ्गिरोयमाः । ) ; चम. ९४ ; मुक्ता. १३० ; सिन्धु. १००४ ; संकौ. १७३ ; आन. १७१ ; ज्योनि. १३२ स्मृतिचन्द्रिकायां निर्णयवचनमित्युक्तम् ; साप्र. ५ : १६ निर्देशमात्रम् ; प्रका. ३४५ ; बाल. १।५३ पृ. १९६ ; संग. १६९ उत्तरार्धे ( उद्वहेत्सर्वथाऽलाभे इति कैश्चिदुदीरितम् । ) ; संर. ४१० ; संदी. ८ ( भागः २ ) पाराशर्योऽङ्गिरा यमः ( पराशर्यो यमोऽङ्गिराः ).

(४) संप्र ७०८ ; चम. ९४ ; संकौ. १७३ ; साप्र. ५, ७ ; प्रका. ३४५ ; संग. १६९–१७० स्मृतिचन्द्रिकायामित्युक्तम् ; कुभ. ८९७ (=) पू. ; संर. ४१०.

(५) संप्र. ७०८ ; ७०९ निर्देशमात्रम् ; चम. ९४ प्रतीयते ( प्रदृश्यते ) ; सिन्धु. १००४ चमवत् ; विपा. ६९४ चोद्वहेत्

आरभ्य कूटात्पुरुषात् पञ्चमो न तु पञ्चमीम् ।
चतुर्थीं पञ्चमीं चैव चतुर्थः षष्ठ उद्वहेत् ॥

## षट्त्रिंशन्मतम्[1]

मातुलादिकन्यापरिणयानुमतिः

[2]तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥

## संग्रहः ( संग्रहकारः )

पितृमातृसापिण्ड्यावधिः, मातुलकन्यापरिणयानुमतिः

[3]स्त्रीसंततिस्तथा पुंसामविवाह्ये उभे मते ।
स्त्रीपुंसोस्तु विवाहः स्यात्पञ्चमात् सप्तमात्परम् ॥
[4]वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥

यतः संतानभेदः स कूटस्थो मूलपुरुष इति यावत् । तमारभ्य वध्वाः वरस्य वा तातः पिता सप्तमो यदि भवेत्, तयोर्वधूवरयोः यदि कूटस्थात् पञ्चमी माता भवेत्, तदा सापिण्ड्यं निवृत्तं भवतीति । निर्गलितार्थस्तु पितृद्वारकसापिण्ड्यविचारे सप्तमादूर्ध्वं सापिण्ड्यनिवृत्तिः । मातृद्वारकसापिण्ड्यविचारे तु पञ्चमादूर्ध्वमिति ।

संर. ४०८

मातुलस्य सुतायाश्च विवाहः शिष्टसंमतः ॥

## विश्वरूपाचार्यः

शरीरावयवान्वयसापिण्ड्यावधिः, निर्वाप्यसापिण्ड्यावधिश्च

[2]निषेकाज्जायते जन्तुः सप्तकञ्चुकसंयुतः ।
चत्वारो मातृजा ज्ञेयास्त्रयोऽस्थ्यादि तु पैतृजाः ॥
[3]एवमुक्तप्रकारेण पितृबन्धुषु सप्तमात् ।
ऊर्ध्वमेव विवाह्यत्वं पञ्चमान्मातृबन्धुतः ॥
[4]संतानो भिद्यते यस्मात् पूर्वजादुभयत्र च ।
तमादाय गणेद्धीमान् वरं यावच्च कन्यकाम् ॥

अत्र उदाहरणं यथा— १ कूटस्थः मूलपुरुषः देवदत्तः, २ तत्पुत्रः ब्रह्मदत्तः, ३ तत्पुत्रः विष्णुदत्तः, ४ तत्पुत्रः शिवदत्तः, ५ तत्पुत्रः मित्रदत्तः, ६ तत्पुत्रः हरदत्तः, ७ तत्पुत्रः यज्ञदत्तः, ८ तत्पुत्रः श्रीदत्तः अष्टमः इति पितृद्वारकं सापिण्ड्यं वरविषये ।

१ मूलपुरुषः देवदत्त एव, २ तत्पुत्रः मातृदत्तः, ३ तत्पुत्रः रुद्रदत्तः, ४ तत्पुत्रः भानुदत्तः, ५ तत्कन्या श्रीदेवी, ६ तत्कन्या श्रीदत्तभक्ता इति मातृद्वारकसापिण्ड्यं वधूविषये ।

---

(वोद्वहेत्) शेषं चमवत् ; संकौ. १७३ ; साप्र. ५ : ६,७ निर्देशमात्रम् ; प्रका. ३४५ ; संदी. ७,८ ( भागः २ ).

( १ ) संप्र. ७०४, ७०८—७०९.

( २ ) प्रपा. ३०८ ; संप्र. ७०४—७०५ : ७१२ विवाहयेत् ( उद्वाहयेत् ) : ७१८ पू., चतुर्विंशतिमते इत्युक्तम् ; चम. ९४ ; मुक्ता. १३० ; संम. ५० ; विपा. ६९३ पूर्वार्धे ( तृतीयां पितृतः कन्यां तृतीयां मातृतस्तथा । ) ; संकौ. १७३ ; ज्ञान. १७१ ; प्रका. ३४५ ; संग. १७१ विवाहयेत् ( उद्वाहयेत् ) ; संर. ४०९.

( ३ ) स्मृच. ७२ ; मुक्ता. १२७ पुंसामविवाह्ये ( पुंसां न विवाह्ये ) विवाहः ( विवाह्या ) चन्द्रिकायामित्युक्तम् ; बाल. १।५३ पृ. १९६ स्त्रीपुंसोस्तु ( स्त्रीपुंसयोः ) कापिकामते इत्युक्तम्.

( ४ ) गभा. ९७ ( = ) ; प्रर. ९७ ( = ) ; सादी. २६ ( = ) ; चम. ९१ ( = ) ; संम. ५० ( = ) ; सिन्धु. ९९८ ( = ) ; विपा. ६८९ तत्सापिण्ड्यं निवर्तते ( सापिण्ड्यं तन्निवर्तते ) स्मरणम् ; संकौ. १७३ तत्सापिण्ड्यं निवर्तते ( सापिण्ड्यं विनिवर्तते ) शास्त्रान्तरमित्युक्तम् ; ज्योनि. १३१ ( = ) ; साप्र. २ संकौवत् : ४ चतुर्थः पादः ; प्रका. ३४४ ( = ) ; बाल. १।५३ पृ. १९० संकौवत् ; संग. १६९ चेत् ( च ) प्रयोगरत्ने इत्युक्तम् ; संर. ४०८ सर्वं संकौवत् ; संदी. १४ ( भागः २).

( १ ) सादी. २९.

( २ ) सादी. २४ जन्तुः ( सूतः ) उत्तरार्धे ( चत्वारो मातृका ज्ञेयास्त्रयोऽस्थ्नाद्याश्च पैतृकाः। ) ; बाल. १।५३ पृ. १९५.

( ३ ) उत. ११६ विश्वरूपसमुच्चये इत्युक्तम् ; सिन्धु. ९९९ विश्वरूपनिबन्धे इत्युक्तम् ; संर. ४०८ पितृबन्धुषु सप्तमात् ( सप्तमात् पितृतस्तथा ) मातृबन्धुतः ( मातृतस्तथा ) विश्वरूपनिबन्धे इत्युक्तम्.

( ४ ) उत. ११६ विश्वरूपसमुच्चये इत्युक्तम् ; धप्र. ६१ यत्र च ( यत्र न ) शंकराचार्यः इत्युक्तम् ; सिन्धु. ९९९ विश्वरूपनिबन्धे इत्युक्तम् ; ज्योनि. १३१–१३२ ( = ) संतानो ( संतान ) गणे ( गणये ) ; बाल. १।५३ पृ. १९२ ( = ) संतानो ( संतानं ) यत्र च ( यत्र तु ) ; संर. ४०८ तमादाय गणेद्धीमान् ( तमादायैव गणयेत् ) विश्वरूपनिबन्धे इत्युक्तम्.

अत्र अष्टमः श्रीदत्तः षष्ठीं श्रीदत्तभक्तां उद्वहेत् । मूलपुरुषमारभ्य मध्ये कन्यासंततावपि एवमेव । वैपरीत्येऽप्येवम् । संर, ४०८

कूटस्थमारभ्य पितुश्च मातु-
विवाहसापिण्ड्यमतः परस्तात् ।
षष्ठेऽष्टमे वाऽपि भवेद्विवाहो
निर्वाप्यसापिण्ड्यमिह प्रशस्तम् ॥
स्यात्सप्तमे वाऽप्यथ पञ्चमे वा
यद्वोभयत्रापि च पञ्चमे वा ॥

## स्मृतिसारे

पितामातृसापिण्ड्यावधिः, सापिण्ड्यसंकोचः

(१)चतुर्थः पञ्चमीं कन्यां पञ्चमीं षष्ठ उद्वहेत् ।
चतुर्थीमुद्वहेत्कन्यां पञ्चमो न तु पञ्चमीम् ॥
(२)पञ्चमः पञ्चमीं कन्यां नोद्वहेदिति यत्स्मृतम् ।
पितृपक्षे निषेधोऽयं मातृपक्षे न तद्भवेत् ॥

## स्मृतिरत्ने

मातुलादिकन्यापरिणयो देशधर्मः

(३)अब्रह्मचारिदाराद्यैः सार्धं भोजनकर्म च ।
मातुलादिसुतायाश्च विवाहः शिष्टसंमतः ।
इत्येते दाक्षिणात्यानामविगीता उदाहृताः ॥

## कापिकामतम्

पितामातृसापिण्ड्यावधिः, सापिण्ड्यसंकोचविचारः

(४)स्त्रीसंततिस्तथा पुंसामविवाह्ये उभे मते ।
स्त्रीपुंसयोर्विवाहः स्यात्पञ्चमात्सप्तमात्परम् ॥
पञ्चमात्सप्तमात्पूर्वं कन्यामुद्वहते द्विजः ।
गुरुतल्पः स विज्ञेय इति विष्ण्वादिशासनम् ॥
सप्तमीं पञ्चमीं षष्ठीं चतुर्थीं पितृमातृतः ।
उद्वहेत्सर्वथाऽलाभे इति कैश्चित्समीरितम् ॥

याज्ञवल्कीयवचसा समानार्थमिदं वचः ।
अतीत्य पञ्चमीं मातुः पितृपक्षाच्च सप्तमीम् ।
इति ब्रुवद्भिर्धर्मज्ञैरादरान्न निराकृतम् ॥

## संस्कारनृसिंहे

विरुद्धसंबन्धः

(१)भार्यास्वसृसुतां तथैव भगिनीं मातुः सपत्न्यास्तथा
तत्पुत्रीं च पितृव्यदारभगिनीं तत्पुत्रिकां नोद्वहेत् ।
मातृष्वसृसपत्नपुत्रकसुता ज्येष्ठस्य भार्यास्वसा
नोद्वाह्याऽथ सपत्नमातृविषये त्रैपूरुषं नोद्वहेत् ॥

## स्मृतिचन्द्रिकायाम्

सापिण्ड्यसंकोचनिषेधः

(२)मूलगोत्रादन्यगोत्रामुद्वहेदष्टमोऽष्टमीम् ।
अन्यगोत्रादन्यगोत्रां षष्ठः षष्ठीं समुद्वहेत् ॥
(३)पञ्चमात्सप्तमात्पूर्वं कन्यकामुद्वहेद्यदि ।
स्वसारं मातरं चापि द्विजः स्याद्गुरुतल्पगः ॥

## स्मृत्यर्णवे

सापिण्ड्यसंकोचानुमतिः

(४)कन्या चतुर्थी च वरश्च पञ्चमो
वरश्चतुर्थो न तु पञ्चमीं वहेत् ।
पित्र्ये वहेत्पञ्चमषष्ठयोर्वा
कन्या तृतीयाऽपि तथा चतुर्थी ॥

## धर्मप्रदीपे

सापिण्ड्यवर्ज्यता

(५)असपिण्डां च पितृतः सप्तमात् पुरुषात्परम् ।
मातृतः पञ्चमादूर्ध्वमसमानार्षगोत्रजाम् ॥

(१) विपा. ६९७ विश्वरूपनिबन्धे इत्युक्तम्.
(२) मुक्ता. १३० ; भाच. ३१६ (=) उत्त.
(३) मुक्ता. १३०.
(४) मुक्ता. १३० सुतायाश्च (सुतायां च) ; भान. १७१ द्वितीयार्धमेव.
(५) बाल. १।५३ पृ. १९६.

(१) संग. १७४-१७५.
(२) धप्र. ६१ याज्ञवल्क्यः ; सादी. २८ चन्द्रिकायामित्युक्तम् ; ज्योनि. १३२ स्मृतिचन्द्रिकायां निर्णयवचनमित्युक्तम् ; संग. १६९ दन्यगोत्रां (दन्यगोत्राद्) स्मृतिचन्द्रिकायामित्युक्तम्.
(३) धप्र. ६१ याज्ञवल्क्यः (?).
(४) विपा. ६९७ ; संर. ४०९.
(५) धप्र. ६१ पूर्वार्धे (असपिण्डां च वरयेद् पितृतः सप्तमात् परम् ।) शंकराचार्यः इत्युक्तम् ; ज्योनि. १३२ ; बाल. १।५३ पृ. १९४ परम् (पराम्).

## प्रवरनिर्णये

सापिण्ड्यवर्ज्यता

अतिप्रयत्नात्सापिण्डयं संशोध्यं पापभीरुभिः ॥

## रामवाजपेयी

सापिण्ड्यस्य सविस्तरो विचारः

उद्वोढुः पितरौ पितुश्च पितरौ
तज्जन्मकृद्दम्पति-
द्वन्द्वं तस्य चतुष्कमष्ट च ततो-
ऽप्यस्य क्रमात्षोडश ।
वंशारम्भकदम्पतिप्रमिति-
रित्यासप्तकक्षं रदाः
एकैकान्वयकन्यकाः पितृकुले
त्वासप्तकक्षं ब्रुवे ॥
यद्यप्येकस्य बह्वयोऽपि सुताः स्युस्तदपीह तु ।
संबन्धसाम्यादेकैव गणितेत्यवधार्यताम् ॥
एकस्मान्मिथुनात् सुतोऽथ दुहिता
द्वन्द्वद्वयं तद्द्वयात्
तस्माद्द्वन्द्वचतुष्कमष्ट च ततो-
ऽतः षोडशातो रदाः ।
यावत्सप्तमकक्षमभिक्रतवः
कन्या इहैकान्वये
ता दन्तैर्गुणिता रसैकखदशो
वंशे सपिण्डाः पितुः ॥

मातुर्जन्मदद्दम्पती च मिथुन-
द्वन्द्वं तयोः सागराः
तस्याः पञ्चमकक्षमध्यमिति-
रित्येकान्वयः पुंसुते ।
द्वन्द्वाद्द्वन्द्वयुगं ततोऽन्वय इतो-
ऽष्टौ पञ्चकक्षं शर-
क्षोण्यः सप्तगुणाः शराभ्रविधवो
मातुः सपिण्डाः कुले ॥
कुलद्वयस्य कन्यका युता मिथः सपिण्डकाः ।
हिमांशुदृग्धरादशो विवाहकर्मवर्जिताः ॥

(१) वध्वा वरस्य वा मुख्यपितृद्वारकसापिण्ड्यं तु कूटस्थमारभ्य सप्तमादूर्ध्वं निवर्तते, तयोरेव मुख्यमातृद्वारकं तु तमारभ्यैव पञ्चमादूर्ध्वं निवर्तत इति सिद्धम् । ततश्च मुख्यकल्पेन कुलद्वयवर्जनीयकन्यानामभियुक्तोक्तसंख्योपपन्ना भवति । यथाऽऽहुः— उद्वोढुः पितरौ... विवाहकर्मवर्जिताः । अत्र प्रथमश्लोके वरस्य पितृपक्षे सापिण्ड्येन अविवाह्यकन्यानां संख्या दर्शयितुं प्रत्येकं एककन्यायाः पितरौ एकं द्वन्द्वमित्येवमङ्गीकृत्य आसप्तकक्ष्यं द्वन्द्वानां संख्यामुक्त्वा पितृपक्षे एकैकद्वन्द्वकुले तावत् कन्याना संख्योक्तिप्रतिज्ञा क्रियते । तथा हि— वरः प्रथमः, द्वितीयस्थानस्थितं वरपितरौ द्वन्द्वम् १, तृतीयस्थाने पितुः पितरौ द्वन्द्वम् १, चतुर्थस्थाने तयोः प्रत्येकं जनके द्वन्द्वे २, पञ्चमस्थाने तद्द्वन्द्वद्वयघटकपुंद्वयस्त्रीद्वययोर्जनकद्वन्द्वानि ४, षष्ठस्थाने तद्घटकाष्टसंख्यस्त्रीपुंव्यक्तिजनकानि द्वन्द्वानि ८, सप्तमस्थाने तद्घटकषोडशव्यक्तिजनकानि द्वन्द्वानि १६, अतोऽपि इति तसिः पञ्चम्यर्थे । तज्जन्मकृदितिसमासान्तर्गतजन्मकृत्पदस्य तस्येत्यादिपञ्चयन्तेषु निष्कृष्य प्रत्येकमन्वयः । ततश्च तस्य जन्मकृद्द्वन्द्वानां चतुष्कमित्येवं वाक्यार्थ उन्नेयः । इत्यासप्तकक्ष्यमित्यस्य मध्यमणिन्यायेन अन्वयः । दम्पतिशब्देन

(१) सादी. २५.

(२) प्रर. ९७ (=) दम्पति (दम्पती) मष्ट च ततो (मष्टकमतो) षोडश (षोडशम्); धम. ९१ (=) कृद्दम्पति (कृद्दम्पती) मष्ट च ततो (मष्टकमतो) प्रमिति (प्रभृति) कक्षं (कक्ष्यं) रदाः (तदा); सिन्धु. १०२५; संकौ. १७८ (=) कृद्दम्पति (कृद्दम्पती) मष्ट च ततो (मष्टकमतो) दम्पतिप्र (दम्पतीप्र) कक्षं (कक्ष्यं); संव. १४२.

(३) प्रर. ९७ (=); धम. ९१ (=); सिन्धु. १०२५ बह्वयोऽपि (बहवः); संकौ. १७८ (=); संव. १४२.

(४) प्रर. ९७-९८ (=); धम. ९१ (=); सिन्धु. १०२५; संकौ. १७८ (=); संव. १४२.

(१) प्रर. ९८ (=) कक्ष (कक्ष्य) कक्षं (कक्ष्यं); धम. ९१ (=) प्रथवत्; सिन्धु. १०२६; संकौ. १७८ (=) प्रथवत्; संव. १४२.

(२) प्रर. ९८ (=); धम. ९२ (=); सिन्धु. १०२६; संकौ. १७८ (=); संव. १४२.

द्वन्द्वमुच्यते । रदशब्देन द्वात्रिंशत्संख्या उच्यते । ततश्च इति प्रमितिः सिद्धा । तथा च अपेक्षाबुद्ध्या उक्तसंख्या सिद्धा इत्याशयः । ननु नोक्तद्वन्द्वसंख्या नापि वक्ष्यमाणा कन्यासंख्याऽपि संभवति, द्वन्द्वद्वयघटकयोः स्त्रियोरेकद्वन्द्वजन्यत्वसंभवात्, एकस्मात् द्वन्द्वात् अनेककन्यानामपि संभवात्, अत उक्तम्— यद्यपीति । एकस्य द्वन्द्वस्य । स्युः, इत्यन्तेन शङ्काद्वयानुवादः । इह द्वन्द्वसंख्यायाम् । तुशब्दः तद्विषयप्रथमशङ्कानिवृत्त्यर्थः । साम्यादित्यनन्तर एकस्मादिति सामर्थ्यलभ्यम् । ततश्च गणनासौकर्याय जन्यकन्याभेदेन जनकद्वन्द्वे भेदमारोप्य जनकद्वन्द्वैक्येन च जन्यासु अभेदमारोप्य संख्याद्वयोपपत्तिरित्याशयः । उक्तद्वात्रिंशद्द्वन्द्वानां मध्ये एकद्वन्द्वकुले उद्वोढुः सपिण्डकन्यानां त्रिषष्टिरूपामवान्तरसंख्या तावदाह— एकस्मादिति । प्रथममेकं मिथुनं, ततः पुत्रः कन्या चेति द्वन्द्वं द्वितीये स्थाने, ततः प्रत्येकं ताभ्यां कयाचित् केनचिन्मिथुनभावं गताभ्यां पुत्रः कन्या चेति द्वन्द्वद्वयं तृतीये, ततो द्वन्द्वद्वयात् तथैव रीत्या द्वन्द्वचतुष्टयं चतुर्थे, ततश्चतुष्टयात्तथैव रीत्या द्वन्द्वाष्टकं पञ्चमे, ततोऽष्टकात्तेनैव प्रकारेण षोडश द्वन्द्वानि षष्ठे, तेभ्यः षोडशभ्यः अनेनैव प्रकारेण द्वात्रिंशत् द्वन्द्वानि सप्तमे स्थाने इति द्वितीयस्थानप्रभृतिषष्ठपर्यन्तं एकत्रिंशद्द्वन्द्वान्तर्गता एकत्रिंशत्कन्याः सप्तमस्थानगतद्वात्रिंशद्द्वन्द्वान्तर्गताभिस्तावतीभिः कन्याभिः त्रिषष्टिः सपद्यते (१ न्ते)। इयं संख्या अग्निऋतव इति पदेनाभिधीयते । अग्नयः त्रयः, ऋतवः षट् । गणकरीत्या प्रातिलोम्येनाङ्कप्रक्षेपे तत्संपत्तेः पूर्वोक्तद्वात्रिंशद्द्वन्द्वेषु प्रत्येकं त्रिषष्ट्यङ्गीकारेण पितृवंशे षोडशभिरधिका द्विसहस्री कन्याना सपद्यते । इयं संख्या रसैकखदृश इति पदेनाभिधीयते, रसाः षट्, खं शून्यं, दृशौ द्वे, उक्तरीत्या २०१६ ईदृशाङ्कसिद्धेः ।

वरस्य मातृवंशे उक्तरीत्यैव आरम्भकद्वन्द्वसंख्योपन्यासपूर्वकं कन्यानां पञ्चोत्तरशतसंख्या वक्तुमाह— मातुरिति । अत्रापि वरः प्रथमे स्थाने, तस्य पितरौ द्वितीये, मातुः पितरौ तृतीये द्वन्द्वमेकं, तयोः प्रत्येकं जनकद्वन्द्वद्वयं चतुर्थे, तद्घट(? टि)काना चतसृणा व्यक्तीनां प्रत्येकं जनकद्वन्द्वचतुष्टय पञ्चमे, एतेषा सप्तद्वन्द्वाना मध्ये एकैकान्वये पञ्चदश सपिण्डाः कन्या भवन्ति । यत्किंचिदेकं द्वन्द्वं कूटस्थं प्रथमे स्थाने, ततः पुत्रो दुहिता चेति द्वन्द्वं द्वितीये, प्रत्येकं ताभ्यां जातं द्वन्द्वयुगं तृतीये, ततः पूर्वोक्तरीत्या द्वन्द्वचतुष्टयं चतुर्थे, ततस्तथैव रीत्या द्वन्द्वाष्टकं पञ्चमे, एवं पञ्चदशद्वन्द्वप्रविष्टाः पञ्चदश कन्याः संपद्यन्ते । इयं संख्या शरक्षोण्य इति पदेनाभिधीयते, शराः पञ्च, क्षोणी एका इति । उक्तसप्तद्वन्द्वेषु प्रत्येकं पञ्चदशसंख्याङ्गीकारे च पञ्चोत्तरशतसंख्यासंपत्तिः । सा च शराभ्रविधव इत्यभिधीयते, शराः पञ्च, अभ्रं शून्यं, विधुः एक इति । कुलेतिपञ्चमश्लोके पूर्वोक्तपितृवंशगतायाः षोडशाधिकद्विसहस्रसंख्यायाः मातृवंशगतया पञ्चोत्तरशतसंख्यया मेलनेन महासंख्या एकविंशतिसहितशताधिकद्विसाहस्रीरूपा उच्यते — हिमांशुदृग्धरादृश इति । हिमांशुः एकः, दृशौ द्वे, धरा एका, दृशौ द्वे । उक्तरीत्या २१२१ ईदृशाङ्कसिद्धेः । ततश्च एतावत्यः कन्याः कुलद्वयगता मुख्यकल्पेन विवाहकर्मणि वर्जनीया इत्यर्थः । * संको. १७८–१७९

## शाकलकारिकाः

मातृतः पितृतश्च सापिण्ड्यावधिः, सापिण्ड्यसंकोचानुमतिः देशधर्मः, विरुद्धसंबन्धः

ऊर्ध्वं चैवोक्तसापिण्ड्यादसमानार्षगोत्रजाम् ।
कन्यां समुद्वहेद्विप्रः सर्वदेशेष्वयं विधिः ॥
संतानं भिद्यते यस्मात्पूर्वजादुभयत्रतः ।
गणयेत्तं समारभ्य वरं यावच्च कन्यकाम् ॥
वध्वा वरस्य वा तातः कूटस्थात्सप्तमो भवेत् ।
सापिण्ड्यस्य निवृत्तिः स्यान्माता वा पञ्चमी यदि ॥
सप्तमात् पञ्चमादर्वाग्दक्षिणा विवहन्ति ये ।
स्वसारं मातरं हित्वा पुत्रीं चैत्याह गोलकः ॥(१)
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
दक्षिणे तूद्वहेत् कन्यां संकोच्यापि सपिण्डताम् ॥
पुत्री माता स्वसा चेत्स्याच्चतुर्थी वाऽथ पञ्चमी ।
न विवाह्या स्नुषा शस्ता भार्यकाः वा पितृष्वसा ॥

* च्म. संकोचनार्थम् । यद्यपि चमत्कारव्याख्यानं पूर्वकालिकं, तथापि विस्तृतत्वात् संकोच्याख्यानमत्र संगृहीतम् ।
(१) ...१२-८७ पृ. ९-१०.

कन्या चेदुक्तसापिण्ड्या मातृसंज्ञा भवेद्यदि ।
स्वसृसंज्ञाऽथवा पुत्री न विवाह्या द्विजन्मभिः ॥
धात्री पुत्री स्वसा चैता हित्वा शस्तास्तथाऽपराः ।
द्विजानां विधिरेष स्यात् संभोगे दारकर्मणि ॥
स्नुषां पैतृष्वसृकाख्यां विवाहे पञ्चमीमपि ।
नोद्वहेद्भगिनीं धात्रीं मोहाच्चेत्पतितो भवेत् ॥
धात्रीं पुत्रीं स्वसारं च नैव तां वरयेद्द्विजः ।
केचिदाहुः क्वचिद्देशे पुत्रिकामुद्वहेदिति ॥
शस्ता स्याद्दायसंबन्धे स्नुषा भार्या पितृष्वसा ।
न प्रशस्ता द्विजोद्वाहे स्वसा माता च पुत्रिका ॥
स्वसारं मातरं चैव नोद्वहेत् पुत्रिकामपि ।
मोहादुद्वहते विप्रः संभोगे तां परित्यजेत् ॥
चतुर्थीमुद्वहेत् कन्यां चतुर्थः पञ्चमीं च वा ।
वहेत् संबन्धिनीं षष्ठीं पञ्चमो न तु पञ्चमीम् ॥
भवेतां पूर्वजात् पुत्रौ तयोरपि च संततिः ।
पञ्चमः पञ्चमीं कन्यां न तत्र वरयेद्द्विजः ॥
कन्ये द्वे पूर्वजात् स्यातां संततिः स्यात्तयोरपि ।
पञ्चमः पञ्चमीं तत्र वरः कन्यां समुद्वहेत् ॥

(१) शाका. ८८ पृ. १० ; धप्र. ६२ चेदुक्तसापिण्ड्या (वरस्य सापिण्ड्ये) न विवाह्या द्विजन्मभिः (नैव तां वरयेद्बुधः) .
(२) शाका. ८९–९० पृ. १० .
(३) शाका. ९१ पृ. १० ; धप्र. ६२ .
(४) शाका. ९२–९३ पृ. १० .
(५) शाका. ९४ पृ. १० चतुर्थः पञ्चमीं च वा ( चतुर्थी पञ्चमेन तु ) वहेद् ( शस्ता ) ; संर. ४०१ .
(६) शाका. ९५ पृ. १० ; धप्र. ६२ ; संर. ४०९ .
(७) शाका. ९६ पृ. १० ; धप्र. ६२ पूर्वजात् ( पूर्वजे ) ; संर. ४०९ .

कन्यापुत्रौ तु संभूतौ पूर्वजात् संततिस्तयोः ।
यदि स्याद्वरयेत्तत्र पञ्चमः पञ्चमीमपि ॥
माता पुत्री स्वसा त्याज्या सापिण्ड्ये भिन्नगोत्रजे ।
सप्तमात्पञ्चमादर्वागूर्ध्वं शस्ता स्मृता बुधैः ॥
विज्ञेयः सप्तमादर्वाङ्निषेधोऽयं च पञ्चमात् ।
ग्राह्याग्राह्या तदूर्ध्वं तु नैव किञ्चिद्विचारयेत् ॥

## रेणुकारिकाः

मातापितृसापिण्ड्यावधिः, सापिण्ड्यसंकोचविचारः

द्वयोः कुमारीवरयोर्मिथोऽथ
  व्यङ्गाधिकाङ्गां जननीसगोत्राम् ।
त्यजेत्समानप्रवरां सगोत्रां
  मातुः सपिण्डामचिकित्स्यरोगाम् ॥
स्त्रीसंततिस्तथा पुंसामविवाह्ये उभे गते ।
स्त्रीपुंसोस्तु विवाहः स्यात्सप्तमात्पञ्चमात्परम् ॥
पञ्चमात्सप्तमाद्धीनां कन्यामुद्वहते द्विजः ।
गुरुतल्पी स विज्ञेय इति विष्ण्वादिशासनम् ॥
सप्तमीं पञ्चमीं षष्ठीं चतुर्थीं पितृमातृतः ।
उद्वहेत्सर्वथाऽलाभे इति कैश्चित्समीरितम् ॥
याज्ञवल्कीयवचसा समानार्थमिदं वचः ।
अतीत्य पञ्चमीं मातुः पितृपक्षाच्च सप्तमीम् ॥
इति ब्रुवद्भिर्धर्मज्ञैरादरान्न निराकृतम् ॥

(१) शाका. ९७ पृ. १० तु ( च ) ; धप्र. ६२ तु ( च ) ; संर. ४०९ .
(२) शाका. ९८–९९ पृ. ११ .
(३) रेका. ७, १३–१८ पृ. ४९,५०. बालम्भट्टीग्रन्थे (१५५३) 'स्त्रीसंततिस्तथा पुंसाम्' इत्यादयः श्लोकाः कारिकामतम् इत्युक्त्वा संगृहीताः ।

# *कन्यापरीक्षा

## बौधायनगृह्यशेषसूत्रम्

कन्याया विवाहे वर्ज्या अवस्थाः

सुप्तां रुदतीं निष्क्रान्तां वरणे परिवर्जयेत् ॥

कन्याया वर्ज्यानि लक्षणानि

दत्तां गुप्तां द्योतामृषभां विनतां शरभां विकटां मुण्डां मण्डूषिकां सांकारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत् ॥

कन्याया वर्ज्यानि नामानि

नक्षत्रनामा नदीनामा वृक्षनामाः पर्वतनामाः प्रेष्यनामाः पक्षिनामाः पिशाचनामाश्च गर्हिताः । सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत् ॥

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

शक्तिविषये द्रव्याणि प्रतिच्छन्नान्युपनिधाय ब्रूयुरुपस्पृशेति । नानाबीजानि संसृष्टानि वेद्याः पांसून् क्षेत्राल्लोष्टं शकृच्छ्मशानलोष्टमिति । पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिः । उत्तमं परिचक्षते ॥

कन्याया विवाहानुकूलानि लक्षणानि

बन्धुशीललक्षणसंपन्नामरोगामुपयच्छेत ॥

* वधूवरपरीक्षाप्रकरणे निबन्धकारैः कानिचित्सामुद्रिकलक्षणानि यद्यपि संगृहीतानि, तथापि 'अरोगिणीम्' इत्यादावायुर्वेदशास्त्रस्यैव 'लक्षणसंपन्नाम्' इत्यत्र स्वतन्त्रस्य सुविस्तृतस्य सामुद्रिकशास्त्रस्य संग्रहः संस्कारकाण्डेऽनुचित इति मत्वाऽस्माभिः स उपेक्षितः ।

( १ ) बौगृशे. २।३।२ .

( २ ) बौगृशे. २।३।४ .

( ३ ) बौगृशे. २।३।५ ; संर. ५०९ ( नक्षत्रनामानदीनामावृक्षनामापर्वतनामाप्रेष्यनामापक्षिनामापिशाचनामाश्च गर्हिताः । ) ( सर्वांश्च परिवर्जयेत्० ).

( ४ ) बौगृशे. २।३।६ .

( ५ ) बौगृशे. २।३।७ ; संर. ५०८ मारस्म्बबौधायनौ .

कन्यायाः पुण्यलक्षणम्

यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके ॥

## आश्वलायनगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

बुद्धिरूपशीललक्षणसंपन्नामरोगामुपयच्छेत ॥

( १ ) अथ कन्यागुणमाह– बुद्धीति । बुद्धिः व्याख्याता । रूपमिति, रोचते यद्रूपम् । तत्र हि मनो रमते । तैः लक्षणैः संपन्ना लक्षणसंपन्ना । तामुपयच्छेत । तत्र तु लक्षणबहुत्वात् तस्य शास्त्रस्य दुरवगाहत्वात् तेन आचार्य उद्देशेन स्वयमेव लक्षणोपायं शास्ति । देमा.

( २ ) लक्षणानि शुभसूचकचिह्नानि । गृक. ११

( ३ ) बुद्धिरूपशीललक्षणैर्युक्तां रोगवर्जितां कन्यामुपयच्छेत स्वीकुर्यात् । यत्र स्वमनो रमते तद्रूपम् । गानाद्र.

( ४ ) लक्षणानि सामुद्रिकादिप्रसिद्धानि । *अना.

( ५ ) शास्त्राविरुद्धदृष्टादृष्टसाधनोहापोहकुशलादिबुद्धिः, यत्र वरस्य मनो रमते तद्रूपम् । प्रमा. २०२

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

दुर्विज्ञेयानि लक्षणानीति ॥

* शेषं देमावत् ।

( १ ) बौगृशे. २।३।९ ; संर. ५११ आपस्तम्बबौधायनौ .

( २ ) आगृ. १।५।३ ; अप. १।५२ पृ. ७८ ( बुद्धिरूपलक्षणसंयुक्ताम् ) इत्यन्तरेव ; गृक. ११ ; अना. १।५।१० ; गृर. ११ ( बुद्धिमेवप्लक्षणानुपयच्छेत ) इत्यन्तरेव ; प्रमा. २०२ ; विधा. ६७६ .

( ३ ) आगृ. १।५।४ ; अप. १।५२ पृ. ७८ ( लक्षणानि दुर्ज्ञानानि ) ; गृक. २४. लक्षणानीति ( लक्षणानि ) ; अना. १।५।११ ( दुर्ज्ञेयानि लक्षणानि ); स्मृच. ७१ गृह्यपर; गृर. २२ ( दुर्विज्ञेयानि यदि लक्षणानि ) ; पमा. ४९३ गृह्यपर ; प्रमा. २२४ मनापर ; गमा. ९९ गृह्यपर ; संर. ७१२ ; चम. ८९ गृह्यपर ; विधा. ७८७ मनापर ; बाल. १।५२ पृ. १७० गृह्यपर .

( १ ) तत्र दुर्ज्ञेयत्वात् लक्षणोपायं शास्ति । * देभा.

( २ ) शास्त्राणां बहुत्वात् परस्परविरोधाच्च दुर्ज्ञेयत्वं लक्षणानाम् । अना.

अष्टौ पिण्डान्कृत्वा, 'ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यताम् ॥' इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति ॥

( १ ) 'ऋतमग्रे' इत्यनेन मन्त्रेण पिण्डानभिमन्त्र्य कुमारीं ब्रूयात् एषामेकं गृहाणेति । अथ पिण्डाधिकारे पुनः पिण्डग्रहणं किमर्थम् । कुमार्या अभिमन्त्रणं मा भूदिति । कः पुनः प्रसङ्गः । एकवाक्यनिर्देशात् कुमार्याश्च द्वितीयानिर्देशात् प्रसज्ज्येत । तन्निवृत्त्यर्थं पिण्डग्रहणं क्रियते । अथ कुतस्ते पिण्डा भवन्तीति उपरिष्टादन्वाचष्टे । देभा.

( २ ) वक्ष्यमाणैर्द्रव्यैरष्टौ पिण्डान्कृत्वा 'ऋतमग्रे' इत्यनेन मन्त्रेण तान् पिण्डानभिमन्त्र्य वरः कुमारीं ब्रूयात् एषां पिण्डानां मध्ये एकं गृहाणेति । पुनः पिण्डानिति वचनं कुमार्या अभिमन्त्रणं मा भूत् । संनिधानात् द्वितीयानिर्देशान्मन्त्रलिङ्गस्य चाविशेषात् तस्या अपि प्रसङ्गः । † अना.

क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात् । गोष्ठात्पशुमती । वेदिपुरीषात् ब्रह्मवर्चस्विनी । अविदासिनो ह्रदात् सर्वसंपन्ना । देवनात् कितवी । चतुष्पथात् द्विप्रव्राजिनी । इरिणादधन्या । श्मशानात् पतिघ्नी ॥

( १ ) क्षेत्राच्चेदुभयतःसस्यात् आहृत्य पिण्डं गृह्णीयात् अन्नवती अस्याः प्रजा भविष्यतीति विद्यात् । उभयतःसस्यादिति । एकस्मिन् संवत्सरे यत्रोभयं सस्यं निष्पद्यते तदुभयतःसस्यं, तस्मात् क्षेत्रात् । गोष्ठाच्चेदाहृतं पिण्डं गृह्णीयात् पशुमती अस्याः प्रजा भविष्यतीति विद्यात् । वेदिपुरीषाच्चेदाहृतं पिण्डं गृह्णीयात् ब्रह्मवर्चस्विनी अस्याः प्रजा भविष्यतीति विद्यात् । अविदासिनः ह्रदादाहृतं पिण्डं गृह्णीयात् सर्वसंपन्ना अस्याः प्रजा भविष्यतीति विद्यात् । देवनात् कितवी अस्याः प्रजा भविष्यतीति विद्यात् । चतुष्पथाच्चेदाहृतं पिण्डं गृह्णीयात् द्विप्रव्राजिनी भवतीति विद्यात् । प्रव्रजति अन्यैः सह तिष्ठति इत्यर्थः । इरिणाच्चेदाहृतं पिण्डं गृह्णीयात् अधन्या भवतीति विद्यात् । उपरता यस्य ओषधयः । शुष्का इत्यर्थः । तदिरिणम् । तस्मादि-

* गानाव्. देभावत् ।

† गानाव्. अनागनम् ।

( १ ) आगृ. १।५।५ ; मिता. १।५२ ( अष्टौ पिण्डान्कृत्वा ) एतावदेव ; अप. १।५२ पृ. ७८ यदियं ( यदि च ) ; गृक. २४ ऋतमग्रे ( ऋतमग्रौ ) जज्ञ ( यज्ञ ) तदियमिह ( तदिदमिह ) ; अना. १।४।१२ ; स्मृच. ७६ प्रतिपद्यतां ( प्रपद्यतां ) ; गृर. २२ गृकवत् ; पमा. ४६३ जज्ञ ( यज्ञ ) ; मपा. १३२ तदियमिह ( तदिदमिह ) नभिमन्त्र्य ( नभिसंमन्त्र्य ) ; प्रपा. ३२४ ; गभा. ९६ यदियं ( यदिदं ) ; प्रर. ९७ ( अष्टौ पिण्डान् कृत्वा ) एतावदेव ; धर्मसि. १।५४ पृ. १०८ प्ररवत् ; संप्र. ७३२ पिण्डान् कृत्वा + ( पिण्डानभिमन्त्रयेत् ) यदियं ( यदीयं ) तदियमिह ( तदीयमिह ) ; चम. ८६ ; मुक्ता. १४८ कृत्वा ( गृहीत्वा ) ; संभ. ४९ ; सिन्धु. ९९१ प्ररवत् ; विपा. ७४५-७४६ कुमार्यभिजाता ( कुमार्यभिजातानि ) ; संकौ. १७२ प्ररवत् ; प्रका. १४४ प्ररवत् ; बाल. १।५२ पृ. १७० ; कृभ. ९९१ .

( १ ) आगृ. १।५।६ ; अप. १।५२ पृ. ७८ अविदासिनो ( अविनाशिनो ) द्विप्र ( विप्र ) ; गृक. २४ ब्रह्मवर्चस्विनी ( ब्रह्मवादिनी ) अविदासिनो ( अविनाशिनो ) द्विप्र ( विप्र ) इरिणादधन्या ( ईरिणादनपत्या ) ; अना. १।४।१३-२० द्विप्र ( विप्र ) ; स्मृच. ७६ अनावत् ; गृर. २२-२३ दन्नवत्यस्याः ( दर्धवत्यस्याः ) अविदासिनो ( अविनाशिनो ) सर्वसंपन्ना ( सर्वसंपूर्णा ) द्विप्र ( विप्र ) इरिणादधन्या ( जारिणादनपत्या ) ; पमा. ४६३-४६४ अनावत् ; मपा. १३२ ब्रह्मवर्चस्विनी ( ब्रह्मवादिनी ) अविदासिनो ( अविनाशिनो ) द्विप्र ( विप्र ) इरिणा ( ईरिणा ) ; प्रपा. ३२४ ; गभा. ९६-९७ अनावत् ; संप्र. ७३२ गोष्ठात् ( गोष्ठाच्चेत् ) सर्वसंपन्ना ( सर्वसौभाग्यसंपन्ना ) इरिणा ( ईरिणा ) ; चम. ८६ इरिणा ( ईरिणा ) ; मुक्ता. १४८ अनावत् ; संभ. ४९ गृह्णीयात् ( प्रतिगृह्णीयात् ) अविदासिनो ( अविनाशिनो ) द्विप्र ( विप्र ) ; विपा. ७४६ इरिणादधन्या ( ईरिणादधन्या ) शेषं अनावत् ; बाल. १।५२ पृ. १७० कितवी ( कितविनी ) इरिणा ( ईरिणा ) विप्रव्राजिनी इत्यपि पाठः ; कृभ. ९९१-९९२ अनावत् .

रिणात् । श्मशानाच्चेदाहृतं पिण्डं गृह्णीयात् पतिं हन्तीति विद्यात् । देभा.

(२) अष्टपिण्डकरणं च वक्ष्यमाणक्षेत्रादिमृत्तिकाभिः। गोष्ठं गवामवस्थानदेशः । वेदिपुरीषं वेदिमृत्तिका । देवनं दीव्यतेऽस्मिन्निति द्यूतस्थानम् । विप्रव्राजिनी भर्तारं विहाय परिव्रजनशीला । ईरिणं ऊषरम् । ब्रक. २४

(३) अपवृत्ते कर्मणि या वेदिः तस्याः पुरीषम् । अविदासी ह्रदो नाम अशोष्यो ह्रदः । देवनं द्यूतस्थानम् । यत्र उप्तं बीजं न प्ररोहति तदिरिणम् । द्वौ प्रव्रजतीति द्विप्रव्राजिनी । स्वैरिणीति यावत् । पतिं हन्तीति पतिघ्नी । अत्र प्रजास्तुतिनिन्दाद्वारेण सैव स्तुता निन्दिता चेति मन्तव्यम् । उत्तरैस्त्रिभिर्वाक्यैः सैव निन्द्यते ।

* गानावृ.

(४) वेदिगताः पांसवो वेदिपुरीषम् । वृत्त-स्वाध्यायकृतं यशो ब्रह्मवर्चसम् । कितवी द्यूतपरा । चतुर्णां पथां समाहारः चतुष्पथम् । विविधं या प्रव्रजति सा विप्रव्राजिनी, स्वकुले न तिष्ठतीत्यर्थः । अधन्या धनरहिता । तस्याः प्रजा पतिघ्नी इत्येके । स्वयमित्यन्ये ।

§ अना.

(५) जारिणं ऊषरम् । † गृर. २३

(६) क्षेत्राच्चेदिति । पार्श्वद्वयेऽपि शस्यपरिपूर्णात् क्षेत्रादाहृता या मृत् तत्कृतं पिण्डं यदि गृह्णाति तदा अस्याः प्रजा अन्नवती भविष्यतीति विद्यात् ।

मपा. १३३

(७) एतेभ्यः स्थानेभ्यः मृदः पृथगानीय तत्त-त्स्थाननामानि पृथक्पृथक् पत्रखण्डेषु लिखित्वा तानि खण्डानि यथाक्रमं मृत्तिकासु अन्तर्धाय परस्परमेकरूपतया पिण्डान् कृत्वा परिशुद्धे पात्रे विनिक्षिप्य गन्धपुष्पैरभ्यर्च्य 'ऋतमग्रे प्रथमं जज्ञे' इत्यनेन मन्त्रेणाभिमन्त्र्य चरः स्वाभिमता देवता ध्यात्वा एषामेकं गृहाण इति कुमारीं ब्रूयात् । सा च यदि क्षेत्रादाहृतं पिण्डं गृह्णीयात् अस्याः प्रजा अन्नवती भविष्यति इति विद्यात् इति सर्वत्र ज्ञेयम् । वृत्तस्वाध्यायकृतयशः ब्रह्मवर्चसं, तद्वती । * तदुक्तम्- 'वृत्ताध्ययनसंपत्तिर्ब्रह्मवर्चसमुच्यते' इति । द्वौ प्रव्रजतीति द्विप्रव्राजिनी । स्पष्टमवशिष्टमिति ।

§ मपा. ३२४

(८) द्वौ प्रव्रजतीति द्विप्रव्राजिनी, विविधान् प्रकर्षेण व्रजतीति विप्रव्राजिनी इति वा, विप्रान् प्रव्रजति विप्रव्राजिनी इति वा, सर्वथाऽपि स्वैरिणीति यावत् ।

† बाल. १।५२ पृ. १७०

* शेषं देभावत् ।

§ शेषं देभावत् गानावृवच्च ।

† शेषं मकवत् ।

## आश्वलायनगृह्यपरिशिष्टम्

कन्याया विवाहानुकूलानि लक्षणानि

लक्षण्यो वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डामसगोत्रजामविरुद्धसंबन्धामुपयच्छेत ॥

## कौषीतकिगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

[२]विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयाद्या लक्षणसंपन्ना स्यात् । यस्या अभ्यात्ममङ्गानि स्युः । समाः केशान्ता आवर्तावपि यस्यै स्यातां प्रदक्षिणौ ग्रीवायां षड् वीरान् जनयिष्यतीति विद्यात् ॥

## आपस्तम्बगृह्यसूत्रम्

कन्याया विवाहे वर्ज्या अवस्थाः

सुप्तां रुदन्तीं निष्क्रान्तां वरणे परिवर्जयेत् ॥

(१) अथ विवाहे वर्जनीयाः कन्या आह- सुप्तामिति । वरेषु वरणार्थं प्राप्तेषु या कन्या स्वपिति, रोदिति,

* आदर्शग्रन्थोऽत्राशुद्धः । संप्र.( पृ. ७१३ )क्रानुवादानुसारेण शोधितः ।

§ शेषं देभागतं गानावृगतं च । गभा., मभा., चम., विपा. पूर्वटीकासु गतार्थं ।

† शेषं मपावत् ।

(१) आगृप १।२२. शेषः स्थलादिनिर्देशः विवाहविधिप्रकरणे ( सत्रा. पृ. ९५ ) द्रष्टव्यः ।

(२) कौगृ. १।१।५ .

(३) आपगृ. ३।११ ; संर. ५०९ रुदन्ती निष्क्रान्ता ( रुदतीं निष्क्रान्तां ) .

निष्क्रामति वा गृहात्, तस्या वरणं न कर्तव्यम्। अशुभलिङ्गान्येतानीति। परिशब्दः अत्यन्तप्रतिषेधार्थः मनश्चक्षुषोर्निबन्धे सत्यपीति। अनाकुला.

(२) या वरेषु वरणार्थं प्राप्तेषु स्वपिति, या रोदिति, या वा गृहान्निष्क्रामति, ता एता वरणे परिवर्जयेत् अत्यन्तं वर्जयेत्, ऋद्धौ ज्योतिषादिभिर्ज्ञातायामपि। यतः स्वापादीनामत्र अनृद्धिलिङ्गत्वं प्रबलत्वं च विवक्षितम्। तात्.

(३) रुदतीं रोदनकारिणीम्। निष्कान्तां मलिनाम्। * संर. ५०९

कन्याया विवाहे वर्ज्यानि लक्षणानि

**दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत् ॥**

(१) दत्ता वाचा अन्यस्मै दत्ता। गुप्ता प्रयत्नेन रक्ष्यमाणा, दुःशीला वा सा भवति अशुभलक्षणा वा। द्योता विषमदृष्टिः। ऋषभा ऋषभशीला। शरभा अतिदर्शनीया, जारास्तां कामयेरन् सा च तान्। विनता विनतगात्रा, कुब्जा वा। विकटा विस्तीर्णजङ्घा। मुण्डा अपनीतकेशा। *मण्डूषिका मण्डूकत्वक्, अश्लक्ष्णेत्यर्थः।* वामना इत्यन्ये। सांकारिका कुलान्तरे जाता कुलान्तरस्य अपत्यत्वं गता वा, यस्या वा गर्भस्थायां माता अस्थि संचितवती। राता रतिशीला। पाली वत्सादीनां पालयित्री। मित्रा मित्रवती, बहुमित्रा इत्यर्थः। स्वयं वा मित्रभूता। स्वनुजा यस्या अनुजा शोभना स्वयमदर्शनीया सा स्वनुजा। वरजननादूर्ध्वं अल्पीयसि काले जाता तस्मिन्नेव संवत्सरे जाता इत्यन्ये। वर्षकारी वर्षेणाधिका। वर्षकारी स्वेदनशीला इत्यन्ये। वर्जयेदित्युच्यते वरणे परिवर्जयेदित्यस्य अनुवर्तनं मा भूदिति। तेन येषु वरणं नास्ति ब्राह्मादिषु विवाहेषु तेष्वपि आसां प्रतिषेधः। किञ्च तदनुवृत्तौ अत्यन्तप्रतिषेधप्रसङ्गः। अनाकुला.

(२) दत्ताद्याः पञ्चदश कन्या वर्जयेत्। दत्ता अन्यस्मै वाचा प्रतिश्रुता, उदकपूर्वं वा प्रतिपादिता। गुप्ता अदर्शनार्थं कञ्चुकादिभिरावृता, प्रयत्नसंरक्ष्यमाणा वा दौःशील्यादिशङ्कया। द्योता पिङ्गाक्षी, बभ्रुकेशी वा, विषमदृष्टिर्वा। ऋषभा प्रधाना, ऋषभस्येव शरीरं गतिः शीलं वा यस्याः सा, ककुद् वा अस्ति यस्याः सा। शरभा शीर्णदीप्तिः, सर्वनीललोम्नी वा, अरूपा वा, निष्प्रभा वा। केचित् दर्शनीया, यतः सा जारकाम्या। विनता कुब्जा। विकटा विकटजङ्घा, विस्तीर्णजङ्घा वा। मुण्डा अपनीतकेशा, अजातकेशा वा। मण्डूषिका अल्पकाया, अरुणदती वा मण्डूकत्वग्वा। अपरे वामनाङ्गा, दग्धाङ्गा वा। सांकारिका गर्भस्थायां यस्यां सत्यां माता भर्तुरस्थिसंचयनकारिका, कुलान्तरस्य दुहितृत्वं गता वा। राता रमणशीला कन्दुकादिक्रीडाप्रियेत्यर्थः, ऋतुस्नाता वा। केचित् रतिशीला विषयोपभोगशीलेत्यर्थः। पाली वत्सक्षेत्रादिपालिका। मित्रा बहुमित्रा, सखी वा। स्वनुजा शोभना अनुजा यस्याः सा, न तु शोभनः अनुजः यस्याः। शोभनायामनुजायां कदाचित् प्रमादः स्यादिति। केचित् वरजन्मसंवत्सर एव पश्चाज्जाता इति। वर्षकारी वराद्वर्षेणाधिका, या अत्यन्तं स्रवति सा वा। परिवर्जयेदित्यनुपङ्गे सत्यपि वर्जयेदिति पुनर्वचनं ब्राह्मादिषु सर्वेषु विवाहेषु आसां प्रतिषेधार्थं, असति गत्यन्तरे ऋद्धावपि परीक्षितायां दत्तेतरासामनिषेधार्थं वा। तात्.

(३) सर्वाणीमानि दत्तादिविषयाणि वचनानि अदुष्टवराभिप्रायाणि। * मुक्ता. १३७

(४) यद्यपि विग्रहे शोभना अनुजा यस्याः इति सामान्यतः स्वनुजशब्दार्थो भाष्यकृता प्रदर्शितस्तथापि अत्र स्वनुजशब्दः स्त्रीलिङ्गः सावधारण एव द्रष्टव्यः। तेन शोभना अनुजा भगिन्य एव इत्यर्थो निष्पद्यते। नातः 'यस्यास्तु न भवेद्भ्राता ता नोपयच्छेत' इत्यनेन विरोधः। + संर. ५१०

---

* शेषं तादवद्।

(१) आपगृ. ३।३।१२; मुक्ता. १३७; प्रका. ३४३-३४४; संर. ५०९ रातां (रतां).

* शेषं तादगनम्।

+ शेषं तादवद्।

कन्याया वर्ज्यानि नामानि

**नक्षत्रनामा नदीनामा वृक्षनामाश्च गर्हिताः ॥ सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत् ॥**

( १ ) नक्षत्रं नाम यासां ताः नक्षत्रनामाः, तथा नदीनामाः वृक्षनामाश्च रोहिणी गङ्गा करञ्जेत्यादयः। ताश्च विवाहे गर्हिताः। तथा सर्वाश्च रेफलकारोपान्त्याः, एवंभूतनामा इत्यर्थः। करा काला सुवेलेत्यादयः। ताः वरणे परिवर्जयेत् वरणमप्यासां न कर्तव्यमित्यर्थः।

अनाकुला.

( २ ) नक्षत्रस्य नाम इव नाम यासां ताः नक्षत्रनामाः। एकस्य नामशब्दस्य लोपः उष्ट्रमुखादिवत्। एवमुत्तरयोरपि विग्रहः। रोहिणी चित्रा इत्येवमादयो नक्षत्रनामाः। गङ्गा इत्यादयो नदीनामाः। शिंशपेत्याद्या वृक्षनामाः। गर्हिताः वर्जनीयाः।

रेफो वा लकारो वा यासां नाम्नः उपान्तः उपधा इत्यर्थः, यथा गौरी शाली इत्यादि। शेषं व्यक्तम्। अत्र चकारेण गर्हिता इत्यनुकर्षणात् आसां वर्जनीयत्वे सिद्धे 'सर्वा वरणे परिवर्जयेत्' इति व्यर्थं, न, सुग्रहार्थत्वात्। अथवा या एता रेफलकारोपान्ता गौरी शालीत्याद्याः, याश्च प्रकारान्तरेणापि स्मृत्यन्तरोक्ता रेफलकारोपान्ताः, यथा सगोत्रा समानप्रवरा पुंश्चलीति ताः सर्वा वरणे परिवर्जयेदिति ज्ञापनार्थम्। इदं त्विह वक्तव्यम्— असत्यपि गत्यन्तरे, व्यक्तेऽपि ऋद्धिलिङ्गे सगोत्रादीनां सर्वथा निषेध एव। गौर्यादीनां तु न तथा गुणादीनामिवेति। केचित् नक्षत्रनाम इत्यादिकेयं शास्त्रान्तरगीता गाथा, तस्याः पादपूरणानि 'सर्वा वरणे परिवर्जयेत् इति' पदानि इति परिकल्पयन्तः, यस्मान्नक्षत्रादिनामा रेफलकारोपान्ताश्च गर्हिताः तस्मात् ताः सर्वा वरणे परिवर्जयेदिति व्याचक्षते। * ताद.

* संर. तादृगतम्।

( १ ) आपगृ. ३।१३ ; स्मृच. ७५ नामाश्च (नामा च) ; संप्र. ७३२ स्मृचवत् ; प्रका. ३४४ ; संर. ५०९ .

( २ ) आपगृ. ३।१४ · स्मृच. ७५ लकारोपान्ता (लकारान्ता) ; संप्र. ७३२ पान्ता वरणे परिवर्जयेत् (पान्त्यवर्णा विवर्जयेत्) ; प्रका. ३४४ ; संर. ५०९ पान्ता (पान्त्या.) .

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

**शक्तिविषये द्रव्याणि प्रतिच्छन्नान्युपनिधाय ब्रूयादुपस्पृशेति ॥**

**नानाबीजानि संसृष्टानि वेद्याः पांसून् क्षेत्राल्लोष्टं शकृच्छ्मशानलोष्टमिति ॥**

( १ ) 'लक्षणसंपन्नामुपयच्छेत' इति वक्ष्यति। तत्र लक्षणानामज्ञातत्वात् तत्परीक्षणोपायः उपदिश्यते। न चायं नित्यो विधिः 'शक्तिविषये' इति वचनात्। शक्तिः सामर्थ्यं, यदि संभवः। यदि वधूज्ञातयः अनुमन्येरन् तदा कर्तव्यं, नान्यथेत्यर्थः। तत् कथं कर्तव्यम्? उच्यते— द्रव्याणि पञ्च वक्ष्यमाणानि मृत्पिण्डेषु प्रतिच्छन्नानि कृत्वा उपनिधाय कन्यासमीपे निधाय तां ब्रूयात् वरः एषां पिण्डानां एकमुपस्पृश इति।

कानि पुनस्तानि द्रव्याणि? नानाबीजानि संसृष्टानि व्रीहियवादीनि। वेद्याः पांसूनाहृतान्, सस्यसंपन्नात् क्षेत्रादाहृतं लोष्टं, शकृत् गोमयं, श्मशानादाहृतं लोष्टमित्येतानि। बीजा( १ दी )नां द्रव्यत्वाव्यभिचारेऽपि द्रव्याणि इत्युच्यते शास्त्रान्तरे दृष्टानामन्येषामपि द्रव्याणामिह विकल्पेन प्राप्त्यर्थं, तद्यथा— 'अविदासिनो हृदात् सर्वसंपन्ना, देवनात् कितवी,— इरिणादधन्या' इति।

अनाकुला.

( २ ) शक्तिः सामर्थ्यम्। विषयः अवकाशः। अस्यामृद्धिपरीक्षायां वरतत्पक्षिणां सामर्थ्यस्यावकाशो संभवति, यदि कन्या च तदीयाश्च इमां परीक्षामभ्युपगच्छेयुरित्यर्थः। यत एव अत्र शक्तिविषये इत्याह, अत एवैषा ऋद्धिपरीक्षा ज्योतिषादिभिर्वैकल्पिकी, न तु नित्यवद्विवाहाङ्गम्। द्रव्याणि वक्ष्यमाणानि मृत्पिण्डेषु च प्रतिच्छन्नानि एकस्मिन् भाजने निधाय कन्यासमीपे च कृत्वा, तां ब्रूयात् एषां पिण्डानामेकमुपस्पृश इति।

कानि तानि इत्यत आह— नानेति। नानाबीजानि व्रीहियवादिबीजानि। संसृष्टानि एकस्मिन् पिण्डे क्षिप्तानि।

( १ ) आपगृ. ३।१५ ; मुक्ता. १४८ ; संर. ५११ .

( २ ) आपगृ. ३।१६ ; मुक्ता. १४८ ; संर. ५११ .

वेद्याः सौमिक्याः आहृतात् पांसून् । क्षेत्रात् सस्यसंपन्नादाहृतं लोष्टम् । अवशिष्टे प्रसिद्धे । * ताद.

**पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिः ॥ उत्तमं परिचक्षते ॥**

( १ ) तत्र बीजस्पर्शने प्रजाभिः समृद्धिः । वेदिपुरीषे यज्ञैः, क्षेत्रलोष्टे धनधान्यैः, गोमये पशुभिः, श्मशानलोष्टे मरणं इति यथालिङ्गार्थः । उत्तमं अन्त्यं द्रव्यं परिचक्षते गर्हन्ते वर्जयन्तीत्यर्थः । अनाकुला.

( २ ) पूर्वेषां चतुर्णामुपस्पर्शने यथालिङ्गमृद्धिः । नानाबीजानामुपस्पर्शने प्रजानां समृद्धिः । वेद्याः पांसूनां यज्ञानां, क्षेत्राल्लोष्टस्य सस्यानां, शकृतश्च पशूनामिति । ऋद्धिनिश्चयाद्विवाहकर्तव्यतानिश्चय इत्यर्थः । उत्तम श्मशानलोष्टं परिचक्षते गर्हन्ते शिष्टाः, जायापत्योरन्यतरस्य वा मरणलिङ्गत्वादिति । † ताद.

कन्याया विवाहानुकूलानि लक्षणानि

**बन्धुशीललक्षणसंपन्नामरोगामुपयच्छेत ॥**

( १ ) उद्वाह्यामाह—बन्धुशीलेति । उक्ता वर्जनीयाः कन्याः । अथ ग्राह्या उच्यन्ते । बन्धुशब्देन कुलमुच्यते । यदुक्तमाश्वलायनेन—'कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्' इति ( आगृ.१।५।१० ) । शीलसंपन्ना आर्यशीला । लक्षणसंपन्ना स्त्रीलक्षणैरुपेता । रोगरहिता क्षयापस्मारादिरहिता । अनाकुला.

( २ ) अत्र संपन्नामिति प्रत्येकं संबध्यते । बन्धुसंपन्नां प्रशस्ताभिजनाम् । शीलसंपन्नां आस्तिक्यादिगुणान्विताम् । लक्षणसंपन्नां गूढगुल्फत्वादिस्त्रीलक्षणयुक्ताम् । अरोगां क्षयापस्मारकुष्ठाद्यचिकित्स्यरोगरहिताम् । उपयच्छेत उद्वहेत् । ताद.

( ३ ) लक्षणसंपन्नामित्यनेन दोषवतीं नोद्वहेदित्युक्तं भवति । संप्र.७२१

* मुख्य. तादगतम् । संर. तात्पर्यदर्शनस्यानुवादः ।

† मुख्य., संर. तादवत् ।

( १ ) आपगृ. ३।१७, १८ ; मुक्ता. १४८ ; संर. ५११ .

( २ ) आपगृ. ३।१९ ; स्मृच. ७४ ; संप्र. ७२१ ; प्रका. १४४ ; संर. ५०८ आपस्तम्बबौधायनौ .

कन्यायाः पुण्यलक्षणम्

**यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके ॥**

( १ ) अथ ऋद्धिनिश्चये एकीयं मतमाह—यस्यामिति । यस्यां कन्यायां वरस्य मनसश्चक्षुषश्च निबन्धः तृप्तिः उत्पद्यते, तस्यां ऋद्धिर्ध्रुवा, नेतरत् न दत्तादिगुणदोषाद्यनुदर्शनमादरणीयमित्येके शिष्टा ब्रुवते । अत्र पक्षे सर्वगुणसंपन्नायामपि यस्यां मनश्चक्षुषी न निबध्येते सा वर्जनीया । शास्त्रनिषिद्धास्त्वत्रापि पक्षे वर्ज्या एव, यथा सवर्णा सगोत्रा इति । अनाकुला.

( २ ) यस्यां कन्यायां वरस्य मनश्चक्षुषोर्निबन्धः नितरां बन्धनं, यस्यां आसक्त्यतिशयेन मनश्चक्षुषी निबद्धे इव तिष्ठतः इत्यर्थः । तस्यां जायायां सत्यां धर्मादीनां समृद्धिः, नेतरत् गुणदोषानुदर्शनमाद्रियेत इत्येके ब्रुवते । एतदुक्तं भवति—अत्र मनश्चक्षुषोर्निबन्ध एवादरणे कारणं, न तु ज्योतिषादिना ज्ञाता गुणाः । तथा तदभाव एव परित्यजने कारणं, न स्वापादयो दोषा इति । उभयोरपि मतयोर्दत्तादीनां निषेधमाद्रियेतैव, 'सवर्णापूर्वशास्त्रविहितायाम्०' (आध. २।१३।१) 'असमानार्षगोत्रजाम्' 'पञ्चमात्सप्तमादूर्ध्वम्' इत्यादिवचनजातात् ।

ताद.

( ३ ) 'नेतरदाद्रियेत' इत्ययं निषेधः मुक्तादिरेफलकारोपान्त्यान्तानामेव, न तु धर्मसूत्रोक्तानां सगोत्रसप्रवरसपिण्डानामपि । एतदर्थमेव धर्मसूत्रे सगोत्रादिविवाहनिषेधः कृतः, न तु गृह्यसूत्रे । तथा च सगोत्रादिविवाहनिषेधोऽस्त्येव । एवं च यो निषेधः स्वसूत्रोक्तं सगोत्रादिविवाहनिषेधं बाधितुं नार्हति, ( स ) सूत्रान्तरोक्तं सगोत्रादिविवाहनिषेधमीक्षितुमपि नार्हति कुतस्तं

( १ ) आपगृ. ३।२१ ; मिता. १।५२ ( नेतरदाद्रियेतेत्येके० ) ; स्मृच. ६७ मितावत् ; पमा. ४६५ मितावत् ; मपा. १०३ मितावत् ; वीमि. १।५४ मितावत् ; संप्र. ७४५ मितावत् ; धम. ९० मितावत् ; मुक्ता. १२५ मितावत् ; मंस. ४९ मितावत् ; विपा. ६७६ मितावत् ; भान. १६८ मितावत् ; प्रका. १४४ ; बौगृ. १।२०।१६ ( इत्येके० ) ; संर. ५११ आपस्तम्बबौधायनौ .

बाधितुम् । अतः सत्याषाढादिसूत्रोक्तसगोत्रादिविवाह-निषेधबाधनशङ्कैव न । 'मातुश्च योनिसंबन्धेभ्यः' इति सत्याषाढापस्तम्बसूत्रयोश्चकारः सप्रवरपितृसपिण्डयोः समुच्चयार्थः । तेनैतयोरपि निषेधोऽस्त्येव । *मर. ५११

## हिरण्यकेशिगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

**(भार्यामुपयच्छेत्) सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम् ॥**

*मातापितृभ्यामनुज्ञातो भार्यामुपयच्छेत् । कीदृशीम् ? सजातां सवर्णां समानाभिजना च । नग्निका आसन्नार्तवाम् । नग्न(ज)परिपठितो वस्त्रविशेषणार्थः । ततोऽर्हे कर्तरि च स्यात् क्तो बहुलं कृत् । तस्माद्वस्त्रविशेषणार्हा नग्निका, मैथुनार्हेत्यर्थः । ब्रह्मचारिणीमकृतमैथुनाम् ।*

§ मातृद.

## मानवगृह्यसूत्रम्

विवाहकारणानां तारतम्येन विचारः

**पंञ्च विवाहकारकाणि भवन्ति वित्तं रूपं विद्या प्रज्ञा बान्धव इति ॥ एकालाभे वित्तं विसृजेत् । द्वितीयालाभे रूपम् । तृतीयालाभे विद्याम् । प्रज्ञायां बान्धव इति च विवदन्ते † ॥**

कन्याया विवाहानुकूलानि लक्षणानि

**बंन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेत । समानवर्णामसमानप्रवरां यवीयसीं नग्निकां श्रेष्ठाम् ॥**

*कन्या बन्धुमतीं, बन्धुः इह भ्राता उच्यते, भ्रातृमतीमित्यर्थः । अस्पृष्टं अनभिज्ञातं मैथुनं सुरतं यया सा अस्पृष्टमैथुना अनन्यपूर्वा । ता उपयच्छेत स्वीकुर्यात्, दद्याच । उभयत्र चायं नियमः पूर्वोक्तेऽपि प्रतिग्रहीतुश्च ।* तथा च अनेनैवाभिप्रायेणाख्यातद्वयस्य प्रयोगः उपयच्छेत विवहन्त इति च । अस्पृष्टमैथुना च सा ज्ञेया अनभिप्राप्ता स्त्रीजन्मणि चतुर्थावरणम् (?) । अनुपभुक्ता नग्ना । तथा च स्मृत्यन्तरम्— 'तस्मादव्यञ्जनोपेतां रजसा (मा)नासयौवनाम् । उपभुक्तां न सोमाद्यैर्दद्याद् दुहितरं पिता ॥' तथा पितृगेहे यस्याः रजो दृष्टं तां विवाहयन् वृषलीपतिः इत्यन्ये । समानवर्णामसमानप्रवरां च । केचिदेतन्मन्त्रं पठन्ति— 'समानवर्णो ब्राह्मणो ब्राह्मणी क्षत्रियः क्षत्रिणी ...' इत्यादि । असमानप्रवरा नामसंख्याभ्यां सर्वे निषिध्यन्ते । प्रवराणां न नाम्नैव केवलेन संख्यया वा, ततः भिन्ननामभिः समसंख्यैर्विवाह इष्यते । भिन्नसंख्येन समाननामभिश्च । एवं च व्याख्याने ऋक्षभरद्वाजैर्भरद्वाजविवाहो भवति, नान्यथा भृग्वङ्गिरआर्ष्टिषेणादिभिर्भृगूणाम् । नग्निका श्रेष्ठां, नग्नैव नग्निका स्वार्थे कंप्रत्ययः । नग्निकां अप्राप्तस्त्रीभावामयौवनरसां उपयच्छेतेति । तथा श्रेष्ठा लावण्ययुक्तां स्त्रीलक्षणोपेतामित्यर्थः । नान्यल्लावण्यात् श्रेष्ठत्वं कन्यायां विद्यते । अनेनैवाशयेन मनुनोक्तम्— 'स्त्रीरत्नं दुष्कुलादपि', '*अव्यङ्गाङ्गीं सौम्यनाम्नीम्*' इत्यादि । *अथवा नग्निका श्रेष्ठा विवस्त्रवर्ती श्रेष्ठां विवस्त्रा सती श्रेष्ठा या भवेत्तामुपयच्छेत ।* यस्मात् कुरूपाऽपि वस्त्राद्यलङ्कारकृता मनोहारिणी भवति । तस्माद्विवस्त्रा सती न सर्वा शोभते, किं तर्हि काचिदेव लक्षणवती । नापि च वैधव्यदौर्भाग्यादिदोषा दृश्यन्ते, तस्माददृष्टं दूषणं दुर्ज्ञेयम् । अष्टाभा.

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

**[1]विज्ञानमस्याः कुर्यात्, अष्टौ लोष्टानाहरेत्— सीतालोष्टं वेदिलोष्टं दूर्वालोष्टं गोमयलोष्टं फलवतो वृक्षस्याधस्ताल्लोष्टं श्मशानलोष्टमध्वलोष्टमिरिणलोष्टमिति ॥**

**[2]देवागारे स्थापयित्वाऽथ कन्यां ग्राहयेत, यदि श्मशानलोष्टं गृह्णीयादध्वलोष्टमिरिणलोष्टं वा नोपयमेत ॥**

* शेष तावदत् ।

§ 'असगोत्राम्' इत्यस्य व्याख्यानं गोत्रप्रवरविचारे (संका. पृ. १७३) द्रष्टव्यम् ।

† व्याख्यानं अग्रे वरपरीक्षाप्रकरणे संग्रहीष्यते ।

(१) हिगृ. १।१९।२ ; संर. ४०२.

(२) मागृ. १।७।६-७.

(३) मागृ. १।७।८.

(१) मागृ. १।७।९.

(२) मागृ. १।७।१०.

तद्यथा विज्ञायते तद्दर्शयितुमाह– विज्ञानमस्याः कुर्यात् । विज्ञायते येन शुभमशुभं च तद्विज्ञानम् । तदाह– अष्टौ लोष्टानाहृत्य ।

देवागारे स्थापयित्वेत्यादि निगदव्याख्यातम् । अथ कन्यां अष्टानां मध्यात् कन्ये एकं गृहाण इत्युक्त्वाऽन्यतमं ग्राहयेत् । यदि श्मशानलोष्टम् (इति) । एषां तु चान्यतमग्रहणे च उपयमो नोपलभ्येत । यस्मादेषां स्मृत्यन्तरे दोष उक्तः– श्मशानात्पतिघ्नीत्वम्, अध्वनः प्रव्रज्या, इरिणे दुर्भगत्वम् । शेषाणां प्रशस्तत्वम् । अष्टामा.

## भारद्वाजगृह्यसूत्रम्

विवाहकारणानां तारतम्येन विचारः

[1]चत्वारि विवाहकरणानि वित्तं रूपं प्रज्ञा बान्धवमिति । तानि चेत्सर्वाणि न शक्नुयाद्वित्तमुदस्येत्ततो रूपम् । प्रा(प्र)ज्ञायां च तु बान्धवे च विवदन्ते । बान्धवमुदस्येदित्येक आहुः । अप्रज्ञेन हि कः संवासः । अथैतदपरम् । न खल्वियमर्थेभ्य ऊह्यते । प्रजननार्थोऽस्यां प्रधानः । स योऽलं संलक्षणाय स्यात्स तामावहेत यस्यां प्रशस्ता जायेरन् ॥

कन्याया वर्ज्या अवस्थाः

न स्वपन्तीमुपगृह्णीत, न चरन्तीम् ॥

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

प्रथममभ्यागच्छंस्तां मङ्गल्यानि परिपृच्छेत् । चतुरो लोष्टानाहरेद्वेदिलोष्टं गोमयलोष्टं सीतालोष्टं श्मशानलोष्टमिति । तामाहैषामेकमादत्स्वेति । सा चेद्वेदिलोष्टमाददीताध्यापकं यायजूकं जनयिष्यतीति विद्यात् । यदि गोमयलोष्टं बहुपशुं जनयिष्यतीति विद्यात् । यदि सीतालोष्टं कृष्टराधिकं जनयिष्यतीति विद्यात् । यदि श्मशानलोष्टमादहनशीक्ष्णी परिख्यातेति विद्यात् । नैनामुपगृह्णीत ॥

कन्यायाः पुण्यलक्षणम्

अथ खलु बहूनि लक्षणानि भवन्ति । श्लोकं तु लाक्षणा उदाहरन्ति– यस्यां मनोऽनुरमते चक्षुश्च प्रतिपद्यते । तां विद्यात् पुण्यलक्ष्मीकां किं ज्ञानेन करिष्यति ॥ ' इति ।

(१) भागृ. १।११.

## काठकगृह्यसूत्रम्

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

[1]लक्षणिना लक्षणानि परीक्षयेत् ॥

(१) हस्तादिलक्षणवेदिना लक्षणानि शुभसूचकानि परीक्षयेत् । ...लक्षणपरीक्षणपूर्वकं वरणमिति । देव.

(२) कथं वरयेत् ? पूर्वं भागधेयं तस्याः परीक्ष्य । लक्षणानि वेत्तीति लक्षणी । तेन पुरुषेण लक्षणानि शुभाशुभफलानि शरीरचिह्नानि परीक्षयेत् । आवि.

[2]भागधेयमपि वा पिण्डैः परीक्षयेत् ॥

(१) लक्षणालाभे परीक्षायां कारणान्तरमाह– भागधेयमिति । अपिशब्दः उपायान्तराभ्युपगमे । वाशब्दो विकल्पे । पिण्डैर्वा भाग्यानि परीक्षयेत् । भर्तर्यनुकूलत्वापादनानि । पूर्वोक्तालाभे इत्यर्थः । देव.

(२) भागधेयं प्राशस्त्यं धर्मसुखभागित्वम् । अपि वा पिण्डैः परीक्षयेत् । मृत्पिण्डैरित्यर्थः । आवि.

[3]वेद्याः सीताया ह्रदाद्गोष्ठादादेवनादादहनाच्चतुष्पथादिरिणात्संभार्यं नवमम् ॥

यज्ञार्था वेदिः प्रसिद्धा । सीता हलोत्कृष्टा भूमिः । अशोष्यः पद्माद्याकारो जलाशयः ह्रदः । गोष्ठं गवाश्रयो गोकुलादिः । आदीव्यन्ति अस्मिन् आदेवनं कितवस्थानम् । आदह्यन्ते अस्मिन्नित्यादहनं श्मशानम् । स्वस्तिकाकारेण संबध्यमानं मार्गद्वयं चतुष्पथः । इरिणं ऊषरप्रदेशः, निस्तृण इत्यर्थः । एतेभ्यः प्रत्येकैकस्मिन् (?) पिण्डं गृह्णीयात् । संभार्यं च नवमम् । अष्टाभ्योऽपि वेद्यादिभ्यो लेशंलेशं मृदः संभृत्य नवमं कुर्यादित्यर्थः । + देव.

[4]ऋतमेव परमेष्ठ्यृतं नात्येति किञ्चन । ऋत इयं पृथिवी श्रिता सर्वमिदमियमसौ भूयादिति कन्याया

+ भाष्य. देवगतम् । आवि. देववत् ।

(१) कागृ. १४।३.

(२) कागृ. १४।४.

(३) कागृ. १४।५.

(४) कागृ. १४।६.

नाम गृहीत्वा सर्वतः कृतलक्षणान् पिण्डान्पाणा-
चादाय कुमार्या उपनामयेत् ॥

( १ ) वेद्यादिभ्य उद्धृतानां पिण्डानामनुमन्त्रण-
माह– ऋतमेव ...... असावित्युक्ते नाम प्रतीयात् ।
कन्या उच्यते । असौ भगवत्यादिसंज्ञिता । देव.

( २ ) तत्रादौ लोकपालप्रजापत्यादीनां यथाचारं
उदकन्द्रे पूजनं बलिहरणान्तं विदध्यात् । तांश्च पिण्डान्
गन्धकुसुमाद्यैरलङ्कृत्य स्वस्तिपुण्यत्वात् त्रिकादिभिर्हुत्वा
स्वस्त्ययनमुच्चार्य यथोक्तविधिना कन्याया उपनामयेत्
ऋतमेवेति । अत्र असौशब्दस्थाने कन्यायाः प्रथमान्तं
नाम ग्राह्यम् । यथा– सर्वमिदमियं रुक्मिणी भूयादिति ।
* ब्राह्म.

एतेषामेकं गृहाणेति ब्रूयात् ॥ पूर्वेषां चतुर्णामेकं
गृह्णतीमुपयच्छेत् ॥

( १ ) वेदिसीताह्रदगोष्ठोद्धृतानामन्यतमं गृह्णीयाचे-
त्तदा उद्वहेदेनाम् । इतरग्राहिणीं तु वर्जयेत् । ' वेदिपिण्डे
हि वेदार्थक्रियासाहाय्यमावहेत् । प्रजावतीति सीतायां,
गोष्ठपिण्डे गवादिकम् ॥ ह्रदपिण्डे ह्रदोद्भूतकुसुमाभरणो-
दिता । तृप्तिदा शैत्यहेतुश्च भर्तृजीवनकारिणी ॥ श्मशाने
विधवाऽवश्यं द्यूतभूमौ कलिप्रिया । इरिणे नित्यसंतप्ताऽव-
कीर्णा तु चतुष्पथे ॥ ' † देव.

( २ ) ' क्रियावती वेदिपिण्डात् सीतायाः फलदा
भवेत् । अक्षुब्धा तु ह्रदाद् ज्ञेया गोष्ठाद्भवति गोमती ॥
चतुष्पथाद्विप्रकीर्णा द्यूतस्थानात्कलिप्रिया । श्मशानान्मृत-
भर्ता स्याद्वन्ध्या भवति चोषरात् ॥ संभार्यं पिण्डमि-
त्याहुर्यामिश्र भजते सदा ॥ ' ब्राह्म.

[२]संभार्यमपीत्येके ॥

( १ ) मन्यन्ते इत्यध्याहारः । गृह्णतीमुपयच्छेदि-
त्यनुपङ्गः । देव.

( २ ) संभार्यमपि गृह्णतीं कदाचिदुपगच्छेतेति विकल्पो
रुचिकृतः । आवि.

* आवि. ब्राह्मणम् ।

† आवि. देववत् ।

( १ ) कागृ. २४।७–८.

( २ ) कागृ. २४।९.

## वाराहगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

[१]विनीतक्रोधः सहर्षो महिषीं भार्यां विन्देतान-
न्यपूर्वां यवीयसीम् ॥

विवाहकारणानां तारतम्येन विचारः

पञ्च विवाहकारकाणि भवन्ति – वित्तं रूपं विद्या
प्रज्ञा बान्धवमिति । एकालाभे वित्तं विसृजेत् ।
द्वितीयालाभे रूपम् । तृतीयालाभे विद्याम् । प्रज्ञायां
तु बान्धवा ( ? वे ) विवदन्ते ॥

कन्याया विवाहानुकूलानि लक्षणानि

बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेतानग्निकाम् ॥

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

श्रेष्ठं विज्ञानमस्यै कुर्यात् । चतुरो लोष्टानाहरेत्,
सीतालोष्टं वेदिलोष्टं गोमयलोष्टं श्मशानलोष्टं च ।
एतेषामेकं गृह्णीष्वेति ब्रूयात् । श्मशानलोष्टं चेत्
गृह्णीयात् नोपयच्छेत् ॥

## आग्निवेश्यगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

विवाहे वर्ज्यानि नामानि च

( अथ समावृत्ते भार्यामुपयच्छेत । ) सर्वाङ्गिनीं
मनोज्ञां यवीयसीं ब्रह्मचारिणीं कन्यामसगोत्रां मातु-
रसपिण्डामनुक्तामगर्हितां नक्षत्रनदीवृक्षाभिधाना-
संयुक्ताम् ॥

## पारस्करगृह्यसूत्रम्

कन्याया विवाहानुकूललक्षणम्

उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं
गृह्णीयात् ॥

( १ ) कुमारीग्रहणं विंशतिप्रभृतान्युदासार्थम् । स्मर्यते
हि विंशतिप्रभृतायाः पुनर्विवाहः । कर्क.

( १ ) वागृ. १०.

( २ ) भाग्निगृ. १।६।१.

( ३ ) पागृ. १।४।६. शेषः अधारिनिर्देशः विवाहविधि-
प्रकरणे ( संस्का. पृ. ९६ ) द्रष्टव्यः ।

(२) कुमार्याः अनन्यपूर्विकायाः कन्यायाः। अनेन विंशतिप्रसूतायाः स्मृत्यन्तरविहितस्य पुनर्विवाहस्यानियमः, इच्छा चेत्करोति। -हभा.

(३) कुमार्याः अनन्यपूर्विकायाः अक्षतयोन्याः पाणिं गृह्णीयात् वक्ष्यमाणेन विधिना विवाहं कुर्यात्। विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणम्। स्मर्यते हि तस्याः पुनर्विवाहः। अयं च न शास्त्रसंमत इति मनुस्मृत्यादौ स्पष्टम्। संदी. २६

## गोभिलगृह्यसूत्रम्

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

**पुण्ये नक्षत्रे दारान्कुर्वीत ॥**

अत्र (द्वितीयप्रपाठके) विवाहाद्युपनयनान्तो दशकर्मविधिरनुक्तपूर्व उच्यते -- पुण्य इति। पुण्ये शोभने। नक्षत्रे ज्योतिःशास्त्रोक्ते। विवाहे तस्यादरातिशयोऽनेन द्योत्यते। दारान् - 'दाराः पुंभूम्नि चाक्षताः' इत्यभिधानान्नित्यं पुंलिङ्गो बहुवचनान्तश्च दारशब्दः सहधर्मचारिणीवाचकः। तां कुर्वीत, उद्वहेत। मृदुला.

**लक्षणप्रशस्तान् कुशलेन ॥**

कीदृशान्, तत्राह-- लक्षणेति। लक्षणेन प्रशस्तान् प्रशस्तलक्षणोपेतान्। यद्वा, अन्तर्भावितण्यर्थोऽत्र प्रशंसतिः। लक्षणपदं च तत्रे लाक्षणिकं, तेन लक्षणप्रशंसितान्। कुशलेनेति लक्षणपदार्थान्वयि। स्त्रीलक्षणाभिज्ञेनेति तदर्थः। तथा च तद्द्वारा लक्षणान्यवगन्तव्यानि। नित्यसापेक्षस्थले एकदेशान्वयस्य 'देवदत्तस्य गुरुकुलम्' इत्यादिषु दर्शनात्। यद्वा कुशलेन स्त्रीलक्षणविदा पुरुषेण लक्षणैः अवैधव्यादिसूचकैः मन्वाद्युक्तैः प्रशस्तान् प्रशंसितान् परीक्षितानित्यर्थः। तथा च स्मरणम्-- 'मदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि। अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत् ॥' इति। याज्ञवल्क्योऽपि-- 'धर्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः। परीक्ष्यास्ते ततो यत्नात्पूर्वमेव करग्रहात् ॥' इति। 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति च। लक्षण्यां बाह्याभ्यन्तरशोभनलक्षणोपेताम्। प्रशंसायामत्र यत्प्रत्ययः (पा. ५।१।१२ वा.)। तत्र 'कुलमग्रे परीक्षेत' इति गृह्यान्तरवचनात् आदौ कुलं सदाचारादिगुणवत्तया हीनक्रियादिदोषहीनतया च परीक्ष्य तज्ज्ञा उद्वाह्या। तदनु लक्षणान्यपि परीक्ष्यम्। लक्षणानि च शुभाशुभसूचकानि तनुलोमकेशदशनत्वादीनि प्रत्यक्षगम्यानि बाह्यानि। तथा च मनुः-- 'अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्। तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥' इति। अव्यङ्गाङ्गीं अविकलाङ्गीम्। तनुलोमकेशदशनां अनतिस्थूललोमकेशदन्ताम्। स्त्रियमिति नपुंसकत्वनिरासार्थम्। यान्याभ्यन्तराणि तान्युक्तानि आश्वलायनगृह्ये-- 'दुर्विज्ञेयानि लक्षणान्यष्टौ पिण्डान् कृत्वा' इत्यादिवाक्योक्तानि। तानि अयमपि अनुपदं सूत्रयित्वा दर्शयिष्यति। मृदुला.

**तदलाभे पिण्डान् ॥**

लक्षणावगतौ प्रकारान्तरमाह-- तदिति। तदिति प्रकृतः स्त्रीलक्षणवित् कुशलः परामृश्यते। 'कुर्वीत' इति वाक्यशेषः। तैश्च स्वयमेव दारान् परीक्षेतेत्यर्थः। पिण्डानिति अविशेषोपादानेऽपि मृद एव तान् कुर्वीत, उत्तरसूत्रदर्शनात्। मृदुला.

**वेद्याः सीताया ह्रदाद्गोष्ठाच्चतुष्पथादादेवनादादहनादीरणात् ॥**

वेदिः परिष्कृता भूमिः अग्निष्टोमादौ विहिता। यज्ञस्थानमिति यावत्, तस्याः। सीता लाङ्गलपद्धतिः। कृष्टं क्षेत्रमिति यावत्, तस्याः। ह्रदः अगाधजलाशयः, तस्मात्। गावो यत्र तिष्ठन्ति तद्गोष्ठं, तस्मात्। चतुष्पथः प्रसिद्धः, तस्मात्। आगत्य आक्षिकैर्दीव्यते यत्र तत् आदेवनं द्यूतस्थानं, तस्मादादेवनात्। आ मर्यादया दह्यते देहः यत्र तत् आदहनं श्मशानं, तस्मात्। 'ईरणं तूषरे शून्येऽपि' इति मेदिन्यभिधानात् ईरणमूषरं, यत्रोप्तं बीजं न प्ररोहति, तस्मात्। एताभ्यः मृदमादाय पृथगेव अष्टौ पिण्डान् कुर्वीत इत्यर्थः। मृदुला.

**सर्वेभ्यः संभार्य नवमम् ॥**

संभार्य संहार्य संहृत्य क्रियमाणम्। सर्वेभ्यः वेद्यादिभ्यः। मृदुला.

(१) गोगृ. २।१।१; संत. ८८९.
(२) गोगृ. २।१।२-९.

समान् कृतलक्षणान् ॥

*तांश्च नव पिण्डान् समान् तुल्यप्रमाणान्।* लक्षणं चिह्नं, कृतं लक्षणं येषां तान्। यतमः पिण्डः यतमस्या मृदः तच्चिह्नं कर्तव्यं वक्ष्यमाणकृत्यनिर्वाहाय।

मृदुला.

पाणावाधाय कुमार्या उपनामयेत्। 'ऋतमेव प्रथममृतं नात्येति कश्चनर्त इयं पृथिवी श्रिता सर्वमिदमसौ भूयात्॥' इति। तस्या नाम गृहीत्वैषामन्यतमं गृहाणेति ब्रूयात्॥

तान् खलु इमान् पिण्डान् पाणौ स्वकीये (वरः) *आधाय धृत्वा कुमार्या उप समीपे नामयेत् स्थापयेत्* ऋतमित्यादिमन्त्रेण। अस्यार्थः— ऋतमिति सत्यनाम (नि. ४।१६।९)। ऋतमेव सत्यमेव प्रथमं आद्यं कारणम्। तथा च श्रुतिः– 'तस्य ह वैतस्य ब्रह्मणो नाम सत्यम्' इति। *ऋतं सत्यं नात्येति कश्चन* नातिक्रामति कश्चिदपि। ऋते सत्ये च इयं पृथिवी (आ) श्रिता। न केवलं पृथिव्येव, किंतु सर्वमिदम्। चकारो लुप्तवद्द्रष्टव्यः। यथा चेदं सर्वं वस्तुजातं सत्याश्रितं तथा असौ (यशोदादेवी) सत्या (श्रिता) भूयात् भवतु—इति। अत्र असौ इत्यस्य स्थाने तस्याः कुमार्या नाम गृहीत्वा उच्चार्य एवं संबोधनान्तं नाम मन्त्रान्ते गृहीत्वा एषां पिण्डानामेकं गृहाणेति तस्यै ब्रूयात्।

मृदुला.

पूर्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत्॥

पूर्वेषामिति। मध्ये एकमिति शेषः। वेद्यादिपिण्डचतुष्टयान्यतममाददाना विवाहयेदित्यर्थः। गृह्णन्तीमित्यत्र नुम् छान्दसः।

मृदुला.

*संभार्यमपीत्येके॥*

सभार्ये नवमपिण्डं आददानाऽपि विवाह्या इत्येकदेशिमतम्। तथा च गृह्यासंग्रहेऽङ्गिराः– '*क्रियावती वेदिपिण्डे सीतायाः फलते कृषिः। अक्षोभ्या च* ह्रदे ज्ञेया गोष्ठे भवति गोमती॥ चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया। श्मशाने म्रियते भर्ता वन्ध्या भवति चोषरे॥ नवमे सर्वमेवैतत् कन्यायास्तु परिग्रहात्॥' इति। *प्रकीर्णा स्वैरिणी।* परिशिष्टान्तरम्– '*गृह्णाना वेदिपिण्डं तु* प्रसूते याज्ञिकान्सुतान्। सीता*पिण्डं तु गृह्णाना सुतान् सूते* कृषीवलान्॥ सर्वकामसमृद्धांश्च तृतीयस्य परिग्रहात्। गोष्ठपिण्डग्रहाच्चैव गोमतः सुखिनः सुतान्॥ इतश्चेतश्च गन्तारः पञ्चमेनास्थिराः सुताः। षष्ठेन तु गृहीतेन भवन्ति द्यूतदेविनः॥ श्मशानपिण्डग्रहणाद्विधवा जायते ध्रुवम्। वन्ध्या वा *विधवा वा स्यादष्टमस्य परिग्रहात्॥ मिश्रमेतद्भवेत्सर्वं* यावत्पूर्वोदितं फलम्। नवमस्य ग्रहस्तस्माच्छुभो वा न च वाऽशुभः॥' इति। अत्र प्रजास्तुतिनिन्दाद्वारेण सैव वस्तुतो निन्दिताऽनिन्दिता चेति मन्तव्यम्। अत्र (*कन्यापरिग्रहे*) *विशेषः शुभकर्मनिर्णये मुरारिमिश्रीये,* संस्कारदीपके हर्षनाथशर्मनिर्मिते च द्रष्टव्यः।

मृदुला.

कन्याया विवाहानुकूललक्षणम्

नग्निका तु श्रेष्ठा॥

*नग्निकेत्यनागतार्तवोच्यते,* '*नग्निकाऽनागतार्तवा*' इत्यमरात्। सा तु श्रेष्ठेति तादृशान् दारानुद्वहेदिति केचिद्व्याचक्षते। नैतत्सुन्दरम्, दारानित्युपात्तविभक्तिवचनातिक्रमात्। तस्माद्दारकरणेन सहास्य न सम्बन्धोऽपि तु '*एष्टव्या बहवः पुत्रा यद्येकोऽपि गया व्रजेत्।* गौरीं वाऽप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत्॥' इति वचनाद्दारान्करिष्यता तावद्गौरीप्राप्तावेव यतनीयं, दातुस्तु नग्निका श्रेष्ठा इति सूत्रार्थः। तथा च वसिष्ठः– '*तस्मान्नग्निका दातव्या*' इति।

मृदुला.

## जैमिनिगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

जायां विन्देतानग्निकां समानजातीयामसगोत्रां मातुरसपिण्डां ज्यायसः कनीयसीम्॥

अनग्निकां यस्मिन्वयसि स्वयमेव लज्जया वासः परिदधाति तद्वयस्काम्। समानजातीयां सवर्णाम्। ज्यायसः वयसा ज्येष्ठतमस्य वरस्य कनीयसीं वयसा यवीयसीं जायां कुर्यात्।

श्रीन्या.

(१) गोगृ. ३।४।६.
(२) जैगृ. १।२०.

## वैखानसगृह्यसूत्रम्

कन्याया विवाहानुकूलानि लक्षणानि

[1]मातुरसपिण्डां पितुरसमानऋषिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा ... ॥

[2]ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां वरयेत् । अष्टवर्षादा दशमान्नग्निका, रजस्यप्राप्ते दशवर्षादा द्वादशाद्गौरीत्यामनन्ति ॥

## गौतमः

कन्याया विवाहानुकूलानि लक्षणानि

[3]गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम् * ॥

[4]अरोगिणीं भ्रातृमतीं सर्वावयवसुन्दरीम् ।
वंशोभयविशुद्धां च ज्ञात्वा कन्यां विवाहयेत् ॥

अभ्रातृककन्याया अविवाह्यता

[5]तत्संशयान्नोपयच्छेदभ्रातृकाम् ॥

( १ ) तदाशङ्कया न गृह्णीयात् कस्यचिदपि अनपत्यस्य सर्वा दुहितरः । कुतः ? तामिति वक्तव्ये अभ्रातृकामित्यारम्भात् । मभा.

( २ ) तत्संशयात् अभिसंधिसंशयात् पुत्रिकासंशयाद्वा । मनुरप्याह–' यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ ' इति । गौमि.

## हारीतः

कन्याया विवाहानुकूलानि लक्षणानि

[1]गृहीतवेदाध्ययनः श्रुतशास्त्रार्थतत्त्ववित् ।
असमानार्षगोत्रां हि कन्यां सभ्रातृकां शुभाम् ।
सर्वावयवसंपूर्णां सुवृत्तामुद्वहेन्नरः ॥

कन्याया विवाहे वर्ज्यानि लक्षणानि नामानि च

[2]नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
वाचालामतिलोमां च न व्यङ्गां भीमदर्शनाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥
अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तन्वोष्ठकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥

कन्याया विवाहानुकूलानि लक्षणानि

[3]तस्मात्सप्त पितृतः परीक्ष्य पञ्च मातृतो नग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत ॥

[4]तस्मात् कुलनक्षत्रविज्ञानोपपन्नां वरयेत् ॥

## बौधायनः

अशुभलक्षणा कन्या वर्ज्या

[5]वर्जयेत्सर्वथा कन्या अशुभा लक्षणैश्च याः ।
भर्तुरायुर्हरन्त्येता आलस्यादपरीक्षिताः ॥

लक्षणान्यवश्यं परीक्षणीयान्यन्यथा दोष इत्युक्तं बौधायनेन– वर्जयेदिति । संर. ५१२

---

* व्याख्यानानि विवाहविधिप्रकरणे ( संका. पृ. ९७–९८ ) द्रष्टव्यानि ।

( १ ) वैगृ. ३।२ .

( २ ) वैगृ. ६।१२ .

( ३ ) गौध. ४।१ . शेषः स्मृत्यादिनिर्देशः विवाहविधिप्रकरणे ( संका. पृ. ९७ ) द्रष्टव्यः ।

( ४ ) सम्रु. ६ .

( ५ ) गौध. २८।२० ; गृक. २८ ( तच्छङ्कया नोपयच्छेत्तामभ्रातृकाम् ) ; मभा. ; गौमि. २८।१८ ; गृर. २४ दभ्रातृकाम् ( तामभ्रातृकाम् ) ; पमा. ४७१ ; मपा. ३०८ तत्संशयात् ( तत्संशये ) भ्रातृकाम् ( भ्रातृकामपि ) ; धम. ९७ ; संम. ५४ ; याव. १।५३ पृ. १७५ ; संर. ४१४ .

( १ ) हास्मृ. ४।१–२ .

( २ ) नरसिंहपुराणोद्धृतहारीतस्मृतौ ( पृ. २११ श्लो. ४१–४३ ) एते श्लोका द्रष्टव्याः ।

( ३ ) अप. १।५४ ; गृक. २६ विन्देत ( विन्देद ) ; उ. २।११।१६ पृ. २२१ नग्निकां ( अनग्निकां ) ; गृर. २५ परीक्ष्य ( संवीक्ष्य ) .

( ४ ) अप. १।५४ ; गृक. २६ ; गृर. २५ ; संप्र. ७०३ कुलनक्षत्र ( लक्षणनय ) पन्नां + ( कन्यां ) .

( ५ ) प्रपा. ३०३ सर्वथा कन्या अशुभा ( सर्वथाभूषणुरशुभा ) ; विपा. ६७६ कन्या ( भूषणुः ) ; संर. ५१२ .

विवाहे सप्तविधा पुनर्भूर्वर्ज्या

योग्दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः । तां गृहीत्वा न प्रजां न धर्मं वा विन्देत् ॥

( १ ) प्रजा स्वजातिधर्मामिति शेषः । धर्मं पत्नीसाध्यं अग्निहोत्रादि । अत्र च प्रकरणे येषा विधिनिषेधानां दृष्टगुणदोषानुपङ्गो नास्ति, यथा— 'असपिण्डा च या मातुः ' इत्येवमादीनां तदतिक्रमे भार्यात्वमेव न भवति, भार्याशब्दस्य तु आहवनीयादिशब्दवत् संस्कारशब्दत्वात् । येषा तु दृष्टगुणदोषदर्शनेन विधिनिषेधौ यथा– ' स्फीतादपि न संचारिरोगदोषसमन्वितात् । ' इत्यादि, न तदतिक्रमे भार्यात्वाभावः केवलं नियमातिक्रमात् प्रायश्चित्तमात्रं भवति । ऋक्षवृक्षनाम्न्यादिषु तु दृष्टगुणदोषानुविधायिविधिनिषेधप्रकरणमध्यपातात् । मनुना सपिण्डादि प्रति निषेधस्य च पृथग्विधानाददृष्ट एव दोषः कल्प्यः । गृक. ३१

( २ ) वाग्दत्ता पुनःसंस्कारकर्मणि पुनर्भूर्भवति । अतस्तां गृहीत्वा परिणीय प्रजां धर्मं च न विन्देत् न भजेदित्यर्थः । स्मृच. ७५

( १ ) गृक. ३१ नीता ( आनीता ) ( चेति० ) गृहीत्वा + ( वृथाकारी ) ( वा० ) स्मृति ; स्मृच. ७५ पुनर्भूः + ( भवति ) तां ( अतस्तां ) न धर्मं वा विन्देत् ( धर्मं च विन्देत ) ; गृर. २८ अग्निं परि ( अग्निपरि ) सप्तम पदं नीता ( सप्तमपदमानीता ) चेति सप्तविधा ( च सप्तधा ) न प्रजां न धर्मं वा विन्देत् ( वृथाकारी न प्रजां धर्मम् ) स्मृतिः ; पमा. ४६४ धर्मं वा ( धर्मं ) ; संप्र. ७३५–७३६ वाग्दत्ता ( वाचा दत्ता ) धर्मं वा ( धर्मं ) ; चम. ८७ पमावत् ; मुक्ता. १३७ सप्तमं ( सप्तम ) धर्मं वा विन्देत् ( धर्मं विन्देत ) ; विपा. ६८६ वाग्दत्ता ( वाचा दत्ता ) सप्तमं ( सप्तम ) धर्मं वा विन्देत् ( धर्मं विन्देत ) ; संकौ. १७२ ( वाचा दत्ता मनोदत्ता अग्निं परिगता सप्तमं पद नीता भुक्ता गृहीतगर्भा प्रसूता च ) एतावदेव ; बाल. १।५२ पृ. १७० पमावत् ; संग. १६८ वाग्दत्ता ( वाचा दत्ता ) धर्मं वा विन्देत् ( धर्मं विन्देत ) ; कृभ. ११३२ सप्तविधा पुनर्भूः ( सप्त पुनर्भुवः ) न प्रजां न धर्मं वा विन्देत् ( धर्मं न विन्देत ) .



## वसिष्ठः

कन्याया विवाहानुकूलानि लक्षणानि

गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षेयामस्पृष्टमैथुनामवरवयसीं सदृशीं भार्यां विन्देत ॥

विवाहे वर्ज्यौ पापनक्षत्रजातौ वधूवरौ

नैर्ऋत्यभोद्भूतसुतः सुता वा
क्षिप्रादवर्यं श्वशुरं निहन्ति ।
तदन्त्यपादे जनितो निहन्ति
नैवोत्क्रमेणाहिभवः कलत्रम् ॥
सुरेशताराजनिता धवाग्रजं
द्विदैवताराजनिता च देवरम् ।
पुरन्दरर्क्षे जनितः सुतस्तथा
स्वस्राग्रजं हन्ति न कन्यका यदि ॥

जनकं जननीं हन्ति भर्तुर्मूलाहिधिष्ण्यजा ।
मूलान्त्यपादजा नैव तथाऽऽश्लेषाद्यपादजा ॥

अत्र स्त्रीत्वं अविवक्षितं, सुता वेति पूर्वोदीरितवचनानुरोधात् । विसौ. १६

मूले सार्पे विशाखायामैन्द्रभे चोद्भवः पुमान् ।
न दोषकृद्विवाहेषु स्त्रियः सर्वत्र गर्हिताः ॥

( १ ) वस्मृ. ८।१ . शेषः स्थलादिनिदशः विवाहविधिप्रकरणे ( संका. पृ. १०१ ) द्रष्टव्यः ।

( २ ) वर्म. ३२।२३९ पादे ( पादात् ) ; प्रपा. ३०६ क्षिप्रादवर्यं ( तदाद्यपादे ) जनितो ( जनिता ) नैवो ( सैवो ) भवः ( भवा ) ; विसौ. १५ ; सिन्धु. ८५३ निहन्ति नैवो ( न हन्ति तस्यो ) भवः ( भवे ) ; विपा. ६८५ प्रथमद्वितीयचरणौ .

( ३ ) वर्म. ३२।२४० रक्षे ( रक्षाद् ) तथा ( तदा ) ; प्रपा. ३०६ च ( तु ) पू. ; विसौ. १५–१६ च ( तु ) कन्यका ( पुत्रिका ) ; सिन्धु. ८५३–८५४ विसौवत् ; विपा. ६८५ पू.

( ४ ) वर्म. ३२।२४२ ; विसौ. १६ .

( ५ ) ज्योनि. १६० ; संग. १९३ ज्योतिर्निबन्धे .

## विष्णुः

कन्याया विवाहे वर्ज्यानि लक्षणानि

[1]वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्तनपूर्वं तु लक्षण्यां स्त्रियमुद्वहेत् ॥

[2]नाकुलीनाम् ॥
न च व्याधिताम् ॥
नाधिकाङ्गीम् ॥
न हीनाङ्गीम् ॥
नातिकपिलाम् ॥
न वाचाटाम् ॥

## शङ्खः, लिखितः, शङ्खलिखितौ च

कन्याया विवाहानुकूलानि लक्षणानि

[3]दारानाहरेत्सदृशानसमानार्षेयानसंबन्धानासप्तमपञ्चमातिपितृमातृबन्धुभ्यः ॥

अभ्रातृककन्याया अविवाह्यता

[4]यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥

## मनुः

कन्याया विवाहे वर्ज्यानि लक्षणानि नामानि च

[5]नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥

( १ ) पूर्वः कुलाश्रयः प्रतिषेधः, अयं तु स्वरूपाश्रयः । यस्याः कद्रुवर्णाः कनकवर्णा वा केशाः सा कपिला । अधिकाङ्गी षडङ्गुलिः । रोगिणी बहुरोगा, दुष्प्रतिकारव्याधिगृहीता च । भूम्नीनिः मत्वर्थीयः नित्ययोगे वा । अलोमिका अकेशा । लोमानि केशा अप्युच्यन्ते । बाहुमूले जङ्घामूले वा सर्वलोम्नामभावः । वाचाला स्वल्प एवं वित्तव्ये बहुलं परुषं च भाषते । पिङ्गला अक्षिरोगेण मण्डलाक्षी कपिलपिङ्गलाक्षी वा ।
*मेधा.

( २ ) न रोगिणीं स्वतः क्षयादिव्याधिमतीम् । पूर्वं कुले तेषां प्रायिकत्वेन कन्यानां संभावनामात्रेण अविवाह्यता उक्ता, अत्र तु तस्यां तन्निश्चयेन इति विशेषः । पिङ्गलाभामारक्तगौरवर्णाम् । मवि.

( ३ ) कपिला रक्ततण्डुलवर्णा । पिङ्गला अग्निवर्णा ।
§पमा. ४६३

( ४ ) कपिलां कपिलकेशां वर्णतो वा ।
+ मच.

[1]नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥

* गोरा., ममु., नन्द., भाच. मेधागतम् ।

§ प्रपा., विपा., संर. पमागतम् ।

+ शेषं मेधागतम् ।

( १ ) समु. ५ ; मर. १७ ; मुक्ता. १२३ ; मान. १६७. संस्कारप्रकाशादिग्रन्थेषु दक्षस्येदं वचनम्, तत्रापि स्थलादिनिर्देशो द्रष्टव्यः ।

( २ ) विस्मृ. २४।११–१६ .

( ३ ) उ. २।११।१६ पृ. २२१ शङ्खः ; मुक्ता. १२५ न्धानासप्तमपञ्चमात् ( न्धान्सप्तमात् ) ; बाल. १।५३ पृ. १९२ पञ्चनात् ( पञ्चमान् ) .

( ४ ) लिस्मृ. ५३, ५४ ; चद्रा. ६८२ विज्ञायेत वा ( च विज्ञायते ) वह्निपुराणमित्युक्तम्, 'अभ्रातृकां प्रदास्यामि' इति श्लोको नास्ति ।

( ५ ) मस्मृ. ३।८ ध. वाचाटां ( वाचालां ) ; मेधा. वाचाटां ( वाचालां ) ; गोरा. ; अप. १।५२ नातिलोमां ( नातिलोम्नीं ) ; गृक. २७ मेधावत् ; मवि. ; स्मृच. ७४ ; गृर. २६ नातिलोमां न वाचाटां ( नातिलोम्नीं न वाचालां ) ; पमा. ४६२–४६३ मेधावत् ; मर. १८ मेधावत् ; निप. २७७ ( = ) अपवत् ; प्रपा. ३०३ नाधिकाङ्गीं ( नाधिकाङ्गां ) ; उत. १४९ मेधावत् ; ज्योत. ६११ गृरवत् ; मच. 'न्यूनाङ्गीं' इति व्याख्यानात्पाठो दृश्यते, स कुत्रेति न ज्ञायते ; वीमि. १।५३ पृ. १०८ गृरवत् ; संप्र. ७३१ ; चम ८६ मेधावत् ; मुक्ता. १२३ मेधावत् ; संम. ४९ पृ. ; विपा. ६७७ ( = ) मेधावत् ; बाल. १।५२ पृ. १६९ ; नन्द. ; भाच. ; कुभ. ९९१ पृ., विष्णुपुराणे इत्युक्तम् ; संर. ५१० मेधावत् .

( १ ) मस्मृ. ३।९ ; मेधा. न च भीषण ( न विभीषण ) ; अप. १।५२ प्रेष्य ( पुष्य ) शेषं मेधावत् ; गृक. २७ ; मवि. ; स्मृच. ७५ ; ममु. ; गृर. २६ उत्तरार्धे ( नाहिपक्षिप्रेष्यनाम्नीं नातिभीषणनामिकाम् ) ; पमा. ४६३ ; मर. १८ ; प्रपा.

( १ ) ऋक्षं नक्षत्रं, तन्नामिका 'आर्द्रा' 'ज्येष्ठा' इत्यादि । वृक्षनाम्नी शिंशुपा आमलकीति । नदी गङ्गा यमुना, तन्नाम्नी । ऋक्षाणि च वृक्षाश्च नद्यश्चेति द्वन्द्वः तासां नामानि इति षष्ठीसमासः । ततः द्वितीयेन नामशब्देन उत्तरपदलोपी समासः । अन्त्यनामिका बर्बरी शबरीत्यादि । पर्वताः विन्ध्यमलयादयः । पूर्ववत् समासात्कप्रत्ययः । पक्षिनाम्नी शुकी, सारिका । अहिः सर्पः, तन्नाम्नी व्याली; भुजङ्गी । प्रेष्या दासी, चेटी, वाटी । विभीषणं नाम भयजनकं, डाकिनी राक्षसी ।

§ मेधा.

( २ ) अन्त्यः चाण्डालादिः, तज्जातिनाम्नीं चाण्डालीत्यादिनाम्नीम् ।

* मवि.

( ३ ) अदृष्टार्थोऽयं निषेधः ।

* नन्द.

नातिस्थूलां नातिकृशां न दीर्घां नातिवामनाम् ।
वयोऽधिकां नाङ्गहीनां न सेवेत्कलहप्रियाम् ॥
अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥

§ गोरा., मसु., मच., भाच. मेधागतम् ।

* शेष मेधागतम् ।

२०३ ; निप २७७ (=) ; उत. १४९ पू. ; ज्योत. ६११ प्रेष्य ( प्रैष्य ) ; विसौ. ४ नान्त्य ( निन्द्य ) शेषं मेधावत् ; मच. ; संप्र. ७३२ पू. ; चम. ८६ ; मुक्ता. १२३ मेधावत् ; संम. ४९ मेधावत् ; सिन्धु १०६६ मेधावत् ; विपा. ६७७ (=) ; बाल. १।५२ पृ १६९ मेधावत् ; नन्द. ; भाच. मेधावत् ; कृभ. ९९१ पू , विष्णुपुराणे इत्युक्तम् ; संर. ५१० .

( १ ) मस्मृ. ३।९ इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकोऽयम् ।

( २ ) मस्मृ. ३।१० ; विश्व. १।५२ पू. ; गोरा. ; मिता. १।५२ ( तनुलोमकेशदशनाम् ) एतावदेव ; अप. १।५२ उत्तरार्धे ( तनुलोमकेशदशां मृद्वङ्गीं चारुभाषिणीम् । ) ; गृक. ११ ; मवि ; स्मृच. ७४ ; मसु. ; गृर. १२ ; पमा. ४६२ ; मपा. १३२ ; प्रपा. ३०३ ; मर. १८ ; निप. २७५ (=) ; गभा. ९६ ; ज्योत. ६११ ; विसौ. ४ पू. ; मच. ; वीमि. १।५२ उद्वहेत्स्त्रियम् ( चारुहासिनीम् ) ; संप्र. ७३१ ; चम. ८५ ; मुक्ता. १२३ लोम ( रोम ) ; संम. ४९ ; विपा. ६७७ (=) ; संकौ. १७२ दशना ( दन्ता ) ; प्रका. ३४३ ; बाल. १।५२ पृ. १६९ ; नन्द. ; भाच ; कृभ. ९९१ (=) ; संर. ५०९ दशनां ( दतीं ) .

( १ ) अव्यङ्गाङ्गीं अव्यङ्गानि अङ्गानि यस्याः सा एवमुच्यते । अव्यङ्गशब्दः अवैकल्यवचनः प्रवीणोदारादिशब्दवद्यद्यपि व्युत्पाद्यते अविकलानि अङ्गानि यस्य इति; अतश्च अङ्गशब्दस्य द्वितीयस्यावयविनि शक्तत्वादुचितेन संस्थानस्य परिपूर्णता सा अव्यङ्गशब्देनोच्यते । सौम्यं मधुरं नाम । 'स्त्रीणां सुखोद्यम्' अत्र दर्शितम् । हंस इव वारण इव गच्छति । यादृशी हंसानां हस्तिनां च विलासवती मन्थरा गतिः सा यस्याः । तनुशब्दो नाल्पवचनः किं तर्हि अनुपरिमाणे वर्तते । तन्वङ्गी सा उच्यते या नातिस्थूला नातिकृशेति । मृदूनि सुस्पर्शाकठिनापरुषाणि अङ्गानि यस्याः सा । तामुद्वहेत् स्त्रियं कन्याधिकारात् कन्याम् । यद्येवं, 'नालोमिकाम्' इत्यादिप्रतिषेधोऽनर्थकः, अस्मादेव विधानात् या न एवंरूपा तस्या अविवाह्यता सिद्धा । सत्यं एवम् । एक एवार्थो द्वाभ्यां विधिमुखेन प्रतिषेधमुखेन चोद्यमानस्तु स्पष्टो बुध्यते । कन्याशब्दश्चात्र प्रकरणादननुभूतसंभोगासु स्त्रीषु प्रवर्तते । तथा च वसिष्ठः— 'अस्पृष्टमैथुना सदृशीं भार्यां विन्देत' इति । न च अन्येन संस्कृता अन्येन पुनः संस्कर्तुं शक्या, कृतस्य करणाभावात् । अतश्च ऊढाया अप्रवृत्तभर्तृसंयोगायाः कथंचित् स्वैरिणीत्वे भर्तृप्रवासादिना नान्येन विवाहोऽस्ति सत्यपि कन्यात्वे । तथा च ईदृशी वसिष्ठोक्तिर्मध्ये पठिता । अन्यत्राप्युक्तम् —'अनन्यपूर्वां यवीयसीं भ्रातृमतीं स्त्रियमुद्वहेत्' इति ।

मेधा.

( २ ) अव्यङ्गाङ्गीमिति । अविकलाङ्गीं प्रसन्ननाम्नीं राजहंसगजरुचिरगमनामनतिस्थूलरोमकेशदन्तां कोमलाङ्गीं कन्यां परिणयेत् । विधिनिषेधोभयाभिधानं निर्दोषसगुणकन्योपयमने अभ्युदयार्थम् ।

* गोरा.

( ३ ) दशा दशनामित्यर्थः ।

अप. १।५२

( ४ ) अव्यङ्गाङ्गीं अङ्गेष्वपि यस्या न व्यङ्गत्वं, अङ्गाङ्गेष्वपि नखादिषु यस्या वैकल्यं नास्तीत्यर्थः । तथा विभीषणनामत्वाभावेऽपि सौम्यं शान्तं नाम यस्याः सा विवाह्या । तथा विभीषणनामनिषेधः प्रत्यवाया-

* मच., भाच. गोरागतम् ।

धिक्यार्थः । तनवः सूक्ष्माः केशाः शिरोरुहाः । अत्र येषु दृष्टविरोधित्वं दोषाणां तेषु सत्स्वपि विवाहे भार्यात्वसिद्धिः, यत्र दृष्टविरोधादर्शनं तद्दोषवत्या विवाहे भार्यात्वमेव न सिध्यतीति कश्चित् । तत्तु प्रमाणाभावात् नक्षत्रनामत्वादावपि भार्यात्वासिद्धिप्रसङ्गेन व्यवहारविरोधाच्चायुक्तम् । केवलं निषेधात् दृष्टविरोधशून्येषु दोषेषु परिणेतुः पापोत्पत्तिमात्रं अनुमन्तुं युक्तमिति ।

मवि.

(५) * अत्र विधिनिषेधयोरभिधानमनिषिद्धविहितकन्यापरिणयनमभ्युदयार्थमिति दर्शयितुम् ( आह ? ) ।

§ मसु.

(६) अङ्गशब्दः अवयवे शरीरे च । नन्द.

(७) लोमानि उरोगतानि, तनूनि सूक्ष्माणि लोमानि, तनवः केशाः दन्ताश्च यस्याः सा तनुलोमकेशदती ।

संर. ५०९

अभ्रातृककन्याया अविवाह्यता

यस्यास्तु[1] न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥

* 'अभ्यङ्गाहीम्' 'यस्यास्तु न' इतिश्लोकद्वयव्याख्यानमध्यपतितस्यास्य ग्रन्थस्य अस्मदुपलब्धपुस्तकयोरुत्तरश्लोकावतरणिकात्वेन मुद्रणमयुक्तम्, एतद्ग्रन्थार्थस्योत्तरश्लोकाननुगमात्, अवतरणिकात्वे आहपदात्पूर्वमावश्यकस्यापीतिकारस्यानुपलम्भात्, गोविन्दराजीयादिटीकासु अस्यार्थस्य पूर्वश्लोकव्याख्यानशेषत्वेनाभिधानाच्चेति मत्वाऽस्माभिरस्य ग्रन्थस्य पूर्वश्लोकव्याख्यानशेषत्वमभ्युपगतम् । एवं च आहपदं अवतरणिकात्वमभिमन्यमानेन केनचित्प्रक्षिप्तमिति सुवचम् ।

§ व्याख्यानं गोरागतम् ।

( १ ) मस्मृ. ३।११ ; अप. १।५३ ; गृक. २७ ; मवि. ; स्मृच. ६७ ; मसु. ; गृर. २६ यस्यास्तु ( यस्याश्च ) विज्ञायेत वा ( विज्ञेयस्तथा ) ; हभा. ८९ प्राज्ञः ( कन्यां ) ; पमा. ४७४ ; मपा. १३६ वा ( वै ) ; प्रपा. ३०८ ; मर. १८ ; दीक. १।५३ ; गभा. ९६ हभावत् ; वीमि. १।५३ ; संप्र. ७४६ यस्यास्तु ( यस्याश्च ) ; चम. ९७ ; मुक्ता. १२६ हभावत् ; सेम ५४ वा ( वै ) ; विपा. ६९९ यच्छेत ( यच्छेतु ) ; आन. १६९ यच्छेत तां प्राज्ञः ( यच्छेच्च तां कन्यां ) ; बाल. १।५३ ; संग. १७५ यच्छेत ( गच्छेतु ) : २८९ हभावत् ; कृभ. १०२७–१०२८ विपावत् ; संर. ४१४ ; संदी. ३९ ( भागः २ ) निर्देशमात्रम्.

( १ ) यस्याः भ्राता नास्ति तां न विवहेत् पुत्रिकाधर्मशङ्कया पुत्रिकात्वशङ्कया । पुत्रिकाधर्मः कदाचिदस्याः कृतो भवेत्पित्रेत्यनया शङ्कया अनेन संदेहेन । कथं चेयं शङ्का भवति । यदि न विज्ञायेत पिता, देशान्तरे प्रोषितः मृतो वा । सा च मात्रा पितृप्रपिण्डैर्वा दीयते । प्राप्तकाला पितर्यसंनिहिते एतैरपि दातव्येति स्मर्यते । स्मृतिं चोत्तरत्र दर्शयिष्यामः । पितरि तु संविज्ञायमाने नास्ति पुत्रिकात्वशङ्का । स हि स्वयमेवाह – 'कृता वा न कृता वा' इति । वाशब्दः चेच्छब्दार्थे द्रष्टव्यः । यदि पिता न विज्ञायेत तदा कन्यका न वोढव्या । अन्ये तु स्वतन्त्रमेतत्प्रतिषेधद्वयमाचक्षते । यदि पिता न विज्ञायेत, अनेन इयं जाता इति, गूढोत्पन्नायाः प्रतिषेधः । एवं च संबन्धः–यस्याः भ्राता नास्ति तां पुत्रिकात्वशङ्कया नोपयच्छेत । न विज्ञायेत इत्यत्र पुत्रिका( धर्म )शङ्कया इत्येतन्न संबध्यते ।

अस्मिन् प्रकरणे यत्र नास्ति दृष्टगतः प्रतिषेधः, यथा 'असपिण्डा च' इत्यत्र श्लोके, तदतिक्रमे विवाहस्वरूपानिर्वृत्तिरेव । अतः सगोत्रादिविवाहः कृतोऽपि अकृत एव, विध्यवगतरूपत्वात् आधानवद्विवाहस्य विध्यतिक्रमे रूपापगमात् । यथा आधानविधौ यत्किंचिदङ्गं न ज्ञातं तदभावे नाऽऽहवनीयादिनिर्वृत्तिः, एवं सगोत्रादिकाया न भार्यात्वम् । तस्मात् त्याज्यैव कृततादृशसंस्कारप्रतिरूपिकाऽपि । तत्रभवन्तो वसिष्ठादयः प्रायश्चित्तमपि स्मरन्ति तादृशविवाहे । यद्यपि कर्मण एव तदङ्गप्रतिषेधातिक्रमे वैगुण्यं, न साक्षात्पुरुषस्य दोषः, तथापि वाचनिकं प्रायश्चित्तम् । अथवा सगोत्रागमनं निषिद्धम् । तदर्थे व्यापारे प्रवर्तमाने यदुक्तं तत्प्रायश्चित्तं भवेत् । यस्तु हीनक्रियादिप्रतिषेधः तस्य दृष्टदर्शनमूलत्वात् निर्वर्तते विवाहः, भवति असौ भार्या, नास्ति तस्यास्त्यागः । एवमर्थ एव 'महान्त्यपि' इति पूर्वस्मात्प्रतिषेधात् भेदः स्तवनार्थे पठितः । एवमेव च शिष्टसमाचारः । कदाचित् कपिलादिरूपामुपयच्छति न सगोत्राम् ।

मेधा.

( २ ) यस्या इति । यस्याः भ्राता नास्ति तां 'यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्' इति, 'अभि-

संधिमात्रात् पुत्रिका इत्येके ' इत्येवं मनुगौतमोक्तपुत्रिकाविधिभ्रान्त्या नोद्वहेत् । भ्रातृभावे हि पितरि विज्ञायमानेऽपि पुत्राभावात् कदाचिदसौ पित्रा पुत्रिका कृता स्यात् । सत्यामपि वा सभ्रातृकत्वप्रसिद्धौ अनेनैवमुत्पन्नेयमिति यस्या जनको विशेषेण न ज्ञायते तामपि पुत्रिकात्वभ्रान्त्या नोद्वहेत् । जनके हि सम्यगज्ञायमाने भिन्नपितृकयोरपि एकमातृकयोर्भ्रातृत्वप्रसिद्धेरस्ति जनकक्लृप्ते पुत्रिकात्वाशङ्का । एतदर्थे उभयविशेषणम् । पुत्रिकायाश्च न परिपूर्णं भार्यात्वम्, अत एव निषेधात् । 'अभ्रातेव पुंस एति प्रतीची' इति । व्याख्यातं च एतन्निरुक्तकृता— ' अभ्रातृकेव पुंसः पितृनेति अभिमुखी संतानकर्मणे पिण्डदानाय भवति ( ? न पतिम् ) ' इति । अत्र च प्रकरणे येषां विधिनिषेधानां दृष्टगुणदोषानुषङ्गो नास्ति, यथा ' असपिण्डा च या मातुः ' इति, तदतिक्रमे भार्या न भवति, भार्याशब्दस्य आहवनीयादिवत् संस्कारशब्दत्वात् । येषां पुनर्दृष्टगुणदोषप्रदर्शनेन विधिनिषेधा( ? नाम )भिधानम्, यथा 'हीनक्रियम्' इति, न तदतिक्रमे भार्यात्वाभावः । केवलनियमातिक्रमात् प्रायश्चित्तमात्रं भवति । यच्चैतत् ' नर्क्षवृक्षनदीनाम्नीम् ' इत्यादि, तदपि दृष्टगुणदोषानुविधायिविधिनिषेधप्रकरणमध्यपाठात् तदेकयोगक्षेममेव । तथा च मनुना सपिण्डादिप्रतिषेधमभिधाय अनन्तरं ' महान्त्यपि समृद्धानि ' इत्यादिपृथक्( ? क्प्रक )रणमुपक्रम्य ' हीनक्रियम् ' इत्यादि, ' नर्क्षवृक्ष ' इत्यादि चैतत्प्रकरणेऽभिहितम् । गोरा.

( ३ ) अनेन सुताऽपि पुत्रिका भवति, न केवलं या परिभाष्य दीयते ' अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ' इति । रतिपुत्रफला भार्या, यदि पुत्रोऽन्यस्य भवति तदैकाङ्गवैकल्यम् । अप. १।५३

( ४ ) न भवेत् नोत्पद्येत । न विज्ञायेत कुलवृद्धादिना प्रसिद्धिः ( ? अप्रसिद्धः ) । संतत्यन्तराभावेनापरिभाषितपुत्रिकाशङ्कया आद्याया न विवाहः, द्वितीयस्या अधर्मशङ्कया मात्यकन्यादिपरिणयकृतपापशङ्कयेति क्रमादन्वयः । अत्र पितेति विशेषोक्तेर्मातुरविज्ञानेऽपि न तादृशो दोष इत्युपदर्शितम् । मवि.

' ( ५ ) यस्याः पुनर्भ्राता नास्ति, तां पुत्रिकाशङ्कया नोद्वहेत् । ' यदपत्यं भवेदस्यास्तन्मम स्यात्स्वधाकरम् ' इत्यभिसंधानमात्रादपि पुत्रिका भवति । ' अभिसंधिमात्रात् पुत्रिका इत्येके ' इति गौतमस्मरणात् । यस्या वा विशेषेण पिता न ज्ञायते अनेन इयमुत्पन्ना इति, तामपि नोद्वहेत् । अत्र च पुत्रिकाधर्मशङ्कया इति न योजनीयमिति केचित् । गोविन्दराजस्त्वाह — ' भिन्नपितृकयोरपि एकमातृकयोः भ्रातृत्वप्रसिद्धेः सभ्रातृकत्वेऽपि यस्या विशेषेण पिता न ज्ञायते तामपि पुत्रिकाशङ्कयैव नोद्वहेत् ' इति । मेधातिथिस्तु एकमेवेमं पक्षमाह— यस्यास्तु भ्राता नास्ति तां पुत्रिकाशङ्कया नोपयच्छेत । पिता चेन्न ज्ञायते प्रोषितो मृतो वा । वाशब्दश्चेदर्थे । पितरि तु विद्यमाने तदीयवाक्यादेव पुत्रिकात्वाभावमवगम्य अभ्रातृकाऽपि वोढव्या इति । अस्माकं तु विकल्पस्वरसादिदं प्रतिभाति । यस्याः विशेषेण पिता न ज्ञायते तामपि जारजत्वेन अधर्मशङ्कया नोद्वहेत् । अत्र च पक्षे पुत्रिकाधर्मशङ्कया इति पुत्रिका च अधर्मश्च तयोः शङ्का पुत्रिकाधर्मशङ्का तया, इति यथासंख्यं योजनीयम् । अत्र च प्रकरणे सगोत्रापरिणयने ' सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात् ' इति परित्यागश्रवणात् ' परिणीय सगोत्रां च ' इति प्रायश्चित्तश्रवणाच्च तत्र तत्त्वमभिव्याहृते च मातृसपिण्डापरिणयनादौ भार्यात्वमेव न भवति, भार्याशब्दस्य आहवनीयादिवत् संस्कारवचनत्वात् । येषां पुनर्दृष्टगुणदोषमूलके विधिनिषेधाभिधाने यथा हीनक्रियमिति, न तदतिक्रमे भार्यात्वाभावः । अत एव मनुना ' महान्त्यपि समृद्धानि ' इत्यादि पृथक्( ? क्प्रक )रणं कृतम् । एतन्मध्यपतितश्च ' नर्क्षवृक्षनदीनाम्नीम् ' इत्यादिप्रतिषेधोऽपि न भार्यात्वाभावफलकः, किन्त्वत्र शास्त्रातिक्रमात् प्रायश्चित्तमात्रम् । • मनु.

( ६ ) ' यस्यास्तु न भवेद्भ्राता• ' इति मनुवचनात् अभ्रातृमतीपरिणयनं प्रतिषिद्धं, तदतिक्रम्य यदि कश्चित्तामुद्वहेत् तदा तस्याः पुत्रिकात्वदोषपरिहाराय च एकेन रूपेणाधिकं गवां शतं वरित्रे दत्त्वा उद्वहेत् । हमा. ८९

• मच., नन्द., भाच. मभुगमम् ।

(७) यस्याः पिता पुत्रिकाकरणाभिप्रायवान् न वा, इति न विज्ञायते, तां नोपयच्छेत्। यत्र तु नैषा शङ्का, तामभ्रातृकामप्युपयच्छेदित्यभिप्रायः। 'न विज्ञायेत वा पिता' इत्युक्तेः वरेण सह संप्रतिपत्तिं विनाऽपि पितुः संकल्पमात्रेण कन्या पुत्रिका भवतीति द्रष्टव्यम्।

†पमा. ४७४-४७५

## याज्ञवल्क्यः

कन्याया विवाहानुकूलानि लक्षणानि

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्॥**

(१) समावृत्तोऽपि सन्नविप्लुतब्रह्मचर्य एवोद्वाहं कुर्यात्। लक्षण्यां लक्षणोपेताम्। यथाह मनुः–'सवर्णां लक्षणान्विताम्' इति। तथा च 'अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्' इति। स्त्रीग्रहणमनुवादः, गुणार्थं वा। अपत्रपणशीलामित्यर्थः। एवमप्यनन्यपूर्विकामिति। अन्येनानुपभुक्तामित्यर्थः। कान्तां च कमनीयाम्। असपिण्डां च मातृतः पितृतश्च। यवीयसीं आत्मनो हीनवयसम्। तां एवंविधोक्तलक्षणामुद्वहेदिति संबन्धः।

विश्व.

(२) अविप्लुतब्रह्मचर्यः अस्खलितब्रह्मचर्यः। लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम्। बाह्यानि 'तनुलोमकेशदशनाम्' (मस्मृ. ३।१०) इत्यादीनि मनूक्तानि। आभ्यन्तराणि 'अष्टौ पिण्डान् कृत्वा' इत्याद्याश्वलायनोक्तविधिना ज्ञातव्यानि। स्त्रियं नपुंसकत्वनिवृत्तये स्त्रीत्वेन परीक्षिताम्। अनन्यपूर्विकां दानेनोपभोगेन वा पुरुषान्तरापरिगृहीताम्। कान्तां कमनीयां वोढुर्मनोनयनानन्दकारिणीम्। 'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः' इत्यापस्तम्बस्मरणात्। एतच्च न्यूनाधिकाङ्गादिबाह्यदोषाभावे। यवीयसीं वयसा प्रमाणतश्च न्यूनां उद्वहेत् परिणयेत् स्वगृह्योक्तविधिना।

* मिता.

(३) (लक्षण्याम्) लक्षणैर्युक्ताम्। लक्षणानि बाह्याभ्यन्तराणि। बाह्यानि कायस्वरादिगतानि। लक्षण्यामित्येतस्मादेव विपरीता तु त्याज्या। तथा नामतोऽपि वर्ज्या। यथा वा–'देवनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम्। ऋक्षवृक्षनदीनाम्नीं दारार्थे परिवर्जयेत्॥' इति। यथा–'नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्। न पक्ष्यहिपुष्य(प्रेष्य)नाम्नीं न विभीषणनामिकाम्॥' यदा पुनरभ्यन्तराणि सूक्ष्माणि भवन्ति तदा आश्वलायनोक्ता परीक्षा कार्या। अनन्यपूर्विकां नैवान्यस्मै या पूर्वं दत्ता। एतच्च वाग्दत्ताविषयं वेदितव्यं, न संस्कृताविषयम्। तस्याः पुनर्भूत्वात्। यथाऽऽह मनुः–'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः॥' न च तत्र दानं निवृत्तमित्याशङ्कनीयं, 'अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि। न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा॥' इति वसिष्ठस्मरणात्। एवं बलादपहृतायामपि वेदितव्यम्। 'बलादपहृता कन्या मन्त्रैरपि च संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सा॥' इति तेनैवोक्तत्वात्। एतच्च प्रायश्चित्तोत्तरकालं वेदितव्यम्। कान्तां स्नातकस्य कमनीयत्वान्मनोनयनानन्ददायिनीम्। एतच्च मङ्गलादिनिराकरणेन विधीयते, 'यत्र मनःसक्तिस्तामुद्वहेत्' इति विधानात्। असपिण्डाना सापिण्ड्यं वक्ष्यति। यवीयसीं जन्मतः प्रमाणतोऽपीत्येके।

अप.

(४) अन्यपूर्विकाः सप्तविधाः पुनर्भ्वः 'वाचा दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता च' इति बौधायनोक्ताः। एता न विवाह्या इत्येवमर्थमनन्येति विशेषणम्। प्रथमवरस्य पातित्यादिबलवद्दोषनिर्णये तु आद्यानां तिसृणामन्येन परिणयनं भवतीत्यवसरे वक्ष्यामः। कान्तां वरस्य चक्षुर्मनसोरानन्दकारि-

---

† मभा., मपा., संप्र., चम., कृम., संर. पमागतम्।

(१) यास्मृ. ११५२. शेषः स्थलादिनिर्देशः गोत्रप्रवरविचारे (संरा. पृ. १८१) द्रष्टव्यः।

* स्मृच., मपा., वीमि., संप्र., मुक्ता., विपा., संग. मितागतम्। सापिण्ड्यविषयकव्याख्यानानि सापिण्ड्यप्रकरणे द्रष्टव्यानि।

णीमिति विज्ञानेश्वरादयः । तेन श्वशुरादिश्वशुरादेस्तत्कारित्वाभावेऽपि न दोषः । संको. १७२

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥

( १ ) अरोगिणीं कुष्ठादिरोगरहिताम् । दृष्टमूलत्वाच्च स्मृतेः* समाधेयरोगित्वमदोषः । भ्रातृमतीं च, पुत्रिकाशङ्कानिवृत्त्यर्थम् । 'नाभ्रातृकामुपयच्छेत् तत्तोकं ह्यस्य भवति' इति भाल्लविना श्रुतेः । यदा पुनरयं हेतुवन्निगदः, तदा 'नाभ्रातृकामुपयच्छेत्' इत्येवं मन्यन्ते । *विश्व.

( २ ) विशेषान्तराण्याह— अरोगिणीमिति । अरोगिणीं अचिकित्सनीयव्याध्यनुपसृष्टाम् । भ्रातृमतीं पुत्रिकाकरणशङ्कानिवृत्तये । अनेन अपरिभाषितापि पुत्रिका भवतीति गम्यते । सपिण्डासमानगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते । रोगिण्यादिषु तु भार्यात्वे उत्पन्नेऽपि दृष्टविरोध एव । § मिता.

## नारदः

विवाहे कन्याया वर्ज्यानि लक्षणानि

कुलशीलवयोरूपवृत्तविद्यायुताय च ।
वराय रूपसंपन्नां कन्यां दद्याद्यवीयसीम् ॥
हीनाङ्गामधिकाङ्गां च वराद्दीर्घां वयोऽधिकाम् ।
नोपेयाद्रोगिणीं नारीं दीर्घमायुर्जिजीविषुः ॥
दीर्घकुत्सितरोगार्ता व्यङ्गा संसृष्टमैथुना ।
धृष्टाऽन्यगतभावा च कन्यादोषाः प्रकीर्तिताः ॥

( १ ) दीर्घः चातुर्थिकज्वरादिः । कुत्सितरोगः अपस्मारादिः । *गृक. २८

( २ ) अन्यस्मिन् पुरुषान्तरे आहितः कृतः भावः मानसाभिलाषो यया सा, तथोक्ता । § संम. ६८

( ३ ) दीर्घरोगाः शूलार्शआदियुक्ताः । कुत्सितरोगाः कुष्ठादियुक्ताः । आर्ता राजग्राहादिदारिद्र्यादियुक्ताः, एताभ्यां वाऽऽर्ताः । व्यङ्गाः विकलाङ्गाः । संसृष्टमैथुनाः भुक्तपूर्वाः । धृष्टाश्चान्यगतभावाश्च धृष्टान्यगतभावाः । धृष्टा निर्लज्जाः कार्याकार्येषु प्रसह्य वर्तन्ते । अन्यगतभावाः अन्यकामाः । त्यथा कन्यादोषाः, एते प्रदर्शनमात्रम् । अन्येऽपि प्रसिद्धा द्रष्टव्याः । दोषवतीरुक्त्वा एते दोषा इति ब्रवीति, तत्रार्थात् यत्संबन्धात् दोषवत्यस्तास्ते दोषा इत्युक्तं भवति । धर्मिणा धर्माख्यानं दृष्टम् । तद् यथा— गोत्वे किं लक्षणमिति पृष्टे विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे लिङ्गमिति, एवमिहापि दीर्घरोगादयो दोषा इत्युक्तं भवति । नाभा.

विवाहे वर्ज्यौ यामनक्षत्रजातौ वधूवरौ

सुतः सुता वा नियतं श्वशुरं हन्ति मूलजा ।
तदन्त्यपादजा नैव न चाऽऽश्लेषाद्यपादजा ॥
ज्येष्ठान्त्यपादजो ज्येष्ठं हन्ति बालो न बालिका ।

---

* 'असमानार्षगोत्रजाम्' इत्यस्य व्याख्यानं गोत्रप्रवरविचारे (संका. पृ. १८२) द्रष्टव्यम् ।

§ 'असमानार्षगोत्रजाम्' इत्यस्य व्याख्यानं गोत्रप्रवरविचारे (संका. पृ. १८२) द्रष्टव्यम् । अप., गृर., मपा., वीमि. मितागतम् ।

( १ ) यास्मृ. १।५३ . शेषः स्मृत्यादिनिर्देशः गोत्रप्रवरविचारे (संका. पृ. १८२) द्रष्टव्यः ।

( २ ) नाज्योसं. २७।४ पृ. ५० वृत्त (वित्त) ; मपा. १४५ वृत्त (वित्त) ; संप्र. ८१० संपन्नां (संयुक्तां) ; विपा. ७९२ संप्रवत् ; ज्योनि. १४९ मपावत् .

( ३ ) मुभा १२५ .

( ४ ) नासं. १२।३६ व्यङ्गा (व्यङ्गाः) मैथुना (मैथुनाः) भावा च (भावाश्च) ; नास्मृ १५।३६ संसृष्ट (संदुष्ट) धृष्ट (दुष्ट) ; अप. १।६६ ; गृक. २८ ; स्मृच. ८१ धृष्ट (दुष्ट) ;

* गृर. गृकवत् ।

§ कृम. संर. समवत् ।

गृर. २४ धृष्टा (दुष्टा) कन्यादोषाः (कन्यादोषा) (गिता) : ३० निर्देशमात्रम् ; पमा. ४९१-४९२ . मपा. १६१ संसृष्ट (संदुष्ट) धृष्टाऽन्यगत (दुष्टाऽन्यादिग) ; विमी. ४ ; संप्र. ७५८ वी व्यङ्गा (तंव्यङ्गा) धृष्टा (दुष्टा) ; मुभा. १२४ ; संम. ६८ उत्तरार्धे (धृष्टाऽन्याधिगमाता वा कन्या दुष्टा प्रकीर्तिता ।) ; बाल. १।६६ पृ. २०४ उत्तरार्धे (धृष्टाऽन्याधिगमाता च कन्या दुष्टा प्रकीर्तिता ।) ; कृम. ११११ संसृष्ट (संदुष्ट) शेषं बालवत् ; संर. ५०६ बालवत् .

( १ ) ज्योना. २७।१५३-१५४ पृ. ६२ (सुतः सुता वा नियतं श्वशुरं हन्ति मूलजः । तदन्त्यपादजो नैव तथाऽऽश्लेषाद्यपादजः ॥) ; विमी. १६ ; ज्योनि. १६० मूलजा (मूलजः) उत्तरार्धे (तदन्त्यपादजो नापि हन्त्याश्लेषाद्यपादजः ।) .

( २ ) ज्योना. २७।१५४-१५५ पृ. ६२ ; विमी. १६ पादजो (पादजः) ज्येष्ठं (ज्येष्ठं) द्वितीयं नास्ति .

बालिका मूलऋक्षे तु मातरं पितरं तथा ।
ऐन्द्री धवाग्रजं हन्ति देवरं तु द्विदैवजा ॥
वर्जयेन्न वरं मूलजातं पितरि जीवति ।
तथैव विद्यमानायां मातरि व्यालजं नरम् ॥
तिष्यांशे पञ्चमे जातौ श्वशुरघ्नौ नरस्त्रियौ ।
श्वश्रूघ्नौ चाष्टमे मूलस्यैवं व्यस्तं तु सार्पभे ॥
मूलव्यालभवो दोषो विवाहे य उदाहृतः ।
स मौञ्जीबन्धनादूर्ध्वं पुंसां नैवेति केचन ॥

## वृद्धनारदः

विवाहे वर्ज्या पापनक्षत्रजाता कन्या

[1]कन्यका देवरं हन्ति विशाखायां समुद्भवा ।
[2]पैत्रगण्डोद्भवा कन्या श्वशुरघ्नीति केचन ॥
न हन्ति देवरं कन्या तुलामिश्रद्विदैवजा ।
तदन्त्यपादजा त्याज्या दुष्टा वृश्चिकपुच्छजा ॥

## कात्यायनः

कन्याया विवाहे वर्ज्यानि लक्षणानि

[3]लोकापवादयुक्ता या सा तु दुष्टा प्रकीर्तिता ।
अन्यत्रासक्तचित्ता या या स्यात्संसृष्टमैथुना ॥

संसृष्टमैथुना क्षतयोनिः । गृक.२८

## व्यासः

कन्याया विवाहानुकूलानि लक्षणानि

[4]अरोगादुष्टवंशोत्थामशुल्कादानदूषिताम् ।
सवर्णामसमानार्षाममातृपितृगोत्रजाम् ॥
[5]अनन्यदत्तयागात्तां शुभलक्षणसंयुताम् ।
धृताधोवसनां गौरीं विख्यातदशपूरुषाम् ॥

[1]ख्यातनाम्नः पुत्रवतः सदाचारवतः सतः ।
दातुमिच्छोर्दुहितरं प्राप्य धर्मेण चोद्वहेत् ॥
[2]स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम् ।
यवीयसीं भ्रातृमतीमसगोत्रां प्रयत्नतः ॥
[3]सुखचारा सुवेषा च मृद्वङ्गी चारुभाषिणी ।
प्रशस्ता सुगतिः कन्या या च दृङ्मनसोः प्रिया ॥

## यमः

कन्याया विवाहे वर्ज्यानि लक्षणानि नामानि च

[4]ह्रस्वा दीर्घा कृशा स्थूला पिङ्गाक्षी गौरपाण्डुरा ।
न पूज्या न च सेव्यास्ता नाशमृत्युकराः स्त्रियः ॥
[5]देवनाम्नीं नदीनाम्नीं शैलगन्धर्वनामिकाम् ।
ऋक्षवृक्षलतानाम्नीं दारार्थे परिवर्जयेत् ॥

## संवर्तः

कन्याया विवाहानुकूलानि लक्षणानि

[6]अतो द्विजः समावृत्तः सवर्णां स्त्रियमुद्वहेत् ।
कुले महति संभूतां लक्षणैस्तु समन्विताम् ।
ब्राह्मेणैव विवाहेन शीलरूपगुणान्विताम् ॥
[7]बन्धुहीना च या कन्या या कन्या चैव जन्मतः ।
रोगिणी वंशहीना च तां कन्यां परिवर्जयेत् ॥

## लघुशातातपः

कन्याया विवाहे वर्ज्यानि लक्षणानि नामानि च

[8]नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।

(१) ज्योनि. १९० ; संग. १९२ विवाहे च ( तथा हेय ) तृतीयश्लोक एव, ज्योतिर्निबन्धे.

(२) ज्योनि. १५९ .

(३) गृक. २८ युक्ता या सा तु दुष्टा ( दुष्टा या दुष्टा सा तु ) ; गृर. २४ .

(४) व्यासस्मृ. २।२ ; मर. १७ अरोगादुष्ट ( अरोगदुष्ट ) नार्षाममातृ ( नार्षां न मातृ ).

(५) व्यासस्मृ. २।३ .

(१) व्यासस्मृ. २।४ .

(२) उ. २।११।१६ पृ. २२१ ; स्मृच. ७६ पृ. ; संप्र. ५८६ , ७४७ पृ.

(३) ज्योनि. १३७ .

(४) स्मृच. ७५ सेव्यास्ता ( सेव्या च ) ; संप्र. ७३१ पूर्वार्धे ( ह्रस्वां दीर्घां कृशां स्थूलां पिङ्गाक्षीं गौरपाण्डुराम् । ) ; शुका. १२४ पाण्डुरा ( पाण्डरा ) उत्तरार्धे ( न पूज्या न च सेव्या सा धनिमृत्युकरी यतः । ).

(५) अप. १।५२ पृ. ७८ ( = ) स्मृच. ७५ ; संप्र. ७३२ देव ( वेद ).

(६) संस्मृ. ३३-३४ .

(७) समु. ६ संवर्तश्लो .

(८) लशास्मृ. २४-२६ .

नातिलोमिकां नालोमिकां न वाचाटां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं न च मीपणनामिकाम् ॥
यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां कन्यां पुत्रिकाधर्मशङ्कया ॥

कन्याया विवाहानुकूलानि लक्षणानि

[1]हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
तादृशीं वरयेत्कन्यां गृहस्थः सुखमेधते ॥

मेघवर्णां मेघवत् स्निग्धश्यामवर्णाम् । मधुपिङ्गललोचनां मधुवद्दीप्तपिङ्गललोचनाम् । सुखमेधते सुखं यथा भवति तथा वर्धते । गृक. ११

### कश्यपः

विवाहे सप्तविधा पुनर्भूर्वर्ज्या

[2]सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ॥
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ।
[3]उदकस्पर्शिता या च या च पाणिगृहीतिका ॥
[4]अग्निं परिगता या च पुनर्भूप्रसवा च या ।
इत्येताः कश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

कृतकौतुकमङ्गला कृतकङ्कणबन्धना । उदकस्पर्शिता उदकपूर्वं दत्ता । गृक. ३०

[1]प्ररोहत्यग्निना दग्धः पादपः सुचिरादपि ।
न च पौनर्भवादग्धं कुलं क्वापि प्ररोहति ॥

### आश्वलायनः

कन्याया विवाहानुकूलानि लक्षणानि

[2]पितृमातृभ्रातृमतीं सर्वलक्षणलक्षिताम् ।
उद्वहेदष्टपिण्डाद्यैः कन्यां सम्यक् परीक्षिताम् ॥

*एतदष्टपिण्डनिमित्तलक्षणं परीक्षणं लौकिकविरुद्धमिति* हृदि निधाय आदि( १ आद्य )शब्देन निमित्तान्तराण्यप्यनुजानात्याश्वलायनाचार्यः स्मृतिरूपेण— *पितृमातृभ्रातृमतीमिति । तस्मात् श्रीविष्णुपुराणादिपुराणानि* सम्यगभ्यर्च्य तत्कथामालोच्य पाणिग्रहणं कुर्यात् । प्रपा. ३२५

[3]*कुलशीलवयोवृत्तरूपाढ्यां नग्निकां शुभाम् ।*
विधिना तु वरः कन्यामुद्वहेदात्मनः समाम् ॥

### लघ्वाश्वलायनः

कन्याया विवाहानुकूलानि लक्षणानि

[4]कुलजां सुमुखीं स्वङ्गीं सुवासां च मनोहराम् ।
सुनेत्रां सुभगां कन्यां निरीक्ष्य वरयेद्बुधः ॥

### गर्गः

कन्याया विवाहे आकारवयोन्यूनत्वमनुकूलम्

[5]उद्वहेद्वयसा न्यूनां न्यूनामाकारतोऽपि च ॥

---

(१) लघ्वाश्वस्मृ. २८ उत्तरार्धे ( तादृशीमुद्वहेत्कन्यां स चैवं सुखमृच्छति । ) ; गृक. ११ वरयेत् ( वरयन् ) ; स्मृच. ७४ ; गृर. १२ तादृशीं वरयेत् ( ईदृशीं वरयन् ) ; प्रपा. ३०२ ; ज्योत ६११ ; विसौ. ४ हंसस्वनां ( हंसस्वरां ) ; संप्र. ७३१ ; मुक्ता. १२४ हंसस्वनां ( हंसस्वरां ) सुखमेधते ( स्वयमेधते ) ; विपा. ६७६ ; संर. ५०९ पूर्वार्धे ( हंसगानिर्मेघवर्णा मधुपिङ्गललोचना । ) सुखमेधते ( सुखवृद्धये ).

(२) कस्मृ. ९।२ ; गृक. ३० ; स्मृच. ७५ ; गृर. २८ ; पमा. ४६४ ; प्रपा. ३०६ वर्जनीयाः ( वर्जयित्वा ) ; उत. ११९ ; संप्र. ७३५ प्रपावत् ; मुक्ता. १३७ ; विपा. ६८६ ; मान. १७६ ; संग. १६७ प्रपावत्.

(३) कस्मृ. ९।३ स्पर्शिता ( स्पर्शिका ) ; गृक. ३० ; स्मृच. ७५ ; गृर. २८ ; पमा. ४६४ ; प्रपा. ३०६ ; उत. ११९ ; संप्र. ७३५ ; मुक्ता. १३७ उदक ( उदकं ) ; विपा. ६८६ ; मान. १७६ मुक्तावत् ; संग. १६७.

(४) कस्मृ. ९।४ ( अग्न्युपान्तगता या पुनर्भूप्रसवाचिका । इत्येताः कश्यपप्रोक्ता दहेयुः कुलमग्निवत् ॥ ) ; गृक. ३० ; स्मृच. ७५ ; गृर. २८ ; पमा. ४६४ ; प्रपा. ३०६ ; उत. ११९ प्रसवा ( प्रभवा ) ; संप्र. ७३५ ; मुक्ता. १३७ ; विपा. ६८६ ; मान. १७६ ; संग. १६७–१६८ पुनर्भूप्रसवा च या ( पुनर्भूः प्रसवाय च ).

(१) कस्मृ. ९।५ ( प्ररोहत्यग्निना दग्धं वनिनानां कुलं महत् । नहि पुनर्भुवा दग्धं कुलं तस्य प्ररोहति ॥ ) ; स्मृच. ७५ ; मुक्ता. १३७ ; मान. १७६.

(२) प्रपा. ३२५ ; संप्र. ७३४–७३५.

(३) प्रपा. ३१४ ; संप्र. ७६७ वृत्त ( वृद्ध ? ) ; विपा. ७२८ उत्तरार्धे ( विधिना चोद्वहेत्कन्यां धर्मकामार्थसिद्धये । ) शौनकः ; संर. ४५८ देवलः.

(४) लघ्वाश्वस्मृ. १५।२.

(५) वीमि. १।५२ पृ. ११०.

पापनक्षत्रजाता कन्या विवाहे वर्ज्या

मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम् ।
माहेन्द्रजाऽग्रजं हन्ति देवरं तु द्विदैवजा ॥

## वात्स्यायनः

कन्याया विवाहे वर्ज्यानि नामानि

नर्क्षसंख्यां नदीनाम्नीं वृक्षनाम्नीं च गर्हिताम् ।
लकाररेफोपान्तां च वरणे परिवर्जयेत् ॥

## स्मृत्यन्तरम्

कन्याया विवाहे वर्ज्यानि नामानि

नोद्वहेद्भगिनीनाम्नीं न च मातृसनामिकाम् ।
मातामहीपितामह्योः पितृष्वसृसनामिकाः ॥

## वायुपुराणम्

नग्निकालक्षणम्

पश्यत्यलज्जा याऽङ्गानि कन्या पुरुषसंनिधौ ।
योन्यादीन्नावगूहेत तावद्भवति नग्निका ॥

## मार्कण्डेयपुराणम्

कन्याया विवाहे वर्ज्यानि लक्षणानि

व्यङ्गिनीं वर्जयेत्कन्यामकुलजां चातिरोगिणीम् ।
उद्वहेत्पितृमात्रोश्च सप्तमीं पञ्चमीं तथा ॥

## विष्णुपुराणम्

कन्याया विवाहे वर्ज्यानि लक्षणानि

नातिकेशामकेशां वा नातिकृष्णां न पिङ्गलाम् ।
निसर्गतोऽधिकाङ्गीं च हीनाङ्गीं चापि नोद्वहेत् ॥

नाविशुद्धां सरोगां वाऽकुलजां वाऽतिरोगिणीम् ।
न दुष्टां दुष्टवाचाटां व्यङ्गिनीं पितृमातृतः ॥
न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घरस्वरां क्षामवाक्यां काकस्वरां न वा ।
नानिबद्धेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेत्स्त्रियम् ॥
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ।
गण्डयोः कूपकं यस्या हसन्त्याश्चैव जायते ।
नोद्वहेत्तादृशीं कन्यां प्राज्ञः कार्यविशारदः ॥
नातिरुक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ।
आपीनहस्तपादां च न कन्यामुद्वहेद्बुधः ॥

---

(१) गभा. १६६ प्रयोगपारिजाते ; सिन्धु. ८५४ प्रयोगपारिजाते ; ज्योनि. १५९ व्यालजा ( सार्पजा ) माहेन्द्रजाऽग्रजं हन्ति ( ज्येष्ठाजा तु पतिज्येष्ठं ) ; संग. १९२ ज्योतिर्निबन्धे .

(२) विसौ. ५ .

(३) संप्र. ६८४ .

(४) मपा. १४९ .

(५) स्मृसा. १४ .

(६) विष्णु. ३।१०।१६, १७ उत्तरार्धे ( निसर्गतो विकलाङ्गीमधिकाङ्गीं च नोद्वहेत् । ) ; समु. ५ पू. ; गृक. २९ न पिङ्गलाम् ( अपिङ्गलाम् ) ; गृर. २६ उत्तरार्धे ( विसर्गतो विकलाङ्गीमधिकाङ्गीं च नोद्वहेत् । ) ; विसौ. ४ उत्तरार्धे (निसर्गतः पिङ्गलाङ्गीं नाधिकाङ्गीं च नोद्वहेत् ।) .

(१) विष्णु. ३।१०।१७, १८ ; गृक. २९ ऽकुलजां ( कुटिलां ) दुष्टवाचाटां ( दुष्टभावां वा ) ; गृर. २७ ऽकुलजां वाऽति ( कुलटां चाति ) दुष्टवाचाटां ( च दुष्टभावां ) .

(२) विष्णु. ३।१०।१८,१९ ; गृक. २९ क्षामवाक्यां ( क्षामां तथा ) न वा ( न च ) नानिबद्धे ( नातिबद्धे ) ; स्मृच. ७५ द्वितीयार्धे ( न घर्घरस्वरां क्षामां न च काकस्वनां तथा । ) नानिबद्ध ( नानिबद्ध ) स्त्रियम् ( बुधः ) ; गृर. २७ क्षामवाक्यां ( बालां तथा ) न वा ( न च ) तृतीयार्धे ( नातिश्वेतेक्षणां तद्वद्रक्ताक्षीं नोद्वहेत्स्त्रियम् । ) ; पमा. ४६३ क्षामवाक्यां ( क्षामां तथा ) न वा ( न च ) नानिबद्धे ( नानिबन्धे ) स्त्रियम् ( बुधः ) ; मपा. ३०३ पमावत् ; संप्र. ७३१ द्वितीयतृतीयार्धयोः (न घर्घरस्वरां काकुवाक्यां काकस्वरां न च । नानिमेषेक्षणां तद्वल्क्षीणाक्षीं नोद्वहेद्बुधः ॥) ; चम. ८६ क्षामवाक्यां ( क्षामां तथा ) न वा ( न च ) तृतीयार्धं नास्ति ; मुक्ता. १२४ क्षामवाक्यां ( क्षामां तथा ) न वा ( न च ) स्त्रियम् ( बुधः ) व्यासः ; संम. ४९ मुक्तावत् ; विपा. ६७७ चमवत्, तृतीयार्धं नास्ति ; बाल. १।५२ पृ. १७० चमवत्, तृतीयार्धं नास्ति .

(३) विष्णु. ३।१०।२०,२१ द्वितीयार्धे ( गण्डयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेत् । ) ; गृक. २९ कूपकं ( कूपकौ ) विशारदः ( विचक्षणः ) ; स्मृच. ७१ द्वितीयार्धे ( गण्डयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेत् । ) तृतीयार्धं नास्ति ; गृर. २७ विशारदः ( विचक्षणः ) ; पमा. ४६३ सर्वं स्मृचवत् ; मपा. ३०३ सर्वं स्मृचवत् ; संप्र. ७३२ द्वितीयार्धे ( गण्डयोः कूपकौ यस्या भवतस्तां च नोद्वहेत् । ) तृतीयार्धं नास्ति ; चम. ८६ सर्वं स्मृचवत् ; मुक्ता. १२४ सर्वं स्मृचवत्, व्यासः ; संम. ४९ सर्वं स्मृचवत् ; बाल. १।५२ पृ. १७० सर्वं स्मृचवत् .

(४) विष्णु. ३।१०।२१,२२ ; गृक. २९ आपीन ( आपीत ) ; स्मृच. ७५ ; गृर. २७ गृकवत् ; पमा. ४६३ आपीन

**नै वामनां नातिदीर्घां नोद्वहेत्संहतभ्रुवम् ।**
**न चातिच्छिद्रदशनां न करालमुखीं नरः ॥**

( १ ) अतिकेशा बहुकेशाम् । निसर्गतः स्वभावतः अधिकाङ्गीम् । व्यङ्गिनीं पितृमातृतः यस्याः पितरौ व्यङ्गौ भवतः ( ताम् ) । श्मश्रुमती श्मश्रुस्थाने दीर्घरोमा । व्यञ्जनवती कुचादियुक्ता । क्षामा कृशा । अतिमद्देक्षणां *निमीलितप्रायनेत्राम् । वृत्ताक्षीं वर्तुलाक्षीम् । करजं नखम् ।* आपीतं ईषत्पीतम् । संनतभ्रुवं संलग्नभ्रुवम् ।

गृक. ३०

( २ ) अतिकेशां दीर्घकेशीम् । विसंगतां विकलाङ्गीम् । गृर. २६

( ३ ) अतिकेशा केशग्रस्ताम् । अकेशां निष्केशप्रायाम् । *निसर्गतः गर्भावस्थायामेव । अविशुद्धा पातका*दिदुष्टाम् । सरोगा सहजरोगाम् । अतिरोगिणीं उत्कटरोगिणीम् । दुष्टां शूद्रादिसंवर्धिताम् । दुष्टवाचाटां बहुविरुद्धदुर्भाषिणीम् । व्यङ्गिनीं पितृतो मातृतश्च कुष्ठिनीं, कुष्ठिपितृमातृजन्यामित्यर्थः । श्मश्रूण्येव व्यञ्जनं पुंस्त्वव्यञ्जकं तद्युक्ताम् । क्षामवाक्यां स्वभावत एव सन्नवचनाम् । *अनिबद्धेक्षणा पक्ष्मभिरसंवृतेक्षणां निमेषैरपि अनिरुद्धदर्शना वा निद्रायामपि अर्धनिमीलितनेत्रामिति* वा । वृत्ताक्षीं वर्तुलनयनाम् । यस्या हसन्त्याः सत्या गण्डयोः कूपकौ गर्तौ भवतः तां नोद्वहेत् । तादृशीमिति पुनर्निषेधोऽतिदोषख्यापनाय । कचित्पुस्तके अयमर्धश्लोको नास्त्येव । 'हसन्त्याश्चैव जायते' इति पाठे एकवचनमार्षम् । पाण्डुकरजां श्वेतनखाम् । संहते भ्रुवौ यस्याः ताम् । *करालमुखीं दन्तुरास्याम् ।* विष्णुपुराणटीका

( अपीन ) न कन्या ( न च ता ) ; प्रपा. ३०३ ; संप्र. ७३२ आपीन ( अपीन ) ; मुक्ता. १२४ व्यासः ; संम. ४९ रुक्ष ( रक्त ).

( १ ) विष्णु. ३।१०।२२ ; गृक. ३० संहत ( संनत ) ; स्मृच. ७५ ; गृर. २७ नर' ( तथा ) ; पमा. ४६२ संहत ( संगत ) चाति (वाऽति) कराल ( कठाल ) ; प्रपा. ३०३ संहत ( संगत ) ; संप्र ७३२ नरः ( तथा ) ; मुक्ता. १२४ ; संम. ४९ वामनां ( वामनीं ) शेषं प्रपावत् .

## स्कन्दपुराणम्

कन्याया विवाहानुकूलानि लक्षणानि

**सुरूपां लक्षणोपेतामव्यङ्गाङ्गीं कुलोद्भवाम् ।**
**कन्यां भ्रातृमतीं चैव धर्मार्थार्थी समुद्वहेत् ॥**
**अपिङ्गाक्षीमकपिलामस्फुरच्चरणां शुभाम् ।**
**अस्थूलगण्डनासामां शस्तामाहुर्मनीषिणः ।**
***उद्वहेत्तादृशीं कन्यां रोगदोषविवर्जिताम् ॥***

## पद्मपुराणम्

*पुराणपुस्तकशकुनेन कन्यापरीक्षाविधिः*
( पुराणार्चनम् )

**श्रीराम उवाच —**
**पुराणं वीक्ष्य विधिना तत्सर्वं ब्रूत सत्तमाः ॥**
**भवद्ज्ञानहेतुश्च विचार्यस्तदनन्तरम् ।**
***किं किं पुराणं प्रेक्ष्यं स्याद्वर्जनीयं तथैव किम् ॥***
**प्रशस्तः कीदृशः श्लोकस्तदन्यः कीदृशो भवेत् ।**
**कीदृशेषु च कार्येषु कीदृशः पूजकस्तथा ॥**
**पूजा च कीदृशैर्भक्तैः कार्या निर्णयदर्शने ।**
**इति रामस्य वचनं श्रुत्वा ते द्विजसत्तमाः ॥**
**प्रत्यूचुस्तं रघुश्रेष्ठं चिन्ताव्याकुलमानसम् ।**
**न वक्तारो वयं राम वीक्ष्यतां तु पुराणवित् ॥**
**तच्छ्रुत्वा राघवः शम्भुं पप्रच्छ विनयान्वितः ।**
**सोऽपि तद्वाक्यमाकर्ण्य प्रत्युवाच महामतिः ॥**

( १ ) चद्रा. ६८१ .

( २ ) पद्म. ४।१००।३६ ; प्रपा. ३२५ तत्सर्वं ( परेण ) ; विपा. ७४७ ( पुराणं वीक्ष्य विधिना यत्फलं लभते नरः । ) .

( ३ ) पद्म. ४।१००।३७ ; प्रपा. ३२५ पूर्वार्धे ( *नवदर्भाणि* हेतु च विचार्य तदनन्तरम् । ) प्रेक्ष्यं ( वीक्ष्यं ) ; विपा. ७४७ वर्जनीयं ( अर्चनीय ) पूर्वार्धं नास्ति.

( ४ ) पद्म ४।१००।३८ ; प्रपा. ३२५ ; विपा. ७४७ *तदन्य' कीदृशो भवेत् ( अप्रशस्तश्च कीदृशः ) .*

( ५ ) पद्म. ४।१००।३९ ; प्रपा. ३२५ कीदृशैर्भक्तैः ( कीदृशी तज्ज्ञैः ) ; विपा. ७४७ कीदृशैर्भक्तैः ( कीदृशी तत्र ) ते द्विजसत्तमाः ( प्राह सदाशिव. ) .

( ६ ) पद्म. ४।१००।४० ; प्रपा. ३२५ वीक्ष्यतां ( रोचतां ) पूर्वार्धं नास्ति .

( ७ ) पद्म. ४।१००।४१ .

शम्भुरुवाच —

[1]पुराणजीवी पूजार्हः स्वशाखाध्ययनः शुचिः ।
मीमांसातत्त्वविज्ञानः श्रोत्रियोऽनृतदूषकः ॥

[2]देवेषु च समस्तेषु समदृष्टिः शिवे रतः ।
शतरुद्रीयजापी च साग्निकश्चातिवाचकः ॥

[3]यजुर्वेदी विशेषेण पूजयेत्पुस्तकं सुधीः ।
श्रीतालपत्रलिखितं देवलिप्यन्वितं शुभम् ॥

[4]वेद्धाग्रप्रतिपच्चन्द्रयुगवत्प्रणवाक्षरम् ।
प्रागूर्ध्वरेखयोः प्रान्ते प्रणवस्याग्रयोजिता ॥

[5]रेखैका तु भवेदेवमकारस्तस्य पार्श्वतः ।
शिरोभागमुपक्रम्य सकोणाधःप्रलम्बिनी ॥

[6]ओंकारः स हि विज्ञेयः पट्टिकादक्षरेखया ।
वामे पड्वक्रविन्दू द्वाविकार इति कीर्तितः ॥

[7]तस्य वामशिरोरेखालम्बिन्या ई उदाहृतः ।
सर्वाक्षरे शिरोरेखा अवक्रा प्रणवं विना ॥

[8]तस्यां तु लम्बरेखा स्यात्तदन्ते च लवित्रवत् ।
उकारः स हि विख्यातो लवित्रद्वयतस्तदू ॥

[1]एवमन्यानि सर्वाणि ह्यक्षराण्याह भारती ।
लिप्याऽनयैव लिखितं पुराणं तु प्रशस्यते ॥

[2]ब्राह्मं पाद्मं वैष्णवं च मार्तण्डं नारदेरितम् ।
मार्कण्डेयमथाऽऽग्नेयं कौर्मं वामनमेव च ॥

[3]गारुडं लैङ्गमाख्यातं स्कान्दं मात्स्यं नृसिंहकम् ।
तथैव गदितं राम पुराणं कापिलं तथा ॥

[4]वाराहं ब्रह्मवैवर्तं शकुनेषु प्रशस्यते ।
शैवं भागवतं दौर्गं भविष्योत्तरमेव च ॥

[5]भविष्यं चोपसंज्ञानि त्वन्यानि च विवर्जयेत् ।
विमुच्य पुस्तके रज्जुं पीठे निक्षिप्य संस्कृते ॥

[6]धौतवस्त्रधरः स्नात्वा शुचिरक्रोधनोऽत्वरः ।
आदावात्मानमभ्यर्च्य कृत्वा संकल्पमेव च ॥

[7]अङ्कुशं चाक्षसूत्रं च पाशं पुस्तकमेव च ।
धारयन्तीं सितां ध्यायेत् प्रसन्नास्यां सरस्वतीम् ॥

[8]गोक्षीरसदृशाकारं त्रिनेत्रं वृषवाहनम् ।
सहासवदनं शान्तं शुक्लाम्बरधरं शिवम् ॥

---

(१) पद्म. ४।१००।४२ ; प्रपा. ३२५ ऽनृतदूषकः ( नान्यदूषितः ) ; विपा. ७४७ पूर्वार्धे ( पुराणपूजनार्हस्तु स्वशाखाध्ययने रतः ) ऽनृतदूषकः ( वेदपारगः ).

(२) पद्म. ४।१००।४३ ; प्रपा. ३२५ उत्तरार्धे ( शतरुद्रियजापी च साग्निचित्र च याचकः । ) ; विपा. ७४७ ( शतरुद्रियजापी च साग्निश्चिन्तितवाचकः । ) पूर्वार्धे नास्ति.

(३) पद्म. ४।१००।४४ ; प्रपा. ३२५ ; विपा. ७४७.

(४) पद्म. ४।१००।४५ पूर्वार्धे ( वन्धाग्रन्तिप्रचम्पद्युगलाप्रणवाक्षरम् । ) ; प्रपा. ३२५ ( प्रतिपच्चन्द्रवद्धाग्रयुगवत्प्रणवाक्षरम् । प्रागूर्ध्वरेखयोस्तस्य रेखयोरग्रयोजिता ॥ ) ; विपा. ७४७ उत्तरार्धे ( प्रागूर्ध्वरेखयोस्तस्य रेखयोरग्रयूजिता । ).

(५) पद्म. ४।१००।४६ ; प्रपा. ३२५ ; विपा ७४७.

(६) पद्म. ४।१००।४७ ; प्रपा. ३२५ विन्दू द्वा ( विन्दुला ) ; विपा. ७४७.

(७) पद्म. ४।१००।४८ ; प्रपा. ३२५ लम्बिन्या ई उदाहृतः ( लम्बिनी तदुदाहृता ) उत्तरार्धे नास्ति ; विपा. ७४७ शिरोरेखा ( शिरोभाग ) अवक्रा ( अव्यक्ता ).

(८) पद्म. ४।१००।४९ ; प्रपा. ३२५ स्यात्तदन्ते च ( स्यादन्ते तु स्यात् ) उत्तरार्धे ( उकारः सह विज्ञेयो लवित्रद्वयवच्च क । ).

(१) पद्म. ४।१००।५० ; प्रपा. ३२५ सर्वाणि ह्यक्ष ( सर्वाण्यप्यक्ष ) ; विपा. ७४७ पूर्वार्धे ( एवमन्यानि वर्णानि अक्षराणीति वै विदुः । ).

(२) पद्म. ४।१००।५१ ; प्रपा. ३२५ ; विपा. ७४८ पूर्वार्धे ( ब्राह्मं च वैष्णवं चैव आदित्यं नारदं तथा । ).

(३) पद्म. ४।१००।५२ ; प्रपा. ३२५ तथैव गदितं ( तवैव चरितं ) ; विपा. ७४८ ( गारुडं लैङ्गमाख्यातं तथा भागवतं स्मृतम् । ) उत्तरार्धे नास्ति.

(४) पद्म. ४।१००।५३ ; प्रपा. ३२५ शैवं ( लैङ्गं ) ; विपा. ७४८ उत्तरार्धे नास्ति.

(५) पद्म. ४।१००।५४ संस्कृते ( संस्कृतम् ) ; प्रपा. ३२५ त्वन्यानि ( अन्यानि ) ; विपा. ७४८ पूर्वार्धे नास्ति.

(६) पद्म. ४।१००।५५ ; प्रपा. ३२५ स्नात्वा ( स्नातः ) ; विपा. ७४८ शुचिरक्रोधनोऽत्वरः ( कुशहस्तो द्विजोत्तमः ).

(७) पद्म. ४।१००।५६ ; प्रपा. ३२५ चाक्ष ( साक्ष ) ; विपा. ७४८.

(८) पद्म. ४।१००।५७ ; प्रपा. ३२५ सहास ( प्रसन्न ) शिवम् ( शुभम् ) ; विपा. ७४८ सहास ( प्रसन्न ) शिवम् ( हरम् ).

हरिणं चाभयं चोर्ध्वबाहुयुग्मे किरीटिनम् ।
व्याख्यामुद्रा च दक्षेऽधो वामहस्ते वरप्रदम् ॥
नानारत्नविभूषाढ्यं गिरिजार्धाम्बुजासनम् ।
बहुभिर्मुनिमुख्यैस्तु ध्यायमानपदाम्बुजम् ॥
मूर्तिमद्भिस्तथा वेदैः स्तूयमानं पुराणकैः ।
अन्यैः समस्तलोकैश्च संसेवितपदाम्बुजम् ॥
ध्यात्वैवं पूजकः सम्यगादौ पूजां समाचरेत् ।
आपो वा इति मन्त्रेण कलशस्याभिमन्त्रणम् ॥
तज्जलं तु गृहीत्वाऽथ पात्रस्थमभिमन्त्रयेत् ।
तत्सद्ब्रह्मेति मन्त्रेण प्रशस्य प्रणवेन तु ॥
आत्मानं सर्वपात्राणि तत आवाहयेदिति ।
यद्वागितितृचेनैव भारतीषोडशार्चनम् ॥
पुरुषसूक्तेन वा कुर्याद्गायत्र्या वा समर्चयेत् ।
ॐ नमो भगवतेऽमुकपुराणायेति पुराणमर्चयेत् ॥
काण्डादिति हि मन्त्रेण दूर्वामानीय पूजयेत् ।
ॐ नमो भगवत्यै दूर्वायै इति ।
सलोकपालपूजा स्यादथ कन्यार्चनं भवेत् ॥

वत्सरात्पञ्चमादूर्ध्वं दशवर्षादधः शुभा ।
अनुत्पन्नर्तुर्वाऽपि तां प्रयत्नेन पूजयेत् ॥
गन्धपुष्पाक्षतैर्धूपदीपताम्बूलभूषणैः ।
पाठयेदप्यमुं मन्त्रं पूजकः कन्यकामिमाम् ॥
सत्यं ब्रूहि प्रियं ब्रूहि भगवति सरस्वति नमस्ते नमस्ते इति ।
गायत्रीयानुकुमार्यास्तु दूर्वायुग्मं तु कामयेत् ॥
संनिधौ पुस्तकस्याधः सहस्रपरमेत्यृचा ।
दूर्वायुग्मत्रयं दद्यात्तस्या हस्ते विचक्षणः ॥
सा क्षिपेत्पुस्तके संधौ शलाकात्रयमत्र तु ।
विसृज्य तां पुनर्दद्यात्पुष्पाञ्जलिमतन्द्रितः ॥
आदाय पुस्तकं नत्वा देवीं ध्यायेत्समाहितः ।
विद्वद्भिः प्रेक्षणं कुर्याच्छिवाभ्यां नम इत्यथ ॥
पत्रयोर्मध्यमः श्लोकः कार्यसिद्धेर्हि सूचकः ।
पूर्वपत्रे समाप्तिः स्याच्छ्लोकस्य यदि राघव ॥
पत्रेऽपरे पठेच्छ्लोकं विविच्यार्थमुदीरयेत् ।
शनैः शनैः पठेत्प्राज्ञो व्याख्यास्येच्च शनैः शनैः ॥

---

(१) पद्म. ४।१००।५८ ; प्रपा. ३२५ युग्मे (युग्मं) व्याख्यामुद्रा च दक्षेऽधो (व्याख्यामुद्रां दक्षहस्ते).

(२) पद्म. ४।१००।५९ ; प्रपा. ३२५ विभू (सुभू) जार्धाम्बु (जाब्जाम्बु) उत्तरार्धे (बहुभिर्मुनिभिर्मुख्यैः स्तूयमानपदाम्बुजम् ।).

(३) पद्म. ४।१००।६० ; प्रपा. ३२५ वेदैः (देवैः) ; विपा. ७४८ (हरिं च देवदेवेशं स्तूयमान पुराणकैः) पू.

(४) पद्म. ४।१००।६१ इति मन्त्रेण (इदमित्येनव) ; प्रपा. ३२५ इति मन्त्रेण (इदमित्येव) ; विपा. ७४८ समाचरेत् (समारभेत्).

(५) पद्म. ४।१००।६२ ; प्रपा. ३२५ तज्जलं तु गृहीत्वाऽथ (तदर्थे जल गृहीत्वा तु) उत्तरार्धे (ॐ तद्ब्रह्मेति मन्त्रेण प्रशस्तं प्रणवेन तु ।) ; विपा. ७४८ पात्रस्थमभिमन्त्रयेत् (पूजाद्रव्याण्यथाभ्युक्षेत्).

(६) पद्म. ४।१००।६३ ; प्रपा. ३२५ भारती (भारत्याः) ; विपा. ७४८.

(७) पद्म. ४।१००।६४ ; प्रपा. ३२५ पुराणमर्चयेत् (वाऽर्चयेत्) ; विपा. ७४८ (पुरुषसूक्तेन वा कुर्यात्पुस्तके षोडशार्चनम् ।).

(८) पद्म. ४।१००।६५ ; प्रपा. ३२५ सलोक (सा लोक).

(१) पद्म. ४।१००।६६ मादूर्ध्वं (कादूर्ध्वं) ; प्रपा. ३२६ ; विपा. ७४९ (वत्सरात्पञ्चमादारभ्य पञ्चवर्षादधः शुभाम् । अनूढां वाऽनृतुमतीं कन्यां यत्नेन पूजयेत् ॥).

(२) पद्म. ४।१००।६७ ; प्रपा. ३२६ ; विपा. ७४९ दप्यमुं (दद्य वै).

(३) पद्म. ४।१००।६८ ; प्रपा. ३२६ उत्तरार्धे (गायत्र्या च कुमार्याश्च दूर्वायुग्मं तु कारयेत् ।) ; विपा. ७४९ (सत्यं ब्रूहि प्रियं ब्रूहि भगवति सरस्वति । नमस्ते नमस्ते इति गायत्र्या च कुमार्या । गायत्र्यनुकुमार्यास्तु दूर्वायुग्मं तु कामयेत् ॥).

(४) पद्म. ४।१००।६९ ; प्रपा. ३२६ स्याधः (स्याथ) . विपा. ७४९.

(५) पद्म ४।१००।७० (साऽपि क्षिपेत्पुस्तकेऽपी शलाकात्रयमन्त्र तु । विसृज्य तां पुनर्दद्यात्पिण्डिकाभ्यां नम इत्यथ ॥) ; प्रपा. ३२६ सा क्षिपेत्पुस्तके (साऽपि क्षिपेच्च) ; विपा. ७४९ पुनः (ततो) शिवाभ्यां (देवेभ्यो).

(६) पद्म. ४।१००।७१ ; प्रपा. ३२६ मध्यमः (मध्यगः) सिद्धेर्हि (सिद्धेश्च) ; विपा. ७४९ सिद्धेर्हि (संसिद्धि).

(७) पद्म. ४।१००।७२ ; प्रपा. ३२६ पत्रेऽपरे (पत्रान्तरे) व्याख्यास्येच्च (व्याख्यास्यात च) ; विपा. ७४९ पत्रेऽपरे (पत्रान्तरे) व्याख्यास्येच्च (व्याख्यापयेच्च).

[1]त्वरेह न हि कर्तव्या कुप्यति त्वरया तु गीः ।
घटिकायास्तु पादं स्यादत्वरा स्यात्ततोऽधिका ॥
[2]त्वरयेन्न च वक्तारं ज्ञातव्यांशमनु द्विजः ।
विविच्य पाठं श्लोकस्य निश्चित्यार्थं च मानसे ॥
[3]यथार्थमेव वक्तव्यं विचिन्त्य रघुनन्दन ।
यदि युक्तमयुक्तं वा श्लोकमन्यं पठेदसौ ॥
[4]पुस्तकस्थं च हित्वैव पूजकः स द्विजो यदि ।
तत्तथैव हि विज्ञेयं विसंवादो न शस्यते ॥
[5]दैवागतो हि स श्लोको दैवं हि बलवत्तरम् ।
उपश्रुतिषु यद्वच्च नापराधो द्विजस्य तु ॥
[6]विस्मयो न च कर्तव्यो दैवस्य कुटिला गतिः ।
पत्रद्वयविपर्यासे पत्रे वोत्तरचारिणि ॥
[7]तस्मादेवं तिरस्कृत्य द्वितीयं तु पठेदथ ।
ततस्तृतीयं पाठ्यं स्यात्ततः कार्यविवेचनम् ॥
[8]अविसर्गान्तपूर्वार्धस्तवर्गेतरपञ्चमः ।
स्तुतिलिङ्गवर्जितः श्लोकः शकुनेषु प्रशस्यते ॥

[1]अध्यायादिः समाप्तिश्च वृथा पत्रं वृथा लिपिः ।
उक्तानुवचनं चैव ह्युपस्तुतमथैव च ॥
[2]दग्धपत्रं नष्टलिपिः संदिग्धाक्षरमेव च ।
एतानि शकुने नित्यं वर्जनीयानि पण्डितैः ॥
[3]प्रश्नो हि द्विविधो ज्ञेयो दीप्तशान्तप्रकारतः ।
दीप्तं तु द्विविधं ज्ञेयं क्षितिस्थितिविनाशयोः ॥
[4]शान्तं च द्विविधं ज्ञेयमुत्पत्तिस्थितिवृद्धितः ।
तत्र शान्तं प्रशस्यं स्याल्लक्षितं पूर्वलक्षणैः ।
[5]कार्यभेदास्तु वर्ण्यन्ते केचिन्मर्त्योपयोगिनः ॥
कस्यचित्कार्यमादाय कश्चित्प्रष्टा भवत्यपि ।
स करोति तदा प्रश्नं समेत्य स्मरतेऽत्र किम् ॥
स पुनर्धार्य पत्रं तत्तस्मिन्पत्रं प्रशस्यते ।
अथवा तत्क्षमोपेतं वैराग्यं परमेव च ॥
यतः कुतश्च दृष्टश्च स्तुतिपादकमेव ( ? ) च ।
परिहृत्य परं चापि तस्मिन्नर्थे शुभप्रदः ॥
मृतो गृह्णाति वागर्थमिति प्रश्नः शुभप्रदः ।
विवादे विजयप्रश्ने जयद्योतकमिष्यते ॥
सृष्टिरप्यत्र शस्ता स्यात्क्रूरायां क्लेशतो जयः ।
प्रशान्तायामुपायैस्तु मिश्रायां विड्वरो भवेत् ॥
पुरादिवर्णनं यत्तु मध्यमं यदि चोत्तमम् ।
कलिसंभावनायास्तु शृङ्गारस्योपवर्णने ॥
राज्यनिर्वाहचिन्तायां राज्यलिङ्गं शुभावहम् ॥

---

( १ ) पद्म. ४।१००।७३ ; प्रपा. ३२६ न हि (तु न) तु गीः ( च गीः ) उत्तरार्धे ( घटिकायां तु पादः स्यात्परा स्यात्तु ततोऽधिका । ) ; विपा. ७४९ न हि ( तु न ) कुप्यति ( रुष्यति ) तु गीः ( च गीः ) पू .

( २ ) पद्म. ४।१००।७४ द्विजः ( द्विजम् ) ; प्रपा. ३२६ विविच्य ( निश्चित्य ) ; विपा. ७४९ विविच्य ( निश्चित्य ) पूर्वार्धं नास्ति .

( ३ ) पद्म ४।१००।७५ पूर्वार्धे ( प्रतीपं तत्र वक्तव्यं विविच्य रघुनन्दन ) ; प्रपा. ३२६ यथार्थमेव ( प्रदीप्तं तु न ) ; विपा. ७४९–७५० .

( ४ ) पद्म. ४।१००।७६ ; प्रपा. ३२६ स्थं च ( स्थं स ) स द्विजो ( सन्द्विजो ) ; विपा. ७५० द्विजो यदि ( द्विजोत्तमः ).

( ५ ) पद्म. ४।१००।७७ ; प्रपा. ३२६ यद्वच्च ( यद्वाक्यं ) ; विपा. ७५० .

( ६ ) पद्म. ४।१००।७८ उत्तरार्धे ( यत्तत्पदविपर्यासे पत्रे चोत्तमचारिणि । ) ; प्रपा. ३२६ विस्मयो न च ( विस्मयस्तत्र ) वोत्तर ( चोत्तर ) ; विपा. ७५० विस्मयो न च ( विस्मयस्तत्र ) .

( ७ ) पद्म. ४।१००।७९ पठेदथ ( पठेत्ततः ) ; प्रपा. ३२६ ; विपा. ७५० यं पाठ्यं ( यपाठः ) .

( ८ ) पद्म. ४।१००।८० पूर्वार्धे ( अविसर्गान्तपूर्वास्ते ( वैरतु ) पवर्गेतरपञ्चमः । ) ; प्रपा. ३२६ ; विपा. ७५० .

( १ ) पद्म. ४।१००।८१ ; प्रपा. ३२६ अध्यायादिः ( अध्यायानां ) उत्तरार्धे ( उक्तानुकथनं चैव स्तूयमानं तथैव च । ) ; विपा. ७५० अध्यायादिः ( अध्यायानां ) वचनं ( कथनं ) .

( २ ) पद्म. ४।१००।८२ ; प्रपा. ३२६ नष्टलिपिः ( न लिखितं ); विपा. ७५० .

( ३ ) पद्म. ४।१००।८३ प्रकारतः ( प्रभेदतः ) उत्तरार्धं नास्ति ; प्रपा. ३२६ प्रश्नो हि द्विविधो ( प्रश्नोऽपि विविधो ) ; विपा. ७५० क्षिति ( क्षित ) .

( ४ ) पद्म. ४।१००।८३–८४ ; प्रपा. ३२६ उत्पत्तिस्थिति ( शान्तस्य स्थिति ) प्रशस्यं ( प्रशस्तं ) तृतीयार्धं नास्ति ; विपा. ७५० शान्तं च ( शान्तं हि ) प्रशस्यं ( प्रशस्तं ) तृतीयार्धं नास्ति.

( ५ ) पद्म. ४।१००।८५–९१ .

[1]यस्यापि यादृशं योग्यं विचार्यं तादृशं बुधैः ॥
स्तुतिवैराग्ययोः कार्यविलयः परिकीर्तितः ।
कार्याल्पसिद्धिः स्खलिते न च निर्वाहमृच्छति ॥

[2]तस्यान्यार्थस्यान्यभावो राम शान्तविचारणे ।
विसर्गान्ते तु पूर्वार्धे व्ययायासौ भविष्यतः ॥

[3]संकल्पितान्यथाभावो ह्यध्यायस्य समापने ।
काण्डादेश्च समाप्तौ तु स्यात्तत्कार्यविनाशनम् ॥

[4]पुराणस्य समाप्तौ तु तद्देशस्य विपर्ययः ।
क्षुते पुस्तकपाते च आहते मस्तकादिके ॥

[5]वक्ताऽवमाननं याति ततः शकुननाशनम् ।
तस्मादेतादृशे दोषे शकुनं परिवर्जयेत् ॥

[6]उपमायां भवेद्राम कार्याभावो न वस्तुतः ।
जयसंतानतोऽन्यत्र सृष्टिर्मध्यफलप्रदा ॥

[7]स्तुतिः प्रशस्ता कुत्रापि गुणवत्त्वाद्विनिर्णयः ।
विवाहे चौपधादाने व्यवहारे कृषौ तथा ॥

[1]यथार्थौ च स्तुती राम विवादेऽपि न दूषणम् ।
अयथार्था स्तुतिर्यत्र तत्र कार्यं न सिध्यति ॥

[2]अबुद्धार्थे तथा पद्ये पुराणस्याविदाहने ।
पलायने देशबाधे व्याधिसंभव एव च ॥

[3]घोराद्यभिभवेऽन्यस्मिन् घोरे कार्यविनाशनम् ।
शान्तः स्याद्यदि सत्प्रश्न इति प्राहुः पुराविदः ॥

श्रीरामचन्द्र उवाच–

[4]अबुद्धार्थं कथं पद्यं पुराणज्ञो वदिष्यति ।
अनुक्तो न श्रुतः सम्यक्श्रोतॄणामिति निश्चयः ॥

[5]वेदुदाहियतां मह्यमर्थश्चापि विचार्यताम् ।
भावावोधकमप्यत्र वक्तुमर्हसि पण्डित ॥

श्रीशम्भुरुवाच–

[6]मधूनि च मधून्यत्र मधुर्मधुभुजं मधुः ।
मधुनामधुनादर्थविषाणि च विषाणि च ॥

[7]अबुद्धार्थस्त्वयं श्लोकः शकुने न हि शस्यते ।
रुते रुते रुते रोरौ रीरीरारंररीररम् ॥

[8]एवं करोति शुद्धात्मा ब्राह्मणो महतोऽतिथिः ।
भावाबुद्धस्त्वयं श्लोकः शकुने न प्रशस्यते ॥

---

(१) पद्म. ४।१००।९१,९२ ; प्रपा. ३२६ द्वितीयार्धे ( श्रुतिवैराग्यपरयो' कार्यनाशः प्रकीर्तितः । ) तृतीयार्धे नास्ति ; विपा. ७५० यस्यापि ( यथोक्त ) द्वितीयार्ध ( स्तुतिवैराग्यपरयोः कार्यनाश' प्रकीर्तितः । ) तृतीयार्धे नास्ति .

(२) पद्म. ४।१००।९३ उत्तरार्धे ( विसर्गान्तश्च पूर्वार्धविपर्यासौ भविष्यत' । ) ; प्रपा. ३२६ भविष्यतः ( प्रकीर्तितः ) ; विपा. ७५१ पूर्वार्धे नास्ति .

(३) पद्म. ४।१००।९४ देश्च ( देस्तु ) ; प्रपा. ३२६ ; विपा. ७५१ तान्यथाभावो ( तत्फलाभावो ) देश्च ( देस्तु ) त्कार्यविना ( त्कार्यस्य ना ) .

(४) पद्म. ४।१००।९५ ( तस्मादेतादृशे दोषे शकुनस्य विपर्ययः । क्षुते पुस्तकपाते च ह्याहते मस्तकादिषु ॥ ) ; प्रपा. ३२६ ; विपा. ७५१ पाते च ( पाते वा ) .

(५) पद्म. ४।१००।९६ ऽवमाननं ( वैमाननं ) ; प्रपा. ३२६ ; विपा. ७५१ उत्तरार्धं नास्ति .

(६) पद्म. ४।१००।९७ कार्याभावो ( कार्याभासो ) जयसंतानतोऽन्यत्र ( सन्तानान्मोन्यत्र चोक्त ) ; प्रपा. ३२६ .

(७) पद्म. ४।१००।९८ गुणवत्त्वाद्विनिर्णयः ( गुणवत्त्वाऽपि निर्णये ) चौपधादाने ( चौपधे दाने ) ; प्रपा. ३२६ स्तुतिः ( स्तुतिः ) .

(१) पद्म. ४।१००।९९ विवादेऽपि ( निर्वादेऽपि ) स्तुतिर्यत्र ( स्तुतिर्या हि ) ; प्रपा. ३२६ यथार्थौ च ( यथा यथा ) .

(२) पद्म. ४।१००।१०० पुराणस्याविदाहने ( पुराणादिहदाहने ! ) देशबाधे ( देशभावे ) ; प्रपा. ३२६ .

(३) पद्म. ४।१००।१०१ ऽन्यस्मिन् घोरे ( तस्मिन् घोरे ) सत्प्रश्न ( चेद् प्रश्न ) .

(४) पद्म. ४।१००।१०२ ; प्रपा. ३२६ पद्यं ( प्रश्नं ) अनुक्तो न श्रुतः ( अनुक्तानं श्रुते ) .

(५) पद्म. ४।१००।१०३ भाषा ( भाग ) ; प्रपा. ३२६ मह्यं ( पद्य ) उत्तरार्धे ( भावबोधनमप्यत्र वक्तुमर्हसि पण्डित । ) .

(६) पद्म. ४।१००।१०४ ; प्रपा. ३२६ ( मधूनि मधुन्यत्र मधुर्मधुभुजं मधु । मधुनामधुनादर्थं विषाणि च विषाणि च ॥ ) .

(७) पद्म. ४।१००।१०५ ; प्रपा. ३२६ उत्तरार्धे ( रेरेररे-रेरोररीरीरररररः । ) .

(८) पद्म. ४।१००।१०६ भाषा ( भाग ) ; प्रपा. ३२६ ब्राह्मणो महतोऽतिथिः ( ब्राह्मणैर्महतोऽतिथिः ) .

[१]एवमादीनि पद्यानि पुराणेषु रघूत्तम ।
सन्ति तेषां न च व्याख्या त्रिभिः पाठपरो भवेत् ॥
[२]वक्तुः श्रोतुरवैगुण्यं व्रतेषु नियमेषु च ।
वेदवच्च पुराणानि चिन्त्यानि कथितं त्विति ॥
[३]त्रिरुक्तादिवशादर्थधीरप्यस्तु विचारतः ।
श्लोकार्थं प्रक्रियां चैव विचार्य परमार्थतः ॥
[४]बल्वांस्तत्र हि श्लोकः प्रक्रिया तु ततो लघुः ।
वृथापत्रे वृथायासो दग्धपत्रे विनाशनम् ॥
[५]स्यादन्तरितनिर्वाहपत्रे कार्यविसूत्रता ।
शीर्णपत्रे व्ययः प्रोक्तः प्रणष्टलिपिके तथा ॥
[६]वृथाक्षरे वृथायासः पुनरुक्तौ विसंपदः ।
उपमाने तु कार्यं तत् सिध्यति वा न सिध्यति ॥
[७]विलम्बेनाथवा सिद्धिरस्पष्टे चाक्षरे पुनः ।
कार्यं संशयमाप्नोति निर्दिष्टदिवसेष्वपि ॥
[८]न प्रत्यहं निरीक्षेत पुराणशकुनं नृप ।
भुक्त्वोत्तिष्ठंस्तथा नैव निरीक्षेत पुराणकम् ॥
[९]पूर्वस्य दिवसस्याथ रात्रौ पूजां विधाय च ।
प्रातःकाले परेद्युश्च शकुने रघुनन्दन ॥

[१]पश्चान्निरीक्षणं कार्यं सद्यःकालमथापि वा ।
प्रक्रियादिविशेषेण विशेषं शकुने वदेत् ॥
[२]शुभकार्येषु सर्वेषु प्रेतश्राद्धादिवर्णनम् ।
दण्डप्रणयनं शापो देशबाधा विपर्ययः ॥
[३]रक्षसां दुष्टसत्त्वानां सर्वप्राणिविहंसनम् ।
दहनादेश्च निर्माणं वमनं वपनं तथा ॥
[४]हासो बीभत्सता रौद्रः स्वप्नमत्र तथा पुनः ।
घटादिघूर्णनं पीडा कलहो मरणं तथा ॥
[५]समये मृतवार्ता च समक्षं बन्धुमारणम् ।
क्रूराणामागमाश्चापि महतां भङ्ग एव च ॥
दुर्वार्ताश्रवणं चाखुभुग्वादो द्रुमपातनम् ।
दारुकुड्यनिपातादि शोकवाक्यश्रवणं तथा ॥
एवमाद्यास्तथा चान्याः प्रक्रियास्तु विवर्जयेत् ॥
[६]श्रेयःप्राप्तिविचारेषु राजसृष्टिः शुभावहा ।
ग्रहाणामुदयो रोगशान्तिरप्यत्र शस्यते ॥
[७]किमत्र बहुनोक्तेन यद्योग्यं तद्विचारयेत् ।
सर्वेषु च विचारेषु शुभकर्यं विचारयेत् ।
सर्वेषु च पुराणेषु स्कान्दमत्र प्रशस्यते ॥

---

( १ ) पद्म. ४।१००।१०७ त्रिभिः पाठपरो ( तत्पाठरतु परं ) ; प्रपा. ३२६–३२७ .

( २ ) पद्म. ४।१००।१०८ चिन्त्यानि कथितं ( न चिन्त्यानि कथं ) ; प्रपा. ३२७ .

( ३ ) पद्म. ४।१००।१०९ प्रक्रियां चैव ( प्रक्रियाश्चैव ) ; प्रपा. ३२७ धीरप्यस्तु ( धीपर्वस्तु ) .

( ४ ) पद्म. ४।१००।११० ; प्रपा. ३२७ वांस्तत्र ( वांस्त्वत्र ) तु ततो ( च ततो ) वृथापत्रे ( दग्धपत्रं ) .

( ५ ) पद्म. ४।१००।१११ तथा ( तु वा ) ; प्रपा. ३२७ .

( ६ ) पद्म. ४।१००।११२ पुनरुक्तौ विसंपदः ( पुनरुक्ते विसंविदे ); प्रपा. ३२७ उत्तरार्धे ( उपमाने च तत्कार्यं सिध्यतीव न सिध्यति । ) .

( ७ ) पद्म. ४।१००।११३ ; प्रपा. ३२७ विलम्बेनाथवा सिद्धि ( विलम्बे नार्थससिद्धि ) सेष्वपि ( सेष्विति ) .

( ८ ) पद्म. ४।१००।११४ ; प्रपा. ३२७ ( नप्रत्ययान्निरीक्षेत पुराणं प्रत्ययं नृप । भुक्तोच्छिष्टस्तथा नैव निरीक्षेत पुराणकम् ॥ ) .

( ९ ) पद्म, ४।१००।११५ ; प्रपा. ३२७ ; त्रिपा. ७५१ .

( १ ) पद्म ४।१००।११६ शकुने ( शकुनं ) ; प्रपा. ३२७ पश्चान्निरीक्षणं ( प्रश्नानां वीक्षणं ) विशेषं ( विरोधं ) ; विपा. ७५१ पश्चान्निरीक्षणं ( प्रश्नानामीक्षणं ) उत्तरार्धं नास्ति .

( २ ) पद्म. ४।१००।११७ वर्णनम् ( वर्जनम् ) देशबाधा ( देशानां च ) ; प्रपा. ३२७ .

( ३ ) पद्म. ४।१००।११८ सर्व ( शुद्धं ) दहनादेश्च ( दहनादेव ) वपनं तथा ( करुणं हृदि ) ; प्रपा. ३२७ .

( ४ ) पद्म. ४।१००।११९ ( हासो बीभत्सता दुःखदुःस्वप्नभ्रमपापकाः । घटादिपूर्णन पीडा कलहो मरणं तथा ॥ ) ; प्रपा. ३२७ .

( ५ ) पद्म. ४।१००।१२० ( क्रूराणामागमश्चापि महतां भयमेव च । एवमाद्यास्तथा चान्याः प्रक्रियास्तु विवर्जयेत् ॥ ) एतावदेव ; प्रपा. ३२७ .

( ६ ) पद्म. ४।१००।१२१ पूर्वार्धे ( श्रियः प्राप्तिविचारे तु राजसृष्टिः सुखावहा । ) ; प्रपा. ३२७ उत्तरार्धे ( ग्रहाणामुभयोरेव शान्तिरप्यतिशस्यते । ) .

( ७ ) पद्म. ४।१००।१२२ यद्योग्यं तद् ( तत्तद्योगं ) द्वितीयार्धं नास्ति ; प्रपा. ३२७ ; विपा. ७५१ च ( तु ) तृतीयार्धमेव .

[1]वैष्णवं केचिदिच्छन्ति रामायणमथापरे ।
स्तुत्यादिसर्वदोषाणां वैष्णवे नैव दोषता ॥
स्कान्दे रामायणे चैव दोषत्वमपि चाल्पतः ।
किन्तु पूजयितुं शक्यं वैष्णवं नैव केनचित् ॥
[2]सदाचारविहीनेन पूजितं यदि चेद्भवेत् ।
तदाऽशुभमिवायाति शकुनं नैव सिध्यति ।
[3]सर्वाचारसमोपेते शाखाग्रन्थे यथा वृषः ॥

तस्मात् श्रीविष्णुपुराणस्य स्तुतिनिन्दादिदोषरहितत्वात् तत्पुराणं सदाचारयुक्तेन पुराणविद्ब्राह्मणेन पूर्वोक्तप्रकारेण सम्यगभ्यर्च्य शकुनमवलोक्य तत्प्रश्नैरेव मनः संतोषयुक्तं चेत्तदैव कन्या निश्चिनुयात् । प्रपा. ३२७

[4]पुराणानि तथाऽप्येवं सन्ति तन्नामकानि तु ।
व्यासेरितानि त्वष्टैव पुराणानि च नान्यथा ॥
अद्यापि च विधानं तत्पुराणश्रवणे फलम् ।
महाभारतमप्यत्र शकुनाय विशिष्यते ॥
आदिपर्वैकमभ्यर्च्य निरीक्षेत विनिश्चयम् ।
अथवा सर्वपर्वाणि प्रशस्तान्यर्थनिर्णये ॥
श्लोकादिलक्षणं सर्वं पूर्वोक्तं तदिहापि तु ।
श्लोकानामन्वयादेकस्तात्पर्यादथवाऽपरः ॥
अर्थः संप्रतिपद्येत तात्पर्यं तत्र गृह्यते ।
अर्थादेव हि सर्वत्र वस्त्वादेस्तु निरूपणम् ॥
यत्रार्थो दृश्यते तत्र स धातुः समुदाहृतः ।
अत्रार्थादेव शब्दानां न मिथ्यैव निरूपणम् ।
तस्मात्सर्वत्र तात्पर्यं ग्रहीतव्यं मनीषिभिः ॥

( १ ) पद्म. ४।१००।१२३ स्तुत्यादि ( सत्यादि ) ; प्रपा. ३२७ दोषता ( दुष्टता ) ; विपा ७५१ .

( २ ) पद्म. ४।१००।१२४ चाल्पतः ( चाल्पता ) ; प्रपा. ३२७ वैष्णवं नैव ( वैष्णवेनैव ) ; विपा. ७५१ नैव केनचित् ( सर्वदैव तत् ) .

( ३ ) पद्म. ४।१००।१२५,१२६ ; प्रपा. ३२७ चेद्भवेत् ( तत्फलम् ) शाखाग्रन्थे ( शाखादण्डे ) ; विपा. ७५१ चेद् ( तद् ) द्वितीयार्धे ( तदा त्वशुभमायाति शकुनेनैव शुध्यति । ) तृतीयार्धं नास्ति .

( ४ ) पद्म. ४।१००।१६२-१६७ .

## ब्रह्मपुराणम्

कन्याया विवाहे वर्ज्यानि लक्षणानि -

[1]अलोमामतिलोमां च वाचाटां केकरेक्षणाम् ॥
केकरेक्षणां चक्रैकनयनाम् । गृक. ३०

## काशीखण्डः

शुभलक्षणवती कन्या विवाह्या

[2]सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि ।
अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत् ॥

## अनिर्दिष्टकर्तृकवचनानि

कन्याया विवाहेऽनुकूलानि वर्ज्यानि च लक्षणानि

[3]विशुद्धवंशजां कन्यां सुभगां सुमनोहराम् ।
शुद्धां यवीयसीं हृद्यामसमानार्षगोत्रजाम् ॥
[4]नातिस्थूलां नातिकृशां न दीर्घां न च वामनाम् ।
ह्रस्वया निःस्वता प्रोक्ता दीर्घया च कुलक्षयः ॥
[5]वधूं सुलक्षणोपेतां प्रसन्नाख्यां कुलोद्भवाम् ।
कन्यकां वरयेद् रूपवतीमव्यङ्गविग्रहाम् ॥
अपुत्रा ह्यक्रिया त्याज्या निरछेदा रोमदीर्घिका ।
दुर्भगा त्वथापस्मारिकुष्ठिकृत्याकुलाः स्त्रियः ॥
[6]सुबन्धुभिः सुविद्वद्भिर्विचार्यैतान् पुनः पुनः ।
सम्यगालोच्य यत्नेन कुलवृद्धैः सुसंयतैः ॥

एवं विंशतिकूटान् निरकम्पपरिज्ञातृज्योतिषज्ञैः स्वाप्तजनैः सम्यक्समर्चितैः कुलवृद्धैश्च सह सम्यक् विचार्य सम्यगालोचितवाक्यं निश्चित्य ततोऽन्तर्लक्षणज्ञानार्थं निमित्तदर्शनं कर्तव्यमिति । प्रपा. ३२४

## चतुर्विंशतिमतम्

कन्याया विवाहानुकूलानि लक्षणानि

[7]समावर्त्य सवर्णां तु लक्ष्मण्यां स्त्रियमुद्वहेत् ॥

( १ ) गृक. ३० ; गृर. २७ वाचाटां ( वाचालां ) .

( २ ) प्रपा. ३०३ ; विपा. ६७७ ; मान. १९८ .

( ३ ) प्रपा. ३१५ .

( ४ ) निप. २७७ .

( ५ ) ज्योनि. १३६ .

( ६ ) प्रपा. ३२४ .

( ७ ) चम. ६५, ८५ ९१ .

कुले महति संभूतां लक्षणैश्च समन्विताम् ।
ब्राह्मेण तु विवाहेन शीलरूपसमन्विताम् ॥

## स्मृतिसंग्रहः

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

मनोऽनुकूलं प्रथमं प्रसिद्धं
लब्ध्वा तु पश्चाद्दश संपदश्च ।
ततो निमित्तं शकुनादिभिश्च
संचिन्त्य पश्चाद्वर उद्वहेत्ताम् ॥

तस्मादाभ्यन्तरलक्षणज्ञानार्थं निमित्तं पश्येत् । प्रपा. ३२४

## मत्स्यसूक्तमहातन्त्रे

मातृनाम्नी कन्या विवाहे वर्ज्या

मातुर्यन्नाम गुह्यं स्यात्सुप्रसिद्धमथापि वा ।
तन्नाम्नी या भवेत्कन्या मातृनाम्नीं प्रचक्षते ॥
प्रमादाद्यदि गृह्णीयात्प्रायश्चित्तं समाचरेत् ।
ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्जयेत् ॥

## कारिकानिबन्धे ज्योतिःसागरे च

कन्याया विवाहे वर्ज्यानि ग्राह्याणि च नामानि

भुजगविहङ्गमभीषणपादपनाम्नी लकाररेफान्ता ।
ऋक्षनदीनदसंज्ञा न विवाह्या कन्यका सद्भिः ॥
धन्या पर्वतपुष्पाख्या पुष्पनाम्नी च कन्यका ।
अतिदीर्घा च कपिला वर्ज्या कृष्णाऽतिरोमशा ॥
ठान्तं भीषणमाख्यातं नद्याप्यं वारुणं नदः ।
पक्षिद्वीशं तरुर्मूलं सार्पाश्लेषार्क्षकं मघा ॥
इति केचिन्मतं प्रोक्तं परैः प्रोक्तमथोच्यते ।
भुजङ्गादिप्रसिद्धार्थनाम्नीं कन्यां विवर्जयेत् ॥

अत्र अन्तशब्देनोपान्तो लक्षितः । ज्योनि. १३६

(१) संप्र. ७०४ समन्विताम् ( गुणान्विताम् ) उत्त. ; चम. ९३ ; बाल. १।५३ पृ. १९६ शीलरूप ( रूपशील ) उत्त.

(२) प्रपा. ३२४ ; विपा. ७४५ ( मनोऽनुकूले प्रथमं प्रसिद्धे लब्ध्वा तु पश्चादथ संपदश्च । ततो निमित्ते शकुनादिनिश्चयं संचिन्त्य पश्चाद्वर उद्वहेत्ताम् ॥ ).

(३) उत. ११४-११५.

(४) ज्योनि. १३६.

## स्मृतिमञ्जर्याम्

कन्याया विवाहानुकूलानि लक्षणानि

महाकुलसमुद्भूतां सर्वावयवसुन्दरीम् ।
भ्रातृयुक्तां सुशीलां च सपादामुद्वहेत्स्त्रियम् ॥

## ज्योतिःसारे

कन्याया विवाहानुकूलानि लक्षणानि

रूपं शीलं कुलं कान्तिर्वयो वित्तं सनाथता ।
यस्यां सप्त गुणा वध्वां वृणुयात्तां च बुद्धिमान् ॥

## सुप्रभेदे

कन्याया विवाहानुकूलानि लक्षणानि

सुशीलां रूपसंपन्नां कुलजां बान्धवान्विताम् ।
अमलामसगोत्रां च वधूं स स्त्रीह (?) बुद्धिमान् ।
गन्धादिभिरलंकृत्य वस्त्रं हेम च दापयेत् ॥

## हलायुधः

कन्याया विवाहे वर्ज्यानि लक्षणानि

हीनाङ्गीमतिरिक्ताङ्गीं कपिलां रोगिणीं तथा ।
अलोमामतिलोमां च वर्जयेत् केकरेक्षणाम् ॥

## राजमार्तण्डः

कन्याया विवाहे वर्ज्यानि नामानि लक्षणानि च

कुसुमसरिन्नदपर्वतनाम्नीं न लकाररेफान्ताम् ।
दुष्टरजाः पुरुषरता न विवाह्या कन्यका सद्भिः ॥

अत्र अन्तशब्देन उपान्त्यो विवक्षितः । विसौ. ५

मातृनाम्नी यदा कन्या विवाहे कुलजा हि सा ।
विप्रैर्नामान्तरं कार्यं तस्याः पित्रोरनुज्ञया ॥

इति राजमार्तण्डीयवचनं तत् वाग्दानोत्तरज्ञाने बोध्यम् । अन्यथा पूर्वोक्तनिषेधवैयर्थ्यापत्तेः । उत. ११५

(१) प्रपा. ३०६.

(२) धप्र. ५९ क्रमेण ज्योतिःसारे.

(३) सस्मृ. ५५.

(४) गृर. २७-२८.

(५) विसौ. ५.

(६) उत. ११५.

### मुहूर्तचिन्तामणिः

विवाहे वर्ज्यौ पापनक्षत्रजातौ वधूवरौ तदपवादश्च

श्वश्रूविनाशमहिजौ सुतरां विधत्तः
कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च ।
ज्येष्ठाभजाततनया स्वधवाग्रजं च
शक्राग्निजा भवति देवरनाशकर्त्री ॥

प्रसङ्गात् मूलादिदुष्टनक्षत्रोत्पन्नयोर्वधूवरयोः श्वशुरादिपीडकत्वमाह – श्वश्रूविनाशमिति । अहिजौ आश्लेषोत्पन्नौ कन्यासुतौ श्वश्र्वाः साक्षाद्भर्तुर्मातुर्विनाशं विधत्तः कुरुतः । तथा निर्ऋतिजौ मूलोत्पन्नौ कन्यासुतौ श्वशुरं हतो मारयतः । ज्येष्ठानक्षत्रोत्पन्ना कन्या स्वधवाग्रजं भर्तुर्ज्येष्ठभ्रातरं हन्ति । शक्राग्निजा विशाखानक्षत्रोत्पन्ना कन्या देवरस्य भर्तुः कनिष्ठबन्धोर्नाशकर्त्री भवति ।
पीटी.

द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा ।
मूलान्त्यपादसार्पाद्यपादजातौ तयोः शुभौ ॥

विशाखामूलाश्लेषोत्पन्नप्रोक्तदोषापवादमाह – द्वीशेति । द्वीशं विशाखा । अन्यत् पूर्वार्धे स्पष्टमेव । मूलेति । तयोः श्वशुरश्वश्र्वोः । मूलचतुर्थचरणोत्पन्नौ तौ कन्यासुतौ श्वशुरसौख्यदौ । आश्लेषाद्यचरणोत्पन्नौ कन्यासुतौ श्वश्रूसौख्यदौ ।
पीटी.

### नृसिंहप्रसादे

विवाहे वर्ज्यौ पापनक्षत्रजातौ वधूवरौ तदपवादश्च

धवाग्रजं हन्ति सुरेन्द्रजाता
तथैव पत्न्या भगिनीं पुमांश्च ।
द्विदैवजा देवरमाशु हन्याद्
भार्यानुजामाशु निहन्ति सूनुः ॥
कन्यका देवरं हन्ति विशाखान्त्यसमुद्भवा ।
आद्यपादत्रये नैव आद्यभे तु पुमान् भवेत् ॥

(१) मुचि. ६।१९–२०.

(२) गमा. १६६ धवाग्रजं (धवाग्रजा) निहन्ति (हि हन्ति); सिन्धु. ८५४ भार्या (भर्या).

(३) गमा. १६६; सिन्धु. ८५४ मिश्र (मिश्रा) शान्त्यो (शान्तो).

न हन्याद्देवरं कन्या तुलामिश्रद्विदैवजा ।
तद्दक्षान्त्योद्भवा वर्ज्या दुष्टा वृश्चिकपुच्छवत् ॥

### कश्यपपटले

विवाहे वर्ज्यौ पापनक्षत्रजातौ वधूवरौ

पत्न्यग्रजामग्रजं वा हन्ति ज्येष्ठर्क्षजः पुमान् ।
तथा भार्यास्वसारं वा शालकं वा द्विदैवजः ॥
व्यालजा श्वशुरं हन्ति मूलजा स्त्री तथा नरः ।
हन्ति सार्पोद्भवा कन्या पुमांश्च श्वशुरं स्त्रियम् ॥
मूलान्त्यपादजौ श्रेष्ठौ तथाऽऽश्लेषाद्यपादजौ ।
द्वीशान्त्यपादजौ दुष्टौ तद्वज्ज्येष्ठान्त्यपादजौ ॥

### ज्योतिःसंग्रहे

विवाहे वर्ज्यौ पापनक्षत्रजातौ वधूवरौ तदपवादश्च

ऊर्ध्वाया: पितरं हन्ति मातरं च यथाक्रमम् ।
यदि वा पादसंख्याद्यैर्मूलसार्पोद्भवः पुमान् ॥

मूलजां नोद्वहेज्जीवत्पितृको व्यालजां तथा ।
कन्यां जीवन्मातृकस्तु न निषेधोऽयमन्यथा ॥

### जातकोत्तमे

पापनक्षत्रजन्मदोषापवादः

मूलसार्पोद्भवं दौष्ट्यं न स्यान्मित्रादयो ग्रहाः ।
उच्चस्थानस्थिताः सौम्यदृष्टाश्च बलिनो यदि ॥

भावे भावाधिपे चैव चन्द्रे च बलशालिनि ।
उक्तदोषा विनश्यन्ति शुभग्रहयुतेक्षिते ॥

(१) गमा. १६६ नृसिंहप्रसादे; सिन्धु. ८५४ नृसिंहप्रसादे; ज्योनि. १५९ वा शालकं वा (च शालकं च); संग. १९२ वा श्वा (च श्वा).

(२) ज्योनि. १६०.

(३) ज्योनि. १६०; संग. १९२ द्वीशान्त्य (तद्वच्च) ज्योतिर्निबन्धे.

(४) ज्योनि. १६०.

(५) ज्योनि. १६०.

(६) ज्योनि. १६०; संग. १९१ पूर्वार्धे (भावे भावाधिपे चैव चन्द्रे च बलशालिनि ।) ज्योतिर्निबन्धे.

## शाकलकारिका

कन्याया विवाहानुकूलानि लक्षणानि

[1]कुलजां सुमुखीं स्वङ्गीं सुनासां च मनोहराम् ।
सुनेत्रां सुभगां कन्यां निरीक्ष्य वरयेद्बुधः ॥

## शौनककारिकाः

कन्याया विवाहानुकूलानि लक्षणानि

[2]लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम् ।
बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम् ।
आत्मनोऽवरवर्णां च विवहेद्विधिपूर्वकम् ॥

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

[3]अथाष्टपिण्डग्रहणविधानेन विचक्षणः ।
लक्षणानि परीक्षेत ततः कन्यां यथातथम् ॥
[4]क्षेत्रादुभयतःसस्याद्गोष्ठाद्वेदितलादपि ।
अशोष्याच्च ह्रदान् द्यूतस्थानादथ चतुष्पथात् ॥
[5]ईरिणाच्च श्मशानाच्च गृहीत्वाऽष्टौ मृदः पृथक् ।
ताभिर्मृद्भिर्विधायाष्टौ पिण्डानन्योन्यतः समान् ॥
[6]तालपत्रैकदेशेषु मृदां संज्ञाः पृथक्पृथक् ।
लिखित्वा तांश्च पिण्डानामन्तर्न्यस्य यथाक्रमम् ॥
[7]शुद्धपात्रे निधायैतान् गन्धाद्यैरर्चयेदथ ।
ऋतमग्रे प्रथमं जज्ञ इत्याद्यां वैदिकीमृचम् ॥
[8]ईश्यतामिति पर्यन्तामुक्त्वा पिण्डाभिमन्त्रणम् ।
कृत्वाऽग्रपाणिना ध्यायन्स्वामीष्टां देवतां वरः ॥
[1]एषामेकं गृहाणेति कुमारीं प्रत्युदीरयेत् ।
तं पिण्डमेकं गृहीयात्साऽपि स्वाभिमतं ततः ॥
[2]गृहीतपिण्डमध्यस्थलेखवाचनपूर्वकम् ।
गृह्योक्तं तत्फलं बुद्ध्वा ततः कुर्याद्यथारुचि ॥
[3]पिण्डेष्वेषु प्रथमतश्चत्वारः शुभसूचकाः ।
कन्यायाः परतश्चान्ये चत्वारोऽशुभसूचकाः ॥
[4]क्षेत्रमृद्ग्रहणे तस्यां बह्वन्ना संततिर्भवेत् ।
इति विद्यात्तथा गोष्ठमृद्ग्रहे तु गवादिभिः ॥
[5]पशुभिः सुसमृद्धिः स्यात्संततिः स्वयमेव वा ।
ब्रह्मवर्चससंपन्ना वेदीमृद्ग्रहणे भवेत् ॥
[6]सर्वसंपत्समृद्धा स्यादशोष्यहृदमृद्ग्रहे ।
द्यूतमृद्ग्रहणे धूर्ता स्याच्चतुष्पथमृद्ग्रहे ॥
[7]उद्वाहाद्विरमत्येषा व्यभिचाररता भवेत् ।
दारिद्र्योत्पादिनी भर्तुर्भवेदिरिणमृद्ग्रहे ॥
[8]श्मशानमृद्ग्रहे भर्तुर्मृतिहेतुर्भवेदियम् ॥

## रेणुकारिकाः

कन्याया विवाहानुकूलानि लक्षणानि

[9]एवं समावृतो धर्मसुखसंतानवृद्धये ।
कुलोत्थामनुरूपां सल्लक्षणाढ्यामथोद्वहेत ॥

---

(१) शाका. १०१ पृ. ११.
(२) शौका. १,२ पृ. ५५ ; प्रपा. ३०२; विपा. ६५५ प्रथमार्धं विना : ६७४ ; संर. ५०८.
(३) शौका. ४ पृ. ५५ ; प्रपा. ३२४ ; संप्र. ७३३.
(४) शौका. ५ पृ. ५५ ; प्रपा. ३२४ द्वेदि ( द्वेदी ); संप्र. ७३३.
(५) शौका. ६ पृ. ५५ ; प्रपा. ३२४ इरिणाच (ईरिणाच्च); संप्र. ७३४ मृद्भिः ( मृद्भी ) शेषं प्रपावत्.
(६) शौका. ७ पृ. ५५ ; प्रपा. ३२४ ; संप्र. ७३४ ताल ( निज ) तांश्च ( ताश्च ) मन्तर्न्यस्य ( मन्तर्धाय ).
(७) शौका. ८ पृ. ५५ ; प्रपा. ३२४ ; संप्र. ७३४ निधा ( विधा ) गौतिकीं ( वैदिकीं ).
(८) शौका. ९ पृ. ५५ स्वामीष्टां ( स्वमिष्टां ) ; प्रपा. ३२४ कृत्वाऽग्रपाणिना ( कृत्वाऽग्रे प्रणतिं ) ; संप्र. ७३४ पर्यन्ता ( पर्यन्त ).

(१) शौका. १० पृ. ५५ ; प्रपा. ३२४ ; संप्र. ७३४.
(२) शौका. ११ पृ. ५५ ; प्रपा. ३२४ गृहीतपिण्ड ( गृहीते पिण्ड ) लेख ( लेखा ) ; संप्र. ७३४.
(३) शौका. १२ पृ. ५५ ; प्रपा. ३२५ ; संप्र. ७३४.
(४) शौका. १३ पृ. ५५ ; प्रपा. ३२५ उत्तरार्धे (गोष्ठमृद्ग्रहणे तस्याः संसर्गः स्याद्गवादिभिः ।) ; संप्र. ७३४.
(५) शौका. १४ पृ. ५५ ; प्रपा. ३२५ ; संप्र. ७३४ सुसमृद्धिः ( सुसमृद्धा ) वेदी ( वेदि ).
(६) शौका. १५ पृ. ५५ ; प्रपा. ३२५ समृद्धा (समृद्धिः) स्याच्चतुष्पथमृद्ग्रहे ( प्रजाजिनी चतुष्पथे ) ; संप्र. ७३४ दशोष्यहृदमृद्ग्रहे ( दशोष्याद्ध हृदाद्ग्रहे ).
(७) शौका. १६ पृ. ५५–५६ उद्वाहादि ( उद्वोढा वि ) ; प्रपा. ३२५ ; संप्र. ७३४ उद्वाहाद्विरमत्येषा ( विरुद्धा विरमत्येषा ) दिरिण ( दीरिण ).
(८) शौका. १७ पृ. ५६ ; प्रपा. ३२५ ; संप्र. ७३४.
(९) रेका. २६–२७ पृ. ४८.

कन्याया विवाहे वर्ज्यानि नामानि लक्षणानि च

[1]विप्रैः सम्यक् मार्गितव्या कुमारी
पापवृक्षाह्वा( ? क्षोह्वा या ) नदीमीपणाह्वा ।
भुजङ्गधान्याङ्घ्रिपसंज्ञिता स्यात्
नराकृतिर्या कपिला च दीर्घा ॥
विवर्जनीयाः सुखमिच्छतैताः
समुद्रवाक्यादवगम्यतेऽन्यत् ॥
सद्राशिकूटादि विचिन्त्यमादा-
यष्टप्रकारं मुनिभिर्यथोक्तम् ।
द्वयोः कुमारीवरयोर्मिथोऽथ
व्यङ्गाऽधिकाङ्गां जननीसगोत्राम् ॥
त्यजेत्समानप्रवरां सगोत्रां
मातुः सपिण्डामचिकित्स्यरोगाम् ।
अजातलोम्नीं च तथाऽन्यपूर्वां
सुतेन हीनस्य सुतां सुकुष्ठाम् ॥

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

[2]कथंचित् बाह्यतो ज्ञातुं शक्यन्ते लक्षणानि वै ।
दुर्विज्ञेयान्यन्तराणि तत्रोपायमहं ब्रुवे ॥
क्षेत्रात् ह्रदादूखराद्गोष्ठभूमेः
वेद्याश्चतुर्मार्गतो द्यूतभूमेः ।
मृत्स्नां चितिस्थानतः संहरेच्च
कृत्वा पुनस्तत्पिण्डकानष्टसंख्यान् ॥
संपूज्य पिण्डान् प्रत्येकमृतमग्नेऽभिजप्य च ।
" ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् ।
यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां
यत्सत्यं तद्दृश्यताम् ॥ " इति ।
एषामेकं गृहाण त्वमिति तां पुरुषो वदेत् ॥
आदत्ते चेत्क्षेत्रपिण्डं हि कन्या
तस्यास्तोकान्यन्नयुक्तानि सन्ति ।
ह्रादं पिण्डं संपदां चेन्निधान-
मादत्ते चेदौखरं स्यादतोका ॥
गोभिर्युक्ता गोष्ठपिण्डं हि सा चेत्
वेद्याः पिण्डं ब्रह्मवर्चस्विनी स्यात् ।
चातुष्पथ्यं चेत्परिव्राजका स्यात्
द्यौतं पिण्डं द्यूतिनी पापयुक्ता ॥
आदत्ते चेत्प्रेतभूमेर्हि पिण्डं
भर्ता तस्यास्तूर्णमाप्नोति नाशम् ।
* मिश्रात्पिण्डात् मिश्रितं चेत्फलं स्यात्
दृष्टं सूत्रे बह्वृचानां तु गृह्ये ॥

(१) रेका. ५–८ पृ. ४९.
(२) रेका. २१–२७ पृ. ५०–५१.

## गृह्यासंग्रहः

कन्याया दुर्विज्ञेयलक्षणपरीक्षाविधिः

[1]वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः ।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती ॥
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया ।
श्मशाने म्रियते भर्ता वन्ध्या भवति चोषरे ॥
नवमे सर्व एवैते कन्यायाः परिगृह्यन्ते ॥

विवाहे स्त्रीलक्षणविदोऽलाभे नव पिण्डान् कृत्वा स्त्रीलक्षणं परीक्षितव्यमित्याचार्येणोक्तम् । तत्र, वेदिपिण्डादिग्रहणे फलार्थवादमाह— वेदिपिण्डात् गृहीतात् क्रियावती भवति । सीतापिण्डात् गृहीतात् कृषिः फलते, कृषिभूयिष्ठा भवतीत्यर्थः । सीता कृष्टक्षेत्रम् । ह्रदपिण्डे गृहीते अक्षोभणीया ज्ञातव्या । गोष्ठपिण्डे गृहीते गोमती भवति । चतुष्पथपिण्डे गृहीते प्रकीर्णा विक्षिप्ता इतश्चेतश्च गमनशीलेत्येतत् । द्यूतस्थानपिण्डे गृहीते कलहप्रिया भवति । कलिः कलहः । श्मशानपिण्डे गृहीते भर्ता म्रियते, विधवा भवतीत्यर्थः । ऊषरपिण्डे गृहीते वन्ध्या भवति । नवमपिण्डे गृहीते कन्यायाः सर्व एवैते पूर्वोक्ताः फलवादाः परिगृह्यन्ते । किं कारणम् ? नवमस्य सर्वघटितत्वात् । तस्मात् नवमं पिण्डमाददानामिच्छयोपयच्छेद्वा, न वोपयच्छेदित्यभिप्रायः । अत एव गोभिलेनोक्तम् —'संभार्यमपि त्वेके ' इति । शाखान्तरेऽप्येवमेव प्रायः फलवादाः पठ्यन्ते । परन्तु तत्र क्रियावत्त्वादयोऽपत्यगताः श्रूयन्ते । तथा चोक्तम्— ' गृह्णाना वेदिपिण्डं च प्रसूते याज्ञिकान् सुतान् । सीतापिण्डं तु गृह्णाना सुतान् सूते कृषीवलान् ॥

* मदुपलब्धयोर्बह्वृचगृह्ययोराश्वलायनशौनकीयग्रन्थयो- मिश्रपिण्डो नास्ति ।

(१) गृसं. २।२१–२२.

सर्वकामसमृद्धांश्च तृतीयस्य परिग्रहात् । गोष्ठपिण्डग्रहाच्चापि गोमिनः सुखिनस्तथा ॥ इतश्चेतश्च गन्तारः पञ्चमेनास्थिताः सुताः । षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः ॥ श्मशानपिण्डग्रहणाद्विधवा जायते ध्रुवम् । वन्ध्या वा विधवा वा स्यादष्टमग्रहणादपि ॥ मिश्रमेतद्भवेत्सर्वं यतः पूर्वोदितं फलम् । नवमस्य ग्रहस्तस्माच्छुभो वा यदि वाऽशुभः ॥' इति । गृसंभा.

## अनन्तपाठककारिकाः

विवाहे कन्याया वर्ज्यानि लक्षणानि

नो कार्या सुमषीमुखी
पृथुललज्जिह्वोचनासा वधूः
लम्बोष्ठी विकटोन्नत-
द्विजधरी पिङ्गाल्पनेत्राञ्चला ।
नित्यं निष्ठुरघर्घरा-
नृतरवा मालिन्यदेर्घ्योलसा
दृष्टा मन्मथपीडितस्य
तरसा त्याज्याऽपि थूत्कृतपणा ॥
शुष्काङ्गी पुरुषाकृति-
र्गदपरिक्लिष्टा सरोमा परं
ह्रस्वाऽभ्रातृमती वरा-
धिकसमा व्यङ्गाऽधिकाङ्गा शठा ।
दानाद्वा पुरुषान्तरेण
यत्तो भुक्ता सगोत्रा तथा
स्यात्तुल्यप्रवरा च या तु
जननीगोत्रा सपिण्डा तथा ॥
हीने कुले समुत्पन्ना गुणरूपवती परम् ।
उत्तमेऽपि न कर्तव्या कन्या रोगादिदूषिते ॥

कन्याया विवाहानुकूलानि लक्षणानि

कार्या पूर्णकचा कलानिधिमुखी
स्यात् सूक्ष्मवालाऽवला
बिम्बोष्ठी नवपुण्डरीकनयना
हीनाधदन्तावलिः ।
पुष्टा मञ्जुलभाषिणी
कृशकटिस्थाना सुचिह्नाङ्किते-
र्युक्ता पाणिपदैर्विरागि-
पुरुषस्यान्तःप्रभेत्री क्षणात् ॥
विद्यासदाचारविचारकीर्ति-
मत्कुलप्रसूता चतुरा सुधर्मिणी ।
विलासिनी दर्शनमात्रतो हृदि
द्रष्टुश्चमत्कारकरीक्षणैः परम् ॥

(१) संग. १८४-१८५.

# पुनर्भ्वादीनां संस्कारविचारः दत्तापहारविचारश्च

## गौतमः

वाग्दत्ताया उदकदत्तायाश्च वरमरणे विवाहार्हता

**अद्भिर्वाचा च दत्ताया म्रियेतादौ वरो यदि ।**
**अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥**

वाग्दत्ताया अदानमधर्मसंयुक्ताय

**प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् ॥**

( १ ) अधर्मोऽत्र दानानर्हताप्रयोजक इति विवादरत्नाकरः । उत.१२८

( २ ) दुष्टेनापि यदि पाणिग्रहणं सप्तपद्यन्तं कृतं तदनन्तरं ततो नैव ग्राह्या । संर.५०३

## बौधायनः

सप्तविधा पुनर्भूः

**वाग्दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः ॥**

( १ ) वाग्दत्ता पुनःसंस्कारकर्मणि पुनर्भूर्भवति । स्मृच.७५

( २ ) अत्र वाग्दत्तामनोदत्तयोर्निषेधः पूर्वस्य निर्दोषत्वे बोध्यम् । अत एव नारदः– 'दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम् । अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥' इति तत्रैव दण्डं विधत्ते । दुष्टे तु पूर्ववरे वाग्दत्ताऽपि वरान्तराय देया । चम.८७

( ३ ) प्रथमवरस्य पातित्यादिबलवद्दोषनिर्णये तु आद्यानां तिसृणामन्येन परिणयन भवति ।

संकौ. १७२

अपहृताया मन्त्रसंस्कारपूर्वमन्यत्र विवाहार्हता

**बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।**
**अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥**

( १ ) प्रहृता दूषिता, *प्रशब्दसामर्थ्यात्* । क्षात्राद्य विधेरन्यत्रैव द्रष्टव्यं, तत्र दूषणासंभवात् । यदि मन्त्रैर्न संस्कृता ततोऽन्यस्मै विधिवत् प्रायश्चित्तं कारयित्वा देया । कृतप्रायश्चित्ता च यथा कन्या तथैव सेति मन्तव्यम् । विश्व.१।६९

( २ ) एतच्च मन्त्रसंस्कारात् पूर्वं कन्याप्रत्याहरणं, कुलशीलादि( १ मद् )वरान्तरप्राप्तौ बोद्धव्यम् ।

+ गृक. ९५

( ३ ) बलादिति छलादेरुपलक्षणम् ।

* गभा.१००

---

( १ ) मभा. १४।३४ .

( २ ) गौध. ५।२४ सयुक्ताय ( संयुक्ते ) ; अप. १।६५ दद्यात् ( देयात् ) श्रुत्याप्यध ( श्रुत्याध ) ; मभा. गौधवत्, टीकायां तु चतुर्थ्यन्तः पाठः ; गौमि. ५।२१ ; स्मृच. ८२ ; पमा. ४९० ; उत. १२८ ; प्रर. १०१ प्यधर्म ( प्यधर्मेण ) स्मृति ; संप्र. ७३८ ; मुक्ता. ४४ गौधवत् : १३७; संम.६७ ; आन. १७६ ; बाल. १।६५ ; संर. ५०३ .

( ३ ) गृक. ३१ नीता ( आनीता ) ( चेति० ) स्मृतिः ; स्मृच. ७५ पुनर्भूः + ( भवति ) ; गृर. २८ अग्निं परि ( अग्निपरि ) सप्तम पदं नीता ( सप्तमपदमानीता ) चेति सप्तविधा ( च सप्तधा ) स्मृतिः ; पमा. ४६४ ; संप्र. ७३५–७३६ वाग्दत्ता ( वाचा दत्ता ) ; चम. ८७ ; मुक्ता. १३७ सप्तम ( सप्तम ) ; विपा. ९८६ सप्तम ( सप्तम ) शेषं संप्रवत् ; संकौ. १७२ ( सप्तविधा पुनर्भूः० ) शेषं संप्रवत् ; बाल. १।५२ पृ. १७० ; संग. १६८ संप्रवत् ; कृभ. ११३२ सप्तविधा पुनर्भूः ( सप्त पुनर्भुवः ) .

+ गृर. गृकवत् ।

* प्रर., चम., बाल. गभावत् ।

( १ ) बौध. ४।१।१७ बलादपहृता ( बलाच्चेत्प्रहृता ) ; विश्व. १।६९ पृ. ७४ बौधवत् , निर्देशमात्रम् ; गृक. ९५ बौधवत् , वसिष्ठबौधायनौ ; गृर. ७८ बौधवत् , वसिष्ठबौधायनौ ; पमा. ४८९–४९० वसिष्ठबौधायनौ , मपा. ३४४ वसिष्ठबौधायनाभ्यामित्युक्तम् ; गभा. १०० ; प्रर. ९९ ; संप्र. ७३८ : ८६१–८६२ मन्त्रैर्यदि (यदि मन्त्रै) वसिष्ठबौधायनौ ; चम. ११४ वसिष्ठबौधायनौ; मिन्धु. ११२१ वसिष्ठबौधायनौ ; शूक. १०९ वसिष्ठबौधायनौ ; विपा. ७६० मन्त्रैर्यदि ( यदि मन्त्रैः ) वसिष्ठबौधायनौ ; बाल. १।६१ पृ. २०२ वसिष्ठबौधायनौ ; संग. २५६ विश्ववत्, वसिष्ठबौधायनौ .

(४) प्रहरणं मैथुनार्थमाकर्षणं, न तु क्षतयोनित्वापादनं, तथा च सति संस्कार एव नास्ति। बौवि.

अक्षतयोन्या मृतभर्तृकायाः पुनर्विवाहार्हता

[१]निसृष्टायां हुते वाऽपि यस्यै भर्ता म्रियेत सः।
सा चेदक्षतयोनिः स्याद्गतप्रत्यागता सती।
पौनर्भवेन विधिना पुनःसंस्कारमर्हति॥

(१) अपि निसृष्टायां, अपि हुते, न परिणीताया-मित्यर्थः। विश्व.१।६९

(२) निसृष्टा उदकपूर्वं प्रत्ता, हुते वाऽपि होमेऽपि निर्वृत्ते भर्ता वोढा यदि म्रियते, सा चेत् भार्या अक्षतयोनिः अस्पृष्टमैथुना स्यात्, गतप्रत्यागता *। बौवि.

## वसिष्ठः

वाग्दत्ताया उदकदत्तायाश्च वरमरणे विवाहार्हता

[२]अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा॥

(१) आदाविति वचनात् विवाहसंनिधौ वाग्दत्ता अपि अकन्येति ज्ञायते। विश्व. १।६९

(२) न च मन्त्रोपनीता मन्त्रवता विवाहकर्मणोपनीता प्राप्ता संस्कृता न भवतीत्यर्थः। अप.१।६५

(३) पितुरेव न प्रतिग्रहीतुरित्यर्थः। स्मृच ८२

(४) कन्यायाः सकृद्दानं यत् मन्वादिभिरुक्तं तत् पाणिग्रहान्तसंस्कारवत्कन्याविषयम्। गृर.५१

(५) सा पितुरेव न प्रतिग्रहीतुरित्यर्थः। सा च तद्देवराय प्रदेया, तदभावे तद्गोत्राय, तदभावे अन्यस्मै। इदमपि लोकविद्विष्टत्वात् देशाचारानुसारेण भवति। * मपा.१५२

(६) मन्त्रोपनयनं पाणिग्रहणादिकं विना वाचा दानमिवाद्भिर्दानमपि न भार्यात्वोत्पादकमित्यर्थः। 'नोदकेन न वा वाचा कन्यायाः पतिरिष्यते। पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे॥' इति वाक्यान्तराच्च। तथा च सप्तपदीपरिक्रमणात् प्राक् वरमरणे विधवात्वं नास्तीति भावः। कृम.११२८-११२९

सप्तपद्याः पूर्वं वरमरणादौ कन्याया विवाहार्हता

अथ दोषे तु संप्राप्ते यावत्सप्तपदीविधेः।
मरणादौ समुत्पन्ने देयाऽन्यस्मै न दोषभाक्॥

अपहृताया मन्त्रसंस्कारपूर्वमन्यत्र विवाहार्हता

[२]बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा॥

अपहारोऽत्र प्रतिग्रहादिसप्तविधस्वत्वोपायानामुपलक्षणम्। † संप्र.५८३

---

* अत्रत्यो ग्रन्थस्त्रुटित इति भाति।

(१) बौध. ४।१।१८; विश्व. १।६९ पृ. ७४ प्रथमार्धमात्रम्; मुक्ता. १३९ यस्यै (यस्या).

(२) वस्मृ. १७।६४; विश्व. १।६९ पृ. ७४ दत्तायां (दत्ता या); अप. १।५२ पृ. ७९,१।६५; गृक. ६०-६१ म्रियेतादौ (म्रियेतोर्ध्वं); स्मृच. ८२; गृर. ५१ गृकवत्; पमा. ४९२ म्रियेतादौ (म्रियते वा); मपा. १५२ गृकवत्; प्रपा. ३४८ अद्भिर्वाचा च (अद्भिश्च वाचा) मन्त्रोपनीता स्यात् (तौ दम्पती स्यातां); मर.२० न च मन्त्रोप (न चेयमुप); गभा. १०० गृकवत् (=); उत. १२९ च दत्तायां म्रियेतादौ (प्रदत्तायां म्रियेतोर्ध्वं); प्रर. १०० प्रपावत्; संप्र. ७३९ दत्तायां (दत्तायाः); चम. ८९ संप्रवत्; मुक्ता १३८ विश्ववत्; संम. ६७; सिन्धु. ११२८ गृकवत्; विपा. ७६३ प्रपावत्: ७६६ स्यात् (सा) रेव सा (रेव च) अत्रिः; संकौ. २०७ गृकवत्; प्रका. ३६३ प्रपावत्; पुम. ४५३ गृकवत्; संग. ३४७ गृकवत्; संर. ५०४ म्रियेतादौ वरो यदि (म्रियते यदि वै वरः).

* संर. मपावत्।

† व्याख्यानान्तराणि बौधायने (संका. पृ. ५५९) द्रष्टव्यानि।

(१) संग. ३४७.

(२) वस्मृ. १७।६५ बलादपहृता (बलाच्चेत्प्रहृता); विश्व. १।६९ (बलाच्चेत्प्रहृता कन्या) एतावदेव; अप. १।५२ पृ. ७९ मन्त्रैर्यदि (मन्त्रैरपि); गृक. ९५ वस्मृवत्, वसिष्ठबौधायनौ; गृर. ७८ वस्मृवत्, वसिष्ठबौधायनौ; पमा. ४८९-४९० वसिष्ठबौधायनौ; मपा. १५२ बलादप (बलाचप) यमवसिष्ठौ; प्रपा. ३४४ वसिष्ठबौधायनौ; संप्र. ५८३ मन्त्रैर्यदि (यदि मन्त्रैः): ७३८ वसिष्ठबौधायनौ: ८६१-८६२ मन्त्रैर्यदि (यदि मन्त्रैः) वसिष्ठबौधायनौ; चम. ११४ वसिष्ठबौधायनौ; मुक्ता. १४५ बलादपहृता (बलनश्चेद्धृता); संम. ६४; सिन्धु. ११२१ वसिष्ठबौधायनौ; शूक. १०९ वसिष्ठबौधायनौ; विपा. ७६० मन्त्रैर्यदि (यदि मन्त्रैः) वसिष्ठबौधायनौ; संकौ. २०६; बाल. १।६१ पृ. २०२ वसिष्ठबौधायनौ; संग. २५६ विपावत्, वसिष्ठबौधायनौ: ३४७; संर. ५०४ यमवसिष्ठौ.

अक्षतयोन्या मृतभर्तृकायाः पुनर्विवाहार्हता

पाणिग्राहे मृते बाला केवलं मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति ॥

अस्यार्थः— ग्रामधर्मेण पूर्वमपि विवाहात् पाणिग्रहणम् । तस्मिन् पाणिग्राहे मृते कन्याहुतेर्वा प्राक् पाणिग्रहणात्, यदि अक्षतयोनिः, तथाप्यन्येन भर्त्रा पुनर्विवाहसंस्कारमर्हतीति । सर्वथा परिणीतायाः पुनः परिणयनाभावः । तदुक्तम्— 'न विवाहविधावुक्तं विधवावेदनं क्वचित्' इति । विश्व.१।६९ पृ.७४

दत्तशुल्कायाः कन्याया वरमरणे विवाहार्हता

कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥

( १ ) यत्तु वसिष्ठः 'कन्यायाम्' इति, तत् युगान्तरीयक्षेत्रजोत्पत्त्यनुमतिविषयम् । संकौ. २०७

( २ ) कन्या चेद्देवरमनुमन्यते तदा तस्मै देया, यदि तं नानुमन्यते तदाऽन्यस्मै देया इत्यर्थः । कृभ.११३१

पुनर्भूलक्षणम्

या कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति ॥

या च क्लीबं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति ॥

( १ ) वस्मृ. १७।६६ ; विश्व. १।६१ द्वितीयतृतीयपादौ : १।६९ पृ. ७४ (=) बाला ( कन्या ) पू. ; स्मृच. ८२ पाणिग्राहे मृते बाला ( पाणिग्रहे मृते कन्या ) ; संप्र. ७४१ मृते बाला ( कृते कन्या ) ; मुक्ता. १२९ समवत् ; संम. ६८ पाणिग्राहे मृते बाला ( पाणिग्रहे कृते कन्या ) ; संर. ५०६ संमवत्.

( २ ) उत. १२९ ; सिन्धु. ११३१ मनुवसिष्ठौ ; संकौ. २०७ म्रियते ( म्रियेत ) ; पुम. ४५४ संकौवत्, मनुवसिष्ठौ ; संर. ५०६ संकौवत्, मनुवसिष्ठौ.

( ३ ) वस्मृ. १७।२० ; अप. १।६७ ( पुनर्भूर्या कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा पुनस्तस्यैव कुटुम्बमाविशति सा पुनर्भूर्भवति । ) ; संप्र. ७४२ ( पुनर्भूर्या कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा पुनस्तस्यैव गृहमाविशति सा पुनर्भूर्भवति । ).

( ४ ) वस्मृ. १७।२१ ; अप. १।६७ या च क्लीबं ( या वा क्लीबं ) वा भर्तारं ( भर्ता ).

तस्मात् पुनःसंस्कृतत्वं पुनर्भूलक्षणम् । अप.१।६७

विवाहे दत्तायाः कन्याया अन्येन पुनर्विवाहः पूर्ववरस्य दोषविशेषोपलब्धौ

कुलशीलविहीनस्य षण्ढादेः पतितस्य च ।
अपस्मारिविधर्मस्थरोगिणां वेषधारिणाम् ।
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च ॥

( १ ) एतच्च सप्तमपदात्प्रागवगन्तव्यम् । मर. २०

( २ ) अत्र सगोत्रपदं सपिण्डाया अप्युपलक्षणं, तुल्यन्यायत्वात् । संप्र. ७५९

( ३ ) आद्यस्य दोषवत्त्वे परस्य गुणवत्त्वे च परस्मै देया । पश्चात् वाग्दानोत्तरं पतितस्येत्यर्थः । संकौ. २०७

## विष्णुः

विवाहे दत्तायाः कन्याया वरदोषाभावे अन्यप्रदाने, दोषमनुक्त्वा सदोषकन्याप्रदाने, मिथ्यादूषणे च दण्डः

यः कन्यां पूर्वदत्तामन्यस्मै दद्यात्स चौरवच्छास्यः ॥
वरदोषं विना ॥
दोषमनाख्याय कन्यां प्रयच्छंश्च ॥
तां च बिभृयात् ॥
अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसम् ॥

## शङ्खलिखितौ

नष्टवरायाः पुनर्विवाहः, शुल्कदातुर्दीर्घकालवियोगे च

वरयित्वा वरः कश्चित् प्रणश्येत् पुरुषो यदा ।
रक्तागमान् त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ॥

( १ ) मपा. १५१ षण्ढादेः ( षण्ढादि ) धर्मस्थ ( धर्मध्न ) सगो ( सगो ) ; मर. २० मपावत् ; गभा. १०० षण्ढादेः ( षण्ढादि ) धर्मस्थ ( धर्मध्न ) ; उत. १२८ षण्ढादेः ( षण्ढादि ) धर्मस्थ ( धर्मध्न ) ; संप्र. ७५९ गभावत् ; मुक्ता. ११८ धर्मस्थ ( कर्मस्थ ) कादयाः ; सिन्धु. ११३२ षण्ढादेः ( षण्ढादि ) धर्मस्थ ( धर्मस्य ) ; संकौ. २०७ सिन्धुवत् ; भान. १०९ उत्तं मुक्तावत् ; संग. १४७ गभावत् ; पुम. ४५४ षण्ढादेः ( षण्ढादि ) ; संर. ५०५ सिन्धुवत्.

( २ ) विस्मृ. ५।१६०, १६१.

( ३ ) विस्मृ. ५।८५-४७.

( ४ ) समुच्चय. ११९.

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥
अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम् ।
अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छया ॥

## महाभारतम्

दत्तशुल्काऽपि कन्या सप्तपद्याः पूर्वमभीष्टायान्यवराय
दानार्हा, सप्तपद्या एव विवाहसिद्धिः

युधिष्ठिर उवाच—
शुल्कमन्येन दत्तं स्याद्ददानीत्याह चापरः ।
बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् ॥
पाणिग्रहीता चान्यः स्यात्कस्य भार्या पितामह ।
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ॥
भीष्म उवाच—
यत्किञ्चित्कर्म मानुष्यं संस्थानाय प्रदृश्यते ।
मन्त्रवन्मन्त्रितं तस्य मृषावादस्तु पातकः ॥
भार्याऽपत्यर्त्विगाचार्याः शिष्योपाध्याय एव च ।
मृषोक्ते दण्डमर्हन्ति नेत्याहुरपरे जनाः ॥
न ह्यकामेन संवासं मनुरेवं प्रशंसति ।
अयशस्यमधर्म्यं च यन्मृषा धर्मकोपनम् ॥
नैकान्तो दोष एकस्मिंस्तदा केनोपपद्यते ।
धर्मतो यां प्रयच्छन्ति यां च क्रीणन्ति भारत ॥
बन्धुभिः समनुज्ञाते मन्त्रहोमौ प्रयोजयेत् ।
तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथंचन ॥
यस्त्वत्र मन्त्रसमयो भार्यापत्योर्मिथः कृतः ।
तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः ॥
देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात् ।
स दैवीं मानुषीं वाचमनृतां पर्युदस्यति ॥
युधिष्ठिर उवाच—
कन्यायां प्राप्तशुल्कायां ज्यायांश्चेदाव्रजेद्वरः ।
धर्मकामार्थसंपन्नो वाच्यमत्रानृतं न वा ॥
तस्मिन्नुभयतोदोषे कुर्वञ्छ्रेयः समाचरेत् ।
अयं नः सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ॥
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तदेतत्सर्वमाचक्ष्व नहि तृप्यामि कथ्यताम् ॥

भीष्म उवाच—
नैव निष्ठाकरं शुल्कं ज्ञात्वाऽऽसीत्तेन नाहृतम् ।
न हि शुल्कपराः सन्तः कन्यां ददति कर्हिचित् ॥
अन्यैर्गुणैरुपेतं तु शुल्कं याचन्ति बान्धवाः ।
अलंकृत्वा वहस्वेति यो दद्यादनुकूलतः ॥
यच्च तां च ददत्येवं न शुल्कं विक्रयो न सः ।
प्रतिगृह्य भवेद्देयमेष धर्मः सनातनः ॥
दास्यामि भवते कन्यामिति पूर्वं न भाषितम् ।
ये चाहुर्ये च नाहुर्ये ये चावश्यं वदन्त्युत ॥
तस्मादा ग्रहणात्पाणेर्याचयन्ति परस्परम् ।
कन्यावरः पुरा दत्तो मरुद्भिरिति नः श्रुतम् ॥
नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदितम् ।
तन्मूलं काममूलस्य प्रजनस्येति मे मतिः ॥
समीक्ष्य च बहून्दोषान्संवासाद्विद्धि पाणयोः ।
यथा निष्ठाकरं शुल्कं न जात्वासीत्तथा शृणु ॥
अहं विचित्रवीर्यस्य द्वे कन्ये समुदावहम् ।
जित्वा च मागधान् सर्वान् काशीनथ च कोसलान् ॥
गृहीतपाणिरेकाऽऽसीत्प्राप्तशुल्का पराऽभवत् ।
कन्या गृहीता तत्रैव विसर्ज्या इति मे पिता ॥
अब्रवीदितरां कन्यामावहेति स कौरवः ।
अप्यन्याननुपप्रच्छ शङ्कमानः पितुर्वचः ॥
अतीव ह्यस्य धर्मेच्छा पितुर्मेऽभ्यधिकाऽभवत् ।
ततोऽहमब्रुवं राजन्नाचारेप्सुरिदं वचः ॥
आचारं तत्त्वतो वेतुमिच्छामि च पुनः पुनः ।
ततो मयैवमुक्ते तु वाक्ये धर्मभृतां वरः ॥
पिता मम महाराज बाह्लीको वाक्यमब्रवीत् ।
यदि वः शुल्कतो निष्ठा न पाणिग्रहणात्तथा ।
लाजान्तरमुपासीत प्राप्तशुल्क इति स्मृतिः ॥
न हि धर्मविदः प्राहुः प्रमाणं वाक्यतः स्मृतम् ।
येषां वै शुल्कतो निष्ठा न पाणिग्रहणात्तथा ॥
प्रसिद्धं भाषितं दाने नैषां प्रत्यायकं पुनः ।
ये मन्यन्ते क्रयं शुल्कं न ते धर्मविदो नराः ॥
न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा ।
न ह्येव भार्या क्रेतव्या न विक्रय्या कथञ्चन ॥

(१) भा. १३।४४।१९–५७.

ये च क्रीणन्ति दासीं च विक्रीणन्ति तथैव च ।
भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ॥
अस्मिन्नर्थे सत्यवन्तं पर्यपृच्छन्त वै जनाः ।
कन्यायाः प्राप्तशुल्कायाः शुल्कदः प्रशमं गतः ॥
पाणिग्रहीता चाऽन्यः स्यादत्र नो धर्मसंशयः ।
तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसंमतः ॥
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तानेवं ब्रुवतः सर्वान् सत्यवान्वाक्यमब्रवीत् ॥
यत्रेष्टं तत्र देया स्यान्नात्र कार्या विचारणा ।
कुर्वते जीवतोऽप्येवं मृते नैवास्ति संशयः ॥
देवरं प्रविशेत्कन्या तप्येद्वाऽपि तपः पुनः ।
तमेवानुगता भूत्वा पाणिग्राहस्य काम्यया ॥
लिखन्त्येव तु केषांचिदपरेषां शनैरपि ।
इति ये संवदन्त्यत्र त एतं निश्चयं विदुः ॥
तत्पाणिग्रहणात्पूर्वमन्तरं यत्र वर्तते ।
सर्वमङ्गलमन्त्रं वै मृषा वादस्तु पातकः ॥
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
पाणिग्रहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते ॥
इति देयं वदन्त्यत्र त एनं निश्चयं विदुः ।
अनुकूलामनुवंशां भ्रात्रा दत्तामुपाग्निकाम् ।
परिक्रम्य यथान्यायं भार्यां विन्देद्द्विजोत्तमः ॥
युधिष्ठिर उवाच—
कन्यायाः प्राप्तशुल्कायाः पतिश्चेन्नास्ति कश्चन ।
तत्र का प्रतिपत्तिः स्यात्तन्मे ब्रूहि पितामह ॥
भीष्म उवाच—
याऽपुत्रकस्य ऋद्धस्य प्रतिपाल्या तदा भवेत् ।
अथ चेन्नाहरेच्छुल्कं क्रीता शुल्कप्रदस्य सा ॥
तस्यार्थेऽपत्यमीहेत येन न्यायेन शक्नुयात् ।
न तस्मान्मन्त्रवत्कार्यं कश्चित्कुर्वीत किञ्चन ॥

## मनुः

वाग्दत्ताया एव नियोगाधिकारः

[2]यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

(१) अन्ये तु प्राग्विवाहादुपरते भर्तरि नियोगाधिकारं वर्णयन्ति, सामान्यविशेषोपसंहृतिन्यायात् । यथाऽऽह मनुः— 'यस्या म्रियेत' इति । तत्तु 'विधवाया नियुक्तस्तु' इत्यनेनैव निरस्तम् । ननु च साऽपि विधवेति शक्यं वक्तुम् । न, स्मृत्यन्तरविरोधात् । यथाह वसिष्ठः— 'प्रेतपत्नी षण्मासं व्रतचारिणी' इत्युपक्रम्य 'पित्रा भ्रात्रा वा नियोगं कारयेत्' इत्यादि । ननु अनूढाऽपि प्रेते पत्यौ प्रेतपत्न्येव । नैवम् । न हि प्राग्विवाहात् पत्नीशब्दप्रवृत्तिरिति । एवं हि भगवतः पाणिनेः स्मरणम् 'पत्युर्नो यज्ञसंयोगे' इति । अतोऽसत्कल्पनम्, उपक्रमोपसंहारात् । कथं तर्हि 'यस्या म्रियेत' इत्ययं श्लोकः । आसुरविवाहविषयतया व्याख्येयः । यस्याः कन्यायाः शुल्कं दत्त्वा शुल्कदो म्रियेत सा यदीच्छेत् ततो देवराय पूर्ववत् प्रदातव्या । न चेत्, नियोगं देवरेणैव कारयेत् । यद्वा 'निजो विन्देत' इति निजग्रहणात् सोदर्यो देवरः अनेन विधिना नैयोगिकेन वैवाहिकेन वा विन्देतैव । सापत्नस्तु कन्यानुमतः । तथा चाह— 'कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः । देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥' इति । यदा तु अदत्तशुल्क एव म्रियेत, तदा तस्मिन् प्रेते कुमार्येव सतीच्छया अन्यस्मै पित्रा विधिवद् देया । यथाह वसिष्ठः— 'अद्भिर्वाचा च दत्ता या म्रियेतादौ वरो यदि । न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥' इति । आदाविति वचनात् विवाहसंनिधौ वाग्दत्ताऽपि अकन्यकेति ज्ञायते । 'बलाच्चेत्प्रहृता कन्या' इत्यस्य पुनरयमर्थः— प्रहृता दूषिता, प्रशब्दसामर्थ्यात् । क्षात्राच्च विधेरन्यत्रैव द्रष्टव्यं, तत्र दूषणासंभवात् । यदि मन्त्रैर्न संस्कृता ततोऽन्यस्मै विधिवत् प्रायश्चित्तं कारयित्वा देया । कृतप्रायश्चित्ता च यथा कन्या तथैव सेति मन्तव्यम् । इदं तु कल्पान्तरम्— 'पाणिग्राहे मृते कन्या केवलं मन्त्रसंस्कृता ।' इति ।

(१) भा. १३।४५।१-३.

(२) मस्मृ. ९।६९ ; विश. १।६९ पृ. ७२ ; मिता. १।६९ ; अप. १।५२ ; गृक. ६१ ; गृर. ५१ यस्या म्रियेत कन्याया (कन्याया म्रियेत यस्या) ; उत. १२९ सत्ये कृते (सत्यकृते) ; संप्र. ७२७, ७५६ ; चम. ८९ निजो (द्विजो) ; मुक्ता. १२८ ; सम. २०१ ; कृम. ११२९.

अस्यार्थः– ग्रामधर्मेण पूर्वमपि विवाहात् पाणिग्रहणम्। तस्मिन् पाणिग्राहे मृते कन्याहुतेर्वा प्राक् पाणिग्रहणात्, यद्यक्षतयोनिः, तथाप्यन्येन भर्त्रा पुनर्विवाहसंस्कारमर्हतीति। सर्वथा परिणीतायाः पुनः परिणयनाभावः। तदुक्तम् – 'न विवाहविधावुक्तं विधवावेदनं क्वचित्।' इति। तथा च बौधायनः—'निसृष्टायां हुते वाऽपि यस्यै भर्ता म्रियेत सः' इति। अपि निसृष्टायां, अपि हुते, न परिणीतायामित्यर्थः। 'सा चेदक्षतयोनिः स्यात्' इति एतदेव स्पष्टीकरोति, यदुपवर्णितमस्माभिः। अतो न कन्याविषया नियोगस्मृतिः।

विश्व. १।६९

(२) नियोगरूपत्वात् कन्यागतोऽयं धर्म उच्यते। वाचा सत्ये कृते वाग्दाने निर्वृत्ते, एकेन दत्ता अपरेण प्रतिगृहीता। तामनेन वक्ष्यमाणेन विधानेन निजः सोदरो देवरो विन्देत विवाहयेत्। § मेधा.

(३) (सर्वदेव*) कथं पुनर्देवरोपगमस्मृतीनां व्यवस्थेत्यत आह—यस्या इति। वाग्दत्ताविषयमेव। परिणीतविषयतयैतद्भ्रान्तेर्गृहीतमित्यर्थः। वाचा सत्यवचनेन सत्यं मया दातव्येयमिति सत्याङ्गीकार इत्यर्थः। अनेन विधानेन विवाहविधिना निजः पतिसोदरो देवरो विन्देत। मवि.

(४) एतद्वचनेन पतिः पूर्वं एव, पश्चाद्विवाहितो देवरस्तु तदीयधनान्तरवदस्या अपि भोक्तेति प्रतीयते।

कुभ. ११२९

नियोगविधिः

यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्।
मिथो भजेताऽऽप्रसवात् सकृत्सकृदृतावृतौ ॥

(१) यथाविधि यथाशास्त्रम्। अधिगम्य एनां, यथा वैवाह्यो विधिस्तथा विवाह्य। वाचकनिकोऽयं विवाहः। पुनर्भूश्च तथोच्यते। न वा व्यूढाऽपि सती भार्या भवति। केवलं परार्थोऽस्या वाचनिको विवाहः। तथा च दर्शयति—'न दत्त्वा कस्यचित् कन्यां पुनरन्यस्य दीयते' (मस्मृ. ९।७१) इति। नासौ देवराय दीयते इत्यर्थः। अदत्ता च अस्वभूता कथमिव भार्या भवेत्। शुक्लवस्त्रां, नियमो गमने। अन्यस्मिन्नपि नियोगे धर्मोऽयमिष्यते। * मेधा.

(२) स देवरो विवाहविधिना एतां स्वीकृत्य शुक्लवस्त्रां वाक्कायसंयतां रहस्या गर्भग्रहणात् प्रत्यृतु। वाचनिकत्वाच्च संस्कारस्य नासौ देवरस्य भार्या भवतीति क्षेत्रस्वामिन एव तदपत्यं भवतीति। गोरा.

(३) स देवरः विवाहविधिना एनां स्वीकृत्य शुक्लवस्त्रां कायवाङ्मनःशौचशालिनीं आगर्भग्रहणात् रहसि ऋतावृतौ एकैकवारं गच्छेत्। एवं कन्याया नियोगप्रकारत्वात् विवाहस्य आ(गर्भ)ग्रहाच्च गमनोपदेशात् यस्मै वाग्दत्ता तस्यैव तदपत्यं भवति। † ममु.

दत्तायाः पुनर्दानं निषिद्धम्

न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥

(१) 'तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' इति *प्राग्विवाहान्मृते* वरे दत्तायामपि *पुनर्दानाशङ्कायां* प्रतिषेधोऽयम्। विशिष्टे तु पुनर्वचनं, तथाविधा या पुनर्भूरुक्ता। नान्यस्मै दत्त्वा तस्मिन्मृतेऽन्यस्मै दद्यात्, तथा कुर्वन् प्राप्नोति पुरुषानृतं मनुष्यहरणे यत्पापं तस्य तत् भवति। § मेधा.

(२) कस्मैचिद्वाचा कन्यां दत्त्वा तस्मिन्मृते दानगुणदोषशस्तामन्यस्मै न दद्यात्। यस्मादेकस्मै दत्वाऽन्यस्मै ददत् 'पुरुषानृते सहस्रम्' इत्युक्तदोषं प्राप्नोति। सप्तपदीकरणस्याजातत्वाद्भार्यात्वानिष्पत्तेः पुनर्दानाशङ्कायामिदं वचनम्। ममु.

---

§ गोरा., ममु., मच., नन्द., माच. मेधागतम्।

* पूर्वश्लोकव्याख्यानशेषोऽयं प्रमादादत्र मुद्रित आदर्शपुस्तके इति भाति।

(१) मस्मृ. ९।७०; गृक. ६१; गृर. ५१ विध्यधि (विध्यभि); उत. १२९ गृरवत्; संप्र. ७३७.

* मवि. मेधागतम्।

† मच. ममुवत्।

§ मवि. मेधावत्।

(१) मस्मृ. ९।७१; मेधा. ९।७० (न दत्त्वा कस्यचित्कन्यां पुनरन्यस्य दीयते।) पू.; गृक. ५७–५८ हि (तु);

(३) नान्यस्मिन्नित्याद्युपसंहरन् विपक्षे दोषमाह — न दत्त्वेति। वाग्दाने दानं भाक्तं, दत्त्वा ददत् प्राप्नोति पुरुषानृतम् 'सहस्रं पुरुषानृते' इत्युक्तत्वात्। अत एव 'दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्' इत्यविधिनो वाचा दत्ता दानाशङ्का (?)। मच.

(४) अस्य देवरस्यैव दातव्यत्वे कारणमाह — न दत्त्वा कस्यचिदिति। नन्द.

विवाहितायाः परित्यागकारणानि

[1]विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम्।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्॥

(१) विधिः शास्त्रं, तदर्हतीति विधिवत्। यादृशः शास्त्रेण विधिरुक्तः 'अद्भिरेव द्विजाग्र्याणाम्' इति। स च कैश्चिदुदकाधिकारः कन्याविषये स्मर्यते। तेन *प्रतिगृह्यापि त्यजेत् कन्यां प्राग्विवाहात्*, *विगर्हितां* दुर्लक्षणा विदुष्टा पूर्वं प्रतिगृहीता मनोज्ञामपि, तथा निर्लज्जा बहुपुरुषभाषिणी, व्याधिता क्षयव्याधिगृहीतां, *विप्रदुष्टां* रोगिण्यादिशब्दितामन्यगतभावा च त्यजेत्। अन्ये क्षतयोनिं विप्रदुष्टां व्याचक्षते। न ते सम्यङ् मन्यन्ते, यदि तावत् पुरुषानुपभुक्ता स्त्री कन्या अविकृता तदा नैव दुष्यति। अथ पुरुषसंयुक्ता तदा कन्यैव न भवति। तत्र 'त्यजेत्कन्याम्' इति सामानाधिकरण्यानुपपत्तिः। उक्तश्च तस्यास्त्यागः। छद्मना चोपपादिता न्यूनाधिकाङ्गी या हेतुनियुक्ता। अकथितेषु स्वल्पेष्वपि दोषेषु कृतवरणाऽपि त्याज्यैव। मेधा.

(२) विप्रदुष्टां पुरुषान्तरदूषिताम्। पूर्वाध्याये दोषवत्कन्यादातुर्दोष उक्तः, अत्र तु त्यक्तुर्दोषाभावः। मवि.

(३) विधिवत् उत्सर्गादिपूर्वकं, विगर्हिता दुर्लक्षणवती, विप्रदुष्टां अन्यगतभावामिति, डाकिन्यादिप्रवादवतीमिति कश्चित्। छद्मना अन्यकन्योपदर्शनपूर्वककन्यादानादिप्रकारेण। गृर.५३

(४) 'अद्भिरेव द्विजाग्र्याणाम्' इत्येवमादिविधिना प्रतिगृह्यापि कन्या वैधव्यलक्षणोपेतां रोगिणीं क्षतयोनित्वाद्यभिशापवतीमधिकाङ्गादिगोपनच्छद्मोपपादितां सप्तपदीकरणात् प्राग्ज्ञातां त्यजेत्। ततश्च (? एतच्च) तत्त्यागे दोषाभाव इत्येतदर्थं, न तु त्यागार्थम्। ममु.

(५) सप्तपदीगमनात्प्राक् त्यजेत्, ऊर्ध्वं न त्यागः, किन्तु वस्त्राच्छादनादिना भर्तव्या। * मच.

[1]यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्।
तस्य तद्वितथं कुर्यात्कन्यादातुर्दुरात्मनः॥

(१) कन्यादोषा उक्ताः,ताननाख्याय अनुक्त्वा प्रयच्छति ददाति, तस्य तद्दानं वितथं निष्फलं कुर्यात्प्रत्यर्पणेन। उक्त एवायमर्थः पूर्वश्लोकेनातिस्पष्टीकृतः। मेधा.

(२) यः पुनर्दोषवतीं कन्यां दोषाननभिधाय ददाति तस्य कन्यादातुर्दुरात्मनो दानं तत्प्रत्यर्पणेन व्यर्थं कुर्यात्। एतदपि त्यागे दोषाभावकथनार्थम्। ममु.

दोषमनुक्त्वा सदोषकन्यादाने दण्डः

[2]यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।
तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान्॥

(१) या कन्या दोषैर्युक्ता सा च दात्रा वराय नाख्यायते न प्रकाश्यते एवमेव दीयते, तत्र दातुर्दण्डो

---

स्मृच. ८२ प्रयच्छन् हि (प्रयच्छेद्यः); गृर. ४९; मुक्ता. १३७ स्मृचवत्; भान. १७६ स्मृचवत्.

(१) मस्मृ. ९।७२; अप. १।६६ वत्प्रति (वत्तरि) विगर्हिताम् (अनिन्दिताम्) वा (च); गृक. ६३; स्मृच. ८३; गृर. ५३ उत्तरार्धे (विप्रदुष्टां व्याधियुक्तां छद्मना प्रतिपादिताम्।); पमा. ४९२ वत्प्रति (वत्तरि); मपा. १५४ वा (च); प्रपा. ३६१ वत्प्रतिगृह्यापि (वत्परिगृह्येनां) याज्ञवल्क्यः; संप्र. ७७४; मुक्ता. १३८ विप्रदुष्टां (विप्रकृष्टां); संम. ६८ पू.; बाल. १।६६ पू.; कुभ. ११३३ पू.; संर. ५०६ पू.

* शेषं ममुवत्।

(१) मस्मृ. ९।७३; मेधा. पूर्वार्धे (यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।).

(२) मस्मृ. ८।२२४.

विदिते राज्ञा कार्यः । स्वयंग्रहणमादरार्थम् । कन्यादोषाश्च धर्मप्रजासामर्थ्यविघातहेतवः क्षयो व्याधिर्मैथुनसंबन्धश्च । नोन्मत्ताया इत्येतत्प्रकरणोक्तो दण्डोऽयं वा । मेधा.

( २ ) यस्त्विति । पूर्वोक्तकन्याविक्रयविषयदण्डसामान्यस्य विशेषोक्तिरियम्, अत्र तस्य संगतिसंभवात् । कुर्यात् दण्डम् । अर्थात्कन्यामपि प्रतिपादयेत् पूर्वकृतशुल्कं वरो न दद्यात् । मवि.

( ३ ) 'नोन्मत्तायाः' ( मस्मृ. ८।२०५ ) इति सामान्येनोक्तं, दण्डविशेषाभिधानार्थमिदम् । उन्मादादिदोषानकथयित्वा दोषवतीं कन्यां वराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिं पणान् दण्डं कुर्यात् । अनुशयप्रसङ्गेनैतत्कन्यागतमुच्यते । ममु.

( ४ ) अनुपक्रान्तमपि क्रयविक्रयसाधर्म्यात्कन्याप्रदानविषयं विवादमाह— यस्तु दोषवतीमिति । स्वयं कन्याभर्त्रादिभिरनिवेदितोऽपि । नन्द.

कन्याया मिथ्यादूषणे दण्डः

**अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः ।**
**स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् * ॥**

नेयं कन्या क्षतयोनिरियमिति यो मनुष्यो द्वेषेण ब्रूयात्तस्या उक्तदोषमविभावयन् ( तस्मै ) पणशतं राजा दण्डं प्रकल्पयेत् । ममु.

अकन्याया न विवाहार्हता

**पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।**
**नाकन्यासु क्वचिन्नॄणां लुप्तधर्मक्रिया हि ताः ॥**

( १ ) पाणिग्रहणं विवाहो दारकर्म, मन्त्राणां तत्र विद्यमानत्वात् । स चाग्निमयक्षतेत्येताभ्यां सबन्धेनासां विवाहे कर्तृत्वं दर्शयति । परमार्थतस्तु विवाहविधौ कन्यामुपयच्छेदिति विहितं, तादृशमेवार्थं मन्त्रा अभिवदन्ति । न पुनर्मन्त्रेषु कन्याशब्दश्रवणात् कन्यानां विवाहः, मन्त्राणामविधायकत्वात् । एष एवार्थस्तद्विपरीतप्रतिषेधमुखेन दृढीक्रियते । नाकन्यासु क्वचिन्नृणाम् । न कस्याचिद्वेदशाखायां मनुष्याणामकन्याविषयो विवाहः श्रुतः । लुप्तक्रियाः यासां धर्मे अग्निहोत्रादावपत्योत्पादनविधौ चाधिकारो नास्ति, अतस्ता न विवाह्याः । अतः कन्यामकन्येति वदन् महता दण्डेन योजनीय इति पूर्वश्लोकादनन्तरमुच्यते । अप्राप्तमैथुना स्त्री कन्योच्यते । मेधा.

( २ ) प्रतिष्ठिताः विनियुक्ताः संस्काराद्यैः । अकन्यासु दोषवतीषु । गृक. ६४

( ३ ) अकन्या तु यदि सा वस्तुतः स्यात्तदा त्याज्यैवेत्युपपादयति — पाणिग्रहणिका इति । कन्यास्वेव कन्याविषयाः । एवं नाकन्यासु क्लीबेषु । मवि.

( ४ ) युक्तश्चास्य अकन्येति वादिनो दण्डः, यस्मात्— पाणीति । 'अर्यमणं नु देवं कन्या अग्निमयक्षत' इत्येवमादयो वैवाहिका मनुष्याणां मन्त्राः कन्याशब्दश्रवणात्कन्यास्वेव व्यवस्थिताः, नाकन्याविषये क्वचिच्छास्त्रे धर्मविवाहसिद्धये व्यवस्थिताः, असमवेतार्थत्वात् । अत एवाह— ताः क्षतयोनयो वैवाहिकमन्त्रैः संस्क्रियमाणा अपि यस्मादपगतधर्मविवाहादिशालिन्यो भवन्ति । नासौ धर्म्यो विवाह इत्यर्थः । न तु क्षतयोनेर्वैवाहिकमन्त्रहोमादिनिषेधकमिदम्, 'या गर्भिणी संस्क्रियते' तथा 'वोढुः कन्यासमुद्भवम्' इति क्षतयोनेरपि मनुनैव विवाहसंस्कारस्य वक्ष्यमाणत्वात् । देवलेन तु 'गान्धर्वेषु विवाहेषु पुनर्वैवाहिको विधिः । कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥' इति गान्धर्वेषु विवाहेषु होममन्त्रादिविधिरुक्तः । गान्धर्वश्चोपगमनपूर्वकोऽपि भवति । तस्य क्षत्रियविषये सुधर्मत्वं मनुनोक्तम् । अतः सामान्यविशेषन्यायादितरविषयोऽयं क्षतयोनिविवाहस्याधर्मत्वोपदेशः । * ममु.

* पूर्वापरसंगत्यर्थं श्लोकोऽयं अत्र संगृहीतः, तस्मात् अन्यव्याख्यानसंग्रहो न कृतः ।

( १ ) मस्मृ. ८।२२५ .

( २ ) मस्मृ. ८।२२६ ; गृक. ६४ धर्म ( मन्त्र ) ; मभा. ४।१३ पृ. ; गृर. ५३ गृकवत् ; दीक. ३१६१ ; संप्र. ७४१ नाकन्यासु ( न त्वन्यासु ) ; कृभ. ११२९ ( पाणिग्रहणिका मन्त्राः ) एतावदेव.

* मच. ममुवत् ।

दत्तशुल्काया वरमरणे देवरो वरस्तस्या अनुमत्या

**कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।**
**देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥**

( १ ) यस्याः पित्रादिभिर्गृहीतं शुल्कं, न च दत्ता, केवलवचनेन देयत्वेन व्यवस्थिता, अत्रान्तरे स चेन्म्रियेत तदाऽन्यद्रव्यवद्देवरेषु प्राप्ता सर्वेषु वा युधिष्ठिरादिवत्, तदभावे सपिण्डेषु, अतो विशेषार्थमिदमुच्यते। देवराय प्रदातव्येति, न सर्वेभ्यो भर्तृभ्रातृभ्यो नापि सपिण्डेभ्यः । किं तर्ह्येकस्मै देवरायैव । तत्रापि कन्याया अनुमतौ सत्याम्। अथासत्या कन्यायाः शुल्कस्य च का प्रतिपत्तिः। यदि कन्यायै रोचते ब्रह्मचर्यं, तदा शुल्कं कन्यापितृपक्षाणामेव । अथ पत्यन्तरमर्थयते तदा प्राग्गृहीतं शुल्कं त्यक्त्वाऽन्यस्मादादाय दीयते । * मेधा.

( २ ) मनुस्तु शुल्कदानेऽपि विशेषमाह—कन्यायामिति। एवं च वाग्दानप्रभृत्या सप्तमपदाद्दोषदर्शने मरणादौ वा कन्यामन्यस्मै दद्यात्, नोर्ध्वमित्युक्तं भवति । स्मृच. ८२

( ३ ) कन्याया दत्तशुल्कायां सत्यामसंजातविवाहायां यदि शुल्कदो वरो म्रियते तदा देवराय पित्रादिभिर्वाऽसौ कन्या दातव्या यदि सा स्वीकरोति । ' यस्या म्रियेत ' इति प्रागुक्तं नियोगरूपम्, इदं तु शुल्कग्रहणविषयम् । मनु.

( ४ ) ' यस्या म्रियेत कन्यायाः ' इत्यस्मात् विशेषं वक्तुमाह— कन्यायामिति । वाग्दानशुल्कग्रहणाभ्यां वा भेदः । तथा च तस्याः स्वत्वनिवृत्तेः अननुमतौ स्वयंवरा स्यात्, न तु बलाद्दातुं शक्या इत्याह— यदीति । मच.

( ५ ) अनुमत्यभावेऽन्यस्मै देया । ' सकृत् कन्या प्रदीयते ' इत्यस्यायमपवादः । नन्द.

दत्तशुल्काया न पुनर्दानम्

**एतत्तु न परे चक्रुर्नापरे जातु साधवः ।**
**यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥**

( १ ) यदुक्तं गृहीते शुल्के कन्येच्छायां सत्यां मृते तु शुल्कदे अस्या अन्यत्र दानमिति, तन्निषेधति । यदन्यस्य शुल्कदस्य प्रतिज्ञाय पुनरन्यस्मै दीयते पुनः शुल्कं गृहीत्वेति । परं स्वयंवरं तु कारयेत्कन्याम्। एष एवार्थः। मेधा.

( २ ) अतो देवरं प्रति अननुमतायां कन्यायां नान्यस्मै सा देया । सोदरस्तु भ्राता आत्मैवेति गृहीतस्य शुल्कस्य तद्धनत्वात् तस्मै दीयमानायां कन्यायां दोषाभाव इति तात्पर्यम् । अभ्यनुज्ञाय शुल्कग्रहणेन अन्यस्मै प्रतिपद्य । मवि.

( ३ ) एतदपि अदुष्टवराभिप्रायम्। स्मृच. ८२

( ४ ) एतत्पुनः पूर्वे शिष्टा न कदाचित् कृतवन्तो नाप्यपरे वर्तमानकालाः कुर्वन्ति यदन्यस्य कन्यामङ्गीकृत्य पुनरन्यस्मै दीयते इति । एतच्च गृहीतशुल्ककन्यामदत्त्वा कस्यचित्, ' कन्यायाम् ' इति तु गृहीतशुल्कविषयम् । मनु.

( ५ ) अनपरे पूर्वे । देवरादतिरिक्तविषयमेतत्। मच.

( ६ ) परे पुरातनाः । अपरे नूतनाः । नन्द.

---

* मवि. मेधागतम्।

( १ ) मस्मृ. ९।९७; विश्व. १।६९ (=); गृक. ६१ म्रियेत ( म्रियते ) कन्याऽनु ( कन्या तु ); स्मृच. ८२; गृर. ५१ म्रियेत ( म्रियते ); पमा. ४९३ गृरवत्; मपा. १५३ गृरवत्; उत. १२९ गृरवत्, मनुवसिष्ठौ; संप्र. ७२९ कन्यायां दत्तशुल्कायां ( कन्याया दत्तशुल्काया ); सुका. १३८ गृरवत्; संम. ६८; सिन्धु. ११३१ गृरवत्, मनुवसिष्ठौ; पुम. ४५४ मनुवसिष्ठौ; संर. ५०६ मनुवसिष्ठौ.

( १ ) मस्मृ. ९।९९; गृक. ५८ एतत्तु ( एवं च ) स्य प्रति ( स्याभ्यनु ); मवि. स्य प्रति ( स्याभ्यनु ); स्मृच. ८२ स्य प्रति ( स्याभ्यनु ); गृर. ४९ गृकवत्; मच. एतत्तु न परे ( एतत्सनपरे ); सुका. १३७ उत्तरार्धे ( यदन्यस्मै प्रतिश्रुत्य यदन्यस्मै प्रदीयते । ); संम. ६७ उत्तरार्धे ( यदन्यस्याभ्यनुज्ञाय नरस्यान्यस्य दीयते ।); भान. १७६ उत्तरार्धे ( यदन्यस्य प्रतिश्रुत्य यदन्यस्मै प्रदीयते ।); बाल. १।६५ संमवत्; नन्द. मविवत्; माध. मविवत्; कुभ. ११२९ (=) एतत्तु न ( न यत्तु ) स्य प्रतिज्ञाय ( स्याभ्यनुज्ञाता ); संर. ५०२ संमवत्.

पुनर्भूलक्षणम्

**या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।**
**उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥**

( १ ) पुनर्भूत्वा अन्यस्य भार्या भूत्वा। मवि.

( २ ) या भर्त्रा परित्यक्ता मृतभर्तृका वा स्वेच्छया अन्यस्य पुनर्भार्या भूत्वा यमुत्पादयेत्स उत्पादकस्य पौनर्भवः पुत्र उच्यते। ममु.

( ३ ) स्वेच्छया पुनरन्यस्य भार्या भूत्वा पुनर्वोढुर्भूत्वा विधवा भूत्वा यं पुत्रमुत्पादयेत्स पौनर्भवः, उत्पादकस्येति शेषः। मच.

( ४ ) पुनर्भूत्वा अन्यस्य सवर्णस्य भार्या भूत्वा। भाच.

अक्षतयोन्याः पुनर्विवाहः

**सा चेदक्षतयोनिः स्याद्गतप्रत्यागताऽपि वा।**
**पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥**

( १ ) अस्यार्थः -- क्लीबपतितोन्मत्तादिपरिणीतेषु (१ णेतृषु) जीवत्सु अदुष्टे वा भर्तरि मृते यमन्यं पतिं विन्दते स पौनर्भवो भर्ता। तेन पुनर्वैवाहिकविधिसंस्कृता पुनर्भूः। यद्वा क्लैब्यादिदोपरहितं पोषणादिसमर्थं कौमारं पतिमुत्सृज्य अन्यैः सह सुरतमाचर्य पुनः पूर्वमेव पतिं परिगृह्णाति सा गतप्रत्यागता क्षतयोनिश्च। स च भर्ता पौनर्भवः। अप. १।६७

( २ ) पुनर्भूसंस्कारमाह— सा चेदिति। अक्षतयोनिः पत्या संस्कारमात्रं कृत्वा परित्यक्ता प्राप्तवैधव्या वा। गतप्रत्यागता तु पित्राऽन्यस्मै अङ्गीकृता, स्वेच्छया परिणयार्थं अन्यं प्रति गत्वा तेन परिणीता पुनः पित्रभिमतं वरं प्रत्यागता अक्षतयोनिरेव। पौनर्भवेन यं गत्वा विश्रान्ता तेन पुनर्विवाहहोमादिसंस्कारं सा अर्हति। एतेन या क्षतयोनिः पुनर्भूः न संस्कारार्हेत्युक्तम्। पुनर्भूत्वं तु उभयथाऽपि। एतासूत्पन्नः पौनर्भवो बीजिनः सुतः। मवि.

( ३ ) सा स्त्री यद्यक्षतयोनिः सत्यन्यमाश्रयेत्तदा तेन पौनर्भवेन भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हति। यद्वा, कौमारं पतिमुत्सृज्यान्यमाश्रित्य पुनस्तमेव प्रत्यागता भवति तदा तेन कौमारेण भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हति। ममु.

( ४ ) प्रासङ्गिकमाह— सा चेदिति। यं बालं विहाय गता, पुनर्यौवने तमेव प्रत्यागताऽपि वा यं प्रति गता वा उभयोरपि पुनर्भवभर्तृत्वात् द्वाभ्यामपि संस्कारमर्हति विवाहोचितम्। वाशब्दात् क्षतयोनिरपि, क्षता क्षतजयुक्ता योनिः यस्याः, ऋतुमती, 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः। स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥' इति याज्ञवल्क्योक्तेः। ज्ञातिधनगर्वात् स्वपतित्यागे श्वभक्षणं न तु कामतस्त्यागे, कामस्य स्वाभाविकत्वात्। अनेन पूर्वापराविरोधः। मच.

( ५ ) अत्र सा इति तच्छब्देन पूर्वप्रक्रान्ता पुनर्भूरुच्यते। यद्यपि, 'या पत्या वा परित्यक्ता विधवा स्वेच्छयाऽपि वा। उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥' इति पुनर्भूविशेष एव प्रक्रान्तः, न पुनर्भूसामान्यं, तथापि 'अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः।' इति स्मृत्यन्तरवाक्यैकवाक्यतया पुनर्भूमात्रजातस्य पौनर्भवत्वेन पुनर्भूसामान्यस्यैव प्रक्रमोऽभिप्रेत इति ध्येयम्। तस्याश्च अक्षतयोनित्वलक्षणगुणविशेषपुरस्कारेण पुनःसंस्कारो विधीयते। तत्र कुल्लूकभट्टव्याख्या— सा यदि अक्षतयोनिः सती अन्यमाश्रयेत्, तदा तेन पौनर्भवेन भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हतीति। तत्र चाक्षतयोन्याः पुनर्विवाहे पौनर्भवेन भर्त्रा इत्यन्वयकरणात् गतप्रत्यागतासंस्कारे च कौमारेण भर्त्रा इत्युपादानात् द्वितीयस्यैव पौनर्भवत्वं, न पूर्वस्येति सिध्यति। तेन च 'पौनर्भवश्च काणश्च' इति श्राद्धे, तथा 'पौनर्भवे द्विजे' इति दाने च, 'परपूर्वापतिस्तथा' इत्यादिना च प्रतिषेधोऽपि द्वितीयस्य पत्युस्तदुत्पन्नानां पुत्राणां चेति सर्वनिबन्धसंमतम्, न क्वापि प्रथमस्य पत्युः पौनर्भवत्वेन तदपत्यानां वा निषेधो

(१) मस्मृ. ९।१७५ ; प्रपा. २१९ ; संप्र. ७४० वा स्वयेच्छया (स्वेच्छयाऽपि वा) : ७४३ वा परि (चापरि) वा स्वयेच्छया (स्वेच्छयाऽपि वा).

(२) मस्मृ. ९।१७६ ; विश्व. २।६७ ; अप. २।६७ भर्त्रा सा (भर्त्राऽसौ) ; संप्र. ७४० : ७४४ निर्देशमात्रम्.

गम्यते । यद्यपि ' पुनर्भ्वा अयम् ' इति संबन्धसामान्यविवक्षया पूर्वापरयोर्द्वयोरपि पत्योः पौनर्भवत्वं प्रतीयते, तथापि पुनर्भवतीति व्युत्पत्तौ अन्यथाऽनुपपत्त्या भार्येति शेषस्यावश्यकतया यत्प्रतियोगिकभार्यात्वेनास्याः पुनर्भूत्वं तस्योपस्थितस्य विशेषस्य परित्यागे कारणाभावात् बुद्धिस्थतया च अयमिति सर्वनाम्ना परामर्शसंभवात् तस्यैव पौनर्भवत्वं युक्तम् । यत्तु अपरार्केण उभयोरपि पत्योः पौनर्भवत्वमुक्तम्, तत् उक्तयुक्त्या बाधितमिति ध्येयम् । यद्यपि अस्मिन् व्याख्याने गतप्रत्यागतायां क्षताक्षतात्वविशेषो न प्रतीयते, तथापि नारायणसर्वज्ञमेधातिथिभ्यां तस्यामपि अक्षतयोनिपदानुषङ्गकरणात् अक्षतात्वमेव सिध्यति । युक्तं चैतत्, 'त्यक्त्वा भर्तृगृहं गच्छेद्यदि दोषं विना पुनः । भर्त्रा सा संस्कर्तव्या च प्रायश्चित्तादिभिः क्रमात् ॥' इति ब्राह्मवाक्ये दोषं विना इत्यभिधानात् । दोषश्च क्षतयोनित्वम् । तदभावे संस्कार्यताऽभिधानात् । यथाह वसिष्ठः– 'पाणिग्राहे मृते कन्या केवलं मन्त्रसंस्कृता । सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति ॥' इति । नारदोऽपि–' उद्वाहिताऽपि या कन्या न चेत्संप्राप्तमैथुना । पुनःसंस्कारमर्हेत यथा कन्या तथैव सा ॥ ' इति । अत एव मनुः– 'पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः । न त्वन्यासु क्वचिन्नॄणां लुप्तधर्मक्रिया हि ताः ॥' इत्यक्षतयोनीनामेव कन्याशब्दाभिधेयानां मन्त्रसंस्कारमाह, ' कन्या अभिमयक्षत ' इति मन्त्रलिङ्गात् । एतेन अपरार्कीयमपि गतप्रत्यागतायाः क्षतात्वव्याख्यानं परास्तम् । यच्च 'पुनर्भूर्या कौमारं भर्तारमुत्सृज्य अन्यैः सह चरित्वा पुनस्तस्यैव गृहमाविशति सा पुनर्भूर्भवति ' इत्युपक्रम्य पुनःसंस्कारबोधकं वसिष्ठवाक्यमत्रोदाहृतम्, तत्रापि चरित्वेत्यत्र नैकान्ततः सुरतमेव कर्मतयोपतिष्ठते । सप्तपदीं चरित्वा इत्यस्यापि संभवात्, 'बहूनामनुग्रहो न्याय्य.' इति न्यायेन अनेकवाक्यानुरोधाच्च । वस्तुतस्तु धात्वर्थमर्यादयाऽपि सप्तपदीचरणमेव मुख्यार्थो गम्यते, न सुरतमिति ध्येयम् । नन्वेवं अक्षतयोन्या एव संस्कारविधाने ' या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती । वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ ' ( मस्मृ. ९।१७३ ) इति मनुवचनं विरुध्येत, गर्भिण्याः संस्कारविधानात् इति चेत्, मैवम् । सहोढस्य वोढुः पुत्रत्वान्यथानुपपत्त्या तादृशसंस्कारस्याभ्युपगमात् । तस्मादक्षतयोनिश्चेद्गतप्रत्यागता तदा पूर्वभर्त्रा पुनः संस्कृत्य परिग्राह्या इति ।

अत्राहुः, न संग्राह्येति । कुतः, पुनःसंस्कारस्य कलौ निषेधात् । यथा–' ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्वीत भ्रातृजाया कमण्डलुम् ॥ ' इति । तदपरे न क्षमन्ते । वरान्तरकर्तृकस्यैव पुनर्विवाहस्य कलौ निषेधः, न स्वकर्तृकस्य, ' दत्तायास्ताया: कन्यायाः पुनर्दानं परस्य च । ' इति बृहन्नारदीयवाक्येन अस्योपसंहारात् । अत एव– ' बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः । ' इति धर्मशास्त्रसमये स्पष्टमेवाभ्यधायि । अन्यथा चिरप्रोषितस्य जीवद्वार्तानाकर्णने कृतौर्ध्वदेहिकस्य पुनः प्रत्यागमनेऽपि स्त्रियाः पुनःसंस्कारो निषिध्येत । तस्मादस्य निषेधस्य अयं विषय इति न पूर्वेण भर्त्रा तस्याः परिग्रहे विरोध इति । तन्न साधु, स्वपरकर्तृकस्य द्विविधस्यापि पुन.संस्कारस्य कलौ निषेधात् । *यथा ब्रह्मपुराणे* – ' मृते भर्तरि या नारी त्यक्तवत्यथ तं स्वयम् । सवर्णाज्जनयेद्गर्भं भर्तुः पौनर्भवं सुतम् ॥ यदि सा बालविधवा बलात्त्यक्ताऽथवा क्वचित् । तदा भूयस्तु संस्कार्या गृहीता येनकेनचित् ॥ त्यक्त्वा भर्तृगृहं गच्छेद्यदि दोषं *विना पुनः । भर्त्रा सा संस्कर्तव्या च प्रायश्चित्तादिभिः* क्रमात् ॥ स्त्रीणां पुनर्विवाहस्तु देवरात् पुत्रसंततिः । स्वातन्त्र्यं वा कलियुगे न कर्तव्यं कदाचन ॥ ' इति ।

अत्र यत्तच्छब्दोपादानात् एकवाक्यत्वम् । तथैवम् । या मृतभर्तृका या च जीवन्तमेव भर्तारं स्वयं त्यक्त्वा सवर्णादन्यस्मात् पुरुषात् गर्भं जनयेत् जनयितुं प्रवर्तते, तदा सा येनकेनचिद्गृहीता स्वीकृता भूयः संस्कार्या । तत्र मृतभर्तृकायाः त्यक्तभर्तृकायाश्च अविशेषप्राप्तौ आह–' यदि सा बालविधवा ' इत्यादि । मृतभर्तृका यदि बालविधवा अक्षतयोनिः, तथा त्यक्तभर्तृका भर्त्राऽपि बलाभिर्भर्त्सं त्यक्ता भवति तदैव संस्कार्या, नान्यथा । अनेन ( वा ? ) 'या पत्या वा परित्यक्ता विधवा स्वेच्छयाऽपि वा । ' ( मस्मृ. ९।१७५ ) इति मनुवाक्येऽपि पत्या स्वेच्छया परित्यक्ता इत्येकान्ततः सिद्धः । तेन च क्षतयोन्याः भर्त्रापरित्यक्तायाम

न्यावृत्तिः । तत्र गर्भस्य कुण्डगोलकत्वपरिहारायाऽऽह– 'भर्तुः पौनर्भवं सुतम्' इति । भर्तुः द्वितीयस्य पत्युः पौनर्भवं पुनर्भ्वामुत्पादितं सुतं, पुनःसंस्कृताया-मुत्पन्नस्यैव पौनर्भवत्वात् । एवं पुनर्भूसंस्कारमुक्त्वा गतप्रत्यागतासंस्कारमाह– त्यक्त्वेति । यदि सैव पुनर्भूः पौनर्भवं भर्तारं त्यक्त्वा दोषं पुरुषसंबन्धं विना पुनः भर्तुः पूर्वस्य पत्युः गृहं गच्छेत्तदा सा भर्त्रा पूर्वेण प्रायश्चित्तादिभिः संस्कार्येति । तमेवमुभयविधमपि संस्कारं कलौ निषेधति– स्त्रीणामिति । पुनर्विवाह उक्तविषयः । स्वातन्त्र्यं विधवायाः पित्रादिपरिहारेण स्थितिरिति । अत्र 'तदा भूयस्तु संस्कार्या' इति परकर्तृकस्य 'भर्त्रा सा संस्कर्तव्या च' इति स्वकर्तृकस्य च पुनः संस्कारस्य प्रक्रमात् 'स्त्रीणां पुनर्विवाहस्तु' इति सामान्यनिषेधो द्वावपि विषयीकरोति, विशेषे विनिगमकाभावात् । यदि संनिधिर्विनिगमकस्तदा सुतरामस्मदभीष्टसिद्धिः, स्वकर्तृकस्यैव संनिहितत्वात् । न च सामान्यरूपस्यास्य 'वरेणान्येन संस्कृतिः' इति विशेषेण उपसंहार इति वाच्यम्, संनिधिलक्षणप्रकरणोपात्तविशेषद्वयान्वयेन विशेषरूपतयैवास्य नैराकाङ्क्ष्यात्, ग्रन्थान्तरीयस्य विशेषस्य विलम्बोपस्थितिकतया अनन्वयात् । तस्मात् पुनर्भूः गतप्रत्यागता चेत्युभे अपि असंग्राह्ये इति ।

यत्तु 'सा चेदक्षतयोनिः स्यात्' इति मनुवचनं तद्युगान्तरविषयं, उक्तवचननिचयात् । अत एव तादृश्या मनूक्तस्त्यागोऽपि छद्मनविषय एव । यथा 'विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् । व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥' इति । 'विगर्हिता पूर्वं प्रतिगृहीतामक्षतयोनिमपि' इति मेधातिथिः । 'विप्रदुष्टां अन्यगतभावाम्' इति (च) ।

संप्र. ७४०–७४४

( ६ ) पौनर्भवेन पुनर्भूपुत्रेण केनचिद्वरेण ।

नन्द.

## याज्ञवल्क्यः

दत्तायाः प्रत्यादाननिषेधः तदपवादश्च

सकृत्प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ॥

( १ ) यास्मृ. १।६५ ; विश्व. ; मिता. ; अप. ; शूक.

( १ ) कस्मात् पुनरद्भिर्वाचा कन्यां दत्त्वा पूर्वदातरि प्रेते परः स्वातन्त्र्यादन्यस्मै न दद्यात्, यस्मात्– सकृदिति । तस्मादन्यस्मै न दद्यात् । तेनैव विवाहं कारयेत् ।

विश्व.

( २ ) सकृदेव कन्या प्रदीयते इति शास्त्रनियमः । अतस्तां दत्त्वा अपहरन् कन्यां चौरवद्दण्ड्यः ।

* मिता.

( ३ ) एतच्चादुष्टवराभिप्रायम् । पमा ४९०

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥

( १ ) किमेष एवोत्सर्गः ? नेत्याह– दत्तामपीति । पूर्ववचनादद्भिर्वाचा च दत्तामपि हरेत् । न तु श्रेयांसमपि वरं प्राप्य मन्त्रोपनीतामित्यभिप्रायः ।

विश्व.

( २ ) एवं सर्वत्र प्रतिषेधे प्राप्तेऽपवादमाह– दत्तामपीति । यदि पूर्वस्माद्वरात् श्रेयान् विद्याभिजनाद्यतिशययुक्तो वर आगच्छति, पूर्वस्य च पातकयोगो दुर्वृत्तत्वं वा, तदा दत्तामपि हरेत् । एतच्च सप्तमपदात् प्राक् द्रष्टव्यम् । § मिता.

( ३ ) यस्मै वाचा दत्ता, ततोऽन्यश्चेत्प्रशस्ततरो लभ्यते ततस्तस्मै देया, न तु पूर्वस्मै । † अप.

* अप., वीमि. मितावत् ।

§ मपा., वीमि., सप्र., सन. मितावत् ।

† पमा., मपा., विपा. अपवत् ।

५७ ; स्मृच. ८१ ; गृर. ४८ ; स्मृमा. १४ ( = ) ; पमा. ४९० ; प्रपा. ३४८ ; उत. १२७ ; प्रर. १०१ ; वीमि. ; मुका. १३७ ; संप्र. ६७ ; मिन्दु. ११३२ ; विपा. ७६३ ; संकौ. २०७ ; प्रका. ३६४ ; सस्मृ. ५४ ; संर. ५०२ .

( १ ) यास्मृ. १।६५ ; विश्व. पूर्वार्ध ( पूर्व ) ; मिता. ; अप. ; शूक. ५७ विश्ववत् ; स्मृच. ८२ ; गृर. ४८ विश्ववत् ; स्मृमा. १४ ( = ) विश्ववत् ; पमा. ४९० ; मपा. १५० ; प्रपा. ३४८ विश्ववत् ; मर. २० ; गमा. १०० ; उत. १२७ पूर्वार्ध ( कन्या ) ; प्रर. १०१ ; वीमि. ; संप्र. ७३८ ; मुका. १३७ उत्तरार्ध ; संम. ६७ ; सम. १०७ ; मिन्दु. ११३२ ; विपा. ७६४ उत्तरार्ध ; संकौ. २०७ ; मान. १७६ उत्तरार्ध ; प्रका. ३६४ विश्ववत् ; मंत. ३४७ ; पुम. ४५४ ; सस्मृ. ५४ ; संर. ५०२ , ५०५ विश्ववत् .

सप्तपद्याः पूर्वमन्येन विवाहे कारणानि,
बलाद्विवाहे पुनर्विवाहः

महादोषे तु विज्ञाते पूर्वं सप्तपदीविधेः ।
मरणं वा विजायेत देयाऽन्यस्मै न दोषभाक् ।
बलादुद्वाहिता कन्या दातव्याऽन्यवराय च ॥

दोषमनुक्त्वा सदोषकन्यादाने, कन्याया मिथ्यादूषणे,
अदुष्टायास्त्यागे च दण्डः

अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् ।
अदुष्टां तु त्यजन् दण्ड्यो दूषयंस्तु मृषा शतम् ॥

( १ ) यः पुनर्दुष्टां कन्यामदुष्टेयमिति प्रयच्छेत्, तस्य का कथेति । उच्यते । स तादृशः— अनाख्यायेति । यद्वैवं योजना— पूर्ववरे स्पष्टं दोषमनाख्याय न्यायतोऽनुद्वाह्य अन्यस्मै श्रेयानिति मत्वा यः प्रयच्छति, स दण्ड्यः ।

न केवलं दाता, वरोऽपि च— अदुष्टामिति । यस्तु दोषरहितां त्यजेत् कन्यां, सोऽप्येवं दण्ड्यः । मृषैव तु दूषयन् कार्षापणशतं दण्ड्यः । वाग्दूषणे च शतं दण्ड्यः, मृषेत्यभिधानात् । अदुष्टवचनाच्च दुष्टां त्यजतो न दोषः । विश्व.

( २ ) यः पुनः चक्षुर्ग्राह्यं दोषमनाख्याय कन्यां प्रयच्छति असावुत्तमसाहसं दण्ड्यः । उत्तमसाहसं च वक्ष्यते । अदुष्टां तु प्रतिगृह्य त्यजन्नुत्तमसाहसमेव दण्ड्यः । यः पुनर्विवाहात्प्रागेव द्वेषादिना असद्भिर्दोषैर्दीर्घरोगादिभिः कन्यां दूषयति स पणानां वक्ष्यमाणलक्षणानां शतं दण्ड्यः । * मिता.

( ३ ) यस्तु कन्यादोषमनभिधाय प्रयच्छति स राज्ञा दण्ड्य इत्याह *नारदः— ' यस्तु दोषवतीं... पूर्वसाहसचोदितम् ॥ '* पणशतद्वयं सप्तत्यधिकं पूर्वसाहसम् ।

यत्तु याज्ञवल्क्येनाप्युक्तम्— ' अनाख्याय ...... उत्तमसाहसम् । ' इति, तत् दोषभूयस्त्वाभिप्रायम् । साशीतिपणसाहस्रं उत्तमसाहसम् । * स्मृच,८३

दत्तायाः प्रत्यादाने दण्डः

दत्त्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम् ॥

( १ ) कन्यां दत्त्वा हरन् राज्ञा दण्ड्यः । भर्त्रे च सवृद्धिकं व्ययं दाप्यः । विश्व.

( २ ) स्त्रीधनप्रसङ्गेन वाग्दत्ताविषयं किंचिदाह— दत्त्वेति । कन्यां वाचा दत्त्वा अपहरन् द्रव्यानुबन्धाद्यनुसारेण राज्ञा दण्डनीयः । एतच्चापहारकारणाभावे । सति तु कारणे— ' दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत् ' इत्यपहाराभ्यनुज्ञानान्न दण्ड्यः । यच्च वाग्दाननिमित्तं वरेण स्वसंबन्धिना कन्यासंबन्धिनां चोपचारार्थं धनं व्ययीकृतं, तत्सर्वं सोदयं सवृद्धिकं कन्यादाता वराय दद्यात् । § मिता.

पुनर्भूलक्षणं स्वैरिणीलक्षणं च

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥

( १ ) कस्मात् पुनर्मृते भर्तरि न पाणिमात्रदूषिताऽन्यस्मै पुनर्दीयते ? यस्मात्— अक्षता चेति । यथैव क्षतयोनिः पुनर्भर्तृसंयोगात् पुनर्भूर्भवति, एवमक्षतयोनिरपि, अविशेषात् । कस्मात् पुनर्दानम् ? स्मृत्यन्तरात् । यथाह मनुः— ' सा चेदक्षतयोनिः ... पुनः संस्कारमर्हति ॥ ' इति । तत् कामतः प्रवृत्तौ विशेषविधानं, न कर्तव्यतयोपदेशः । तथा चाह मनुः— ' न विवाहविधावुक्तं विधवावेदनं क्वचित् ' इति । ' न द्वितीयश्च साध्वीना

* अप., वीमि. मितागतम् ।
( १ ) संर. ५०६ .
( २ ) यास्मृ. १।६६ ; विश्व. तु त्यजन्दण्ड्यो ( यस्त्यजेत्कन्यां ) ; मिता. ; अप. शं तु ( शं च ) ; स्मृच. ८३ पू. ; पमा. ४९१ पू. , नारदः ; प्रपा. ३६१ पू. ; वीमि. ; संप्र. ७४५ अपवत् ; मुक्ता. १३९ ; सम. ६८ अपवत् ; कृभ. ११३३ ; सस्मृ. ५४ ; संर. ५०६, ५०७ अपवत् .

* प्रपा. , सर. स्मृचवत् ।
§ उत. मितागतम् ।
( १ ) यास्मृ. २।१४६ ; विश्व. २।१५० दद्याच ( दाप्यश्च ) ; गृक. ५७ दत्त्वा ( दत्तां ) ; गृर. ४८ दत्त्वा ( दत्तां ) दद्याच्च ( दत्त्वा ) क्रमेण नारदः ; उत. १४० दत्त्वा ( दत्तां ).
( २ ) यास्मृ. १।६७ ; विश्व. अक्षता च क्षता चैव ( अक्षता वा क्षता वाऽपि ) ; गोरा. १।१२ पू. ; मिता. ; अप. ; स्मृच. ७१ पू. ; पमा. ४६५ पू. ; उत. १२९ पू. ; मच. ९।१७६ ; वीमि ; संप्र. ७३५ ; मुक्ता. १२९ पू. ; सस्मृ. ५४.

क्वचिद्दर्तोपदिश्यते ' इति च । तस्माच्च पुनः संस्कार इत्याचार्याभिप्रायः ।

यदा पुनः स्वयमेवान्यं सवर्णमुत्कृष्टं वा समाश्रयेत्, तदा को दोष इति । उच्यते– स्वैरिणीति । पुनर्भूः स्वैरिणी इति च संज्ञा दौष्टयज्ञापनार्था । जीवन्तं मृतं वा या भर्तारं त्यक्त्वा स्वातन्त्र्यात् सवर्णमुत्कृष्टवर्णं वा समाश्रयेत्, साऽपि स्वैरिणी । अतः स्वयमपि नान्य आश्रयितव्यः । यत् पुनः शङ्खेनोक्तम्—' तिस्रः पुनर्भ्वश्चतस्रः स्वैरिण्यः ' इति, तदनयोर्दौष्ट्यप्रपञ्चनार्थं प्रायश्चित्तविवेकार्थं वेत्येतन्नातीवोपयुज्यते । एवं वासिष्ठमपि पुनर्भूलक्षणं द्रष्टव्यम् । सर्वथा भोग्ये ( ? भोगे ) अप्येते निर्णीतत्वात् ( ? निन्दितत्वात् ) उपेक्षणीये इति श्लोकार्थः । तथा च वक्ष्यति– ' मृते जीवति वा पत्यौ ' इति । विश्व.

( २ ) अनन्यपूर्विकामित्यत्र अनन्यपूर्वा परिणेयोक्ता, तत्र अन्यपूर्वा कीदृशीत्याह–अक्षता चेति । अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति । पुनर्भूरपि द्विविधा क्षता च अक्षता च । तत्र क्षता संस्कारात्प्रागेव पुरुषसंबन्धदूषिता । अक्षता पुनः संस्कारदूषिता । या पुनः कौमारं पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा स्वैरिणीति । *मिता.

( ३ ) स्वैरिणीग्रहणं तद्वैलक्षण्येन पुनर्भूज्ञानाय । तज्ज्ञापनं च पौनर्भवस्य भर्तुः पुत्रस्य च ज्ञापनार्थम् । §अप.

( ४ ) अक्षता वाग्दत्तादिः । क्षता तु भुक्तादिका । स्मृच. ७५

( ५ ) कामतः वैवाहिकविधिं विनैव । क्षता उपभुक्ता । एतच्चोपलक्षणं, अविवाहिताऽपि परपुरुषोपभुक्ता अन्यपूर्विकेत्यपि द्रष्टव्यम् । एवं च पुरुषान्तरेण परिणीता उपभुक्ता वा न परिणेयेति पर्यवसितार्थः । § वीमि.

* संप्र. मितावत् ।

§ शेषं मितागतम् ।

## नारदः

त्रिविधा पुनर्भूः, चतुर्विधा स्वैरिणी, तासां दोषतारतम्यं च

[1]परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥
[2]कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्मणा ॥
[3]देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥
[4]असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥
[5]स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
[6]कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्तिता ॥
[7]मृते भर्तरि तु प्राप्तान् देवरादीनपास्य या ।
उपगच्छेत् परं कामात् सा तृतीया प्रकीर्तिता ॥

( १ ) नासं. १३।४५ ; नास्मृ. १५।४५ ; दीक. १।६७ स्वैरिणी तु ( स्वैरिणी च ) ; संप्र. ७३६ .

( २ ) नासं. १३।४६ प्रोक्ता ( सोक्ता ) ; नास्मृ. १५।४६ कर्मणा ( मर्हति ) ; स्मृच. ७५ कर्मणा ( कर्मणि ) ; पमा. ४६४ दूषिता ( पूर्विका ) उत्तरार्धे ( पुनर्भूप्रतिमा ज्ञेया पुनःसंस्कारकर्मणि ) ; संप्र. ७३६ प्रोक्ता ( सोक्ता ) कर्मणा ( कर्मणि ) ; मुक्ता. १२९ कन्यैवाक्षत ( कन्या चाक्षत ) .

( ३ ) नासं. १३।४७ ; नास्मृ. १५।५२ नवेक्ष्य ( नपेक्ष्य ) सा द्वितीया प्रकीर्तिता ( अन्या सा स्वैरिणी स्मृता ) ; संप्र. ७३६ .

( ४ ) नासं. १३।४८ र्णाय ( र्णाया ) ; नास्मृ. १५।४८ ; संप्र. ७३६ .

( ५ ) नासं. १३।४९ स्त्री प्रसूताऽ ( प्रसूता वाऽ ) प्रथमा स्वैरिणी ( स्वैरिणी प्रथमा ) ; नास्मृ. १५।४९ त्समाश्र ( चा सश्र ) ; संप्र. ७३६ .

( ६ ) नासं. १३।५० त्वन्यं पुरुषं श्रिता ( त्वन्यपुरुषाश्रिता ) ; नास्मृ. १५।४७ यायात् ( इयात् ) ; संप्र. ७३६ .

( ७ ) नासं. १३।५१ तु ( या ) दीनपास्य या ( नप्यपास्य तु ) ; नास्मृ. १५।५० तु प्राप्तान् ( संप्राप्तान् ) तृतीया ( द्वितीया ) ; संप्र. ७३६ .

**प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।**
**तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥**

( १ ) एतासां सर्वासामविवाह्यत्वेऽपि अतिक्रान्तनिषेधेन परिग्रहीश ऋणं द्वयोरेव देयम् । संप्र. ७३६

( २ ) परपूर्वाः सप्त । पुनर्भूस्त्रिप्रकारा । स्वैरिणी चतुष्प्रकारा । ताः क्रमेणोच्यन्ते– कन्यैवेति । कन्यैवासंबद्धा पुरुषेण पाणिग्रहणमात्रेण परमार्थान्यपदेशेन दूषिता पुनर्भूः प्रथमा सोक्ता पुनःसंस्कारकर्मणा , पुनर्यस्मात् संस्क्रियते तस्मात्पुनर्भूरित्युच्यते । पुनर्विवाह्याऽन्येन वा । देशसंव्यवहारानवेक्ष्य, येषु देशेष्वयं व्यवहारो दृश्यते, गुरुभिर्या प्रदीयतेऽन्यस्मै स्त्री भुक्ता, न कन्या, सा द्वितीया पुनर्भूः । पत्यावसत्युत्पन्नसाहसा व्यभिचारिणी । पत्या त्यक्तेत्यन्ये । असत्सु देवरेषु, एतस्मादेव गम्यते द्वितीया गुरुभिर्देवराय दत्तेति, स्त्री मृतपतिका सवर्णायासपिण्डाय बान्धवैर्या प्रदीयते सा तृतीया ( स्त्री ? ) । स्त्री भुक्ता सापत्याऽनपत्या वा पत्यौ जीवत्येव कामादन्यं पतिं समाश्रयेत् तमुत्सृज्य, सा प्रथमा स्वैरिणी । कौमारं पतिमतिक्रम्य अन्येन सह पुरुषेणोषित्वा तमप्युत्सृज्य प्रथमपतिगृहमेव यायात् , सा द्वितीया स्वैरिणी । भर्तरि मृते योग्यानपि देवरानपास्योपगच्छेत् ऊनमन्यं, सा तृतीया स्वैरिणी । देशान्तरादागता धनेन क्रीता क्षुत्पिपासातुरा च तवाहमित्युपगता, सा चतुर्थी प्रकीर्तिता । नाभा.

**पुनर्भुवां विधिस्त्वेष स्वैरिणीनां प्रकीर्तितः ।**
**पूर्वा पूर्वाऽजघन्यासां श्रेयसी तूत्तरोत्तरा ॥**

एके यथापाठमेवेच्छन्ति । न तदुपपन्नम् । कथमक्षतयोनिरिनराम्या जघन्या स्यात् । तस्मात् क्रमेण पुनर्भुवां पूर्वा पूर्वा अजघन्या । आसामक्षतयोनिर्देवराय दत्ता या सा ( ? दत्तायाः ) प्रशस्या । साऽपि सवर्णाय सपिण्डाय दत्तायाः प्रशस्या द्वितीया । स्वैरिणीना तूत्तरोत्तरा पूर्वस्याः पूर्वस्याः श्रेयसी । जीवति पत्यावन्यं समाश्रितायाः पुनः पतिगृहं गता पश्चात्तापात् श्रेयसी । मृते भर्तर्यन्यं समाश्रिता, भर्तुरनतिक्रमात् , द्वितीयायाः श्रेयसी । देशान्तरादागता, क्रीता प्राणसंशये चान्यमुपगता पूर्वस्याः श्रेयसी, अत्यन्तविरोधानाचरणात् । नाभा.

( १ ) नासं. १२।५२ ; नास्मृ. १५।५१ चतुर्थी ( तृतीया ) ; संप्र. ७३६ गता ( गमात् ).

( २ ) नासं. १२।५३ विधिस्त्वेष ( एष विधिः ) प्रकीर्तितः ( च कीर्तितः ) ; नास्मृ. १५।५२ .

अक्षतयोन्याः पुनर्विवाहानुमतिः, दत्तशुल्काया अन्येन विवाहार्हता, आसुरादिषु गुणापेक्ष कन्यादानम् , पुनर्विवाहनिमित्तानि

**प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।**
**त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥**

( १ ) प्रतिगृह्य वाग्दत्तां स्वीकृत्य । गृक. ५९

( २ ) विधिवत्कन्यां परिगृह्य वरो यदि केनचित् कारणेन देशान्तरं व्रजेत्तदा किं कर्तव्यमित्याह नारदः –परिगृह्येति । त्रीनृतून् षण्मासान् । प्रपा. ३४८

( ३ ) परिगृह्य वाचा दत्तां स्वीकृत्य । त्रीनृतूनिति । इदं च कन्याया अधार्यत्वे बोध्यम् , धार्यत्वे तु– 'प्रदाय शुल्कं...विधानतः ॥ ' इति नारदेनैव वर्षं प्रतीक्षाया अभिधानात् । चम. ८८

( ४ ) एतच्च कन्यायै शुल्कदानाभावे । शुल्कदाने तु कात्यायनः– 'प्रदाय शुल्कं...विधानतः ॥ ' इति । संकौ २०७

( ५ ) कन्याग्रहणं प्राप्तवरार्थं, न बालाम् । प्रतिगृह्येति वरणमात्रार्थं, न पाणिगृहीताम् । तथाभूता प्रतिगृह्यापरिणीय देशान्तरं गच्छेत्, सा त्रीनृतूनतिक्रम्य देया । दातुरभावेऽदाने वा स्वयं वरयेत् । न तत्र वाग्दोषः । नाभा.

( १ ) नासं. १२।२४ तु ( च ) वरो ( नरो ) ; नास्मृ. १५।२४ तु ( च ) ; अप. १।६५ ; गृक. ५९ कन्याऽन्यं ( सा चान्यं ) शेषं नासवत् ; स्मृच. ८२ ; चका. ८०६ ; गृर. ५० तु ( च ) ; पमा. ४९३ त्रीनृतून् समति ( संवत्सरमति ) ; मपा. १५२ तु ( च ) कन्याऽन्यं ( सा चान्य ) ; प्रपा. ३४८ प्रतिगृह्य ( परिगृह्य ) ; मर. २० गृह्य तु ( गृह्येत ) कन्याऽन्यं ( सा चान्यं ) ; प्रर. १०० ; संप्र. ७३९ ; चम. ८८ वरो ( नरो ) शेषं प्रपावत् ; मुका. १३८ ; संम. ६७ तु ( च ) ; सिन्धु. ११३१ ; विपा. ७६२ ; संकौ. २०७ ; प्रका. १६४ ; पुम. ४५४ ; संर. ५०५ कन्याऽन्यं ( सा चान्यं ) .

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥
उद्वाहिताऽपि या कन्या न चेत् संप्राप्तमैथुना ।
पुनः संस्कारमर्हेत यथा कन्या तथैव सा ॥

( १ ) एतदपि दोषदर्शने वेदितव्यम् ।

स्मृच. ८२

( २ ) यदपि-' उद्वाहिता ' इति नारदेनोक्तं, तदपि कलौ निषिद्धम्–' ऊढायाः पुनरुद्वाहः ' इति ।

चम. ८९

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते* ॥

ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः ।
गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥

( १ ) अयमर्थः– ब्राह्मादिषु सगान्धर्वेषु एष सकृद्दानरूपप्रकारः । आसुरराक्षसपैशाचेषु तु विवाहिताऽप्याच्छिद्याऽन्यस्मै देयेत्यर्थः । § गृक. ५६

( २ ) एष विधिः वाग्दत्तापहाराभावविधिः, तेन गुणाधिकायापि वराय दातुं ब्राह्मादिविवाहे कन्या नापहर्तव्येति कश्चित् । रत्नाकरकृतस्तु एष विधिः सकृत् कन्यादानविधिरित्यर्थः । स नासुरराक्षसपैशाचेषु, विवाहिताया अपि गुणवद्वरलाभे पुनर्विवाहो न दोषायेत्याहुः ।

वीमि. १।६५

( ३ ) ब्राह्मप्राजापत्यार्षदैवगान्धर्वेषु पञ्चस्वेष विधिरनुक्रान्तः ' सकृत् कन्या प्रदीयते ' इत्यादिः, ' कन्यां दद्यात् पिता सकृत् ' इति । आसुरराक्षसपैशाचेषु त्रिषु गुणापेक्षम् । सकृत् दास्यामीत्युक्त्वाऽपि गुणवत्तराय दाने न दोषः । शुल्कभूयस्त्वे वा प्रमथ्य हृते वा, पैशाचेऽपि तथेति । ' पञ्चस्वपि विधिः स्मृतः ', ' आसुरादिषु न त्रिषु ' इति पाठे पञ्चस्वपि गुणापेक्षं दानं, नेतरेषु त्रिषु, तत्र धनाद्यपेक्षम् । गान्धर्वेऽपि अन्योन्येच्छामात्रेण यथोक्तगुणापेक्षमेव । नाभा.

कन्यायां प्राप्तशुल्कायां ज्यायांश्चेद्वर आव्रजेत् ।
धर्मार्थकामसंयुक्तं वाच्यं तत्रानृतं भवेत् ॥

( १ ) शुल्कं मूल्यम् । आसुरविवाहविषयमेतत् विवाहत्रयोपलक्षणं चैतत्, शुल्कस्य सर्वत्रासंभवात् । धर्मार्थकामसंयुक्तं वाक्यं ' इयं कन्या तुभ्यं मया दातव्या ' इति प्रतिश्रवः । ( इति पाठान्तरम् १ ) । ' धर्मे चार्थे च कामे च नातिचरितव्यम् ' इत्येवमेतत् ।

गृक ५७

( २ ) कन्यायां प्राप्तशुल्कायां शुल्कग्रहणकाले प्रशस्यतरः प्रार्थनीयो यद्यागच्छेत्, तत्र धर्मादियुक्तं शीलवती सुरूपवती चेत्याद्यनृतमपि प्रयोजनार्थं वक्तव्यम् । नात्रानृतवचने दोषः । अन्य आह– गृहीतशुल्कायां प्रशस्यतरो यद्यन्य आगच्छेत्, तत्र धर्मादियुक्तमविधेया अविनेया अतिविरूपा च, तस्मात् तव न ददामीति शुल्कप्रदाने नास्त्यनृतदोष इति । नाभा.

सदोषवधूवरयोः परित्यागार्हता

नादुष्टां दूषयेत् कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः ॥

* व्याख्यानानि अस्मिन्नेव पराशरवचने द्रष्टव्यानि ।

§ गृर. गृकगतम् ।

( १ ) मपा. १५३ विधानतः ( विशेषतः ) ; प्रपा. ३४८; मर. २० ; चम. ८८ गच्छेद्यः कन्यायाः ( कन्याया गच्छेद्यः ) ; विपा ७६२ तथा ( ध्रुवः ) विधानतः ( ततः परम् ) .

( २ ) स्मृच. ८२ ; मंप्र. ७४१ ; चम. ८९ या कन्या ( सा कन्या ) ; सुका. ११९ ; मंम. ६८ या कन्या ( सा कन्या ) मर्हेत ( मर्हत्या ) ; भिन्दु. ११३० च्यवद् ; पुम. ४५१.

( ३ ) नास्मे. १२।९७ पूर्वार्धे ( पत्यौ प्रव्रजिते नष्टे क्लीबेऽथ पतिते मृते । ) ; नास्मृ. १५।९७ ; सुका. ११९ मनुः .

( ४ ) नास्मे. १२।२९ ; नास्मृ. १५।२९ ; गृक. ५६ ; गृर. ४८ भवेद्दान ( तु वै दान ) ; वीक. १।६५ दादिषु च त्रिषु ( दादिषु न त्रिषु ) ; उत. १२८ ; वीमि. १।६५ ; संप्र. ५८४ उत्त. : ८५१ .

( १ ) नास्मे. १२।३० ; नास्मृ. १५।३० सं वाक्यं ( सो वाक्यं ) ; गृक. ५७ ज्यायांश्चे ( श्रेयांश्चे ) वाच्यं ( वाक्यं ) ; गृर. ४८ गृकवत्.

( २ ) नास्मे. १२।३१ सति न दोषः ( तु सति नाम्नः ) तोर्द्वयोः ( तोस्तयोः ) ; नास्मृ. १५।३१ नार्दवत् ; गृक. ६१ तोर्द्वयोः ( तोस्तयोः ) नारदवाक्यवत् ; स्मृच. ८१ ; गृर. ५२

( १ ) दोषे कुष्ठादौ । दोषः पापम् । * गृक.६३

( २ ) एतदपि सप्तमपदादर्वाक् वेदितव्यं तत्रैव भार्यात्वस्योपपत्तेः । + स्मृच. ८३

( ३ ) दत्ता प्रतिगृहीतां वा अदुष्टां वरो न दूषयेत् न त्यजेत् दोषवतीति । न चादुष्टं पुरुषं दोषरहितं वर दोषवानिति त्यजेत् । दोषे सति त्यजतोरन्योन्यं नापराधः दृष्टे राजकुलादावदृष्टे च । नाभा.

दत्तकन्यायाः प्रत्यादाने दण्डः

**दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम् ।**
**अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥**

( १ ) अनेन दोषदर्शनेन वाग्दत्तामपि न पूर्वस्मै दद्यादित्युक्तं भवति । स्मृच. ८२

( २ ) अत्र दुष्टशब्देन दुष्कुलत्वं दुःशीलत्वं चोपलक्ष्यते । प्रपा. ३४८

( ३ ) दत्ता वाग्दत्ताम् । अदुष्टश्चेदित्यनो दुष्टाय न देयेति गम्यते । बाल. १।६५

( ४ ) दत्त्वा शुल्कादिना न्यायेन साक्षिमध्ये यो न ददाति अदुष्टाय, स दण्डयश्चोरवद्राज्ञा । नाभा.

दोषमनुक्त्वा सदोषकन्यादाने अदुष्टकन्यात्यागे च दण्डः

**यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।**
**तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम् ॥**

( १ ) एतत् त्यागनिमित्तदोषव्यतिरिक्तविषयम् । पणशतद्वयं सप्तत्यधिकं पूर्वसाहसः * । अप. १।६६

( २ ) यः दोषवतीं, दोषा वक्ष्यमाणाः ' दीर्घकुत्सितरोगार्ताः ' इत्याद्याः , ताननाख्याय ददाति , आख्याय दाने न दोषः, तस्य पूर्वसाहसो दण्डः । नाभा.

**प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद्वरः ।**
**विनेयः सोऽप्यकामोऽपि कन्यां तामेव चोद्वहेत् ॥**

( १ ) प्रतिगृह्य हस्तोदकीकृत्य अदुष्टां विवाहविरोधिदोषशून्याम् ।. विवाहयितुमकामोऽपि इच्छाशून्योऽपि प्रबोध्य तामेव कन्यां विवाहयितव्य इत्यर्थः । गृर. ५२

( २ ) अदुष्टां अविभावितदोषां प्रतिगृह्य य उत्सृजेद्वरः, सोऽपि विनेयः । विनयस्यावचनात् ' सोऽपि ' इत्यपिशब्दात् पूर्वोक्तशतमेवेति गम्यते । अनिच्छन्नपि तामेव कन्यामुद्वहेत् तामुद्वहेदेवेत्यर्थः अनियतदेशत्वाच्चादीयमाना, नान्योद्वाहप्रतिषेधः, तामुत्स्रष्टुं न लभते इति । नाभा.

**अदुष्टां प्रतिगृह्याथ त्यजन्नुत्तमसाहसम् ॥**
**कन्यादोषेऽफलं दान दातुः षण्णवतिर्दमः ।**
**शुल्कप्रदानस्य च तथा कन्यायाश्च निवर्तनम् ॥**
**गूहयित्वाऽऽत्मनो दोषान् ददतो द्विगुणोऽत्ययः ।**
**वरस्य दत्तनाशश्च भवेत् स्त्री च निवर्तते ॥**

---

* गृर. गृकवत् ।

+ पमा., मुक्ता. स्मृचवत् ।

तोर्द्वयोः ( तस्तयोः ) नारदकात्यायनौ ; पमा ४९२ ; मपा. १५४ गृरवत् ; प्रपा. ३६२ उत्तरार्धे ( दोषेऽप्यत्र न दोषः स्यादन्योन्य भज्यते द्वयोः । ) , संप्र. ७४५ ; मुक्ता. १३८ ; संम. ६८ ; बाल. १।६६ ; संर. ५०६ .

( १ ) नासं १३।३२ ; नास्मृ १५।३२ ; स्मृच. ८२ ; पमा. ४९० न्यायेन ( कान्ताय ), प्रपा. ३४८ न्यायेन ( कान्ताय ) दण्ड्यस्तत्र चोरवत् ( दण्ड्यश्चोरदण्डभाक् ) ; चम. ८७ दत्त्वा ( दत्तां ) ; मुक्ता. १३७ ; संम. ६७ ; विपा. ७६३ न्यायेन ( कान्ताय ) दण्ड्यस्तत्र चोरवत् ( दण्ड्यश्चोरदण्डवत् ) ; बाल. १।६५ दत्त्वा ( दत्तां ) ; संर. ५०३ दत्त्वा ( दत्तां ) ताम् ( चेत् ) .

( २ ) नासं. १३।३३ ; नास्मृ १५।३३ ; अप. १।६६ ; स्मृच. ८३ ; प्रपा. ३६१ ; मुक्ता. १३९ ; संर. ५०७ .

* ' दीर्घकुत्सित ' इत्यादिवक्ष्यमाणत्यागनिमित्तदोषे तु याज्ञवल्क्योक्त उत्तमसाहसो दण्ड इति सदर्भार्थः ।

( १ ) नासं. १३।३५ ; नास्मृ. १५।३५ वरः ( नरः ) विनेय. सोऽप्य ( स विनेयस्त्व ) ; अप. १।६६ वरः ( नरः ) सोऽप्य ( सोऽन्य ) ; गृक ६१ वरः ( नरः ) ; स्मृच. ८३ गृकवत् ; गृर. ५१ तु ( च ) वरः ( नरः ) , मपा. १५३ सोऽप्यकामोऽपि ( सोऽर्थदण्डेन ) ; प्रपा १६१ गृकवत् ; उत १२८ तु ( च ) वरः ( नरः ) दोषं मपावत् ; संप्र ७४५ सोऽप्यकामोऽपि ( सोऽथ दण्डेन ) ; मुक्ता. १४० गृकवत्.

( २ ) स्मृच ८३ ; प्रपा. ३६१ गृह्याथ ( गृह्यापि ) .

( ३ ) गृक. ६१–६२ ; गृर. ५२ च तथा ( तु तथा ) .

( ४ ) गृक. ६२ ददतो ( अर्थनो ) ; गृर. ५२ ; दीक. १।६६ ददतो द्विगुणोऽत्ययः ( विन्दन्नाययमर्हति ) ; वीमि. १।६६

(१) अत्ययः दण्डः। दत्तनाशः दत्तशुल्कस्य नाशः। गृक. ६२

(२) निवर्तनं परावृत्तिः। आत्मदोषान् गूहयित्वा गोपायित्वा दत्ता अदत्तात् (? ददतः आदत्तात्) द्विगुणोऽत्ययो दण्डः। तथा स्वदोषं गूहयित्वा वरस्यापि द्विगुणो दण्डः। दत्तशुल्कस्य नाशः। वरस्य स्त्री च निवर्तते तदीया न भवतीत्यर्थः। हलायुधेन तु 'ददतः' इति स्थाने 'विन्देत' (इति) पठित्वा वरमात्रस्यैव दण्ड इत्युपपादितम्। गृर. ५२

## कात्यायनः

वृताया वरे नष्टेऽन्येन विवाहः

वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा।
ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ॥

(१) वाग्दत्ताविषयमेतद्वाक्यम्। रक्तागमो रजोदर्शनम्। अप. १।६५

(२) एवं देशान्तरगतेऽपि द्रष्टव्यम्। स्मृच. ८२

(३) प्रणश्येत् देशान्तरं गच्छेदिति माधवः। अन्यथा परीक्षा(? प्रतीक्षा)वैयर्थ्यात्। एवं च 'प्रतिगृह्य च यः कन्यां वरो देशान्तरं व्रजेत्। त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम्॥' इति। संम. ६७

(४) वरयित्वेति। कन्याया अधार्यत्वे, त्रिऋतुपदात्। * कृम. ११३०

दत्तशुल्काया वरे नष्टे विवाहविचारः

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ॥

(१) एतदपि प्राग्विवाहात् द्रष्टव्यम्। अप. १।६५

(२) स्त्रीधनं मुद्रिकादि। गृक. ६०

(३) एवं च वाग्दानादारभ्य सप्तमपदविक्रमणात् प्राक् दोषदर्शने मरणादौ वा कन्यामन्यस्मै दद्यात् इत्युक्तं भवति। पमा. ४९३

(४) शुल्कं कन्यामूल्यम्। स्त्रीधनं कन्याप्रीतये दत्तमलङ्कारद्रव्यादि। संर. ५०५

अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम्।
अत ऊर्ध्वं प्रदातव्या कन्याऽन्यस्मै यथेच्छतः ॥

(१) प्रवृत्तिः क्षेमवार्ता। गृक. ६०

(२) प्रवृत्तिः आगमप्रयोजिका वार्ता, एतच्च ऋतुत्रयाभ्यन्तरे समात्रयाभ्यन्तरे वा व्यञ्जनादिशङ्काविरहे सति इति नेयम्। गृर. ५०

अनेकेभ्यो दत्ताया विवाहविचारः

अनेकेभ्यो हि दत्तायामनूढायां तु यत्र वै।
पूर्वागतश्च सर्वेषां लभेतादिवरः सुताम् ॥

* शेषं संमवत्।

पूर्वार्धे (गूहयित्वाऽऽत्मनो दोषं विन्दते द्विगुणो दमः।) निवर्तते (विवर्तते).

(१) अप. १।६५ ऋत्वाग (रक्ताग); स्मृच. ८२ तु (च) शेषं अपवत्; चका. ८०६ वरम् (पतिम्) शेषं अपवत्; पमा. ४९२-४९३ ऋत्वागमां (तदा समां); मपा. ३४८ यदा (यदि) शेषं अपवत्, यमः; गमा. १०० प्रणश्येद् (प्रवसेद्) वरम् (पतिम्); संप्र. ७३९; मुक्ता. १२८ अपवत्; संम. ६७ वरम् (पतिम्); सिन्धु. ११३०; विपा. ७६३ यमः; संग. ३४७ प्रणश्येद् (प्रवासे) वरम् (पतिम्).

(२) अप. १।६५ शुल्कं गच्छेद्यः (गच्छेच्छुल्कं यः).; गृक. ५९; गृर. ५० धार्या सा वर्ष (धार्यमावर्ष); पमा. ४९३; उत. १२९-१३०; संप्र. ७४०; मुक्ता. १२८ क्रमेण मनुः; संम. ६८; सिन्धु. ११३१; संकौ. २०७; पुम. ४५४ तथा (तु तद्); संर. ५०५ कन्यायाः (कन्यायां). नारदेऽपि इदं वचनं द्रष्टव्यम्।

(१) गृक. ५९ प्रतीक्षेत (प्रतीच्छेत); गृर. ५०; उत. १३०.

(२) गृक. ५८ पूर्वागतश्च (वरागमश्च) सुताम् (तु ताम्); स्मृच. ८२ गृकवत्; गृर. ४९ भ्यो हि (भ्योऽपि) तु यत्र (च यत्र) शेषं गृकवत्; पमा. ४९३ यत्र (तत्र) उत्तरार्धे (परागमश्च सर्वेषां लभेत तदिमां तु ताम्।); मपा. १५२ गृकवत्; मपा. ३४८ भ्यो हि (भ्योऽपि) उत्तरार्धे (पुरागतश्च सर्वेषां लभते तदिमां सुताम्।); मर. २० गृकवत्; उत. १२९ भ्यो हि (भ्योऽपि) उत्तरार्धे (वरागमश्च सर्वेषां लभेताद्यवरस्तु ताम्।); संप्र. ७४० पूर्वाग (प्रत्याग); चम. ८८ यत्र (तत्र) शेषं मपावत्; मुक्ता. १२९ उत्तरार्धे (वरागमश्च सर्वेषां वहते चान्तिमस्तु ताम्।); संम. ६८ यत्र (तत्र) पूर्वाग (पराग); सिन्धु. ११३१ यत्र (तत्र) तादिवरः सुताम् (ताद्यवरस्तु ताम्); विपा. ७६२ भ्यो हि (भ्योऽपि)

**पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः ।**
**अथागच्छेत वोढायां दत्तं पूर्ववरो हरेत् ॥**

( १ ) अनेकेभ्यो धनग्रहणपूर्वकं दातुं प्रतिज्ञाय तस्यामनूढायां यत्र बहूनां वराणामागमः, तत्र सर्वेषां आद्यो यः प्रथमो वरः स तां कन्या लभेत । अन्ये तु वरं दत्तमल्यं (?) लभेरन्नित्यर्थः ( अन्यतरस्तु स्वयं दत्तं धनं लभते इत्यर्थः– गृर. )। * गृक. ५९

( २ ) अनूढाया यस्मै पूर्वं प्रतिश्रुता स एव कन्यां लभते । अन्येनोढाया तु स्वदत्तं शुल्कमात्रं हरेत्, न कन्यामित्यर्थः । † पमा.४९३

( ३ ) सर्वेषां वराणामागमे सतीत्यर्थः । स च पूर्ववरो यदि दोषरहितो गुणवांश्च भवति । मपा.१५२

( ४ ) अन्यस्मै दत्तायां तस्यां यच्छुल्कं तदेव लभेतेत्यर्थः । सदोषाय प्रथमं प्रतिश्रुताऽपि न देया 'दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत्' ( यास्मृ. १।६५ ) इति स्मृतेः । वसिष्ठस्तु पाणिग्रहणोत्तरमपि ग्राह्या इत्याह– 'पाणिग्रहे कृते कन्या केवलं मन्त्रसंस्कृता । सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति ॥' ( वस्मृ. १७।६६ )। संम. ६८

( ५ ) अनेकेभ्यो हीति । एतच्च निर्दोषैर्बहुभिर्वरणे कृते । आद्यवरः प्रथमवृत्तः( ? तः )। पुरागत इति । पूर्वागत इति वा पाठः । अन्येन पाणिग्रहणात् पूर्वमागत इत्यर्थः । परा( ? पुरा )गत इति पाठेऽप्ययमेवार्थः । नवोढायामिति । नवेन नूतनेन द्वितीयादिना विवाहितायां स्वदत्तं शुल्कमात्रं लभेत, न तु कन्याम् । अनेनैव न्यायेन यदि काचित् कश्चित् समन्त्रमूढ्वा तां त्यक्त्वा जीवनोपायार्थं देशान् परिभ्रमन् कानिचिद्दिनानि नागतः, ततः सा कन्या तत्पित्रादिभिरन्यस्मै विवाहिता तदा सा द्वितीयवोढुर्न भार्या किन्तु पूर्ववोढुरेव, यद्यदूषिता चेत् । वृथाचेष्टायाः फलाजनकत्वादिति बोध्यम् । कृम. ११३१

**पूर्वं दत्ता तु या कन्या अन्येनोढा यदा भवेत् ।**
**संस्कृताऽपि प्रदेया स्याद्यस्मै पूर्वं प्रतिश्रुता ॥**
**अन्यदत्ता तु या कन्या वरेणोढा यदा भवेत् ।**
**कालेन विधिना तां तु संस्कृतां लभते भृगुः ॥**

( १ ) चेद्गुणवत्तर इति शेषः ( प्रथमश्लोके )। अप.१।६५

( २ ) इदं च विवाहिताया अपि पूर्ववराय पुनर्दानमनन्तरोक्तप्रतीक्षणकालादर्वाक् बोद्धव्यम् । गृक. ६०

( ३ ) लभते भृगुरिति पदयोर्मध्ये इत्याहेति शेषः । यदा कन्या एकस्मै विधिना दत्ता अन्येन अतिक्रम्य विवाहिता स्यात्, तदा पूर्वं यस्मै दत्ता तल्लाभे तस्यैव पुनः परिणेतव्येति । गृर. ५०

वरदोषे कन्यादोषे च अनुक्ते दण्डः

**वैरदोषमनाख्याय पाणिं गृह्णाति यो नरः ।**
**याचनं च प्रकुर्वीत तद्दत्तं नाप्नुयात्तु सः ॥**

---

* गृर. गृकवत् ।

† प्रपा., सर. पमागतम् ।

यत्र (नत्र) उत्तरार्धे ( पुरागतश्च सर्वेषां लभते यदिमां सुताम् । ); संकौ. २०७ तु यत्र वै ( तथैव च ) तादिवरः सुताम् ( ताद्यवरस्तु ताम् । ) चन्द्रिकायामित्युक्तम्; पुम. ४५४ भ्यो हि ( भ्योऽपि ) शेषं सिन्धुवत्; सेर. ५०५ गृकवत्.

( १ ) गृक. ५८–५९ सः ( यः ) अथागच्छेत वोढायां ( अथ गच्छेत्त्वनूढाया ); गृर. ४९ उत्तरार्धे ( तथा गच्छेदनूढाया धनं दत्तं वरो हरेत् । ); पमा. ४९३ उत्त.; प्रपा. ३४८ वोढा ( चोढा ) उत्त.; उत. १२९ अथागच्छेत वोढायां ( तथा गच्छेत्त्समूढायां ); संप्र. ७४० ( अथागच्छेत्तुरूढायां दत्तपूर्ववरो हरेत् । ) उत्त.; धम. ८८ उत्त; मुक्ता. १३९ ( अथागच्छेत्तुरूढायां दत्त पूर्वं धनं हरेत् । ) उत्त.; संम. ६८ उत्त.; सिन्धु. ११३१ त वोढायां ( न्त्वोढायां ); विपा. ७६३ अथागच्छेत वोढायां ( अभ्यागच्छेत्तवोढायां ) उत्त.; संकौ. २०७ पू., चन्द्रिकायामित्युक्तम्; पुम. ४५४ सिन्धुवत्.

( १ ) अप. १।६५ पूर्वं (पूर्वं); गृक. ५९–६०; गृर. ५०; मर. २१ अपवत्, नारदः; मुक्ता. १३८ पूर्वं ( पूर्वं ) अन्येनोढा ( कृताऽन्येन ) संस्कृताऽपि ( असंस्कृता ).

( २ ) गृक. ६०; गृर. ५०.

( ३ ) गृक. ६२ वरदोष ( वरो दोष ) याचनं च ( याचनं वा ) तु सः ( स्तुतः ); गृर. ५२ उत्तरार्धे ( याचनां वा प्रकुर्वीत तद्दण्डं नाप्नुयान्नरः । ); मपा. १५२ तद्दत्तं ( तद्दानं );

कन्यादोषेऽप्ययं धर्मो दाता दण्ड्यो वरस्तथा ।
दद्याद्गृहीतं दाता च न त्वेवामिप्रजातयोः ॥

कन्यादोषानाख्याने कन्यादाता दण्ड्यः, वरदोषानाख्याने वरो दण्ड्यः, 'न त्वेवामिप्रजातयोः' इति प्रसवे जाते नैवम् । दण्डस्तु षण्णवति( ? ते )र्द्विगुण एव । * गृर.५२

ऊढायाः पुनर्विवाहो वरदोषे ज्ञाने

वरो यद्यन्यजातीयः पतितः क्लीब एव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥

क्लीबो वा यदि वा भर्ता विसृष्टः पुंस्त्वकारणैः ।
ऊढाऽपि देया साऽन्यस्मै सप्रावरणभूषणा ॥ §

अत्र ऊढापीत्यपिशब्दः कैमुतिकन्यायेन वाग्दत्ताया एवाऽन्यस्मै दानमाचष्टे न तूढायाः । चम.८९

अदुष्टवरकन्ययोरदूष्यता, दुष्टवरकन्ययोस्त्याज्यता

नादुष्टां दूषयेत् कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः ॥ †

## व्यासः

सप्तपद्याः पूर्वं वरमरणेऽन्येन विवाहानुमतिः

कन्याऽन्यस्मै प्रदातव्या वाग्दाने तु कृते वरे ।
मृतेऽन्यस्मै प्रदातव्या मृते सप्तपदात् पुरा ॥
दत्तामपि हरेत् कन्यां सगोत्रोढां तथैव च ।
मन्त्रसंस्काररहिता देयाऽन्यस्मै वराय तु ॥

एवं च सप्तमपदादर्वाक् परिणेतुर्मरणेऽपि न विधवात्वं इत्युक्तं भवति । मुक्ता.१३८

## यमः

वरदोषेऽक्षतयोन्याः संस्कृतायाः पुनर्विवाहानुमतिः

वरश्चेत् कुलशीलाभ्यां न युज्येत कथंचन ।
न मन्त्राः कारणं तत्र न च कन्यानृतं भवेत् ॥
समाहृत्य तु तां कन्यां बलादक्षतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत् ॥

कन्यानृतं कन्यादानान्यथाकरणपापम् । समाक्षिप्य आच्छिद्य । ‡ गृक. ९६

वाग्दत्ताया अपहृतायाश्च कन्यात्वम्

वाचा दत्ता तु या कन्या यदि तस्या वरो मृतः ।
न च मन्त्रोपपन्ना या कन्यका पितुरेव सा ॥

( १ ) अत्र मन्त्रोपपत्तिः पाणिग्रहणमेव संस्कारः । गृक.६०

( २ ) मन्त्रोपपन्ना पाणिग्रहणमन्त्रजन्यसंस्कारवती । गृर. ५१

वलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

---

* गृरु. गृरगनम् ।

§ 'नष्टे मृते' इतिपराशरवचनगतव्याख्यानान्यत्रावधेयानि ।

† व्याख्यानानि नारदे ( संका. पृ ५७५ ) द्रष्टव्यानि ।

वीमि. १३६६ वरदोष ( वरो दोष ) याचन च ( याचनां वा ); संप्र. ७४५ .

( १ ) गृक. ६२ ; गृर. ५२ ; मपा. १५३ ऽप्ययं धर्मो ( ऽप्येवमेव ) पू. ; वीमि. १३६६ ; संप्र. ७४५ मपावत् , पू.

( २ ) गृक. ९६–९७ वरो ( स वा ) , स्मृच. ८३ वरो ( स तु ) विकर्मस्थः ( विकर्मा वा ) ; गृर. ७९ वरो ( स वा ) क्लीब ( क्रूर ) सगोत्रो ( सदोषो ) ; पमा. ४९१ वरो ( स तु ) ; संप्र. ६८० उत्त. : ७३९ ( = ) पमावत् ; चम. ८९ पमावत् ; मुक्ता. १३८ पमावत् ; सिन्धु. ११३० एव वा ( एव च ) .

( ३ ) गृक. ९७ ; स्मृच. ८३ उत्त. ; गृर. ८० साऽन्यस्मै (अन्यस्मै) ; पमा. ४९१ उत्त. ; संप्र. ६८१, ७३९ उत्त. ; चम. ८९ सप्रा ( सद्य ) उत्त. ; मुक्ता. १३८ ऊढा ( दत्ता ) उत्त. ; सिन्धु. ११३० सर्वं चमवत् ..

( ४ ) गृक. ६३ तोर्द्वयोः ( तोस्तयोः ) नारदकात्यायनौ ; गृर. ५३ तोर्द्वयोः ( तस्तयोः ) नारदकात्यायनौ . शेषः स्थलादिनिर्देशः नारदे ( संका. पृ. ५७४ ) द्रष्टव्यः ।

* गृर. गृकवत् ।

( १ ) मुक्ता. १३८ ; आन. १७६ प्रथमश्लोक एव .

( २ ) गृक. ९६ ; स्मृच. ८३ युज्येत ( संयुज्येत ) ; गृर. ७९ युज्येत ( प्रसह्येत् ) ; पमा. ४९०–४९१ यमशातातपौ .

( ३ ) गृक. ९६ समाहृत्य तु तां ( समाक्षिप्य हर्तां ) दक्षत ( दक्षत ) ; स्मृच. ८३ ; गृर. ७९ समाहृत्य तु तां ( समाक्षिप्यानृतां ) ; पमा. ४९१ समाहृत्य ( समाच्छिद्य ) यमशातातपौ .

( ४ ) गृक. ६० ; गृर. ५१ .

( ५ ) मपा. १५२ बलाद ( बलाच ) यमवसिष्ठौ ; मर. २० ; संर. ५०४ यमवसिष्ठौ . वसिष्ठेऽपि (संका. पृ. ५६०) वचनस्यास्य स्थलादिनिर्देशो द्रष्टव्यः ।

## शातातपः

वरदोषेऽक्षतयोन्याः संस्कृतायाः पुनर्विवाहानुमतिः

[1]वैरश्चेत्कुलशीलाभ्यां न युज्येत कथंचन ।
न मन्त्राः कारणं तत्र न च कन्यानृतं भवेत् ॥
[2]समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत् ॥
[3]हीनस्य कुलशीलाभ्यां हरन् कन्यां न दोषभाक् ।
न मन्त्राः कारणं तत्र न च कन्यानृतं भवेत् ॥

(१) पापात् पुरुषात् अरूपवतः । गृक. ९६

(२) पापात् पापवतः पुंसः । गृर. ७९

## लघुशातातपः

वरदोषेऽक्षतयोन्याः संस्कृतायाः पुनर्विवाहानुमतिः

[4]यस्मिंस्तु कुलशीलानि न दृश्येरन् कदाचन ।
न सत्याकरणं तत्र न च कन्यानृतं भवेत् ॥
[5]उद्वाहिता तु या कन्या संप्राप्ता न च मैथुनम् ।
भर्तारं पुनरभ्येति यथा कन्या तथैव सा ॥
[6]समुद्गृह्य तु तां कन्यां सा चेदक्षतयोनिका ।
कुलशीलवते दद्यादिति शातातपोऽब्रवीत् ॥

## पराशरः

विवाहितायाः पुनर्विवाहे पञ्च कारणानि

[7]नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

(१) तत्र पालनात् पतिमन्यमाश्रयेत सैरन्ध्रकर्मादिना आत्मवृत्त्यर्थम् । मेधा. ५।१५६

(२) एवं च यानि संस्कारादूर्ध्वं अक्षतयोन्याः पुनरुद्वाहपराणि, तानि युगान्तराभिप्रायाणीति मन्तव्यम् । * स्मृच. ८३

(३) परिवेदन-पर्याधानयोरिव स्त्रीणां पुनरुद्वाहस्यापि प्रसङ्गात् क्वचिदभ्यनुज्ञां दर्शयति– नष्टे मृते इति । नष्टः देशान्तरगमनेनापरिज्ञातवृत्तान्तः । अयं च पुनरुद्वाहो युगान्तरविषयः । तथा चादित्यपुराणम्–' ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्वीत भ्रातृजाया कमण्डलुम् ॥ ' इति । अत्र ऊढाशब्देन विधिवदूढा ग्राह्या । अन्यथैव पुनरुद्वाहस्याभ्यनुज्ञीकृतत्वात् । पमा ५३

(४) अस्यार्थः– वाग्दानानन्तरं पाणिग्रहणात् प्राक् पतौ संभावितोत्पत्तिकपतित्वे पूर्वस्मिन् वरे नष्टे सति लक्षणया दूरदेशगमनेन अपरिज्ञातवृत्तान्ते सति । § चम. ८७–८८

ब्रह्मचर्यं विधवाधर्मः

मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता ।
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥

पुनरुद्वाहमकृत्वा ब्रह्मचर्यव्रतानुष्ठाने श्रेयोऽतिशयं दर्शयति– मृते भर्तरीति । मृतग्रहणं नष्टादीनामुपलक्षणम् । चतुर्थपादेन स्मृत्यन्तरप्रसिद्धा ब्रह्मचारिगतिर्दृष्टान्तिता । सा च मनुना दर्शिता–' अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसंततिम् ॥ ' इति । पमा. ५३

---

(१) पमा. ४९०–४९१ यमशातातपौ ; संप्र. ७३८–७३९ ; मुक्ता. १३८ पू. ; मान. १७६ न युज्येत (वियुज्येत) पू.

(२) गृक. ९६ पूर्वार्धे (समाक्षिप्य बलात्कन्यां पापादक्षतयोनिकाम् ।) पुनर्गुण (कुलशील) ; गृर. ७९ गृकवत् ; पमा. ४९१ यमशातातपौ ; संप्र. ७३९ ; मुक्ता. १३८ उत्त. ; मान. १७६ उत्त.

(३) गृक. ९६ ; गृर. ७९ तत्र (तस्य) ; पमा. ४९१ (=) ; संप्र. ७३९ ; मुक्ता. १३८ पू. , मान. १७६ पू.

(४) लशास्मृ. ४३ .

(५) लशास्मृ. ४४ तु या (च या) संप्राप्ता न (न संप्राप्ता) ; गृक. ९६ शातातपः ; गृर. ७९ शातातपः .

(६) लशास्मृ. ४५ .

(७) परस्मृ. ४।३० ; मेधा. ५।१५६ (=) क्लीबे च (क्लीबेऽथ) ; स्मृच. ८३ मनुः ; पमा. ४९१ पतौ (तथा) मनुः ; संप्र. ६८१ (=) : ७३८ : ८०१ मनुः ; चम. ८७ : ८९ निर्दिष्टमात्रम् ; मुक्ता. १३९ मनुः ; विरा. ४१२ पूर्वार्धे (नष्टे प्रव्रजिते क्लीबे मृते च पतिते पतौ ।) ; कृम. ११११ .

* मुक्ता. स्मृचवत् ।

§ कृम. चमवत् ।

(१) परस्मृ. ४।३१ ; मुक्ता. १३९ ब्रह्मचर्यव्रते (ब्रह्मचर्ये स्थिता) .

## अङ्गिराः

पुनर्भूदोषः

अन्यदत्ता तु या कन्या पुनरन्यत्र दीयते ।
तस्याश्चैव न भोक्तव्यं पुनर्भूः कीर्तिता बुधैः ॥

## वृद्धमनुः

सप्तपद्याः पूर्वं कन्यात्वम्

मृतेऽन्यस्मिन् वरे देया यदा सप्तपदात्पुरा ।
पाणिग्रहसमाप्तिस्तु पतित्वं सप्तमे पदे ॥

पाणिग्रहणिका मन्त्रा नियता दारलक्षणम् ।
तत्समाप्तिश्च विज्ञेया विद्वद्भिः सप्तमे पदे ॥

वरे देशान्तरगते त्रीन् ऋतून् संप्रतीक्ष्य सा ।
कन्याऽन्यस्मै प्रदातव्या वाग्दाने च कृते सति ॥

## कश्यपः

सप्तविधा पुनर्भूर्विवाहानर्हा

सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ॥
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ।
उदकस्पर्शिता या च या च पाणिगृहीतिका ॥

अग्निं परिगता या च पुनर्भूप्रसवा च या ।
इत्येताः कश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

असंस्कृताया दत्ताया वरे सदोषेऽन्येन विवाहानुमतिः

कुलशीलविहीनस्य षण्ढादेः पतितस्य च ।
अपस्मारिविकर्मस्थरोगिणां वेषधारिणाम् ।
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च ॥

मन्त्रसंस्काररहिता देयाऽन्यस्मै वराय तु ।
अन्यथा तु हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ॥

## ब्रह्मपुराणम्

बालविधवायाः परित्यक्तायाश्च नियोगः पुनर्विवाहो वा, स च न कलौ

मृते भर्तरि या नारी त्यक्तवत्यथ तं स्वयम् ।
सवर्णाज्जनयेद्गर्भं भर्तुः पौनर्भवं सुतम् ॥

यदि सा बालविधवा बलात्त्यक्ताऽथवा क्वचित् ।
तदा भूयस्तु संस्कार्या गृहीता येन केनचित् ॥

त्यक्त्वा भर्तृगृहं गच्छेद्यदि दोषं विना पुनः ।
भर्त्रा सा संस्कर्तव्या च प्रायश्चित्तादिभिः क्रमात् ॥

स्त्रीणां पुनर्विवाहस्तु देवरात्पुत्रसंततिः ।
स्वातन्त्र्यं वा कलियुगे कर्तव्यं न कदाचन ।
यतः पातकिनो लोके नराः सन्ति कलौ युगे ॥

## बृहन्नारदीयम्

अक्षतयोन्याः संस्कृतायाः पुनर्विवाहानुमतिः कलौ न

दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ॥ *

## अनिर्दिष्टकर्तृकवचने

कन्याया बलादुद्वाहे अन्यदेयता, वरमरणादौ सप्तपद्याः पूर्वमेवान्येन विवाहार्हता

बलादुद्वाहिता कन्या देयाऽन्यस्मै वराय च ॥

महादोषे सुविज्ञाते पूर्वं सप्तपदीविधेः ।
मरणादौ समुत्पन्ने देयाऽन्यस्मै न दोषभाक् ॥

(१) अङ्गिरस्मृ. ११० .

(२) बाल. ११५३ पृ. १९५.

(३) कस्मृ. ९१२-४. अन्ये स्थलादिनिर्देशाः कन्यापरीक्षाप्रकरणे (संका. पृ. ५४५) द्रष्टव्याः ।

(४) मुक्ता. १३८; आन. १७६. वसिष्ठेऽपि इदमर्थत्रयं द्रष्टव्यम् ।

(५) मुक्ता. १३८.

* संप्र. व्याख्यानं 'सा चेदक्षतयोनिः स्यात्' इति मनुवचने (संका. पृ. ५६८) द्रष्टव्यम् ।

(१) अप. ११६९ त्यक्त्वा (त्यक्ता); संप्र. ७४३.

(२) अप. ११६९ वा कलि (च कलि); संप्र. ७४३ तृतीयार्धं नास्ति.

(३) उत. ११२ दत्ताक्षतायाः (दत्तायाश्चैव); संप्र. ७४२; धम. ५०.

(४) ज्योनि. १५९.

## स्मृत्यर्थसारः

वरदोषे मन्त्रसंस्कारपूर्वमेवान्येन वरेण विवाहार्हता, स्त्रीणां पुनर्विवाहे मतान्तराणि, कलौ स्त्रीणां पुनर्विवाहो वर्ज्यः

§ शुल्कं दत्त्वा वरे याते पञ्चर्तून् संप्रतीक्ष्य तु ।
कन्याऽन्यस्मै प्रदातव्या वाग्दानेऽपि कृते सति ॥
[2]वरे देशान्तरगते त्रीनृतून् संप्रतीक्ष्य च ।
कन्याऽन्यस्मै प्रदातव्या वाग्दानेऽपि कृते सति ॥
[3]मृतेऽन्यस्मै तथा देया वरे सप्तपदात्पुरा ।
पुरा पुरुषसंयोगान्मृते देयेति केचन ॥
[4]कृतावदृष्टे कन्यैव पुनर्देयेति केचन ।
आगर्भधारणात्कन्या पुनर्देयेति चापरे ॥
[5]देशकालादिमे धर्मा अनुष्ठेया विजानता ।
कुलशीलविहीनस्य पण्ढादेः पतितस्य च ॥
अपस्मारिविकर्मस्थरोगिणां वेषधारिणाम् ।
दत्तामपहरेत्कन्यां सगोत्रोढां तथैव च ॥
मन्त्रसंस्काररहिता देयाऽन्यस्मै वराय च ।
कन्या च दूषिता वर्ज्या देयाऽन्यस्मै वराय सा ।
अन्यथा तु हरन् दण्ड्यो व्ययं दद्याच्च सोदयम् ॥
[6]कृते सप्तपदे भर्तुर्वियोगो यदि जायते ।
न देया पुनरन्यस्मै कलौ कन्या मनीषिभिः ॥

## चन्द्रिकायाम्

आद्यातिरिक्तानेकवरसमागमे दूरस्थेन विवाह्यता

[7]पश्चाद्दूरादागतो यः स हि प्रतिलभेत ताम् ॥

आद्यवरव्यतिरिक्ताना सर्वेषामागमे यो दूरादागतः स तां लभेत । तथा च चन्द्रिकायाम् – पश्चादिति । पश्चादाद्यवरलाभासंभवनिर्णयानन्तरं दूरस्थो वरस्तां कन्यां प्रतिलभेतेत्यर्थः । संर. ५०५

## धर्मप्रवृत्तौ

अक्षतयोन्याः संस्कृतायाः पुनर्विवाहः सदोषे वरे

[1]चतुर्थीमध्ये ज्ञायन्ते दोषा यदि वरस्य चेत् ।
दत्तामपि पुनर्दद्यादन्यस्मै च विदुर्बुधाः ॥
प्रवरैक्यादिदोषाः स्युः पतिसङ्गादधो यदि ।
दत्तामपि हरेद्दद्यादन्यस्मा इति केचन ॥

## रेणुकारिकाः

अदुष्टाय वाग्दत्ताया अदाने दण्डः, सप्तपद्याः पूर्वं कन्यात्वम्, विवाहिताया: पुनर्विवाहे पञ्च कारणानि, विवाहिताया दुष्टायास्त्याज्यता, अदुष्टवरकन्ययोर्दूषणे दण्डः, विवाहितायाः कलौ पुनर्विवाहो वर्ज्यः

*[2]प्रतिश्रुत्यैव यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥
वरणानन्तरं दोषो विज्ञायेत कथंचन ।
वाग्दत्तामपि पूर्वस्मै न दद्यादिति गौतमः ॥
कन्यापुंसोस्तु संबन्धाद्वरणं प्राग्विधीयते ।
वरणं ग्रहणं पाणेः स संस्कारो द्विलक्षणः ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।
अवोचन्नारदः स्मृत्यां तथैवात्र यमोऽब्रवीत् ॥
नोदकेन न वाचा वा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥
कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥
विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां निगर्हिताम् ।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥

---

§ अत्रत्याः केचन श्लोका वसिष्ठवृद्धमन्वादिषु निबन्धकारैः समुद्धृताः सन्ति ।

(१) स्मृसार. १२.

(२) स्मृसार. १२ ; धप्र. ५० ; मुक्ता. १३९ .

(३) स्मृसार. १२ ; मुक्ता १३९.

(४) स्मृसार. १२ ; मुक्ता. १३९ पूर्वार्धे ( कृतौ च दृष्टे कन्यैव मृतौ देयेति चापरे । ) चापरे ( केचन ).

(५) स्मृसार. १२ .

(६) धप्र. ५० .

(७) संर. ५०५ .

* रेणुकारिकास्वेन प्रस्तुतासु कारिकासु बहवः श्लोका मन्वादिस्मृतिकारग्रन्थे वर्तन्ते ।

(१) धप्र. ४९ .

(२) रेका. ६२–७२ पृ. ५२–५३ .

नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः ॥
वाग्दानानन्तरं तस्य प्राक् चेत्सप्तपदीविधेः ।
मरणादिसमुत्पन्ने देयाऽन्यस्मै न दोषभाक् ॥

ऊर्ध्वं संस्कारतो यानि विवाहविषयाणि वै ।
वाक्यान्यक्षतयोन्यास्तु तानि स्युः कलिमन्तरा ॥



## पारस्करगृह्यसूत्रम्*

द्विजस्य वर्णानुपूर्व्या भार्यावरणमनुमतम्

[1]तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण । द्वे राजन्यस्य । एका वैश्यस्य ॥

* कुमार्याः पाणिं गृह्णीयादिति सामान्येनोक्तम्, तत्र विशेषमाह—तिस्र इति । ब्राह्मणस्य द्विजाग्र्यस्य वर्णानुपूर्व्येण वर्णक्रमेण तिस्रः ब्राह्मणीक्षत्रियावैश्याः विवाह्या भवन्ति । द्वे क्षत्रियावैश्ये राजन्यस्य विवाह्ये भवतः । एका वैश्यैव वैश्यस्य विवाह्या भवति । वर्णानुपूर्व्यग्रहणात् व्युत्क्रमो निषिद्धः । § हमा.

द्विजस्य शूद्रा भार्या अमन्त्रवरणार्हा

सर्वेषां शूद्रामप्येके मन्त्रवर्जम् ॥

(१) सर्वेषां वर्णानामेवैके शूद्रामिच्छन्ति । एके नेच्छन्ति, न यस्या धर्मकार्येषु अधिकार इति । तथा च यास्काचार्यः —'=रामा रमणायोपेयते न धर्माय' (नि. १२।१३।२) इति । एके तु रमणार्थतया इच्छन्ति । तथा चाह—'अग्निं प्रथमं चित्वा न =रामामुपेयात्' (नि. १२।१३।२) इति । प्राप्तिपूर्वको हि प्रतिषेधो भवति, तस्माद्विकल्प एवायमिति ।

† कमा.

(२) सर्वेषां ब्राह्मणक्षत्रियविशां शूद्रामप्येके विवाह्यां मन्यन्ते । तत्र विशेषः—मन्त्रवर्ज्यं मन्त्ररहितं यथा भवति तथा । अत्र द्विजातीनामपि शूद्रापरिणयने आचार्येण मन्त्रवत्क्रियानिषेधात् अतः शूद्रस्य शूद्रापरिणयने मन्त्रवत्क्रिया नास्ति, किन्तु मन्त्ररहितं क्रियामात्रमिति गम्यते । ततश्च शूद्रस्य शूद्रापरिणयने मन्त्रहोमादि कर्म कुर्वन्ति, तदशास्त्रीयम् । एके न मन्यन्ते शूद्राविवाहम् । कुतः ? शूद्रायाः धर्मकार्येष्वनधिकारात् । कुतो नाधिकार इति चेत्—'रामा रमणायोपेयते न धर्माय कृष्णजातीया' (नि. १२।१३।२) इति निरुक्तकारयास्काचार्यवचनात् । अतो रमणार्थं शूद्रापरिणयनं पक्षे । एवं सति पश्चादग्न्याधानन्तरम् 'अग्निं चित्वा प्रथमं न रामामुपेयात्' इति निषेध उपपद्यते । प्राप्तं हि प्रतिषेधस्य विषयः । यदि रामोढा न स्यात्तदा अग्निचितः कथं तत्प्रथमगमनं प्रतिषिध्येत । तस्मात् शूद्रापरिणयनं उपभोगार्थं इच्छया कुर्वतो न शास्त्रातिक्रमः । धर्मप्रजार्थो हि विवाहः । हमा.

## गौतमः

सदृशी भार्या प्रशस्ता

[1]गृहस्थः सदृशीं भार्यां विन्देतानन्यपूर्वां यवीयसीम् ॥

(१) सदृशीं जात्या (न ?) कुलतः (च), '[illegible] पुनर्भूरिति [illegible] ॥ [illegible] ॥' (इति) [illegible] । मभा

(२) जात्या कुलेन च सदृशीम् । गौमि.

## हारीतः

[illegible]

[1]ब्राह्मणो वृषलीं गत्वा [illegible] ।
अयाज्यां गर्भमापन्ने पतत्यत्र न संशयः ॥

* अस्य प्रकरणस्य संगतिरेवं 'अथोत्तरेषु प्रकरणतः' इति हारीतवचने गुरुव्याख्याने द्रष्टव्यः । गृ., मंत्र गृह्य ।

§ कमा., अमा., गमा., विमा. इत्यादि ।

= रामादि शूद्रादयः ।

† अमा., गमा., विमा. इत्यादि ।

(१) पागृ. १।४।८–१०; पमा. ४९४; संदी. २७ (भाग २).

(२) पागृ. १।४।११; पमा. ४९४ (सर्वेषां वा एतदेके मन्त्रवर्जम्); संदी. २७ (भाग २).

(१) गौध. ४।१. [illegible] (गौप. पृ. ४०) [illegible] ।

(१) गृक. ४१; संद. [illegible].

ब्रह्महा न भवत्यन्यो ब्रह्महा वृषलीपतिः ।
यस्तस्यामाहितो गर्भः स तेन ब्राह्मणो हतः ॥
[1]वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥

( १ ) पीतफेनस्य पीतमुखासवस्य । * गृक.४३
—( २ ) फेनपीतः पीतमुखलालः । गृर. ३७

द्विजस्य शूद्रातिरिक्तवर्णानुपूर्व्या भार्यावरणमनुमतम्, आपदि अधरवर्णसर्वभार्यानुमतिः

[2]अधोऽवर्णेषु प्रजायमानः पतति न पततीति संशयः । न क्षत्रियविशोः, यज्ञसंयोगात् । वृषल्यां यः प्रजायते स पतति गमनादधस्तराम् । सर्ववर्णक्षये सर्वानेव जनयन्न दुष्यति ॥

अत्रायं प्रकरणार्थः—द्विजातीनां सजातीयकन्याया अलाभे उत्तरोत्तरविजातीया अपि क्रमेण विवाह्याः । तथा अधिवेदननिमित्ते सति पूर्वभार्यामरणे च सति सवर्णाया अलाभे सति उत्तरोत्तरा विवाह्याः । तदुक्तं ब्रह्मपुराणे—' क्षत्रविट्शूद्रकन्यास्तु न विवाह्या द्विजातिभिः । विवाह्या ब्राह्मणी पश्चाद्विवाह्याः क्वचिदेव तु ॥ ' क्वचिदेवेति क्वचिदधिवेदननिमित्ते दारमरणे वा सति । शूद्रायां त्वयं विशेषः—यदितरासु प्रजाया असंभवे प्रजोत्पत्तिमात्रार्थं साऽपि विवाह्या, ' वर्णक्षये वा सर्वानेव जनयन् न दुष्यति ' इति हारीतवचनात् । सहधर्मचारिणी तु तदापि सा न भवतीति, ' धर्मार्थं न भवेत् ' इति विष्णुवचनात् । शूद्राविवाहनिषेधस्तु इतरासां लाभे । यस्तु शूद्राविवाहे पुत्रपौत्रजनने च निन्दार्थवादः सोऽप्येवंविधविवाहविषयः । निन्दाविशेषश्रवणं तु दोषभूयस्त्वप्रतिपादनार्थम् । * गृक.४४

## बौधायनः

सर्ववर्णानां वर्णानुपूर्व्या भार्यावरणमनुमतम्

[1]चत्वारो वर्णा ब्राह्मणक्षत्रियविट्शूद्राः ॥

चतुःसंख्या प्रतिलोमानुलोमानां वर्णसंज्ञानिवृत्त्यर्था । बौवि.

[2]तेषां वर्णानुपूर्व्येण चतस्रो भार्या ब्राह्मणस्य ॥

वर्णचतुष्टयप्रभवाः इतरा मनुष्ययोनय इति वक्तुं ब्राह्मणादीनां भार्या आह—तेषामिति । तेषां मध्ये ब्राह्मणस्येति संबन्धः । आनुपूर्व्यग्रहणात् प्रथमं ब्राह्मणी, ततः क्षत्रिया इत्येवं द्रष्टव्यम् । अस्वजातीयापरिणयनं ( ? ) ' इतरथाऽसदृशीम् ' इति अविशेषकं स्यात् । आह च मनुः — ' सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥ ' ( मस्मृ. ३।१२ ) इति । बौवि.

[3]तिस्रो राजन्यस्य । द्वे वैश्यस्य ॥

आनुपूर्व्येण कामत इति चानुसंधेयम् । बौवि.

[4]एका शूद्रस्य ॥

कामप्रवृत्तस्यापि शूद्रस्य शूद्रैव भार्या । बौवि.

स्ववर्णभार्या प्रशस्ता

[5]आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः ।
प्रजामुत्पादयेद्युक्तः स्वे स्वे वर्णे जितेन्द्रियः ॥ §

* संप्र. गृकवत् ।

( १ ) गृक. ४३ फेनपीतस्य ( पीतफेनस्य ) मनुयमहारीताः ; गृर. ३७ नं विधीयते ( नोपपद्यते ) मनुयमहारीताः ; संप्र. ७५१ मनुयमहारीताः .

( २ ) गृक. ४४ सर्ववर्ण ( सवर्ण ) ; गृर. ३८ ( अधावर्णेषु प्रजाय न पतति पततीति संशयः , न क्षत्रियविशोर्यज्ञसंयोगाद् वृषल्यां यः प्रजायते स पतति निमित्ते सति शयनादधस्तरां सवर्णे क्षये वा सर्वाण्येव जनयन्न दूष्यति । ) ; संप्र. ७५१ अधोऽवर्णेषु ( अधोवर्णेषु ) वृषल्यां यः ... जनयन्न दुष्यति ( वृषल्यां पतितः यः प्रजायते स तत्र गमनादधस्तरः सर्ववर्णक्षये वा ब्राह्मणः सर्वानेव जनयन्न दुष्यत इत्याचार्या इति ).

* गृर., संप्र. गृकवत्.

§ व्याख्यानं विवाहविधिप्रकरणे ( संका. पृ. ९८ ) द्रष्टव्यम् ।

( १ ) बौध. १।१६।१ .

( २ ) बौध. १।१६।२.

( ३ ) बौध. १।१६।३-४.

( ४ ) बौध. १।१६।५.

( ५ ) बौध. २।१६।३ वर्णे ( वंशे ) व्याख्यानावसरे वर्णे इत्येव पदं गृहीतम् ; निप्र. ५४२ ( भागः २ ) ; मुक्ता. १६६ ; संर. ४०३ .

## वसिष्ठः

सदृशी भार्या प्रशस्ता, वर्णानुपूर्व्या भार्यावरणमनुमतं द्विजस्य

गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वा ... सदृशीं भार्यां विन्देत ॥

तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्व्येण, द्वे राजन्यस्य, एकैका वैश्यशूद्रयोः ॥

अनुलोमानामुपनयनविधानात्, अन्यायेनोत्पन्नानां तद्योग्यत्वात् यद्यपि 'सदृशीं भार्यां विन्देत' (गौध. ४।१) इत्यत्र समानजातिष्वेव चोदितः, तथाऽपि प्रथमनिविष्टस्य निकृष्टजातिष्वपि क्रमेण विवाहोऽस्तीति ज्ञापयति। तथा च वसिष्ठः—'तिस्रो ब्राह्मणस्य भार्या वर्णानुपूर्व्येण, द्वे राजन्यस्य, एकैका वैश्यशूद्रयोः' इति। 'प्रतिलोमशूद्राभ्यां जातो धर्महीनः' इति वक्तव्ये 'शूद्रायां च' (गौध.४।२६) इति पृथक् सूत्रकरणात् शूद्राविवाहस्यापि कथंचिद्योग्यतां दर्शयति। ततश्च प्रथममुत्तमजातिपूत्पन्नपुत्रस्य कामिनः शूद्राविवाहोऽपि मन्त्रवर्जो द्रष्टव्यः। तथा च वसिष्ठः—'शूद्रामप्येके मन्त्रवर्जम्' इति। तत्र अपिशब्दस्य निन्दार्थत्वादुत्पन्नपुत्रस्येति तत्रार्थः। मभा. ४।२८

शूद्रा भार्या अमन्त्रवरणार्हा द्विजस्य

शूद्रामप्येके, मन्त्रवर्जं तद्वत् ॥ *

तथा न कुर्यात्। अतो हि ध्रुवः कुलापकर्षः प्रेत्य चास्वर्गः ॥

वसिष्ठोऽपि शूद्रापरिणयननिषेधमाह—'शूद्रामप्येके मन्त्रवर्जं तद्वत्। तथा न कुर्यात् ...' इति। स्मृच. ७८

अग्निचितः शूद्रा भार्या अगम्या, शूद्रा भार्या न धर्मजाया

नाग्निं चित्वा रामामुपेयात् ॥

कृष्णवर्णा या रामा रमणायैव न धर्माय ॥

(१) कृष्णवर्णा शूद्रा। अप.१।८८

(२) अग्निं चित्वा अग्निचयनवन्तं यागं कृत्वा। कृष्णवर्णीयां शूद्रजातीयां स्वविवाहितामपि न गच्छेदित्यर्थः। * गृक.१५८

(३) अस्त्या सवर्णायामस्त्यसवर्णाया अप्यधिकार इत्युक्तं भवति। अत एव वसिष्ठोऽपि शूद्रयैव सह धर्मानुष्ठाननिषेधमाह— कृष्णवर्णेति। कृष्णवर्णीया शूद्रा। § स्मृच.१६५

(४) नष्टवर्णा शूद्रा न धर्माय द्विजानाम्। वीमि.१।८८

## विष्णुः

सर्ववर्णानां वर्णानुपूर्व्या भार्यावरणमनुमतम्

अथ ब्राह्मणस्य वर्णानुक्रमेण चतस्रो भार्या भवन्ति। तिस्रः क्षत्रियस्य। द्वे वैश्यस्य। एका शूद्रस्य ॥

---

* मभा. व्याख्यानं पूर्वसूत्रे द्रष्टव्यम्।

(१) वस्मृ. ८।१. शेषः स्वजातिनिर्देशः विवाहविधिप्रकरणे (संका. पृ. १०१) द्रष्टव्यः।

(२) वस्मृ. १।२४; गृक. ३९–४० पूर्व्येण (पूर्वेण); मभा. ४।२८; गृर. ३५ गृकवत्; पमा. ४९४ (भार्या०) एकैका वैश्यशूद्रयोः (एका वैश्यस्य); मंप्र. ७४८ एकैका (एका).

(३) वस्मृ. १।२५; गोरा. ३।१३ वर्जं तद्वत् (वर्जम्); गृक. ४० (तद्वत्०); स्मृच. ७८; ममु. ३।१३ गृकवत्; गृर. ३५; पमा. ४९४ (सौंशा वा शूद्रामप्येके मन्त्रवर्जम्); मंप्र. ७४९ वर्जं तद्वत् (वर्जनं च); मुफा. ११४.

(४) वस्मृ. १।२६, २७; गृक. ४० तथा न (तत्र न तथा); स्मृच. ७८; गृर. ३५ अतो (यतो); मंप्र. ७४९ तथा न (न तथा) अतो (इति) चास्वर्गः (चाप्यर्दम्); मुफा. ११४.

* गृर. गृकवत्।

§ पम. स्मृचवत्।

(१) वस्मृ. १८।१५; गृक. १५८ चित्वा + (कृष्णवर्णा); गृर. १२५ चित्वा + (वै).

(२) वस्मृ. ८।१६; विश्व. १।५६ (कृष्णवर्णीया रामा रमणायैवेति) आक्रममार इत्युक्तम्; अप. १।८८ या (वै); गृक. १५८; स्मृच. १६५ वर्णा या (वर्णीया वै); गृर. १२५ या रामा (वै सा); पमा. ५०९ (रामा०) न (सा न); वीमि. १।८८ कृष्णवर्णा या रामा (नष्टवर्णा रामा); मंप्र. ७४९ या (च) धर्माय (धर्मार्थम्); चन. ११६ रामा (वै); बाल. १।८८ (या रामा०).

(१) विस्मृ. २४।१–४.

शूद्रा भार्या न धर्मजाया

[1]द्विजस्य भार्या शूद्रा तु धर्मार्थं न भवेत्कचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्तिता ॥

( १ ) रत्यर्थमेवेति । न तु सहधर्मचारिणी भवतीत्यर्थः । गृक. ४०

( २ ) सा धर्मार्थं न भवेत् धर्मकार्येषु नानुप्रविशेदित्यर्थः । स्मृच. ७७

( ३ ) रत्यर्थमेव इत्येवकारेण पूर्वखण्डेन निषिद्धा अपि धर्मार्थता अतिशयद्योतनाय पुनर्निषिध्यते । गृर. ३५

( ४ ) एवं तावदेतेषां मतेन द्विजानामापदि शूद्रासंग्रहणं रतिमात्रफलमपि दोषमान्द्यादनुज्ञातम् । पमा. ४९४–४९५

द्विजस्य शूद्रा भार्या निषिद्धा

[2]हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥

## शङ्खः

सदृशी भार्या प्रशस्ता, शूद्रातिरिक्तवर्णानुपूर्व्या भार्यावरणमनुमतं द्विजस्य, शूद्रस्य शूद्रैव

[3]दारानाहरेत्सदृशानसमानार्षेयान् ... ॥

[4]तिस्रस्तु भार्या विप्रस्य द्वे भार्ये क्षत्रियस्य तु ।
एकैव भार्या वैश्यस्य तथा शूद्रस्य कीर्तिता ।
ब्राह्मणी क्षत्रिया वैश्या विप्रभार्याः प्रकीर्तिताः ॥
क्षत्रिया चैव वैश्या च क्षत्रियस्य विधीयते ।
वैश्या च भार्या वैश्यस्य शूद्रा शूद्रस्य कीर्तिता ॥

( १ ) विस्मृ. २६।५ ; गृक. ४० ; स्मृच. ७७ ; गृर. ३५ रागान्धस्य ( रागार्थस्य ) : ३८ ( धर्मार्थं न भवेत् ) एतावदेव ; पमा. ४९४ ; दीक. १।५६ उत्त. ; संप्र. ७४९ सा तस्य ( साऽत्यन्तं ) ; वीमि. १।५६ रागान्धस्य ( कामार्तस्य ) उत्त., विष्णुपुराणम् ; मुक्ता. १३३ ; संग. २५२ .

( २ ) विस्मृ. २६।६ ; गृक. ४१ नयन्त्याशु ( वहन्त्याशु ) मनुविष्णू ; गृर. ३६ ससंतानानि ( संतानानि च ) मनुविष्णू ; मपा. ३८६ स्त्रियं ( स्त्रियो ) ; संप्र. ७५० मनुविष्णू.

( ३ ) स्थलादिनिर्देशः विवाहविधिप्रकरणे ( संका. पृ. १०२ ) द्रष्टव्यः।

( ४ ) शंस्मृ. ४।७-८ .

सवर्णा भार्या प्रशस्ता, अधोवर्णभार्यावरणमनुकल्पः

[1]भार्याः कार्याः सजातीयाः श्रेयस्यः सर्वेषां स्युरिति पूर्वः कल्पः, ततोऽनुकल्पः, चतस्रो ब्राह्मणस्यानुपूर्व्येण, तिस्रो राजन्यस्य, द्वे वैश्यस्य, एका शूद्रस्य ॥ ...

शूद्रा भार्या द्विजस्य निषिद्धा

[2]आपद्यपि न कर्तव्या शूद्रा भार्या द्विजन्मना ।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥

प्रसूतस्य जनितापत्यस्य । गृर. ३६

[3]तपस्वी यज्ञशीलश्च सर्वधर्मभृतां वरः ।
ध्रुवं शूद्रत्वमायाति शूद्रश्राद्धे त्रयोदशे ॥
[4]नीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः ।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितस्तु ते ॥

शूद्रस्य द्विजैः पित्रादिभिः सह पिण्डमेलनं न कार्यम् ।
स्मृसा. ९१

[5]सपिण्डीकरणं कार्यं कुलजस्य तथा ध्रुवम् ।
श्राद्धद्वादशकं कृत्वा श्राद्धे प्राप्ते त्रयोदशे ॥

( १ ) दा. १३४ ; व्यप्र. ४६५ ( कार्याः० ) श्रेयस्यः सर्वेषां ( सर्वेषां श्रेयस्यः ) .

( २ ) शंस्मृ. ४।९ ; गृक. ४१–४२ द्विजन्मना ( द्विजेन तु ) तस्यां तस्य ( यस्मात्तस्या ); गृर. ३६ न विधीयते ( नोपपद्यते ) ; दीक. १।५५ द्विजन्मना ( द्विजेन तु ) शेषं गृरवत् ; वीसि. १।५६ द्विजन्मना ( द्विजेन तु ) ; संप्र. ७४९ वीमिवत् ; संग. २५२ वीमिवत् .

( ३ ) शंस्मृ. ४।१० शीलश्च ( शीलस्तु ) ; गृक. ४२ मायाति ( माप्नोति ) ; गृर. ३७ यज्ञ ( धर्म ) सर्वधर्म ( धर्मकर्म ) मायाति ( माप्नोति ) ; संग. २५२ यज्ञ ( कर्म ) मायाति ( माप्नोति ) .

( ४ ) शंस्मृ. ४।११ जितस्तु ( जितश्च ) ; गृक. ४२ ; स्मृसा. ९१ ; संप्र. ७४९–७५० ; संग. २५२ उत्तरार्धं ( सर्वे ते शूद्रतां यान्ति यदि स्वर्गगतास्तु ते। ) .

( ५ ) शंस्मृ. ४।१२ ; गृक. ४२ ; संप्र. ७५० श्राद्ध ( श्राद्धं ) श्राद्धे प्राप्ते ( प्राप्ते श्राद्धे ) ; संग. २५३ संप्रवत् .

सपिण्डीकरणे चार्हो न च शूद्रः कथंचन ।
तस्मात्सर्वप्रयत्नेन शूद्रां भार्यां विवर्जयेत् ॥

## महाभारतम्

वर्णानुपूर्व्या भार्यावरणमनुमतं द्विजस्य, शूद्रा भार्या निषिद्धा द्विजस्य, शूद्रस्य सवर्णैव भार्या

तिस्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु ।
वैश्यः स्वजात्यां विन्देत तास्वपत्यं समं भवेत् ॥
ब्राह्मणी तु भवेज्ज्येष्ठा क्षत्रिया क्षत्रियस्य तु ।
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ॥
अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः ।
शूद्रायां जनयन् विप्रः प्रायश्चित्ती विधीयते ॥
चतस्रो विहिता भार्या ब्राह्मणस्य पितामह ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ॥
वैषम्यादथवा लोभात्कामाद्वाऽपि परंतप ।
ब्राह्मणस्य भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
प्रायश्चित्तीयते चापि विधिदृष्टेन कर्मणा ॥
तत्र जातेष्वपत्येषु द्विगुणं स्याद्युधिष्ठिर ॥
क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया च भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥
एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन ।
द्वितीया तु भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥
शूद्रस्य स्यात्सवर्णैव भार्या नान्या कथंचन ।

(१) शंस्मृ. ४।१३ ; गृक. ४२ पूर्वार्धे ( सपिण्डीकरणानर्हो न च शूद्रस्तथा ध्रुव. । ) ; गृर. ३७ पूर्वार्धे ( सपिण्डीकरणे नार्हो न च शूद्रस्तथा ध्रुवम् । ) ; संप्र. ७५० गृकवत् ; संग. २५३ गृकवत्.

(२) भा. १३।४४।११, १२ ; पमा. ४९६ उत्त.

(३) भा. १३।४४।१३ ; पमा. ४९६ पू.

(४) भा. १३।४७।४.

(५) भा. १३।४७।८-१०.

(६) भा १३।४७।४७.

(७) भा. १३।४७।५१.

(८) भा. १३।४७।५६.

शूद्रायोनौ पतद्बीजं हाहाशब्दं द्विजन्मनः ।
कृत्वा पुरीषगर्तेषु पतितोऽस्मीति दुःखितः ॥
मामधः पातयन्नेष पापात्मा काममोहितः ।
अधोगतिं व्रजेत् क्षिप्रमिति शप्त्वा पतेत्तु तत् ॥

## मनुः

सवर्णा भार्या प्रशस्ता, अवरवर्णभार्यावरणमनुकल्पः

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥ *
सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥

(१) 'उद्वहेत द्विजो भार्याम्' (मस्मृ. ३।४) इति सत्यपि द्वितीयानिर्देशे (न) भार्यायाः प्रधानत्वे गुणकर्मत्वे च विवाहस्य विवक्षितमेकत्वम्, अ(?न)-नुवादगतोद्देश्यत्वात् । 'यथा यूपं छिनत्ति' इति । यस्य अन्यतः स्वरूपमवगतं तस्य अन्यत्र कार्यान्तरविधानार्थ-मनूद्यमानस्य यथावगतस्वरूपस्यैव अनुवादो भवति, यथा 'ग्रहं समार्ष्टि' इति, पूर्वावगतिसापेक्षत्वादनु-वादस्य । निर्ज्ञातसंख्याका हि ग्रहाः 'दश एतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इत्यादिवाक्यैः, *कार्यं चावगतम्* 'ग्रहैर्जुहोति' इति । अतः अवगत्यन्तरापेक्षत्वात् *ग्रहशब्दस्य न विवक्ष्यते संख्या* । इह तु भार्यालक्षणोऽर्थो नान्यतः सिद्धोऽस्मादेव वाक्यादवगन्तव्यः । अतो यथा-

* व्याख्यानानि विवाहविधिप्रकरणे ( संका. पृ. १०९ ) द्रष्टव्यानि ।

(१) *पमा. ४९५ आश्वमेधिकेऽपि इत्युक्तम्*.

(२) मस्मृ. ३।४. शेषः स्थलादिनिर्देशः विवाहविधि-प्रकरणे ( संका. पृ. १०९ ) द्रष्टव्यः ।

(३) मस्मृ. ३।१२, विश्व. १।५५ ; मिता. १।५६ (=) शो वराः ( शोऽवराः ) ; अप. १।५७ मितावत्, उत्त. ; गृक. ३८ ; मभा. ५।१ पृ. ८७ मितावत् ; स्मृच. ७६ पू. : ७७ मितावत्, उत्त. ; गृर. ३४ सवर्णाऽग्रे ( सवर्णाश्च ) ; पमा. ४९३ मितावत् ; मपा. १४३ मितावत् ; मर. १८ दारकर्मणि ( दारकर्मसु ) शेषं मितावत् ; दीक. १।५६ मितावत्, उत्त. ; संप्र. ७४७ पू. : ७४९ मितावत् ; मुक्ता. १२३ मितावत् ; संम. ६३ ; बाल. १।५६ ; वीर्वि. १।१६।२.

श्रुति प्रतीयते, प्रातिपदिकार्थवत् संख्याऽपि विवक्षितेति। पञ्चमे चैतद्विस्तरतस्तर्केण वक्ष्यते । स्थितायां संख्याविवक्षायां द्वितीयस्याः कृतेऽपि पाणिग्रहणे न भार्यात्वं, यथा सति आहवनीये न द्वितीयः आहवनीयः । इष्यते च क्वचिन्निमित्ते भार्यान्तरपरिग्रहः, तदर्थमिदमारभ्यते । एतदेवाभिप्रेत्य गौतमीये ( आपस्तम्बीये ) पठितम्— 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीतान्यतरापाये तु कुर्वीत' ( आध. २।११।१२–१३ ) इति । सवर्णा समानजातीया । सा तावदग्रे प्रथमतोऽकृतविजातीयदारपरिग्रहस्य प्रशस्ता । कृते सवर्णाविवाहे यदि तस्यां कथञ्चित् प्रीतिर्न भवति, अथवाऽपत्यार्थो व्यापारो न निष्पद्यते, तदा कामहेतुकायां प्रवृत्तौ इमा वक्ष्यमाणाः सवर्णावराः श्रेष्ठाः शास्त्रात्तु ज्ञातव्याः । अतः एकत्वस्य सवर्णानियमस्य चायमपवादः ।

ननु च सवर्णाविवाहे पारतन्त्र्यं प्रतीयते, न सवर्णाया बहुत्वम् । एकत्वसंख्यातिक्रमस्तावत्प्रतीयते । असवर्णाभ्यनुज्ञानेनापि अतिक्रान्तं चेत् कः सवर्णाया निषेधकः । तथा गौतमेन अविशेषेणैव पठितम् 'अन्यतरापाये तु कुर्वीत' ( आध. २।११।१३ ) इति । उत्तरश्लोके 'सा च स्वा च' इति सवर्णाविवाहोऽस्ति । * मेधा.

( २ ) सवर्णेति । द्विजातीनामादौ पाणिग्रहणे समानजातीया युक्ता इत्युक्तम् । कामात् पुनर्दारकर्मणि प्रवृत्तानां इमा वक्ष्यमाण(१ णाः) वर्णक्रमेण श्रेष्ठाः स्युः । § गोरा.

( ३ ) अयमर्थः— सजातीयकन्याग्राही सत्यां सैव प्रशस्ता प्रथमकल्पे । तदलाभे च सकामस्य क्रमेण इमाः क्षत्रविट्शूद्रकन्यका विवाह्याः । तत्रापि पूर्वपूर्वाभावे उत्तरोत्तरा विवाह्याः । निष्कामस्तु यथाश्रमेऽसमर्थः स्नातकव्रतैरेव वर्तेत । तथा च पैठीनसिः— 'अलाभे कन्यायाः स्नातकव्रतं चरेत् । अपिवा क्षत्रियाया पुत्रमुत्पादयेत् । वैश्यायां शूद्रायां वेत्यन्ये' इति । †गृक.३८

* मवि. मेधागतम् ।
§ मभु., मच., नन्द., माच. गोरावत् ।
† गृर. गृकवत् ।

( ४ ) सवर्णेति । अनेन सवर्णापरिणयनोत्तरकालं असवर्णापरिणयनमविरुद्धमित्याह । कामत इति । अवराः जघन्या इत्यर्थः । अनेन धर्मार्थे सवर्णापरिणयनमित्युक्तम् । स्मृच. ७६,७७

( ५ ) दारकर्मणि अग्निहोत्रादौ धर्मे । सवर्णा वरेण समानो वर्णो ब्राह्मणादिः यस्याः सा ।

• पमा.४९३

( ६ ) वर्णो जातेरप्युपलक्षणम् । अग्रे प्रथमोद्वाहे । द्विजातिपदं शूद्रानुलोमजप्रतिलोमजानामुपलक्षणम् । प्रशस्ता प्राथमकल्पिके दारकर्मणि रतिपुत्रधर्मलक्षणे ।

संप्र. ७४७

( ७ ) अत्र प्राञ्चः— रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः । पुत्रार्थो द्विविधः नित्यः काम्यश्च । अपुत्रस्य यः सुतार्थे विवाहः स नित्यः । एकस्मिन् पुत्रे जाते बहुपुत्रोत्पादनार्थे यो विवाहः स काम्यः । तत्र नित्ये सवर्णैव, काम्यपुत्रोत्पादने शूद्राव्यतिरिक्ताः । रत्यर्थमनाश्रमित्वदोषपरिहारार्थं वा शूद्राऽपि परिणेया । न तु पुत्रोत्पत्त्युद्देशेन, 'यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । नैतन्मम मतं यस्मात्तत्राऽऽत्मा जायते स्वयम् ॥' ( यास्मृ. १।५६ ) इति हेत्वभिधानात् । न चैवं शूद्रापुत्रस्य विभागो न संगच्छते इति वाच्यम्, रत्यर्थे प्रवृत्तस्यानुषङ्गेण पुत्रे जाते वचनस्यार्थवत्त्वात् । यदि नित्यपुत्रोत्पादनार्थे सवर्णा न लभ्यते तदाऽनुकल्पार्थमप्यसवर्णापरिणयनमित्याहुः । संम.६३

सर्ववर्णानां वर्णानुपूर्व्या भार्यावरणमनुमतम्

**शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।**
**ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥**

* शेष स्मृचवत् ।

( १ ) मस्मृ. ३।१३ ; अप. १।५७ राज्ञश्च ( राज्ञः स्युः ) चाग्र ( चान्य ) ; गृक. ३८ पूर्वार्धे ( शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृतः । ) राज्ञश्च ( राज्ञस्तु ) ; मभा. १०।५५ अपवत्; स्मृच. ७७ ; गृर. ३४ स्मृते ( स्मृता ) राज्ञश्च ( राज्ञः स्युः ) ; पमा. ४९४ राज्ञश्च ( राज्ञः स्युः ) ; मपा. १४२ स्मृते ( स्मृता ) राज्ञश्च ( राज्ञस्तु ); मर.१८ राज्ञश्च ( राज्ञस्तु ) जन्मनः ( जन्मनाम् ) ; दीक. १।५६ राज्ञश्च ( राज्ञस्तु ) ;

( १ ) वर्णभेदे सति सवर्णानियमः । यथैव ब्राह्मणस्य क्षत्रियादिस्त्रियो भवन्ति एवं शूद्रस्य जातिन्यूना रजकतक्षकादिस्त्रियः प्राप्ताः । अतः सवर्णेयमुच्यते । उत्कृष्टजातीया तु पूर्वत्र क्रमग्रहणादप्राप्ता । सा च शूद्रा स्वा च वैश्या वैश्यस्य । ते च वैश्याशूद्रे स्वा च राजन्यस्य । एवं अग्रजन्मनो ब्राह्मणस्य । ब्राह्मणक्रमेण निर्देशे कर्तव्ये शूद्रप्रक्रमेण निर्देशः पूर्वोक्तमेवार्थं उपोद्बलयति । यदुक्तम् ' विकल्प आनुपूर्व्येण नावश्यं समुच्चयः ' । मेधा.

( २ ) शूद्रस्य शूद्रैव भार्या भवति न उत्कृष्टापकृष्टे । शूद्रा वैश्या च वैश्यस्य मन्वादिभिः स्मृता । वैश्या शूद्रा क्षत्रिया च क्षत्रियस्य । क्षत्रिया वैश्या ( शूद्रा ) ब्राह्मणी च ब्राह्मणस्य । ' शूद्रामप्येके मन्त्रवर्जम् ' इति वसिष्ठ-स्मरणात् मन्त्रवर्जिता एषा द्विजातीनां भवति ।

* गोरा.

( ३ ) एतत्तु कामतः प्रवृत्तविषयम् ।

स्मृच,७७

( ४ ) एवकारेण केवलशूद्रभार्यत्वं शूद्रस्यैव नान्यस्येति सूचितम् । स्वशब्दग्रहणेन सवर्णायामूढायामेव असवर्णा वोढव्येति प्रत्येकं निर्देशेन, नोत्तरा वोढव्येति । नन्द.

ब्राह्मणक्षत्रिययोः शूद्रा भार्या निषिद्धा

**न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।**
**कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥**

( १ ) यद्यपि अत्यन्तरूपवती शूद्रा, विप्रराजन्यौ च वीरप्रकृती दशामीमपि दशामदनुवीयाता, तथापि शूद्रां नाधिवोढारौ । अत्रार्थवादः— कस्मिंश्चिदपि वृत्तान्ते न क्वचिदितिहासोपाख्यानेऽपि उपदिश्यते वर्ण्यते । आपदि गरीयस्यामधिकायामापदि पूर्वत्रानुज्ञाता अनेन प्रतिषिद्धा, अतो विकल्पः ।

ननु च शास्त्रलक्षणयोः एकविषयसंनिपाते षोडशिग्रहणाग्रहणवद्विकल्पो युक्तः, न तु रागलक्षणायाः प्रवृत्तेः निषेधेन । न च शूद्रा शास्त्रलक्षणा । केवलं रागतस्तत्र प्रवृत्तिरप्रतिषिद्धेति पूर्वशास्त्रस्यार्थः । निषेधस्तु शास्त्रलक्षण इति अविवाह्यैव शूद्रा । एतदेवाभिप्रेत्य याज्ञवल्क्येन पठितम् ' यदुच्यते द्विजातीनां शूद्राद् दारोपसंग्रहः । न तन्मम मतम् ' ( यास्मृ. १।५६ ) इति । अत्रोच्यते— सर्वत्र उपदेशानर्थकतयैव विकल्प आश्रीयते । यदि च अत्यन्तमेव शूद्राप्रतिषेधः स्यात् तदा क्षत्रियवैश्ये एव प्रतिप्रसूयेयाताम् । आपद्यप्यनुज्ञाने( १ नं ) प्रतिप्रसवशास्त्रं अयं च प्रतिषेधः द्वयमपि व्यर्थं स्यात्, सवर्णाया नियमेन सिद्धत्वात् । तदिदमनुज्ञातं( १ नं ) प्रतिषेधश्च स्वस्वविरुध्यमाने विकल्प्येते । ननु च विकल्पे कामचारः, तस्य च प्रतिप्रसवत एव सिद्धेः प्रतिषेधो वक्तव्यो नैव । न यथाकामतः क्षत्रियावैश्ययोर्विवाह इव शूद्रायाः, अन्यत्रापदो गरीयस्याः । इदं तु प्रतिपत्तुं युक्तं यत् सवर्णानियमेन असवर्णानिवृत्तेरर्थतः कृतायाः पुनः शूद्रानिवृत्तिः असवर्णानिवृत्तेरनित्यत्वं ज्ञापयति । अनित्यत्वे च आपदि सवर्णाया अलाभे वा भवति च अयमवगमः, शूद्रा न वोढव्या इतरे तु वोढव्ये । मेधा.

( २ ) ब्राह्मणक्षत्रिययोः गार्हस्थ्यप्रतिपत्तये सवर्णां अलभमानयोः कस्मिंश्चिदपि इतिहासाख्याने शूद्रा भार्या नोपवर्ण्यते । एवं च शूद्रानिषेधात् ब्राह्मणक्षत्रिययोः सवर्णालाभेऽस्ति क्षत्रियवैश्योद्वाह इति गम्यते । तथापि च धनापद्यादौ क्षत्र( प्र १ )वृत्तिदर्शनात् प्रथम ब्राह्मणस्य क्षत्रियोद्वाहः तदलाभे वैश्योद्वाहः ।

गोरा.

( ३ ) यत्पुनरुक्तम् 'न ब्राह्मणक्षत्रिययोः... ॥' इति, तत् तयोरत्यन्तप्रतिषेधार्थं न वैश्यादि( १ वैश्यस्य ) प्राप्त्यर्थम् । अप. १।५६

( ४ ) श्राद्धादिधर्मकार्यार्थमिति शेषः ।

गृक. ४०

---

* मवि., मसु., मच., भाच. गोरागतम् ।

चीमि. १।५६ दीकवत्; संप्र ७४९ दीकवत्; मुक्ता. १२३-पमावद्; बाल. १।५६ दीकवद्.

( १ ) मस्मृ. ३।१४; अप. १।५६; गृक. ४०; स्मृच. ७७; गृर. ३६; पमा. ४९५; मपा. १४४ द्वि ( च ); दीक. १।५६; संप्र. ७४९; मुक्ता. १२३ कस्मिंश्चिदपि ( न कस्मिंश्चित्तु ); बाल. १।५६.

( ५ ) अत्र शूद्राविवाहे न केवलमसवर्णविवाहदोषः, किन्तु दोषान्तरमपीत्याह — न ब्राह्मणेति । आपद्यपि दुर्भिक्षादौ शूद्राविवाहेन धनलाभाभिसारसंभवेऽपीत्यर्थः । वृत्तान्ते प्रस्तावे, यथा भार्यान्तरोद्वाहासंभवेन संतानविच्छेदस्तदापीत्यर्थः । उपदिश्यते अनुज्ञायते ।

* मवि.

( ६ ) पूर्वं सवर्णानुक्रमेणानुलोम्येन विवाहाद्यनुज्ञानात् अयं निषेधः प्रातिलोम्येन विवाहविषयो बोद्धव्यः ।

§ ममु.

( ७ ) अथ ब्रह्मक्षत्रियाभ्यां सवर्णायां प्रथममुद्वोढुमशक्यायामसवर्णाऽपि वोढव्या, न कदाचिदपि प्रथमं शूद्रेत्याह — न ब्राह्मणेति । आपत् सवर्णाया अनन्तराया वा अप्यलाभः । वृत्तान्ते, वृत्तं आचारो धर्ममिति यावत् । अन्तः निर्णयः धर्मशास्त्रमित्यर्थः । भार्या नोपदिश्यते भार्यात्वेन नोपदिश्यते, किन्तु काम्यत्वेनेत्यर्थः ।

नन्द.

द्विजस्य शूद्रा भार्या निषिद्धा

[1]**हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।**
**कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥**

( १ ) पूर्वस्य प्रतिषेधस्य शेषोऽयं निन्दार्थवादः । हीनजातिः शूद्रैव, तस्या एव प्रकृतत्वात्, ' ससंतानानि शूद्रताम् ' इति निगमनात् । ते एते द्विजातयः मोहात् धनलोभजादविवेकात् कामनिमित्ताद्वा कुलानि शूद्रतां गमयन्ति । तस्यां जाताः पुत्राः शूद्रा भवन्ति, एवं तत्पुत्रपौत्रा इति । अत उच्यते ससंतानानीति । संतानः अपत्योत्पत्तिप्रबन्धः पुत्रपौत्रादिः ।

* मेधा.

( २ ) अत्र अर्थवादः — हीनजातिस्त्रियमिति । शूद्रतामित्युपादानात् हीनजातिं शूद्रां शास्त्रार्थापरिज्ञानात् उपयच्छमाना द्विजातयः कुलानि पुत्रपौत्रादिप्रबन्धाः चिरंतनकालभाविसंतानानि शूद्रतां गमयन्ति, तथाविधानामेव तत्रोत्पादनात् । अत्र द्विजातय इति वचनात् वैश्यस्यापि अकृतसवर्णाविवाहस्य शूद्रानिषेध इति गम्यते । ब्राह्मणक्षत्रिययोः पुनः प्रत्यवायातिशयः पूर्वप्रतिषेधारम्भसामर्थ्यात् ।

गोरा.

( ३ ) सवर्णाम( ? पि ) परिणीय हीनजातिं शूद्रां शास्त्राविवेकात्परिणयन्तो ब्रह्मक्षत्रियवैश्याः तत्रोत्पन्नपुत्रपौत्रादिक्रमेण कुलान्येव ससंततिकानि शूद्रतां गमयन्ति । अत्र द्विजातय इति बहुवचननिर्देशात् निन्दया वैश्यस्यापि निषेधः कल्प्यते । ब्राह्मणक्षत्रिययोस्तु पूर्वत्रैव निषेधकल्पनात्तन्निन्दामात्रार्थतैव ।

ममु.

( ४ ) न केवलं ब्राह्मणक्षत्रिययोरेव निषेधः, किन्तु वैश्यस्यापीति सूचयितुमर्थवादमाह— हीनेति । हीनजातिं संस्कारहीनोत्पत्तिं शूद्रां द्विजातयो मन्त्रसंस्कारयुक्ताः स्त्रियमुद्वहन्तः प्रथमभार्यात्वेनोद्वहन्तस्तस्यामुत्पन्नेनापत्येन कुलं संततिं शूद्रतां जातकर्मादिसंस्कारहीनतामाशु नयन्ति ।

नन्द.

**शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।**
**शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥**

( १ ) *शूद्रां विन्दति परिणयति शूद्रावेदी । स पतति* पतित इव । अत्रिः, उतथ्यस्य तनयः पुत्रः, तयोरेतन्मतं इत्युपस्करः । अयं तावदर्धश्लोकः पूर्वप्रतिषेधशेषः । शौनकस्य सुतोत्पत्त्या । शास्त्रान्तरमिदम् । अभ्यनुज्ञाय शूद्रायां ऋतौ उपगमनं निषेधति । सुतोत्पत्तिर्हि ऋतौ युग्मासु रात्रिषु भवति । ऋतौ शूद्रां न गच्छेदित्यर्थः । तदपत्यतया भृगोः । इदमपि स्मृत्यन्तरम् । तान्येव

---

* मच., माच. मविवत् ।

§ शेषं गोरावत् ।

( १ ) मस्मृ. ३।१५ ; अप. १।५६ जाति ( जातिं ) ; गृक. ४१ नयन्त्याशु ( वहन्त्याशु ) मनुविष्णू ; स्मृच. ७७ ; गृर. ३६ ससंतानानि ( संतानानि च ) मनुविष्णू ; पमा. ४९५ जाति ( जातिं ) शूद्रताम् ( शूद्रवत् ) ; मपा. १४४ ; संप्र. ७५० मनुविष्णू ; मुक्ता. १३३ अपवत् ; बाल. १।५६ अपवत्. सर्वज्ञनारायणकुल्लूकादिमनुस्मृतिटीकाकारैः हीनजातिं शूद्रां इति व्याख्यानं कृतं, तस्मादनुमीयते ' हीनजातिं स्त्रियम् ' इति समासरहितः पाठः स्यात् ।

* मवि. मेधागतम् ।

( १ ) मस्मृ. ३।१६ ; अप. १।५७ ; गृक. ४१ ; स्मृच. ७८ ; गृर. ३६ ; पमा. ४९५ ; मपा. १४३ ; संप्र. ७५० ; मुक्ता १३३ रुतथ्य ( रुचथ्य ) ; बाल. १।५६ .

शूद्रोत्पन्नानि अपत्यानि यस्य सः तदपत्यः, तद्भावस्तदपत्यता । भृगोः एतन्मतम् । ऋतावप्युपपन्नतरासु (? प्युपयन्नितरासु) जातापत्य उपेयात् । पतितत्ववचनं चात्र निन्दैव, न त्वस्य पतितधर्मता—'पतितस्योदकम्' इत्यादि । एतच्च वक्ष्यामः । * मेधा.

(२) अत्रेः उतथ्यपुत्रस्य च गौतमस्य एतन्मतं यत् शूद्रोद्वोढा पतितो भवतीति । *निन्दया प्रतिषेधानुमानम्* । नह्यकस्मात् निन्दा प्रवर्तते इति । एवं च तन्मतेनायं शूद्राया अत्यन्तप्रतिषेधः । शौनकस्य पुनर्मतं यत् शूद्रासुतोत्पत्त्या पततीति । अतश्च तन्मते अनतौं तामुपेयात् । भृगोः पुनर्मतं यत् केवलशूद्रापत्यतया पततीति, एवं च तत्पक्षे इतरासु जातापत्यः शूद्रां ऋतौ व्रजेत् । गोरा.

(३) अथ गोत्रविशेषनियतं दोषमाह—शूद्रावेदीति । शूद्रावेदी शूद्रापरिणेता अत्रेः (अत्रि)संज्ञकस्य मुनेर्मते संतत्यनुत्पत्त्याऽपि पतति, 'द्विजातिकर्मभ्यो हानिः पतनम्' इति *गौतमोक्तेः पातित्ययोगी भवति* । उतथ्यतनयो (? उतथ्यो) गौतमः, तद्गोत्रजस्येति 'सुतोत्पत्त्या' इत्यनेन *व्यवहितेनान्वितम्* । *शौनकस्येत्यपि* तदपत्यतया इत्यनेनान्वितम् । तेन गौतमगोत्रस्य पुत्रोत्पत्त्या शौनकभृग्वादीनां तु पौत्रोत्पत्त्या शूद्रतुल्यत्वहेतुः द्विजातिधर्महानिरूपं पातित्यमित्यर्थः । एतच्च तत्तद्गोत्रकर्तॄणां तेन तेन प्रकारेण पूर्वं पातित्यस्य उत्पन्नत्वात् तैरेव नियमितम् । अत एव भविष्ये—'शूद्रामारोप्य शय्यां तु पतितोऽत्रिर्बभूव ह । उतथ्यः पुत्रजननात् पतितत्वमवाप्तवान् ॥ पुत्रस्य पुत्रमासाद्य शौनकः शूद्रतां गतः । भृग्वादयोऽप्येवमेव पतितत्वमवाप्नुयुः ॥' अत्र च भृग्वादय इत्यादिपदादत्रिगौतमव्यतिरिक्तानां सर्वेषां ग्रहणं, केचित्तु अत्रेस्तनयस्य इति षष्ठ्यर्थं व्याचक्षते । एवमुत्तरेष्वपि । तत्तु व्याख्यानं व्यवस्थितार्थानभिधानेन शूद्रावेदनस्य अदोषत्वमापादयत् निषेधविध्यानर्थक्यस्य प्रसञ्जकतया हेयमेव । मवि.

(४) शूद्रां विन्दति परिणयतीति शूद्रावेदी स पतित इव भवति । इदमत्रेर्मतं उतथ्यतनयस्य गौतमस्य च । अत्र्यादिग्रहणमादरार्थम् । एतत् ब्राह्मणविषयम् । 'शूद्रायां सुतोत्पत्त्या पतति' इति शौनकस्य मतम् । एतत् क्षत्रियविषयम् । 'शूद्रासुतोत्पत्त्या (?) पतति' इति भृगोर्मतम् । एतद्वैश्यविषयम् । एतस्य महर्षिमतत्रयस्य व्यवस्थासंभवे विसदृशपतनविकल्पायोगात् । मेधातिथिगोविन्दराजयोस्तु मतं शूद्रावेदी पततीति पूर्वोक्तशूद्राविवाहनिषेधविशेषः सुतोत्पत्त्या पततीति दैवाज्जातशूद्राविवाहे ऋतौ नोपेयादिति विधानार्थम् । ऋतुकालगमने सुतोत्पत्तेः । तदपत्यतयेति तु तान्येव शूद्रोत्पन्नान्यपत्यानि यस्य स तदपत्यः, तस्य भावस्तदपत्यता, तया पतति । एतेनेदमुक्तं ऋतावुपयन्नितरासु जातापत्य उपेयात् । ममु.

(५) तदपत्यतया शूद्रापत्यापत्यत्वेन । * मच.

(६) अत्र मतान्तराण्युपन्यस्य स्वमतं सिद्धान्तयति—शूद्रावेदीति । शूद्रां भार्यात्वेन विन्दतीति शूद्रावेदी, तेन पततीत्यत्रेरुतथ्यतनयस्य च मतम् । (शूद्रामूढवानपि ?) उतथ्यतनयो गौतमः । शूद्राया सुतोत्पादनेन पतति न पुनस्तस्या उद्वहनेनेति शौनकस्य मतम् । शूद्रामूढवानपि तस्या सुतोत्पत्तिभयात् ऋतौ तां नोपेयादित्यर्थः । तदपत्यतया भृगोरित्येतत्स्वमतम् । कुतः ? भृगुमुखेन शास्त्रस्यास्य प्रोच्यमानत्वात् । तदपत्यतया तस्यां शूद्रायामेवापत्यं यस्य स तदपत्यः तस्य भावः तदपत्यता । तया पततीति भृगोर्मम मतम् । 'शूद्रापत्यैश्च केवलैः' इति वक्ष्यति । '*रामो द्विर्नाभिभाषते' इत्युक्तिवदस्मच्छब्दरहिताऽपि स्वमतप्रकाशनपरेयं भृगोरित्युक्तिः* । नन्द.

(७) तदपत्यतया पौत्रोत्पत्त्या । § भाच.

---

* 'सुतोत्पत्त्या' इत्यस्य व्याख्यानमग्रिमश्लोकेऽपि द्रष्टव्यम् । स्मृच., गृर., मपा. मेधागतम् ।

* शेष मेधागतम् ।

§ शेषमतीवाशुद्धम् । तथापि ममुवत् मतत्रयव्यवस्था स्पष्टं प्रतीयते ।

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

( १ ) अर्थवादोऽयम् । यदि पुत्रमुत्पादयति तस्यां ततो ब्राह्मण्यादेव हीयते । अपत्यस्य अब्राह्मणत्वं इति निन्दैव । सुतमिति च पुंलिङ्गनिर्देशात् 'सुतोत्पत्त्या' इत्यत्र समानसंहितत्वेऽपि पुत्रोत्पत्तिरेवाभिप्रेता । तथा च दर्शितम् 'युग्मा रात्रयो वर्ज्याः' इति ।

* मेधा.

( २ ) शूद्रां गत्वा ब्राह्मणो नरकं व्रजति, इत्ययमत्यन्तप्रतिषेधः । शेषोऽर्थवादः । सुतं शूद्रायामुत्पाद्य ब्राह्मण्यादेव भ्रश्यतीत्ययं सुतोत्पत्तिनिषेधार्थवादः । एवं चेह अर्थवादयोर्ब्राह्मणग्रहणात् अत्यन्तप्रतिषेधसुतोत्पत्तिनिषेधौ ब्राह्मणविषयावेव । गोरा.

( ३ ) प्रसङ्गादधिविन्नायामपि शूद्रायां मैथुने दोषमाह–शूद्रामिति । आरोप्येति कारणेन कार्यं मैथुनमुक्तम् । मवि.

( ४ ) यदपि मनुना–शूद्रां इति, तेनापि व्युत्क्रमेणोद्वाहकर्म गमनं तस्यामेव सुतोत्पत्तिर्निषिध्यते, न पुनस्तत्र सुतोत्पत्तिमात्रम् । तथात्वे तु 'चतुस्त्रिद्व्येकभागाः स्युर्वर्णतो ब्राह्मणात्मजाः' इति विभागवचनं न स्यात् । अत एव मनुरपि केवलं शूद्रापत्यतया दोषमाह– 'शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ...' इति । स्मृच. ७७–७८

( ५ ) सवर्णामपरिणीय दैवात्स्नेहाद्वा शूद्रापरिणेतुर्ब्राह्मणस्य शयननिषेधोऽयम्, निन्दया निषेधस्मृत्यनुमानात् शूद्रां गत्वा ब्राह्मणो नरकं गच्छति । 'जनयित्वा सुतं तस्याम्' इत्यृतुकालगमननिषेधपरम् । 'ब्राह्मण्यादेव हीयते' इति दोषभूयस्त्वार्थम् । मनु.

* मच., नन्द., भाच. मेधावत् ।

( १ ) मस्मृ. ३।१७ ; अप. १।५६ ; गृक. ४१ ; स्मृच. ७७ ; गृर. ३६ ; पमा. ४९५ ; वीमि. १।५६ पृ. ; संप्र. ७५० ; मुक्ता. १३३ ; बाल. १।५६ ; संग. २५३ .

[1]दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तं न च स्वर्गं स गच्छति ॥

( १ ) सार्वकालिकोऽयं निषेधः । यदि कथंचित् शूद्राऽपि व्यूह्यते तदा एतानि कर्माणि तत्प्रधानानि न कर्तव्यानि । न च तया सह त्रैवर्णिकस्त्रीवद्धर्मेऽधिकारोऽस्तीत्यर्थः । भार्यात्वात् अधिकारे प्राप्ते निषेधोऽयम् । अतः स्वधर्मे धनं विनियुञ्जानस्य न तदीयानुज्ञोपयुज्यते यथा द्विजातिस्त्रीणाम् । अन्यत्र तु अर्थकामयोः साऽपि अनतिचरणीयैव । प्रेष्यावत् तत्कर्मोपयोगो न निषिध्यते, श्राद्धादौ अवहननादिकार्ये तत्र न दोषः स्यात् । परिवेषणादि न कारयितव्या । तत्र दैवं कर्म दर्शपूर्णमासादि, देवतोद्देशेन च ब्राह्मणभोजनं, व्रतवदित्यत्र यथा व्याख्यातम् । पित्र्यं श्राद्धोदकतर्पणादि । आतिथेयं अतिथेः आराधनं भोजनपाद्यादि ।

ननु च 'सजात्या स्थितयाऽन्यया' (मस्मृ. ९।८७) इत्यस्त्येव प्रतिषेधः । नैव, स्थितयेति तत्र श्रूयते । ऋतुमत्यां सवर्णायां कथंचिद्वा असंनिहितायां प्राप्नोति क्षत्रियावैश्यावत् । अपि च नासौ अधिकारे प्रतिषेधः, किं तर्हि ? आज्यावेक्षणादौ । 'पत्न्यवेक्षितमाज्यं भवति' इति अङ्गत्वेनोपादीयते । पत्नीत्यत्र क्रत्वर्थेषु यया कयाचिदुपात्तया सिद्धिरनियमेन प्राप्ता । यथा बह्वीषु सवर्णासु यया कयाचित् सवर्णया क्रियते एवं असवर्णयाऽपि मा कारीत्येवमर्थोऽसौ प्रतिषेधः । प्राधान्यं अधिकारित्वात् । 'नाश्नन्ति पितृदेवास्तम्' इति कर्मनैष्फल्यमाह । न च स्वर्गं स गच्छति, यद्यपि अतिथिरश्नाति, तत्फले स्वर्गादि न भवतीति ॥ स्वर्गग्रहणं अतिथिपूजाफलोपलक्षणार्थम् अनुवादश्च 'धन्यं यशस्यम्' (मस्मृ. ३।१०६) इत्यादि । मेधा.

( २ ) 'यस्तु तत्कारयेन्मोहात् सजात्या स्थितयाऽन्यया' इति निषेधं वक्ष्यति, अतोऽसंनिहितायामपि

( १ ) मस्मृ. ३।१८ ; अप. १।५७ पितृदेवास्त न ( पितरस्तस्य न ) ; मवि. नाश्नन्ति (नादन्ति) ; स्मृच. ७७ मविवत् ; मुक्ता. १३३ पित्र्याति ( पित्राति ) यस्य ( तस्य ) नाश्नन्ति ( निन्दन्ति ) ; बाल. १।५६ : १।८८ स गच्छति (न सद्गतिम्) ; नन्द. नाश्नन्ति (नादन्ति) देवास्तं न (देवास्तत्र) ; भाच. नन्दवत् .

सजात्यायां वा यागश्राद्धातिथिदानानि यस्य शूद्रया दत्तानि तद्धव्यकव्यं पितृदेवा नोपजीवन्ति, न च तेनाऽऽतिथेयेन स गृहस्थः स्वर्गं गच्छति। गोरा.

( ३ ) यदुक्तम् 'कस्मिंश्चिदपि वृत्तान्ते' इति, (तत्) दोषकथनेन स्पष्टयितुमाह– दैवेति। तत्प्रधानानि भार्यान्तराभावात्। 'न च स्वर्गम्' इत्यातिथेयविषये दोष उक्तः, तत्र 'नादन्त्यतिथयः' इत्यभिधानायोगात्। मवि.

( ४ ) यदि कथंचित्सवर्णानुक्रमेणाक्रमेण वा शूद्रापि परिणीयते तदा भार्यात्वेन प्रसक्तानि तत्कर्तृकाणि दैवेत्यनेन निषिध्यन्ते। दैवं होमादि, पित्र्यं श्राद्धादि, आतिथेयमतिथिभोजनादि, एतानि यस्य शूद्रोपसपायानि तद्धव्यं कव्यं पितृदेवा नाश्नन्ति। न च तेनातिथ्येन स गृही स्वर्गं याति। 'यस्तु तत् कारयेन्मोहात्सजात्या स्थितयाऽन्यया' (मस्मृ. ९।८७) इति सवर्णायां सन्निहिताया निषेधं वक्ष्यति। अयं त्वसंनिहितायामपीत्यपुनरुक्तिः। ममु.

( ५ ) दैवं होमादि। पित्र्यं श्राद्धादि। शूद्रास्तत्सुताश्च प्रधानतया येषु तानीति। न च स्वर्गं ब्राह्मण्याभावेन स्वर्गसाधनकर्माभावात्। मच.

( ६ ) एतमेवार्थं विशदयति– दैवेति। यस्य द्विजस्य। तत्प्रधानानि शूद्राप्रधानानि। तस्य तत् दैवं पित्र्यमातिथेयं च देयं पितृदेवा नादन्ति नाश्नन्ति। आतिथेयस्यापि देवपित्र्यर्थत्वादुक्तं पितृदेवा इति। ततश्च स्वर्गं न गच्छति। 'न ब्राह्मणक्षत्रिययोः' इत्यारभ्य यदिदं शूद्राभार्यत्वं निषिध्यते तत्केवलशूद्राभार्यत्वविषयमिति तत्प्रधानानीत्यनेन स्पष्टीकृतम्। न हि त्रैवर्णिकस्य तत्स्त्रीभार्यस्य दैवपित्र्यातिथेयानि शूद्राप्रधानानि भवन्तीति। नन्द.

( ७ ) यस्य पुंसस्तस्या मुख्यतया प्रधानानि कृतानि दैवपित्र्यातिथेयादीनि, एतानि पितरो देवाश्च नादन्ति न भक्षयन्ति, च पुनः सोऽपि पुमान् स्वर्गं न गच्छति। भाच.

वृषलीफेनपीतस्य निःश्वासोपहतस्य च।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते॥

( १ ) अर्थवादोऽयम्। वृषल्याः फेनः वृषलीफेनः वक्त्रासवः, स पीतो येन। पलाण्डुभक्षितादिवत्परनिपातः। पाठान्तरं वृषलीपीतफेनस्य पीतः फेनः यस्य इति विग्रहः, वृषल्या पीतफेनः। 'तृतीया' (पा. २।१।३०) इति योगविभागात् समासः। पीतः फेनो वा अनेनेति विग्रहे वृषल्या इति षष्ठीसमासः (पा. २।२।८)। अर्थस्तु सर्ववृत्तिषु एक एव। संप्रयुज्यमानयोः अधरपरिचुम्बनादि अवश्यम्भावि, तेन च सहचारिणा धर्मेण मैथुनसंबन्धो लक्ष्यते। प्रकरणाच्च विवाहप्रतिषेधशेषोऽयं, न पृथग्वाक्यम्। तत्त्वे हि चुम्बनादिवर्जं संयोगधर्मो बहुमतः स्यात्। तस्मात् गच्छन् शूद्रां चुम्बनादिपरिवर्जनेन न किंचिच्छास्त्रार्थमुल्लङ्घयेत। तस्या चैव प्रसूतस्य, ऋतौ तु गच्छत इत्यर्थः। निष्कृतिः शुद्धिः नास्ति इति निन्दातिशयोऽयम्। मेधा.

( २ ) शूद्रायाः कृतपरिचुम्बनस्य तयैव चैकपर्यङ्कादौ मुखश्वासापवित्रीकृतस्य तस्यामेव चोत्पन्नस्यापत्यस्य संशुद्धिर्नोपदिश्यत इति। पूर्वोत्तरावर्धश्लोकौ अत्यन्तनिषेधभृगुमतार्थवादौ। गोरा.

( ३ ) वृषलीफेनपीतस्य पीतवृषलीमुखफेनस्य। निःश्वासो वृषल्या एव। एतेन प्रधानमैथुनाभावेऽपि प्राप्त्या (१ अप्रधाना)क्रमामेण दोष उक्तः। प्रसूतस्य उत्पन्नापत्यस्य निष्कृतिः निस्तारः पापात् न विधीयते नानुमतो विना प्रायश्चित्तमित्यर्थः। मवि.

( ४ ) वृषलीफेनः अधररसः, स पीतो येन स वृषलीफेनपीतः। 'वाऽऽहिताग्न्यादिषु' इत्यनेन समासः। अनेन शूद्राया अधररसपानं निषिध्यते। निःश्वासोपहतस्य चेति तया सहैकशय्यादौ शयननिषेधः। तस्यां जातापत्यस्य शुद्धिर्नोपदिश्यते इत्यृतुकालगमननिषेधानुवादः। ममु.

(१) मस्मृ. ३।१९; मेधा. वृषलीपीतफेनस्येति पाठान्तरम्; गृक. ४३ फेनपीतस्य (पीतफेनस्य) मनुयमहारीताः; गृर. १७ न विधीयते (नोपपद्यते) मनुयमहारीताः; पमा. ४९५; संप्र. ७५१ मनुयमहारीताः; मुक्ता. १३४; बाल. १।५१.

( ५ ) तन्निःश्वासेनोपहतं स्पृष्टं शरीरं यस्य तस्य । ऐहिकामुष्मिकयोः कर्मणोर्नाधिकार इति भावः ।
* मच.

( ६ ) उक्तं निगमयति– वृषलीति । वृषलीफेनपीतस्य पीतवृषलीलालाजलस्य । वृषलीभोगोपलक्षणमेतत् । प्रसूतस्य जातापत्यस्य द्विजस्य । निष्कृतिः प्रायश्चित्तम् । एवकारेण त्रैवर्णिकस्त्रियामप्रसूतस्य शूद्रायामेव प्रसूतस्य प्रायश्चित्ताभाव इति सूचितम् । नन्द.

( ७ ) सवर्णामपरिणीय दैवाच्छूद्रापरिणेतुर्ब्राह्मणस्य ( निषेधः ? ) ऋतुकालगमननिषेधानुवादः ।
§ भाच.

## याज्ञवल्क्यः

द्विजस्य शूद्रा भार्या निषिद्धा

**यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।**
**नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥**

( १ ) 'श्रोत्रियाणां महाकुलात्' (यास्मृ. १।५४) इति वचनात् शूद्राविवाहो न प्राप्नोति । इष्यते च कैश्चित्, तत्राचार्यः स्वमतं उपन्यस्यति स्म–– यदुच्यते द्विजातीनामिति । 'कृष्णवर्णीया रामा रमणायैवोपेयते' इति ब्राह्मणवादः । न च विदुषां कामार्थे प्रवृत्तिर्युक्ता । अतः शूद्राविवाहो न कर्तव्यः इति । एतदेव स्पष्टीकरोति हेतुना —— यस्मात्तत्रायं जायते स्वयमिति । तथा बह्वृचाः पठन्ति —– 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥' इति । अतो नैतन्ममाभिप्रेतम् । विश्व.

( २ ) रति–पुत्र–धर्मार्थत्वेन विवाहस्त्रिविधः । तत्र पुत्रार्थो द्विविधः नित्यः काम्यश्च । तत्र नित्ये प्रजार्थे 'सवर्णः श्रोत्रियो वरः' ( यास्मृ. १।५५ ) इत्यनेन सवर्णा मुख्या दर्शिता । इदानीं काम्ये नित्यसंयोगे च अनुकल्पो वक्तव्य इत्याह– यदुच्यत इति । यदुच्यते 'सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥' ( मस्मृ. ३।१२ ) इत्युपक्रम्य '*ब्राह्मणस्य चतस्रो भार्याः*, क्षत्रियस्य तिस्रः, वैश्यस्य द्वे' इति द्विजातीनां शूद्रावेदनमिति, नैतत् याज्ञवल्क्यस्य मतम् । यस्मात् अयं द्विजातिस्तत्र स्वयं जायते । 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः । अत्र च 'तत्रायं जायते स्वयम्' इति हेतुं वदता नैत्यकपुत्रोत्पादनाय काम्यपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता नैत्यकपुत्रोत्पादनानुकल्पे काम्ये च पुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये, क्षत्रियस्य च वैश्या भार्या अनुज्ञाता भवति ।
* मिता.

( ३ ) यदपि च याज्ञवल्क्येनोक्तम् – 'यदुच्यते' इति, तदपि मानवेन समानार्थम् । न चैवं सति 'तत्रात्मा जायते स्वयम्' इति हेतुत्वेना( ? त्वं ना )नुगुणमिति वाच्यम् । तेनापि 'तिस्रो वर्णानुपूर्व्येण' इति शूद्रापरिणयनस्योक्तत्वात् । किञ्च हेतुत्वानुसारेण कदाचिदपि शूद्राविवाहानङ्गीकारे. क्षत्रियादिविवाहोऽपि न स्यात्, तत्रापि आत्मन एवोत्पत्तेः । अतो नायं हेतुः किन्तु अर्थवाद इति मन्तव्यम् । स्मृच. ७७

( ४ ) एवं च द्विजातीनां शूद्रापरिणयप्रसक्तिमाशङ्क्याऽऽह —– यदुच्यते इति । द्विजातीनां शूद्रापरिणयः 'शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः ॥' ( मस्मृ. ३।१३ ) इति मन्वादिभिर्यदुच्यते, तत्र मम संमतं अनुमतार्थकं न, यस्मात् तत्र दारेषु आत्मा उपसंग्राह-

* शेष पदार्थमात्रं मसुवत् । अपूर्वत्वानुवादत्वोल्लेखो नास्ति ।
§ शेषं मसुगनन् ।

( १ ) यास्मृ. १।५६ ; विश्व. १।५६ ; मेधा. ३।१४ शूद्राद्दारो ( शूद्रादारो ) नैतन्मम ( न तन्मम ) चतुर्थपादं विना ; मिता. ; अप. १।५६ शूद्राद्दारो ( शूद्रादारो ) तत्रायं ( तत्रात्मा ) ; गृक. ४० तत्रायं ( तत्रास्माद् ) ; उ. २।१७।२१ दारोपसंग्रहः ( दारपरिग्रहः ) नैतन्मम (न तन्मम) ; स्मृच. ७७ अपवत् ; गृर. ३५ ( कुलं नश्येद्द्विजातीनां शूद्रभार्योपसंगमम् । न तन्मम मतं यस्मात्तत्र नो जायते पुनः ॥ ) ; पमा. ४९६ नैतन्मम (न तन्मम) ; मपा. १४१ अपवत् ; मर. १८ अपवत् ; वीमि. तत्रायं ( तत्रात्मा ) ; पम्र. २६ पमावत् , चतुर्थपादं विना ; संप्र. ७४९ वीमिवत् ; मुक्ता. १३३ पमावत् ; संम. ६३ अपवत् ; बाल. १।८१ अपवत् ; सँग. २५२ वीमिवत् ; सस्मृ. ५३ मेधावत्.

* अप. पदार्थमात्रं मितावत् ।

कस्य स्वयमेव जायते, न तु परं जनयति । तथा च श्रुतिः ' तज्जायाया जायात्वं भवति यदस्या जायते पुनः ' इति सांप्रदायिकाः । परे तु जायते गर्भमाधत्ते इत्यर्थः । तच्च गर्हितम्, ' आपद्यपि न कर्तव्या शूद्रा भार्या द्विजेन तु । तस्या तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥ ' इति शङ्खवचनात् । ननु एवं मन्वादिवचनविरोध इति चेन्न, *मनुवचनस्य अपूर्वाधिवेदनपरत्वमिति सत्यामा*पदि तन्मात्रनिर्णयपरत्वात्, प्रकृतवचनस्य च आपद्यपि व्युत्क्रमेण शूद्राविवाहवर्जनविषयत्वात् । यदुक्तं ब्राह्मे— ' क्षत्रविट्शूद्रकन्यास्तु न विवाह्या द्विजातिभिः । विवाह्य ब्राह्मणीं पश्चाद्विवाह्या क्वचिदेव तु ॥ ' क्वचित् *अधिवेदननिपाते* । केचित्तु ' *विवाहस्त्रिविधः—धर्मार्थः*, प्रजार्थः, रत्यर्थश्च ' इति । तत्र गृहस्थाद्याश्रमविहित-तत्तत्कर्माङ्गभूतपत्नीसंपादको धर्मार्थः सवर्णाविवाह एव । प्रजार्थस्तु सवर्णापुत्रासंभवे नित्यः काम्यश्च द्विविधोऽपि क्षत्रियवैश्यकन्ययोरपि । तत्रापि क्षत्रियकन्याभावे वैश्य-*कन्यायाः । रत्यर्थस्तु शूद्रकन्याया अपि*, ' *रत्यर्थमेव* सा तस्य कामार्तस्य प्रकीर्तिता । ' इति विष्णुपुराणात् । एवं च प्रकृतवचने प्रजार्थे क्षत्रादिकन्याभ्यनुज्ञा, शूद्रायास्तु निरासः । स्मृत्यन्तराणामपि एतदनुसारेणैवाविरोधो द्रष्टव्य इति सर्वं चतुरस्रम् । न च शूद्राया पारशवं पुत्रमभिधाय ' *विप्रास्वेष विधिः स्मृतः* ' इति, ' चतुस्त्रिद्व्येकभागानां वर्णशो ब्राह्मणात्मजाः ' इति च अग्रे मुनिना अभिधानात् नैवमिति वाच्य, रत्यर्थं प्रवृत्तस्य आनुषङ्गिकपुत्रोत्पत्तौ तयोः सावकाशत्वात् । एवं च ' शूद्रा शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । ' ( मस्मृ. ३।१७ ) इत्यादिवचनान्यपि पुत्रोद्देश्य( क )-तदधिगमपराण्येवेत्याहुः । एतच्च सति संभवे अहीनवर्णैव परिणेयेति व्यवस्थितम् । वीमि.

शूद्रातिरिक्तवर्णानुपूर्व्या भार्यावरणमनुमतं द्विजस्य, शूद्रस्य सवर्णैव भार्या

[1]तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥

( १ ) इदं पुनरस्माभिरप्यभिप्रेतम्— तिस्र इति । *शूद्रस्येति वक्तव्ये शूद्रजन्मन इत्युक्तं, साऽपि हि ब्राह्मणा*-दिजाता शूद्रजन्मना न विवाह्येति ज्ञापनार्थम् । एवं क्षत्रियादीनामन्तरप्रभवानां चानुलोमप्रतिलोमाना यथायथं योग्यम् । सर्वथा मनागपि उत्कृष्टजा निकृष्टजन्मना न विवाह्या । निकृष्टाऽपि यथासंनिकर्षं क्रमात् विवाह्या इति *श्लोकार्थः । ऋज्वन्यत्* । विश्व.

( २ ) इदानीं रतिकामस्य उत्पन्नपुत्रस्य वा विनष्ट-भार्यस्य आश्रमान्तरानधिकारिणो गृहस्थाश्रमावस्था-मात्राभिकाङ्क्षिणः परिणयनक्रममाह — तिस्र इति । वर्णक्रमेण ब्राह्मणस्य तिस्रो भार्याः । क्षत्रियस्य द्वे । वैश्यस्य एका । शूद्रस्य तु स्वैव भार्या भवति । सवर्णा पुनः सर्वेषां मुख्या स्थितैव । पूर्वस्याः पूर्वस्या अभावे उत्तरोत्तरा भवति । अयमेव च क्रमो नैत्यकानुकल्पे काम्ये च पुत्रोत्पादनविधौ । अतश्च यत् शूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागसंकीर्तनं च, तथा ' विप्रान्मूर्धावसिक्तो हि ' इत्युपक्रम्य ' विप्रास्वेष विधिः स्मृतः ' इति च, तद्रतिकामस्य आश्रममात्राभिकाङ्क्षिणो वा नान्तरीयकतयोत्पन्नस्य । मिता.

( ३ ) अनुकल्पक्रममाह — तिस्र इति । यदा पुनरुक्तलक्षणा सवर्णा नास्ति पूर्वा च विनष्टा, न चानाश्रमिणा स्थातव्य न च आश्रमान्तरे अधिक्रियते (अ)-सामर्थ्यात्, बहुधनो बालापत्यश्च, तदा तस्यामवस्थायां तिस्रो द्वे एका च ब्राह्मणक्षत्रियविशां भार्या वर्णानुपूर्व्येण, स्वा शूद्रस्य । सवर्णा पुनश्चतुर्थी मुख्या स्थितैव ।

अप.

( ४ ) वर्णक्रमाद्ब्राह्मणस्य क्षत्रिया वैश्या शूद्रा चेति तिस्रो भार्याः । क्षत्रियस्य वैश्या शूद्रा चेति द्वे । वैश्यस्यैका शूद्रेति । सवर्णा पुनः सर्वेषां मुख्या स्थितैव । न च ब्राह्मणस्य ब्राह्मणी क्षत्रिया वैश्या चेति तिस्रो भार्या इति व्याख्यानं शङ्कनीयं, तथात्वे ' स्वाः शूद्रजन्मनः '

( १ ) यास्मृ. १।५७ ; विश्व. ; समु. ५ भार्या ( भार्याः ) ; मिता. ; अप. समुवत् ; स्मृच. ७७ ; पमा. ४९४ ; मर. १८ ; दीक. १।२६ निर्देशमात्रम् ; वीमि. समुवत् ; शुभा. १११ ; संम. ६२ ; सम. १०७ पूर्व्येण ( पूर्वेण ) ; बाल. १।८१ पृ. २२९ ; सस्मृ. ५१ .

इत्यविवक्षितार्थं स्यात् वैश्यस्यापि तथात्वेनाविशेषात् । अतः पूर्वोक्तैव ज्यायसी । स्मृच. ७७

( ५ ) वर्णानुपूर्व्येण वर्णानुलोम्येन, तेन व्युत्क्रमेण विवाहो निषिद्धः । यथाक्रममिति ब्राह्मणस्य तिस्रः, क्षत्रियस्य द्वे, वैश्यस्य एकेत्यर्थः । स्वा शूद्रा । तेन संकरजात्यावृत्तिः, ब्राह्मण्यादिष्वावृत्तेः ' सवर्णः ' ( यास्मृ. १।५५ ) इत्यनेनैव प्राप्तेः । शूद्रजन्मनः शूद्रजातीयजातस्य । एतेन पारशवोऽपि संगृहीतः । एवं च ब्राह्मणादितः क्षत्रियादिकन्यासु जाताना स्वमातृजातीयानुत्कृष्टकन्ययैव विवाह इति सूचितम् । * वीमि.

## नारदः

सवर्णा भार्या प्रशस्ता

[1]ब्राह्मणक्षत्रियविशां शूद्राणां च परिग्रहे ।
सजातिः श्रेयसी भार्या सजातिश्च पतिः स्त्रियाः ॥

ब्राह्मणादीनां चतुर्णां दारपरिग्रहे स्वजातीया ब्राह्मणस्य ब्राह्मणी, क्षत्रियस्य क्षत्रियेत्यादि, प्रशस्यतरा । एष प्रथमः कल्प इति प्रकर्षप्रत्ययाद्गम्यते । अस्मादेवेतरा अपि भवन्तीति गम्यते । स्वजातीयश्च पतिः स्त्रियाः श्रेयानिति, स्वजात्यालाभे अन्यस्मै देयेति । नाभा.

सवर्णानां वर्णानुपूर्व्या भार्यावरणमनुमतम्

[2]ब्राह्मणस्यानुलोम्येन स्त्रियोऽन्यास्तिस्र एव तु ।
शूद्रायाः प्रातिलोम्येन तथाऽन्ये पतयस्त्रयः ॥

ब्राह्मणस्यानुलोम्येन अनुक्रमेण अन्याः ब्राह्मणी- ( मन्तरा ) क्षत्रिया वैश्या शूद्रा चेति तिस्रः स्त्रियः । अनुकल्पोऽयं प्रकर्षप्रत्ययात् पूर्वश्लोके, ' कामतस्तु प्रवृत्तानाम् ' इति संहितान्तरे वचनाच्च । तथा शूद्रायाः प्रातिलोम्येनानुक्रमेण शूद्राभावे वैश्यः, ततः क्षत्रियः, ततो ब्राह्मणो भवति । एवं शूद्रादन्ये त्रयः पतयः संभवन्ति । शूद्रा ब्राह्मणश्च पतिदाराभ्यां तु( ल्यौ ) ब्राह्मणस्य चतस्रः शूद्रायाश्चत्वार इति । नाभा.

[1]द्वे भार्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्तिता ।
वैश्याया द्वौ पती ज्ञेयावेकोऽन्यः क्षत्रियापतिः ॥

द्वे क्षत्रियस्यान्ये क्षत्रियायाः, वैश्या शूद्रा च । वैश्यस्यैकाऽन्या वैश्यायाः, शूद्रा । क्षत्रियाया वक्तव्ये वैश्योक्ता चतुष्कादिक्रमादैक्यानुग्रहार्थम् । वैश्याया द्वावन्यौ वैश्यात्, क्षत्रियो ब्राह्मणश्च । क्षत्रियाया अन्यः क्षत्रियादेको ब्राह्मणः । क्षत्रियो वैश्या च तुल्यौ तिस्रस्त्रयश्च । वैश्यः क्षत्रिया च तुल्यौ पतिदाराभ्यां द्वे द्वाविति । नाभा.

## व्यासः

अन्यवर्णभार्यापुत्रः स्वसवर्णः , शूद्रातिरिक्तवर्णानुपूर्व्या भार्यावरणमनुमतं द्विजस्य

[2]ऊढायां हि सवर्णायामन्यां वा काममुद्वहेत् ।
तस्यामुत्पादितः पुत्रो न स्ववर्णात् प्रहीयते ॥
उद्वहेत्क्षत्रियां विप्रो वैश्यां च क्षत्रियोऽपि ताम् ।
न तु शूद्रां द्विजः कश्चिन्नाधरः पूर्ववर्णजाम् ॥

## देवलः

सर्ववर्णानां वर्णानुपूर्व्या भार्यावरणमनुमतम्

[3]एका शूद्रस्य वैश्यस्य द्वे तिस्रः क्षत्रियस्य च ।
चतस्रो ब्राह्मणस्य स्युर्भार्या राज्ञो यथेच्छतः ॥

## उशना

ब्राह्मणस्य शूद्रा भार्या निषिद्धा

[4]पतति वृपलीपतिरित्याचक्षते । न पततीत्येके । ब्राह्मणस्य कल्पविहिताश्चतस्र आनुपूर्व्येण भार्या

---

* शेषं अपगतम् ।

( १ ) नासं. १२।४ सजातिः ( स्वजात्या ) सजातिश्च ( स्वजात्यश्च ) ; नास्मृ. १४।४ ; गृक. ४ ; गृर. ५ .

( २ ) नासं. १२।५ ; नास्मृ. १४।५ ; गृक. ३९ ; गृर. ३५ न्यास्तिस्र ( न्याः त्रिय ) ; पमा. ४९४ ; संप्र. ७४८ ; मुक्ता. १३३ .

( १ ) नासं. १२।६ ज्ञेयावे ( अन्या ए ) ; नास्मृ. १४।६ ; गृक. ३९ क्षत्रिया ( क्षत्रियः ) ; गृर. ३५ ; पमा. ४९४ ; संप्र. ७४८ ; मुक्ता. १३३ .

( २ ) व्यास्मृ. २।१०, ११.

( ३ ) गृक. १०४ क्रमेण हारीतः ; गृर. ८५ .

( ४ ) गृक. ४३—४४ ; गृर. ३७ श्चतस्र ( श्चतस्रश्च ) वसिष्ठ आह ( आह वसिष्ठः ) ( सुत० ) ; संप्र. ७५१ .

भवन्तीति वसिष्ठ आह । पतति न पततीति संशयः, वृषल्या पततीति हारीतः । सुतजननात् पततीति शौनकः । तदपत्यैः पततीति गौतमः ॥

[1]निष्कृतिः स्यात् सुरापस्य हत्वा वा ब्रह्मवादिनम् ।
वृषल्यभिप्रजातस्य निष्कृतिर्नोपपद्यते ॥

## यमः

सवर्णा भार्या प्रशस्ता, सर्ववर्णानां वर्णानुपूर्व्या भार्यावरणमनुमतम्

[2]भार्याः सजात्याः सर्वेषां धर्मः प्राथमकल्पिकः ॥

*अयमर्थः– समावृत्तस्य त्रैवर्णिकस्य प्रथमविवाहे* सवर्णैव मुख्या, क्षत्रियोरव्यादिषु प्रायश्चित्तस्मरणात् । शूद्रस्य शूद्रैव । अनुलोमजादीनामपि प्रथमविवाहे सवर्णैव । संप्र. ७४७–७४८

[3]आनुपूर्व्येण भार्याः स्युश्चतस्रो ब्राह्मणस्य तु ।
क्षत्रियस्यानुपूर्व्येण ज्ञेयास्तिस्रोऽवराः स्त्रियः ॥

[4]वैश्यस्य चावरे धर्म्ये द्वे भार्ये चाब्रवीन्मनुः ।
शूद्रः स्वजातिं विन्देत तास्वपत्यं समं भवेत् ॥

समत्वं च पुत्रोत्पत्तिनिमित्तपैतृकऋणापाकरणाभिप्रायम् । गृक. ३९

ब्राह्मणस्य शूद्रा भार्या निषिद्धा

[5]*ब्राह्मणो वृषलीं गत्वा त्र्यहं भवति सूतकी ।*
*अथास्यां गर्भमाधत्ते ब्राह्मण्यादेव हीयते ॥*

न ब्रह्महा ब्रह्महा तु ब्रह्महा वृषलीपतिः ।
यस्तत्र जायते गर्भः स तेन ब्रह्महा भवेत् ॥

[2]वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥

## * बृहद्यमः

ब्राह्मणस्य शूद्रा भार्या निषिद्धा

[3]यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
तद्भक्षणे जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥

[4]वृषलीं यस्तु गृह्णाति ब्राह्मणो मदमोहितः ।
सदा सूतकिता तस्य ब्रह्महत्या दिने दिने ॥

वृषलीगमनं चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं पुनः श्वानो भविष्यति ॥

वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥

[5]अग्रे माहिषकं दृष्ट्वा मध्ये च वृषलीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥

अजाविको ( ? कं ) माहिषश्च ( ? षं च ) तथा च वृषलीपतिः ( ? तिम् ) ।
तृणाग्रेणापि संस्पृष्ट्वा सवासा जलमाविशेत् ॥

---

(१) गृक. ४३ ; गृर. ३७ जातस्य ( वातस्य ) ; संप्र. ७५१ वादिनम् ( वादिनः ) ; संग. २५३ संप्रवत्.

(२) गृक. ३८ सजात्याः ( स्वान्याश्च ) ; गृर. ३४ सजात्याः ( स्वजात्यां ) प्राथमकल्पिकः ( प्रथमकल्पितः ) ; संप्र. ७४७ ; संग. २५३ .

(३) गृक. ३९ ज्ञेयास्तिस्रोऽवरा' ( तिस्रो ज्ञेया वराः ) ; गृर. ३४ आनुपूर्व्येण ( अनुपूर्वेण ) ज्ञेया ( गम्या ) ; संप्र ७४८ .

(४) गृक. ३९ ; गृर. ३४ पूर्वार्धे ( वैश्यस्यावरधर्मे द्वे भार्ये इत्यब्रवीन्मुनि' । ) स्वजातिं ( स्वजातीः ) ; संप्र. ७४८ भार्ये चाब्र ( भार्येत्यब ) .

(५) गृक. ४२ ; स्मृच. ७७ ; गृर. ३७ त्र्यहं ( सत्य ) ; संप्र. ७५० .

* इयमेव स्मृतिः ' ख. ' पुस्तके सुमहता पाठभेदेन यमस्मृतित्वेन मुद्रिता ।

(१) गृक. ४२ तु ( वै ) ; गृर. ३७ तु ( वै ) ब्रह्महा भवेद ( ब्राह्मणो हतः ) ; संप्र. ७५०.

(२) यमस्मृ. २८ ( ख. ) न विधीयते ( नैव विद्यते ) ; गृक. ४३ फेनपीतस्य ( पीतफेनस्य ) मनुयमहारीता' ; स्मृच. ८१ न विधीयते ( नैव विद्यते ) ; गृर. ३७ न विधीयते ( नोपपद्यते ) मनुयमहारीताः ; संप्र. ७५१ मनुयमहारीता' .

(३) बृयस्मृ. ३।१२ ; यमस्मृ. २६ ( ख. ) ( यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः । तद्भैक्ष्यभुग् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ ).

(४) बृयस्मृ. ३।१३–१६ .

(५) बृयस्मृ. ३।२६ .

## पैठीनसिः

सर्ववर्णानां अधरवर्णभार्यावरणमनुकल्पः

अलाभे विप्रकन्यायाः स्त्रियोऽन्यास्तिस्र एव तु ।
शूद्रायाः प्रातिलोम्येन तथाऽन्ये पतयस्त्रयः ॥

अलाभे कन्यायाः स्नातकव्रतं चरेत्, अपि वा क्षत्रियायां पुत्रमुत्पादयेत्, वैश्यायां वा शूद्रायां वेत्यन्ये ॥

(१) एतच्च (स्नानकव्रताचरणं) संन्यासानधिकारिणः । उत. १४८

(२) कन्यायाः सवर्णायाः । स्नातकव्रताचरणं तु स्नातकाभिप्रायेणैव, न मृतभार्याभिप्रायेण, 'आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्' 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः' इत्यादिवचनविरोधात् । यदा तूत्पन्नपुत्रोऽतिवृद्धो वा कन्यां न लभते तदा भवत्येव तस्यापि स्नातकव्रताचरणम् । यदा त्वनुत्पन्नपुत्रोऽविरक्तोऽतिसमर्थश्च सवर्णां न लभते तदा त्वाह--अपि वेति । संप्र. ७४८

## जातूकर्ण्यः

सवर्णा भार्या प्रशस्ता

सवर्णया कृतदारो नान्यामिच्छेत्, संतानस्यान्यगामित्वात् ॥

(१) मुक्ता. १२२.

(२) गृक. ३८ वैश्यायां वा (वैश्यायां) ; स्मृच. ७७ कन्यायाः (कन्यकायाः) पुत्रमुत्पादयेत् वैश्यायां वा (पुत्रानुत्पादयीत वैश्यायां) ; गृर. ३४ कन्यायाः (कन्यकायाश्च) व्रतं चरेत् (व्रतमाचरेत्) अपि वा (अपि) ; पमा. ४९४ मुत्पादयेत् ... वेत्यन्ये (मुत्पादयीत शूद्रायां वेत्येके) ; मपा. १४५ अलाभे (अभावे) क्षत्रियायां पुत्रमुत्पादयेत् (क्षत्रियायां तु पुत्रानुत्पादयीत) ; उत. १४८ (अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत् ।) एतावदेव ; संप्र. ७४८ ; मुक्ता. १२१ पुत्रमुत्पादयेत् (पुत्रानुत्पादयीत) (शूद्रायां वेत्यन्ये०) आपूर्वाः.

(१) विश्व. १।७९ पृ. ८३.

## अङ्गिराः

द्विजस्य शूद्रा भार्या निषिद्धा

वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तासु चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥

अजापालो म(मा)हिषश्च तथा च वृषलीपतिः ।
प्रमादादपि संस्पृश्य सचैलं स्नानमाचरेत् ॥

## मार्कण्डेयपुराणम्

सवर्णा भार्या प्रशस्ता, द्विजस्य वर्णानुपूर्व्या भार्यावरणमनुमतम्

ब्राह्मणो ब्राह्मणीपूर्वं कुर्वन्दारपरिग्रहम् ।
ब्राह्मण्यात्सर्ववर्णेषु न हानिमुपगच्छति ॥
तथैव क्षत्रियसुतां क्षत्रियः पूर्वमुद्वहन् ।
इतरे च ततो राजंश्च्यवते न स्वधर्मतः ॥
कुर्वन्वैश्यस्तथा वैश्यां पश्चाच्छूद्रकुलोद्भवाम् ।
न हीयते वैश्यकुलादयं न्यायः क्रमोदितः ॥
ब्राह्मणाः क्षत्रिया वैश्याः सवर्णापाणिसंग्रहम् ।
अकृत्वाऽन्यभवापाणेः पतन्ति नृप संग्रहात् ॥
यस्या यस्या हि हीनायाः कुरुते पाणिसंग्रहम् ।
अकृत्वा वर्णसंयोगं सोऽपि तद्वर्णभाग्भवेत् ॥

## ब्रह्मपुराणम्

द्विजस्य वर्णानुपूर्व्या भार्यावरणमनुमतम्, आपदि अधरवर्णभार्यानुमतिः

कदापि शूद्रकन्यास्तु न विवाह्या द्विजातिभिः ।
विवाह्य ब्राह्मणीं पश्चाद्विवाह्याः कचिदेव तु ॥
क्षत्रविट्शूद्रकन्यास्तु न विवाह्या द्विजातिभिः ।
विवाह्य ब्राह्मणीं पश्चाद्विवाह्याः कचिदेव तु ॥

कचिदेवेति, कचित् अधिवेदननिमित्ते दारमरणे वा सति । गृक. ४४

(१) अङ्गिरस्मृ. १२२.

(२) अङ्गिरस्मृ. १२३.

(३) मार्क. ११३।३१—३५.

(४) दीक. १।५६.

(५) गृक. ४४ विवाह्य ब्राह्मणी (विवाह्या ब्राह्मणी) ; गृर. १८ कन्यास्तु (कन्यान्ना) वाह्याः (वाह्या) ; वीमि १।५६ वाह्याः (वाह्या) ; संप्र. ७१२.

## भविष्यपुराणम्

द्विजस्य शूद्रा भार्या निषिद्धा

शूद्रामारोप्य शय्यां तु पतितोऽत्रिर्बभव ह ।
उतथ्यः पुत्रजननात् पतितत्वमवाप्तवान् ॥
पुत्रस्य पुत्रमासाद्य शौनकः शूद्रतां गतः ।
भृग्वादयोऽप्येवमेव पतितत्वमवाप्नुयुः ॥

## स्मृत्यर्थसारः

द्विजस्याधरवर्णभार्यावरणं कलौ वर्ज्यम्

असवर्णासु कन्यासु विवाहश्च द्विजातिषु ॥
कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः ॥

(१) भवि. ३।१६ ; संप्र. ७५१ शय्यां ( वेद्यां ) वाप्तवान् ( वाप्नुयात् ).

(२) स्मृसार. २ ; पमा. ४९६ द्विजातिषु ( द्विजातिभिः ) स्मृत्यन्तरम्; चम. ५०, ११५ (=) ; मुक्ता. १३४ (=) पमावद् ; बाल. १।८१ पृ. २२९ (=).

(३) स्मृसार. २ ; पमा. ४९६, ५७८ स्मृत्यन्तरम् ; पप्र. २७ स्मृत्यन्तरम्.

## रेणुकारिकाः

द्विजस्य वर्णानुपूर्व्या भार्यावरणमनुमतम्, द्विजस्य शूद्रा भार्या निषिद्धा, द्विजस्याधरवर्णभार्यावरणं कलौ वर्ज्यम्

सवर्णां क्षत्रियां वैश्यामुद्वहेद्ब्राह्मणः क्रमात् ।
क्षत्रियः क्षत्रियां वैश्यां वैश्यः स्वामेव धर्मतः ॥
सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥
सर्वेषामपि भार्यार्थे शूद्रां नेच्छन्ति केचन ।
प्रजोत्पत्तिनिषेधात्सा रमणायैव केवलम् ॥
भार्या द्विजस्य शूद्रा तु न धर्मार्थं भवेत्कचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्तिता ॥
शूद्रा चेदीयते ह्य( ? शूद्रावेदी पतत्य )-
त्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
कन्यानामसवर्णानां विवाहो ब्राह्मणादिभिः ।
कलौ युगे निषेधात्स न कर्तव्य इति स्मृतिः ॥

(१) रेका. २८-३३ पृ. ५१ .

## बौधायनगृह्यशेषसूत्रम्

विवाहानुकूलानि वरलक्षणानि

[१]बन्धुशीललक्षणसंपन्नः श्रुतवानरोग इति वरसंपत् ॥

## आश्वलायनगृह्यसूत्रम्

विवाहानुकूलं वरलक्षणम्

[२]बुद्धिमते कन्यां प्रयच्छेत् ॥

( १ ) अथ वरगुणमाह—बुद्धिमते इति। तत्र बुद्धिमते इति बुद्धिमत्तरायेत्यर्थः । का पुनर्बुद्धिः ? याऽर्थदर्शिनी । यो यः शास्त्रवित् ( ? कोऽर्थः ? यः शास्त्राविरुद्धः ) । तद्वते । एवं वरगुणा उक्ताः । देभा.

( २ ) अर्थदर्शिनी बुद्धिः । कोऽर्थः ? यः शास्त्राविरुद्धः । तद्वते बुद्धिमते कन्यां प्रयच्छेत् । गानाष्ट्.

( ३ ) शास्त्राविरुद्धदृष्टादृष्टविषया बुद्धिः । अना.

( ४ ) अत्र बुद्धिमते इति कुलादीनामुपलक्षणार्थम् । मपा.१११

## आपस्तम्बगृह्यसूत्रम्

विवाहानुकूलानि वरलक्षणानि

* [३]बन्धुशीललक्षणसंपन्नः श्रुतवानरोग इति वरसंपत् ॥

( १ ) श्रुतवान् श्रुताध्ययनसंपन्नः । वरसंपत् वरगुणाः । एवंगुणाय कन्यका देयेत्यर्थः । अनाकुला.

( २ ) बन्धुशीललक्षणसंपन्न इति पूर्ववद्व्याख्यानम् । श्रुतवान् श्रुताध्ययनसंपन्नः, अविदुषश्चोदितकर्मानधिकारात्, धर्माद्यर्थत्वाच्च विवाहस्य । अरोग इति पूर्ववत्, तस्याप्यसमर्थत्वेनानधिकारात् । एवंभूता वरसंपत् । एवंगुणाय वराय कन्या देयेत्यर्थः । ताद.

## मानवगृह्यसूत्रम्

विवाहकारकाणां तारतम्येन विचारः

[१]पञ्च विवाहकारकाणि भवन्ति वित्तं रूपं विद्या प्रज्ञा बान्धव इति ॥

उद्वाहे च पञ्च विवाहकारकाणि भवन्ति । उद्वाहो विवाह इति तुल्यार्थौ । कारकाणि हेतुभूतानीत्यर्थः । पञ्चभिरेव हेतुभिर्विवाहसंबन्धो भवति । तदाह—वित्तमित्यादि । वित्तं गोहिरण्यादि । रूपं पुरुषलक्षणं ज्योतिःशास्त्रोक्तम् । विद्या आन्वीक्षिक्यादिः । प्रज्ञा देशे काले चाविधुरमतित्वम् । बन्धुरेव बान्धवः अभिजनः, अवदातकुलप्रसूतत्वात् । अष्टाभा.

एकालाभे वित्तं विसृजेत् । द्वितीयालाभे रूपम् । तृतीयालाभे विद्याम् । प्रज्ञायां बान्धव इति च विवदन्ते ॥

पञ्चैव यदाऽसमुचितानि तदा कथं कुर्यादित्याह—एकेति । एकालाभे वित्तं विसृजेत्, वित्तस्यानित्यत्वात् । भूत्वाऽपि न भवति अभूत्वाऽपि च भवतीति रूपादिभिर्धनं लभ्यत एवेति । द्वितीयालाभे रूपम् ( विसृजेदिति सर्वत्र )। द्वितीयस्य विवाहकारकस्यालाभे विद्यादिभिस्त्रिभिर्विवाहः । विद्यादिभिराधेयं रूपं, तस्याहार्यत्वात् । विद्यादीन्यलङ्कारभूतानि पुंसः । तृतीयालाभे विद्याम् । अनधीतवेदो विद्यामधिगन्तुमल्पप्रयत्नोऽपि यत्नुयाद्यदि प्रज्ञावान् बन्धुमांश्च भवतीति भावः । तथा प्रज्ञायां बान्धव इति च । असमासकरणं च केवलयामपि

---

* बन्धुशीलादिपदस्य अरोगपदस्य च व्याख्यानं कन्यापरीक्षाप्रकरणे ( संका. पृ. ५३० ) द्रष्टव्यम् ।

( १ ) बौगृशे. २।४।८ ; संर. ५१२ ( वरसंपद० ).

( २ ) आगृ. १।५।२ ; अप. १।५५ पृ. ८७ ( = ) प्रयच्छेत् ( उपयच्छेत् ) ; गृक. ३४ ; गृर. ३१ प्रयच्छेत् ( प्रयच्छेत ) ; मपा. १११ ; गभा. ९८ ; प्रर. ९८ ; धप्र. ४४ ; धम. १०९ ; संप्र. ६३ गृह्ये इत्युक्तम् ; विपा. ७१५ ; बाल. १।५५ पृ. १९८ ; संर. ५१२ .

( ३ ) आपगृ. ३।२० ; स्मृच. ७८ ; संप्र. ७५५ ; बाल. १।७४ ; प्रका. १४४ ; संर. ५१२ ( श्रुतवान् ) एतावदेव .

( १ ) मागृ. १।७।६-७ .

प्रज्ञायां बान्धवेऽपि च केवले विवहन्ते कन्यां वरयन्ते ददते च । एवं मन्वेति नावधारणं वृत्तिं शीलं च विवाहकारणं च केवलायामपि पूजार्थे बहुवचनं दृश्यते । शब्देषु पञ्चसु वित्तादिषु न शीलहीने ते विवहन्ते ।

अप्राभा.

## भारद्वाजगृह्यसूत्रम्

विवाहकारणाना तारतम्येन विचारः

चत्वारि विवाहकरणानि वित्तं रूपं प्रज्ञा बान्धवमिति । तानि चेत्सर्वाणि न शक्नुयाद्वित्तमुदस्येत्ततो रूपम् । प्रा(प्र)ज्ञायां च तु बान्धवे च विवदन्ते । बान्धवमुदस्येदित्येक आहुः । अप्रज्ञेन हि कः संवासः । अथैतदपरम् । न खल्वियमर्थेभ्य ऊह्यते । प्रजननार्थोऽस्यां प्रधानः । स योऽलं संलक्षणाय स्यात्स तामावहेत यस्यां प्रशस्ता जायेरन् ॥

## वाराहगृह्यसूत्रम्

विवाहकारणाना तारतम्येन विचारः

पञ्च विवाहकारकाणि भवन्ति— वित्तं रूपं विद्या प्रज्ञा बान्धवमिति । एकालाभे वित्तं विसृजेत् । द्वितीयालाभे रूपम् । तृतीयालाभे विद्याम् । प्रज्ञायां तु बान्धवे विवदन्ते ॥

## गौतमः

विवाहानुकूलानि वरलक्षणानि

[३]विद्याचारित्रबन्धुशीलसंपन्नाय दद्यात् ... ॥

विद्या त्रयी । चारित्रं चोदितकर्मानुष्ठानम् । बन्धुः प्रशस्ताभिजनः । शीलं धर्मं एवाभिमुखत्वम् । संपन्नशब्दः प्रत्येकमभिसंबध्यते । * मभा.

* गौमि. मभावत् ।

(१) भागृ. १।११.

(२) वागृ. १०.

(३) गौध. ४।६; अप. १।५५; मभा.; गौमि. ४।४; स्मृच. ७८; पमा. ४७९ (विद्याऽऽचारबन्धुलक्षणशीलसंपन्नाय दद्यात्); संप्र. ७५४; मुक्ता. १३४.



## बौधायनः

गुणहीनो विवाहानर्हः

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

(१) गुणहीनाय कुलीनशीलरूपवत्त्वादिभिर्गुणैः रहिताय । * गृक. ५२

(२) गुणाढ्यवरालाभे निर्गुणायापि देया । तदाह बौधायनः — दद्याद्गुणवते इति । चम. ११०–१११

(३) गुणवते विद्याचारित्रबन्धुशीलसंपन्नाय । गुणहीनाय सर्वगुणाभावेऽपि कतिपयगुणसंपन्नाय । बौवि.

## आपस्तम्बः

विवाहानुकूलानि वरलक्षणानि

... बन्धुशीललक्षणसंपन्न(?त्ति)श्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेत् ... ॥

## वसिष्ठः

दत्ताया अपि कन्यायाः सदोषेण वरेण न विवाहः,
विवाहप्रतिकूला वरदोषाः

§ कुलशीलविहीनस्य पण्ढादेः पतितस्य च ।
अपस्मारिविधर्मस्थरोगिणां वेषधारिणाम् ।
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च ॥
अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले ।
वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते ॥

* गृर., मपा. गृकवत् ।

§ व्याख्यासंग्रहः सत्यादिनिर्देशश्च पुनर्भ्वादीनां संस्कारविचारप्रकरणे (संका. पृ. ५६१) द्रष्टव्यः ।

(१) बौध. ४।१।१२; गृक. ५१–५२ ब्रह्मचारिणे (धर्मचारिणीम्); चद्रा. ६८० ब्रह्म (धर्म) अपि वा (अपि नो) भविष्यपुराणे इत्युक्तम्; गृर. ४४ गृकवत्; पमा. ४८१; मपा. १४९ गृकवत्; मर. १९ गृकवत्; विसौ. ७ चारिणे (चारिणीम्); संप्र. ७५५ • ७७० गृकवत्; चम. ११०; मुक्ता. १३५ : १३६ ब्रह्मचारिणे (एव शक्तितः) यमबौधायनौ; संम. ६५; आन. ७१; बाल. १।६३; कृम. १११४ वा गुणहीनाय (गुणविहीनाय); संर. ४५६.

(२) आध. २।११।१७.

(३) प्रपा. ३१३ अत्याढ्ये (अत्याढ्ये); विसौ. ५ पूर्वार्धे

## महाभारतम्

विवाहानुकूलानि वरलक्षणानि

[1]शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च ।
सद्भिरेवं प्रदातव्या कन्या गुणयुते वरे ॥

## मनुः

विवाहानुकूलानि वरलक्षणानि

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥

( १ ) उत्कृष्टायाभिरूपायेति विशेषणविशेष्यभावः । उत्कृष्टाय अभिरूपतरायेत्यर्थः । अथवा उत्कृष्टाय जात्यादिभिः, अभिरूपायेति पृथग्विशेषणम् । रूपं आकृतिं आभिमुख्येन प्राप्तः अभिरूपः । स्वभाववचनो वा, सुस्वभावः । विद्वानपि अभिरूप उच्यते । सदृशाय जात्यादिभिः । वरो वोढा जामाता । अप्राप्तामपि अयोग्यामपि कामावगतत्वेन बालामप्राप्तां कौमारं वयः, स्मृत्यन्तरे नग्निकेत्युच्यते । कामस्पृहा यस्या नोत्पन्ना सा चाष्टवर्षा षड्वर्षा वा, न तु अत्यन्तबालैव । तथाहि लिङ्गम् – 'अष्टवर्षाम्' इति । इदमेव लिङ्गं धर्मप्रयुक्ततायामपि विवाहस्येति । अन्यथा रागस्यैव प्रयोजकत्वे कुतोऽप्राप्ताया विवाह इत्याहुः, तदयुक्तम् । धनार्थिनोऽपि बाला विवाहयन्ति । न शास्त्रीयैव सर्वा प्रयुक्तिस्तृतीये निरूपिता । * मेधा.

( २ ) उत्कृष्टाय कुलशीलादिभिः । अप्राप्तां यावद्वयस्का देयत्वेनोक्ता तावद्वयोऽप्राप्तवतीमपि । * गृक. ३४

( ३ ) कुलाचारादिभिरुत्कृष्टाय सुरूपाय समानजातीयाय वराय अप्राप्तकालामपि 'विवाहयेदष्टवर्षामेवं धर्मो न हीयते' इति दक्षस्मरणात् तस्मादपि कालात्प्रागपि कन्यां ब्राह्मविवाहविधिना दद्यात् । मनु.

( ४ ) कन्यायाः स्त्रीत्वेन विप्रादेः अभ्यर्हितत्वेन च तत्प्रसङ्गमवलम्ब्य 'यादृग्गुणेन' (मस्मृ. ९।२२) इत्युक्तं संस्मारयंस्तत्रैव नियमान्तरमाह – उत्कृष्टायेति द्वाभ्याम् । कुलसौन्दर्यविद्याशीलबलादिविशेषणैर्युक्ताय इति भावः । अप्राप्तां कन्यात्वमिति शेषः, 'अष्टवर्षा भवेद्गौरी' इत्युक्तेः । मच.

गुणहीनो विवाहानर्हः

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥

( १ ) प्रागृतोः कन्याया न दानं, ऋतुदर्शनेऽपि न दद्यात् यावद्गुणवान् वरो न प्राप्तः । गुणः विद्याशौर्यातिशयः शोभनाकृतिर्वयोमहत्त्वोपेतता लोकशास्त्रनिषिद्धपरिवर्जनं कन्यायामनुराग इत्यादिः ।

§ मेधा.

---

* मवि., नन्द., भाच. मेधागतम् ।
( नात्याशे नातिदूरे च नात्यासन्ने च दुर्बले । ) ; संप्र. ७५९ ; विपा. ७२२ (=) अत्याढ्ये ( सत्याढ्ये ) दुर्बले ( दुर्लभे ) ; ज्योनि. १३५ पूर्वार्धे ( नात्यासन्ने नातिदूरे नात्याढ्ये नातिदुर्बले । ) कारिकानिबन्धे इत्युक्तम् ; संग. १८३–१८४ सर्वं ज्योनिवत् .

( १ ) भा. १३।४४।३ .

( २ ) मस्मृ. ९।८८ ; गृक. ३४ ; गृर. २९ ; पमा. ४८१ यथाविधि ( विचक्षणः ) ; मर. १९ ; उत. १२४ तस्मै कन्यां ( कन्यां तस्मै ) ; संप्र. ७५५ पमावत् ; चम. १११ पमावत् ; मुक्ता. १३४ अप्राप्तामपि तां ( अप्राप्तसमयां ) शेषं पमावत् ; संम. ६१ याभि ( यानु ) शेषं पमावत् ; बाल. १।६३ च ( वा )

* गृर., पमा., उत., संप्र., चम., संम., बाल., कृभ. गृकगतम् ।

§ मवि., माच. मेधागतम् ।
शेषं पमावत् ; कृभ. १०६५ पूर्वार्धे ( उत्कृष्टायानुरूपाय सदृशाय वराय च । ) शेषं पमावत् .

( १ ) मस्मृ. ९।८९ ; अप. १।६४ चैवैनां ( त्वेवैनां ) ; गृक. ३३ चैवैनां प्रयच्छेत्तु ( त्वेवैनां प्रयच्छेत ) ; स्मृच. ८१ अपवत् ; चका. ८०४ प्रयच्छेत्तु ( प्रयच्छेत ) ; गृर. ३०–३१ गृहे ( गेहे ) ; मर. १९ ; उत. १२४ ; विसौ. ५ गृकवत् ; वीमि. १।६४ चैवैनां ( स्वेनैनां ) ; संप्र. ७५५ उत्तरार्धे ( न त्वेवैनां प्रयच्छेत गुणहीनाय हि कर्हिचित् । ) ; ७७१–७७२ गृकवत् ; मुक्ता. १३६ अपवत् ; संम. ६६ गृकवत् ; बाल. १।६३ गृहे ( गेहे ) शेषं अपवत् ; कृभ. ११२४ गृकवत् ; संर. ४०६ चकावत् .

( २ ) यत्तु मनुवचनम् ' कामम् ' इति, तद्गुणवद्वरसंभवे गुणहीनाय न दातव्या इत्येवंपरम्, न तु कन्यर्तुदर्शनं अदोष इत्येवमर्थम् । तथा हि सति वचनान्तरविरोधः । तथा च काश्यपः–' पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥ ' *अप.

( ३ ) सजातार्तवाऽपि कन्या वरं मरणपर्यन्तं पितृगृहे तिष्ठेत्, न पुनरेना विद्यागुणरहिताय कदाचित् पित्रादिर्दद्यात् । ममु

( ४ ) ऋतुमती-स्पष्टरजाः । उक्तचतुष्टयविशेषणान्यतरहीनाय न देयेति उत्कृष्टवरे तात्पर्यम् । अन्यथा ' अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ' इति याज्ञवल्क्यवचनविरोधः । मच.

( ५ ) यत्तु ' कामम् ' इति मनुवचनं, तत् गुणवति संभवति गुणहीननिषेधपरम् । न तु सर्वथा गुणहीननिषेधपरम् । नो चेत् ' अपि वा गुणहीनाय ' इति बौधायनोक्तोऽनुकल्पो निर्विषयः स्यात् । ऋतुमत्यपि तिष्ठेदिति तु उक्तरीत्या न स्वार्थे पर्यवस्यति । अतः ' नोपरुन्ध्याद्रजस्वलाम् ' इत्यनेन न विरुध्यते । संप्र. ७५५

जातिदोषलिङ्गानि

**अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ।**
**पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥**

( १ ) अनार्यः द्वेषमत्सरप्रधानः । निष्ठुरः स्वार्थपरः । क्रूरः लोभहिंसापरः । निष्क्रियात्मा विहितक्रियावर्जितः । एतैः स्वभावैः कलुषयोनिता व्यज्यते । †मेधा.

( २ ) निष्ठुरत्व( ? )परुषभाषित्वहिंसत्वविहिताऽननुष्ठातृत्वानि सकरजातित्वमस्मिन् लोके प्रकटीकुर्वन्ति । ममु.

( ३ ) कलुषयोनित्वव्यञ्जककर्माण्याह—अनार्यतेति । निष्ठुरता परुषभाषिता । क्रूरता अनिमित्तहिंसनम् । निष्क्रियात्मता अशीतिन्यूनवस्वेऽपि क्रियारहितता । कलुषयोनिजं कलुषा जात्यन्तरबीजाक्रान्ता जात्यन्तरा या योनिस्ततो जातम् । मच.

( ४ ) कानि पुनस्तानि कर्माणि इत्यपेक्षायामाह—अनार्यतेति । अनार्यता नास्तिकता, निष्ठुरता नृशंसता, क्रूरता स्वल्पापराधेऽपि प्रखरभावता, निषिद्धा-( ? निष्क्रिया )त्मता सकलकर्मवर्जनशीलता, व्यञ्जयन्ति अनुमापयन्ति अनार्यतादीनि समस्तानि न पुनर्व्यस्तानि । नन्द.

## याज्ञवल्क्यः

*विवाहानुकूलानि वरलक्षणानि*

**एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।**
**यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥**

( १ ) उक्ताः कन्यागुणाः । वरस्य इदानीमुच्यन्ते । एतैरेव गुणैर्युक्तो वरोऽपि स्यात् । अयं तु विशेषः, यः सवर्णः श्रोत्रियश्च । सवर्णग्रहणं च हीनवर्णव्यावृत्त्यर्थम् । यद्वा, उत्कृष्टवेदनस्य अनुकल्पत्वज्ञापनार्थम् । अनुकल्पत्वं च अधिकारविप्रकर्षात् लोकपक्त्यनुसाराच्च । पुंसा तु ' श्रोत्रियाणा महाकुलात् ' इति वचनात् तिष्ठ इत्येव प्रथमः कल्पः । स्मृत्यन्तराद्वा सवर्णेतरोद्वहनमनुकल्पः । तथा चाह मनुः—' सवर्णाऽग्रे द्विजातीना प्रशस्ता दारकर्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥ ' इति । एवंगुणत्वेऽपि ब्रह्मचर्याविप्लवेन यत्नात्परीक्षितः पुंस्त्वे वीतबीजादिव्युदासद्वारेण । एवं

---

* गृक., स्मृच., गृर., उत., विसौ., वीमि., मुक्ता., सम., संर. अपगतम् ।

मवि. मेधागतम् ।

( १ ) मस्मृ १०।५८ ; मुक्ता. ७२, १३५ ; आन १७४ अनार्यता ( अनाढ्यता ) अपरार्के इत्युक्तम्.

( १ ) यास्मृ. १।५५ ; विश्व ; मेधा. ३।२७ उच ; मिता ; अप. ; गृक. २४ ; स्मृच ७८ उच. ; गृर. ३१ एतैरेव ( एतैर्वैरं ) ; स्मृसा. १४ (=) ; पमा. ४७९-४८० ; मपा. १४२ ; प्रपा. ३१३ ; मर. १८ सवर्णः ( सुवर्णः ) ; गभा. ९८ पुंस्त्वे ( सम्यक् ) ; वीमि. ; संप्र ७५६ ; चम. १०९ ; मुक्ता. १३४ ; संम. ६३ यत्नात् ( बलात् ) ; विपा. ७२२ परीक्षितः पुंस्त्वे ( परीक्ष्य पुंस्त्वे तु ) ; साम. ४ निर्देशमात्रम् ; प्रका. १४४ ; बाल. १।८१ पृ. २२८ पृ. ; संग. १८४ (=) पृ. ; कृभ. ९९६ (=) ; संर. ५१३ .

स्त्रियोऽपि स्त्रीत्वे परीक्षणीयाः, पुंस्त्वे इत्युपलक्षणार्थं स्यात् । स्त्रियमुद्वहेदिति वा स्त्रीग्रहणस्यैतदेव प्रयोजनं इति व्याख्येयम् । आदरार्थं वा पुंसः परीक्षणाभिधानं अपरित्यागज्ञापनार्थम् । अनन्यपूर्वत्वं तु स्त्रीविषयमेव । पुंविषयत्वेऽपि वा प्रथमः कल्पः । एवंभूतो यः, स वरः स्यात् । स वरयितव्यः । तादृशो वा कन्यां वरयेत् इति व्याख्येयम् । ऋज्वन्यत् । विश्व.

( २ ) एवं कन्याग्रहणे नियममुक्त्वा, कन्यादाने वरनियममाह — एतैरिति । एतैरेव पूर्वोक्तैर्गुणैर्युक्तो दोषैश्च वर्जितो वरो भवति । तस्यायमपरो विशेषः — सवर्णः उत्कृष्टो वा, न हीनवर्णः । श्रोत्रियः स्वयं च श्रुताध्ययनसंपन्नः । यत्नात् प्रयत्नेन पुंस्त्वे परीक्षितः । परीक्षोपायश्च नारदेन दर्शितः — ' यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् । पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः ॥ ' इति । युवा न वृद्धः । धीमान् लौकिकवैदिकव्यवहारेषु निपुणमतिः । जनप्रियः स्मितपूर्वमृद्वभिभाषणादिभिरनुरक्तजनः । * मिता.

( ३ ) एतैः कन्यागुणैः अनन्यपूर्वकत्वयवीयस्त्वभ्रातृमत्त्वव्यतिरिक्तैर्युक्तः । § मपा. १४२

( ४ ) एतैर्गुणैः अनन्यपूर्वकत्वयवीयस्त्वभ्रातृमत्त्वव्यतिरिक्तैः सर्वैः पूर्वोक्तविशेषणैः । श्रोत्रिय इति त्रैवर्णिकपरम् । अत्र युवत्वादीनि विशेषणानि प्रशंसार्थानि । पुंस्त्वे परीक्षित इत्यादीनि तु नियमार्थानीति यथायथमुन्नेयम् । † वीमि.

( ५ ) एतैः पूर्वोक्तैः लक्षण्या( ? ण्यत्वा )दिभिः कन्यागुणैः । तत्र लक्षणानि पूर्वोक्तानि । अनन्यपूर्वकत्वं च ' अविप्लुतब्रह्मचर्यः ' इत्यादिनोक्तमेव । यद्यपि — ' दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः । आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥ ' ( यास्मृ. १।८९ ) ' सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा । स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ ' (यास्मृ. १।७३) इत्यादिना द्वितीयाद्युद्वाहविधानादनन्यपूर्वकत्वं वरस्य नावश्यकमिति प्रतीयते तथाऽपि — ' अदग्धहस्ते यद्दत्तं तदनन्तफलं स्मृतम् । दग्धहस्ते तदर्धं स्यान्निष्फलं बहुगृह्वतः ॥ ' इत्याद्यदग्धहस्तदानस्य फलातिशयदर्शनात् फलातिशयकामस्य तदावश्यकता सिध्यति । कान्तत्वं च लौकिकप्रमाणसिद्धमेव । असपिण्डत्वं च शब्दशक्त्यैव सिध्यति, सापिण्ड्यस्योभयनिरूप्यत्वात् । यवीयस्त्वं तु ' ज्यष्ठवर्णोऽष्टवर्षाम् ' इत्यादिस्मृत्या बाधितमेवेति नातिदिश्यते । अरोगित्वं च सामर्थ्यादेव सिध्यति । भ्रातृमत्त्वं चापेक्षितमेव, ' यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥ ' इति वरमरणे देवरेण तदुद्वाहस्मरणात् । असमानार्षगोत्रजत्वं तु सापिण्ड्यवच्छब्दशक्त्यैव सिध्यति । एतेन अनन्यपूर्वकत्वयवीयस्त्वभ्रातृमत्त्वव्यतिरिक्तैर्युक्त इति केषांचिद्व्याख्यानं निरस्तम् । सवर्ण इत्युत्कृष्टवर्णस्याप्युपलक्षणम् । श्रोत्रियः अधीतैकशाखः । पुंस्त्वे प्रजननशक्तौ यत्नात् नानोपायैः प्रत्यक्षानुमानिकैः परीक्षितः । युवेत्यनेनानुद्भूतवीर्यस्य बालस्य अभिभूतवीर्यस्य वृद्धस्य च व्यावृत्तिः । धीमान् लौकिकवैदिकव्यवहारनिपुणमतिः । जनप्रियः सकलजनप्रेमपात्रम् । स्मितमृदुपूर्वाभिभाषीति मिताक्षरा । संप्र. ७५६–७५८

( ६ ) एतैः कन्यकायामुक्तेषु अन्वययोग्यैः, तत्र भ्रातृमत्त्वं वरे नापेक्षितं, पुत्रिकाकरणशङ्कानिवृत्तिरूपफलाभावात् । असपिण्डत्वं त्वपेक्षितम् ।

चम.१०९–११०

( ७ ) असपिण्डादिगुणातिदेशादुभयतः सापिण्ड्यनिवृत्तिरभिप्रेता । तेन वरनिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यं, न तु व्यासज्यवृत्ति उभयनिरूपितमेकमिति पितामहचरणाः ।

* संम.६३

पुंस्त्वलिङ्गं षण्ढलिङ्गं च

ह्लादिफेनिलमूत्रस्तु गुरुशुक्रो वृषस्वनः ।
पुमान्स्यादन्यथा षण्ढो दुश्चिकित्सो सुखेभगः ॥

* अप. मितागतम् ।
§ शेषं मितावत् ।
† शेषं संप्रगतम् ।

* संर. संमवत् ।
( १ ) स्मृच. ७९.

मुखेभगः षण्ढविशेषः स्मृच. ७९

## नारदः

विवाहानुकूलानि वरलक्षणानि

कुलशीलवयोरूपवृत्तविद्यायुताय च ।
वराय रूपसंपन्नां कन्यां दद्याद्यवीयसीम् ॥
परीक्ष्य पुरुषं पुंस्त्वे निजैरेवाङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥

विचार्य पुरुषं पुंस्त्वे, दुर्ज्ञानत्वात् पुंस्त्वस्य । निजैरेवाङ्गलक्षणैर्वक्ष्यमाणैः । कुलाद्यभिमतश्चेत् पुंस्त्वलक्षणयुक्तः कन्या लभेत । नाभा.

सुबद्धजत्रुजान्वस्थिसुबद्धांसशिरोधरः ।
स्थूलघाटातनूजत्वगविलग्नगतिस्वरः ॥

पुंस्त्वलिङ्गं षण्ढलिङ्गं च

यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु पण्ढकः ॥

(१) सुबद्धं सुश्लिष्टम् । जत्रु ग्रीवास्कन्धयोः संधिः । घाटा ग्रीवापश्चाद्भागः । *अप. १।५५

(२) बीजं वीर्यं, ह्लादि शब्दवत् । स्मृच. ७८

(३) सुबद्धं सुदृढं जत्रु जान्वस्थि च । सुबद्धासशिरोधरः । अधस्तादस्थि जानु जङ्घेति । अन्येषा सर्वास्थीनि च दृढानि । अंसौ बाहू ग्रीवा च । तथा विस्तीर्णा घाटा ललाटस्योपर्युभयतो रोमाणि, त्वक् च स्थूला । अविलग्नगतिस्वरः अविच्छिन्नाविलम्बितगतिस्वरः । पुरीषं चाप्सु न प्लवते । शब्दवत् फेनवच्च मूत्रम् । एतैर्लक्षणैर्युक्तः पुमान् । अतो विपरीतैर्नपुंसकः । नपुंसकाय दत्तामप्यददतो नास्ति दोषः । नाभा.

पण्ढप्रकाराः

चतुर्दशविधः शास्त्रे पण्ढो दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥

स तु पण्डकश्चतुर्दशप्रकार उक्तः शास्त्रे मेधाविभिर्दत्तात्रेयप्रभृतिभिः । इह चिकित्सार्हो (१ र्हः) श्चेतरश्च (१ रश्च) । तेषामुक्तो विधिः क्रमात्, तं

(१) स्थलादिनिर्देशः कन्यापरीक्षाप्रकरणे (सका. पृ. ५४३) द्रष्टव्यः ।

(२) नासं १३।८ परीक्ष्य (विचार्य) इति भाष्यपाठः; नास्मृ १५।८ परीक्ष्य पुरुषं (परीक्ष्यः पुरुषः); अप. १।५५ नास्मृवत्; गृक. ३५ नास्मृवत्; गृर. ३१ नास्मृवत्; मपा. १४३; गभा. ९८ पुरुषं (पुरुषः); संप्र. ७५७.

(३) नासं १३।९; नास्मृ. १५।९ स्थि (स्थिः) सशिरोधर. (शशिरोरुहः) घाटातनूजत्व (घाटस्तनूरुत्व); अप. १।५५ शिरोधर (शिरोरुह) घाटात (घाटस्त); गृक. ३५ स्थि (स्थिः) घाटात (गाढस्त) स्वरः (श्वरः); गृर. ३१ स्थि (स्थि) सशि (शशि) घाटातनूजत्व (घाटस्तनूरुत्व); मपा. १४३ पू., मर. १८ पू.; गभा ९८ पू.; संप्र. ७५७ जत्रुजा (जत्रुर्जा) पू.

(४) नासं. १३।१० पूर्वार्धे (विट् चास्य प्लवते नाप्सु रावि मूत्र च फेनिलम् ।) तैस्तु पण्ढकः (तस्तु पण्डकः); नास्मृ. १५।१० पूर्वार्धे (रेतोऽस्योत्प्लवते नाप्सु ह्लादि मूत्र च फेनिलम् ।) तैस्तु (तस्तु); मिता. १।५५; अप. १।५५ यस्याप्सु प्लवते बीज (रेतोऽस्य प्लवते वाऽप्सु) रेतैर्विपरीतस्तु षण्ढकः (रेभिर्विपरीतस्तु पण्डकः); गृक ३५ (रेतोऽस्य प्लवते चाऽप्सु ह्लादि मूत्रं च फेनिलम् । पुमान् स्याल्लक्षणैरेभिर्विपरीतैस्तु षण्डकः ॥); स्मृच. ७८ तैस्तु (तस्तु); गृर. ३२ पूर्वार्धे (रेतोऽस्य प्लवते चाप्सु मूत्र च फेनिल भवेत् ।) रेतै (रेभि) षण्ढकः (पण्डकः); पमा. ४८० बीज (वीर्यं) तैस्तु षण्ढकः (तस्तु षण्डकः); मपा. १४३ यस्याप्सु (यस्यापि) बीज (रेतो) रेतै (रेभि) तैस्तु (तस्तु); भपा. ३१३ स्मृचवत्; मर. १८; दीक. १।५५ यस्याप्सु (रेतोऽस्य) बीजं (नाप्सु) तैस्तु षण्ढकः (त नपुंसकम्) देवल; गभा. ९८ यस्याप्सु प्लवते बीजं (यस्याविप्लवते रेतो) रेतै (रेभि) तैस्तु (तस्तु); वीमि. १।५५ पमावत्; संप्र. ७५७ बीजं (वीर्यं) तैस्तु (तस्तु); चम. ११० रेतै (रेभि) तैस्तु (तस्तु); मुक्ता. १३४ स्मृचवत्; संम. ६१ स्मृचवत्; विपा. ७२२ पण्ढकः (षण्डकः) शेषं चमवत्; आन. १७५ तैस्तु षण्ढकः (तस्तु षण्डकः); कुभ. ११११५ (=) स्मृचवत्; संर. ५१४ स्मृचवत्.

* गृक., गृर. अपवत् ।

(१) नासं. १३।११ पण्ढो (स तु); नास्मृ. १५।११; अप. १।५५ शास्त्रे षण्ढो (पण्ड शास्त्रे); गृक. ३५; गृर. ३२ षण्ढो (पण्डो) तेषामुक्तो (तथा तेषां); पमा. ४८० पण्ढो (षण्डो); संप्र. ७५७ शास्त्रे षण्ढो (षण्ढ शास्त्रे); मुक्ता. १३४.

वक्ष्यामीति शेषः । वैद्यके चायं चिकित्स्योऽयमचिकित्स्य इत्युक्तम् । नाभा.

[1]निसर्गपण्डो वध्रश्च पक्षपण्डस्तथैव च ।
अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च ॥

[2]ईर्ष्यापण्डश्च सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तो मोघबीजश्च शालीनोऽन्यापतिस्तथा ॥

( १ ) निसर्गपण्डः लिङ्गवृषणहीन एवोत्पन्नः । वध्रः चालिताण्डः । पक्षपण्डः यस्य पक्षान्तरिता रतिशक्तिः । गुरोरभिशापादेव, देवक्रोधादेव देवनिन्दाजनितक्रोधात् । ईर्ष्यापण्डः स्वस्त्रीविषये ईर्ष्यास्तम्भितरेताः । सेव्यः स्त्रिया बहुप्रकारं सेव्यमानो जातरिरंसः । वातरेताः यस्य रतान्ते लिङ्गेन वातनिःसरणमात्रम् । मुखेभगः यः परमुखे एव भगकार्यं करोति । आक्षिप्तरेताः विसर्गसमये यस्य रेतः प्रत्यक्प्रवर्तते । मोघबीजः यस्य गर्भाधानसमर्थं रेतो न भवति । शालीनः यस्य धृष्टस्त्रीसंनिपातात् लिङ्गपातो भवति । अन्यापतिः यस्य भार्याव्यतिरिक्तायामेव योषिति पुंस्त्वम् । * अप.१५५

( २ ) निसर्गपण्डः स्वभावतो लिङ्गवृषणहीनः । वध्रः छिन्नमुष्कः । पञ्चदशदिनानि स्त्रियमासेव्य(१व)मानः सन् सकृद्भोगक्षमः पक्षपण्डः । गुरुशापपण्डादयस्त्रयः स्पष्टाः । ईर्ष्यया पुंस्त्वमुत्पद्यते यस्य, स ईर्ष्यापण्डः । रत्युपचारविशेषेण पुंस्त्वशक्तिर्यस्य स सेव्यपण्डः । वातोपहतरेतस्को वातरेताः । यस्य मुखे एव पुंस्त्वशक्तिः न योनौ, स मुखेभगः । रेतोनिरोधात् पण्डीभूतः आक्षिप्तपण्डः । गर्भाधानासमर्थबीजः मोघबीजः । अप्रगल्भतया क्षोभाद्वा नष्टपुंस्त्वः शालीनः । यस्य स्वभार्याव्यतिरेकेण अन्यासु पुरुषभावः सोऽन्यापतिरिति । * पमा.४८०

( ३ ) पञ्चदश दिनानि स्त्रियमनासेव्य सकृद्भोगक्षमः पक्षपण्ढः । § मुक्ता.१३४

( ४ ) उत्पत्तित एव पण्डो निसर्गपण्डः । वध्रः शयितमुष्कः । पक्षपण्डः पक्षे समागमसमर्थः । गुरुशापोदुपहतपुंस्त्वः । तथा रोगात् देवतापराधाच्च । ईर्ष्यापण्डः, परपुरुषेण संबध्यमानां दृष्ट्वा पुंस्त्वमुपजायते । सेव्यः, पुरुषेण सेव्यमानस्योपजायते । वातरेताः, वातेनोद्धते योनौ न सिच्यते शुक्रम् । मुखेभगः, मुखग्रहणं प्रदर्शनार्थम् । भगादन्यत्र भगकार्यं भवति । पुंस्त्वं न भग इति केचित् । केचिदन्यत्र क्षतयोन्या अपीति दुर्गम् । अन्ये परेण स्वमुखे क्रियमाणे पुंस्त्वमुपजायते स मुखेभग इति । आक्षिप्तबीजः, रतिर्भवति संयोगात्, रतिकाले शुक्रं नास्ति । मोघबीजः, भवति तु शुक्रं, न भवत्यपत्यम् । † चतुर्ष्वप्येतेष्वीर्ष्यापण्डादिषु क्षतयोनित्वं यथा संभवति तथा व्याख्येयं, 'क्षतयोन्या अपि' इति वचनात् । शालीनः अधृष्टः, स्त्रियं दृष्ट्वा लज्जया न प्रहृष्यति । अन्यपतिः ‡, अन्यस्यां भवति पुंस्त्वं, न स्वभार्यायाम् । नाभा.

विवाहितया वराः पण्ढास्त्याज्याः, पण्ढत्यागे कालविचारः, षण्ढभार्यायाः पुनर्विवाहार्हता

[1]तत्राऽऽद्यावप्रतीकारौ पक्षाख्यं मासमाचरेत् ।
अनुक्रमात्त्रयस्यास्य कालः संवत्सरः स्मृतः ॥

* गृक., गृर. अपवत् ।

( १ ) नासं. १३।१२ ; नास्मृ. १५।१२ वध्र ( वध्रि ); अप. १।५५ ; गृक. ३५ पण्डो ( षण्ढो ) वध्रश्च ( वद्धश्च ) रोगा ( क्रोधा ) ; गृर. ३२ वध्रश्च ( वङ्क्षुश्च ) रोगा ( रोषा ) ; पमा. ४८० पण्ड ( षण्ड ) देव ( वैर ) ; संप्र. ७५७-७५८ पण्ड ( पण्ढ ) ; मुक्ता. १३४ पण्डो वध्रश्च ( षण्ढोऽमुष्कश्च ).

( २ ) नासं. १३।१३ सो मो ( समो ) ऽन्या ( ऽन्य ) ; नास्मृ. १५।१३ ; अप. १।५५ आक्षिप्तो मोघबीजश्च ( आक्षिप्तमोघबीजौ च ) ; गृक. ३६ अपवत् ; गृर. ३२ आक्षिप्तो मोघबीजश्च ( आक्षिप्तमोघबीजौ च ) ; पमा. ४८० पण्ड ( षण्ड ) ; संप्र. ७५८ ; मुक्ता. १३४ पण्ड ( पण्ढ ).

* संप्र. पमावत् ।

§ शेषं पमावत् ।

† ' चतुर्ष्वप्येते ... इति वचनात् ' इत्ययं ग्रन्थः ' आक्षिप्तबीजः ' इत्यतः प्राक्स्थवितुमर्हति ।

‡ ' ङ्यापोः संज्ञाछन्दसोर्बहुलम् ' इति ह्रस्वः ।

( १ ) नासं. १३।१४ क्रमात्त ( क्रमत्र ) ; नास्मृ. १५।१४ स्यं ( स्यो ) क्रमात्त ( क्रमात्तु ) ; अप. १।५५ ; गृक. ३६ स्यं ( स्यो ) ; गृर. ३२ ; मुक्ता. १३५ पक्षाख्यं मासमाचरेद् ( पक्षपण्ढं च वर्जयेद् ) क्रमात्त ( क्रमात्तु ).

तत्रेति निर्धारणसप्तमी । आद्यौ निसर्गपण्डवध्रौ अप्रतीकारौ त्यक्तव्यावेव निर्वृत्तेऽपि पाणिग्रहणे । 'पाणिग्रहणमन्त्राभ्यां नियतं दारलक्षणम्' इत्यस्यापवादोऽयम् । य एवंविधोऽनाख्याय वरयति, *पाणिं वा गृह्णाति*, यश्च *ज्ञात्वा ददाति स राज्ञा दण्ड्यः* । पक्षपण्डस्तु मासमाचरेत् । ततो ज्ञात्वा पक्षाद्वूर्ध्वमपुंस्त्वे त्याज्यः । दण्ड्यस्त्वनाख्यानात् । अनुक्रमादनन्तरस्य त्रयस्य गुरुरोगदेवतानिमित्तपण्डस्य संवत्सर उदीक्ष्यः, ऊर्ध्वं तु त्यागः, नात्र दण्डः । एतावता कालेनाप्रतिविहितमप्रतिविधेयमेतद्भवति । नाभा.

(१)ईर्ष्यापण्डादयो येऽन्ये चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत् क्षतयोन्याऽपि च स्त्रिया ॥

स्त्रियेति वा पाठः । ईर्ष्यापण्डसेव्यवातरेतोमुखेभगाश्चत्वारः सम्यगनवेक्ष्य त्याज्या एव पतितवत् । अकार्यकारित्वात् *पतिता एव ते* । *क्षतयोन्या अपि, किमुता*क्षतयोन्या वरणपाणिग्रहणमात्रेण । नाभा.

(२)आक्षिप्तमोघवीजाभ्यां कृतेऽपि पतिकर्मणि ।
पतिरन्यः स्मृतो नार्या वत्सरार्धं प्रतीक्ष्य तु ॥

'वत्सरार्धं परीक्ष्य तु' इत्यन्यः पाठः । आक्षिप्तवीजो मोघवीजश्च *यौ, तौ संवत्सरं परीक्ष्य सर्वथा तथाभावे* पत्यौ प्रतिक्रियामकुर्वति पतिरन्यो ग्राह्यः । प्रतिकर्मकरणे यावदेकान्तज्ञानं तावत् प्रतीक्ष्य. । नाभा

(३)शालीनस्यापि धृष्टस्त्रीसंयोगाद्भज्यते ध्वजः ।
तं हीनवेषमत्तस्त्रीबालान्धाभिरुपक्रमेत् ॥

शालीनस्यापि प्रगल्भस्त्रीसंनिधौ नोत्तिष्ठति ध्वजः । उत्थितोऽपि भज्यते । तं हीनवेषाभिरनुज्ज्वलाभिः । तत्र परिभवान्न लज्जा भवति । तथा मत्ताभिर्बालाभिरन्धाभिरपि अन्धकारादावुपक्रमः । तथा अपगतशालीनभावः स्वभार्यायां रसज्ञः संप्रवर्तिष्यते । नाभा.

(१)अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति ।
लभेत साऽन्यं भर्तारमेतत्कार्यं प्रजापतेः ॥

(१) अन्यस्यां स्त्रिया मनुष्यः स्वभार्यायां पण्डः अन्यपतिरित्युक्तः, तं परित्यज्य ततोऽन्यं भर्तारं लभेत सा । राज्ञ एतत् कार्यम् । एष वादः सर्वशेषः ।

नाभा.

(२) एतेभ्यः पूर्वज्ञातेभ्यो न कन्या देया । यदि त्वज्ञानाद्दद्याच्चिकित्स्येषु चिकित्सां यावत्प्रतीक्षेत । अचिकित्स्यत्वे दत्त्वाऽऽच्छिद्यान्यस्मै देया । * अप.१।५५

(२)अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥

(१) एतल्लक्षणपरीक्षणे कारणमाह स एव—अपत्यार्थमिति । प्रपा. २१३

(२) अपत्यार्थे स्त्रिय उत्पादिताः । तदुभयोरपत्यं करोति । बीजिनः क्षेत्रस्थानीया स्त्री । तत उभयसंपत्तौ प्रजाः सस्यवदेव । तस्मात् क्षेत्रं बीजवते देयम्, ततश्च

---

(१) नासं. १३।१५ उत्तरार्धे (सत्यक्तव्या' पतितवत् क्षतयोन्या अपि स्त्रिया' ।); नास्मृ. १५।१५ पण्डा (षण्ढा); अप. १।५५; गृक. ३६ न्याऽपि च स्त्रिया (न्योऽपि च स्त्रियः); गृर. ३२; मुक्ता १३५ पण्डा (षण्ढा).

(२) नासं. १३।१६ (आक्षिप्तमोघबीजौ च पत्यावप्रतिकर्मणि। पतिरन्य' स्मृतो नार्या वत्सर संप्रतीक्ष्य तु ॥); नास्मृ. १५।१६; अप. १।५५ स्मृतो (ततो); गृक. ३६ प्रतीक्ष्य तु (प्रतीक्षेत); गृर. ३२ बीजाभ्यां (वीर्याभ्यां) शेषं गृकवत्; मुक्ता. १३५.

(३) नासं १३।१७, नास्मृ. १५।१७ धृष्ट (दुष्ट) भज्यते (भ्रश्यते) उत्तरार्धे (त हीनवेगमन्यस्त्रीबालाद्याभिरुपाचरेत् ।); अप. १।५५ भज्यते (भ्रश्यते) उत्तरार्धे (त हीनविषय तु स्त्री

* गृक., गृर. अपवत् ।

वर्षं क्षिप्त्वाऽन्यमाश्रयेत् ।); गृक. ३६ भज्यते (भ्रश्यति) उत्तरार्धे (तं हीनवेगवन्तं स्त्री लालनाभिरुपाचरेत् ।); गृर. ३२ भज्यते (पतति) उत्तरार्धे (त हीनवेग भर्तार स्त्री सर्वार्थैरुपाचरेत् ।); मुक्ता. १३५ अशुद्धिबहुलः पाठः.

(१) नासं. १३।१८, नास्मृ १५।१८; अप. १।५५; गृक. ३६; गृर. ३२; मुक्ता. १३५ उत्तरार्धे (*लभेत साऽन्यभर्तारमेतद्वाक्य प्रजापते*' ।).

(२) नासं. १३।१९ नरा. (प्रजाः); नास्मृ १५।१९; अप. १।५५; गृक. ३७; स्मृच. ७८ कात्यायनः; गृर. ३२; पमा. ४८०; मपा. १४३; प्रपा. २१३ नाबीजी (नाबीजः); गमा. ९८; संप्र. ७६० बीजवते (बीजवते); मुक्ता. १३४ नाबीजी क्षेत्रमर्हति (अतो बीजं परीक्षयेत्) कात्यायन'; विपा. ७२२; मान १७४ सर्वं मुक्तावत्; संर. ५१४ बीजिनो नराः (बीजमर्हति) बीजवते (हि बीजिने).

सस्यनिर्वृत्तिः । अबीजी क्षेत्रेण किं करिष्यति । तत्र क्षेमस्य समर्थस्यापि नागः । तस्मात् परीक्ष्य पुरुषाय देया ।

नाभा.

विवाहानुकूलानि वरलक्षणानि

*सवर्णमनुरूपं च कुलरूपवयःश्रुतैः ।
सह धर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥

सवर्णं समानजातीयम् । कुलादिभिर्युक्तम् । सवर्णमित्येवं गते सवर्णं स्वयं वरयन्ती रूपादियुक्तमेव वरयति, न विरूपादिकमित्येतत् प्रयोजनं, सवर्णमपि कुलादियुक्तम् । सर्वे कुलयुक्ता एव, प्रकर्षार्थमुक्तमिमे कुलजा इति ।

नाभा.

विवाहप्रतिकूला वरदोषाः

उन्मत्तः पतितः क्लीबो दुर्भगस्त्यक्तबान्धवः ।
कन्यादोषौ च यौ पूर्वावेष दोषगणो वरे ॥

( १ ) दुर्भगः स्त्रीद्वेष्यः । त्यक्तबान्धवः अदुष्टान् बन्धून्विहाय स्वतन्त्रव्यवहारी । कन्यादोषौ च यौ पूर्वौ इति । 'दीर्घकुत्सितरोगार्ता व्यङ्गा संसृष्टमैथुना । धृष्टाऽन्यगतभावा च कन्यादोषाः प्रकीर्तिताः ॥' इत्यत्र श्लोके उक्तौ, पूर्वौ प्रथमौ दीर्घकुत्सितरोगत्वव्यङ्गत्वरूपौ नारदोक्तावेव ।

§ गृक. ३२

( २ ) उन्मत्तः वाय्वादिना । पतितः ब्रह्महत्यादिना । दुर्भगः भाग्यहीनः ।

† संप्र.७५८

( ३ ) 'नादुष्टं दूषयेद्वरम्', 'दुष्टश्चेन्न वरः' ( अदुष्टश्चेद्वरः ) इति चोक्तम् । दोषा उच्यन्ते– उन्मत्तः 'पञ्चोन्मादाः समाख्याता वातपित्तकफोद्भवाः । चतुर्थो धननाशेन सन्निपातेन पञ्चमः ॥' इति । पतितः सुवर्णस्तेयादिमहापातकोपपातककृत् । क्लीबः उपहतपुंस्त्वः । दुर्भगः सर्वद्वेष्यः । त्यक्तबान्धवः बान्धवैस्त्यक्तः । पूर्वौ च कन्यादोषौ दीर्घरोगः कुत्सितरोगश्च । एष दोषगणो वरविषयः । धर्मिणा धर्मनिर्देशः पूर्ववत् ।

नाभा.

## कात्यायनः

विवाहप्रतिकूला वरदोषाः, वाग्दानेऽपि सदोषवरो विवाहानर्हः

[१]निष्क्रान्तस्तेन विद्विष्टस्तथा त्यक्तः स्वबन्धुभिः ।
अन्यजातिः क्षयी दासो लिङ्गस्थश्चोदरी यदि ॥
[२]उन्मत्तः पतितः कुष्ठी तथा षण्ढः सगोत्रजः ।
चक्षुःश्रोत्रविहीनश्च तथाऽपस्मारदूषितः ॥
[३]वरदोषाः स्मृता ह्येते कन्यादोषाः प्रकीर्तिताः ।
प्राक् पश्चाद्वा समुत्पन्ना दाने तत्र निवर्तयेत् ॥

( १ ) निष्क्रान्तः देशान्तरगमनशीलः । दासः प्रेष्यः । लिङ्गस्थश्चोदरी यदि उदरभरणार्थं यदि आश्रमलिङ्गधारी । प्राक् विवाहोपक्रमात् । पश्चात् वाग्दानानन्तरम् ।

गृक.३३

( २ ) निष्क्रान्तः स्वभावाद्देशान्तरपर्यटनकारी । दासस्तु नित्यं परतन्त्रः । लिङ्गस्थश्चोदरी यदि उदरभरणार्थं यदि

---

* व्याख्यानानि स्थलादिनिर्देशश्च स्वयंवरप्रकरणे द्रष्टव्यः ।

§ गृर. गृकवत् ।

† शेषं गृकवत् ।

( १ ) नासं. १३।३७ पूर्वार्धे ( उन्मत्तपतितक्लीबदुर्भगत्यक्तबान्धवाः ) ; नास्मृ. १५।३७ ; अप. १।६६ ; गृक. ३२ ; गृर. २९ क्लीबो ( क्रो ) वेष दोषगणो ( विमौ दोषगुणौ ) ; विसौ. ५ उत्तरार्धे ( कन्याया गुणदोषौ यौ तौ च दोषगुणौ वरे ) ; संप्र. ७५८.

( १ ) गृक. ३२ ; गृर. ३० न्तस्तेन ( न्तः स्वेन ) ; संप्र. ७५९.

( २ ) गृक. ३२ ; स्मृच. ७९ सगो ( स्वगो ) ; गृर. ३० कुष्ठी ( क्रूरः ) षण्ढः सगोत्रजः ( तुल्यः सगोत्रजः ) ; पमा. ४९० षण्ढ ( षण्डः ) ; मपा. १४२ तथा षण्ढः ( षण्टश्चैव ) ; प्रपा. ३१ ; गभा. ९८ तथा षण्ढः सगो ( षण्ढश्चैव स्वगो ) ; संप्र. ७५९ ; मुक्ता. १३५ स्मृचवत् ; विपा. ७२२ ( उन्मत्ताः पतिताश्चैव कुष्ठिषण्डसगोत्रजाः । चक्षुःश्रोत्रविहीनाश्च तथाऽपस्मारदूषिताः ॥ ) ; संग. १८३ तथा षण्ढः ( षण्ढश्चैव ) ; संर. ५१२ ( उन्मत्ताः पतिताश्चैव कुष्ठिषण्ढस्वगोत्रजाः । चक्षुःश्रोत्रविहीनाश्च तथाऽपस्मारदूषिताः ॥ ).

( ३ ) गृक. ३३ निवर्त ( विवर्ज ) ; स्मृच. ७९ प्रकीर्तिताः ( च कीर्तिताः ) पू. ; गृर. ३० गृकवत् ; पमा. ४९० स्मृता ह्येते ( तथैवैते ) पू. ; मपा. १४२ पू. ; गभा. ९८ पू. ; संप्र. ७५९ ; मुक्ता. १३५ स्मृता ह्येते ( स्मृतास्त्वेते ) शेषं स्मृचवत्, पू.

आश्रमलिङ्गधारीति कल्पतरुः । अन्ये तु लिङ्गस्थः यथाश्रमलिङ्गधारी, तथा उदरी यदि उदरभरणार्थं यावत्तावद्व्यापारकारीति द्वयमपि विवक्षितमित्याहुः । एते च दोषाः प्राक् विवाहोपक्रमात्, पश्चात् वाग्दानादनन्तरं यदि ज्ञातास्तदा कन्यादानं दोषावहं निवर्तेत इति प्रागित्यादेरन्वयः। गृर. ३०

( ३ ) निष्क्रान्तः देशान्तरगमनशीलः । तेन निष्क्रमेण विद्विष्टः रहितः, अत्यन्तं प्रवासभीरुरिति यावत् । तथा च महाभारते—' द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानि वा । राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ' इति । लिङ्गस्थः वेदबाह्यलिङ्गधारी । उदरी जलोदरव्याधिमान् । प्राक् वाग्दानात् । पश्चात् वाग्दानानन्तरम् । संप्र. ७५९

दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्धनानां च न देया कन्यका बुधैः ॥

विवाहितया दोषविशेषयुक्तो वरस्त्याज्यः पुनर्विवाहश्च

वरो यद्यन्यजातीयः पतितः क्लीब एव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
क्लीबो वा यदि वा भर्ता विसृष्टः पुंस्त्वकारणैः ।
ऊढाऽपि देया साऽन्यस्मै सप्रावरणभूषणा ॥ *

षण्ढलिङ्गम्

न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ।
मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीबः स उच्यते ॥

## व्यासः

विवाहानुकूलानि वरलक्षणानि

ब्राह्मोद्वाहविधानेन तदभावेऽपरो विधिः ।
दातव्यैषा सदक्षाय वयोविद्यान्वयादिभिः ॥

## देवलः

षड्विधः षण्ढः

षण्डको वातजश्चैव पण्डः क्लीबो नपुंसकः ।
कीलकश्चेति षोढाऽयं क्लीबभेदो विभावितः ॥
तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा षण्डको भवेत् ।
पुमान् कृत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च ।
स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा ॥
वातजो नाम षण्डः स्यात्स्त्रीषण्डो वाऽपि नामतः ।
असलिङ्गोऽथ पण्डः स्यात्पण्डस्तु म्लानमेहनः ॥
अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकः ।

( १ ) स्मृच. ७९ उत्तरार्धे ( शूद्राणां निर्वृतानां च नादेया कन्यका बुधैः । ) म्हैसूरमुद्रितस्मृतिचन्द्रिकायां तु पृ. २११ आदर्शानुसारेव पाठः ; पमा. ४८१ ; प्रपा. ३१३ ; विसौ. ५ मोक्षमार्गानुसारिणाम् ( मोक्षधर्मानुवर्तिनाम् ) लब्धः ; संप्र. ७६० विद्यानां ( वेद्यानां ) निर्धनानां च ( च निवृत्ताना ) ; चम. ११० निर्धनानां ( निर्वृतानां ) ; मुक्ता. १३५ निर्धनानां ( निर्हेनानां ) ; विपा. ७२२ ( अत्रैवार्थेन दूरस्था मोक्षमार्गानुसारिणः । शूरा निवृत्ताश्चैतेभ्यो न देया कन्यका बुधैः ॥ ) ; बाल. १।५५ निर्धनानां ( निर्वृतानां ) ; कृभ. १११५ ; संर. ५१२ विपावत्.

( २ ) स्वलादिनिर्देशः पुनर्भ्वादीनां संस्कारविचारप्रकरणे ( संका. पृ. ५७८ ) द्रष्टव्यः ।

* व्याख्यानं स्थलादिनिर्देशश्च पुनर्भ्वादीनां संस्कारविचारप्रकरणे ( संका. पृ. ५७८ ) द्रष्टव्यः ।

( १ ) दीक. १।५५ मेढ्रं ( मेढ्रः ) हीनं ( हीनः ) ; उत. १२०–१२१.

( २ ) व्यासस्मृ. २।५.

( ३ ) स्मृच. ३९५ ( श्रा. ) षण्डः ( षण्डः ) ; शूक. २५७ ( षण्डको वातजः षण्डः पण्डः क्लीबो नपुंसकम् । कीलकश्चेति सप्तैव क्लीबभेदो व्यवस्थितः ॥ ).

( ४ ) स्मृच. ३९५ ( श्रा. ) कृत्वा ( भूत्वा ) छिन्द्यात् ( छिन्द्यात् ) तृतीयार्धं नास्ति ; शूक. २५७ स्त्रीधर्मा षण्डको ( स्त्रीतुल्यः षण्डको ) वद्गुणा ( वद्गुणः ).

( ५ ) स्मृच. ३९५ ( श्रा ) ( वातको नाम षण्डी स्यात् स षण्डो नाम नामतः । असलिङ्गोऽथ षण्डी स्यात्पण्डस्तु म्लानमेहनः ॥ ) इति श्रीपारपुरेमुद्रितस्मृतिचन्द्रिकापाठः । म्हैसूरमुद्रितस्मृतिचन्द्रिकायां ' वातजो नाम ' इत्यादिः पाठः ; शूक. २५७ पूर्वार्धे ( वातको नाम षण्डः स्यात् स्त्रीषण्डो वाऽपि नामतः । ).

( ६ ) स्मृच. ३९५ ( श्रा. ) प्रोक्तो ( क्लीबो ) ; शूक. २५७.

स कीलक इति प्रोक्तो यः क्लैब्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

( १ ) तेषामिति । उन्नतकुचककूर्चहीनत्वादिधर्मक इत्यर्थः । स्वलिङ्गानीति । लिङ्गानि स्त्रीपुंनपुंसकानि भिन्द्यात् त्यजेत् । कदाचित् स्त्री कदाचित् पुमान् कदाचित्पण्ढ इत्यर्थः । स्त्री च पुरुषवत् स्त्र्यन्तरं भुङ्क्ते शुक्रोत्सर्गं विनैव वातवशादित्यर्थः । अमेध्याशीति । अमेध्याशी मुखमैथुनात् परशुक्राशी । अयं वैद्यके आसेक्य इत्युक्तः । शूक. २५७

( २ ) क्लीबः षड्विधः । तथा च देवलः—षण्डक इति । पुमान् कृत्वा इत्यादेरयमर्थः— यः पुमान् लिङ्गान्तराणि कृत्वा स्वलिङ्गं भिन्द्यात्, स वातजो नाम षण्डः इति संबन्धः । अनेन दाक्षिणात्यप्रसिद्धं विद्धप्रजननत्वमुक्तम् । तथा, या स्त्री गृहीतपुरुषचिह्ना स्त्र्यन्तरमभिगच्छति, सोऽपि वातजो नाम षण्डः । तथा स एव स्त्रीषण्डनामाऽपि । तथा, असल्लिङ्गोऽपि वातजः षण्डः स्यादिति संबन्धः । एतेन त्रिप्रकारो वातजः षण्ड इत्युक्तम् । ग्लानमेहनो निर्विकारलिङ्गः । अमेध्याशी मुखेभगः । यस्त्वात्मनः स्त्रियं परेणोपभुज्यमानां सोन्मादस्तामेव सेवते, स कीलक इति । प्रकाश. ९०

## यमः

विवाहानुकूलानि वरलक्षणानि

कुलं च शीलं च वपुर्वयश्च
विद्यां च वित्तं च सनाथतां च ।
एतान् गुणान् सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥

सनाथता पोषकादियुक्तता । शेषं उदारत्वबहुभार्यत्वादि । कूर्म. १११४

## शातातपः

विवाहानुकूलानि वरलक्षणानि

वरो वरयितव्योऽर्थी कुलशीलसमन्वितः ।
रूपवान् पण्डितः प्राज्ञो युवा दोषविवर्जितः ॥

वरयितव्यः, कन्यापित्रेति शेषः । सप्र.७५५

## पराशरः

वरदोषाः

कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया ।
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥

## लघ्वाश्वलायनः

विवाहानुकूलानि वरलक्षणानि

स्नातकाय सुशीलाय कुलोत्तमभवाय च ।
दद्याद्वेदविदे कन्यामुचिताय वराय च ॥

## स्मृत्यन्तरम्

गुणवत्त्वं वरलक्षणम्

गुणवानिति विज्ञातो दूरस्थोऽपि हि सन् वरः ॥

## लिङ्गपुराणम्

विवाहानुकूलानि वरलक्षणानि

दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥

---

( १ ) स्मृच. ७८ वयश्च ( वराश्च ) ; पमा. ४७९ ; प्रपा. ३११ वपुर्वयश्च ( वयश्च रूपं ) परीक्ष्य ( समीक्ष्य ) ; गमा. ९८ वपुर्वयश्च ( वयश्च रूपं ) ; प्रर. ९८ गमावत्; विसौ. ५ ( कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च । वरे गुणान् सप्त निरीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥ ) लघु ; संप्र. ७५४ ; मुक्ता. १३४ ; संम. ६३ ; विपा. ७१६ गमावत् ; ज्ञान. १७४ ; कूर्म. १११४ गमावत् ; संर. ५१२ गमावत्.

( १ ) गृक. ३४ ; स्मृच. ७९ ; गृर. ३१ युवा दोष ( सुरादोष ) ; संप्र. ७५५ ; मुक्ता. १३४ दोषविवर्जितः ( शीलसमन्वितः ).

( २ ) प्रपा. ३१३ ; संप्र. ७५९ कुशीलाय ( अकुलीनाय ) ; ८५५ ; विपा. ७२३ यच्छति ( ददाति ) ; संग. २५५ ; संर. ५१३ विपावत्.

( ३ ) लघ्वाश्वस्मृ. १५।३ ;

( ४ ) संर. ५०६ .

( ५ ) प्रपा. ३११ ; संप्र. ७५२ ; विपा. ७१६ साक्षादधी ( कन्या स्वधी ) ; संर. ५१२ .

अत्र ब्रह्मचारिणे इत्यस्यायमर्थः- अस्खलितब्रह्मचर्येणैव प्रथमविवाहः कार्यः। ब्रह्मचर्यस्खलिते 'यो ब्रह्मचारी स्त्रियमुपेयात् स गर्दभं पशुमालभेत' इत्यादिना विहितं प्रायश्चित्तं कृत्वा कन्यामुद्वहेदिति। तदिदमभिसंधायाह याज्ञवल्क्यः- 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति। प्रपा. ३११

## गरुडपुराणम्

विवाहानुकूलानि वरलक्षणानि

सुशीलाय सुवृत्ताय सुविद्याय तपस्विने।
कन्या देया प्रयत्नेन नेतरस्मै कथंचन॥[1]

## ब्रह्मपुराणम्

विवाहानुकूलानि वरलक्षणानि

कन्यां तु परया भक्त्या ह्यलंकृत्य प्रयत्नतः।
कुलीनाय सुरूपाय गुणज्ञाय विशेषतः।
कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः॥[2]

## ब्रह्मवैवर्तपुराणम्

विवाहप्रतिकूला वरदोषाः, विवाहानुकूलानि वरलक्षणानि

वैराय गुणहीनाय वृद्धाय ज्ञानिने तथा।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च॥
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च।
पङ्गुलायाङ्गहीनाय चान्धाय बधिराय च॥
जडाय चैव मूकाय क्लीबायात्यन्तपापिने।
ब्रह्महत्यां लभेत्सोऽपि यः स्वकन्यां प्रयच्छति॥
शान्ताय गुणिने चैव यूने च विदुषेऽपि च।
वैष्णवाय सुतां दत्त्वा दशयापीफलं लभेत्॥[3]

वृद्धपदमत्यशक्तपरतालक्षकम्। ज्ञानिपदं विवाहानिच्छुपरतालक्षकम्। पङ्गुल. पादहीनः। अत्यन्तपापिने महापातकयुक्तायेत्यर्थः। अपिशब्दात्प्रतिग्रहीतुरपि दोषः। वैष्णवाय विष्णुभक्ताय। विष्णुशब्दः शिवाद्युपलक्षकः। संर. ५१३

## भविष्यपुराणम्

विवाहानुकूलानि वरलक्षणानि

कन्या देया श्रोत्रियाय ब्राह्मणाय तपस्विने।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे॥[1]

## अनिर्दिष्टकर्तृकवचनानि

विवाहानुकूलानि वरकन्यालक्षणानि

[2]अर्चितं वचनमुन्नतं मनो
निर्विशेषसुखदं दृशां वपुः।
अस्ति चेदथ पराङ्मुखी मति-
र्लक्षणैः किमपरैर्नृयोषिताम्॥

मनसश्चक्षुषो यस्मिन्वरे यस्यां च योषिति।
संतोषो जायते तत्र नान्यत्किंचिद्विचिन्तयेत्॥[3]

[4]पितृशीलोत्तमा कन्या मातृशीलो वरस्तथा।
समपृष्ठस्तुल्यरूपो विवाहः सुखदो भवेत्॥
यस्य शीलं न जानीयात्स्थानं त्रिपुरुषं कुलम्।
कन्यादाने तथा श्राद्धे न वृणीयात्कदाचन॥

कुलविद्ययोस्तारतम्यम्

[5]ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम्॥

## संग्रहकारः (स्मृतिसंग्रहः)

विवाहप्रतिकूला वरदोषाः

[6]उन्मत्ता वृत्तिहीनाश्च तथाऽपस्मारदूषिताः।
दूरस्थाः कुष्ठिनो मूर्खा मोक्षमार्गानुसारिणः॥
शूरा अवेद्या निर्धूत्ता दशदोषयुता वराः।
तथा षण्ढाश्च पतिताश्चक्षुःश्रोत्रविवर्जिताः॥
वर्जनीयाः प्रयत्नेन कन्यादात्रा न संशयः॥

(१) चदा. ६८१.
(२) चदा. ६८१ महाण्डपुराणम्; प्रपा. ३५६ ब्रह्माण्डपुराणम्; संप्र. ८३१; विपा. ४७ (भाग २); संग. २६२.
(३) संर. ५१३.

(१) चदा. ६८०.
(२) ज्योनि. १३६.
(३) ज्योनि. १३७.
(४) संग. १८३.
(५) संग. १८३; विपा. ७१६ स्मृतिचन्द्रिकायामित्युक्तम्.
(६) संर. ५०३ संग्रहे इत्युक्तम्.

## लल्लः

अष्टौ वरगुणाः

जातिर्विद्या वयः शीलमारोग्यं बहुरक्षता ।
अर्थित्वं विप्रसंपत्तिरष्टावेते वरे गुणाः ॥

## कर्मविपाकसंग्रहे

सप्तविधः पण्ढः

पण्ढकश्चातकः पण्ढः पण्डः क्लीबो नपुंसकः ।
सकीलश्चेति सप्तैवं क्लीबभेदा विभाषिताः ॥

तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्मा पण्ढको भवेत् ।
पुमान् भूत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च ॥

स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा ।
घातको नाम पण्ढः स्यात् स्त्रीपण्ढो वाऽपि नामतः ॥

असल्लिङ्गोऽपि पण्ढः स्यात्पण्डस्तु म्लानमेहनः ।
अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकः ॥

स कीलक इति ज्ञेयो यः क्लैव्यादात्मनः स्त्रियम् ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

## ज्योतिःसारे

सप्त वरगुणाः

कुलं शीलं वपुर्विद्या वयो वित्तं सनाथता ।
गुणाः सप्त वरे यस्मिन् तस्मै कन्या प्रदीयते ॥

दश वरदोषाः

अन्धो मूकः क्रियाहीनो ह्यपस्मारी नपुंसकः ।
दूरस्थः पतितः कुष्ठी दीर्घरोगी वरो न सन् ॥

मूकोऽन्धो बधिरः स्तब्धः पङ्गुः कुब्जो नपुंसकः ।
कुष्ठी रोगी ह्यपस्मारी दश दोषाः प्रकीर्तिताः ॥

## व्यवहारचण्डेश्वरे

दश वरदोषाः

[2]सिते कुष्ठिन्यपस्मारे ब्रह्मघ्ने राजयक्ष्मणि ।
अन्धे च परवित्ते ( परिवित्तौ ) च बधिरे दूरदेशगे ।
व्यसनासक्तचित्ते च न देया कन्यका बुधैः ॥

## शौनककारिका

विवाहानुकूलानि वरलक्षणानि

कुलीनाय वरिष्ठाय श्रुतशीलादिभिर्गुणैः ।
द्विजन्मने ... ॥

## रेणुकारिकाः

विवाहानुकूलानि वरकन्यालक्षणानि, विवाहप्रतिकूला वरकन्यादोषाः, पण्ढलक्षणम्

वरो वरयितव्योऽर्थी कुलशीलसमन्वितः ।
रूपवान् पण्डितः प्राज्ञो युवा दोषविवर्जितः ॥

उन्मत्तः पतितः कुष्ठी तथा पण्ढः सगोत्रजः ।
चक्षुःश्रोत्रविहीनश्च तथाऽपस्मारदूषितः ।
वरदोषाः स्मृता ह्येते कन्यादोषाश्च कीर्तिताः ॥

यत्नात्परीक्षितः पुंस्त्वे प्रशस्ताभिजनान्वितः ।
सर्वलक्षणसंपन्नः सुचरित्रजनप्रियः ॥

यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु पण्ढकः ॥

ह्लादिफेनिलमूत्रस्तु गुरुशुक्रो धृपस्तनः ।
पुमान् स्यादन्यथा पण्ढो दुश्चिकित्स्यो मुखेभगः ॥

---

(१) विमौ. ५ नि ( रिच ) ; संप्र. ७१४ जातिविद्या ( कातिविद्या ) रक्षता ( पक्षता ).

(२) मैन्र. ७०७.

(३) धप्र. ५९ तस्मै ( तस्मिन् ) ; ज्योनि. ११५ ( = ) ; संग. १८१ वपुर्वित्तमावाभिगुणम्.

(४) धप्र. ५९ ; ज्योनि. ११५ ह्यपस्मारी ( पापस्मारी ) कारिकानिवन्धे रघुफल् ; संग. १८१ पूर्वे श्लोकेनिवद्.

(१) धप्र. ५९.

(२) विमौ. ६.

(३) शौका. १ पृ. ५१ ; प्रपा. १४४.

(४) रेका. १४-१७ पृ. ५१.

(५) रेका. १७-१८ पृ. ५१ ; ज्योनि. ११५-११६ पण्ढकः ( षण्ढकः ) कारिकानिवन्धे ; संग. १८४ पूर्वे श्लोकेनिवद्.

[4]अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥
[2]कुलं च शीलं च वपुर्वयश्च
वित्तं च विद्या च सनाथता च ।
एतान् गुणान् सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥
दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्धनानां च न देया कन्यका बुधैः ॥

## कारिकानिबन्धे

विवाहप्रतिकूला वरदोषाः

[3]मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् ।
त्रिगुणाधिकवर्षाणां न देया जातु कन्यका ॥
[4]अपरीक्ष्य वरं कन्यां निर्गुणाय ददाति यः ।
कुलं तस्यैव तच्छोकसंतप्ता विनिकृन्तति ॥

( १ ) रेका. ३८–३९ पृ. ५१ ; संग. १८४ नाबीजी (नाबीजे).
( २ ) रेका. ४०–४१ पृ. ५१ .
( ३ ) ज्योनि. १३५ ; संग. १८४ दूरस्थ ( दुर्गन्ध ) .
( ४ ) ज्योनि. १३६ सा विनि ( स्रोवीं नि ) ; संग. १८४ संतप्ता ( संतप्तो ) .

## अनन्तपाठककारिकाः

विवाहानुकूलानि वरलक्षणानि

[1]विद्याऽऽचारविचारचातुपक्रति-
व्यासक्तचित्तः सदा
धैर्यौदार्यगभीरतादिगुणवान्
सद्वंशजो धर्मकृत् ।
सल्लक्ष्माऽतिसमृद्धिमान् क्षितितले
ख्यातः सतां संमतः ।
श्रेयस्तोपकरः शिरोनतिकरः
संदर्शनीयो वरः ॥
युवा विलासी प्रचलः सुगात्र
आजानुबाहुश्च कपाटवक्षाः ।
विशालनेत्रो बहुसौकुमार्यः
कार्यः कुमारीहृदयप्रभेत्ता ॥

( १ ) संग. १८३ .



# परिवेत्त्रादिविचारः

## वेदाः

परिवेदनादिदोषाः

[1]तेऽतिमृजाना आयन् । सूर्याभ्युदिते तेऽमृजत । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते । सर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति । श्यावदन् परिवित्ते । परिवित्तः परिविविदाने । परिविविदानोऽग्रेदिधिषौ । अग्रेदिधिषुर्दिधिषूपतौ । दिधिषूपतिर्वीरहणि । वीरहा ब्रह्महणि । ब्रह्महा भ्रूणहनि । भ्रूणहनमेनो नात्येति ॥

[2]ते देवा अतिमृजाना आयन् । सूर्याभ्युदिते तेऽमृजत । यँ सुप्तँ सूर्योऽभ्युदेति सूर्याभ्युदितः । सूर्याभिनिम्रुक्ते सर्याभिनिम्रुक्तः । श्यावदति श्यावदन् । कुनखिनि कुनखी । अग्रेदधुष्यग्रेदधुः । परिवित्ते परिवित्तः । परिविविदाने परिविविदानः । वीरहणि वीरहा । भ्रूणहनि भ्रूणहनमेनो नात्येति ॥

[3]ते देवा आप्त्येष्वमृजत । आप्त्या अमृजत सूर्याभ्युदिते । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते । सूर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ । अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि । तद्ब्रह्महणं नात्यच्चयवत ॥

आप्त्या एकतादयः । उदयास्तमयकालयोः सुप्तौ पुरुषौ अभ्युदिताभिनिम्रुक्तौ । तथा चोक्तम्—'सुप्ते यस्मिन् अस्तमेति सुप्ते यस्मिन् उदेति च । अंशुमानभिनिम्रुक्ताभ्युदितौ तौ यथाक्रमम् ॥' इति । नखवक्रत्वं दन्तमालिन्यं चात्र रोगविशेषकृतम् । ज्येष्ठायामनूढायां कनिष्ठामूढ्वा अवस्थितोऽग्रदिधिषुः । ऊढवति कनिष्ठे सति विवाहरहितो ज्येष्ठः परिवित्तः । वीरस्य क्षत्रियस्य हन्ता वीरहा । ब्राह्मणस्य हन्ता ब्रह्महा । एतेष्वाप्त्यानामेकतादीनां देवानां पापलेपमार्जनायैव सृष्टत्वात्तेषु तन्मार्जनमुचितम् । सूर्याभ्युदितादीनां ब्रह्महान्तानां पापप्रवणत्वात् निम्नगामिनो जलस्येव लेपस्यापि तेषु प्रवाहो युक्तः । ब्रह्महत्यायाः पापाधिक्यतारतम्यविश्रान्तिभूमित्वात् लेपो ब्रह्मघ्नं नातिक्रामति ।

तैब्रासा. [ तैब्रा. १।१।८।१ पृ. ११३–११४ ]

## वैखानसगृह्यसूत्रम्

परिवेदनलक्षणम्, परिवेदने प्रायश्चित्तम्, ज्येष्ठभ्रातुर्विवाहोत्तरं परिवेत्तुः पुनर्विवाहः, ज्येष्ठे नष्टे पतिते वा कनिष्ठस्य कर्तव्यम्

[1]ज्येष्ठे तिष्ठत्यनुजेन विवाहे कृते परिवेत्ताऽनुजश्चान्द्रायणं चरित्वा परिवित्तिं ज्येष्ठं विवाहं कारयित्वा पूर्ववत्प्रायश्चित्तं हुत्वा पुनर्विवाहं कुर्यात् ॥ [2]परदेशगते ज्येष्ठे द्वादशवर्षेऽतीते मृतस्येवाकृतिदहनादि कर्म कृत्वा प्रायश्चित्तं हुत्वा विवाहं कुरुते । तस्मिन् पुनरागतेऽनुजः पूर्ववत्प्रायश्चित्तं हुत्वा विवाहं करोति । ब्रह्महत्याद्यैः पतिते ज्येष्ठे बान्धवसंनिधौ वारिपूर्णघटत्यागेनैव तं त्यक्त्वा चान्द्रायणं चरित्वा विवाहं कुरुते ॥

## गौतमः

परिवेदनापवादः

[3]भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

(१) यत्तु 'भिन्नोदरे......' इति प्रयोगपारिजाते गौतमवाक्यं, तस्य दत्तके अग्रजे प्रतिग्रहीतुः औरसस्य न परिवेत्तृत्वमित्यर्थः । तत्रैव ज्येष्ठे सोदरे अकृतविवाहाधाने तदनुजस्य दत्तकस्य विवाहाधानयोः

(१) कासं. ३१।७ ; कसं. ४७।७ .
(२) मैसं. ४।१।९ .
(३) तैब्रा. ३।२।८।११,१२ .

(१) वैगृ. ६।१२ .
(२) वैगृ. ६।१४ .
(३) प्रपा. ३१२ ; संप्र. ७६१ ; कृभ. ११६५ ; संर. ५१५ .

परिवेत्तृत्वमेव '। ननु इदं कथ, दानेन परपुत्रता प्राप्तौ हि दातुः पुत्रत्वप्रयुक्तकार्यव्यावृत्तौ तत्पुत्राणामपि भ्रातृत्वप्रयुक्तविधिनिषेधयोः अविषयत्वादिति चेत्, न, 'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्। आवसथ्यं तथाऽऽधानम्' इति निषेधात्। * कृभ.११६५

(२) प्रथमविवाहाग्न्याधानादौ। संर. ५१५

परिवेदनाग्रेदिधिषूत्वादिदोषे प्रायश्चित्तम्, अकृतविवाहे ज्येष्ठे भ्रातरि कालप्रतीक्षावधि.

**[१]परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यम् ॥**

अकृताधाने ज्येष्ठे कनिष्ठेनाधाने ज्येष्ठ पर्याहितः, कनिष्ठः पर्याधाता। संग्र ७६५

**†[२]द्वादशवर्षाणि ब्राह्मणस्य विद्यासंबन्धे ॥**

**[३]भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु ॥**

(१) भ्रातरि अकृतदारे अनाहिताग्नौ च प्रोषिते ज्येष्ठे कनीयानेवमेव कुर्यात्। एवंशब्दात् समस्तानिदेशः, श्रूयमाणे तदभिगमनं, प्रव्रजिते तु तदभिगमननिवृत्तिश्च ततो द्रष्टव्या। एवंतर्हि प्रव्रजिते सपत्नत्वमपि प्राप्नोतीति चेत्, न, स्मृत्यन्तरदर्शनात्। यथाऽऽह उशना— 'प्रव्रजति ज्येष्ठे क्षपणं नास्ति, सद्य एव निविशेत्' इत्यादि। एवमपि अर्थार्थे गतस्य षड्वार्षिके प्राप्नोति इति चेन्न, तत्रापि स्मृत्यन्तरसामर्थ्यात्। यथाह वसिष्ठः— 'द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः। न्याय्यः प्रतीक्षितुं भ्रात्रा श्रूयमाणः पुनः पुनः ॥' इति। चकारात्स्मृत्यन्तरोक्तानामपि उपसंग्रहः। यथाह वसिष्ठः— 'अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति' इति। तत्र बहुशः श्रूयमाणे द्वादश, पुनःपुनरित्युक्तत्वात्, किंचित् श्रूयमाणे दश वर्षाणि, सर्वथा अश्रूयमाणे अष्टौ इति द्रष्टव्यम्। क्षत्रियादेः पूर्ववत् अर्धमर्धं परिकल्प्यम्। अस्यापवादः— 'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च। राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम् ॥' इत्यादिस्मृत्यन्तरोक्तो द्रष्टव्यः। ज्येष्ठग्रहणादेव कनीयसः अर्थतः सिद्धेः सन्निधिशब्दत्वात् (यवीयोग्रहणं) एकमातृकस्यैव दोष इति ख्यापनार्थम्। स्मार्तस्यापि अग्नेरुपसंग्रहार्थं बहुवचनम्। *मभा.

(२) एवं द्वादश वर्षाणि प्रतीक्षेत, ततः कन्यामुपयच्छेत् अग्नींश्चादधीत। गौमि.

(३) ज्येष्ठे भ्रातरि अकृतविवाहे अकृताग्न्याधेये वा विद्याग्रहणार्थं देशान्तरगते कनिष्ठो भ्राता कन्यापरिग्रहे अग्न्याधाने चैव द्वादशवर्षाणि प्रतीक्ष्य तत उपरि प्रवर्तेतेत्यर्थः। कार्यान्तरार्थं देशान्तरगतविषये तु अष्टौ दश वेति पक्षद्वयम्। अत्रेदं विवक्षितम्— देशान्तरगतस्य स्वाभिलषितकार्यं निर्वर्त्य प्रत्यागमनयोग्यकालेऽप्यनागतस्य इह लोके स्थितिसंदेहेन विवाहसंभावनानिवृत्तौ परिवेदनं न दोषमर्हति। एवमेव विरक्तवेश्यातिसक्तादिष्वपि तत्स्वभावस्य द्वादशवर्षादिचिरकालानुवृत्त्या विवाहसंभावनानिवृत्तौ परिवेदनं न दोषं वहति इत्यभिप्रायो वेदितव्यः। स्मृच. ३९७ (आ.)

**पैठिनस्येके ॥**

---

* अधिकं तु अग्रे 'क्षेत्रजादौ' इति त्रिकाण्डमण्डनवचने द्रष्टव्यम्।

† एतत्सूत्रं विषयान्तरगतमप्यनुषङ्गबोधार्थमत्रोद्धृतम्। अतोऽस्य टीकादिकं नात्रोद्धृतम्।

(१) पभा. ५०–५१ (खण्डः २ भाग १) धात्रग्रे (धाताऽग्रे) पूदिधिषूपतीनां (पुदिधिषूणां); प्रपा. ३१४ (दिधिषू०); संग्र. ७६५ दिधिषू (दिधिषूपति); विपा. ७२७ पर्याधात्र .. पतीनां (पर्यायाणामग्रेदिधीपुपतीनां); कृभ. १११७ (=) प्रपावत्, इद वचनं मूले नोपलभ्यते।

(२) गौध. १८।१८.

(३) गौध. १८।१९; मेधा. ३।१७१ (भ्रातरि च ज्यायसि) एतावदेव, स्मृत्यन्तरम्; गृक. ११२ (यवीयान् कन्याग्न्युपयमेषु) एतावदेव; मभा; गौमि. १८।१८; स्मृच. ३९७ (आ.) ज्यायसि + (तयोः) कन्याग्न्युपयमेषु (कन्याग्न्याधेयेषु); चश्रा. ३७३ कन्याग्न्युपयमेषु (कन्याग्न्याधेयेषु); गृर. ८८; उत. १२२; मुक्ता. १५२; संर. ५१६ कन्याग्न्युपयमेषु (कन्याग्न्याधेयेष्टिषु).

* गौमि. मभागतम्।

(१) गौध. १८।२०; मभा.; गौमि. १८।१९; गृर. ८८; उत. १२२.

षडेव वर्षाणि प्रतीक्षेतेत्येके मन्यन्ते । तत्र प्रोषितोऽत्यन्तवृद्धश्चेत् षड्वर्षाणि क्षपयेत्, नो चेत् द्वादश वर्षाणि इति द्रष्टव्यम् । * मभा.

## हारीतः

परिवेत्त्रादिलक्षणम्, परिवेदनदोषप्रायश्चित्तम्

**ज्येष्ठेऽनिविष्टे कनीयान् निविशमानः परिवेत्ता भवति, पूर्वः परिवित्तिः, परिवेदिनी कन्या, परिदायी दाता, परियष्टा याजकः, ते सर्वे पतिताः सम्यक्संवत्सरं प्राजापत्येन कृच्छ्रेण पावयेयुः ॥**

( १ ) अनिर्विष्टे अकृतविवाहे । निष्ठानिर्देशात् अनिष्पन्ने ज्येष्ठविवाहे वर्तमानेऽपि कनिष्ठस्य विवाहे नाधिकारः । तस्मात् सह विवाहोऽपि न कार्यः । भ्रातृपदेन सोदर्य एवोच्यते । सापत्न्यादौ एककारणत्वगुणयोगादपि भ्रातृशब्दप्रयोगोपपत्तेर्नाभिधाशक्तिकल्पना । एतन्न्यायार्थवादिनी च 'पितृव्यपुत्रान्' इत्यादिशातातपस्मृतिः । गृक. १०६

( २ ) अनिर्विष्टे अकृतविवाहे अकृताग्निहोत्रे च । * गृर. ८७

( ३ ) एतत् कामतः पित्राद्यनुज्ञातोद्वाहविषयम् । अकामतः पित्रादिदत्तोद्वाहे तु मानवं त्रैमासिकम् । अज्ञानतः पित्राद्यदत्तोद्वाहे याज्ञवल्कीयं व्रतचतुष्टयम् — 'उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा । पयसा वाऽपि मासेन पराकेणाथवा पुनः ॥' इति । एवमिति गोवधप्रायश्चित्तातिदेशः । अज्ञानतः पित्रादिदत्तोद्वाहे तु यमः–'कृच्छ्रो द्वयोः पारिवेद्ये कन्यायाः कृच्छ्र एव तु । अतिकृच्छ्रं चरेद्दाता यष्टा चान्द्रायणं चरेत् ॥' इति । संकौ. २०७

**सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् । दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥**

( १ ) अनुजस्य तु ज्येष्ठभ्रात्रनुज्ञयाऽपि विवाहे दोषो नापैतीत्याह हारीतः– सोदराणामिति । विवाहादावधिकारिभूतज्येष्ठानुज्ञातसोदरविषयमेतत् — 'दारैस्तु परिविद्यन्ते' इति । स्मृच. ३९८ (श्रा.)

( २ ) अग्निहोत्रादिष्वनुज्ञाता न परिविन्दन्ते इति स्थितम् । दारैः पुनरनुज्ञाता अपि परिविन्दन्ते इति वचनार्थः । चश्रा. ३७६

( ३ ) सोदरोक्तेः असोदराणां सापत्नदत्तकादीनां न दोषः । सिन्धु. ११६२

परिवेदनलब्धकन्याया ज्येष्ठाय दानम्

**ज्येष्ठस्य समाप्तेऽब्दे तां कन्यां ज्येष्ठायोपपाद-**

---

* गौमि. मभावत् ।

( १ ) गृक. १०६ ( ज्येष्ठे अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति, परिविन्नो ज्येष्ठः । परिवेदिनी कन्या परिदायिनी परिकर्ता याजकः सर्वे ते पतिताः । ) ; गृर. ८७ ( ज्येष्ठे तु अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति, परिविन्नो ज्येष्ठः , परिवेदनीया कन्या, परिदायी दाता, परिवेत्ता याजकः सर्वे ते पतिताः । ) ; स्मृसा. १४ ( यो ज्येष्ठे विद्यमाने अग्निहोत्रमनुज्ञः परिणयं वा पूर्वं करोति स परिवेत्ता परिवित्तिस्तज्ज्यायान् परिवेदनी कन्या परिवेदनकारी दाता परिवेदनकारयिता याजकः सर्वे ते पतिताः ) वृद्धहारीत : १४१ ( यो ज्येष्ठे विद्यमाने दारानग्निहोत्रमनुज्ञः पूर्वं करोति स परिवेत्ता परिविन्नो ज्येष्ठः परिवेदिनी कन्या परिवेदयिता दाता परिवित्ती याजकः सर्वे ते पतिताः । संवत्सरप्राजापत्येन कृच्छ्रेण वा पावयेयुः ) वृद्धहारीतः ; पमा. ४९ ( खण्डः २ भागः १ ) ( ज्येष्ठेऽनिर्विष्टे कनीयान्निविशन् परिवेत्ता भवति । परिवित्तिर्ज्येष्ठः । परिवेदिनी कन्या परिदायी दाता परियष्टा याजकः सर्वे ते पतिताः ) : ५० ( खण्डः २ भागः १ ) ( ते सर्वे पतिताः । संवत्सरं प्राजापत्येन कृच्छ्रेण यापयेयुः ) एतावदेव ; उत. ११९ ( ज्येष्ठेऽनिर्विष्टे कनीयान्निर्विशन् परिवेत्ता भवति, परिविन्नो ज्येष्ठः , परिवेदनीया कन्या, परिदायी दाता, परिकर्ता याजकः ते सर्वे पतिताः । ) ; संकौ. २०७ ; प्रका. २६२ ; संव. १४६ ( सम्यकृ० ).

* शेषं गृकवत् । उत. गृरगतम् ।

( १ ) मप. १।२२४ पृ. ४४६ विद्यन्ते ( वेद्यन्ते ); गृक. १११ सोदराणां ( सोदर्याणां ) विद्यन्ते ( विन्द्यन्ते ) नेज्यया ( चेज्यया ) ; स्मृच. ३९८ ( श्रा. ) ; चश्रा. ३७६ विद्यन्ते ( विन्दन्ते ) ; चका. ८१३ ; गृर. ९१ सोदराणां ( सोदर्याणां ) नेज्यया ( चेज्यया ); मपा. १७२ ; संप्र. ७६६ ; श्राप्र. ८६ ; चम. १२० ; मुक्ता. २३ ; सिन्धु. ११६२ ; विपा. ७२४ ; प्रका. १४ ; कृभ. ११६७ उत्त. ; संर. ५१५ .

( २ ) संर. ५१८ .

येयुः, स तामनुमान्यान्यया निविशेदेवं धर्मो न लुप्यते ॥

हारीतेन ज्येष्ठस्साब्दव्रतमुक्त्वाऽन्योद्वाह एवोक्तः — ज्येष्ठस्येति । सं. ५१८

## बौधायनः

परिवेदनादिदोषस्तत्प्रायश्चित्तं च

[1]परिवित्तः परिवेत्ता या चैनं परिविन्दति ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥

[2]परिवित्तः परिवेत्ता दाता यश्चापि याजकः ।
कृच्छ्रद्वादशरात्रेण स्त्री त्रिरात्रेण शुध्यतीति ॥

अकृतदाराग्निहोत्रसंयोगे अग्रजे तिष्ठति यः कनीयान् दारसंयोगमग्निहोत्रसंयोगं वा करोति स परिवेत्ता । इतरः परिवित्तः । परिवेत्तुर्यः कन्यां प्रयच्छति स दाता । तमेव यो याजयति स याजकः । एतेषां चतुर्णां कृच्छ्रेण शुद्धिः । ययाऽसौ परिवेत्ताऽभूत् तस्याः त्रिरात्रोपवासेन शुद्धिः । बौवि.

[3]पर्याधानेऽप्ययोरेतत् परिवित्ते च भेषजम् ॥

पर्याधानं ज्यायसि तिष्ठत्यनाहिताग्नौ कनीयस आधानम् । आह च– 'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तस्तु पूर्वजः ॥' इति । अत्राग्रजशब्दस्यायमर्थः– अग्रे एव यस्मिन् जाते तस्यात्मनो जननं संभवति स तं प्रत्यग्रजः । एवं च सति पितर्यनाहिताग्नौ सति पुत्रेण नाधातव्यमिति भवति । परीज्यायामपि एतदेव पूर्वोक्तं भेषजम् । इज्या यागः, नित्येज्याः ऐष्टिकपाशुकसौमिकाः, न नैमित्तिकाः काम्याश्च । ते पितरं ज्येष्ठं चोल्लङ्घ्य न कर्तव्याः, यदि कुर्यात्तत्रापि एतदेव प्रायश्चित्तम् 'योऽभीयाद्यावकं पक्वम्' ( बौध. ४।६।५ ) इत्यादि । बौवि.

## आपस्तम्बः

परिवेदनादिदोषः तत्प्रायश्चित्तं च

[1]अभिनिम्रुक्ताऽभ्युदितकुनखिश्यावदाग्रदिधिषु-दिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् गरीयान् ॥

( १ ) पर्याधानापेक्षया दारपरिवेदनस्य अधिकदोषत्वम् । गृक.११२

( २ )......ज्येष्ठायामनूढायां पूर्वं कनीयस्याः वोढा अग्रदिधिषुः । पश्चादितरस्या वोढा दिधिषूपतिः । ज्येष्ठे अकृताधाने कृताधानः कनिष्ठः पर्याधाता । ज्येष्ठः पर्याहितः । ज्येष्ठे अकृतसोमयागे कृतसोमयागः कनिष्ठः परियष्टा । ज्येष्ठः परीष्टः । अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः परिवेत्तेति प्रसिद्धः । ज्येष्ठः परिवित्तः । ज्येष्ठस्य भार्यामुपयच्छमानः परिविन्नः । यस्मिन् अगृहीतभागे वा कनिष्ठो भागं गृह्णाति स ज्येष्ठः परिवित्तः । कनिष्ठः परिविविदानः । चकारः पर्याधातृप्रभृतीनां समुच्चयार्थः । एतेष्वभिनिम्रुक्तादिषु यो य उत्तरस्तस्मिंस्तस्मिन् द्वादशमासादिरशुचिकरनिर्वेषो यः पूर्वमुक्तः ( आध. १।२९।१७ ) तत्र तत्र गरीयान् भवति । पूर्वत्र पूर्वत्र लघीयान् । उ.

## वसिष्ठः

परिवेदनादयो दोषाः, तत्प्रायश्चित्तं, परिवेदने पुनर्विवाहश्च

[2]सूर्याभ्युदितः सूर्याभिनिम्रुक्तः कुनखी श्यावदन्तः परिवित्तिः परिवेत्ताऽग्रेदिधिषूर्दिधिषूपतिर्वीरहा ब्रह्मोज्झ इत्येनस्विनः ॥

---

( १ ) बौध. २।१।३९ ; शुक्ला. १५३ परिवित्तः ( परिवित्तिः ).

( २ ) बौध. २।१।३९ .

( ३ ) बौध. ४।६।७ .

( १ ) आप. २।१२।२२ ; गृक. ११२ ( अभिनिर्मुक्ताभ्युदितकुनखीश्यावदन्ताग्रेदिधिषुदिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिवेदनेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेशो गरीयान् ) ; गृर. ९२ ( अभिनिर्मुक्ताभ्युदितश्यावदन्ताग्रेदिधिषुदिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिविविदानेषु च उत्तरोत्तरस्मिन्नशुचिकरनिर्वेशो गरीयान् ).

( २ ) वसिष्ठ. १।१७ .

**परिविन्तिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत, तां चैवोपयच्छेत् ॥**

**अथ परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत, तामेवोपयच्छेत् ॥**

( १ ) प्रायश्चित्तचरणानन्तरं परिवेत्तुः कर्तव्यमाह वसिष्ठः– परिविविदान इति । तस्मै दत्वा ज्येष्ठाय निवेद्य पुनर्निविशेत् पुनरुद्वहेत् । कामित्यपेक्षायामाह– तामेवोपयच्छेदिति । अयमर्थः– ज्येष्ठभ्रातर्यकृतदारपरिग्रहे कृतदारपरिग्रहः कनिष्ठः परिवेत्ता, परिवेदन्या स्वगृहीतया कन्यया परिवित्तिना ज्येष्ठभ्रात्रा च सह उक्तं प्रायश्चित्तं निर्वर्त्य ज्येष्ठभ्रातरि कृतदारपरिग्रहे कनिष्ठः पूर्वं गृहीतां कन्यां ज्येष्ठभ्रात्रे निवेद्य तद्दत्तां स्वयमेव पुनरुद्वहेत् । अयमेव न्यायो ज्येष्ठ–कनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसंधेयः ।

* पमा. ५० ( खण्डः २ भागः १ )

( २ ) परिविविदान इति परिवेत्तरेव संज्ञा । तस्मै ज्येष्ठाय । ब्रह्मचार्याहृतभैक्ष्यवत् निवेद्य पुनरुद्वहेत् । संकौ. २०७

( ३ ) अत्रापरार्के कनिष्ठेनोढां ज्येष्ठ उद्वहेत् । अशास्त्रीयविवाहेन कनिष्ठनिरूपितभार्यात्वानुत्पत्तेर्ज्येष्ठोद्वाहयोग्यत्वात् । कनिष्ठस्त्वन्यामुद्वहेदिति । हारीतेन ज्येष्ठस्याब्दव्रतमुक्त्वाऽन्योद्वाह एवोक्तः–ज्येष्ठस्येत्यादिना । संर.५१७

* प्रपा., संप्र., विपा. पमागतम् ।

( १ ) वस्मृ. २०।८ .

( २ ) वस्मृ. २०।९ ; पमा. ५० ( खण्डः २ भागः १ ) ( अथ० ) विशेत ( विशेत् ) तामेवोप ( तां चैवोप ) ; प्रपा. ३१४ ( परिविन्तिः कृच्छ्रातिकृच्छ्रं चरित्वा तस्मै दत्वा पुनर्वेशे तु तामेवोपयच्छेत ) ; संप्र. ७६४ यच्छेत् ( यच्छेत ) ; विपा. ७२७ ( परिवेत्ता दाता च कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै तां दत्त्वा पुनर्निविशेत् अन्यामुद्वहेत् तां नैवोपयच्छेत ) ; संकौ. २०७ ( अथ० ) तामेवोप ( तां चैवोप ) ; प्रका. ३६३ विशेत ( विशेत् ) शेषं संकौवत् ; संव. १४६ संकौवत् ; संर. ५१७ ( परिवेत्ता च दाता च कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै तां दत्त्वा पुनर्निविशेत्तां चैवोपयच्छेत ) .

अग्रेदिधिषूदिधिषूपत्योः प्रायश्चित्तम्, कन्यापरिवर्तनेन विवाहश्च

**अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत, तां चैवोपयच्छेत् ॥**

**[२]दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत ॥**

( १ ) अग्रेदिधिष्वादेर्लक्षणं देवलेनोक्तम्– 'ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा । सा चाग्रेदिधिषुर्ज्ञेया पूर्वा तु दिधिषुः स्मृता ॥ ' इति । तत्र अग्रेदिधिषुपतिर्द्वादशरात्रं कृच्छ्रं प्राजापत्यं चरित्वा ज्येष्ठायां पश्चादन्येनोढाया तामेवोद्वहेत् । दिधिषुपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढा ज्येष्ठां तस्मै कनीयस्याः पूर्ववोढ्रे दत्त्वा अन्यामुद्वहेत् ।

* पमा. ५१ ( खण्डः २ भागः १ )

( २ ) द्वादशरात्रं पराकरूपम् । निर्विशेत् अन्यामुद्वहेत् । तां कनिष्ठां ज्येष्ठाया वराय उपयच्छेत् उपपादयेत् । एवं ज्येष्ठामपि कनिष्ठाया वराय । एतच्चानुमत्यर्थं शास्त्रेणोक्तं, न तु तयोरप्यभिगमः, परिवेदनाधिकारे 'न भूयश्चैनामुपगच्छेत्' इति सुमन्तुवचनात् । भवदेव-

* विपा., संकौ. पमावत् ।

( १ ) वस्मृ. २०।१० ; पमा. ५०–५१ (खण्डः २ भागः १) दिधिषू ( दिधिषु ) निविशेत ( निविशेत् ) ; प्रपा. ३१४ तां चैवोपयच्छेत् ( तथा चोपयच्छेत ) ; उत. १२३ अग्रे ( अथाग्रे ) दिधिषू ( दिधिषु ) निविशेत ( निर्विशेत् ) ; संप्र. ७६५ वचनं गलितमिति भाति ; विपा. ७२७ ( कृच्छ्रं द्वादशरात्रं चरित्वा अग्रेदिधीषुपतिर्निर्विशेत् तां चोपयच्छेत ) ; संकौ. २०८ दिधिषू ( दिधिषु ) यच्छेत् ( यच्छेत ) ; प्रका. ३६३ संकौवत् ; संव. १४६–१४७ संकौवत् ; कृभ. १११७ ( निविशेत० ) तां चैवोपयच्छेत् ( तस्मै दत्त्वा पुनर्निविशेत् ) ; संर. ५१८ निविशेत ( निविशेत् ) .

( २ ) वस्मृ. २०।११ ; पमा. ५१ ( खण्डः २ भागः १ ) दिधिषू ( दिधिषु ) विशेत ( विशेत् ) ; प्रपा. ३१४ कृच्छ्रौ ( कृच्छ्रं ) ; उत. १२३ दिधिषू ( दिधिषु ) ; संप्र. ७६५ वचनं गलितमिति भाति ; विपा. ७२७ दिधिषूपतिः ( दिधीषुपतिस्तु ) तस्मै + ( तां ) निविशेत ( निर्विशेत् ) ; संकौ. २०८ संपूर्णं वचनं नास्ति ; प्रका. ३६३ ; संव. १४७ दिधिषू ( दिधिषु ) ( दत्त्वा० ) ; संर. ५१८ विशेत ( विशेत् ) .

भट्टधृतं 'परित्यक्ता च सा पोष्या भोजनाच्छादनेन च।'

उत. १२३

( ३ ) अग्रेदिधिषूपतिः कनिष्ठापतिः कृच्छ्रं कृत्वा तां ज्येष्ठां अन्योढां समुद्वहेत् । दिधिषूपतिः ज्येष्ठापतिः स्वोढां ज्येष्ठां कनिष्ठापतये दत्त्वा स्वयमन्यामुद्वहेदिति।

संप्र. ७६५

( ४ ) व्याख्यान्तरमपि स्मृत्यर्थसारे —'कनिष्ठापतिर्द्वादशरात्रं कृत्वा तां स्वोढामेव ज्येष्ठोद्वाहे जाते उद्वहेत् । ज्येष्ठापतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढां कनिष्ठापतये ब्रह्मचार्याहृतभैक्ष्यवन्निवेद्य तदनुज्ञातां तां ज्येष्ठामेवोद्वहेत्' इति।

अपरार्के तु — अग्रेदिधिषूपतिस्थाने दिधिषूपतिरिति पठितम् । दिधिषूपतिस्थाने तु अग्रेदिधिषूपतिरिति। तथा च प्रायश्चित्तविकल्पः।

* संर. ५१८–५१९

ज्येष्ठे अकृतविवाहे प्रतीक्षावधिविधिः तदतिक्रमे प्रत्यवायश्च

**अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति ॥**

( १ ) अनिविष्टं अकृतविवाहाग्निहोत्रम्।

अप. १।२२४ पृ. ४४५

( २ ) देशान्तरस्थे अष्टवर्षादिकालः प्रतीक्षणीय इत्याह वसिष्ठः— अष्टाविति । देशान्तरगतस्य विवाहादावधिकारसंभवादित्यभिप्रायः । अनिविष्टं अकृतविवाहमित्यर्थः । अत्र द्वादशवर्षप्रतीक्षणं धर्मार्थे वाऽर्थार्थे वा देशान्तरगते ज्येष्ठे द्रष्टव्यम्। कार्यान्तरार्थे देशान्तरगतविषये तु 'अष्टौ दश वा' इति पक्षद्वयम्।

\+ स्मृच. ३९७ (आ.)

( ३ ) कालविकल्पस्त्वेवं ज्ञेयः— तत्र पुनः पुनः श्रूयमाणे सुप्रदेशे स्थिते द्वादश वर्षाणि, किंचित् श्रूयमाणे नातिसुप्रदेशस्थिते दश, नदीपर्वतचौराद्याकुलदूरतरदेशस्थिते अश्रूयमाणे वाऽष्टौ वर्षाणीति।

* मपा. १७१–१७२

( ४ ) प्रायश्चित्तीति । इदं तु बोध्यम्—कनिष्ठेन विवाहे आधानादौ वा कृते प्रायश्चित्तानन्तरं ज्येष्ठस्य विवाहे आधानादौ वा न दोष इति।

कृभ. ११६३

**द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः।**
**न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥**

भ्राता सहोदरः । धर्मार्थयोरिति विद्याया अपि प्रदर्शनार्थम् । अत एव गौतमेन—'नष्टे भर्तरि' इति प्रक्रम्य 'द्वादश वर्षाणि ब्राह्मणस्य विद्यासंबन्धेन' इति भार्यायाः भर्तृप्रतीक्षणकालमुक्त्वा उक्तम् 'भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्याधेयेषु' इति । नष्टे भर्तरि कुत्र गत इत्यज्ञाते भर्तरि, अत्यन्तदूरदेशान्तरगत इति यावत्। 'द्वादश वर्षाणि ब्राह्मणस्य विद्यासंबन्धेन' इति।

---

* शेषं पमावत्।

( १ ) अप. १।२२४ द्वादश + (वा); गृक. १०९ ज्येष्ठं (ज्येष्ठे); मभा. १८।१९; गौमि. १८।१८ ष्टमप्र (ष्टं न प्र) प्रायश्चित्ती (प्रायश्चित्तीयो); स्मृच. ३९७ (आ.) ज्येष्ठं (ज्येष्ठ); चश्रा. ३७२; चका. ८१२ (ज्येष्ठ०); गृर. ८९ (दश०) ज्येष्ठं (ज्येष्ठ) (अनिविष्ट०); पमा. ६९२ निविष्ट (निर्विष्ट); मपा. १७१ पमावत्; प्रपा. ३१४ (दश०) ज्येष्ठं (ज्येष्ठ); उत. १२१ पमावत्; श्राप्र. ८५; संप्र. ७६५; चम. ११९ (दश०) द्वादश + (वा) ज्येष्ठ (ज्येष्ठ); मुक्ता. १५२ ज्येष्ठ (ज्यष्ठ); सिन्धु. ११६३ वर्षाणि + (वा) ज्येष्ठं (ज्येष्ठ); विपा. ७२६ मुक्तावत्; संकौ. २०८ प्रपावत्; श्रान. १८३ प्रपावत्; प्रका. ३६३; संव. १४७ प्रपावत्; संर. ५१६ अष्टौ दश द्वादश वर्षाणि ज्येष्ठं (द्वादशाष्टौ वा वर्षाणि ज्येष्ठ).

\+ पमा. पक्षत्रयव्यवस्था स्मृचवत्। चश्रा., मुक्ता. स्मृचगतम्।

* संप्र., विपा. मपागतम्।

( १ ) अप. १।२२४ पृ. ४४५; गृक. १०९; मभा. १८।१९ भ्राता (भ्रात्रा); गौमि. १८।१८ योगतः (योग्यतः); स्मृच. ३९७ (आ.) योगतः (योगतः) स्मृतिः; चका. ८१२ मभावत्; चश्रा. ३७३ स्मृतिः; गृर. ८९ स्मृचवत्; पमा. ६९२ स्मृतिः; प्रपा. ३१४ योगतः (योगत) भ्राता (भ्रात्रा) स्मृत्यन्तरम्; उत. १२१; मुक्ता. १५२ मभावत्, पराशरः; चम. १२० मभावत्, स्मृतिः; संकौ. २०८ ज्यायान् (श्रेयान्). योगतः (योगतः); श्रान. १८३ मभावत्, पराशरः; प्रका. ३६२ संकौवत्; कृभ. ११६३ ज्यायान् (न्यायात्) योगतः (योगतः) स्मृतिः; संर. ५१६ प्रपावत्, स्मृतिः.

ब्राह्मणस्य भर्तुः विद्याग्रहणार्थं देशान्तरगमने सति भार्यया द्वादशवर्षाणि प्रतीक्षणीयानीत्यर्थः। 'भ्रातरि ...' इति। ज्येष्ठे भ्रातरि अकृतविवाहे अकृताग्न्याधेये वा विद्याग्रहणार्थं देशान्तरगते कनिष्ठो भ्राता कन्यापरिग्रहे अग्न्याधाने चैवं द्वादश वर्षाणि प्रतीक्ष्य तदुपरि प्रवर्तेतेत्यर्थः।

*अत्रेदं विवक्षितम्-- देशान्तरगतस्याभिलषितकार्यं निर्वर्त्य प्रत्यागमनयोग्यकालेऽप्यनागतस्य इह लोके स्थितिसंदेहेन विवाहसंभावनानिवृत्तौ न परिवेदनं दोषावहमिति। एवमेव विरक्तवेश्यातिसक्तादिष्वपि तत्तत्स्वभावस्य द्वादशवर्षादिचिरकालानुवृत्त्या विवाहसंभावनानिवृत्तौ परिवेदनं न दोषावहमित्यभिप्रायो वेदितव्यः। अनेनैवाभिप्रायेण सुमन्तुनाऽप्युक्तम्--'व्यसनासक्तचित्तो वा नास्तिको वा तथाऽग्रजः। कनीयान् धर्मकामस्तु आधानमथ कारयेत्॥' आधानग्रहणं विवाहस्याप्युपलक्षणार्थम्। क्लीबादयस्तु भ्रातरः किंचित्कालमपि न प्रतीक्षणीयाः, तेषां विवाहादौ स्वत एवायोग्यत्वेनानधिकारात्। तथा च स्मृतिः--'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च। राजयक्ष्म्यामयावी च न न्याय्यः स्यात्प्रतीक्षितुम्॥ खञ्जवामनकुब्जेषु गद्गदेषु जडेषु च। जात्यन्धे बधिरे मूके न दोषः परिवेदने॥' इति।

§ स्मृच. ३९७-३९८ (श्रा).

परिवेदनापवादाः

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च।
राजयक्ष्म्यामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्॥

(१) आमयावी रोगातिशयवान्। 'सर्वत्रामयस्योपसंख्यानम्' इति दीर्घः (विनिः दीर्घश्च)। अतिरोगिणं प्रति छन्दोगपरिशिष्टवचनात्। मत्वर्थीयस्य च इनिप्रत्ययस्यातिशायनेऽपि स्मरणात्। गृक.१०९

(२) आमयावी अतिसाररोगी। गृर.८९

षण्डवामनकुब्जान्धपतितोन्मत्तकुण्डकान्।
रोगिबधिरमूकेषु न दोषः परिवेदने॥

## वृद्धवसिष्ठः

पर्याधानापवादः

अग्रजस्तु यदानग्निरादध्यादनुजः कथम्।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि॥

(१) एतच्च धर्माधिकारिणि ज्येष्ठेऽग्न्याधेयमकुर्वति द्रष्टव्यम्, नानधिकारिणि। अप. १।२२४

(२) एवमाधानाधिकारिणि ज्येष्ठे स्थितेऽपि तदनुमत्या परिवेदने तु न दोषः। तथा च वृद्धवसिष्ठः-- अग्रजस्तु यदेति। आधानाधिकार्यप्यग्रजो यदा आधानादिविधिमतिक्रम्यानाहिताग्निर्यावज्जीवमास्ते इति कनिष्ठस्य निश्चयः, तदा तदनुमतिं लब्ध्वा अनुज आधानं कुर्यादित्यर्थः। *स्मृच. ३९८ (श्रा.)

(३) एतेन विवाहस्त्वनुमत्याऽपि दोषायेति प्रायश्चित्तविवेकः। उत. १२२-१२३

(४) अत्र अग्निहोत्रशब्देन आधानमुच्यते, उपक्रमानुरोधात्। एतच्च अनुज्ञाग्रहणं विवाहातिरिक्ते सोदराणाम्। श्राप्र. ८६

---

* अस्य प्रकरणस्य तात्पर्यभूतोऽयमग्रिमग्रन्थः।

§ चश्रा., पमा., संर. स्मृचगतम्।

(१) अप. १।२२४ पृ. ४४५ यावी च (यावी ना); गृक. १०९ एव च (एव वा) यक्ष्म्या (यक्ष्मा); मभा. १५।१७ यक्ष्म्या (यक्ष्मा) न्याय्यः स्यात् (न्याय्याः स्युः); गौमि. १५।१८ उत्तरार्धे (यक्ष्मामयावी च तथा न त्याज्यः स्यात्प्रतीक्षितुम्); चका. ८१२ एव च (एव वा) यक्ष्म्यामयावी च (यक्ष्मादियुक्तश्च); गृर. ८९ गृकवत्; उत. १२२ गृकवत्.

* चश्रा., पमा. स्मृचवत्।

(१) चका. ८१२.

(२) अप. १।२२४ पृ. ४४६ अग्रजस्तु (अग्रजश्च); स्मृच. ३९८ (श्रा.) वसिष्ठः; चश्रा. ३७५ अपवत्; चका. ८१३; पमा. ६९२ अपवत्; मपा. १७२ आदध्यात् (प्रकुर्यात्); उत. १२२ अग्रजस्तु (अग्रजोऽस्य) रादध्यादनु (रधिकार्योऽनु); संप्र. ७६६ कथम् (तदा); श्राप्र. ८६ अपवत्, वसिष्ठः; चम. १२०; मुक्ता. २३; सिन्धु. ११६२; विपा. ७२४; प्रका. १४.

## शङ्खः लिखितः शङ्खलिखितौ च

परिवेदनदोषः प्रायश्चित्तं च, परिवेदनापवादाः

ज्येष्ठे तिष्ठत्यनूढे वा अग्निहोत्राधिकारिणि ।
अनुज्ञया विनाऽऽधानं विवाहं नैव कारयेत् ॥
परिवित्तिः परिवेत्ता च यया च परिविद्यते ।
व्रतं संवत्सरं कुर्युर्दातृयाजकपञ्चमाः ॥
परिवित्तिः परिवेत्ता च संवत्सरं ब्राह्मणगृहेषु भैक्ष्यं चरेयाताम् ॥

कुब्जवामनषण्डेषु गद्गदेषु जडेषु च ।
जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥
क्लीबे देशान्तरस्थे पतिते प्रव्रजितेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

## मनुः

परिवेत्तृपरिवित्तिलक्षणे

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

( १ ) अग्रे आदौ जातः अग्रजः सोदर्यो भ्राता उच्यते । एवं हि पठ्यते—'पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥' इति । अत्र ( ? अतः ) सोदर्योऽग्रजः । तस्मिन् स्थिते अकृतदाराग्निसंयोगे । तिष्ठतिः अकृतव्यापारनिवृत्तौ प्रयुक्तः । अग्निहोत्रशब्दः कर्मवचनोऽपि तदर्थेऽग्न्याधाने वर्तते । स्मृत्यन्तरे विशेषः पठ्यते—'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च । राजयक्ष्माऽऽमयावी च न योग्यः स्यात्प्रतीक्षितुम् ॥' एतदप्यनधिकारोपलक्षणार्थम् । अतश्चापाङ्क्तेयोऽपि गृह्यते । कालविशेषोऽधिको व्यपेक्ष्यते । तथा च स्मृतिः—'अष्टौ वर्षाण्युदीक्षेत' ( नासं. १३।१०० ) 'षडित्येके' इति ( गौध. १८।२० ) । एषा च वर्षसंख्या यदा कनीयान् प्राप्तविवाहकालः ततःप्रभृति द्रष्टव्या । विवाहकालश्च स्वाध्यायविधिनिवृत्तिः । ननु च प्रोषिताधिकारे तत्पठितम् । भर्तरि प्रोषिते यः स्त्रीणां प्रवास ( ? प्रतीक्षण )-कालस्तमुपक्रम्य भ्रातरीत्यादि पठितम् । सत्यम् । वाक्यान्तरे प्रोषितशब्दस्य प्रत्यक्षः सम्बन्धोऽवगतः । वाक्यान्तरे तु संबन्धे प्रमाणं वक्तव्यम् । न च तदस्ति । यथा 'स्वरितेनाधिकारः' इति । न चात्र तच्छब्दोऽस्ति । न च तदपेक्षया विनैव तस्य वाक्यस्यापरिपूर्णत्वम् । वसिष्ठेन चाविशेषेणाग्निशब्देन स्मार्तस्याप्यग्नेर्ग्रहणं कृतम् । केचित् पितर्यप्यकृताधाने विधिमिच्छन्ति, अग्रजशब्दस्य यौगिकत्वात् पिताऽप्यग्रजो भवतीति । यद्येवमन्योऽपि योऽग्रजस्तत्राप्येवं प्राप्नोति । न चायमग्रजानुजव्यवहारः पितापुत्रयोर्विद्यते । स्मृत्यन्तरेऽपि तु पठ्यते 'भ्रातरि च ज्यायसि' इति ( गौध. १८।१९ ) । परिवित्तिः पूर्वजो ज्येष्ठः । मेधा.

( २ ) परिवेत्त्रादीन् अप्रसिद्धत्वाल्लक्षयति—दाराग्निहोत्रसंयोगमिति । यो ज्येष्ठे भ्रातरि अकृतदारके तिष्ठति सति दारश्रौतस्मार्ताग्न्यानयनं कुरुते स परिवेत्ता, ज्येष्ठश्च परिवित्तिर्बोद्धव्यः । *गोरा.

( ३ ) दाराग्निहोत्रयोरन्यतरस्य संयोगं संबन्धम् । स्थिते अकृते । अग्निहोत्रपदं लक्षणया त्रेताग्निपरम् । आधाने च ज्येष्ठानुमतिं विना कृते परिवेत्तृता, न तदनुमत्या । मवि.

( १ ) मुक्ता. १५३ ; भान. १८३ अग्नि ( नाग्नि ) शङ्खस्येदं वचनम्.

( २ ) पमा. ४९ ( खण्डः २ भागः १ ) शङ्खः.

( ३ ) पमा. ४९ ( खण्डः २ भागः १ ) शङ्खलिखितौ.

( ४ ) लिस्मृ. ७९,८०.

( ५ ) मस्मृ ३।१७१ ; मिता. १।२२३ कुरुते योऽग्रजे ( यः करोत्यग्रजे ) ; अप. १।२२४ पृ ४४५ वित्तिस्तु ( वित्तिः स ) ; गृक. १०६ मनुशातातपौ : ११२ ; मभा. १५।१७ ; स्मृच. ३९६ ( श्रा. ) सयोगं ( संबन्ध ) ; चका. ८११ स्मृचवत् , मनुशातातपौ : ८१४ (=) पू ; चश्रा. ३७१ ; गृर. ८७ अपवत् ; पमा. ६९० ; मपा. १७०–१७१ मनुशातातपौ ; प्रपा. २१३ ; धप्र. ५३ वित्तिस्तु ( वित्तस्तु ) स्मृत्यर्थसारे इत्युक्तम् ; संप्र. ७६० : ७६२ पू. ; श्राप्र. ८४ ; मुक्ता. १५३ मनुशातातपौ ; सिन्धु. ११६१ मनुशातातपौ ; विपा. ७२३ ; संकौ. २०७ ; प्रका. १४ मनुशातातपौ : ३६२ ; संग. ३४६ दाराग्निहोत्रसंयोगं ( यज्ञदाराग्निहोत्रादि ) स्मृत्यर्थसारे इत्युक्तम् ; संव. १४६ ; संर. ५१४.

* मसु., नन्द., भाच. गोरावत्.

(४) अग्निहोत्रशब्देन अग्निहोत्राद्युत्तरक्रतुप्रयोज्यमाधानमुक्तम्। उक्तं च साक्षात् गर्गेण—'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्। आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत्॥' स्मृच. ३९६ (था.)

(५) अत्र केचिदाहुः—'दाराग्निहोत्रसंयोगं यः कुर्यादग्रजे स्थिते' इत्यग्निहोत्रशब्दोपादानादौपासनपरिग्रहेऽपि नैव परिवेदनं भवति, शब्दप्रवृत्तेरन्यनिवृत्तिफलत्वादिति। तदयुक्तम्, अन्यनिवृत्तेरशाब्दत्वात्। अत एव गार्ग्यः—'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्। आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत्॥' ब्रह्मगर्भोऽपि—'याजनाध्यापनैश्चैव अनिन्द्येभ्यो धनेन च। औपासनं प्रमादध्यात्स्वकाले परिवेदयन्॥'

चका. ८१४

(६) परिवेत्ता परि ज्येष्ठं त्यक्त्वा आदौ वेत्ता कन्याग्न्योर्लब्धा। मच.

(७) स्थिते दाराग्निहोत्रसंयोगं विनेति शेषः। अग्निहोत्रशब्दः कर्मवचनोऽपि आधाने लाक्षणिक इति मेधातिथिप्रभृतयः। वस्तुतस्तु यथाश्रुतः कर्मवाचक एव। तेन यथा ज्येष्ठेऽकृतदारे दारसंयोगात् दोषः, तथा ज्येष्ठेन अग्निहोत्रानारम्भे कनिष्ठस्याग्निहोत्रे इत्यर्थः। न च गार्ग्येणाधाने परिवित्त्यादेरुक्तत्वादेकश्रुतिकल्पनालाघवादग्निहोत्रपदमाधानपरमिति वाच्यम्, भिन्नश्रुतिकल्पनस्य फलमुखत्वेनादुष्टत्वात् तदनुरोधेनाग्निहोत्रशब्दे लक्षणायोगात्, 'दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम्। अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम्। न कुर्याज्जनके ज्येष्ठे सोदरे वाऽप्यकुर्वति॥' इत्यग्निहोत्रस्य त्रिकाण्डमण्डनेन पृथगुपादानाच्च।

श्राप्र. ८४

परिवेदनदोषः

**परिवित्तिः परिवेत्ता यया च परिविद्यते।**
**सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥**

(१) प्रसङ्गात् परिवेदनसंबन्धिनामन्येषामपि दोषदर्शनद्वारेण निषेधं करोति। निषेधे परिवर्जने। वर्जितः परिभूतो वा वेदनेन परिवित्तिः, परिवर्ज्य ज्येष्ठं करोति वेदनं परीवेत्ता, यया कन्यया च परिविद्यते, सर्वे ते नरकं यान्ति। दाता याजकश्च येषां नरकगामिनां पञ्चमः। दाता कन्याया एव प्रकृतत्वात् पित्रादिः। याजकः विवाहे यः करोति होमं, यो वा तत्र उपदेष्टा। अथवा तेषामेव परिवेत्तृपरिवित्तितत्कन्यादातॄणां ज्योतिष्टोमादीनामपि यज्ञानामृत्विक्। तस्मात् ज्येष्ठेन तथा कर्तव्यं यथा अस्य कनीयसो भ्रातुर्विवाहे विघ्नकर्तृत्वं न भवति। कनीयसाऽपि कालप्रतीक्षा द्वादशाष्टषड्वर्षादिविषया कर्तव्या। कन्ययाऽपि तादृशाय दातुं न देयम्। दातृयाजकौ पञ्चमौ येषां इति द्वन्द्वगर्भो बहुव्रीहिः।

मेधा.

(२) प्रसङ्गात् एतद्व्यतिक्रमफलमाह—परिवित्तिरिति। परिवित्तिपरिवेत्तारौ, यया च कन्यया हेतुभूतया परिवेदनं क्रियते, दाता च कन्यायाः, याजकश्च तदुद्वाहहोमस्य उपदेष्टा येषां पञ्चमः ते नरकं गच्छन्ति।

* गोरा.

(३) यया कन्यया। दाता कन्यायाः। याजकस्तत्र ब्रह्मत्वेनार्त्विज्यकारी। दातृसहितो याजकः पञ्चमो येषां ते दातृयाजकपञ्चमाः। याजकोऽत्र परिवेत्तुर्दर्शपूर्णमासयागेष्वृत्विगित्येके। मवि.

परिवेत्तृपरिवित्तिलक्षणे, परिवेदनापवादाः

**अग्रजे ब्रह्मचर्यस्थे योऽनुजो दारसंग्रहम्।**
**कुरुते परिवेत्ता स परिवित्तिस्तु पूर्वजः॥**

(१) मस्मृ. ३।१७२; मेधा. परिवेत्ता (परीवेत्ता); मिता. १।२२३; गृक. १०६; मभा. १५।१७; गृर. ८७; स्मृमा. १४ (=) परिवित्तिः परिवेत्ता (परिवेत्ता च परिवित्तिस्तु); प्रपा. ३१३ परिविद्यते (परिविन्दति) सर्वे ते (ते सर्वे); संप्र. ७६० वेत्ता (वेत्ता च) सर्वे ते (ते सर्वे); विपा. ७२३ मपावत्; कृभ. ११६१ (=) परिवित्तिः परिवेत्ता (परिवेत्ता परिवित्तिः); संर. ५१४ परिविद्यते (परिविन्दति).

* मभु., नन्द., भाच. गोरावत्।

(१) प्रपा. ३१३ वित्तिस्तु पूर्वजः (वित्त्यग्रजो भवेत्); संप्र. ७६० वित्तिस्तु पूर्वजः (वित्तोऽग्रजो भवेत्); विपा. ७२३; संर. ५१५. मनुस्मृतौ नोपलभ्यते।

पण्ढान्धबधिरादीनां विवाहोऽस्ति यथोचितम् ।
विवाहासंभवे तेषां कनिष्ठो विवहेत्तदा ॥

पितृव्यपुत्रे सापत्ने परदारसुतादिषु ।
विवाहाऽऽधानयज्ञादौ परिवेदो न दूषणम् ॥

दिधिषूपतिलक्षणम्

भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः ।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥

(१) नियोगधर्मेण प्रवृत्तो भ्रातुर्मृतस्य (भार्याया) तद्भार्यागमने योऽनुरज्येत प्रीतिं भावयेत् । कामतः, नियोगधर्मातिक्रमेण 'सकृत्सकृद्दतौ' इत्येवं विधिं हित्वा इच्छानुरागं गाढालिङ्गनपरिचुम्बनादि कुर्यादसकृद्वा प्रवर्तेत, चेतसा वा विक्रियेत, कामिनीप्रेमदृष्टिचन्ध्यवचनादिलिङ्गेनानुरागित्वेन विभावितो दिधिषूपतिर्वेद्यः । अग्रेदिधिषूपतिलक्षणं तु स्मृत्यन्तरात् ज्ञेयम् 'जीवत्यग्रेदिधिषूपतिः' इति ।

केचित्तु नैवायं समाम्नाये श्लोकोऽस्तीत्याहुः । अपरिपूर्णं (र्णत्वं) च लिङ्गं ब्रुवते । द्वयस्य लक्षणे कर्तव्ये न कर्तव्यकारिणामेकस्योपपद्यते । स्मृत्यन्तरे चैतदुभयं लक्ष्यते–'परपूर्वापतिं धीरा वदन्ति दिधिषूपतिम् । यस्त्वग्रे (स त्वग्रे)दिधिषूर्विप्रः सैव यस्य कुटुम्बिनी ॥' न त्विह संभवति, परपूर्वापतेः पृथगेव निषिद्धत्वात् । तस्मादन्यो दिधिषूपतिः । * मेधा.

(२) मृतस्य भ्रातुः वक्ष्यमाणनियोगधर्मेणापि नियुक्ताया भार्यायां यो नियोगधर्मं हित्वा कामेन हेतुभूतेनानुरागं भावयेत् सोऽग्रेदिधिषूपतिः, निषिद्धत्वात् । अत्र वृत्तवशात् सत्यभामावच्च अग्रशब्दस्याप्रयोगः । गोरा.

(३) धर्मेण प्रथमं नियुक्ताया पश्चाद्योऽनुरज्येत, अपिशब्दाद्रागमात्रेणापि दिधिषूपतिरग्रेदिधिषूपतिः । एवं च तस्या अपि स्त्रिया दिधिषूरग्रेदिधिषूर्वेति नामोक्तं भवति । मवि.

(४) नियुक्ताया पुत्रार्थमपि । 'ज्येष्ठायां यद्यनूढायां कन्या योद्वाह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥' इति, तयोः पतिर्वा । गोविन्दराजस्तु वृत्तवशात् अग्रेपदलोपात् अयमेव अग्रेदिधिषूपतिरिति । मच.

## कात्यायनः

परिवेत्तृपरिवित्तिलक्षणे, परिवेदने प्रत्यवायः

आधानकाला ये प्रोक्तास्तथा याश्चाग्नियोनयः ।
तदाश्रयोऽग्निमादध्यादग्निमानग्रजो यदि ॥

'ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन्' 'जायाया वा पाणिं जिघृक्षन्' इत्यादिना येऽग्न्याधानकाला उक्ताः, याश्च वैश्यकुलादग्नरीषादेत्यादिना अग्नियोनय उक्तास्तदनुरुध्याग्न्याधानं कुर्यात् । यद्यग्रजोऽग्निमानिति । प्रकाश. ८७

दाराधिगमनाधाने यः कुर्यादग्रजाग्रिमः ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

अनग्नौ तु ज्येष्ठे अग्न्याधाने दोषमाह–दाराधिगमनाधाने इति । ज्येष्ठभ्रातुरग्रकालवर्ती यो विवाहाग्न्याधाने कुर्यात्, स परिवेत्ता विज्ञेयः, ज्येष्ठश्च परिवित्तिरिति । प्रकाश. ८७

परिवित्तिपरिवेत्तारौ नरकं गच्छतो ध्रुवम् ।
अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ ॥

* मनु. मेधागतम् ।

(१) मपा. १५४ षण्ढान्ध (जडान्ध); संप्र. ७६२; सिन्धु. ११३२; पुम. ४५४. मनुस्मृतौ नोपलभ्यते, परन्तु स्मृत्यर्थसारे एतत्सदृशः श्लोकः समुपलभ्यते ।

(२) मपा. १५४; संप्र. ७६२; सिन्धु. ११३२ सुतादिषु (सुतेषु च); पुम. ४५४ सिन्धुवत्. स्मृत्यर्थसारे एतत्सदृशः श्लोकोऽस्ति ।

(३) मस्मृ. ३।१७३; अप. १।२२४ पृ. ४५२; मभा. २५।१५ प्रजापतिः; चश्रा. ३५८ वृद्धमनुः.

(१) कास्मृ. १।६९.

(२) कास्मृ. १।७०; गृक. १०७ आग्रिमः (जाग्रतः); गृर. ८८ दग्रजाग्रिमः (दग्निमस्थितौ).

(३) कास्मृ. १।७१; गृक. १०७ अपि चीर्णप्रायश्चित्तौ (आचीर्णप्रायश्चित्तौ तौ); गृर. ८८ गृकवत्.

( १ ) पातकफलस्य नरकस्य पादोनफलभागिनावित्यर्थः । गृक १०७

( २ ) तथा च को दोष इत्याह– परिवित्तिपरिवेत्तारौ इति । तौ पूर्वार्धोक्तौ अकृतप्रायश्चित्तौ इतरोपपातकफलस्य पादोनफलस्य भागिनौ । 'परिवित्तिताऽनुजेन परिवेदनमेव च' इति मनुना उपपातकगणे द्वयमिदं पठितमिति । प्रकाश. ८८

( ३ ) तयोर्नरकगमनस्य ध्रुवत्वमुपपादयन्नाह– अपि चीर्णप्रायश्चित्ताविति । कृतप्रायश्चित्तावपि तौ पादोनं नरकफलं भजेते इति तयोर्नरकगमनं ध्रुवमित्यर्थः । न च प्रायश्चित्ते कृते तेनैव पापनाशात् कथं पादोनफलभागितेति वाच्यम् । अनन्यगतेर्वचनात् । तदुक्तम्– किमिव हि वचनं न कुर्यान्नास्ति वचनस्यातिभार इति । केचित्तु अचीर्णप्रायश्चित्ताविति पठित्वा अकृतप्रायश्चित्तौ तौ इतरोपपातकापेक्षया पादोननरकफलस्य भागिनौ । 'परिवित्तिताऽनुजेन परिवेदनमेव च' इति मनुना उपपातके तदुभयोः पाठात् तदपेक्षयैव पादोनत्वस्य वर्णयितुमुचितत्वादित्याहुः । 'अपि चीर्णप्रायश्चित्तौ' इति पाठस्यैव सर्वत्र मूलपुस्तकेषु दृष्टत्वात् स एव पाठो व्याख्यातोऽस्माभिः । प्रभा.८८–८९

परिवेदनापवादाः

[1]देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥

( १ ) कास्मृ. १।७२ ; गृक. ११० वेश्यातिसक्त ( वेश्याभिशस्त ) ; स्मृच. ३९७ (श्रा. ) उत्तरार्धं ( वेश्यासक्तपतितान् शूद्रतुल्यांस्तु रोगिण । ) ; चका. ८११ णानस ( णांश्च स ) वेश्यातिसक्त ( वेश्यानिष्ठांश्च ) ल्याति ( ल्याधि ) ; चश्रा. ३७२ तिसक्त ( भिसक्त ) ; गृर. ९० तिसक्त ( भिषक्त ) ; पमा. ६९१ ; मपा. १७१ णानस ( णांश्चास ) तिसक्त ( निष्ठान्स ) ; प्रपा. ३१३ ( देशान्तरस्थान् क्लीबांश्च कूणांश्च सहोदरान् । वेश्यासंसक्तपतितशूद्रतुल्यान् सरोगिणः ॥ ) ; उत. १२० गृरवत् ; संप्र. ७६२ गृरवत् ; श्राप्र. ८५ न्तरस्थ ( न्तरस्थान् ) ; चम. ११९ तुल्याति ( कल्पाति ) शेषं चश्रावत् ; मुक्ता. १५२ ; संम. ७४ चमवत् ; सिन्धु. ११६३ तिसक्त ( निष्ठांश्च ) ; विपा. ७२५ णानस ( णांश्च स ) उत्तरार्धे ( वेश्या [ निष्ठां ] विष्टांश्च पतित [ तान् ] शूद्रतुल्यातिरोगिणः । ) ;

जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुल्टोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥

( १ ) एकवृषणः एकाण्डः षण्डविशेषः । शूद्रतुल्याः गोरक्षणादिकर्मपराः, 'गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् । प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदा-

संकौ. २०८ पूर्वार्धे ( देशान्तरस्थान् क्लीवांश्च तथा कुवृषणानपि । ) ; प्रका. ३६३ संकौवत् ; संग. ४८ ; संव. १४७ संकौवत् ; संर. ५१६ ( देशान्तरस्थान् क्लीबांश्च शूद्रतुल्यान् सहोदरान् । वेश्यासक्तान् कुवृषणान् पतितानतिरोगिणः ॥ ).

( १ ) कास्मृ. १।७३ ; गृक. ११० अभार्यांश्च ( कुदर्यांश्च ) सक्तान् ( शक्तान् ) ; स्मृच. ३९७ ( श्रा. ) कुण्ठकान् ( खेटकान् ) ; चका. ८११ जड ( षण्ड ) कुण्ठकान् ( कुण्डकान् ) भार्यांश्च ( दारांश्च ) ; चश्रा. ३७२ कुण्ठकान् ( खोडकान् ) ; गृर. ९० ; पमा. ६९१ चश्रावत् ; मपा. १७१ कुण्ठकान् ( खञ्जकान् ) ; प्रपा. ३१३ कुण्ठकान् ( खेलकान् ) नृपस्य ( परस्य ) ; उत. १२० वामनकुण्ठकान् ( कुण्ठकवामनान् ) ; संप्र. ७६२ कुण्ठकान् ( कुब्जकान् ) ; श्राप्र. ८५ कुण्ठकान् ( घोडकान् ) ; चम. ११९ ; मुक्ता. १५२ कुण्ठकान् ( खेटकान् ) नृपस्य च ( च कामतः ) ; संम. ७४ कुण्टकान् ( कुण्डकान् ) ; सिन्धु. ११६३ मपावत् ; विपा. ७२५–७२६ ; संकौ. २०८ कुण्ठकान् ( खेलकान् ) ; आन. १८३ वृद्धा ( वृत्ता ) शेषं स्मृचवत् ; प्रका. ३६३ संकौवत् ; संग. ४८ चश्रावत् ; संव. १४७ संकौवत् ; संर. ५१६ संकौवत्.

( २ ) कास्मृ. १।७४ तः का ( तोऽका ) ; गृक. ११० प्रसक्तांश्च ( प्रशस्तांश्च ) ; स्मृच. ३९७ ( श्रा. ) तः का ( तोऽका ) कुल्टो ( कुहको ) ; चका. ८११ तः का ( तोऽका ) कुल्टो ( कुटिलो ) ; चश्रा. ३७२ तः का ( तोऽका ) कुल्टोन्मत्तचौरांश्च ( कुहकास्तस्करांश्चापि ) ; गृर. ९० ; पमा. ६९१ स्मृचवत् ; मपा. १७१ कुल्टोन्मत्तचौरांश्च ( कुटिलोन्मत्तरोगांश्च ) ; प्रपा. ३१३ कारिण ( चारिण ) कुल्टो ( कुहको ) ; उत. १२० ; संप्र. ७६२–७६३ ; श्राप्र. ८५ चश्रावत् ; चम. ११९ स्मृचवत् ; मुक्ता. १५२ कुल्टो ( कुहको ) ; संम. ७४ चश्रावत् ; सिन्धु. ११६३ चकावत् ; विपा. ७२६ ; संकौ. २०८ मुक्तावत् ; आन. १८३ स्मृचवत् ; प्रका. ३६३ मुक्तावत् ; संग. ४८ चश्रावत् ; संव. १४७ मुक्तावत् ; संर. ५१६ तः का ( तोऽका ) कुल्टोन्मत्तचौरांश्च ( कुहकोन्मत्तरोगांश्च ).

चरेत् ॥ ' इति मनुवचनात् । कुण्ठकः पाणिरहितः । आचार्यान् ( १ ) नृपस्येति नृपस्य आचरणीयानित्यर्थः ।

* अत्रेयं व्यवस्था— द्वादशवर्षप्रतीक्षणवचनं कनिष्ठस्य धर्मधनविद्यार्थे प्रोषिते पुनः पुनः श्रूयमाणे ज्येष्ठे । द्वादशवर्षप्रतीक्षणं तु वयःसामर्थ्यापेक्षया देशान्तरस्थवार्ताश्रवणाल्पतया वा । षड्वर्षप्रतीक्षणं तु गौतमीयं धर्मधनविद्यार्थप्रोषिते सर्वथा अश्रूयमाणे । वर्षत्रयप्रतीक्षणं तु धर्मधनयोरुक्तत्वात् पारिशेष्यात् कामासक्ते प्रोषिते राजसेवके कृष्यासक्ते च ज्येष्ठे अतित्वरमाणस्य कनिष्ठस्य । अत्र च अग्निहोत्राधानवदावसथ्याधानेऽपि ज्येष्ठेनाकृते कनिष्ठेन क्रियमाणे परिवेत्तृत्वं भवत्येव, कात्यायनेन आधानशब्देनाधानमात्रोपादानात् ' कन्याग्न्युपयमेषु ' ( गौध. १८।१९ ) इति गौतमेनाग्निमात्रस्त्रीकार्योपादानात् समाचाराच्च । हारीतः— ' सोदर्याणां तु सर्वेषां परिवेत्ता कथं भवेत् । दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥ ' आधानापेक्षया दारपरिवेदने दोषाधिक्यप्रतिपादनपरमेतत्, न तु पर्याधाने दोषाभावार्थम्, 'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ ' इति मनुना तत्रापि दोषप्रतिपादनात्, पर्याधाने च पृथक् प्रायश्चित्ताभिधानात् । एतेनैव ' नाग्नयः परिविन्दन्ति ' इत्यपि व्याख्यातम् । तथा चापस्तम्बेन— ' अभिनिर्मुक्ताभ्युदितकुनखिश्यावदन्ताग्रेदिधिषुपतिपर्याहितपरीष्टपरिवित्तिपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेशो गरीयान् ' इति वदता पर्याधानापेक्षया दारपरिवेदनस्याधिकदोषत्वमुक्तम् । ( एवमेवाऽऽवसथ्याधानेऽपि गौतमेन ' यवीयान् कन्याग्न्युपयमेषु ' इति अविशेषेणाग्निमात्रोपादानात् । १ ) शातातपः— ' नाग्नयः परिविन्दन्ति न वेदा न तपांसि च । न च श्राद्धं कनिष्ठस्य विफला या च कन्यका ॥ '

गृक.११०–११२

( २ ) खेटकः भग्नचरणद्वयः । अभार्याः नैष्ठिकब्रह्मचारिणः । कामतोऽकारिणः स्वेच्छयैव विवाहनिवृत्तिकारिणः । अत्र ये विवाहेऽनधिकारिणः क्लीबादयः तेषां कालप्रतीक्षणाभावेनापि नास्ति परिवेदनदोषः । ये तु विवाहाधिकारिणो देशान्तरस्थविरक्तवेश्यातिसक्तशूद्रतुल्यातिवृद्धकृषिसक्तराजधनवृद्धिप्रसक्तकामतोऽकारिकुहकचोराः, तेषां कालप्रतीक्षणेन परिवेदने तु न दोषः ।

स्मृच.३९७ ( श्रा. )

( ३ ) एकवृषणः रोगप्रवृद्धवृषणः । रोगी अचिकित्स्यरोगः । खोडकः भग्नचरणद्वयः । कामतोऽकारिणः स्वेच्छयैव नित्यं विवाहमकुर्वाणाः । कुहकाः परवञ्चनाय वृथोद्योगपराः । + चश्रा. ३७३

( ४ ) हलायुधस्तु— अनुमतावपि परिवेत्ता विवाहे भवति, अनुमतावग्निहोत्रे इज्याया च न परिवेत्तेत्याह ।

* गृर.९२

( ५ ) यादृशे ज्येष्ठे परिवेदनदोषो नास्ति तमाह— देशान्तरस्थेति । क्लीबः षड्विधः । तथा च देवलः— ' षण्डको वातजः षण्ढः पण्ढः क्लीबो नपुंसकम् । कीलकश्चेति षडधाऽयं क्लीबभेदो विभावितः ॥ ' एकवृषणान् एकस्यामेव स्त्रियां रतिसक्तान् । असहोदराः वैमात्रेयाः । एकमातृजाता अपि भिन्नपितृकाः न सहोदराः । अत एव भीमस्य हिडिम्बापरिणयने न परिवेदनदोष इति मनुवृत्तिकारः । शूद्रतुल्यः दास्यादिवृत्तिः । अत एव— ' गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान् । प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ ' इति मनुः । कुण्ठः काणः । सर्वक्रियासु अलस इत्यपरे । अभार्याः शास्त्रनिषिद्धभार्यासंबन्धाः नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षवः । नृपस्य च सक्तानिति संबन्धः । कामतः कारिणः यथेष्टाचरणशीलाः । कुलान्यटन्ति इति कुलटाः, परकुलाटनशीला इति यावत् । उन्मत्तपौरान् इति पाठे पौरः प्रेष्यादिभावेन पुरवासी । कैरान् इति पाठे कैरो विषमशीलः । शेषं सुगमम् । एतान् परिविन्दन् एतेषु अकृतदाराग्निसंयोगेषु दाराग्निसंयोगं कुर्वन् न दोषभाक् भवतीति ।

प्रकाश.८९–९१

* अस्य प्रकरणस्य तात्पर्यरूपोऽयं ग्रन्थः ।

+ शेषं स्मृचगतम् ।

* शेषं गृकवत् ।

(६) देशान्तरपरिभाषायां बृहन्मनुः— 'वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः । महानद्यन्तरं यत्र तद्देशान्तरमुच्यते ॥ देशनामनदीभेदान्निकटोऽपि भवेद्यदि । तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयंभुवा ॥ दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा ॥' बृहस्पतिः— 'देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च ॥' मुनिद्वयवचनोक्तवागादियोजनादिभेदानां सामञ्जस्यार्थमेवं व्याख्यायते—त्रितयवैशिष्ट्ये त्रिंशद्योजनाभ्यन्तरे, द्वितयवैशिष्ट्ये तदुपरि चत्वारिंशद्योजनाभ्यन्तरे, एकवैशिष्ट्ये चत्वारिंशद्योजनोपरि षष्टियोजनाभ्यन्तरे, वाणीगिरिमहानद्यन्तरितत्वभेदाभावेऽपि वैदेश्यमिति शुद्धिचिन्तामणिः । जडो विकलान्तःकरणः, हिताहितावधारणाक्षम इति यावत्, इति मिताक्षरा । 'कुलटः कुलान्यटतीति परकुलाटनशीलः' इति नारायणमहामहोपाध्यायाः । तेषामयमाशयः— कुलं परकुलं अटति गच्छति प्राप्नोति यो दत्तकः स कुलटः ।

* उत.१२०

नष्टादौ ज्येष्ठे कालप्रतीक्षा परिवेदनार्थम्

धनवार्धुषिकं राजसेवकं कर्षकं तथा ।
प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥

(१) अपि त्वरन्निति । त्वरन्नपीति योज्यम् । यदि धनवार्धुषिकादिकं देशान्तरे वर्तमानं शृणुयात्, तदा विवाहे त्वरन् त्वरमाणोऽपि वर्षत्रयं प्रतीक्षेत ।

† गृक.१०८

(२) वार्धुषिकादयः चत्वारोऽग्रजाः समावर्तनानन्तरं दाराग्निपरिग्रहे त्वरया युक्तेनापि वर्षत्रयं प्रतीक्षणीयाः । ततश्च यत् पूर्वश्लोके एतान् परिविन्दन् न दुष्यतीत्युक्तं, तत् वर्षत्रयादूर्ध्वमिति बोद्धव्यम् ।

प्रकाश. ९४

(३) अत्रापि प्रोषिते यत् त्र्यब्दप्रतीक्षणं तद्विद्याधर्मधनेतरार्थप्रोषितपरम्, वक्ष्यमाणवसिष्ठगौतमवचनात् ।

§ उत.१२१

विवाहोत्तरं प्रोषितप्रत्यागमने प्रायश्चित्तम्

प्रोषितं यद्यशृण्वानमब्दादूर्ध्वं समाचरेत् ।
आगते तु पुनस्तस्मिन् पादं तच्छुद्धये चरेत् ॥

(१) यदि तु तं प्रोषितादृष्ट एवाब्दं प्रतीक्ष्य विवाहमाचरति, तदा आगते तस्मिन् परिवेदनप्रायश्चित्तपादं कुर्यात् ।

गृक.१०८

(२) परिवेदनपापशुद्धये कृच्छ्रपादं समाचरेत् ।

* गृर.८८

(३) प्रोषिते विशेषमाह— प्रोषितमिति । प्रोषितमशृण्वानम् । प्रत्ययव्यत्ययेनाश्रयमाणमित्यर्थः । यद्यब्दादूर्ध्वमिति समाचरेत् परिविन्देत्, तदाऽऽगते तस्मिन् तच्छुद्ध्यर्थं परिवेदनप्रायश्चित्तस्य पादं कुर्यात् । अब्दादूर्ध्वं त्वनागमने दोषाभाव एव । त्र्यब्दप्रतीक्षा तु श्रूयमाणविषया । तत्राऽऽगतेऽपि दोषाभाव इति ।

प्रकाश. ९५

परिवेदनापवादाः

नाग्निहोत्रं न वा वेदा न च वेदव्रतान्यपि ।
नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥

विकृतरूपा कन्या अनूढा ज्येष्ठा कनिष्ठायाः सहोदराया ऊढायाः परिवेदनाय न भवति । अप्रसक्तप्रतिषेधानुपपत्त्या नञः पर्युदासवृत्तित्वादेतदतिरिक्तायां परिवेदनदोष इति परिशिष्टप्रकाशकारः । देवलस्त्वत्र विषये अग्रेदिधिषुदिधिषुत्वमाह — 'ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषुर्ज्ञेया पूर्वा च दिधिषुः स्मृता ॥' विद्यमानायामित्यत्र 'यद्यनूढायाम्' इति लोकाक्षिः ।

उत.१२३

---

* शेषं प्रकाशगतम् ।

† शेषं गृकगतम् ।

(१) कास्मृ. १।७१ कर्षकं (कर्मकं) ; गृक. १०७ प्रतीक्षेत (परीक्षेत) ; गृर. ८८ ; उत. १२० ; चम. ११९ .

§ शेषं प्रकाशवत् ।

* शेषं गृकवत् ।

(१) कास्मृ. १।७६ तच्छुद्धये (वा शुद्धये) ; गृक.१०७ पुनस्त (ततस्त) शेषं कास्मृवत् ; गृर. ८८ ; उत. १२० दूर्ध्व स (दतिस) तु (च) .

(२) उत. १२२ प्रथमार्धं नास्ति ; संप्र. ७६४ विरूपिका (विरूपिता) .

## देवलः

परिवेत्तृपरिविवित्तिलक्षणे

ज्येष्ठे चाप्यनिविष्टे च ज्येष्ठमुत्क्रम्य यः पुनः।
विन्देत परिविवित्तिश्च परिवेत्ता च तावुभौ ॥

ज्येष्ठे भ्रातरि, अनिविष्टे अकृतविवाहे, यदा कनीयान् विन्देत दारसंग्रहं कुर्यात्, तदा ज्येष्ठः परिवित्तिः इतरः परिवेत्तेति वचनार्थः। चश्रा.३७०

अग्रेदिधिषूदिधिषूदिधिषूपतिलक्षणानि

ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिपूः स्मृता ॥

अत्र अपरार्कानुयायिनः——ज्येष्ठायामविरूपायामिति पूरणीयम्। विरूपायां तु शातातपः— 'नाग्नयः परिविन्दन्ति न वेदा न तपांसि च। न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥' इति। ज्येष्ठेऽधिकारिणि श्राद्धमकुर्वत्यपि कनिष्ठः कुर्वन्न परिविद्यते, एवं विरूपाया ज्येष्ठायामनूढायामपि कनिष्ठाविवाहो न दोषायेत्यर्थः। ज्येष्ठा चेत्कुत्सितदीर्घकुत्सितरोगार्ता केनापि नोह्यते, तदा रजस्वलाभयात्तत्प्रागेव ज्येष्ठायामनूढायामपि कनिष्ठा ददन् गृह्णंश्च न दोषभागिति भाव इत्याहुः। कृभ.१११७–१११८

ज्येष्ठस्य भार्या संप्राप्तां (? प्तः) सकामां
दिधिपूपतिः।
द्विजोऽग्रेदिधिपूश्चैव यस्य सैव कुटुम्बिनी ॥

## उशना

परिवेदनापवादाः

[1]पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित्।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥

(१) यस्य पित्रादयः सन्ति तस्य तदनुज्ञातस्य तपोऽग्निहोत्रादयः परिवेदनहेतवो न भवन्तीत्यर्थः। अप.११२२४ पृ.४४६

(२) मन्त्रशब्दो वेदोपलक्षणार्थः। स्मृच.३९८ (श्रा.)

(३) यस्य कस्यचित् पिता पितामहो वाऽग्रजो वाऽऽहिताग्निर्न भवति, तस्य तदनुमत्याऽऽधानकरणेऽपि न दोष इत्यर्थः। एवमेव कन्यापरिवेदनेऽपि दोषतदपवादौ द्रष्टव्यौ। पमा.६९२–६९३

(४) यत्तु ..... उशना अपि– 'पिता...' इति, तत् पित्रादीनां वैधुर्यादिना प्रतिबन्धे सति द्रष्टव्यम्। पमा. ५२–५३ (खण्डः २ भागः १)

(५) तपः वानप्रस्थतासंन्यासौ आश्रमसमुच्चयपक्षे, पक्षान्तरे वानप्रस्थतैव। अग्निहोत्रं तदुपकारकमाधानं विवाहाग्निर्विवाहश्च। मन्त्रः वेदाध्ययनं, तदुपकारकं उपनयनं च। एतत्त्रयानुरोधादनग्निमानिति त्रितयोपलक्षणम्। न दोष इति। एतदनुज्ञापरं, अकारणदोषाभावकथनविरोधात्सुमन्तुवाक्यैकवाक्यत्वाच्च। तथा च पित्रादिकेऽनग्निमत्यवानप्रस्थेऽनुपनीते वा जीवति पुत्रा-

(१) चश्रा. ३७०.

(२) अप. ११२२४ पृ ४५१ तु (च) स्मृता (मता); मभा १५।१५ यामुह्यते (या तूह्यते) मनुः; गौमि. १५।१५ (=) चाग्रे (त्वग्रे); स्मृच. ४०१ (श्रा.) स्मृता (मता); पमा. ६९३ स्मृता (मता) : ५१ (खण्डः २ भागः १) दिधिपूः (दिधिषुः); प्रपा. ३१४ सा चाग्रे (या साग्रे); उत. १२३ यद्यनूढायां (विद्यमानायां) दिधिपूः (दिधिषुः) तु (च); मच. ३।१७३ (=) कन्यायामुह्यते (कन्या योद्वाह्यते); संप्र. ७६५ सा चाग्रे (या साऽग्रे) ज्ञेया (प्रोक्ता); मुक्ता. १५३ (=) कन्यायामुह्यतेऽनुजा (उह्यते त्वनुजा भवेत्) सा चाग्रे (सैवाग्रे); विपा. ७२७–७२८ सा चाग्रे (या साग्रे) तु (वै) दिधिपूः (दिधिषुः); संकौ. २०७ सा चाग्रे (या साग्रे) दिधिपूः (दिधिषु) स्मृत्यन्तरम्; श्रान. १८२ कन्यायामुह्यतेऽनुजा (उह्यते त्वनुजा क्वचित्) सा चाग्रे (सैवाग्रे) दिधिपूः (दिधिषु) स्मरणादित्युक्तम्; प्रका. ३६२ स्मृत्यन्तरम्; संव. १४६ संकौवत्, स्मृत्यन्तरम्; कृभ. १११७ प्रपावत्; संर. ५१८ प्रपावत्.

(१) चश्रा. ३५८.

(२) अप. ११२२४ पृ. ४४६; स्मृच. ३९८ (श्रा.); चश्रा. ३७५ वाऽथ कस्यचित् (वाऽप्यनग्निमान्); चका. ८११ अग्रजो (नाग्रजो); पमा. ६९२ : ५२ (खण्ड २ भागः १); चम. १२० ; मुक्ता. २३ चतुर्थावशतिमते इत्युक्तम्; सिन्धु. २१६६; विपा. १४६ (भागः २) अग्रजो वाऽथ (ह्यग्रजो वाऽपि).

द्विनिकस्याधाने वानप्रस्थतायामुपनयने वाऽनुज्ञायां न दोष इत्यर्थः । तत्र वानप्रस्थता कलिवर्ज्यैव । पितृपितामहयोरनुपनयने व्रात्यस्तोमादिना तयोरुपनयनोत्तरं पुत्रादेरुपनयनं तद्योग्यताप्रायश्चित्तं कृत्वा कार्यम् । उपनयने वा अनुज्ञायाः कथमपि न संबन्धः, वाक्यान्तरे विवाहाधानयोरेव तत्संबन्धदर्शनात्तदेकवाक्यतयैव प्रकृते तयोरेव तल्लाभात् । यथा अग्रजेऽनुपनीते कनिष्ठस्य नोपनयनं, तथा ज्येष्ठाया भगिन्यामनूढायां कनिष्ठस्य नोपनयनं कनिष्ठाया अनुद्वाहवत्, अन्यथाऽनौचित्यापत्तेः, विवाहस्यापि मन्त्रसाध्यत्वात्, 'वैवाहिको विधिः स्त्रीणामौपनायनिकः परः' इति वाक्याच्चेति ।

कृभ. ११६६–११६७

## प्रजापतिः

अग्रेदिधिषूदिधिषूपतिलक्षणे

[1]भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः ।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥
स चैव ( यश्चैव ) जीवतो भ्रातुः स
चाग्रेदिधिषूः स्मृतः ॥

## यमः

दिधिषूपतिलक्षणम्, परिवेदनदोषः तत्प्रायश्चित्तं च, परिवेदनापवादाः

[2]पुनर्भुवः पतिर्यस्तु स भवेद्दिधिषूपतिः ॥
[3]कृच्छ्रौ द्वयोः पारिवेद्ये कन्यायाः कृच्छ्र एव तु ।
अतिकृच्छ्रं चरेद्दाता यष्टा चान्द्रायणं चरेत् ॥

( १ ) यमः परिवित्तिपरिवेत्त्रोर्द्वयोः समं प्रायश्चित्तमाह– कृच्छ्रौ द्वाविति ।

पमा.४९ (खण्डः २ भागः १)

( २ ) अज्ञानतः पित्रादिदत्तोद्वाहे तु यमः – कृच्छ्रौ द्वाविति ।

संकौ.२०७

[4]पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च ।
दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ॥

( १ ) परपुत्राः दानक्रयादिना स्वपितुः पुत्रत्वमापन्नाः भ्रातरः ।

स्मृच.३९७ (श्रा.)

( २ ) परपुत्रः परस्यैव पुत्रार्थमुत्पादितो न स्वार्थमपि । सोऽपि पित्रैक्यादेव देवदत्तस्य सोदरः ।

संप्र. ७६१

## व्याघ्रः

अग्रेदिधिषूदिधिषूपतिलक्षणे

[1]परपूर्वापतिं धीरा वदन्ति दिधिषूपतिम् ।
स त्वग्रेदिधिषूर्विप्रः सैव यस्य कुटुम्बिनी ॥

## शातातपः

परिवेत्तृपरिवित्तिलक्षणे, परिवेदनापवादाः

[1]दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

---

( १ ) ममा. १५।१५.

( २ ) चश्रा. ३५८.

( ३ ) पमा. ४९ ( खण्डः २ भाग. १ ) द्वयोः पारिवेद्ये ( द्वौ परिवित्तेस्तु ) तु ( च ) यष्टा ( होता ) ; प्रपा. ३१४ पारिवेद्ये ( परिवेत्तोः ) कृच्छ्र एव तु ( कृच्छ्रमेव च ) यष्टा ( तथा ) ; विपा. ७२७ ( कृच्छ्रौ द्वौ परिवेत्तुर्वै परिवित्तेस्तथैव च । ) उत्तरार्धं नास्ति ; संकौ. २०७ ; प्रका. २६३ ; संव. १४६ ; संर. ५१८ तु ( च ) यष्टा ( होता ).

( १ ) स्मृच. ३९७ ( श्रा. ) ; चश्रा. ३७२ विन्दतः ( विन्दने ) श्लोकव्याख्यानावसरे तु विन्दतः इति ; चका. ८१२ वचने संदेहः ; गृर. ८७ ( पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ ) यम ( अयम ? )- शातातपौ ; पमा. ६९१ सापत्नान् ( सापत्न्यान् ) विन्दतः ( वेदने ) ; प्रपा. ३१३ ; संप्र. ७६१ ; मुक्ता. १५२ धर्मेषु ( धर्म्येषु ) ; संकौ. २०८ नाधर्मः परिविन्दतः ( न दोषः परिवेदने ) ; आन. १८२ ( पितृव्यपुत्रसापत्नाः परनारीसुतास्तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ ) ; प्रका. २६३ नाधर्मः ( न दोषः ) ; संव. १४७ प्रकावत्.

( २ ) मेधा. ३।१७३ स त्वग्रे ( यस्त्वग्रे ) स्मृत्यन्तरम् ; मभा. १५।१५ स त्वग्रे ( इष्टोऽग्रे ) ; गौमि. १५।१५ ( पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः । स तु द्विजोऽग्रेदिधिषुः सैव यस्य कुटुम्बिनी ॥ ) नैघण्टुकाः इत्युक्तम् ; चश्रा. ३५८ स त्वग्रे ( द्विजोऽग्रे ) सैव यस्य ( यस्य सैव ) मनुः ; श्राप्र. ९१ स त्वग्रेदिधिषूर्विप्रः ( द्विजोऽग्रेदिधिषूश्चैव ) मनुः ; भाच. ३।१७३ ( = ) पतिम् ( पतिः ) पू.

( ३ ) गृक. १०६ मनुशातातपौ ; चका. ८११ संयोगं ( संबन्धं ) मनुशातातपौ ; मपा. १७०–१७१ मनुशातातपौ ;

[1]पितृव्यपुत्रसापत्नपरनारीसुतेषु च ।
ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणां तु कनीयसाम् ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ ‡

( १ ) परनारीसुताः दत्तकादिभ्रातरः ।

अप.१।२२४ पृ.४४५

( २ ) सापत्नाः असोदरभ्रातरः । परनारीसुताः स्वपित्रा परक्षेत्रे उत्पादिताः द्व्यामुष्यायणभूताः । पितृव्यपुत्रादिषु ज्येष्ठेषु दाराग्निहोत्रसंयोगरहितेषु तिष्ठत्स्वपि कनिष्ठेन दाराग्निहोत्रसंयोगे कृते परिवेदनदोषो नास्तीत्यर्थः । परनारीपुत्रग्रहणं दत्तपुत्रादेरपि प्रदर्शनार्थम् ।

स्मृच ३९७ ( श्रा. )

( ३ ) पितृव्यपुत्राः पितृभ्रातृसुताः । सापत्नाः भिन्नमातृजाः । * चश्रा.३७२ ( श्रा. )

क्लीबे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

( १ ) भिक्षुकः प्रव्रजितः । योगशास्त्राभियुक्तः विरक्तः । * स्मृच.३९७ ( श्रा. )

( २ ) घोरशास्त्रं आभिचारादि । आन. १८३

[2]खञ्जवामनकुब्जेषु गद्गदेषु जडेषु च ।
जात्यन्धे बधिरे मूके न दोषः परिवेदने ॥

गद्गदः अस्पष्टवाक् । जडः पुनःपुनरध्याप्यमानोऽपि ग्रहणासमर्थः । गृक.११०

[3]एकमातृप्रसूतानां भ्रातॄणां परिवेदने ।
दोषः स्यात्सर्ववर्णेषु नेतरेष्वब्रवीन्मनुः ॥
नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥

---

‡ सप्र.व्याख्यानं गर्गवचने द्रष्टव्यम् ।

* शेषं स्मृचगतम् ।

मुक्ता. २३ : १५३ मनुशातातपौ ; सिन्धु. ११६१ मनुशातातपौ ; आन. १८२ ; प्रका. १४ मनुशातातपौ .

( १ ) मेधा. ३।१७१ प्रथमार्धे ( पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा । ) द्वितीयार्धं नास्ति ; अप. १।२२४ पृ. ४४५ मेधावत् , द्वितीयार्धं नास्ति ; गृक. १०७ निर्देशमात्रम् : ११० प्रथमार्धे ( पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा ) द्वितीयार्धं नास्ति ; मभा. १५।१७ प्रथमार्धे ( पितृव्यपुत्राः सापत्न्याः परदारसुतास्तथा । ) द्वितीयार्धं नास्ति, उशना ; स्मृच. ३९६–३९७ ( श्रा. ) प्रथमार्धे ( पितृव्यपुत्राः सापत्नाः परनारीसुतास्तथा । ) द्वितीयार्धं नास्ति ; चश्रा. ३७१–३७२ ; चका. ८१२ प्रथमार्धे ( पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा । ) द्वितीयार्धं नास्ति, सुमन्तुः ; गृर. ८७ प्रथमार्धे ( पितृव्यपुत्रान् सापत्न्यान् परमातृसुतांस्तथा । ) द्वितीयार्धं नास्ति, यमशातातपौ, व्याख्यानावसरे तु ' परनारीसुता ' इति स्वीकृतम् ; पमा. ६९० चकावत् , द्वितीयार्धं नास्ति ; मपा. १७१ मेधावत् , द्वितीयार्धं नास्ति , वसिष्ठः ; प्रपा. ३१३ स्मृचवत् , द्वितीयार्धं नास्ति ; संप्र. ७६१ ; श्राप्र ८५ ष्वपि च ( ष्वपि हि ) ; सिन्धु. ११६३ मेधावत्, द्वितीयार्धं नास्ति, वसिष्ठः ; विपा. ७२४ मेधावत्, द्वितीयार्धं नास्ति ; संर. ५१५ .

( २ ) अप. १।२२४ पृ. ४४५ भिक्षुकेऽपि वा ( प्रव्रजे तथा ) ;

* पमा., प्रपा., श्राप्र. स्मृचगतम् ।

गृक. १०९ रस्थे च ( रगते ) वा ( च ) वेदने ( विन्दतः ) ; मभा. १५।१७ पृ. २५७ देशान्तरस्थे ( देशविनष्टे ) भिक्षुकेऽपि वा ( प्रव्रजिते तथा ) स्त्राभियुक्ते ( स्त्रनियुक्ते ) ; गौमि. १५।१८ पूर्वार्धे ( क्लीबे देशविनष्टे च पतिते प्रव्रजिते तथा । ) ; स्मृच. ३९७ ( श्रा. ) ; चश्रा. ३७२ ; चका. ८१२ रस्थे च ( रस्थे वा ) भिक्षुकेऽपि वा ( प्रव्रजिते तथा ) ; गृर. ८९ न्तरस्थे च ( न्तरगते ) ; स्मृसा. १४ भिक्षुकेऽपि वा ( व्रजिते तथा ) : १४१ भिक्षुकेऽपि वा ( प्रव्रजिते तथा ) वृद्धशातातपः ; पमा. ६९१ ; प्रपा. ३१३ केऽपि वा ( के तथा ) ; उत. १२२ गृरवत् ; श्राप्र. ८५ प्रपावत् ; मुक्ता. २३ क्लीबे ( अज्ञे ) भिक्षुकेऽपि ( प्रव्रजितेऽपि ) स्त्राभियुक्ते ( स्त्रनियुक्ते ) : १५२ ; आन. १८३ केऽपि वा ( के तथा ) योगशास्त्रा ( घोरशास्त्रा ) : १९० क्लीबे ( अज्ञे ) भिक्षुकेऽपि वा ( प्रव्रजिते तथा ) स्त्राभियुक्ते ( स्त्रनियुक्ते ) ; संग. ४९ गृरवत् .

( १ ) अप. १।२२४ पृ. ४४५ क्रमेण वसिष्ठः ; गृक. ११० जात्यन्धे ( जात्यन्ध ) ; स्मृच. ३९८ ( श्रा. ) गृकवत्, स्मृतिः ; चश्रा ३७४ स्मृतिः ; गृर. ९० गृकवत् ; स्मृसा. १४ जात्यन्धे ( जातान्धे ) : १४१ जात्यन्धे ( जातान्धे ) वृद्धशातातपः ; श्राप्र. ८६ स्मृतिः ; मुक्ता. २३ खञ्जवामनकुब्जेषु ( कुब्जवामनषण्ढेषु ) .

( २ ) मुक्ता. २३ .

( ३ ) अप. १।२२४ पृ.४४६ विरूपिका ( विरूपिता ) ; गृक. ११२ या च कन्या विरूपिका ( विकला या च कन्यका ) ; स्मृच. ३९८ ( श्रा. ) ; चश्रा. ३७६ ; चका. ८१४ ; गृर. ९२ वेदा ( यज्ञा ) उत्तरार्धे ( न श्राद्धं च कनिष्ठस्य विकला या च कन्यका । ) ; मपा. १५४ न वेदा न ( न च दान ) ; उत.

(१) अनधिकृते ज्येष्ठे इति शेषः। ज्येष्ठेऽधिकारिणि श्राद्धमकुर्वत्यपि कनिष्ठस्तु तत्कुर्वन्न परिविद्यते। विरूपायां ज्येष्ठायामनूढायामपि कनिष्ठाविवाहो न दोषाय। अप.१।२२४ पृ.४४६

(२) यथा वेदांस्तपांसि श्राद्धं चाधिकृत्य ज्येष्ठे अध्ययनतपःश्राद्धराहित्येन स्थितेऽपि तदनुज्ञामन्तरेणापि कनिष्ठेनानुष्ठितानि परिवेदनहेतवो न भवन्ति, तथाऽग्नयोऽपि ज्येष्ठादेरप्यननुज्ञया कनिष्ठेनाहिता इत्यर्थः। या च कन्या विरूपिकेत्यस्यायमर्थः— विवाहाधिकारिण्यां ज्येष्ठायां कन्यायां विरूपायां अनूढायां स्थितायां तदनुज्ञां विनाऽपि कनिष्ठाया विवाहादिकालातिक्रमभीत्या कृतो विवाहो न दोषायेति। एवं चैवंविधविपयव्यतिरिक्तविषये कन्यास्वपि परिवेदने वरपरिवेदनोक्तं सर्वमनुसंधेयम्। * स्मृच.३९८ (श्रा.)

## लघुशातातपः

परिवेत्तृपरिवित्तिलक्षणे, परिवेदनदोषः, परिवेदनापवादाः

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः॥

परिवित्तिः परिवेत्ता यया च परिविद्यते।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥

क्लीबे देशान्तरस्थे पतिते प्रव्रजिते तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥

नाग्नयः परिविन्दन्ति वेदा न च तपो न च।
न च श्राद्धं कनिष्ठस्य विरूपा या च कन्यका॥

* चश्रा. स्मृचगतम्।

१२२ वेदा (यज्ञा) या च कन्या विरूपिका (विकला या च कन्यका); मुक्ता. २३ पृ. 'परिवेत्तुर्न चाग्निस्तु न वेदा न तपांसि च' अयमपि पाठः; १५३ नाग्नयः परिविन्दन्ति (परिवेत्तुर्न चाग्निस्तु) विरूपिका (विरूपिता) पराशरः; श्रान. ९० पृ.; कृम. ११९७.

(१) लशास्मृ. ३९. शातातपेऽपीदं वचनं द्रष्टव्यम्।

(२) लशास्मृ. ४०.

(३) लशास्मृ. ४१-४२. शातातपेऽपि इमे वचने द्रष्टव्ये।

## पराशरः

परिवेदनदोषः तत्प्रायश्चित्तम्, परिवेदनापवादाः

परिवित्तिः परिवेत्ता यया च परिविद्यते।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च।
कृच्छ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत्॥

यत्र ज्येष्ठो नोद्वहति कनिष्ठश्चोद्वहति तत्र ज्येष्ठः परिवित्तिरित्युच्यते। कनिष्ठः परिवेत्ता। यया कन्यया कनिष्ठः परिविद्यते सा परिवेदिनी। तस्याः पित्रादिर्दाता। याजकः विवाहहोमस्य कारयिता। त एते पञ्च नरकं यान्ति। तथा च हारीतः— 'ज्येष्ठेऽनिविष्टे कनीयान्निविशन् परिवेत्ता भवति। परिवित्तिर्ज्येष्ठः। परिवेदनी कन्या। परिदायी दाता। परियष्टा याजकः। ते सर्वे पतिताः' इति। तत्र परिवित्तेर्द्वौ कृच्छ्रौ प्रायश्चित्तम्। कन्याया एकः कृच्छ्रः। दातुः कृच्छ्रातिकृच्छ्रः। तस्य लक्षणं याज्ञवल्क्य आह— 'कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्' (यास्मृ.३।३२१) इति। याजकस्य चान्द्रायणम्। न चात्र परिवेत्तुः प्रायश्चित्तमनुक्तमिति शङ्कनीयम्। परिवित्तिशब्देन तस्याप्युपलक्षितत्वात्। अत एव यमः परिवित्तिपरिवेत्त्रोर्द्वयोः समं प्रायश्चित्तमाह— 'कृच्छ्रौ द्वौ परिवित्तेस्तु (१ कृच्छ्रौ द्वयोः पारिवेद्ये) कन्यायाः कृच्छ्र एव च। अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत्॥' इति।
पमा. ४८-४९ (खण्डः २ भागः १)

कुब्जवामनषण्ढेषु गद्गदेषु जडेषु च।
जात्यन्धे बधिरे मूके न दोषः परिवेदने॥

परिवेदने प्रत्यवायं प्रायश्चित्तं च प्रदर्श्येदानीं विशेषे तदपवादं दर्शयति— कुब्जवामनेति। कुब्जः पृष्ठभागे

(१) पस्मृ. ४।२५; प्रपा. ३१४ सर्वे ते (ते सर्वे); मुक्ता. १५३.

(२) पस्मृ. ४।२६; प्रपा. ३१४ तिकृच्छ्रौ (तिकृच्छ्रं) होता (दाता); विपा. ७२७ कन्यायाः (दत्तायाः) एव च (एव तु) तिकृच्छ्रौ दातुस्तु (तिकृच्छ्रं दातुः स्यात्).

(३) पस्मृ. ४।२७; मुक्ता. १५३.

मासादिविशेषेणात्यन्तविकृतदेहः । वामनः अतिह्रस्वदेहः । पण्डो नपुंसकः । गद्गदो जिह्वादिदोषेण सहसा वक्तुमशक्तः । जडः अक्षमः कार्येष्वप्रवृत्तः । जात्यन्धादयः प्रसिद्धाः । एवंविधस्य ज्येष्ठस्य विवाहायोग्यत्वात् कनिष्ठस्य विवाहे नास्ति परिवेदने दोषः । एतच्च ज्येष्ठस्य प्रव्रज्या–देशान्तरगमनादीनामप्युपलक्षणम् । अस्मिंश्च परिवेदनाभ्यनुज्ञाने संवादिवचनानि पूर्वमेव श्राद्धप्रसङ्गादुदाहृतानीति नात्र प्रपञ्च्यन्ते ।

पमा.५१ ( खण्डः २ भागः १ )

[1]पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

कुब्जत्वादिदोषरहितेष्वपि भिन्नोदरेषु परिवेदनमभ्यनुजानाति– पितृव्यपुत्र इति । पितृव्यपुत्रसापत्नौ प्रसिद्धौ । परनारीसुतः दत्तक्रीतादिः । एतेषु ज्येष्ठेषु स्थितेषु कनिष्ठस्य विवाहाधानयोर्नास्ति प्रत्यवायः ।

पमा.५२ ( खण्डः २ भागः १ )

[2]ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

कुब्जत्वादिदोषरहितेष्वेकोदरेषु पर्याधाने विशेषमाह– ज्येष्ठ इति । कारयेत् कुर्यात् । अनुज्ञातः कनिष्ठो ज्येष्ठात् पूर्वमाधानं कुर्यात् । ज्येष्ठभ्रात्रैव पित्राऽप्यनुज्ञातस्य पुत्रस्य पर्याधानप्राप्तौ चतुर्विंशतिमते तन्निषिध्यते– 'ज्येष्ठभ्राता त्वनुज्ञातः कुर्यादग्निपरिग्रहम् । अनुज्ञातोऽपि सन् पित्रा नादध्यान्मनुरब्रवीत् ॥' इति । यत्तु सुमन्तुनोक्तम्– 'पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत् । अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥' इति, उशना अपि– 'पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित् । तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवादने ॥' इति तत् पित्रादीनां वैधुर्यादिना प्रतिबन्धे सति द्रष्टव्यम् ।

पमा.५२–५३ ( खण्डः २ भागः १ )

(१) पस्मृ. ४।२८ ; मुस्मा. २३ सापत्नः ( सापत्न्य ) : १५३ .

(२) पस्मृ. ४।२९ ; उत. १२२ ज्येष्ठो ( ज्येष्ठ ) उशना ; मुस्मा. २३ ; कूभ. १११० ( = ) प्रथमः पादः .

## अत्रिः

परिवेदनप्रायश्चित्तम्, परिवेदनापवादाः

[1]द्वे कृच्छ्रे परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च ।
कृच्छ्रातिकृच्छ्रं दातुः स्याद्धोतुः सान्तपनं स्मृतम् ॥
कुब्जवामनपण्ढेषु गद्गदेऽथ जडेषु च ।
जात्यन्धबधिरे मूके न दोषः परिवेदने ॥
क्लीबे देशान्तरस्थे च पतिते व्रजितेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥
पिता पितामहो यस्य अग्रजो वाऽपि कस्यचित् ।
नाग्निहोत्राधिकारोऽस्ति न दोषः परिवेदने ॥
भार्यामरणपक्षे वा देशान्तरगतेऽपि वा ।
अधिकारी भवेत् पुत्रस्तथा पातकसंयुते ॥
ज्येष्ठो भ्राता यदा नष्टो नित्यं रोगसमन्वितः ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥
नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठो वै विना चैवाभ्यनुज्ञया ॥
तस्माद्धर्मं सदा कुर्याच्छ्रुतिस्मृत्युदितं च यत् ।
नित्यं नैमित्तिकं काम्यं यच्च स्वर्गस्य साधनम् ॥

## लौगाक्षिः

पर्याधातृपर्याहिताग्रेदिधिषुदिधिषुलक्षणानि

[2]सोदर्ये तिष्ठति ज्येष्ठे योऽग्न्याधानं करोति हि ।
तयोः पर्याहितो ज्येष्ठः पर्याधाता कनिष्ठकः ॥
[3]ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषुर्ज्ञेया पूर्वा च दिधिषुः स्मृता ॥

## वृद्धयाज्ञवल्क्यः

परिवेत्तृलक्षणम्

[4]औवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तयोच्यते ॥

(१) अत्रिसं. १०४–१११ .

(२) अप. १।२२४ पृ. ४५२ ; चश्रा. ३७१ धानं ( धेयं ) ; श्राप्र. ८५ चश्रावत् .

(३) उत. १२२ .

(४) अप. १।२२४ पृ. ४४६ मनादृत्य ( मनाद्दत्य ) योगयाज्ञवल्क्यः ; स्मृच. ३९८ ( आ. ) ; चश्रा. ३७६ ; चका.

(१) वृद्धयाज्ञवल्क्यस्तु ज्येष्ठोऽपि कदाचिदाधानेन परिवेत्ता भवतीत्याह– आवसथ्यमिति । अयमर्थः– यथा दायविभागकाले औपासनाधानं यस्य स्वगृह्योक्तं, असौ तदकृत्वा ब्रह्मौदनपाकं निर्मन्थ्याग्निना कृत्वा गार्हपत्याद्याधानं यदि कुरुते सोऽनाहिताग्निर्भवति । प्रथमाधाने निर्मन्थ्याग्निना ब्रह्मौदनपाकस्य अशास्त्रार्थतया गार्हपत्यादिशब्दवाच्यालौकिकसंस्कारस्यानुपपत्तेः । तथा च प्रथममाधेयं औपासनाग्निं अनाधाय गार्हपत्याद्याधानकरणात् परिवेत्ता इत्यपि गीयते ।

*स्मृच.१९८ (श्रा.)

(२) आवसथ्यं औपासनाग्निम् । अनादृत्य असंगृह्य । त्रेता गार्हपत्याहवनीयदक्षिणाग्नयः । अनाहिताग्निः आधानजन्यफलरहितो भवतीत्यर्थः ।

श्राप्र. ८४

## सुमन्तुः

परिवेदनप्रायश्चित्तम्

[१]परिवित्तिपरिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणं च पुनर्भुवमाचक्षते न भूयश्चैनामभिगच्छेत् ॥

पर्याधाननिषेधः

[२]ज्येष्ठो भ्राता यदा तिष्ठेत्पिता वाऽपि पितामहः । कनिष्ठपुत्रपौत्राणामाधानं नैव कारयेत् ॥

अकृताधाने इति शेषः । कनिष्ठादिर्न कुर्यादित्यर्थः, आहिताग्न्यरूपकारणस्य रागप्राप्तत्वात् । एवं सति तदुपादानं तत्कर्तुः प्रायश्चित्तलाभार्थम् । पितृमरणे पितामहे जीवति पौत्रस्याधिकारवारणार्थं पितामहपदम् । एवं च यत्र ज्येष्ठभ्रातृपितृपितामहानामन्यतमस्य न विवाहहोमः, तत्र कनिष्ठपुत्रपौत्राणां न विवाहहोमः । गृह्यप्रयोगानीयहोमे तु न दोषः, तस्य गृह्यस्यार्थत्वात् । 'गृह्यं परिचरेत्' इति परिचर्यायामेव तदुपयोगः ।

कृम.११६१

पर्याधानापवादाः

[१]व्यसनासक्तचित्तो वा नास्तिको वाऽथवाऽग्रजः । कनीयान् धर्मकामस्तु आधानमथ कारयेत् ॥

(१) व्यसनादिना अनधिकारित्वमुपलक्ष्यते । अतस्तदनुमतेनैव अधिकारी कनीयानादध्यात् ।

अप. १।२२४ पृ.४४६

(२) आधानग्रहणं विवाहस्याप्युपलक्षणार्थम् ।

स्मृच.१९८ (श्रा.)

(३) अग्रज इति पित्रादेः, आधानमिति यागादेः, अथवेति जात्यन्धबधिरपङ्ग्वादेश्चोपलक्षणम् ।

कृम.११६८

[२]ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् । अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

(१) ज्येष्ठभ्रातृग्रहणं पितुरपि प्रदर्शनार्थम् ।

स्मृच.१९८ (श्रा.)

(२) अत्र आधानग्रहणादनुज्ञायामपि न विवाहः । इदं सोदरपरं, सोदर्याभावे न दोषः ।

विपा.७२४

(३) भ्रातृपदं च स्वपितृजन्यसोदरपरम् ।

संग. ४९

[३]पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत् । अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

---

* धप्र. स्मृचगतम् ।

८१४ कात्यायनः ; श्राप्र. ८४ ; मुक्ता. २४ सोऽन्ता (मता).

(१) उग. १२२ (न भूयश्चैनामुपगच्छेत्) पलायतेव ; संर. ५१८.

(२) संग. ४८ ज्येष्ठो (ज्येष्ठ) ; कृम. ११६०.

(१) अप. १।२२४ पृ. ४४६ को वाऽ (कोऽप्य) ; स्मृच. १९७ (श्रा.) ; धप्र. १७४ ; धका. ८१२ ; श्राप्र. ८६ ; मुक्ता. २३ कामस्तु (कामश्चेद्) ; कृम. ११६८ नमय (नमति) ; संर. ५१७.

(२) अप. १।२२४ पृ. ४४६ ; स्मृच. १९८ (श्रा.) ; धप्र. १७५ ; धका. ८१२ ; मपा. १७२ ज्येष्ठो (ज्येष्ठ) कारयेत् (धामयेत्) ; संप्र. ७६५ कारयेत् (धामयेत्) ; सिन्धु. ११६२ संनयत् ; विपा. ७२४ ; प्रका. १४ शङ्खस्य (शास्त्रस्य) ; संग. ४९ ; संर. ५१५ पूर्वार्धे (निविष्ठाग्नि यदि ज्येष्ठ आधाने नैव धामयेत् ।).

(३) अप. १।२२४ पृ. ४४६ होत्रा:धि (होत्रेऽपि) ; स्मृच. १९८ (श्रा.) तु ना (च ना) पृ. ; धप्र. १७५ ; धका.

यत्तु सुमन्तुनोक्तम्– पितुर्यस्येति, तत् पितुर्वैधुर्यादिना प्रतिबन्धे द्रष्टव्यम् । तस्मात् पितरि देशान्तरस्थे वा जडत्वादिदोषे वा पुत्रस्य तदाज्ञयाऽधिकारः । वैधुर्येऽप्यात्यन्तिकानिच्छायां भवति । संन्यस्ते तु भवत्येवाधिकार इति दिक् । बाल.१।८९ पृ.२५२

अनुज्ञातस्य पित्रा तु आधानं सर्वदा भवेत् ॥

पित्रानुज्ञातस्य पुत्रस्येति शेषः । पितृग्रहणं पितामहस्यापि प्रदर्शनार्थम् । चश्रा.३७५

## कण्वः

परिवेदनापवादः

व्यसनासक्तचित्तो यो नास्तिको वा भवेद्यदि ।
कनीयसो वृत्तवतो न दोषः परिवेदने ॥

## वृद्धमनुः

अग्नेदिधिपूत्वापवादः

[3]विवाहेऽनधिकारी स्यात् ज्येष्ठकन्या स्थिता यदा ।
तदनुज्ञां विना वाऽपि कनिष्ठामुद्वहेत्तदा ॥

(१) अनधिकारी इति छान्दसो लिङ्गव्यत्ययः । वाशब्दः अनुज्ञापक्षं गमयति । ततश्चानधिकारिण्या ज्येष्ठाया तदनुज्ञा विनाऽपि कनिष्ठामुद्वहेत् । अधिकारिण्यां तदनुज्ञयाऽपि वा इति वाशब्दार्थः । * संप्र.७६३

(२) एकमातृप्रसूतानामपि कश्चिदपवादमाह वृद्धमनुः— विवाहानधिकारीति । विपा.७२५

कालप्रतीक्षणं न स्याद्रजोदृष्टं न दोषभाक् ॥

## कार्ष्णाजिनिः

परिवेदनापवादः

उन्मत्तः किल्विषी कुष्ठी पतितः क्लीब एव च ।
राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम् ॥

क्लीबादयस्तु भ्रातरः किंचित्कालमपि न प्रतीक्षणीयाः, तेषां विवाहादौ स्वत एवायोग्यत्वेनानधिकारात् । तथा च स्मृतिः– उन्मत्त इति । स्मृच.३९८ (आ.)

## जमदग्निः

परिवेदनापवादः

काणान्धबधिरव्यङ्गपण्ढकुष्ठादिपातके ।
पङ्गौ कुब्जे क्रियाहीने न दोषः परिवेदने ॥

## गर्गः

परिवेदनदोषः

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् ।
आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत् ॥

---

८१३ ; पमा. ५२ (खण्डः २ भागः १) ; मपा. १७२ पितुर्यस्य तु नाधान (पित्रा यस्य तु नाधीन) पुत्रस्तु (पुत्रः स) होत्राधि (होत्रेऽधि) ; चम. ११९–१२० ; मुक्ता. २३ ; सिन्धु. ११६७ पितुर्यस्य तु नाधानं (पित्रा यस्य तु नाधानं) होत्राधि (होत्रेऽधि) ; विपा. १४६ (भागः २) पितु (पित्रा) होत्राधि (होत्रेऽधि) ; आन. १९० ; बाल. १।८९.

(१) चश्रा. ३७५.

(२) मभा. १५।१७ पृ. २५७.

(३) मपा. ३१४ विवाहेऽनधिकारी (विवाहानधिकारः) यदा (यदि) ; धप्र. ५३ ऽनधिकारी (ऽनाधिकारः) यदा (यदि) वाऽपि (चापि) पारिजाते इत्युक्तम् ; संप्र. ७६३ ; विपा. ७२५ पूर्वार्धे (विवाहानधिकारी स्याद् ज्येष्ठकन्या यदि स्थिता ।) ; संकौ. २०८ ऽनधिकारी स्याद् (ऽनधिकारेण) वाऽपि (चापि) ; प्रका. १६२ संकौवद् ; संर. १४७ ऽनधिकारी स्याद् (ऽनाधिकारेण) स्थिता यदा (यदा स्थिता) वाऽपि (चापि).

* अधिकं च व्याख्यानं 'सोदर्ये तिष्ठति ज्येष्ठे' इति गर्गवचने संप्रव्याख्याने द्रष्टव्यम् ।

(१) मपा. ३१४ ; धप्र. ५३ क्षणं न (क्षणे न) ; विपा. ७२५ (कालप्रतीक्षणं तस्या रजोऽदुष्टं न तिष्ठति).

(२) मेधा. ३।१७१ न्याय्य (योग्यः) स्मृत्यन्तरम् ; स्मृच. ३९८ (आ.) प्रतीक्षितुम् (प्रतीक्षणे) स्मृतिः ; चश्रा. ३७४ एव च (एव वा) यक्ष्मा (यक्ष्मा) स्मृतिः ; पमा. ६१२ एव च (एव वा) स्मृतिः ; मपा. ३१४ ; संप्र. ७६१ ; श्राप्र. ८९ चश्रावद्, स्मृतिः ; मुक्ता. १५२ पमावद्, चन्द्रिकायामित्युक्तम् ; सिन्धु. ११६३ पमावद्, आचारार्केऽपीत्युक्तम् ; विपा. ७२४ ; संकौ. २०८ पमावद् ; आन. १८१ पमावद्, चन्द्रिकायामित्युक्तम् ; प्रका. १६१ पमावद् ; संर. १४७ ; मंर. ५१७ पमावद्.

(३) मपा ३१३.

(४) मपा. १।२२४ पृ. ४४७ स्त्वन्यथा (स्तु तथा),

( १ ) आवसथ्याधानमपि इतराधानवद्भवतीत्याह गार्ग्यः– सोदर्ये तिष्ठतीति ।

अप.१।२२४ पृ.४४६

( २ ) आवसथ्यं आवसथ्याधानं, दायविभागकाले क्रियमाणमौपासनाधानमिति यावत् । विवाहकाले क्रियमाणौपासनाग्नेश्च 'न कुर्याद्दारसंग्रहम्' इत्यनेनैवार्थात् निरस्तत्वात् । अतः, 'औपासनं समादध्यात् स्वकाले (लेऽपि) परिवेदयन्' इति ब्रह्मगर्भवचनेऽपि स्वकालशब्देन दायविभागकाल उक्तः, न तु विवाहकालोऽपीत्यवगन्तव्यम् । आधानं गार्हपत्याद्याधानम् । पतितो भवेत् उपपातकी भवेदित्यर्थः, उपपातकिपरिगणनवचने परिवेत्तृपरिवित्त्योः कीर्तितत्वात् । सोदर्यग्रहणात् असोदर्ये तिष्ठति ज्येष्ठे कनिष्ठस्य दारसंग्रहादौ कृतेऽपि न पातित्यदोष इति गम्यते । * स्मृच.३९६ ( श्रा. )

( ३ ) यस्तं कुर्यात्स पतितः परिवेत्तेत्युच्यते । तथा च मनुः– 'अग्रजे ब्रह्मचर्यस्थे योऽनुजो दारसंग्रहम् । कुरुते परिवेत्ता स परिवित्तोऽग्रजो भवेत् ॥' अग्रजोऽत्र सोदर्यो विवक्षितः, पूर्ववाक्यानुरोधात् । तथा 'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ परिवित्तिः परिवेत्ता च यया च परिविद्यते । ते सर्वे नरकं यान्ति दातृयाजकपञ्चमाः ॥' इति ।

सोदर्यत्वं चात्र त्रिविधं, पित्रैक्यात् मात्रैक्यात् उभयैक्याच्च । तत्र पित्रैक्येन सोदर्यत्वं 'पुरुषे ह वा अयमादितो गर्भो भवति' इत्यादिगर्भोपनिषत्सु प्रसिद्धम् । महाभारते च– 'पितुः स जठरे स्थित्वा शुक्रद्वारेण मातरम् । प्रविश्य शोणितासक्तः पञ्चधा तनुमाददे ॥' इति । देवयानीं प्रति कचोक्तिश्च– 'यस्मिन्नेवोदरे तातस्यावसस्त्वं शुभानने । तस्मिन्नेवाहमवसं तेन त्वं भगिनी मम ॥' इत्यादिहेतुभिः अविवाह्यत्वप्रतिपादिका । मात्रैक्यादिना सोदरत्वं स्पष्टमेव ।

तत्रैकैकं निमित्तमादाय निषेधप्रवृत्तौ अपवादमाह शातातपः– 'पितृव्यपुत्रसापत्नपरनारीसुतेषु च । ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातृणां तु कनीयसाम् । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥' इति । पितृव्येण देवरादिना देवदत्तमातरि उत्पादितः पुत्रः पितृव्यपुत्र इत्युच्यते । स मात्रैक्येन देवदत्तस्य सोदरः, 'संविदा तूभयोः' इति गौतमस्मरणेन तस्य द्व्यामुष्यायणत्वात् । एतेषु त्रिष्वपि सोदर्यत्वेन निषेधप्राप्तौ अयमपवादः । अत एव अपवादात् अपरिणीतेऽपि युधिष्ठिरे भीमसेनस्य परिणयो न दोषाय । यमोऽपि– 'पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च । दाराग्निहोत्रधर्मेषु नाधर्मः परिविन्दतः ॥' इति । अत्र आद्यौ द्वौ व्याख्यातौ । परपुत्रः परस्यैव पुत्रार्थमुत्पादितः, न स्वार्थमपि । सोऽपि पित्रैक्यादेव देवदत्तस्य सोदरः । गौतमोऽपि– 'भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥' इति । दत्तः पित्रा अन्यस्मै पुत्रत्वेन, तस्य सोदरज्येष्ठापेक्षया परिवेदनप्राप्तौ तदपेक्षया च तत्सोदरकनिष्ठस्येति उभयैक्यापवादः । 'तृतीयः पुत्रिकैव' इति वसिष्ठोक्तेः पुत्रिकापुत्रे सति कनिष्ठे औरसे परिवेदनप्राप्तौ अग्रजपदेनापवादः । तदेवं अपवादतया वाक्यत्रयोपपत्तौ — 'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते' इत्यत्र अग्रजस्य व्यतिरेकमुखेन सोदर्यत्वविवक्षार्थं वाक्यत्रयारम्भ इति निरस्तम्, 'सोदर्ये तिष्ठति ज्येष्ठे' इत्यनेन एकवाक्यतयैव तत्सिद्धेः । न ह्यग्रजस्य सोदर्यत्वसिद्ध्यर्थं वाक्यत्रयारम्भो युज्यते, 'न हि पट इति वक्तव्ये अनपट इति वदन्ति विद्वांसः' इति न्यायापातात् । किंच सोदर्यत्वमात्रविवक्षार्थत्वे पितृव्यपुत्रादिपदानां अविवक्षितार्थतया मातृष्वसृपितृष्वसृमातुलपुत्राणामपि अपरिगणनमापद्येत, तेषामपि अग्रजत्वेन दोषापादकत्वसंभवात्, संभवति च अपवादत्वेन विवक्षितार्थत्वे अविवक्षाया अन्याय्यत्वात् । अथ 'पञ्चान्यवर्षिपरादीनां विवाहोऽस्ति यथोचितम् । विवाह-

* ममा., भप्र. स्मृचगतम् ।

स्मृच. ३९६ (श्रा.); चश्रा. १७१; चका. ८२४; पमा. ९९०; मपा. ११३ पू.; मंप्र. ७६०; श्राप्र. ८४ तिष्ठति (पश्यति); शुका. १५२; सिन्धु. ११६१ भस्तत्र; विपा. ७१४ गार्ग्यस्य (गृह्यतरा); भान. १८२; मका. ११ भस्तत्र; संत. ४८ भस्तत्र, दायादपः; कृम. ११६५ (= ) चतुर्वर्गचिन्त्य; सैर. ५१४.

संभवे तेषां कनिष्ठो विवहेत्तदा ॥ पितृव्यपुत्रे सापत्ने परदारसुतादिषु । विवाहाधानयज्ञादौ परिवेदो न दूषणम् ॥' इति मनुना, 'देशान्तरस्थक्लीबैकवृषणानसहोदरान् । वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥ जडमूकान्धबधिरकुब्जवामनकुण्ठकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥ धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा । कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥' इति कात्यायनेन, 'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च । राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम् ॥' इति कार्ष्णाजिनिना च ज्येष्ठमात्र एव विषयविशेषे अपवादोऽभिहितः सोऽपि सोदर्यविषय एव, अन्यत्र प्राप्त्यभावेन अपवादत्वासंभवादित्यलं बहुना ।

ज्येष्ठानुजयोश्च पुंस्त्वं विवक्षितम्, अप्राप्तोद्देश्यविशेषणत्वात्, 'अष्टवर्षं ब्राह्मणम्' इत्यत्र अष्टवर्षत्वादिवत् । तेन अपरिणीतायामपि ज्येष्ठभगिन्या कनिष्ठस्य भ्रातुः परिवेदनं न भवति, तथा अपरिणीते ज्येष्ठभ्रातरि कनिष्ठाया भगिन्याश्च न भवति । अत एव भगिन्योरपि परिवेदनाभावप्राप्तौ वचनारम्भः । यदाह गार्ग्यः— 'एकमातृप्रसूतानां पुत्रीणां परिवेदने । न भवेत्सर्ववर्णेषु न दोषो भिन्नमातृषु ॥' इति । मातृपदं पितुरप्युपलक्षणम् । तेन भिन्नपितृकास्वपि न दोषः । ततश्च पितृव्यपुत्रादिवाक्योपात्ता विशेषा अत्रापि अनसंधेयाः । सोदर्यास्वपि क्वचिदपवादमाह वृद्धमनुः— 'विवाहेऽनधिकारी स्यात् ज्येष्ठकन्या स्थिता यदा । तदनुज्ञां विना वाऽपि कनिष्ठामुद्वहेत्तदा ॥' इति । अनधिकारीति छान्दसो लिङ्गव्यत्ययः । वाशब्दः अनुज्ञापक्षं गमयति । ततश्च अनधिकारिण्यां ज्येष्ठाया तदनुज्ञां विनाऽपि कनिष्ठामुद्वहेत्, अधिकारिण्यां तदनुज्ञयाऽपि वा इति वाशब्दार्थः । अनधिकारश्च कुष्ठापस्मारवैरूप्यादिभिः, 'अरोगिणीं भ्रातृमतीम्' इति स्मरणात्, 'नाग्निहोत्रं न वा वेदा न च वेदव्रतान्यपि । नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च ॥ न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिता ॥' इति कात्यायनस्मरणाच्च । जातारणिपरिग्रहेण जातमात्राहिताग्नेः अग्निहोत्रवेदाध्ययनवेदव्रतैः परिवेदनदोषो नास्ति । किन्तु दारेण परिवेदनम् । जातारण्यभावे तु उपनीतस्य अध्ययनाधिकारात् उपनयपरे परिवेदनदोषोऽस्त्येव इति गमयितुं वेदग्रहणम् । 'न जन्मगोत्रे दिवसे च ऋक्षे ज्येष्ठेऽनुपेते परशालया च । न चान्यगोत्रावुपदं च कुर्याच बह्वृचाः पञ्चमषष्ठयोश्च ॥' इति ज्योतिष्पाराशरनिषेधात् । एतेन वेदपदं उपनयपरमिति निरस्तम् । अग्नयः श्येनचित्यादयः । यज्ञा ज्योतिष्टोमविकाराः, नाग्निष्टोमातिरात्रौ, तयोः प्रथमप्रयोगे परिवेदनापादकत्वात् । यथाह त्रिकाण्डमण्डनः— 'दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् । अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ॥ न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्वति ॥' इति । 'प्रयोगे प्रथमे स्थितम्' इति दर्शेष्ट्यादीनां यूपे अलिङ्गं विशेषणम् । तेन प्रथमप्रयोग एव एषां परिवेदनापादकत्वं, न द्वितीयादिप्रयोगेष्विति । सोमेज्या प्रकृतिभूतो ज्योतिष्टोमः । तपांसि चान्द्रायणादीनि । श्राद्धं दर्शादौ पार्वणादि । एते कनिष्ठं भ्रातरं न परिविन्दन्ति । विरूपिता अङ्गेन्द्रियादिविकला ज्येष्ठा कनिष्ठा भगिनीं च न परिविन्दति । इति वाक्यद्वयार्थः ।

अत्र विशेषमाह वसिष्ठः— 'परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत तामेवोपयच्छेत' इति । तस्मै ज्येष्ठाय दत्त्वा निवेद्य पुनर्निविशेत पुनरुद्वहेत् । कामित्यपेक्षायाम्— तामेवेति । अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे च अनुसंधेयः । अत एव गौतमः— 'परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूपतिदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यम्' इति । अकृताधाने ज्येष्ठे कनिष्ठेनाऽऽधाने ज्येष्ठः पर्याहितः, कनिष्ठः पर्याधाता । अग्रेदिधिषूलक्षणमाह देवलः— 'ज्येष्ठाया यद्यनूढायां कन्यायामुह्यतेऽनुजा । या साऽग्रेदिधिषूः प्रोक्ता पूर्वा तु दिधिषूः स्मृता ॥' इति । तत्राह वसिष्ठः— (* 'अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चोपयच्छेत् । दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत' इति ) । अग्रेदिधिषूपतिः कनिष्ठापतिः कृच्छ्रं कृत्वा तां ज्येष्ठामन्योढां समुद्वहेत् । दिधिषूपतिः ज्येष्ठा-

* वचनमिदं त्रुटितमादर्शपुस्तके ।

पतिः स्वोढां ज्येष्ठां कनिष्ठापतये दत्त्वा स्वयमन्यामुद्वहेत् इति । देशान्तरस्थिते ज्येष्ठे प्रतीक्षाकालमाह वसिष्ठः— 'अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति' अनिविष्टं अकृतविवाहाग्निहोत्रम् । कालविकल्पस्त्वेवं विशेयः— तत्र पुनः श्रूयमाणे सुप्रदेशस्थिते द्वादश वर्षाणि । किंचित् श्रूयमाणे नातिसुप्रदेशस्थिते दश । नदीपर्वतचौराद्याकुलदूरतरदेशस्थिते अश्रूयमाणे चाष्टौ वर्षाणीति।

अथाधाने विशेषः— यत्र ज्येष्ठोऽधिकार्यपि आधानं न करोति तत्र तदनुज्ञया कनीयसा कर्तव्यम् । यथाऽऽह सुमन्तुः— 'ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाऽऽश्रयेत् । अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥' वृद्धवसिष्ठोऽपि— 'अग्रजस्तु यदाऽनग्निरादध्यादनुजस्तदा । अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ॥' हारीतोऽपि अधिकारिभ्रात्रनुज्ञापूर्वकमाधानमनुजानीते, न तु विवाहम्— 'सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् । दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥' विशेषान्तरमाधानप्रकरणे वक्ष्यामः । संप्र ७६०—७६६

परिवेदनापवादाः

[1]एकमातृप्रसूतानां पुत्रीणां परिवेदने ।
दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु ॥

[2]प्रोषितं तु प्रतीक्षेत वर्षत्रयमपि त्वरन् ।
प्रोषितं यद्यशृण्वानस्त्र्यब्दादन्ते समाचरेत् ।

आगते तु पुनस्तस्मिन् पादं तच्छुद्धये चरेत् ॥

पादं कृच्छ्रपादम् । विपा. ७२६

(१) प्रपा. ३१४ पुत्रीणां (पुत्राणां); धप्र. ५३ मातृषु (मातृके) पारिजाते इत्युक्तम्; विसौ. १४ पुत्रीणां (भ्रातृणां) मातृषु (मातृजे) संहितासारावल्यां इत्युक्तम्; संप्र. ७६३ दोषः स्यात् (न भवेत्); विपा. ७२५; संकौ. २०८ पुत्रीणां (कन्यानां); प्रका. ३६४ संकौवत्; संव. १४७ संकौवत्; संग. ३४७ प्रयोगपारिजाते इत्युक्तम्; संर. ५१५ पुत्रीणां परि (पुत्रिणीपरि).

(२) विपा. ७२६ त्र्यब्दादन्ते (त्वदाब्दान्ते); संर. ५१७ तच्छुद्धये (वा शुद्धये).

## ब्रह्मगर्भः

परिवेदनापवादः

[1]याजनाध्यापनादानैरनिन्द्येभ्यो धनेन च ।
औपासनं समादध्यात् स्वे काले परि(ऽपरि)वेदयन् ॥

स्वकालशब्देन दायविभागकाल एवोक्तः, न तु विवाहकालोऽपीत्यवगम्यते । चश्रा. ३७१

## अनिर्दिष्टकर्तृकवचने

परिवेदनदोषः, परिवेदनापवादाः

[2]पितृव्यपुत्रे सापत्ने न दोषः परिवेदने ।
ज्येष्ठभ्रात्रा त्वनुज्ञाते परिवेदाद्यदूषणम् ॥

[3]परिवित्तो भवेद्यस्तु पतितः कन्यकाऽपि च ॥

## संग्रहकारः ( स्मृतिसंग्रहः )

परिवेदनापवादः

[4]देशान्तरगते ज्येष्ठे द्वादशाब्दं निरीक्ष्य तु ।
पश्चात्कनिष्ठो विधिवत् कुर्याद्वै दारसंग्रहम् ॥

एवं प्रतीक्षणं उन्मत्तादिव्यतिरिक्तविषयम् । मुक्ता. १५३

## चतुर्विंशतिमतम्

पर्याधानपरिवेदननिषेधः, पर्याधानापवादः

[5]जीवत्पितरि नादध्यादाहिताग्निः स नो यदि ।
तथैव भ्रातरि ज्येष्ठे न यजेन्न विवाहयेत् ॥

[6]अनाहिताग्नौ पितरि ह्याधानं तु करोति यः ।
अरण्योरग्निमारोप्य तमादध्याद्द्विजोत्तमः ॥

(१) अप. १।२२४ पृ. ४४७; स्मृच. ३९६ (श्रा.) स्वे काले (स्वकाले) उत्त., वृद्धगर्गः, म्हैसूरमुद्रितपुस्तके तु ब्रह्मगर्भ इति; चश्रा. ३७१ स्वे काले (स्वकाले) उत्त.; चका. ८१४ ध्यापनादानैः (ध्यापनैश्चैव) स्वे काले (स्वकाले).

(२) बाल. २।५२ पृ. १९६.

(३) धप्र. ५३—५४ क्रमेण पारिजाते इति.

(४) मुक्ता. १५३; आन. १८३.

(५) धम. ११९ दाहिताग्निः स नो (श्चाहिताग्निः स वै); मुक्ता. २३ जीवत् (जीवे) दाहिताग्निः स नो यदि (दग्निहोत्रं कदाचन); संम. ७३; आन. १९० मुक्तावत्.

(६) धम. ११९.

ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ।
अनुज्ञातोऽपि सन् पित्रा नादध्यान्मनुरब्रवीत् ॥

## स्मृत्यर्थसारः

पर्याधानपरिवेदनापवादाः

पण्ढान्धव्याधितादीनां विवाहस्तु यथोचितम् ।
विवाहासंभवे तेषां कनिष्ठो विवहेत्तदा ॥

पण्ढान्धबधिरस्तब्धजडगद्गदपङ्गुषु ।
कुब्जवामनरोगार्तशुष्काङ्गिविकलाङ्गिषु ॥

ध्वस्तपुंस्त्वे च मत्ते च शयनस्थे निरिन्द्रिये ।
मूकोन्मत्तेषु सर्वेषु न दोषः परिवेदने ॥

पितृव्यपुत्रे सापत्ने परदारसुतादिषु ।
विवाहाधानयज्ञादौ परिवेदाद्यदूषणम् ॥

ज्येष्ठभ्रात्रा त्वनुज्ञाते परिवेदाद्यदूषणम् ।
पितुः सत्यप्यनुज्ञाने नादधीत कदाचन ॥

(१) पमा. ५२ (खण्डः २ भाग १); चम. ११९; मुक्ता. २३ सन् (वा); संम. ७३ सन् पित्रा (सपित्रा); आन. १९० नादध्यात् (न कुर्यात्).

(२) स्मृसार. १३.

(३) स्मृसार. १३; धप्र. ५३; चम. १५ रोगार्त (रोग्यार्त); मुक्ता. १०० स्मृतिरत्ने इत्युक्तम्; संकौ. १५२ शुष्काङ्गि (शुष्काङ्ग); आन. १९० स्मृतिरत्ने इत्युक्तम्; प्रका. ३१९; संग. ३४६ शुष्काङ्गि (शुष्काङ्ग); संब. १२७.

(४) स्मृसार १३; धप्र. ५३ ध्वस्तपुंस्त्वे (स्तब्धे पुस्त्वे); चम. १५-१६ (मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये। ध्वस्तपुंस्त्वेऽपि चैतेषु संस्काराः स्युर्यथोचितम् ॥); मुक्ता. १०० (मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये। ध्वस्तपुम्स्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ॥) स्मृतिरत्ने इत्युक्तम्; संकौ. १५२ (ध्वस्तपुंस्त्वेऽपि चैतेषु संस्काराः स्युर्यथोचितम्।) एतावदेव; आन. १९० मुक्तावत्, स्मृतिरत्ने इत्युक्तम्; प्रका. ३१९; संग. ३४६ धप्रवत्; संब १२७ संकौवत्, पू.

(५) स्मृसार १३; धप्र. ५३; संग. ३४६ वेदाद्यदू (वेत्त्रादिदू).

(६) स्मृसार. १३.

## त्रिकाण्डमण्डनः

पर्याधानपरिवेदननिषेधः

दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् ।
अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ।
न कुर्याज्जनके ज्येष्ठे सोदरे वाऽप्यकुर्वति ॥ *

(१) दर्शेष्टिमिति। एतन्निषेधापालनमेव परिवेत्तृत्वमिति भावः। अत्र प्रत्येकं निमित्तानि न तु समुच्चयः। तद्यथा, कृतदर्शजनकज्येष्ठौरससोदरस्यैव दर्शेऽधिकार इति यथातथमूह्यम्। तथा च कृताधानजनकसोदरवत्त्वेऽपि तयोरकृतपौर्णमासादिकयोः सतोरेतस्य पौर्णमासादौ नाधिकार इति भावः। निमित्तेन पुनराधानोत्तरमकृतदर्शादित्वेऽपि तयोर्नातिप्रसङ्ग इति सूचयितुं प्रथमे इति। अत्र सोदर इति औरसः सोदरो ग्राह्यः। तथा च वक्ष्यते— क्षेत्रजादाविति। त्रिमवि.

(२) कृतपौर्णमासेष्टेर्भ्रात्रादेः कुतश्चित्प्रतिबन्धेनाकृतदर्शेष्टौ पित्रादौ जीवति पुत्रादेर्न दर्शेष्टिः। एवं कृताधानेऽकृताग्निहोत्रे च तत्र जीवति नाग्निहोत्रमित्युभयोपादानम्। एवमग्निहोत्रं सायंप्रातर्होमात्मकम्, तत्र सायंहोमोत्तरं कुतश्चित्प्रतिबन्धेन प्रातर्होमाकरणे न प्रातर्होमः। अन्यथा एककर्मत्वेऽपि दर्शपूर्णमासेष्ट्योरविशेषानुपपत्तिप्रसङ्गात्। एवं च विवाहोत्तरं प्रतिबन्धवशादगृहीतविवाहाग्नौ पौर्णमासस्थालीपाकोत्तरमकृतदर्शस्थालीपाके विवाहहोमोत्तरमकृतौपासनहोमे सायमौपासनहोमोत्तरमकृतप्रातरौपासनकहोमके च न विवाहहोमदर्शस्थालीपाकौपासनहोमप्रातरौपासनहोमाः, 'य आहिताग्नेर्धर्मः स्यात् स औपासनिकस्य तु' इति वचनात्। गृह्यप्रवेशनीयहोमादौ तु न ज्येष्ठकरणापेक्षेत्युक्तम्। 'प्रयोगे प्रथमे स्थितम्' इत्युक्तेः पुनराधानादौ सर्वत्रापि पित्रादेरकृतपुनराधानादित्वेऽपि पुत्रादेर्न दोषः।

पृ. ११६१, ११६२

* संग्र व्याख्यान 'सोदर्ये तिष्ठति ज्येष्ठे' इति गर्गवचनोपरि (सका. पृ. ६३४) द्रष्टव्यम्।

(१) त्रिम. २१६६-६७; संप्र. ७६४ वाऽप्य (चाप्य); श्राप्र. ८४; सिन्धु. ११९४ संप्रवत्; बाल. ११८९ पृ. २५२; कुम. ११६१ संप्रवत्; संर. ५१५.

सोदरे चेति । चकारात्पितामहग्रहः ।

क्रम. ११६४

पर्याधानपरिवेदनापवादाः

[1]क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे ॥
नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि चौरसे ।
पङ्ग्वन्धमूकबधिरपतितोन्मादद्दूषणे ॥

( १ ) क्षेत्रजादौ सोदरे इत्यनेनान्वयः । आदिशब्देन कन्यावस्थायां जातः । सोदरस्यैवौरसस्य भिन्नोदरत्वेऽपि विघातकत्वमाशङ्क्य परिहरति – भिन्नेति । चकारः समुच्चये । अथ तयोराधानादिषु अधिकारित्वे सत्येव दोषो नान्यथेत्याह — पङ्ग्विति । पङ्गुः निरङ्घ्रिः । एकेन द्वाभ्यां वा । एवं सर्वत्र । अन्धः नेत्रहीनः । मूको वाग्हीनः । बधिरोऽश्रोत्रः । पतितः पातित्यापादककर्मकारी । उन्मादः अपस्मारः, तदेव दूषणं यस्य ।

त्रिमवि,

( २ ) क्षेत्रजादाविति । अत्र औरसत्वस्य नान्वयः, बाधात् । अनीजाने यागमकुर्वति । क्षेत्रजादौ ज्येष्ठेऽनीजाने विद्यमाने जीवति एकमातृतया सोदरे तत्कनिष्ठभ्रातरि नाधिकारविघातोऽस्तीत्येकोऽन्वयः, तेषां पितृत एवासोदरत्वात् । एवं भिन्नोदर्ये मातृतोऽप्यसोदरे दत्तकादौ ज्येष्ठेऽनीजाने विद्यमाने तत्कनिष्ठभ्रातरि औरसेनाधिकारविघातोऽस्तीति अपरः । तथा च तयोर्दर्शेष्ट्यादिविवाहान्तेषु सर्वेष्वपि न दोष इत्यर्थः ।

यत्तु ' भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे । दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ ' इति प्रयोगपारिजाते गौतमवाक्यम्, तस्य दत्तकेऽग्रजे प्रतिग्रहीतुरौरसस्य न परिवेत्तृत्वमित्यर्थः । तत्रैव ज्येष्ठे सोदरेऽकृतविवाहाधाने तदनुजस्य दत्तकस्य विवाहाधानयोः परिवेत्तृत्वमेव । ननु इदं कथं, दानेन परपुत्रतां प्राप्तौ हि दातुः पुत्रत्वप्रयुक्तकार्यव्यावृत्तौ तत्पुत्राणामपि भ्रातृत्वप्रयुक्तविधिनिषेधयोरविषयत्वादिति चेत्, न, 'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसङ्ग्रहम् । आवसथ्यं तथाधानम्' इति निषेधात् । न चेदं दत्तकातिरिक्तपरम्, दर्शितत्रिकाण्डमण्डनादिति वाच्यम्, सोदरो हि त्रिविधः– एकमातृपितृभयजः एकमातृमात्रजश्च, एकपितृमात्रजश्चेति । तत्र आद्य औरसः, द्वितीयः क्षेत्रजः, तृतीयो भिन्नोदर्यः । तत्रान्त्ययोः त्रिकाण्डमण्डनेनाधिकाराविघात उक्तः, ' क्षेत्रजादौ ' इति ' भिन्नोदर्ये ' इति चोक्तेः । न तु प्रथमे, ' सोदर्ये तिष्ठति ज्येष्ठे ' इति वचने हि समानमुदरं यस्येति सोदरः, स एव सोदर्य इति व्युत्पत्तेरभिन्नोदरोत्पन्नत्वलाभात् । उदरं च मातापित्रोः, मातापितृभयमेव वा । एवं च तादृशो निषेधस्य विषयः, अन्यादृशो मण्डनकारिकाविषयः । तथा च यथा दत्तककनिष्ठस्य दत्तकविवाहाधाने विना न तत्राधिकारः, एवं दत्तकस्य कनिष्ठस्य सोदरज्येष्ठेऽकृतविवाहाधाने न तत्राधिकार इति भावः । ( यत्तु महाभारतादावनिविष्टे युधिष्ठिरेऽर्जुनस्य द्रौपदीविवाहविलम्बनं, तदर्जुनस्यानौरसत्वात् । सजातीयेष्वेव लाघवेन निषेधप्रवृत्तेः । १ )

क्रम. ११६४–११६५

[1]संन्यस्ते छिन्नहस्तादौ यद्वा पण्डादिदूषणे ।
जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम् ॥

( १ ) संन्यस्ते इति । संन्यस्ते आधानाद्यकृत्वैव प्रव्रजिते । छिन्नहस्तादौ । आदिशब्दात् नासिकादिः । यद्वा, प्रकारान्तरेण समुच्चयनिवारणार्थं वाग्रहणम् । तेन प्रत्येकं निमित्तता । षण्डः प्रसिद्धः । अष्टविधनपुंसकग्रहणार्थं आदिपदम् । ज्येष्ठे सोदरे औरससोदरे एवंविधे सति । इतरः पुत्रः कनिष्ठबन्धुर्वा पूर्वोक्तं सर्वं कुर्यादित्यर्थः ।

त्रिमवि.

( २ ) छिन्नहस्तादाविति । नन्वत्र कुतो नाधिकार इति चेत् ? आधानं हि नैमित्तिकम्, तत्र ' आरोहतं दशतं शक्वरीरनु ' इति मन्त्रे दशाङ्गुलिभिररणिग्रहणमुक्तम्, तद्बाधप्रसङ्गात् । आदिना चतुरङ्गुलादिग्रहः । षडङ्गुलस्य त्वधिकारः, एकादशान्तर्दशसंभवन्यायात् । एको हस्तः षडङ्गुलः, अपरस्तु चतुरङ्गुलः, तस्यापि नाधिकारः । यदङ्गुलित्वं तस्या वस्तुत एकत्वाद्शत्वा-

( १ ) त्रिम. ११६७–६८ ; सिन्धु. ११६४ ; बाल. ११८९ पृ. २५२ भिन्नोदर्ये ( भिन्नोदरे ) ; पृ. २६९ सजीवार्थं नास्ति ; ...

( १ ) त्रिम. ११६९ ; सिन्धु. ११६५ षण्डादि ( पण्ढादि ) ; बाल. ११८९ पृ. २५२ सिन्धुवत् . ...

पूरणात्। एवमाधानानन्तरं हस्तादिच्छेदेऽग्निमेष्वधिकारः, नित्यत्वात्। एवं काणविकर्णादेरप्यधिकारः, हिरण्यकेशिना कर्माशक्तिहेतोरेवाङ्गवैकल्यस्य निषेधात्, 'याज्यस्य प्रथमैस्त्रिभिः' इति ऊनाङ्गस्याप्यधिकारोक्तेः। कृम.११६४

तयोस्त्वनधिकारित्वान्नैतस्याधिक्रियाक्षतिः।
ज्येष्ठे श्रद्धाविहीने सत्याधेयं तदनुज्ञया॥
पितुः सत्यप्यनुज्ञाने नादधीत कदाचन॥

(१) तयोरिति। तयोस्तत्रानधिकारादिति। अथ सोदरस्य विशेषमाह—ज्येष्ठ इति। ज्येष्ठे पूर्वोक्तदोषरहिते ज्येष्ठे सोदरे श्रद्धाविहीने सति कामतोऽकारिणि, आज्ञा प्राप्यैवाधिकारः। त्रिमवि.

(२) यत्तु 'पितुः सत्यप्यनुज्ञाने नादधीत कदाचन' इति, तत्सत्यधिकारे ज्ञेयम्। सिन्धु.११६७

(३) सत्यधिकारे इति। पितुरधिकारे सति अनुज्ञयाऽपि नाधिकारः, किन्त्वनधिकार एवेत्यर्थः। अत्राहुः—पित्रादिः द्वेधा, अधिकारी अनधिकारी चेति। तत्र निषेधोऽविशेषात्सकलविषयः। प्रतिप्रसवस्तु अधिकारिणि पित्रादौ विशेषतो नास्त्येव। अनधिकारिण्यपि कादाचित्कनास्तिकत्वकादाचित्कान्धत्वादिके तत्र पुनःकरणसंभावनाया पुत्रादेरनधिकार एव, अल्पबाधेनोपपत्तौ बहुबाधस्यान्याय्यत्वात्। जात्यन्धपतितादौ तु पित्रादावनधिकारिण्यपि तदाज्ञयैवाधानादावधिकारः, न्यायवचनसिद्धानधिकारोपजीवनेन तन्मनोनुकूलमात्रार्थतया आज्ञावाक्यस्यातिलाघवात्। अतिनास्तिकादौ तु पित्रादौ अत्यन्तनास्तिक्यादिना पुनःकरणसंभावनानिवृत्तावप्यग्रजाद्यनुमत्यैवाधिकारः, पितुस्त्वनुमत्याऽपि न, निषेधबाधकाज्ञावाक्यबाधकतया निषेधप्रतिप्रसवार्थत्वे लाघवात्। अत एव श्रद्धया विशेषेण हीने इत्युक्तम्। अत एव 'दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया' इति हारीतमपि एतद्विषयमेव। अथवाऽनुमत्या कनिष्ठे कृताधानादौ पश्चान्नास्तिक्यनिवृत्ते प्रायश्चित्तादिपूर्वकमाधानादौ प्रवृत्तेऽग्रजे विवाहाग्निहोत्रयोर्विशेषं वक्तुमिदम्, पश्चाद्विवाहे दोष एव न त्वाधानादाविति। यदा तु कादाचित्कनास्तिक्येन पित्रादावाधानादिकरणसंभावना, तदाऽनुज्ञायामपि नाधिकारः। अधिकारिणि तु पित्रादौ दूरापास्त एवाधिकार इति। कृम. ११६५-११६६

[2]पितर्यनाहिताग्नावप्यादधीताथ वा सुतः।
अग्निहोत्रं च जुहुयादिति लौगाक्षिकारिका॥

लौगाक्षिमतमुपन्यस्यति—पितरीति। अनुज्ञयेत्यध्याहारः, 'अनुज्ञातस्तु पित्रा तु आधानं सर्वदा भवेत्' इति सुमन्तुस्मरणात्। तथा च विहितप्रतिषिद्धत्वाद्विकल्पः। त्रिमवि.

[3]पिता यस्याग्रजो भ्राता न कुर्याद्वा पितामहः।
तपोऽग्निहोत्रं यज्ञं वा सर्वं कुर्यात्कठाशयात्॥

एतदर्थे कठसंमतिमाह—पितेति। तपः आधानम्। त्रिमवि.

[4]योगशास्त्राभियुक्ते वा कुब्जे वा वामने जडे।
गद्गदे वाऽग्रजे दुष्येत्परिविन्दन्न चानुजः॥

अथ सोदरगतनिमित्तान्याह—योगेति। योगः पातञ्जलम्। कुब्जः भग्नपृष्ठः। वामनो ह्रस्वः। जडो वेदशून्यः। गद्गदः स्खलद्गीः। एषां शुचित्वेऽपि कर्मानर्हत्वमसामर्थ्यात्। न हि सर्वस्मिन् इष्टिवेद्यादौ स्रुगासादनादिसंभवः। तदर्थे च स्रुगादिपरिमाणबाधेन कार्यानुपपत्तेश्चेति दिक्। त्रिमवि.

[5]देशान्तरस्थो न ज्येष्ठो ज्ञायेताहितवानिति।
कनीयानधिकारी चेदादधीताविचारयन्॥

(१) त्रिम. १७०-७१; श्राप्र. ८७ प्रथमार्धं नास्ति; बाल. १।८९ पृ. २५२ : पृ. २६९ धेय (धानं) प्रथमार्धं नास्ति; कृम. ११६७ (=) धेय (धानं) प्रथमार्धं तृतीयार्धं च नास्ति.

(१) त्रिम. १७१-७२; श्राप्र. ८७; बाल. १।८९ पृ. २५२.

(२) त्रिम. १७२-७३; श्राप्र. ८७ सर्वं (स वा); बाल. १।८९ पृ. २५२ श्राप्रवत् : पृ. २६९ वा सर्वं (वाऽऽज्यया); कृम. ११६८ वा सर्वं (वाऽऽज्यया).

(३) त्रिम. १७३-७४; बाल. १।८९ पृ. २५२ गद्गदे (गदजे).

(४) त्रिम. १७४-७५; बाल. १।८९ पृ. २५२.

देशान्तरस्थे सत्यपि ज्येष्ठे नानधिकारः इत्याह — देशान्तरस्थ इति। त्रिमवि.

प्रोषितस्तु यदा ज्येष्ठो ज्ञायेतानाहितानलः।
षड्वत्सरान् प्रतीक्षेत आदधीतानुजस्ततः॥

प्रोषितज्येष्ठस्य तु कालविशेषप्रतीक्षयैवाधिकार इत्याह — प्रोषित इति। अत्रत्यो विशेषो हेमाद्रौ कल्पतरौ च ज्ञेयः। त्रिमवि.

यद्वा पापं भवेज्ज्येष्ठात् पूर्वं भार्यापरिग्रहे।
यागाग्निहोत्रे तन्नास्तीत्याह कश्चिन्मतान्तरम्॥

परीष्टिदोषस्य मतान्तरेण वैकल्पिकत्वमाह — यद्वेति। यागः आधानपूर्णमासादिः। एतच्च अनुज्ञापरम्, 'सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत्। दारैस्तु परिविन्देरन्नाग्निहोत्रेण नेज्यया॥' इति स्मरणात्। इदं च विवाहे प्रायश्चित्ताधिक्यज्ञापनार्थं वचनमिति केचित्। त्रिमवि.

पितरि प्रेतभार्ये वा देशान्तरगतेऽपि वा।
अधिकारविघातस्तु न पुत्रस्योपजायते॥

'न कुर्याज्जनके ज्येष्ठे' इति प्रागुक्तस्यापवादमाह — पितरीति। अत्रापि देशान्तरपुरस्कारेण षड्वर्षादिकालप्रतीक्षणं ज्ञेयम्। त्रिमवि.

## रेणुकारिकाः *

[1] पर्याधानपरिवेदननिषेधः, पर्याधानपरिवेदनापवादाः

औपसथ्यं विवाहं च प्रयोगे प्रथमे स्थितः।
न कुर्याज्जनके ज्येष्ठे सोदरे चाप्रकुर्वति॥

क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे।
नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि चौरसे॥

* गदाधरभाष्ये यद्यपि एते श्लोका अनिर्दिष्टास्तथापि अग्निविषयकरेणुकारिकास्वुपलभ्यमानत्वाद् रेणुकारिकात्वेन संगृहीताः।

(१) त्रिम. १७५-७६; श्राप्र. ८७ ज्ञायेतानाहितानलः (न ज्ञायेताहितानलः) ततः (तदा); बाल. १।८९ पृ. २५२ आदधी (ह्यादधी) शेषं श्राप्रवत्.

(२) त्रिम. १७६-७७; श्राप्र. ८७ पू.; प्रका. १४.

(३) गभा. ३४-३५ (=),

पङ्ग्वन्धमूकबधिरपतितोन्माददूषणे।
संन्यस्ते छिन्नकर्णादौ यद्वा षण्ढादिदूषणे॥

जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम्।
ज्येष्ठे श्रद्धाविहीने च सत्याधेयं तदाज्ञया॥

पितृसत्त्वेऽप्यनुज्ञातो नाऽऽदधीत कदाचन।
जीवत्पितरि चाऽऽदध्यादाहिताग्निः स वै यदि।
तथैव भ्रातरि ज्येष्ठे न यजेन्न विवाहयेत्॥

अनाहिताग्नौ पितरि योऽग्न्याधेयं करोति हि।
अरण्योरग्निमारोप्य तमाधाप्याऽऽदधीत सः॥

उद्वाहं चाग्निसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः।
परिवित्तिः परीवेत्ता नरकं गच्छतो ध्रुवम्॥

अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ।
पितृव्यः क्षत्रियोत्पन्नः परनारीसुतोऽपि वा॥

विवाहे चाग्निसंयोगे न दोषः परिवेदने।
देशान्तरस्थक्लीबैकवृषणानसहोदरान्॥

वेश्यानिष्ठांश्च पतितान् शूद्रतुल्यातिरोगिणः।
जडमूकान्धबधिरकुब्जवामनखञ्जकान्॥

अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च।
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुटिलोन्मादरोगांश्च परिविन्दन्न दुष्यति॥

गीतवादित्रनिरतान्नर्तकान्पारदारिकान्।
वशिकान् गारुडांश्चैव परिविन्दन्न दुष्यति॥

योगशास्त्राभियुक्ते च द्विजे प्रव्रजिते तथा।
नास्तिके चाग्निसंयोगे न दोषः परिवेदने॥

पिता पितामहो यस्य अग्रजो वाऽप्यनग्निमान्।
इज्यातपोऽग्निसंयोगे न दोषः परिवेदने॥

परिवेदनवाक्ये ये श्रूयन्ते दोषसंयुताः।
तेषामप्यधिकारोऽस्ति प्रायश्चित्तादनन्तरम्॥

पिता पितामहो वाऽपि नास्तिको वाऽप्यनाश्रमी।
यस्य दोषोऽस्ति नैवेह तस्याऽऽधाने कदाचन॥

अग्रजे सति निर्दुष्टे यवीयानग्निमान् भवेत् ।
प्रतिपर्व भवेत्तस्य ब्रह्महत्या न संशयः ॥

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य विरूपा या च कन्यका ॥

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥

ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ।
अनुज्ञातोऽपि सन् पित्रा नादध्यान्मनुरब्रवीत् ॥

धनवार्द्धुषिकं राजसेवकं कर्षकं तथा ।
प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥

प्रोषितश्चेत्त्रिवर्षं स्यात्त्र्यब्दादूर्ध्वं समाचरेत् ।
आगते तु पुनस्तस्मिन्पादकृच्छ्रद्वयं चरेत् ॥

देशान्तरस्थो न ज्येष्ठो ज्ञायेताऽऽहितवानिति ।
कनीयानधिकारी चेदादधीताविचारयन् ॥

द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितो भ्राता श्रूयमाणः पुनः पुनः ॥

प्रोषितस्तु यदा ज्येष्ठो ज्ञायेताऽनाहितानलः ।
षड्वत्सरान्प्रतीक्षेत आदधीताऽनुजस्तथा ॥

पितरि प्रेतभार्ये वा देशान्तरगतेऽपि सन् ।
अधिकारविघातो हि न पुत्रस्योपजायते ॥

सोदराणां च सर्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥



# विवाहकालः

## हिरण्यकेशिगृह्यसूत्रम्

नग्निकात्वं विवाहे इष्टम्

भार्यामुपयच्छेत्सजातां नग्निकां ब्रह्मचारिणी-मसगोत्राम् ॥

नग्निका आसन्नार्तवाम् । नग्न(ज) परिपठितो वस्त्र-विक्षेपणार्थः । ततोऽर्हे कर्तरि च स्यात् क्तो बहुलं कृत् । तस्माद्वस्त्रविक्षेपणार्हा नग्निका मैथुनार्हेत्यर्थः ।

मातृदत्त.

## मानवगृह्यसूत्रम्

नग्निकात्वं विवाहे इष्टतमम्

बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेत समान-वर्णामसमानप्रवरां यवीयसीं नग्निकां श्रेष्ठाम् ॥

नग्निकां नग्नैव नग्निका, स्वार्थे कप्रत्ययः । नग्निकां अप्राप्तस्त्रीभावां अयौवनरसां उपयच्छेतेति ।

अष्टाभा.

## वाराहगृह्यसूत्रम्

अनग्निकात्वं विवाहे इष्टम्

बन्धुमतीं कन्यामस्पृष्टमैथुनामुपयच्छेता-नग्निकाम् ॥

## गोभिलगृह्यसूत्रम्

नग्निकात्वं विवाहे इष्टतमम्

नग्निका तु श्रेष्ठा ॥ *

नग्निका इत्यनागतार्तवा उच्यते । 'नग्निकाऽनागतार्तवा ' इत्यमरात् । सा तु श्रेष्ठा इति तादृशान् दारानुद्वहेदिति केचिद्व्याचक्षते । नैतत्सुन्दरम्, दारानित्युपात्त-विभक्तिवचनातिक्रमात् । तस्मात् दारकरणेन सहास्य न संबन्धोऽपि तु ' एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । गौरीं वाऽप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत् ॥ ' इति वचनात् दारान् करिष्यता तावत् गौरीप्राप्तावेव यतनीयम्, दातुस्तु नग्निका श्रेष्ठेति सूत्रार्थः । तथा च वसिष्ठः– ' तस्मान्नग्निका दातव्या ' इति ।

मृदुला.

## जैमिनिगृह्यसूत्रम्

अनग्निकात्वं विवाहे इष्टम्

जायां विन्देतानग्निकां ... ... ... ॥

अनग्निकां यस्मिन् वयसि स्वयमेव लज्जया वासः परिदधाति तद्वयस्काम् ।

श्रीग्या.

---

* मथुरापुरस्थशास्त्रप्रकाशकार्यालयेन प्रकाशिते गोभिलगृह्यसूत्रे तु " अनग्निका तु श्रेष्ठा " इति सूत्रं पठित्वा पं. सत्यव्रतसामश्रमी तद्व्याख्यामेवं करोति—" तत्र च तु अपि, अनग्निका, यस्याः कन्यायाः ऋतुर्नाभवत्, यावच्च नग्ना उलङ्गा ( ? ) अपि विचरितुं शक्नुयात् सा नग्निका, तद्भिन्ना अनग्निका ऋतुमती प्राप्तयौवना । सैव श्रेष्ठा प्रशस्या । कन्याया ऋतौ संजाते ह्येवाभि-भोग्यत्वमुपयुज्यते । तदव च ' सोमो ददद्गन्धर्वाय ' इति मन्त्रप्रयोगो युज्यते, नान्यथा, इत्येव दारकर्मणि ऋतुमत्याः प्राशस्त्यम् । अत एवाह मनुरपि— 'देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः । ' ( ९।९५ ) इति । तदेवं प्राप्तायां प्राप्तयौवनाया-मासन्नयौवनाऽपि नोद्वाह्येति फलितम् " इति । गोभिलसूत्रस्या-न्यष्टीकाकारः चन्द्रकान्ततर्कालङ्कारस्तु " नग्निका श्रेष्ठा " इत्येव पठितवान्, गृह्यासंग्रहभाष्ये " तां प्रयच्छेत्त्वनग्निकाम् " ( गृ. सं. २।१७ ) इति पदानि " नग्निका तु श्रेष्ठा " इति सूत्रमुद्धृत्य तदनुसारेण " अनग्निकामपि दद्यात्, नग्निका पुनः श्रेष्ठा, न पुनरनग्निकाया विवाह एव न भवतीत्यभिप्रायः " इति व्याख्या-तवांश्च । कतरः पक्षः श्रेयानिति प्रबलप्रमाणाभावान्न निर्णेतुं शक्यते । अतोऽस्माभिष्टीकाकृद्द्वयसंमतं पाठं तावदुपरि संस्था-प्यान्यः सटीकः पाठोऽस्यां टिप्पण्यां विदुषामवलोकनार्थं प्रदर्शितः ।

( १ ) हिगृ. १९।६।१ ; संर. ४०२ .

( २ ) मागृ. १।७।८ .

( ३ ) वागृ. १० .

( ४ ) गोगृ. ३।४।६ .

( १ ) जैगृ. १।२० .

## वैखानसगृह्यसूत्रम्

नग्निकात्वं गौरीत्वं वा विवाहे इष्टम्, नग्निकागौरीलक्षणे, प्राप्तरजस्काया विवाहे प्रायश्चित्तम्

¹मातुरसपिण्डां पितुरसमानऋषिगोत्रजातां लक्षणसंपन्नां नग्निकां कन्यां वरयित्वा ... ... ... ॥

²ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां वरयेत् । अष्टवर्षादा दशमान्नग्निका, रजस्यप्राप्ते दशवर्षादा द्वादशाद्गौरीत्यामनन्ति ॥

³रजःप्राप्तौ कन्यां विवाहे कृते कृच्छ्रं चरित्वाऽग्निमाधाय वैष्णवं सावित्रीं शतमावर्त्य हुत्वा तां पुनर्विवाहं कुरुते ॥

## गौतमः

कन्यादाने प्रयोजकमनृतुमतीत्वम्, ऋतुपूर्वमदाने दोषः

⁴प्रदानं प्रागृतोः ॥

कस्मिन् काले पित्रादिभिर्दातव्या इत्यत आह– प्रदानं प्रागृतोरिति । ऋतुदर्शनात् प्रागेना दद्यात् ।

\+ मभा.

⁵अप्रयच्छन् दोषी ॥

(१) यतः– अप्रयच्छन् दोषी । न केवलमप्रयच्छतो दाननिमित्तगुणाभावः । किं तर्हि ? दम्पत्योः ब्रह्महत्यासमं पापं भवति । यथाह वसिष्ठः– 'यावन्तः कन्यामृतवः स्पृशन्ति तुल्यैः सकामामभियाच्यमानाम् । भ्रूणानि तावन्ति हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः ॥' इति । मभा.

(२) तस्मिन्काले अप्रयच्छन् पित्रादिर्दोषवान् भवति । अत्र याज्ञवल्क्यः– 'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः । अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ॥' (यास्मृ. १।६३,६४) इति । गौमि.

¹प्राग्वाससः प्रतिपत्तेरित्येके ॥

दुर्विज्ञेयत्वादृतोः वाससः प्रतिपत्तेः प्राक् दद्यात्, यदैव लज्जिता तदैव दद्यादित्यर्थः । एवमेके मन्यन्ते । वरसंभवतो विकल्पः । * मभा.

²प्रयच्छेन्नग्निकां कन्यामृतुकालभयादिह ।
ऋतुमत्यां तु तिष्ठन्त्यां दोषः पितरमृच्छति ॥
³विवाह्या जननादूर्ध्वं चतुर्थाब्दात् परं स्त्रियः ।
आदशमाब्दपर्यन्तमा रजोदर्शनात् पुरा ॥

तस्मात् चौलकालादूर्ध्वं आ रजोदर्शनात् तस्मिन् बालिशानामपि नग्निकानां वाऽपि स्त्रीणा विवाह उक्तः । प्रपा. ३१५

## हारीतः

ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

⁴पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

असंस्कृता अविवाहिता । संर. ४९९

---

\+ गौमि. मभागतम् ।

(१) वैगृ. ३।२.

(२) वैगृ. ६।१२.

(३) वैगृ. ६।१३.

(४) गौध. १८।२२ ; गृक. ४९ ; मभा. ; गौमि. १८।२१ ; स्मृच. ७९ ; चका. ८०२ ; गृर. ४२ (=) ; पमा. १५७ (खण्डः २ भागः १) ; संप्र. ७७० प्रदानं (आप्रदानं).

(५) गौध. १८।२३ ; गृक. ४९ ; मभा. ; गौमि. १८।२२ ; स्मृच. ७९ ; चका. ८०२ ; गृर. ४२ (=) ; संप्र. ७७०.

* गौमि. मभागतम् ।

(१) गौध. १८।२४ ; गृक. ४९ ; मभा. ; गौमि. १८।२३ ; स्मृच. ७९ ; चका. ८०२ ; गृर. ४२ (=) ; संप्र. ७७०.

(२) प्रपा. ३१५ ; संप्र. ७६७ वसिष्ठगौतमावपि इत्युक्तम्. मूले नोपलभ्यते ।

(३) प्रपा. ३१५.

(४) सिन्धु. ११११ ; विपा. ७५७ ; वीवि. २।६।३२ (=) गेहे (गृहे) रज (ऋतुं) ; संर. ४९९.

## बौधायनः

नग्निकात्वं विवाहे इष्टम्, ऋतुपूर्वं कन्याया अदाने दोषः

[1]दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

( १ ) नग्निका अनागतार्तवा । मर.१९

( २ ) नग्निका नववार्षिकी रोहिण्यपरपर्याया ।
*चम.११०–१११

( ३ ) ऋतुमत्याः कन्याया अप्रदाने भ्रूणहत्यातुल्यदोषो भवतीत्येतद्वक्तुकामः कन्यादानप्रकरणमारभते— दद्याद्गुणवते इति । नग्निका वस्त्रपरिधानाभावेऽपि लज्जाशून्या । नोपरुन्ध्यादिति रजोदर्शनात्प्रागेव दद्यादित्यर्थः । बौवि.

[2]त्रीणि वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।
स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयम् ॥

तदतिक्रमे दोषमाह—त्रीणीति । यतश्चैतदेवं ततः ऋतुमत्तायाः प्रागेव दद्यादित्यभिप्रायः । बौवि.

[3]न याचते चेदेवं स्याद्याचते चेत्पृथक्पृथक् ।
एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत् ॥

( १ ) अयमर्थः— यदि कश्चिदपि कन्यां न याचते, तदा वर्षत्रयेण भ्रूणहत्या । अथ तुल्यरूपाय याचमानाय न ददाति, तदा प्रत्युत ब्रह्महत्या । पातकं चात्र भ्रूणहत्यादोष एवेति । गृक.५२

( २ ) किं सर्वत्रैतावदेव ? नेत्याह— न याचते इति । न याचते न प्रार्थयते चेत् कश्चिदपि ।
बौवि.

* बाल. चमवत् ।

( १ ) बौध. ४।१।१२. शेषः सलादिनिर्देशः वरपरीक्षाप्रकरणे ( संका. पृ. ६०१ ) द्रष्टव्यः ।

( २ ) बौध. ४।१।१३ हत्याया ( हत्यायै ) ; गृक. ५२ भ्रूण ( ब्रह्म ) ; गृर. ४४ यः कन्यां ( कन्यां यो ) भ्रूण ( ब्रह्म ) ; संप्र. ७७० ; मुक्ता. १३६ .

( ३ ) बौध. ४।१।१४ ; गृक. ५२ ; गृर. ४४ चेदेवं स्याद् ( तावदेव ) ; संप्र. ७७० चेदेवं ( च देयं ) चेत् ( च ) ; मुक्ता. १३६ .

## आपस्तम्बः

ऋतुपूर्वं द्वादशवर्षपूर्वं वा कन्यादानम्, नग्निकागौरीरोहिणीलक्षणानि, ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः, कन्याया अधिकवर्षो वरः

[1]त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥
[2]अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ॥

( १ ) एतदपि प्रायिकं, कासांचित्तत्रापि रजोदर्शनासंभवात् । चका. ८०२

( २ ) एतच्च प्रायिकाभिप्रायं, न पुनर्द्वादशे एव रजस्वला भवतीति, कासांचिदर्वागपि रजोदर्शनसंभवात् । अत एव यमसंवर्तौ — 'दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला' इति । मुक्ता. १३६

[3]प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥
[4]प्राप्ते च द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ।
यस्तां विवाहयेन्मोहात् स ज्ञेयो वृषलीपतिः ॥
[5]स्यात्पञ्चदशवर्षो यो विवाहस्तस्य बोधितः ।
द्वित्रिवर्षाधिकन्यूना वरा तां विवहेत्स्त्रियम् ॥

( १ ) चका. ८०१ ; विसौ. ७ तु भार्यां विन्देत ( वा भार्यां विन्दति ) दैवज्ञचिन्तामणौ इत्युक्तम् ; संप्र. ७६७ .

( २ ) स्मृच. ७९ नववर्षा तु रोहिणी ( दशवर्षा तु कन्यका ) ; चका. ८०१ नववर्षा तु रोहिणी ( दशवर्षा तु कन्यका ) रजः स्त्रीणां प्रवर्तते ( कुमारीत्यभिधीयते ) याज्ञवल्क्यः : ८०२ तु द्वादशे ( द्वादशमे ) ; संप्र. ७७१ यमपराशरापस्तम्बाः ; मुक्ता. १३५–१३६ ( अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला । संप्राप्ते द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ॥ ) .

( ३ ) चका. ८०२ यमपराशरापस्तम्बाः ; संप्र. ७७१ पिता पिबति शोणितम् ( पिबन्ति ऋतुशोणितम् ) यमपराशरापस्तम्बाः ; संग. २०० पिता पिबति ( पिबेत्स ऋतु ) यमपराशरापस्तम्बाः .

( ४ ) चका. ८०१ ; संप्र. ७७१ .

( ५ ) प्रपा. ३१५ ( स्यात्पञ्चदशवर्षस्य . विवाहस्तस्य बोधितः । द्वित्रिवर्षाधिकां न्यूनां वरां तां विवहेत्स्त्रियम् ॥ ) इति मूलपुस्तके पाठः .

## वसिष्ठः

नग्निकात्वं विवाहे इष्टम्, ऋतुपूर्वं कन्याया अदाने दोषः

[1]प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

कन्याशब्देन लज्जाद्यभिमानरहितवयोयुक्ता विवक्षिता ।
सर. ४५७

[2]यावन्तः कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्मवादः ॥

तुल्यैः कुलादिना । गृक. ५१

अथाप्युदाहरन्ति—

[3]पितुः प्रमादात्तु यदीह कन्या
वयःप्रमाणं समतीत्य दीयते ।
सा हन्ति दातारमुदीक्षमाणा
कालातिरिक्ता गुरुदक्षिणेव ॥

कालातिरिक्ता अतिक्रान्तदानकाला यथा गुरोर्दक्षिणा अदीयमाना दातारं हन्ति पापोत्पत्तिनिमित्तं भवति तथेत्यर्थः । * गृक. ५१

## विष्णुः

वयसा त्रिगुणो वरः एकगुणा च भार्या प्रशस्ता

[4]वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणो वरः ।
त्र्यष्टवर्षोऽष्टवर्षां वा वयोमात्रावरा च या ॥

'वयोमात्रावरा च या' इत्युक्तेर्द्व्यादिकतिपयमासैरूना नोद्वाह्या । * मुक्ता. १२५

अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[1]पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति ॥

न दुष्यति न दण्ड्यो भवतीत्यर्थः । संप्र. ७६८

## महाभारतम्

वयसा त्रिगुणो वरः एकगुणा च भार्या

[2]त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

नग्निकाऽनागतार्तवा । पूर्वेषां, लोकमिति शेषः ।
संप्र. ७६६

सप्तमवर्षादूर्ध्वं कन्याविवाहः प्रशस्तः

[3]सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः ॥

## मनुः

कन्याविवाहे उपनयनकालातिदेशः, कन्याया नग्निकात्वं वरान्न्यूनवयस्कत्वं वा विवाहे इष्टम्, ऋतुपूर्वं कन्याया अदाने दोषः

[4]वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ॥

---

* गृर. गृकवत् । अदीयमाना इत्यत्र दीयमाना इति ।

(१) वस्मृ. १७।६२ ; गृक. ५१, स्मृच ८० भयात्पिता (भयान्वितः) ; चका. ८०२ ; गृर. ४३ भयात् (भिया) ; पमा. ४८१-४८२ ; प्रपा. ३१५ भयात्पिता (भयादिह) हि (तु) गौतम ; संप्र. ७५५ : ७६७ प्रपावत्, वसिष्ठगौतमावपि इत्युक्तम् ; मुक्ता. १३५ ; विपा. ७२९ प्रपावत्, क्रमेण शौनकः ; आन. १७१ ; कृभ. १०७७ (=) उत. ; संर. ४५७.

(२) वस्मृ. १७।६३ यावन्तः (यावच्च) ; गृक. ५१ यावन्तः (यावत्तु) मामभि (मामपि) ताभ्यां (तासां) ; मभा. १८।२३ ; गृर. ४४ यावन्तः (यावत्तु) ; संप्र. ७७० गृकवत्.

(३) वस्मृ. १७।६०-६१ ; गृक. ५०-५१ दीयते (निहेद्) मुदीक्षमाणा (मदीयमाना), गृर. ४३ ; संप्र. ७७० गृकवत्.

(४) मुक्ता. १२५ ; आन. १६९.

* आन. मुक्तावत् ।

(१) विस्मृ. २४।४१ ; गृक. ४९ विदुष्यति (च दुष्यति) ; चका. ८०२ न विदुष्यति (च न दुष्यति) ; गृर. ४२ हरंस्तां न विदुष्यति (हरेत्तां तु इदस्तनिः) ; विमी. ७ पितृवेश्मनि (पितुर्गेहे तु) हरंस्तां न विदुष्यति (उद्हंस्तां पतेन्नरः) ; संप्र. ७६८ चकावत्.

(२) भा. १३।४४।१४ ; गृक. ४५ दशवर्षां (षोडशवर्षां) ; गृर. ३९ गृकवत् : ४७ गृकवत्, पू. ; उत. १२३ गृकवत्, पू. ; संप्र. ७६६ सप्तवर्षाम (स पूर्वेषाम) शेषं गृकवत् ; सिन्धु. १०६५ दशवर्षां (षोडशाब्दां) पू. ; रत्न. ५४ ; कृभ. १११३ (=) दशवर्षां (दशाब्दां तु)

(३) गभा. ६६ यमः ; उत. १२४ स्मृतिः ; सिन्धु. १०६५ ; रत्न. ५४ ; संग. २०० यमः. वस्तुतस्तु कन्येदं वचनमिति न निश्चेतुं शक्यते ।

(४) मस्मृ. २।६७. 'संस्कारो वैदिकः स्मृतः' इत्यत्र केषांचिन्निबन्धकाराणां 'औपनायनिकः परः' इति पाठः । शेषः स्थल्यादिनिर्देशः उपनयनप्रकरणे करिष्यते ।

वैवाहिको विधिः 'स्त्रीणामौपनायनिकः परः' इत्युक्तेः ये गर्भाष्टमपञ्चमवर्षादयः कालास्ते कन्याविवाहेऽपि ग्राह्याः । * कुभ.१०६५

प्रयच्छेन्नग्निकां कन्यामृतुकालभयान्वितः ।
ऋतुमत्यां हि तिष्ठन्त्यामेनो दातारमृच्छति ॥
²त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

( १ ) इयत्ता कालेन यवीयसी कन्या वोढव्या न पुनरेतावद्वयस एव विवाह इत्युपदेशार्थः । अथापि न यथाश्रुतवर्षसंख्यैव । किं तर्हि, बहुना कालेन यवीयसी वोढव्या । न ह्येतद्विवाहप्रकरणे श्रुतम्, येन संस्कार्यविशेषणत्वेन तदङ्गं कालो दशादिवर्षो पञ्चविंशत्यादिवर्षो च निवर्तयेत् । ननु च वाक्यान्तरस्थस्याप्यङ्गविधिर्भवत्येव । सत्यं, इह प्रकरणोत्कर्षेण पाठादाचार्यस्याभिप्रायान्तरमनुमीयते । तथा शिष्टसमाचारः । सुतस्य च पुनर्दारक्रियाया नैष कालः सभवतीति 'पुनर्दारक्रियां कुर्यात्' इति नोपपद्यते । मेधा.

( २ ) तत्र विष्णुपुराणे — 'वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् ।' मनुयमौ — 'त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥' महाभारते — 'त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम् । एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥' तदयमेषां वचनानामर्थः — अष्टवर्षपर्यन्ता कन्या त्रिगुणवयसैव विवाहिता; उपरि तु द्वादशवर्षपर्यन्ता न्यूनत्रिगुणवयसा वा, द्वादशवर्षोपरि षोडशवर्षपर्यन्ता सार्धद्विगुणत्रिगुणकिंचिन्न्यूनत्रिगुणवयसा विवाहिता प्रशस्ततरा भवति । अल्पवयस्कमात्रेण विवाहिताऽपि पत्नी भवति, न तु सम्यक् प्रजार्थं भवति । धर्मेऽपि सीदति सति सत्वरोऽपि यवीयसीत्वमात्रादरेण विवाहं कुर्यादिति । गृक.४५-४६

( ३ ) त्रिंशद्वर्ष इत्येतद्ग्रहणान्तिकव्रतचरणपक्षे । धर्मे स्वकर्तव्ये गार्हस्थ्यधर्मे सीदति मन्दीभवतीति त्वराहेतुरुक्तः । मवि.

( ४ ) सत्वरः अल्पवया इत्यर्थः । एवं च यावद्रजोदर्शनं न भवति तावत् कन्योद्वाहो न विरुद्ध इत्युक्तं भवति । स्मृच. ७९

( ५ ) त्रिंशद्वर्षः पुमान् द्वादशवर्षवयस्कां मनोहारिणीं कन्यामुद्वहेत् । चतुर्विंशतिवर्षो वाऽष्टवर्षाम् । गार्हस्थ्यधर्मेऽवसादं गच्छति त्वरावान् । एतच्च योग्यकालप्रदर्शनपरं, न तु नियमार्थम् । प्रायेणैतावता कालेन गृहीतवेदो भवति, त्रिभागवयस्का च कन्या वोढुर्यूनो योग्येति । गृहीतवेदश्चोपकुर्वाणको गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वर इत्यस्यार्थः । मभु.

( ६ ) अत्र द्वादशवर्षकन्या त्रिंशद्वर्षेण विवाहिता प्रशस्ता भवति, तथा त्रिंशद्वर्षेण षोडशवर्षा विवाहिता प्रशस्ता भवतीति मनुविष्णुभ्यां बोधनात् एतदल्पवर्षवयस्का कन्या तत्त्रिगुणवयस्केन विष्णुपुराणानुसारेण विवाहिता प्रशस्ततरा । यवीयसी तु पुंमात्रेण विवाहिता पत्नी भवति, धर्ममूलं तु न भवति । तदाह— 'धर्मे सीदति सत्वरः', विवाहं कुर्यादिति वाक्यार्थः । गृर.३९

( ७ ) ब्राह्मादिविवाहे वयःपरिमाणमनुक्तं विकल्पेनाह— त्रिंशदिति । वहेत् उद्वहेत् । त्र्यष्टवर्षः, उत्कटरागापेक्षया गार्हस्थ्यधर्मापेक्षया वा । अत एवाह— धर्मे सीदतीति । 'उद्वहेत्सदृशीं भार्याम्' इत्यस्य शेषोऽयं स्थानभ्रष्टः । 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादिश्रौताधानस्य अपत्योत्तरकालीनत्वात् धर्मोऽत्रायसध्यास्याग्निहोत्रः । मच.

---

* व्याख्यानान्तरेषु अस्यानिर्देशस्य काल्परतायाः स्पष्टमुक्तत्वात्तान्यत्र न संगृहीतानि ।

( १ ) मस्मृ. ९।८८ इत्यस्योपरिष्टात् प्रक्षिप्तः श्लोकोऽयम् ।

( २ ) मस्मृ. ९।९४ क., ख., घ. पुस्तकेषु दर्शो वहे (दर्शोद्वहे); गृक. ४५ मनुयमौ ; स्मृच. ७९, ८० दर्शो वहे (दर्शोद्वहे); मभु. स्मृचवत् ; चका. ८०१, ८०२ ; गृर. ३९ ; पमा. ४७४ : १५७ (खण्डः २ भागः १) स्मृचवत् ; निप. २८१ (=) उत्त.; विमी. ७३उत्तरार्धे (त्रिंशद्वर्षोऽष्टवर्षां वा भार्यां विन्दति धर्मतः ।) देवशाचिन्तामणी इत्युक्तम ; संप्र. ७६६ त्र्यष्ट (अष्ट) मनुयमौ ; धम. ९७ ; मुक्ता. १२६ पू. ; संम. ५३, स्मृचवत् ; सिन्धु. १०५५ त्र्यष्ट (अष्ट) उत्त., क्रमेण महाभारतम् : १०६६ ; रत्न. ५४ स्मृचवत् ; भान. १७५ ; बाल. १।५२ स्मृचवत् ; कुभ. ११११ दर्शो (यदा) शेषं स्मृचवत्.

[1]अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत् ।
महदेनः स्पृशेदेनमन्यथैष विधिः सताम् ॥

अत एवाप्रवृत्ते रजसि ऋतावप्रवृत्ते एव प्रसङ्गावस्थामेव नग्निका पिता सकृदेव दद्यात् । वाचा दाने प्रवृत्ते पुनरप्रसङ्गार्थं सकृदित्युक्तम् । अदाने प्रागृतोर्महानधर्मः स्तुर्भवेत् । अत एनो मा ध्याक्षीदिति नग्निकामेव दद्यादित्येष विधिः साधूनाम् । एष साध्वाचार इति प्ररोचना । नाभा.

## बृहस्पतिः

नग्निकात्वं वरस्याप्तवयस्कत्व वा विवाहे ग्रहणम्, ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[2]त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥
[3]गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥
[4]रोमोद्भवे शशी भुङ्क्ते गन्धर्वः कुचदर्शने ।
अनलस्तु रजोयोगे स्त्रियो भुङ्क्ते तु नान्यथा ॥
[5]व्यञ्जने तु कुलं हन्यात्पितॄन् हन्यात्पयोधरे ।
हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका ॥
[6]पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

यदा तु कन्यैव रजस्वला भवति तदा तत्पितुर्भ्रूणहत्यामाह बृहस्पतिः—पितुर्गृहे इति । भ्रूणहत्या गर्भहत्या । सा च प्रत्यृतु वेदितव्या । तथा च याज्ञवल्क्यः — 'अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ' । स्मृच. ८१

[1]यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
[2]वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिनेदिने ॥

अत्र ब्राह्मणपदोपादानात् ब्राह्मणस्यैवायं रजस्वलापरिणयननिषेधः, न क्षत्रियादीनां, कुन्त्यादिषु तथा दर्शनात् । संग.२०१

[3]यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥
वृषलीगमनं चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥

## व्यासः

गौर्यादिलक्षणानि, ऋतुपूर्वकाले विवाहार्हत्वम्, ऋतुपूर्वं कन्याया अदाने दोषः

[4]अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

अत्र वृषली रजस्वला, तेन द्वादशाब्दात्प्रागपि रजोदर्शने वृषली वेदितव्या । विसौ.७

[5]गौरीं ददद्ब्रह्मलोकं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददत्स्वर्गलोकं रौरवं तु रजस्वलाम् ॥

---

(१) नामं. १३।२७ ; नास्मृ. १५।२७ अतोऽ ( अतः ) थैष ( थैवं ).

(२) स्मृच. ८० ; पमा. ४७४ ; मंप्र. ७६७ आपस्तम्बः ; चम. ९७ ; मुक्ता. १२५ नग्निकाम् ( मानवः ) ; संम. ५३ ; मान. १६९ मुक्तावत् ; याल. २।५२ पृ. १७५ ; कुभ. १११३ मनुः.

(३) पमा. १५६ ( खण्डः २ भागः १ ).

(४) दीक. १।७१ .

(५) चका. ८०३ ; संप्र. ७६९ दिष्टं ( दिष्टिं ) अत्रिबृहस्पती ; संग. २०० अत्रिबृहस्पती .

(६) स्मृच. ८१ ; चका. ८०० गृहे ( गेहे ) : ८०२ ; पमा. १२१ ( = ) : १२९ ( = ) उत्त. ; संप्र. ७६८ बृहस्पतिव्यासाः ; मुक्ता. १३६ कन्या ( नारी ).

(१) चका. ८०० ; विसौ. ६ स विप्रो ( ब्राह्मणो ) वत्सः ; संप्र. ७७१ ; मुक्ता. १३६ : १४४ भाष्यो ह्य ( भाष्यस्त्व ) संवर्तः.

(२) चका. ८०० ; संप्र. ७७१ ; मुक्ता. १३६ ; संग. २०१ सततं सूतकं तस्य ( सूतकं तस्य विज्ञेयं ).

(३) मुक्ता. १३६ . इदं श्लोकद्वयं यमस्मृतावपि ।

(४) विसौ. ७ अत ऊर्ध्वं रजस्वला ( द्वादशी वृषली स्मृता ) ; संग. २०० .

(५) संग. २०० .

## देवलः

ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[1]पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
[2]वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

त्रिधा वृषली देवलोक्ता —— वन्ध्येति । तत्र रजस्वलापरिणयने दोषः । रजोदर्शनाभावे तु द्वादशाब्दाया अपि विवाहे न दोषः, यतः 'द्वादशे वृषली भवेत्' इत्यादौ वृषलीपदं रजस्वलार्थकम् । तथा च विवाहात्पूर्वं रजोदर्शनं यथा न भवति तथा कार्यमिति, न तु द्वादशे वर्षे तस्या वृषलीसंज्ञा, अन्यथा — 'त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥' इति मनुवचनविरोधात् ।

कृभ. ११११२

[3]यस्त्वेनामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

कन्यावरयोर्मध्ये या रजस्वला जाता तां य उद्वहेत् तमश्राद्धेयं अपाङ्क्तेयं वृषलीपतिं विद्यादित्यन्वयः ।

स्मृच. ३९९ ( श्रा. )

## उशना

अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[4]वन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

यस्त्वेनामुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

## यमः

कन्याया नग्निकात्वं वरान्न्यूनवयस्कत्वं वा विवाहे इष्टम्, ऋतुकालपूर्वं कन्याया अदाने दोषः, गौरीरोहिणीकन्यालक्षणानि, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[2]त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥
[3]त्र्यष्टको विवहेत्प्राज्ञो ह्यष्टाब्दां विधिपूर्वकम् ।
चत्वारिंशत्समः कुर्याद्द्वादशाब्दां विशेषतः ॥
तस्मात्प्राग्दशाब्दिकां कन्यामायुःप्रज्ञाभिवृद्धये ।
विपरीतं न कर्तव्यं पुत्रार्थी नीरुजस्तथा ॥
[4]विवाहमेवोपनीतिं स्त्रीणामाह पितामहः ।
तस्माद्गर्भाष्टमे श्रेष्ठो जन्मतो वाऽष्टवत्सरे ॥
[5]देशकालादिवैषम्याद्धर्मोद्वाहसंशये ।
सदृशे संभवे कन्यां नग्निकामपि दापयेत् ॥
[6]बालिशाऽपि भवेत्कन्या गुणाढ्यो यदि लभ्यते ।
दद्यादप्राप्तकालेऽपि देशकालभयान्नरः ॥
[7]दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः ।
अपि या गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

---

( १ ) मिन्धु. ११११२ देवलात्रिकत्यपा॰.

( २ ) स्मृच. ७९ : ३९९ ( श्रा. ) च मृत ( तु मृत ) ; चका. ८०१ री या ( री वा ) ; पमा. ६९३ ; संप्र. ७६८ पराशरः ; मुक्ता. ५२ वन्ध्या तु ( वन्ध्या च ) : १३५ ; संस. ६५ वन्ध्या तु ( वन्ध्या च ) ; कृभ. ११११२ समवत्.

( ३ ) स्मृच. ३९९ ( श्रा. ) ; पमा. ६९३ ; मिन्धु. ११११२ यस्त्वेनामु ( यस्तां समु ) देवलात्रिकत्यपाः.

( ४ ) अप. १।२२४ पृ. ४५० च ( तु ) ; चश्रा. ३५७ ; श्राप्र. ८३.

( १ ) अप. १।२२४ पृ. ४५० ; चश्रा. ३७७ यस्त्वेना ( यस्त्वेना ) ; निप. २८१ ( = ) यस्त्वेनामुद्वहेत् ( यस्तु तां वरयेत् ) ; श्राप्र. ८३ चथावत्.

( २ ) गृक. ४१ मनुयमौ ; संप्र. ७६६ ष्यष्ट ( ष्टष्टौ ) मनुयमौ.

( ३ ) मपा. ११५.

( ४ ) मुक्ता. १३६ विवाहमेवोपनीतिं ( विवाहं चोपनयनं ) हमे ( इमः ) वत्सरे ( वत्सरः ) ; मान. १७१.

( ५ ) मुक्ता. १३६ ; मान. १७१ उत्त.

( ६ ) मुक्ता १३६ ढ्याऽपि ( ढ्या या ) ; मान. १७१ कालेऽपि ( काले वा ).

( ७ ) गृक. ११ अपि या ( न चैव ) ; स्मृच. ८१ गृहस्थः ; चका. ८०४ गृहस्थः ; गृर. ११ गृहस्थः ; मपा. ११५ मेव शक्तितः ( मपिदाक्षिणः ) पू. ; विमौ ७ गृहस्थः ; वीमि. १।६४ अपि या ( न चैव ) ; संप्र. ७९७ पू. ; मुक्ता. ११९

(१) शक्तितः सामर्थ्ये सति, नग्निकामेव दशवर्षां दद्यात् । गृक.३३

(२) अस्यामवस्थायां शङ्काप्रसक्तिं वदन् अष्टमवर्षपर्यन्तो गर्भपञ्चमप्रभृतिः कन्याविवाहे उचितः कालः, स्त्रीणामुपनयनस्थानापन्नो विवाह इति तदुचितवयोवस्थायां विवाहस्योचितत्वात्, अतस्तत्र विवाहे शङ्का नेति दर्शयति । संकौ.१९७

[1]काममा-मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥

यत्तु यमेनोक्तम्—काममिति, तत् गुणवति संभवति गुणहीनाय कन्या न दद्यादित्येवंपरम्, न तु सर्वथा गुणहीननिषेधपरम् । नो चेत् 'अपि वा गुणहीनाय' इति बौधायनोक्तानुकल्पो निर्विषयः स्यात् । 'ऋतुमत्यपि तिष्ठेत्' इति वचनं उक्तरीत्या न स्वार्थे तात्पर्यवत् । यतः 'नोपरुन्ध्याद्रजस्वलाम्' इत्यनेन विरुध्येत । पमा. ४८१

[2]अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
[3]अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ॥

[1]गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥

[2]प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥

[3]तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥

[4]माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

[5]पितुर्गेहे तु या कन्या पश्यत्यसंस्कृता रजः ।
भ्रूणहत्या पितुस्तस्याः कन्या सा वृषली स्मृता ॥

[6]यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

[7]वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला ॥

[8]वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिनेदिने ॥

---

यमबौधायनौ ; संकौ. १९७ प्रपावत्, पू. 'न त्वेव गुणहीनाय' इति पाठो यद्यपि बहुभिर्ग्रन्थकारैः स्वीकृतस्तथाऽपि 'अपि वा गुणहीनाय' इति पाठो ग्रन्थसंदर्भतः सम्यगिति भाति ।

(१) पमा. ४८१ ; चम. १११ गृहे ( गेहे ) ; पुम. ४४६ उत्तरार्धं ( न त्वेवैतां पिता दद्यात्कुलहीनाय कर्हिचित् । ) यमः ?.

(२) बृयस्मृ. ३।२१ तु ( च ) ; स्मृच. ७९ तु ( च ) ; चका. ८०२ ; पमा. ४८२ दशवर्षा भवेत्कन्या ( दशमे कन्यका प्रोक्ता ) परंतु ४८४ पृष्ठे व्याख्यानावसरे 'दशवर्षा भवेत्कन्या' इत्येव पाठो दर्शितः ; मपा. १५० कश्यपः ; विसौ. ६ तु ( च ) अत ऊर्ध्वं ( तदूर्ध्वं स्यात् ) क्रमेण वात्स्यः ; संप्र. ७६८, ८३४ ; चम. १११ ; संम. ६५ ; सिन्धु. १०६६ ( = ) चतुर्थः पादः ; ग्रान. १७५ ; संग. २६३ तु ( च ) मरीचिः ; कृभ. १०७६ मनुः ; संर. ४५८.

(३) स्मृच. ७९ प्राप्ते तु द्वादशे ( संप्राप्ते द्वादशे ) उत्त. ; चका. ८०२ तु द्वादशे ( द्वादशमे ) यमपराशरापस्तम्बाः ; संप्र. ७७१ यमपराशरापस्तम्बाः.

(१) स्मृच. ८०.

(२) बृयस्मृ. ३।२० तु द्वादशे ( द्वादशमे ) यः कन्यां ( कन्यां यो ) ; यमस्मृ. २२ ; स्मृच. ७९ प्राप्ते तु ( संप्राप्ते ) ; चका. ८०२ तु द्वादशे ( द्वादशमे ) यमपराशरापस्तम्बाः ; पमा. १२१ ; संप्र. ७७१ पिता पिबति ( पिबन्ति ऋतु ) शेषं चकावत्, यमपराशरापस्तम्बाः ; संम. ६६ चकावत् ; संग. २०० पिता पिबति ( पिबेत्स ऋतु ) शेषं चकावत्, यमपराशरापस्तम्बाः.

(३) स्मृच. ७९ तस्मात् ( तावत् ) ; चका. ८०३ ; पमा. १५७ ( खण्ड: २ भाग १ ) ; मुक्ता. १३६ ; सिन्धु. १०६६ ; प्रका. ३५८ ; पुम. ४४६.

(४) बृयस्मृ. ३।२२ ; यमस्मृ. २३ ; स्मृच. ८१ ज्येष्ठभ्राता ( भ्राता चैव ).

(५) बृयस्मृ. ३।१८.

(६) बृयस्मृ. ३।१९ ; यमस्मृ. २४ ; स्मृच. ८१ ; संम. ६६ विवाहयेत् ( समुद्वहेत् ).

(७) यमस्मृ. २५.

(८) बृयस्मृ. ३।१३ वृषलीसंग्रहीता यो ( वृषलीं यस्तु गृह्णाति ) सततं सूतकं ( सदा सूतकिना ).

[1]यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥
[2]वृषलीगमनं चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥
[3]वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्नैव विद्यते ॥

## मरीचिः

कन्याया ऋतुपूर्वकाले विवाहार्हत्वम्, ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[4]गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥
[5]यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
[6]असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

## दक्षः

गौरीरोहिणीकन्यारजस्वलालक्षणानि, कन्याया ऋतुपूर्वकाले विवाहार्हत्वम्, ऋतुपूर्वं कन्याया अदाने दोषः

[1]अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं तथा ।
कन्यां ददत् ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥
प्राप्ते द्वादशवर्षे तु या कन्या न प्रदीयते ।
मासिमासि रजस्तस्याः पिता पिबति शोणितम् ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
[2]विवाहयेदष्टवर्षामेवं धर्मो न हीयते ॥

## प्रजापतिः

अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[3]पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

## संवर्तः

नग्निकायां विवाहे श्रेष्ठम्, गौरीरोहिणीकन्यारजस्वलालक्षणानि, अष्टवर्षाया विवाहः प्रशस्तः, ऋतुपूर्वं कन्याया अदाने दोषः

यावन्न लज्जते कन्या यावत् क्रीडति पांसुषु ।
यावत्तिष्ठति गोमार्गे तावत्कन्यां विवाहयेत् ॥
[4]रोमकाले तु संप्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ।
रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने ॥

---

(१) वृयस्मृ. ३।१२ स भैक्षभुग्जपन्नित्य ( तद्भक्षो जपन्नित्य ); यमस्मृ. २६ य° ( यत् ) सेवन ( सेवनात् ) स भैक्ष ( तद्भैक्ष ); स्मृच. ८१ स भैक्ष ( तद्भैक्ष ).

(२) वृयस्मृ. ३।१४ ; स्मृच. ८१ .

(३) वृयस्मृ. ३।१५ नैव विद्यते ( न विधीयते ) ; यमस्मृ. २८ ; गृक. ४३ फेनपीतस्य ( पीतफेनस्य ) नैव विद्यते ( न विधीयते ) मनुयमहारीताः ; स्मृच. ८१ ; गृर. ३७ नैव विद्यते ( नोपपद्यते ) मनुयमहारीताः ; संप्र. ७५१ नैव विद्यते ( न विधीयते ).

(४) पमा. ४८२ ; प्रपा. ३१६ ; विमी. ८, संप्र. ८३४ ; घम. १११ ; संम. ६६ ; सिन्धु. १०७६ ; विपा. ७३० ; संग. २६३ ; संर. ४५७ ( गौरीं ददन्नाकपृष्ठे वैकुण्ठे रोहिणीं ददत् । कन्यां ददत् ब्रह्मलोके रौरवे तु रजस्वलाम् ॥ ).

(५) प्रपा. ३४२–३४३ ; विपा. ७५७ ; संर. ४९९ विप्रो ( उक्तो ).

(६) समु. ५–६ .

(१) मसु. ९।८८ .

(२) प्रस्मृ. ८५–८६ गृहे तु ( गृहेषु ) ; पमा. १५९ ( खण्डः २ भागः १ ) मनु° ; प्रपा. ३४३ इतिहास° ; घम. ५४ गृहे ( गेहे ) इतिहास° ; मुफा. ५१ दक्षः ; संग. २०१ प्रजापतिः.

(३) मुफा. ११५ .

(४) संस्मृ. ६४ भुङ्क्ते तु ( भुङ्क्तेऽथ ) उत्तरार्धे ( रजो दृष्ट्वा तु गन्धर्वाः कुचौ दृष्ट्वा तु पावकः । ); गृक. ५४ भुङ्क्ते तु ( भुञ्जीत ) वह्निस्तु कुचदर्शने ( वह्निर्भुङ्क्ते रजस्वलाम् ) ; स्मृच. ७९ ; चद्रा. १८२ भुङ्क्ते तु ( भुञ्जीत ) गन्धर्वो वह्निस्तु ( गन्धर्वाः शक्रस्तु ) काश्यपः ; गृर. ४९ भुङ्क्ते तु ( भुञ्जीत ) रजः ( ऋतु ) गन्धर्वो ( गन्धर्वाः ) कुच ( ऋतु ) ; पमा. ४८२ रोम ( काम ) गन्धर्वो ( गन्धर्वाः ) ; प्रपा. १५० भुङ्क्ते तु ( भुञ्जीत ) गन्धर्वो ( गन्धर्वाः ) ; संप्र. ७१९ ; मुफा. ११५ उत्तरार्धे ( रजो दृष्ट्वा तु गन्धर्वाः कुचौ दृष्ट्वा तु पावकः । ) ; संग. २०० .

[1] अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

इदं नग्निकालक्षणमौपचारिकं, रोहिणीति वा पाठः । तस्मात् पूर्वं पूर्वं श्रेय इति केचित् । अन्ये तु कन्यारक्षणस्य महायाससाध्यत्वादुत्तरोत्तरं श्रेयः षोडशीग्रहणाग्रहणवदित्याहुः । विपा.७२९

[2] गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददत् ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥

[3] प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥

[4] माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

(१) संस्मृ. ६५; समु. ५ संवतदक्षौ; स्मृच. ७९ (अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥); चद्रा. ६८२ (अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥); चका. ८०१-८०२ स्मृचवत्; पमा. ४८२-४८३ चद्रावत्; प्रपा. ३१५ (अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ता द्वादशे वृषली मता ॥); संप्र. ७६८ प्रपावत्; चम. १११ स्मृचवत्; मुक्ता. १३५ : १३६ उत्त, यमसंवर्तौ; संम. ६५ (अष्टमे तु भवेद्गौरी नववर्षा तु रोहिणी । दशमे कन्यका प्रोक्ता द्वादशे वृषली भवेत् ॥); विपा. ७२९ प्रपावत्; ज्योनि. १४९ (अष्टवर्षा भवेद्गौरी नवमे रोहिणी भवेत् । दशमे कन्यका प्रोक्ता द्वादशे वृषली मता ॥); आन. १७५ (अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ता द्वादशे वृषली तथा ॥); पुम. ४४६ स्मृचवत्; संर. ४५८ (अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत्। दशमे कन्यका प्रोक्ताऽत ऊर्ध्वं स्याद्रजस्वला ॥).

(२) समु. ५ रोहिणीं ददत् (रोहिणीं तथा) संवर्तदक्षौ; पमा. १५६ (खण्डः २ भागः १) बृहस्पतिः; मुक्ता. १३५ रोहिणीं ददत् (याति रोहिणीम्); ज्योनि. १४९; कृम. २११३ (=) चतुर्थपादः.

(३) मसु. ५ पूर्वार्धे (प्राप्ते द्वादशवर्षे तु या कन्या न प्रदीयते) संवर्तदक्षौ; मुक्ता. १३५.

(४) संस्मृ. ६६; समु. ५ संवर्तदक्षौ; मप. ११६४; प्रपा. ३४२ ज्येष्ठो (ज्येष्ठ) शाट्यायनिः; मुक्ता. १३५; सिन्धु. ११११३ ज्येष्ठो (ज्येष्ठ).

[1] तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

[2] सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥

## पराशरः

गौरीरोहिणीकन्यारजस्वलालक्षणानि, ऋतुपूर्वं कन्यायां अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[3] अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

पूर्वं 'रजसा शुध्यते नारी' (पस्मृ. ७।२) इत्यत्र योषितो विवाहोत्तरकालीना शुद्धिर्विवेचिता । इदानीं विवाहात् प्राचीनां शुद्धिं विविनक्ति—अष्टवर्षेति । गौर्यादयस्तिस्रः उद्वाहाय शुद्धाः, तद्दातुः फलविशेषस्मरणात् । रजस्वला त्वशुद्धा, तद्दानस्य निन्दितत्वात् । तत्र फलनिन्दे दर्शयति बृहस्पतिः— 'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् । कन्यां ददत् ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥' इति । यद्यप्येकादशे वर्षे रजोदर्शनं न प्रतिनियतं, तथापि कासुचिद्दर्शनात् तत्संभावनया रजस्वलेति निर्देशः । तां ददत् रौरवं नरकं प्राप्नोति इति शेषः ।

पमा.१५६-१५७ (खण्डः २ भागः १)

[4] प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयम् ॥

(१) संस्मृ. ६७ दुद्वाह (द्विवाह) हस्त्वष्ट (ह्यो ह्यष्ट) शस्यते बुधैः (तु प्रशस्यते); गृक. ५४; स्मृच. ७९ पू.; चद्रा. ६८२ काश्यपः; गृर. ४६; पमा. ४८२ पू.; मपा. १५० तस्मादुद्वाहयेत् (तस्मात्तामुद्वहेत्); संप्र. ७६९ पू.; मुक्ता. १३५ तस्मादुद्वाह (तस्माद्विवाह) कन्यायाः शस्यते बुधैः (कन्यायास्तु प्रशस्यते); सिन्धु. १०६६ उत्त.; रत्न. ५४ उत्त.; संग. २०० पू.

(२) संस्मृ. ७८.

(३) पस्मृ. ७।४-५ (६); चका. ८०२ उत्तरार्धे (प्राप्ते द्वादशमे वर्षे रजः स्त्रीणां प्रवर्तते ।) यमपराशरापस्तम्बाः; संप्र. ७७१ उत्तरार्धे (प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ।) यमपराशरापस्तम्बाः.

(४) पस्मृ. ७।५-६ (७) अन्यस्मिन् पुस्तके 'स्वयम्'

कन्यायामशुद्धिमभिप्रेत्य 'अत ऊर्ध्वं रजस्वला' इत्युक्तम्। तस्यैवाशुद्धिं प्रदर्शयितुमदातारं निन्दति– प्राप्ते इति। ऋतुदर्शनमुपलक्षयितुं द्वादशे वर्षे इत्युक्तम्। अत एव गौतमेन– 'प्रदानं प्रागृतोः' (गौध.१८।२१) इत्युक्तम्। यमोऽप्येतदेवाऽऽह– 'तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत्' इति। अतश्च ऋतुदर्शनात् प्राग् यो न प्रयच्छति तस्य पितरः प्रतिमासं रजः पिबन्ति। अनृतुदर्शने द्वादशेऽपि वर्षे कन्यादानमप्रदो न निषिद्धो। अत एव मनुः– 'त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥' इति।

पमा.१५७–१५८ ( खण्डः २ भागः १ )

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥

ऋतुदर्शने सति अप्रदाता न केवलं पितॄनेव नरके पातयति किन्तु स्वयमपि सगुत्रयः पतेदित्याह–मातेति। मातादयस्त्रयः कन्याप्रदानाधिकारिणः सर्वानुपलक्षयन्ति। ते च पूर्वमेव 'पिता पितामहः' इत्यादिवचनोदाहरणेन विवाहप्रकरणे प्रदर्शिताः।

पमा.१५८ ( खण्डः २ भागः १ )

यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः॥

रजोदर्शनात् प्रागदानं यथा नरकहेतुः तथा रजस्वलोद्वाहोऽपि नरकहेतुरित्याह– यस्तामिति। तां दृष्टरजसम्। असंभाष्यत्वापाङ्क्तेयत्वयोर्हेतुर्वृषलीपतित्वम्। विवाहात् पूर्वं दृष्टरजस्का वृषली। तथा च मनुः– 'पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता। सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः॥' (मस्मृ. ३।१९) इति।

पमा. १५८–१५९ ( खण्डः २ भागः १ )

यः करोत्येकरात्रेण वृषलीसेवनं द्विजः।
स भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुध्यति॥

यस्तु मदमोहादिनाऽतिक्रान्तनिषेधस्तामुद्वाह्य सकृत् भुक्त्वा कथंचिद्दैवयोगादनुतप्येत्, तदा तस्य शुद्धिप्रकारमाह– य इति। जप्यविशेषानभिधानात् सामान्यप्राप्तया गायत्र्या जप्यत्वमवगन्तव्यम्।

पमा.१५९ ( खण्डः २ भागः १ )

## अत्रिः

दीर्घकालं ब्रह्मचर्यं पुनर्विवाहश्च स्त्रीणां कलौ वर्ज्यः, ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहितायाः ऋतुमत्या वृषलीत्वदोषः

ब्रह्मचर्यं दीर्घकालं तदुत्कमनचारणम्।
पुनर्विवाहश्च कलौ भर्तृनाशकरः स्त्रियाः॥

दीर्घकालं ब्रह्मचर्यनियमादीना निषेधात् स्त्रीणां द्वादशाब्दचतुर्दशाब्दपर्यन्तावधानकालेक्षणनिषेधात् 'अत ऊर्ध्वं रजस्वला' इत्युक्त्या च स्त्रीणां चतुर्वर्षादूर्ध्वं द्वादशाब्दपर्यन्तं तस्मिन् बालिशाया अपि विवाह उक्तः।

प्रपा.३१५

व्यञ्जने तु कुलं हन्यात् पितॄन् हन्यात् पयोधरे।
हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका॥
[4]पितुर्गेहे तु या कन्या रजः पश्येदसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥

---

इत्यत्र 'अनिशम्' इति पाठः; चका. ८०२ तु द्वादशे (द्वादशमे) पिबन्ति पितरः स्वयम् (पिता पिबति शोणितम्) यमपराशरापस्तम्बाः; संप्र. ७७१ तु द्वादशे (द्वादशमे) पितरः स्वयम् (ऋतुशोणितम्) यमपराशरापस्तम्बाः; संग. २०० पिबन्ति (पिबेत्स) यमपराशरापस्तम्बाः.

(१) पस्मृ. ७।६–७ (८); चका. ८०३–८०४ त्रयस्ते (त्रयोऽपि); प्रपा. १४२ ज्येष्ठो (ज्येष्ठ) शाट्यायनिः; त्रिमी. ६ वात्स्यः; संप्र. ७७१ चकारवत्; विपा. ७५७ प्रपावत्, कात्यायनिः; प्रका. ३५८; संर ४९९ चैव पिता चैव (च जनकश्चैव) शाट्यायनिः.

(२) पस्मृ. ७।७–८ (९).

(१) पस्मृ. ७।८–९ (१०).

(२) प्रपा. ३१५.

(३) गृक. ५४ व्यञ्जने तु (व्यञ्जनेषु) क्रमेण कश्यपः; गृर. ४६; संप्र. ७६९ दिष्ट (दिष्टिं) अत्रिबृहस्पती; संग. २०० अत्रिबृहस्पती.

(४) गृक ५२ अत्रिकश्यपौ; गृर. ४४ पितुर्गेहे (पितृगेहे) पश्येद (पश्यत्य) अत्रिकाश्यपौ; मपा. १५० गेहे (गृहे) अत्रिकश्यपौ; मर. १९ पितुर्गेहे तु (पितृगृहेऽपि) सा कन्या

यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥[1]

अत्र ब्राह्मणपदोपादानात् ब्राह्मणस्यैवायं रजस्वलापरिणयननिषेधो न क्षत्रियादीनां, कुन्त्यादिषु तथा दर्शनात्। यत्तु– 'काममामरणात्तिष्ठेत् गृहे कन्यर्तुमत्यपि। न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥' इति मनुवाक्यं, तत् गुणवद्वरप्रशंसार्थं न स्वार्थे प्रमाणम्।

संप्र. ७७१–७७२

## लघुशातातपः

ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[2]पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

## पैठीनसिः

ऋतुपूर्वं कन्याया अदाने दोषः

[3]यावन्नोद्भिद्यतः स्तनौ तावदेव देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति। पिता पितामहश्चेति विष्ठायां जायते कृमिः। तस्मान्नग्निका दातव्या ॥

(कन्या सा); उत. १२४ तु (च) पश्येद (पश्यत्य) अत्रिकाश्यपौ; संप्र. ७६८ गेहे (गृहे) पश्येद (पश्यत्य) बृहस्पत्यत्रिकश्यपाः; सिन्धु. १११३ पश्येद (पश्यत्य) देवलात्रिकश्यपाः.

(१) गृक. ५२ अश्राद्धेय (अश्रद्धेय) अत्रिकश्यपौ; गृर. ४४–४५ गृकवत्, अत्रिकाश्यपौ; मपा १५० अत्रिकश्यपौ; मर. १९; उत. १२४ अत्रिकाश्यपौ; संप्र. ७७१ अत्रिकश्यपौ; सिन्धु. १११३ यस्तु तां वरयेत् (यस्तां समुद्वहेत्) देवलात्रिकश्यपाः; संग. २००–२०१ अत्रिकश्यपौ.

(२) लशास्मृ. ६५.

(३) गृक. ५३; चका. ८०४ (यावन्नोद्भिद्यतः स्तनौ तावद्देया। अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकं प्राप्नोति। पितामहः प्रपितामहश्चेति विष्ठायां जायते। तस्मान्नग्निका देया।); गृर. ४५ भवति + (तदा) नरकं प्राप्नोति (नरकमाप्नोति); संप्र. ७७१ चकावत्.

## अङ्गिराः

गौरीरोहिणीश्यामानग्निकालक्षणानि, ऋतुपूर्वकालो विवाहार्हः, अष्टवर्षाया विवाहः प्रशस्तः

[1]अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जनकुचा श्यामा कुचहीना तु नग्निका ॥

अव्यञ्जनकुचेति। अविद्यमानौ व्यञ्जनकुचौ यस्याः सा तथा। अनुद्भिन्नरोमस्तनेत्यर्थः। गृक.५३

[2]व्यञ्जनेष्वथ जातेषु सोमो भुङ्क्ते तु कन्यकाम्।
पयोधरेषु गन्धर्वो वह्निर्भुङ्क्ते रजस्वलाम् ॥
[3]तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥
[4]विवाहो ह्यष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥
[5]तस्मादव्यञ्जनोपेतामरजस्कपयोधराम्।
[6]नोपभुक्तां तु सोमाद्यैर्दद्याद्दुहितरं पिता ॥

गौरीरोहिणीकन्यारजस्वलालक्षणानि, दशमे वर्षे कन्याविवाहः प्रशस्तः, ऋतुपूर्वं कन्याया अदाने दोषः, अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशमे कन्यका प्रोक्ता अत ऊर्ध्वं रजस्वला ॥
तस्मात्संवत्सरे प्राप्ते दशमे कन्यका बुधैः।
प्रदातव्या प्रयत्नेन न दोषः कालदोषतः ॥
[7]पितुर्वेश्मनि या कन्या रजस्तु समुपस्पृशेत्।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

(१) गृक. ५३; चका. ८०३ अनवाप्तरजा (अनाप्तरजसा) अव्यञ्जनकुचा श्यामा (अव्यञ्जना तु सा प्रोक्ता); चदा. ६८२ अनवाप्तरजा (अप्राप्तरजसा); गृर. ४५ प्राप्ते (गुप्ते); संप्र. ७६९; संग. २०० श्यामा (कन्या) उत., अत्रिबृहस्पती.

(२) गृक. ५३ व्यञ्जनेष्वथ जातेषु (व्यञ्जनेषूपयुक्तेषु) धरेषु (धरे तु); चका. ८०३; गृर. ४५ ष्वथ जातेषु (पूपजातेषु) धरेषु (धरे तु) वह्नि (अग्नि); संप्र. ७६९.

(३) चका. ८०३; संप्र. ७६९.

(४) चका. ८०३; प्रका. ३५८ ह्यो ह्यष्ट (ह्यष्ट).

(५) गृक. ५३; गृर. ४५.

(६) उत. १२३.

(७) आङ्गिस्मृ. १२६–१२९.

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
अग्रे च माहिषं दृष्ट्वा मध्ये च वृषलीपतिम् ।
अन्त्ये वार्द्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥

वरापेक्षया वयोदैर्घ्याधिका कन्या निषिद्धा,
न्यूनवयाः प्रशस्ता

[1]वयोऽधिकां नोपयच्छेत् दीर्घां कन्यां स्वदेहतः ।
स्ववर्षाद् द्वित्रिपञ्चादिन्यूनां कन्यां समुद्वहेत् ॥
[2]कन्यां वरसमां न्यूनां विवहेद्द्वित्रिवर्षिकाम् ।
[3]उक्तं तत्पोडशाब्दात्प्राक् विवाहमिदमुच्यते ॥
[4]अपकृष्य व्रतान्सर्वान् कुर्वन्त्यस्य विचक्षणाः ।
तदिदं नादृतं पूर्वैराचार्यैः कालवीक्षणात् ।
कालावनियमत्वेन कर्तव्यमिति चापरे ॥

## व्याघ्रपादः

उपनयनकाल. स्त्रीणां विवाहकालः

[5]उपायनो( १ नयो )दितः कालः स्त्रीणा-
मुद्वाहकर्मणि ।
स्त्रीणामुपनयस्थाने विवाहं मनुरब्रवीत् ॥

## च्यवनः

षडब्दवर्षपर्यन्तं स्त्रीणां न विवाहः

[6]षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।
सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः ॥

(१) मुक्ता. १२५ ; आन. १६९ .
(२) प्रपा. ३१५ .
(३) प्रपा. ३१५ .
(४) मुक्ता. १३६ ; आन. १७५ .
(५) गभा. ६६ ; विसौ ७ उत्तरार्धे ( सोमो भुङ्क्ते तत पृश्चाद्गन्धर्वस्तु ततोऽनलः । ) ; सिन्धु १०६४ ; संकौ. १९७ ; रत्न. ५३ ; प्रका. ३५८ गर्ग ; संग. १९९–२०० ; संव. १४४ ; संर. ४५७ कन्या वर्षद्वय यतः ( कन्यका वत्सरद्वयम् ) ततः ( यतः ) स्मृत्यन्तरम् . गभा. सिन्धु. संकौ रत्न सग. सव. एषु ग्रन्थेषु ज्योतिर्निबन्धे इत्युक्त्वा इद वचन समुदाहृतम् ।

( १ ) इदमत्र तात्पर्यं, जन्मानन्तरं वर्षद्वयं सोमः कन्यां भुङ्क्ते, ततः अनन्तर द्वे वर्षे गन्धर्वः, ततोऽग्निः, अनन्तरं मनुष्याधिकार इति न षडब्दात्प्रागुद्वाह उचितः । अत एव श्रुतिः — 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमो ददद्गन्धर्वाय गन्धर्वो दददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥' विसौ. ७

( २ ) एतन्मूलभूता श्रुतिरपि — 'सोमः प्रथमो विविदे' इत्यारभ्य 'तृतीयोऽग्निष्टे पतिः' इत्यन्ता । ननु अस्य विरोधो ब्रह्मपुराणे गौतमीमाहात्म्ये भानुतीर्थवर्णने विष्टिभानुसंवादे दृश्यते— 'चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः । तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः ॥' इति । सत्यम् । एतत्पुराणवाक्यं शूद्राविषयं, न ब्राह्मण्यादिविषयमित्यविरोधः । सप्तमवर्षे विषमत्वान्नारदादिभिः स्त्रीविवाहे नाङ्गीकृतं, तस्मात्सर्ववर्णानामविरुद्धमष्टमनवमदशमवर्षेषु स्त्र्युद्वहनम् । ननु नवमवर्षस्य ग्रहणं विरुद्धम् — 'युग्मेऽब्दे जन्मतः स्त्रीणाम्' इति नारदवचनविरोधादिति चेत्, सत्यम् । 'नववर्षा तु रोहिणी' इति नववर्षाया रोहिण्याः 'वैकुण्ठे रोहिणीं ददत्' इति वक्ष्यमाणमरीचिवचने रोहिणीप्रदाने फलविशेषोक्त्या नवमवर्षस्यापि विवाहकालत्वेन उक्तत्वात् । सर. ४५७

## कश्यपः

त्र्यष्टवर्षेणाष्टवर्षा विवाह्या, ऋतुपूर्वकालो विवाहे इष्टः,
गौरीकन्यकाकुमारीलक्षणानि

[1]पूर्वोक्तलक्षणोपेतां रोगदोषविवर्जिताम् ।
अष्टाब्दां विवहेत्तां तु त्र्यष्टाब्दो वा वरः शुभाम् ॥
[2]सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥
[3]भुञ्जीत व्यञ्जने सोमो गन्धर्वस्तु पयोधरे ।
वलिवर्णागमे वायू रजस्यग्निः प्रतिष्ठितः ॥

(१) प्रपा. ३१५ .
(२) गृक. ५४ प्राप्ते तु ( संप्राप्ते ) ; षट्त्रि. ६८२ ; गृर. ४६ गृकवत् ; संप्र. ७६९ .
(३) गृक. ५४ गन्धर्वस्तु ( गन्धर्वास्तु ) वर्णागमे ( मार्गा-

[1]तस्मादव्यञ्जनोपेतामरजस्कामपयोधराम् ।
नोपभुक्तां तु सोमाद्यैर्दद्याद्दुहितरं पिता ॥

अविवाहिताया ऋतुमत्या वृषलीत्वदोषः

[2]पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
[3]यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

## आश्वलायनः

नग्निकात्वं विवाहे इष्टम्

[4]कुलशीलवयोवृत्तरूपाढ्यां नग्निकां शुभाम् ।
विधिना तु वरः कन्यामुद्वहेदात्मनः समाम् ॥
समा कुलशीलादिभिः, न वयसा । संप्र. ७६७

कन्यकागौरीरोहिणीगान्धारीलक्षणानि, कन्यकादयः विशिष्टवयोभिर्विवाह्याः

[5]सप्ताब्दा कन्यकानाम्नी शैशवी स्याच्छुभान्विता ।
तामष्टादशवर्षीयो विवहेद्विधिवत्पुमान् ॥

गमे ) ; गृर. ४६ पयोधरे ( पयोधरौ ) वलित्रणांगमे ( कुन्तलस्यागमे ) प्रतिष्ठितः ( प्रकीर्तितः ) ; संप्र. ७६९ .

( १ ) गृक. ५४ स्कामप ( स्कप ) ; गृर. ४६ गृकवत् ; संप्र. ७६९ .

( २ ) अप. १।६४ पश्यत्य ( पश्येद ) ; गृक. ५२ अपवत्, अत्रिकश्यपौ ; गृर. ४४ पितुर्गेहे ( पितृगेहे ) अत्रिकाश्यपौ ; मपा. १५० पितुर्गेहे ( पितुर्गृहे ) शेषं अपवत्, अत्रिकश्यपौ ; उत १२४ तु या ( च या ) अत्रिकाश्यपौ ; संप्र. ७६८ पितुर्गेहे ( पितुर्गृहे ) बृहस्पत्यत्रिकश्यपाः ; सिन्धु. १११३ देवलात्रिकश्यपाः .

( ३ ) अप. १।६४ ; गृक. ५२ अश्राद्धेय ( अश्रद्धेय ) अत्रिकश्यपौ ; गृर. ४४–४५ गृकवत् , अत्रिकाश्यपौ ; मपा. १५० अत्रिकश्यपौ ; उत. १२४ अत्रिकाश्यपौ ; संप्र. ७७१ अत्रिकश्यपौ ; सिन्धु. १११३ यस्तु तां वरयेत् ( यस्तां समुद्वहेत् ) देवलात्रिकश्यपाः ; संग. २००–२०१ अत्रिकश्यपौ .

( ४ ) प्रपा. ३१४ ; संप्र. ७६७ वृत्त ( वृद्ध ? ) ; विपा. ७२८ उत्तरार्धे ( विधिना चोद्वहेत्कन्यां धर्मकामार्थसिद्धये । ) शौनकः ; संर. ४५८ देवलः .

( ५ ) प्रपा. ३१४ ; संप्र. ७६७ ; विपा. ७२८ सप्ताब्दा ( सप्ताब्दात् ) उत्तरार्धे ( तामष्टादशवर्षेण वरेण विवहेत्पुमान् ) शौनकः ; संर. ४५८ सप्ताब्दा ( सप्ताब्दात् ) देवलः .

[1]अष्टवर्षा भवेद्गौरी पुत्रपौत्रप्रवर्धिनी ।
पञ्चविंशतिवर्षीयस्तां कन्यामुद्वहेद्द्विजः ॥

[2]रोहिणी नववर्षा स्याद्धनधान्यविवर्धिनी ।
तामुद्वहेत मतिमान्सर्वकामार्थसिद्धये ॥

[3]ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा ।
गान्धारी स्यात्समुद्वाह्या चिरं जीवितुमिच्छुना ॥

## गर्गः

गौरीरोहिणीकन्यारजस्वलालक्षणानि

[4]अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

## वात्स्यः

ऋतुपूर्वकाले विवाहे इष्टः

[5]गौरीं ददद् ब्रह्मलोकं सावित्रं रोहिणीं ददत् ।
कन्यां ददत्स्वर्गलोकमतः परमसद्गतिम् ॥
गौरी विवाहिता सौख्यसंपन्ना स्यात्पतिव्रता ।
रोहिणी धनधान्यादिपुत्राढ्या सुभगा भवेत् ॥
कन्या विवाहिता संपत्समृद्धा स्वामिपूजिता ॥

## स्मृत्यन्तरम्

ऋतुपूर्वं कन्याया अदाने दोषः

[6]असंस्कृता तु या कन्या रजसा चेत्परिप्लुता ।
भ्रातरः पितरौ तस्याः पतिताः स्युर्न संशयः ॥

( १ ) प्रपा. ३१४ हेद्द्विजः ( हेत्ततः ) ; विसौ. ८ पौत्रप्र ( पौत्रादि ) ; संप्र. ७३७ ; संर. ४५८ अष्टवर्षा ( याऽष्टवर्षा ) .

( २ ) प्रपा. ३१४ ; विसौ. ८ ; संप्र. ७६७ ; विपा. ७२९ सर्वकामार्थसिद्धये ( त्रिंशद्वर्षवरेण तु ) शौनकः ; संर. ४५८ देवलः .

( ३ ) प्रपा ३१४–३१५ चिरं ( चिर ) ; विसौ. ८ मिच्छुना ( मिच्छता ) ; संप्र. ७६७ ; विपा. ७२९ विसौवत्, शौनकः ; संर. ४५८ विसौवत्, देवलः .

( ४ ) गभा. ९७ ; सिन्धु. १०६७ .

( ५ ) विसौ. ६–७ .

( ६ ) घप्र. ५४ .

## विष्णुपुराणम्

वर्षैरेकगुणां भार्यां त्रिगुणो वरः

वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणः स्वयम् ॥१

## ब्रह्मपुराणम्

चतुर्थाद्दशमवर्षपर्यन्तं कन्याविवाह इष्टः, नग्निकालक्षणम्

* चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः ।
तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः ॥२

यावन्न लज्जां जानाति कन्या पुरुषसंनिधौ ।
योन्यादीन्नावगूहेत तावद्भवति नग्निका ॥३

अमरसिंहस्तु 'गौरी तु नग्निकाऽनागतार्तवा' इत्याह । व्याख्यातं चैतल्लिङ्गिभट्टेन — 'मनसा विवाहं प्रत्युच्छति इति गौरी । गुरी उद्यमे । नज्जते व्रीडतीति नग्निका । नज्जी व्रीडने । अत्र नग्निकाशब्दो विरुद्धलक्षणया गौर्यां वर्तते । अनागतमार्तवमस्या इत्यनागतार्तवा ।

---

* संर.व्याख्यान च्यवनवचने द्रष्टव्यम् ।

(१) विष्णु. ३।१०।१६ ; गृक ५ (=) : ४५ ; स्मृच. ८० ; मसु. ३।५० (=) त्रिगुण स्वयम् (द्विगुणः पुमान्) ; चका. ८०१ क्रमेण मनु ; गृर. ६ (=) स्वयम् (पुमान्) : ३९ ; पमा. ४७४ ; निप. २८१ (=) ; विमौ. ७ दैवज्ञचिन्तामणौ इत्युक्तम् ; संप्र. ७६६ ; चम. ९७ ; बाल. १।५२.

(२) संग. २०० ब्रह्माण्डपुराणम् ; संर. ४५७.

(३) स्मृच. ८० लज्जां जानाति (लज्जयाऽज्ञानि) नावगूहेत (न्यवगूहेत) नग्निका (कन्यका) पुराणम् ; पमा. ४८२ लज्जां जानाति (लज्जिनाऽज्ञानि) उत्तरार्धे (योन्यादीनि न गूहेत तावद्भवति कन्यका ।) पुराणम् ; मपा. १४९ यावन्न लज्जां जानाति (पश्यत्यलज्जा याऽज्ञानि) वायुपुराणे ; मपा. ३१५ पुराणम् ; विसौ. ७ यावन्न लज्जां (यावल्लज्जां न) पुरुष (तु पितु) पृथ्वीचन्द्रोदये इत्युक्तम् ; संप्र. ७६७ ; मुक्ता. १३५ लज्जां जानाति (लज्जयाऽज्ञानि) नावगूहेत (न्युपगूहत) वसिष्ठः ; संम. ६५ लज्जां जानाति (लज्जया याति) नग्निका (कन्यका) पुराणम् ; विपा. ७२९ स्मृतिभास्करे इत्युक्तम् ; आन. १७१ लज्जां जानाति (लज्जिनाऽज्ञानि) नावगूहेत (न्यवगूहेत) वसिष्ठ ; संर. ४५७ लज्जां जानाति (गूहतेऽज्ञानि) नग्निका (कन्यका).



अनूढसप्तवर्षाधिकानां नामानि' इति ।

संप्र.७६७–७६८

## भविष्यपुराणम्

गौरीरोहिणीकन्यानग्निकारजस्वलालक्षणानि

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकुचा कन्या कुचहीना तु नग्निका ॥१

सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका ।
द्वादशे तु भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥२

(१) सप्तवर्षैव गौरी च मुख्या । 'अनवाप्तरजा गौरी' इत्येतदप्येतत्परम् । 'विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः' इति संवर्तवचनमपि सप्तमस्यैव, गर्भाष्टमत्वात्तत्परमेव । नग्निका तु मुख्या 'प्राग्वाससः प्रतिपत्तेः' (गौध.१८।२४) इति गौतमवचनात् परिधानानभिज्ञा दशवर्षा । कुचहीना च सा विवाहे दोषाभावप्रतिपादनार्थं परिभाषिता । प्रशस्यते तु पूर्वोक्तैव ।

गृक.५५

(२) अत्र सप्तवर्षैव गौरी (स्यादित्यस्य ?) । 'अनवाप्तरजा गौरी' इत्यङ्गिरोवाक्यस्यापि सामान्यवाक्यतया एतद्विशेषपरत्वम् । एवं च 'विवाहस्त्वष्टवर्षायाः...... शस्यते बुधैः ॥' इति संवर्तवाक्यस्याप्येकमूलत्वात् गर्भाष्टममादायात्रैव तात्पर्यम् ।

यत्तु कन्यावरवयःक्रमनिरूपणे 'त्रिंशद्वर्षेण षोडशवर्षा विवाहिता प्रशस्ता भवति' इत्युक्तं तत् उद्वाहकगुणप्रयुक्तप्रकर्षाभिप्रायम् । (तत् ?) उद्वाह्यगतो व्यञ्जनाद्युद्भवप्रयुक्तस्तत्रापि दोष एव । नग्निका तु परिधानानभिज्ञा दशवर्षा विवाहिता प्रशस्ता, कुचहीना च विवाहे दोषाभावप्रतिपादनार्थं परिभाषिता ।

यत्तु कन्यावरवयःक्रमनिरूपणे महाभारते 'त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम्' इत्युक्तम्, तत्र

---

(१) गृक. ५४ ; गृर. ४६ ; संप्र. ७६८.

(२) मपा. ११५४ (नग्निका दशवर्षा) एतावदेव ; गृक. २६ (दशवर्षा तु नग्निका) एतावदेव : ५५ ; गृर. ४६ ; विसौ. ७ पृथ्वीचन्द्रोदये इत्युक्तम् ; संप्र. ७६८–७६९.

'दशवर्षा तु नग्निका' इति भविष्यपुराणविरोधात् 'षोडशवर्षो त्रिंशद्वर्षः परिणयेत् नग्निकां वा' इति बोद्धव्यं, व्यञ्जनादिषु दोषदर्शनात् । गृर.४७

ऋतुपूर्व कन्याया अदाने दोषः

अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत् ।
महदेनः स्पृशेदेनमन्यथैष विधिः सताम् ॥

रजःप्रवृत्तेः पूर्वं देया इति सतां विधिः धर्मः । अन्यथा रजःप्रवृत्तौ दानात् एनं दातारं महत्पापं स्पृशेदित्यर्थः । * गृक.५५

अष्टवर्षायाः कन्याया विवाहः प्रशस्तः

उभयस्यापि पक्षस्य मनोऽभ्युदयपूर्वकम् ।
कुमार्यास्त्वष्टवर्षायाः शस्यते पाणिपीडनम् ॥

## अनिर्दिष्टकर्तृकवचनानि

स्त्रीणां पञ्चमवर्षादूर्ध्वं विवाहकालः, वरान्न्यूनवयस्त्वं विवाहे इष्टम्

जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।
कुमारीणां तथा दानं मेखलाबन्धनं तथा ॥
चतुर्थे जननात्पूर्वं न विवाह्येति केचन ।
गौरीव कन्यका भाति चूडादूर्ध्वमिह स्त्रियः ॥
समाब्दा समकाला या न विवाह्या कदाचन ।
वरस्तु द्वित्रिवर्षादिन्यूनां कन्यां समुद्वहेत् ॥

## संग्रहकारः ( स्मृतिसंग्रहः )

नग्निकालक्षणम्

यावच्चेलं न गृह्णाति यावत्क्रीडति पांसुभिः ।
यावद्दोषं न जानाति तावद्भवति नग्निका ॥

## शौनककारिका:

स्त्रीणां पञ्चमवर्षादारभ्य विवाहकालः, द्वादशवर्षादूर्ध्वं वरविवाहकालः

चतुर्होयनकन्यां तु विवहेत्षोडशाब्दकः ।
त्रिंशद्वर्षो द्वादशाब्दाकरग्रहणमिष्यते ॥
प्राग्द्वादशाब्दात्पुंसस्तु दशाब्दादिति चापरे ।
विवाहं न प्रशंसन्ति पुत्रायुर्वृद्धिमिच्छवः ॥
विवाहं नैव दुष्यन्ति कलौ तु नियमादिह ॥

## रेणुकारिका:

गौरीरोहिणीकन्यानग्निकारजस्वलालक्षणानि, ऋतुपूर्वं कन्याया अदाने दोषः, वरान्न्यूनवयस्कत्वं विवाहे इष्टम्, अविवाहितायाः ऋतुमत्या वृषलीत्वदोषः

अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
दशमे नग्निका वा स्याद्द्वादशे वृषली स्मृता ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥
एतच्च प्रायिकं ज्ञेयं न रजोदर्शनं भवेत् ।
कासांचिदपि वर्षेऽस्मिन्नभाणि मनुनाऽपि तत् ॥
उद्वहेत्त्रिंशदब्दस्तु कन्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ।
वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम् ॥
त्रिंशद्वर्षो दशाब्दां वा भार्यां विन्दति नग्निकाम् ।
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥
प्रदानं प्रागृतोस्तस्या ऊर्ध्वं कुर्वन्स दोषभाक् ।
ज्येष्ठो भ्राता पिता माता दृष्ट्वा कन्यां रजस्वलाम् ।
त्रयस्ते नरकं यान्ति स्वयमित्यब्रवीद्यमः ॥

---

* गृर गृकवत् ।

( १ ) गृक. ५५ ; गृर ४७ पिता सकृत् ( स्वयं पिता ) ; संप्र. ७६९–७७० मन्यथैष विधिः सताम् ( मन्यथैव विधिस्सतः ); सिन्धु. १०६५ पू., भारते इत्युक्तम् ; रत्न. ५४ .

( २ ) चद्रा. ६८६ ; कृभ. १०६५ .

( ३ ) पमा. ४८१ ; सिन्धु. १०६४ कुमारीणां तथा ( कुमारीवर्णं ) पराशरमाधवीये इत्युक्तम् ; रत्न. ५४ .

( ४ ) प्रपा. ३१५ .

( ५ ) प्रपा. ३१५ .

( ६ ) स्मृच. ८० ; चका. ८०३ ; पमा. ४८२ नग्निका ( कन्यका ) ; प्रपा. ३१५ ; मुक्ता. १३५ वसिष्ठः ; विपा. ७२९ ; श्रान. १७५ वसिष्ठ .

( १ ) प्रपा. ३१५ .

( २ ) रेका. ४२–५५-पृ. ५१–५२ ; गभा. ६६ .

यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥
पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
अदृष्टरजसां (१सं) कन्यां नग्निकां ब्रुवते बुधाः ।
दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणीम् ॥
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

## गृह्यासंग्रहः

नग्निकालक्षणम्, ऋतुमत्या विवाहे दानार्हत्वम्

नग्निकां तु वदेत्कन्यां यावन्नर्तुमती भवेत् ।
ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम् ॥

'नग्निका तु श्रेष्ठा' (गोगृ. ३।४।६) इति सूत्रोक्तां नग्निका व्याकुरुते— नग्निकामिति । यावन्न ऋतुमती रजस्वला भवेत्, तावत् कन्या नग्निका वदेत् । ऋतुमती पुनरनग्निका भवति । तां कन्यामनग्निकामृतुमतीमपि दद्यात् । तुरप्यर्थो भिन्नक्रमेण योजनीयः । तदेवमनग्निकामपि दद्यात्, नग्निका पुनः श्रेष्ठा, न पुनरनग्निकाया विवाह एव न भवतीत्यभिप्रायः । मनुरपि— 'काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि । न चैवैना प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥' (मस्मृ. ९।८९) इति स्मरन् ऋतुमत्या अपि विवाहमनुजानाति । यानि पुनरनग्निकाविवाहनिन्दापराणि स्मृतिवचनानि, तेषामनग्निकायाः अप्राशस्त्ये नग्निकायाः प्राशस्त्ये च तात्पर्यं, गोभिलीयव्यतिरिक्तविषयत्वं वा वर्णनीयम् । गृसंभा.

गौरीरोहिणीकन्यानग्निकालक्षणानि, नग्निकात्वं विवाहे प्रशस्तम्

अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत्कन्या कुचहीना च नग्निका ॥

रजसः इति संबन्धलक्षणा षष्ठी । रजः इति च ऋतुर्भण्यते । रजसा अप्राप्ता गौरी भवति । तां ददत् गौरीदानफलं लभते इत्यर्थः । एवमुत्तरत्रापि वर्णनीयम् । रजसि प्राप्ते रोहिणी । अनेनापि प्राप्तरजस्काया अपि विवाहं दर्शयति । व्यञ्जितं व्यञ्जनं (भावे निष्ठा) । व्यञ्जनं चिह्नमित्यनर्थान्तरम् । तच्चार्थाद्यौवनस्य । न व्यञ्जितं यस्याः सेयमव्यञ्जिता अनागतयौवनचिह्नेत्येतत् । कुचहीना नग्निकेत्यपरां नग्निकामाह । गृसंभा.

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।
पयोधरैस्तु गन्धर्वा रजसाऽग्निः प्रकीर्तितः ॥

भुञ्जीत भुङ्क्ते । पयोधरैः समुत्पन्नैर्गन्धर्वा भुञ्जते । रजसा समुत्पन्नेन अग्निर्भोक्ता कथितः । गृसंभा.

तस्माद्व्यञ्जनोपेतामरजामपयोधराम् ।
अभुक्तां चैव सोमाद्यैः कन्यकां तु प्रशस्यते ॥

अरजा अरजस्काम् । तदीदृशीं कन्यकामभिप्रेत्य, प्रशस्यते (सकर्मकादपि भावे लिङ् छान्दसी) प्रशंसा क्रियते आचार्येण इति वाक्यशेषः । तथा च गोभिलसूत्रम्— 'नग्निका तु श्रेष्ठा' इति । शिष्टमन्यत् । गृसंभा.

(१) गृसं. २।१७-२०.



# स्वयंवरः

## गौतमः

स्त्रीणामृतुत्रयोत्तरं स्वयंवरणाधिकारः, स्वयंवरे पित्र्यालङ्कारत्यागः

त्रीन् कुमार्यृतूनतीत्य स्वयं युज्येतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् ॥

प्रासङ्गिकमुक्त्वा स्त्रीधर्ममेवाह--त्रीनिति । त्रीनृतून् कुमारी कन्या अतीत्य, यद्येतां पित्रादिर्न दद्यात्, स्वयमेव भर्तारं प्रतिपद्येत अनिन्दितं कुलाभिजनादिसमन्वितमित्यर्थः । उत्सृज्य पित्रादिदत्तालङ्कारान् । पितृग्रहणं प्रदर्शनार्थम् । तथा चाह मनुः-- 'अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा । मातृकं भ्रातृदत्तं वा स्तेयं स्याद्यदि तं हरेत् ॥ ' इति । * मभा.

## बौधायनः

ऋतुमत्या वर्षत्रयोत्तरं स्वयंवरणाधिकारः

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥

( १ ) सदृशो गुणवान् । अप. १।६४

( २ ) पित्रादीनां यत्नवतामपि केनचित् निमित्तेन कन्यादानासंभवे सतीदम् । वीमि. १।६४

( ३ ) सादृश्यं जातिगुणादिभिः । बौवि.

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ॥

गुणा अभिजनादयः, न जातिः । बौवि.

## वसिष्ठः

ऋतुमत्या वर्षत्रयोत्तरं स्वयंवरणाधिकारः

कुमार्यृतुमती त्रीणि वर्षाण्युपासीत, ऊर्ध्वं त्रिभ्यो वर्षेभ्यः पतिं विन्देत्तुल्यम् ॥

## विष्णुः

स्त्रीणामृतुत्रयोत्तरं स्वयंवरणाधिकारः

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥

( १ ) यत्तु विष्णुनोक्तम्-- 'ऋतुत्रयमपास्यैव कन्या कुर्यात्स्वयंवरम् ' इति, तत् गुणवद्वरलाभे सति द्रष्टव्यम् । तदलाभे तु वर्षत्रयमुपासनीयम् * । अप. १।६४

( २ ) यच्च विष्णुनोक्तम् 'ऋतुत्रयमुपास्यैव ' इति, तत् ऋतुत्रयादर्वाङ्निषेधपरम् । यदा तु न वर्षत्रयं

---

* गौमि. मभावत् ।

(१) गौध. १८।२१ ; गृक. ४९ ; मभा. ; गौमि. १८।२० ; चका. ८०५ ( त्रीनृतूनतीत्य स्वयं युज्यते ) एतावदेव ; गृर. ४२ कुमार्यृतूनतीत्य ( कुमार्यृतुमती ) ; संप्र. ७७० पित्र्यान ( पैत्रान ).

( २ ) बौध. ४।१।१५ ; विश्व. १।६४ ; अप. १।६४ ; गृक. ४९ ; गृर. ४२ ; पमा. ४८३ ; मपा. १४८ ; मर. २० ; वीमि. १।६४ ; संप्र. ७७२ पि वर्षे ( पंवर्षे ) ; चम. १११ ; मुक्ता. ११६ ; संम. ६६ विन्देत ( विन्देत्तु ) ; मिन्धु. १०६६, १११४ पू. ; रत्न. ५४ पू. ; मान. १७१ ; धूम. ११११४ उत्त. ; संर. ५०० .

* 'उपासनीयम् ' इति प्रयोगात् विष्णुवचने 'उपास्य ' इत्येव पाठोऽभिप्रेत इति भाति । 'उपासनीयम् ' इत्यत्र 'अपासनीयम् ' इति वा स्यात् ।

( १ ) बौध. ४।१।१६ ; विश्व. १।६४ अविद्य ( अलभ्य ) हीनमपि श्रयेत् ( हीनं समाश्रयेत् ) ; अप. १।६४ श्रयेत् ( व्रजेत् ) ; गृक. ४९ ; गृर. ४२ ; चका. ८०५ ; पमा. ४८४ ; मपा. १४८ ; मर. २० ; वीमि. १।६४ ; संप्र. ७७२ ; मुक्ता. ११६ ; मान. १७१ ; संर. ५०० .

( २ ) वस्मृ. १७।५९ ; चका. ८०५ त्रिभ्यो वर्षेभ्यः ( त्रिवर्षेभ्यः ) विन्देत् ( विन्देत ) ; संप्र. ७७३ ( कुमारी० ) शेषं चकावत् .

( ३ ) विस्मृ. २४।४० ; अप. १।६४ मुपास्यैव ( मपास्यैव ) पू. ; गृक. ४९ ; स्मृच. ८१ अपरार्धं, पू. ; चका. ८०५ सदा ( तथा ) ; गृर. ४२ अपरार्धं ; पमा. ४८४ पू. ; मपा. १४८ पू. ; मर. २० पू. ; दीक. १।६४ मुपास्यैव ( मतीत्यैव ) प्रभवत्यात्मनः सदा ( प्रमु कन्या स्वयंवरे ) ; वीमि. १।६४ मुपास्यैव (मतीत्यैव) ; संप्र. ७७३ ; चम. ११२ पू. ; संम. ६६ पू. ; सिन्धु. १११४ पू. ; संर. ५०१ अपरार्धं, पू.

स्नातुमलं, तदा ऋतुत्रयादूर्ध्वमपि वरयेत् ।

चदा.८०६

( ३ ) यत्तु विष्णुनोक्तम्— 'ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम्' इति, तत् गुणवद्वरलाभे सति द्रष्टव्यम् । ननु, ऋतुमत्यां कन्याशब्दः कथं प्रयुक्तः, यतो यमेन 'दशवर्षा भवेत्कन्या' इत्युक्तम् । न च दशमे वर्षे ऋतुः संभवति । नायं दोषः, गौर्यादिशब्दवत् कन्याशब्दस्यापि यमेन परिभाषितत्वात् । सा च परिभाषा फलकथनादावुपयुक्ता । तच्च पूर्वमेवोदाहृतम् 'कन्यां दद्ब्रह्मलोकम्' इति । लोकप्रसिद्धस्तु कन्याशब्दो विवाहरहितस्त्रीमात्रमाचष्टे । एवं च सति, शास्त्रेषु बहवः कन्याशब्दा अनुगृहीता भवन्ति । तथा च आनुशासनिके अष्टावक्रोपाख्याने वृद्धस्त्रियां प्रयुक्तः— 'कौमारं ब्रह्मचर्यं मे कन्यैवास्मिन्न (? स्मि न) संशयः' (१३।२०।२२) इति । शल्यपर्वण्यपि वृद्धस्त्रिया नारदेन प्रयुक्तः— 'असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे' (९।५२।१२) इति । उमामाहेश्वरसंवादेऽपि 'ऋतुस्नाता तु या शुद्धा सा कन्येत्यभिधीयते' इति ।

* पमा.४८४-४८५

( ४ ) इयं प्रतीक्षा दातृसद्भावे । यदा तु कोऽपि दाता नास्ति तदा राजा दद्यात् । यथाह नारद.— 'यदा तु कश्चिन्नैव स्यात् कन्या राजानमाव्रजेत्' इति । यदा राजाऽपि न ददाति तदा स्वयंवरं कुर्यात् । याज्ञवल्क्यः 'गम्यं त्वभावे दातृणां कन्या कुर्यात् स्वयं वरम्' (१।६४) इति ।

\+ संम.६६-६७

## महाभारतम्

पित्राज्ञया दमयन्त्याः स्वयंवरः

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥

राजोवाच —

पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥
श्रुतं हि धर्मशास्त्रे मे पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥
इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ॥
स संनिमन्त्रयामास महीपालान् विशांपतिः ।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो ॥

( १ ) तथा पित्राज्ञयाऽपि स्वयंवर उक्तो भारते सावित्र्युपाख्याने— 'पुत्रि प्रदानकालस्ते न च कश्चिद् वृणोति माम् । स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥' तथा नलोपाख्यानेऽपि— 'स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् । अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ॥' इति ।

संम.६७

( २ ) भारते सावित्र्युपाख्याने पित्रनुज्ञयाऽपि स्वयंवरणमुक्तं, तत् क्षत्रियाधिकारत्वात्तद्विषयम् ।

संर.४९८

## मनुः

ऋतुमत्या वर्षत्रयोत्तरं स्वयंवरणाधिकारः

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥

---

* पम. पमावत् ।
\+ कृम. संमवत् ।
( १ ) भा. ३।२९३।३१ .

( २ ) भा ३।२९३।३२ ; संम. ६७ ; संर. ४९८ .
( २ ) भा. ३।२९३।३३-३९ .
( ३ ) भा. ३।५४।८ ; संम. ६७ .
( ४ ) भा. ३।५४।९ .
( ५ ) मस्मृ. ९।९० ; गृक. ४८ च्युदीक्षेत ( ? ...गाहीत ) ; मवि. 'उपासीत' इति कचित्पाठः ; स्मृच. ८१ पृ२२२ ;

( १ ) रेतः ऋतुकालः ( ? ऋतुः रेतःकालः ), तद्वत्यपि त्रीणि वर्षाणि तद्गृहे आसीत । अतः परमुत्कृष्टाभावे सदृशं समानजातीयं स्वयं वृणुयात् ।

+ मेधा.

( २ ) उदीक्षेत प्रतीक्षेत, न ततः प्राक् स्वयंवरणमस्तीत्यर्थः । उपासीतेति क्वचित्पाठः । विन्देत स्वप्रयत्नेनैव । सदृशमित्ययमव्यवच्छेदार्थम् । मवि.

( ३ ) दातॄणामेवाभावे तु स्वयंवरा स्यादित्याह— त्रीणीति । उदीक्षेत सदृशं दातारं वा प्रतीक्षेत । एतस्माद्वर्षत्रयात् । * मच.

स्वयंवरणे कन्यावरयोर्न प्रत्यवायः

**अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।**
**नैनः किंचिदवाप्नोति न च यं साऽधिगच्छति ॥**

( १ ) वर्षत्रयादूर्ध्वं अदीयमाना यं भर्तारं वृणुते तस्य दोषो न । कन्यायाः पूर्वेणैव दोषाभावे उक्ते भ्रियमाणस्यादोषार्थमिदम् । ऋतुदर्शनं च द्वादशवर्षाणामिति स्मर्यते । मेधा.

( २ ) न एनः पापं पित्रननुमतिकृतं, यं साऽधिगच्छति सोऽपि न एनः रजस्वलापरिणयनादिकृतं प्राप्नोतीत्यनुषङ्गः । § मवि.

( ३ ) एनः पापं असतीत्वनिबन्धनं न साऽवाप्नोतीत्यर्थः । गृर.४२

( ४ ) अदीयमाना बन्धुहीना । † भाच.

( ५ ) अदीयमाना दातुपेक्षणात् तदभावाद्वा । पुंसा परेणेति शेषः । न च व्यभिचारिणीत्यर्थः । कृभ.१११५

पित्र्याद्यलङ्कारे कन्यायाः स्वयंवराया न स्वत्वम्

**अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ।**
**मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥**

( १ ) भ्रात्रादिभिर्यत् आदौ दत्तं स्वयंवरणाभिप्रायं तस्या अजानद्भिः, तदलङ्करणं तेषामेव प्रत्यर्पयेत् । यदि तु तथाविधाया एव ददाति तदा न त्यागः । तेनास्मै न वयमेनां दास्याम इत्येवमभिप्रायं यद्भूषणं न त( द )स्मिन्नन्यथात्वमापन्ने युक्तम् । ' स्तेनः स्यात् ' इति पुल्लिङ्गेन पाठान्तरम्, वरस्य चौरत्वमाहुः । तस्मात्तेन पित्र्यानलङ्कारान् त्याजयितव्या । मेधा.

( २ ) स्वयंवृतपतिका कन्या वरस्वीकरणात् पूर्वं पितृमातृभ्रातृभिर्दत्तमलङ्कारं तेभ्यः समर्पयेत् । यदा नार्पयेत्तदा चौरी स्यात् । ममु.

( ३ ) अलङ्कारनिषेधात् वाससां ( ? साम· ) निषेधः । गृर.४२

( ४ ) स्वयंवरा तु पूर्वं पितृभ्रातृभ्यो लब्धमपि धनं त्यक्त्वा पतिं भजेतेत्याह— अलङ्कारमिति । पित्र्यं मातृकमिति भूतपूर्वगत्या । तं अलङ्कारम् । उक्तवैपरीत्ये दोषमाह— स्तेनेति । ग्रहणे स्तेनत्वं, यतः स्वयंवरा स्वदेह·

---

\+ ममु. मेधावत् ।

* भाच. मचवत् ।

§ ममु., पमा., मच., नन्द., संर. मविगतार्थाः ।

चका. ८०५ ; गृर. ४१ गृकवत् ; पमा. ४८४ ; संप्र. ५८४ चतुर्थ पादः : ७७२ गृकवत् ; मुक्ता. १३६ गृकवत् ; संकौ. २०१ ; संग. २०१ गृकवत् ; कृभ. १११५ ; संर. ५०१ कुमार्युतु ( नारी ऋतु ).

( १ ) मस्मृ. ९।९१ ; गृक. ४८ यदि स्वयम् ( स्वयं तथा ) ; स्मृच. ८१ ; चका. ८०५ ; गृर. ४२ यदि स्वयम् ( स्वयं तु वा ) ; पमा. ४८४ ; मच. साऽधि ( साऽपि ) ; संप्र. ७७२ यदि स्वयम् ( स्वयं यदि ) ; चम. १११ बौधायनः ; मुक्ता. १३७ ; संकौ. २०१ ; संग. २०१ अदीय ( स्वदीय ) यदि स्वयम् ( स्वयं यदा ) न च ( न वा ) ; कृभ. १११५ अधिगच्छेद्यदि स्वयम् ( यदि गच्छेत्स्वयं पतिम् ) यं साऽधि ( पुंसाऽधि ) ; संर. ५०१.

† शेषं मविगतार्थम् ।

( १ ) मस्मृ. ९।९२ ; मेधा. ' स्तेनः स्यात् ' इति पुल्लिङ्गेन पाठान्तरम् ; अप. ११६४ स्तेना ( स्तेय ) ; गृक. ४८ पित्र्यं कन्या ( पितृदत्तं ) मातृकं ( मातृतो ) स्तेना ( स्तेयं ) ; ममा. १८।२१ अपवत् ; गौमि. १८।२० स्तेना स्याद्यदि तं हरेत् ( स्तेयं स्याद्यदि किंचन ) ; स्मृच. ८१ ; गृर. ४२ पित्र्यं कन्या ( पितृदत्तं ) ; सपा. १४८ पित्र्यं कन्या ( पितृदत्तं ) उत्तरार्धे ( मातृदत्तं भ्रातृदत्तं स्तेयं स्याद्यदि तं हरेत् । ) ; संप्र. ७७२ गृरवत् ; मुक्ता. १३७ अपवत् ; मिन्धु. १११५ ( अलङ्कारं नाददीत पितृदत्तं स्वयंवरे । पितृदत्तं मातृदत्तं स्तेयी स्याद्यदि तं हरेत् ॥ ) ; संर. ५०१ मपावत्.

मात्रमादाय वरं पतिं वृणीते तस्याः पित्रादिधने नाधिकारः । + मनु.

ऋतुमत्याः कन्यायाः शुल्कनिषेधः

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥ *

( १ ) शुल्कदेयाया ऋतुमत्याः शुल्कनिषेधोऽयम् । अत्र हेतुः— स च स्वाम्यादतिक्रामेत् । 'बाल्ये पितुर्वशे तिष्ठेत्' इत्युक्तम् । वयोन्तरप्राप्तौ चाददतः पितुः स्वाम्यं नास्ति । शुल्कादेयाया अपि हेतोः समानत्वात् पितुः स्वाम्यनिवृत्तिः । अत्र( अति )क्रमणं निवृत्तिः । प्रतिरोधनं प्रतिरोधः अपत्योत्पत्तिकार्ये । केचिदाहुः अमानवोऽयं श्लोकः । § मेधा.

( २ ) ऋतुयुक्तां कन्यां वरः परिणयन् पित्रे शुल्कं न दद्यात् । यस्मात् स पिता ऋतुकार्यापत्योत्पत्तिनिरोधात् कन्यायाः स्वामित्वाद्धीयते । मनु.

( ३ ) आर्षे गोमिथुन विहितमपि ऋतुमत्यां निषेधति- पित्र इति । स हि पिता स्वाम्यादतिक्रामेत् स्वाम्यात् प्रच्युतः, ऋतूनां प्रतिरोधनात् ऋतुजापत्यप्रतिरोधनात् । ऋतुपर्यन्तं कन्यायाः कन्यात्वं पितुः स्वत्वं न, यत स्वयंवरा स्वदेहमात्रमादाय वरं वरयतीति । पित्राद्यनधीनत्वम् , 'बाल्ये पितुर्निदेशे तिष्ठेत्' इत्युक्तेर्दशवर्षादिकालस्य स्वत्वनिवर्तकत्वन् ऋतुकालस्यापि स्वत्वनिवर्तकत्वात् । मन.

+ भाष. मचणम् ।

* अस्य श्लोकस्य स्वयंवरविषयकत्वं चिन्त्यम् । कैश्चिन्निबन्धकारैः स्वयंवरप्रकरणे उद्धृतत्वादत्र संगृहीतः ।

§ मदि. मेधावत् ।

( १ ) मस्मृ. ९।९३ ; मेधा स हि ( स च ) ; अप. ११६४ ; गृक. ४८ ; गृर. ४२ ; मपा. १४९ ; संप्र. ७३२ न दद्यात् ( दद्यात् ) ; सुभा. ११७ स हि ( स च ) प्रतिरोधनात् ( प्रतिरोधकः ) ; मिन्धु. ११२५ प्रतिरोधनात् ( प्रतिबोधनात् ); कृम. १११२ .

याज्ञवल्क्यः

कन्यादातुरभावे कन्यायाः स्वयंवरणाधिकारः

गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् ॥

( १ ) नन्वेतदप्युक्तम् ( ? नन्वेवमप्युक्तम् ) । दात्रभावे गृहस्थाश्रमो दुःश्लिष्ट एव । तत्र पुमांसः आश्रमान्तराश्रयणेनापि कृतिनः स्युः । स्त्रीणां तु का गतिरिति । उच्यते— स्यादयं दोषः यदि पराधीनतेव स्त्रीणामात्यन्तिकी स्यात् । दातृसद्भावे एव तु तासां पराधीनता । तदभावे तु किम् । उच्यते— गम्यमिति । गम्यं गमनार्हं उक्तलक्षणं स्वयमेवर्तुमती वर्षत्रयादूर्ध्वं वरं कुर्यात् दात्रभावे । विद्यमानोऽपि च दाता यदि न दद्यात्, ततोऽस्यामवस्थायां तदीयमलङ्कारमुत्सृज्य स्वयमेव वरं वरयेत्, स्मृत्यन्तरात् । यद्याप्युक्तलक्षणस्तां नेच्छेत्, तदापि सवर्णमात्राश्रयणमविरुद्धम् । यथाह बौधायनः—' त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् । ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥ अलभ्यमाने सदृशे गुणहीनं समाश्रयेत् ॥ ' इति । गुणवचनाच्च जातिनियमः । सर्वथा भार्याया भर्तृप्राप्तिः, भर्तुश्च भार्याप्राप्तिः, इत्यनयोः गृहस्थाश्रमः । तथा चाम्नायः— ' उत वै याचन् दातारं लभत एव । अतो भर्ता भार्याम् ' इत्यादिः । विश्व.

( २ ) यदा पुनर्दातॄणामभावः तदा कन्यैव गम्यं गमनार्हं उक्तलक्षणं वरं स्वयमेव वरयेत् । मिता.

( ३ ) दातॄणां पित्रादीनामभावे स्वयमेव कन्या गम्यं गमनार्हं सवर्णं उत्कृष्टवर्णं वा पातित्यादिदोषरहितं वरं भर्तारं कुर्यात् । एतच्च प्राप्तत्रोदर्शनात् । दृष्टे तु तस्मिन्

( १ ) यास्मृ. ११६४ ; विश्व. ; मिता. ; अप. ; गृक. ४८ ; स्मृच. ८४ ; चका. ८०१ ; चन्द्रा. ११२ ; गृर. ४१ गम्यं त्वभावे दातॄणां ( गम्यं चाप्येव कुर्यात् ) ; स्मृमा. १२ इत्येव कात्यायनः ; पमा. ४८१ ; प्रपा. १४२ ; गमा. ७० ; उत. १२७ ; संप्र ८९१ गम्यं ( कार्यं ) ; मर. ९८ ; वीमि. ; संप्र. ७३२ ; चन. ११० ; सुभा. १४० ; संन. ६७ ; मिन्धु. १०७२ ; प्रका. १५८ ; संत. ४०१ ; संव. १४२ ; नास्मृ. ५४ ; कृम. १११४ ; संर. ४९६, ४९८ .

पित्रादिषु सत्स्वपि स्वयमेव कन्या वरं कुर्यात्, न पित्रादिशासनमपेक्षेत। अप.

(४) यदा पुनरुक्तदातॄणामभावस्तदा स्वयं कन्यैव गम्यं अनपकृष्टवर्णं पातित्यादिदोषरहितं वरं भर्तारं कुर्यात्। एतच्च रजोदर्शनात् प्रागेव इति केचित्। परे तु जीवत्पितृकाया इव ऋतुत्रयाद्यनन्तरमेव दातृहीनाया अपि स्वयंवराधिकार इत्याहुः। विष्णुः— 'ऋतुत्रयमतीत्यैव कन्या कुर्यात्स्वयंवरम्। ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा॥' बौधायनः— 'त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्। ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्॥ अविद्यमाने सदृशे गुणहीनमपि श्रयेत्॥' पित्रादीनां यत्नवतामपि केनचिन्निमित्तेन कन्यादानासंभवे सतीदम्। विष्णुवचनं तु यथोक्तवरसंपत्तावप्युपेक्षादिना तददाने द्रष्टव्यमित्यविरोधः। वीमि.

## नारदः

कन्यादात्रभावे कन्यायाः स्वयंवरणाधिकारः

**यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत्।**
**अनुज्ञया तस्य वरं परीक्ष्य वरयेत् स्वयम्॥**

(१) यदा तु सर्वेषामभावः तदा राजा दद्यात्। तदाह स एव— यदेति। यदाऽसावपि क्षितिपालनाद्याकुलतया न ददाति, तदा कन्यैव तदनुज्ञया स्वसदृशं भर्तारं वरयेत्। तदपि तेनैवोक्तम्— अनुज्ञयेति। स्मृच. ८४

(२) यदा तु नैव कश्चित् स्यात् दातोक्तानां मध्ये, सा राजानमाव्रजेत् देहि मां कस्मैचिदिति। तदनुज्ञया अभीष्टमनुरूपमावेद्य राज्ञे स्वयं प्रतीत्य वरं वरयेत्। नाभा.

**सवर्णमनुरूपं च कुलरूपवयःश्रुतैः।**
**सह धर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः॥**

(१) ततः तस्माद्वरात्। गृक.४८

(२) सवर्णं वरं प्राप्य इत्यध्याहृत्य योजनीयम्। एतच्चासति रजोदर्शने द्रष्टव्यम्। दृष्टे तु रजसि सत्स्वपि पित्रादिषु कंचित्कालं पितुः शासनं परीक्ष्य तदुपेक्षणेन स्वयमेव वरं वरयेत्। * पमा.४८३

(३) सवर्णं समानजातीयम्। कुलादिभिर्युक्तम्। सवर्णमित्येवं गते सवर्णं स्वयं वरयन्ती रूपादियुक्तमेव वरयति न विरूपादिकमित्येतत् प्रयोजनं, सवर्णमपि कुलादियुक्तम्। सर्वे कुलयुक्ता एव, प्रकर्षार्थमुक्तमिमे कुलजा इति। तेन सह धर्मं गृहस्थानां चरेत्। धर्मे चार्थे च कामे च नातिचरेत्। तत एव पुत्रानुत्पादयेत्। तत इत्यवक्तव्ये वचनप्रयोजनं तस्यासामर्थ्ये तदनुज्ञया क्षेत्रजोत्पादनार्थम्। तद्धि तत एवोत्पन्नमपत्यं भवति। नाभा.

(१) नासं. १३।२२ तस्य वरं परीक्ष्य (वर तस्य प्रतीत्य); नास्मृ. १५।२२ व्रजेत् (श्रयेत्) परीक्ष्य (प्रतीत्य); गृक. ४७; स्मृच. ८४ यदा तु नैव कश्चित्स्यात् (दाता यदा नैव कश्चित्) शेषं नासंवत्; चका. ८०६ परीक्ष्य (प्रतीक्ष्य); गृर. ४१ नैव कश्चित् (कश्चिन्नैव) व्रजेत् (श्रयेत्) तस्य वरं (वर तस्य); पमा. ४८३ पू.; मपा. १४८ तु नैव (नैव तु) परीक्ष्य (सवर्णं) मनुः; प्रपा. ३४२ उत्तरार्धे (पुरोहितेन वै राजा प्रदद्याद्ब्राह्मणोत्तमे।); मर. २० परीक्ष्य (सवर्णं) मनुः; गभा. ७० पू.; प्रर. ९९ पू.; वीमि. १।६४ तस्य वरं (वर तस्य); संप्र. ७७२ : ८२४ पू.; चम. ११० पू.; मुक्ता. १४० परीक्ष्य (प्रतीत); संम. ६७ नैव कश्चित् (कश्चिन्नैव) पू.; सिन्धु. १०७५ पू., मनुः; विपा. ७५६ पू.; श्रान. १७७ मुक्तावत्; प्रका. ३५८; बाल. १।६४ पू.; संग. २०१ : २५९ पू.; संव. १४३ पू.; कुभ. १११४ (=) संमवत्, पू.; संर. ४९८ पू., मनुः.

* प्रपा. पमावत्।

(१) नासं. १३।२३; नास्मृ. १५।२३ रूप (शील) पुत्रांश्चो (प्रजां चो); गृक. ४८; स्मृच. ८४ रूपवयःश्रुतैः (शीलवलश्रुतैः); गृर. ४१ रूप (शील); पमा. ४८३ स्मृचवत्; मपा. १४८; प्रपा. ३४२ चेत्ततः (येदिति) शेषं स्मृचवत्; संप्र. ७७२; मुक्ता. १४० स्मृचवत्; विपा. ७५७ उत्तरार्धे (सह धर्मं चरेयातां पुत्रांश्चोत्पादयेति च।) शेषं स्मृचवत्; श्रान. १७७; संग. २०१.

## यमः

द्वादशवर्षायाः कन्यायाः स्वयंवरणाधिकारः

[1]कन्या द्वादश वर्षाणि याऽप्रदत्ता गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥

यदा प्रौढामपि पित्रादिः तां न प्रयच्छति तदा कन्यैव सदृशं भर्तारं वरयेदित्याह यमः— कन्येति । एतच्च वरणं ऋतुप्रभृतिवर्षत्रयादूर्ध्वं वेदितव्यम् । मुक्ता. १३६

स्वयंवरणात् कन्यायां न दोषः

[2]एवं चोपनता पत्नी नावमान्या कदाचन ।
न च तां बन्धकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥

एवंविधाया बन्धकीत्वाभावो देशकालादिप्रतिबन्धाभावे सति । अन्यथा कालातिक्रमे दोषश्रवणात् ।

मपा. १४९

(१) गृक. ५० गृहे वसेद् (वसेद्गृहे); स्मृच. ८१ द्वादश वर्षाणि (द्वादशमे वर्षे); चका. ८०५ पूर्वार्धे (कन्या द्वादशमे वर्षे प्रदातुर्न गृहे वसेत् ।); गृर. ४३ भ्रूण (ब्रह्म); मपा. १४९ याऽप्रदत्ता गृहे वसेत् (या प्रदत्तानैव गृहे); मर. २० पूर्वार्धे (कन्या द्वादशवर्षा या न प्रदत्तानैव गृहे ।); निप. २८१ (=); उन. १२३ गृरवत्; संप्र. ७७२ याऽप्र (साऽप्र); मुक्ता. १३६ पूर्वार्धे (कन्या द्वादशमे वर्षे या त्वदत्ता गृहे वसेत् ।); सिन्धु १०६४ गृहे वसेत् (वसेद्गृहे) भ्रूण (ब्रह्म) - १११४ गृकवत्; रत्न. ५४ गृकवत्; प्रका. ३५८ गृरवत्.

(२) गृक. ५० (एवं चोपनतां पत्नीं नावमन्येत् कदाचन । तां कन्यां बन्धकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥), गृर ४२; मपा. १४९ नता पत्नी नावमान्या (नतां पत्नीं नावमन्येत्) न च (न तु); मर. २० मपावत्, निप २८१ (=) (एवं चोपनता पत्नीं नावमन्याद् कदाचन ।) पू.; संप्र. ७७३ विद्यात् (कुर्यात्); सिन्धु. १११५ नता पत्नी नावमान्या (नता पत्नीं नावमन्येत्) न च (न तु); संग. २०१ मपावत्, मनुः -

## बृहत्पराशरः

कन्यादातुरभावे कन्यायाः स्वयंवरणाधिकारः

[1]अधिकारी यदा न स्यात्तदाऽऽख्याय नृपस्य सा ।
तद्गिरा च स्वयं गम्यं कन्याऽपि वरयेद्वरम् ॥

## अनिर्दिष्टकर्तृकवचनानि

कन्यादातुरभावे कन्यायाः स्वयंवरणाधिकारः

[2]यदाऽत्र नैव कश्चित्स्यात् कन्या राजानमाव्रजेत् ।
पित्राद्यभावे कर्तव्यः कन्यायाश्च स्वयंवरः ॥
सुसमस्तगुणा कन्या कस्मै देयेति संशये ।
तदा स्वयंवरं कुर्यादपणं सपणं तु वा ॥
[3]पित्रादिदात्रभावे तु कन्या कुर्यात्स्वयंवरम् ।
इत्येवं केचिदाचार्याः प्राहुर्महति संकटे ॥

## रेणुकारिका

कन्यादातुरभावे कन्यायाः स्वयंवरणाधिकारः

[4]यदा तु नैव कश्चित्स्यात् कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं प्रतीत्य वरयेत्स्वयम् ॥

(१) बृपसं. ६।३० .
(२) ज्योनि. १५९ .
(३) धप्र. ४८.
(४) रेका. १८२ पृ. ६१.



# विवाहप्रकाराः



## विवाहप्रकारपरिगणनम्

### वैखानसगृह्यसूत्रम्

[1]अथातः पाणिग्रहणम् । अष्टौ विवाहा भवन्ति– ब्राह्मो दैवः प्राजापत्य आर्ष आसुरो गान्धर्वो राक्षसः पैशाच इति ॥

### हारीतः

[2]अथाष्टौ विवाहा भवन्ति– ब्राह्मो दैवो गान्धर्व आसुरो राक्षसः पैशाचो मानुषः क्षात्रश्चेति ॥

अत्र मानुषक्षात्रपदाभ्यां आर्षप्राजापत्ययोर्ग्रहणमित्यविरोधः । संप्र. ८४६

### बौधायनः

[3]अष्टौ विवाहाः ॥

केनोपायेन पुत्रिणो भवन्तीत्येतत्प्रसङ्गेन विवाहानामवतारः– अष्टाविति । उच्यन्ते इति शेषः । नियमार्थं अष्टग्रहणम् । ततश्च वक्ष्यमाणब्राह्मादिनियमधर्मलङ्घननिमित्तवर्णसंकरो भवति इत्येतदर्थात् सूचितं भवतीति । बौवि.

### वसिष्ठः

[4]षड् विवाहाः ॥ ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषश्चेति ॥

( १ ) इयं गणना नेतरव्यवच्छेदाय । यद्वा, पैशाचासुरविवाहात् उत्कृष्टविभागोऽयम् , प्रतिपादकपदेन एव केनचिल्लक्षणया साक्षादनुक्तयोरपि प्रतिपादनमिति वा । एवमन्येऽपि विभागा मन्वाद्युक्ताष्टधानुरोधेन नेयाः । गृर.६०

( २ ) यत्तु वसिष्ठेन ' षड्विवाहाः, ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषश्च ' इति षट्त्वमेव विवाहानामुक्तं, तन्नेतरव्यवच्छेदकं, किन्तु ब्राह्मणकर्तव्यतया उक्तषड्विवाहपरम्, ' षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् । विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥ ' ( मस्मृ. ३।२३ ) इति मनुस्मरणात् । संप्र.८४६

### विष्णुः

[1]अथाष्टौ विवाहा भवन्ति ॥

ब्राह्मो दैव आर्षः प्राजापत्यो गान्धर्व आसुरो राक्षसः पैशाचश्चेति ॥

### शङ्खः

[2]ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

### महाभारतम्

[3]अष्टावेव समासेन विवाहा धर्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ॥

### मनुः

[4]चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् ।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥

---

( १ ) वैगृ. ३।१ .

( २ ) गृक. ७१ भवन्ति ( संभवन्ति ) ; गृर. ५९ गृकवत् ; संप्र. ८४६ .

( ३ ) बौध. १।२०।१ ; मुक्ता. १४२ ; संर. ४७८ .

( ४ ) वस्मृ. १।२८–२९ ; गृक. ७१ दैव ( देव ) ; गृर. ६० दैव आर्षो ( दैवश्चार्षो ) ; संप्र. ८४६ .

( १ ) विस्मृ. २४।१७–१८ .

( २ ) शंस्मृ. ४।२ .

( ३ ) भा. १।७३।८,९.

( ४ ) मस्मृ. ३।२० ; गृक. ७० ; स्मृच. ८५ उत्त. ; चद्रा. ६८२ प्रेत्य चेह ( प्रेत्येह च ) ; गृर. ५९ ल [illegible] ह

( १ ) वक्ष्यमाणस्य संक्षेपोपन्यासः । हिताश्चाहिताश्च । केचित् हिताः केचिन्न । अष्टौ इति संख्यानिर्देशः । समासः संक्षेपः । स्त्रीसंस्कारार्था विवाहाः स्त्रीविवाहाः । कः पुनरेवं विवाहो नाम ? उपायतः प्राप्तायाः कन्याया दारकरणार्थः संस्कारः सेतिकर्तव्यताङ्गः ( १ कः ) सप्तपदिदर्शनपर्यन्तः पाणिग्रहणलक्षणः ।
* मेधा.

( २ ) चतुर्णामपि ब्राह्मणादिवर्णानां परलोकेहलोकयोः काश्चिद्धिता(न् काश्चिद्)हितान् इमान् वक्ष्यमाणान् अष्टौ भार्याप्राप्तिहेतून् विवाहान् संक्षेपेण शृणुत ।
+ गोरा.

( ३ ) स्त्रीविवाहानिति स्त्रियाः संस्कार्यत्वाभिधानम् । गृक.७०

( ४ ) स्त्रीपदं स्त्रीत्वेन प्रसक्तासंस्कार्यत्वनिवारणार्थं, संस्कार्यत्वार्थमिति कल्पतरुकारः । गृर.५९

( ५ ) विप्रादीना तानेवोद्वाहानष्टसंख्याकान् ब्राह्मादीनाह— चतुर्णामपीति द्वाभ्याम् । हिताहितान् स्वर्गनरकसाधनान् स्त्रीविवाहान् स्त्रीकर्मकान् । अनेन स्वयंवरविवाहो नाष्टमु गण्यते इति भावः । मच.

**ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।**
**गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥**

( १ ) सख्यया अष्टौ इत्युद्दिष्टाना नामधेयानीमानि । अधमग्रहणं पैशाचस्य निन्दार्थम् । मेधा.

( २ ) येन विवाहेन उत्पन्नया संतत्या ब्रह्मलोकप्राप्तिः स ब्राह्मः । एवं दैवोऽपि । मवि.

( ३ ) ते एते नामतो निर्दिश्यन्ते । ब्राह्मराक्षसादिसंज्ञा चेयं शास्त्रसंव्यवहारार्था स्तुतिनिन्दाप्रदर्शनार्था च । ब्रह्मण इवायं ब्राह्मः । रक्षस इवायं राक्षसः । न तु ब्रह्मादिदेवता( क )त्वं विवाहानां संभवति । पैशाचस्य अधमत्वाभिधानं निन्दातिशयार्थम् ।
* ममु.

( ४ ) आर्षात् प्राजापत्यस्य श्रैष्ठ्येऽपि वृत्तभङ्गभयादत्र क्रमभङ्गः । + मुक्ता.१४०

## नारदः

**अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्तिताः ।**
**ब्राह्मस्तु प्रथमं तेषां प्राजापत्यस्तथैव च ॥**
**आर्षश्चैवाथ दैवश्च गान्धर्वश्चासुरस्तथा ।**
**राक्षसोऽनन्तरस्तस्मात्पैशाचश्चाष्टमोऽधमः ॥**

संख्याग्रहणं परिगणनार्थम् । वर्णानां सभवतः । संस्काराख्या उपनयनस्थानीयाः । शेषो गतार्थः । नाभा.

---

* नन्द., भाच. मेधागतम् ।

+ मवि., ममु. गोरावत् ।

( प्रत्येक च ) ; पमा. ४८५ ; स्मृकौ. ३४ चदावत् ; संप्र. ८४६ चदावत् ; मुक्ता. १४० चदावत् ; संग. २५३ चदावत् ; सस्मृ. ५२ चदावत् .

( १ ) मस्मृ. ३।२१ ; गृक. ७२ मनुयमौ ; स्मृच ८५ ; चदा. ६८२-६८३ स्तथैवार्ष॰ ( स्तथा चार्षः ) मोऽधमः ( मो मत॰ ) ; गृर. ६०-६१ स्तथैवार्षः ( स्तथा चार्षः ) मनुयमौ ; पमा. ४८५ मोऽधमः ( मो मतः ) ; मपा. १५५ ; प्रपा. ३४२ श्चाष्टमोऽधमः (स्त्वष्टमो मतः) ; मर. १८ ; गभा. ९९ स्तथैवार्षः ( स्तथा चार्षः ) शेषं प्रपावत् ; प्रर ९९ गभावत् ; धप्र. ४६ गृरवत्, संप्र. ८४६ स्तथैवार्ष (स्तथा चार्ष॰) श्चाष्टमो ( स्त्वष्टमो ) ; धम. ११३ गभावत् ; मुक्ता. १४० ; संम. ६४ स्तथैवार्ष॰

* गोरा., भाच. ममुगतम् ।

+ नन्द. मुक्तावत् ।

( स्तथा चार्षः ) श्चाष्टमोऽधम॰ ( स्त्वष्टमः स्मृतः ) ; विपा. ७५८ पमावत् ; संकौ. २०५ श्चाष्टमोऽधमः ( श्च तथाऽष्टम॰ ) ; रत्न. ७५ ; आन. २४८ ; प्रका. ३६२ संकौवत् ; बाल. १।५८ ; संग. २५३ संप्रवत् ; सस्मृ. ५२ ; कृभ. १११८ चदावत् ; संर. ४७९ .

( १ ) नासं. १३।२८ संस्कारार्थं ( संस्काराख्याः ) ; नास्मृ. १५।२८ स्तथैव च ( स्तथाऽपरः ) ; गृक. ७० ; गृर. ५९ ; पमा. ४८६ नास्मृवत्, उत्त. ; संप्र. ८४६ .

( २ ) नासं. १३।२९ वैश्चासुर ( र्थोऽथासुर ) ; नास्मृ. १५।२९ श्चैवाथ ( श्चैव हि ) उत्तरार्धे ( राक्षमोऽनन्तरस्तस्मात्पैशाचस्त्वष्टमः स्मृतः । ) ; गृक. ७० ; गृर. ५९ श्चैवाथ ( स्तथैव ) ; पमा. ४८६ मोऽधमः ( मो मतः ) ; संप्र. ८४६ गृरवत् .

*प्राजापत्यब्राह्मदैवा विवाहा आर्षसंयुताः ।
उक्तकाले तु कर्तव्याश्चत्वारः फलदायकाः ॥
गान्धर्वासुरपैशाचराक्षसाख्यास्तु सर्वदा ॥

### यमः

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥

### बृहत्पराशरः

अष्टौ विवाहा नारीणां संस्कारार्थं प्रकीर्तिताः ।
ब्राह्मादिकक्रमेणैतान् संप्रवक्ष्याम्यतः पृथक् ॥

### विष्णुपुराणम्

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वराक्षसौ चान्यौ पैशाचश्चाष्टमोऽधमः ॥

*अयं सार्धः श्लोको मुहूर्तपरोऽपि आर्थिकीं विवाहगणनामुपजीव्यात्र संगृहीतः ।

(१) ज्योना. २७।१४१-१४२ ; विसौ. ५५ काले तु (कालेषु).

(२) ज्योना. २७।१४३ ; विसौ. ५५ ख्यास्तु (ख्याश्च).

(३) गृक. ७२ मनुयमौ ; गृर. ६०-६१ स्तथैवार्षः (स्तथा चार्षः) मनुयमौ.

(४) बृपसं. ६।२.

(५) विष्णु. ३।१०।२४.

### पद्मपुराणम्

विवाहा ब्राह्मदैवार्षप्राजापत्यासुरास्तथा ।
गान्धर्वो राक्षसश्चापि पैशाचोऽष्टम उच्यते ॥

### सुमभेदे

विवाहमष्टधा प्रोक्तं शिवेन परमात्मना ।
ब्राह्मं च दैविकं चैव प्राजापत्यमथार्षकम् ॥
पञ्चमं चाऽऽसुरं प्रोक्तं गान्धर्वं राक्षसं तथा ।
पैशाचमष्टमं ज्ञेयमुच्यते नात्र वै पृथक् ॥

### रेणुकारिका

ब्राह्मो दैवः काय आर्षासुरौ च
गान्धर्वोऽन्यो राक्षसः स्यात् पिशाचः ।

(१) सस्मृ. ५२ अस्मिन्नेव ग्रंथे काशीखण्डे स्कन्दः इत्युक्त्वा अयमेव श्लोकः समुद्धृतः.

(२) सस्मृ. ५३.

(३) रेका. ७४ पृ. ५३.

## ब्राह्मविवाहः

### आश्वलायनगृह्यसूत्रम्

अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः ॥

कन्यामलङ्कृत्योदकपूर्वां दद्यात् । एष विवाहो ब्राह्मसंज्ञो भवति । गानाग्न.

(१) आगृ. १।६।१ ; आप. १।६१ (=) पूर्वां (पूर्वं) ; अपा. ३४३ ; अर. ९९ निर्देशमात्रम् ; धम. ४६ ; संप्र. ५८३ (एष ब्राह्मो विवाहः०).: ८४८ अलङ्कृत्य (यथाशक्त्यलङ्कृत्य) ; संम. ६३, ६४ ; संकौ. १९८ ; शूक. ११० ; प्रका. ३६२ ;

### मानवगृह्यसूत्रम्

संजुष्टां धर्मेणोपयच्छेत ब्राह्मेण शौल्केन वा ॥

संजुष्टामिति । सम्यग् जुष्टा स्त्री तां ब्राह्मेण धर्मेण । ब्राह्मो धर्मः कन्याया उदकपूर्वमाहूय दानम् । शुल्कं यत् कन्यायै वरो ददाति वरं तदुच्यते । तेन निर्वृत्तः शौल्को धर्मः । तेन शौल्केन वा संजुष्टाम् । वाग्रहणमुपलक्षणा·

वाल. १।१२ पृ. ४१ ; कृभ. ११।१८ : ११।३४ (=) ; संर. ४७८, ५४८.

(१) मागृ. १।७।११.

र्थम् । तेन 'ब्राह्मो दैवस्तथैव' इत्यादि द्रष्टव्यम् ।
अष्टामा.

## काठकगृह्यसूत्रम्

**अथ ब्रह्मदेयायाः प्रदानविधिं वक्ष्यामः ॥**

ब्राह्मेण विधिना या दीयते सा ब्रह्मदेया । तस्याः प्रकृष्टे दाने विधिं इतिकर्तव्यता वक्ष्यामः । अथाधिकारार्थः । ब्राह्मो दैवः आर्षः प्राजापत्यः आसुरः गान्धर्वः राक्षसः पैशाचः, इत्यष्टौ विवाहाः । तत्र ब्राह्मासुरव्यतिरिक्ताना षण्णा विधानं सुप्रथितं, नेह वचनमर्हति । तेन ब्राह्मासुरयोरेवेतिकर्तव्यतोक्ता । तथाहि, प्रसह्यापहाराद्राक्षसो विवाहस्तत्र किं प्रकाराभिधानेन । न किंचिदित्यर्थः । एवममर्मविशातोपगमात् पैशाचोऽपि प्रकारवचनं नार्हति, पापत्वात् । स्वयमिच्छन्त्या सहेच्छावतः संयोगाद्गान्धर्वः तत्राप्यसाधारणी केतिकर्तव्यता । 'सह धर्मश्चर्यतां सहापत्यमुत्पाद्यतामिति धर्मे चार्थे च कामे च नाभिचरितव्यम्' इति प्राजापत्यविधिः प्रथितः । अलङ्कृत्य कन्यामन्तर्वेद्यृत्विजे प्रदीयते इति दैवः । गोमिथुनं कन्यावते दद्यादित्यार्षस्य विधानम् । देव.

## वाराहगृह्यसूत्रम्

***असंसृष्टामधर्मेणोपयच्छेद्ब्राह्मेण शौल्केन वा ॥**

## वैखानसगृह्यसूत्रम्

**यैदभिरूपं वृत्तवयःसंपन्नमाहूयार्हयित्वा कन्याऽलङ्कृता दास्यते स ब्राह्म इति गीयते ॥**

## गौतमः

**[१]ब्राह्मो विद्याचारित्रबन्धुशीलसंपन्नाय दद्यादाच्छाद्यालङ्कृताम् ॥**

(१) इदानीं विवाहविधिमाह— ब्राह्म इति । ब्राह्म इति विवाहसंज्ञा । विद्या त्रयी । चारित्रं चोदितकर्मानुष्ठानम् । बन्धुः प्रशस्ताभिजनः । शीलं धर्मे एवाभिमुखत्वम् । सपन्नशब्दः प्रत्येकमभिसबध्यते । आच्छाद्य वस्त्रयुगलेन वरं, अलङ्कृता भूषणादिभिः, दद्यादुदकपूर्वेण । आच्छाद्य अलङ्कृतामिति उत्तरस्मिन्नपि विवाहत्रये द्रष्टव्यम् । मभा.

(२) विद्या वेदविद्या । चारित्रं चोदितकर्मानुष्ठानम् । बन्धवो ज्ञातयो मातुलादयश्च, शील विहितेषु श्रद्धा । एतैर्गुणैः सपन्नाय वस्त्रयुगलेन आच्छाद्य यथाविभवमलङ्कृता कन्या दद्यात् । एवंविधस्य विवाहस्य ब्राह्मसंज्ञा । गौमि.

**[१]आहूय दीयते कन्या ब्रह्मणे शक्त्यलङ्कृता । निष्कशतमशक्तश्चेदन्यथा दोषमर्हति ॥**

**[२]द्रव्यादानं विवाहसिद्ध्यर्थम् ॥**

(१) द्रव्यस्य परकीयस्य अननुज्ञातस्यापि स्वीकरणं यावता विना विवाहो न निष्पद्यते तावतः । इदं च विवाहकालातिक्रमसंभावनाया कन्यादातुः ।
* गृक.१६४

(२) यदा पित्रादिर्दद्यात् तदा आच्छाद्यालङ्कृतां दद्यादित्युक्तम् । तत्र द्रव्याभावे कथमित्यत आह— द्रव्यादानमिति । द्रव्यस्य परकीयस्य आदानं अननुज्ञातस्य स्वीकरणं विवाहसिद्धये यावता विवाहो निर्वर्तते, आत्मीयाभावे तावदपहृत्य दद्यादित्यर्थः । मभा.

(३) द्रव्यं अननुज्ञातमपि शूद्राचैलादिकमादेयं विवाहसिद्ध्यर्थं यावता विवाहः सिध्यति तावत् । अधिके दोषः । गौमि.

## हारीतः

***अनिन्दन्नन्यैरवितर्कयन् विधिवद्वस्त्रयुगं दत्त्वा सह धर्मश्चर्यतामिति ब्राह्मः ॥**

---

* इदं सूत्रमशुद्धमिति उपरिनिर्दिष्टमानवगृह्यसूत्रवचनेन एतत्समानार्थकेन विज्ञायते ।

(१) कागृ. २५।१ .

(२) वागृ. १० .

(३) वैगृ. ३।१ .

(४) गौध ४।६ ; अप १।५५ ( विद्याचारित्रबन्धुशीलसंपन्नाय दद्यात् ) एतावदेव ; मभा , गौमि ४।४ ; स्मृच. ७८ अपवत् ; पमा. ४७९ ( विद्याऽऽचारबन्धुलक्षणशीलसंपन्नाय दद्यात् ) एतावदेव ; संप्र. ७५४ अपवत् ; मुक्ता. १३४ अपवत् .

* गृर. गृकवत् ।

(१) समु. ६ .

(२) गौध. १८।२५ ; अप. १।५१ ; गृक. १६३ ; मभा. ; गौमि १८।२८ ; गृर. १२९ .

(३) गृक. ७८ ; चद्रा. ६८५ ( अनिन्दमन्यैरवितर्कयन्

( १ ) अनिन्दन् अदूषयन्, अन्यैरवितर्कयन् इतरैः सह दूषणमशङ्कमानः, विधिवत् मधुपर्कादिपुरःसरं, ' सह धर्मश्चर्यताम् ' इत्युक्त्वा यत्र विवाहे कन्यां दद्यात् स ब्राह्म इत्यर्थः । गृर.६६

( २ ) हारीतेन ब्राह्मविवाहेऽपि सहधर्मचरणमुक्तं, तन्न ब्राह्मपदार्थघटकं, गौरवापत्तेः । किंतु प्रैषवचनप्राशस्त्यानुवादः । अनिन्दन् दोषाभिधानमकुर्वन्, अन्यैरवितर्कयन् अन्यैः सह दोषमनाशङ्कमानः । ब्राह्मविध्युपक्रमे हि ' धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयं नातिचरामि ' इति काठकगृह्योक्तदातृप्रतिग्रहीतृप्रैषानुवादः । विधिवत् मधुपर्कादिपूर्वम् ।

* संप्र.८४८

## बौधायनः

**श्रुतिशीले विज्ञाय ब्रह्मचारिणेऽर्थिने कन्या दीयते स ब्राह्मः ॥**

( १ ) ब्रह्मचारिणे असंजातस्त्रीसंपर्काय । अर्थिने इच्छते । § गृक.७९

( २ ) ब्रह्मचारिणे असंजातस्त्रीसंगमाय इति लक्ष्मीधरः । समावर्तनानन्तरमेव दातव्येति हलायुधः । ब्रह्मचारिणे वेदवते इति भावः । गृर.६६

( ३ ) ब्रह्मचारिणे अजातस्त्रीसंपर्कायेति कल्पतरुयाज्ञवल्क्यदीपकलिके । जातपरिणीतस्त्रीसंगमस्य द्वितीयविवाहे विवाहाष्टकबहिर्भावापत्तेस्तदुपादानं प्राशस्त्यार्थमिति तत्त्वम् । उत.१३८

( ४ ) ब्रह्मचारिणे अविप्लुतब्रह्मचर्याय । अर्थनं वरणरूपमेव । संप्र.८४७

( ५ ) अयमाद्यो धर्मविवाहः । श्रुतं वेदार्थज्ञानं, शीलं सर्वसहिष्णुता । ब्रह्मचारी उपकुर्वाणः अस्कन्नरेताश्च । कन्या अक्षतयोनिः । आह च मनुः– 'आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥ ' इति । बौवि.

## आपस्तम्बः

**ब्राह्मे विवाहे बन्धुशील(लक्षणसंपन्न*)श्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालङ्कृत्य ॥**

( १ ) सहत्वेन सहभावित्वेन इष्टाधानादिकर्मसु अधिक्रियते, तादर्थ्येन इत्थंभूतं प्रतिपादनं कुर्यादित्यर्थः । गृक.७८

( २ ) ब्रह्मणा दृष्टो ब्राह्मः । तस्मिन् विवाहे वरस्य बन्ध्वादीन् बुद्ध्वा परीक्ष्य प्रजां दुहितरं सहत्वकर्मभ्यः सह कर्तव्यानि यानि कर्माणि तेभ्यः तानि कर्तुं प्रतिपादयेत् दद्यात् । शक्तिविषयेण, विभक्तिप्रतिरूपोऽयं निपातो यथाशक्ति इत्यस्यार्थे द्रष्टव्यः । यथाशक्त्यलङ्कृत्य दद्यात् इत्येष ब्राह्मो विवाहः । ' प्रजासहत्वकर्मभ्यः ' इति पाठे प्रजार्थं सहत्वकर्मार्थं चेति । उ.

( ३ ) प्रजां कन्याम् । सहत्वकर्मभ्य इति येषु कर्मसु आधानादिषु पत्नीसहभावः श्रुतः तदर्थतया प्रतिपादयेत् दद्यात् । गृर.६६

---

* गृक.शब्दार्थः संप्रवत् ।

§ दीक. गृकवत् ।

विधिवद्वस्त्रयुगं दत्त्वा अनया सह धर्मश्चर्यतामिति प्राजापत्यः ) ; गृर. ६६ धर्मः ( धर्म ) ; वीमि. १।५८ ( विधिवद्वस्त्रयुगं दत्त्वा सह धर्मश्चर्यतामिति ब्राह्मः ) एतावदेव ; संप्र. ८४८ ब्राह्म (स ब्राह्म ).

( १ ) बौध. १।२०।२ ; गृक. ७८ कन्या दीयते ( देयेति ) ; चदा. ६८४ श्रुति ( श्रुत ) शेषं गृकवत् ; गृर. ६६ श्रुति ( श्रुत ) ( कन्या० ) दीयते + ( इति ) ; दीक. १।५८ चदावत् ; उत. १३८ ( श्रुतशीलिने विज्ञाय ब्रह्मचारिणेऽर्थिने देया इति स ब्राह्म ) ; वीमि. १।५८ चदावत् ; संप्र. ८४७ गृरवत् ; मुक्ता. १४२ श्रुति ( वृत्त ) ( कन्या० ) ; संर. ४७८ श्रुति ( वृत्त ) ( कन्या० ) दीयते ( ददाति ).

* पदमिदं आदर्शपुस्तके मुद्रितमपि एतद्वचनमुद्धृतवता केनापि निबन्धकृता न धृतम् । आदर्शपुस्तकस्थपदसूच्यामपि न संगृहीतम् । आपस्तम्बसूत्रप्रायानुवादिहिरण्यकेशिसूत्रेऽपि नास्ति । तस्मात् प्रामादिकमेतत्पदमुद्रणमिति भाति । प्रामाणिकत्वे तु संपन्नपदे भावे क्तः ।

( १ ) आध. २।११।१७ ; गृक. ७८ ( लक्षणसंपन्न० ) ; उ. २।११।१७ ' प्रजासहत्वकर्मभ्यः ' इति पाठान्तरम् ; गृर. ६६ ( लक्षणसंपन्न० ) येच्छक्ति ( येद्भुक्ति ) ; संप्र. ८४८ ( ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजासहत्वकर्मभ्यः प्रतिपादयेद् यथाशक्त्यलङ्कृत्य ).

(४) यथाशक्त्यलङ्कृत्य प्रजार्थधर्मकर्मसु (१) सहभावाय यथोक्तविधिना प्रतिपादयेदित्यर्थः ।

संप्र.८४८

## हिरण्यकेशिधर्मसूत्रम्

[1]बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजां सहत्व-कर्मभ्यः प्रतिपादयेत् ब्राह्मे विवाहे शक्तिविषयेणा-लङ्कृत्य दद्यात् ॥

'बन्धुशील' इत्यारभ्य 'प्रतिपादयेत्' इत्यन्तं ब्राह्मार्षदैवविवाहेषु नियतम् । आसुरे त्वनियतम्, तस्य इच्छाधीनत्वात् । इतरेषु तु नैतत्, प्रतिपादनाभावेन परीक्षाया अप्यभावात् । 'अलङ्कृत्य दद्यात्' इत्यत्र ददातिः प्रतिपादनार्थ एव, पूर्वत्र 'प्रतिपादयेत्' इत्यर्थ-स्योपक्रान्तत्वात् ।

* संर.४७७

## वसिष्ठः

[2]इच्छत उदकपूर्वं यां दद्यात्स ब्राह्मः ॥

## विष्णुः

[3]आहूय गुणवते कन्यादानं ब्राह्मः ॥

## शङ्खः शङ्खलिखितौ च

[4]संप्रार्थितः प्रयत्नेन ब्राह्मस्तु परिकीर्तितः ॥

[5]तत्र सवर्णः सवर्णाय विदितो विदिताय नग्निकां दद्यात्स ब्राह्मः ॥

विदितः कुलादिभिः । नग्निकां अनागतार्तवाम् ।

संप्र.८४८

* शेषं 'ब्राह्मे विवाहे' इत्यापस्तम्बवचनोक्तवत् ।

(१) हिध. २७।४।२२ ; संर. ४७६ : ५४८ (ब्राह्मे विवाहे शक्तिविषयेणालङ्कृत्य दद्यात्) एतावदेव.

(२) वस्मृ. १।३० .

(३) विस्मृ. २४।१९ ; चद्रा. ६८४ ( आहूय गुणवते कन्यां कन्यादानं स ब्राह्मः ) ; संप्र. ८४७ .

(४) शंस्मृ. ४।४ . 'प्रार्थितः प्रयत्नेन' इत्यन्यपुस्तक-स्थपाठः ।

(५) गृक. ७९ ; गृर. ६६ नग्निकां ( यो नग्निकां ) ; वीमि. १।५८ (तत्र०) ; संप्र. ८४८ ( विदितो० ) विदिताय (विदितायैव).

## महाभारतम्

[1]आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः ।
अलङ्कृत्य यथाशक्ति प्रदाय च धनान्यपि ॥
[2]शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च ।
अद्भिरेव प्रदातव्या कन्या गुणवते भवेत् ॥
ब्राह्मणानां सतामेष नित्यं धर्मो युधिष्ठिर ।
आवाह्यमावहेदेवं यो दद्यादनुकूलतः ॥

## मनुः

[3]आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥

(१) इदानीं स्वरूपमेतेषामाह— आच्छाद्येति । आच्छादनविशेषोऽभिप्रेतः, अन्यस्यौचित्येनैव प्राप्तत्वात् । उत्कृष्टेनाच्छादनेन यथादेशं यथासंभवं यथायोग्येन वाससा परिधाप्य । अर्हयित्वा अनेनालङ्करणकटककर्णि-कादिना प्रीतिविशेषसत्कारविशेषैरर्चनं कृत्वा । एतेना-च्छादनार्हणेन कन्याया वरस्य चान्यतरसंबन्धे प्रमाणाभावा-दुभयोष( योरपि )योगः कार्यः । श्रुतशीलवते । अन्ये-ऽपि स्मृत्यन्तरोक्ता वरगुणा द्रष्टव्याः— 'युवा धीमान् जनप्रियः । यत्नात् परीक्षितः पुंस्त्वे' (यास्मृ. १।५५) इति । स्वयं प्रागयाचितः* । स्वपुरुषप्रेषणैराहूयान्तिक-

* आहूयपदस्य स्वयन्तत्वेनाह्वानस्य दानकर्तृकर्तृकत्वस्य व्युत्पत्तिसिद्धत्वात्स्वयंपदस्य वाच्यार्थोऽत्र न विवक्षितः किन्त्वाभ्युपगिकार्थकथनमिदम् । अपि चेदं प्रथमान्तपदेन व्याख्यानं प्रातिपदिकमात्रस्य, न सुबन्तस्य, तथात्वे स्वयंपदस्याऽऽहूयपदे-नान्वये कर्तुरनभिहितत्वात्, दानपदेनान्वये च 'उभयप्राप्तौ कर्मणि' इति नियमात् तृतीयान्तेनैव कर्तुर्भाव्यत्वात् ।

(१) भा. १।१०७।१२—११ .

(२) भा. १३।४४।३, ४.

(३) मस्मृ. ३।२७ क., प. स्मृ ( स्मृति ) ; मेधा. चार्चयित्वा ( चार्हयित्वा ) ; गोरा. मेधावत् ; मप. १।०८ मेधावत् ; गृक. ७६—७७ मेधावत् ; स्मृच. ८५ मेधावत् ; गृर. ६५ ; पमा. ४८५-४८६ ; मर. १८ मेधावत् ; दीक. १।०८ मेधावत् ; उत. १०६ ; संत. ८८६, ८९२ ; धप. ४६ मेधावत् ; वीमि. १।०८ मेधावत् ; संप्र. ८४७ मेधावत् ; सुबा. १४० ; संकौ. २०५ मेधावत् ; ज्ञान. १०३ चार्चयित्वा ( च.ईयित्वा ) [redacted] स्मृ ( स्मृति ) ; मेग. २५१ स्मृ ( पुण्य ) शेषं मेधावत् ; नन्द.

देशमानाय्य वरं, यद्दानं स ब्राह्मो धर्मो विवाहः । अविशेषवचनोऽपि धर्मशब्दः पूर्वापेक्षितत्वात् तत्पर एव द्रष्टव्यः । 'अयाचितलाभोऽभ्यर्हणापूर्वको ब्राह्मो विवाहः' इति लक्षणार्थः ।

ननु चेदमयुक्तं स्त्रीस्वीकारार्थो विवाह इति । यावद्विवाहपर्यन्तं चैतद्दानम् । नाकृते विवाहे दानार्थनिर्वृत्तिः । स हि तस्याः प्रतिग्रहकालः । न चासति प्रतिग्रहे दानं परिसमाप्यते । न स्वत्वनिवृत्तिमात्रं दानम् । परस्वत्वापत्तिपर्यन्तं हि तत् । तथा च वक्ष्यति– 'तेषां तु निष्ठा विज्ञेया विद्वद्भिः सप्तमे पदे' (मस्मृ ८।२२७) इति । एवं विवाहकाले एव कन्या दातव्या । तथा च गृह्यकारस्तस्मिन्नेव काले ब्राह्मविवाहे काण्डिकधर्मं दर्शयति । यत्तु प्राग्विवाहाद्दानं तदुपसंवादनवचनमात्रम् । न हि तस्मिन्नक्रियमाणेऽभिप्रेतकालेऽवश्यं विवाहनिर्वृत्तिः । यक्षितप्रागनिरूपिते न दद्यादपि, इतरो वा कदाचिन्न प्रतिगृह्णीयात् । तस्मात्प्राग्विवाहादुपसंवादः कर्तव्यः तदा त्वयेयं देया मया चेयं वोढव्येति । यथैवान्तःक्रतुः मपरिक्रयः, अचोदिततत्सिद्धयर्थोऽर्थाद्विक्रियते ।

ये तु मन्यन्ते यथैव गवादेर्द्रव्यस्यादृष्टार्थतया दीयमानस्य मन्त्रपूर्वकेण प्रतिग्रहेण दानमपि निर्वर्तते, तेनैवेदमुक्तम् 'ददातिषु चैवंधर्मेषु (१ ददाति वै । एवं धर्मेषु * )' इति । एवं चेह प्रतिग्रहमन्त्रस्थानीयो विवाह इति । तथा च उपयमनं विवाह इत्येकोऽर्थः । उपयमनं च स्वकरणम् । एवं ह स्म भगवान् पाणिनिः स्मरति 'उपाद्यमः स्वकरणे' (पा. १।३।५६) इति । अतो विवाहः कन्यास्वीकारार्थः । तदयुक्तम् । स्वीकृताया विवाहो भार्याकरणार्थः । नानेन कर्मणा प्रतिगृह्णीयादिति विधिरस्ति । न च वैवाहिका मन्त्राः प्रतिग्रहप्रकाशकाः, यथा 'देवस्य त्वा... ...प्रतिगृह्णामि' इति । यत्तु 'स्वकरणे' इति, तन्न विरुद्धम् । विवाहस्याप्यस्ति स्वकरणरूपता । दानेन स्वत्वमात्रे प्रतिपन्ने विवाहेन विशिष्टं स्वत्वं क्रियते । नेयं गवादिद्रव्यवत् स्वं यथेष्टविनियोज्यतया, अपि तु जायात्वेन । विशिष्ट एव हि स्वस्वामिभावो जायापतिलक्षणसंबन्धः । तथा च दर्शयिष्यति– 'मङ्गलार्थं स्वस्त्ययनं......विवाहेषु प्रदानं स्वाम्यकारणम् ॥' इति (मस्मृ. ५।१५२) । मेधा.

(२) पाणिविशेषैः कन्यामाच्छाद्य अलङ्कारादिभिश्च अर्हयित्वा श्रुताचारवन्तं वरं याच्ञारहितं स्वयमानीय यत् तस्मै कन्यादानं, स ब्राह्मो विवाहो मन्वादिभिः स्मृत. । गोरा.

(३) आच्छाद्य वस्त्रयुगं परिधाप्य । गृक. ७७

(४) आच्छाद्य वाससा कन्याम् । एतेन यथाशक्त्यलङ्करणमुपलक्षितम् । अर्चयित्वा वरं मधुपर्केण स्वयं अर्हयित्वा महाप्रयुक्तिमात्रेण । शीलं अविपरीतचेष्टा । आहूय न तु वराभ्यर्थनया । मवि.

(५) आच्छादनमात्रस्यैवौचित्यप्राप्तत्वात् सविशेषवाससा कन्यावरावाच्छाद्यालङ्कारादिना च पूजयित्वा । *ममु.

(६) आच्छाद्य रक्तवासोभ्यां कन्यां, शुक्लवासोभ्यां वरं परिधाप्य । तच्च वरणदत्तवस्त्राभ्यामेव निष्पन्नमिति न पुनर्दीयते । अर्चयित्वा कन्यामलङ्कारादिना वरं च गोभिलोक्तप्रकारादिना । पृ. ८८६

अत्र यद्दानपदं तत् § दीयते यस्मै ग्रहणाय इति व्युत्पत्त्या 'कृत्यल्युटो बहुलम्' इति ल्युटा सिद्धमिति ग्रहणपरं, न तु भावसाधनं, तथात्वे दातुरेव विवाहकर्तृ·

---

* 'अद्भिरेव द्विजाग्र्याणाम्' इत्यस्य व्याख्यानं द्रष्टव्यम् ।

मेधावत् ; भाच. आनवत् ; वीवि. १।२०।२ ; सस्मृ. ५२ मेधावत् ; संदी. ५ (भागः २) उच.

* शेषं गोरावत् ।

§ 'दीयते यस्मै ग्रहणाय' इत्यत्र तादर्थ्ये चतुर्थी, न तु संप्रदाने । तथा चात्र प्रयोजन ल्युडर्थः, न तु संप्रदानम्, ग्रहणस्य संप्रदानत्वायोगात्, संप्रदानाकाङ्क्षाया 'हरनशीलवते' इत्यनेनोपरोधाच्च । यद्यपि प्रयोजनार्थे ल्युटोऽनुशासनं नास्ति, तथाऽपि बाहुलकादत्र तदर्थे ल्युट् । अयमेवात्र ग्रन्थकृतोऽभिप्रायः । अत एवाग्रे 'अत्र प्रत्ययार्थग्रहणनिमित्तीभूतप्रकृत्यर्थत्यागेन' इति ग्रहणनिमित्तत्वं दानस्योक्तम् । संप्रदानार्थत्वे तु निमित्तफलभावो विपरीतः स्यात् । तथा च "दानपदं 'दीयते यस्मै ग्रहणाय' इति संप्रदानार्थकल्युटा ग्रहणपरमेव" इति दीपकश्चिन्त्यः ।

स्यापत्तेः । अत्र प्रत्ययार्थग्रहणनिमित्तीभूतप्रकृत्यर्थत्यागेन सहैककर्तृकत्वमाह्वानस्य, स्थितादितिपदाध्याहारेण वा ।

संत. ८९२–८९३

(७) आच्छाद्य वाससा, अर्हयित्वा स्रक्चन्दनादिभिः । वरमिति शेषः, न कन्यामिति, आहूयेत्यस्यापेक्षितत्वात् । स्वयमिति न वरप्रार्थनाव्युदासः, कन्याचरणविधिविरोधापत्तेः, 'श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने दीयत इति स ब्राह्मः' इति बौधायनवाक्ये ब्राह्मविवाहेऽप्यर्थनाश्रवणाच्च । ब्रह्मचारिणे अविप्लुतब्रह्मचर्याय । तच्चार्थनं वरणरूपमेव । स्वयमेव वरस्याह्वानमपूर्वं ब्राह्मविवाहाङ्गत्वेन विधीयते । अत एव दाक्षिणात्यशिष्टाचारोऽपि तथा ।

सप्र. ८४७

(८) धर्मसाधनत्वात् विवाहः एव धर्मशब्देनोच्यते । ब्रह्मशब्दोऽत्र धर्मवचनः । धर्मातिशययुक्तत्वात् ब्राह्मत्वम् ।

* नन्द.

(९) वस्त्रैः आच्छाद्य परिधाप्य अर्हयित्वा आभरणाद्यलङ्कृता कृत्वा ।

*भाच.

**अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते ।**
**इतरेषां तु वर्णानामितरेतरकाम्यया ॥**

(१) द्विजाग्र्याणां ब्राह्मणानां कन्यादानं कन्यां ददतामद्भिरेव दानं शस्यते । ब्राह्मणाय यदा कन्यां ददाति तदाऽद्भिरेव दद्यात् । कथं पुनरापो दानकरणम् । न हि ताभिर्विना दानमस्ति 'अद्भिर्वाच्यं नमःपूर्वं भिक्षा दानं ददाति वै । एवं धर्मेषु' इति नियमात् । अथवा अद्भिरेवेत्यवधारणेनापामुपप्राजापत्यानपवदति । तत्र हि न केवला आपः करणं, गोमिथुनादिद्रव्यग्रहणमपि संविद्व्यवस्था च । तेनैतदुक्तं भवति— यथा गोहिरण्यादि द्रव्यं दीयते, न किंचित्परिभाष्यते 'इयं गौस्त्वयैवं संवाहनीयेदमानि तृणान्यपि देयानि', एवं कन्याऽपि देया, न दुहितृस्नेहेन जामाता परिभाषणं कारयितव्यः । न च तस्माद्धनं ग्रहीतव्यमिति । क्षत्रियादीनां तु इतरेतरकाम्यया परस्परेच्छया यदि कन्यावरयोः परस्परमभिलाषो भवति तदा दानं कर्तव्यं, नेतरथा ब्राह्मविवाहवत् ।

अन्ये तु व्याचक्षते— धनं वा गृहीत्वाऽद्भिरेव चेत्येव इतरेतरकाम्यार्थः । अस्मिन् पक्षे ब्राह्मस्य सर्वविषयता ज्ञापिता भवति ।

मेधा.

(२) ब्राह्मणानामुदकदानपूर्वमेव कन्यादानं प्रशस्तमित्युच्यते । क्षत्रियादीनां पुनः परस्परेच्छया विनाप्युदकवाङ्मात्रेणापि दानमिष्यते ।

गोरा.

(३) 'प्रदानं स्वाम्यकारकम्' इति वचनात् क्षत्रियादिभ्योऽपि दानप्रसक्तौ विशेषमाह— अद्भिरेवेति । अद्भिर्यत् कन्यादानं तत् द्विजाग्र्याणा विप्राणामेव, तेषामेव प्रतिग्रहसंभवात्, इतरेषा त्वप्रतिग्राहकत्वात् कन्याज्ञातिभिः कन्यया वा सह अन्योन्येच्छामात्रेण विनापि दानात् विवाहसिद्धिरित्यर्थः । काम्या कामना । एतच्च (१ चोप)लक्षणं, यथोक्तविपर्ययनिष्पत्तिमात्रेणेति तु ग्राह्यम्, राक्षसे अन्योन्येच्छाभावात् ।

मवि.

(४) इतरेतरकाम्यया कन्यावरयोः परस्परानुरागेण । एवं च अद्भिरेवेत्येवकारेण ब्राह्मणानां कन्याया वरस्य परस्परानुरागो नावश्यं इष्यते । अद्भिरेवेति वचनं ब्राह्मणे प्राशस्त्यतात्पर्यकमिति शूद्रेणापि कन्यादाने कर्तव्ये जलस्य विनियोग एवेति शेषम् । तथैव संप्रदायः ।

मर.५८

(५) अद्भिरेवेत्यवधारणं नार्थान्तरव्यावर्तनम् ।

* मन.

(६) गान्धर्वादिषु नायं विधिः, प्रदानाभावात् ।

* नन्द.

(७) इतरेषां वर्णानां अनुलोमजादीनामब्राह्मणानाम् ।

* भाच.

---

* शेषं मेधागतम् ।

(१) मस्मृ. ३।३५ ; गोरा. पूर्वार्धे ( अद्भिरेव द्विजातीनां कन्यादानं प्रशस्यते । ) ; शूक. ६८–६९ विशिष्यते ( प्रशस्यते ); शूर. ५७ विशिष्यते ( प्रशस्यते ) इतरेषां तु ( इतरेतर ) ; निप. २८५ (=) शूकवत् ; उत. ११८ शूकवत् ; सुभा. १४३, १४९ ( अद्भिरेव द्विजातीनां विवाहस्तु प्रशस्यते । ) स्मरन्ति-स्मृत्यन्तरम्, पू. ; माग. १७८ मुकवत्, पू., स्मरन्ति ; बाम. ११५८ शूकवत्, पू. ; भाच. शूकवत् ; मस्मृ. ५१ शूकवत्.

* ३१ जेतावत् ।

## याज्ञवल्क्यः

ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ॥

(१) नन्वयं विवाहाख्यः संस्कारो न नित्यमुपसंहर्तुं शक्यः, पराधीनत्वात् कन्यालाभस्य । उच्यते–स्यादयं दोषो दात्रभावात् यद्यप्रार्थिता कन्या न प्रदीयेत, ददतो वा प्रत्यवायः स्यात् । अत्र तु खलु दातुरभ्युदयः । यथाह–ब्राह्म इति । ब्राह्मण एवैनमर्हतीति ब्राह्मः । तत्र चायं विधिः–यथाशक्त्यलङ्कृत्य उक्तलक्षणं वरमाहूय गृह्योक्तेन विधिना कन्याप्रदानम् । तदा नोक्तदोषप्रसङ्गः । न चैवं ब्राह्मे लोकानुसारिभिर्भवितव्यम्, कथमप्रार्थिता कन्या दीयत इति । अयमेव सतां धर्मो यतः । अयं च ब्राह्मणस्य प्राथमकल्पिको विवाहः । विश्व.

(२) विवाहानाह–ब्राह्म इति । स ब्राह्माभिधानो विवाहः यस्मिन्नुक्तलक्षणाय वराय आहूय यथाशक्त्यलङ्कृता कन्या दीयते उदकपूर्वकम् । * मिता.

(३) एवं च निरुपाधिककन्यादानपूर्वकः सवर्णापरिणयो ब्राह्मो विवाह इति पर्यवस्यति । उपाधयश्च ऋत्विक्त्वद्रव्यग्रहणसमयबन्धादयः । § वीमि.

## नारदः

सत्कृत्याहूय कन्यां तु ब्राह्मो दद्यात्स्वलङ्कृताम् ॥

अष्टानां लक्षणमुच्यते । सत्कृत्य पूजयित्वा आहूय वरं तस्मै कन्यां दद्यात्, एष ब्राह्मः । आहूय कन्यादानमात्रम् । यथाविभवमलङ्कृता । नाभा.

## व्यासः

आच्छाद्यालङ्कृतां कृत्वा त्रिः परिक्रम्य पावकम् ।
नामगोत्रे समुद्दिश्य दद्यात् ब्राह्मो विधिस्त्वयम् ॥

(१) अत्र त्रिः पावकपरिक्रमणं, नामगोत्रोच्चारणयोः पाठक्रमो नाद्रियते । गृर.६५

(२) पावकपरिक्रमणं च शास्त्रान्तरे अग्निं प्रतिप्राप्य कन्यया सह तं त्रिः परिक्रम्य तां दद्यात् इति क्रमदर्शनादप्रोक्तमिति ध्येयम् । संप्र.८४७

## देवलः

ततो विनीतां कल्याणीं कन्यां कुलवयोऽन्विताम् ।
अलङ्कृत्यार्हते दद्याद्विवाहो ब्राह्म उच्यते ॥

(१) कल्याणीं उक्तकन्यादोषरहिताम् । अर्हते उक्तवरलक्षणयुक्ताय । * गृक.७७

(२) निवीतां निर्गतप्रावरणवतीम् । कल्याणीं उक्तकन्यालक्षणवतीम् । सुवलयान्वितां अभिनवकङ्कणवतीम् । तेन गजदन्तकङ्कणधारणरूपो दाक्षिणात्यशिष्टाचारोऽप्यनुगृहीतो भवति । संप्र.८४७

## यमः

अद्भिर्या दीयते कन्या ब्रह्मदेयेति तां विदुः ॥

ब्रह्मदेयेति संज्ञा श्राद्धे ततो जातस्य पङ्क्तिपावनत्वव्यवहारार्थम् । + गृक.७८

## संवर्तः

अलङ्कृत्य त्वलङ्कारैर्वराय सदृशाय वै ।
ब्राह्मेण तु विवाहेन कन्यां दद्यात् सुपूजिताम् ॥

---

* अप., स्मृच. मितावत् ।

§ शेषं मितागतम् ।

(१) यास्मृ. १।५८ ; विश्व. ; मिता. ; अप. ; स्मृच. ८५ ; मपा. ६५५ ; निप. २८४ (=) ; गभा. ९९ ; उत. १०६, १२८ ; मंत. ८९२ ; विसौ. ५५ ; वीमि. ; संप्र. ८४७ ; चम. ११३ ; मुक्ता. १४१ ; शूक. १०९ ; रत्न. ७५ ; विपा. ७५८ ; भाच. ३।२७ ; संदी. ५ (भागः २).

• (२) नास. १३।४० ; नास्मृ. १५।४० ब्राह्मो दद्यात् स्व (दद्यात् ब्राह्मे त्व).

* गृर. गृकवत् ।

+ अप., गृर., संप्र. गृकवत् ।

(१) गृक. ७७ ; चद्रा. ६८४ ; गृर. ६५ ; वीमि. १।५८ कृत्वा (कन्यां) ; संप्र. ८४७.

(२) अप. १।५८ ; गृक. ७७ ; गृर. ६५ कन्यां कुलवयोऽन्विताम् (कुलरूपवयोऽन्विताम्) ; संप्र. ८४७ विनीतां (निवीतां) कुलवयोऽन्विताम् (सुवलयान्विताम्).

(३) अप. १।५८ देयेति (दायेति) ; गृक. ७७ ; गृर. ६५ ; वीमि. १।५८ क्रमेण व्यासः ; संप्र. ८४८.

(४) संस्मृ. ६० त्वलङ्कारैः (तु यः कन्यां) कन्यां दद्यात् (दद्यात्तां तु) ; गृक. ७७ वै (च) ; गृर. ६५ कन्यां दद्यात्

सुपूजितां पुष्पचन्दनादिसंमानिताम् । गृक.७७

## बृहत्पराशरः

[1]जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च ।
कन्याऽलङ्कृत्य दीयेत विवाहो वैधसः स्मृतः ॥

## पैठीनसिः

[2]तस्मान्नग्निकां कन्यां सहिरण्यां दद्यादयं ब्राह्मो विवाहः ॥

## प्रचेताः

[3]सवर्णाय नग्निकामुदकेन दद्यात्स ब्राह्मो विवाहः ॥

## ब्रह्मपुराणम्

[4]ईदृशाय यदा कन्यां दद्ध्वं श्रद्धयान्विताः ।
अलङ्कृत्य यथाशक्त्या पूजयित्वा धनेन च ॥

(दद्यात् कन्यां) ; संप्र. ८४७ त्वल (खल) वै (च) सुपूजिताम् (सुलक्षणाम्). .

(१) बृपसं. ६।३.

(२) गृक. ७९ ; गृर. ६७ (कन्यां०) ब्राह्मो (स ब्राह्मो) ; वीमि. १।५८ (कन्यां सहिरण्यां दद्यादयं ब्राह्मो विवाहः) एतावदेव ; संप्र. ८४८.

(३) चद्रा. ६८४.

(४) गृक. ७९ ईदृशाय यदा (सदृशाय कदा) पूजयित्वा (पूरयित्वा) ; गृर. ६७ ईदृशाय यदा (तादृशाय तदा) धनेन च (धनेन वा) ; वीमि. १।५८ पूजयित्वा (पूरयित्वा) उत्त. ; संप्र. ८४८ पूजयित्वा (पूरयित्वा).

(१) अलङ्कृत्य वरं अलङ्कृत्य । धनेन गोहिरण्यादिना पूरयित्वा । यथाशक्त्येत्युभयत्र योज्यम् । गृक.७९

(२) ईदृशाय पूर्वोक्तगुणयुक्ताय । संप्र.८४८

## सुप्रभेदे

[1]वयो वृत्तं च संपन्नं विद्यारूपाभिजात्यकम् ।
कन्यां दद्यात्तमाहूय सगोभूमिहिरण्यकम् ।
तद्ब्राह्ममिति निर्दिष्टं विवाहेषूत्तमं स्मृतम् ॥

## शौनककारिके

[2]कुलीनाय वरिष्ठाय श्रुतशीलादिभिर्गुणैः ।
द्विजन्मने समाच्छाद्य नववस्त्रेण कन्यकाम् ॥
[3]अलङ्कृत्य च यद्दद्यात्सादरं सोदकं ततः ।
अयं ब्राह्मो विवाहः स्याद्देवर्षिपितृपूजितः ॥

## रेणुकारिका

[4]आच्छाद्य पूजयित्वैवं श्रुतशीलवते स्वयम् ।
आहूय दानं कन्याया विवाहो ब्राह्म उच्यते ॥

(१) मस्मृ. ५३.

(२) शौका. १ पृ. ५६ समाच्छाद्य (समामाद्य) ; प्रपा. ३४४.

(३) शौका. २ पृ. ५६ यद्दद्या (यो दद्या) ; प्रपा. ३४४.

(४) रेका. ७६ पृ. ५३.

---

# दैवविवाहः

## आश्वलायनगृह्यसूत्रम्

[1]ऋत्विजे वितते कर्मणि दद्यादलङ्कृत्य स दैवः ॥

(१) वितते कर्मणीति, वैतानिके कर्मणीत्यर्थः । गानागृ.

(२) वितते कर्मणि कर्ममध्ये इत्यर्थः । अना.

## वैखानसगृह्यसूत्रम्

[1]यदृत्विजो यज्ञस्यात्मनोऽलङ्कृत्य कन्यां प्रतिपादयति स दैवः ॥

(१) आगृ. १।६।१ ; प्रपा. ३४२ ; धप्र. ४६ ; संप्र. ८४९ ; संम. ६४ ; स्मृम. ११११८ ; संर. ४७८.

(१) वैगृ ३।१.

## गौतमः

अन्तर्वेद्यृत्विजे दानं दैवोऽलङ्कृत्य ॥

(१) 'अन्तर्वेदि' इति प्रक्रान्तयज्ञग्रहणार्थः, 'ऋत्विक्श्वशुर' (गौध. ६।९) इत्यादौ क्रियोत्तरकालमपि ऋत्विज (? क्) इति व्यवहारदर्शनात्। नित्यदक्षिणातः अधिकमिति ज्ञापनार्थं दानग्रहणम्। दैव इति विवाहसंज्ञा। मभा.

(२) अन्तर्वेदि वेद्यां दक्षिणाकाले ऋत्विजे कर्म कुर्वते यदलङ्कृत्य कन्याया दानं स दैवो विवाहः। आच्छाद्यालङ्कृतामिति प्रकृते पुनरलङ्कृत्येति वचनं वरस्याप्यङ्गुलीयकादिभिरलङ्कारार्थम्। गौमि.

## हारीतः

[2]वेद्यन्ते मिथुनं दत्त्वा स दैवः ॥

(१) कन्यादानार्थं दक्षिणास्वानीयमानासु वेद्यन्ते वेद्याः एकदेशे। गोमिथुनमत्र स्त्रीयमेव दात्रा वराय दातव्यं, न तु वरादेवोपादेयं, तथात्वे सत्यार्षतापत्तेः। § गृर.६९

(२) अस्य च विवाहस्य सोपाधिकत्वेन ब्राह्मात् न्यूनत्वं भेदश्च। * वीमि.१।५९

(३) मैथुनं गोमिथुनम्। * संप्र.८४९

## बौधायनः

[3]दक्षिणासु नीयमानास्वन्तर्वेदि ऋत्विजे स दैवः ॥

(१) दानार्थं दक्षिणासु नीयमानासु ऋत्विजे यत् दानमित्यर्थः। गृक.८३

(२) ऋत्विक्कर्मकौशलजनितपरितोषरूपोपाधियुक्तत्वात् ब्राह्मात् भेदोऽप्यत एव सुव्यक्तः। गृर.६९

(३) ऋत्विग्वरणवेलायामेव कंचिद्वरसंपद्भिर्युक्तं ऋत्विक्त्वेन वृत्वा दक्षिणाकाले तदीयभागेन सह कन्यां तस्मै दद्यात्। स च तां प्रतिगृह्य समाप्ते यज्ञे 'प्रजापतिः स्त्रियां यशः' इति षड्भिर्मन्त्रैः पुनः प्रतिगृह्य शुभे नक्षत्रे विवाहहोमं कुर्यात्। स दैवो नाम। बौवि.

## आपस्तम्बः

[1]दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥

दैवेऽदृष्टे विवाहे यज्ञतन्त्रे वितते ऋत्विजे कर्म कुर्वते कन्यां दद्यात्। एष दैवो विवाहः। उ.

## हिरण्यकेशिधर्मसूत्रम्

[2]दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥

'दैवे यज्ञे ऋत्विजे प्रतिपादयेत्' इत्येतावतैव सिद्धौ तन्त्रग्रहणस्वरसान्महतः सौमिककर्मण एवात्र ग्रहणं, नैष्टिकपाशुकयोरिति। प्रतिपादयेदितिवचनादृत्विज इत्येकस्मै एव प्रतिपादनाच्च नेयं तन्त्रसंबन्धिदक्षिणा। ऋत्विज इत्यत्रासगोत्रासपिण्डो यः कश्चनर्त्विक्संप्रदानत्वेन ज्ञेयः। एतच्च प्रतिपादनं प्रधानदक्षिणादानानन्तरम्। तथा च बौधायनः— 'दक्षिणासु नीयमानास्वन्तर्वेद्यृत्विजे दद्यात्' इति। अत्र प्रतिग्रहे मन्त्रविशेष उक्तो बौधायनेन— 'अथ यदि दक्षिणाभिः सह दत्ता स्यात्तां प्रतिगृह्णीयात् प्रजापतिः स्त्रियामिति षड्भिरनुच्छन्दसम्' इति।

दक्षिणाभिः सह दत्तेति वचनमपि कन्याप्रतिपादनस्य यागदक्षिणात्वं नेत्यत्र लिङ्गम्। अयं च प्रतिग्रहमन्त्रविशेषोऽस्माकमप्यविरुद्धः। न च 'तान्त्रीणां दक्षिणानां दर्शयति' इतिसूत्रविरोध इति वाच्यम्, एतस्य प्रतिग्रहमन्त्रविशेषस्य दक्षिणाप्रतिग्रहप्रकरणे सूत्रकारेणापठितस्य 'तान्त्रीणां दक्षिणानां दर्शयति' इतिसूत्रविषयकत्वासंभवेन विरोधाभावात्। 'दीक्षितो न ददाति'

§ गृक गृरवत्।

* दोषं गृरवत्।

(१) गौध. ४।९; मभा. (अलङ्कृत्य०); गौमि. ४।७; मुक्ता. १४२.

(२) गृक. ८२; गृर. ६९ मिथुनं (गोमिथुनं); वीमि. १।५९ गृरवत्; संप्र. ८४९ मिथुनं (मैथुनं); संग. २५४ संप्रवत्.

(३) बौध. १।२०।५; गृक. ८३; गृर. ६९ (कन्यादानार्थं दक्षिणास्वानीयमानासु अन्तर्वेदि यदृत्विजे स दैवः); दीक. १।५९ (दक्षिणासु दीयमानासु) एतावदेव; वीमि. १।५९ नीयमा (दीयमा) ऋत्विजे (यदृत्विजे); संप्र. ८४९ वीमिवत्; मुक्ता. १४२; संर. ४७७ स दैवः (दद्यात्): ४७८.

(१) आध. २।११।१९.

(२) हिध. २७।४।१४; संर. ४७६.

इति निषेधो यज्ञतन्त्रे कन्याप्रतिपादने न प्रवर्तते, विधानबलात् । प्रतिपादनं तु कृत्स्नेन कन्यादानोक्तविधिना कार्यम् । कन्याप्रतिपादनाङ्गभूतहिरण्यादिदानस्य तु ददातिविहितत्वान्निषेधोऽस्त्येव । § संर.४७७

## वसिष्ठः

यज्ञतन्त्रे वितत ऋत्विजे कर्म कुर्वते कन्यां दद्यादलङ्कृत्य तं दैवमित्याचक्षते ॥

## विष्णुः

यज्ञस्थर्त्विजे दैवः ॥

## शङ्खः

यज्ञस्थायर्त्विजे दैवः ॥

## महाभारतम्

* आर्षं विधिं पुरस्कृत्य दारान्विन्दन्ति चापरे ॥

## मनुः

यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥

(१) वितते प्रारब्धतन्त्रे ज्योतिष्टोमादौ यज्ञे तत्कर्मकारिणे ऋत्विजेऽध्वर्यवे सुताया दुहितुर्दानम् । अलङ्कृत्येत्यनुवादः, कन्यादानस्य सर्वस्यैवंरूपत्वात् । आच्छाद्यालङ्कृतां विवाहयेदिति सामान्योऽयं विधिः । ननु 'गौश्चाश्वश्चाश्वतरश्च' इत्याद्युत्विग्भ्यो दक्षिणात्वेन श्रुतम् । न क्वचित्कन्यादानं क्रत्वर्थतया चोदितम् । किमंग क्रत्वर्थतया । प्रवृत्ते यज्ञे ऋत्विजे यां ददाति स दैवो विवाहः । अस्ति चोपकारगन्धस्तदीयकरणम् । अकर्मोद्देशेनापि दीयमानं तत्कर्मकरणप्रवृत्तस्य जनयत्येवानमनविशेषम् । एतावतोपकारसंबन्धेन ब्राह्मात् दैवो न्यूनः । मेधा.

(२) सम्यक् यथार्थं अस्खलितमिति यावत् । गुक,८२

(३) यज्ञे यज्ञमध्ये ऋत्विजे (दानं ?) स्वयज्ञस्य सम्यङ्निष्पत्त्यभिसंधानेन सुतादानम् । 'उभयस्यापि पक्षस्य पिता पुत्रीमनुक्रमेत्' इत्यादिविधिना ब्राह्म इव दानवाक्यमुच्चार्यम् । एवं 'दीक्षितो न ददाति' इति दाननिषेधः एतदन्यदानविषय इति ग्राह्यम् । मवि.

(४) ज्योतिष्टोमादियज्ञे प्रारब्धे यथाविधि ऋत्विजे कर्मकर्त्रे अलङ्कृत्य कन्यादानं दैवं विवाहं मुनयो ब्रुवते । • मगु.

(५) दैवं देवकर्मसंबन्धित्वात् दैवोदेवशब्दात् । † मच.

(६) देवकार्याधिकृताय दानात्तस्य दैवत्वम् । नन्द.

## याज्ञवल्क्यः

यज्ञस्थऋत्विजे दैवः ॥

(१) इमे त्वनुकल्पाः । यज्ञस्थवचनं पूर्वगुणादिव्यावृत्त्यर्थम् । देवा ऋत्विजस्त एनमर्हन्तीति दैवः । अतश्च ब्राह्मणस्यैवायम्, इतरयोर्ऋत्विगनधिकारात् । महर्त्विग्भ्यश्च । यथाह व्यासः— 'स्नेपं पुत्रीं मध्यं यो वितानां महर्त्विजां तिन्त्रे यज्ञतन्त्रे । अभ्यर्च्य दुहितरं संप्रदद्यात्मुदात्ते वा महते यादृश होत्रे ॥' इति ।

§ शेषं आरम्भावधिमद्यत्वात् ।

• 'आर्षं विधिं यताम् । तेन दैव उक्तः' इति टीका । इतरेषां पूर्वेनुक्तत्वात्तद्विशेषाद्दैवं दैव एवेति तदभिप्रायः ।

(१) वस्मृ. १।३१ .

(२) विस्मृ. २४।२० .

(३) शंस्मृ. ४।४ .

(४) भा. १।१०२।१५ .

(५) मस्मृ. ३।२८ ; गुक. ८२ ; स्मृच. ८६ ; व्यदा. २८४ ऋत्विजे कर्म कुर्वते (कर्म कुर्वति ऋत्विजे) ; गृर ६९ ; पमा. ४८६ ; धप्र. ४६ ; संप्र. ८४१ धर्मं (धर्म्यं) ; सुबा १४० ; संकौ. २०५ ; व्यान. १७३ ; वाम. १५९२ पू. ; सग. ३५३ ; माय. ६।२३२ ; सस्मृ. ५२ .

* दैवं व्यक्तदानं मधुकल्पार्थं हूतम् । मच. मनुगाह ।

† दैवं मेधातिथिम् ।

(१) यास्मृ १।५९ ; विश्व. ; मिता. ; अप. ; स्मृच ८६ ; मपा. १५५ ; ममा. ५५ ; वप. १६८ यज्ञस्थऋत्विजे (यज्ञस्थायर्त्विजे) ; विर्मा. ५६ ; वीमि. ३।२३ ; संत. ८७५ ; चम १११ ; सुबा. १४१ ; सूक. १०९ ; विता. ७०८ ; हव. ७६ ३।२३ .

उद्गातृवचनाच्च, सोमर्त्विक्प्रत्ययः । दक्षिणातिरिक्तं चैतद्दानं, फलश्रवणात् । विश्व.

(२) स दैवो विवाहो यस्मिन् यज्ञानुष्ठाने वितते ऋत्विजे शक्त्यलङ्कृता कन्या दीयते । * मिता.

(३) ऋत्विजे यज्ञं कुर्वते । दक्षिणादानकाले ऋत्विक्कर्मकौशलजनितपरितोषोपाधिना यत्र कन्या दीयते स विवाहो दैवः । वीमि.

## नारदः

अन्तर्वेद्यां तु दैवः स्यादृत्विजे कर्म कुर्वते ॥

अन्तर्वेद्यां तु यज्ञमध्ये ऋत्विजे कर्म कुर्वते, अलङ्कृत्येत्यादि सर्वत्र तुल्यं, दद्यात् स दैवः । नाभा.

## देवलः

अन्तर्वेदि समानीय कन्यां कनकमण्डिताम् ।
ऋत्विजे तु ददात्येष विवाहो दैवसंज्ञकः ॥

* अप., स्मृच., मपा. मितावत् ।

(१) नासं. १३।४१ ; नास्मृ. १५।४१ .

(२) गृक. ८२ ; गृर. ६९ अन्तर्वेदि (अन्तर्वेदी) तु (च) ; संप्र. ८४९ ददात्येष (ददात्येना) .

## यमः

ऋत्विजं समलङ्कृत्य विवाहो दैव उच्यते ॥

## बृहत्पराशरः

यो यज्ञे वर्तमाने तु ऋत्विजे कर्म कुर्वते ।
कन्याऽलङ्कृत्य दीयेत विवाहः स तु दैविकः ॥

## सुप्रभेद

यज्ञे तु ऋत्विजे चैव कन्यादानं तु दैविकम् ॥

## शौनककारिके

वस्त्रेण च समाच्छाद्य भूषयित्वा च शक्तितः ।
ऋत्विजे कन्यकादानं वितते यज्ञकर्मणि ।
दैवो नाम विवाहोऽसौ ज्ञेयो दैवतसंमतः ॥

## रेणुकारिका

यज्ञे तु वितते सम्यक् ऋत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं विवाहो दैव उच्यते ॥

(१) गृक. ८२ ऋत्विजं सम (स ऋत्विजम) ; गृर. ६९ गृकवत् ; संप्र. ८४९ ; संग. २५४ .

(२) बृपसं. ६।५ .

(३) सस्मृ. ५३ .

(४) शौका. ४-५ पृ. ५६ ; प्रपा. ३४४ ; संप्र. ८६२-८६३ दैवत (दैवेन) .

(५) रेका. ७७ पृ. ५३ .

# आर्षविवाहः

## आश्वलायनगृह्यसूत्रम्

गोमिथुनं दत्त्वोपयच्छेत स आर्षः ॥

यत्र गां बलीवर्दं च कन्यादाने दत्त्वा तामुपयच्छेत स आर्षः । प्रपा. ३४३

## वैखानसगृह्यसूत्रम्

यद्गोमिथुनेनैनयेन द्वाभ्यां या कन्यां ददाति समार्षमाचक्षते ॥

(१) आगृ. १।६।१ ; अप. १।५९ शौनकः ; प्रपा. ३४३ ; पत्र. ४६ ; संप्र. ८५१ ; संग. ६४ ; हमा. ११९८ ; संर ४७८ .

(२) वैगृ. ३।१ .

## गौतमः

आर्षे गोमिथुनं कन्यावते दद्यात् ॥

(१) आर्ष इति विवाहसंज्ञा । तस्मिन् पूर्वं वरेण गोमिथुने दत्ते पश्चादाच्छाद्यालङ्कृतां दद्यात् । मभा.

(२) आर्षसंज्ञके विवाहे गोमिथुनं स्त्रीपुंरूपं कन्यावते दद्यादलङ्कृत्य कश्चित् । आच्छाद्यालङ्कृतामिति समानम् । गौमि.

(१) गौध. ४।८ ; मभा. ; गौमि. ४।६ ; मुच्या. १४२ .

युक्तो विवाहस्तथायुक्ता प्रजा भवति' (आप. २।१२।४) इति। तन्मिथुनं कुर्यादिति। तत् दत्तं रथाधिकं गोशतं कन्यावरौ मिथुनं कुर्यात्। जायापतित्वमापादयेदित्यर्थः। यस्तु तस्यामार्षोढायां क्रयशब्दः स शब्दमात्रं, न वास्तवः क्रय इति कल्पतरुः। वस्तुतस्तु तस्यां दानक्रियायामिति व्याख्येयम्। आर्षोढायां क्रीताशब्दप्रयोगापेक्षणात् क्रियावाचिनः क्रयशब्दस्य प्रयोगानुपपत्तेः। अत्र हेतुः—धर्माद्धि संबन्ध इति। धर्मनिमित्तो ह्यसौ संबन्धो न लोभनिमित्तक इति। गोमिथुनग्रहणं च स्वयं कन्योपकरणदानासमर्थस्य तद्दानार्थं वेदितव्यम्, 'प्रदानं यत्र कन्यायाः सह गोमिथुनेन च। शस्ताय चासगोत्राय तमार्षमृषयो विदुः॥' इति देवलस्मरणात्। गोमिथुनेन वरादुपात्तेनेत्यर्थः। शुल्कत्वेन ग्रहणे तु दोषः, वक्ष्यमाणदोषश्रवणात्। माधवाचार्यैरभिहितम्—देशकालानुरूपं हि मूल्यं शुल्कं भवति, लोके तथा दर्शनात्। गोमिथुनं हि न शुल्कम्, शास्त्रे नियतपरिमाणत्वादिति। तच्चिन्त्यम्, 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इत्यत्र सोमक्रयण्यां गवि व्यभिचारदर्शनात्। तस्माच्छास्त्रेऽपि नियतपरिमाणं शुल्कं भवति, 'हिरण्येन क्रीणाति वाससा क्रीणाति' इत्याद्युपक्रम्य 'तं दशभिः क्रीणाति' इति तत्रैव शुल्कपरिमाणदर्शनात्। तस्माद्यथोक्तमेव साधु। संप्र.८५०–८५१

(४) आर्षे विवाहे दुहितृमते दानं क्वचिद्वेदे श्रूयते। तामेव श्रुतिमुदाहरति—तस्माद्दुहितृमते इति। दुहितृमते रथेनाधिकं गवां शतं देयम्। तच्च शतं दुहितृमान् मिथुया कुर्यात् मिथ्या कुर्यादित्यर्थः। कन्यायै वराय च क्षेत्रालङ्कारादिप्रत्यर्पणेन तद्द्रव्यादानसाम्यगतक्रयवृत्तिं वितथीकुर्यादित्यर्थः। यद्वा मिथुया मिथुनं, वरदत्तद्रव्यं मिथुनस्य कुर्यादित्यर्थः। मिथ्यार्थत्वं मिथुनार्थत्वं च मिथुयाशब्दस्य श्रूयते 'मा देवानां मिथुया कर्म (कर्) भागधेयम्' (तैसं. १।३।७।२), 'आपो वा अग्नेर्मिथूयाः। मिथुनवान् भवति' (तैआ. १।२२।१२) इति। तदिदं दानं काम्यं कामनिमित्तं 'यथायुक्तो विवाहस्तथायुक्ता प्रजा भवति' (आप. २।१२।४) इति ऋषितुल्याः पुत्राः यथा स्युरिति। ततश्च धर्मार्थं न क्रयार्थम्। 'अयज्ञो वा एष योऽपत्नीकः' (तैब्रा. ३।३।३।१) इत्यादिश्रुतेः 'पाणिग्रहणादधि गृहमेधिनोर्व्रतम्' (आप. २।१।१) इति सपत्नीकस्यैव धर्माधिकारस्मरणाच्च विवाहस्य धर्मार्थत्वेन तदर्थं दानमपि धर्मार्थमेव। यस्तस्यां विवाहक्रियायां क्रयशब्दः क्वचित्स्मृतौ दृश्यते स संस्तुतिमात्रम्, द्रव्यप्रदानसाम्यात्। न मुख्यक्रयत्वप्रतिपादनार्थम्। कुतः? हि यस्माद्धर्मादेव हेतोः संबन्धो दम्पत्योरित्यर्थः। एवं च धर्मार्थं दानविधानात् 'सर्वाण्युदकपूर्वाणि दानानि अदृष्टार्थानि' (आप. २।९।८) इति स्मरणात् दुहितृमते च स्वदेयमुदकपूर्वमेव दद्याद्दुहितृमांश्च कन्याम् 'अद्भिरेव द्विजातीनां विवाहस्तु प्रशस्यते' (मस्मृ. ३।३५) इति स्मरणात् उदकपूर्वमेव दद्यात्। 'दुहितृमतेऽधिरथं शतं देयं तन्मिथुया कुर्यात्' इति श्रुत्या गोमिथुनादधिकमप्यादाय वरयोषिद्भ्यां गृहक्षेत्रभूषणादिद्वार (? द्वारा) प्रत्यर्पणे सति स विवाहो धर्म्य एवेति गम्यते। न चैवं 'आसुरो द्रविणादानात्' इति स्मरणादासुरत्वं शङ्कनीयं, कन्यावतो भोगार्थं द्रव्यादाने तथोक्तत्वात्। तथा च गौतमः—'वित्तेनाऽऽनतिः स्त्रीमतामासुरः' (गौध. ४।११) इति। आनतिः कन्यादानं प्रत्यानुगुण्यम्। 'स्त्रीमताम्' इति वचनात् कन्यायै गृहक्षेत्रादि दत्त्वा विवाहेऽपि नाऽऽसुरत्वमिति हरदत्तः। कन्याया भूषणार्थं छादनार्थं वराद्धनादानं न दोषावहमित्याह मनुरपि—'यासां नाददते शुल्कं ज्ञातयो न स विक्रयः। अर्हणं तत्कुमारीणामानृशंस्यं च केवलम्॥' (३।५४) यासां कन्यानां वरेण दत्तं शुल्कं ज्ञातयः पित्रादयो नोपजीवन्ति स विक्रयो न भवति, तत्कुमारीणामर्हणं पूजनमानृशंस्यं च भवतीत्यर्थः। एतदेवाष्टभिः श्लोकैः समर्थयति स एव—'पितृभिर्भ्रातृभिश्चैताः... सर्वमेव न रोचते' (मस्मृ. ३।५५–६२)। यतः एवं कन्या भूषयितव्या अतो ज्ञातिभिर्वराद्भूषणार्थं धनादानं न दोषावहमित्यर्थः। स्वोपभोगार्थद्रव्यग्रहणे पित्रादीनां दोषमाह स एव—'न कन्यायाः पिता...' (मस्मृ. ३।५१)। मुक्ता. १४२–१४३

## हिरण्यकेशिधर्मसूत्रम्

[1]आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥

दुहितृमते मिथुनगोदानं विवाहहोमानन्तरम्। तथा च बौधायनः— 'पूर्वे लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दद्यात्' इति। * संर.४७७

[2]विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते, तस्माद्दुहितृमतेऽधिरथं शतं देयं तन्मिथुया कुर्यादिति तस्यां क्रयशब्दः संस्तुतिमात्रं धर्मार्थं संबन्धः ॥

## वासिष्ठः

[3]गोमिथुनेन चार्षः ॥

## विष्णुः

[4]गोमिथुनग्रहणेनार्षः ॥

## शङ्खः शङ्खलिखितौ च

[5]आदायार्षस्तु गोद्वयम् ॥

[6]गोमिथुनेन वस्त्रयुगलेन चार्षः, सर्वेष्वलङ्कारः स्त्रीधनं च देयमिति ॥

( १ ) अलङ्कारः स्त्रीधनं च इति समभिव्याहारादलङ्कारादधिकमपि किंचिद्देयं, द्वयमपि चेदं यथाशक्त्या। गृर.७०

( २ ) सर्वेषु विवाहेषु। स्त्रीधनं अलङ्कारातिरिक्तं धनक्षेत्रादि। संप्र.८५१

## महाभारतम्

[7]प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि ॥

[1]आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पो वा बहु वा राजन् विक्रयस्तावदेव सः ॥

यद्यप्याचरितः कश्चिन्नैष धर्मः सनातनः।
अन्येषामपि दृश्यन्ते लोकतः संप्रवृत्तयः ॥

वश्यां कुमारीं बलतो ये तां समुपभुञ्जते।
एते पापस्य कर्तारस्तमस्यन्धे च शेरते ॥

अन्योऽप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः।
अधर्ममूलैर्हि धनैस्तैर्न धर्मोऽथ कश्चन ॥

भीष्म उवाच—
[2]प्राचेतसस्य वचनं कीर्तयन्ति पुराविदः।
यस्याः किंचिन्नाऽऽददते ज्ञातयो न स विक्रयः ॥

अर्हणं तत्कुमारीणामानृशंस्यतमं च तत्।
सर्वं च प्रतिदेयं स्यात् कन्यायै तदशेषतः ॥

## मनुः

[3]एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥

( १ ) स्त्रीगवी पुंगवश्च मिथुनम्। एकं द्वे वा वरात् गृहीत्वा कन्याया दानमार्षो धर्मः। धर्मत इति। धर्म एवायं, नात्र विक्रयबुद्धिः कर्तव्या, उदनीयस्यापारादित्यभिप्रायः। मेधा.

( २ ) गोयज्ञीयद्रव्यमेकं द्वे वा वरात् धर्मतो यागाद्यवकर्तव्यधर्मनिमित्तं गृहीत्वा यत् कन्याया यथाशास्त्रं प्रदानं विधीयते स आर्षो विवाह उच्यते। गोरा.

* संर. भारतम्बोऽप्यनावत्।

( १ ) हिध. २७।५।११ ; संर. ४७९.

( २ ) हिध. २७।३।११.

( ३ ) वस्मृ. १।३२.

( ४ ) विस्मृ. २४।२१.

( ५ ) शंस्मृ. ४।७.

( ६ ) गृक. ८४ ; गृर. ७० रैव पार्ष ( रैवाऽऽर्ष: ) सर्वेष्वलङ्कार ( सर्वेऽलङ्कारा: ) ; संप्र. ८५१ पार्ष ( वाऽऽर्ष: ).

( ७ ) भा. ११।०३।११.

( १ ) भा. १३।४५।२०-२१.

( २ ) भा. १३।४६।१-२.

( ३ ) मस्मृ. ३।२९ ; विश्व. १।५९ पृ. ; गृक. ८१ धर्मः स उच्यते ( धर्मोऽननुच्यते ) ; स्मृच. ८६ ; चत्रा. १८४ ; गृर. ७० धर्मः स उच्यते ( ऽर्थ धर्म उच्यते ) ; पमा. ४८९ ; मवा १५५ पृ. ; मर. १८ ; दीक. १५९ धर्मतः ( उच्चितः ) पृ. ; धप्र ५६ ; वीमि. १५९ पृ. ; वीर. ८५५ पृ. ; सुभा. १४० ; संकौ. १०५ ; स्प. ७६ पृ. ; भाव. १०३, १०७ ; बाल. १।५९ पृ. ; सेत. १५८ पृ. ; भाव. धर्मः ( धर्म्यः ) ; मस्मृ ५१ के दा ( हि वा ).

(३) धर्मत इत्यानृशंस्यार्थे, न तु शुल्कबुद्धया। गोमिथुनग्रहणं च कन्यादातुः स्वयमधिकदानासमर्थस्य कन्योपकाराधिक्यमिच्छतो वेदितव्यम्। गृक.८३

(४) गोमिथुनं स्त्रीपुंसौ द्वे वा मिथुने धर्मत आदाय आर्षोऽयं धर्म इति बुद्धया, न तु लोमेन। आदानं वेतनकल्पार्थमेव न तु स्वार्थम्। तच्च कुलधर्मबुद्धयैव। विधिवदिति वाक्यमुच्चार्येत्यर्थः। अलङ्करणं तु कन्याया नात्रास्ति तत्र विशेषविधेरेव लाभात्। मवि.

(५) धर्मतः धर्मार्थं यागादिसिद्धये कन्यायै वा दातुं, न तु शुल्कबुद्धया। * ममु.

(६) धर्मत इत्यनेन दक्षिणात्वेनादाय इत्युच्यते। एकं द्वे वेति शक्त्याऽशक्त्या वरापेक्षया विकल्पः।

गुर.७०

(७) गोयुगं स्त्रीपुंसौ मिथुनं द्वे इति स्त्रीपुंगोचतुष्टयं वरात् वरगृहादादाय कन्यायाः सौन्दर्यादिगुणदोषानपेक्ष्य नियतपणत्वेन गृहीत्वा। पूर्वमृषिभिराचरितत्वादार्षम्। मच.

(८) धर्मतः कुलधर्मतः, आर्षधर्मतो वा। न तु शुल्कत्वेन। 'आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्। अल्पो वाऽपि महान् वाऽपि विक्रयस्तावदेव सः॥' इति मनुना गोमिथुनस्य शुल्कत्वेनोपादानापाकरणात्। शुल्कत्वं तु गोमिथुनस्यापि लोमेन गृह्यमाणस्य भवति। संप्र.८४९

(९) धर्मत आदाय धर्मार्थमादाय नार्थार्थे यत्कन्याप्रदानमार्षो धर्मः। विक्रयदोषभयादृषिभिरनुक्तवेतनैरेव विद्या दीयते शुश्रूषादिकं शिष्यात् किंचिदादीयते च। आर्षेऽपि कन्या दीयते वरात् किंचिदादीयते च। तेन दानाऽऽदानसामान्येनास्यार्षत्वम्। नन्द.

## याज्ञवल्क्यः

**आदायार्षस्तु गोद्वयम्॥**

* शेषं गोरावत्।

(१) यास्मृ. १।५९; विश्व.; मिता.; अप.; स्मृच. ८६; मपा. ५५५; गमा. ९९; उत. १२८ गोद्वयम् (गोयुगम्); विसौ. ५६; वीमि.; संप्र. ८५१; चम. ११३;

(१) आर्षस्तु वरात् गोद्वयमादाय। तच्च मिथुनं, स्मृत्यन्तरात्। (मन्त्र)द्रष्टारो ब्राह्मणा ऋषयः, ते एनमर्हन्तीत्यार्षः। तुशब्दः परिक्रयाशङ्कानिवृत्त्यर्थः। तथा चाह मनुः— 'एकं गोमिथुनं द्वे वा वरादादाय धर्मतः' इति। कस्मात् पुनरिमावनुकल्पौ, पूर्वस्मादूनफलत्वात्। न्यूनफलत्वाच्चास्य दैवान्निकृष्टत्वम्। दैवसहपाठाच्चायमपि ब्राह्मणस्यैव। प्राजापत्यान्न्यूनफलत्वेऽपि चास्मात एव पूर्वपाठ इति मन्तव्यम्। * विश्व.

(२) वरात् गोमिथुनं गृहीत्वा तस्मै यथाशक्त्यलङ्कृत्य कन्या दीयते इत्येष आर्षो विवाहः।

. अप.

(३) गोद्वयग्रहणं प्रदर्शनार्थम्। अत एव मनुः— 'एकं गोमिथुनं द्वे वा......'। मिथुनं वृषभो धेनुश्च।

+ स्मृच. ८६

(४) गोमिथुनं वरात् गृहीत्वा तेनैव सह यत्र कन्यादानं स विवाह आर्षः। तथा च देवलः— 'प्रदानं यत्र कन्यायाः सह गोमिथुनेन च। शस्ताय चासगोत्राय तमार्षमृषयो विदुः॥'। गोमिथुनं दक्षिणात्वेन वराय देयमिति केचित्। कन्याधनार्थं तस्मै देयमिति कल्पतरुः। तदर्थमेव गोमिथुनं वरात् ग्राह्यं न तु शुल्कत्वेन। वीमि.

## नारदः

**वस्त्रगोमिथुने दत्त्वा विवाहस्त्वार्ष उच्यते॥**

वस्त्रयुगं च गोयुगं च दत्त्वा विवाहः विवाहयेदिति ल्यप्प्रत्ययोपपत्तिः। एष आर्षः। नाभा.

* मिता. वाक्यार्थमात्रं विश्ववत्।

+ वाक्यार्थः विश्ववत्।

मुक्ता. १४१ उनवत्; शूक. १०९; विपा. ७५८ उतवत्; रत्न. ७६ उनवत्; माच. ३।२९.

(१) नासं. १३।४१; नास्मृ. १५।४१ मिथुने दत्त्वा (मिथुनाभ्यां तु).

### देवलः

प्रदानं यत्र कन्यायाः सह गोमिथुनेन च ।
शस्ताय चासगोत्राय तमार्षमृषयो विदुः ॥

सह गोमिथुनेनेति । वरादुपात्तेन सह गोमिथुनेन सहितमित्यर्थः । शस्ताय यथोक्तवरलक्षणोपेताय ।

गृक. ८४

### बृहत्पराशरः

वराय गुणयुक्ताय विदुषे सदृशाय च ।
कन्या गोद्वयमादाय दीयेताऽऽर्षः स उच्यते ॥

( १ ) गृक. ८३–८४ यत्र ( यत्तु ) चासगो ( वाऽसगो ) ; गृर. ७० गृकवत् ; दीक. ११५९ ; उत. १२८ ( सह गोमिथुनेन च ) एतावदेव ; वीमि. ११५९ ; संप्र. ८५१ .

( २ ) बृपसं. ६।६ .

### शौनककारिका

यत्र गोमिथुनं दत्त्वा प्रदातृभ्यः कुमारिकाम् ।
उद्वहेदार्षनामाऽसौ विवाहस्त्वृषिसंमतः ॥

### रेणुकारिका

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥

( १ ) प्रपा. ३४४ ; संप्र. ८६४ हरलृषि ( हरति ).

( २ ) रेका. ७७ आ पृ. ५२ .

## प्राजापत्यविवाहः

### आश्वलायनगृह्यसूत्रम्

सह धर्मं चरतमिति प्राजापत्यः ॥

( १ ) सह धर्मं चरतं इति समयं कृत्वा यत्र प्रदानं स प्राजापत्यः । यद्यप्यन्येष्वपि विवाहेषु सहधर्मचरणमस्ति, तथाप्यत्र यावज्जीवं सहधर्मचरणमेव न मध्ये आश्रमान्तरप्राप्तिरिति विशेषः । किंच तया तयैव सहधर्मचरणं, न स्त्र्यन्तरविवाहः ।

अना.

( २ ) कन्यादानसमयेऽन्योन्याव्यभिचारेण ' सहोभौ चरतां धर्मम् ' इत्यनेन वाक्येन समयं कृत्वा यत्कन्यादानं स प्राजापत्य इति कल्पतरुप्रभृतयः । देवस्वामिनस्तु यद्यप्यन्येष्वपि विवाहेषु सहधर्मचरणमस्त्येव, तथाप्यत्र सहधर्मचरणमेव न मध्ये आश्रमान्तरप्राप्तिर्नापि स्त्र्यन्तरविवाह इति विशेष इत्यव्यभिचारपदार्थं व्याचख्युः ।

विष्णुस्तु लक्षणान्तरमाह– ( ' प्रार्थितप्रदानेन प्राजापत्यः ' इति ) । प्रार्थितायाः याचितायाः कन्यायाः यत् पित्रा प्रकर्षेणोक्तविधिना दानं तेन प्राजापत्य इत्येतदर्थतां वर्णयन्ति ।

यत्तु धर्मशब्दोऽर्थकामयोरुपलक्षणम्, ' धर्मे चार्थे च कामे च नातिचरितव्या त्वया स्त्रियम् ' इति स्मृत्यन्तरादिति । तन्न, तस्य वाक्यस्य काठकगृह्यपरिशिष्टे ब्राह्मविवाहोपक्रमपठितत्वेन तन्मात्रविषयत्वात्, ' सह धर्मश्चर्यताम् ' इति प्राजापत्ये गौतमेन मन्त्राभिधानाच्च ।

संप्र. ८५२

( १ ) आगृ. १।६।१ ; उ. २।१२।२ ; प्रपा. ३४३ चरतं ( चरत ) ; धप्र. ४२ ; संप्र. ८५२ प्रपावत्, संम. ६४ प्रपावत्; दृम. ११२८ चरतं ( चरतां ) ; संर. ७०६ , ७७८ प्रपावत् .

### वैखानसगृह्यसूत्रम्

युगपद्धर्मानुवर्तिनौ स्यातामिति वाचाऽनुमान्याभिकायं स्वयं धृत्वा यत्कन्यामर्हयित्वा दद्यात्स प्राजापत्यो भवति ॥

### गौतमः

संयोगमन्त्रः प्राजापत्ये सह धर्मश्चर्यतामिति ॥

( १ ) वैगृ. ३।१ .

( २ ) गौध. ४।७ ; विश्व. १।६० ; मेधा. ३।३० ( प्राजापत्ये सह धर्मं चरतामिति मन्त्रः ) ; गृक. ८५ ; मभा. ;

(१) प्राजापत्य इति विवाहसंज्ञा। तस्मिन् प्राजापत्ये विवाहे संयोगार्थो मन्त्रः संयोगमन्त्रः तं प्रदानकाले उक्त्वा दद्यात्। कोऽसौ मन्त्रः? 'सह धर्मश्चर्यताम्' इति। मभा.

(२) प्राजापत्यसंज्ञके विवाहे 'सह धर्मश्चर्यताम्' इति प्रदानमन्त्रः। यद्यपि ब्राह्मादिष्वपि सह धर्मचर्या भवति तथाऽपि आच्छादनशः सह धर्मश्चरितव्यः, नाश्रमान्तरं प्रवेष्टव्यं, न स्त्र्यन्तरमुपयन्तव्यमिति मन्त्रेण समयः क्रियते। एष ब्राह्मादेः प्राजापत्यस्य विशेषः। आच्छाद्यालङ्कृतामिति समानम्। गौमि.

## बौधायनः*

आच्छाद्यालङ्कृत्यैषा सह धर्मं चर्यतामिति प्राजापत्यः॥

आच्छादनालङ्करणे कन्याया एव। वरस्याप्येके। 'एषा' इत्यादिमन्त्रः। एषा ते भार्या। त्वदीयो द्रव्यसाध्यो धर्मोऽनया सह चर्यतामिति मन्त्रार्थः। एष प्राजापत्यो नाम द्वितीयः। बौवि.

## विष्णुः

प्रार्थितप्रदानेन प्राजापत्यः॥ §

(१) प्रार्थिताय प्रदानं प्रार्थितप्रदानम्।

गृक.८५

(२) प्रार्थिताय प्रदानं, प्रार्थितश्च सहोभौ चरतां धर्ममिति। गृक.७१

* आपस्तम्बेन प्राजापत्यविवाहो ब्राह्मविवाहेऽन्तर्भावात् पृथङ्नोक्त इति व्याख्यातारः।

§ संप्र.व्याख्यानं 'सह धर्मं' इति आश्वलायनगृह्यसूत्रवचने (संका. पृ. ६८३) द्रष्टव्यम्।

गौमि. ४।५; गृर. ७१ धर्मः (धर्मं); संप्र. ८५२ (सह धर्मश्चर्यताम्) एतावदेव; मुक्ता. १४२; संग. २५४ संप्रवद्.

(१) बौध. १।२०।३; मुक्ता. १४२ धर्मं (धर्मः); संर. ४७८ त्वैषा (त्वेनया) धर्मं (धर्मः).

(२) विस्मृ. २४।२२; गृक. ८५ प्रदानेन (प्रदानं); गृर. ७१ गृकवद्; संप्र. ८५२ लक्ष्मणमन्त्वरमुदितः। 'प्रार्थितप्रदानेन' इति पाठो व्याख्यानात्प्रतीयते।

## शङ्खः

प्रार्थितः संप्रदानेन प्राजापत्यः प्रकीर्तितः॥

## महाभारतम्

स्वयमन्ये च विन्दते॥

## मनुः

सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः॥

(१) 'सह धर्मो युवाभ्यां कर्तव्यः' इति वचनेन परिभाषां कृत्वा नियम्य यद्दानं स प्राजापत्यः। धर्मग्रहणमुपलक्षणार्थम्। धर्मे चार्थे च कामे च तुल्ययोगक्षेमतेति मिथोऽस्य परिभाषावचनस्यार्थः। धर्मशब्द एवोच्चार्यते 'सह धर्मश्चर्यताम्' इति, न तु 'धर्मार्थकामाः सह' इति। स तु धर्मशब्दः स्मृत्यन्तरवशादर्थकामयोरुपलक्षणार्थो व्याख्यातः। 'यद्येनां नातिचरसि धर्मार्थकामेषु, तदा तुभ्यमियं दीयते' इति कृतसंविस्कायाम्युपगततदर्थाय विवाहकाले यद्दानं तत्रैवं समुच्चारयितव्यम् 'सह धर्मं चरताम्' इति। अर्थकामयोरभिप्रेतेऽपि सहत्वे तदप्रकृतत्वादनुच्चारणम्। तथा च गौतमः— 'प्राजापत्ये सह धर्मं चरतामिति मन्त्रः' (गौध. ४।५)। मन्त्रग्रहणेन चैतद्दर्शयति अधिकृतरूपमेव प्रयोक्तव्यम्, मन्त्रवत्। न हि महासत्त्वानामर्थकामविषये सहितत्वं परिभाषितुं युक्तं, गम्यते तु स्मृत्यन्तरेभ्यः। अनयैव संविदा दोषेणास्य न्यूनता। अस्ति ह्यत्र दातुर्वरादुपकारलिप्सा। स्वशब्देनैतद्वचनं वाच्यते, न पुनरयं

(१) शंस्मृ. ४।५. 'प्रार्थितापप्रदानेन' इति पुस्तकान्तरद्वयपाठः।

(२) भा. १।१०२।१४.

(३) मस्मृ. ३।३०; गृक. ८४-८५; स्मृच. ८६ सहोभौ (सह नौ) भाष्य च (भाष्य तु); चद्रा. ६८५ भाष्य च (भाष्य तु) प्रदानमभ्यर्च्य (दान समभ्यर्च्य); गृर. ७१; पमा. ४८६ भाष्य च (भाष्य तु); मर. १९ वाचाऽनुभाष्य च (यत्राऽनुभाष्य तु); धप्र. ४६; संप्र. ८५१; चम. ११३ पमावद्; मुक्ता. १४० पमावद्; संकौ. २०६ वाचाऽनुभाष्य च (यत्रानुभाष्य तु); भान. १७३ पमावद्; संग. २५४; सस्मृ. ५२; कृभ. १११९ मभ्यर्च्य (मुदिश्य) शेषं पमावद्..

दातुरेव वचननियमः। अनुभाष्येत्यनेनैव सिद्धत्वाद्वाचेत्यनर्थकं स्यात्, अनुभाषणे वागिन्द्रियस्य साधनत्वात्। तथा च गृह्यकारः— 'एतद्वः सत्यमित्युक्त्वा वरं वाचयेदेतद्वः सत्यम्' इति। अनुशब्दश्च प्राप्तार्थस्यैव वाचा निश्चयमाह। मेधा.

( २ ) सह युवां धर्मं कुरुतमिति प्रदानकाले वाचोक्त्वा यदर्चापूर्वं कन्यादानं स प्राजापत्यो विधिः स्मृतः। * गोरा.

( ३ ) उभावेव न तु भार्यान्तरेणापि सहेति। अनुभाष्य नियम्य। अभ्यर्च्य मधुपर्केण। एतच्चैतादृक्परिभाषणेन दृष्टस्वार्थाभिसंधिनिमित्ततया कन्यालङ्काररहिततया च ब्राह्मदैवाभ्यां हीनं, आर्षाच्चोत्कृष्टम्, अत्रार्थग्रहणाभावात् कन्याऽनुकम्पामात्रकत्वाच्च परिभाषणस्य। अत एव 'आर्षोढाजः सुतः' इति फलेऽप्याधिक्यं वक्ष्यते। दैवे तु यद्यपि यज्ञसिद्ध्यभिसंधिरस्त्येव, तथापि धर्मसिद्ध्यर्थं प्रवृत्तस्यास्य धर्महेतुतया आर्षप्राजापत्याभ्यामुत्तमत्वम्। प्राजापत्ये कन्यासुखाभिसंधिना परिणयनान्तरनिषेधे तात्पर्यादभिसंधेः ( न ) धर्मार्थतैवेति। मवि.

( ४ ) वस्त्रादेरनावश्यकत्वात् ब्राह्मादेर्भेदः। प्रजामात्रोद्देश्यत्वात् प्रजापतिदैवत्याद्वा प्राजापत्यः। § मच.

( ५ ) 'उभौ युवां सह धर्मं चरतं, न पृथक्' इति वाचाऽनुभाष्य 'अहं गृहस्थाश्रमस्य एव धर्मं चरिष्यामि, न अन्याश्रमस्य.' इति वरं प्रतिश्राव्येत्यर्थः। यदि सहधर्मचरणानुभाषणमात्रमेवात्र विवक्ष्यते, ततो दैवविवाहात् प्राजापत्यस्य न्यूनता वक्ष्यमाणा नोपपद्येत। अभ्यर्च्य वरमिति शेषः, यत् कन्याप्रदानं स प्राजापत्यो विधिः। विधीयते इति विधिः विवाह उच्यते। गार्हस्थ्यप्राधान्यनिबन्धनं प्राजापत्यत्वं, गार्हस्थ्यप्रधानो हि प्रजापतिः। + नन्द.

* ममु. गोरावद्।
§ शेष मविगतम्।
+ माच. नन्दगतम्।

## याज्ञवल्क्यः

**इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने।
स कायः॥**

( १ ) अयं तु सार्ववर्णिकः। 'धर्मश्चर्यताम्' इत्येतावदेवोक्त्वाऽर्थिने यत् कन्यादानं, स प्राजापत्यः। उक्त्वेति वचनात्तत्सम्युपगमादेव। यथाह गौतमः— 'संयोगमन्त्रः प्राजापत्ये' ( गौध. ४।७ ) इत्यादि। प्रजोत्पादनेच्छासामान्यात् प्रजापतिः स्नातकः। स एनमर्हतीति प्राजापत्यः। एवं चार्थिने इत्यनुवादो मन्त्रविधानार्थः। सार्ववर्णिकत्वेऽपि शूद्रनिवृत्तिः मन्त्रप्रयोगात्। विश्व

( २ ) 'सह धर्मं चरताम्' इति परिभाष्य कन्यादानं स प्राजापत्यः। मिता.

( ३ ) 'उभौ सह धर्मं चरताम्' इत्येवं कन्यावरावुक्त्वा यथाशक्त्यलङ्कृत्य कन्या कन्यार्थिने दीयते यत् स कायः प्राजापत्यो विवाहः। अप.

( ४ ) 'उभौ सह धर्मं चरताम्' इति वाक्यमुच्चार्य नियमबन्धपूर्वकं यत्र कन्यादानं स विवाहः कायः प्राजापत्यः। ब्राह्मे च समयबन्धाभावात् नातिव्याप्तिः। वीमि.

## नारदः

**सह धर्मं चरेत्युक्त्वा प्राजापत्यो विधीयते॥**

सह पत्या धर्मं चरेत्युक्त्वा दद्यादित्येवमेष प्राजापत्यः। नाभा.

( १ ) यास्मृ. १।६० ; विश्व. पूर्वार्धे ( सह धर्मश्चर्यतामित्युक्त्वा या दीयतेऽर्थिने। ) ; मिता. ; अप. पूर्वार्धे ( सहोभौ चरतां धर्ममित्युक्त्वा दीयतेऽर्थिने। ) ; गृक. ९८ ( स कायः ) एतावदेव ; गृर. ८१ गृकवत् ; मपा. ५५६ ; गभा ९९-१०० ; उत. १२८ ; संत. ८९२ ; विसौ. ५६ ; वीमि. अपवत् ; संप्र. ८५२ ; मुक्ता. १४१ ; शूक. १०९ ; विपा. ७५९ ; रत्न. ७६.

( २ ) नासं. १२।४० ; नास्मृ. १५।४० विधीयते ( विधिः स्मृत: ).

### देवलः

[1]सहधर्मक्रियाहेतोर्दानं समयबन्धनात् ।
अलङ्कृत्यैव कन्याया विवाहः स प्रजापतेः ॥

समयबन्धनं 'सहोभौ चरताम्' इति संकेतकरणम् ।
गृक.८५

### बृहत्पराशरः

[2]कन्या चैव वरश्चोभौ स्वेच्छया धर्मचारिणौ ।
स्यातामिति च यत्रोक्त्वा दानं कायविधिस्त्वयम् ॥

### सुप्रभेदे

[3]विप्रस्यैव सुशीलस्य विवाहापेक्षितस्य च ।
होमकर्म स्वयं कृत्वा वस्त्राभरणभूषिताम् ॥
आरोग्याभरणां कन्यां याच्यमानां मुहुर्मुहुः ।
बुद्धिपूर्वं तु यद्दद्यात् प्राजापत्यमिति स्मृतम् ॥

(१) गृक. ८५; गृर. ७१ सहधर्म (सर्वधर्म); वीमि. १।६० ; सप्र. ८५१-८५२ .
(२) वृपसं. ६।७ .
(३) सस्मृ. ५३ .

### शौनककारिकाः

[1]सह धर्मं चरत इत्युक्त्वा यत्र कुमारिका ।
प्रदीयते विवाहोऽसौ प्राजापत्य इति स्मृतः ॥
[2]अन्येष्वपि विवाहेषु धर्मस्य चरणं सह ।
यद्यप्युक्तं तथाप्यत्र विशेषोक्तिर्गृहाश्रमात् ॥
[3]आश्रमान्तरसंप्राप्तिनिषेधार्थेति गम्यताम् ।
न चात्र तस्यां जीवन्त्यां विवाहस्य परिग्रहः ॥
[4]आश्रमान्तरयोगो वा मृतायां भवतस्तु तौ ॥

### रेणुकारिका

[5]सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्योऽयमुच्यते ॥

(१) शौका. ७ पृ. ५६ ; प्रपा. ३४४ पूर्वार्धे (सहैव धर्मं चरत इति यत्र कुमारिका ।) ; संप्र. ८६४ .
(२) शौका. ८ पृ. ५६ अन्येष्वपि (अन्येषु च) विशेषोक्तिः (विशेषोऽस्ति) ; प्रपा. ३४४ ; संकौ. २०६ .
(३) शौका. ९ पृ. ५६ ; प्रपा. ३४४ ; संकौ. २०६ संप्राप्ति (संप्राप्तिः) गम्यताम् (गम्यते) .
(४) शौका. १० पृ. ५६ ; प्रपा. ३४४ ; संकौ. २०६ .
(५) रेका. ७७ अ पृ. ५३ .



## आसुरविवाहः

### आश्वलायनगृह्यसूत्रम्

[1]धनेनोपतोष्योपयच्छेत स आसुरः ॥

(१) कन्यापित्रे धनदानेन यो विवाहः स आसुरसंज्ञः ।
गानाष्टृ.

(२) 'वित्तेनानतिः स्त्रीमतामासुरः' (गौध. ४।११) इति गौतमः । तेन कन्याया धनेनोपतोषणेऽपि न आसुरत्वम् ।
अना.

(३) यत्र कन्याप्रदातारमपेक्षितधनेन परितोष्य कन्यामुपयच्छेत स आसुरो विवाहः ।
प्रपा. ३४३

(१) आगृ. १।६।१ ; प्रपा. ३४ ; धप्र. ४६ ; संप्र. ८५४ (धनेनोपयच्छेत स आसुरः) ; मंप्र. ६४ ; स्मृम. ११११ ; मेट. ४७८ .

### मानवगृह्यसूत्रम्

[1]संजुष्टां धर्मेणोपयच्छेत ब्राह्मेण शौल्केन वा ॥ *
[2]शतमितिरथं दद्याद्गोमिथुनं वा ॥

शुल्कनियमार्थमाह– शतमितिरथं गोमिथुनं वा दद्यादिति विकल्पः । कनकाद्यलङ्कारमक्षफल्यादीनि वा ।
अष्टामा.

### काठकगृह्यसूत्रम्

[3]अथ शुल्कदेयायाः ॥

* महाव्रकभाष्यं ब्राह्मविवाहे (संग्र. पृ. ६६८) द्रष्टव्यम् ।
(१) मागृ. १।७।११ .
(२) मागृ. १।७।१२ .
(३) कागृ. १४।१, २ .

आसुरविवाहविधिमाह – अथेति । अथ शुल्कदेयायाः प्रदानविधिरुच्यते इति शेषः । शुल्केन मूल्येन या दीयते सा शुल्कदेया । देव.

हिरण्यं व्यतिहरतः ॥

सुवर्णं विजिगीषया परस्परं ददतो दातृप्रतिग्रहीतारौ । आसुरत्वादस्य विजिगीषोः प्रधानत्वाच्चासुराणां राजसत्वेन अन्योन्योपचारं कुरुत इति गम्यते, कन्यामूल्यभूतं तु सुवर्णं व्यतिहरतो निश्चिनुतो द्वौ दातृप्रतिग्रहीतारौ संभूयेत्यर्थद्वयं तन्त्रेणावृत्त्यावगम्यते । देव.

## वाराहगृह्यसूत्रम्

[1]असंसृष्टामधर्मेणोपयच्छेत् (?) ब्राह्मेण शौल्केन वा । शतमितिरथं दद्याद्गोमिथुनं वा उभये ॥

## वैखानसगृह्यसूत्रम्

[2]यत्कन्यामाभरणमारोप्य शक्त्या बन्धुभ्यो धनं दत्त्वाऽऽहरते तमासुरमामनन्ति ॥

## गौतमः

[3]वित्तेनानतिः स्त्रीमतामासुरः ॥

( १ ) यत्र धनदानेन आनमनं कन्यावता क्रियते, स आसुरो नाम विवाहः । कन्यावतामिति वक्तव्ये स्त्रीग्रहणं कन्यादानफलनिवृत्त्यर्थम् । मभा.

( २ ) यत्र स्त्रीमता कन्यावता पित्रादीना वित्तेन धनप्रदानेन आनतिः आर्जनं क्रियते स आसुरो विवाहः । अत्र याज्ञवल्क्यः— 'आसुरो द्रविणादानात्' इति । मनुश्च – 'ज्ञातिभ्यो द्रविणं दत्वा कन्यायै च स्वशक्तितः । कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥' स्त्रीमतामिति वचनान्न केवलं कन्यायै धनप्रदानमासुरत्वनिबन्धनम् । तथा च स्मृत्यन्तरम् – 'यासां नाऽऽददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत्कुमारीणामानृशंस्याच्च केवलम् ॥' इति । गौमि.

( १ ) वागृ. १०.
( २ ) वैगृ. ३।१ .
( ३ ) गौध. ४।११ ; मभा. ; गौमि. ४।९ ; उ. २।१२।१ ; मुका. १४२ , १४३ .

कन्याविक्रयिणो मूढा महाकिल्बिषकारकाः । पतन्ति नरके घोरे यावदा सप्तमं कुलम् ॥

क्रयक्रीता तु या कन्या न सा पत्नी विधीयते । न दैवे न च पित्र्ये च यदि कुर्वीत निष्फलम् ॥

## हारीतः

[1]शौल्केन मानुषः ॥

इदं च आसुरस्यैव सज्ञान्तरम् । * गृक.८७

[2]दम्भच्छद्मभ्यां परैस्तर्किताय यद्दीयते प्रतिपद्य या स आसुरः ॥

हारीतस्तु लक्षणान्तरमाह — दम्भेति । परैः अन्यैः दम्भच्छद्मभ्या दाम्भिकत्वेन छाद्मिकत्वेन वा तर्किताय ज्ञाताय ( वराय ) स्वयमेव वा दाम्भिकत्वं छाद्मिकत्वं प्रतिपद्य ज्ञात्वा यत्न दानं स आसुरः । § सप्र.८५४

## बौधायनः

[4]धनेनोपतोष्याऽऽसुरः ॥

कन्यावन्तमुपतोष्य । यथाविध्येव होमः । बौवि.

[5]क्रीता द्रव्येण या नारी न सा पत्नी विधीयते । न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥

( १ ) यत्तु कात्यायनेनोक्तम् – क्रीता द्रव्येणेति, तत्प्रशस्तविवाहसंभवविषयम् । स्मृच.८७

* गृर., संप्र. गृकवत् ।
§ गृक., गृर. संप्रगतम् ।
( १ ) समु. ६ .
( २ ) गृक. ८७ शौल्केन ( शुल्केन ); गृर. ७२ ( शुल्केन शौर्येण मानुषः ); मपा. १५७ ; संप्र. ८५३ ; रत्न. ७७ .
( ३ ) गृक. ८६ ; गृर. ७२ यद्दीयते ( दीयत ) ; संप्र. ८५४ .
( ४ ) बौध. १।२०।७ ; मुका. १४२ ; संर. ४७८ .
( ५ ) बौध. १।२१।४ न सा पत्नी ( सा न पत्नी ) न सा दैवे ( सा न दैवे ) ; स्मृच. ८७ सा पित्र्ये ( पित्र्ये च ) कात्यायनः ; निप. २८१ ( = ) पित्र्ये ( पैत्र्ये ) ; मुका. १४४ न सा दैवे न सा पित्र्ये ( तथा दैवे च पित्र्ये च ) चन्द्रिकायामरीत्युक्तम् ; कृभ. ११३२–११३३ पत्नी विधीयते (पत्न्यभिधीयते) कश्यपोऽब्रवीत् ( मुनयो विदुः ) यमः .

( २ ) आसुरादिविवाहो ब्राह्मणानां निन्द्य इत्याह– क्रीता द्रव्येणेति । क्रीताया वेदोक्तकर्मण्यधिकारो नास्तीत्यर्थः । बौवि.

**शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः ।**
**आत्मविक्रयिणः पापा महाकिल्बिषकारकाः ॥**
**पतन्ति नरके घोरे घ्नन्ति चाऽऽ सप्तमं कुलम् ।**
**गमनागमनं चैव सर्वं शुल्को विधीयते ॥**

कन्याविक्रयोऽपि न कर्तव्य इत्याह– शुल्केनेति । कन्याविक्रयी कुत्सितजन्मभाग्भवति, अधःपाती च । तस्मात् कन्याविक्रयो न कर्तव्य इत्यर्थः । बौवि.

## आपस्तम्बः

**शक्तिविषयेण द्रव्याणि दत्त्वाऽऽवहेरन् स आसुरः ॥**

यत्र विवाहे कन्यावते यथाशक्ति द्रव्याणि दत्त्वा आवहेरन् कन्यां स आसुरः । ' वित्तेनानतिः स्त्रीमतामासुरः ' ( गौध. ४।११ ) इति गौतमः । तेन कन्यायै गृहक्षेत्राभरणादिदानेन विवाहो न आसुरः । उ.

**दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥**

पुत्रप्रसङ्गेन आह– दानमिति । दानग्रहणेन विक्रयोऽपि गृह्यते, त्यागसामान्यात् । क्रयधर्म इति च प्रतिग्रहस्यापि ग्रहणं, धर्मग्रहणात् स्वीकारसामान्याच्च । अपत्यस्य दानप्रतिग्रहक्रयविक्रया न कर्तव्याः । द्वादशविधेषु पुत्रेषु दत्तक्रीतयोरपि पुत्रयोः मन्वादिभिः पठितत्वात् नायं सामान्येन प्रतिषेधः । किं तर्हि ? ज्येष्ठपुत्रविषयः, एकपुत्रविषयः, स्त्रीविषयो वा । तथा च वसिष्ठः– ' न ज्येष्ठं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, स हि संतानाय पूर्वेषाम् । न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः । पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये अग्निमुपसमाधाय संपरिस्तीर्य व्याहृतिभिर्हुत्वाऽदूरबान्धवं संनिकृष्टमेव प्रतिगृह्णीयात् ' ( वस्मृ. १५।३-६ ) इति । विश्वजिति च सर्वस्वदाने गवादिवदपत्यं न देयमिति । विक्रयस्तु सर्वत्र निषिद्धः । तत्र उपपातकेषु याज्ञवल्क्य आह– ' नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ' ( यास्मृ. ३।२३६ ) इति । बह्वृचब्राह्मणेऽपि शुनःशेपाख्याने दृश्यते– *' स ज्येष्ठं पुत्रं निगृह्णान उवाच '* ( ऐब्रा. ३३।३ ) इत्यादि । पुत्रप्रकरणे अपत्यशब्दोपादानमपि ज्येष्ठपुत्रविषयत्वस्य लिङ्गम्, न पतन्ति अनेनेति अपत्यमिति । ' ऋणमस्मिन् सनयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥' इति । उ.

## हिरण्यकेशिधर्मसूत्रम्

**यथाशक्ति द्रव्याणि दत्त्वा वहेरन्स आसुरः ॥ ***
**दानं च क्रयधर्मश्चापत्यस्य च न विद्यते ॥ ***

## वसिष्ठः

**पणित्वा धनक्रीती स मानुषः ॥**

**तस्माद्दुहितृमतेऽधिरथं शतं देयमितीह क्रयो विज्ञायते ॥**

( १ ) बौध. १।११।५ ; निप. २८१ ( = ) स्वसुतां लोभमोहिताः ( सुतां लोभविमोहिताः ) किल्बिषकारकाः ( किल्बिषकास्तु ते ) चतुर्थमर्धं नास्ति .

( २ ) आध. २।१२।१ .

( ३ ) आध. २।१३।१० ; गृक. ८८ क्रय ( विक्रय ) ; गृर. ७३ ( दानविक्रयधर्मश्च अपत्यस्य न विद्यते ) ; वीमि. १।६१ ( दानं विक्रयधर्मश्च अपत्यस्य विधीयते ? ) ; संप्र. ८५४ ( दानं विक्रयधर्मश्चापत्यस्य न विधीयते ) ; मुक्ता. ४८, १०३ ; आन. १६१ ( दानं क्रयादिधर्मश्चापत्यस्य न विद्यते ) ; संग. २५४ सप्रवत्, कदयः . .

* व्याख्यानं आपस्तम्बवचने द्रष्टव्यम् ।

( १ ) हिध. २७।४।३६ ; मंर. ४७६ .

( २ ) हिध. २७।३।१० .

( ३ ) वस्मृ. १।३५ क्रीती ( क्रीता ) ; गृक. ८७ ; गृर. ७२ पणित्वा ( पठित्वा ) ; वीमि. १।६१ ; संप्र. ८५३ क्रीती ( क्रीता ).

( ४ ) वस्मृ. १।३६ ; गृक. ८७ मितीह ( मिति ह ) ; गृर. ७२ ( तस्माद्दुहितृमते शतमधिरथमिति ह क्रयो विज्ञायते ) ; वीमि. १।६१ अधिरथं शतं देयमितीह ( शतमधिरथं देयमिति ) ; संप्र. ८५३ ( तस्माद्ग्राहयितृमतेऽधिरथशतं देयमिति ह क्रयो विज्ञायते ) .

यौ पत्युः क्रीता सत्यथान्यैश्चरतीति ह चातुर्मास्येषु ॥

(१) * पठित्वा पठनानुकूलव्यापारं कृत्वा स्थितस्य यत्र विवाह्या कन्या धनक्रीती भवति स विवाहो मानुषः। आसुर इत्यर्थः।

अधिरथं रथाधिकं शतमिति गोशतम्। इतिहशब्देन क्रयबोधिका श्रुतिर्द्योत्यते, सा च 'या पत्युः क्रीता सत्यन्यथा अन्यैश्चरतीत्याह चातुर्मास्येषु' इति। अधिकार (१) क्रयदर्शनार्थं श्रुत्युपन्यासः।

† गृ.७२

(२) पणित्वा पणनानुकूलव्यापारं कृत्वा स्थितस्य।

§ धीमि.१।६१

(३) क्रये श्रुतिं प्रमाणयति – 'तस्माद्ग्राहयितृमतेऽधिरथशतं देयमिति ह क्रयो विज्ञायते' इति। तस्मादित्युक्तोपसंहारः। ग्राहयितुः कन्यादातुः। मते संमते। अधिको रथो यस्मिन् शते तदधिरथं, तच्च तच्छतं च, गवामिति शेषः, अनुक्तसंख्या गोगामिनीति न्यायात्। तत् वरेण देयम्। इतिहशब्देनोक्तस्यार्थस्य प्रसिद्धिं दर्शयति — 'या च पत्युः क्रीता साऽन्यैश्चरतीति ह चातुर्मास्येषु' इति क्रयप्रदर्शनाय श्रुत्युपन्यासः।

संप्र.८५३–८५४

## विष्णुः

क्रयेणाऽऽसुरः ॥

## शङ्खः

आसुरो द्रविणादानात् ॥

* पठित्वाशब्दौ पकारस्थाने टकारे [illegible] गुरवो मयाः।

† गृह. गृह्णम्।

§ दोषं गृह्णम्।

(१) वस्मृ. १।३७ ; गृह. ८७ (या पत्युः क्रीता सत्यथान्यैश्चरतीति ह चातुर्मास्येषु) ; गृह. ७२ (या पत्युः क्रीता सत्यन्यथा अन्यैश्चरतीत्याह चातुर्मास्ये) ; संप्र. ८५३–८५४ सत्यथान्यै (साऽन्यै).

(२) विस्मृ. २४।२४.

(३) शंस्मृ. ४।५.

## महाभारतम्

वित्तेन कथितेनान्ये ॥
धनेन बहुधा क्रीत्वा संप्रलोभ्य च बान्धवान्।
असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ॥
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः।
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु ॥
यो मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति।
कन्यां वा जीवितार्थाय यः शुल्केन प्रयच्छति ॥
सप्तावरे महाघोरे निरये कालसाह्वये।
स्वेदं मूत्रं पुरीषं च तस्मिन् मूढः समश्नुते ॥

## मनुः

ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

(१) ज्ञातिभ्यः कन्याया एव पित्रादिभ्यः, कन्यायै च स्त्रीधनं दत्त्वा कन्याया आप्रदानं आनमनं आसुरो विवाहः। स्वाच्छन्द्यात् स्वेच्छातो न शास्त्र इत्यर्थात् भेदमाह। तत्र हि शास्त्रं नियामकमस्ति 'एकं गोमिथुनम्' इति। इह तु कन्याया रूपसौभाग्यादिगुणापेक्षं छन्दः।

मेधा.

(२) कन्यायै, कन्याज्ञातिभ्यो यथाशक्ति धनं दत्त्वा यत् कन्याया आप्रदानं आदानं स्वीकारः [illegible] न आर्षवत् धनजातिपरिमाणनियमेन, स आसुरो विवाह उच्यते।

* गोरा.

* मनु., माच. गेराघ।

(१) भा. १३।०२।१४.

(२) भा. १३।४।१७.

(३) भा. १३।४५।१७–१९.

(४) मस्मृ. ३।३१ ; [illegible] ३।३१ [illegible] ( [illegible] ) कन्याप्रदान ( कन्यादानं तु ) ; गृह. ८९ ; धीमि. १।६१ [illegible] ; [illegible] ८९ ; [illegible] ; गृ. ७२ [illegible] ; [illegible] ; [illegible] ; [illegible] ; [illegible] ; [illegible] [illegible] ; [illegible]

( ३ ) आप्रदानं आदानं ग्रहणमिति यावत् । स्वाच्छन्द्यात् स्वेच्छया, न तु कन्यापितुः पारतन्त्र्येण । गृक.८६

( ४ ) शक्तितः, न तु एकगोमिथुनादिनियतं द्रविणम् । कन्याया आप्रदानं आदानं स्वाच्छन्द्यात्, न तु आर्षवद्वाक्यादिना विधितः । अत्र ज्ञातिभ्य इति वचनात् मातापित्रन्यज्ञातिभ्योऽर्थदाने नासुरत्वम् । तथा कन्यायै चैवेति समुचितं व्युचितं वा ग्राह्यं, तदर्थमेवैवकारः । तेन कन्याया एव च यद्दत्वा परिणयनं सोऽप्यासुरः इत्यर्थः । मवि.

( ५ ) असुः प्राणः तं राति रमयति वा असुरं धनं व्ययितव्यत्वेन यस्यास्तीति आसुरः । धर्मशब्दोऽत्र विरोधिलक्षणया । * मच.

( ६ ) कन्याया ज्ञातिभ्यः स्वशक्तितः वरस्य शक्तितोऽधिकं दत्वा दापयित्वा स्वाच्छन्द्याल्लोकशास्त्रमर्यादातिलङ्घनेन यत्कन्यादानं स आसुरः । परस्वापहारस्वाच्छन्द्यनिबन्धनमासुरत्वम् । असुरा हि स्वाच्छन्द्येन परवित्तमपहरन्तीति । § मुक्ता.१४१

**न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि ।**
**गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥**

( १ ) आसुरे शुल्कप्रतिषेधोऽयं, उत्तरत्र च कन्यार्थसंग्रहोपादानात् । विद्वान् ग्रहणदोषज्ञः । कन्यापिता स्वल्पमप्यर्थं धनं न गृह्णीयात् । गृह्णानोऽपत्यविक्रयदोषेण युज्यते । कः पुनरेषः शुल्को नाम ? आभाषणपूर्वं वराद्गृहीतम् । यत्र तु उच्चनीचपणापणो भवति, कन्यागुणापेक्षमूल्यव्यवस्था, स क्रय एव । इह तु महागुणाया अपि कन्यायाः स्वल्पं धनं, अनाभाषणपूर्वं वा ग्रहणम् । न विक्रयस्यैष धर्म इत्यतो विक्रयाध्यारोपेण निन्द्यते । मेधा.

( २ ) कन्यायाः पिता धनग्रहणदोषज्ञः स्वल्पमपि कन्यादानविनिमयरूपधनं न गृह्णीयात् । यस्मात् लोभेन तत् गृह्णन्नपत्यविक्रयी भवेत् । * गोरा.

( ३ ) लोभेन लोभात्, न त्वार्षधर्मबुद्ध्या । मवि.

( ४ ) आर्षासुरोद्वाहयोः शुल्कदानमुक्तं तत्स्वमतेन दूषयति– नेति त्रिभिः । शुल्कं कन्यामूल्यम् । लोभेन तत्कुर्वन्नपत्यविक्रयी उपपातकी स्यात् । 'गोवधः' (मस्मृ.११।५९–६६) इत्यपत्यविक्रयस्य उपपातकत्वेनाम्नानात् । मच.

**स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।**
**नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥**

( १ ) पूर्वस्यैव शेषः । स्त्रीनिमित्तानि धनानि, कन्यादाने वरात् यानि गृह्यन्ते । ये बान्धवाः पित्रादयः मोहादुपजीवन्ति । यथोक्तम्– 'ज्ञातिभ्यो द्रविणं दत्वा' इति । सुवर्णरजतादि धनम् । नारीयानानि । यानं अश्वादि । वस्त्रं वा । एतावन्मात्रमपि न जातूपजीवनीयं वासोयानादि, किं पुनर्बहु । उपजीवतां फलमाचष्टे– ते पापाः शास्त्रप्रतिषिद्धसमाचरणात् अधोगतिं नरकं यान्ति ।

अथवा स्त्रीधनानीति नवमे दर्शयिष्यति । तानि ये मोहादुपजीवन्ति बान्धवाः, पिता तत्पक्षाश्च, भर्ता भर्तृपक्षाश्च । एवं यानादि ( ? नि ) । एवं वस्त्रम् । स्त्रीणां बुद्धौ संनिधानाच्छाब्दः सनिधिः कल्प्यते, यथा 'राजपुरुषः कस्य राज्ञः' इति । मेधा.

( २ ) दुहितृभगिन्यादिसंबन्धीनि हिरण्यानि दासीवाहनवस्त्राणि वा पित्रादय उपभुञ्जते । अतस्ते पापाः पापकर्मणः नरकं व्रजन्ति । प्रसङ्गात् स्त्रीधनोपजीवनप्रतिषेधः । गोरा.

---

१।६१ ; संग. २५४ स्वाच्छन्द्यात् ( स्वीकुर्यात् ) ; नन्द. धर्मं ( ऽधर्मं ) ; भाच. धर्म ( ऽधर्म ) ; सस्मृ. ५२ संकौवत्.

* शेषं पूर्वटीकासु गतार्थम् ।

§ नन्द. मुक्तावत् ।

( १ ) मस्मृ. ३।५१ ; गृक. ८८ शुल्कं हि ( हि शुल्कं ) ; स्मृच. ८७ ; गृर. ७३ शुल्कं हि ( शुल्क च ) ; वीमि. १।६१ ऽपत्य ( गव्य ) शेषं गृरवत् , क्रमेण आपस्तम्बः ; संप्र. ८५० गृकवत् : ८५४ गृकवत् , क्रमेण आपस्तम्बः ; मुक्ता. १४३ गृकवत् ; व्यान. १७७ गृकवत् ; संग. २५४ पू. , कश्यपः.

* मसु., भाच. गोरावत् ।

( १ ) मस्मृ. ३।५२ ; मेधा. 'नारीयानानि' इत्येकं पदम् ; गृक. ८९ मेधावत् ; गृर. ७३ मेधावत् ; निप. २८१ (=) मेधावत् ; संप्र. ८५४ यमः ; मुक्ता. १४३ मेधावत् ; संग. २५४ यमः ; भाच. मेधावत् .

(३) आर्षासुरयोर्धनग्रहणमुक्तम् । तत्र चायं निषेधः* श्रूयते । न च धनग्रहणं विना आर्षासुरयोः संभवः । तत्रेयं व्यवस्था- आत्मार्थं धनग्रहणे दोषः । कन्यार्थं तु धनग्रहणे न विक्रयदोषः । स्त्रीधनानीति प्रसङ्गादभिधानम् । उपजीवन्ति उपभुञ्जते । एतेन कन्यार्हणार्थदत्तधनोपजीविनामपि तद्वान्धवानां दोषभागिता, तस्माद्गृहीतं स्वयं नोपजीव्यम् । § गृक.८९

(४) कन्यादाननिमित्तकशुल्कग्रहणनिषेधप्रसङ्गात् नवमाध्यायाभिधेयस्त्रीधनग्रहणनिषेधोऽयम् । ये बान्धवाः पतिपित्रादयः कलत्रदुहित्रादिधनानि गृह्णन्ति । नारी स्त्री, यानानि अश्वादीनि, वस्त्रं चेति प्रदर्शनार्थम् । सर्वमेव धनं न ग्राह्यम् । ते गृह्णानाः पापकारिणो नरकं गच्छन्ति । मनु.

(५) न केवलं कन्यायाः पितुरेवायं शुल्कग्रहणप्रतिषेधः, किंतु बान्धवानामपीत्याह— स्त्रीधनानीति । स्त्रीनिमित्तानि धनानि स्त्रीधनानि, कन्यादानलब्धानीति यावत् । नारी शुल्करूपेण गृहीता दासी । नन्द.

(६) नार्याः कन्याया यानानि नारीयानानि । भाच.

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
अल्पोऽप्येवं महान्वाऽपि विक्रयस्तावदेव सः ॥

(१) स्त्रीगवी च पुंगवश्च गोमिथुनम् । केचिदाहुः एतद्देयमिति । मनोस्तु मतं मृषैव तत् मिथ्या, नादेयमित्यर्थः । अल्पोऽप्येवम् । अल्पसाधनोऽल्पः । एवं महान् । भवति तावानेव विक्रयः । मेधा.

(२) शुल्कं शुल्कत्वेन पित्रैव ग्राह्यं, न कन्यया । तेन लोभादपि तस्य ग्रहणे दोषाभाव इति केचिदाहुः । तन्मृषा असत्यम् । यावताऽल्पस्यापि मूल्यस्य लोभेन ग्रहणे विक्रय एव स्यात् । न च विना लोभं वैधं तद्ग्रहणं सम्भवति, विधेरभावादित्यर्थः । मवि.

(३) 'आर्षे विवाहे गोमिथुनं शुल्कं वराद्ग्राह्यमिति केचिदाचार्या वदन्ति, तत् पुनरसत्यम् । यस्मादल्पमूल्यसाध्यत्वादल्पो वा भवतु, बहुमूल्यसाध्यत्वात् महान्वा भवतु, स तावद्विक्रयो भवत्येव । यत्पुनः 'एकं गोमिथुनम्' इति पूर्वमुक्तं, तत्परमतम्' इति गोविन्दराजः । तदयुक्तम् । मनुमते लक्षणमार्षस्य न स्यादेव, वराद्गोमिथुनग्रहणपूर्वककन्यादानस्यैव आर्षविवाहलक्षणत्वात् । मन्वभिमतमन्यदेवार्षलक्षणं, एकं गोमिथुनमिति परमतमिति चेत्, 'एकं गोमिथुनं द्वे चेत्येतत्परमतं यदि । तदा मनुमतेनार्षलक्षणं किं तदुच्यताम् ॥ अष्टौ विवाहान्कथयन्नार्षोढासंततेर्गुणान् । मनुः किं स्वमतेनार्षलक्षणं वक्तुमक्षमः ॥' । मेधातिथिस्तु पूर्वापरविरोधोपलक्षणं वक्तुमक्षमः इत्थं व्याख्यान्यासनिरासमेव न कृतवान् । तस्मादस्माभिरित्थं व्याख्यायते— आर्षे विवाहे गोमिथुनं शुल्कं उत्कोचरूपमिति केचिदाचार्या वदन्ति, मनोस्तु मतं नेदम् । शास्त्रनियमितजातिसंख्याकं ग्रहणं न शुल्करूपम् । शुल्कत्वे मूल्याल्पत्वमहत्त्वे अनुपयोगिनी, विक्रय एव तदा स्यात् । किंतु आर्षविवाहसपत्त्यै अवश्यकर्तव्ययागादिसिद्ध्यै कन्यायै वा दातुं शास्त्रीयं धर्मार्थमिति तस्यार्थः । भोगलोभेन तु धनग्रहणं शुल्करूपमशास्त्रीयम् । अत एव 'गृह्णन् शुल्कं हि लोभेन' इति निन्दामुक्तवान् । तस्मा-

---

* 'अथ निषेधः' इति प्रकरणगतो यावान् धनग्रहणनिषेधोऽभिप्रेयते ।

§ गृर. गृकवत् ।

(१) मस्मृ. ३।५३ ; मेधा. विक्रयस्तावदेव सः (तावानेव स विक्रयः); गृक. ८९ उत्तरार्धे (स्वल्पोऽप्येवविधो वाऽपि तावानेव स विक्रयः ।); स्मृच. ८७ अल्पोऽप्येव (अल्पोऽपि वा); गृर. ७३ उत्तरार्धे (स्वल्पोऽप्ययं महान्वाऽपि तावानेव स विक्रय ।); पमा. ४८९ अल्पोऽप्येव (अल्पो वाऽपि), मपा. १५६ स्मृचवत्; प्रपा. ३४४ पमावत्; मर. १९ अल्पोऽप्येवं (अमहान्वा); वीमि. २।६१ उत्तरार्धे (अल्पोऽप्यय महान्वाऽपि तावानेव स विक्रयः ।) क्रमेण आपस्तम्बः; संप्र. ८४९ पमावत्; मुक्ता. १४२ उत्तरार्धे (अल्पो वाऽपि महान्वाऽपि विक्रयस्तावतः सद ।); विपा. ७१९ देव स' (देव न) शेषं पमावत्; संकौ. २०६ पू.; रत्न.७६ स्मृचवत्; आन १७७ उत्तरार्धे (अल्पो वाऽपि महान्वाऽपि विक्रयस्तावतैव स' ।); नन्द पमावत्; भाच. पमावत्; संर. ४७९ उत्तरार्धे (अल्पो वाऽपि महान्वाऽपि क्रियते तावतैव सः ।).

त्पौर्वापर्यपर्यालोचनादार्षे धर्मार्थं गोमिथुनं ग्राह्यं, न तु भोगार्थमिति मनुना स्वमतमनुवर्णितम्। * ममु.

(४) गोमिथुनं शुल्कं इति यत् केचिदाहुस्तन्मृषैव, न हि तस्य शुल्कत्वं संभवति, तल्लक्षणाभावात्। अनियतपरिमाणत्वं हि शुल्कलक्षणं, क्रये तद्दर्शनात्। क्रयसाधनं हि मूल्यं देशकालाद्यपेक्षया अल्पं वा महद्वा भवति। प्रकृते तु परिमाणं नियतं, यतः आर्षस्तावतैव गोमिथुनेनैव संपद्यते, न त्वन्यथा। अतः क्रयक्रीतत्वाभावाद्धर्म्य एवार्षः। पमा. ४८९

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः।
अर्हणं तत्कुमारीणामानृशंस्यं च केवलम्॥

(१) किं वराद्धनाधिगमो विक्रयो भवति? नेति ब्रूमः। ज्ञातयः कन्यायामधिकृताः स्वार्थमाददते गृह्णन्ति, तदा स विक्रयः। अर्हणं कन्यार्थे धनग्रहणं कन्यानां तदर्हणं पूजनं भवति। बहुमानः कन्यानामात्मनि भवति 'ईदृश्यो वयं यद्धन दत्त्वा विवाह्यामहे'। अन्यत्रापि पूज्या भवन्ति 'सुभगा एताः' इति। आभरणादि वा तेन धनेन कर्तव्यमतोऽर्ग्यर्हिताः शोभावत्यो भवन्ति। आनृशंस्यं अपापत्वं केवलं, न स्वल्पोऽप्यधर्मगन्धोऽस्ति। अतोऽनेनार्थवादेन कन्यार्थे धनग्रहणं विधीयते। मेधा.

(२) यासां कन्यानां पुनः पित्रादयः आत्मार्थं दानं दत्तं वराद्य गृह्णन्ति, अपि तु प्रसन्नैर्मैत्र्यादिभिः अपणपूर्वं कन्यार्थं दत्तं गृह्णते, नासौ विक्रयः। किं तर्हि? पूजनं तत्कन्यानां केवलं विक्रयस्पर्शशून्यं,अनुकम्पारूपं तत्। गोरा.

(३) आनृशंस्यं अनुकम्पा। गृक. ९०

(४) यदा त्वार्षे कन्यायै गोमिथुनं तथा अनुरागोत्पत्त्यर्थं कन्यायै भूषणादि स्वेच्छया विवाहात्प्रागेव वरो ददाति, ज्ञातयस्तु वित्तं न गृह्णन्ति, तदा ज्ञातीनां विक्रयदोषो नास्ति। यावता कुमारीणां पूजार्थं तद्दानं तथा आनृशंस्यं करुणारूपं तद्वित्तदानं वरेण स्वेच्छया कृतं, अतो ज्ञातीनां न दोषकरमित्यर्थः। यद्वा यत्नाऽऽदत्ते तत्कुमारीणां पूजनमानृशंस्यं करुणाप्रवृत्तिजन्यपुण्यहेतुश्चेति व्याख्यातम्। *आसुरस्तु विवाहः कन्याया अलङ्कारस्य* विवाहात्पूर्वं दाने भवत्येव तल्लक्षणयोगादिति ग्राह्यम्। मवि.

(५) आर्षे गोमिथुनं शुल्कमित्युक्तं, इदानीं कन्यार्थमपि धनस्य दानं न शुल्कमित्याह — यासामिति। यासां कन्यानां प्रीत्या वरेण दीयमानं धनं पित्रादयो न गृह्णन्ति, किन्तु कन्यायै समर्पयन्ति, सोऽपि न विक्रयः। यस्मात् कुमारीणां पूजनं तदानृशंस्यमहिंसकत्वं केवलं तदनुकम्पारूपम्। * ममु.

यो मनुष्यो मनुष्यं हि विक्रीणन् धनमिच्छति।
तस्य मूत्रपुरीषं हि स परत्रोपजीवति॥
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्।
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम्॥

(१) इच्छातः शुल्कग्रहणे पूर्वेण विधिरुक्तः, कस्यचित्तत एव आशङ्का स्याददोषं शुल्कग्रहणं, शास्त्रे गृहीतशुल्काया विशेष उक्तो यतः, अत इमामाशङ्कामपनेतुमाह — 'आददीत न शूद्रोऽपि शुल्कम्' इति। इच्छातः प्रवृत्तौ शास्त्रीयो नियमः, न तु शास्त्रेण पदार्थस्यैव कर्तव्यतोक्ता। यथा मद्यपीतस्य प्रायश्चित्ते न

* अत्र गोविन्दराजव्याख्यानं व्याख्यानप्रसङ्गेनोद्धृतत्वात् न स्वतन्त्रतया संगृहीतम्।

(१) मस्मृ. ३।५४; गोरा. शुल्कं (दानं) इति व्याख्यानात्प्रतीयते; गृक. ९०; गौमि. ४।९ शंस्यं च (शस्यात्र) स्मृत्यन्तरमित्युक्तम्; स्मृच. ८८ च (हि); गृर. ७४ अर्हणे तत् (अर्हणं तु); मपा. १५६ स्मृचवत्; मर. १९ स्मृचवत्; उत. १४० (=) तत् (यत्) च (हि); वीमि. १।६१ च केवलम् (प्रयोजनम्); संप्र. ८५० स्मृचवत्; मुक्ता. १४३; संम. ६४ च (तु); संकौ. २०६ स्मृचवत्, उत्त.; रत्न. ७६ स्मृचवत्; आन. १७७; कुभ. ११३२ च (तु); संर. ४७९ च (तु)..

* मच., नन्द., भाच. ममुगतम्।

(१) गोविन्दराजीयपुस्तके मस्मृ. ३।५४ इत्यस्योपरिष्टात् प्रक्षिप्तश्लोकोऽयम्।

(२) मस्मृ. ९।९८; गृक. ८८; गृर. ७३ हि गृह्णन् (गृह्णन् च); उत. १४० पू.; वीमि. १।६१ क्रमेण आपस्तम्बः; संप्र. ८५४ आपस्तम्बः; मुक्ता. १४४.

मद्यपानं शास्त्रेणानुज्ञातं भवति । शुल्कसंज्ञेन यदेवोक्तम् 'गृह्णन् हि शुल्कं लोभेन' इति । येन तु विशेषेण पुनः पाठोऽसौ प्रदर्शित एव । मेधा.

( २ ) अत्र प्रसङ्गादर्थान्तरमाह — आददीतेति । छन्नमपि शुल्कं प्रतिग्रहादिरूपेणापि छद्मना कन्याभिसंधिना शुल्कं गृह्णन् दुहितृविक्रयं कुरुते । मवि.

( ३ ) शास्त्रानभिज्ञः शूद्रोऽपि पुत्रीं ददच्छुल्कं न गृह्णीयात्, किं पुनः शास्त्रविद्द्विजातिः । यस्माच्छुल्कं गृह्णन् गुप्तं दुहितृविक्रयं कुरुते । 'न कन्यायाः पिता' इत्यनेन निषिद्धमपि शुल्कग्रहणं कन्यायामपि गृहीतशुल्कायां शास्त्रीयनियमदर्शनाच्छुल्कग्रहणे शास्त्रीयत्वशङ्कायां पुनस्तन्निषिध्यते । * ममु.

नानुशुश्रुम जात्वेतत्पूर्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥

( १ ) न कुतश्चिदस्माभिः श्रुतं पूर्वेषु जन्मसु कल्पान्तरेष्वित्यर्थः । मेधा.

( २ ) छन्नशुल्कग्रहेण दुहितृविक्रये प्रागुक्ते सदाचारविरोधं दर्शयति— नानुशुश्रुमेति । पूर्वेषु जन्मसु लोकजन्मकालेषु कल्पेषु छन्नमपि नानुशुश्रुम, किं पुनः स्पष्टम् । § मवि.

( ३ ) न केवलं कृत्यविषयं, अपि तु श्रवणपथं नावतीर्णमित्याह— नेति । पूर्वेषु जन्मसु कल्पेषु, मनोर्जातिस्मरत्वेऽविप्रतिपत्तेः । कामबाणप्रपीडितायास्तादृश्या अदीयमानायाः 'भर्तारमधिगच्छेत्' इति गतिरुक्ता । मच.

## याज्ञवल्क्यः

आसुरो द्रविणादानात् ॥

( १ ) ननु एवं सत्याहूय यदि कश्चिदार्त्विज्यादिभिर्वा न कन्यां दद्यात्, तथापि गृहस्थाश्रमो दुःस्थित एव । सत्यम् । यद्येत एव विवाहाः स्युः । अन्येऽपि तु विवाहाः पठ्यन्ते । अतो नेयमसत्कल्पना । के पुनस्ते इत्यत आह— आसुर इति । आसुरः आत्मार्थे कन्यार्थे च धनादानम् । असुरा धनवन्तः । स्त्रीसक्ता गन्धर्वाः । तेनानयोः सार्ववर्णिकत्वम् । विश्व.

( २ ) वरात् द्रविणमादाय आत्मार्थे कन्यार्थे च पित्रादिभिर्यत्कन्यार्पणं क्रियते स आसुरो विवाहः । अप.

( ३ ) वरात् द्रविणमादाय यत्पित्रादिभिर्दानरहितं कन्यार्पणं स आसुरो विवाहः । स्मृच.८६

( ४ ) अस्य मानुष इत्यपि संज्ञा । * मपा.१५७

( ५ ) उक्तगोमिथुनातिरिक्तद्रविणग्रहणपूर्वकं यत्र कन्या दीयते स विवाह आसुरः । वीमि.

## नारदः

[१]विवाहस्त्वासुरो ज्ञेयः शुल्कसंव्यवहारतः ॥

आसुरः शुल्कपणापणपरिच्छेदेन द्रव्यं गृहीत्वा दानमासुरः । दैवे तु गृहीत्वा द्रव्यं पिता तस्या एव दद्यात्, अपत्यविक्रयप्रतिषेधात् । इह तु विक्रय एव । नामा.

## देवलः

शुल्कं प्रदाय कन्यायाः प्रत्यादानं विधानतः ।
वित्तहेतुर्विवाहोऽयमासुरः पञ्च उच्यते ॥

प्रत्यादानमिह ग्रहणमेव । वित्तं हेतुर्यस्य सः वित्तहेतुः । गृर.७२

---

* मच. ममुगतम् ।

§ ममु., नन्द. मविगतम् ।

( १ ) मस्मृ. ९।१०० ; गृक. ८८ छन्न ( पापं ) यमः ; स्मृच. ८७ ; गृर. ७३ हि ( च ) छन्नं ( पापं ) ; वीमि. १।६१ पूर्वार्धे ( न त्वेतदद्भुमजातित्वे तत्पूर्वेष्वपि जन्मसु । ) छन्न (पापं) ; संप्र. ८५४ गृकवत्, यमः ; मुक्ता. १४४ .

( २ ) यास्मृ. १।६१ ; विश्व. ; मिता. ; अप. ; स्मृच. ८६ ; मपा. १५७ ; मर. १९ ; ग्रमा. १०० ; उत. १२८ ; विसौ. ५६ ; वीमि. ; संप्र. ८५४ ; धम. ११३ ; मुक्ता. १४१ : १४३ स्मरणम् ; शूक. १०९ ; विपा. ७।१९ ; रत्न. ७७ ; भाच. ३।२६ , ३१ ; कृम. ११२० .

* शेषं स्मृचगतम् ।

( १ ) नासं. १३।४२ ; नास्मृ. १५।४२ .

( २ ) गृक. ८६ प्रत्यादानं ( सुप्रदान ) ; गृर. ७२ ; संप्र. ८५३ ; मुक्ता. १४४ .

## यमः

[1]यो मनुष्यो मनुष्यस्य विक्रयाद्धनमिच्छति ।
तस्य मूत्रं पुरीषं च स परत्रोपजीवति ॥

[2]कन्याविक्रयिणो मूर्खा महाकिल्विषकारिणः ।
पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम् ॥

एतदात्मार्थं धनग्रहणे वेदितव्यम् । स्मच.८८

कन्यां तु जीवनार्थाय यः शुल्केन प्रयच्छति ।
उपभुङ्क्ते पुरीषं च मूत्रं तस्या वरस्य च ॥

## संवर्तः

[3]कन्याविक्रयिणो मूर्खा महापापस्य कारकाः ।
पतन्ति नरके घोरे यावदाभूतसंप्लवम् ॥

[4]क्रयक्रीता तु या कन्या न सा पत्नी विधीयते ।
सा तु दैवे च पित्र्ये च दासीसाम्यान्न संश्रुता ॥

[5]यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यस्त्वपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

## शातातपः

[7]क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ॥

---

(१) स्मृच. ८७ ; संप्र. ८५५ पूर्वार्धे ( यो मनुष्योऽपि यत्किंचिद्विक्रीय धनमिच्छति । ) ; मुक्ता. १४४ ( यो मनुष्यां हि विक्रीय यत्किंचिद्धनमृच्छति । तस्या मूत्रं पुरीषं च स परत्रोपजीवति ॥ ).

(२) स्मृच. ८८ महा ( इह ) मनुः ; संप्र. ८५५ कारिणः ( कारकाः ) ; मुक्ता. १४४ महाकिल्विषकारिणः ( इह किल्बिषकारकाः ) ; संम. ६४ महा ( रहः ) ; कृभ. ११३३ संमवत् ; मंर. ४७९ समवत्.

(३) मुक्ता. १४४ ; मान. १७७ संवर्तः.

(४) मुक्ता. १४४ ; मान. १७७.

(५) मुक्ता. १४४ दासीसाम्यान्न संस्थिता ( दासी स्यान्न च साक्षिता ) ; मान. १७७.

(६) मुक्ता. १४४.

(७) पमा. ७८८ ; श्राक. १२ उत्तरार्धे ( न सा दैवे च पित्र्ये स्याद्दासी तां मुनयो विदुः । ).

## पराशरः

[1]कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया ।
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥

## बृहत्पराशरः

[2]एतावद्देहि मे द्रव्यमित्युक्त्वा प्राग्वराय च ।
यत्र कन्या प्रदीयेत स वै दैत्यविधिः स्मृतः ॥

## पैठीनसिः

[3]शुल्केन पणित्वा ददतोरासुरः ॥

पणित्वा विक्रीय । ददतोः मातापित्रोः । ददतोरर्पयतोः, दानाभावादिति केचित् । तन्न, ' मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः । प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥ ' ' ब्राह्मादिषु विवाहेषु पञ्चस्वेषु विधिः स्मृतः । गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु ॥ ' इति मनुनारदाभ्यां मान्यविशेषाभ्यां अष्टस्वपि विवाहेषु दानप्रतिपादनात् । स्वस्त्ययनं स्वस्तिवाचनादि । प्रजापतियज्ञः प्राजापत्यश्चरुहोमः । एष विधिर्दानलक्षणः । गुणो ब्राह्मण्यं, तस्यैव संप्रदानविशेषणेषु प्राधान्यात्, ब्राह्मणादीनां प्रतिलब्धेऽसाधारणत्वाच्च । तदपेक्ष्यामुरादिष्वपि त्रिषु दानं भवति । संप्र.८५३

[4]शुल्केन कन्यामाददतो राक्षसः ॥

(१) परिणीत्वा ( ? पणित्वा ) विक्रीय । राक्षसशब्दः ( ? आसुरपरः ) । गृर.७२

(२) इदमप्यस्यैव संज्ञान्तरम् । संप्र.८५३

---

(१) प्रपा. ३१३ ; संप्र. ७५९ कुशीलाय ( अकुलीनाय ) : ८५५ ; विपा. ७२३ यच्छति ( ददाति ) ; संग. २५५ ; संर. ५१३ विपावत्.

(२) धूपसं. ६।८.

(३) गृक. ७६ ददतोरासुरः ( ददत आसुरः ) ; संप्र. ८५३.

(४) गृक. ७६ कन्यामाद ( पाणिं स्वाद ) ; गृर. ६४ कन्यामाददतो ( पदं ददतो ) : ७२ कन्यामाददतो ( परिणीत्वा ददतो ) ; संप्र. ८५३ : ८५९ कन्यामाद ( कन्यारस्वाद ).

### कश्यपः

[1]शुल्केन ये प्रयच्छन्ति दुहितां लोभमोहिताः ।
ते यान्ति नरके घोरे यावदाभूतसंप्लुतम् ॥
[2]शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः ।
आत्मविक्रयिणः पापा महाकिल्बिषकारकाः ॥
[3]पतन्ति निरये घोरे घ्नन्ति चाऽऽ सप्तमं कुलम् ।
गमनागमने चैव सर्वं शुल्कोऽभिधीयते ॥

(१) गमनागमने बहुसदेशादिकमादाय कन्याप्रार्थनार्थं कन्यापितृवेश्मनि यातायाते । गर.७४

(२) गमनागमने पारितोषिकद्रव्यमादाय कन्याप्रदानार्थं कन्यापितृवेश्मयातायाते । अत्र लोभमोहिता इत्यनेन स्वार्थे न ग्राह्यं, कन्यार्हणार्थं तु ग्रहणे न दोषः । उत.१४०

[4]क्रीता द्रव्येण या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥

### स्मृत्यन्तरम्

[1]तं देशं पतितं मन्ये यत्रास्ते शुक्र(?)विक्रयी ॥

### ब्रह्मवैवर्तपुराणम्

[2]यः कन्यापालनं कृत्वा करोति विक्रयं यदि ।
विपदा धनलोभेन कुम्भीपाकं स गच्छति ॥
कन्यामूत्रं पुरीषं च तत्र भक्षति पातकी ।
कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश ॥
तदन्ते व्याधयोनौ च लभेज्जन्म सुनिश्चितम् ।
विक्रीणाति मांसभारं वहत्येव दिवानिशम् ॥

### सुप्रभेदे

[3]धनं दत्त्वा तु बन्धुभ्यः कन्यासंग्रहणं तु यत् ।
तदासुरं तु विज्ञेयमविद्वद्भिरिदं मतम् ॥

### शौनककारिका

[4]यत्रोपतोष्य वित्तेन दातॄन्कन्योपयम्यते ।
आसुरो नाम विज्ञेयो विवाहः स बहिष्कृतः ॥

### रेणुकारिका

[5]ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

---

(१) कस्मृ. १०११.

(२) गृक. ८९ ; गृर ७४ आत्म (स्वात्म) ; उत. १४० ; वीमि. १।६१ ; संप्र. ८५४–८५५ ; शूक. १०९ कारकाः (कारिणः) ; संग. २५४.

(३) कस्मृ. १०१२ (गमनागमनायोगादेवं शुल्के विधीयते।) ; गृक. ८९–९० सर्व शुल्कोऽभिधीयते (सर्वंशुल्को विधीयते) ; गृर. ७४ ऽभिधीयते (विधीयते) ; उत. १४० निरये (नरके) सर्वे (सर्वः) ; वीमि. १।६१ पू. ; संप्र. ८५५ ; शूक. १०९ चाऽऽसप्तम (वा सप्तमं) पू. ; संग. २५५.

(४) कस्मृ १०१३ (तस्माद्दैवे च पित्र्ये च दासी स्यादन्यदैविना । क्रयक्रीता तु सा दासी न सा पत्नी विधीयते ॥) ; गृक. ८७–८८ ; गृर. ७३ न सा पित्र्ये (न वा पैत्र्ये) ; पमा. ४८८ पूर्वार्ध (क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।) सा पित्र्ये (सापिण्ड्ये) ; मपा. १५८ सा पत्नी (पत्नी सा) ; मपा. ३४३ क्रीता द्रव्येण (क्रयक्रीता तु) पत्नी विधीयते (पत्न्यभिधीयते) सा पित्र्ये (पित्र्ये च) ; वीमि. १।६१ ; संप्र. ८५४ क्रीता (क्रीत) ; मुक्ता. १४४ न सा दैवे न सा पित्र्ये (तथा दैवे च पित्र्ये च) ; संम. ६४ कश्यपोऽब्रवीत् (कवयो विदुः) ; रत्न. ७८ ; ब्रान. १७८ ; संग. २५४ ; कृम. ११२१ पत्नी विधीयते (पत्न्यभिधीयते) शेष समवत् ; संर. ४७९, ५७९ पूर्वार्धे (क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।) कश्यपो ऽब्रवीत् (कवयो विदुः).

(१) मच. ९।९८.

(२) संर. ५१३.

(३) सस्मृ. ५३.

(४) शौका. १३–१४ पृ. ५६ ; मपा. ३४४ यम्यते (गम्यते).

(५) रेका. ७९ पृ. ५३–५४.

# गान्धर्वविवाहः

## आश्वलायनगृह्यसूत्रम्

[1]मिथः समयं कृत्वोपयच्छेत स गान्धर्वः ॥

( १ ) मिथः समयकरणं नाम ' त्वं मम भार्या भव, अहं तव पुरुषो भवामि ' इति । एवंरूपो विवाहो गान्धर्वसंज्ञः । गानावृ.

( २ ) मिथः रहसि परस्परं वा । समयं ' भद्रे भजस्व मां, भद्र भजस्व माम् ' इत्येवमादि( म् ) । अना.

( ३ ) मिथः परस्परं कन्यावरौ * ' अहं ते भर्ता, त्वं मे भार्या ' इति संप्रतिपत्तिं कृत्वा कन्यामुपयच्छेत स्वीकुर्यादिति तस्यार्थः । ततोऽत्र दानं न विद्यते विवाहस्तु भवति । अस्य च विवाहान्तरेभ्यो भेदको धर्मः कन्यावरयोर्मिथः संप्रतिपत्तिः । एवं राक्षसपैशाचयोरपि विवाहत्वं कन्यादानरहितमेव द्रष्टव्यम् । अप. १।६१

( ४ ) यत्र कन्याकुमारौ परस्परं प्रथमत आवां जायापती भवावेति प्रच्छन्नतया समयं कृत्वा पश्चाद्बन्धुजनैरभिकाङ्क्षन्तौ ( ? ङ्क्षितौ ) यथाविधि कृतविवाहौ स्यातां स गान्धर्वो विवाहः । प्रपा. ३४३

## वैखानसगृह्यसूत्रम्

[2]कामयोगो यदुभयोः स गान्धर्वः ॥

## गौतमः

[1]इच्छन्त्याः स्वयं संयोगो गान्धर्वः ॥

( १ ) अलङ्कृत्य स्वयमेवात्मानं, वक्ष्यति—' उत्सृज्य पित्र्यानलङ्कारान् ' ( गौध. १८।२१ ) इति, तद्विषयमेतदिति । कामयमाना स्वयमेव वरेण संयुज्येत, स गान्धर्वो विवाहः । मभा.

( २ ) इच्छन्त्या वध्वा इच्छतो वरस्य संयोगो गान्धर्वो विवाहः । स्वयमिति वचनाद्वरेच्छा गम्यते । गौमि.

( ३ ) अलङ्कृत्य अलङ्कारं कृत्वा या इच्छन्ती तया सह संयोगो वरस्य गान्धर्वो विवाह इत्यर्थः । गृर.७६

( ४ ) स्वयमिच्छन्त्या वध्वा इच्छतो वरस्य संयोगो गान्धर्वः । स्वयमिति वचनात् स्वयमेव स्वस्य दानं कर्तव्यमिति गम्यते तन्नापेक्ष्येति, ' द्वयोः सकामयोर्मातापितृदानरहितो गान्धर्वः ' इति विष्णुस्मरणात् । * संप्र.८५६

## हारीतः

[2]स्वयं कन्या वरयते स गान्धर्वः ॥

---

* ' कन्यावरौ ' इति समस्तं पदं चिन्त्यम् । कृत्वापदेनान्वये तृतीयापत्तिः । उपयच्छेतपदेनान्वये ' कन्याम् ' इतिकर्मपदं वचनं न विरुद्धम् । ' कन्या वरश्च ' इति व्यस्तत्वे तु कथंचित् संगतिमापाद्येत । तथाहि— उपयच्छेत इत्यत्रोभयोः पर्यायेणान्वयः । ' कन्याम् ' इति वरस्याप्युपलक्षणम् । उपयमनं चात्र न शास्त्रीयम्, अपि तु लौकिकस्वीकारमात्रं विवक्षितमिति ।

( १ ) आगृ. १।६।१ ; अप. १।६१ ; गृक. ९२ यच्छेत ( यच्छेत् ) ; गृर. ७१ यच्छेत ( गच्छेत् ) ; प्रपा. ३४३ ; धप्र. ४६ ; संप्र. ८५६ ; संम. ६४ ; कृभ. १११९ ; संर. ४७८ .

( २ ) वैगृ. ३।१ .

* सग. वाक्यार्थमात्रं संप्रवत् ।

( १ ) गौध. ४।१० ; गृक. ९१ इच्छन्त्याः ( अलङ्कृत्येच्छन्त्या ) ; मभा. इच्छन्त्याः ( अलङ्कृत्येच्छन्त्याः ) ; गौमि. ४।८ ' इच्छन्त्या ' इति तृतीयान्तः पाठो व्याख्यानात्प्रतीयते ; गृर. ७६ गृकवत्, व्याख्यानात् ; संप्र. ८५६ गौमिवत् ; मुक्ता. १४२ गृकवत् ; संग. २५५ इच्छन्त्याः ( इच्छया ) ' इच्छन्त्या ' इति व्याख्यानात् .

( २ ) गृक. ९२ वरयते ( वरयेत् ) ; गृर. ६३ गृकवत् ; ७६ ; संप्र. ८५६ ; संग. २५५ .

## बौधायनः

[1]संकामेन सकामायां मिथः संयोगो गान्धर्वः ॥

संयोगः समवायः । विवाहहोमस्तु यथाविध्येव । एवंलक्षणको गान्धर्वो नाम पञ्चमः । बौवि.

## आपस्तम्बः

[2]मिथः कामात् सांवर्तेते स गान्धर्वः ॥

यत्र कन्यावरौ रहसि कामात् मिथः परस्परं रागात् सांवर्तेते मिथुनीभवतः स गान्धर्वो विवाहः । अत्र संयोगोत्तरकालं विवाहसंस्कारः कर्तव्यः । उ.

## हिरण्यकेशिधर्मसूत्रम्

[3]मिथः कामात् सांवर्तेते स गान्धर्वः ॥ *

## वसिष्ठः

[4]सकामां कामयमानः सदृशीं योनिमुह्यात् स गान्धर्वः ॥

† अत्र कन्यावरयोः परस्पररागप्रयुक्तसमयबन्धकृत उपगमो गान्धर्वविवाह इति तात्पर्यम् । गृर.७६

## विष्णुः

[5]द्वयोः सकामयोर्मातापितृरहितो योगो गान्धर्वः ॥

(१) मातृपितृनैरपेक्ष्येण आत्मानमलङ्कृत्य इति शेषः । मातृपितृदानरहित इति स्वयंवरगान्धर्वविषयम् । § गृक.९२

(२) मातापितृदानरहितः मातापितृकर्तृकदानरहितः । संप्र.८५६

## शङ्खः

[1]गान्धर्वः समयान्मिथः ॥

## महाभारतम्

[2]अनुमान्य च ॥

[3]शिष्टानां क्षत्रियाणां च धर्म एष सनातनः ।
आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एव यः ॥
अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर ।
गान्धर्वमिति तं धर्मं प्राहुर्वेदविदो जनाः ॥

## मनुः

[4]इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः ॥

(१) इच्छया च वरस्य कुमार्याश्च प्रीत्या परस्परसंयोग एकप्रदेशे संगमनम् । तस्येयं निन्दा मैथुन्यः कामसंभवः । मिथुनप्रयोजनो मैथुनः, तस्मै हितो मैथुन्यः । एष एवार्थो विस्पष्टीकृतः कामसंभव इति । संभवत्यस्मादिति संभवः । कामः संभवोऽस्येति । मेधा.

(२) कन्यावरयोः परस्परानुरागात् यः संयोगो मैथुनाचरणं, स मैथुनाय हितः कामनिमित्तको गान्धर्वो विवाहो बोद्धव्यः । इह गान्धर्वादौ मुख्यमेवोपगमनं, तुशब्दतस्तथा प्रतीतेः । न च 'पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः' (मस्मृ. ८।२२६) इति वचनात् संस्कारपरिलोपः, 'या गर्भिणी संस्क्रियते' 'वोढुः कन्यासमुद्भवः (१ वम्)' 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' इत्यादिमनुयाज्ञवल्क्योक्तसहोढ-

---

* व्याख्यानं आपस्तम्बवचने द्रष्टव्यम् ।

† सकलप्रकरणतात्पर्यमिदम् ।

§ गृर. गृकगतम् ।

(१) बौध. १।२०।६ ; मुक्ता. १४२ संयोग + (स) ; संर. ४७८ सयोगो (संगमात्स) .

(२) आध. २।११।२० .

(३) हिध. २७।४।२५ ; संर. ४७६ वर्तेते (वर्तेन) .

(४) वस्मृ. १।३३ ; गृक. ९२ योनिमुह्याद् (यों निरुन्ध्याद्); गृर. ७६ गृकवद् ; संप्र. ८५६ गृकवद् .

(५) विस्मृ. २४।२३ ; गृक. ९२ माता (मात्) रहितो योगो (दानरहितो) ; गृर. ७६ माता (मात्) पितृ + (दान) ; संप्र. ८५६ पितृ + (दान) (योगो०) .

(१) शंस्मृ. ४।५ .

(२) भा. १।१०२।१४ .

(३) भा. १३।४४।५-६ .

(४) मस्मृ. ३।३२ ; विश्व. १।६१ तु विज्ञेयो (विधिर्ज्ञेयो) ; गृक. ९१ ; स्मृच. ८६ ; चद्रा. ६८५ स तु (स च) ; गृर. ७५ ; पमा. ४८६ स तु (स च) ; दीक. १।६१ ; धप्र. ४६ ; वीमि. १।६१ ; संप्र. ८५५ वरस्य च (वरस्य वा) ; मुक्ता. १४१ विश्ववद् ; संकौ. २०६ स तु विज्ञेयो मैथुन्यः (स इति ज्ञेयो मैथुने) ; आन. १७२ विश्ववद् ; बाल. १।६१ ; संग. ९५५ ; सस्मृ. ५३ विश्ववद् .

कानीनपौनर्भवलक्षणेषु संस्कारदर्शनात्, 'गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः । कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥' इति च देवलस्मरणात्, तथा 'गान्धर्वासुरपैशाचा विवाहा राक्षसश्च यः । पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥' इति बह्वृचगृह्यपरिशिष्टदर्शनात्, भारतादौ च मुख्योपगमनवत् ( ? ) । एवं च 'पाणिग्रहणिका मन्त्राः' इत्यादि नरान्तरोपभुक्तकन्याविषयेऽवतिष्ठते । 'पुनर्वैवाहिको विधिः । कर्तव्यः' इत्यादिवचनात् गमनोत्तरकालमकृतसंस्कारा द्विजातीनां भार्या न भवति, शूद्रस्य भवत्येव, 'त्रिभिर्वर्णैः' इत्युपादानात्, तथाविधपुत्रस्य रिक्थमाग्द( ? क्त्वद् )र्शनात् । * गोरा.

( ३ ) कन्याया वरस्य चान्योन्यानुरागेण यः परस्परसंयोग आलिङ्गनादिरूपः स गान्धर्वो ज्ञातव्यः । संभवत्यस्मादिति संभवः । यस्मात् कन्यावरयोरमिलापादसौ संभवति, अत एव मैथुन्यो मैथुनाय हितः । सर्वविवाहानामेव मैथुन्यत्वेन यदस्य मैथुन्यत्वाभिधानं, तत् सत्यपि मैथुने न विरोध इति प्रदर्शनार्थम् । ममु.

( ४ ) इच्छयाऽन्योन्यसंयोगः कन्यावरयोः समयपूर्वक उपगमो गान्धर्वविवाहः । मैथुन्यः, मिथुनस्य कर्म मैथुनं, तस्मै हितम् ( ? तः ) । गृर.७५

( ५ ) संयोगः समागमः । एवं च स्वयंवरोऽपि गान्धर्वविवाह एव । वीमि.१।६१

( ६ ) मिथुने साधुर्हितो वा मैथुन्यः, मैथुनपर्यन्त इत्यर्थः । कामसंभवः भोगसंभवः, नार्यलोमादिसंभवः । कन्याया वरस्य चेच्छया अन्योन्यसंयोगः स गान्धर्वो विधिः । गान्धर्वत्वमस्य विधेः कामपरत्वनिबन्धनम् । गन्धर्वा हि कामपराः, 'स्त्रीकामा वै गन्धर्वाः' ( तैसं. ६।१।६।५ ) इति श्रुतेः । स्मरति च भगवान् वाल्मीकिः— 'तीक्ष्णकामास्तु गन्धर्वाः' इति । नन्द.

## याज्ञवल्क्यः

गान्धर्वः समयान्मिथः ॥

( १ ) समयः संकेतः । मिथः सहेत्यर्थः । असुरा धनवन्तः । स्त्रीसक्ता गन्धर्वाः । तेनानयोः सार्ववर्णिकत्वम् । विश्व.

( २ ) गान्धर्वस्तु परस्परानुरागेण भवति । मिता.

( ३ ) कन्यावरयोः अन्योन्यसमयात् 'त्वं मे भार्या, त्वं मे पतिः' इत्येवंरूपाद्दाननिरपेक्षात् यः कन्यास्वीकारः स गान्धर्वो विवाहः । अप.

( ४ ) पित्रादिकर्तृकदाननिरपेक्षात् । * वीमि.

## नारदः

इच्छन्तीमिच्छते प्राहुर्गान्धर्वो नाम पञ्चमः ॥

कामयमानां कामयमानाय दद्यात्, गान्धर्वो नाम सः । नाभा.

## देवलः

विविक्ते स्वयमन्योन्यं स्त्रीपुंसोर्यः समागमः ।
प्रीतिहेतुः स गान्धर्वो विवाहः पञ्चमो मतः ॥

समागमः पतिभार्यात्वसंप्रतिपत्तिः । संप्र.८५६

## बृहत्पराशरः

यत्रान्योन्याभिलापेण उभयोर्वरकन्ययोः ।
तयोस्तु यो विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥

## सुप्रभेदे

उभयोरपि संवादे स्त्रीपुंसोर्यदि रागतः ।
दद्यात्तस्यैव तां कन्यां गान्धर्वमिति पठ्यते ॥

---

* मवि., भाच. गोरागतम् ।

( १ ) यास्मृ. १।६१ ; विश्व. ; मिता. ; अप. ; स्मृच. ८९ ; मपा. १५७ ; मर. १९ ; गृभा. १०० ; उत. १२८ ; विसौ. ५६ ; वीमि. ; संप्र. ८५६ ; चम. ११३ ; मुक्ता. १४१ ; दाक. १०९ ; विपा. ७५९ ; रत्न. ७७ ; भाच. ३।३२ .

* शेषं अपवत् ।

( १ ) नासं. १३।४२ ; नास्मृ. १५।४२ मिच्छते ( मिच्छतः ) गान्धर्वो नाम पञ्चमः ( गान्धर्वं नाम पञ्चमम् ) .

( २ ) गृक्र. ९१ ; गृर. ७५ स्त्रीपुंसोर्यः ( स्त्रीपुंसयोर्यः ) ; संप्र. ८५५–८५६ .

( ३ ) बृपर्म. ६।९ .

( ४ ) सस्मृ. ५३ .

### शौनककारिके

यत्र कन्यावरौ छन्नं कृत्वा समयमादितः ।
आयापती भवावेति पश्चाद्बन्धुजनैरपि ॥

(१) शौका. ११-१२ पृ. ५६ सेवितः (शीलतः); प्रपा. ३४४.

अनुज्ञातौ कृतोद्वाहौ भवेतां विधिपूर्वकम् ।
स गान्धर्वो विवाहः स्यात्प्रायः क्षत्रियसेवितः ॥

### रेणुकारिका

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः ॥

(१) रेका. ७८ पृ. ५३.



## राक्षसविवाहः



### आश्वलायनगृह्यसूत्रम्

हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः ॥

(१) युद्धं कृत्वा कन्यामपहृत्य यो विवाहः स राक्षससंज्ञकः । गानावृ.

(२) रुदद्भ्यः कन्यासंबन्धिभ्य इति शेषः । गृक.९३

(३) यत्र सहायैः सहितो हत्वा भित्त्वा च शीर्षाणि रुदद्भ्यः पित्रादिभ्यो रुदतीं कन्यामपहरेत्स राक्षसः । प्रपा.३४३

### वैखानसगृह्यसूत्रम्

प्रसह्य यत्कन्याहरणं स राक्षसः ॥

### गौतमः

प्रसह्यादानाद्राक्षसः ॥

(१) यत्र विक्रमेण आदानं स राक्षसः । मभा.

(२) बलात्कारेण कन्यावतो निर्जित्य यत् आदानं स राक्षसो विवाहः । गौमि.

### हारीतः

राजाश्रयेण वधदण्डाभिघातभयविशेषाद्राक्षसः ॥

राजानमाश्रित्य यद्वधदण्डादिभयमुत्पाद्य कन्याहरणं स राक्षस इत्यर्थः । § गृक.९३

अलङ्कृताममिजयतः क्षात्रः ॥

(१) विवाहार्थमलङ्कृतां कन्यामुद्दिश्य युद्धे विजयमानस्य कन्याप्राप्तिः स क्षात्र इत्यर्थः । * गृक.९४

(२) युद्धहरणाद्राक्षसः क्षात्र इत्यभिधीयते । यथाह हारीतः— 'अलङ्कृताममिजयः क्षात्रः' इति । मपा.१५७

(१) आगृ. १।६।१ कचित् पुस्तके 'हत्वा' इत्यत्र 'छत्वा' इति पाठः; आप. १।६।१ रुदद्भ्यो (रुदद्भ्यश्च); गृक. ९३; उ. २।१२।१२; गृर. ७७ भित्त्वा (छित्त्वा); प्रपा. ३४३; घप्र. ४६; संप्र. ८५६ हरेत् (हरन्); संम. ६४ हरेत् (अपहरेत्); कृभ. ११२९; संर. ४७६, ४७८.

(२) वैगृ. ३।१.

(३) गौध. ४।१२; मभा.; गौमि. ४।१०; मुक्ता. १४२.

§ गृर. गृकवत्।

* संप्र. गृकवत्।

(१) गृक. ९३; गृर. ७७; संप्र. ८५६ वधदण्डाभिघातभयवि (बान्धवाभिघातदण्डापवि).

(२) गृक. ९४ जयतः (जयन्); मपा. १५७ जयः (जयः); संप्र. ८५७; रत्न. ७७ गृकवत्.

## बौधायनः

(१) प्रसह्य हरणाद्राक्षसः ॥

अत्रापि तथैव विवाहः । यथा रुक्मिणीहरणं तथैव राक्षसः । बौवि.

## आपस्तम्बः

(२) दुहितृमतः प्रोथयित्वाऽऽवहेरन् स राक्षसः ॥

दुहितृमतः कन्यावतः पित्रादीन् प्रोथयित्वा प्रमथ्य यत्र आवहेरन् स राक्षसो विवाहः । 'हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः' इत्याश्वलायनः । अत्रापि विवाहसंस्कारः कर्तव्यः । द्वौ चापरौ विवाहौ शास्त्रान्तरेपूक्तौ । तत्र आश्वलायनः—'सह धर्मं चरतमिति प्राजापत्यः' 'सुप्तां प्रमत्तां वाऽपहरेत्स पैशाचः' इति । ताविह पृथङ्नोक्तौ, ब्राह्मराक्षसयोरन्तर्भावादिति । उ.

## हिरण्यकेशिधर्मसूत्रम्

(३) दुहितृमतः प्रोथयित्वा वहेरन्स राक्षसः ॥ *

## वसिष्ठः

(४) यां बलेन सहसा प्रमथ्य हरन्ति स क्षात्रः ॥

प्रमथ्य कन्यासंबन्धिनम् । क्षात्रशब्दोऽत्र राक्षसपरः प्रकरणात् । गृर.७७

## विष्णुः

(५) युद्धहरणेन राक्षसः ॥

## शङ्खः

(६) राक्षसो युद्धहरणात् ॥

## महाभारतम्

(१) बलेनान्ये ॥

(२) हत्वा छित्त्वा च शीर्षाणि रुदतां रुदतीं गृहात् ।
प्रसह्य हरणं तात राक्षसो विधिरुच्यते ॥

## मनुः

(३) हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥

(१) प्रसह्य अभिभूय कन्यापक्षाद्बलात्कारेण कन्याया हरणं राक्षसो विवाह इत्येतावदत्र विवक्षितम् । हत्वेत्याद्यनुवादः । प्रसह्य अपजिहीर्षतो यदि कश्चित्प्रतिबन्धो वर्तेत, तदा प्राप्तमेव हननादि । हन्तुः शक्त्यतिशयं ज्ञात्वा स्वात्मभयादुपेक्षेरंस्तदा भवत्येव राक्षसः, न वधाद्यवश्यं कर्तव्यम् । हत्वा दण्डकाष्ठादिना ताडयित्वा । छित्त्वा खड्गादिप्रहारेणाङ्गानि खण्डशः कृत्वा । भित्त्वा प्राकारपुरदुर्गादि । क्रोशन्तीं रुदतीं कन्यामनिच्छाम् । अयं गान्धर्वाद्विशेषः । 'अनाथाऽपह्रिये, परित्रायध्वम्' इत्याद्युच्चैः शब्दकरणं क्रोशनम् । रोदनं अश्रुकणमोक्षः । उद्विजितायाः स्त्रिया धर्मोऽयम् । *मेधा.

(२) हत्वा कन्यापक्षान् प्रमाथ्य, छित्त्वाऽप्रमाथ्य अङ्गच्छेदादि कृत्वा, भित्त्वा प्राकारादीन्, 'हा मातर्हा पितरनाथाऽपह्रियते (? ये)' इत्येवमाह्वयन्तीमश्रुजलाविलनयनां यत्कन्यां गृहादाहरति, तदपि भूयः (? तदभिभूय) कन्याहरणं राक्षसो विवाहः । गोरा.

---

* व्याख्यानं आपस्तम्बवचने द्रष्टव्यम् ।

(१) बौध. १।२०।८ ; मुक्ता. १४२ ; संर. ४७८ .

(२) आध. २।१२।२ .

(३) हिध. २७।४।३७ ; संर. ४७६ .

(४) वस्मृ. १।३४ ; गृक. ९३ (यस्मिन् बलेन हरन्ति स क्षात्रः) ; गृर. ७७ (यस्मिन् बलेन प्रमथ्य हरेत्स क्षात्रः) ; संप्र. ८५७ (यां बलेन हरन्ति स राक्षसः) केचित्तु 'यां प्रमथ्य बलेन हरेत्स क्षात्रः' इत्यपि पठन्ति इति व्याख्यानावसरे ।

(५) विस्मृ. २४।२५ ; संप्र. ८५७ .

(६) शंस्मृ. ४।५ .

* मच., भाच. मेधागतम् ।

(१) भा. १।१०२।१४ .

(२) भा. १३।४४।८ .

(३) मस्मृ. ३।३३ ; विश्व. १।६१ ; गृक. ९२-९३ कन्याहरणं (कन्यां हरतो) ; स्मृच. ८६ ; चद्रा. ६८५ ; गृर. ७७ गृकवत् ; पमा. ४८६ गृहात् (बलात्) ; दीक. १।६१ उत्त. ; उत. १२८ रुच्यते (रिष्यते) उत्त. ; धप्र. ४६ गृकवत् ; वीमि. १।६१ उत्त. ; संप्र. ८५६ गृकवत् ; मुक्ता. १४१ ; संकौ. २०१ (=) ; व्यान. १७२ ; बाल. १।६१ ; संग. २५५ (=) हत्वा (हृत्वा) ; सस्मृ. ५३ .

(३) प्रसह्य बलादिति चौरिकानयनव्युदासः । चौरिकायां तु वधादिकरणेऽपि पैशाचत्वम् । मवि.

(४) प्रसह्य बलात्कारेण कन्याया हरणं राक्षसो विवाह इत्येव लक्षणम् । यदा तु हर्तुः शक्त्यतिशयं ज्ञात्वा पित्रादिभिरुपेक्ष्यते तदा नावश्यकं हननादि । यदि कन्यापक्षः प्रतिपक्षतां याति तदा हननादिकमपि कर्तव्यमित्यर्थप्राप्तमनूद्यते । कन्यापक्षान् विनाश्य तेषामङ्गच्छेदं कृत्वा प्राकारादीन् भित्त्वा 'हा पितर्भ्रातरनाथाऽहं ह्रिये' इति वदन्तीमश्रूणि मुञ्चन्तीं यत्कन्या गृहादपहरति । अनेन कन्यायामनिच्छोक्ता गान्धर्वाद्विवेकार्थम् । ममु.

(५) हिंसाप्राधान्याद्राक्षसत्वम् । हिंसाप्रधाना हि राक्षसाः । नन्द.

## याज्ञवल्क्यः

[१]राक्षसो युद्धहरणात् ॥

(१) दारुणत्वसामान्यात् रक्षः क्षत्रियाः । त एन महन्तीति राक्षसः, क्षात्र इत्यर्थः । तथा च वसिष्ठः— 'भित्त्वा छित्त्वा' इत्युपक्रम्य 'स क्षात्रः' इत्याह । विश्व.

(२) युद्धेन कन्याबन्धून् जित्वा यत् कन्याहरणं कन्यास्वीकारः, स राक्षसो विवाहः । * अप.

## नारदः

[२]प्रसह्य हरणादुक्तो विवाहो राक्षसस्तथा ॥ नामा.

प्रसह्य प्रमथ्य हरणाद्राक्षसः ।

* वीमि. अपवत् ।

(१) यास्मृ. १।६१ ; विश्व. ; मिता. ; अप. ; स्मृच. ८१ ; मपा. १५७ ; मर. १९ हरणात् ( करणात् ) ; गमा. १०० ; उत. १२८ ; विसौ. ५६ ; वीमि. ; संप्र. ८५९ ; चम. ११४ ; मुका. १४१ ; शूक. १०९ ; दिपा. ७५९ ; रत्न. ७३ ; माच. १।२६, २३ .

(२) नासं. १२।४३ तथा ( स्मृतः ) ; नास्मृ. १५।४३ .

## देवलः

[१]विक्रमेण प्रसह्य स्यात् कुमारीहरणं पुनः ।
वीर्यहेतुर्विवाहः स राक्षसः सप्तमो मतः ॥

विक्रमेण पराक्रमेण । प्रसह्य बलात्कारेण । वीर्यहेतुर्बललक्षणः । संप्र.८५७

## बृहत्पराशरः

[२]युद्धे हत्वा बलात्कन्या यत्राऽऽच्छिद्यापहृत्य च ।
उह्यते स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः ॥

## हरिवंशः

[३]आशीर्भिर्वर्धयित्वा तु देवर्षिः कृष्णमब्रवीत् ।
अनिरुद्धस्य वीर्याढ्यो विवाहः क्रियतां विभो ॥

## सुप्रभेदे

[४]कृत्वा युद्धं महाघोरं वधबन्धनताडनैः ।
अपहृत्य बलात्कन्यां रुदतीं राक्षसं त्विदम् ॥

## शौनककारिके

[५]यस्मिन् बलमुपाश्रित्य महार्यैः सह साधकैः ।
समेत्य कन्यां बन्धुभ्यो रक्षिभ्योऽपि यथाबलम् ॥
[६]हत्वा भित्त्वा च शीर्षाणि रुदद्भ्यो रुदतीं हरेत् ।
स राक्षसो विवाहः स्यात्प्रायः क्षत्रियशीलनः ॥

## रेणुकारिका

[७]हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य कन्याहरणं विवाहो राक्षसः स्मृतः ॥

(१) गृक. ९३ ; गृर. ७७ ; संप्र. ८५६–८५७ सप्तमः सप्तमो मतः ( सप्तम समुदाहृतः ) .

(२) बृपसं. ६।१० .

(३) उत. १४२ ; संत. ८८९ .

(४) सस्मृ. ५२ .

(५) शौका. १५–१६ पृ. ५६ साधकैः ( साधकः ) रक्षिभ्योऽपि ( रक्षद्भ्योऽपि ) ; प्रशा. १४४ .

(६) शौका. १६ पृ. ५६ ; प्रशा. १४४ टीकाः (टीनिरः) .

(७) रेका. ८० पृ. ५४ .



# पैशाचविवाहः

## आश्वलायनगृह्यसूत्रम्

[1]सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचः ॥

(१) सुप्तेभ्यः प्रमत्तेभ्यः अनवधानेभ्यः कन्यामपहृत्य यो विवाहः स पिशाचसंज्ञकः । गानाद्व.

(२) यदि सुप्तानां प्रमत्तानां रक्षकाणां प्रमादात् कन्यामपहरेत्स पैशाचः । प्रपा.३४३

## वैखानसगृह्यसूत्रम्

[2]सुप्तां प्रमत्तां वा रहसि यद्गच्छति स पैशाचो भवतीति ॥

## गौतमः

[3]असंविज्ञातोपसंगमनात्स पैशाचः ॥

(१) यत्र अज्ञातां कन्यां, सुप्तां मत्तां प्रमत्तां वा अन्यव्यापारे वा सक्तामुपगच्छति, स पैशाचो नाम विवाहः । उपगमनशब्दः उपगमनार्थेषु आलिङ्गनादिषु द्रष्टव्यः, क्षतयोन्याः संस्काराभावात् । तथा च मनुः— 'पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः' (मस्मृ. ८।२२६) इति । ममा.

(२) सुप्ता मत्ता प्रमत्ता वा यत्रासंविज्ञातमुपगम्यते, स पैशाचो विवाहः । गौमि.

(३) अत्र उपगमनाभिगमनशब्दाभ्यां मैथुनमेवाभिधीयते, 'ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति' 'यः स्वदारानृतुस्नातान् स्वस्थः सन् नोपगच्छति' 'ऋतावुपेयात्' इत्यादिप्रचुरप्रयोगदर्शनात् । तदवस्थानां कन्याहरणमेव पैशाच इत्यन्ये । संप्र.८५७–८५८

(१) आगृ. १।६।१ ; गृक. ९५ वाऽपहरेत्स (उपाहरेत्) ; ड. २।१२।२ सुप्तानां प्रमत्तानां (सुप्तां प्रमत्तां) ; स्मृच. ८६ शौनकः ; प्रपा. ३४३ ; धप्र. ४६ ; संप्र. ८५८ ; संम. ६४ ; हृभ. ११११ ; मंर. ४७६, ४७८.

(२) वैगृ. ३।१.

(३) गौध. ४।१३ ; ममा. ; गौमि. ४।११ संगमनात्स (संगमात्) ; संप्र. ८५७ (स०) ; शुक्ता. १४२ गौमिवत्.

## हारीतः

[1]स्त्रीपानमद्यभोगसंप्रयोगात् पैशाचः ॥

(१) कन्यापित्रादीनां स्त्रियां पाने मद्ये भोगे च गीतनृत्यादौ संप्रयोगादासक्तेः । गृक.९५

(२) कन्यापित्रादीनां स्त्रिया अपि मद्यभोगगीतनृत्यादौ संप्रयोगादासङ्गात् । * गृर.७८

(३) स्त्रियाः कुट्टन्याः, पानस्य दुग्धपानकादेः, मद्यस्य द्वादशविधस्य, भोगस्य वस्त्रालङ्कारादेः संप्रयोगात् सम्यक् पौनःपुन्येन प्रयोगात् प्रेषणात्कन्याया वशीकरणं पैशाचः । कन्यापित्रादेर्वा । संप्र.८५८

## बौधायनः

[2]सुप्तां मत्तां प्रमत्तां वोपयच्छेदिति पैशाचः ॥

मदनीयेन द्रव्येण मत्ताम् । प्रमत्ता भयादिना प्रणष्टचेताः । उपयमनं चार्थात् मैथुनमेव । आह च मनुः— 'सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः ॥' (मस्मृ.३।३४) । बौवि.

## विष्णुः

[3]सुप्तप्रमत्ताभिगमनात्पैशाचः ॥

सुप्ता निद्रिता । प्रमत्ता प्रमदातिशयेन नष्टचेतना । तस्यामभिगमनं मैथुनं, तस्मात् पैशाचः । संप्र.८५७

## शङ्खः

[4]पैशाचः कन्यकाच्छलात् ॥

* मद्राद्धोऽयं ग्रन्थः । वस्तुतस्तु गृकवदेव ।

(१) गृक. ९५ ; गृर. ७८ ; संप्र. ८५८.

(२) बौध. १।२०।९ ; शुक्ता. १४२ ; संर. ४७ दिति + (स).

(३) विस्मृ. २४।२६ ; संप्र. ८५७.

(४) शंस्मृ. ४।५.

## महाभारतम्

प्रमत्तामुपयन्त्यन्ये ॥
सुप्तां मत्तां प्रमत्तां वा रहो रात्रौ च गच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽधमः ॥

## मनुः

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽधमः ॥

(१) उपगमनशब्दः आलिङ्गनादिष्विति केचित् । तत्तु अशब्दार्थत्वादनादृत्यम् । पापिष्ठता चैवमुपपन्नतरा भवति, उपपातकयोगाच्च । अन्यथा तदसमञ्जसं स्यात् । तथा च 'केवलं मन्त्रसंस्कृता' इत्युक्त्वा 'सा चेदक्षतयोनिः स्यात्' इति वसिष्ठोऽप्येतदेव ज्ञापयति । अतः श्रौतार्थग्रहणं युक्तमिति । विश्व.१।६१

(२) राक्षसपैशाचयोः अनिच्छा तुल्या । राक्षसे हननं, पैशाचे वञ्चनम् । सुप्तां निद्रयाऽभिभूताम् । मत्तां क्षीबां मद्यपरवशाम् । प्रमत्तां वातसंक्षोभेण नष्टचेतनाम् । रहः अप्रकाशे उपगच्छति मैथुनधर्मे प्रवर्तते स पैशाचो विवाहः सर्वविवाहानां पापिष्ठः पापहेतुः । धर्मापत्यं न ततः संपद्यते ।

इह गान्धर्वराक्षसपैशाचानां प्रकृतविवाहसामानाधिकरण्यात् संयोगहरणोपगमा एव पाणिग्रहणसंस्कारनिरपेक्षा विवाहा इति मन्यन्ते । तेषां ब्राह्मादिष्वपि दानविवाहयोः सामानाधिकरण्यात् संस्कारो विनिवर्तते । यथा च न निवर्तते तथा दर्शितम् । लक्षणया विवाहप्रयोजनदाने विवाहशब्दः । गान्धर्वे तु भगवता कृष्णद्वैपायनेन दुष्यन्तशकुन्तलासंगमने वर्णितम्— 'अनग्निकममन्त्रकम्' इति, तद्दर्शनेन पाणिग्रहणसंस्कारोऽस्ति मन्त्रादिवर्जितस्तु ।

पैशाचे पुनर्विवदन्ते—मुख्यं चोपगमनम् । न च कन्यात्वमपैति, संस्कारैस्तद्विनिवर्तनात् । अतश्च 'पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः' (मस्मृ.८।२२६) इति प्रतिषेधस्याप्रवृत्तेः अस्त्येव मन्त्रवत्संस्कारसंबन्धः । स च प्रतिषेधः कृतः संस्कारप्रतिषेधार्थः । सा हि मन्त्रैः संस्कृतत्वात् व्यपगतकन्याभावा । अत एव भवतु प्रथममुपगमः, ततोऽकन्यादोषो नास्ति । तथा च कानीनः कर्ण इति दर्शनम् । यदि तु पुरुषप्रयोगेण कन्यात्वमपेयात् कथमियं वाचोयुक्तिः 'कन्यायाः पुत्रः कानीनः' इति । अथ तु असंस्कृता कन्या उच्यते ततो युक्तम् 'कर्णादयो ह्यनूढायाः पुत्राः' इति । मुख्ये अभ्युपगमने कन्यायाः अपत्योत्पत्तेः संभवः । वर्ण्यते चेतिहासादिषु तथाभूताया विवाहः । अथ मद्यमदादिना निर्वृत्ते रतिसंबन्धे किमर्थः संस्कार इति । अत्रोच्यते । यद्यपि स्त्रीपुंसधर्मो निर्वृत्तोऽतिक्रान्तश्च कन्यागमनप्रतिषेधः, तथापि तया सह अधिकारार्थं पुनश्च गमने कन्यागमनं मा भूदिति तदर्थं संस्कारकरणम् । कन्यागमनप्रतिषेधातिक्रमसंबन्धेन पुरुषार्थतयाऽपि निन्द्यते विवाहोऽधमः ।

तदयुक्तम् । यतोऽयं लोके कन्याशब्दः पुंसाऽसंप्रयुक्तां स्त्रियमाचष्टे, न संस्कारभावसापेक्षाम् * । अकृतसंस्कार

---

(१) भा. १।१०२।१४.

(२) भा. १३।७९।८. अयं श्लोको मुम्बईमुद्रितमहाभारतपुस्तके नोपलभ्यते । राक्षसविवाहलक्षणानन्तरम् 'पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर । पैशाचश्चासुरश्चैव न कर्तव्यौ कथंचन ॥' इति श्लोकः समुपलभ्यते । अत्र पैशाचविवाह उक्तः, परन्तु लक्षणप्रतिपादकश्लोको न दृश्यते । अतः कुम्भघोणमुद्रितपुस्तकादयं श्लोकः संगृहीतः ।

(३) मस्मृ. ३।३४ घ.पुस्तके 'कथितोऽष्टमः' इति पाठः ; विश्व. १।६१ तोऽधमः (तोऽष्टमः) ; गौरा. विश्ववत् ; अप. १।६१ गच्छति (यच्छति) प्रथितोऽधमः (कथितोऽष्टमः) ; गृक. ९४ विश्ववत् ; स्मृच. ८७ (अपकृष्टो विवाहानां पैशाचः कथितोऽष्टमः।) उत्त. ; चन्द्रा. ६८५ पूर्वार्धे (सुप्तां मत्तां रहश्छद्म कन्या यत्रोपनीयते ।) शेषं विश्ववत् ; गृर. ७८ प्रथितोऽधमः (कथितोऽष्टमः) ; पमा. ४८६ गृरवत् ; मपा. १५९ गृरवत् , उत्त. ; दीक. १।६१ विश्ववत् ; उत. १२९ गृरवत् ; भम. ४६ ; विसौ. ५६ रहो यत्रोपगच्छति (कन्यां यत्राधिगच्छति) प्रथितोऽधमः (परिकीर्तितः) ; वीमि. १।६१ प्रथितोऽधमः (चाष्टमोऽधमः) ; संप्र. ८५७ गृरवत् : ८५९ गृरवत् , उत्त. ; मुक्ता. १४१ विश्ववत् ; संकौ. २०६ (=) विश्ववत् ; रत्न. ७८ ; क्षान. १७३ विश्ववत् ; बाल. १।६१ विश्ववत् ; संग. २५५ गृरवत् ; माच. विश्ववत् ; बौवि. १।२०।९ विश्ववत् ; सस्मृ. ५३ विश्ववत् .

* संस्कारभावे संस्कारसत्त्वे सापेक्षां अपेक्षासहितां, न तु शान्तापेक्षां, अवधारणं विशिष्टं, अकृतसंस्कारामेवेत्यर्थः ।

अपि पुरुषैः क्षतयोनयो न 'कन्याः' इति व्यवह्रियन्ते। तासां च वेशश्रितानां गमने न कन्यागमनदोषः। यद्यपि कुमारीकन्याशब्दौ प्रथमवयोवचनाविष्येते, तथापि विवाहविधौ अनुपभुक्तपूर्वामेव स्त्रियमाचक्षते। तथा च कुमारवेशधारिणीं नातिप्रकाशप्रवृत्तपुंसंप्रयोगां भार्यात्वेनार्थयमानोऽन्यैरवबोध्यते— नैषा कुमारी, नष्टोऽस्याः कौमारो भावः। संस्कारपरिलोपश्च स्यात्। गर्भाधानं हि मन्त्रवत् कर्तव्यम् 'विष्णुर्योनिं कल्पयतु' इति। क्लृप्तायाश्च कल्पनमशक्यम्। तत्र अयथार्थो मन्त्रप्रयोगः स्यात्। न चानूढायाः पैशाचधर्मे मन्त्रप्रयोगः, ऊढायास्तच्छ्रवणात्। न च पैशाचवर्जमन्येषु विवाहेषु तत् कल्पयितुं युक्तं, अविशेषश्रवणात्। तस्मात् मुख्योपगमपक्ष एवमादयो बहवो दोषाः प्राप्नुवन्ति। अतः आलिङ्गनोपगूहनपरिचुम्बनादिषु उपगमनार्थेषु व्यापारेषु साहचर्यात्तादर्थ्याच्च उपपूर्वो गमिर्द्रष्टव्यः। यत्तु 'कानीनः पुत्रः' इति, तत्र मुख्यार्थासंभवात् लक्षणया संस्काराभावप्रतिपत्तिः। यत्तु संस्कारदर्शनं तत्तु क्वचिदेव। यद्यपि 'या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती' (मस्मृ.८।१७३) इति, तत्र य एवोपगन्ता स एव न संस्कर्ता। न त्वसौ पैशाचो विवाहः। पैशाचे हि येनैव समुपभुक्ता तस्मै एव दीयते, स एवैनां संस्करोतीति। गर्भिण्यास्तु संस्कारो वाचनिकः। एतच्च सर्वं निपुणतरं पुनर्नवमे वक्ष्यते।

अपरे मन्यन्ते। सत्यं मुख्यमुपगमनं, अमुख्यत्वे तु गमनप्रतिषेधानुपपत्तिरिति। यदि हि मुख्यमुपगमस्तदा स एव विवाहोऽन्यस्यानन्तरोक्तेन न्यायेनाभावात्। ततश्च नास्ति तस्य प्रतिषेधस्य विषयः, यतः इच्छया गान्धर्वो हठात् राक्षसोऽन्यथा पैशाचः। न चान्यः प्रकारोऽस्ति, येन स विषयः प्रतिषेधस्य स्यात्। अस्ति त्वस्य विषयो यत्र हठाद्रहसि गमनं, या या पितृभ्यां दीयते न चोपसंस्क्रियते। न चासौ गान्धर्वः, कन्येच्छाया अभावात्। अत एव भर्तुरपि न कन्यागामित्वं, विषयान्तरस्य संभवात्। तस्मात् क्षतयोन्याः संस्कारनिषेधात् ब्राह्मादिवदुपायत्वात् तद्वच्च विवाहशब्दोपपत्तेः प्रकरणसामर्थ्यात् गौण एवोपगमार्थः।

एषां च भेदः। अप्रार्थितोपनतो भूमिहिरण्यादिवत् ब्राह्मः। ऋत्विक्त्वेन विशेषेण दैवः। गोमिथुनेन आर्षः। याच्ञयाऽयाच्ञया वा 'सहोभौ चरतां धर्मम्' इति वचनव्यवस्थया प्राजापत्यः। शेषाः सुबोधभेदाः। ब्राह्मादीनामिदमर्थे तद्धितः। ब्रह्मादिसंबन्धिता च स्तुत्या आरोप्यते। एवं सर्वेषु। पैशाचः, पिशाचानामयं युक्त इति निन्दा। मेधा.

(३) सुप्तां निद्रोपेतां, क्षीबां, शीलसंरक्षणानिबर्हणां निर्जने प्रदेशे यस्मिन् विवाहे उपगच्छति स पापहेतुविवाहानां मध्ये पैशाचोऽष्टमः ख्यातः। * गोरा.

(४) रहः एकान्ते। उपगच्छति आलिङ्गनादि करोति, न तु उपभुङ्क्त एव। क्षतयोनित्वे पाणिग्रहणसंस्काराभावप्रसङ्गात्। § गृक.९४

(५) सुप्तामित्यादि कन्यानिच्छोपलक्षणम्। मत्तां मद्येन। प्रमत्तां अन्यचित्तां क्रीडादिना। उपगच्छति नयति वा। प्रथितः पापिष्ठः पापिष्ठतया प्रसिद्धः। अत्र च पुत्रिकाविधिविवाहो नवमोऽन्य एव, एष्वनन्तर्भावात्। अत्र तु तदपरिगणनं तत्संवोढुः प्रयोजनाभावात्। एकापत्यादौ नियमेन तु दाने द्वितीयाद्यपत्यं वोढुरेव भवति। तदा च तस्य धर्माभिसंधिकृतत्वसाम्यादार्षत्वमेवेति। मवि.

## याज्ञवल्क्यः

पैशाचः कन्यकाच्छलात्॥

(१) छलवृत्तयः पिशाचाः, तदर्हः पैशाचः। सर्ववर्णानां चायमेवापत्कल्पः। आसुरादीनां तु यथाभिधानं क्षत्रियादिविशेषापेक्षया च स्तुतिनिन्दाकल्पनम्। विश्व.

---

* ममु., मव., नन्द, भाच. गोरावत्।

§ गृर.; वीमि. गृकवत्।

(१) यास्मृ. १।६१; विश्व.; मिता.; अप. कन्यका (कन्यकां); गृक. ९५; स्मृच. ८६; गृर. ७८; मपा. १५७; मर. १९; गभा. १००; उत. १२८; विसौ. ५६; वीमि.; संप्र. ८५८; चम. ११४; मुक्ता. १४१; दूक. १०९; विपा. ७५९; रत्न. ७७; माच. ३।२६, ३४.

(२) पैशाचस्तु कन्यकाच्छलात् छलेन छद्मना स्वापाद्यवस्थास्वपहरणात् । मिता.

(३) कन्यकां छलादपहृत्य यत्स्वीकरोति स पैशाचो विवाहः । केचित् पठन्ति 'कन्यकाच्छलात्' इति । तस्यार्थः— कन्यकाछलनात् तत्स्वीकारः पैशाचो विवाह इति । अप.

(४) न चासुरादिविवाहेषु सप्तपादातिक्रमणाभावात्पतित्वभार्यात्वयोरनुपपत्तिरिति आशङ्कनीयम् । तत्रापि स्वीकारानन्तरमेव संस्कारविधानात् । § मपा.१५७

## नारदः

[1]सुप्तमत्तोपगमनात् पैशाचश्चाष्टमोऽधमः ॥

सुप्तां मत्तां चोपगच्छति, स पैशाचः । अधमः पापः सर्वेभ्यः । नामा.

## देवलः

[2]सुप्तमत्तोन्मत्तकन्याहरणं व्यसनादपि ।
प्रमादहेतुः पैशाचो विवाहोऽष्टम उच्यते ॥

(१) सुप्तात् स्वप्नात् । मत्तात् मद्यपानेन मत्तत्वात् । व्यसनात् राजाद्युपद्रवात् । कन्यावता इति शेषः । * गृक.९५

(२) सुप्ताना निद्राक्रान्तानां, मत्तानां मदनीयद्रव्येण, उन्मत्तानां ग्रहाद्यावेशेन, व्यसनात् राजाद्युपद्रवात् व्याकुलानां कन्याया यद्धरणं स पैशाचः । प्रमादः पूर्वोक्तादिनिमित्तैरसावधानता । 'प्रमादोऽनवधानता' इति कोशात् । संप्र.८५८

## बृहत्पराशरः

[1]सुप्ता याऽपि प्रमत्ता वा छलात्कन्या प्रगृह्यते ।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥

## सुप्रभेदे

[2]कन्यां सुप्तां प्रमत्तां च चौर्यादपहरेत्तु यत् ।
पैशाचमिति विख्यातं ... ... ॥

## शौनककारिका

[3]यस्तु सुप्ते प्रमत्ते वा कन्याया रक्षके नरः ।
चौर्यादपहरेत्कन्यां पैशाचो नाम सोऽधमः ॥

## रेणुकारिका

[4]प्रसुप्तानां प्रमत्तानां कन्यामपहरेन्निशि ।
छलात्स्वापाद्यवस्थासु पैशाचो विधिरुच्यते ॥

---

§ शेषं पूर्वटीकासु गतार्थम् ।

* गृर. गृकवत् ।

(१) नासं. १३।४२ ; नास्मृ. १५।४३ ( सुप्तप्रमत्तोपगमात्पैशाचस्त्वष्टमोऽधमः । ).

(२) गृक. ९४ पूर्वार्धे ( सुप्तान्मत्ताच्च कन्याया हरति व्यसनादपि । ) ; गृर. ७८ पूर्वार्धे ( सुप्तान्मत्ताच्च कन्यायां रोहणं व्यसनादपि । ) ; संप्र. ८५८ .

(१) बृपसं. ६।११ .

(२) सस्मृ. ५३ .

(३) शौका. १४-१५ पृ. ५६ ; प्रपा. ३४४ .

(४) रेका. ८१ पृ. २४ .

## प्रशस्ता विवाहाः, वर्णभेदेन विवाहव्यवस्था च

### वैखानसगृह्यसूत्रम्

एतेषां § प्रथमे चत्वारस्तोयप्रदानपूर्वकाः शस्ता ब्राह्मणस्य नेतरे जघन्याः ॥

ब्राह्मादिषु चतुर्षु पूर्वालाभे परेण ब्राह्मणो विवाहं कुर्यात् । आसुरादिष्वसत्पुत्रा जायन्ते । तस्मादासुरेण गान्धर्वेण विवाहे कृते चान्द्रायणं चरित्वाऽग्निमाधाय ब्राह्मं त्र्यक्षिशद्द्वैष्णवं सावित्रीमाग्नेयं शतमावर्त्य हुत्वा ब्राह्मादिष्वेकेन पुनर्विवाहं कुर्यात् । आसुराद्द्विगुणं गान्धर्वे. गान्धर्वाद्द्विगुणं राक्षसे, राक्षसाद्द्विगुणं पैशाचे प्रायश्चित्तं करोति । आसुराद्यैः शस्तैः क्षत्रियवैश्यौ विवाहं कुर्याताम् । पूर्वेषामलाभे परेण । ब्राह्मणेनासुरगान्धर्वौ च विधिना कर्तव्यावित्येके । होमं हुत्वा राक्षसपैशाचौ चेत्यपरे । अन्यथा कन्यागमनप्रायश्चित्तं करोति ॥

* 'अलङ्कृत्य कन्यामुदकपूर्वं दद्यात्' इत्येवमादयोऽष्टौ विवाहा वेदितव्याः । तत्र पूर्वे चत्वारो विवाहाः पूर्वः पूर्वः प्रशस्ताः । उत्तरे तु चत्वारः उत्तरोत्तरः पापीयांसः । अथ किं सर्वेषां सर्वे भवन्ति आहोस्विद्विनियोगोऽप्यस्ति । केषाचित् विनियोगः । पूर्वौ तावत् ब्राह्मणस्य, इतरयोः प्रतिग्रहाभावात् ऋत्विग( ? आर्त्विज्या )भावाच्च । गान्धर्वः क्षत्रियस्य राक्षसश्च । कथं ज्ञायते, युद्धसंयोगात् गान्धर्वस्य च पुराणे दृष्टत्वात् । आसुरस्तु वैश्यस्य । कस्मात्, धनसंयोगात् । अन्ये त्रयोऽनियताः, विप्ता (? निमित्ता)भावात् । तेन त्रयाणामपि ते भवन्ति ।

* देभा. १।६

### गौतमः

चत्वारो धर्म्याः प्रथमाः ॥

( १ ) आद्याश्चत्वार एव धर्मादनपेताः । आद्या इति वक्तव्ये प्रथमग्रहणं यो यः प्रथमः स स प्रशस्त इत्येवमर्थम् । ततश्च पूर्वस्य पूर्वस्याभावे एव उत्तरोत्तरो द्रष्टव्यः । मभा.

( २ ) एवमष्टौ विवाहा उक्ताः, तेषु चत्वारो धर्म्याः प्रथमाः । आदितश्चत्वारो विवाहाः सर्ववर्णानां धर्म्या धर्मादनपेताः प्रशस्ता भवन्ति । गौमि.

षडित्येके ॥

( १ ) गान्धर्वासुरावपि धर्म्यौ मन्यन्ते । तथा च वसिष्ठः— 'षड् विवाहाः ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषः' इति । एवं च राक्षसपैशाचावपि अत्यन्तनिकृष्टौ, चोदनसामर्थ्यात् पूर्वासंभवे द्रष्टव्यौ । मभा.

( २ ) एके स्मर्तारः षट् धर्म्या इत्याहुः । गान्धर्वासुरयोरपि धर्मादनपेतत्वमिच्छन्ति । गौमि.

### हारीतः

ब्राह्मेण विधिना कुर्यात्प्रशस्तेन द्विजोत्तमः ।
तथान्ये बहवः प्रोक्ता विवाहा वर्णधर्मतः ॥
तेषां विन्देत्तालाभे मानुषम् ॥

( १ ) तेषां त्रयाणां अलाभे मानुषं लभेत । गृक. ७१

§ अस्मिन् प्रकरणे प्रथमपूर्वोत्तरादिशब्दैर्ब्राह्मादिशब्दैश्च विवाहप्रकारप्रकरणे तत्सूत्रोक्तोऽनुक्रमोऽपेक्ष्यते इति तत्प्रकरणमनुसन्धाय तत्तदर्थनिर्णयो विधेयः ।

● आश्वलायनगृह्यसूत्रे वर्णभेदेन विवाहव्यवस्थाबोधकवाक्याभावात्, आश्वलायनगृह्यसूत्रटीकाकारैः विवाहव्यवस्थाबोधकव्याख्यानमत्र समुद्धृतम् । नेदं वैखानसगृह्यसूत्रव्याख्यानम् ।

( १ ) वैगृ. ३।२ .

( २ ) वैगृ. ३।२२.

* गानागृ., भना. देभावत् ।

( १ ) गौध. ४।१४ ; गृक. ७१ ; मभा. ; गौमि. ४।१२ ; गृर. ५९ ; सुभा. १४२ .

( २ ) गौध. ४।१५ ; गृक. ७१ ; मभा. ; गौमि. ४।११ ; गृर. ५९ ; सुभा. १४२ ; मान. १७०, १७१ .

( ३ ) हास्मृ. ४।२, ३ .

( ४ ) गृक. ७१ ; गृर. ५९ .

(२) तेषां विवाहानामलाभे मानुष विन्देत लभेत। अत्र नारदोक्तार्षप्राजापत्यपदयोः* मानुषपक्षाग्रशब्देनोपादानमित्यविरोधः। अत्र मन्वनुसारात् यथासंभवं शास्त्रत्वमलाभे क्षत्रियादीनां मानुषो विवाहः। गृर.६०

ऐतेषामेकतमेनोढां धर्मपत्नीं प्राहुः ॥

अत्र च यद्यपि सर्ववर्णानां सर्वविवाहानर्हता, तथापि यस्य यो विशेषेण विहितस्तेन तस्य धर्मपत्नी भवति। § गृक.७१

## बौधायनः

[१]तेषां चत्वारः पूर्वे ब्राह्मणस्य, तेष्वपि पूर्वः पूर्वः श्रेयान् ॥

[२]उत्तरेषामुत्तरोत्तरः पापीयान् ॥

[३]तत्रापि षष्ठसप्तमौ क्षत्त्रधर्मानुगतौ तत्प्रत्ययत्वात् क्षत्रस्येति ॥

[४]पञ्चमाष्टमौ वैश्यशूद्राणाम् ॥

[५]अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति ॥

* आर्ष' प्राजापत्य' इति पदे अभिधाने ययोस्तयोरिति बोध्यम्।

§ गृर. गृकवत्।

(१) गृक. ७१ ; गृर. ६० ; शूक. १०९ (एषामन्यतमेनोढां धर्मपत्नीं परे प्राहु').

(२) बौध. १।२०।१० ; गृक. ७४ ; गृर. ६२ तेषां (षव) ; पमा. ४८८ ; प्रपा. ३४५ ; वीमि. १।६१ (तेष्वपि पूर्वः पूर्वः श्रेयान्) एतावदेव ; संप्र. ८५९ ; मुक्ता. १४२ ; सर. ४७८.

(३) बौध. १।२०।११ ; गृक. ७४ उत्तरेषा (इतरेषा) ; गृर. ६२ गृकवत् ; पमा. ४८८ गृकवत् ; प्रपा. ३४५ गृकवत् ; संप्र. ८६० गृकवत् ; मुक्ता १४२ ; संर. ४७८ उत्तरोत्तरः (उत्तरः).

(४) बौध १।२०।१२ तत्रापि (अत्रापि) ; गृक. ७४ तत्प्रत्ययत्वात् (तत्पूर्वकत्वात्) (इति०) ; गृर. ६२ गृकवत् ; संप्र. ८६० गृकवत् ; मुक्ता. १४२ (इति०) ; संर. ४७८ तत्रापि (अत्रापि) क्षत्र (क्षत्रिय) क्षत्रस्येति (क्षत्रियस्य).

(५) बौध. १।२०।१३ ; गृक. ७४ शूद्राणाम् (शूद्रयोः) ; गृर. ६२ गृकवत् ; संप्र. ८६० गृकवत् ; मुक्ता. १४२ ; संर. ४७८.

(६) बौध. १।२०।१४ ; गृक. ७४ ; गृर. ६२ ; संप्र. ८६० ; मुक्ता. १४२ ; संर. ४७८.

[६]कर्षणशुश्रूषाधिकृतत्वात् ॥

गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वात् ॥

(१) चत्वारः प्रशस्ता इति शेषः। पूर्वपूर्वस्त्वतिशयेन प्रशस्त इत्यर्थः। इतरेषा गान्धर्वादीना उत्तरोत्तरोऽप्रशस्तः। षष्ठसप्तमौ आसुरराक्षसौ क्षत्रधर्मानुगतौ क्षत्रियधर्मानुसारिणौ। तद्धर्मश्च धनप्रदानबलसंपत्तिरूपः। स च पूर्वभूतोऽर्थः क्षत्रियस्यास्तीति विवाहद्वयसंभवस्तस्य। पञ्चमाष्टमौ गान्धर्वपैशाचौ वैश्यशूद्रयोः। अयन्त्रितकलत्राः असंकोचितस्त्रीकाः। कलत्रमत्र स्त्रीमात्राणाम् (? मात्रम्)। एतेन तयोः कन्या गान्धर्वपैशाचविवाहयोग्या भवन्ति। असंकोचितकलत्रत्वं च तयोः कर्षणशुश्रूषाधिकृतत्वात्। स्नेहानुगतत्वात् *। सर्वेषां वर्णानाम्।

अत्रेयं व्यवस्था — नारदोक्ताः प्राजापत्यार्षदैवब्राह्माः ब्राह्मणस्य प्रशस्ताः। गान्धर्वस्तु तस्यैव धर्माविरोधी। आसुरस्तु यद्यपि तस्यैव मनुना धर्म्य उक्तः, तथापि गान्धर्वात् न्यूनः अत्यन्तापदि कार्यः, 'पैशाचश्चाऽऽसुरश्चैव न कर्तव्यौ कथंचन' (मस्मृ. ३।२५) इति मनुनैवोक्तेः। राक्षसपैशाचौ तु ब्राह्मणेन कदाचिदपि न कर्तव्यौ, 'षडानुपूर्व्या विप्रस्य' इत्यभिधानात्। यत्तु बौधायनेन आर्षस्य दैवात् श्रेष्ठत्वमुक्तं, तत्सहधर्मचारित्वमात्रेण (न) प्रजायाम्, तत्र मनुना दैवस्य श्रेष्ठ्याभिधानात्। हारीतोक्तं तु गान्धर्वश्रेष्ठत्वं सर्वान् प्रति स्वयंवरगान्धर्वाभिप्रायम्, 'स्वयं कन्या वरयेत्स गान्धर्वः' इति गान्धर्वाभिधानात्। यत्तत्र पैठीनसिहारीतमहाभारतेषु राक्षसासुरक्षात्रपैशाचशब्दैर्बलादाहृतकन्याहरणाद्विवाहः प्रशस्त इत्युक्त, स क्षत्रियस्यैव। ब्राह्मदैवौ तु ब्राह्मणस्यैव,

* व्याख्यानमत्रोच्छिन्नमिति भाति। 'स्नेहपरतन्त्रत्वात्' इति रत्नाकरे।

(१) बौध. १।२०।१५ ; गृक. ७४ ; गृर. ६२ ; संप्र. ८६० ; मुक्ता १४२ ; संर. ४७८.

(२) बौध. १।२०।१६ ; गृक. ७४ नुगतत्वात् (नुभवत्वात्) व्याख्याने तु 'नुगतत्वात्' इत्येव ; गृर. ६२ ; संप्र. ८६० ; मुक्ता. १४२ ; संर. ४७८.

नेतरेषाम्, महाभारते ब्राह्मविवाहमभिधाय 'ब्राह्मणानां सतामेष प्रोक्तो धर्मो युधिष्ठिर' इत्यभिधानात्, दैवस्य ऋत्विक्संप्रदानकत्वात्, क्षत्रियादीनां आर्त्विज्यासंभवात्। पैशाचस्तु वैश्यशूद्रयोः। यत्तु वैश्यस्य राक्षसश्रैष्ठ्यमभिधानं, तदासुराभिप्रायम्, 'शुल्केन पाणिं स्वाददतो राक्षसः' इति पैठीनसिवचनात्। आर्षप्राजापत्यगान्धर्वाणां तु सर्वसाधारण्यं, अनिन्दितत्वात् योग्यत्वात्। संकरजातानां तु ब्राह्मदैवव्यतिरिक्तास्तत्तद्वर्णसंबन्धेनेतरे विवाहा इति। * गृक.७४-७६

(२) ब्राह्मप्राजापत्यार्षदैवाश्चत्वारः प्रशस्ताः। तत्रापि पूर्वपूर्वविवाहः उत्तरोत्तरस्मात् श्रेयान् वेदितव्यः॥ उत्तरेषां वर्णानामुत्तरे गान्धर्वासुरराक्षसपैशाचाश्चत्वारो विवाहाः। अत्रापि पूर्वपूर्वः श्रेयानिति वक्तव्ये उत्तरोत्तरः पापीयानिति वचनं पुनरन्त्यस्यात्यन्तपापिष्ठत्वख्यापनार्थम्। उदाहृतं चात्र मानवम्– 'स पापिष्ठो विवाहानाम्' (मस्मृ. ३।१४) इति॥ तत्प्रत्ययत्वं तत्प्रधानत्वम्। बलं हि राज्ञां प्रधानम्। तथा चोक्तम्– 'क्षत्रियस्य बलान्वितम्' इति। आसुरेऽपि धनं बलहेतुतयाऽभिप्रेतम्॥ पञ्चमो गान्धर्वः, स वैश्यानां भवति। अष्टमः पैशाचः, स शूद्राणाम्॥ ईदृश्या व्यवस्थायाः को हेतुरिति बुभुत्सूनामाह– अयन्त्रितेति। अयन्त्रितं अनियतं कलत्रं भार्या येषां ते भवन्ति अयन्त्रितकलत्राः। दारेष्वत्यन्तनियमस्तेषां न भवतीत्यर्थः॥ तद्वा कथमिति चेत्– कर्षणेति। कर्षणं वाणिज्यादीनामप्युपलक्षणार्थम्। निकृष्टकर्माधिकृतत्वात्तयोर्विवाहा अपि तादृशा एवेत्यभिप्रायः॥ एतद्धि गान्धर्वस्य लक्षणम् 'सकामेन सकामायाम्' इति। तत्र स्नेहो मनश्चक्षुषोर्निबन्धः। तदन्वयगतं विहितविवाहकर्म। तथा चापस्तम्बः– 'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेत' (आध. १।३।२१) इति॥ बौवि.

## आपस्तम्बः

[1]तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान्॥

* गृर., सं. गृहरत्नम्।

(१) आध. २।१२।१२ ; गृक. ७२ ; गृर. ६० ; मुक्ता. २४२.

तेषां विवाहानां मध्ये आद्यास्त्रयो ब्राह्मार्षदैवाः प्रशस्ताः। तत्रापि पूर्वः पूर्वः अतिशयेन प्रशस्त इति। उ.

## हिरण्यकेशिधर्मसूत्रम्

[1]तेषां त्रय आद्याः प्रशस्ताः॥

## विष्णुः

[2]एतेष्वाद्याश्चत्वारो धर्म्याः॥
गान्धर्वोऽपि राजन्यानाम्॥

## शङ्खः

[3]एभ्यो धर्म्यास्तु चत्वारः पूर्वं ये परिकीर्तिताः।
गान्धर्वो राक्षसश्चैव क्षत्रियस्य तु शस्यते॥

## महाभारतम्

[4]गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते॥
शकुन्तलोवाच—
फलाहारो गतो राजन्पिता मे इत आश्रमात्।
तं मुहूर्तं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति॥
दुष्यन्त उवाच—
इच्छामि त्वां वरारोहे भजमानामनिन्दिते।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः॥
अष्टावेव समासेन विवाहा धर्मतः स्मृताः।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः।
तेषां धर्मान्यथापूर्वं मनुः स्वायंभुवोऽब्रवीत्॥
प्रशस्तांश्चतुरः पूर्वान्ब्राह्मणस्योपधारय।
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते॥
राज्ञां तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः।
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह॥

(१) हिध. २।७।१।१८; संर. ४७८.
(२) विस्मृ. २४।२७-२८.
(३) शंस्मृ. ४।३.
(४) मा. १।७३।४-११.

पैशाचश्चाऽऽसुरश्चैव न कर्तव्यौ कथंचन ।
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता ॥

गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ।
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः ॥

त्वयाऽद्य राजान्वयया मामनादृत्य यत्कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥

क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥

अष्टमं तमथो वित्त विवाहं कविभिः स्मृतम् ।
स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च ।
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः ॥

न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥

स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥

प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतुः शूराणामिति धर्मविदो विदुः ॥

अर्थेलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥

प्रदानमपि कन्यायाः पशुवत्कोऽनुमंस्यते ।
विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥

एतान्दोषांश्च कौन्तेयो दृष्टवानिति मे मतिः ।
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥

पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर ।
पैशाचश्चासुरश्चैव न कर्तव्यौ कथंचन ॥

ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ ।
पृथग्वा यदि वा मिश्राः कर्तव्या नात्र संशयः ॥

(१) भा. १।७३।२६-२७.
(२) भा. १।१०२।१५-१६.
(३) भा. १।१८९।७.
(४) भा. १।२१५।२१-२२.
(५) भा. १।२२२।३-५.
(६) भा. १३।४४।९-१०.

मनुः

यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ ।
तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥

(१) धर्मादनपेतो धर्म्यः शास्त्रविहित इत्यर्थः । यस्य च विवाहस्य यौ गुणदोषौ इष्टानिष्टफलहेतुत्वात् गुणदोषौ । प्रसवे अपत्यजन्मनि । गुणा गुणाः अगुणा दोषाः । वोढुरेव स्वर्गनरकादिलक्षणौ गुणदोषौ, तत्प्रयोजनमर्थात् स्वर्गादिकम् । ये ईदृशा एव भवन्ति, गतार्थमपि भूयः प्रतिपत्तये कथयन्ति । § मेधा.

(२) ये विवाहा यस्य वर्णस्य धर्मादनपेताः, यस्य च विवाहस्य यौ गुणदोषौ वोढुरिष्टानिष्टफलदातारौ, प्रतिनियतविवाहोत्पन्नापत्येषु च ये गुणा दोषास्तान्सर्वं युष्माकं प्रवक्ष्यामि । गोरा.

(३) धर्म्याः धर्मादनपेताः । गुणदोषौ विवाहमात्रेण प्रसूतिं विनापि । तत्र प्रशस्तत्वाप्रशस्तत्वाभिधानात् (? धानं) अर्थादभिहितमिति विशेषतो नोक्तम् । प्रसवे संततौ । मवि.

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥

(१) षड्विवाहाः ब्राह्मणस्य आनुपूर्व्या, आनुपूर्वी क्रमः, नामोद्देशक्रमेण । क्षत्रस्य । क्षत्रियवचनः क्षत्रशब्दः,

§ मनु., मच., नन्द., भाच. मेधागतम् ।

(१) मस्मृ. ३।२२ ; गोरा. यो यस्य धर्म्यो ( ये यस्य धर्म्या ) ; गृक. ७२ धर्म्यो ( धर्मो ) ; मवि. गोरावत् ; गृर. ६१ धर्म्यो ( धर्मो ) दोषौ च ( दोषौ तु ) मनुर्धर्मस्मृतम् ; मपा. १५५ गृकवत् ; रत्न. ७५ ; मस्मृ. ५२ गृकवत्.

(२) मस्मृ. ३।२३ ग. र्म्यानरा ( र्म्यांश्च रा ) ; मच. २।६१ ; गृक. ७२ द्धर्म्यान ( द्धर्मान ) ; स्मृच. ८७ रोऽवरान् ( रोऽपरान् ) ; गृर. ६१ ट्छूद्रेषु ( ट्छूद्रेषु ) द्धर्म्यानरा ( द्धर्मांश्च रा ) मनुपत्नी ; पमा. ४८७ द्धर्म्यानरा ( द्धर्म्यांश्च रा ) ; मपा. १५८ ; स्मृकौ. ३१ ; वीमि. १।६१ ; संप्र. ८५१, ८५८ ; चम. ११४ पूर्व्या ( पूर्व्याः ) द्धर्म्यानराक्षसान् ( द्धर्मांश्च राक्षसान् ) ; शुभा. १४१ चतुरोऽवरान् ( चतुरो वरान् ) ; संम. १४ विप्रस्य ( विप्राय ) ; निपु. १११९ ; दक. १०९ ; संकौ. १०६ ; एम. ७७ ; बाल. १।६१ ; सस्मृ. ५२.

तस्य चतुरोऽवरान् उपरितनानासुरगान्धर्वराक्षसपैशाचान् विद्यात् । वैश्यशूद्रयोस्तानेव अराक्षसान् राक्षसं वर्जयित्वा । *मेधा.

( २ ) षडादितः क्रमावस्थितान् विप्रस्य, क्षत्रियस्य च उपरितनान् चतुरः, विट्शूद्रयोः पुनः राक्षसवर्जितान् तानेव धर्मादनपेतान् जानीयात् । गोरा.

( ३ ) अस्यार्थः— ब्राह्मादीन् षडानुपूर्व्या क्रमेण ब्राह्मणस्य धर्म्यान् धर्मादनपेतान्विद्यात्, ते च षट् ब्राह्मो दैव आर्षः प्राजापत्य आसुरो गान्धर्वश्चेति । यत्तु कश्यपेनोक्तम्— 'क्रीता द्रव्येण या नारी न पत्नी सा विधीयते । न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥' इति, तद्वक्ष्यमाणशास्त्र( १ प्रशस्त )विवाहासंभवे सति द्रष्टव्यम् । क्षत्रस्य अवरान् पश्चादुक्तानासुरगान्धर्वराक्षसपैशाचान् धर्म्यान् जानीयात् । विट्शूद्रयोस्तु अराक्षसान् राक्षसवर्जितान् तानेवाऽऽसुरादिपैशाचान्तान् धर्म्यान्विद्यात् । केचनैवं व्याचक्षते— षट् ब्राह्मादिगान्धर्वान्तान् विप्रस्य, क्षत्रस्य प्राजापत्यादिराक्षसान्तांश्चतुरः । विट्शूद्रयोस्तु आसुरराक्षसादीन् ( १ अराक्षसान् ) प्राजापत्यादीन् तानेव धर्म्यान्विद्यात् । पैशाचपरित्यागे च हेतुमप्युपदिशन्ति । हेतुश्च नारदमनुवचने— 'चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ । राक्षसस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥' 'स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥' इति ।

मरा. १५८–१५९

( ४ ) विप्रस्य क्रमेण ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वाः षट् विवाहा धर्म्याः । तत्र चत्वारो मुख्याः, द्वावनुकल्पौ । तथा च स एव— 'चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः' इति । तत्रापि द्वौ मुख्यतरौ । तथा च महाभारते— 'ब्राह्मणानां सतामेष ब्राह्मो धर्मो युधिष्ठिर ' इति । दैवोऽपि ब्राह्मणस्यैव, ऋत्विक्संप्रदानकत्वात् । न क्षत्रियादेः, आर्त्विज्याभावात् । क्षत्रियस्य अवरान् अन्त्यान् चतुरः प्राजापत्यासुरगान्धर्वराक्षसान्, नासुरगान्धर्वराक्षसपैशाचान्; पैशाचस्य सर्वनिषिद्धत्वात् । तथा च स एव— 'स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ।' इति । तत्र राक्षसो मुख्यः, प्राजापत्यासुरगान्धर्वा अनुकल्पाः । तथा च स एव— 'राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ' । विट्शूद्रयोस्तु तानेव चतुरः प्राजापत्यासुरगान्धर्वान् राक्षसं विहाय । तत्रासुरो मुख्यः, प्राजापत्यगान्धर्वौ अनुकल्पौ, 'आसुरं वैश्यशूद्रयोः ' इत्युदाहृतवचनात्, क्रयविक्रयप्रधानत्वाच्च । यत्तु 'वैश्यस्य राक्षसः श्रेयान् ' इति पैठीनसिवचनं, तत् आसुरमभिप्रेत्य । 'शुल्केन कन्यास्त्वाददतो राक्षसः' इति तेनैव परिभाषणात् । नारदोऽपि— 'चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ । राक्षसस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ ' अन्त्यः पैशाचः । स गर्हितः, न कस्यापि योग्य इत्यर्थः, 'पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन ' इति मनुस्मरणात् । यद्वा यो गर्हितः पैशाचः स आन्त्यः, अन्त्याः शूद्रास्तद्योग्य इत्यर्थः । 'पैशाचः शूद्रस्य ' इति पैठीनसिवचनात् । अन्त्याः प्रतिलोमजा इति वा, 'पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानां च ' इति प्रचेतःस्मरणात् । असंस्कृतप्रसूताः कुण्डगोलकादयः । बौधायनोऽपि— 'तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वः श्रेयानितरेषामुत्तरोत्तरः पापीयान् ' इति । देवलोऽपि— 'पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानकाः । अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ॥ ' इति । संप्र ८५९–८६०

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥

( १ ) आसुरगान्धर्वयोरयं निषेधो ब्राह्मणस्य पुनर्ब्राह्मादिविधानेन । एवं क्षत्रियस्य राक्षस एवैको न

* भार., मरि., मनु., मष., नन्द., माच. मेधावत् ।

( १ ) मस्मृ. ३।२४ ; मप. १।६१ ; गृक. ७२ ; स्मृच. ७१ पृ. : ८७ ; चदा. ६८३ स्वैरमा ( स्वैरमा ) ; गृर. ६१ मानुरं ( मानुषं ) मनुपद्मौ ; पमा. ४८७ ; मपा. १५९ ; स्मृकौ. ३३ चतुर्थः पादः ; दीक. १।५० ; उत. १४० ; धप्र. ४६ ; वीमि. १।६१ ; संप्र. ८५८ पृ. : ८५९ उत्त. ; चम. ११४ ; मुक्ता. १४१ ; संम. ६४ षरावत् ; मिन्धु. ११२० चतुर्थः पादः ; शूक. १०९ चतुर्थः पादः ; रत्न. ७८ ; मान. १७२ पृ. ; बाल. १।६१ ; संग. २५५ पृ. ; सरस्मृ. ५२ ; शूम. १११९ षरावत् : ११२० चतुर्थः पादः.

गान्धर्वासुरौ । आसुर एव वैश्यशूद्रयोः । विहितप्रतिषिद्धानां विकल्पः । ततश्च नित्यवद्विहिताभावे विकल्पितेषु प्रवृत्तिः । यस्य च यो विहितः स तद्विवाहाभावमनपेक्ष्य प्रथमत एव यदि विहितप्रतिषिद्धेषु प्रवर्तेत, तत्र पुरुषो दुष्येत् अपत्यं चानभिप्रेतमुत्पद्येतेति शास्त्रकारेण दर्शितम् 'प्रसवे च गुणागुणान्' इत्यादिना । न तु सपिण्डादिपरिणयवत् विवाहस्वरूपानिर्वृत्तिः । मेधा.

(२) ब्राह्मणस्य आद्याश्चत्वारः (? आद्याश्चतुरः), क्षत्रियस्य राक्षसमेकं, वैश्यशूद्रयोश्च आसुरं स्मृत्यर्थोपनिबन्धकाराः प्रशस्तान् मन्यन्ते । अत्र च आसुरादीनां ब्राह्मणादिषु पूर्ववाक्यविहितानां इह निराकरणात् विकल्पतो (? ल्पोऽतो) नित्यासंभवे वैकल्पिकेषु प्रवृत्तिः । एवमुत्तरत्रापि वेदितव्यम् । गोरा.

(३) प्रशस्तान् उत्तमसंततिहेतुतया । अत्र ब्राह्मणस्य चत्वार इति प्रथमः कल्पः । षडित्यनुकल्पः । एवं क्षत्रियस्य राक्षस एक इति (प्रथमः) कल्पः, प्राजापत्याद्याश्चत्वार इत्यनुकल्पः । एवं वैश्यशूद्रयोरेवम् । मवि.

(४) ब्राह्मणस्य प्रथमं पठितान् ब्राह्मादींश्चतुरः । क्षत्रियस्य राक्षसमेकमेव । वैश्यशूद्रयोरासुरम् । एतान् श्रेष्ठान् ज्ञातारो जानन्ति । अत एव ब्राह्मणादिषु आसुरादीनां पूर्वविहितानामप्यत्राप्युपादानं (? अनुपादानं) जघन्यजघन्यत्वज्ञापनार्थम् । तेन प्रशस्तविवाहासंभवे जघन्यस्यापि परिग्रह इति दर्शितम् । एवमुत्तरत्रापि विगर्हितपरित्यागो बोद्धव्यः । ● मनु.

(५) एषामपि मध्ये प्रशस्तानाह मनुः– चतुर इति । अयमर्थः– ब्राह्मो दैव आर्षः प्राजापत्यश्चेति चतुरो ब्राह्मणस्य प्रशस्तानाहुः । क्षत्रियस्यैकं राक्षसमेव प्रशस्तं, वैश्यशूद्रयोः आसुरमेव । ब्राह्मणस्य ब्राह्मादिप्राजापत्यान्तो मुख्यः कल्पः, [1]राक्षसोऽनुकल्पः अनन्तरक्षत्रधर्मत्वात् । क्षत्रस्य राक्षसो मुख्यः । '[1] चतुरोऽवरान्' इत्यत्र मते (? यन्मते) आसुरगान्धर्वराक्षसपैशाचा इति चत्वारः, एतन्मते आसुरगान्धर्वपैशाचा अनुकल्पः । यन्मते तु प्राजापत्यादयश्चत्वारः प्राजापत्यासुरगान्धर्वराक्षसा इति, तन्मते तु प्राजापत्यादयस्त्रयोऽनुकल्पः । तथा वैश्यशूद्रयोः आसुरो मुख्यः कल्पः, गान्धर्वपैशाचौ अनुकल्पः प्राजापत्यगान्धर्वौ वा । मरा.१५९

(६) चतुर इति मतान्तरमिति । नन्द.

**पैशाचानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।**
**पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन ॥**

(१) क्षत्रियादिविषयेयं स्मृतिर्न ब्राह्मणविषया, राक्षसे विरोधात् । न हि वधभेदने ब्राह्मणः कर्तुमर्हति । अस्यानन्तरस्य क्षत्रियादिविषयतयोपपत्तेः । पञ्चानां तु विवाहानां प्राजापत्यप्रभृति त्रयो विवाहा धर्म्याः । द्वौ न कर्तव्यौ पैशाचश्चासुरश्च । प्राजापत्यः क्षत्रियादीनामप्राप्तोऽपि विधीयते । राक्षसोऽपि वैश्यशूद्रयोः । आसुरपैशाचयोः प्रतिषेधः ।

इयमत्र व्यवस्था– ब्राह्मणस्य षड्विवाहाः । तत्र ब्राह्मः सर्वतः श्रेष्ठः, ततो न्यूनौ दैवप्राजापत्यौ, ताभ्यामपि आर्षः, ततोऽपि गान्धर्वः, ततोऽप्यासुरः । येषामयं श्लोको ब्राह्मणविषयोऽपि, तेषां राक्षसोऽपि ब्राह्मणस्य क्षत्रियद्वारायवस्थितस्य भवति । विकर्मस्थस्यापि वधभेद-

---

● मच., भाच. मनुगतम् ।

[1] 'षडानुपूर्व्या' इति पूर्वश्लोके ब्राह्मणादिषु व्यवस्थापितानामत्र 'एषामपि मध्ये' इत्यनन्तरनिर्दिष्टानां पराम्रष्टव्यं पूर्वव्यवस्था-

विशेषेण मुख्यानुकल्पविभागार्थमयं श्लोक इति पारिजाताभिप्रायः स्पष्टं प्रतीयते । तथा च पूर्वव्यवस्थापितेभ्यः अन्ये त्वनिर्दिष्टानामनुकल्पत्वं व्यवस्थितम् । एवं सति राक्षसस्य ब्राह्मणानुकल्पत्वं स्थितम्, तस्य पूर्वव्यवस्थापितषड्विवाहान्तर्भूतत्वात् ।

(१) मस्मृ. ३।२५ ; स्मृच. ७२ चासुरौ (चासुरौ) : ७१ कदाचन (कर्तव्यौ) उत्त. ; चरा. १८१ तु (च) त्रयो धर्म्या (विवाहेषु) कदाचन (कर्तव्यौ) ; गृर. ११ मनुवत् ; पमा. ४८८ कदाचन (कर्तव्यौ) ; मपा. ११० पैशाचश्चासु (पैशाचश्चासु) ; स्मृकौ. ११ पमावत् ; वीमि. ३१११ मनुवत् ; संप्र. ८५९ उत्त. : ८६० पमावत् ; मुक्ता. १४१ पमावत् : १४४ (=) पमावत्, उत्त. ; दत्त. ७९ ; बाल. ३।६० अवरवत् : पारा : ३।६१ तु (च) ; मन्द. पमावत् ; मराम्र ५२ पमावत् ; दृम. ३३३० पमावत् ; मेर. ४७ पमावत् .

नाम्यां प्रायश्चित्तीयतो न तु राक्षसो न विवाह इति ते मन्यन्ते । तत्र ब्राह्मस्य श्रैष्ठ्यं फलेनैव दर्शितम् । निषेधाभावेन चेतरेषां त्रयाणां न्यूनता फलापचयवचनादेव । आसुरस्य पुनर्वैश्यशूद्रयोर्विधानेन परिसंख्या ब्राह्मणक्षत्रिययोः प्रतीयते । षडिति च विधानम् । अतो विकल्पः । स च व्यवस्थया । इतरासंभवेन तस्याश्रयणं तुल्यम् । विकल्पो हि व्रीहियववदनेकविवाहविधानेन च समुच्चयासंभवादेव सिद्धः । सति वा संभवे क्रियेत चेत्तथापि धर्मापत्ययोर्न्यूनफलोऽसौ । अथ क्षत्रियस्य राक्षसो मुख्यः, चतुर्भिः श्लोकैरविकल्पेन विधानात् । 'चतुरः' (३।२३) इत्यनेन आसुरगान्धर्वपैशाचा अपि, 'राक्षसं क्षत्रियस्यैकम्' इत्यनेन ते प्रतिषिद्धाः । अतो विकल्पिताः, न मुख्याः । प्रवृत्तापेक्षत्वाच्च राक्षसैकविधिः । प्राजापत्ये नास्ति परिसंख्यानम् । अतः प्राजापत्योऽपि क्षत्रियस्य राक्षसतुल्यः । एवं वैश्यशूद्रयोरपि प्राजापत्यो नित्यवदाम्नातो न प्रतिषिद्धः । आसुरपैशाचौ तु तयोर्विहितप्रतिषिद्धौ । राक्षसोऽपि 'अराक्षसान्' इत्यनेन प्रतिषिद्धः 'त्रयो धर्म्याः' इत्यनेन विहितः । ब्राह्मणस्य पैशाचो नैवास्ति, क्षत्रियादीनां ब्राह्मदैवार्षा इति स्थितम् ।

* मेधा.

(२) इह पैशाचनिषेधात् प्राजापत्यादयः पञ्च गृह्यन्ते । पञ्चानां प्राजापत्यादीनां मध्यात् त्रयो धर्मादनपेताः, द्वौ तु अधर्म्यौ इह शास्त्रे स्मृतौ पैशाचासुरौ । तौ आपद्यपि न कर्तव्यौ ।

गोरा.

(३) आपत्कल्पं ब्राह्मणस्याह——पञ्चानामिति । 'क्षत्रस्य चतुरोऽवरान्' इत्युपक्रान्ताः प्राजापत्यादयः पञ्च, तेषामपि मध्ये त्रयो धर्म्या विप्रस्य, अत्र आसुरस्य वैश्यशूद्रयोरेव मुख्यत्वात्, पैशाचस्य च सर्वेषां निन्दितत्वात् । आपद्यनन्तरक्षत्रमुख्यधर्माश्रयणस्य युक्तत्वाद्राक्षसो युक्तो नाऽऽसुरपैशाचाविति तात्पर्यम् ।

§ मरि.

(४) मन्वासुरयतर्षोऽपि पापीयान्, क्रयश्रवणाविशेषात् । अत एव कश्यपः——'क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते । न सा दैवे न सापिण्ड्ये (? सा पित्र्ये) दासीं तां कश्यपोऽब्रवीत् ॥' इति । मनुरपि आर्षस्य क्रयक्रीतत्वादधर्मत्वमभिप्रेत्याऽऽह——'पञ्चानां तु त्रयो......॥' इति । ब्राह्मादीनामासुरान्तानां मध्ये ब्राह्मदैवप्राजापत्याः त्रयो धर्म्याः, क्रयाभावात् । आर्षासुरौ द्वावधर्म्यौ, क्रयक्रीतत्वात् । तयोरपि आसुरः पैशाचवदापद्यपि न कर्तव्यः ।

तन्न । पञ्चानामिति वचनस्य मतान्तरोपन्यासपरत्वात् । कुत एतत् ? यतः स्वयमेवोत्तरत्र गोमिथुनस्य शुल्कत्वं मतान्तरत्वेनानूद्य निषेधति——'आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् । अल्पो वाऽपि महान्वाऽपि विक्रयस्तावदेव सः ॥' इति । पमा.४८८-४८९

(५) 'पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन' इति ब्राह्मणे निषेधो बोद्धव्यः, अन्यत्र तद्विधानात् ।

गृर.६१

(६) मुख्यकल्पमध्ये परिगणितस्यापि प्राजापत्यस्यापत्कल्पमध्यपरिगणनमार्षापेक्षया प्राजापत्यस्यापकृष्टताद्योतनार्थं, 'पुनात्युत्तरजश्च षट्' इत्यार्षविशहजापेक्षया. 'स कायः पावयेत्तज्जः षट् षट् वंश्यान् सहात्मना' (यास्मृ.१।६०) इति प्राजापत्यविवाहस्याधिक्यश्रवणात् प्राजापत्यस्याधिक्यं द्योतयति, तन्मा भूदिति ।

मपा.१६०

(७) पाश्चात्यानां ग्रहणम्, 'पैशाचश्चाऽऽसुरश्चैव' इति लिङ्गात् । अत्र कर्तृविशेषानिर्देशादस्य मतस्य सर्ववर्णसाधारणत्वं गम्यते । इह कविषु मध्ये ।

* नन्द.

(८) पञ्चानां विवाहानां मध्ये त्रयो धर्मार्हाः प्राजापत्यासुरगान्धर्वराक्षसपैशाचाः ५ एतेषु पञ्चसु मध्ये त्रयो धर्म्याः । प्राजापत्यासुरगान्धर्वसंज्ञास्त्रयो धर्मार्हाः ३ द्वावधर्म्यौ राक्षसपैशाचसंज्ञौ । वर्णक्रममाह प्राजापत्यं क्षत्रियादीनामप्रमाणं विधीयते ब्राह्मणस्यानिरुक्तत्वादनूद्यते गान्धर्वस्य तु धर्म्यत्वेन प्रमाणानुवादः । राक्षसोऽपि

* मनु., मध. सर्वमपीदं व्याख्यानमिव मेधातिथेः ।

§ मेर. मरिवत् ।

* दैवं मेधातिथेः ।

वैश्यशूद्रयोर्विधीयते ब्राह्मणस्य तु क्षत्रियवृत्त्यवस्थितस्याऽऽसुरपैशाचौ न कर्तव्यौ । *माच.

पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥

(१) पृथक्पृथगित्यनुवादः, पूर्वेणैव सिद्धत्वात् । मिश्राविति विधीयते, निरपेक्षाणामितरेषां गान्धर्वराक्षसयोर्विहितत्वात् । व्रीहियववदप्राप्ते मिश्रणवचनमिदम् । 'व्रीहिभिर्यजेत यवैर्वा' इत्येकयागप्रयोगविषयत्वेनेतरेतरानपेक्षद्रव्यविधानात् विकल्पः, न मिश्रीभावः । मिश्रीभावे हि न व्रीहिशास्त्रार्थोऽनुष्ठितः स्यान्न च यवशास्त्रार्थः । एवमिहैकस्यां कन्यायां स्वीकर्तव्यायां युगपदुपायद्वयमप्राप्तं विधीयते । तस्य विषयः, यदा पितृगेहे कन्या, तत्रस्थेन कुमारेण कथंचित् दृष्टिगोचरापन्नेन दूतीसंस्तुतेन तद्गताऽपि तथैव परवती न च संयोगं लभते, तदा वरेण सविदं कृत्वा 'नय मामितो येनकेनचिदुपायेन' इत्यात्मानं नाययति, स च शक्त्यतिशयाद्धत्वा छित्त्वा चैतरेषां हरति, तदा 'इच्छयाऽन्योन्यसंयोगः' इत्येतदप्यस्ति गान्धर्वरूपम्, 'हत्वा छित्त्वा' इति च राक्षसरूपम् । तावेतौ विवाहौ क्षत्रियस्यैव भवतः । 'धर्म्यौ क्षत्रियस्य तौ पूर्वचोदितौ' इत्यनुवादः । अन्ये त्वाहुः– यः क्षत्रियो बहुविवाहान् कुरुते स कांचित् गान्धर्वेण विवाहेन परिणयते काचिद्राक्षसेन इत्येवं मिश्रत्वः, अथवा सर्वा एवान्यतरेणेति पृथक्पृथक् । अनेन चैतत् ज्ञायते, क्षत्रियस्यानयोरेव अनियमेन प्रवृत्तिः, प्राजापत्यादीनां तु य एव प्रथमं कृतस्तेनैवान्याऽपि विवाह्या । † मेधा.

(२) यावेतौ गान्धर्वराक्षसाख्यौ विवाहौ पूर्वोक्तौ तौ पृथक्पृथग्वा अमिश्रौ वा क्षत्रस्य धर्म्याविति पूर्वसिद्धम् । मिश्रौ धर्म्यौ तस्य तौ स्मृतौ इति अनेनोच्यते । तत्र इतरेतरानुरागपूर्वं यदा कन्या वरेण आत्मानं संविदा युद्धादिनाऽपहारयति, तदा गान्धर्वराक्षसौ मिश्रौ भवतः । * गोरा.

(३) क्षत्रियस्य कल्पानुकल्पावुक्त्वा अधुना आरकल्पमाह— पृथगिति । पृथक् असंकीर्णौ, मिश्रौ संकीर्णौ । यथा प्रथमं गान्धर्वेण परिगृह्य तद्बन्धुषु विरोधप्रवृत्तेषु युद्धेन हरणम् । अत्र मिश्रावित्यापत्कल्पः । पृथगिति त्वनुकल्पानुवादमात्रमसंकीर्णासंकीर्णस्य निन्दितत्वप्रदर्शनार्थम् । तेन वर्णान्तराणामप्यसंकीर्णविवाहासंभवे आपदि संकीर्णस्यापि करणमिति दर्शितम् । पैशाचस्य तु वैश्यशूद्रयोरकरणीयस्य विवाहगणमध्ये गणनं वैश्यशूद्रयोरापदि तस्यापि प्राप्त्यर्थमिति प्राप्तं, मातुलः पितुर्वोभयोरेकस्य कूटस्थेन सह सपिण्डताभावे विवाहार्थमथवैवेत्येतत्प्रदर्शयितुं वा । † मदि.

(४) पृथक्पृथग्वा केवलो वा गान्धर्वः केवलो वा राक्षस इत्यर्थः । केवलो गान्धर्वो यथा दुष्यन्तशकुन्तलयोः । केवलो राक्षसो यथा विचित्रवीर्यांबिकयोः । मिश्रो यथा फल्गुनसुभद्रयोः । पूर्वचोदितौ पूर्वोदितौ । अनेन मतान्तरमिदमित्यवगम्यते । नन्द.

## याज्ञवल्क्यः

ब्राह्मः प्राजापत्यश्चैव दैव आर्षस्तथैव च ।
एते विवाहा मुख्याः स्युर्ब्राह्मणानां प्रकीर्तिताः ॥
गान्धर्वो राक्षसश्चैव क्षत्रियाणां प्रकीर्तितः ।
आसुरश्चैव वैश्यानां पैशाचः सर्वगर्हितः ॥

## नारदः

एषां तु धर्म्यास्चत्वारो ब्राह्माद्याः समुदाहृताः ।
साधारणः स्याद्गान्धर्वस्त्रयोऽधर्म्यास्ततः परे ॥

---

* स्याकुलोऽयं ग्रन्थो यथाप्रति स्थानुदितः ।

† मच., माच. मेधावत् ।

(१) मस्मृ. ३।२६ ; गृह. ७२ ; चरा. ४८२ वा मिश्रौ (मिश्रितौ) वोदितौ (प्रोक्तौ) ; गृर. ४१ वोदितौ (देशितौ) ; धर्म्यौ (धर्मौ) मनुवत् ; मपा. ६६० वोदितौ (देशितौ) ; वीमि. ३।६१ वोदितौ (देशितौ) ; संप्र. ८६० वा मिश्रौ (मिश्रितौ) ; दान.७८ मेधावत् ; बाल. १।६१ ; माच. वोदितौ (वेदितौ) ; सस्मृ. ५२ ; वृम. ११६० मेधावत्, पृ.

स्मृ० का० ९०

* मद्यु. [illegible] ।

† नंद. [illegible] । '[illegible]' [illegible] ।

(१) [illegible]

(२) [illegible] ; [illegible] ( [illegible] ) ; [illegible] ( [illegible] ) ; [illegible]

(१) साधारणः नोत्कृष्टः नापकृष्टः ।

गृक. ७१

(२) एषामष्टानां मध्ये चत्वारो धर्म्याः ब्राह्मप्राजापत्यार्षदैवाः । साधारणो गान्धर्वः, न धर्म्यो नाप्यधर्म्यः । अतः परे त्रयोऽप्यधर्म्याः, क्रयादपहरणादशातसंगमाच्च । एषां विस्तरो दानापत्यफलं च भृगुसंहिताया व्याख्यातम् । विस्तरेण तत एवोपलब्धव्यम् । नाभा.

चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ ।
राज्ञस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥

(१) गर्हितः न कस्यापि प्रशस्त इत्यर्थः ।

स्मृच.८७

(२) ननु आसुरवदार्षो विवाहोऽपि क्रयक्रीतत्वान्निन्द्य इति चेत् न, गोमिथुनस्य शुल्करूपत्वाभावात् । शुल्कं नाम देशकालानुरोधेन कन्यामूल्यतया परिकल्पितं द्रव्यम् । न तस्य सर्वदा इयत्ताऽस्ति, तस्य न्यूनाधिकभावदर्शनात् । गोमिथुनं तु सदा एकरूपमेव, अतो न विक्रयदोषोऽत्रेति भावः ।

विपा.७५९

(३) नारायणवृत्तिकारस्त्वाह—' पूर्वेषु चतुर्षु पूर्वः पूर्वः प्रशस्तः । उत्तरेषूत्तरोत्तरः पापीयान् । तत्र पूर्वौ ब्राह्मणस्य, इतरयोः प्रतिग्रहाभावात् आर्त्विज्याभावाच्च । गान्धर्वः क्षत्रियस्य, पुराणे दृष्टत्वात् । राक्षसश्च तस्यैव युद्धसयोगात् । आसुरस्तु वैश्यस्य, धनसंयोगात् । इतरे त्रयोऽनियताः ' इति । त्रयः आर्षप्राजापत्यपैशाचाः । अत्राद्ये मनुवाक्ये षण्णां धर्म्यत्वं भार्यात्वजनकत्वम् । द्वितीये त्वासुरादेः सत्यपि भार्यात्वजनकत्वे प्रत्यवायजनकत्वमप्राशस्त्यम् । यद्यपि वृत्तिकारेण ' त्रयोऽनियताः ' इति तुल्यवदविशेषेणोक्तम्, तथापि पैशाचे प्रत्यवायाधिक्यं, पापिष्ठत्वाद्युक्तेस्तदाशयत्वात्, वृत्तिकृता च स्पष्टं तत्कथनात्, विवाहान्तरासंभवे प्रत्यवायाधिक्यमङ्गीकृत्यापि प्रवृत्तं क्षत्रियादिं प्रति तस्य भार्यात्वजनकत्वाभ्युपगमात् ।

संकौ.२०६

विवाहास्त्वष्टधा भिन्ना ब्राह्माद्या मुनिसत्तमाः ।
पूर्वः पूर्वः परो ज्ञेयः पूर्वाभावे परः परः ॥

## देवलः

पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानकाः ।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ॥
एतान्सशुल्कान्सामान्यान्विवाहांश्चतुरो विदुः ।
केवलं क्षत्रियस्यैव वीर्यवत्त्वाद्धि राक्षसः ॥
गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

(१) वैवाहिको विधिः विवाहाङ्गभूतो लाजहोमादिः ।

गृक. ९७

---

(१) स्मृच. ८७ स्मृत्यन्तरम्; पमा. ४८७ स्मृत्यन्तरम्; मपा. १५८ चान्त्यस्तु (चान्यस्तु); प्रपा. ३४३ स्मृत्यन्तरम्; गभा ९९ शस्ता (राज्ञो) राज्ञस्तथाऽऽसुरो (राज्ञश्चाऽऽसुरो) क्रमेण मनुः; मर. ९९ गभावत्, स्मृत्यन्तरम्; मंप्र. ८५९; चप्र. ११४ स्मृत्यन्तरम्; मुक्ता. १४२ चन्द्रिकायामित्युक्तम्; सिन्धु ११२० उत्त., मनुः; विपा. ७५९ राज्ञस्तथाऽऽसुरो (क्षत्रियस्याऽऽसुरो); संकौ. २०६ मनुः; रत्न. ७८; आन. १७३ चन्द्रिकायामित्युक्तम्; संग. २५६; संर. ४७८ स्मृत्यन्तरम्.

(१) मुक्ता. १४४.

(२) अप. १।६० पूर्वे (एते) प्रदानकाः (प्रधानिकाः); गृक. ७३ पूर्वे (एते) दानकाः (दानिकाः); स्मृच. ८७ पूर्वे (एवं) तोयप्रदानकाः (श्रेयःप्रदायकाः) द्वयोः (तयोः); गृर. ६२ गृकवत्; पमा. ४८९ दानकाः (दानिकाः) द्वयोः कुलम् (कुलद्वयम्); प्रपा. ३४४ दानकाः (धानकाः); वीमि. १।५९ गृकवत्; संप्र. ८६०; मुक्ता. १४२; आन. १७७; संर. ४८० दानकाः (दानिकाः).

(३) गृक. ७३ वीर्यवत्त्वाद्धि (प्रशस्तत्वाच्च); गृर. ६२.

(४) गोरा. ३।३२; गृक. ९७ पूर्वार्धे (प्रासेपूर्वं विवाहेषु विधिर्वैवाहिकः स्मृतः ।); मवि. ३।३२ कर्तव्यश्च (कर्तव्यस्तु); स्मृच. ८७; गृर. ८० गृकवत्; पमा. ४८९ समयेनाग्निसाक्षिकः (समर्थेनाग्निसाक्षिकम्); मपा. १५७; प्रपा. ३४४ समयेनाग्निसाक्षिकः (समर्थेन तु साक्षिकः); मर. १९; स्मृकौ. ३८ मविवत्; दीक. १।६१ पुनर्वैवाहिको विधिः (विधिर्वैवाहिको मतः); उत. १२९ दीकवत्; वीमि. १।६१ (=) दीकवत्; मंप्र. ८६१; मुक्ता. १४१ साक्षिकः (साक्षिकम्); संम. ६४ समयेना (समर्थेना); सिन्धु. ११२१ संगवत्; विपा. ७५९ संमवत्, मनुः; रत्न. ७७; संग. २५६; सस्मृ. ५६; संर. ५०५ संमवत्.

(२) न च गान्धर्वादिविवाहेषु सप्तपदातिक्रमणाद्यभावात् पतित्वभार्यात्वाभावः इति शङ्कनीयम्। स्त्रीकारात् प्राक्तदभावेऽपि पश्चात्तत्सद्भावात्। तदाह देवलः— गान्धर्वादिविवाहेष्विति। पमा.४८९

(३) समर्थेन वेदशास्त्राभिज्ञेन। प्रपा.३४४

(४) समयेन सवादेन। समर्थेनेत्यपि पठन्ति। तस्मिन्पक्षे सम्यगर्थः समर्थः भार्यात्वोत्पत्तिलक्षणं प्रयोजनं तेन हेतुनेत्यर्थः। संप्र.८६१

(५) त्रैवर्णो( ? त्रैवर्ण्ये )केर्गान्धर्वादौ विप्रवजमधिकार उक्तः। सिन्धु.११२१

## बृहत्पराशरः

¹आद्या आद्यस्य षट् प्रोक्ता धर्म्याश्चत्वार एव हि।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च॥
पञ्चमश्च तथा षष्ठः स्मृतौ तौ त्रिचतुर्थयोः।
द्वितीयस्यापि ये प्रोक्ता एतयोस्ते न चाष्टमः॥
वैधसाद्यनुरूपेण द्वितीयः परयोः स्मृतः।
सर्वे सप्तममेकस्य द्वितीयस्यैव कीर्तिताः॥
अन्त्यावत्यधमौ चोक्तावुद्वाहौ शक्तिसूनुना।
तथा युगस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः॥

## पैठीनसिः

²ब्राह्मप्राजापत्यार्षदैवा ब्राह्मणस्य, गान्धर्व आसुरो राजन्यस्य, राक्षसो वैश्यस्य, पैशाचः शूद्रस्य, सर्वेषामार्षं प्रमाणम्॥ गृक.७३

(१) आर्षं वेदवाक्यम्।

(२) आर्षं वेदवाक्यम्। अत एव 'राक्षसं क्षत्रियस्यैकम्' इत्यादिना मनुवाक्ये विशेषविधेर्न विशेषनिषेधे तात्पर्यं इति अनेन पैठीनसिना न विरोधः। आपत्कालमादाय वा पैठीनसिवाक्यं नेयम्। गृर.६२

'वैश्यस्य राक्षसः श्रेयान्॥

इति यत् पैठीनसिवचनं, तत् आसुरमभिप्रेत्य, 'शुल्केन कन्यामाददतो राक्षसः' इति, तेनैव परिभाषणात्। संप्र.८५९

## प्रचेताः

²पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानां च॥

असंस्कृतप्रसूताः कुण्डगोलकादयः। संप्र.८५९

## वत्सः

³सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य या।
चौर्येणापि विवाहेन सा विवाह्या रहः स्थिता॥

(१) चौर्येण पैशाचेन। संप्र.८६१

(२) क्षत्रियादेः संकटे पैशाचमाह माधवीये वत्सः— सर्वोपायैरिति। सिन्धु.११२०

(३) क्षत्रियादेरिति। विप्रादीनां सर्वेषामित्यन्ये। संकटे उक्तविवाहासंभवे। चौर्येणापीति। पैशाचेनापीति तात्पर्यम्। कुभ.११२०-११२१

(४) अन्यविवाहासंभवे ब्राह्मणादीनां पशाचमप्यनुजानाति वत्सः— सर्वोपायैरिति। संर.४७९

## स्मृत्यन्तरम्

⁴अधर्म्योढा तु या नारी न सा पत्न्यभिधीयते।
दैवे पित्र्ये न सा योग्या दासीवत्कवयो विदुः॥

---

(१) छूपसं. ६।१२-१५.

(२) गृक. ७३ मार्षं ( मार्षे ); चद्रा. ६८३ ( गान्धर्वासुरौ राजन्यस्य, राक्षसो वैश्यस्य, पैशाचः शूद्रस्य, सर्वेषामार्षः प्रमाणम् ) एतावदेव; गृर. ६१-६२; वीमि. १।६१ ( गान्धर्वासुरौ राजन्यस्य, राक्षसो वैश्यस्य, पैशाचः शूद्रस्य ) एतावदेव; संप्र. ८५९ ( पैशाचः शूद्रस्य ) एतावदेव; सिन्धु ११२० ( राक्षसो वैश्यस्य, पैशाचः शूद्रस्य ) एतावदेव; शूक. १०९ ( पैशाचः प्रतिलोमानाम् ) एतावदेव.

(१) संप्र. ८५९.

(२) चद्रा. ६८३; संप्र. ८५९; सिन्धु. ११२०.

(३) पमा ४८७ सर्वैः; मपा. १६१ या ( वै ); संप्र. ८६१ या ( च ); घम. ११४ चौर्येणापि ( चौरेणापि ); मुक्ता. १४२; संम. ६४ घमवत्; सिन्धु. ११२१; संकौ. २०६; रत्न. ८० आपस्तम्ब; बाल. १।६१ घमवत्, मनुः; संर. ४७९.

(४) संर. ५७९.

## सुप्रभेदे

[1]तेषां पूर्वचतुष्कं तदादिशेन्नैव शैवयोः (?)।
कर्तव्यं चाऽऽसुरं वाऽपि त्रीणि चान्यानि वर्जयेत् ॥

## रेणुकारिकाः

ब्राह्मो दैवः काय आर्षाऽऽसुरौ च
गान्धर्वोऽन्यो राक्षसः स्यात्पिशाचः ।

(१) सस्मृ. ५२.
(२) रेका. ७४-७५ पृ. ५३.

गान्धर्वान्ता अग्रजानां भवेयुः
शस्तास्तेषां तत्र चत्वार आद्याः ॥
पैशाचान्ता आसुराद्या नृपाणां
शस्तावुक्तौ मध्यमौ तत्र तेषाम् ? ।
विट्शूद्राणां ते च तत्राऽऽसुरोऽसौ
शस्तस्तेषामित्यवोचन्मनुः स्यात् ? ॥
गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यः स त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

(१) रेका. ८१ पृ. ५४.

# ब्राह्मादिविवाहानां फलानि

## आश्वलायनगृह्यसूत्रम्

*अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः । तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः ॥

ऋत्विजे वितते कर्मणि दद्यादलङ्कृत्य स दैवः । दशावरान् दश परान् पुनात्युभयतः ॥

सह धर्मं चरतमिति प्राजापत्यः । अष्टावरानष्ट परान् पुनात्युभयतः ॥

गोमिथुनं दत्त्वोपयच्छेत स आर्षः । सप्तावरान् सप्त परान् पुनात्युभयतः ॥

* यद्यपि ब्राह्मादिविवाहानां लक्षणवाक्यानि पूर्वं तस्मिन् तस्मिन् विवाहे समुद्धृतानि, तथाप्यत्र संगत्यर्थं पुनरुद्धृतानि ।

(१) आगृ. १।६।१ ; अप. १।५८ (तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः) एतावदेव ; गृक. ९९ (तस्यां जातो०) ; गृर. ८१-८२ ; मपा. ३४२ ; धप्र. ४६ ; मैत्र. ८६२ (तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः) एतावदेव : ८६४ (सप्तावरान् सप्त परान् पुनात्युभयतः । अष्टावरानष्ट परान् पुनात्युभयतः ।) एतावदेव ; संम. ६४ ; स्मृम. ११११८-१११९ ; संर. ४७८.

(१) तस्यां कन्यायां जातो द्वादशावरानुत्पत्स्यमानान् द्वादश परान् पुनात्युभयतः मातृतः पितृतश्चेत्यर्थः । एवमुत्तरत्रापि नेयम् । गानाग्.

(२) तस्यां ब्राह्मविवाहोढायां जातः पुत्रः उभयतः मातृवंशे पितृवंशे च परानवरान् द्वादश द्वादश पुनाति । एवमुत्तरत्रापि । तस्यां जात इति सर्वत्रानुवर्तते ।
अना.

(३) आत्मानं च पञ्चविंशम् । आत्मानमिति मनुवाक्ये दर्शनात् । * संप्र.८६२

## वैखानसगृह्यसूत्रम्

[1]यस्मात् त्रीन् पूर्वांस्त्रीनपरानार्षीजातः, षट् पूर्वान् षडपरान् प्राजापत्येनोढाया जातः, सप्त पूर्वान् सप्तापरान् दैवीसुतः, दश पूर्वान्दशापरानात्मानं चैकविंशतिकं ब्राह्मीपुत्रः पावयेदिति ॥

* शेषं गानावृत्त् ।
(१) वैगृ. ३।१.

## गौतमः

पुनन्ति साधवः पुत्राः ॥

( १ ) विवाहविधिं च पुत्रोत्पादनं चोक्त्वा इदानीं विवाहस्तुत्यर्थमाह— पुनन्तीति । पुनन्ति दुःखाद्रक्षन्तीत्यर्थः । तथा च व्यासः— ' पुदिति नरकस्याख्या दुःखं च नरकं विदुः । पुदि त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥ ' इति । साधवः विवाहेनैवोत्पन्नाः, तस्मात् जारत्वेन वा प्रातिलोम्येन वा पुत्रोत्पादनं न कर्तव्यम् । पुत्राः शिक्षिताः । कुतः ? ' तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः ' इति श्रुतेः । मभा.

( २ ) अथ प्रकृतान् विवाहान् स्तौति— पुनन्तीति । अच्छासु ( १ ) जाताः साधवः साधुवृत्तयः पुत्राः जनयितुः कुलं पुनन्ति । गौमि.

[1]त्रिपुरुषमार्षात् ॥

( १ ) आर्षविवाहोढाया जातः पित्रादिपुरुषत्रयं नरकादुद्धरतीत्यर्थः । * मभा.

( २ ) त्रिपुरुषमित्यत्र वीप्सा द्रष्टव्या । तथा च त्रीन्पूर्वान् त्रीन्परानिति सिध्यति, स्मृत्यन्तरवाक्यैकवाक्यत्वात् । संप्र.८६४

[2]दश दैवात् ॥

( १ ) दैवविवाहोत्पन्नो दशपुरुषम् । मभा.

( २ ) पञ्चावरान् पञ्च परानुभयत इति दश । संप्र.८६३

[3]दशैव प्राजापत्यात् ॥

( १ ) उभयत्र दशेति मा भूदित्येवमर्थम् ' प्राजापत्याच्च ' इति नोक्तम् । एवशब्दो विस्पष्टार्थः । मभा.

( २ ) ( दश दैवाद्दशैव प्राजापत्यात् ) उपसमस्तमपि पुरुषपदमत्र दशशब्देन संबध्यते । एवकारो निर्धारणपरः । गौमि.

[4]दश पूर्वान् दशापरानात्मानं च ब्राह्मीपुत्रः ॥

( १ ) ब्राह्मविवाहेनोत्पन्नो ब्राह्मः पुत्रः । अतिक्रान्तान् दश भविष्यांश्च दश पुनाति । उपन्यासक्रमं विहाय व्युत्क्रमेण फलाभिधानं कन्यादातुरपि प्रतिफलभूयस्त्वदर्शनार्थं, यथा जाबालिश्रुतिः— ' यः सपन्नाय पुत्रीं दद्यात् सोऽग्निष्टोमफलमवाप्नोति ' इति । तथा कौषीतकब्राह्मणमपि— ' तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम् ' इति । मभा.

( २ ) ब्राह्मविवाहेनोढा ब्राह्मी, तस्यां जातः पुत्रः पित्रादीन् दश पूर्वान् दश परान् भविष्यतः पुत्रादींश्च दश आत्मानं चैकविंशं पुनाति, तस्माद्ब्राह्मो विवाहः प्रशस्ततमः । गौमि.

( ३ ) उभयतो दशावरान्दश परान्पुनाति आत्मानं चैकविंशम् । * एवमुत्तरत्राप्यात्माऽनुसंधेयः । संप्र.८६३

## हारीतः

[1]तेषां पूर्वे सप्तोभयतः ॥

तेषां पूर्वे इति । तेषां मध्ये पूर्वे आद्यास्त्रयो विवाहाः, उभयतो मातृपितृवंशजान् सप्त सप्त तारयन्ति इति शेषः । § गृक.७१

* गौमि. मभावत् ।

( १ ) गौध. ४१२९ ; अप. १।५८ ; गृक. ९८ ; मभा. ; गौमि. ४१२४ ; स्मृच. ८५ ; गृर. ८१ .

( २ ) गौध ४१३० ; गृक. ९८ ; मभा. ; गौमि. ४१२५ ; गृर. ८१ ; संप्र. ८६४.

( ३ ) गौध ४१३१ ; गृक. ९८ ; मभा. , गौमि. ४१२६ ; गृर. ८१ ; संप्र. ८६३ .

( ४ ) गौध. ४१३२ ; गृक. ९८ ; मभा. ; गौमि. ४१२६ ; गृर. ८१ ; संप्र. ८६५ .

* इदमार्षाद्यभिप्रायम् ।

§ गृर. गृकवत् ।

( १ ) गौध. ४१३३ ; विश्व. १।५८ दशाप ( दशाव ) ; मभा. ब्राह्मीपुत्र ( ब्राह्म पुत्रः ) इति व्याख्यानात् ; गौमि. ४१२७ दशापरा (दश परा) ; स्मृच. ८५ पुत्रः + ( पुनाति ) ; संप्र. ८६३ .

( २ ) गृक. ७१ ; गृर. ५९ .

## बौधायनः

¹यथायुक्तो विवाहस्तथायुक्ता प्रजा भवतीति विज्ञायते ॥

(१) सर्वेषां वर्णानां यथायुक्तः येन गुणेन दोषेण वा संबद्धः, तथायुक्ता तद्गुणदोषवती। गृक.७४

(२) प्रशस्ते विवाहे यत्न आस्थेय इत्यभिप्रायः। तथा च सति तत्रोत्पन्नाः पुत्रा अपि साधवो भविष्यन्ति। बौवि.

²अथाप्युदाहरन्ति — साधवस्त्रिपुरुषमार्षादश दैवादश प्राजापत्यादश पूर्वान् दशापरानात्मानं च ब्राह्मीपुत्र इति विज्ञायते ॥

तेन अस्मिन्नर्थे ब्राह्मणमपि भवतीत्येतदाह। बौवि.

³वेदस्वीकरणशक्तिरप्येवंविधानामेव पुत्राणां भवतीति ॥

## आपस्तम्बः

⁴यथायुक्तो विवाहस्तथायुक्ता प्रजा भवति ॥

प्रशस्ते विवाहे जाता प्रजाऽपि प्रशस्ता भवति, निन्दिते निन्दिता। तत्र मनुः– 'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः॥ रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः॥ उत्तरेषु च शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मसमुज्झिताः॥' । प्राजापत्येन सह ब्राह्माद्याश्चत्वारो ब्राह्मणस्य। गान्धर्वराक्षसौ क्षत्रियस्य। आसुरं तु शूद्रवैश्ययोः। पैशाचो न कस्यचिदपि। उ.

(१) बौध. १।२१।१; गृक. ७४; गृर. ६२ युक्ता प्रजा भवतीति (युक्ताः प्रजा भवन्तीति); मुक्ता. १४२; संर. ४७८ गृरवत्.

(२) बौध. १।२१।२.

(३) बौध. १।२१।३.

(४) आध. २।१२।४; गृर. ७५ युक्ता प्रजा भवति (युक्ताः प्रजा भवन्ति); संप्र. ८५० स्मृतिः; मुक्ता. १४२.

## हिरण्यकेशिधर्मसूत्रम्

¹यथायुक्तो विवाहस्तथायुक्ताः प्रजा भवन्ति ॥*

## विष्णुः

²ब्राह्मीपुत्रः पुरुषानेकविंशतिं पुनीते ॥

³दैवीपुत्रश्चतुर्दश ॥

⁴आर्षीपुत्रश्च सप्त ॥

⁵प्राजापत्यश्चतुरः ॥

आर्षोढापुत्रस्त्रीन् पूर्वांस्त्रीनपरान् दातारं च सप्तमं पुनाति। चतुर इत्यत्र वीप्सा द्रष्टव्या। तथा च चतुरः पूर्वान् चतुरः अवरानिति सिध्यति। संप्र.८६४,८६५

⁶ब्राह्मेण विवाहेन कन्यां ददद्ब्रह्मलोकं गमयति ॥ दैवेन स्वर्गम् ॥ आर्षेण वैष्णवम् ॥ प्राजापत्येन देवलोकम् ॥ गान्धर्वेण गन्धर्वलोकं गच्छति ॥

उक्तलक्षणेन ब्राह्मेण विवाहेन कन्या ददत् दाता पूर्वोक्तसंख्याकान् स्वपितॄन् ब्रह्मलोकं गमयति। स्वयं च गच्छतीति वक्ष्यमाणेन संबन्धः। एवमुत्तरत्रापि द्रष्टव्यम्। गान्धर्वेण कन्या ददद्गन्धर्वलोकं स्वयं च गच्छति न पितॄन् गमयति, पुरुषसंख्याविशेषाश्रवणेन गमयतेरनन्वयात्। इदं च विवाहफलं स्वस्वजातीयवरसंप्रदानके कन्यादाने। ब्राह्मणसंप्रदानके दाने तु तस्मिन्नेव फलेऽतिशयः कल्पनीयः, 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। अधीते शतसाहस्रं प्राधीतेऽनन्तमुच्यते॥' इति दक्षस्मरणात्। संप्र.८६५–८६६

* व्याख्यानं आपस्तम्बवचने द्रष्टव्यम्।

(१) हिध. २७।४।३९; संर. ४७८.

(२) विस्मृ. २४।२९; संप्र. ८६३.

(३) विस्मृ. २४।३०; संप्र. ८६३.

(४) विस्मृ. २४।३१; संप्र. ८६४.

(५) विस्मृ. २४।३२; गृक. ९९ पलश्चतुरः (पलपुत्रश्चतुरः); गृर. ८२ गृकवत्; संप्र. ८६५.

(६) विस्मृ. २४।३३–३७; संप्र. ८६५; संग. २५६.

## शङ्खलिखितौ

**संप्राद्यन्तयोरात्मानं च प्राजापत्यः, पञ्चार्षः, त्रीन् दैवः, उत्तरेषु क्रियाप्राधान्यम् ॥**

आदौ पित्रादीन् सप्त अन्ते पुत्रादींश्च सप्त आत्मानं च पञ्चदशं प्राजापत्ये पुनाति । एवं पञ्च पञ्चार्षः । त्रीन् दैवः । उत्तरेषु आसुरादिषु क्रियया विवाहक्रियया प्राधान्यं भार्यात्वोत्पत्तिमात्रं न फलसंबन्ध इत्यर्थः । अत्र पुरुषसंख्यातारतम्यं कन्यालङ्कारादुपस्कारतारतम्येन द्रष्टव्यम् ।
संप्र.८६५

## मनुः

**यो यस्यैषां विवाहानां मनुना कीर्तितो गुणः ।
सर्वं शृणुत तं विप्राः सम्यक्कीर्तयतो मम ॥**

(१) यदुक्तम् ' गुणदोषौ च यस्य यौ ' ( मस्मृ. ३।२२ ) इति, तत्स्मारयति । बहवो वक्तव्यतया प्रतिज्ञाताः, तत्र वक्ष्यमाणैः श्लोकैरयमर्थ उच्यते इति विशेषज्ञानार्थं युक्तः पुनरुपन्यासः । एषां विवाहानामिति निर्धारणे षष्ठी । एवं( ? एषां ) विवाहानां यस्य विवाहस्य यो गुणः कीर्तितः आचार्येण मनुना सर्वं शृणुत तं गुणं विप्राः । भृगुः महर्षीनामन्त्रयते । सम्यक् अवैपरीत्येन अनाकुलं कीर्तयतः कथयतः । * मेधा.

(२) एषां विवाहा( दी ? )नां मध्यात् यस्य विवाहस्य यत्फलं मनुना कथितं तत्सर्वं मम यथावत् कथयतो विप्राः शृणुत । † गोरा.

मवि.

(३) गुणः पुत्रोत्पत्तिद्वारा ।

(४) यस्य वर्णस्य । येषां विवाहानाम् ।
* भाच.

**दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन् ॥**

(१) पूर्वे वंश्याः पितृपितामहादयः । अपरे पुत्रपौत्रादयः । तान् मोचयत्येनसः नरकादियातनाभ्य उद्धरति ब्राह्मेण विवाहेन ऊढा तस्या यो जात. पुत्रः स सुकृतकृत् पुण्यकृत् यदि भवति । पितॄन् परलोकगतान् । पितृशब्दोऽयं प्रेतपर्यायः । न हि पुत्रादिसन्ततेरन्यथा पितृव्यपदेशसंभवः । दशशब्दः प्रत्येकमभिसंबध्यते पूर्वापरशब्दाभ्यां, एकविंशकमिति निर्देशात् । अर्थवादश्चायम् । तेनानागताननुत्पन्नान् कथं मोचयतीति न वाच्यम् । पूर्वेषां तु अपत्यकृतेन शुभेन श्राद्धादिना भवत्येव पापान्मोक्ष इति श्राद्धाधिकारे कथयिष्यते । अतो ' दशापरान् एनसो मोचयति ' इत्येतदुक्तं भवति— ' दशपुरुषा यस्मिन् कुले अपापा जायन्ते ' इत्यालम्बनम् । + मेधा.

(२) ब्राह्मविवाहोढापुत्रः यदि सुकृतकृद्भवति, तदा दश पूर्वान् पित्रादीनन्वयिनः मृतान्, दश च अपरान् पुत्रादीनात्मानं चैकविंशकं पापान्मोचयति । न च अकृताभ्यागमकृतविप्रणाशौ अत्र नोदनीयौ, श्राद्धादिवद्वचनगम्यत्वात् अमुष्यार्थस्य । पुत्रादीनां च अपापा-

* ममु. मेधावत् ।

† नन्द. गोरागतम् ।

(१) गृक. ९९ उत्तरेषु ( नोत्तरेषु ) ; गृर. ८२ त्रीन् ( नव ) शेषं गृकवत् ; संप्र. ८६५ .

(२) मस्मृ. ३।२६ क., घ सम्यक् ( सर्वं ) ; गृक. ९७ यो ( ये ) तो गुणः ( ता गुणा ) ; चद्रा. ६८३ यत्वेषां ( यथैषां ) सर्वं ( सम्यक् ) सम्यक् ( सर्वं ) ; गृर. ८१ तं विप्रा ( तद्विप्रा ) शेषं गृकवत् ; संप्र. ८६२ सम्यक्कीर्त (समासीर्त ); सस्मृ. ५२ .

* शेषं. गोरागतम् ।

+ ममु., मच., नन्द., भाच. मेधागतम् ।

(१) मस्मृ. ३।३७ घ. मोचयत्येनस ( मोचयेदेनस ) ; गोरा. पूर्वान्परान् ( पूर्वापरान् ) ; मप. १।५८ गोरावत् ; गृक. ९८ ; मवि. गोरावत् ; स्मृच. ८५ विंशकम् ( विंशतिम् ) ; चद्रा. ६८३ ; गृर. ८१ यत्येनस ( येदेनसः ) शेषं गोरावत् ; पमा. ४८७ ; दीक. १।५८ ( दश पूर्वान् दश परानात्मना चैकविंशतिम् । ) पू. ; उत. १२८ ( दश पूर्वान् दशापरानात्मानं चैकविंशतिम् । ) पू. ; वीमि. १।५८ वंश्यान्दश ( दशापरा ) चैकविंशतिम् । ) पू. ; संप्र. ८६१ स्मृचवत् ; शुभा. १४१ गृरवत् ; संकौ. २०६ ; पू. ; भाच. गृरवत् ; सस्मृ. ५१ बाल. १।५८ स्मृचवत् , पू. ; पूर्वार्धे ( दश पूर्वापरान्वंश्यानात्मानं चैकविंशतिम् । ) यत्येनस ( येदेनसः ).

चाराणामुत्पत्तिमात्रेणैव एषां ( एनो )विमोक्षः, तदानी- मनुपपन्नत्वात् । गोरा.

( ३ ) सुकृतं विहितकरणं प्रतिषिद्धवर्जनं चोच्यते । अप.१।५८

( ४ ) ब्राह्मी ब्राह्मविवाहोढा । एनः पापम् । पितॄनिति अजहत्स्वार्थलक्षणया पुत्रादयोऽपि लक्ष्यन्ते, तेन दशपूर्वापरानिति पितॄनित्यन्वयः । * गृर.८१

( ५ ) अत्र ब्राह्मीपदेन कन्याया बुद्धिस्थत्वात्तस्याः पित्रादयः प्रथमसंबन्धितया पूर्वपदेनोच्यन्ते । अपरपदेन तु पश्चात्संबन्धितया कन्याया भर्तृश्वशुरादयः । तेन माता- महप्रभृतीन् दश दश च पितृप्रभृतीनात्मानं च ब्राह्मी- पुत्रः पूर्वजन्मकृतदुर्ब्राह्मणत्वहेतोरेनसस्तारयतीत्यर्थः । यथा देवलः— 'दातुः प्रतिग्रहीतुश्च पुनात्यासप्तमं कुलम्' इति । याज्ञवल्क्योऽपि— 'तज्जः पुनात्युभयतः' इत्याह । ब्राह्मी ब्राह्मविवाहोढा । सुकृतकृदिति दुष्कृतकारित्वे तस्य नैतत्फलमस्तीत्यर्थः । त्रिधा च पुत्रः— औरसः, पुत्रिका- पुत्रः, क्षेत्रज इति । तत्र औरसपुत्रमधिकृत्यैतत्फलमुक्तम् । पुत्रिकायां ततो न्यूनम् । ततोऽपि क्षेत्रजे पुत्रे फलमिति । एवमन्यत्राप्युन्नेयम् । मवि.

[१]दैवोढाजः सुतश्चैव सप्त सप्त परावरान् ।
आर्षोढाजः सुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः ॥

( १ ) दैवेन विधिना ऊढा दैवोढा, तस्यां जातो दैवोढाजः । सुत· पुत्रः । कः प्रजापतिः, स देवता यस्य विवाहस्य स कायः । संस्कारकर्मणि ग्रहणलक्षणेऽसत्येव देवतासंबन्धे प्रजापतेर्देवतात्वमध्यारोप्यते भक्त्या । यदपि तत्र प्राजापत्यो यागोऽस्ति, स तु पूर्वविवाहसाधारणो न कायव्यपदेशे कारणम् । आसुरादिषु च न काचिद्गतिः स्यात् । न हि आसुरेभ्यो विवाहेभ्यो( ? असुरादिभ्यो विवाहे ) यागोऽस्ति । कायोढज इति ह्रस्वत्वम् 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' ( पा. ६।३।६३ ) इति । ननु च यद्यन्न्यूनफलं तत्तत् पश्चान्निर्दिष्टम् । तत्र आर्षस्य प्राजा- पत्यात् पश्चादभिधानं युक्तम् । अस्त्यत्र कारणं येना- धिकफलस्य प्राजापत्यस्य पश्चान्निर्देशः । 'षण्णां तु त्रयो धर्म्याः' इत्यत्र प्राजापत्यस्य ग्रहणमिष्यते, इतरथा आर्षस्य स्यात् । * मेधा.

( २ ) दैवविवाहोत्पन्नः पुत्रः सप्त परान् पित्रादीन् सप्तावरान् पुत्रादीन् पापान्मोचयति । आर्षविवाहोत्पन्नश्च त्रीन् पित्रादीन् त्रींश्च पुत्रादीन् । तथा प्राजापत्यविवाहो- ढोत्पन्नश्च षट् पुत्रादीन् षट् पित्रादींश्च । गोरा.

( ३ ) दैवोढजासुतः दैवेन विवाहेनोढा दैवोढा, तस्यां जाता दैवोढजा तस्याः सुतश्च । 'ङ्यापोः संज्ञा- च्छन्दसोर्बहुलम्' इति ह्रस्वत्वम् । क्वचित्पाठः 'दैवोढायाः सुतः' इति । § गृक.९८

( ४ ) दैवादिषु तु तादृग्विवाहोढस्त्रीजातपुत्रिका- पुत्रानादाय फलमुक्तम्— दैवोढजासुत इत्यादिना । दैव- विवाहेन या ऊढा तस्यां या पुत्रिका जाता तस्याः पुत्र इत्यर्थः । अर्थाच्च तत्रापि औरसे ततोऽधिकं फलं, क्षेत्रजे तु अल्पमित्युन्नेयम् । कायः प्राजापत्यः । अत्र च स्मृत्यन्तरेषु अधिकपुरुषपावनोक्तिः अभिसंधिशुद्ध्या- दिनोपपाद्या । आसुरादिषु तु विवाहेषु जाताः पितृमात्रस्य पुन्नामनरकतारक( ? ण )हेतवः, नान्येषां पावयितार इत्यर्थसिद्धत्वान्नोक्तम् । मवि.

( ५ ) आत्मानं चेत्यनुवर्तते । संप्र.८६३

[१]ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चसिनः पुत्रा जायन्ते शिष्टसंमताः ॥

---

* गृक. गृरवत् ।

( १ ) मस्मृ. ३।३८ ; विश्व. १।५९ दैवोढाजः ( दैवोढायाः ) आर्षोढाजः ( आर्षोढायाः ) ; गृक. ९८ ढाजः सु ( ढजासु ) ढजः सुतः ( ढजासुतः ) ; मवि. ढाजः सु ( ढजासु ) ; स्मृच. ८६ ढाजः सु ( ढजः सु ) ; चद्रा. ६८३ षट् षट् ( षट्क ) ; गृर. ८१ गृकवत् ; पमा. ४८७ ; संप्र. ८६३ गृकवत् , पू. : ८६४ आर्षोढाजः ( आर्षोढजः ) उत्त. ; मुक्ता. १४१ विश्ववत् ; संकौ. २०७ विश्ववत् ; याल. १।५९ चतुर्थपाद विना : १।६० चतुर्थः पादः ; सस्मृ. ५३ .

* ममु. मेधावत् कायपदव्युत्पत्तिवर्जम् । मच., नन्द., माच. मेधागतम् ।

§ गृर. गृकवत् ।

( १ ) मस्मृ. ३।३९ ब. वर्चसिनः ( वर्चस्विनः ) ; गोरा. ब्राह्मादिषु ( ब्राह्म्यादिषु ) ; अप. १।९० वर्चसिनः ( वर्चस्विनः ) ;

( १ ) ' प्रसवे च गुणागुणान् ' ( मस्मृ. ३।२२ ) इत्युक्तं, तदिदम् । अनुपूर्वशः, आनुपूर्व्येण इत्यस्मिन्नर्थे स्मृतिकारैः प्रयुज्यते । श्रुताध्ययनविज्ञानसंपत्तिनिमित्तं च पूजाख्यातौ ब्रह्मवर्चसं, तद्वन्तो ब्रह्मवर्चसिनः । इयन्तो-ऽयम् । शिष्टानां संमताः अनुमता अगर्ह्या अद्विष्टाः, प्रिया इति यावत् । अतश्च अमत्वर्थत्वात् ' मतिबुद्धि ' ( पा. ३।२।१८८ ) इत्यस्याविषयत्वेन ' क्तेन च पूजायाम् ' ( पा. २।२।१२ ) इत्येतेन नास्ति समासप्रतिषेधः । संबन्धसामान्यविवक्षाया च षष्ठी ।
* मेधा.

( २ ) ' प्रसवे च गुणागुणान् ' इति यदुक्तं तत् उच्यते— ब्राह्मादिष्विति । ब्राह्मादिषु चतुर्षु विवाहेषु क्रमावस्थितेषु श्रुताध्ययनसंपत्तिक( ? सिक्त )तेजोयुक्ताः पुत्राः शिष्टप्रिया जायन्ते ।
ममु.

( ३ ) ब्राह्मादिषु चतुर्षु विवाहेष्वामुष्मिकं फलं प्रत्येकमुक्तं, इदानीमैहिकं च समुदायफलं श्लोकद्वयेनाह— ब्राह्मादिष्विति ।
नन्द.

**रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।**
**पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥**

( १ ) रूपं मनोहराकृतिः, सत्त्व नाम गणो द्वादशे वक्ष्यते, ताभ्यामुपेता युक्ताः । आढ्या धनवन्तः । श्रुतशौर्यादिगुणयुक्ततया ख्याताः यशस्विनः । पर्याप्तभोगाः नित्यस्रगनुलेपनगीतवाद्यादिभिः मुखसाधनैरविकलैः नित्ययुक्ताः । सुखसाधनैः पूर्वोक्तैरवियोगो भोगः, स पर्याप्तोऽक्षतः समग्रो येषा ते पर्याप्तभोगाः । धर्मानुष्ठानतत्परा धर्मिष्ठाः । धर्मशब्दः केषांचिद्गुणवचनः । अतः ' गुणवचनात् ' ( पा. ५।३।५८ ) इत्यातिशायिकः । शतं वर्षाणि जीवन्ति ।
* मेधा.

( २ ) ब्राह्मादिषु विवाहेषु चतुर्षु क्रमावस्थितेषु अध्ययनादिसंपत्तेजोयुक्ताः, साधुप्रियाः, लावण्येन द्वादशाध्यायवक्ष्यमाणलक्षणेन सत्त्वेन दयादिभिश्च गुणैर्युक्ताः, धनिनः, ख्यातिमन्तः, सपन्नस्रगनुलेपनादिभोगानुष्ठातारः पुत्रा जायन्ते, शतं वर्षाणां ( ? णि ) जीवन्ति ।
† गोरा.

**इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।**
**जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥**

( १ ) ब्राह्मादिव्यतिरिक्तेषु गान्धर्वादिविवाहेषु नृशंसमनृतं च वदन्ति नृशंसानृतवादिनः । नृशंसं मातृभगिन्यादौ अश्लीलाक्रोशवचनम् । अनृतं प्रसिद्धम् । नृशंसं च अनृतं च नृशंसानृते, ते वदितुं शीलमेषामिति शब्दव्युत्पत्तिः । ब्रह्मधर्मो वेदधर्मो वेदार्थः, तं द्विषन्ति निन्दन्ति वा न श्रद्दधते वा । अत एव ' दुर्विवाहेषु ' इति निन्दा ।
मेधा.

( २ ) ब्राह्मादिभ्यश्चतुर्भ्योऽन्येषु आसुरादिषु दुष्टविवाहेषु क्रूरकर्माणः, अनृतवादिनः, वेदयागादिद्वेषिणश्च सुता जायन्ते ।
§ गोरा.

* मवि., मच., भाच. मेधागतम् ।
गृक. १०० अपवत्, मनुयमौ ; उ. २।१२।४ ; स्मृच. ८६
अपवत् ; चद्रा. ६८३ अपवत् ; पमा. ४८७–४८८ अपवत् ;
स्मृकौ. ३४ उत्त. ; प्रपा. ३४५ पूर्वशः ( पूर्वतः ) शेषं अपवत् ;
संप्र. ८६५ अपवत्, मनुयमौ ; मुक्ता. १४१ अपवत् ; संम. ६४
अपवत् ; संकौ. २०७ ; आन. १७३ ; बाल. २।६१ अपवत् ;
सस्मृ. ५३ ; कृभ. १११९ चतुर्ष्वेवानु ( चतुर्वे वाऽनु ) शेषं
अपवत् .

( १ ) मस्मृ. ३।४० ; अप. १।९० ; गृक. १०० रूपसत्त्वगुणोपेता ( रूपवन्तो गुणोपना ) मनुयमौ ; उ. २।१२।४ ; स्मृच. ८६ ; चद्रा. ६८४ ; पमा. ४८८ ; प्रपा. ३४५ ; संप्र. ८६५ ; मुक्ता. १४१ ; आन. १७३ ; बाल. २।६१ ; सस्मृ. ५३ .

* मवि., मच., भाच. मेधागतम् ।
† ममु. गोरावत् ।
§ ममु., भाच. गोरावत् ।

( १ ) मस्मृ. ३।४१ ; अप. १।९० तु ( च ) ; गृक. १०० इतरेषु तु शिष्टेषु ( इतरेष्वनुविष्टेषु ) मनुयमौ ; उ. २।१२।४ इतरेषु तु ( उत्तरेषु च ) द्विषः सुता ( समुज्झिता ) ; स्मृच. ८६ इतरेषु तु ( इतरेष्वनु ) ; चद्रा. ६८४ अपवत् ; पमा. ४८८ तु ( च ) हेषु ( हे तु ) ; प्रपा. ३४५ इतरेषु तु ( इतरेष्वत ) ; संप्र. ८६५ अपवत् ; मुक्ता. १४१ ; संम. ६४ अपवत् ; संकौ. २०७ पूर्वार्धे ( इतरेष्ववशिष्टेषु नृशंसयाऽनृतवादिन । ) ; आन. १७३ धर्म ( कर्म ) ; बाल. २।६१ ; मन्द. अपवत् ; सस्मृ. ५३ अपवत् ; कृभ. १११९ इतरेषु तु ( इतरेष्वेव ).

(३) शिष्टेपु अनुशिष्टेपु, अ(१ उ)पदिष्टेष्विति यावत् । नृशंसो हिंस्रः । मवि.

(४) ब्रह्म वेदः ब्राह्मणजातिर्वा । धर्मश्चाग्निहोत्रादिस्तद्विपयः । मच.

(५) ब्रह्मद्विपः ब्राह्मणद्विपः । अननुज्ञातविवाहविपये निन्दा, इतरथा हि क्षत्रियादिषु गान्धर्वराक्षसाद्युपशासनानर्थक्यप्रसङ्गः । नन्द.

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥

(१) समासतो विवाहानां फलप्रदर्शनमेतत् । ये यस्य विवाहा विहितास्ते अनिन्दिताः, तैः ऊढानां या प्रजा पुत्रादिलक्षणा सा अनिन्द्या भवति, प्रशस्येत्यर्थः । निन्दितैः प्रतिपिद्धैः निन्दिता गर्हिता । तस्मात् दुःखभागिनी प्रजा मा भूदिति निन्द्यान् विवर्जयेत् । § मेधा.

(२) अगर्हितैः भार्याप्राप्तिहेतुभिर्विवाहैः अगर्हितानि मनुष्याणामपत्यानि भवन्ति । गर्हितैश्च गर्हितानि भवन्ति । तस्मात् गर्ह्यान् विवर्जयेत् न कुर्यात् । * गोरा.

(३) यद्वर्णस्य यो विवाहो विहितः सोऽनिन्दितः । निन्दितोऽन्यः । एवं स्ववर्णाविहितविवाहे केवलं प्रजा निन्द्या भवति, भार्यात्वं तु सिध्यत्येवेति कथितम् । मवि.

(४) 'न गिरागिरा' इति न्यायेन निन्दितविवाहान्निपेधति— अनिन्दितैरिति । 'ऐरंकृत्वोद्गायति' इति विधौ 'य आत्मानं गिलेत्' इत्याद्यर्थवादः, तथा 'अनिन्दितविवाहः कार्यः' इत्यत्र निन्दितविवाहनिपेधोऽर्थवादः । मच.

§ भाच. मेधागतम् ।

* मनु. गोरावत् ।

(१) मस्मृ. ३।४२ ; अप. १।९० ; गृक. ७५ ; चद्रा. ६८४ ; गृर. ६१ ; संप्र. ८६५ ; मुक्ता. १४१ निन्द्यान्वि (निरयानि) ; याल. १।६१ ; सस्मृ. ५२ .

## याज्ञवल्क्यः

*ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥

(१) तस्यां तथोढायां जातः पुत्रः उभयतः पितृतो मातृतश्च एकविंशतिं कुलानि पुनाति शोधयतीत्यर्थः । यद्वा, दशातीतानि दशोत्पत्स्यमानानि आत्मानं चेत्येवं योजना । तथा चाह गौतमः— 'दश पूर्वान् दशावरानात्मानं च ब्राह्मीपुत्रः' (गौध. ४।३३) इति । स्तुतिमात्रमेतत् , भूतानां भाविनां पावनानुपपत्तेः, उपपत्तौ वा कृतनाशाकृतागमप्रसङ्गात् । यद्वाऽस्तु फलविधिः, विवाहविशेषस्य फलविशेषापेक्षत्वात् । न चागमानुसारिण्यर्थेऽनुपपत्तिरिति शक्यं वक्तुम् । तथा च नैयायिकाः— 'न हि वचनस्यातिभारोऽस्ति' इत्याहुः । अयं च ब्राह्मणस्य प्राथमकल्पिको विवाहः । § विश्व.

(२) तस्यां जातः पुत्रः उभयतः पित्रादीन् दश पुत्रादींश्च दश आत्मानं चैकविंशं पुनाति सद्वृत्तश्चेत् । † मिता.

यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम् ।
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥

* यद्यपि ब्राह्मादिविवाहानां लक्षणवाक्यानि पूर्वं तस्मिन् तस्मिन् विवाहे समुद्धृतानि, तथाप्यत्र संगत्यर्थं पुनरुद्धृतानि ।

§ मपा., वीमि. विश्वगतम् ।

† अप. मितावत् ।

(१) यास्मृ. १।५८ ; विश्व. ; मिता. ; अप. ; मवि. ३।२७ (तज्जः पुनात्युभयतः) एतावदेव ; मपा. १५५ ; गभा. ९९ ; उत. १२८ ; संत. ८९२ ; विसौ. ५५ ; वीमि. ; संप्र. ८६३ ; मुक्ता. १४१ ; विपा. ७५८ ; रत्न. ७६ ; भाच. ३।२७ .

(२) यास्मृ. १।५९ ; विश्व. ; मिता. ; अप. ; स्मृच. ८६ ; मपा. १५६ : १६० (पुनात्युत्तरजश्च षट्) एतावदेव ; गभा. ९९ ; उत. १२८ ; विसौ. ५६ ; वीमि. ; संप्र. ८६३–८६४ ; मुक्ता. १४१ जश्च (जस्तु) ; शूक. १०९ ; विपा. ७५८ ; रत्न. ७६ .

(१) प्रथमजश्चतुर्दश पुनाति । प्रथमो दैवः, तत्र जातः प्रथमजः । तयोत्तरजः षट् । उत्तरः आर्षः, तत्र जातः उत्तरजः । प्रविभज्य पौर्वापर्येण योजना । तथा चाह मनुः— 'दैवोढायाः सुतश्चैव सप्त सप्त परावरान् । आर्षोढायाः सुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः ॥' इति । न्यूनफलत्वाच्चास्य दैवान्निकृष्टत्वम् । दैवसहपाठाच्चायमपि ब्राह्मणस्यैव । प्राजापत्यात् न्यूनफलत्वेऽपि चास्मात एव पूर्वपाठ इति मन्तव्यम् । विश्व.

(२) प्रथमजो दैवविवाहजश्चतुर्दश पुनाति सप्तावरान् सप्त परान् । उत्तरजः आर्षविवाहजः षट् पुनाति त्रीन्पूर्वान् त्रीन्परान् । * मिता.

(३) उभयत्र स्वस्य मध्यस्थितत्वादेव पवित्रता । § मपा. १५६

**इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ।**
**स कायः पावयेत्तज्जः षट् षट् वंश्यान्सहात्मना ॥**

(१) सोऽयं प्राजापत्यः आयः आर्षात्पूर्व इत्यर्थः । कुत एतत्, फलभूयस्त्वात् । अत हि जातः षट् षट् वंश्यान् पुनाति, आत्मानं च । आर्षजस्तु त्रींस्त्रीन् । 'सहात्मना' इत्येतत् पूर्वत्रापि योज्यम् । विश्व.

(२) तत्र प्राजापत्यविवाहजः पूर्वान् षट् अवराश्च षट् आत्मानं चेति त्रयोदश पुरुषान् पुनातीत्यर्थः । 'षड्वंश्यांश्च' इति केषाञ्चित्सम्मतः पाठः, तेषां च मते त्रीन् पूर्वान् त्रीनवरानात्मानं चेति सप्त पुरुषानित्यर्थः । वीमि.

* अप., वीमि. मितावत् ।

§ शेष मितावत् ।

(१) यास्मृ. १।६० ; विश्व. पावयेत्तज्ज (पावयत्याद्यः) ; मिता. ; अप. षट् षट् वंश्यान्सहात्मना (षड्वंश्यान् सह चात्मना) ; गृक. ९८ ; गृर. ८१ ; मपा. १५६, १६० ; गभा. १०० ; उत. १२८ षट् षट् वंश्यान् (षड्वंश्यांश्च) ; संत. ८९२ उतवत् ; विमौ. ५६ ; वीमि. ; संप्र. ८६५ सहात्मना (सहात्मजान्) ; मुक्ता. १४१ ; शूक. १०९ ; विपा. ७५९ षट् षट् वंश्यान्सहात्मना (षड्वंश्यान् सममात्मना) ; रत्न. ७६, ७९.

**देवलः**

**चतुर्ष्वेतेषु दत्तायामुत्पन्नास्तनयाः स्त्रियाम् ।**
**दातुः प्रतिग्रहीतुश्च पुनन्त्यासप्तमं कुलम् ॥**

(१) ब्राह्मादिविवाहचतुष्टयाभिधानानन्तरं देवलः— चतुर्ष्वेति । गृक. ९९

(२) अत्र प्राजापत्ये चतुर इत्येके, अत्रैव षडित्येके । तत्रैव सप्ताद्यन्तयोरित्यपरे । तत्रैव दश दशेत्यन्ये । इत्येकत्र प्राजापत्ये विरोधापत्तौ दोषशून्यगुणिगुणवत्तरगुणवत्तमपुत्रभेदेनाविरोध इति नेतव्यम् । एवमन्यत्राप्येवं विरोधे तादृशमेव समाधानमिति नेयम् । प्रशस्त्यर्थं स्तुतिमात्रमिदं कृतमिति हलायुधः । गृर. ८२

**यमः**

**ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।**
**ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥**
**रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।**
**पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥**
**इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।**
**जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥**
**अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।**
**निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥**

**बृहत्पराशरः**

**तारयन्ते प्राक्ततोऽधस्ताच्चतुराद्यविवाहजैः ।**
**स्वात्मना द्विगुणा वंश्या दश सप्त त्रयश्च षट् ॥**

(१) अप. १।६० ; गृक. ९९ चतुर्ष्वेतेषु (चतुर्ष्वेतेषु) ; मवि. ३।३७ पुनन्त्या (पुनात्या) उत्त. ; गृर. ८२ मुत्पन्नास्तनयाः (मुत्पन्नस्तनयः) पुनन्त्या (पुनात्या).

(२) गृक. १०० मनुयमौ ; गृर. ८२-८३ ; संप्र. ८६५ मनुयमौ.

(३) गृक. १०० रूपसत्त्वगुणोपेता (रूपवन्तो गुणोपेता) मनुयमौ ; गृर. ८३ गृकवत् ; संप्र. ८६५ मनुयमौ.

(४) गृक. १०० इतरेषु च शिष्टेषु (इतरेष्वनुशिष्टेषु) मनुयमौ ; गृर. ८३ इतरेषु च (इतरेष्वव) ; संप्र. ८६५ मनुयमौ.

(५) संप्र. ८६५ मनुयमौ.

(६) बृपरा. ६।१६.

## वह्निपुराणम्

[1]ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति ।
ब्रह्मलोकं व्रजेत्क्षिप्रं ब्रह्माद्यैः पूजितः सुरैः ॥
[2]दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति ।
भित्त्वा द्वारं तु सूर्यस्य स्वर्गलोकं च गच्छति ॥
गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति ।
गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम् ॥
शुल्केन दत्त्वा यः कन्यां तां पश्चात्सम्यगर्चयेत् ।
स किन्नरैश्च गन्धर्वैः क्रीडते कालमक्षयम् ॥

## आदित्यपुराणम्

[3]दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति ।
कृत्वा द्वारं तु विपुलं भानुसोपानमुत्तमम् ।
आदित्यलोकादूर्ध्वं तु गमनं प्रतिपद्यते ॥
गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति ।
गन्धर्वलोकं व्रजति गन्धर्वैः पूज्यते च सः ॥
शुल्केन दद्याद्यः कन्यां वराय सदृशाय च ।
किन्नरैरुपगीयेत गान्धर्वं लोकमेति च ॥

## शौनककारिकाः

[4]या ब्राह्मेण विवाहेन सम्यग्दत्ता कुमारिका ।
तज्जातः पावयेत्पुत्रो मातापितृकुलोद्भवान् ॥
द्वादशद्वादशातीतान् पुरुषान् भाविनस्तथा ॥
[1]दैवोढकन्यकाजातो मातापितृकुलोद्भवान् ।
दशावरान्दश परान् पुनात्युभयतो नरान् ॥
[2]प्राजापत्यविवाहोढावधूपुत्रः स्ववंशजान् ।
अष्टावरानष्ट परान्पुनात्युभयतो नरान् ॥
*[3]तस्यां जातः सुतो मातुः पितुश्च कुलसंभवान् ।
सप्तावरान्सप्त परान्पुनात्युभयतो नरान् ॥

## रेणुकारिका

[4]ब्राह्मोढजः स्वादिदश व्यतीतान्
दशावरान् स्वं च पुनाति शुद्धः ।
सप्तावरान्सप्त परांश्च दैवा-
ज्जातः परान् षट् च तथाऽवरांश्च ॥
कायोढजस्त्रीनवरान् परांस्त्रीन्
आर्षोढजश्चेत् प्रपुनाति धर्मम् ।
ब्राह्मादिकेषूद्वहनेषु जाताः
पुत्राश्चतुर्ष्वेषु शतायुषस्ते ॥
विद्याविनीता जपशीलयुक्ता
वर्चस्विनो धान्यधनान्विताः स्युः ।
अन्येषु शिष्टेषु तथा नृशंसा
ब्रह्मद्विषः स्युर्मनुनैवमुक्तम् ॥

(१) चद्रा. ६८५ : माल. २।१२ पृ. ४१ माह्मेण तु (माह्मेण च) क्षिप्रं (शीघ्रं).
(२) चद्रा. ६८५–६८६.
(३) गृक. ८३ ; गृर. ६९.
(४) शौका. ३–४ पृ. ५६ तज्जातः (यज्जातः) ; प्रपा. ३४४ ; संप्र. ८६२.

* तस्यां आर्षोशयाम् ।
(१) शौका. ६ पृ. ५६ ; प्रपा. ३४४ ; संप्र. ८६३.
(२) शौका. १०–११ पृ. ५६ होढा (होढ) ; प्रपा. ३४४ ; संप्र. ८६४ उत्त.
(३) प्रपा. ३४४ ; संप्र. ८६४.
(४) रेका. ८६–८८ पृ. ५४.



# कन्यादातृनिर्णयः कन्यादानफलं च

[ कन्यादानाधिकारिणः, कन्यादाने पित्रादीनामधिकारक्रमः, अस्वस्थस्यानधिकारः, दातुरभावे स्वयंवरः, अन्यकन्यादानेऽप्यधिकारः, कन्यादानप्रशंसा, गौर्यादिदानानां फलतारतम्यम्, कन्यानृतदोषः । ]

## मानवगृह्यसूत्रम्

[1]पिता भ्राता वा दद्यात् ॥

पिता भ्राता वा पितुः, अधिकारः ( ? रात् ) । वाग्रहणमन्यमातामहादीनामुपलक्षणार्थम् । तथा च स्मृत्यन्तरम्– 'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥' ( यास्मृ. १।६३ ) । अन्यस्त्वाह– कथं स्मृत्यन्तरेणैकवाक्यता नाम । अयमि( ? )यत्स्वयं स्मृतिकारेण नोक्तं चाप्रतिषिद्धं, तत् स्मृत्यन्तरात् ग्राह्यमविरोधात् । यस्मान्न हि सर्वं सर्वत्राम्नातं, अत एव सर्वस्मृतिप्रत्ययेनकं कर्म युक्तं तद्विज्ञैः ( ? ) ।

अष्टाभा.

## वसिष्ठः

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥

## विष्णुः

[3]पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः ॥

पूर्वाभावे प्रकृतिस्थः परः पर इति ॥

( १ ) प्रकृतिस्थः पातित्योन्मादादिदोषरहितः ।

गृक.४७

( २ ) अत्र याज्ञवल्क्यानुसारात् * व्यवहारानुसाराच्च मातुरभावे मातामहाधिकार इति ज्ञेयम् ।

§ गृर.४०

## महाभारतम्

[1]ऋतुप्राप्ता सुशुद्धा या कन्या सेत्यभिधीयते ।
तां तु कन्यां पिता माता भ्राता मातुल एव च ।
पितृव्यश्चैव पञ्चैते दातुं प्रभवतां गताः ॥
अतः परं प्रवक्ष्यामि कन्यादानं यथाविधि ।
कन्या देया महादेवि परेषामात्मनोऽपि वा ॥
कन्यां शुद्धव्रताचारां कुलरूपसमन्विताम् ।
यस्मै दित्सति पात्राय तेनापि भृशकामिताम् ॥
प्रथमं तत्समाकल्प्य बन्धुभिः कृतनिश्चयः ।
कारयित्वा गृहं पूर्वं दासीदासपरिच्छदैः ॥
गृहोपकरणैश्चैव पशुधान्येन संयुताम् ।
तदर्थिने तदर्हाय कन्यां तां समलङ्कृताम् ॥
सविवाहं यथान्यायं प्रयच्छेदग्निसाक्षिकम् ।
वृत्त्यायतीं यथा कृत्वा सद्गृहे तौ निवेशयेत् ॥
एवं कृत्वा वधूदानं तस्य दानस्य गौरवात् ।
प्रेत्यभावे महीयेत स्वर्गलोके यथासुखम् ॥
पुनर्जातस्य सौभाग्यं कुलवृद्धिं तथाऽऽप्नुयात् ॥
[2]कैरन्धमस्य पुत्रस्तु मरुत्तो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥
राजा मित्रसहश्चापि वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥

---

( १ ) मागृ. १।८।६.

( २ ) चदा. ६७९.

( ३ ) विस्मृ. २४।३८ ; अप. १।६३ ; गृक. ४६ ; गृर. ४० ; स्मृसा. १२ ; दीक. १।६३ ; उत. १२६ प्रदाः (प्रदः) ; संप्र. ८२४ उत्तवत्.

( ४ ) विस्मृ. २४।३९ ; अप. १।६३ ; गृक. ४६ पूर्वाभावे ( पूर्वपूर्वाभावे ) ; गृर. ४० ( इनि० ) ; स्मृसा. १२ गृरवत् ; दीक. १।६३ ; उत. १२६ ; वीमि. १।६४ ( पूर्वाभावे परः परः ) एतावदेव, विष्णुपुराणम् ; संप्र. ८२४ गृकवत्.

* चिन्त्यमिदम् ।

§ वीमि. गृरवत् ।

( १ ) भा. ( कुम्भ. ) १३।२४९।१-६.

( २ ) भा. ( कुम्भ. ) १३।२३५।६८-७४.

( ३ ) चदा. ६७८.

मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम्।
हिरण्यहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋष्यशृङ्गाय विपुलं सर्वकामैरयुज्यत ॥

## मनुः

नाग्निहोत्रादिभिस्तत्स्याद्रक्षातो ब्राह्मणस्य वा ।
यत्कन्यां विधिवद्दत्त्वा फलमाप्नोति मानवः ॥

यस्तूक्तविधिना कन्यां प्रयच्छति तस्य फलमाह मनुः— नाग्निहोत्रादिभिरिति । . . . स्मृच.८०

## याज्ञवल्क्यः

[2]पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
[3]अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ॥

(१) कस्य पुनरयं कन्याप्रदानोपदेशः । यदि ताव-त्पितुः, तदभावे दुःश्लिष्टतैव । अथ तदभावेऽप्यन्यस्य, स किमिति परकीयां दद्यात् । तेन कः कन्यां दद्यादित्युच्यते— पितेति । स्वकुल्य इति भ्रातृविशेषणं पितृव्यपुत्रादिव्यावृत्त्यर्थम् । पूर्वस्य पूर्वस्याभावे परः परः कन्याप्रदः । प्रकृतिस्थश्च स्वभावस्थः । उन्मादाद्यनभिभूत इत्यर्थः । कन्याप्रद इति वचनादक्षताया एव नैयमिकं दानम् । पिता तु अकन्यामपि दद्यादिति केचित् । छन्दोऽनुरोधाच्च मातामहस्य पूर्वपाठः । अर्थतस्तु भ्रातैव पूर्वः । सर्वेषां च स्वत्वसंबन्धाचोदनातो वा प्रवृत्तेरविरोधः । पाठान्तरं वा 'पिता पितामहो भ्राता सकुल्यो जननी तथा' इति । तत्र पाठक्रमेणैव नियमः । सकुल्य इति च मातुलादिपरिग्रहार्थः । तथा अन्येऽपि योनिसंबद्धा इत्यध्याहारः । समानमन्यत् ।

यत्तु परकीयां किमिति दद्यादिति, तत्राह — यस्मात्— अप्रयच्छन्निति । निन्दार्थवादोऽयं प्रवृत्त्यर्थः । प्रत्यवायविधिर्वा । विश्व.

(२) कन्यादातृक्रममाह— पितेति । एतेषां पित्रादीनां पूर्वस्य पूर्वस्याभावे परः परः कन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्न भवति । अतो यस्याधिकारः सोऽप्रयच्छन् भ्रूणहत्यामृतौ ऋतौ आप्नोति । एतच्चोक्तलक्षणवरसंभवे वेदितव्यम् । मिता.

(३) कन्याप्रदानाधिकारिणस्तत्क्रमं चाह— पितेति । पित्रादीनां क्रमपरिपठितानां पूर्वस्य पूर्वस्याभावे सति, अप्रकृतिस्थत्वे चोत्तर उत्तरः प्रकृतिस्थः कन्याप्रदो भवति । अविप्लुतबुद्धिः प्रकृतिस्थः । अप्रकृतिस्थेन पित्राऽपि कृतं कन्याप्रदानं अकृतमेव । यदाह नारदः— 'स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः । तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥' स्वतन्त्रोऽपि पितृत्वादिना स्वातन्त्र्यार्होऽपि यद्यप्रकृतिस्थत्वेन परतन्त्रो भवति, तदा तत्कृतं कार्यं वाग्दत्तादिकर्म अकृतं वेदितव्यम् ।

---

(१) गृक. ८१ रक्षातो ( मक्षतो ) फलमाप्नोति ( फलं प्राप्नोति ) स्मृतिः ; स्मृच. ८० ; गृर. ६८ सर्वं गृकवत् ; प्रपा. ३५६ पूर्वार्धे ( अग्निहोत्रादिभिर्यत्स्याद्दीक्षातो ब्राह्मणस्य च । ) यत्कन्यां ( तत्कन्यां ) बृहस्पतिः ; संप्र. ८३१ पूर्वार्धे ( अग्निहोत्रादिभिर्यत्स्याद्दीक्षितब्राह्मणस्य च । ) यत्कन्यां ( तत्कन्यां ) : ८३४ पूर्वार्धे ( नाग्निहोत्रादिभिस्तस्माद्रक्षणे ब्राह्मणस्य च । ) आप्नोति ( प्राप्नोति ) स्मृत्यन्तरम् ; संम. ६६ ; विपा. ४८ ( भागः २ ) प्रपावत् ; कृम. ११३३ ; संर. ५०१ .

(२) यास्मृ. १।६३ ; विश्व. पितामहो ( मातामहो ) सकुल्यो ( स्वकुल्यो ) ; समु. ५ ; मिता. ; अप. ; गृक. ४६ ; गौमि. १८।२२ ; स्मृच. ८४ ; चद्रा. ६७९ ; चश्रा. १०८ ; गृर. ४० ; हभा. ६५ ; स्मृसा. १२ पिता पितामहो ( पितापितामहौ ) पूर्वनाशे ( पूर्वाभावे ) ; पमा. ४८३ ; मपा. १४५ ; प्रपा. ३४२ सकुल्यो ( स्वकुल्यो ) तथा ( ततः ) परः परः ( परस्परः ) ; मर. १९ ; निप. २८५ ( = ) ; गभा. ६९ ; उत. १२७ ; संत. ८९३ ; प्रर. ९८ ; वीमि. ; संप्र. ८२४ ; चम. ११० ; मुक्ता. १४० ; संम. ६६ ; सिन्धु. १०७३ ; विपा. ७५६ ; संकौ. २०३ ; ज्योनि. १५९ सकुल्यो ( स्वकुल्यो ) ; श्रान. १७६ ; प्रका. ३५८ ; संव. १४३ ; संग. २५९ ; सस्मृ. ५४ ; संर. ४८६, ४९६ .

(३) यास्मृ. १।६४ ; विश्व. ; मिता. ; अप. ; गौमि. १८।२२ ; स्मृच. ८१ ; चका. ८०४ समाप्नोति ( अवाप्नोति ) ; पमा. ४८३ ; प्रपा. ३४२ ; मर. १९ ; गभा. ६९ ; उत. १२७ ; संत. ८९३ ; प्रर. ९८ ; विसौ. ७ चकावत् ; वीमि. ; संप्र. ७७० ; चम. ११० ; मुक्ता. १३६ : १४० चकावत् ; संम. ६६ ; सिन्धु. १०७३ ; प्रका. ३५८ ; संग. २५९ ; संव. १४३ ; सस्मृ. ५४ ; संर. ४९६ .

· कन्यायाः प्रदाताऽधिकारी तामददद्भूमहत्यां प्रत्युत समाप्नोति संपूर्णो प्राप्नोति । अप.

( ४ ) परः परः इति दर्शनात् पूर्वनाशे इति द्रष्टव्यम् । प्रकृतिस्थः उन्मादादिदोषशून्यः । गृर.४०

( ५ ) सकुल्यो दायादः, दायादेष्वपि संनिहित एवाधिकारी । प्रकृतिस्थः पातित्योन्मत्तादिदोषरहितः, अप्रकृतिस्थेन पित्रादिना कृतमपि अकृतमेव । यथाह नारद.– ' स्वतन्त्रोऽपि हि यत् कर्म कुर्यादप्रकृतिं गतः। तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥ ' पितृत्वादिना स्वतन्त्रोऽपि सन् अप्रकृतिस्थत्वेन हेतुना परतन्त्रो भवति । तदीयकृतं वाग्दानादिकं कार्यं अकृतमेव वेदितव्यं, यदि तस्मिन्वरे पतनीयदोषा अचिकित्स्यरोगा वा भवेयुः। अभावे तु तथैवोपरितनं कर्म प्रकृतिस्थो निर्वहेत्, दृष्टा-दृष्टदोषाभावात् । यदि अप्रकृतिस्थदत्ताया विवाहसंस्कारो निर्व्यूढः, तदा प्रधानकर्मणो निष्पन्नत्वेनाधिकारित्वमात्र-वैकल्यात् तत्रापि न सर्वात्मना प्रत्यावर्तनीया कन्या । एवं तर्हि अनधिकारिणां कृतं अकृतमेवेत्येतद्विरुध्येत । सत्यं, तद्विरोधपरिहाराय परिवेत्तृविवाह इव ता प्रत्या-हृत्य पुनस्तस्मै एव अधिकारी दद्यात् । अत्र पुन-र्विवाहोऽपि परिवेत्तृविवाहवत् विज्ञेयः ।

मपा.१४५–१४६

मर.१९

( ६ ) सकुल्यः पितृव्यादिः ।

( ७ ) स्वकुल्यप्रत्यासत्तिक्रमेण आदौ पितृकुलस्थः, तदभावे मातामहकुलस्थः, सर्वाभावे जननी ।

प्र.९८–९९

**असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।**
**भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम् ॥**

( १ ) संस्कारः परिणयनं, तत् पूर्वसंस्कृतैः असंस्कृतानां भ्रातॄणा कार्यम् । तादर्थ्येन वा द्रव्यमपनीयावशिष्टं विभजनीयम् । अस्मादेव च ज्ञायते– साधारणद्रव्यात् विवाहनिर्वृत्तिः । सोपक्षयमौद्वाहिकमार्जयितॄणामेव द्रव्यमिति । अतः साधारणादेव भ्रातरः संस्कार्या भगिन्यश्च । यदि तु अल्पं द्रव्यं वा न स्यात्, ततो निजादंशाच्चतुर्थमंशं भगिन्यर्थमपनीयान्यत् समं विभजनीयम् ।

विश्व.२।१२८

( २ ) पितरि प्रेते यद्यसंस्कृता भ्रातरः सन्ति, तदा तत्संस्कारे कोऽधिक्रियते इत्यत आह– असंस्कृतास्त्विति । पितुरूर्ध्वं विभजद्भिर्भ्रातृभिरसंस्कृता भ्रातरः समुदायद्रव्येण संस्कर्तव्याः । असंस्कृतासु भगिनीषु विशेषमाह– भगिन्यश्चेति । भगिन्यश्चासंस्कृताः संस्कर्तव्या भ्रातृभिः । किं कृत्वा निजादंशात् चतुर्थमंशं दत्त्वा । मिता.

( ३ ) ये कनीयांसो भ्रातरः पित्रा जातकर्मादिना न संस्कृतास्ते ज्येष्ठैः संस्कृतैः संस्कार्याः । भगिन्यश्चाकृतविवाहसंस्कारा एकस्य पुत्रस्य यावान्निजोंऽशस्तस्मात् चतुर्थमंशं प्रत्येकं प्रदाय संस्कार्या विवाहयितव्याः ।

अप.

( ४ ) भ्रातॄणां संस्कृतानामेवाधिकारमाह स एव याज्ञवल्क्यः— असंस्कृतास्तु संस्कार्या इति । अत्र चकारेण पूर्वसंस्कृतैरित्यस्यानुवृत्तेः विवाहपर्याप्तद्रव्यदाने स्वांशचतुर्थभागदाने वा संस्कृतग्रहणं व्यर्थं स्यात्, अतः कर्तृनियमोऽयम् । तेनानुपनीतभ्रातृमात्रादिसत्त्वे मात्रादेरेवाधिकारो न भ्रातुरित्युक्तं संबन्धतत्त्वादौ । कन्यास्वयंवरे मातुर्दातृत्वे च ताभ्यामेव नान्दीश्राद्धं कार्यम् । तत्र च स्वयं प्रधानसंकल्पमात्रं कृत्वाऽन्यद्ब्राह्मणद्वारा कारयेदिति प्रयोगपारिजाते । वरस्तु संस्कृतभ्रात्राद्यभावे स्वयमेव नान्दीश्राद्धं कुर्यात् न माता, ' पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ' इति निषेधात्, उपनयनेन कर्माधिकारस्य जातत्वाच्चेति पृथ्वीचन्द्रोदयः ।

सिन्धु.१०७३–१०७४

( १ ) यास्मृ. २।१२४ ; विश्व. २।१२८ ; मेधा. २।२७ (=) पू. ; मिता. ; अप. असंस्कृतास्तु ( असंस्कृताश्च ) ; स्मृच. ४९७ (आ.) पू. ; चधा. १०८ पू. ; प्रपा. २० (=) पू. ; श्राका. ५१९ (=) पू. ; गभा. १०१ पू. ; उत. १२७ ; लता. १७ (=) पू. , मुक्ता. ७४२ (=) पू. ; संम. २५ पू. ; सिन्धु. ९४३ पू. : १०७३ : १७४५ (=) पू. ; विपा ४८२ : ३६ ( भाग: २ ) स्मरणम् ; संकौ. २९ (=) पू. : ११८ पू. ; बाल. २।२५० पू. ५७२ प्रथम पादः ; वुम. ३७८ पू. ; संव. १०५ पू. ; संर. १८० पू. : ४९६ .

( ५ ) यज्जातीया कन्या तज्जातीयस्य पुत्रस्य यावान् भागस्तस्य चतुर्थमंशं प्रत्येकं भगिनीभ्यो दत्त्वा ताः संस्कर्तव्या इत्यर्थः । भगिन्यश्चेत्यत्र चकारो भ्रातृभिः पूर्वसंस्कृतैरित्यस्यानुवृत्त्यर्थः । पूर्वसंस्कृतैरित्यनेनानुपनीतस्य भ्रातुरधिकारो व्यावर्त्यते ।

अत्र शूलपाणिः– पूर्वसंस्कृतैर्भ्रात्रादिभिः पितुरूर्ध्वं पैतृकादेव धनादसंस्कृता भ्रातरो जातकर्मादिसंस्कारैः संस्कार्याः । भगिन्योऽपि स्वाद्धनाच्चतुर्थभागं दत्वा तेनैव घनेन विवाहाख्यसंस्कारेण संस्कार्याः इति ।

बृहस्पतिना तु– 'समांशा मातरस्तेषां तुरीयांशाश्च कन्यकाः' इत्यनेन पितृधनाच्चतुर्थांशहरत्वमुक्तम्, तदपि संस्कारार्थमेव । चतुर्थांशेन विवाहासंभवे यावता धनेन संभवति तावद्देयम् । यथा देवलः– 'कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु । अपुत्रकस्य कन्या वा धर्मजा पुत्रवद्धरेत् ॥' इति । स्ववित्तानुसारेणेत्याह विष्णुः– 'अनूढानां तु कन्यानां स्ववित्तानुसारेण संस्कारं कुर्यात्' इति । संर.४९७

## नारदः

[1]पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः ।
मातामहो मातुलश्च सकुल्या बान्धवास्तथा ॥

( १ ) नासं. १३।२० ; नास्मृ. १५।२० मातामहो ( पितामहो ) ; अप. २।६३ सकुल्या बान्धवास्तथा ( सकुल्यो बान्धवस्तथा ) ; स्मृच. ८४ ; धद्रा. ६७९ ; चश्रा. १०९ वाऽनुमते ( चानुमतः ) शेषं अपवत् ; गृर. ४० अपवत् ; पमा. ४८३ वाऽनुमते ( वाऽनुमतौ ) शेषं अपवत् ; मपा. १४६ सकुल्या ( सकुल्यो ) ; प्रपा. ३४२ वाऽनुमते ( वाऽनुमतेः ) सकुल्या बान्धवास्तथा ( सकुल्यो बान्धवस्तनः ) ; मर. १९ अपवत् ; गभा. ७० मपावत् ; संत. ८९२ मते ( मतः ) शेषं अपवत् ; उत. १२७ संवत् ; प्रर. ९९ वाऽनुमते (चानुमते) शेषं अपवत् ; वीमि. १।६४ संवत् ; संप्र. ८२४ वाऽनुमते ( वाऽनुमतेः ) शेषं अपवत् ; व्यम. ११० अपवत् ; मुक्ता. १४० संतवत् ; सेम. ६६ मपावत् ; सिन्धु. १०७४ अपवत्; विपा. ७५६ सकुल्या बान्धवास्तथा ( सकुल्यो बान्धवस्तथा ) ; संकौ. २२१ अपवत् ; भान. १७९ ; प्रका. ९५८ अपवत् ; बाल. २।६४ ; संग. २५९ मपावत् ; मेघ. १४२ अपवत् ; कृम. १०७२ प्रथमः पादः ; संर. ४९८ मते ( मतेः ).

( १ ) सकुल्याः पितृपक्षीयाः, बान्धवाः मातृपक्षीयाः । अस्मिन् वचने भ्रात्रनन्तरं मातामहमातुलयोः क्रमेणाधिकारं प्रतिपाद्य, तदनन्तरं पितृबन्धूनामधिकारः प्रदर्शितः । अयं च क्रमः औरसकन्यकाविषये पुत्रिकादिविषये च वेदितव्यः । पुत्रिकाऽपि औरससमैव, 'औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः' ( यास्मृ. २।१२८ ) इति याज्ञवल्क्यस्मरणात् । क्षेत्रजायां तु क्रमान्तरमाह कात्यायनः– 'स्वयमेवौरसीं दद्यात्पित्रभावे स्वबान्धवाः । मातामहस्ततोऽन्यां हि माता वा धर्मजां सुताम् ॥' । अस्यार्थः– औरसीं पिता स्वयमेव दद्यात्, पित्रभावे बान्धवाः पितृबान्धवाः दद्युः । ततोऽन्यां औरसीव्यतिरिक्तां धर्मजां नियोगेन जाता क्षेत्रजां तु पित्रभावे मातामहो दद्यात् । 'मातामहो दद्यात्' इतिमातामहग्रहणं मातुलस्याप्युपलक्षणं, अतस्तदभावे माता इति क्रमः । युक्त चैतत्, क्षेत्रजाया मातामहावयवप्राधान्यात् । एवं च मातामहादीनां औरसीपुत्रीदाने पितृबन्धुषु विद्यमानेषु अधिकारो नास्ति इत्युक्तम् । तत्र च विषयविशेषे अपवादः श्रूयते– 'दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु । मातुलः समये दद्यादौरसीमपि कन्यकाम् ॥' । पौगण्डः व्यवहाराद्यसमर्थः । समये रजोदर्शनोचितसमयात् पूर्वकाले । मपा.१४६–१४७

( २ ) पिता दद्यात् कन्यां स्वयम् । स्वयंग्रहणमन्यनिरपेक्षप्रामाण्यार्थम् । पित्रा अनुज्ञातो भ्राता वा, पितुरभावे मात्रा वा । तदभावे मातामहः, ततो मातुलः, ततः सकुल्याः सपिण्डाः, ततो बान्धवाः संबन्धिनः । नाभा.

( ३ ) अत्र पितृग्रहणं पितामहोपलक्षणम् । अत्र पित्रभावे पितामहः, तदभावे भ्रातेत्येवं क्रमो द्रष्टव्यः, उदाहृतयाज्ञवल्क्यवचोनुरोधात् । सकुल्या दायादाः, बान्धवा मातृपक्षीयाः । संर.४९८

[1]माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते ।
तस्यामप्रकृतिस्थायां दद्युः कन्यां सजातयः ॥

( १ ) नासं. १३।२१ माता त्वभावे ( नानाऽभावे तु ) ; नास्मृ. १५।२१ सजातयः ( सनाभयः ) ; अप. २।६३ माता त्वभावे ( मानाऽभावे तु ) सजातयः ( स्वजातयः ) ; स्मृच. ८४ ;

( १ ) अत्रापि पूर्वोक्तयुक्तेः* सर्वेषामिति पदेन पितृभ्रातृसकुल्या एव विवक्षिता इति मन्तव्यम् । § गृर.४०

( २ ) स्वजातयः ब्राह्मणादयः । यस्य वर्णस्य या कन्या तज्जातीया अधिकारिण इत्यर्थः । † मपा.१४६

( ३ ) यथोक्तसर्वाभावे माता दद्यात् यदि प्रकृतिस्था वृत्तस्था पतितल्पमुपास्ते चेत् । तस्या चासत्या-मवृत्तस्थाया च समानजातीयां ब्राह्मणकन्या ब्राह्मणः । एवमितरा अपीतरे । नामा.

यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं परीक्ष्य वरयेत्स्वयम् ॥ ‡
स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥ +

* व्यवहारानुसारात् ।

§ वीमि. गृरवत् ।

† सर. मपावत् ।

‡ व्याख्यासंग्रहः स्वयंवरप्रकरणे ( संका. पृ. ६६४ ) द्रष्टव्यः ।

\+ मपाव्याख्यानं ' पिता पितामहः ' इति याज्ञवल्क्यवचने ( संका. पृ. ७२६ ) द्रष्टव्यम् ।

चद्रा. ६७९–६८० सजातयः ( स्वजातय' ) ; चश्रा. १०९ तस्यामप्र ( तस्यां त्वप्र ) शेषं चद्रावत् ; गृर. ४० पू. ; पमा. ४८३ दद्युः कन्यां सजातयः ( कन्यां दद्यु' स्वजातयः ) ; मपा. १४६ चद्रावत् ; प्रपा. ३४२ पमावत् ; मर. १९ चद्रावत् ; गभा. ७० पमावत् ; संत. ८९३ दद्यु' कन्यां सजातय ( कन्यां दद्यु' सनाभयः ) ; उत. १२७ पमावत् ; प्रर. ९९ पमावत् ; वीमि. १।६४ पू. ; संप्र. ८२४ पमावत् ; चम. ११० पमावत् ; सुबा. १४० पमावत् ; संम. ६६ सर्वेषां ( दातॄणां ) शेषं पमावत् ; सिन्धु. १०७४ पमावत् ; विपा. ७५६ पमावत् ; संकौ. २२१ ; मान. १७६ तस्यामप्र ( तस्यां त्वप्र ) शेषं पमावत् ; प्रका. ३५८ पमावत् ; बाल. १।६४ पमावत् , संग. २५९ पमावत् ; संव. १४३ पमावत् ; संर. ४९८ पमावत् .

( १ ) नास्मृ. १३।२२ तस्य वरं परीक्ष्य ( वरं तस्य प्रतीक्ष्य ), नास्मृ. १५।२२ माव्रजेत् ( माश्रयेत् ) परीक्ष्य ( प्रतीक्ष्य ) . अन्ये स्थलादिनिर्देशाः स्वयंवरप्रकरणे ( संका. पृ. ६६४ ) द्रष्टव्याः ।

( २ ) नास्मृ. २।२६ उत्तरार्धे ( तदप्यकृतमेवाहुरस्वतन्त्रः स

( १ ) स्वतन्त्रोऽपि पितृत्वादिना स्वातन्त्र्यार्होऽपि यद्यप्रकृतिस्थत्वेन परतन्त्रो भवति, तदा तत्कृतं कार्यं वाग्दत्तादिकर्माकृतं वेदितव्यम् । अप.१।६३

( २ ) अत्रानधिकारिणा कृते दाने कन्यां प्रत्या-हृत्याधिकारी पुनस्तस्मै एव दद्यादिति मदनः । संप्र.८२४

( ३ ) यदि तु सप्तपदीविवाहहोमादि प्रधानं जातं, तदा अङ्गवैकल्येऽपि नाऽऽवृत्तिर्विवाहस्य । गौडा अप्येव-माहुः । सिन्धु १०७५–१०७६

( ४ ) स्वतन्त्रस्य सर्वदा प्रामाण्ये प्राप्त उच्यते । स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः, तदप्यप्रमा-णम् । यस्मात् तदाऽसावस्वतन्त्रः, अप्रकृतिगमनादेतोः । स्वल्पकृतं प्रमाणमित्येतदुक्तं भवति । नामा.

कामक्रोधाभियुक्तार्तभयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥

कामश्च क्रोधश्चाभियुक्तश्चार्तश्च भयं च व्यसनं चेति द्वन्द्वः । एतैः पीडिताः । आर्ताभियुक्तौ सामर्थ्याद्वर्जयित्वा एतैः प्रत्येकं पीडितशब्दोऽभिसंबध्यते । अथवा आर्ता-भियुक्तावपि भावसाधनौ । ततः सर्वैः प्रत्येकं पीडितशब्दो-ऽभिसंबध्यते । अथवा कामयतेः कर्तरि पचाद्यच् । क्रुधे-रपि तथैव । कामयमानश्च क्रुद्धश्चाभियुक्तश्चार्तश्च काम-क्रोधाभियुक्तार्ताः । भयं च व्यसनं च भयव्यसने, भय-व्यसनाभ्यां पीडिताः भयव्यसनपीडिताः । कामक्रोधाभि-युक्तार्ताश्च भयव्यसनपीडिताश्च कामक्रोधाभियुक्तार्तभय-व्यसनपीडिताः । अथवा भयशब्दोऽपि पचाद्यजन्तः । व्यसनशब्दः ( ? शब्दे ) ' कृत्यल्युटो बहुलम् ' ( पा.

हेतुतः । ) ; नास्मृ ४।४० ; अप १।६१ ; स्मृच. ८४ तदप्य-कृतमेव स्यात् ( अकृतं तदपि प्राहुः ) ; चश्रा. १०९ प्यकृत ( अकृत ) स्वातन्त्र्यस्य ( स्वतन्त्रस्य ) ; मपा. १४५ यत्कार्यं ( यत्कर्म ) ; गभा. ७० स्वतन्त्रोऽपि हि यत्कार्यं ( स्वतन्त्रो यदि तत्कार्यं ) ; उत. १२६ ; संप्र. ८२४ यत्कार्यं ( य' कार्यं ) ; सुबा. १४० स्वातन्त्र्यस्य ( स्वतन्त्रस्य ) ; सिन्धु. १०७५ स्वतन्त्रोऽपि हि यत्कार्यं ( स्वतन्त्रो यदि तत्कार्यं ) ; मान. १७७ चमावत् ; संर. ४९७ सिन्धुवत् .

( १ ) नास्मृ. २।३७ भूत ( युक्त ) ; नास्मृ. ४।४१ .

१।१।१२ ) इति वचनात् ल्युट् कर्तरि । अतः कामश्च क्रोधश्चाभियुक्तश्चार्तश्च भयव्यसनपीडिताश्चेति * द्वन्द्वः । कामेन पीडितः । कामो नाम यत्र ( प्य )प्राप्तप्राप्तीच्छा प्राप्ताविप्रयोगेच्छा च, तथापीहास्वस्थोपलक्षणात् स्त्रीविषयो ( १ ये ) गृह्यते । सा ह्यकार्येषु पुरुषं प्रवर्तयति । क्रोधः पराभिद्रोहबुद्धिः, सोऽपि बुद्धिमोहं करोति । अभियुक्तः सत्येनानृतेन वा परेण राजकुले लेखितः । आर्तो व्याध्यादिना पीडितः । भयं आगामिदुःखज्ञानं, तेन पीडितः, भीतो वा । व्यसनं द्यूतपानादि, सुहृद्वियोगो वा । पीडितः येनचित्कार्यान्तरेण स्वैः परैर्वा । रागश्च द्वेषश्च रागद्वेषौ, ताभ्यां परिगतः परीतः । परीतशब्दः प्रत्येकमभिसंबध्यते रागपरीतो द्वेषपरीत इति । एते पूर्वश्लोके ‘ अप्रकृतिं गतः ’ इत्यनेन सामान्येनोक्ता विशेषिताः । एतैस्तत्कालकृतमप्रमाणम् । नाभा.

[1]कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थस्तु यो भवेत् ।
तत्कृतं स्यात्कृतं कार्यं नास्वतन्त्रकृतं कृतम् ॥

तस्मिन् कुले यो ज्येष्ठः वृद्धः, तथा श्रेष्ठः गुणैः प्रशस्यतमः, तन्त्रस्य नेता प्रकृतिस्थश्च स्वस्थो यदि भवति तत्कृतं प्रमाणं भवति, स चेत् स्वतन्त्रः, पित्राद्यभावादित्यर्थः । नाभा.

## बृहस्पतिः

[2]सहस्रसंमिता धेनुरनड्वान् दश धेनवः ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
तस्मात्सर्वेषु दानेषु कन्यादानं विशिष्यते ॥
कनकाश्वतिला नागा दासीगृहमहीरथाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥
[3]तिस्रः कन्या यथान्यायं पालयित्वा निवेद्य च ।
न पिता नरकं याति नारी वा स्त्रीप्रसूतिनी ॥

यथान्यायं यथोक्तविधिना । स्त्रीप्रसूतिनी कन्याप्रसूतिनी । संप्र.८३४

## कात्यायनः

[4]स्वयमेवौरसीं दद्यात् पित्रभावे स्वबान्धवाः ।
मातामहस्ततोऽन्यां हि माता वा धर्मजां सुताम् ॥ *

( १ ) बान्धवा अत्र स्मृत्यन्तरोक्ताः कन्याप्रदानाधिकारिणः पितामहादयो विवक्षिताः । अन्या अनौरसीम् । धर्मजां नियोगोत्पादिताम् । † गृक.४७

( २ ) अत्र च मात्रा औरसी सर्वथैव न देयेति न विवक्षितम् । तथा च स एव— दीर्घप्रवासयुक्तेष्वित्यादि । वीमि.१।६४

---

* ‘ भयव्यसनपीडिताः ’ इत्यत्र ‘ भयश्च व्यसनश्च पीडितश्च ’ इत्यभिप्रायः । पूर्वं भयव्यसनशब्दयोरपि धर्मिपरत्वसाधनात् ‘पीडितः’ इति स्वतन्त्रा कोटिः । स्वतन्त्रपीडितशब्दोऽग्रे ‘ पीडितः येनचित् ’ इत्यादिना व्याख्यास्यते । धर्मिपरेष्वपि कामादिशब्देषु विशेषणतया भावार्थप्रतीतेर्भाववचना एव कामादिशब्दा अग्रे व्याख्याता इति ध्येयम् ।

( १ ) नार्स. २।३८ ; नास्मृ. ४।४२ स्थस्तु ( स्थश्च ) स्यात्कृतं कार्यं ( तु कृतं प्राहुः ).

( २ ) स्मृच. ५४ : ८० सहस्रसंमिता ( सवत्ससंमिता ) ; चद्रा. ५१२ पूर्वार्धे (सहस्रमेव धेनूनां शतं चानडुहां समम् ।) : ६७७ पूर्वार्धे ( सहस्रमेव धेनूनां शतं चानडुहां समम् । ) ; प्रपा. ३५६ पूर्वार्धे ( सहस्रमेव धेनूनां शतं चानडुहां समम् ।) ; संप्र. ५१६ : ८३३ पूर्वार्धे ( सहस्रमेव धेनूनां शतं वाऽनडुहां समम् । ) ; विपा. ४८ ( भागः २ ) प्रपावत्; संग. २६२ संप्र. पृ. ८३३ वत् .

* मदनपारिजातकारेण कृता व्याख्या ‘ पिता दद्यात्स्वयं कन्याम् ’ इति नारदवचने ( संका. पृ. ७२८ ) द्रष्टव्या । सिन्धु. मपागतम् ।

† गृर. गृकवत् ।

( १ ) स्मृच. ५४, ८० पू. ; चद्रा. ५१२ पू. : ६७७–६७८ ; प्रपा. ३५६ सर्वेषु दानेषु ( सर्वप्रयत्नेन ) ; संप्र. ५१६ च ( तु ) पू. : ८३३ ; विपा. ४८ ( भागः २ ) सर्वेषु दानेषु ( सर्वप्रदानेभ्यः ) ; संग. २६२ .

( २ ) स्मृच. ८० ; मुक्ता. १४४ ( = ) कन्या च कपिला धेनुः ( कन्यका कपिला चैव ) ; मान. १७८ ( = ) मुक्तावत् .

( ३ ) संप्र. ८३४ बृहस्पतिदेवलौ.

( ४ ) गृक. ४७ पित्रभावे ( पिताऽभावे ) ; चश्रा. १०८ स्वबान्धवाः ( तु बान्धवाः ) स्ततोऽन्यां ( स्ततोऽन्यो ) ; गृर. ४० हि ( तु ) शेषं गृकवत् ; स्मृसा. १२ ; मपा. १४७ ; मर. १९ ; वीमि. १।६४ गृरवत् ; संप्र. ८२४ गृकवत् ; सिन्धु. १०७४ ; संर. ४९८ .

(३) बान्धवाः स्वसपिण्डाः । सपिण्डाश्च सनाभयः । 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इति त्रिकाण्डीस्मरणात् । कल्पतरुस्तु बन्धुशब्देन स्मृत्यन्तरोक्तान् पितृष्वसृसुतादीन् व्याचष्टे । अभावोऽत्रासान्निध्यमसामर्थ्यं च लक्षयति । संप्र.८२५

[1]दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु ।
माता तु समये दद्यादौरसीमपि कन्यकाम् ॥

(१) पोगण्डः व्यवहारासमर्थः । समये कन्यादानोचिते काले । गृक.४७

(२) पौगण्डेषु पञ्चाब्दातिकिञ्चिदधिकेषु । कृम. १०७५

## व्यासः

[2]पितृतत्पितृभ्रातृषु पितृव्यज्ञातिमातृषु ।
पूर्वाभावे परो दद्यात् सर्वाभावे स्वयं व्रजेत् ॥

[3]यदि सा दातृवैकल्याद्रजः पश्येत्कुमारिका ।
भ्रूणहत्याश्च यावत्यः पतितः स्यात्तदप्रदः ॥

[4]कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥

## देवलः

[5]तिस्रः कन्या यथान्यायं पालयित्वा निवेद्य च ।
न पिता नरकं याति नारी वा स्त्रीप्रसूतिनी ॥

## यमः

[1]देशानां तु सहस्राणां युक्तानां धुर्यवाहिनाम् ।
सुपात्रे विनियुक्तानां कन्या विद्या च तत्समम् ॥

[2]गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥

[3]कूपारामप्रपाकारी तथा वृक्षादिरोपकः ।
कन्याप्रदः सेतुकारी स्वर्गमाप्नोत्यसंशयम् ॥

## मरीचिः

[4]नाभिचिन्नरकं याति न कन्यादो न तत्सुतः ।
विश्वजित्संमितो यज्ञः कन्यादानं महत्फलम् ॥

## संवर्तः

[5]अलङ्कृत्य त्वलङ्कारैर्वराय सदृशाय वै ।
ब्राह्मेण तु विवाहेन कन्यां दद्यात् सुपूजिताम् ॥
[6]स कन्यायाः प्रदानेन श्रेयो विन्दति पुष्कलम् ।
सद्भिरित्युच्यते साधुः कीर्तिं प्राप्नोति पुष्कलाम् ॥

इति 'करणः साधुशब्दात्परो द्रष्टव्यः । गृक.८०

[7]ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् ।
प्राप्नोति पुरुषी दत्त्वा होममन्त्रैश्च संस्कृताम् ॥

(१) गृक. ४७ युक्तेषु (मुक्तेषु) पौगण्डेषु (पोगण्डेषु); गृर. ४१ पौगण्डेषु (पोगण्डेषु); स्मृसा १२; मपा. १४७ माता तु (मातुलः); वीमि. ११६४; संप्र. ८२५; मिन्धु. १०७१; संग. २५९ तु (च).

(२) व्यासस्मृ. २१६.

(३) व्यासस्मृ. २१७; मर. १९ रजः (ऋतुं) भ्रूणहत्याश्च यावत्यः (तद्भ्रूणहत्यया सद्यः).

(४) प्रपा. ३५५ कन्यशृङ्ग; संप्र. ८३०-८३१ पार्श्वयोः (पृष्ठतः) पृष्ठतः (सर्वतः); विपा. ४६ (भागः २); संर. ५५२ (=).

(५) गृक. ८१; चद्रा. ६७८ प्रसूतिनी (प्रसविनी); गृर. ६८; संप्र. ८३४ बृहस्पतिदेवलौ.

(१) स्मृच. ५४, ८०; संप्र. ५१६; मुक्ता. १४४ कन्या विद्या च (कन्या विद्याच).

(२) स्मृच. ८०.

(३) उत. १३८.

(४) स्मृच. ८०; मुक्ता. १४४ (=) न तत्सुतः (यतः स्मृतः) महत्फलम् (महाफलम्).

(५) संस्मृ. ६०. शेषः स्थलादिनिर्देशः ब्राह्मविवाहे (संका. पृ. ६७४) द्रष्टव्यः ।

(६) संस्मृ. ६१ सद्भिरित्युच्यते साधुः (साधुवादं स वै सद्भिः); गृक. ७९-८० प्राप्नोति (चाप्नोति); गृर. ६७ प्राप्नोति (आप्नोति); संप्र. ८३३ स कन्यायाः (कन्यकायाः).

(७) संस्मृ. ६२ पुरुषी (पुरुषो); गृक. ८० मन्त्रैश्च (मन्त्रगु); स्मृच. ८० पुरुषी (कन्यकां) मरीचिः; गृर. ६७ होमानिरा (होमन्त्रिरा) शीर्षं गृकवत्; प्रपा. ३५६ स्मृचवत्; निप. २८४ (=) पुरुषी (पुरुषान्); संप्र. ८३३ गृकवत्; मुक्ता. १४४ (=) गुणी (गुणं) पुरुषी (कन्यकां) मन्त्रैश्च (मन्त्रैर्गु); विपा. ५० (भागः २) स्मृचवत्.

पुरुषीं कन्याम्। यद्यपि संस्कृतां दत्त्वेत्यन्वये दाना-त्संस्कारस्य पूर्वभावित्वं प्रतीयते; तथापि 'मुखं व्यादाय स्वपिति' इतिवद्दानोत्तरकालत्वमेव संस्कारस्यावगन्तव्यम्। अर्थक्रमस्य बलवत्त्वात्। * संप्र.८३३

तां दत्त्वा तु पिता कन्यां भूषणाच्छादनाशनैः।
पूजयन् स्वर्गमाप्नोति नित्यमुत्सववृद्धिषु ॥

स्वर्गे नित्यं चिरकालीनं उत्सवानां वाद्यादीनां वर्तमानेषु सत्सु दत्त्वा इति संबन्धः। तत्फलमाह मत्स्यपुराणम्– 'मङ्गल्यानि च वाद्यानि ब्रह्मघोषं च गीतकम्। ऋद्ध्यर्थं कारयेद्धीमानमङ्गल्यविनाशनम् ॥' उत.१३८

अलङ्कृत्य तु यः कन्यां भूषणाच्छादनादिभिः।
दत्त्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः ॥

कूकुदश्चाश्वमेधी च प्राणदाता भयेषु च।
समं यान्ति रथा एषां त्रयो वै नात्र संशयः ॥

(१) सालङ्कारकन्यादाता कूकुदः 'सत्कृत्यालंकृता कन्यां यो ददाति स कूकुदः' इत्यभिधानात्। 'दातुं भूषितकन्यायां कूकुर्दे प्रदावपि' इति वैजयन्ती-दर्शनाच्च। प्रपा.३५६

(२) 'सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूपदः' इति कोशः। क्वचित् 'कूकुदः' इति पाठः। न चेदं फलश्रवणात् काम्यमेवेति वाच्यं, अप्रदाने दोषश्रवणात्। अतो जातेष्टिवन्नित्यं काम्यं च। संम. ६६

## अत्रिः

वालुकाभिः कृतो राशिर्यावत्सप्तर्षिमण्डलम्।
गते वर्षसहस्रे तु लवमेकं विशीर्यते।
क्षयश्च दृष्टस्तस्यापि कन्यादाने न विद्यते ॥

## बृहत्पराशरः

[2]पिता पितामहो भ्राता माता मातामहोऽपि वा।
कन्यादाः स्युः क्रमेणैते पूर्वाभावे परः परः ॥

## व्याघ्रपादः

[3]द्रव्येण चात्मसात्कृत्य परकीयां तु कन्यकाम्।
धर्मेण विधिना कन्यां दत्त्वाऽथ सदृशे वरे।
द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् ॥

दातरि कन्यादानाभावात् कन्यादानाशक्तौ व्याघ्रपादाचार्य आह– द्रव्येणेति। विपा.७५६

## कश्यपः

[4]अग्निष्टोमातिरात्राणां शतं शतगुणीकृतम्।
प्राप्नोति पुरुषो दत्त्वा होममन्त्रैरलङ्कृताम् ॥
[5]यस्तु सत्येन धर्मेण पिता चार्पयते सुताम्।
स प्रेत्य लभते स्थानं यथा दक्षः प्रजापतिः ॥

---

* गृक., गृर. संप्रगतम्।

(१) संस्मृ. ६३ पूजयन् (पूजयेत्); गृक. ८१ दत्त्वा तु (च दत्त्वा) नाशनैः (नासनैः); गृर. ६८ तु (च) नाशनैः (नासनैः); उत. १३८ नाशनैः (नासनैः) वृद्धिषु (वृद्धिषु); संत. ८९२ तु (च) शेषं उतवत्; संप्र. ८३४ तु (च) नित्यमुत्सव (नित्यं वत्सर).

(२) चद्रा. ६७९ नादिभिः (नाशनैः); प्रपा. ३५६ तु यः (मुदा); संप्र. ८३२; मुक्ता. ४२ उत्तरार्धे (दद्यात्स्वर्गमवाप्नोति पूजयन्नुत्सवादिषु।); संम. ६६; विपा. ४८ (भागः २) दत्त्वा स्वर्गमवाप्नोति (दद्यात्स्वर्गं समाप्नोति); संकौ. २१०; प्रका. ३६५. कल्कत्तामुद्रितस्मृतिपुस्तके संस्मृ. ६४ एवंस्वरूपः श्लोको दृश्यते– 'अलङ्कृत्य पिता कन्यां भूषणाच्छादनासनैः। दत्त्वा स्वर्गमवाप्नोति पूजितस्तु सुरादिषु ॥' इति।

(३) चद्रा. ६८९ भयेषु (द्विजेषु) एषां (ह्येते) वह्निपुराणम्; प्रपा. ३५६ एषां (येषां); संप्र. ८३२ कूकुद (कूपद); संम. ६६; विपा. ४८ (भागः २) प्रपावत्; संकौ. २११; बाल. १।१२ पृ. ४१ सर्वं चद्रावत्; कृभ. ११३३–११३४ रथा एषां (रथैरेते): संर. ५०१.

(१) चद्रा. ६७८ वालुकाभिः (वालुकायाः) लव (पल) दृष्टस्तस्यापि (दृश्यते तस्याः); प्रपा. ३५६ विशीर्यते (विशिष्यते); संप्र. ८३२–८३३; विपा. ४९ (भागः २) वर्षे (लय) लवमेकं (एकमेकं).

(२) वृपसं. ६।२९.

(३) विपा. ७५७.

(४) कस्मृ. १०१४; चद्रा. ६७८ शतगुणीकृतम् (शतगुणं शतम्) उत्तरार्धे (लभते कन्यकां दत्त्वा मन्त्रहोमैरलङ्कृताम्।).

(५) कस्मृ. १०१५; गृक. ८० चार्पयते (स्पर्शयते); गृर. ६८ गृकवत्; संप्र. ८३३ गृकवत्.

(१) सत्येन छद्मादिरहितेन । स्पर्शयते वरेण संयोजयति ।
* गृक.८०

(२) धर्मस्य सत्यता शुल्कादिराहित्यं, स्पर्शयते ददाति ।
गृर.६८

[1]अनडुहां सहस्राणां दशानां धुर्यवाहिनाम् ।
सुपात्रे विधिवद्दानं कन्यादानं च तत्समम् ॥

धुर्यः वृषभः, वृषभदशसहस्रदानजन्यपुण्यसमपुण्यं सुपात्रे विधिवत् कन्यादानेन जन्यते इत्यर्थः ।
गृर.६७

[2]पिता वा यदि वा माता भ्राता वा यदि वेतरः ।
कन्यानृतकरा मूढा यां गतिं यान्ति तां शृणु ॥
[3]अनिवर्ती यथा श्येनो गच्छत्येव यमालयम् ।
एवं नरकमायान्ति कन्यानृतकरा नराः ॥

इतर उक्तेभ्योऽन्यः कन्यादाता । कन्यानृतकराः कन्यादानप्रतिज्ञायामसत्यत्वप्रयोजकाः ।
गृर.४९

[4]पुंनः संपद्यते नारी गतमात्मानमात्मनि ।
अस्थिमात्रे त्वचं भित्त्वा शुष्कं तेजो बलं तथा ॥

## ऋष्यशृङ्गः

[5]महीदातुश्च गोदातुः कन्यादातुश्च ये रथाः ।
कन्यादानानुगाः पश्चात्समं यान्ति त्रयो रथाः ॥
[1]अयाचितप्रदातुश्च सत्यवादिन एव च ।
नित्यं स्वाध्यायशीलस्य समं यान्ति त्रयो रथाः ॥

## विश्वामित्रः

[2]कन्यामलङ्कृतां दत्त्वा समाहूय नराधिप ।
विद्यार्थिने ब्राह्मणाय कन्यादानं तदुच्यते ॥

## मत्स्यपुराणम्

[3]शौक्ले युक्तमसंदिग्धं बहुद्वारमहाफलम् ।
दशपुत्रसमा कन्या याऽपि स्याच्छीलवर्जिता ॥

## लिङ्गपुराणम्

[4]कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ।
यद्दत्त्वा सर्वदानानां फलं प्राप्नोति मानवः ॥
[5]कन्यां लक्षणसंपन्नां सर्वदोषविवर्जिताम् ।
मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत् ॥
आत्मीकृत्य तु संस्थाप्य वस्त्रं दत्त्वा नवं शुभम् ।
भूषणैर्भूषयित्वा च गन्धमाल्यैरथार्चयेत् ॥
निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकम् ।
उभयोश्चित्तमालोच्य उभौ संपूज्य यत्नतः ॥
दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥
[6]दासीदासासनाद्यं च भूषणानि गृहं ततः ।
क्षेत्राणि च धनं चापि तथाऽन्यानि प्रदापयेत् ॥
[7]यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥

---

* सप्र. गृकवत् ।

(१) गृक ८० ; चदा. ६७८ ; गृर. ६७ सहस्राणां (सहस्राणि) धुर्य (धूर्य) ; निप. २८४ (=) सहस्राणां (सहस्राणि) विधिवद्दानं (दीयते दान) : संप्र. ८३३.

(२) कस्मृ. ९।६ उत्तरार्धे (नरश्च कृतपापानां गतिं यां यान्ति तां शृणु ।) ; गृक. ५८ वेतरः (देवरः) ; गृर. ४३.

(३) कस्मृ. ९।७ उत्तरार्धे (एवं तु नरकं यान्ति कन्यास्वनृतकारकाः ।) ; गृक. ५८ यमालयम् (यथाऽनिलः) ; गृर. ४९ गृकवत्.

(४) कस्मृ. ९।८.

(५) चदा. ६८९ वह्निपुराणम् ; प्रपा. ३५६ स्मृत्यन्तरम् ; संप्र. ८३१ ये रथाः (ये तथा) ; विपा ४८ (भाग २) सप्रवत्, क्रमेण श्लोकौ ; बाल. १।१२ पृ. ४१ कन्यादातुश्च (नित्यदातुश्च) समं यान्ति (समायान्ति) आग्नेयपुराणम् ; संग. २६२ सप्रवत्.

(१) चदा. ६८९ वह्निपुराणम् ; प्रपा. ३५६ स्मृत्यन्तरम् ; संप्र. ८३१.

(२) चदा. ६८०.

(३) उत. १३८.

(४) चदा. ६७७ पू. ; प्रपा. ३५६ ; संप्र. ८३१ ; विपा. ४८ (भाग २) ; संग. २६२.

(५) चदा. ६८७-६८८.

(६) चदा ६८८ गृहं ततः (विशेषतः) चापि (वाऽपि) ; प्रपा. ३५५ ; संप्र. ८३१ गृहं (गृहे) ; विपा. ४६ (भाग २) ततः (तथा) व्यासः ; संग. २६१.

(७) चदा. ६८८ ; प्रपा. ३५६ वह्निपुराणम् ; संप्र. ८३२ रुद्रलोके (ब्रह्मलोके) ; विपा. ४९ (भागः २) सप्रवत्, आग्नेयेऽप्युक्तम् ; संग. २६२ संप्रवत्.

## स्कन्दपुराणम्

[1]वैवाहिकप्रदानं या यो ददाति तथा नरः ।
विमानेन विचित्रेण किङ्किणीजालमालिना ।
महेन्द्रभवनं याति सेव्यमानोऽप्सरोगणैः ॥
[2]वैवाहिकप्रदानं यो न करोति नराधमः ।
पापीयान् स हि जायेत सर्वलोकविगर्हितः ॥

## कूर्मपुराणम्

[3]कन्यामलङ्कृतां विप्तशक्त्या दत्त्वा सकौतुकम् ।
गौरीलोकमवाप्नोति विप्राय गुणशालिने ॥

## भविष्यपुराणम्

[4]कन्यां चैवानपत्यानां ददतां गतिरुत्तमा ॥
[5]कन्यामलङ्कृतां दद्यादनादाय नराधिप ।
द्विजाय वेदविदुषे कन्यादानं तदुच्यते ॥

## नारदीयपुराणम्

[6]चतुर्णामाश्रमाणां तु गृहस्थः श्रेष्ठ उच्यते ।
गृहस्थाच्च गृहं श्रेष्ठं गृहाच्छ्रेष्ठा वरस्त्रियः ॥
तस्मात् कन्याप्रदानस्य नान्यदानैस्तुला स्मृता ।
अतः प्रदेया विद्वद्भिः कन्या सर्वार्थकाङ्क्षिभिः ॥

## अग्निपुराणम्

[7]एवं यच्छन्ति ये कन्यां यथाशक्त्या स्वलङ्कृताम् ।
विवाहकाले संप्राप्ते यथोक्ते सदृशे वरे ॥
[1]क्रमात्क्रमं क्रतुशतमनुपूर्वं लभन्ति ते ।
तावत्स्वर्गं लभेद्यावत्सर्वलोम्नां तु सङ्कः ॥

[2]कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम् ।
ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥

[3]तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रितः ।
वर्षान्ते गृह्यते तस्मात्तिल एकस्तु यावता ।
संक्षयं लभते तावद्ब्रह्मलोकोऽस्य निश्चितम् ॥

[4]शतगव्यूतिमानेन संचितैर्वृषरोमभिः ।
विशीर्यते तुरालिङ्गं वर्षे कन्याप्रदस्तथा ।
तावत्स्वर्गं लभेद्यावत्सर्वलोम्नां तु संक्षयः ॥

[5]कन्यादानं दरिद्रस्य यो ददाति परिष्कृतम् ।
पूर्तधर्ममवाप्नोति यथावद्विधिकल्पितम् ।
तस्मात्कन्या प्रयत्नेन दातव्या श्रेय इच्छता ॥

## आदित्यपुराणम्

[6]श्रुत्वा कन्याप्रदानं तु पितरः सपितामहाः ।
विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥

---

( १ ) चद्रा. ६९० तथा नरः ( दयापरः ) भवनं ( भवने ) ; प्रपा. ३५६ महेन्द्र ( माहेन्द्र ) सेव्यमानो ( दीप्यमानो ) ; संप्र ८३२ नरः ( परः ) सेव्यमानो ( वीक्ष्यमाणो ) ; विपा. ४८ ( भागः २ ) ददाति तथा नरः ( दद्याच्च नरोत्तमः ) सेव्यमानो ( वीज्यमानो ) ; बाल. १।१२ पृ. ४१ वा ( च ) तथा नरः ( दयापरः ) भवनं ( भवने ) द्वितीयार्धं नास्ति ; संर. ५०१ वा ( हि ) तथा नरः ( दयापरः ) विमानेन विचित्रेण ( विमानेनार्कवर्णेन ) सेव्यमानोऽप्स ( सेव्यते ह्यप्स ).

( २ ) संर. ५०१ .

( ३ ) चद्रा. ६७९ .

( ४ ) पमा. १७८ ; उत. ३३९ .

( ५ ) चद्रा. ६८० ; बाल. १।१२ पृ. ४१ अशुद्धः पाठः .

( ६ ) चद्रा. ६७९ .

( ७ ) चद्रा. ६८८ वरे ( नरे ) ; बाल. १।१२ पृ. ४१ यथोक्ते ( यथोक ) .

( १ ) चद्रा. ६८८ पू. ; बाल. १।१२ पृ. ४१ क्रमात्क्रमं ( क्रमोत्क्रम ) .

( २ ) चद्रा. ६७९ शक्ति ( शक्त्या ) ; प्रपा. ३५६ ; संप्र. ८३२ ; विपा. ४९ ( भागः २ ) .

( ३ ) चद्रा. ६८९ ; प्रपा. ३५६ तस्मात्तिल एकस्तु ( तस्य तिलराशेस्तु ) निश्चितम् ( निश्चितः ) ; संप्र. ८३२ तस्मात्तिल एकस्तु ( तस्य तिलो राशेस्तु ) ; विपा. ४९ ( भागः २ ) संप्रवत् .

( ४ ) चद्रा. ६८९ .

( ५ ) चद्रा. ६८९–६९० ; बाल. १।१२ पृ. ४१ तस्मात्कन्या प्रयत्नेन ( यस्मात्कन्याप्रदानेन ) .

( ६ ) गृक. ८१ विमुक्ताः ( मुक्ता वै ) ; चद्रा. ६८८ तु ( च ) सपिता ( प्रपिता ) वह्निपुराणम् ; गृर. ६८ ; प्रपा. ३५६ श्रुत्वा ( कृत्वा ) तु ( च ) सपिता ( प्रपिता ) वह्निपुराणम् ; निप. २८५ (=) सर्व ( पूर्व ) ; संप्र. ८३४ गृकवत् ; विपा. ४९ ( भागः २ ) सर्वं चद्रावत् ; संकौ. २११ तु ( च ) वह्निपुराणम् ; प्रका. ३६५ संकौवत् ; बाल. १।१२ पृ. ४१ तु ( च ) पितरः सपिता ( पितरश्च पिता ) स्कान्दे इत्युक्तम् ; संग. २६२ गृकवत् .

## अनिर्दिष्टकर्तृकवचने

[1]पिता पितामहो भ्राता पितृव्यो गोत्रजो गुरुः ।
मातामहो मातुलो वा कन्यादा बान्धवाः क्रमात् ॥

[2]अन्नविद्यावधूत्राणगोभूरुक्माश्वहस्तिनाम् ।
दानान्युत्तमदानानि ह्युत्तमद्रव्यदानतः ॥

## रेणुकारिका:

[3]पिता दद्यात्ततः कन्यां भ्राता वाऽनुमते पितुः ।
मातामहो मातुलो वा सकुल्यो बान्धवोऽपि वा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि तिष्ठति ।
तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः ॥
प्रकृतिस्थः पिता मुख्यस्तदभावे पितामहः ।
भ्रात्रादयस्तस्य नाशे प्रकृतिस्था यथाक्रमम् ॥
स्वतन्त्रोऽपि हि यः कश्चित्कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः ॥

[1]यो दद्याद्विधिना कन्यां द्विजाय गुणशालिने ।
स तत्र फलमाप्नोति तत्त्वतस्तदहं ब्रुवे ॥
ज्योतिष्टोमातिरात्राभ्यां शतं शतगुणीकृतम् ।
प्राप्नोति कन्यकां दत्त्वा होममन्त्रैश्च संस्कृताम् ॥
दशानां तु सहस्राणां युक्तानां धुर्यवाजिनाम् ।
सुपात्रे विनियुक्तानां कन्या दद्याच्च (१ चिया च) तत्समम् ॥
गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥

---

(१) धप्र. ४८ पितृव्यो गोत्रजो गुरु (ज्ञातयो गोत्रजाग्रज); ज्योनि. १५९.

(२) मुक्ता. १४४.

(३) रेका. १८०, १८१, १८३, १८४ पृ. ६१.

(१) रेका. ६६–७० पृ. ६६–६७.



# * समानक्रियादिविचारः

## वसिष्ठः

पुंत्रोद्वाहान्नैव पुत्र्याः कदाचित्
आषण्मासात्कार्यमुद्वाहकर्म ।
ऊर्ध्वं तद्वन्मण्डनान्मुण्डनं च
प्रत्युद्वाहं नैव पुण्यद्वयं च ॥
निर्गमात्पूर्वतो न प्रवेशः शुभ-
स्तत्र संवत्सरान्तावधिः कथ्यते ।
निर्गमः स्त्रीविवाहः पुनः पुंविवाहः
प्रवेशो न चै मण्डनान्मुण्डनम् ॥
पुंत्रीविवाहात् परतः सदैव
शुभप्रदं पुत्रविवाहकर्म ।
पुत्रद्वयं नैव ऋतुद्वयेऽपि
पुत्रीद्वयं वाऽपि कदाचिदेव ॥
ऐकोदरप्रसूतानामेकस्मिन् वत्सरे यदि ।
पाणिग्रहो भवेन्नूनं तत्रैका विधवा भवेत् ॥
उद्वाहश्चैकजन्यानां न विधेय ऋतुत्रये ।
सोऽपि हन्ति तयोरेकं पक्षमब्दत्रयात् भृशम् ॥
[4]विवाहस्त्वेकजन्यानामेकस्मिन्नुदये कुले ।
नाशं करोत्येकवर्षे स्यादेका विधवा तयोः ॥

उदयः लग्नम् । प्रपा. ३१६

पुंत्रोद्वाहान्नैव पुत्रीविवाहोऽपि ऋतुत्रये ।
अब्दान्तरे मुण्डनं च न कदा मुण्डनद्वयम् ॥
ऐकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोः ।
न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ॥
ऐकोदरभ्रातृविवाहकृत्यं
स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचु-
र्न मुण्डनं मण्डनतोऽपि कार्यम् ॥
ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।
तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥

---

( १ ) वसं. ३२।२३१–२३२ .

( २ ) वसं. ३२।२३३ ; विसौ. १५ ऋतुद्वये ( ऋतुत्रये ) .

( ३ ) वसं. ३२।२३४–२३५ .

( ४ ) वसं. ३२।२३६ हरत्वेक ( हश्चैक ) करोत्येक ( करोत्यैव ) तयोः ( ऽथवा ) ; प्रपा. ३१६ जन्याना ( जानाना ) स्मृत्यन्तरम् ; विसौ. १३ स्यादेका ( तत्रैका ) स्मृत्यन्तरम् ; धप्र. ५२ ( = ) एकस्मि ( नैकस्मि ) स्यादेका विधवा तयोः ( यथैका विधवा भवेत् ) ; संप्र. ७२७ स्यादेका ( स्याद्वैका ) स्मृत्यन्तरम् ; संम. ६९ स्मृत्यन्तरम् ; विपा. ७३० स्मृत्यन्तरम् ; संकौ. १९६ हरत्वेकजन्याना ( हारत्वेकजाताना ) स्मृत्यन्तरम् ; संग. ३४३ संप्रवत् , स्मृत्यन्तरम् ; संर. ४९२ जन्याना ( जानाना ) स्मृत्यन्तरम् .

( १ ) वसं. ३२।२३७ ; प्रपा. ३१६ अब्दान्तरे (अब्दान्तरात्) न कदा ( नैकदा ) स्मृत्यन्तरम् ; प्रर. ९८ ( = ) प्रपावत् ; धप्र. ५३ विवाहोऽपि ( विवाहः स्यात् ) शेषं प्रपावत् , संहितासारावल्यां इत्युक्तम् ; चम. १०९ (=) प्रपावत्; ज्योनि. १६१ विवाहोऽपि ( विवाहस्तु ) शेषं प्रपावत् , कात्यायनः .

( २ ) वसं. ३२।२३८ न पुत्रीद्वय ( पुत्रिकाद्वय ) प्रदद्यात्तु ( न दद्यात्तु ) ; प्रपा. ३१६ (=) एकजन्ये ( नैकजन्ये ) नैक ( रैक ) ; गभा. ९८ तु कन्ये ( च कन्ये ) जन्ययोः ( जन्मनोः ) दद्यात्तु (दद्याद्वै) (=) ; प्रर. ९८ जन्ययोः ( जन्मनोः ) (=) ; धप्र. ५२ न पुत्रीद्वयमेकस्मै ( कन्ये द्वे तु न चैकस्मै ) ( = ) ; विसौ. १५ ; संप्र. ७२६ प्रदद्यात्तु कदाचन ( दद्यादिति पराशरः ) (=) ; सिन्धु. १११२ प्रपावत् , नारदः ; विपा. ७३१ दद्यात्तु ( दद्याच्च ) (=) ; ज्योनि. १६२ (=) ; प्रका. ३५७ (=) प्ररवत् ; संग. १७४ कदाचन ( कथंचन ) पराशरः ; संव. १४३ जन्ययोः ( जन्मनोः ) दद्यात्तु ( दद्याच्च ) .

( ३ ) गभा. १०८ ; संप्र. ७२७ मदनरत्नेऽपीत्युक्तम् ; सिन्धु. ११०६–११०७ ; विपा. ७३२ ज्योतिषे इत्युक्तम् ; संग. ३४२ मदनरत्नेऽपीत्युक्तम् ; पुम. ४४९ नारदः ; संर. ४९४ .

( ४ ) गभा. १०८ ; संप्र. ७२७ ; सिन्धु. ११०७ ;

---

* विवाहादिरूपाणां समानक्रियाणां विवाहचौलादिरूपाणामसमानक्रियाणां च यौगपद्य-क्रम-कालक्षेपणादिविचार इत्यर्थः ।

( १ ) [ एकोदरभ्रातृविवाहकृत्यं ] अस्यापवाद-सूत्रैव– ऋतुत्रयस्येति । संप्र.७२६

( २ ) अत्रत्यतुशब्देन विवाहभिन्नमेकोदरविषयं मङ्गलद्वयमब्दभेदे [ अपि ] न भवतीति ज्ञाप्यते । संकौ.१९६–१९७

द्विशोभनं त्वेकगृहेऽपि नेष्टं
शुभं तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सवो वा
द्वारेऽथवाऽऽचार्यविभेदतो वा ॥
ऐकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत् ॥

( १ ) कार्यत्रयं चौलोपनयनविवाहरूपम् । भिन्नमातृकाणां तु न निषेधः । तत्रापि पूर्वं मुण्डनं तत उपनयनं ततो विवाह इति क्रमः । तदुक्तं च्यवनेन — ' आदौ चौलं ततो मौञ्जी विवाहश्च शुभप्रदः । मातृभेदे बुधैरुक्तो मातृैक्ये न कर्हिचित् ॥ ' । विसौ १४

' ( २ ) अस्यार्थः— एकस्मिन् गृहे नवदिनमध्ये शोभनद्वयं न कार्यं, किन्तु नवदिनानन्तरं कार्यम् । औत्सुक्येनावश्यकर्तव्ये द्वारभेदेन गृहभेदेन आचार्यभेदेन वा कार्यम् । तथैकस्मिन् गृहे सोदराणां होमवत्संस्कारत्रयं न कार्यं, भिन्नोदरप्रसूतानां तु न दोषः । संप्र.७२९

( ३ ) शातातपग्रहणेन भिन्नोदरविषयाग्नित्रयनिषेधस्य अनित्यता ज्ञाप्यते । संकौ.१९७

( ४ ) एकोदरप्रसूताना इति निर्देशाद्भिन्नोदरप्रसूताना शोभनत्रयं भवति, भिन्नोदरप्रसूतानामपि नेति शातातप इति विकल्पः । कृभ.११०७

ऐकोदरप्रसूतानां न सहोपनयक्रिया ॥
न पुंविवाहोर्ध्वमृतुत्रयेऽपि
विवाहकार्यं दुहितुः प्रकुर्यात् ।
न मण्डनाच्चापि हि मुण्डनं च
गोत्रैकतायां यदि नाब्दभेदः ॥

( १ ) गोत्रैकतायामिति त्रिपुरुषसापिण्ड्ये द्रष्टव्यम्, प्रवेशनिर्गमसहचरितमुण्डनमण्डनयोस्तथा दर्शनात् । तथा च मेधातिथिः– ' पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् । प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने ॥ ' । संप्र.७२९–७३०

( २ ) गोत्रैकत्वं च सापिण्ड्ये सति द्रष्टव्यम् । विपा.७३२

ऐकलग्ने द्विलग्ने वा द्वे गृहे यत्र शोभने ।
तयोरेको विनष्टः स्याद्वर्धते न यथास्थितम् ॥

( १ ) इत्येकगृहे शोभनद्वयनिषेधः स चतुर्थदिवसार्वाग्विषयः । विसौ.१४

---

विपा. ७३३ मदनरत्ने ; संकौ. १९६ नारदः ; संग. ३४२ मदनरत्ने ; पुम. ४५० नारदः ; मंर. ४९४ .

( १ ) गभा. १०८ ; विसौ. १४ , संप्र. ७२९ मुत्सवो ( मुत्सुको ) ; मुक्ता. १४६ ( द्विशोभन स्वेकगृहेषु नेष्ट शुभं तु कुर्यान्नवतः पुरस्तात् । आवश्यके शोभन उत्सुकश्चेदाचार्यभेदेन तथैव कुर्यात् ॥ ) गर्गः ; सिन्धु ११०७ ; विपा. ७३४ ; संकौ. १९७; प्रका. ३५७, संग ३४४ द्विशोभन ( द्विशोभने ) नेष्टं ( नेष्टे ) शेषं सप्रवत् ; पुम. ४५० ; कृभ. ११०६ प्रथमः पादः ; संर. ४९६ .

( २ ) गभा. १०८ ; विसौ. १५ नाग्नि ( नात्र ) : संप्र. ७२९ ; मुक्ता. १४६ एकोदर ( एकमात् ) त्रय ( द्वय ) शातातपः ; सिन्धु. ११०७ ; विपा. ७३४ त्रयं ( द्वयं ) , संकौ. १०७ ; संग. ३४४ .

( १ ) विसौ. १५ .

( २ ) प्रपा. ३१६ तु' प्र ( तुश्च ) ; गभा. १०८ ; धप्र. ५२ ( = ) तु' प्र ( तुश्च ) पू. : ५३ ; विसौ. १४ प्रकुर्यात् ( प्रकल्पयेत् ) चतुर्थपादं विना, मिहिर' ; संप्र. ७२९ ; मुक्ता. १४५ त्रयेऽपि ( त्रयेण ) प्रकुर्यात् ( प्रकल्पयेत् ) गोत्रैकतायां यदि नाब्दभेदः ( स्यान्मुण्डनान्मण्डनमन्वगेव ) अङ्गिराः ; संम. ६९ न च ( न तु ) संहितासारावल्याम् ; सिन्धु. ९२० उत्त. ' ११०६ ; विपा. ७३२ ( = ) उत्त. ; भान. १७८ मुक्तावत् , अङ्गिरा' ; संग. ३४५ ; पुम. ४४९ प्रकुर्यात् ( प्रकल्प्यम् ) गोत्रैकतायां यदि नाब्दभेदः ( स्यान्मुण्डनान्मण्डनमन्वगेव ) वराहमिहिरः ; संर. ४९४ .

( ३ ) विसौ. १४ ( = ) यथास्थितम् ( इति स्थिति' ) ; विपा. ७३४ ; पुम. ४५० विसौवत् ; संर. ४९६ .

( २ ) चतुर्थीदिनादर्वाग्विषये तत्रैव वसिष्ठः– एकलग्ने द्विलग्ने वेति । यत्र गृहे द्वे शोभने द्वौ विवाहाविति संबन्धः । पुम.४५०

## नारदः

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।
न तयोर्व्रतमुद्वाहान्मङ्गले नाप्यमङ्गलम् ॥

( १ ) मङ्गले विवाहादौ । अमङ्गलं श्राद्धादि । संम.६९

( २ ) तयोः पुत्रपुत्र्योर्मध्ये एकस्योद्वाहानन्तरमन्यस्योपनयनं नेत्यर्थः । कुम.११०६

[2]नैकस्मिन् वत्सरे कार्यौ गेहोद्वाहौ कथंचन ॥
[3]विवाहश्चैकजन्यानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥

विवाहस्त्विवति । तुशब्दः एवकारार्थे । अन्ययोगव्यवच्छेदस्तदर्थः । तथा चान्याब्दप्रवेशेऽपि षण्मासमध्ये एकोदरस्य विवाहभिन्नं मङ्गलं नेत्यर्थः । कुम.११०६

[4]न वेदिकायां न गृहे न शाले
न मण्डपे युग्मकरग्रहौ तु ।
यथा पथि प्रत्यभिदर्शने च
तदा द्वयोरेकतरं जहाति ॥

मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मङ्गलम् ।
ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमङ्गलम् ॥

ज्येष्ठमङ्गले विवाहोपनयने । लघुमङ्गलं चौलादि । अनेन वचनेन समावर्तनमपि निषिध्यते, तस्यापि लघुमङ्गलत्वादिति केचित् । अन्ये तु पित्रादिकर्तृकपुत्रादिसंस्कारपरं, न तु स्वकर्तृकस्वसंस्कारपरम् । समावर्तनस्य स्वकर्तृकत्वान्नायं निषेधस्तत्रेति प्राहुः । अत्र प्रमाणाभावाच्चिन्त्यमेतत् । एवं च विवाहोत्तरमुपनयनोत्तरं वा, ऋतुत्रयादर्वाक् चौलं न कार्यमित्युक्तं भवति । सर.४९३

[1]एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥

( १ ) वत्सरपरिहाराशक्तौ षण्मासं वा परिहरेत् । तथा च वराहः– ' विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥ ' । संप्र.७२६

( २ ) न समानक्रियामित्यनेन द्वयोश्चौले द्वयोर्व्रतबन्धौ द्वयोर्विवाहौ वा न कुर्यादिति बोध्यते । मातृभेदे विधीयते इत्येतेन एकस्य पुंसो विवाहद्वयमप्येकदिने निषिद्धं, मातृभेदाभावात् । सर.४९३

[2]समानाऽपि क्रिया कार्या मातृभेदे तथैव च ।
विवाहे दुहितुः कार्यो न विवाहश्चतुर्दिनम् ॥

( १ ) ज्योना. २७।१४९ नाप्य ( नान्य ); प्रपा. ३१६ हो न ( होऽपि ) नाप्य ( नान्य ); गभा. १०८ मङ्गले नाप्यमङ्गलम् ( मण्डनादपि मुण्डनम् ); संप्र. ७३० गभावत् ; संम. ६९ तयोः (कार्य); सिन्धु. ११०६ गभावत्; विपा. ७३२ गभावत्; ज्योनि. १६१ ज्योनावत्; संग. ३४६ गभावत् ; पुम. ४४९ हो न ( हं च ) उत्तरार्धे ( न कार्यं व्रतमुद्वाहान्मङ्गले नाथ मङ्गलम् । ); कुम. ११०८–११०९ समवत्; संर. ४९३ संमवत् .

( २ ) विपा. ७३२ ; ज्योनि. १६४ गेहोद्वाहौ ( गृहोद्वाहौ ) भास्करव्यवहारे ; संग. ३२६ ज्योनिवत् , ज्योतिर्निबन्धे ; संर. ४९३ ज्योतिर्ग्रन्थे .

( ३ ) ज्योना. २७।१५० ; संप्र. ७२६ श्चैकजन्यानां ( स्त्वेकजातानां ) वराहः ; संम. ६९ श्चैकजन्यानां ( श्चैव कन्यानां ) ; सिन्धु. ११०६ संप्रवत् , वराहः ; ज्योनि. १६१ ; पुम. ४५० ; संर. ४९३ संमवत् .

( ४ ) पुम. ४५० .

( १ ) धप्र. ५३ उत्त. , संहितासारावल्याम् ; संकौ १९६ ; ज्योनि. १६१ कात्यायनः ; कुम. ११०६ ; संर. ४९३ ज्योतिर्निबन्धे .

( २ ) विसौ. १५ ; संप्र. ३८६ ज्योतिर्निबन्धे : ७२६ गर्गः ; विपा. ७३० विधीयते ( समाचरेत् ) ; संकौ. १९६ ; ज्योनि. १६१ (=) उत्तरार्धे (एकक्रिया न कर्तव्या क्रियाभेदो विधीयते।); बाल. १।५३ पृ १९६ ; संग. ३४२ गर्गः ; पुम. ४५० ; संर. ४९३ . वृद्धनतौ अप्येतद्वचनं द्रष्टव्यम् । ;

( ३ ) विसौ. १४.

शुभकृत्पुत्रिकोद्वाहात्पश्चात् पुत्रकरग्रहः ।
एकतिथ्यामपि प्राह भार्गवो भिन्नवेलया ॥
ऐकोदरोद्भवसुतासुतयोर्विवाहं
मासान्तरे मनुवसिष्ठपराशराद्याः ।
इच्छन्ति मङ्गलमथाशु वदन्ति गर्गाः
केचित्तथैकदिवसेऽप्युदयप्रभेदे ॥
ऐकलग्नेऽपि भिन्नांशे वसिष्ठात्रिपराशराः ।
द्वयोर्विवाहमिच्छन्ति पृथक् ग्रामेऽथ मण्डपे ॥
प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।
न चैकजन्मनोः पुंसोरेकजन्ये तु कन्यके ॥

( १ ) प्रत्युद्वाहो विनिमयविवाहः । अन्यस्मै कन्या प्रतिश्रुत्य तत्कुलोत्पन्ना कन्या नोद्वहेदित्यर्थः । तथा एकस्मै द्वे कन्ये न विवाह्ये । तथैकोदरोत्पन्ने कन्ये ऐकोदर्योर्न विवाह्ये । विसौ.१५

( २ ) प्रत्युद्वाहः यत्पुत्राय स्वकन्या दीयेत तत्कन्या स्वपुत्राय न कार्येत्यर्थः । सप्र ७२६

( ३ ) नैकस्मै इति । देयमिति शेषः । यद्यपि यथाश्रुते दुहितृद्वयमित्युपादानान्मृताया प्रथमदुहितरि द्वितीयदुहितृदानेऽनुमतिर्लभ्यते, तथापि द्वयस्य दुहितृनिष्ठस्य दानकर्मत्वबाधात् द्वे दुहितरौ न दद्यादित्यर्थो वाच्यः । तत्र यदि साहित्यं समासार्थो विवक्षितः, तदा सहिते दुहितरौ न दद्यादित्यर्थः स्यात् । तत्र जीवन्त्या प्रथमायामसाहित्येन द्वितीयादाने विरोधो न स्यात् । अथ साहित्यमतन्त्रम् । तदा कथं मृताया दुहितरि द्वितीया दीयेत, जीवनस्यानुपादानात् । तस्माद्दत्तदुहितृकाय दुहितरं न दद्यादित्यर्थ इति । कुभ.१११२

नूनं कदाचिदुद्वाहौ नैकदा मुण्डनद्वयम् ॥

* ' नूनं कदाचिदुद्वाहौ ' इति सापत्नपरम् । मुण्डनद्वयं सापत्नयोरपि न भवति । × संम ६९

## बृहस्पतिः

ऐकोदरप्रसूतानामेकस्मिन्नेव वत्सरे ।
विवाहो नैव कर्तव्यो गर्गस्य वचनं यथा ॥
ऐकस्मिन् दिवसे त्वेकलग्ने भिन्नांशके तथा ।
एकगर्भोत्थयोर्वत्रिन् विवाहः शुभकृद्भवेत् ॥
देशभेदात्कुलाचारादिमे धर्माः प्रकीर्तिताः ॥
ऐकलग्ने द्विलग्ने वा गृहे यत्र द्विशोभनम् ।
द्वयोरन्यद्विनष्टं स्याद्वर्धतेऽन्यदिति स्थितिः ॥

( १ ) मुक्ता. १४६ ; आन. १७९ पू., स्मृतिरत्ने .
( २ ) मुक्ता. १४६ ; आन. १७९ इच्छन्ति ( वाञ्छन्ति ).
( ३ ) मुक्ता. १४६ गर्ग'.
( ४ ) ज्योना. २७।१५१ तृद्वयम् ( तुर्द्वयम् ) ; प्रपा. ३१६ उत्तरार्धे ( नवकजन्ययोः जन्मनो' ( जातयो' ) ; गभा. ९८ उत्तरार्धे ( नवकजन्ययोः पुंसोरेकजन्ये च कन्यके । ) ; प्रर. ९८ जन्मनो ( जातयो' ) तु पुंसोरेकजन्ये च कन्यके । ) ; प्रर. ९८ जन्मनो ( जातयो' ) तु (च) ; विसौ १५ न चैक ( नैवैक ) ; संप्र. ७२६ नैव कार्या (च) ; विसौ १५ न चैक ( नैवैक ) ; संप्र. ७२६ नैव कार्या ( न कर्तव्यो ) दुहितृ ( कन्यका ) जन्मनो ( जन्ययो' ) रेक ( नैक ) प्रयोगपारिजाते ; चम. १०८ गभावत् ; मुक्ता. १४८ उत्तरार्धे ( न चैकजातयो. पुंसो' प्रयच्छेद्दुहितृद्वयम् । ) हारीतः ; संम. ६९ ; सिन्धु. ११११२ जन्मनोः ( जन्ययो ) ; विपा ७३१ (=) विसौवत्, उत्त ; संकौ १९६ नैकस्मै ( नैकस्मिन् ) शेषं सिन्धुवत् ; आन. १८० (=) नैकस्मै ( नैकस्मिन् ) शेषं मुक्तावत् ; ज्योनि. १६२ सिन्धुवत् ; प्रका. ३५७ सिन्धुवत् ; संग. १७४ जन्मनोः ( जन्ययोः ) रेक ( नैक ) ; संव. १४३ तु (च) ; पुम. ४५० न चैकजन्मनो' ( तथैकजन्ययोः ) तु (च) ; संर. ४११ सिन्धुवत् .

* सिन्धोरपि अयमेव पाठ इति निश्चीयते, कृष्णम्भट्टेन मयूखवत् व्याख्यानत्वात् ।
× कुभ. संमवत् ।
( १ ) ज्योना. २७।१५२ पृ ६२ नूनं कदाचिदुद्वाहौ ( नैवं कदाचिदुद्वाहो ) ; प्रपा ३१६ ज्योनावत्, गभा. ९८ ज्योनावत् ; विसौ. १५ द्वाहौ ( द्वाहे ) ; प्रर. ९८ ज्योनावत् ; संम. ६९ ; सिन्धु ११११२ ज्योनावत् ; विपा. ७३१ (=) ज्योनावत् ; ज्योनि १६२ ज्योनावत् ; प्रका. ३५७ नूनं ( नैवं ) शेषं विसौवत् ; संव १४३ ज्योनावत् ; पुम. ४५० विसौवत् .
( २ ) उत १२० ऋेत्र वत्सरे ( क्वपि वासरे ) ' वासरे ' इत्यत्र 'वत्सरे' इति ओड्रदेशीया' पठन्ति व्यवहरन्ति च । ; विसौ. १३ पराशरः ; मुक्ता. १४५ वराहमिहिरः ; पुम. ४४९ मिहिरः.
( ३ ) मुक्ता. १४६ र्वत्रिन् ( र्वापोः ) ; आन. १७९ .
( ४ ) मुक्ता. १४६ .
( ५ ) मुक्ता. १४६ द्विनष्टं ( द्विनष्टे ) द्वर्धते ( द्वर्धते ) ; आन. १७९ .

एकमातृप्रसूतानामेकस्मिन्नेव वत्सरे ।
एक एव न कुर्वीत विवाहं व्रतबन्धनम् ॥
एकः कर्ता शुभं कुर्यान्न पुत्र्योः पुत्रयोरपि ।
षण्मासे वाऽष्टमासे वा पूर्णे त्वब्दे शुभावहम् ॥

## कात्यायनः

कुले ऋतुत्रयादर्वाङ्मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥

न कुर्यान्मङ्गलत्रयमिति । चौलोपनयनविवाहरूपं कार्यत्रयम् । उक्तं च– ' आदौ चौलं तथा मौञ्जी विवाहश्च शुभप्रदः । मातृभेदे बुधैरुक्तो मातुरैक्ये न कर्हिचित् ॥ '।
संग.३४५

कुर्वन्ति मुनयः केचिदन्यस्मिन् वत्सरे लघु ।
लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ॥
पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥
चौलं मुण्डनमेवोक्तं वर्जयेद्वरणात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ॥

. ( १ ) उभयतः विवाहात्प्रागूर्ध्वं चेत्यर्थः । अत्र मौञ्जीमात्रस्य चोभयतो विधानाद्विवाहात्परं चौलसहितमौञ्ज्यनुष्ठानं न सिध्यति, चौलनिषेधस्यात्राप्यव्याहतत्वात् ।
संप्र.३८६

( २ ) वरणात् तदुपक्रमकालाद्वाग्दानादित्यर्थः ।
संकौ.११४

( ३ ) चौलस्य मुण्डनप्रधानत्वादिति तदाशयः । मौञ्ज्यां मुण्डनमङ्गं न प्रधानमिति मौञ्जी न मुण्डनमित्यस्याशयः । वरणात्परं कन्यावरयोर्वरणोत्तरं कन्यावरयोर्वरणप्रभृतीति यावत् ।
संर.४९४

अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ।
अभेदेऽपि विवाहः स्यान्न कुर्यादेकमण्डपे ॥

यद्यपि मौञ्जितो मौञ्जी विवाहाद्वा विवाहोऽभ्यनुज्ञातस्तथापि दिनभेदो मण्डपभेदश्चावश्यक इत्यर्थः ।
कृभ.११०८

## वृद्धवसिष्ठः

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।
न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम् ।
नैकस्मिन्वत्सरे कार्यौ गेहोद्वाहौ कथंचन ॥

एकोदरीकरतलग्रहणं यदि स्यात्
एकोदरस्थवरयोः कुलनाशनं च ।

---

( १ ) मुक्ता. १४६ .

( २ ) मुक्ता. १४६ वाऽष्टमासे वा ( वा चतुर्मासे ) त्वब्दे ( वर्षे ) ; ज्ञान. १७९ पू. ; कृभ. ११०५ ( = ) .

( ३ ) प्रपा. ३१६ कुर्यान्मङ्गलत्रयम् ( चेष्टं मण्डनत्रयम् ) स्मृत्यन्तरम् ; गभा १०९ ; प्रर. ९८ ( = ) पू. ; धप्र. ५३ नेष्टो ( पश्चात् ) ; संप्र. ३१४ : ७३० मण्डनान्न तु मुण्डनम् ( मुण्डनान्न तु मण्डनम् ) ; चम. १०९ ( = ) पू. ; सिन्धु. ९२१, ११०७ : विपा. ७३३ ; संकौ. ११३ ; ज्योनि. १६१ ; प्रका. २०७ ; संग. ३४५ चतुर्थः पादः ; संव. ९० ; कृभ. ११०९ निर्देशमात्रम् ; संर. ९०० .

( ४ ) गभा. १०९ : संप्र. ७३० वत्सरे ( वासरे ) ; सिन्धु. ११०८ ; ज्योनि. १६१ नैमित्तिक ( नैयमिकं ) .

• ( ५ ) गभा. १०९ ; संप्र. ३१४–३१५ , ३८६ , ७३० ; संम. ६९ ( = ) ; सिन्धु. ११०८ ; विपा. ७३४ गर्गः ; संकौ. ११३–११४ ; ज्योनि. १६१ ; प्रका. २०७ ; बाल. २।४० ( = ) मित्युक्त ( मित्याहुः ) उत्त. ; संग. २१३ उत्त. , शार्ङ्गीये इत्युक्तम् : ३४६ ; संव. ९१ ; पुम. ४५० कन्योद्वाहस्तु ( पुत्र्युद्वाहस्तु ) ; संर. ४९४ : ९०१ मङ्गलम् ( मुण्डनम् ) .

( ६ ) गभा. १०९ वरणात् ( मण्डनात् ) ; संप्र. ३१५ , ३८६ , ७३० ; सिन्धु. ११०८ गभावत् ; विपा. ७३४ गभावत् , गर्गः ; संकौ. ११४ ; ज्योनि. १६१ यतो ( ततो ) ; संग. ३४६ ; संव. ९१ ; पुम. ४५० गभावत् ; संर. ४९४ .

( १ ) गभा. १०९ स्तत्र ( स्त न ) अभेदेऽपि विवाहः ( अभेदे तु विनाशः ) ; संप्र. ७३० ; सिन्धु. ११०८ अभिन्ने ( अभिन्न ) अभेदेऽपि विवाहः ( अभेदे तु विनाशः ) ; विपा. ७३४ ( अभिन्न. वत्सरेऽपि स्याददर्भेद तु कारयेत् । अभेदे तु विनाशः स्यान्न कुर्यादेकमण्डपे ॥ ) गर्गः ; ज्योनि. १६१ रेऽपि स्यात् ( रे यस्य ) विवाहः स्यात् ( दिनस्यापि ) ; संग. ३४६ ; कृभ. ११०९ चतुर्थः पादः .

( २ ) विपा. ७३२ वृद्धवसिष्ठः , नारदोऽपि च .

( ३ ) प्रपा. ३१६ एकोदरी ( एकोदरा ) एकाब्दिके ( एकाब्दके ) रोधे ( रोधः ) क्रमेण स्मृत्यन्तरम् ; धप्र. ५२.

एकाब्दिके तु विधवा भवतीह कन्या
नद्यन्तरे तु शुभदं पृथुशैलरोधे ॥

## व्याघ्रः

[1]पुत्रोद्वाहात्परं दोषो दुहितुः स्याद्विवाहके ।
न च दोषः सपिण्डेषु न दोषो भिन्नमातृषु ॥

## शातातपः

[2]पुत्र्युपयमनादूर्ध्वं षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विवाहाद्व्रतबन्धनम् ॥

उपयमनं विवाहः । विवाहाद्व्रतबन्धन विवाहादूर्ध्वं षण्मासाभ्यन्तरे व्रतबन्धनं उपनयनं न कुर्वीत । एतानि वचनानि यमलव्यतिरिक्तविषयाणि । मुक्ता.१४६

[3]मण्डनं मुण्डनं चैव न कुर्यादेकवत्सरे ।
मुण्डनं प्रथमं कुर्यान्मण्डनं तु ततः परम् ॥

## पराशरः

[4]एकोदरप्रसूतानामेकस्मिन्नेव वासरे ।
विवाहं नैव कुर्वीत महानद्यन्तरे शुभम् ॥

## अत्रिः

[5]कुले ऋतुत्रयादर्वाङ्मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमं चैव न कुर्यान्मण्डनत्रयम् ॥

मण्डनात् उद्वाहानन्तरं ऋतुत्रयादर्वाक् न मुण्डनं चूडोपनयनादि कार्यम् । तथा वधूप्रवेशानन्तर पुत्री-निर्गमनं न कार्यम् । मण्डनत्रयमब्दमध्ये न कुर्यात् । ननु पुत्रीविवाहोत्तरं पुत्रोद्वाहे मण्डनद्वयं युक्तं, मण्डनत्रयं तु न युज्यते, सजातीयक्रियाया ऋतुत्रयमध्ये निषेधात् । उच्यते, भिन्नमातृकयोः समानक्रियाया विधानाद्यथोचितं मण्डनत्रयं प्राप्त तदप्यनेन वचसा निषिध्यते । विसौ.१४

[1]पुत्रीपरिणयादूर्ध्वं पुत्रस्योद्वाहनक्रिया ।
न दुष्टा स्यान्मातृभेदे गृहभेदेऽपि चैव हि ॥
[2]भ्रात्रोर्युगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
विवाहोऽष्टदिनादर्वाक् नैकस्मिन् मण्डपे गृहे ॥
[3]एकः कर्ता शुभं कुर्यान्न पुत्र्योः पुत्रयोरपि ।
षण्मासे वा चतुर्मासे पूर्णे वर्षे शुभावहम् ॥

## अङ्गिराः

[4]एकमातृप्रसूतानां शुभद्वयमृतुत्रये ।
न कुर्याद्वर्षभेदे तु त्रिमासादूर्ध्वमाचरेत् ॥
[5]फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलम्बनम् ॥

---

·(=) अशुद्धिबहुलं ; विसौ. १४ एकोदरी ( एकोदरा ) न च ( नं स्यात् ) के तु ( के च ) न्तरे तु ( न्तरेऽपि ) ; चम. १०९ कुलनाशनं च ( च कुलक्षयं स्यात् ) एकाब्दिके ( एकाब्दके ) भवतीह ( भवतीति ) वसिष्ठ: ; संभ. ६९ एकाब्दिके ( एकाब्दक ) भवतीह ( भवतीति ) स्मृत्यन्तरम् ; प्रयोगपारिजाते स्मृत्यन्तरे ; विपा. ७३०-७३१ स्मृत्यन्तरम् ; ज्योनि. संकौ. १९६ एकाब्दिके ( एकाब्दके ) स्मृत्यन्तरम् ; ज्योनि. १६१ भवतीह ( भवतीति ) न्तरे तु ( न्तरेऽपि ) शार्ङ्गधरः ; संर. ४९२ न्तरे तु ( न्तरेऽपि ) चतुर्थः पादः, शार्ङ्गधरीयेऽपि .

(१) धप्र. ५३ .

(२) मुक्ता. १४६ पुत्रो ( यत्रो ) ; भान. १७८ ऽपि वा ( पिता ) .

(३) मुक्ता. १४५ .

(४) विसौ. १४ .

(५) विसौ. १४; पुम. ४५० मण्डनत्रयम् ( मङ्गलत्रयम् ); संर. ४९३ पुमवद् . कात्यायनेऽप्येतत्सदृशः श्लोको द्रष्टव्यः ।

(१) विसौ. १५ द्वाहनक्रिया ( द्वाहिकी क्रिया ) ; पुम. ४५० न दुष्टा ( निर्दुष्टा ) ; संर. ४९३ .

(२) विसौ. १५ ; पुम. ४५० स्वसृयुगे ( युगे स्वस्रोः ) तथा ( ऽपि वा ) विवाहोऽष्टदिनादर्वाक् ( विवाहोऽब्ददला-दर्वाक् ) .

(३) विसौ. १५ ; पुम. ४५० .

(४) मुक्ता. १४५ ; भान. १७८ .

(५) प्रपा. ३१६ संहितासारावल्यां इत्युक्तम् ; गभा. १०८ सारावल्याम् ; प्रर. ९८ संहितासारावल्याम् ; धप्र. ५३ उत्तरार्धे ( अब्दभेदे न दोषः स्यादित्याचार्योऽब्रवीद्यथा । ) संहितासारा-वल्याम् ; विसौ. १५ संहितासारावल्याम् ; संप्र ७२७ संहिता-सारावल्याम् ; चम. १०९ सारावल्याम् ; मुक्ता. १४५ तु ( च ) भेदात् ( भेदे ) ; संभ. ६९ लम्बन ( लङ्घन ) सारावल्याम् ; सिन्धु. ११०७ सत्रवत् , सारावल्याम् ; विपा. ७३३ सायणीये ; ज्योनि. १६१ नर्तुत्रयविलम्बनम् ( न ऋतुत्रयलङ्घनम् ) संहिता-सारावल्याम् ; भान. १७८ मुक्तावत् ; संग. १४२ कुर्वीत सारावल्याम् ;

न पुंविवाहोर्ध्वमृतुत्रयेण
विवाहकार्यं दुहितुः प्रकल्पयेत् ।
न मण्डनान्नापि हि मुण्डनं च
स्यान्मुण्डनान्मण्डनमन्वगेव ॥
उद्वाह्य पुत्रीं न पिता विदध्यात्
पुत्र्यन्तरस्योद्वहनं न जातु ।
यावच्चतुर्थीदिनमङ्गलस्य
समापनं तावदतो विदध्यात् ॥

## आश्वलायनः

ऐकमातृप्रसूते वा कन्ये वा पुत्रकौ तयोः ।
सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनम् ॥

## कश्यपः

मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् ॥

( १ ) मौञ्जीबन्ध इति । 'उद्वाह्य पुत्रीम्' इत्येतत्प्रकरणे एतच्छिवनात्, 'पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये । न कार्यं व्रतमुद्वाहान्मङ्गले नाप्यमङ्गलम् ॥' इति मयूखे सामान्यतो विवाहानन्तरमुपनयननिषेधाच्च । पुत्रीविवाहोत्तरं मौञ्जीबन्धः, एकविवाहानन्तरमपरविवाहश्च, षण्मासाभ्यन्तरे तं न कुर्यादित्यर्थः । 'मौञ्जीबन्धमथोद्वाहम्' इति द्वितीयान्तपाठो युक्तः । पुत्रीविवाहानन्तरं मौञ्जीबन्धं एकविवाहोत्तरमपरविवाहं च न कुर्यात् । पुत्रोद्वाहानन्तरं पुत्र्युद्वाहं च न कुर्यात् । एते त्रयो निषेधा अविभक्तपराः, न तु विभक्तपरा इत्यर्थः । कृभ ११०८–११०९

( २ ) अत्रोत्तरत्र पुत्र्युद्वाहं न कुर्वीतेति श्रवणात्पूर्वत्रोद्वाहः पुत्रस्य द्रष्टव्यः । अत्रैवमर्थः— मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि कर्तव्यः, परं तु षण्मासाभ्यन्तरे पुत्रोद्वाहात्परं पुत्र्युद्वाहं न कुर्वीत, यदि विभक्ता भ्रातरस्तदा षण्मासाभ्यन्तरे पुत्रोद्वाहोत्तरं पुत्र्युद्वाहकरणे न दोष इति । एतच्चातिसंकटे द्रष्टव्यम् ।
संर. ४९५

## च्यवनः

आदौ चौलं ततो मौञ्जी विवाहश्च शुभप्रदः ।
मातृभेदे बुधैरुक्तो मातुरैक्ये न कर्हिचित् ॥*

## गर्गः

ऐकोदरप्रसूतानां विवाहो नैकवत्सरे ॥
ऐकमातृप्रसूतानां कन्यकापुत्रयोर्द्वयोः ।
सहोद्वाहो न कर्तव्यस्तथा नैवोपनायनम् ॥
ऐकमातृप्रसूतानामेकस्मिन्वत्सरे यदि ।
विवाहो नैव कर्तव्यो निर्गते तु ऋतुत्रये ।
ग्रामान्तरे तु कर्तव्यः कर्तव्यो नैकवेश्मनि ॥
ऐकमातृप्रसूतानामेकस्मिन् वासरे यदि ।
विवाहं नैव कुर्वीत कृते त्वेको विनश्यति ॥
[६] भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
न जातु मङ्गलं कुर्यादेकस्मिन्मण्डपेऽहनि ॥

---

( कुर्वन्ति ) संहितासारावल्याम् ; पुम. ४५० तु ( वा ) सारावल्याम् .

( १ ) मुक्ता. १४५ ; आन. १७८ .

( २ ) मुक्ता. १४५ .

( ३ ) संप्र. ३८६ ; धम. १६ प्रसूते वा कन्ये ( प्रसूतानां कन्या ) ; विपा. ४८३ (=) पूर्वार्धे ( एकमातृप्रसूतानां कन्ययोः पुत्रयोर्द्वयोः । ) ; बाल. ११९४ प्रसूते वा ( प्रसूतानां ) ; कृभ. ९४९ प्रसूते वा ( प्रसूतेषु ) पारिजाते ; संर. १९४ बालवत्, स्मृतिसारे स्पष्टम् .

( ४ ) गभा. १०९ ; मिन्धु ११०८ ; विपा. ७३५ ; कृभ. ११०९ 'मौञ्जीबन्धमथोद्वाहं' इति द्वितीयान्तपाठो युक्तः ; संर. ४९५ .

* 'एकोदरप्रसूतानाम्' ( संका. पृ. ७३७ ) इति वसिष्ठवचने विसौव्याख्यानं, 'कुले ऋतुत्रयादर्वाक्' ( संका. पृ. ७४० ) इति कात्यायनवचने संगव्याख्यानं च द्रष्टव्यम् ।

( १ ) विसौ. १५ ; संग. ३४५ (=) ततो ( तथा ) .

( २ ) विसौ. १३ .

( ३ ) मुक्ता. १४५ .

( ४ ) मुक्ता. १४५ ; आन. १७८ निर्गते ( ऽनिर्गते ) कर्तव्यः कर्तव्यो ( कर्तव्यं कर्तव्यं ) .

( ५ ) विपा. ७३० ; धम. १०८ वासरे यदि ( वत्सरे यदि ) सारावल्यामित्युक्तम् .

( ६ ) प्रपा. ३११ भ्रातृयुगे स्वसृयुगे ( भ्रातृयुग्मस्वसृयुग्मे च

पुंत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

( १ ) एतद्वचनद्वयं भिन्नमातृविषयम् ।

प्रपा. ३१६

( २ ) तदेतद्भिन्नमातृकविषयकमिति केचित् । ऐकमातृक्येऽप्यनुकल्पोऽयमित्यन्ये ।

चम १०९

( ३ ) भ्रातृयुगमस्य स्वसृयुगमस्य भ्रातृस्वसृयुगमस्य चैकस्मिन्नहन्येकस्मिन्मण्डपे मण्डनं न कुर्यात् । पृथगयं निषेधः, समुच्चये मानाभावात् । इदं च वचनद्वयं भिन्नमातृजविषयमिति केचित् । तन्न, मानाभावात्, एकोदराहितैकशुक्रजन्यापत्ययोर्मुख्यस्य भ्रातृशब्दस्यान्यत्र गौणत्वाच्च ।

सम. ६९

ऐकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः ।
क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च ॥

एतच्चाभ्यनुज्ञापरं न तु नियमविधिरिति द्रष्टव्यम् ।

सर. ४९६

ऐकस्मिंस्तु गृहे कुर्यादेकामेव शुभक्रियाम् ।
अनेकास्तु प्रकुर्वाणः स नाशमधिगच्छति ॥

दोषः स्यादूर्ध्वमुद्वाहात्कुले चेदुपनायनम् ।
न दोषः पुरुषोद्वाहादूर्ध्वं कन्याविवाहके ॥
पुंत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरे पिता ।
पुत्र्युद्वाहं न कुर्वीत विवाहाद्व्रतबन्धनम् ॥

अत्र उपनयनपदं विवाहस्याप्युपलक्षणम् ।

विसौ. १४

पुंत्रीविवाहात्परतः सदैव
शुभप्रदं पुत्रविवाहकर्म ।
पुत्रद्वये नैव ऋतुत्रयेऽपि
पुत्रीद्वये वाऽपि कदाचिदेव ॥

नं मण्डनान्मुण्डनमूर्ध्वमिष्टं
न पुत्रयोर्मुण्डनमेकवर्षे ।
न पुंविवाहोर्ध्वमृतुत्रयेऽपि
विवाहकार्यं दुहितुश्च कुर्यात् ॥

## वात्स्यः

स्त्रीविवाहः कुले निर्गमः कथ्यते
पुंविवाहः प्रवेशो वसिष्ठादिभिः ।
निर्गमादादितो न प्रवेशो हित-
स्तत्र संवत्सरान्तोऽवधिः कीर्तितः ॥

## स्मृत्यन्तरम्

कुले ऋतुत्रयादर्वाक् न कुर्यान्मण्डनद्वयम् ।
मण्डनान्मुण्डनं चैव प्रवेशान्न तु निर्गमः ॥

---

मङ्गलं ( मण्डनं ) ; गभा. १०९ न जातु मङ्गल कुर्याद् ( न कुर्यान्मङ्गल किंचित् ) ; विसौ. १४ भ्रातृयुगे ( भ्रातृद्वये ) पराशरः ; संप्र. ७२७ स्वसृयुगे ( स्वसृयुग्मे ) ; चम. १०९ भ्रातृयुगे ( भ्रात्रोर्युगे ) मङ्गल ( मण्डन ) ; संम. ६९ प्रपावत् ; सिन्धु. ११११ गभावत् ; विपा. ७३१ (=) पूर्वार्धे ( भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वसृयुगे तथा । ) ; संकौ. १९६ भ्रातृयुगे ( भ्रात्रोर्युगे ) ; संग. ३४२ गभावत् ; पुम. ४५० पूर्वार्धे ( कन्यायुगे भ्रातृयुगे कन्याभ्रातृयुगे तथा । ) नारदः ; संर. ४९२ पूर्वार्धे ( भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वस्रोश्च युग्मके । ) कुर्यात् ( काय ).

( १ ) प्रपा. ३१६ ; विसौ. १४ ; धप्र ५२ स्मृत्यन्तरम् ; संप्र. ७२७ ; चम. १०९, मुक्ता. १४६ ; संम. ६९ ; विपा. ७३१ नारदः ; संकौ १९६ ; ज्योनि १६१ स्मृतिसारावल्याम् ; आन. १७८ (=) ; संग ३४२ ; पुम. ४४९ ; संर. ४९५.

( २ ) गभा. १०९, विसौ. १४ प्राप्ते ( चापि ) पराशरः ; सिन्धु. ११११ ; विपा. ७३१ (=) ; संग. ३४४ प्राप्ते ( चैव ) ; संर. ४९६.

( ३ ) मुक्ता. १४६ ; आन. १७८ कार्यतु प्र ( का यन्तु ).

( १ ) धप्र. ५३.

( २ ) विसौ. १४.

( ३ ) विसौ. १४.

( ४ ) प्रपा. ३१६ योर्मुण्डन ( योर्मण्डन ) संहितासारावल्याम् ; धप्र. ५२ (=) योर्मुण्डन ( योर्मण्डन ) येऽपि ( ये तु ) ; विसौ. १४ प्रपावत्, सारावल्याम् ; संप्र. ७२९ ; संम. ६९ पूर्वार्धे ( मापत्ययोर्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मुण्डनमेकवर्षे । ) च कुर्यात् ( प्रकुर्यात् ) संहितासारावल्याम् ; विपा. ७३२ प्रपावत्, संहितासारावल्याम् ; संग. ३४५ ; संर. ४९४ च कुर्यात् ( प्रकुर्यात् ) शेषं प्रपावत्, संहितासारावल्याम्.

( ५ ) विसौ. १५.

( ६ ) प्रपा. ३१६.

[1]न चैकजन्ययोः पुंसोर्विवाहस्त्वेकवासरे ।
अब्दभेदे शुभं केचिदाहुर्महति संकटे ॥
कृते चैवोपनयने भवेद्यावद्दिनत्रयम् ।
कन्यादानं न कर्तव्यमित्याहुरिति सूरयः ॥
व्रतबन्धनमेकस्य तथैकस्य विवाहकम् ।
एकस्मिन्नपि वाऽन्यस्मिन्दिने कुर्यात्तु वै पिता ॥

## अनिर्दिष्टकर्तृकवचनानि

[2]एकोदरप्रसूतानामेकस्मिन्नेव वत्सरे ।
न कुर्यान्मङ्गलत्रीणि विवाहं चोपनायनम् (?) ॥
एकोदरप्रसूतानां विवाहं चोपनायनम् ।
चौलकर्म तथा चेति मङ्गलत्रयमुच्यते ॥
एकस्मिन्मण्डपे चैव न कुर्यान्मङ्गलत्रयम् ।
यदि भिन्नोदराणां स्यात्समाप्यैकं पुनर्भवेत् ॥
[3]भिन्नोदराणामेकस्मिन्न कुर्यान्मण्डपे पिता ।
समाप्य मङ्गलं चैकं पुनः कुर्याच्च नान्दिकम् ॥
[4]न समानक्रियां कुर्याद्विना यमलजातयोः ॥
[5]गिरिर्वाऽपि महास्रोतो यं देशं व्यवधास्यति ।
तं पृथग्देशमित्याहुर्विवाहादिर्न दुष्यति ॥
नदीतटविभेदेन विवाहोपनयौ चरेत् ।
मासर्तुतिथिभेदांश्च तदुद्दिश्य न चिन्तयेत् ॥

## संग्रहकारः

[6]एकोदराणां पुंसां स्याद्विवाहो नैकवत्सरे ।
भिन्नोदराणां कुर्वीत स्त्रीणां चैव न संशयः ॥

## मेधातिथिः

[7]पृथङ्मातृजयोः कार्यो विवाहस्त्वेकवासरे ।
एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा ॥
पुष्पपट्टिकयोः कार्यं दर्शनं न शिरःस्थयोः ।
भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् ॥

( १ ) वासरशब्दो वत्सरादीनामुपलक्षणम् ।

संप्र.७२८

( २ ) यत्तु ज्योतिर्निबन्धे मेधातिथिः– पृथङ्मातृजयोरिति, तत्कर्तृभेदाभिप्रायम्, कार्य इति कर्मप्रत्यये द्वाभ्यां त्रिभिरित्यन्वयसंभवात् । उदाहृतगर्गवाक्ययोः कपर्दिवाक्ये चैककर्तारं प्रति निषेधो ज्ञाप्यते, 'कुर्यात्' 'कुर्वीत' 'न पिता विदध्यात्' इतिशब्दैस्तथैव प्रतीतेः । अतश्च द्वाभ्यां कर्तृभ्यां एकस्मिन्नपि लग्ने एकस्मिन्नपि गृहे भिन्नोदरयोर्विवाहः कार्यः । भिन्नकर्तृकत्वेनैव मण्डपदेवप्रतिष्ठादिभेदः प्रतीयते । एकः कर्ता तु दिनचतुष्टयेन पूर्वविवाहं समाप्योत्तरं कुर्यात् । अतिसंकटे त्वेकस्मिन्नपि दिने मण्डपदेवताप्रतिष्ठाद्यभेदेऽपि गृहभेदेन वेति व्यवस्था बोध्या ।

संकौ.१९६

( ३ ) विवाहस्तु इति । पृथङ्मातृजयोरपि एकस्योपनयनमपरस्य विवाह इत्येवंजातीयास्तु संस्कारा एकस्मिन्नहनि न भवन्तीत्यर्थः । पुष्पेति । उभाभ्यां भगिनीभ्यां शिरस्थयोः पुष्पपट्टिकयोर्दर्शनं न कार्यमिति संबन्धः । एतावता परस्परवरशिरःस्थपुष्पपट्टिकादर्शनं परस्परकन्ययोर्निषिद्धमिति लभ्यते ।

कुभ.१११११–१११२

## वराहमिहिरः

[2]विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥
[3]उद्वाह्य पुत्रीं न पिता विदध्यात्
पुत्र्यन्तरस्योद्वहनं कदाचित् ।

( १ ) धप्र. ५३ .
( २ ) धप्र. ५२ .
( ३ ) धप्र. ५२ ; संग. ३४५ पिता ( ऽपि वा ) .
( ४ ) धम. १०८ .
( ५ ) प्रपा. ३१६ .
( ६ ) मुक्ता. १४५ ; ज्ञान. १७८ (=) .
( ७ ) गभा. १०९ ; संप्र. ७२८ ; सिन्धु. ११११ ; ज्योनि. १६२ हस्त्वेक ( हथैक ) ; संकौ. १९६ ज्योनिवत् ; प्रका. ३५७ ; संग. ३४२ ; पुम. ४५१ ; संर. ४९५ .

( १ ) गभा. १०९ ; संप्र. ७२८ ; सिन्धु. ११११–१११२ ; ज्योनि. १६२ ; संकौ. १९६ ; प्रका. ३५७ ; संग. ३४१ ; पुम. ४५१ ; संर. ४९५ .
( २ ) गभा. १०८ ; संप्र. ७२६ ; सिन्धु. ११०६ ; विपा. ७३१ ; संग. ३४२ ; कुभ. ११०९ निरयमात्रम् .
( ३ ) गभा. १०९ कदाचित् ( कदाऽपि ) कपर्दिकारिकासु ; विसौ. १४ कदाचित् ( न जातु ) उत्तरार्धे ( यावच्चतुर्थीदिन-

यावच्चतुर्थं दिनमत्र पूर्वं
समाप्य चान्योद्वहनं विदध्यात् ॥
पुंत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरे तथा ।
पुत्र्युद्वाहं न कुर्वीत विवाहाद्व्रतबन्धनम् ॥

## स्मृतिरत्नावल्याम्

ऐकोदरप्रसूतानामेकस्मिन् वत्सरे पुनः ।
विवाहो नैव कुर्वीत मण्डनोपरि मुण्डनम् ॥
भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
एकस्मिन्मण्डपे चैव न कुर्यान्मङ्गलद्वयम् ॥

## स्मृतिरत्ने

ऐकमातृप्रसूतानामेकस्मिन्वत्सरे यदि ।
विवाहं मौञ्जीबन्धं च चूडाकर्म न कारयेत् ॥

## मत्स्यसूक्तमहातन्त्रे

ऐकस्मिन्दिवसे चैव सोदराणां तथैव च ।
युग्ममुद्वाहिकं वर्ज्यं कन्यादानद्वयं तथा ॥

## श्रीधरीये

पुंत्रस्य पाणिग्रहणात्परस्तात्
न मासषट्कात्तनयाविवाहः ।
तद्वद्विवाहादपि नोपनीति-
स्तथोपनीतेः परतश्च चौलम् ॥

## सायणीये

ऐकस्मिञ्छोभने वृत्ते द्विशुभं नैव कारयेत् ।
यदि कुर्यात्प्रमादेन तत्र स्यादशुभं ध्रुवम् ॥

## नृसिंहप्रसादे

नं मुण्डनं स्याद्दशनानिबन्धो
न चापि मोक्षो व्रतबन्धनस्य ।
वदन्ति गर्गप्रमुखा मुनीन्द्रा-
श्चूडाकृतिं मुण्डनमेव नान्यम् ॥

## संहिताप्रदीपे

ऊर्ध्वं विवाहात्तनयस्य नैव
कार्यो विवाहो दुहितुः समार्धम् ।
अप्राप्य कन्यां श्वशुरालयं तु
वधूः प्रवेश्या स्वगृहं न चादौ ॥

## संहितासारावल्याम्

ऐकमातृप्रसूतानामेकस्मिन् वत्सरे यदि ।
विवाहं नैव कुर्वीत कुर्वन्ति मुनयोऽन्यथा ॥

---

मङ्गलस्य समापनं तावदतो विदध्यात् । ) ; संप्र ७२७ कदाचित् (कदाऽपि) दिनमत्र पूर्वं (दिवस न पूर्णे) कपर्दिकारिकायाम् ; सिन्धु ११०८ कपर्दिकारिकासु वराहमिहिरश्च ; विपा. ७३५ गभावत् ; संकौ १९६ कदाचित् (हि जातु) चतुर्थं दिनमत्र पूर्वं (चतुर्थीदिनमत्र सर्वं) कपर्दिवचः ; ज्योनि. १६१ सकौवत्, कपर्दिकायाम् ; संग. ३४२ कदाचित् (कदाऽपि) पूर्वं (पूर्णं) कपर्दिकारिकायामपि ; पुम. ४४९ कदाचित् (कदाऽपि) चान्यो (वाऽन्यो) कपर्दिकारिका मिहिरश्च, कृभ. ११०९ निर्देशमात्रम् ; संर. ४९५ कदाचित् (कदाऽपि) पूर्वं (सर्वं) कपर्दिकारिकाऽपि.

(१) संकौ. १९७ ; पुम. ४४९ विवाहात् (नोद्वाहात्) ; कृभ. ११०६ ; संर. ४९४ रे तथा (र तथा) पुत्र्युद्वाहं (पुत्रोद्वाह).

(२) संप्र. ७२६; मिन्धु ११११० वत्सरे (वासरे) यमः ; ज्योनि. १६१ सिन्धुवत्, स्मृतिसारावल्याम् ; संग. ३४१ सिन्धुवत्.

(३) संप्र. ७२८ ; सिन्धु. ११११० मङ्गल (मण्डन) स्मृतिसारावल्याम्, ज्योनि. १६१ भ्रातृयुगे स्वसृयुगे (स्वसृयुगे भ्रातृयुगे) स्मृतिसारावल्याम् ; संग. ३४३.

(४) आन. १७८.

(५) उत. १२०.

(१) मुक्ता. १४५.

(२) प्रपा. ३१६ ; संप्र. ७२९ ; मुक्ता. १४५ नैव (न तु) स्मृतिरत्ने ; विपा. ७३३ ; आन. १७८ मुक्तावत्, स्मृतिरत्ने ; संग ३४५.

(३) संप्र. ७३० ; संग. ३४६ नान्यम् (नान्यत्).

(४) गभा. १०८ तु वधूः प्रवेश्या (च वधू प्रवेश्यात्) ; धप्र. ५२ वधूः प्रवेश्या (वधूप्रवेश.) ; विसौ. १५ समार्धम् (समार्धे) तु (च) चादौ (वैव) ; संप्र. ७३०-७३१ ; सिन्धु. ११०७ तु (च) न चादौ (च नादौ) ; विपा. ७३३ हात्तनयस्य (हात्तु सुतस्य) तु वधूः (च स्नुषा) ; ज्योनि. १६१ संहितादीपके ; संग. ३४६ ; पुम. ४५० तु वधूः प्रवेश्या (च वधू प्रविश्यात्).

(५) प्रपा. ३१६ ; धप्र. ५२ (=) कुर्वन्ति (वदन्ति) ; विसौ. १४ ; संप्र. ७२६ ; संम. ६८ उत्तरार्धे (विवाह नैव

( १ ) अन्यथा मातृभेदे । संप्र.७२६

( २ ) (ततोऽन्यथा ) भिन्नमातृकयोर्वत्सरभेदेन वा । संम.६९

## ज्योतिःसागरे

चूडाकेशान्तसीमन्तविवाहोपनयान् बुधाः ।
गुरुमङ्गलमित्याहुस्तदन्यल्लघुमङ्गलम् ॥

## ज्योतिर्विवरणे

एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः ।
नद्यन्तर एकदिने केऽप्याहुः संकटे च शुभम् ॥
नै प्रतिपिद्धे लग्ने संप्राप्ते संकटे महति ।
एकोदरसंभवयोरेकाहे भिन्नमण्डपे काले ॥
ऊर्ध्वं विवाहाच्छुभदो नरस्य
नारीविवाहो न ऋतुत्रयं स्यात् ।
नारीविवाहात्तदहेऽपि शस्तं
नरस्य पाणिग्रहमाहुरार्याः ॥

अत्र दिनशब्दः पूर्वोक्तानां संवत्सरादीनां सर्वेषामुपलक्षणं, संकोचनिमित्तस्य संकटस्य सर्वत्रापि तुल्यत्वात् । अत एव प्रवेशनिर्गमयोः षण्मासपरिहारासंभवे वैपरीत्येनैकदिनविधानं तत्रैव – ऊर्ध्वमिति । संप्र.७२८

---

कुर्वन्ति कुर्वन्ति तु ततोऽन्यथा । ); संकौ. १९६ विवाहं ( विवाहो ) ; संग. ३४१–३४२ ; संर. ४९२ यदि ( सदा ) शेषं संमवत् , सारावल्याम् .

( १ ) संप्र. ७३० स्तदन्यत् (स्तदन्यं) ; संग. ३४५–३४६ .

( २ ) गभा. १०९ एकदिने ( त्वेकदिनं ) ; धप्र. ५३ द्वयोरेकदिनोद्वहने ( र्वरयोरेकदिनोद्वाहतो ) एकदिने ( एकवर्षे ) च शुभम् ( शुभम् ) ; संप्र ७२८ ; सिन्धु. ११११ (द्वयोः ० ) ; विपा. ७३४–७३५ एकदिने ( त्वेकदिने ) ज्योतिरर्णवे ; ज्योनि. १६१ द्वयोरेकदिनोद्वहने ( र्वरयोरेकदिनोद्वाहतो ) ; संग. ३४३ ; संर. ४९२ ज्योनिवत् .

( ३ ) धप्र. ५३ ; संप्र. ७२८ ; ज्योनि. १६१ ; संग. ३४३ ; संर. ४९६ .

( ४ ) गभा. १०९ त्रयं ( त्रये ) ; संप्र. ७२८ ; सिन्धु. ११११ ; विपा. ७३६ ( = ) ; ज्योनि. १६१ त्रयं ( त्रये ) माहुरार्याः ( मेवमार्याः ) शार्ङ्गधरः ; संग. ३४३ .

## कालादर्शे

भ्रातृद्वये स्वसृयुगे स्वसृभ्रातृयुगे तथा ।
समानाऽपि क्रिया कार्या मातृभेदे तथैव च ॥

## कपर्दिकारिका

उद्वाह्य पुत्रीं न पिता विदध्यात्
पुत्र्यन्तरस्योद्वहनं कदाचित् ।
यावच्चतुर्थं दिनमत्र पूर्वं
समाप्य चान्योद्वहनं विदध्यात् ॥

## रेणुकारिकाः

ऐकस्मिन्वत्सरे नैव (१ चैव) वासरे मण्डपे तथा ।
कर्तव्यमुभयोः स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥
एकप्रयोजनानि स्युः पृथक्कर्माणि यानि वै ।
एकं नान्दीमुखं तेषामेवमूचे त्रिविक्रमः ॥
स्वसृद्वये भ्रातृयुगे स्वसृभ्रातृद्वये तथा ।
न जातु मङ्गलं कुर्यादेकस्मिन्मण्डपेऽहनि ॥
एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥
एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः ।
क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च ॥
एकोदरभ्रातृविवाहकृत्ये
स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचु-
र्न मुण्डनं चापि हि मण्डनात्तु ।

## भट्टकारिका

ऐकस्मिन्वत्सरे चैव वासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥

---

( १ ) मुक्ता. १०० : १४६ कालदीपे ; श्रान. १६०, १७९ युगे तथा ( युगेऽथवा ) कालदीपे .

( २ ) स्थलादिनिर्देशः आसिन्नेव वराहमिहिरवचने ( संका. पृ. ७४४ ) द्रष्टव्यः ।

( ३ ) रेका. २३–२९ पृ. ७०–७१ .

( ४ गभा. १०९ ; धप्र. ५२ तथा ( ऽपि च ) ज्योतिः ; संप्र. ३८६ : ७२८ चैव ( चक ) ; सिन्धु. ११११२ चैव ( चैक ) ; ज्योनि. १६२ ( = ) सिन्धुवत् ; पुम. ४५१ सिन्धुवत् ; संर. ४९६ स्मृत्यन्तरम् .

# *प्रतिकूलनिर्णयः

### हारीतः

[1]स्पर्शिता स्याद्यदा कन्या वाचा वाऽप्युदकेन वा ।
अन्तरा प्रातिकूल्यं चेत्पूर्वोढा विधवा भवेत् ।
अचिरेणैव कालेन पशुभृत्यधनक्षय. ॥

संम.६९

( १ ) प्रातिकूल्यं मरणम् ।
( २ ) एतच्च विवाहानन्तरचतुर्थीकर्ममध्ये ज्ञेयम् ।

कुभ.११०२

### भृगुः

[2]वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः ॥

### दक्षः

[3]दम्पत्योः पितरौ भ्राता सोपनीतः सहोदरः ।
पितृव्यस्तादृशश्चैव पितामहपितामही ।
एषामन्यतमे नष्टे नोद्वहेत्तां वधूं वरः ॥

दम्पत्योरिति सर्वत्र संबध्यते । अत्र विनायकशान्त्या कचिद्विवाह इत्युक्तं प्राक् ।

कुभ.११०३

### संवर्तः

[4]उद्वहेद्यदि वाग्दत्तां प्रातिकूल्येऽपि यः पुमान् ।
स याति नरकं घोरं कुले वाऽप्यशुभं भवेत् ॥

( १ ) संम. ६९ ; कुभ. ११०२ तृतीयार्धं नास्ति .
( २ ) गभा. ६८ ; धप्र. ५० स्ववश ( स्वपक्ष ) ; सिन्धु. १०८४ दो यतः ( दोषत॰ ) ; विपा ७६५ यत्र ( यस्य ) स्ववश ( स्वपक्ष ) भृगुसंहितायाम् ; ज्योनि. १६२ धप्रवत् ; संकौ. २०२ (=) सिन्धुवत् ; संव. १४६ (=) सिन्धुवत् ; संर. ४८३ (=) .
( ३ ) संप्र. ८१२ (=) सोपनीत॰ ( चोपनीतः ) प्रथमार्धम् ; संम. ६९ ; संग ३४९ सर्वं सप्रवत् ; कुभ. ११०३ .
( ४ ) संप्र. ८१५ ; संग. ३५१ .

### वृद्धवसिष्ठः

[1]वरवध्वोः पिता माता पितृव्यश्च सहोदरः ।
एतेषां प्रतिकूलं चेन्महाविघ्नप्रदं भवेत् ॥
[2]प्रतिकूले तु संप्राप्ते विवाहं नैव कारयेत् ।
अन्ते दोषविनाशाय कुर्याच्छान्तिमिमां शुभाम् ॥

### कार्ष्णाजिनिः

[3]पिता वा यदि वा भ्राता ज्येष्ठो वा म्रियते यदि ।
अतीतेऽब्देऽपि वाग्दत्तां नोद्वहेद्युवतीं पुमान् ॥

### माण्डव्यः

[4]वाग्दानानन्तरं माता पिता भ्राता विपद्यते ।
विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता ॥

तेन तया वा सहेति शेषः । वरपक्षे प्रतिकूले वरार्थे तां न स्वीकुर्यात् । वधूपक्षे प्रतिकूले तस्मै वराय न दद्यादिति विवाहो नैव कर्तव्य इत्यस्यार्थः । न तु विवाह एव न कर्तव्य इति ।

संर.४८१

### गर्गः

[5]कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् ।
तदा न मङ्गलं कुर्यात् कृते वैधव्यमाप्नुयात् ॥

( १ ) संप्र. ८१२ ; संकौ. २०१ चेद् ( स्यात् ) ; प्रका. ३६१ ; संग. ३४८ ; संव. १४५ ; संर. ४८१ सकौवत् .
( २ ) संप्र. ८१५ तु सम्प्राप्ते ( ऽपि सञ्जाते ) ; संकौ. २०२ ; संव. १४५ ; संर. ४८२ वसिष्ठ॰ .
( ३ ) कुभ. ११०२ .
( ४ ) संप्र. ८१२ भ्राता ( वाऽपि ) ; सिन्धु. १०८५–१०८६ हित ( स्थिति ) ; विपा ७६५ सिन्धुवत् ; संकौ. २०१ ; संग. ३४८ ज्योनि १६२ स्ववशहित ( स्वयं स्वहित ) ; संव. १४५ ; पुम. ४५१ ; संर. ४८१ . सप्रवत् ;
( ५ ) गभा. ६८ ; संप्र. ८११ ( कृते वाङ्निश्चये पश्चान्मरणं यस्य कस्यचित् । न तत्र मङ्गलं कार्यं नारीवैधव्यशङ्कया ॥ ) क्रमेण वृद्धगार्ग्ये ; सिन्धु १०८४ ; विपा. ७६४ तु निश्चये ( वाङ्निश्चये ) भवति ( मर्त्यस्य ) कृते वैधव्यमाप्नुयात् ( नारीवैधव्यभीतितः ) विधानमालायाम् ; ज्योनि. १६२ कृते तु

* पित्रादिमरण गृहदाहादि च प्रतिकूलम् । कन्याया वाग्दानाद्युत्तरं प्रातिकूल्ये कालव्यवधानशान्त्यादीनां निर्णयः ।

( १ ) अत्र यद्यपि ' कस्यचित् ' इत्यविशेषेणोक्तं, तथापि ' वाङ्निश्चये कृते यत्र सपिण्डानां मृतिर्भवेत् । प्रतिकूलं सपिण्डेषु नान्येषामिति गोभिलः ॥ ' इति स्मरणेन सपिण्डमरणस्यैव प्रतिकूलत्वम् । अत्र वाङ्निश्चयग्रहणं मानसनिश्चयस्याप्युपलक्षणम् ।

संप्र.८११

( २ ) कृते त्विति । एतेन ' वाग्दानादि चरेत्पुनः ' इत्यभिधानेन च मन्त्रवद्वाङ्निश्चयोत्तरमेव प्रतिकूलदोष इति । घटितनिश्चयोत्तरं प्रतिकूलदोष इति ज्योतिषमतम् । घटितनिश्चयश्च ज्योतिर्विदादेशेन वरपित्रादिकं प्रति फलदानादिरूपः । कृभ.१०८४–१०८५

ज्वरस्योत्पादनं यस्य शुभं तस्य न कारयेत् ।
दोषनिर्गमनात्पश्चात् स्वस्थो धर्मं समाचरेत् ॥

लग्नमिति सर्वमङ्गलोपलक्षणम् । गभा.१९०

हर्म्यदाहे मृते चैव विवाहं यः करोति च ।
तयोरेकं विनश्येत मनुः स्वायम्भुवोऽब्रवीत् ॥
नान्दीमुखे कृते पश्चाद्गृहदाहो भवेद्यदि ।
पाणिग्रहो न कर्तव्यो नारीवैधव्यदो यतः ॥

केचिद्बुर्गृहस्थस्य दारुणः कस्यचिज्ज्वरः ।
तावन्मङ्गलकार्यं च न कार्यं निश्चितं बुधैः ॥

मृते जनन्यां जनकेऽङ्गनायां
द्वितीयवर्षे प्रकरोति शोभनम् ।
करोति मोहात्प्रथमे तु हानिं
वदन्ति गर्गात्रिपराशराद्याः ॥

दम्पत्योः पितरौ भ्राता सोपनीतः सहोदरः ।
पितृव्यस्तादृशश्चैव पितामहपितामही ॥

पितृव्यस्त्री सुतो भ्राता भगिनी वा विवाहिता ।
कृते वाङ्निश्चये पश्चादेषां मध्ये तु मानवः ।
मृतो भवति यः कश्चित्प्रतिकूलं तदुच्यते ॥

प्रतिकूले तु संजाते विवाहं नैव कारयेत् ।
नारी वैधव्यमाप्नोति ह्यन्यथा कारयेद्यदि ।
अन्ते दोषविनाशाय शान्तिं कुर्याद्विचक्षणः ॥

## वृद्धगार्ग्यः

वधूवरार्थे घटिते सुनिश्चिते
वरस्य गेहेऽप्यथ कन्यकायाः ।
मृत्युर्यदि स्यान्मनुजस्य कस्यचित्
तदा न कार्यं खलु मङ्गलं बुधैः ॥

( १ ) घटिते घटने कर्तव्यतया निश्चिते सतीत्यर्थः ।

संप्र.८११

( २ ) घटितं संबन्धः सुनिश्चितो वाचा निश्चितः । वाग्दानविधिना निश्चित इति गोविन्दार्णवे । इदं च सुशब्दाल्लभ्यते । संर.४८०

---

( कृतेऽपि ) भवति ( मर्त्यस्य ) ; संग. ३४८ ' मरणं ' इत्यत्र ' मरणे ' इति पठित्वा सर्वं संप्रवत् ; पुम. ४५१ .

( १ ) गभा. १९० शुभं ( लग्नं ) ; संप्र.८१३ धर्मं ( कर्म ) ; सिन्धु. ९२० गभावत् ; विपा. ४७९ गभावत् ; ज्योनि. १६३ ; संग. ३५० सप्रवत् : ६१४ शुभं ( लग्नं ) स्वस्थो ( स्वस्थे ) ; संर. ४८८ .

( २ ) संप्र. ८१३–८१४ ; संग. ३५० .

( ३ ) संप्र. ८१४ ; संग. ३५० .

( ४ ) संप्र. ८१४ ; ज्योनि. १६४ दारुणः कस्यचित् ( कस्यचिद्दारुणो ) कार्यं च ( कृत्य च ) ; संग. ३५० ; संर. ४८८ दारुणः कस्यचित् ( कस्यचिद्दारुणो ) उत्तरार्धे ( तावन्मङ्गलकार्यस्य न कार्यो निश्चयो बुधैः । ) .

( ५ ) धप्र. ५६ ; विपा. ७७० ( = ) ( मृते जनन्या जनकेऽङ्गना वा वर्षे द्वितीये न करोति मङ्गलम् [ शोभनम् ] । करोति मर्त्यः प्रकरोति शोभनं वदन्ति गर्गाङ्गिरकश्यपाद्याः ॥ ) .

( १ ) विपा. ७६७. एते श्लोका गर्गस्य वा अन्यऋषेर्वेति न निश्चयः ।

( २ ) गभा. ६८ वरार्थे ( वरार्थे ) मेधातिथिः ; संप्र. ८११ गेहेऽप्यथ ( पक्षे त्वथ ) मृत्यु ( मृति ) ; सिन्धु. १०८४ ज्योतिर्मेधातिथिः ; विपा. ७६४ वरार्थे ( वरार्थ ) निश्चिते ( निश्चये ) ऽप्यथ ( त्वथ ) मङ्गलं बुधैः ( जातु मङ्गलम् ) मेधातिथिनिबन्धे ; संकौ. २०१ उत्तरार्धे ( म्रियेत कश्चिन्मनुजोऽथ नारी तदा न कुर्युः खलु मण्डनं ते । ) कृष्णभट्टीये ; ज्योनि. १६२ वरार्थे ( वराथ ) ऽप्यथ ( त्वथ ) मृत्युर्यदि स्यात् ( मृतिर्भवेच्चेत् ) मङ्गलं बुधैः ( जातु मङ्गलम् ) मेधातिथिः ; प्रका. ३६१ ; संग. ३४७ संप्रवत् ; संव. १४५ संकौवत् ; पुम. ४५१ ज्योतिर्मेधातिथिः ; संर. ४८० संकौवत् , स्मृत्यन्तरे .

## स्मृत्यन्तरम्

[1]वाङ्निश्चये कृते यत्र सपिण्डानां मृतिर्भवेत् ।
प्रतिकूलं सपिण्डेषु नान्येषामिति गोभिलः ॥
[2]प्रतिकूले न कर्तव्यं लग्नं यावदृतुत्रयम् ।
प्रतिकूलेऽपि कर्तव्यं केऽप्याहुर्बहुसंप्लवे ॥

यदपि वचनम्-- 'प्रतिकूले न कर्तव्यम्' इति, तदपि मातृप्रतिकूलविषयम्, 'तदर्धं मातुरेव च' इत्यनेन तस्या एव ऋतुत्रयं महाशौचविधानात् । संप्र.८१३

[3]प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ।
विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥

तयोः निश्चितघटितयोर्वधूवरयोः । वध्वा वरालाभे वरस्य वध्वलाभे सङ्कटे सति नान्यां वधूं वरं वा प्रेक्षेतेति तात्पर्यार्थः । सर.४८२

## अनिर्दिष्टकर्तृकवचनानि

[4]पितृमातृ( पितुर्मातुः ) स्त्रिया भ्रातृपुत्राणा- मन्ततः क्रमात् ।
वर्षार्धार्धार्धमुत्सृज्य विवाहादि विधीयते ॥
प्रतिकूलक्रियायां च वर्षेऽन्यस्मिन्करग्रहः ।
निमित्तशकुनैः प्रश्नैः कर्तव्य इति केचन ॥
प्रतिकूलं न कर्तव्यं निषेधः प्रतिकूलतः ।
कन्याऽन्यत्र प्रदातव्या पाराशरवचो यथा ॥

कृते वाङ्निश्चये वध्वा वरस्य विषये मृतिः ।
अमङ्गल्यं न सेव्यं स्यात्तयोरायुःक्षयो यतः ॥

दम्पत्योः पितरौ भ्राता ह्युपनीतः सहोदरः ।
पितृव्यस्तत्सुतश्चैव पितामहश्च तद्वधूः ॥

एतेषां यदि चेत्कश्चिन्मृतो भवति मानवः ।
न तदा मङ्गलं कार्यं नारीवैधव्यशङ्कया ॥

कृते वाङ्निश्चये पुंसां मरणं यस्य कस्यचित् ।
तं वंशं वर्धमानं चेद्विवाहः शौनको न तु ॥

प्रेतकार्यमनिर्वर्त्य आचतुर्थं भवेत्तदा ।
पञ्चमे तु भवेत्पुंसि ततः शुभतरं भवेत् (?) ॥

तस्मिन्वरे न दातव्या यस्य प्राङ्निश्चयो भवेत् ।
प्रतिकूलं न कर्तव्यं मातृके पैतृके तथा ॥

[1]पित्रोश्चैवाथ मृतयोर्वर्षं वर्षार्धमेव वा ॥

[2]पितुरब्दमशौचं स्यात्षण्मासं मातुरेव तु ।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥

[3]अन्येषां तु सपिण्डानां मासमेकमुदाहृतम् ।
उक्तकालावधिः कार्या तावन्नैव शुभक्रिया ॥

दशाहानन्तरं प्रोक्तमाशौचं यद्द्विजन्मनाम् ।
शुभार्थ एव जानीयात्कृतेऽपि हि सपिण्डने ॥

[4]शुभकर्माणि कार्याणि निवृत्ते सूतके हि तु ।
इत्युक्तं तत्सपिण्डानां केचिन्नेच्छन्ति मानवाः ॥

यावदाशौचमारभ्य सपिण्डीकरणं भवेत् ।
विवाहादीनि सर्वाणि शुभकर्माणि वर्जयेत् ॥

[5]मृते पितरि यस्याथ मृतायां वाऽपि मातरि ।
न कुर्याच्छुभकर्माणि वर्षं वर्षार्धमेव वा ॥

---

(१) संप्र. ८११ ; संग. ३४८.

(२) गभा. ६८ कर्तव्यं लग्न ( कर्तव्यो गच्छेत् ) केऽप्याहु- र्बहुसप्लवे ( इत्याहुर्बहुविप्लवे ) ; संप्र. ८१३ (=) पू. ; सिन्धु. १०८८ (=) गभावत् ; विपा. ७६६ कूले न ( कूलेऽपि ) उत्त- रार्धे ( प्रतिकूलेऽपि केऽप्याहुः कर्तव्यं बहुविप्लवे । ) ; संकौ. २०२ ; ज्योनि. १६३ उत्तरार्धं विपावत् , संग. ३४९ (=) पू. ; संव. १४५ ; संर. ४८२.

(३) गभा. ६८ पू. ; संप्र. ८१३ स्मृतिरत्नावल्याम् ; सिन्धु. १०८८ (=) पू. ; विपा ७६६ , संकौ. २०२ ; ज्योनि. १६३ विवाहस्तु ( विवाहं तु ) ; संग. ३४९ स्मृतिरत्ना- वल्याम् ; संव. १४५ ; क्रम. १०८६ (=) उत्त. : १०८७ (=) पू. ; संर. ४८२ .

(४) विपा. ७६८-७६९ .

(१) धप्र. ५१ .

(२) धप्र. ५१ ; संग. ३५२ रेव तु (रेव च) स्मृत्यन्तरम्.

(३) धप्र. ५१ ; संग. ३५२ कार्या ( यावद् ) स्मृत्यन्तरम्.

(४) धप्र. ५१ .

(५) धप्र ५१ ; संग. ३५२ ( मृते ताते जनन्यां च वर्षं वर्षार्धमेव च । न कुर्याच्छुभकर्माणि कुलधर्मास्तथैव च ॥ ) धर्मप्रवृत्तौ .

प्रेतवन्ध विवाहं च न कुर्याद्वृद्धिमान्सुतः ।
वर्षं वर्षार्धकं चैव कृतेऽपि हि सपिण्डने ॥
विवाहादि प्रकुर्वीत यदा महति संकटे ।
सपिण्डीकरणादूर्ध्वं मासिकान्यपकृष्य च ॥
कन्यायाश्चातिकालश्चेद्वरस्यापि भवेद्यदि ।
तस्योद्वाहे न दोषोऽस्ति तथा चैवोपनायने ॥
अशुभं कर्म निर्वर्त्य (१) न कुर्याच्छोभन-
क्रियाम् ॥
प्रतिकूले तु संजाते विवाहं नैव कारयेत् ।
प्रतिकूलेऽपि केऽप्याहुः कर्तव्यं शान्तिपूर्वकम् ॥
पितुर्मातुश्च पत्न्याश्च वर्षमर्धं तदर्धकम् ।
सुतभ्रात्रोः सार्धमासमन्येषां माससंमितम् ॥
तदन्ते शान्तिकं कुर्याद्यथाशक्ति विधानतः ।
पुनश्चैवाथ वाग्दानं कृत्वा लग्नं विधीयते ॥
प्रतिकूले सपिण्डानां मासमेकं विवर्जयेत् ।
शान्तिं कृत्वा विधानेन ततो लग्नं विधीयते ॥

## मेधातिथिः

वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥

(१) यदपि मेधातिथिवचनम् — 'वाग्दानानन्तरम्' इति, तत् पितृप्रतिकूलविषयम्, तस्यैव संवत्सरं महाशौचोक्तेः । संप्र.८१३

(२) संकटे तु मेधातिथिः — वाग्दानानन्तरमिति । सिन्धु.१०८६

(३) संकटे इति । वरान्तरासत्त्वादिना तद्वरायैव तत्कन्याया देयत्वे । • कुम.१०८६

• सिन्धुटदस्याख्यानमिदम् ।

(१) धप्र. ५१ ; संग. ३५२ बन्धं विवाहं (बन्धे विवाहे) रधृत्यन्तरम्.

(२) धप्र. ५१.

(३) धप्र. ५०.

(४) गभा. ६८ ; संप्र. ८१३ ; सिन्धु. १०८६ ; विपा. ७६५ दत्र (यत्र) ; संकौ. २०१ ; ज्योनि. १६२ ; प्रका. ३६१ ; संग. ३४९–३५० विवाहद् ; संव. १४५ ; पुम. ४५१ ; संर. ४८१.

पुंरुपत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ।
प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने ॥
(२)प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥

(१) तदेतत्प्रातिकूल्यं पुरुषत्रयपर्यन्तं चतुःपुरुष-पर्यन्तं वा । तथा च मेधातिथिः — 'पुरुषत्रयपर्यन्तं... शुभदं भवेत् ॥' इति । संप्र.८१३

(२) प्रातिकूल्यं च पुरुषत्रयावधि दोषकरमित्याह— पुरुषत्रयेति । यथा सगोत्रसपिण्डयोः पुरुषत्रयपर्यन्तं प्रतिकूलस्य निषेधनिमित्तत्वं, एवं प्रवेशमण्डनयोर्निर्गममुण्डन-निषेधनिमित्तत्वमपि तावत्पर्यन्तमेवेत्यर्थः । प्रेतकर्माणीति । पूर्ववाक्यात् स्वगोत्रिणामित्यनुवर्तते, आचतुर्थमिति संख्यान्तरोपादानात् प्रेतकर्मानिवृत्तेर्निमित्तस्याभ्युदयिक-निषेधस्य नैमित्तिकस्योपादानाच्च । तेन स्वगोत्रिणां आचतुर्थं सपिण्डीकरणान्तप्रेतकर्मसमाप्तिं विना आभ्यु-दयिकं न कुर्यादित्यर्थः । तेन परगोत्रिणां चतुःपुरुष-पर्यन्तं न प्रेतकर्मसमाप्त्यपेक्षाप्रसङ्गः । अत्रापि वरवध्वोः पितृचतुर्थपुरुषात्मककूटस्थमारभ्य चतुःपुरुषी ग्राह्या । द्वादशाहादिसपिण्डीकरणपक्षे तु तदुत्तरानुमासिकान्यपि प्रेतकर्मशब्देन ग्राह्याणि, उत्पत्तिवेलायां प्रेतोद्देश्यकानामेव

(१) गभा. ६८ शान्ति (शनि) मण्डनमुण्डने (मुण्डन-मण्डने) ; संप्र. ३१४,८१३ स्वगो (सगो) मण्डनमुण्डने (मुण्डन-मण्डन) : ७३० ; सिन्धु. ११०३ ; विपा. ७६६ प्रतिकूलं (प्रातिकूल्य) मस्तद्वत् (मो यद्वत्) ; संकौ. ११३ : २०१ उत्तरार्धे (प्रवेशनिर्गमौ तद्वत्तथा मुण्डनमण्डने) ; ज्योनि. १६३ प्रवेशा-न्निर्गमः (प्रवेशनिर्गमौ) ; प्रका. २०७ : ३६१ संकौवत् ; संग. ३४५ उत्तरार्धे (प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ।) : ३५० मण्डनमुण्डने (मुण्डनमण्डने) ; संव. १४५ संकौवत् ; पुम. ४५२ स्वगो (सगो) पू. ; संर. ४८१, ४९४ : ९०१ प्रवेशान्निर्गमः (प्रवेशनिर्गमौ).

(२) गभा. ६८ ; स्मृता. २२१ शुभदं (तु शुभं) ; संप्र. ३१४, ८१३ ; सिन्धु. ११०३, ११९० ; विपा. ७३५–७३६ थं ततः (र्थांतम:) : ७६६ शुभदं (शुभं) ; संकौ. ११३, १९८,२०१ ; ज्योनि. १६१ चतुर्थं (चतुर्थे) शेषं स्मावत् ; प्रका. २०७,३६१ ; संग. ३५० ; पुम. ४५३ शुभदं (शुभदा) ; संर. ४८१ : ४८७ निर्दिष्टमात्रम्.

प्रेतशब्दोल्लेखमन्तरेण पुनरावृत्तिविधानात्, 'नरः संवत्सरात्परम्। प्रेतदेहं परित्यज्य' इत्यग्रिमवाक्याच्च।

कृम.११०३–११०४

[1]पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः॥

अन्येषां तु सपिण्डानामाशौचं मासमीरितम्।
तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते॥

(१) पितुरिति। अत्र पूर्वं प्रतिकूलस्यैवोक्तेः मरणमात्रहेतुकप्रतिकूलत्वे वर्षाद्याशौचावधिव्यवस्थानर्थक्यम्। अतः उभयत्रापि च तयोरेव पश्चाद्विवाहः, इदमाशौचं तत्तदर्थाद्यवधिकं यथा प्रतिकूलवैधव्यादिसूचकं तथाऽगतौ शान्तिकादिप्रयोजकं च। एवमन्यदपि यत् सगतिकं काम्यं पञ्चवर्षाद्युपनयादि चौलादि च, तत्राप्यधिकारप्रतिबन्धकम्। एवं च पित्रादिमरणोत्तरं वर्षाद्यन्तमपूर्वाधानादौ नाधिकारः। न हि तत्र विवाहवच्छान्तिरुक्ता, येन ता कृत्वा तत्राधिकारः स्यात्। एवं च जन्मतोऽष्ट-

(१) गभा. ६८ स्मृतिरत्नावल्याम्; धप्र. ५१ (=) तदर्धं (षण्मासं) रेव च (रेव तु); संप्र. ८१२ रब्दमशौच स्याद् (रब्द महाशौच) मेधातिथिरत्नावलीभ्याम्; सिन्धु. १०८६ स्मृतिरत्नावल्याम्; विपा. ७६५ तदर्धं (षण्मासान्) मासत्रयं तु भार्यायाः (तदर्धं भ्रातुरेव स्यात्) स्मृतिरत्नावल्याम्; संकौ. २०१ मशौच स्याद् (मिहाशौचं) स्मृतिरत्नावल्याम्; ज्योनि. १६३ सर्वं संकौवत्; प्रका. ३६२ सर्वं सकौवत्; संग. ३४९ संप्रवत्; संव. १४५ सर्वं संकौवत्; पुम. ४५१ स्मृतिरत्नावल्याम्; संर ४८१ सव सकौवत्, 'पित्रोरब्दमिहाऽऽशौचम्' इत्यपि पाठः.

(२) गभा. ६८ स्मृतिरत्नावल्याम्; धप्र. ५१ (=) आशौच मासमीरितम् (मासमेकमुदाहृतम्) उत्तरार्धे (उक्तकालावधि कार्या तावन्नैव शुभक्रिया।); संप्र. ८१२ मासमीरितम् (मासमंमितम्) मेधातिथिरत्नावलीभ्याम्; सिन्धु १०८७ स्मृतिरत्नावल्याम्; विपा. ७६५–७६६ संप्रवत्, स्मृतिरत्नावल्याम्; संकौ. २०१ संप्रवत्, स्मृतिरत्नावल्याम्; ज्योनि. १६३ तदन्ते (तदा तु) शेष संप्रवत्, स्मृतिरत्नावल्याम्; प्रका. ३६२ सव सकौवत्; संग. ३४९ संप्रवत्; संव १४५ सर्वं सकौवत्; पुम. ४५१ स्मृतिरत्नावल्याम्; संर. ४८१ सर्वं सकौवत्.

वर्षाद्युपनयनादावपि अनधिकारान्मासिकायनपकर्षस्थलपञ्चवमवर्ष एवाधिकार इति। तदन्ते वर्षान्ते।

कृम.१०८६

(२) 'पित्रोरब्दमिहाऽऽशौचम्' इति क्वचित्पाठः। अत्र मातृपदं सापत्नमातृपरमिति केचित्। एतन्मते 'पित्रोरब्दम्' इत्ययमेव पाठोऽभिमत इति गम्यते। द्वयोरपीत्यन्वे। अविशेषादित्याशयः। एतन्मते 'पितुरब्दम्' इत्येव पाठः। 'पित्रोरब्दम्' इतिपाठे मुख्यमातुः अब्द, सापत्नमातुरब्दार्धम्। 'पितुरब्दम्' इति पाठे उभयोरप्यब्दार्धमेवेति भेदः।

सर.४८१–४८२

[1]संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत्॥

### स्मृतिचन्द्रिकायाम्

[2]कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः।
तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम्॥

### ज्योतिःसागरे

[3]वाङ्निश्चये कृते पश्चात्पितरौ निधनं गतौ।
तयोस्तत्प्रतिकूलं स्यान्नान्येषां तु कदाचन॥
[4]दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये।
प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते॥

(१) गभा ६८; संप्र. ८१६ क्रमेण शौनकः; सिन्धु. १०८७; पुम. ४५२.

(२) गभा. ६८ निश्चये (नियमे); धप्र. ५०; सिन्धु. १०८४ मर्त्यस्य (भवति); विपा. ७६४; संकौ. २०२; ज्योनि. १६२ पश्चात् (ऽपि स्यात्); संव. १४६; पुम. ४५१; संर. ४८३.

(३) विपा. ७६९ (=) तु कदाचन (मनुरब्रवीत्); संकौ. २०१ कृष्णभट्टीये; संव १४५ कृष्णभट्टीये; प्रका. ३६१; कृम. १०८६ वाङ्निश्चये कृते (कृते वाङ्निश्चये) कृष्णभट्टीयवाक्ये; संर. ४८०.

(४) गभा. ६८; संप्र ८१५; सिन्धु. ११०३; विपा. ७६६ नानुकूल्य प्रतीक्ष्यते (नातिकूल प्रतीयते); संकौ २०२; ज्योनि. १६३; प्रका. ३६२; संग. ३५१ हि च (ऽपि); संव. १४५; पुम. ४५२ प्रतीक्ष्यते (प्रतीक्ष्येत) ज्योतिःसारे; संर. ४८२.

## ज्योतिष्प्रकाशे

प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परम् ।
शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः ॥

( १ ) यत्तु ज्योतिःप्रकाशवचनम् ' प्रतिकूलेऽपि ' इति, तत् पित्रादिभिन्नसपिण्डमात्रप्रतिकूलविषयम्, ' प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् । विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥ ' इति स्मृतिरत्नावल्यां मासानन्तरं विवाहविधानात्, ' अन्येषां तु सपिण्डानाम् ' इति वचनेन तेषां मासपरिमितमहाशौचविधानाच्च ।

संप्र.८१३

( २ ) शान्तिं विनायकशान्तिम् ।

सिन्धु.१०८७

( ३ ) प्रतिकूले इत्यादि । प्रतिकूले सति संवत्सरोर्ध्वं शान्तिपूर्वकं विवाहः कार्य इति मुख्यः कल्पः । षण्मासोत्तरं मासोत्तरं वेति त्वनुकल्पाविति । केचित्तु एतत् पितृमरणे एव । मातृमरणे तु षण्मासं मुख्यः पक्षः, तदर्धं मासमात्रं वेति अनुकल्पौ, पितृमरणे मातृमरणस्थलीयषण्मासोपादानेनेह तदर्धलाभात् । एवं भार्यामरणे मासत्रयं सार्धमासं मासमात्रं वेति त्रयः कल्पाः । भ्रातृमरणे पुत्रमरणे च सार्धं मासं मासं वेति द्वौ । पितामह्यादिसपिण्डमरणे तु मासमेव, ' प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ' इतिवाक्यादिति युक्तमुत्प्रेक्षन्ते ।

कृभ.१०८७

## स्मृतिरत्नावल्याम्

*पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च ।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥

* व्याख्यासङ्ग्रहः मथानिधौ ( संका. पृ. ७५१ ) द्रष्टव्यः ।

( १ ) गभा. ६८ ; संप्र. ८१३ ; संम. ६९ ; सिन्धु. १०८७ परम् ( परः ) ; विपा. ७६६ मासतः परम् ( मासमन्तरा ) ; संकौ. २०२ विपावत् ; ज्योनि. १६३ विपावत् ; प्रका. १६२ ; संग. ३४९ ; संव. १४५ ; पुम. ४५१-४५२ ; कृभ. १०८४ चतुर्थः पादः ; संर. ४८२ विपावत्.

( २ ) स्थलादिनिर्देशः मेधातिथिवचनयोरुपरि द्रष्टव्यः ।

अन्येषां तु सपिण्डानामाशौचं मासमीरितम् ।
तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते ॥

ऊनद्विवार्षिके प्रेते न तस्य प्रतिकूलता ।
शान्तिः स्याच्छुभदा नृणां कुष्माण्डगणहोमतः ॥

## शौनककारिका:

वरवध्वोः पिता माता पितृव्यश्च सहोदरः ।
एतेषां प्रतिकूलं हि महाविघ्नप्रदं भवेत् ॥

[2]पिता पितामहश्चैव माता चैव पितामही ।
पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता ॥

एभिरेव विपन्नैश्च प्रतिकूलं बुधैः स्मृतम् ।
अन्यैरपि विपन्नैस्तु कचिदूचुर्न तद्भवेत् ॥

( १ ) भ्राताऽत्र एकोदर उपनीतश्च विवक्षितः, पितृव्यपुत्रस्य पृथङ्निर्देशात्, ' दम्पत्योः पितरौ भ्राता चोपनीतः सहोदरः ' इति वाक्यान्तराच्च ।

संप्र.८१२

( १ ) विपा. ७६५ .

( २ ) गभा. ६८ ; धप्र. ५० हि ( चेत् ) भवेत् ( ध्रुवम् ) वृद्धशौनकः ; सिन्धु. १०८४-१०८५ हि ( च ) ; विपा. ७६५ हि ( च ) प्रदं ( कर ) वृद्धशौनकः ; ज्योनि. १६२ हि ( चेत् ) ; पुम. ४५१ हि ( च ) ; कृभ. १०८५ निर्देशमात्रम् . संस्कारप्रकाशादिग्रन्थेषु तु वृद्धवसिष्ठस्येदं वचनम् ।

( ३ ) गभा. ६८ ; धप्र. ५० वृद्धशौनकः ; संप्र. ८१२ ' पितृव्यस्त्रीसुतौ ' इति पाठो व्याख्यानात्प्रतीयते ; सिन्धु. १०८५ स्त्री सुतो ( स्त्रीसुतौ ) ; विपा. ७६५ ( पिता मातामहश्चैव तथैव प्रपितामहः । पितामहस्य वै भ्राता तत्सुतो वा तथा स्त्रियः ॥ ) वृद्धशौनकः ; संकौ. २०१ वृद्धवसिष्ठः ; ज्योनि. १६२ पितृव्यः स्त्री सुतो ( पितृव्यस्त्रीसुतौ ) चावि ( वा वि ) वृद्धशौनकः ; संग. ३४९ ; संव. १४५ वृद्धवसिष्ठः ; पुम. ४५१ पितृव्यः स्त्री ( पितृव्यस्त्री ) ; संर. ४८१ वृद्धवसिष्ठः .

( ४ ) गभा. ६८ एभिरेव ( एभिरत्र ) ; धप्र. ५० विपन्नैस्तु ( विपन्नैश्च ) वृद्धशौनकः ; संप्र. ८१२ पूर्वार्धे ( एतैरेव विपन्नैस्तु प्रतिकूले तु वै स्मृतम् ।) ; सिन्धु. १०८५ गभावत् ; विपा. ७६५ धप्रवत्, वृद्धशौनकः ; संकौ. २०१ वृद्धवसिष्ठः ; ज्योनि. १६२ ; संग. ३४९ एभिरेव विपन्नैश्च ( एतैरेव विपन्नैस्तु ) ; संव. १४५ वृद्धवसिष्ठः ; पुम. ४५१ गभावत्, पू. ; संर. ४८१ .

१ ( २ ) स्त्रीसुताविति । एतौ न वध्वाः, असंभवात् । अतः द्वितीयादिविवाहे वरस्य पूर्वोढा स्त्री तस्यामुत्पन्नश्च सुतः । एतत्पौत्रस्योपलक्षणं, पितृव्यपदं च तत्पुत्रस्य । एवं च वरमारभ्य जनकत्रिपुरुषी, जन्यत्रिपुरुषी, कूटस्थमारभ्य संतानभेदेन त्रिपुरुषी चात्र बोद्धव्या ।

कृम.१०८५

[1]दीर्घरोगाभिभूतस्य दूरदेशे स्थितस्य च ।
उदासवर्तिनश्चैव प्रतिकूलं न विद्यते ॥

( १ ) धप्र. ५० ( = ) ; संप्र. ८१५ स्य च ( स्य वा ) ; विपा. ७६६ देश ( देश ) उदास ( दुर्दान ) प्रतिकूल ( प्रातिकूल्यं ) स्मृत्यन्तरम् ; संकौ. २०२ देशे ( देश ) उदासवर्तिनश्चैव ( उदासीनस्थितस्यापि ) ( = ) ; ज्योनि. १६३ देशे ( देश ) स्मृत्यन्तरम् ; प्रका. ३६२ ( = ) ज्योनिवत् ; संग. ३५१ दूरदेशे ( दूरे देशे ) ; संव. १४५ ( = ) सकौवत् ; पुम. ४५२ ज्योनिवत्, स्मृत्यन्तरम् ; कृम. ११०३ ( = ) प्रतिकूलं ( प्रातिकूल्यं ) शेषं सकौवत् ; संर. ४८२ ( = ) कृमवत् .

---

## संस्कारकौस्तुभकृतः प्रातिकूल्यविचारः

अत्र यद्यपि 'म्रियेत कश्चित्' इति, 'मृत्युर्भवति कस्यचित्' इति च अविशेषेणोक्तं, तथापि पितामह्यादीनामिव मातामह्यादीनामपि मरणस्य प्रतिकूलदोषनिमित्तत्वेन क्वचिदकीर्तनात् अविवाहिताया भगिन्या इव विवाहिताया मरणस्य तथात्वानुक्तेः मेधातिथिवाक्ये 'सगोत्रिणाम्' इति, चन्द्रिकावाक्ये 'मर्त्यस्य गोत्रिणः' इति च कीर्तनात् वध्वा वरस्य वा सगोत्रसपिण्डेषु त्रिपुरुषान्तर्गते मर्त्ये मृते प्रतिकूलदोष इति मन्तव्यम् । स्त्री वरस्य द्वितीयादिविवाहसमये पूर्वोढा, सुतः तस्या पूर्वोत्पन्नः । एतत् पौत्रोपलक्षणम् । एवं पितृव्यग्रहणं तत्पुत्रस्य । एवं च वरमारभ्य जनकत्रिपुरुषी जन्या त्रिपुरुषी कूटस्थमारभ्य संतानभेदे च त्रिपुरुषी अत्र बोद्धव्या । वधूवरयोः समानगृहे तन्मरणे किञ्चित् काल प्रतीक्ष्यैव विवाह इति 'तदा न कुर्युः' इत्यादिशब्दैर्बोध्यते । 'तयोस्तत्प्रतिकूलं स्यात्' इति कालप्रतीक्षाशान्तिभ्यां असमाधेयो दोषो द्वयोर्युगपन्मरणज इत्यर्थः । अत एवोक्तम् 'नान्येषा तु कदाचन' इति । अन्येषा सपिण्डानाम् । तयोरपि एकैकमरणजस्तु समाधेय इत्याशयः । वृद्धवसिष्ठवाक्ये चतुर्णां मरणस्य महाविघ्नकरत्वकथनं तत्र प्रतीक्षासहिता केवला वा विनायकशान्तिरितिकथनार्थम् । अत एव तद्विधिवाक्यशेषे शान्त्यकरणे 'पदेपदे' इति विघ्नस्य महत्त्वं प्रदर्शितम् । 'एभिरेव विपन्नैः' इति कालप्रतीक्षासहितायाः श्रीपूजनादिशान्तेर्निमित्तमेतन्मरणमेवेत्याशयः । अत एव (माण्डव्य)वाक्ये 'नैव कर्तव्यः' निमित्तानन्तरं इति व्याख्येयम् । एवं वृद्धवसिष्ठवाक्यमपि । प्रतीक्षा च सामान्यतः संवत्सरमृतुत्रयं मासमात्रं वेति पक्षत्रयं मेधातिथिवाक्यसहितस्मृत्यन्तरवाक्यात् बोद्धव्यम् । रत्नावलीवाक्ये स्वाशौचशब्देन प्रतिकूलकृतं विवाहानधिकारमात्रं प्रतीक्षातात्पर्यकं बोद्धव्यम् । तत्र पितुर्मरणे अब्दप्रतीक्षाया मात्रादिमरणनिमित्ततदर्धादिप्रतीक्षायास्तुल्यकल्पत्वेनोक्तत्वात् पितुर्मरणे सकटतारतम्येन पक्षत्रयम्, मातुर्मरणे तदर्धं मासमात्रं वेति पक्षद्वयम्, एवं भार्यामरणे (मासत्रय) मासमात्रं वेति, भ्रातृमरणे पुत्रमरणे च सार्धमासं मासमात्रं वेति पक्षद्वयम्, पितामह्यादिसपिण्डान्तरमरणे तु मासमेव इति व्यवस्था । यदि गुणवत्तरमातृमरणे ऋतुत्रयप्रतीक्षया अपरितोषः, तदा संवत्सरप्रतीक्षाऽपि कार्या । एवं गुणवत्तरभार्यादिमरणे ऋतुत्रयप्रतीक्षाऽपि इत्याद्ययेन तयोरपि पक्षयोः सामान्यविध्युपपत्तिः । पितृ-मातृ-पितृव्य-सोदराणां चतुर्णां मरणे उक्तव्यवस्थया प्रतीक्षान्ते

विनायकशान्तिः । अन्यमरणे तदन्ते शान्त्यन्तरम् । यदा तु अतिसंकटवशेन सर्वत्र निमित्ते मासाधिक- (? वधि) प्रतीक्षाया असंभवः तदा तन्मध्येऽपि किञ्चित् काले (? लं) प्रतीक्ष्य उक्तव्यवस्थया अन्यतरां शान्तिं कृत्वा गा दत्वा पुनर्दानं चरेत् इति ज्योतिःप्रकाशवाक्य- कृतो विशेषः । न तु क्वचिदपि प्रतिकूले पूर्वाशौचादि- निमित्तेन निवृत्ताशौचस्यापि सद्यो विवाहे प्रवृत्तिरुचिता । यथा सगोत्रसपिण्डेषु पुरुषत्रयपर्यन्तमेव प्रतिकूलस्य निषेधनिमित्तत्वम्, एवं प्रवेशमुण्डनयोः निर्गममण्डन- निषेधनिमित्तत्वमपि तेषु एतावत्पर्यन्तमेवेति 'पुरुषत्रय' इति मेधातिथिवाक्यार्थः ।

'प्रेतकर्माणि' इति उत्तरवाक्ये तु यद्यपि 'आ- चतुर्थम्' इति संख्यान्तरस्योपादानात् प्रेतकर्मानिवृत्तेः निमित्तस्य आभ्युदयनिषेधस्य च नैमित्तिकस्यो- पादानात् पूर्ववाक्यादत्यन्तभिन्नविषयता स्फुटैव प्रतीयते, तथापि स्वगोत्रिणां आचतुर्थे इत्यनुषङ्गलभ्यार्थसिद्धयै तदनन्तरपाठः । 'प्रेतकर्माणि' इति च प्रेतोद्देशेन विहितानि कर्माण्युच्यन्ते, न तु प्रेतशब्दोद्देश- विशिष्टानि । तेन सपिण्डीकरणोत्तरं मासिकानामपि संग्रहः, तेषामुत्पत्तिवेलायां प्रेतोद्देशेन विहितानामपि तच्छब्दोद्देशरहितपुनरावृत्तेर्वाचनिकत्वात् । अत एव कात्यायनः— 'निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत् । अयातयामं मरणं न भवेत् पुनरस्य तु ॥' इति । वृद्धि- कर्मोत्तरं मासिकानुष्ठाने मृतस्य मरणं अयातयामं भवेत् नूतनमिव भवेत्, तच्च माङ्गलिककर्मणः पूर्वमृतस्य माङ्ग- लिककर्मोत्तरमापद्यमानमनुचितमिति भावः । शाट्यायनि- रपि— 'सपिण्डीकरणादर्वागपकृष्य कृतान्यपि । पुनरप्य- पकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥' इति । एवं च मृत- मरणस्य आरोपितनूतनत्वे दोषं वदता अनारोपित- नूतनत्वापादकानां सपिण्डीकरणान्तानां आभ्युदयिकोत्तर- मनुष्ठानमतिदुष्टमिति ज्ञाप्यते । मासिकसाहचर्यादेव च सपिण्डीकरणान्तानामनुष्ठानमपि नात्र नान्दीश्राद्धदेवतात्व- सिद्धयर्थं, उक्तमासिकानां तदर्थतया बाधितत्वात् । 'अनिर्वर्त्य' इति यद्यपि प्रेतकर्मभिः सह अभ्युदयक्रियाया मङ्गलापरपर्यायायाः समानकर्तृकत्वं प्रतीयते, तथापि तत्

असति कर्त्रन्तरे मुख्यम् । सति तु प्रेतकर्मसु प्रयोजक- कर्तृतामादाय उपपादनीयम् । * इत्थमेव हि 'वध्वञ्जला- वुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति' इति सूत्रे वृत्तिकृदादिभिः तत् उपपाद्यते 'विवाहहोमे उप- स्तरणस्य वरकर्तृकत्वं, लाजावापस्य भ्रात्रादिकर्तृकत्वम्, विच्छिन्नसंधानार्थे तु तस्मिन् लाजहोमस्यापि (? लाजा- वापस्यापि) वरकर्तृकत्वम्' इतिवदद्भिः । एवं नान्दी- श्राद्धे देवतात्वसिद्धयर्थे सपिण्डीकरणापकर्षपरत्वेन पराभि- मतवचनेऽपि समानकर्तृकत्वं इत्थमेव स्वीकार्यम् । तद्यथा शाट्यायनिः— 'प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा । अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं ततः ॥' इति । तथा लघुहारीतोऽपि— 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा । सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥' इति । मृतस्य कन्यादाने हि तस्य ज्येष्ठकनिष्ठौ भ्रातरावधि- कारिणौ कन्यायाः पितृपितामहभ्रात्रभावात्संभवतः, 'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्व- नाशे प्रकृतिस्थः परः परः ॥' इति याज्ञवल्क्यवचनात् । तस्य सपिण्डीकरणे तु कनिष्ठस्यैवाधिकारः, न ज्येष्ठस्य, 'न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः । अपि स्नेहेन कुर्याता सपिण्डीकरणं विना ॥' इति सपिण्डी- करणस्य तं प्रति विशिष्य निषेधात् । न च इदं शास्त्रं शास्त्रान्तरावगतकालनियमकर्तृनियमयोर्बाधं कर्तुं ईष्टे, प्राप्ते कर्मणि उभयविधाने वाक्यभेदात् । अतः ज्येष्ठस्य सपिण्डीकरणे प्रयोजककर्तृता कनिष्ठस्य मुख्यकर्तृतां अङ्गीकृत्यैव उक्तवचनयोः समानकर्तृकत्वं उपपादनीयम् । एवं च अनयोर्वचनयोः देवतात्वसिद्धिप्रयोजनासंकीर्तनात् विधेयार्थैक्याच्च मूलैक्यलाघवानुरोधेन 'प्रेतकर्माण्यनिर्वर्त्य' इति कृष्णभट्टीप्रयोगोदाहृतवचनार्थपरत्वं स्वीकर्तुं उचि- तम् । यदि परं मातामहसपिण्डीकरणापकर्षः असगोत्र- विषयो नैवं सिध्येदिति तथा न स्वीक्रियते श्रीमद्भिः, मा स्वीकुर्वन्तु । न तु स्वकृततद्वाक्यव्याख्यावशेन

* वस्तुतस्तु वृत्तिकृदादिभिर्न प्रयोजककर्तृतामादाय समान- कर्तृकत्वमुपपादितं, अपि तु समानकर्तृकत्वं विनापि क्त्वाप्रत्ययः । अग्रे 'लाजहोमस्यापि' इति प्रामादिकं, विच्छिन्नसंधानार्थे होमे लाजावापस्यैव वरकर्तृकत्वोपदेशात् ।

अनेकाभियुक्तोदाहृतस्य सकलदाक्षिणात्यप्रभृत्यनेकशिष्टाचारसंवादिनः 'प्रेतकर्माण्यनिर्वर्त्य' इतिवचसः निर्मूलत्वं अर्थान्तरकल्पनं चोक्तशिष्टाचारस्य वा अप्रामाण्यकल्पनं प्रामाणिकैः स्वीकर्तुमुचितम्। आस्तां वचनकथा। अस्ति तावत् प्राच्यभिन्नशिष्टानां सपिण्डदाहप्रभृतिपुनर्मासिकान्तप्रेतकर्माभावे माङ्गलिककर्मानारम्भाचारः सपिण्डेषु। संमता च तत्सत्ता श्रीमतामपि। तन्मूलं न विद्म इति वदता 'जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्' इति गृह्यसूत्रकारैः इतराचाराणां आदरं वदद्भिः अस्यैवाचारस्य अनादरः कृत इति कथमिव निर्धारितम्। एवं च नान्दीश्राद्धदेवतात्वयोग्यस्यापि सपिण्डीकरणापकर्षः माङ्गलिककर्मानुरोधेन सिद्धः। तथा हि— पितामहे प्रपितामहे अकृतसपिण्डने सति पितरि मृते औचित्येन तयोः सपिण्डीकरणोत्तरं पितुः सपिण्डीकरणकर्तव्यताया प्राप्तायामपि यदा तदनुष्ठानेन पितुः सपिण्डीकरणकालातिक्रमो भवति तदापि न्यायतः कालातिक्रमेण तथैव तत्कर्तव्यताया प्राप्ताया वचनेन अकृतसपिण्डीकरणाभ्यामपि ताभ्यां पितुः सपिण्डीकरणं कर्तव्यतया विहितम्। यथाऽऽह कात्यायनः— 'असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः। पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत्॥ पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा। पितामहेन पितरं संस्कुर्यादिति निश्चयः॥' इति। असंस्कृतौ अकृतसपिण्डीकरणौ, पूर्वौ पितामहप्रपितामहौ। पापिष्ठं अकृतसापिण्ड्यं पितरं शुद्धेन कृतसापिण्ड्येन, पापकृता अकृतसापिण्ड्येन वा पितामहेन सह शुद्धं निवृत्तप्रेतावस्थं (संस्)कुर्यादित्यर्थः। एवं कृते दर्शश्राद्धमपि तादृशाभ्यां सह कर्तव्यमित्यपि तेनैवोक्तम्— 'पितुः सपिण्डनं कृत्वा कुर्यान्मासानुमासिकम्' इति। एवं च दर्शश्राद्धविकृतित्वात् नान्दीश्राद्धेऽपि तादृशयोर्देवतात्वसंभवेऽपि माङ्गलिकविवाहाद्यनुरोधेन तयोः सपिण्डीकरणं कृत्वैव माङ्गलिकं कर्म कार्यम्, तयोश्चतुष्पुरुषान्तर्गतत्वात्। अत एव शुभागम एव सपिण्डीकरणापकर्षनिमित्तत्वेन कालादर्शे पठ्यते— 'एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा। षष्ठे वैकादशे वाऽब्दे संपूर्णे वा शुभागमे॥ सपिण्डीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः। साग्नौ कर्तर्युभावाद्यौ प्रेते साग्नावनन्तरः॥ अनग्नेस्तु द्वितीयाद्याः सप्त कालाः प्रकीर्तिताः॥' इति। अनन्तरस्त्रिपक्ष इति। 'शुभस्य विवाहादेरागमे उपस्थिते सति' इति च तत्रैव व्याख्याय तन्मूलवाक्योदाहरणं च इत्थं कृतम्— "महाभारते— 'सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान्' इत्युपक्रम्य 'एकादशेऽपि वा मासि मङ्गले स्यादुपस्थिते।'" इति। अत्र च शुभमङ्गलशब्दाभ्यां विवाहाद्येवोक्तमिति प्रतीतेर्न नान्दीश्राद्धप्रतीतिः, नतरां तद्देवतात्वस्य इति कृतबुद्धय एव विदाकुर्वन्तु। न च शुभमङ्गलशब्दौ अङ्गभूतनान्दीश्राद्धलक्षकौ, प्रधानवाचिनः शब्दस्य अङ्गलक्षकताया अन्याय्यत्वात् अदृष्टत्वाच्च। शक्यते तु वक्तुं शाट्यायनिवाक्ये नान्दीमुखग्रहणं विवाहाद्यारम्भपरम्, सपिण्डीकरणान्तमपकृष्य विवाहाद्यारम्भं कुर्वीतेत्यर्थः, मूलश्रुतिकल्पनालाघवात्, 'चरुं निर्वपेत्' 'पशुमालभेत' 'पूतिकानभिषुणुयात्' 'भक्षं प्रयच्छेत' इत्यादौ अङ्गवाचिनः शब्दस्य प्रधानलक्षकताया दृष्टत्वाच्च, 'नान्दीश्राद्धं विवाहादौ' इति नान्दीश्राद्धस्य तदारम्भत्वेन प्रसिद्धेश्च। सत्यपि देवतात्वसिद्ध्यर्थापकर्षस्य शास्त्रार्थत्वे मातामह्याः सपिण्डीकरणस्य नापकर्षः, तस्या नान्दीश्राद्धदेवतात्वाभावात्, प्रकृतिभूतपार्वणे एव गृह्यसूत्रपरिशिष्टेषु निर्गुणपित्रादीनां देवतात्वावगमेन सपत्नीकत्वेन गुणस्यापि देवतानुप्रवेशासंभवात्। 'स्विष्टकृते समवद्यति' 'पात्नीवतं गृह्णाति' इत्यादौ चतुर्थ्याद्यवगतदेवतात्वस्य गुणस्य गुणिनं प्रति नित्यसापेक्षत्वाद्धि भवति मान्त्रवर्णिकगुणिनः अग्न्यादेर्देवतानुप्रवेशः, न भवति च 'यदग्नये च' इति चतुर्थ्याद्यवगतदेवतात्वस्य गुणिनः गुणं प्रति नित्यसापेक्षत्वाभावेन गुणस्य ज्योतिष्कादेः तदनुप्रवेश इति प्रसिद्धम्। यत्तु 'न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते। स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता॥' इति वचनात् सपत्नीकाना देवतात्वं इति, तद्विस्मयकरम्, तद्विताद्विरहितस्य अर्थवादस्य 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इतिवद्देवतायाम( १ देवतात्वेऽ)प्रामाण्यात्, 'ये च त्वामनु' इति पिण्डदानमन्त्रेण अन्येषामनुचराणामिव पत्न्या अपि

प्राप्तस्यांशलाभस्य तदालम्बनत्वसंभवाच । यद्यपि दाक्षिणात्याचारवशेन सपत्नीकत्वविशिष्टपित्राद्युद्देशः पार्वणश्राद्धे प्रामाणिकः, तथापि शक्यते वक्तुं यथा प्रस्तरयागस्य उद्देशाशेन इष्टदेवतासंस्कारस्य 'देवेभ्य आज्यपेभ्यः' इत्युद्देशे प्रयाजादिदेवतानां समिदादीनामेव देवतात्वम्, देवाज्यपत्वगुणसंकीर्तनं तु अदृष्टार्थम्, न तु तस्य देवतानुप्रवेशः, इष्टदेवतासंस्कारत्वविघातापत्तेः, तथा अत्रापि सपत्नीकत्वसंकीर्तनं अदृष्टार्थमिति । उचितं चैतत्, माहेन्द्रग्रहे इन्द्रस्य अदेवतात्ववत् सपत्नीकपितृदेवत्ये श्राद्धे केवलानामदेवतात्वेन जीवन्मातृकमृतपितृकस्य आमश्राद्धाननुष्ठानापत्तेः । अदृष्टार्थगुणं तु उपादेयं विहायापि संभवति नित्यानुष्ठानम् । अस्तु वा देवतानुप्रवेशोऽप्यस्य, तथापि कालादर्शे मासिकदार्शिकयोर्भेदानुष्ठानसिद्धयै देवताभेदप्रदर्शनावसरे पितृपितामहयोः उभयोः अन्यतरस्य वा मृतभार्यत्वे सपत्नीकदेवतात्वयोग्यतादशायामेव सपत्नीकानां देवतात्वकथनात् जीवन्मातृकैः मृतपितृकैः केवलपित्राद्युद्देश्यकश्राद्धानुष्ठानात् मृतोभयैश्च सपत्नीकतदुद्देशेनैव तदनुष्ठानाच्च मातॄणां देवतात्वयोग्यतादशायामेव सपत्नीकानां देवतात्वमिति स्वीकर्तव्यम् । ततश्च मृतपितृकेण देशान्तरमृताहिताग्निमात्रस्थिप्रतीक्षां कुर्वता यथा केवलपित्राद्युद्देशेन दर्शश्राद्धमनुष्ठेयं तथा मातामह्या और्ध्वदेहिकाभावेऽपि केवलमातामहाद्युद्देशेन तस्यां जीवन्त्यामिव नान्दीश्राद्धसंभवाच्च तदनुरोधेनापि मातामह्या और्ध्वदेहिकप्रतीक्षा वा उचितेति ज्ञेयम् । न च मृतया वस्त्रादिभावं गतया सपत्नमातामह्या सपत्नीकत्वगुणसंभवे किमिति केवलानां देवतात्वमिति शङ्क्यम्, 'अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥' इति शातातपस्मृतौ, 'स्वेन भर्त्रा समं भुङ्क्ते माता श्राद्धं सुधासमम् । पितामही च स्वेनैव स्वेनैव प्रपितामही ॥' इति बृहस्पतिस्मतौ च श्रुतस्य मात्रादिशब्दस्य सपत्नमात्रादौ गौणत्वात्, मुख्ये संभवति गौणस्य अन्याय्यत्वात् अमावास्याश्राद्धादौ सापत्नमात्रादेः देवतानुप्रवेशाभावस्य श्राद्धहेमाद्रिणा उक्तत्वात् इत्यलमतिप्रसङ्गेन । संकौ.२०२-२०५



# * सद्यःशौचनिर्णयः

## विष्णुः

**न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः ॥**

देवप्रतिष्ठाविवाहयोः सम्भृतसंभारयोः उपक्रमात् प्रागपि तत्कर्तुराशौचं न भवतीत्यर्थः, विशेषवचनात् । एतदुक्तं भवति – यावति काले सम्भृतबहुसंभारधारणं कर्तुं शक्यते तावत्कालमध्ये प्रतिष्ठाद्यङ्गभूतं तत्कालान्तरं यत्र न लभ्यते तत्र विषये एतत्संकल्पात्प्रागाशौचाभाव इति ।

§ प्रपा. ३४७

(२) उपकल्पितबहुसंभारस्यापि तत्संनिहितलग्नान्तराभावेन संभारधारणाशक्तौ आशौचाभावमाह विष्णुः —

$ गभा. ९९

न देवप्रतिष्ठेति ।

(३) 'नाऽऽशौचं राज्ञा राजकर्मणि' (विस्मृ. २२।४७–४८) इत्यधिकृत्य 'न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः' इति विष्णुसूत्रेणाऽऽरब्धविवाहे एव अशौचाभावः, न तु समशनीयचरुहोमादौ । विवाहारम्भश्च वृद्धिश्राद्धम्, 'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ आरम्भो वरणं यज्ञे संकल्पो व्रतजापयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया ॥' इति राघवभट्टधृतवचनात् ।

उत. १३१

**व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।**
**आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥**
**प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।**
**नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥**

(१) वरणमिति मधुपर्कपरम् । तथा च ब्राह्मे– 'गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः । पश्चादशौचे पतिते न भवेदिति निश्चयः ॥' मधुपर्कात् पूर्वं तु भवत्येव आशौचमिति रामाण्डारभाष्ये । शुद्धिविवेकेऽप्येवमेव ।

गभा. ९९

(२) व्रतं अमावास्यादि । आदिपदात्सायंप्रातर्होमपरिग्रहः ।

संत ८८४

---

§ संर. प्रपावत् ।

$ प्रर., विपा. गभावत् ।

(१) विस्मृ. २२।५३ ; मिता. ३।२८ (न देवप्रतिष्ठोत्सर्गविवाहेषु) ; अप. ३।२८ पृ. ९२० (न देवप्रतिष्ठोत्सवविवाहेषु पूर्वसंकल्पितेषु) ; स्मृमा. ११२ (=) ; प्रपा. ३४७ ; गभा ९९ ; निप्र. १११ सम्भृतयो. (सभृतयो) ; उत. १३१ संभृतयोः (सभूतयोः) ; प्रर ११६ ; संम. ७१ ; सिन्धु. ११२३ संभृतयो. + (अपि) ; विपा. ८ (भागः २) (न देवप्रतिष्ठाविवाहयोः पूर्वसम्भृतसंभारयोराशौचम्) ; संर. ४९२ सम्भृतयोः (संभृतसंभारयोः).

(१) गभा ९९ आरब्धे (प्रारब्धे) षट्त्रिंशन्मते ; उत. १३१ ; संत. ८८४,९४५ ; प्रर. ११६ आरब्धे (प्रारब्धे) ; धप्र. ५१ (=) ऽर्चने जपे (जपार्चने) आरब्धे (प्रारब्धे) ; स्मृता. ८२ प्ररवत् ; निसा. ४४१ ; संम. ७१ व्रत (मख) शेषं प्ररवत् ; सिन्धु. ११२२ ; विपा. ७ (भागः २) ; संकौ. २०० व्रतयज्ञविवाहेषु (विवाहव्रतयज्ञेषु) होमेऽर्चने (होमार्चने) ; प्रका ३६० सकौवत् ; संग ३५३ प्ररवत् ; संर. ४८९ प्ररवत्, चतुर्थ. पादः : ४९०,६६४ प्ररवत्.

(२) प्रपा. ३६४ नान्दीमुखं (नान्दीश्राद्धं) ब्रह्मपुराणे ; गभा. ९९ ; निप्र. १११ यज्ञे (यागे) सत्रयोः (जापयोः) पाकपरिक्रिया (तु स्यात्पचिक्रिया) स्मृतिः ; उत. १३१ प्रारम्भो (आरम्भो) सत्रयो. (जापयोः) नान्दीमुखं (नान्दीश्राद्धं) परिक्रिया (परिष्क्रिया) राघवभट्टधृतवचनमित्युक्तम् ; संत. ८८४ उतवत् : ९४५ तृतीयः पादः ; प्रर. ११६ ; धप्र. ५१ (=) नान्दीमुखं (नान्दीश्राद्धं) ; स्मृता. ८२ ; संप्र. ८१७ प्रपावत्, संग्रहोक्तेः इत्युक्तम् ; निसा ४४१ स्मरणम् ; संम. ७१ ; सिन्धु. ११०४ (=) तृतीय पादः : ११२२ ; विपा. ७–८ (भाग २) प्रारम्भो (आरम्भो) शेष प्रपावत् ; संकौ. २०० ज्योनि. १६३ प्रपावत्, कौथुमामित्युक्तम् ; भान. १४२ स्मृत्यन्तरम् ; प्रका. ३६० ; संग. ३५३ सर्वं सप्रवत् ; संव. १४४ ; पुम. ४५२ (=) तृतीय पादः ; संर. ४८९ : ६६४ प्रथमः पादः.

* विवाहोपनयनादिशुभकर्मसु प्रारब्धेष्वन्तरा निमित्ते सत्यपि सूतकमृतकाशौचाभावस्य निर्णयः ।

( ३ ) पाकपरिक्रियेति सामर्दर्शश्राद्धविषयं, तन्न तस्य तदुद्धरणस्यासाधारणाङ्गत्वात् । न चैवं विवाहपूर्वकृतेन नान्दीमुखश्राद्धेन सर्वेषां श्राद्धत्वात् सर्वेषामेवाऽऽरम्भो भूत इति वाच्यं, विवाहार्थे कृतवृद्धिश्राद्धस्य समशनीयादीनामारम्भकत्वाभावात्, उद्देश्यत्वगर्भकत्वादारम्भपदार्थस्य । अन्यथा अन्यार्थवरणादावन्यारम्भः स्यात्, अक्षमन्नाभावात्तदर्थहोमाकरणे विवाहार्थे कृतश्राद्धेन तस्याप्यारम्भादारब्धाकरणे प्रत्यवायश्च स्यात् । अत एव अग्न्याधानार्थे विवाहार्थे वा कृते श्राद्धेऽशौचे तु न वैश्वदेवस्य गर्भाधानस्य वा करणम् । एवं च विवाहकालेऽशौचे समशनीयचरुहोमादयोऽशौचे गते महाव्याहृतिहोमप्रायश्चित्तं कृत्वा कर्तव्याः, 'गौणेषु तेषु कालेषु कर्म चोदितमारभेत् । प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत् ॥' इति भरद्वाजवचनात् ।

उत.१३१–१३२

( ४ ) सूतकमिति मृतकस्याप्युपलक्षणम् । व्रतादिविषये प्रारम्भविशेषश्च तेनैवोक्तः– 'प्रारम्भो वरणं यज्ञे...॥' इति । यज्ञे वरणमिति । वृतानामृत्विजां यजमानस्य च तस्मिन् कर्मणि नाऽऽशौचमिति । एवं श्राद्धादिष्वपि दातृभोक्त्रोर्वेदितव्यम् ।

स्ता. ८२–८३

( ५ ) नान्दीमुखं नान्दीश्राद्धम् । विवाहादावित्यादिपदेनोपनयनादि गृह्यते । पाकपरिक्रिया पाकारम्भः । पाकप्रोक्षणमिति केचित् । 'प्रारब्धे सूतकं न स्यात्' इतिवचने सूतकमिति मृतकस्याप्युपलक्षणम् ।

संर.४८९

अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥

( १ ) संनिहितलग्नान्तराभावे च होमादिपूर्वकं विष्णुरनुज्ञामाह—अनारब्धविशुद्ध्यर्थमिति ।

गभा.९९

( २ ) कूष्माण्डैः कूष्माण्डसंज्ञकैः 'यद्देवा देवहेडनम्' इत्यादिभिः ।

संप्र.८१६

( ३ ) आरम्भाभावेऽप्यग्रे कालान्तराभावे आशौचाभाव उक्तो विष्णुना — अनारब्धविशुद्ध्यर्थमिति । सूतकीति जननाशौचवन्तं प्रत्येवेदं प्रवर्तते।

संम.७१

( ४ ) मुहूर्तान्तरालाभे सामग्र्यां च कृतायां सूतकिनोऽप्यधिकारोपायमाह पारिजाते विष्णुः– अनारब्धविशुद्ध्यर्थमिति । 'ततः शुध्यति' इति पुनरुक्तिर्विवाहाद्युपयोगिपाकपरिवेषणादावपि शुद्धिज्ञापनार्था । गां पयस्विनीं दद्यात्, 'संकटे समनुप्राप्ते सूतके समुपस्थिते । कूष्माण्डीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीम् ॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् । यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रिया ॥' इति संग्रहोक्तेः ।

* संकौ.२००

## याज्ञवल्क्यः

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि हि कष्टायां सद्यःशौचं विधीयते ॥ §

* सर. संमवत् संकौवत् च ।

§ विश्वरूपमिताक्षरादिव्याख्यासंग्रहः काण्डान्तरे आशौचप्रकरणे करिष्यते ।

( १ ) गभा. ९९ ; मर. २१६ ; संप्र. ८१६ ; निसा. ४४१ ; सैम. ७१ अनारब्धं ( आरब्धस्य ) ; मिन्धु. ११२१ ; विपा. ८ ( भागः २ ) ; संकौ. २०० ; प्रका. ३६० ; संग. ३५२ ; संप. १४४ ; संर. ४९१ .

( १ ) यास्मृ. ३।२८ ; विश्व. ३।२७ यज्ञियं कर्म ( याज्ञे कर्मणि ) ; मिता. ; अप. ३।२७–२८ ; प्रपा. १५९, ३४५ ; पमा. ६१६ ; निप्र. १११ यज्ञियं कर्म ( यज्ञे कर्मणि ) सत्रि ( यति ) ; वीमि. ; संप्र. ८१६ ; विपा. ५ ( भागः २ ) ; संग. ३५२ .

( २ ) यास्मृ. ३।२९ ; विश्व. ३।२८ पि हि ( पि च ) ; मिता. ; अप. ३।२८–२९ ; स्मृमा. ११२ ; पमा. ६१७ विश्ववत् ; प्रपा. १५९ विश्ववत् : ३४५ विप्लवे ( संप्लवे ) शेषं विश्ववत् ; गभा. ९९ विश्ववत् ; निप्र. १११ पि हि ( पि तु ) ; मर. २१६ विश्ववत् ; वीमि. विश्ववत् ; संप्र. ८१६ विश्ववत् ; संम. ७१ संग्रामे ( संप्राप्ते ) शेषं विश्ववत् ; मिन्धु. ११२२ विश्ववत् ; विपा. ५ ( भागः २ ) ; संकौ. २३० विश्ववत् ; संग. ३५३ विश्ववत् ; संर. ४९० विश्ववत् .

( १ ) अथ यथोक्तविधिना कृतस्नातकान्तकर्मणो वरस्य विधिवत्कृतकन्यावरणमारभ्य विवाहव्रतनिष्पत्तिपर्यन्तं मध्यवर्तिनि काले दीर्घकालाशौचे प्राप्ते तदपोद्याशौचस्य ( १ तदपोद्य सद्यःशौचस्य ) चन्द्रिकाकारेण प्रतिपादितत्वात्तत्प्रकारोऽत्र निरूप्यते । तत्र याज्ञवल्क्यः– ऋत्विजामिति । प्रपा.३४५

( २ ) दातुः वरस्य कन्यायाः सद्यःशौच विधीयते इत्यर्थः । प्र. ११६

## बृहस्पतिः

[1]कृच्छ्रे विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥
[2]विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः ॥

( १ ) विवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । मिता.३।१७

( २ ) एवं ( पूर्ववचनोक्त ) शुद्धिपूर्वकविवाहाद्यनुष्ठाने तदङ्गत्वेन संकल्पितान्नभोजने न दोष इति बृहस्पतिनोक्तम्– विवाहोत्सवयज्ञेष्विति । मृतसूतकमध्ये विवाहाद्यनुष्ठाने उक्तशुद्धिपूर्वकमारब्धे इत्यर्थः । * संकौ.२००–२०१

[3]तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥

## व्यासः

[4]चौलोपनयने चैव संकल्पवरणात्परम् ।
व्रते ब्रह्मौदनं यावदाचार्यस्य न विद्यते ।
तावदाचार्यनियमो वटोः पालाशदर्शनात् ॥

पालाशदर्शनं पालाशहोमान्तम् । तेन मेधाजननान्तमित्यर्थः । प्रपा.३४७

आशौचं यदि संजातमनादृत्य तदाचरेत् ॥

अत्र आशौचमनादृत्य तच्छुभकर्म समाचरेदित्यर्थः । प्रपा.३४७

यथोक्तकर्म विधिवत्करिष्य इति जाग्रतः ।
संकल्प्य नान्दीश्राद्धं च निर्वर्त्य विधिपूर्वकम् ॥
आरम्भस्तत्समाप्तौ तु कर्ता कर्मेश्वरार्पणम् ।
कर्मणोऽन्त इति प्रोक्तः पुनः पुण्याहवाचनम् ।
यावत्तावन्न चाशौचनियमो द्विजभोजनात् ॥

अस्यानुक्तेयार्थः — गर्भाधानपुंसवनसीमन्तजातकर्मनामान्नप्राशनकर्मसु 'यथोक्तकर्म नान्दीश्राद्धपूर्वकं करिष्ये' इत्यादि पुनःपुण्याहपूर्वकं तत्कर्म ईश्वरार्पणपर्यन्तं कर्ता अन्तरा प्राप्तमाशौचं अनादृत्य कर्म कुर्यादित्यर्थः । एवं नित्यनैमित्तिककर्मस्वपि ज्ञेयम् । चौले च परेद्युः कर्मसमाप्त्यन्तं ( १ आचार्यः ) कर्ता । उपनये तु संकल्पात् आब्रह्मौदनान्तं, बटुः आमेधाजननान्तं कर्ता । विवाहे कन्यादातुरेव संकल्पनान्दीश्राद्धाक्षतारोपणान्तम्, वधूवरयोश्च कौतुकसूत्रविसर्जनान्तम् । अत्र कर्तृग्रहणात् तत्पत्न्या अपि ग्रहणम् । प्रपा.३४७

## संवर्तः

[1]प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥
[2]दीक्षान्तोऽवभृथो यज्ञे कङ्कणान्तं वधूवरौ ।
[3]व्रते ब्रह्मौदनं यावद्वटोः पालाशदर्शनम् ।
तावन्नाशौचमित्याहुः श्राद्धे विप्राङ्घ्रिशोधनात् ॥

वधूवरयोर्युक्तत्वेन विवाह उपलक्ष्यते । व्रते उपनयने । पालाशदर्शनं पालाशहोमान्तम् । 'श्राद्धे कूर्चविसर्जनम्' इति वा पाठः । प्रपा.३४८

---

* सर. संकौवत् ।
( १ ) मभा. १४।१०.
( २ ) मिता. ३।१७ ; गभा. ९९ ; प्रर. ११६ ; निसा. ४४० ; संप्र. ७१ ; सिन्धु. ११२४ तार्थेषु ( तात्रेषु ) ; विपा. ७ ( भागः २ ) ; संकौ. २०० सिन्धुवत् ; प्रका. ३११ सिन्धुवत् ; संब. १४४ सिन्धुवत् ; संर. ४९१ सिन्धुवत्.
( ३ ) स्मृच. १२२ ; गभा. १०९ ; मुक्ता. २८० ; सिन्धु. ११४६ ; विपा. १४२ ( भागः २ ) ; मान. ९९ ; पुम. ४५४ ; संर. ५८७.
( ४ ) प्रपा. ३४७.

( १ ) प्रपा. ३४७ . ऋषिनिर्णयो न ज्ञातः ।
( २ ) प्रपा. ३४७ . ऋषिनिर्णयो न ज्ञातः ।
( ३ ) प्रपा ३४८ .

## पराशरः

[1]विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति ॥

प्रारब्धे यज्ञादौ कर्तुः शुद्धिरुक्ता, इदानीं कल्पितद्रव्यस्यापि शुद्धिरस्तीत्याह — विवाहोत्सवेति । अत्र विवाहग्रहणं पूर्वप्रवृत्तचौडोपनयनादिसंस्कारकर्मोपलक्षणार्थम् । उत्सवः देवतोत्सवः, तेन च देवप्रतिष्ठादिकमुपलक्ष्यते । यज्ञः ज्योतिष्टोमादिः । तेषु प्रारब्धेषु अन्तरा मध्ये यदि मृतसूतके मरणजनने स्यातां, तदा पूर्वसंकल्पितं द्रव्यं देवतायै ब्राह्मणेभ्यो दीयमानं न दुष्यतीत्यर्थः । तथा च क्रतुः—'पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति' इति । पक्के तु विशेषः स्मृत्यन्तरे दर्शितः — 'विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके । शतमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥' इति । कृ(शृ)तान्नं असूतकिभिर्देयं, सूतकी तु दातॄन् भोक्तॄंश्च न स्पृशेदित्यर्थः । यत्तु स्मृत्यन्तरम् — 'द्रव्याणि स्वामिसंबन्धादधानि त्वशुचीनि च । स्वामिशुद्ध्यैव शुध्यन्ति वारिणा प्रोक्षितान्यपि ॥' इति, तदसंकल्पितद्रव्यविषयम् । कानिचित् असंकल्पितान्यपि द्रव्याणि सर्वदा शुद्धानि । तथा च मरीचिः — 'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥ तैलौषध्यजिने चैव पक्कापक्के स्वयं ग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥' इति ।

पमा. ६२०

## अत्रिः

यज्ञे विवाहकाले च सद्यःशौचं विधीयते ।
विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ।
पूर्वसंकल्पितार्थस्य न दोषश्चात्रिरब्रवीत् ॥

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥

(१) पस्मृ. ३।२७–२८ (२९).
(२) अत्रिसं. ९७–९८,२४९.

## बृहद्यमः

कन्याप्रदानसमये श्रुतं च पितरं मृतम् ॥
कन्यादानं च तत्कार्यं वचनाद्भवति क्षमः ॥

## लघुहारीतः

व्रतोत्सवविवाहेषु तत्क्षणं सूतकं भवेत् ।
अम्बुपानं न कर्तव्यं कर्तव्यं सर्वकर्म वै ॥

## पैठीनसिः

[3]विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥

(१) विप्लवाभावेऽपि क्वचिद्देशविशेषेण पैठीनसिना शुद्धिरुक्ता — विवाहदुर्गयज्ञेष्विति । मिता. ३।२९

(२) दुर्गो दुर्भिक्षः । अप. ३।२८

## अङ्गिराः

जनने मरणे चैव त्रिष्वाशौचं न विद्यते ।
यज्ञे विवाहकाले च देवयागे तथैव च ॥

(१) अत्र विवाहादौ सद्यःशौचमुपक्रान्तविवाहादिविषयम् । पमा. ६१७

(२) यज्ञः सोमयागादिर्वैदिकः । देवयागः मातृकादिदेवताभ्यो लौकिको गणयागः । प्रपा. ३४७

## वृद्धशौनकः

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
कर्मणि क्रियमाणे तु मध्ये चेत्सूतकं भवेत् ॥
यावत्कर्मसमाप्तिः स्यात्तावन्नाप्नोति सूतकम् ।
विना नैत्यकमन्येषु कर्मस्वाशौचमिष्यते ॥

(१) बृयस्मृ. ५।१०–११.
(२) लहास्मृ. ५६.
(३) मिता. ३।२९ ; अप. ३।२८ ; पमा. ६१७ दुर्गयज्ञेषु (यज्ञदुर्गेषु) ; प्रपा. ३४७ दुर्गे (धर्मे) ; निप्र. ११२ ; लता. १९९ विवाहदुर्ग (विवाहोत्सव) ; विपा. ६ (भागः २) दुर्गे (व्रत) तद्वत्कर्म (कुर्यात्कामं).
(४) पमा. ६१७.
(५) धप्र. ५१.

## ऋतुः

[1]विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति ॥

## लघ्वाश्वलायनः

[2]विवाहोत्सवयज्ञेषु दैवे पित्र्ये च कर्मणि ।
प्रारब्धे सूतकं नास्ति प्रवदन्ति महर्षयः ॥
प्रारब्धकर्मणश्चैव क्रियाप्रारम्भकस्य च ।
क्रियावसानपर्यन्तं न तस्याशौचमिष्यते ॥
प्रारम्भो वरणं यज्ञे संकल्पो व्रतमन्त्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

## स्मृत्यन्तरम्

नैरन्त्र्यमन्त्रिव्रतिनां विवाहोपनयादिषु ।
सद्यःशौचं समाख्यातं तत्तत्कार्ये विशेषतः ॥

तत्तत्कार्ये इति विशेषेणाभिधानात् वैश्वदेवादिकर्मसु आशौचं दीर्घमस्त्येव, तत्र सद्यःशौचविधानाभावात्, यावद्वचनं वाचनिकमिति न्यायाच्च ।

विधा. ६ ( भागः २ )

[3]यन्ने संभृतसंभारे विवाहे श्राद्धकर्मणि ॥

( १ ) सद्यःशौचमत्र प्रकृतम् । मिता.३।२९

( २ ) सम्भृतसंभारे इति सर्वत्र सम्बध्यते । अस्यापि वैष्णववचन( 'न देवप्रतिष्ठाविवाहयोः' )समानविषयत्व- मागन्तव्यमिति । स्वल्पसम्भृतसंभारस्य अपि वा काला- न्तरे वा अभिसंकल्पितस्य च संकल्पादूर्ध्वमेवाशौचाभावित्वं, न प्राक्, 'बहुसंभृतसंभारात्' (?) इत्युक्तत्वात् ।

प्रशा.१४८

[4]विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके ।
शृतमन्नं परैर्देयं दातृन् भोक्तृंश्च न स्पृशेत् ॥ *

## ब्रह्मपुराणम्

विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा ।
शेषमन्नं परैर्देयं दातृन् भोक्तृंश्च न स्पृशेत् ॥

'शेषमन्नं परैर्देयम्' इत्येतत्तु भोक्तृव्यतिरिक्त- जन्ममरणविषयम् । 'दातृन् भोक्तृंश्च न स्पृशेत्' इत्यत्र दोष इति शेषः । प्रशा.३६४

दातुः प्रतिग्रहीतुश्च कन्यादाने च नो भवेत् ।
विवाहयिष्णोः कन्याया लाजहोमादिकर्मणि ॥

विवाहे सद्यःशौचं केषामित्यपेक्षायां ब्रह्मपुराणे सद्यः- शौचं प्रकृत्य —दातुरिति । अत्र दातृप्रतिग्रहीतृग्रहणं संस्कार्यसंस्कारयोरुपलक्षणम् । चकाराद्दातृपत्नीकन्ययो- र्ग्रहणम् । संर.४९०

भोजनार्थे तु संभुक्ते यदि कश्चिन्म्रियेत वै ।
सर्वं भुक्तोच्छिष्टशेषं परित्यज्य समाहिताः ।
आचम्य परकीयेण तोयेन शुचयो द्विजाः ॥

अथ देवप्रतिष्ठायां गणयागादिकर्मणि ।
श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत् ॥

हान्येनापि उपक्रान्तयज्ञादिविषयाणि वचोभिरुक्तं सद्यः- शौचविधायकानि चेति मन्तव्यम् । अत एव ब्रह्म- पुराणे कश्चिदर्थवाद उक्तः — यदर्थेषि ।

प्रशा १४७

---

( १ ) मिता. ३।२९ उद्. ; अप. ३।२९ उद्. ; पमा. ६२० उद्. ; प्रशा. ३६४ ; धप्र. ५१ पूर्वार्धे ( विवाहादिषु मध्ये च सूतके सति चान्तरात् । ) विष्णुरे इत्युक्तम् ; मद. ८१६ (=) सूतके सति चान्तरात् । ) · ८१७ स्मृत्यन्तर पूर्वार्धे ( विवाहयज्ञयोर्मध्ये अन्तरा मृतसूतके । ) ( अन्तरा ) ; संग. ३५३ (=) पूर्वार्धे ( विवाहयज्ञे … अन्तरा मृतसूतके । ) ; हमा ११२२ उद्.

( २ ) लघ्वाश्वस्मृ. २०।७२–७४ .

( ३ ) प्रशा. १४७ चतुर्थपादं विना ; विधा. ६ ( भागः २ ).

( ४ ) मिता. ३।२९ ; प्रशा. १४८ यन्ने ( यज्ञे ) ; प्रमा. १९९ ; हमा. ११२२ .

* पमा स्यान्मदाने पराशरवचने द्रष्टव्यम् ।

( १ ) मिता ३।२९ शृत ( शत ) ; पमा. ६३१ ; प्रमा. १९९ (=) यज्ञादिष्वन्तरा ( यज्ञेषु त्वन्तरा ) शृत ( शेष ) .

( २ ) अप. ३।२९ दातृन् ( दाता ) ; स्मृमा. ११३ देवे ( इत्यादि ) ; प्रशा ३६४ ; प्रमा. ८१ ; मद. ८१७ .

( ३ ) निसिं ११२२ ; संर. ४९० .

( ४ ) संप्र. ७१ यदि कश्चिन्म्रियेत वै ( [illegible] ) ; [illegible] ; संर. ४९२ .

( ५ ) पमा. ६१७ ; प्रशा. १४७ अथ ( … च ) ; विधा. ६ ( भागः २ ) [illegible] .

यज्ञार्थं बहुसंभारसंभृतस्यापि कुत्रचित् ॥

'आशौचं नो भवेत्' इति पदत्रयमत्रानुषज्यते । ततश्चायमर्थः — 'यज्ञार्थसंभृतबहुसंभारस्य उपकल्पितसमस्तयज्ञसाधनपदार्थस्य अकृतयागसंकल्पस्याशौचापगमादूर्ध्वं वसन्तान्तर्गतपर्वकालासंभवेन तस्मिन्वत्सरे करिष्यमाणयज्ञादिक्रमविषये यज्ञसंकल्पात्पूर्वक्षणे शुद्धिर्भवतीति। यज्ञग्रहणं प्रतिष्ठादेरुपलक्षणार्थम्। प्रपा.३४७

## अनिर्दिष्टकर्तृकवचनानि

[3]चौले चैवोपनयने विवाहे च महामखे ।
त्रिषड्दशैकविंशत्या प्रारम्भे नास्ति सूतकम् ॥
ऐकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते ॥
[4]प्रारम्भादूर्ध्वमाशौचे विवाहः कार्य एव तु ।
व्रतादौ पूजने चैव प्रारम्भे नास्ति सूतकम् ॥

## षट्त्रिंशन्मतम्

[5]विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥

परैः असगोत्रैः । संम.७१

[6]भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥

(१) एतदाशौचात्पूर्वमपृथक्कृतान्नविषयम् । तत्र शेषमन्नं त्याज्यमित्यर्थः । सिन्धु.११२४

(२) पूर्वसंकल्पितान्नभोजनसमये सूतकप्राप्तौ विशेषः षट्त्रिंशन्मते – भुञ्जानेष्विति । भोक्तृभिर्भुक्तशेषस्त्याज्यः, पक्वशेषः सूतकिभिर्भोक्तव्य इत्याशयः । संर.४९१

[1]देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु च ।
उत्सवेषु च सर्वेषु स्पृष्ट्वा स्पृष्टिर्न विद्यते ॥

एतच्च ...यज्ञाहमनेन स्पृष्ट इति ज्ञानं नास्ति तद्विषयमिति केचित् । उच्छिष्टाशुचिस्पर्शनविषयमित्यन्ये । स्मृच.१२२

## संग्रहकारः ( स्मृतिसंग्रहः )

[2]संकटे समनुप्राप्ते सूतके समुपागते ।
कूष्माण्डीभिर्घृतं हुत्वा गां च दत्त्वा पयस्विनीम् ।
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ॥
[3]यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रिया ।
कृत्वा नाभिं वर्धयित्वा काले मङ्गलमारभेत् ॥
[4]अनारम्भेऽप्यवार्यत्वादनुज्ञा विष्णुनोदिता ।
अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥
[5]भाव्यं तु सूतकं ज्ञात्वा मातॄणां पूजनं भवेत् ।
सूतकं न विशेत्तत्र मातरो यत्र पूजिताः ॥

---

(१) प्रपा. ३४७.

(२) धप्र. ५१ ; संग. ३५४ धर्मप्रवृत्तौ.

(३) गभा. ९९ ; प्रर. ११६ ; धप्र. ५१ ; संकौ. २०२ प्रयोगरत्ने ; ज्योनि. १६३ त्रिषट् ( व्यहे ) कौमुद्याम् ; प्रका. ३६० ; संग. ९१ धर्मप्रवृत्तौ स्मृत्यर्थसारे : ३५३-३५४ ; संव. १४४ ; संर. ४९० स्मृत्यन्तरम्.

(४) धप्र. ५१ ; संग ३५३ धर्मप्रवृत्तौ.

(५) मिता. ३।१७ ; गभा. ९९ ; निप्र. ११३ ; प्रर. ११६ ; निसा. ४४० ; संम. ७१ ; सिन्धु. ११२४ ; विपा. ७ ( भागः २ ) ; संकौ. २०१ ; प्रका. ३६१ ; संग. ३५३ त्वन्तरा ( चान्तरा ) ; संव. १४५ ; संर. ४९१.

(६) मिता. ३।१७ ; निप्र. ११३ ; निसा. ४४१ ; संम. ७१ ; सिन्धु. ११२४ ; संकौ. २०१ ; प्रका. ३६१ ; संव. १४५ ; संर. ४९१.

(१) स्मृच. १२२ ; मुक्ता. २८० स्पृष्ट्वा ( स्पृष्टाद् ).

(२) संप्र. ८१६ ; सिन्धु. ९२१, ११२३ दत्त्वा ( दद्यात् ) ; विपा. ७३६ सिन्धुवत् : ८ ( भागः २ ) ; संकौ. २०० समुपागते ( समुपस्थिते ) शेषं सिन्धुवत् ; ज्योनि. १६३ (=) सिन्धुवत् ; प्रका. ३६१ ; बाल. १११२ पृ. ३२-३३ सिन्धुवत् ; संग. ३५२ च दत्त्वा ( दद्याच्च ) वीरमित्रोदये ; संव. १४४ सिन्धुवत् ; संर. ४९१ संकौवत्.

(३) सिन्धु. ११२३ क्रियाम् ( क्रिया ) पू. ; संकौ. २०० सर्वं सिन्धुवत् ; ज्योनि. १६३ ( = ) ; प्रका. ३६१ सर्वं सिन्धुवत् ; संव. १४४ सर्वं सिन्धुवत् ; संर. ४९१ सर्वं सिन्धुवत्.

(४) ज्योनि. १६३. मूलग्रन्थे वचनमिदं अनिर्दिष्टकर्तृकमपि पूर्ववचनसंगत्याऽत्र संगृहीतम् ।

(५) संप्र. ८१७ ; संग. ३५३.

यदि तु बलवत्यनुपपत्तिस्तदाऽशौचसमावनायां पूर्वमपि नान्दीमुखं कर्तव्यमित्युक्तं तत्रैव — भाव्यं तु सूतकमिति। संप्र.८१७

[1]ऐकविंशत्यहर्यज्ञे विवाहे दश वासराः।
पञ्चोपनयने चैव चौले चैव त्रिरात्रकम् ॥

(१) संप्र. ८१७; संग. ३५४ वीरमित्रोदये.

तस्य च कियद्दिनं पूर्वमनुष्ठानमित्यपेक्षायां तत्रैवोक्तम्— एकविंशत्यहर्यज्ञे इति। संप्र.८१७

## स्मृतिकौमुद्याम्

[1]विवाहोत्सवयज्ञेषु आरब्धे सूतकं यदि।
साङ्गं तत्कर्म कर्तव्यमन्नदानादिकं परैः ॥

(१) ज्योनि. १६७ यज्ञेषु (यज्ञादौ); संर. ४९१.



# मातृरजोदर्शनादौ निर्णयः

## बृहस्पतिः

[1]प्रथमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि ।
पत्नी रजस्वला चेत्स्यान्न कुर्यात्तत्पिता तदा ॥

पितेति कर्तृमात्रोपलक्षणम् । *गभा. १९०

[2]वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने ।
चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥

( १ ) रजोऽनुवृत्तौ बृहस्पतिरपि – वैधव्यं च विवाहे स्यादिति । संप्र. ३८५

( २ ) रजस्वलाविषयमेतत् । ज्योनि. ११९

## वृद्धमनुः

[3]विवाहव्रतचूडासु माता यदि रजस्वला ।
तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः ॥

अविशेषात् सापत्नमातुरपि ग्रहणम् ।

संर. ४८९

## प्रचेताः

[4]यस्य माङ्गलिकं कार्यं तस्य माता रजस्वला ।
तदा न तत्प्रकर्तव्यमायुःक्षयकरं हि तत् ॥

* सिन्धु., विपा. गभावत् ।

( १ ) गभा. १९० ; सिन्धु. ९२० ; विपा. ४८० : ४ ( भाग २ ) सम्रहे इत्युक्तम् ; बाल. २।१२ पृ. ३२ ( = ).

( २ ) गभा. ९९ ; संप्र. ३१४, ३८५ विघ्नं ( विघ्नो ) ; संम. ७२ ; ज्योनि. ११९ ; संग. ३५४ ; कृभ. ११०५ ; संर. ४८९ .

( ३ ) प्रपा. २४६ विवाह ( उद्वाह ) ज्योतिःसारे ; गभा. ९९ ; धप्र. ४० सर्वं प्रपावत् ; संम. २० : ७२ शुभेप्सुभिः ( शुभेच्छुभिः ) ; सिन्धु. ११०४ ; ज्योनि. ११९ प्रपावत्, मनुस्मृतौ ; रत्न. ५३ ; पुम. ४५२ ; संर. ४८९ विवाह ( उद्वाह ) क्रमेण मेधातिथिः .

( ४ ) प्रपा. २४५ ; धप्र. ४० .

## गर्गः

[1]यस्योद्वाहादिमाङ्गल्ये माता यदि रजस्वला ।
तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ॥

अविशेषात् सापत्नमातुरपि ग्रहणम् ।

संर. ४८९

## वृद्धगर्गः

[2]विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥
[3]विवाहे विधवा नारी जडत्वं व्रतबन्धने ।
चौले चैव शिशोर्मृत्युस्तस्मादेतत्त्रयं त्यजेत् ॥

## अनिर्दिष्टकर्तृकवचनम्

[4]विवाहोत्सवकार्येषु माता चैव रजस्वला ।
वैधव्यं जायते तत्र न कार्यं पाणिपीडनम् ॥

## मेधातिथिः

[5]चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ।
भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥
[6]वधूवरान्यतरयोर्जननी चेद्रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥

( १ ) गभा. ९९ ; संम. ७२ ; सिन्धु. ११०४ ; ज्योनि. ११९ माङ्गल्ये ( माङ्गल्य ) यदि ( तस्य ) ; रत्न. ५३ ; संग. ३५४ उत्त., मनुः ; पुम. ४५२ ; संर. ४८९ .

( २ ) संप्र. ३१३, ३८५ ; संकौ. ११३ ; प्रका. २०५ ; संग. ३५४ विवाह ( उद्वाह ) पू., मनुः : ६१४ ; संव. ९० ; संर. ९०० .

( ३ ) संप्र. ३१३, ३८५ ; संग. ६१४ .

( ४ ) संव. १८७ .

( ५ ) गभा. ९९ ; संम. ७२ ; सिन्धु. ११०४ ; ज्योनि. ११९ ; रत्न. ५३ ; संव. १०३ भार्या ( पत्नी ) ; पुम. ४५२ ; संर. ४८९ .

( ६ ) गभा ९९ ( = ) ; संम. ७२ न्यतर ( न्यतम ; सिन्धु. ११०४ संमवत् ; ज्योनि. ११९ शुद्धेः ( शुद्धौ मनु

अविशेषवचनात् सापत्नमातुरपि ग्रहणम् ।

संर.४८९

## षट्त्रिंशन्मतम्

नान्दीश्राद्धे कृते पश्चात्कन्यामाता रजस्वला ।
कन्यादानं पिता कुर्यादित्याङ्गिरसभाषितम् ॥
नान्दीश्राद्धे कृते यस्य भवेद्भार्या रजस्वला ।
विवाहे नैव दोषः स्याद्दोषः स्यान्मौञ्जिबन्धने ॥

## ज्योतिःसारे

प्रारम्भात्प्राग्विवाहस्य माता यदि रजस्वला ।
निवृत्तिस्तस्य कर्तव्या महत्त्वश्रुतिचोदनात् ॥

(१) प्रारम्भात्प्रागिति नान्दीश्राद्धात्प्रागिति ज्ञेयं, 'नान्दीश्राद्धं विवाहादौ' इत्यादिना तस्यैव प्रारम्भोक्तेः ।

गभा.९९

(२) तस्य रजोदोषस्य निवृत्तिः कर्तव्या, कर्मार्थं शुद्धिः प्रतीक्षणीयेत्यर्थः । विवाहारम्भात्प्राग्यदि माता रजस्वला भवेत्तदा तस्याः शुद्धौ सत्यामेव विवाहः कर्तव्यो न तु ता परित्यज्येति तात्पर्यार्थः । अत्र हेतुमाह – 'सहत्त्वश्रुतिचोदनात्' इति । यद्यप्यत्र सामान्यतः 'निवृत्तिस्तस्य कर्तव्या' इत्युक्त्या चतुर्थदिवसे रजोनिवृत्तौ सत्यां चतुर्थदिनेऽपि विवाहः कर्तव्य इति प्राप्तं, तथाऽपि 'दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति' इति वचनेन पञ्चमदिने एव सर्वकर्माधिकारशुध्यतीत्युक्तत्वात्तद्दिनमारभ्यैव विवाहेऽधिकारः, न तु चतुर्थदिनमारभ्यापीति ज्ञेयम् ।

संर.४८८

## प्रयोगपारिजाते

न विवाहोपनयने गर्भिणी मलिनी प्रसूः ।
गर्भस्यापि विपत्तिः स्याद्दम्पत्योश्च शिशोस्तथा ॥

प्रसूः माता गर्भिणी वा मलिनी मलवद्वाससा या भवेद्यदि, पुत्रस्य विवाहोपनयने पित्रा न कर्तव्ये । करणे दोषः । गर्भस्य जायापत्योः सुतस्य च विपत्तिः स्यादिति ।

मुक्ता.९९

## दीपिकायाम्

उपवासेन शुध्यन्ति नार्यः सद्यो रजस्वलाः ।
एकाकिन्यो विवाहादौ देशभङ्गेषु चाऽऽपदि ॥

## कपर्दिकारिकाः

सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् ।
प्राप्ते कर्मणि शुद्धिः स्यादितरस्मिन्न शुध्यति ॥
अलाभे सुमुहूर्तस्य रजोदोषे च संगते ।
श्रियं संपूज्य तत्कुर्यात्पाणिग्रहणमङ्गलम् ॥

---

(सूते) ; रत्न. ५२ ; संर. १०३ (=) उत्तरार्धे (संपूर्णे तु [illegible]) ; पुम. ४०२ ; संर. ४८९ प्राप्ते कुर्यात् तस्मानिर्वृत्तम् ।) , पूर्वार्धे (यस्य यस्य वा माता भोदपि रजस्वला ।).

(१) प्रपा. २४६ .

(२) प्रपा. २४६ - २४७ माधवीये ; गभा ९९ ; निस्सि ११०३ माधवीये ; संकौ २०० माधवीयेऽपि ; रत्न ५२ माधवीये ; संर. ४८८ माधवीये .

(३) मुक्ता ९९ ; आन. १५८ दिपिकोक्ता (दिपिकोक्ति).

(१) रत्न. ५२ (=) ; मंप्र. १०४ .

(२) गभा. ९९ ; मंप्र. ११४ शुद्धि (शुद्ध्यै) कारिका-निबन्धे ; संप्र. ७२ (=) , निस्सि ११०४ ; संकौ. १११ गां निबन्धे ; ज्योनि. ११९ पूर्वम् (पूर्वकम्) [illegible] ; प्रका २०५ कारिकानिबन्धे ; मंग ३५५,६१४ शुद्धौ (शुद्ध्यै) [illegible] ज्योनिबन्धे ; संर. ९० [illegible] ; संर. ४८९ शुद्धे (शुद्ध्यै).

(३) गभा. ९९ . १९० [illegible] उत्तरार्धे (श्रियं संपूज्य विधिवत्तत्र मङ्गलमाचरेत् ।) कारिकायां ; मंप्र. ११४ [illegible] पाणिग्रहणमङ्गलम् (पाणिग्रहणमङ्गलम्) कारिकानिबन्धे ; संप्र. ७२ (=) पाणिग्रहणमङ्गलम् [illegible] ; निस्सि. ९२० [illegible] उत्तरार्धे (श्रियं संपूज्य विधिवत्तत्र मङ्गलमाचरेत्) कारिकायां . ११०४-११०५ ; विधा. ४८० [illegible] ; संकौ. १११ [illegible] ; ज्योनि. ११९ [illegible] ; रत्न. ५२ [illegible] कारिकानिबन्धे ; [illegible] ; प्रका २०५ कारिकानिबन्धे ; [illegible] ; संर. ९० [illegible] ; पुम. ४०२ [illegible] ; संर ४८९ [illegible].

[1]हैमीं मापमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत् ॥
प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेत् ॥

( १ ) यदा चौलादौ शुद्ध्यनन्तरं लग्नान्तराभावः, तदा शान्तिकं कृत्वा तदैव कार्यम् । तदुक्तं कारिकानिबन्धे— 'सूतिकोदक्ययोः ... शुध्यति ॥' प्राप्ते प्रारब्धे । तथा — 'अलाभे ... शुभमाचरेत् ॥' इति । संप्र.३१४

( २ ) अस्य मूलं मृग्यम् । संम.७२

( ३ ) नान्दीश्राद्धोत्तरं रजोदोषे तु कपर्दिकारिकासु —– सूतिकोदक्ययोरिति । सूतकादिसंकटे तु कूष्माण्डीभिर्घृतं हुत्वा पयस्विनीं च गा दत्त्वा विवाहादि कुर्यादिति च वक्ष्यते । सिन्धु.११०४–११०५

( ४ ) चौलादिप्रारम्भोत्तरं रजः, प्रारम्भात्प्रागपि रजसि मुहूर्तान्तराभावो वा, तदा शान्तिं कृत्वा तदैव कार्यम् । यथोक्तं कारिकानिबन्धे —– 'सूतिकोदक्ययोः ... ' इति । श्लोकभेदेन प्राप्तपदोक्तारम्भस्य मुहूर्तान्तरालाभस्य च श्रवणान्न परस्परसापेक्षत्वम् । संकौ.११३

( ५ ) प्राप्ते इति । नान्दीश्राद्धरूपप्रारम्भवति कर्मणि शुद्धिः, इतरस्मिन् नान्दीश्राद्धरूपप्रारम्भाभावे तु नेत्यर्थः, 'अलाभे सुमुहूर्तस्य' इत्युक्त्या प्राप्तेः प्रारम्भात्मकत्वात् । यद्वा, नान्दीश्राद्धप्रारम्भोत्तरमित्यर्थः । प्राप्ते आरब्धे, इतरस्मिन् अनारब्धे । होमश्च परिभाषाप्राप्ताऽऽज्यद्रव्येण समस्तव्याहृतिभिरष्टोत्तरशतसंख्यः । शुद्धिश्चानिष्टविरहः । अनिष्टं चाऽऽह बृहस्पतिः —'वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने । चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥' इति । न त्वन्यारम्भयोग्यता, स्पर्शानधिकारात् । केचित्तु विभिन्नवाक्योपात्तयोरारम्भमुहूर्तालाभयोन परस्परसापेक्षत्वम् । तेनाऽऽरम्भात्प्रागपि रजोदोषे लग्नान्तराभावे शान्तिं कृत्वा विवाहादि कुर्यादित्याहुः । अन्ये तु 'अलाभे सुमुहूर्तस्य' इत्यपि प्रारब्धपरमेव कारिकावाक्यैकवाक्यत्वादित्याहुः ।

कुम.११०४–११०५

( ६ ) 'सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम्' इतिवचनप्रतिपादिता शुद्धिश्चतुर्थदिवसविषयिणी द्रष्टव्या । अत्र शुद्धिशब्देनाधिकार उच्यते । तथा च अधिकाराय गां दद्याद्धोमपूर्वकमित्यर्थो भवति । होमपूर्वकमिति विहितो होमः कूष्माण्डैरेव, कपर्दिकारिकासु पूर्वत्र तस्यैवोपक्रमात् । रजस्वलाविषये— 'दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति' इति वचनसिद्धस्य चतुर्थदिवसेऽनधिकारस्य बाधोऽनेन क्रियते । सूतिकाविषये तु — 'विंशतिरात्रं पुत्रप्रसूर्मासेन स्त्रीजननी' इत्यनेन प्रतिपादितस्यानधिकारस्यात्र बाधः । इयं वैधी शुद्धिः संकटविषये द्रष्टव्या । रजोदर्शनादिसंभावनायां नान्दीश्राद्धस्यापकृष्यानुष्ठाने विधिः स्मृत्यन्तरे—–'एकविंशत्यहर्यज्ञे विवाहे दश वासराः । त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते ॥' इति । चौले त्रयो वासरा उपनयने षड्वासरा इत्यर्थः । संर.४९०

( १ ) गभा. ९९ ऽभिषिच्य शुभमाचरेत् (अभिषेकं समाचरेत्); संप्र. ३१४ ऽभिषिच्य (निषिच्य) कारिकानिबन्धे; संम. ७२ (=) गभावत्; सिन्धु. ११०५ गभावत्; संकौ. ११३ कारिकानिबन्धे; ज्योनि. ११९ कारिकानिबन्धे; रत्न. ५३ ऽभिषिच्य शुभमाचरेत् (ह्यभिषेकं समाचरेत्) कारिकायाम्; प्रका. २०५–२०६; संग. ३५४ पद्मां (पापघ्नीं) कारिकानिबन्धे: ६१४ कारिकानिबन्धे; संव. ९० कारिकानिबन्धे: १०४ शुभ (हित) वाक्यसारे; पुम. ४५२ गभावत्; संर. ४८९.



## वृद्धमनुः

अपसव्यं स्वधाकारं शीताद्भिः स्नानमेव च ।
सपिण्डा नैव कुर्वीरन्यावन्मातृविसर्जनम् ॥

अथ विवाहनिमित्तेन वर्ज्यानि — तत्र मातृकास्थापनमारभ्य मातृकोद्वासनपर्यन्तं कानिचिद्वर्ज्यानि, कानिचिदुत्तरमपि वर्ज्यानि । तत्राऽऽद्यानि वृद्धमनुः— अपसव्यमिति । अत्रापसव्यस्वधाशब्दाभ्यां तद्वत्कार्यं लक्ष्यते । अपसव्यमित्यनेनैव सिद्धे स्वधाशब्दोपादानं ' स्वधा पितृभ्यः स्वाहा ' इति पितृयज्ञसहचरितवैश्वदेवनिषेधार्थं, आचारमंवादलाभात् । संर.५८६

## गर्गः

नान्दीश्राद्धे कृते पश्चाद्यावन्मातृविसर्जनम् ।
दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥
अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च ।
ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलङ्घनम् ॥
उपवासव्रतं चैव श्राद्धभोजनमेव च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि ॥

(१) त्रिपा. ५४ ( भाग २ ) ; संग. ३२३ स्वधाकारं ( स्वधां यात्रां ) ; संर. ५८६ स्वधाकार ( स्वधा यात्रा ).

(२) गभा. १०९ ; धप्र. ५१ पश्चात् ( चैव ) वसिष्ठः ; संम. ७३ नान्दीश्राद्धे ( नान्दीश्राद्ध ) उत्तरार्धे ( दर्शश्राद्धक्षयश्राद्धस्नान शीतोदकेन च । ) ; सिन्धु ११४५ ; संकौ. १५२ ; प्रका. ३१८ ; संग. ३२३ (=) धप्रवत् , संर. १२७ ; पुम. ४५४ ; संर. ५८७ .

(३) गभा. १०९ ; धप्र. ५१ वसिष्ठः ; संम. ७२ ; सिन्धु ११४६ ; संकौ. १५२ , प्रका ३१८ संग ३२३ (=) अपसव्यं ( उपवासं ) तिलङ्घनम् ( विवासनम् ) , संग १२७ ; पुम. ४५४ , संर. ५८७ सिन्धु ( त्रिन्धु )

(४) गभा. १०९ ; धप्र ५१ श्राद्धभोजनमेव च ( तथैव श्राद्धभोजनम् ) वसिष्ठः , संम. ७२ , सिन्धु ११४६ वास ( वास ) ; संकौ. १५२ ; प्रका. ३१८ , संग. ३२३ ( = ) उपवास ( अपसव्यं ) श्राद्धभोजनमेव च ( तथैव श्राद्धभोजनम् )

(१) अत्रापि सपिण्डाः चतुःपुरुषावधि इति ज्ञेयम् । पुम.४५४

(२) नियतमण्डपकमहादानादिव्यावृत्तये — यावन्मातृविसर्जनमिति । तत्र मातृविसर्जनस्य मण्डपोद्वासनावधिकत्वं विशेषणम् । तादृशं च तद्विवाहोपनयनयोरेव, नान्यत्र । न चेदं महादानादौ मातृविसर्जनविलम्बं विधातुं समर्थं, तथाविधप्रत्ययाभावात् , विवाहोपनयनयोरेव मातृविसर्जनमण्डपोद्वासनयोः क्रमस्य सिद्धेः । कृम.११४५–११४६

## लघ्वाश्वलायनः

नान्दीश्राद्धे कृते चैव विवाहे चोत्सवादिषु ।
न कुर्यादुपवासं च छन्दसां वै तपोव्रतम् ॥
अपसव्यं स्वधाश्राद्धं नदीस्नानं शवेक्षणम् ।
वर्जयेत्तर्पणं चैव देवकोत्थापनावधि ॥
नान्दीश्राद्धे कृते मोहाच्छ्राद्धं प्रत्याब्दिकादिकम् ।
सपिण्डः कुरुते यश्चेदपमृत्युं व्रजेद्ध्रुवम् ॥
अलाभे सुमुहूर्तस्य विघ्नं यः कुरुते यदि ।
स्वधया तु विवाहस्य न स पश्येच्छुभं क्वचित् ॥
विघ्नमाचरते यस्तु यज्ञस्योद्वाहकस्य च ।
यात्रायाश्चैव धर्मस्य स याति नरकं ध्रुवम् ॥
ऊढाया दुहितुश्चान्नं नाद्याद्विप्रः कथंचन ।
अज्ञानाद्यदि भुञ्जीत नरकं प्रतिपद्यते ॥
नान्दीश्राद्धे कृते यावद्देवकोत्थापनं भवेत् ।
ब्रह्मयज्ञश्च वै श्राद्धं वेदाध्ययनमेव च ॥
शवेक्षणं स्वधाकारं श्मश्रुकेशनिकृन्तनम् ।
सीमातिक्रमणं चैव श्राद्धभोजनमेव च ॥

नैव कुर्युः सपिण्डाश्च ( सपिण्डा नैव कुर्वीरन् ), संर. १२७ ; पुम. ४५४ , संर. ५८७ सिन्धुवत् .

(१) लघ्वाश्वस्मृ. १५।७५–८० .

(२) लघ्वाश्वस्मृ. १५।१–२, ६ .

न कुर्याच्छुभकर्ता च सपिण्डा अपि चैव हि ।
यस्तु वै कुरुते मोहादशुभं स च वै लभेत् ॥
नान्दीश्राद्धे कृते विप्रस्तथा चैव तु पैतृके ।
प्रेतपिण्डे प्रदत्ते तु नैव कुर्यादुपोषणम् ॥

## स्मृत्यन्तरम्

मृत्पुण्ड्रं भस्मपुण्ड्रं च स्नानं शीतोदकेन च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि ॥

## अनिर्दिष्टकर्तृकवचनानि

दर्शश्राद्धं क्षयश्राद्धं नदीसीमातिलङ्घनम् ।
सपिण्डा नैव कुर्वीरन् यावन्मातृविसर्जनम् ॥
पित्रोः प्रत्याब्दिके प्राप्ते नान्दीश्राद्धं न कारयेत् ।
यदि मोहाद्द्विजः कुर्यान्माङ्गल्यमशुभं भवेत् ॥
उपवासव्रतं चैव तथा व्रतविसर्जनम् ।
मृदा स्नानं नैव कुर्यात्क्षुरेण श्मश्रुकृन्तनम् ।
सपिण्डा नैव कुर्वीरन् यावन्मातृविसर्जनम् ॥

## संग्रहकारः ( स्मृतिसंग्रहः )

[3]नित्यश्राद्धं चाध्ययनं स्नानं शीतेन वारिणा ।
प्रारब्धे मङ्गले नैव मण्डपोद्वासनावधि ॥

( १ ) संर. ५८७ .
( २ ) विधा. ५५ ( भागः २ ).
( ३ ) विधा. ५४ ( भागः २ ) चाध्य ( अध्य ) प्रारब्धे मङ्गले ( जाते माङ्गलिके ) ; संर. ५८७ .

[1]विवाहादिकमाङ्गल्ये प्रतिष्ठायां महोत्सवे ।
आसमाप्ति न गन्तव्यं सूतके मृतकेऽपि च ॥

## धर्मप्रदीपे

[2]प्रेतदाहो दधिस्नानं स्नानं शीतेन वारिणा ।
वैश्वदेवः स्वधाकृत्यं ब्रह्मयज्ञ उपोषणम् ॥
वेदस्याध्ययनं चैव वेदस्याध्यापनं तथा ।
सीमातिक्रमणं नैव देवकोत्थापनावधि ॥

## भास्करव्यवहारे

[3]क्षयदर्शौ शीतस्नानं सीमानदीविलङ्घनम् ।
आमश्राद्धगमो नास्ति प्राङ्निवीतं तु केचन (?) ॥

## शाकलकारिकाः

[4]देवकोत्थापनं यावन्नान्दीश्राद्धं कृतं भवेत् ।
तावदेवाशुभं कर्म प्रयत्नेन विवर्जयेत् ॥
ब्रह्मयज्ञं स्वधाकारमुपवासं तथाऽऽब्दिकम् ।
शीतोदकं तथा स्नानं सीमातिक्रमणं च हि ॥
शवानुगमनं श्राद्धं श्मश्रुकेशादिवापनम् ।
नैव कुर्युः सपिण्डाश्च यावन्मातृविसर्जनम् ॥

( १ ) संर. ५८७ .
( २ ) संर. ५८६ .
( ३ ) ज्योनि. १६४ .
( ४ ) शाका. १६६–१६८ पृ. १८ .



# विवाहोत्तरं वर्ज्यानि

## बौधायनः

[1]विवाहे चोपनयने चौले चैव यथाक्रमम् ।
वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणम् ॥

## बृहस्पतिः

[2]मुण्डनस्य निषेधेऽपि कर्तनं तु विधीयते ।
छेदनं ह्यपदा वाऽपि न क्षुरेण कदाचन ॥

## ज्योतिष्पराशरः

[3]विवाहे विहिते मासांस्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि ॥

[4]महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ॥

कश्चित्प्रतिप्रसवमाह स एव — महालये इति । गयाश्राद्धपदं सर्वतीर्थश्राद्धोपलक्षणम् । क्षयाहग्रहणं नित्याऽऽमाष्टकादिश्राद्धानामुपलक्षणम् । नन्वेवं महालयेऽपि पिण्डनिर्वपणसिद्धौ महालयग्रहणस्य व्यर्थत्वापत्तिः, अतः क्षयाहग्रहणमपलक्षणमिति वक्तुमशक्यमिति चेत्, न, महालये पिण्डदाननिषेधेन कालान्तरसद्भावात् कालान्तरे महालयानुष्ठानं स्यात्, तन्मा भूत्, किंतु स्वकाल एव सपिण्डको महालयः कर्तव्य इत्येवं तस्य सार्थक्यसंभवात् । सपिण्डीकरणग्रहणं नवश्राद्धषोडशश्राद्धोपलक्षणम् । मातापित्रोरिति क्षयाहविशेषणं हविरुभयत्वत्वदविवक्षितं, तेन भ्रातृपितृव्यादिवार्षिकेऽपि पिण्डदानं कार्यमेव ।

संर. ५८८

## योगियाज्ञवल्क्यः

[1]न स्नायादुत्सवेऽतीते मङ्गलं विनिवर्त्य च ।
अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताम् ॥

## कार्ष्णाजिनिः

[2]विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

## लघ्वाश्वलायनः

[3]ऊढाया दुहितुश्चान्नं नाद्याद्विप्रः कथंचन ।
अज्ञानाद्यदि भुञ्जीत नरकं प्रतिपद्यते ॥
[4]विवाहे चोपनयने कृते चौले सुतस्य च ।
त्यजेत्पिण्डांस्तिलाञ्छ्राद्धे करकं चाब्दमध्यतः ॥
मातापित्रोर्मृताहे च गयाश्राद्धे महालये ।
दद्यात्पिण्डान्कृतोद्वाहः श्राद्धेष्वन्येषु वर्जयेत् ॥

## सत्यव्रतः

[5]पिण्डदानं परित्यज्य संकल्पं कुरुते यदि ।
संततेस्तु विनाशः स्यात्संपदां हरणं भवेत् ॥

---

(१) संर. ५८८.

(२) गभा. १९२ पू.; ज्योनि. ११९ तु (च) स्मृत्यन्तरम्; मंग. ६२१ तु (च) ज्योतिर्निबन्धे · ६२२ पू.; संर. ५८९ निषेधेऽपि (निषेधे तु) तु (वै) पू., स्मृत्यन्तरम्; संदी. ६१ (भागः २) पू., स्मृत्यन्तरम्.

(३) चम. १३८; संर. ५८८ विहिते (विहितात्) निर्वाप (निर्वापे).

(४) गभा. १०९ सदा (पुनः) द्वितीयार्धं नास्ति, स्मृतौ इत्युक्तम्; चम. १३८; त्रिपा. १४३ (भाग २) क्षयेऽहनि (मृतेऽहनि) हेमाद्रौ; संग ३२४ सदा (पुनः) हेमाद्रौ, द्वितीयार्धं नास्ति; संर. ५८८.

(१) गभा. १०९ नर्च (चार्च); सिन्धु ११४६; पुम. ४५५; संर. ५८८ मङ्गलं (माङ्गल्यं).

(२) गभा १०९ हेमाद्रौ स्मृत्यन्तरे; स्मना. ८७ चूडासु (चौलेषु) महाभारते; सिन्धु. ११४७ हेमाद्रौ स्मृत्यन्तरे; त्रिपा. १४३ (भागः २) समो; संग. ३२४ हेमाद्रौ; संर. ५८८: १०५४ (=).

(३) लघ्वाश्वस्मृ. १५।८०.

(४) लघ्वाश्वस्मृ. १९।४, ५.

(५) धप्र. ५२.

[1]पित्रोरेव मृताहे तु गयायां च महालये ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥

## स्मृत्यन्तरम्

कृत्वा विवाहं व्रतबन्धनं च
वर्षं तदर्धं न च तीर्थयात्राम् ।
क्षौरं च पिण्डांस्तिलयुक्तकर्म
न चैव कुर्युर्हि नराः सपिण्डाः ॥

[3]विवाहमौञ्जीचौलोर्ध्वं वर्षमर्धं तदर्धकम् ।
पिण्डान् सपिण्डा नो दद्युर्गयायां दद्युरेव ते ॥

[4]विवाहे मेखलाबन्धे वर्षमर्धं तदर्धकम् ।
गेहारम्भप्रवेशौ च वर्जयेत्सर्वदा बुधः ॥

[5]सपिण्डा नैव कुर्वीरन्नद्भिः( ? मृद्भिः) स्नान-
मृतुत्रये ॥
तीर्थे संवत्सरे प्रेते पितृयज्ञे महालये ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ॥

[6]पिण्डान्सपिण्डा नो दद्युः प्रेतपिण्डं विनाऽत्र तु ।
पितृयज्ञे च यज्ञे च गयायां दद्युरेव ते ॥

गर्भिण्यामपि भार्यायां विवाहेऽप्यथवा व्रते ।
सपिताऽपि वपेत्केशान् गौतम्यां सिंहगे गुरौ ॥

विवाहे इत्यत्र निवृत्तेऽपीति शेषः । एवं व्रते इत्यत्रापि । गौतम्यामिति गौतम्यसंनिहितदेशनिवृत्त्यर्थम् । सिंहगे गुराविति तीर्थयात्रान्तरोपलक्षणम् ।
संर.८१८

उद्वाहाब्दे गर्भिणी चेत्स्वभार्या
हानिर्मृत्युर्गर्भनाशो भ्रमश्च ।
तच्छान्त्यर्थं स्वर्णनिष्कत्रयेण
कृत्वा मृत्योराकृतिं पूज्य दद्यात् ॥

विवाहाब्दे पुत्रस्य पुत्र्या वा विवाहकर्तुः पित्रादेर्भार्या गर्भिणी चेत्तदा दोष उक्तः स्मृत्यन्तरे– उद्वाहाब्द इति । पूज्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः । दद्यादित्यत्र ब्राह्मणायेति शेषः । संर.५९०

## भविष्यपुराणम्

अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ॥

कन्यागृहे भोजननिषेधो भविष्ये– अप्रजायामिति । न भुञ्जीतेत्यत्र कन्यागृहे इति शेषः ।
संर.५०२

## आदित्यपुराणम्

[3]विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत् ।
अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥
ब्रह्मदेयाविशेषेण देवे भोज्यं सदैव तु ( ? ) ।
गान्धर्वे चैव राजन्यः कुर्याद्वै गमनागमम् ॥
ब्रह्मदेयां न वै कन्यां दत्त्वाऽश्नीयात्कदाचन ।
अथ भुञ्जीत मोहाद्यः पूयाशी नरके वसेत् ॥

---

( १ ) धप्र. ५२ उत्तरार्धे ( पिण्डनिर्वपण कुर्यात्कृतोद्वाहोऽपि तत्सुतः । ) ; संर. ५८९ .

( २ ) संर. ५८९ .

( ३ ) संकौ. ११५ पिण्डान् सपिण्डा ( सपिण्डाः पिण्डं ) स्मृत्यर्थसारे ; संर. ९०२ .

( ४ ) संर ५८७ .

( ५ ) सिन्धु. ११४७ .

( ६ ) संर. ५८८ .

( ७ ) संर. ८१८ .

( १ ) संर. ५९० .

( २ ) गभा. १०९ ; सिन्धु. ११२४ ; विपा. १४४ ( भागः २ ) मदनरत्ने ; संग. ३५५ विधानपारिजाते ; पुम. ४५३ ; संर. ५०२ .

( ३ ) अप. १।१६४ पृ. २३९ ; गृर. ३५० ; गभा. १०९ मन्युं ( कोप ) ; उत. १४७–१४८ ; सिन्धु. ११२४ गभावत् ; विपा. १४४ ( भागः २ ) गभावत् ; प्रका. ३७१ ; संग. ३५५ गभावत् ; पुम. ४५३ गभावत् ; संर. ५०२ ( अप्रजायां तु कन्यायां नाश्नीयात्कन्यकागृहे । ) उत्त .

( ४ ) अप. १।१६४ पृ. २३९ उत्त. ; गृर. ३५० उत्तरार्धे ( गन्धर्वैश्चैव दैवैश्च कुर्याद्वै गमनागमम् । ) ; उत. १४८ ( ब्राह्मदेया विशेषेण नैव भोज्यं सदैव तु । ) पू .

( ५ ) अप. १।१६४ पृ. २४० ; गृर. ३५० अश्नीयात् ( भुञ्जीत ) पूयाशी नरके वसेत् ( स पूयं नरकं व्रजेत् ) ; गभा. १०९ अथ ( यदि ) मोहाद्यः ( मोहाद्वा ) नरके वसेत् ( नरके

(१) ब्राह्मादिविवाहचतुष्टयपरिणीता ब्राह्मदेया ।
अप. १।१६४ पृ. २४०

(२) ब्राह्मविवाहविधिना दातुं योग्या कन्या दत्त्वा कदापि तस्या गृहे नैवाशनीयादित्यर्थः । अत्राप्यप्रजायामित्यनुषञ्जनीयम् । संर.५०२

### [1]अग्निपुराणम्

अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ॥
महासत्त्वसमाकीर्णान्नास्ति ते नरकाद्भयम् ।
तीर्णस्त्वं सर्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि ॥

### अनिर्दिष्टकर्तृकवचनानि

[3]विवाहमौञ्जीचूडासु वर्षमर्धं तदर्धकम् ।
अन्तर्वत्न्यां च जायायां नेष्यते केशवापनम् ॥
उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे ।
[4]निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥
[5]तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तिलैस्तर्पणमेव च ॥
[6]वृद्धेरुपरि कर्तव्यं मातापित्रोर्मृतेऽहनि ।
पिण्डनिर्वपणं कार्यं पितृव्यादेरपिण्डनम् ॥
[7]विवाहोपनयादूर्ध्वं वर्षं वर्षार्धमेव च ।
न दद्यात्करकान्पिण्डान्न तिलैरर्चयेत्पितॄन् ॥

### संग्रहकारः ( स्मृतिसंग्रहः )

[1]विवाहे व्रतबन्धे च गर्भिणीपतिरेव च ।
मुण्डनं सर्वतीर्थेषु कुर्यादेवाविचारयन् ॥
[2]विवाहोपनयोर्ध्वं तु वर्षं वर्षार्धमेव च ।
व्रतप्रारम्भणं नैव व्रतस्योद्यापनं तथा ।
न कुर्यात्पिण्डनिर्वापं न दद्यात्करकाणि च ॥
देवोत्सवं तथा कृत्वा वर्षं वर्षार्धमेव च ।
मङ्गलात्परतो गेहच्छादनं चैव वर्जयेत् ॥
[3]विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।
संस्कारेषु तदन्येषु मासं मासार्धमेव च ॥

एतदपि दर्शसंक्रान्त्यादिश्राद्धपरम् ।
विपा. १४३ ( भागः २ )

### चन्द्रिकायाम्

[4]वापयेन्न कृतोद्वाहो वर्षं वर्षार्धमेव वा ।
[5]भुञ्जीत पार्वणं नैव श्राद्धं तत्र विशेषतः ॥

### धर्मप्रदीपे

[6]विवाहोपनयादूर्ध्वं वर्षं वर्षार्धमेव वा ।
पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणं विना ॥

### ज्योतिष्प्रदीपे

स्नानं सचैलं तिलमिश्रकर्म
प्रेतानुयानं कलशप्रदानम् ।
अपूर्वतीर्थामरदर्शनं च
विवर्जयेन्मङ्गलतोऽब्दमेकम् ॥

---

मनेव् ) ; मिन्धु. ११२४ मोहाद्य पूयाशी ( मोहाच्चेत्पूयाशी ) ; विपा. १४४ ( भागः २ ) मोहाद्यः पूयाशी ( मोहाच्चेत्स्वपाशी ) ; प्रका. ३७१ मोहाद्यः ( मोहाच्चेत् ) उत्त. ; संग. ३५५ मोहाद्यः पूयाशी ( मोहाच्चेत्स पापी ), संर. ५०२ मद्य ( श्राद्ध ) उत्तरार्धे ( अथ भुञ्जीत मोहाच्चेत्स याति नरकं ध्रुवम् । ).

(१) चद्रा. ६८८ पूर्वार्धे ( अप्रजायाश्च कन्याया न भुञ्जीयात्कदाचन । ) ; उत. १४७, बाल. १।१२ पृ. ४१ पू.

(२) चद्रा. ६८८ ; उत. १४७.

(३) बाल. १।१२ पृ. १६.

(४) कृभ. ११४७.

(५) कृभ. ११४८.

(६) धप्र. ५२ ; संग. ३२४ वृ ( क्षये ) धर्मप्रदीपे.

(७) धप्र. ५२.

(१) संर. ८१८.

(२) संर. ५८९-५९०.

(३) विपा. १४३ ( भागः २ ). प्रथमार्धद्वयं तु मदनपारि दृश्यते ।

(४) मुका ४१७.

(५) स्मा. ३२१.

(६) गमा. १०९ ज्योतिषे ; धप्र. ५२ (=) वर्जे ( तर्जे ) बन्ध ( बन्ध ) ; मिन्धु. ११७९ ज्योतिषे ; विपा. १४२ ( भागः २ ) ज्योतिषे ; संग. ३१४ (=) ; संर. ५८९.

मासषट्कं विवाहादौ व्रतप्रारम्भणं न च ।
व्रतस्योद्यापनं नैव नैव कुर्यादुपोषणम् ॥

[2]जीर्णभाण्डादि न त्याज्यं गृहसंमार्जनं तथा ॥

[3]ऊर्ध्वं विवाहात्पुत्रस्य तथा च व्रतबन्धनात् ।
आत्मनो मुण्डनं नैव वर्षं वर्षार्धमेव च ॥

पुत्रग्रहणेनात्र पुत्र्यपि गृह्यते । मुण्डनं क्षौरम् ।

संर.५८९

## ज्योतिर्निबन्धे

[4]अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम् ॥

[1]विवाहादौ मासमेकं न धार्यं गोपिचन्दनम् ॥

## सारसमुच्चये

[2]चौलाब्दे च विवाहाब्दे ह्यौपनायनिके तथा ।
मातापित्रोर्मृताब्दे च क्षौरं नैव समाचरेत् ॥

## शाकलकारिकाः

[3]कृत्वा विवाहं व्रतबन्धनं च
वर्षं तदर्धं न च तीर्थयात्रा ।
क्षौरं च पिण्डांस्तिलयुक्तकर्म
न चैव कुर्यात् ( कुर्युः ) न
चिरात्सपिण्डाः ॥

पित्रोरेकाब्दिके श्राद्धे गयायां च महालये ।
कृतोद्वाहोऽपि तत्कुर्यात्पिण्डदानं तिलार्चनम् ॥

[4]दुहितुरन्नं न भुञ्जीत यावत्तस्या भवेत्सुतः ।
अन्यथा यस्तु भुञ्जीत दानं तस्य वृथा भवेत् ॥

[5]कन्यायास्त्वप्रसूताया यस्त्वन्नं भुञ्जते यदि ।
अघं स केवलं भुङ्क्ते प्राजापत्येन शुध्यति ॥

---

( १ ) गभा. १०९ पू. , ज्योतिषे ; धप्र. ५२ (=) पू. ; सिन्धु. ११४६ णं न च ( णेऽपि च ) पू. , ज्योतिषे ; संकौ. २२९ (=) म्भणं ( म्भणे ) पू. ; पुम. ४५५ (=) सिन्धुवत् , पू. ; संर. ५८९ .

( २ ) गभा. १०९ ज्योतिषे ; धप्र. ५२ (=) ; सिन्धु. ११४६ ज्योतिषे ; संकौ. २२९ (=) ; संग. ३२४ गदाधरभाष्ये ; पुम. ४५५ (=) ; संर. ५८९ .

( ३ ) गभा. १०९ ज्योतिषे ; धप्र. ५२ (=) ; सिन्धु. ११४६ ज्योतिषे ; संकौ. २२९ नैव ( चैव ) मेव च ( मेव वा ) ; संग. ३२४ गदाधरभाष्ये ; पुम. ४५५ (=) ; संर. ५८९ .

( ४ ) गभा. १०९ ज्योतिषे ; संम. ७३ (=) गोपि ( गोपी ) ; सिन्धु. ११४६ ज्योतिषे ; संकौ. १५२, २२९ (=) ; प्रका. ३१८ ; संव. १२७ (=) ; पुम. ४५५ (=) ; संर. ५८९ .

( १ ) संर. ५८९ .

( २ ) मुक्ता. ४६७ .

( ३ ) शाका. १६९, १७० पृ. १८ .

( ४ ) शाका. १७१ पृ. १८ ; संर. ५०२ भुञ्जीत ( भुञ्जीयात् ).

( ५ ) शाका. १७२ पृ. १९ ; संर. ५०२ .



# * पुनर्विवाहः

## बौधायनगृह्यसूत्रम्

[१]यथो एतद्ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणामेवं विवाहं कुर्वन्त्यपरपक्षेऽशुभे दिने वाऽशुचिना वा विवाहं कुर्वन्ति विवाहेन नर्ध्नोतीति मन्येत वाऽऽवसथात्पुनर्विवाहं कुर्वीत ॥

[२]अथ चेदौपासनारम्भात्प्राक् ज्वलनस्य नाशः पुनर्विवाहं कुर्वीत ॥

## वैखानसगृह्यसूत्रम्

[३]समावर्तनक्रियाहीने पाणिग्रहणे कृते चान्द्रायणं चरित्वाऽग्निमाधाय सावित्रीं वैष्णवं ब्राह्ममार्षेयमाग्नेयं शतमावर्त्य हुत्वा समावर्तनं कृत्वा पुनर्विवाहं करोति ॥

[४]रजःप्राप्तौ कन्यां विवाहे कृते कृच्छ्रं चरित्वाऽग्निमाधाय वैष्णवं सावित्रीं शतमावर्त्य हुत्वा तां पुनर्विवाहं कुरुते ॥

## अनिर्दिष्टकर्तृकवचने

[५]ऋग्वेदिनां प्रवेशहोमात्पूर्वं यजुर्वेदिनामौपासनारम्भात्सामवेदिनां लेखाहोमात्पूर्वमग्निनाशे पुनर्विवाहः ॥

[६]विवाहसमये प्राप्ते यद्यहे मृत्युजन्मनी ।
स्यातां तदा पुनश्चैव शुद्धे काले समाचरेत् ॥

---

(१) बौगृशे. २।१७।१.

(२) बौगृशे. २।१२।२ ; मुक्ता. १४९ ; भान. १८०.

(३) वैगृ. ६।११.

(४) वैगृ. ६।१२.

(५) मुक्ता. १४९, भान. १८० रम्भात् + ( प्राक् ) लेखाहोमात्पूर्वं ( लेखाहोमात्प्राक् ).

(६) विपा. ५६ ( भाग २ ) ; संग. २२१ मृत्यु ( मृति ).

## स्मृतिसंग्रहः

पूर्वमौपासनारम्भादग्निनाशो यदा भवेत् ।
पुनर्विवाहः कर्तव्यः परतस्तु न विद्यते ॥

## नृसिंहः

[१]पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम् ।
लग्नेन्दुलग्नयोर्दोषे महतारादिसंभवे ॥
[२]अन्येष्वशुभकालेषु दुष्टयोगादिसंभवे ।
विवाहे चापि दम्पत्योराशौचादिसमुद्भवे ।
तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह्यमिष्यते ॥

( १ ) इत्थं विवाहे कृते पश्चाल्लग्नं पञ्चाङ्गशुद्धिराहित्यादिना दुष्टमिति ज्ञातं चेत्तदा ज्योतिःशास्त्रोक्तकालविशेषे पुनर्विवाहं कुर्यात् । तदाह श्रीधरीये नृसिंहः—पुनर्विवाहं वक्ष्यामीति । अत्र आशौचादिशब्देन तद्गृहे मृताशौचोत्पाता गृह्यन्ते, वरेणाचरितगुरुमृताशौचविषयं वा, अन्यत्र सामान्याशौचे नान्दीश्राद्धादूर्ध्वमाशौचाभावात् । प्रपा. ३८५

( २ ) अत्र आशौचशब्देन वरपित्रोराशौचं, अन्याशौचे दोषाभाववचनात् । आदिशब्देन गृहदाहाद्युत्पातो गृह्यते । संप्र. ८६६

( ३ ) अत्र आशौचशब्देन ग्रहणं प्राप्तं, तत्राप्याशौचस्य सत्त्वात् । भ्रान्तैतत् । गुर्वाशौचविषयं वा । संर. ५९०

---

( १ ) मुक्ता. १४९ ; भान. १८०.

( २ ) प्रपा. ३८५ ; गभा. १०६ ; प्रर. ११६ मर ( गृह ) ; संप्र ८६६ लग्नेन्दु ( भग्नेन्दु ) ; सिन्धु. ११५० श्रीधरीये ; विपा. ५५ (भागः २) ; संग. २२० ; संव. १७१ ; संर. ५९०.

( ३ ) प्रपा. ३८५ चापि ( स्वप ) ; गभा. १०६ ; प्रर. ११७ ; संप्र. ८६६ चापि ( स्वप ) मिथ्यो ( मुष्यो ) ; सिन्धु. ११५०–११५१ दोषादि ( रोगादि ) श्रीधरीये ; विपा. ५५–५६ ( भागः २ ) प्रथमार्धम् ; संग. २२०–२२१ प्रथमार्धम् ; संव. १७१ ; संर. ५९० प्रथमार्धम्.

---

* ययोर्वधूवरयोः पूर्वं विवाहसंस्कारस्तयोरेव निमित्तविशेषे सति पुनःसंस्कार इत्यर्थः ।

# * अधिवेदनम्

## बौधायनगृह्यशेषसूत्रम्

अर्धविवाहकारणानि

[1]अथार्धोद्वाहं व्याख्यास्यामः। मूकान्धबधिरादीनां जडानां च तृतीयविवाहिनां च ॥

## हारीतः

वर्ज्या भार्या, अधिवेदनस्य कारणानि कालश्च

[2]अप्रजा नवमे वर्षे दशमे तु मृतप्रजां।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

अधिवेद्येत्यध्याहार्यम्। गृर.८५

[3]गर्भघ्नीमधोवर्णगां शिष्यसुतगामिनीं पापव्यसनासक्तां धनधान्यक्षयकरीं वर्जयेत् ॥

## बौधायनः

वर्ज्या भार्या, अधिवेदनस्य कारणानि कालश्च

[4]अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

( १ ) त्यजेत्संभोगत इति शेषः। अप्रियवादिनीं तु सहवासतोऽपि त्यजेत्। स्मृच.( व्यव. )२४७

( २ ) दशमे इत्यार्तवानन्तरं वेदितव्यं, न तु पाणिग्रहणात्। मुक्ता.१५१

( ३ ) अधिवेदनमत्र विवक्षितं, न त्यागः। तदपि सति संभवे। धर्माधिकारः पुनरस्यैव। अप्रियवादिन्यास्तु विपक्षे (?)। तस्या अपि ग्रासाच्छादनं देयम्। बौवि.

( १ ) बौगृशे. ५।४।१.

( २ ) गृक १०४; स्मृच. ( व्यव. ) २४४ ( अप्रजां नवमे वर्षे ) एतावदेव; गृर. ८५ मे तु ( मे च ); मंप्र. ८७२.

( ३ ) उन. १५० गर्भघ्नी ( गर्भिणी ); बाल. १।७२ ( गर्भघ्नीमधोवर्णशिष्यसुतगामिनीं पानव्यसनरतां च धनधान्यक्षयकरीं च वर्जयेत् ).

( ४ ) बौध. २।४।६; स्मृच. (व्यव.) २४७ दशमे (नवमे); मुक्ता. १५१; गृक २४२; बाल. १।७२ मृत (मेत).

[1]भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम्।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद्गृहात् ॥

प्रतिनिवेशः प्रतिकूलता अनिच्छा वा। स्कन्दयेत् गमयेत् शोषयेद्वा, भर्तृद्वेषादजः औषधादिभिः शोषयन्तीमित्यर्थः। ग्राममध्ये जनसंनिधौ। निर्धमेत् प्रस्थापयेत् त्यजेत्। ऋतुव्यतिक्रमे भर्तुर्यथा भ्रूणहत्या तथाऽस्या अपीति निर्देशः। बौवि.

[2]अशुश्रूषाकरीं वन्ध्यां वन्धकीं पतिहिंसकीम्।
त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनीम् ॥

वर्धकी पुंश्चली। स्मृच.( व्यव. )२४७

## आपस्तम्बः

अधिवेदननिषेधः

[3]धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत ॥

( १ ) श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु श्रद्धा शक्तिश्च धर्मसंपत्तिः। प्रजासंपत्तिः पुत्रवत्त्वम्। एवंभूते दारे सति नान्याम्। दारे इति प्रकृते अन्यामिति स्त्रीलिङ्गनिर्देशादत्र अर्थात् भार्यामिति गम्यते। नान्यां भार्यां कुर्वीत नोद्वहेत्। उ.

( १ ) बौध. ४।१।२२; स्मृच. ( व्यव. ) २४७ निर्धमेद् ( तु नयेद् ).

( २ ) स्मृच. ( व्यव. ) २४७ वन्ध्यां बन्धकीं पतिहिंसकीम् ( नारीं वर्धकीं परहिंसिकाम् ); गृक. २४२ पति (पर) क्षिप्रमप्रि ( सद्यस्त्वप्रि ); बाल. १।७२.

( ३ ) आध. २।११।१२; हिध. २७।४।२७; मेधा. ३।२४७ ( = ); ३।१२ गौतमः; मिता. १।७८ संपन्ने दारे ( संपन्नेषु दारेषु ); अप. १।७३, ८८ नान्यां ( नान्यान् ); स्मृच. १६६; प्रपा. ३८५ नान्यां + ( पत्नीं ); गभा. १०९; मर. ११७; वीमि. १।७३; मंप्र. ८७२ संपन्ने दारे नान्यां ( संपन्नेषु नान्यान् ); मुक्ता. ४४ मनुस्मार्तस्योत: १५१; विपा. ५७ ( भाग: २ ); भान. १८२; बाल. १।५०, ८१, ८९ पृ. २४१, २६७; मंत. ११९; संव. १७२.

* पूर्वभार्यायां जीवन्त्यां तस्यां द्वितीयादिभार्यापरिग्रहणमधिवेदनम्। तत्प्रसङ्गेन अर्धविवाहः, पूर्वभार्यात्यागप्रकारः, धर्मप्रजासंपन्नेषु दारेषु विवाहनिषेधः इत्येते विषया अत्र प्रकरणे संगृहीताः।

( २ ) यदि प्रथमोढा स्त्री धर्मेण श्रौतस्मार्तामिसाध्येन प्रजया पुत्रपौत्रादिना च संयुक्ता तदा नान्यान् विवहेत् ।

संप्र.८७२

अग्न्याधानपूर्वमेवाधिवेदनम्

**अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥**
**आधाने हि सती कर्मभिः संबध्यते येषामेतदङ्गम् ॥**

( १ ) यत्पुनरापस्तम्बेनोक्तम्— धर्मप्रजासंपन्ने इत्यादि, तन्न प्रागग्न्याधेयादिति न विधिः, किन्त्वौचित्यप्राप्तानुवादः । अत एवाह बौधायनः —‘ एतयैव यजेत दारव्यतिक्रम अग्न्यतिक्रमे च ’ इति । एतया पवित्रेष्ट्या । शास्त्रीयाधिवेदननिमित्तमन्तरेण यदधिवेदनं स दारव्यतिक्रमः । तस्मिन्नेव निमित्ते यजेत । न चैतत्प्रागग्न्याधेयादुपपद्यते, प्रेतामाध्यत्वात् । तेन आहिताग्नेरप्यधिवेदनमस्तीति सिद्धम् । प्रागग्न्याधेयादधिवेदने द्वितीयादिकाऽप्यग्निहोत्रादिभिः कर्मभिरधिकारितया संबध्यते । यदाहापस्तम्बः— ‘आधाने हि सती कर्मभिः संबध्यते ’ इति । यत्तु विष्णुवचनम्— ‘ अग्निहोत्रादियज्ञेषु द्वितीया न सहाचरेत् । अन्यथा निष्फलं तस्य क्लिष्टैः क्रतुशतैरपि ॥ ’ इति, तज्ज्येष्ठायामदुष्टायां सत्यां केवलद्वितीयासहाधिकारविषयं, असवर्णद्वितीयाविषयं वा, यद्वा आहिताग्निपरिणीतद्वितीयाविषयम् । एतद्विषयमेतदपि— ‘ प्रथमा धर्मपत्नी स्यात् द्वितीया रतिवर्धिनी । दृष्टमेव फलं तत्र नादृष्टमुपपद्यते ॥ ’ इति । यत्तु द्वितीयभार्यापरिग्रहे पुनराधानवचनम्, तत् पूर्वभार्यायामधर्मसंपन्नायां मृतायां वेति वेदितव्यम्, न तु द्वितीयविवाहमात्र इति ।

अप.१।७३

( २ ) अन्यतराभावे इति । धर्मप्रजयोरन्यतरस्याभावे कार्या उद्वाह्या । तत्रापि प्रागग्न्याधेयात्, नोर्ध्वमाधानात् । एतदर्थमेवेदं वचनम्, उभयसंपत्तौ न कार्येत्युक्ते अन्यतराभावे कार्येत्यस्याशस्य प्राप्तत्वात् । यदा चान्यतराभावे कार्या तदा का शङ्का उभयाभावे कार्येति । प्रागग्न्याधेयादित्यत्र हेतुः— आधाने हीति । हि यस्मात् आधाने सती विद्यमाना सहान्विता कर्मभिः संबध्यते अधिक्रियते । कैः ? येषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारकम्, तैः । अत्र दारे सतीति वचनात् मृते तस्मिन्प्रागूर्ध्वं वाऽऽधानात् सत्यामपि पुत्रसंपत्तौ धर्मसंपत्त्यर्थं दारग्रहणं भवत्येव । तथा च मनुः— ‘ भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥ ’ इति । याज्ञवल्क्योऽपि— ‘ आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन ’ इति । न हि वाचनिकेऽर्थे युक्तयः क्रमन्ते । तेनैतन्न चोदनीयम्— यजमानः पूर्वमन्वारम्भणीयया संस्कृतो न तस्यायं संस्कारः पुनरापादयितुं शक्यः । या च भार्या आधानात्परमूढा सा च पूर्वमसंस्कृता, न तस्या दर्शपूर्णमासादिष्वधिकारः । स कथं तया तैर्यष्टुमर्हतीति । अन्वारम्भणीयाजन्यश्च संस्कारो यदि संयोगवदुभयनिष्ठः, तदा भार्यानाशे नश्यतीति तस्य पुनःसंस्कारोऽपि नानुपपन्नः । यानि च नान्वारम्भणीयामपेक्ष्यन्ते स्मार्तानि गार्ह्याणि च तैरधिकारस्तस्याप्यविरुद्धः । ननु च प्रागग्न्याधानात् कर्मभि. संबध्यते गार्ह्यैः स्मार्तैश्च, तत्किमुच्यते ‘ आधाने हि सती कर्मभिः संबध्यते ’ इति ? सत्यं, अस्मादेव च हेतुनिर्देशादवसीयते— प्रागाधानात् सत्यामपि धर्मसंपत्तौ प्रजासंपत्तौ च रागान्धस्य कदाचिद्दारग्रहणे नातीव दोष इति । अथ यस्य आहिताग्नेर्भार्या सत्येव धर्मेष्वश्रद्दधाना अशक्ता वा भवति पुत्राश्च मृता अनुत्पन्ना वा तस्य कथम् ? । यद्येषा युक्तिः ‘ धर्मप्रजासपन्ने ’ इति ‘ कर्मभि. संबध्यते ’ इति च, तदा कर्मभ्यो विवाहः । न च प्रागग्न्याधेयादित्यस्य विरोधः । अन्यतराभावे कार्येत्यस्यैव स

---

( १ ) आध २।११।१३ ; हिध. २७।४।२८ ; मेधा. ३।१२ ( अन्यतरापाये तु कुर्वीत ) एतावदेव, गौतमः ; अप. १।७३ तराभावे कार्या ( तरापाये कुर्वीत ) : १।८८ तराभावे कार्या ( तरापाये तु कुर्वीत ) ; स्मृच १६६ ; प्रपा. ३८५ धेयात् ( धानात् ) ; वीमि. १।७३ ( अन्यतरापाये कुर्वीत ) एतावदेव ; संप्र. ८७२ ; मुक्ता. १५१ ; विपा. ५७ ( भागः २ ) ; बाल. २।८१ आन. १८२-१८६ ( प्रागग्न्याधेयात् ) एतावदेव ; बाल. २।८१ पृ. २२९, २।८९ ; संग. ३३१ .

( २ ) आध. २।११।१४ ; हिध. २७।४।२९ ( हि० ) ; स्मृच. १६५-१६६ अप १।७३, ८८ ( येषामेतदङ्गम्० ) ; स्मृच. १६५-१६६ ( आधाने सति कर्मभि संबध्यते ) एतावदेव ; बाल. २।८९ अपवत.

शेषः, न पुनरुभयाभावे कार्येत्यस्य । भारद्वाजसूत्रे तु यद्यप्यविशेषेणाऽऽहिताग्नेर्दारानुज्ञा प्रतीयते– ' अथ यद्याहिताग्निः पुनर्दारक्रियां कुर्वीत यद्यग्नीन्नोत्सृजेत् लौकिकाः संपचेरन् तस्य पुनरग्न्याधेयं कुर्वीतेत्याश्मरथ्यः, पुनराधानमित्यालेखनः, पुनरग्न्याधेयमित्यौडुलोमिः ' इति । तथापि तस्याप्ययमेव विषयः । उ.

( ३ ) अन्यतराभावे अग्न्याधानात्प्राग्विवोढव्या, देवपित्रर्णापाकरणार्थत्वाद्विवाहस्येति । तथा च श्रूयते– ' त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी ' इति । ' नापुत्रस्य लोकोऽस्ति ' इति श्रुत्यन्तरं च । स्मृतिश्च– ' अपुत्रः सन्पुनर्दारान्परिणीय ततः पुनः । परिणीय समुत्पाद्य नो चेदा पुत्रदर्शनात् ॥ विरक्तश्चेद्वनं गच्छेत्संन्यासं वा समाश्रयेत् ॥ '

● प्रपा.३८५

( ४ ) अग्न्याधानात्प्रागिति मुख्यकल्पाभिप्रायं, नोत्तरत्र निषेधार्थं, अन्यथाऽधिवेदनस्य पुनराधाननिमित्ततानुपपत्तेः । संप्र.८७२

## वसिष्ठः

त्याज्या भार्या, अधिवेदनकारणानि

चेतसस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितः पतितः, प्रतिलोमजो वा । अप.१।७२

धर्मे सहकारो ज्येष्ठाया एव

ज्येष्ठया सह कर्माणि कुर्याद्यत्नेन भूपते ।
तया सह कृतं कर्म सफलं जायते नृणाम् ॥

## विष्णुः

धर्मे सहकारो ज्येष्ठायाः, तदपवादश्च

[1]सवर्णासु बहुभार्यासु विद्यमानासु ज्येष्ठया सह धर्मकार्यं कुर्यात् ॥

मिश्रासु च कनिष्ठयाऽपि समानवर्णया ॥

[2]समानवर्णाया अभावे त्वनन्तरयैवापदि च ॥

न त्वेव द्विजः शूद्रया ॥

[3]द्विजस्य भार्या शूद्रा तु धर्मार्थे न भवेत्क्वचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्तिता ॥

सा धर्मार्थे न भवेत् धर्मकार्येषु नानुप्रविशेदित्यर्थः । स्मृच.७७

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससंतानानि शूद्रताम् ॥
[4]दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥

## शङ्खलिखितौ

अधिवेदनकारणानि

[5]धूर्तां वैनाशिकीं स्त्रीजननीं वन्ध्यामप्रियवादिनीमप्रियशीलां पुरुषद्वेषिणीमननुकूलां चाधिविन्देत् ॥

( १ ) अप्रियशीला भर्तुरप्रीतिकरशीलवती । पुरुषद्वेषिणी पतिं या द्वेष्टि । गृक.१०१

● विप्रा. प्रमाणम् ।

( १ ) वस्मृ. २१।१२ ; अप. १।७२ ; मपा. १९० ; वीस्मि. १।७२ चेतसस्तु ( चेतसस्तु ) गा च या ( गा तथा ) ; वीमि. १।७२ गा च या ( गा तथा ) .

( २ ) संर. ६१५. ' भूपते ' इति सम्बोधनात् पुराणवचनमिति भाति ।

( १ ) विस्मृ. २६।१-२ ; याल. १।८८ ( सवर्णासु चासवर्णासु भार्यासु विद्यमानासु ज्येष्ठयैव तया सह धर्मकार्यं कुर्यादन्यया तु कनिष्ठया । ) .

( २ ) विस्मृ. २६।३-४ ; याल. १।८८ ( विसवर्णयाऽभावे त्वनन्तरयैवापदि न त्वेव च द्विजः शूद्रया ) .

( ३ ) विस्मृ. २६।५-६ . शेषः रत्यादिनिर्देशः सवर्णासवर्णविवाहविचारप्रकरणे ( संका. पृ. ५८६ ) द्रष्टव्यः ।

( ४ ) विस्मृ. २६।७ ; मपा. ३८६ नाश्नन्ति ( नादन्ति ) वास्तु ( वास्य ) ; याल. १।८८ वास्तु ( वास्तं ) स गच्छति ( न गच्छति ) मनुविष्णू .

( ५ ) गृक. १०१ ( अप्रियशीलां पुरुषद्वेषिणीमननुकूलां चाऽधिविन्देत् ) एतावदेव ; स्मृच. ( व्यव. ) २४४ ; संप्र. ८७२ ( अप्रियशीलां पुरुषद्वेषिणीमननुकूलां चाऽधिविन्देत् ) एतावदेव .

( २ ) धूर्ता प्रतारिका । वैनासिकी विगतनासा । स्त्रीजननी स्त्र्यपत्यमात्रजननी । एतदुक्तं भवति – धर्मकार्यपुत्रलाभयोः सिद्धिर्यया सह न सभवति तामतीत्य भार्यान्तरं विन्देदिति । स्मृच.( व्यव. )२४४

## मनुः

अधिवेदनस्य कारणानि कालश्च

**मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत् ।**
**व्याधिता वाऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥**

( १ ) मद्यपा ( ऽसौ ? ) मद्यपानरता पक्तिसंस्कारगृहकार्यानुष्ठानासमर्था । तत्परिरक्षणाय सा परिवेदनमर्हति । या तु गुरुभिः प्रतिषिद्धमद्यपाना, तस्या दण्डं वक्ष्यति– ' प्रतिषिद्धा पिबेत् ' इति स्वयम् । नियमस्त्वन्यनियमव्यतिक्रमवत्प्रायश्चित्तेन प्रत्यापत्तिर्युक्ता ( न ) पुनरधिवेदनं च । तथा च धर्मानुष्ठानप्रजोत्पत्तिगृहकार्योपघातनिमित्तान्यधिवेदननिमित्तानि पठ्यन्ते– ' प्रतिकूला व्याधितार्थघ्नी ' इति । ब्राह्मण्यास्तु शास्त्रेण प्रतिषिद्धमद्यायास्तत्पानप्रायश्चित्तमेव भूय. अप्रवृत्तौ, पातित्यं तु ' भ्रूणहनि हीनसेवायां स्त्री पतति ' ( गौध. २१।९ ) इति परिसंख्यानान्न मद्यपाने पातित्यमिति । तदेकादशे वक्ष्यामः । उक्तं च पञ्चमे । असत्यवृत्ता असाध्वाचारा भृत्येष्वसत्परुषवाक्, बलिकर्मणा प्रागेव भुङ्क्ते, दैवपित्र्ययोर्ब्राह्मणभोजनादौ न श्रद्धावती । अर्थघ्नी अतिव्ययशीला, भाण्डोपस्करणं न परिरक्षति, अनल्पमूल्येन क्रीणाति । हिंस्रा नाकुलशङ्कयास्यादेवातिताडनशीला ( ? ) । अन्वाहिकस्य व्ययस्यापहन्त्री ( ? ) । अधिवेदनं तस्या उपर्यन्याविवाहः । मेधा.

( २ ) मद्यपा अत्र द्विजातिस्त्री बोद्धव्या । असत्यवृत्ता असाध्वाचारा । प्रतिकूला भर्तुरनिष्टकारिणी । व्याधिता गृहकृत्यासामर्थ्यापादकव्याधियुक्ता । हिंस्रा पुत्रदास्यादिताडनशीला । अर्थघ्नी उपेक्षादिना अर्थविनाशकारिणी । सर्वदेत्यस्य असत्यवृत्तादिभिरन्वयः । *गृक.१०२

( ३ ) असत्यवृत्ता सदा मिथ्यावादिनी । मवि.

( ४ ) अधिवेदनमात्रयोग्यपातित्यरहिता मद्यपा अत्र विवक्षिता, न पुनर्महापातकवशात्त्यागेऽपि योग्या सुरापी । असभ्यवृत्ता व्यभिचाररता दुराचारा वा । प्रतिकूला नित्यमिष्टविपरीतकारिणी । व्याधिता दीर्घरोगा । हिंस्रा अतिक्रूरा । अर्थघ्नी स्वातन्त्र्येणार्थव्ययशीला । अधिवेत्तव्येति पञ्चस्वनुषज्यते । अधिवेदनं पूर्वस्थितभार्योपरि परिणयनम् । अर्थघ्नी चेति चशब्दोऽनुक्तसमुच्चयार्थः । काः पुनश्चशब्दसमुचिता इत्यपेक्षिते शङ्खलिखितौ— ' धूर्तां वैनासिकीं स्त्रीजननीं वन्ध्यामप्रियवादिनीमप्रियशीलां पुरुषद्वेषिणीमननकूलां चाधिविन्देत् । ' इति । धूर्ता प्रतारिका । वैनासिकी विगतनासा । स्त्रीजननी स्त्र्यपत्यमात्रजननी । एतदुक्तं भवति– धर्मकार्यपुत्रलाभयोः सिद्धिर्यया सह न संभवति तामतीत्य भार्यान्तरं विन्देदिति । कामसिद्धिस्तु यया सह न संभवति, परिपूर्णा वा न भवति, तामर्थैस्तोषयित्वा भार्यान्तरमुद्वहेत् । तथाह देवलः— ' एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति । समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत् ॥ ' । स्मृच.( व्यव. )२४४

**वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा ।**
**एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥**

(१) मस्मृ. ९।८० ; मेधा. ऽसाधु ( ऽसत्य ) ; अप. १।५२ वाऽधि ( चाधि ) शेषं मेधावत्, चतुर्थं पादो नास्ति : १।७३ वाऽधि ( चाधि ) शेषं मेधावत्, गृक. १०२ वाऽधि ( ऽप्यधि ) शेषं मेधावत्; मवि मेधावत्, स्मृच. ( व्यव. ) २४४ ऽसाधु ( ऽसभ्य ) वाऽधि ( चाधि ) ; गृर ८४ ऽसाधु ( ऽसत्य ) वाऽधि ( चाधि ) ; पमा. ५०८ वाऽधि ( चाधि ) ; मपा. १८८ गृकवत् ; मर. २१ मेधावत् ; मच. ऽसाधुवृत्ता ( ऽसत्यवृत्ता ) ; संप्र. ८७१ मेधावत् , मुक्ता. १५१ ऽसाधु ( ऽसत्य ) वाऽधि ( चाधि ) ; संम ६८ वाऽधि ( चाधि ) शेषं मेधावत् ; भान. १८१ स्मृचवत् ; भाच. मेधावत् ; संर. ५९२ समवत् .

* गृर. , मपा. गृकवत् ।

(१) मस्मृ. ९।८१ ; अप. १।७३ वेद ऽब्दे ( वेत्तव्या ) ; गृक. १०२ ; मवि. ' दशमे ' स्थाने ' द्वादशे ' इति पाठः

( १ ) अन्यासामप्यधिवेदनमाह । तत्र वन्ध्या अष्टमेऽब्देऽधिवेद्या, दशमे तु मृतप्रजा । नाधिवेदनेऽपत्योत्पत्त्यभावाद्धि वन्ध्याया अनुष्ठानपरिपातनं स्यात्, अपत्योत्पत्तिविधेराधानविधेश्च । नापुत्रे ह्याधानं श्रूयते । एवं मृतप्रजायाः स्त्रीजनन्याः । अप्रियवादिन्यास्तु दोषाभावेन नाधिवेदनं ( दोषाभावेनाधिवेदनम् ? ), न सत्यां क्षमाया अयं नियमः । मेधा.

( २ ) वन्ध्याष्टम इत्यादि योग्यतायामष्टवर्षोपरि गर्भग्रहणाभावे प्रायशो गर्भग्रहणं नास्तीत्यादिशास्त्रान्तरसिद्धस्वभावनियमापेक्षयोक्तम् । एवं द्वा( ? )दशाब्दानन्तरमपि मृतप्रजात्वानुवृत्तौ एकादशोर्ध्वं च स्त्रीजन्मानुवृत्तौ मृतप्रजात्व स्त्रीप्रसूतिश्च न निवर्तेत इति शास्त्रान्तरादेव सिद्धम् । सद्य इति तया गृहिण्या सद्य एव गृहकार्यसिद्धेः । मवि.

( ३ ) अष्टमेऽब्दे गते इति शेषः, 'अप्रजां नवमे वर्षे' इति हारीतस्मरणात् । एवमेकादशे इत्यत्रापि शेषोऽवगन्तव्यः । स्मृच ( व्यव. )२४४

( ) प्रथमर्तुमारभ्याविद्यमानप्रसूताऽष्टमे वर्षेऽधिवेदनीया, मृतापत्या दशमे वर्षे, स्त्रीजनन्येकादशे, अप्रियवादिनी सद्य एव यद्यपुत्रा भवति । पुत्रवत्यां तु तस्याम् 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत, अन्यतरापाये तु कुर्वीत' इत्यापस्तम्बनिषेधादधिवेदनं न कार्यम् । ममु.

या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ।
साऽनुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ॥

( १ ) भर्त्रे हिता परिचर्यापरा । अनुज्ञापनानवमानयोरिह विधानं, पूर्वासामेतद्भावात् । रोगिणीग्रहणं वन्ध्यास्त्रीजनन्यावपि लक्षयति, प्रकृतत्वाविशेषादवमाननिमित्ताभावाच, कर्हिचिन् कदाचित् । अवमाननं शिष्टयर्थे परिमापणादि( ? ) * । मेधा.

( २ ) हिता भर्तृहिता । अनुज्ञाप्य यद्यप्यनुमन्यते, अननुमतौ त्वननुज्ञाप्यैव । मवि.

( ३ ) या पुनर्व्याधिता सती पत्युरनुकूला भवति शीलवती च स्यात्तामनुज्ञाप्यान्यो विवाहः कार्यः । कदाचिचासौ नावमाननीया । ममु.

( ४ ) हितायां विशेषमाह स एव — या रोगिणीति । अधिवेदनं द्विविधं, धर्मार्थं कामार्थं च । तत्र पुत्रोत्पत्त्यादिधर्मार्थे पूर्वोक्तानि मद्यपेत्यादीनि निमित्तानि, कामार्थे तु न तान्यपेक्षणीयानि. किंतु पूर्वोढा तोषणीया । तथा च स्मृत्यन्तरे— 'एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति । समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरा वहेत् ।।' इति । यद्यसौ स्वयं न तोषयेत्, तदा तत्तोषणाय राजा द्रव्यं दापयेत् । तदाह याज्ञवल्क्यः— 'आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥' इति । सधनस्य तृतीयांशदानं निर्धनस्याशनाच्छादनादिना पोषणमिति । या तूक्तद्रव्यापरितोषणात् प्रकारान्तरेण वा निर्गच्छेत्तां

---

व्याख्यानाद् प्रतीयत, स तु प्रामादिक इति भाति ; स्मृच. ( व्यव. ) २४४ ; गृर. ८४ स्त्रीजनिनी ; पमा. ५०८ ; प्रपा. ३८५ षेष्टऽब्दे ( वेषा स्यात् ) ; मपा. १८८ ; मर. २१ ; दीक. ११७३ ; गमा. १०६ अरवत् ; प्रर. ११७ अरवत् ; वीमि. ११७३ अरवत् : ११७६ चतुर्थः पादः ; सप्र. ८७३ प्रतारवत् ; मुक्ता. १५१ ; संम. ६८ ; मिन्तु. ११५१ अरवत् ; विपा. ५८ ( भागः २ ) अरवत् : ३६३ ( भाग २ ) दशमे ( नवमे ) ; भान. १८१ ; संग. ३१२ अरवत् ; संव. १७२ अरवत् ; सेर. ५५३ .

---

* 'परिभाषिनम्' इति पाठान्तरम् ।

( १ ) मस्मृ. ९।८२ ; मप. ११७३ नावमान्या च कर्हिचित् ( नावज्ञेया कथंचन ) ; गृक. १०४-१०५ स्यात्तु हिता ( स्याद्धिता ) ; स्मृच. ( व्यव. ) २४४ ; गृर. ८६ शीलतः ( संततम् ) नावमान्या च ( नावमन्येत ) ; पमा. ५०८ च ( तु ) ; प्रपा. ३८५ च ( तु ) शेषं गृरवत् ; मर. २१ ; वीमि. ११७४ गृरवत् ; सप्र. ८७२ च ( हि ) ; मुक्ता. १५१ ; विपा. ५८ ( भाग २ ) च ( तु ) ; भान. १८१ ; संग. ३१२ च ( तु ) ; भाच. रोगिणी ( रोहिणी ) .

प्रत्याह मनुः– ' अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् । सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसंनिधौ ॥ ' इति । त्यागो नाम तदीयजनककुलप्रेषणम् ।

पमा.५०८–५०९

अधिविन्नाया रोषे कर्तव्यम्

**अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।**
**सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसंनिधौ ॥**

( १ ) क्रोधेन अधिवेदनहेतुना निर्गतायास्त्याग-संनिरोधौ विकल्पतो विधीयेते । न तु यथोपपन्नहेतुना भोजनाच्छादनादिना तत्र प्रीत्या क्रोधापमार्जनं, श्वश्रूभिः श्वशुरादिभिर्वा परिभाषणम् । संनिरोधः रक्षिपुरुषाधिष्ठानम् । त्यागो व्याख्यातः । असंभोगः सहशय्यावर्जनम् । कुलं ज्ञातयः तत्पितृपक्षाः स्वपक्षाश्च । मेधा.

( २ ) निर्गच्छेत् गृहान्तरं गच्छेत् । संनिरोद्धव्या बन्धनेन । कुलस्य तत्पितृकुलस्य संनिधौ । मवि.

( ३ ) उपरि यस्या अभूत् परिणयनं साऽधिविन्नोच्यते । कुलसंनिधौ अधिविन्नायाः पित्रादिकुलसंनिधाविन्यर्थः । तत्कुलसंनिधौ त्यक्ताया अपि भरणं पतिरेव संनिधानकरणेन कुर्यात्, ' पिता रक्षति कौमारे भर्ता रक्षति यौवने ' इत्युक्तत्वात्, ' अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ' इत्युक्तत्वाच्च ।

स्मृच.( व्यव. )२४४

( ४ ) या पुनः कृताधिवेदना स्त्री कुपिता निर्गच्छति सा तदहरेव रज्ज्वादिना बद्ध्वा स्थापनीया आक्रोपनिवृत्तेः । पित्रादिकुलसंनिधौ वा त्याज्या ।

* ममु.

भार्याणां वर्णक्रमेण ज्यैष्ठ्याधिकारः

**यदि स्वाश्चापराश्चैव विन्देरन्योषितो द्विजाः ।**
**तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥**

( १ ) कामतः प्रवृत्ता यदि समानजातीयाश्चासमानजातीयाश्च विन्देरन् विवाहयेयुः, तासां वर्णक्रमेण जात्यनुरूपं ज्यैष्ठ्यं, न वयस्तः, न च विवाहक्रमतः । फलादिदाननिमित्ते पूजा प्रथमं ब्राह्मण्यास्ततः क्षत्रियावैश्ययोरित्येष वर्णक्रमः । वेश्म प्रधानं गृहं, तद्ब्राह्मण्याः । सवर्णानां विवाहक्रमो निश्चलः स्मृतः ।

§ मेधा.

( २ ) स्वाः स्वजातीयाः । अवराः अधमजातीयाः । द्विजाः विप्रादयः । वर्णक्रमेण, न वयसा । ज्यैष्ठ्यं ज्येष्ठासाध्यकर्मसंबन्धः । वेश्म सोत्कर्षम् । मवि.

( ३ ) यदि द्विजातयः स्वजातीया विजातीयाश्चोद्वहेयुस्तदा तासां द्विजातिक्रमेण वाक्यसंमानदायविभागोत्कर्षार्थं ज्यैष्ठ्यं पूजा च वस्त्रालङ्कारादिदानेन गृहं च प्रधानं स्यात् । ममु.

**भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ।**
**स्वा चैव कुर्यात्सर्वेषां नास्वजातिः कथंचन ॥**

( १ ) मस्मृ. ९।८३ ; भप. २।७३ ; गृक. १०५ , स्मृच. ( व्यव. ) २४४ ; गृर. ८६ तु ( च ) ; पमा. ५०९ रुषिता ( व्यव. ) २४४ ; गृर. ८६ तु ( च ) ; पमा. ५०९ रुषिता ( द्वेषिता ) ; प्रपा. ३८६ , मपा. १८९–१९० ; मर २१ ; गभा. १०६ रुषिता ( रोषिता ) ; प्रर ११७ गमावत् ; वीमि. २।७४ तु ( च ) रुषिता ( दुःखिता ) ; संप्र. ८७४ ; मुच्चा. १५१ गमावत् , मिन्दु ११५१ गमावत् ; विता. ५९ ( भाग २ ) गमावत् ; व्यान. २८९ तु ( च ) शेषं गमावत् ; संग. ११२ वा कुल ( स्वकुल ) शेषं गमावत् ; संव. १७२ गमावत् ; संर. ५९२ वा कुल ( न कुल ) शेषं गमावत् .

* भाच. ममुवत् ।

§ मच. , नन्द. , भाच. मेधागतम् ।

( १ ) मस्मृ. ९।८५ ; मवि. स्वाश्चापरा ( स्वाश्चावरा ) ; पमा ५०९ वेश्म च ( वेश्मनि ) शेषं मविवत् ; मच शेषं पमा ५०९ वेश्म च ( वेश्मनि ) ; मुच्चा. १५५ वेश्म च ( वेश्मनि ) ; विन्देरन् ( आनुविन्देरन् ) ; बाल. २।७७ पृ. २१२ विन्देरन् ( भोगु ) ज्यैष्ठ्यं ( भार्ये ) शेषं मविवत् ; २।८८ पृ. २१७ विन्देरन् ( विन्देरन् ) ज्यैष्ठ्यं ( ज्येष्ठ्यं ) शेषं मविवत् .

( २ ) मस्मृ. ९।८६ ; मेधा. स्वा चैव ( स्वा स्वैव ) ; पमा. ५०९ स्वा चैव ( स्वा स्वैव ) नास्व ( नान्य ) ; मच. मेधावत् ; मुच्चा. १५५ ; बाल. २।७७ पृ. २११ धर्मकार्यं ( धर्मकर्म ) स्वा चैव ( स्वा स्वैव ) नास्वजाति ( नान्यथा तु ) ; २।८८ पृ. २१७ धर्मकार्यं ( धर्मकर्म ) स्वा चैव ( स्वा स्वैव ) नास्वजातिः ( अन्यथा न ) ; भाच. नैत्यकम् ( नैत्तिकम् ) नास्वजातिः

( १ ) शरीरशुश्रूषा भर्तुरुपयोगिपाकादिलक्षणा । दानभोजनप्रतिजागरणं स्वा चैव कुर्यात् । पृष्ठपादसंवाहननिर्णेजनादौ त्वनियमः । युगपत्संनिधौ तु शरीराचयवक्रमो वर्णक्रमेण । नैत्यकं धर्मकार्यं ' सायं त्वन्नस्य ' ( मस्मृ.३।१२१ ) इत्यादि अग्निशरणोपलेपनाचमनोदकतर्पणदानादि । मेधा.

( २ ) धर्मकार्यं यज्ञादि । नैत्यकं नित्यकर्तव्यं श्राद्धादि । नास्वजातिः स्वजातिसंभवे । मवि.

( ३ ) भर्तुर्देहपरिचर्यामन्नदानादिरूपां धर्मकार्यं च भिक्षादानातिथिपरिवेषणहोमीयद्रव्योपकल्पनादि प्रात्यहिकं सर्वेषां द्विजातीनां सजातिभार्यैव कुर्यान्न तु कदाचिद्विजातीयेति । ममु.

( ४ ) स्वास्वेति वीप्सा । नैत्यकमिति विशेषणात् काम्येऽन्यासामपि प्रवेशः, बहुसाध्यत्वात्तस्य । मच.

**यस्तु तत्कारयेन्मोहात्सजात्या स्थितयाऽन्यया ।**
**यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥**

( १ ) अस्या निन्दार्थवादः– यस्तु तत्कारयेदिति । यस्त्वेतत्कर्म अन्यया असमानजातीयया कारयेत् सजातीयायां स्थितायां ब्राह्मण एव स चण्डालः पूर्वस्मात् दृष्टः । मेधा.

( २ ) एतत्स्फुटयति– यस्त्विति । दृष्टपूर्वः पुराणे श्रुतः । मवि.

( ३ ) यः पुनः स्वजातीयया संनिहितया देहशुश्रूषादिकं कर्तव्यं विजातीयया मौर्ख्यात् कारयेत् स यथा ब्राह्मण्या शूद्राज्जातो ब्राह्मणचाण्डालस्तथैव पूर्वैर्ऋषिभिर्दृष्टः इति पूर्वानुवादः । *ममु.

( ४ ) असवर्णागुणमोहितं प्रत्याह – यस्त्विति । तत् शुश्रूषादिकम् । स्थितिरप्रयोजिका, स्थितया सुस्थया । अन्यया असजात्या । ब्राह्मणचाण्डालः चातुर्वर्ण्यत्वेऽपि सति कुत्सिताचारत्वाच्चण्डालवदुपेक्ष्यः स इत्यर्थवादः । पूर्वदृष्टः पूर्वैर्मन्वादिभिः तथैव दृष्टः कथितः । *मच.

## याज्ञवल्क्यः

अधिवेदनकारणानि

**सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥**

( १ ) एवमादिभिर्दोषैरधिवेत्तव्या । न त्याज्येत्यर्थः । सुराशब्देन चात्र गौडीमाध्व्योर्ग्रहणं, महापातके त्यागोपदेशात् । क्षत्रियादिभिरपि निषिद्धां पिबन्त्यस्त्याज्याः । व्याधिता असमाधेयकुष्ठादिरोगग्रस्ता । धूर्ता वञ्चनशीला । वन्ध्या प्रसिद्धा । अर्थशब्दस्तु धर्मकामयोरपि ग्राहकः । पुरुषार्थघ्नीत्यर्थः । अप्रियंवदा प्रसिद्धव । स्त्रीप्रसूः केवलस्त्रीप्रजननी । पुरुषद्वेषिणी रतिपराङ्मुखी । अधिवेदनमुपरिपरिणयनम् । तत् आसामनुभाष्य दोषं कर्तव्यं, स्मृत्यन्तरात्– ' दुष्टां भार्यां जाया परिभाष्याधिवेदयेत् ' इति । विश्व.

( २ ) द्वितीयपरिणयने हेतूनाह– सुरापीति । सुरां पिबतीति सुरापी शूद्राऽपि, ' पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् ' इति सामान्येन प्रतिषेधात् । व्याधिता दीर्घरोगग्रस्ता । धूर्ता विसंवादिनी । वन्ध्या निष्फला । अर्थघ्नी अर्थनाशिनी । अप्रियंवदा निष्ठुरभाषिणी । स्त्रीप्रसूः स्त्रीजननी । पुरुषद्वेषिणी सर्वत्राहितकारिणी । अधिवेत्तव्येति प्रत्येकमभिसंबध्यते । अधिवेदनं भार्यान्तरपरिग्रहः । मिता.

( ३ ) सुरापी मद्यपी । सुराशब्देनात्र मद्यं प्रतिपाद्यते न सुरा, तत्पानं हि महापातकत्वात्त्यागस्यैव हेतुः स्यात्, नाधिवेदनमात्रस्य । §अप.

---

* भाच. ममुवत् ।

( १ ) मस्मृ. ९।८७ ; गोरा. ३।१८ पू. ; मवि. पूर्वदृष्टः ( दृष्टपूर्वः ) ; ममु. ३।१८ पू. ; मुक्ता. १५५ सजात्या (स्वजात्या) ; याल. ३।७७ पृ. २१३, ३।८८ मुक्तावत्.

* नन्द. मचवत् ।

§ शेषं मितागतम् । पमा. अपवत् ।

( १ ) यास्मृ. १।७३ ; विश्व. धूर्ता ( धूर्ती ) ; मिता. ; अप. ; गृक. १०२ ; गृर. ८४ वन्ध्याऽर्थघ्न्यप्रि (वन्ध्या चैवाप्रि); पमा. ५०७ ; मपा. १८८ ; मर. २१ ; गभा. १०६ ; प्र. ११७ ; वीमि. ; संप्र. ७५६, ८७१ ; चम. ११५ तथा ( च या ) ; मुक्ता. १५१ ; संम. ·६८ ; सिन्धु. ११५१ ; विपा.

(४) 'अविप्लुतब्रह्मचर्यः' इत्यादिना ब्रह्मचारिण एव विवाहाधिकारो यथाश्रुतो लभ्यते। तत्रोपलक्षणत्वमभिप्रेत्य पुनर्विवाहमाह — सुरापीति। केचित्तु 'गर्भे त्यागो विधीयते' इत्युक्तम्, अतः कथं वैराग्याभावादाश्रमान्तरानधिकारिणा स्थातव्यं, अनाश्रमित्वस्य निषिद्धत्वात्, इत्याकाङ्क्षायामिमं श्लोकमवतारयन्ति। सुरां पिबतीति सुरापी द्विजातिस्त्री। व्याधिता व्याधियुक्ता। व्याधयश्च कुष्ठादयो वैदिककर्मविरोधिनः अपस्मारोन्मादादयश्च लौकिककर्मविरोधिनो द्रष्टव्याः। धूर्ता पतिवञ्चनशीला। वन्ध्या प्रसिद्धव। अर्थघ्नी अतिव्ययादिना धननाशनशीला। अप्रियंवदा परुषभाषणशीला। स्त्रीप्रसूः स्त्रीमात्रजनयित्री। तज्ज्ञानं च क्वचित् सामुद्रिकादिशास्त्रबलान्निर्णयरूपमेव, क्वचिच्च भूयःस्त्रीजननिदर्शननिबन्धनमुत्कटकोटिकसंशयरूपमिति मन्तव्यम्। पुरुषद्वेषिणी पतिदोष(? द्वेष)शीला पुरुषसंगमविमुखी वा। एताश्चाधिवेत्तव्याः सपत्नीयोजिताः कार्याः। अत्र विशेषमाह मनुः— 'वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥'। 'आऋतुदर्शनात् अष्टम' इत्यादौ वर्षं इति पूरणीयम्, 'आऋतुदर्शनात् अष्ट वर्षाणि भर्तोऽतिप्रसवा स्त्रियम्' इत्यादिदेवलवचनात्। अतिप्रसवा उचितकालेऽप्यजातरजस्का। एतच्चाधिवेदननिमित्तनिश्चयार्थमिति प्रतिभाति। एवं च येष्वधिवेदननिमित्तेषु समयः श्रूयते तेषु तेषु तावता समयेन तन्निर्णयस्तावान् समयः प्रतीक्ष्य इति। इदं चाधिवेदननियतनिमित्तपरिगणनम्। इच्छया त्वन्यथाप्यधिवेदनम्। तदाह देवलः— 'एकामुद्वाह्य कामार्थमन्यां लब्धुं य इच्छति। समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत्॥'। समर्थः सम्यगर्थः, स्त्रीसंतोषनिमित्तधनवानिति यावत्। यत्पुनरापस्तम्बेनोक्तम्— 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत। अन्यतरापाये कुर्वीत' इति, तदेवलोक्तातिरिक्तविषयतया नेयम्।

वीमि.

अधिविन्नायाः संबन्धे कर्तव्यम्

**अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत्।**
**यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते॥**

(१) ननु अधिवेदनमपि त्याग एव, अन्योपादाने तया कार्याभावात्। नैवम्— अधिविन्नेति। तुशब्दोऽपिशब्दार्थः। अधिविन्नाऽपीत्यर्थः। यद्वोत्कृष्यावधारणार्थः। भर्त्रैव नोपगन्तव्येत्यर्थः। दोषापरित्यागे च तत्। अन्यथा महदेनः स्यात्। महापातकमित्यर्थः। कस्मात् पुनरेवमधिवेदनाद्युपदेशः। यस्मात्— यत्रानुकूल्यं ऐकमत्यं जायापत्योः, त्रिवर्गो धर्मार्थकामलक्षणस्तत्र वृद्धिमुपैति। अन्यथा तु विपर्ययः स्यात्। तस्मात् सूक्तमधिवेदनाद्यनुष्ठानम्।

विश्व.

(२) किंच, साऽधिविन्ना पूर्ववदेव दानमानसत्कारैर्भर्तव्या। अन्यथा अभरणे महदपुण्यं वक्ष्यमाणो दण्डश्च। न च भरणे सति केवलमपुण्यपरिहारः, यतः यत्र दम्पत्योरानुकूल्यं चित्तैक्यं तत्र धर्मार्थकामानां प्रतिदिनमभिवृद्धिश्च।

मिता.

(३) स्वगृहे पितृगृहे वा वसन्तीति शेषः। धर्मार्थकामास्त्रिवर्गः। स दम्पत्योरानुकूल्ये संप्रतिपत्तौ वर्धते, अतस्तदर्थं यतितव्यमिति तात्पर्यार्थः। मोक्षो ब्रह्मशस्य गृहस्थस्य न सर्वस्येत्यभिप्रायेणोक्तं त्रिवर्गं इति।

अप.

(४) अधिवेदननिमित्तदोषे सत्यप्यधिविन्नाऽवश्यं भर्तव्या, न तु तेन दोषेणाभाव्येत्याह— अधिविन्नेति। एनः पापम्। अन्यथा अभरणे मनुः— 'अधिविन्ना ... ... कुर्वन्निधौ॥'। तथा— 'या रोगिणी...... ... कर्हिचित्॥'। किंच, अधिविन्नाभरणे न केवलं पार-

(१) याज्ञ्य. ११७४; विश्व.; मिता.; अप.; गृह. १०२–१०३ पृ.; स्मृच. (व्यव.) २४४ पृ.; २४८ उप.; गृर. ८४ अधिविन्न (अधिवेदन) पृ.; पमा. ५०७ विश्व पृ (विश्वऽरे) पृ; मपा. १९०; मर. २१ पृ.; ममा. १०६ पृ.; मर ११७ पृ.; विवी १ उप; वीमि.; सुभा. १५१; संप्र. १८ पृ.; वृक. २४१ उप.; विश्वा. ५८ (भाग २) समावद, पृ.; मान. १८२ पृ., कामन्; मैत्र. १३२ पृ.; मस्मृ. ४४ उप.; संर. ५९२ समावद, पृ.

५८ (भाग २); मान. १८१; प्रका. १३१; बाल. ११८१ पृ. २२९; संग. १११; संर. १७२; सर ५९२.

परीहारः किंतु त्रिवर्गोपयुक्तायास्तस्याः पोषणे परस्परानुकूल्ये त्रिवर्गवृद्धिरपीत्याह—यत्रेति । यत्र गृहस्थाश्रमे आनुकूल्य ऐकमत्यं त्रिवर्गो धर्मार्थकामाः वर्धते पुनस्तद्धेतुकर्मनिष्पत्तेः, दम्पत्योः परस्परानुकूल्यस्योभयमाप्यत्वात् । वीमि.

अधिविन्नायाः कर्तव्यम्

**मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।**
**सेह कीर्तिमवाप्नोति मोदते चोमया सह ॥**

( १ ) कस्मात्पुनरधिविन्ना भर्तारं परित्यज्यान्यं न समाश्रयेत् । यस्मात्—मृत इति । सहेत्युपमार्थे । अनुपगमे च स्तुतिदर्शनादुपगमे दोषानुमानम् । ऐहिकफलं च कीर्तिः, आमुष्मिकं स्वर्गावाप्तिः । अन्यथा तु द्वयविपर्ययः । तस्मादधिविन्नयाऽपि न भर्ता त्याज्यः ।

विश्व.

( २ ) स्त्रियं प्रत्याह— मृते जीवतीति । भर्तरि जीवति मृते वा या चापल्यादन्यं पुरुषं नैवोपगच्छति सेह लोके विपुलां कीर्तिमवाप्नोति । उमया च सह क्रीडति पुण्यप्रभावात् । मिता.

( ३ ) वाशब्दः समुच्चये । अतिरोहितमन्यत् । नित्यस्यापि पत्यव्यभिचारस्य आनुषङ्गिकं फलमेतदुच्यते । पतिरपि भार्यां न व्यभिचरेदिति मनुराह—'अन्योऽन्यस्याव्यभीचारो भवेदामरणान्तिकः । एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥' इति । उभयोरव्यभिचारविधिर्नित्य, तदतिक्रमे प्रायश्चित्तस्मरणात् । अप.

( ४ ) स्त्रीरपि तत्र प्रवर्णयितुमसाधारणफलोपदर्शनेन नियुङ्क्ते- मृते जीवतीति । यद्वा 'वर्णाश्रमेतराणाम्' इति सामान्येनोपक्रमात् स्त्रीणामपि धर्मस्य वक्तव्यत्वात्तमाह 'मृते' इत्यादीत्यपरारिका । एवमन्यत्राप्यूह्यमिति । वाशब्दः समुच्चये । अन्यं पतिम् । उपपतिमित्यत्रैवोपगच्छतीति प्रकृतेऽप्युपशब्दो निन्दातात्पर्यकः, तेनाविधिगमनव्युदासात् क्षेत्रजोत्पादनार्थं पत्यन्यगमनमभ्यनुज्ञातमिति मन्तव्यम् । इह लोके । उमया भवान्या सह मोदते हृष्यति क्रीडति वा, अर्थादमुत्र । यद्यपि पत्यव्यभिचारो नित्य एव तथाप्यानुषङ्गिकं फलमिदम् । केचित्तु —नोपगच्छति कायवाङ्मनोभिः । एवं च सतीफलमिदमित्याहुः । वीमि.

अधिवेदनकारणाभावेऽप्यधिवेदने कर्तव्यम्

**आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।**
**त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥**

( १ ) अधिवेदनकारणाभावे अधिवेत्तारं प्रत्याह— आज्ञासंपादिनीमिति । आज्ञासंपादिनीं आदेशकारिणीं, दक्षां शीघ्रकारिणीं वीरसूं पुत्रवतीं, प्रियवादिनीं मधुरभाषिणीं यस्त्यजति अधिविन्दति स राज्ञा स्वधनस्य तृतीयांशं दाप्यः । निर्धनस्तु भरणं ग्रासाच्छादनादि दाप्यः । मिता.

( २ ) शास्त्रीयाधिवेदननिमित्ताभावे स्त्रियमधिविन्दन् शास्त्रीयत्यागनिमित्ताभावे त्यजन् वा दोषभागित्याह— आज्ञेति । आदिष्टार्थकरणशीलामित्यर्थः । अनेनाधिवेदननिमित्तत्वेनोक्तस्य धूर्तत्वस्याभाव उक्तः । दक्षां गृहकृत्यादिसमर्थाम् । अनेन व्याधितत्वस्याभावो दर्शितः । वीरसूं पुत्रवतीम् । अनेन वन्ध्यात्वस्य स्त्रीप्रसूत्वस्य चाभावोऽभिप्रेतः । प्रियवादिनीं मधुरभाषणशीलाम् । अनेन 'सद्यस्त्वप्रियवादिनी' इति मनूक्तस्य कटुभाषित्वस्यात्रैवोक्तस्य पुरुषद्वेषित्वस्य वाऽभावोऽभिसहितः, कटुभाषणस्य द्वेषनैयत्यात् । इदं च सर्वं प्रपञ्चमात्रमधिवेदननिमित्तसामान्याभावोपलक्षणं त्यागनिमित्तसामान्याभावोपलक्षणं च । त्यजन् अधिविन्दन् भरणादिना वियोजयन्वा भरणोपयोग्यधिकधनवान् स्ववित्तस्य तृतीयं भागं, भरणमात्रपर्याप्तधनाधिकधनशून्यस्तु ग्रासाच्छादनादि स्त्रियै दाप्यः, अर्थाद्राज्ञा, तत्सामर्थ्यादित्यर्थः ।

वीमि.

( १ ) यास्मृ. १।७५ ; विश्व. ; मिता. ; अप. ; वीमि. ; मुक्ता. १५६ ; सस्मृ. ५४ मुपगच्छति ( मधिगच्छति ).

( १ ) यास्मृ. १।७६ ; मिता. ; अप. ; पमा. ५०९ ; प्रपा. ३८६ ; गभा. १०६ ; प्रर. ११७ ; वीमि. ; संप्र. ८७३ ; चम. ११५ स्त्रियाः ( स्त्रियै ) ; मुक्ता. १५१ ; सिन्धु. ११५१ ; विपा. ५९ ( भागः २ ) स्त्रियाः ( स्त्रियै ) ; श्रान. १८२ ; प्रका. ३७२ ; संग. ३३२ ; संव. १७२ ; सस्मृ. ५४ ; संर. ५९२ विपावत्.

**अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।**
**न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥**

( १ ) यस्या उपरि परिणीतं, तस्यै यत् परिणयने द्रव्यं गतं तत्समं देयं, यदि पूर्वं स्त्रीधनं न दत्तम् । अथ तु दत्तं, ततोऽर्धं देयम् । एतच्चाधिवेदननिमित्तमन्तरेणाधिविन्नाया द्रष्टव्यम् । विश्व.

( २ ) आधिवेदनिकं स्त्रीधनमुक्तं तदाह— अधिविन्नस्त्रियै इति । यस्या उपरि विवाहः साऽधिविन्ना, सा चासौ स्त्री चेत्यधिविन्नस्त्री, तस्यै अधिविन्नस्त्रियै आधिवेदनिकं अधिवेदननिमित्तं धनं सम यावदधिवेदनार्थं व्ययीकृतं तावद्दद्यात् यस्यै भर्त्रा श्वशुरेण वा स्त्रीधनं न दत्तम् । दत्ते पुनः स्त्रीधने आधिवेदनिकद्रव्यस्यार्धं दद्यात् । अर्धशब्दश्चात्र समविभागवचनो न भवति । अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयमित्यर्थः । § मिता.

भार्याबहुत्वे सहाधिकारनियमः

**सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।**
**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥**

( १ ) ननु एवं सति भर्तृतन्त्रत्वात् स्त्रीणां, तस्य च स्वतन्त्रत्वाद्यावत्यो जायास्ताः सर्वास्तुल्यवत् कर्मणि विनियुञ्जीत । नैवम्— सत्यामन्यामिति । सत्या सवर्णायामन्या धर्मकार्यं न कारयेदिति संबन्धः । सवर्णास्वपि ज्येष्ठया विना नेतरां कनिष्ठाम् । तासामपि यथाज्येष्ठ्यम् । विधौ अग्निहोत्रादिकर्मणि । धर्म्ये आत्यायेक्षणादौ, क्रत्वर्थ इति यावत् । कनीयसीमपि तु सवर्णामेव कारयेत् । असवर्णास्वप्येकान्तरत्वज्येष्ठयादिक्रमेण व्याख्येयम् । विश्व.

( २ ) अनेकभार्ये प्रत्याह — सत्यामन्यामिति । सवर्णायां सत्यां अन्यामसवर्णां नैव धर्मकार्यं कारयेत् । सवर्णास्वपि बह्वीषु धर्म्ये विधौ धर्मानुष्ठाने ज्येष्ठया विना ज्येष्ठां मुक्त्वा इतरा मध्यमा कनिष्ठा वा न नियोक्तव्या । मिता.

( ३ ) सवर्णायां सत्या विद्यमानाया भार्याया अन्यामसवर्णां धर्मकार्यं न कारयेत्, तया सह धर्मं नाऽऽचरेदित्यर्थः । अभावेऽपि ( वे तु ) सवर्णाया इतरयाऽपि सहाऽऽचरेदित्यर्थसिद्धम् । अत एव शूद्रयैव सह धर्मानुष्ठाननिषेधमाह वसिष्ठः— ‘ कृष्णवर्णा या रामा रमणायैव न धर्माय ’ इति । कृष्णवर्णा शूद्रा । सवर्णास्वपि तु ज्येष्ठाया चातुष्ठया तया विना नेतरया सह धर्ममाचरेत् । ज्येष्ठया तु सह कनीयस्योऽपि धर्मं कारयितव्याः । • अप.

( ४ ) इदं च आधाने सहाधिकृतानेकभार्याविषयम् । अनधिकृतायास्तु प्रसक्त्यभाव एव । तत्रापि केवलकर्तृत्वमात्रापेक्षणादि यजमानो इश्वरीसमानरदेकयैव सवर्णया ज्येष्ठया कारयेत् । पत्नीसंनहनादि तु कर्तृसंस्कारकं सहाधिकृताभिः सवर्णाभिरित्यादि मीमांसासन्नमनगा मुखानम् । गभा. १०६–१०७

( ५ ) स्मार्ताग्निसाध्ये तु कर्मणि सर्वासां सहाधिकारः, प्रथमविवाहाग्निसाध्यविवाहहोमविधानात्, तत्संभवेऽप्यसवर्णविधानाच्च । अतस्ताभ्युक्त एव कर्तृविवेकः । § प्र. १९७

( ६ ) यत्तु ज्येष्ठात्वेनतनाधिकारनिर्णये धर्मकर्मण्यन्यस्या अनुष्ठानोऽन्यकार्यानुष्ठानम् । .... द्वितीय-

§ अप., गृक., गृर., मपा., वीमि मितागतम् ।

( १ ) यास्मृ. २।१४८ : विश्व. २।१५२ यस्यै ( यस्या ) ; मिता. ; अप. दद्यादाधि ( देयमाधि ) ; गृक. १०५ ; स्मृच. ( व्यव. ) २४१; गृर. ८६; मर. २१ ; मपा. १८९; वीमि. ; संप्र. ८७३ ; संम. ६८ दद्यादाधि ( देयमाधि ) यस्यै ( यस्मै ) प्रकीर्तितम् ( प्रकल्पयेत् ) .

( २ ) यास्मृ. २।८८ ; विश्व १।८६ विनेतरा ( विनेतराम् ); मिता. ; अप. ; स्मृच १६५ ; पमा. ५०९ धर्म्ये ( धर्मे ) ; मर. २१ पमावत् ; गभा १०६ पमावत् ; प्र. १९७ ; वीमि ; संप्र. ८७४ पमावत् ; चम. ११६ धर्म्ये ज्येष्ठया । धर्मे ज्येष्ठाया ) ; प्रका १०२ मुक्ता. १५६ ; भिक्षु ११५२ ; शूक. २४२ ; मेघ. १०२ पमावत् ; बाल. २।८१ पृ. २२९, १।८९ पृ. २६७ ; मेघ. १०२ पमावत् .

• शूक., चमा. अपवत् ।

§ शेषं गभा वत् । विरा. प्रावत् ।

दिभार्याश्रयेऽग्न्याधानादिकर्मविशेषे एवेत्यप्याहुः ।
*वीमि.

## नारदः

त्याज्या भार्या

**अन्योन्यं त्यजतोर्नागः स्यादन्योन्यविरुद्धयोः ।
स्त्रीपुंसयोर्न तूढाया व्यभिचारादृते स्त्रियाः ॥**

अन्योन्यविरुद्धयोः परस्परत्यागे न दोषः । 'न तूढायाः' इति वचनादविवाहिताविषयमेतत् । ऊढा विवाहपरिगृहीता, तस्या नास्ति त्यागः । अस्यापवादः— व्यभिचारे साऽपि त्याज्यैव । नाभा.

**स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्राविणीं तथा ।
भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेद्गृहात् ॥**

स्त्रीधनेन सह भ्रष्टसर्वस्वां हृतसर्वधना, गर्भविनाशिनीं, भर्तुश्च वधकाङ्क्षिणीं विषदानादिना, गृहान्निर्वासयेत् त्यजेदित्यर्थः । नाभा.

**अनर्थशीलां सततं तथैवाप्रियवादिनीम् ।
पूर्वाशिनी च या भर्तुस्तां स्त्रीं निर्वासयेद्गृहात् ॥**

पानप्रेक्षणग्राह्यस्त्रीसंसर्गशीलां, तथा अप्रियवादिनीं, प्रथमभोजनशीलां, भर्तुरित्युभयोः शेषः, निर्वासयेत् ग्रामात् । नाभा.

**वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च सर्वदा ।
कामतो नाभिनन्देत कुर्वन्नेवं न दोषभाक् ॥**

निन्द्यां मरणशीलापत्याम् । सार्वकालं विपरीतकारिणीम् । सर्वदेति कदाचित् प्रमादकृतनिवृत्त्यर्थम् । तादृशीं यदि नेच्छति नाभिनन्देत न रमेत तया सह । 'कामतो नाभिनन्देत' इत्यपरः पाठः । स एवार्थः । एवं कुर्वन्न प्रत्यवैति, न च दण्ड्यः । नाभा.

अत्याज्या भार्या

**अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन्भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥**

वश्यां, प्रियंवदा, दक्षां कुशला, अव्यभिचारिणीं, पुत्रवतीं त्यजन्नन्यत्र सक्तः, राज्ञा बहुतरेणानुरूपेण दण्डेनानुशिष्य तस्यामेव व्यवस्थाप्यः । नाभा.

**अज्ञातदोषादूढा या निर्गता नान्यमाश्रिता ।
बन्धुभिः सा नियोक्तव्या निर्बन्धुः स्वयमाश्रयेत् ॥**

अज्ञातदोषा पत्युरपचारादल्पदोषात् रोषान्निर्गता गृहात्, निर्दोषा अन्यमनपाश्रिता बन्धुगृहे स्थिता, तस्मिन्नेव पत्यौ स्वजनैर्नियोज्या । निःस्वजना स्वयमेव तं प्रत्याश्रयेत् । 'अज्ञातदोषाद्धूढा या निर्दोषा' इत्यस्मिन्पाठे त्यक्ता 'नष्टे मृते' इत्यादौ वा बन्धुभिरन्यस्मै देया । निर्बन्धुः स्वयमेवान्यमाश्रयेत् । *नाभा.

* पूर्वार्धव्याख्यानं अपवत् । उत्तरार्धे मिताक्षराऽपरार्कपक्षौ पूर्वमुक्त्वा तत इदमुक्तम् ।

(१) नासं. १३।९२ ; नास्मृ. १५।९० तोर्नागः (तोरागः) र्न तूढायाः (निगूढायाः) ; स्मृच. (व्यव.) २४५ तोर्नागः (तो धर्मः) तूढाया (चोढाया) ; बाल. १।७२ नास्मृवत्.

(२) नासं. १३।९४ ; नास्मृ. १५।९२ विस्राविणीं (विस्रंसिनीं) गृहाद (पुराद) ; स्मृच. (व्यव.) २४७ विस्राविणीं (विस्रसिनीं) ; बाल. १।७२ विस्राविणीं (विध्वंसिनीं).

(३) नासं. १३।९५ तां स्त्रीं (स्त्रियं) गृहाद (बुधः) ; नास्मृ. १५।९३ शिनी (शिनीं) ता स्त्रीं (क्षिप्रं) ; स्मृच. (व्यव.) २४७ शीलां (शीला) दिनीम् (दिनी) ; बाल. १।७२ पूर्वाशिनी (पूर्वादनी).

* व्याकुलोऽयं ग्रन्थः ।

(१) नासं. १३।९६ कामतो (कामं तां) ; नास्मृ. १५।९४ न दोष (स दोष) ; स्मृच. (व्यव.) २४७ नन्देत कुर्वन्नेवं (नन्देत्तु कुर्वन्नेव) ; बाल. १।७२ सर्वदा (संत्यजेत्) न दोष (स दोष).

(२) नासं. १३।९७ कुला (रूपा) ; नास्मृ. १५।९५ ; गृक. १०५ दक्षां (रक्षां) ; स्मृच. (व्यव.) २४५ ; गृर. ८६ ; बाल. १।७६.

(३) नासं. १३।९८ दोषादूढा (दोषादुष्टा) ; नास्मृ. १५।९६ दोषादूढा या निर्गता (दोषेणोढा या निर्दोषा) सा नि (साऽभि) ; स्मृच. (व्यव.) २४५ अज्ञात (अज्ञान).

## कात्यायनः

भार्याबहुत्वे सहाधिकारनियमः

[1]अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठया गर्हिता न चेत् ॥

[2]या वा स्याद्वीरसूरासामाज्ञासंपादिनी प्रिया ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥

[3]दिनक्रमेण वा कर्म यथाज्येष्ठं स्वशक्तितः ।
विभज्य सह वा कुर्युर्यथाज्ञानमशाठ्यवत् ॥

( १ ) यदि ज्येष्ठा न गर्हिता, तदा तया कारयेत् । गर्हिता चेत्, कनिष्ठया वीरसुवा कारयेत् । वीरसुवोऽपि बह्व्यश्चेत्, तासामपि मध्ये आज्ञासंपादनादिगुणयुक्ता विनियोजयेत् । प्रतिदिनमेका कर्तुमशक्ता चेत्, तदा दिनक्रमेण यथाज्येष्ठं कारयेत् । एकस्मिन्नपि दिने यद्येका कृत्स्नं कर्तुमशक्ता, तदा सर्वाः तत्कर्म यथाज्ञानं विभज्य कुर्युः । यत्तु कात्यायनेनैवोक्तम्– 'प्रथमा धर्मपत्नी स्याद्द्वितीया रतिवर्धिनी । दृष्टमेव फलं तत्र नादृष्टमुपपद्यते ॥' इति, तद्विष्णुवचनेन समानार्थम् ।
पमा.५१०-५११

( २ ) अग्निशुश्रूषा दर्शपूर्णमासादीनि कार्याणि । शिष्टशुश्रूषा अतिथ्यभ्यागतादिपूजा । अनेन अन्येऽपि पत्नीसाहित्यसपाद्या गृहमेधिधर्मा उपलक्ष्यन्ते । तदेतत्सर्वं सवर्णासवर्णभार्यासमवायवान् सवर्णयैव भार्यया कारयेत् । अनेकसवर्णभार्यायुक्तस्तु ज्येष्ठया सवर्णया । यदि सा गर्हिता न चेत्तर्हीव तया कारयेत् । गर्हाशब्दोऽत्र धर्मायोग्यत्वोपपादकदोषोपलक्षणार्थः । अनेनैवंविधदोषवत्या ज्येष्ठयाऽपि सवर्णया धर्मकार्यं न कारयेत्, किन्तु निर्दोषया कनीयस्यैवेति दर्शितमिति । एतज्ज्येष्ठभार्ययैव कर्तव्याग्निपरिचरणं आधानकाले सहाधिकृतज्येष्ठभार्याविषयम्, आधानोत्तरकालपरिणीतायाः पुनराधानं विना सहाधिकाराभाव इति हेमाद्रिणा प्रपञ्चितत्वात् । तदेतत्सर्वं हविर्यज्ञकाण्डे आधानप्रकरणे प्रपञ्चयिष्यामः । स्मार्ताग्निपरिचरणे तु शौनकोक्ताग्निद्वयसंसर्गविधानेनैव सर्वासामधिकारः । अतः स्मार्तकर्मणि सर्वासामधिकारोऽस्त्येव । तदग्निद्वयसंसर्गविधानं त्वौपासनप्रकरणे वक्ष्यते ।
* प्रपा.३८६

[1]सदारोऽन्यान्पुनर्दारान् कथंचित्कारणान्तरात् ।
यदीच्छेदग्निमान्कर्तुं क्व होमोऽस्य विधीयते ॥

---

( १ ) अप. ११८८ उत्तरार्धे ( कारयेद्बहुत्वे तु ज्येष्ठा याऽगर्हिता भवेत् । ) ; पमा. ५१० शिष्टा ( होत्रा ) त्वं चेत् ( त्वे च ) ; प्रपा. ३८६ ; गभा. १०६ ; प्रर. ११७ ; धप्र. ५४ (=) ; वीमि. ११८८ शुश्रूषां ( कार्याणि ) तद्बहुत्वं चेत् ( तदसत्त्वे तु ) ; सप्र. ८७४ ; मुक्ता. १५७ पमावत् ; सिन्धु. ११५२ ; शूक २४२ ; त्रिपा. ५९ ( भाग. २ ) ; बाल. ११८८ त्वं चेत् ( त्वे च ) ; संग. ३३२ ; संव. १७२ .

( २ ) कास्मृ. २११५९ ; अप. ११८८ प्रिया ( च या ) ; पमा. ५१० या वा स्याद्वीरसूरासा ( तथा वीरसुतासा ) प्रिया ( च या ) ; वीमि. ११८८ या वा ( या च ) दिनी प्रिया ( दिना च या ) ; मुक्ता. १५७ पमावत् ; शूक. २४२ अपवत्.

( ३ ) कास्मृ २११६०, अप. ११८८ स्वशक्तित· ( अशक्तित· ) ष्ठ्यवत् ( ष्ठ्य· ), पमा ५१० ज्येष्ठं स्वशक्तितः ( ज्येष्ठमशक्तित· ) कुर्युः ( कुर्यात् ) मशाठ्यवत् ( मशक्तितः ) ; दीक. ११८८ स्वशक्तितः ( प्रयत्नतः ) ; वीमि. ११८८ स्वशक्तित· ( अशक्तितः ) मशाठ्यवत् ( मसाध्यतः ), मुक्ता. १५७ स्वशक्तितः ( मशक्तितः ) सह वा ( सहमा ) मशाठ्यवत् ( मशक्तितः ) ; बाल. ११८८ मशाठ्यवत् ( मसाध्यवत् ).

* गभा., प्रर., सप्र. प्रपावत् ।

( १ ) कास्मृ. २११६८ यदीच्छेत् ( यदिच्छेत् ) क्व होमो ( सुहोमो ) ; स्मृच. १६६ यदीच्छेत् ( यदिच्छेत् ) ; हमा. २० रोऽन्यान् ( रो य· ) यदीच्छेत् ( य इच्छेत् ) ; प्रपा ३८९ कथंचित् ( उद्वोढु ) कर्तुं ( कुर्वन् ) ; गभा. १०७ प्रपावत् ; प्रर. ११७ प्रपावत् ; संप्र. ८७१ कथंचित् ( उद्वोढुं ) मान्कर्तुं ( मान्कुर्वन् ) : १०१३ रोऽन्यान् ( रो यः ) यदीच्छेदग्निमान्कर्तुं ( कर्तुमिच्छति य मानिः ) ; संम. ७४ प्रपावत् ; सिन्धु. ११५२ कथंचित् ( उद्वोढु ) ; त्रिपा. ६० ( भाग २ ) प्रपावत्, कात्यायनाश्वलायनौ ; रान. ८७ रोऽन्यान् ( रो य· ) यदीच्छेत् ( य इच्छेत् ) ; संग. ३३३ प्रपावत्, कात्यायनाश्वलायनौ ; संव. १७२ प्रपावत् ; संर. ५९३ प्रपावत् .

(१) अतिप्रसवा, प्रसवः पुष्पं रजस्तद्योग्यकालेऽप्यतिक्रान्तं यथा (? यस्याः)। निन्द्या छिद्रादियुक्ता। प्रसवाः अपत्यानि। समर्थः तत्तोषणार्थार्थदान इति शेषः। अष्टवर्षादिकालप्रतीक्षाविकल्पो वयःशक्त्यपेक्षया व्यवस्थितो बोद्धव्यः। येषु तु अधिवेदननिमित्तेषु न कालविशेषः श्रूयते, तेषु यावता कालेन तद्दोषनिश्चयो भवति, तावन्तं कालं प्रतीक्षेत, यथा दीर्घरोगे। § अधिविन्देत पूर्वस्त्रीविवाहादुपरि स्त्र्यन्तरविवाहं कुर्यात्।

गृक.१०४

(२) अतिप्रसवा हि ताः इत्यत्र प्रसवः पुत्र., ताः पूर्वोक्तस्त्रियः।

•गर.८५

(३) निन्द्या छिद्रादियुक्ता। 'समर्थस्तोषयित्वाऽर्थैः' इत्यत्र अर्थैरित्युपलक्षणम्।

• मपा.१८८–१८९

(४) अतिप्रसवा अतिपुत्रा। हिता इहामुत्रोपकारका इति।

संप्र.८७३

भार्याया न त्यागः

स्वदारांस्त्यजतो मोहान्नरस्यान्यायमोचिनः।
धर्मवंशपरित्यक्तुर्निष्कृतिर्न विधीयते॥

शास्त्रोक्तत्यागहेतून् विनैव यो मोहादिना स्वस्त्रियं त्यजति तस्यान्यायेन स्वदारमोचिनः तन्मोचनद्वारेण तया सह विहितश्रौतस्मार्तादिधर्मस्य तस्यामुत्पाद्यमानसंतानस्य च त्यक्तुर्निष्कृतिर्नास्तीत्यर्थः। इह लोकेऽपि तस्य राज्ञा चोरवद्दण्डनं कार्यम्। तथा च 'चोरवच्छास्यः' इत्यनुवृत्तौ विष्णुः—'निर्दोषां परित्यजन्, पत्नीं च' (विस्मृ ५।१६२, १६३) इति।

स्मृच (व्यव) २४५

§ अस.व्याख्यानाद् 'ततो विन्देत' इत्यत्र 'अधिविन्देत' इति पाठ कल्पतरोरभिप्रेत इति भाति। रत्नाकरोऽपि कल्पतरुसमानयोगक्षेमः।

• शेषं गृकवत्।

(१) स्मृच (व्य.) २४५; बाल. १।७६ पूर्वार्ध (दारांश्च त्यजतो मोहात्सनस्यान्यायमोचिनः।).

## दक्षः

अधिवेदनकारणानि

प्रथमा धर्मपत्नी स्याद्द्वितीया रतिवर्धिनी।
दृष्टमेव फलं तत्र नादृष्टमुपपद्यते॥

धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्।
दोषे सति न दोषः स्यादन्या कार्या गुणान्विता॥

अदुष्टापतितां भार्यां यौवने यः परित्यजेत्।
स जीवनान्ते स्त्रीत्वं च वन्ध्यत्वं च समाप्नुयात्॥

## शातातपः

अधिवेदनकारणानि

मद्यपानप्रवृत्ता च दीर्घरोगा च या भवेत्।
प्रतारिकाऽनपत्या स्त्रीप्रसूः परुषभाषिणी।
अर्थघ्नी च पतिद्वेषी स्त्री तिष्ठत्यपि चोद्वहेत्॥

## पैठीनसिः

भार्याद्वयानुमतिः

ब्रह्मचर्यं समाप्यैकां भार्ययोर्द्वितयं तथा।
तृतीयां नोद्वहेद्विप्र इति धर्मकृतो विदुः॥

अत्र तृतीयापरिणयननिषेधो मानुषीविषयः।

संप्र.८७६

(१) दस्मृ. ४।१४ दपरे (स्मृते); अप. १।७३ (=); मुभा १५१ उत्तरार्धे (दृष्टमात्रं तत्राप्यदृष्टं नोपपद्यते।); भान. १८२ मुक्तावद्; बाल. १।८८ स्याद् (तु).

(२) दस्मृ ४।१५; अप १।८८; स्मृच. १११; वीमि. १।८८. मुभा. १५१ उत्तरार्धे (दोषेऽपि न दोषः स्यादन्येनाऽऽ); मूक १४१ समाख्याता (समाम्नाता); गिमानत।); भान १८१ पू; बाल. १।८८ स्यादन्या कार्या (स्यादन्यादी).

(३) दस्मृ. ४।१६; मुभा १५१ अदुष्टापतितां (अदुष्टामपतितां) उत्तरार्धे (स जन्म सप्तकं स्त्रीत्वं वैधव्यं च पुनः पुनः।).

(४) मुभा. १५१.

(५) मपा. १८७ मद्यपानप्रवृत्ता (मद्यपे पिनरी); संप्र. ८७६.

## गर्गः

अनेकभार्यानुमतिः, अर्कविवाहकारणम्

गृही स्यादेकपत्नीकः सकामी चेद्वहेत्पराम् ।
तृतीयां नोद्वहेत्कन्यां चतुर्थीमपि चोद्वहेत् ॥
तृतीयामुद्वहेत्कन्यां मोहादज्ञानतोऽपि यः ।
धनधान्यायुषां हानिः रोगी स्याद्यदि जीवति ।
चतुर्थ्युद्वाहसिद्ध्यर्थमर्कवृक्षं समुद्वहेत् ॥

## स्मृत्यन्तरम्

अपुत्रत्वमधिवेदनकारणम्

अपुत्रः सन्पुनर्दारान्परिणीय ततः पुनः ।
परिणीय समुत्पाद्य नो चेदापुत्रदर्शनात् ।
विरक्तश्चेद्वनं गच्छेत्संन्यासं वा समाश्रयेत् ॥

प्रथमायां भार्यायामपुत्रः सन् पुनर्दारान् परिणीय, पुत्रानुत्पादयेदिति शेषः । तस्यामपि पुत्रानुत्पत्तौ आपुत्रदर्शनात्, परिणयेदिति शेषः । संप्र.८७२

सुरूपां सुप्रजां चैव सुभगामात्मनः प्रियाम् ।
धर्मानुचारिणीं भार्यां न त्यजेद्द्विजसत्तमः ॥

## मत्स्यपुराणम्

भार्याद्वयानुमतिः, अर्कविवाहकारणम्

अपाकृत्य ऋणं चार्षं लक्षण्यां स्त्रियमुद्वहेत् ।
एकां तु पितृदेवार्थं रत्यर्थमपरां तु वा ॥
तृतीयां मानुषीं नैव चतुर्थीं तु समुद्वहेत् ।
पुत्रपौत्रादिसंपन्नः कुटुम्बी साग्निको वरः ॥
उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ॥
मोहादज्ञानतो वाऽपि यदि गच्छेत्तु मानुषीम् ।
नश्यत्येव न संदेहो गर्गस्य वचनं यथा ॥
धर्मरागनिमित्तोऽपि नोद्वहेन्मानुषीं स्त्रियम् ।
तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ॥

मानुषीं नोद्वहेदिति वदता आर्कीमुद्वहेदित्युक्तं भवति। संप्र.८७६

## पद्मपुराणम्

धर्मे सहकारो ज्येष्ठाया एव

ज्येष्ठा पत्नी तु मुख्या स्याद्यज्ञे दानेऽर्चने गृहे ।
तया कर्माणि कुर्वंस्तु यथोक्तफलभाग्भवेत् ॥

## ब्रह्मपुराणम्

त्याज्या भार्या, अधिवेदनकारणानि,
अधिविन्नासंबन्धे कर्तव्यम्

परित्याज्या त्वया भार्या भर्तुर्वचनलङ्घिनी ।
तत्र दोषो न चास्तीति त्वं हि वेत्थ यथातथम् ॥
सर्वलक्षणयुक्ताऽपि या तु भर्तुर्व्यतिक्रमम् ।
करोति सा परित्याज्येत्येष धर्मः सनातनः ॥

---

(१) मुक्ता. १५२.

(२) मुक्ता. १५२ चतुर्थ्युद्वाह (तृतीयोद्वाह); आन. १८२ द्वहेत्क (द्वहन्क) यः (वा) स्याद्यदि (स्यात्र च).

(३) प्रपा. ३८१; संप्र. ८७२; विपा. ५७ (भागः २); संग. ३३१.

(४) धप्र. ५४.

(५) प्रपा. ३८७; संप्र. ८७६; विपा. ६१ (भागः २) पू., मात्स्ये कादरवाक्यम्.

(६) प्रपा. ३८७ पौत्रादि (आप्तादि) वरः (ऽवरः); गभा. १०७ तु (यः) कारयत् ; प्रर. ११८ तु (यः) को वरः (कोऽपरः); संप्र. ८७१ तु (च); धम. ११६ पू.; संम. ७१ तु (यः) वरः (ऽपरः); शाम. ५१ तु (यः); विपा. ६१ (भागः २) वरः (नरः) उत्त.; संग. ३३४ तु (यः); संव. १७४ पू.; संर. ५९३ विपावत्.

(१) प्रपा. ३८७; गभा. १०७; प्रर. ११८; संप्र. ८७६; संम. ७३; शाम. ५१; सिन्धु. ११५४; विपा. ६२ (भागः २); संग. ३३४ (उद्वाहे सति सिद्ध्यर्थे तृतीया न कदाचन।); संव. १७४; संर. ५९३.

(२) प्रपा. ३८७ गर्गस्य (गार्ग्यस्य); गभा. १०७; प्रर. ११८; संप्र. ८७६ प्रपावत्; संम. ७३; शाम. ५२; सिन्धु. ११५४; विपा. ६२ (भागः २); संग. ३३४ प्रपावत्; संव. १७४; संर. ५९३ गच्छेत्तु (गच्छेत).

(३) प्रपा. ३८७ धर्मरागनिमित्तोऽपि (धर्मदारनिमित्तेऽपि) तृतीयां यदि चोद्वाहेत् (मधुद्वहेत्तृतीयां तु); गभा. १०७ उत्त., अन्यथापीत्युक्तम्; संप्र. ८७६; विपा. ६२ (भागः २) धर्मरागनिमित्तोऽपि (धर्मयागनिमित्तेऽपि) अन्यथापीत्युक्तम्; संग. ३३४ विधानपारिजाते इत्युक्तम्; संव. १४९ उत्त. मत्स्यपुराणस्येदं वचनमिति न निर्णेतुं शक्यते।

(४) संर. ६३४.

(५) पमा. ११९-१२०.

धर्मविघ्नकरीं भार्यामसतीं चातिरोगिणीम् ।
त्यजेद्धर्मस्य रक्षार्थं तथैवाप्रियवादिनीम् ॥
न त्यजेदधिविन्देत न तु भोगं परित्यजेत् (१)॥

## कूर्मपुराणम्

*धर्मे सहकारो ज्येष्ठाया एव*

ज्येष्ठपत्न्या विरहितं कृतं यत्तु जनाधिप ।
तत्सर्वं विफलं याति गजभुक्तकपित्थवत् ॥

## संग्रहकारः ( स्मृतिसंग्रहः )

*अधिवेदनकालः, अर्कविवाहकारणम्*

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥
तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ।
चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥
तृतीयां मानुषीं चैव चतुर्थीं यः समुद्वहेत् ।
धनधान्यादिनाशः स्याद्विधवा साऽथ वा भवेत् ॥

## स्मृत्यर्थसारः

*भार्याबहुत्वे सहाधिकारनियमः, अधिवेदननिषेधः, त्याज्या भार्या, अधिवेदनकारणानि*

सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥

आज्ञासंपादनी दक्षा पुत्रसूश्च प्रिया शुचिः ।
नियोज्या धर्मकार्येषु नाधिवेद्या कथंचन ॥

शक्ता भक्ता शुचिर्दक्षा नियोज्या धर्मकर्मसु ।
अशुद्धां जारिणीं शूद्रां दूषितां तु विसर्जयेत् ॥

सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पतिद्विट् च मृतप्रजा ॥

## शौनककारिका:

*अधिवेदनकारणानि कालश्च, अर्कविवाहकारणम्*

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

ततोऽन्यामुद्वहेत्कन्यां धर्मलोकभयात्स्वयम् ॥

तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु ।
अर्कविवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥

## त्रिकाण्डमण्डनः

*भार्याबहुत्वे सहाधिकारनियमः*

स्वाध्यायमात्रं त्यक्त्वाऽन्ययजमानोक्तलक्षणाः ।
भार्याः सन्तीह यावत्यस्ताभिः सर्वाभिरन्वितः ॥

तत्र सपत्नीकत्वमधिकारप्रयोजकमित्युक्तम् । तदर्थं पत्नीविशेषणान्याह – स्वाध्यायेति । स्वाध्यायव्यतिरिक्त-यावद्विशेषणविशेषितो यजमानस्तथैव लक्षणोपेता यावत्यः पत्न्यस्ताभि. सर्वाभिः सहितोऽधिकारी । पद्म.

यद्वा सवर्णया ज्येष्ठभार्ययैव समन्वितः ।
यद्वाऽऽधानादुपर्यूढकामपत्नीविवर्जितः ॥

पक्षान्तरमाह— यद्वेति । सवर्णज्येष्ठभार्यया सहितो वाऽधिकारी न तु सर्वाभिः । सवर्णानामप्यनेकत्वे ज्येष्ठाया एव साहित्यं योजयितुं ज्येष्ठाग्रहणम् । तृतीयं पक्षमाह – यद्वेति । आधानानन्तरं ऊढा विवाहिता कामार्थं या पत्नी, तया रहितोऽपि अधिकारीत्यर्थः । पद्म.

---

( १ ) पमा. ५०८ ; मुक्ता. १५१ रोगिणीम् ( कोपिनीम् ) ; संर. ५९२ धर्म ( धर्मे ) रोगिणीम् ( कोपनाम् ).

( २ ) पमा. ५०८ .

( ३ ) संर. ६३५ .

( ४ ) प्रप्रा. ३८५ ; प्रर. ११७ ; धप्र. ५४ स्मृत्यर्थसारे इत्युक्तम् ; संप्र. ८७४ ; सिन्धु. ११५१ ; त्रिपा. ५८ ( भागः २ ) ; प्रका. ३७१ ; संग. ३३२ : संव. १७२ ; संर. ५९३ . संग्रहेषु समदे इत्युक्तम्.

( ५ ) प्रपा. ३८७ तृतीयां यदि चोद्वाहेत् ( यद्युद्वहेत्तृतीयां तु ) ; गाभा. १०७ येऽर्कं ( यार्के ) ; प्रर. ११८ अन्यत्रापीत्युक्तम् ; संप्र ८७६ हार्थं ( हाय ) ; द्वाम. ५२ ; सिन्धु ११५४ ; त्रिपा. ६२ ( भाग २ ) अन्यत्रापि इत्युक्तम् ; प्रका. ३७२ ; संग. ३३४ उत्त. , विधानसारज्ञाने इत्युक्तम् ; संव. १४९ उत्त. · १७४ ( = ) , संर. ५९३ उत्त. , ब्रह्मपुराणम्.

( ६ ) संर. ५९३ .

( ७ ) स्मृसा. १४ .

( १ ) शौका २-३ पृ. ७८ .

( २ ) शौका. १ पृ. ७०. तेषां स्वकाले निर्दिष्टः क्रमे प्रदेशा-वसरे करिष्यते ।

( ३ ) त्रिम. १०४३-४४.

सर्वे स्वस्वक्रियाशक्तिमात्रेणैवाधिकारिणः ।
तस्मादनेकभार्यस्य ज्येष्ठा चक्षुष्मती यदि ॥
कनिष्ठाऽन्याऽपि नित्येष्टिहोमादावधिकारिणी ।
अन्धयाज्येक्षणादीनि ज्येष्ठैव कुरुते यतः ॥

अथेदं चिन्त्यते बहुभार्यस्यात्र सर्वासामधिकार इति प्रागुक्तप्रथमपक्षे कनिष्ठाया अङ्गवैकल्ये आज्यावेक्षणासंभवात् कथमधिकार इति पूर्वपक्षं दूषयति— सर्वे इति । सर्वे स्वामिपत्नीऋत्विजः स्वस्वकर्मसामर्थ्येनैवाधिकारिणः । कर्मसामर्थ्यं च ऋत्विजां समाख्यया वचनयोगाच्च । पत्न्योस्तु फलयोगाद्वचनाच्च । तदुक्तं—' कर्मणि पुरुषाणां प्रधानं स्वामी फलयोगात्, पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात्, वचनविरोधाभ्यामन्ये ' इति । तत्राऽऽज्यावेक्षणस्य केवलक्रत्वर्थत्ववादिमतेनोत्तरमाह— तस्मादिति । यस्मात् सामर्थ्यमधिकारकं, तस्मात् अन्धाऽपि कनिष्ठा पत्नी संस्कारकर्मसु त्यागे चाधिकारिणीति भावः ।

न चावेक्षणे चक्षुर्वैकल्यादसंभवेन नाधिकार इत्यत आह— अन्धयेति । शास्त्रार्थस्य निष्पन्नत्वादिति भावः । पदम्.

अन्ये त्वाज्येक्षणादीनि सुप्रजास्त्वफलान्वयात् ।
सर्वाः कुर्युरिति प्राहुस्तस्मादन्धां त्यजन्ति ते ॥

आज्यावेक्षणस्य पुरुषार्थतावादिमतेनाऽऽह — अन्ये त्विति । श्रूयते हि सुप्रजास्त्वादिरूपं फलं, तच्छ्रवणाच्च पुरुषार्थताऽऽज्यावेक्षणस्य । तच्च सर्वासामपि नान्धानाम् । पदम्.

कर्तव्यं पुनराधानं पुनः परिणये सति ।
अग्न्याधेयमुशन्तीह केचिदुद्वाहकर्मणि ॥
लौगाक्ष्याद्यनिबद्धत्वादुभयं नेति केचन ।
सौपासनिनी पत्नी परा पूर्वाऽग्निहोत्रिणी ॥

सर्वाधिनः कामाधिनो वा दारान्तरपरिग्रहणेच्छोर्विषयमाह— कर्तव्यमिति । पुनः परिणये विवाहे कृते सति तदुत्तरं पुनराधानं कर्तव्यम् । केचिदाचार्या इह उद्वाहकर्मणि जीवत्पत्नीकस्य पुनर्विवाहोत्तरमग्न्याधेयमपूर्वाधानमुशन्ति वदन्ति । यद्वा, अग्न्याधेयं पुनराधेयम् । केचनाचार्या लौगाक्ष्यादिभिरनिबद्धत्वात् अनुक्तत्वात् उभयं पूर्वोक्तं नेति ब्रुवन्ति । यदोभयमपि लौगाक्ष्यादिमतेन नानुष्ठीयते, तदा परा पत्नी द्वितीया औपासनिनी, विवाहाग्निसंयोगात् । पूर्वा प्रथमा अग्निहोत्रिणी, तयैव सह अग्नीनामाधानात् । पदम्.

अधिवेदनकारणानि कालश्च, त्याज्या भार्या

आहिताग्निः प्रजाहीनां योपापत्यां मृतप्रजाम् ॥
दशमे द्वादशे पञ्चदशे संवत्सरे स्त्रियम् ।
त्यक्त्वाऽन्यामुद्वहेत्कन्यां सद्यस्त्वप्रिय-
भाषिणीम् ॥
अथवा पुनराधानमेवात्रेष्टं न चेतरत् ।
शिष्यगां गुरुगां गर्भहन्त्रीं त्यक्त्वैतदाचरेत् ॥

तत्राऽऽदौ पुनः परिणये हेतुमाह— आहिताग्निरिति । आहिताग्निः अग्नय आहिता येन असावाहिताग्निः । ' वाऽऽहिताग्न्यादिषु परम् ' इति सूत्रात् पूर्वनिपातः । प्रजाहीना केवलवन्ध्या, योपापत्या कन्याप्रसूः, मृतप्रजा मृतापत्या स्त्रियमनुक्रमेण दशमे द्वादशे पञ्चदशे संवत्सरे, अप्रियभाषिणीं तु सद्यस्त्यक्त्वाऽन्यां कन्यामुद्वहेत् पुनर्विवाहं कुर्यादित्यर्थः । कन्यायाः मक्षतयोनिपाणिग्रहणार्थम् । स्मर्यते विंशतिवर्षपर्यन्तं पुनर्विवाहः— ' यदा विंशतिधाऽपत्यं प्रसूयेताङ्गनाङ्गनः । पुनर्विवाहं तस्यास्तु कुर्यात्स्वकुलशान्तये ॥ ' इति । दशमवर्षादिग्रहणं परीक्षार्थम् । न हि त्रिंशत्तेऽवस्थादृश्येति । अथवेति । अथवाऽत्र पुनः परिणये पुनराधानमेवेष्टं नेतरत् । पवित्रेष्ट्यादिकं न भवतीति भावः । एवमेवाप्रियभाषिणीवच्छिष्यगामिनीं गुरुगामिनीं गर्भहन्त्रीं सद्यस्त्यक्त्वैतत् पूर्वोक्तमाचरेत् । पदम्.

(१) त्रिम. १।९१-९४.
(२) त्रिम. १।८१-८१.
(१) त्रिम. १।८४-८५.
(२) त्रिम. १।८९.

कामतोऽधिवेदनेऽनुमतिः, तत्र कर्तव्यविशेषश्च

धर्मप्रजासमृद्धेषु दारेषु यदि कामतः ।
अन्यान् समुद्वहेद्दारांस्तदा पूर्वोदितं विधिम् ॥
अनुष्ठाय मृगारेष्ट्या यजेताऽऽत्मविशुद्धये ।
नाऽऽदध्याद्वा मृगारेष्टिं पूर्वपत्न्या सहा-
ऽऽचरेत् ॥

यदि दारेषु धर्मप्रजासमृद्धेषु पातिव्रत्यधर्मेण प्रजाभिः समृद्धेषु सत्सु कामतः कामार्थमेव अन्यान् दारान् समुद्वहेत् पुनर्विवाहं कुर्यात्, तदा पूर्वोदितं विधिं अनुष्ठाय आत्मविशुद्धये स्वपापविल्यार्थं मृगारेष्ट्या यजेत सकृत् । एकविंशतिवारमावृत्त्येति बौधायनसूत्रे । पक्षान्तरमाह — नाऽऽदध्यादिति । वा नाऽऽदध्यात् पूर्वोक्तविधिना आधानं न कुर्यात् । आत्मविशुद्धये पूर्वपत्न्या सह मृगारेष्टिमात्रमाचरेत् । पद्म.

(१) त्रिम. ३।९०-९१.

भार्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि ।
तदा वैवाहिकं कर्म कुर्यादावसथ्येऽग्निमान् ॥

जीवत्पत्नीकस्य द्वितीयविवाहादौ वैवाहिकहोमाधिकरणाग्निमाह — भार्यायामिति । पद्म.

(१) त्रिम. (प्रकीर्णकाण्डम्) १५; विभा. ७१ (=); निन्धु. ११५२ भार्यायां (आद्यायां); प्रका. ३७२ सिन्धुवत्; संर. ५९३ सिन्धुवत्. वसथे (वसथ्ये);

# पतितादीनां विवाहसंस्कारविचारः

## हारीतः

पतितकन्या विवाह्या

[1]पतितस्य तु कुमारीं विवस्त्रामाप्लाव्याहोरात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाऽऽच्छाद्य नाहमेतेषां न ममेति इति त्रिरुच्चैरमिधाय तीर्थे स्वगृहे वोद्वहेत् ॥

## बौधायनः

पतितैः सह विवाहस्य पातित्यकरत्वम्

[2]न पतितैः संव्यवहारो विद्यते ॥

[3]संवत्सरेण पतति पतितेन समाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनादिति ॥

पतितसंप्रयोगे सति कियता कालेन केन संप्रयोगेण पततीति ? तदुभयं वक्ति– संवत्सरेणेति । यानासनाशनैः संवत्सरेण पतति । न तु याजनादिभिः संवत्सरेण । किं तर्हि ? संबन्धमात्रेण, सद्य एवेत्यर्थः, अन्तरङ्गत्वाद्याजनादीनां बहिरङ्गत्वाच्च यानादीनाम् । तस्माद्युक्ता योजना । याजनं नाम ऋत्विग्यजमानसंबन्धः । शिष्योपाध्यायसंबन्धः अध्यापनम् । कन्यादानप्रतिग्रहलक्षणसंबन्धो यौनम् । यानाद्येकस्यां शालायामेकस्मिन् कुञ्जरे गत्वायां वा । बौवि.

पतितानां पतितैः सह विवाहः, पतितसंततिर्न पातित्यदूषिता

[1]अथ पतिताः समवसाय धर्मांश्चरेयुरितरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः । पुत्रान् संनिष्पाद्य ब्रूयुर्विप्रव्रजतास्मत्त एवमार्यानपि संप्रतिपत्स्यथेति । अथापि न सेन्द्रियः पतति । तदेतेन वेदितव्यमङ्गहीनोऽपि हि साङ्गं जनयतीति ॥

पतितानामेव किंचिदाह— अथ पतिता इति । समवसाय संभूय परस्परं पतिताः धर्मांश्चरेयुः । किंलक्षणान् ? यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहलक्षणान् । अत्र परस्परं विवहमानेषु यदि पुत्रा निष्पन्ना भवेयुस्तान्निष्पादितानुपनीयैव पितरो ब्रूयुः— विप्रव्रजत निर्गच्छत अस्मत्तः अस्मान् त्यक्त्वा निर्गच्छत, निर्गता आर्यान् प्रतिपत्स्यथ यूयं आर्यान् प्रतिपत्स्यथ । अपिशब्दः संभावनावचनः । आर्यैः किल यूयं संप्रयोगं प्राप्स्यथेति । आर्या एव युष्माकमुपनेतारो भविष्यन्तीति । पतितपुत्रा अपि तैः संसर्गाभावे शुनयो भवन्ति । संसर्गे हि संसर्गपतनमिति ।

ननु पतितपुत्रत्वादपि तद्भवतीत्याशङ्क्य आह– अथापि न सेन्द्रियः पतति । यद्यपि च पिता पतति तथापि सेन्द्रियः इन्द्रियैः सह न पतति । कस्मात् ? न हि पतनीयकारणम् । न च इन्द्रियाणि करणानि पतितानि । कर्तृकरणयोश्च पृथक्त्वं प्रसिद्धम् । उपस्थेन्द्रियं च कर्मेन्द्रियम्– 'श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी । पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥' इति । पुत्राश्च इन्द्रियनिष्पादिताः । तथा च मन्त्रः— 'अङ्गादङ्गात् संभवसि' इति । अतः करणसमवायिनः । अथोच्येत सर्वैरेव पितृगुणैः पुत्रस्थैर्भवितव्यम् । अपि

---

(१) विश्व. ३।२५७ ; मिता. ३।२६१ ( आप्लाव्य० ) स्थाप्य ( स्थापितां ) भाव ( दधानां ) शुक्लेनाहतेन ; मुक्ता. १५४ ( तस्य तु कुमारीमहोरात्रोषितां प्रातः शुक्लमहतेन वाससाऽऽच्छादितां नाहमेषां मम नैव इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत् । ).

(२) बौध. २।१।४२ ; निम्न. ४८८ ( माग: २ ).

(३) बौध. २।२।२३ ; मुक्ता. २८ यौनात्तु तु यानासनाशनादिति ( यौनात्सद्यो न तु यान्यासनादिभिः ) : १५४ ( संवत्सरेण पतति पतितेन समाचरन् । याजनाध्यापनाद्यौनात्सद्यः ) पतत्येव .

(१) बौध. २।२।१० आर्यानपि ( आर्यान् ) ; मुक्ता. १५४ हि साङ्गं जनयतीति ( साङ्गं जनयेत् ) .

पतितत्वेनेति । तदपि न । कस्मात् – तदेतेन वेदितव्यं, दृश्यते ह्ययमर्थः– अङ्गहीनोऽपि साङ्गं जनयति, साङ्गोऽप्यङ्गहीनम् । अतो नावश्यं पतितपुत्रेणापि पतितेन भवितव्यम् । बौवि.

हारीतमतेन पतितोत्पन्नस्यापि पातित्यम्

[1]मिथ्यैतदिति हारीतः । दधिधानीसधर्माः स्त्रियः स्युः । यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तच्छिष्टा धर्मकृत्येषूपयोजयन्ति । एवमशुचि शुक्लं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते ॥

अमुं तावत् पक्षं दूषयति– मिथ्येति । अपतितायामपि जनन्या पतिताद्युत्पन्नश्चेत् पतित एव भवति इत्येतदनेन कथ्यते । कस्य हेतोः ? यावता जनन्या अपि स उत्पन्नः । मिथ्यैतदिति हारीतः । हारीतग्रहणं पूजार्थं, न आत्मीय (?) मतं पर्युदसितम् । अत्र दधिधानीसाधर्म्यात् स्त्रीणां बीजप्राधान्यं दर्शयति । तथा द्रव्यान्तरनिष्पत्त्यायतनत्वं दधिधान्या एव । आसामपि अशुचिशुक्राधारत्वम् । यथा च दधिधान्या प्रयताया आतञ्चिनादप्रयताद्यन्मो मथननिष्पन्नं नवनीतं कृतं न धर्मकार्येषु इष्ट्यादिषु उपयुज्यते, एवं अशुचिशुक्लनिष्पादितेन पुंसा न धर्मसंबन्धो विधीयते । अथ यदुक्तम्– ' न सेन्द्रियः पतति ' इति, तन्मिथ्यैव । कथम् ? द्वौ हि पुरुषौ भवतः– सोपाधिको निरुपाधिकश्च । यो निरुपाधिकः परमात्मा तस्य अकर्तृत्वम् । सोपाधिकस्तु पुण्यापुण्ये करोति, तत्फलं चानुभवति । उपाधिश्च बुद्ध्यादिर्देहपर्यन्तः । स हि क्षेत्रज्ञः । तस्मिंश्चाहंप्रत्ययः । स च भूतात्मा स देहोऽहङ्कारं मनः (?) । ' योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥ ' इति । ततो देहोऽपि कर्तृत्वादेव पतति । एवं च कृत्वा मतेष्वपि पतितेषु तत्सपिण्डानां तद्देहस्पर्शनादि शिष्टैर्नाभ्युपगम्यते । तस्मादशुचिकुलोत्पन्नानामशुचित्वमेव । तथा च स्मृतिः– ' पतितोत्पन्नः पतितो भवतीत्याहुः ' इति । यदप्युक्तम् ' अङ्गहीनोऽपि साङ्गम् ' इति, तदपि ग्रहस्थितिवशात् आहारविशेषवशाच्च युक्तम् । इह तु सेन्द्रिय एव पतति इत्युक्तम् । किंच– स्त्रीपुंसाभ्यां हि पुत्रो जन्यते । यदि अत्रापि पुमानङ्गहीनः स्त्री तु साङ्गा भवत्येव । ततोऽस्याङ्गानि प्रवर्तन्ते । मनुः– ' पितुर्वा भजते शीलं मातुर्वोभयमेव वा ' इति । इदं चान्यत्– भूयांसो धर्माः कारणगताः कार्ये भवन्ति । तत्र शुक्लादयो गुणाः पुत्रे न भवन्तीति प्रमाणशून्यं वचः । अत एव तदपि मिथ्यैव । तस्माच्च तेन सह संप्रयोगो विद्यते इति स्थितम् । बौवि.

पतितसुतेः प्रायश्चित्तेन शुद्धिः

[2]अशुचिशुक्लोत्पन्नानां तेषामिच्छतां प्रायश्चित्तिः । पतनीयानां तृतीयांशः स्त्रीणामंशस्तृतीयः ॥

यद्यपि संप्रयोगो न विद्यते, तथापि प्रायश्चित्तं तस्यास्तीत्याह– अशुचीति । पतनीयप्रायश्चित्तं यदुक्तम् 'चतुर्थकाला मितभोजिनः स्युः' इति, तस्य तृतीयो भागः पतितोत्पन्नानां प्रायश्चित्तम् । स्त्रीणां तदुत्पन्नानां तस्यापि तृतीयो भागः, नवमभाग इति यावत् । तत्र तौल्येऽपि तद्बीजत्वे स्त्रीणां दोषलाघवमवगम्यम् । तथा च वसिष्ठो युक्तिमेवाह — ' पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः, सा हि परगामिनी, तामरिक्थामुपेयात् ' इति । बौवि.

## आपस्तम्बः

पतितैः सह विवाहस्य पातित्यकरत्वम्

न पतितैः संव्यवहारो विद्यते ॥

पतिताः स्तेनादयो वक्ष्यमाणाः, तैः सह न कश्चिदपि व्यवहारः कर्तव्यः । तत्र मनुः— ' संवत्सरेण पतति पतितेन सहाऽऽचरन् । याजनाध्यापनाद्यौनाद्य तु याना-सनाशनात् ॥ ' इति । यानादिभिः संवत्सरेण पतति । याजनादिभिस्तु सद्य एव । उ.

(१) बौध. २।२।११ ; मुक्ता. १५४.

(१) बौध. २।२।१२ ; मुक्ता. १५४ तृतीयांशः (तृतीयोऽंश) .

(२) बौध. २।२।१५ ; हिध. २१।१।१५ ; मुक्ता. १८, १५१ .

पतितानां पतितैः सह विवाहः, पतितसंततिर्नं पातित्यदूषिता

अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति सांशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः ॥

पतितैः अकृतप्रायश्चित्तैरुत्पादितानां पुत्राणामपि पातित्यमस्ति इति प्रतिपादयितुं पूर्वपक्षमाह– अथाभिशस्ता इति । अथशब्दः अर्थान्तरप्रस्तावं सूचयति । अभिशस्ताः पतिताः । समवसाय चरेयुः । अवसानं गृहम् । समिति एकीभावे । ग्रामाद्बहिः एकस्मिन् प्रदेशे गृहाणि कृत्वा चरेयुः । धार्म्यं धर्म्यं वक्ष्यमाणं वृत्तमिति । सांशित्य संशिता तीक्ष्णां बुद्धिं कृत्वा । निश्चित्य इत्यर्थः । इतरेतरं याजयन्तः, इतरेतरमध्यापयन्तः, परस्परं विवाहसंबन्धं च कुर्वन्तश्चरेयुः वर्तेरन्निति । उ.

पुत्रान् संनिष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्याः संप्रत्यपत्स्यतेति ॥

अथ ते पुत्रान् संनिष्पाद्य ब्रूयुः – हे पुत्राः अस्मत् अस्मत्तः विप्रव्रजत विविधं प्रकर्षेण च स्नेहमुत्सृज्य आर्यसमीपं गच्छत । एवं हि अस्मत्सु अस्मासु आर्याः शिष्टाः सप्रत्यपत्स्यत 'आशंसायां भूतवच्च' इति भविष्यति लुङ् । सकारात्परो यकारोऽपपाठश्छान्दसो वा । संप्रतिपत्तिं करिष्यन्ति । आर्याणामपि एतदभिप्रेतं भविष्यति । यस्मात् अस्माभिरेव पतनीयं कर्म अनुष्ठितं न भवद्भिः । न च पतितेनोत्पादितस्य पातित्यं, अन्यत्वात् । उ.

अथापि न सेन्द्रियः पतति ॥

एतदेवोपपादयति – अथापीति । न हि पतितो भवन् सहेन्द्रियेण पतति, पुरुष एव पतति, नेन्द्रियं शुक्रमिति । अथापिशब्दो अपिचेत्यस्यार्थे । उ.

तदेतेन वेदितव्यमङ्गहीनोऽपि साङ्गं जनयति ॥

कथं न सेन्द्रियः पततीत्याह–– तदेतेनेति । तत् अनन्तरोक्तं अर्थरूपं एतेन वक्ष्यमाणेन निदर्शनेन वेदितव्यम् । चक्षुराद्यङ्गहीनोऽपि साङ्गं चक्षुरादिमन्तं जनयति, एवं अधिकारविकलः साधिकारं जनयिष्यति, स्त्रिया अपि कारणत्वात्, तस्याश्च दोषाभावात् । उ.

हारीतमतेन पतितोत्पन्नस्यापि पातित्यम्

[2]मिथ्यैतदिति हारीतः ॥

दूषयति– मिथ्येति । एतत् अनन्तरोक्तं अर्थरूपं मिथ्या न युक्तं इति हारीतो मन्यते । उ.

दधिधानीसधर्मा स्त्री भवति ॥

कुत इत्याह–– दधीति । दधि धीयते यस्यां सा दधिधानी स्थाली । तया सधर्मा सदृशी स्त्री भवति । उ.

यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियत एवमशुचि शुक्लं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते ॥

ततः किम्? यो हि पुरुषो दधिधान्या स्थाल्यां, अप्रयतं श्वाद्युपहतं पय आतच्य तक्राद्यातञ्चनेन संस्कृत्य मन्थति, न तेन तदुत्पन्नेन घृतादिना धर्मकृत्यं यागादिकं क्रियते । एवं पतितसंबन्धेन अशुचि शुक्लं स्त्रियां निषिक्तं शोणितेनाक्तं यन्निर्वर्तते येन रूपेण निष्पद्यते न तेन सह संप्रयोगो विद्यते शिष्टानाम् । अत्र च 'अशुचि शुक्लं' इत्येतत् 'अथापि न सेन्द्रियः पतति' इत्यस्य दूषणम् । न हि वाचनिकेऽर्थे युक्तयः क्रमन्ते । तथा च समानायामप्युत्पत्तौ पुत्र एव पतति न दुहिता । यथाऽऽह वसिष्ठः– 'पतितोत्पन्नः पतितो भवत्यन्यत्र स्त्रियाः, सा हि परगामिनी, तामरिक्थामुपेयात् ।' इति । उ.

(१) आप. १।२९।८; हिध. २६।७।६५; मुक्ता. १५१.
(२) आप. १।२९।९; हिध. २६।७।६६; मुक्ता. १५१ पत्स्यतेति (पत्स्यतेति).
(३) आप. १।२९।१०; हिध. २६।७।६७; मुक्ता. १५१.

(१) आप. १।२९।११; हिध. २६।७।६८; मुक्ता. १५१.
(२) आप. १।२९।१२; हिध. २६।७।६९; मुक्ता. १५१.
(३) आप. १।२९।१३; हिध. २६।७।७०; मुक्ता. १५१.
(४) आप. १।२९।१४; हिध. २६।७।७१; मुक्ता. १५१ आतच्य (आतच्य).

## वसिष्ठः

पतितैः सह विवाहस्य पातित्यकरत्वम्

[1]ब्राह्मेण वा यौनेन वा ॥
अथाप्युदाहरन्ति—
संवत्सरेण पतति पतितेन सहाऽऽचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनादिति ॥

पतितकन्या पातित्यदोषरहिता, सा विवाह्या

[2]पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः ॥
[3]सा हि परगामिनी, तामरिक्थामुपेयात् ॥

अशुल्का कृतप्रायश्चित्तामुपेयादित्यर्थः ।

मुक्ता.१५४

## विष्णुः

पतितैः सह विवाहस्य पातित्यकरत्वम्

[4]संवत्सरेण पतति पतितेन सहाऽऽचरन् ॥
एकयानभोजनासनशयनैः ॥
यौनस्रौवमौखैः संबन्धैस्तु सद्य एव ॥

## मनुः

पतितैः सह विवाहस्य पातित्यकरत्वम्

[5]संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥*

पतितेन सह संसर्गमाचरन् एकयानगमनैकासनोपवेशपङ्क्तिभोजनरूपान् संसर्गानाचरन् संवत्सरेण पतति । न तु याजनाध्यापनाद्यौनात् संवत्सरेण पतति किंतु सद्य एवेत्यर्थः । अध्यापनमत्रोपनयनपूर्वकं सावित्रीश्रावणम् । §याजनादीनां च सद्यःपातित्यमाह देवलः— ' याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतन्त्येते पतितेन न संशयः ॥ ' विष्णुः— ' आ संवत्सरात् पतति पतितेन सहाचरन् । सहयानासनाभ्यामाद्यौनात्तु सद्य एव हि ॥ ' । बौधायनः— ' संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनात्सद्यो न शयनासनात् ॥ ' इति । गोविन्दराजस्तु याजनादीनां त्रयाणां संवत्सरेण पातित्यहेतुत्वं, सहासनादीनां लघुत्वाच्च संवत्सरेण, किंतु तस्मादूर्ध्वमपीति व्याचष्टे । 'अस्मदीयमनुव्याख्या मुनिव्याख्यानुसारिणी । नैनां गोविन्दराजस्य कल्पनामनुरुन्ध्महे ॥ '

मभु.

## याज्ञवल्क्यः

पतितैः सह विवाहस्य पातित्यकरत्वम्,

पतितकन्या विवाह्या

[1]एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः ।
कन्यां समुद्वहेदेषां सोपवासामकिंचनाम् ॥

(१) एवं तावच्चतुर्णां गुरुतल्पपर्यन्तानां महापातकानां प्रायश्चित्तान्यभिधायेदानीं तत्संसर्गिणः प्रायश्चित्तावसरेऽर्थान्तरोपदेशद्वारेण प्रायश्चित्तमाह—एभिरिति । महापातकोद्देशे ' यश्चैतैः संविशेत्समाम् ' इति महापातकित्वमुक्तम् । इदं तु प्रायश्चित्तार्थं तत्समत्ववचनम् । य एते ब्रह्महप्रभृतय उक्ताः पातकिनः एभिर्यः संवत्सरं संविशेत् सहभोजनाद्याचरेत्, सोऽपि संवत्सरात् तत्समः, तद्विशिष्टप्रायश्चित्तार्ह इत्यभिप्रायः । समशब्दश्चात्र तदेवास्य प्रायश्चित्तं समं अन्यूनानतिरिक्तं पूर्वोक्तयैव विषयव्यवस्थया यथा स्यादित्येवमर्थः । अतश्च समशब्दादीषन्न्यूनत्वं नाऽऽशङ्कनीयम् । तथा च मानवे— ' यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥ ' ( मस्मृ ११।१८१ ) इति प्रायश्चित्तसाम्यमेवोक्तम् । वत्सरादिति पञ्चम्यन्तं परत इत्यध्याहृत्य योज्यम्, संवत्सरात्परतस्तदीयप्रायश्चित्तार्ह इत्यर्थः । प्राक् त्वन्यदेव प्रायश्चित्तं दर्शयिष्यामः ।

* मेधातिथ्यादिव्याख्यासंग्रहः काण्डान्तरे करिष्यते ।

§ अत्र ' याजनादिना ' इति, ' सद्यःपातित्यहेतुत्वम् ' इति वा भवितुं युक्तम् ।

(१) वस्मृ १।२०-२२.

(२) वस्मृ १३।२०, मुक्ता १५४ ( पतितोत्पन्नाः पतिता भवन्त्यन्यत्र स्त्रियाः ) ; संग. ६४१ ( इत्याहु॰ ) ; वृभ. ११।१८ सगवत्.

(३) वस्मृ १३।२१ ; मुक्ता. १५४ मरिक्था ( मशुल्का ).

(४) विस्मृ. ३५।३-५. (५) मस्मृ. ११।१८०.

(१) यास्मृ. ३।२६१ ; विश्व. ३।२५७ संवसेद्यो वै वत्सरं ( संविशेद्यो वै वत्सरात् ) ; अप. ; वीमि. ; मुक्ता. १५४ वत्सर ( वाम ) उप. ; मान. १८३ मुद्वहेत्, उप ; वृभ. ११।१८ उप.

अस्यापवादः -- कन्यामिति । कन्यामक्षतयोनिकां सम्यक् निर्विचिकित्समुद्वहेत् । 'अयं तु विशेषः -- ' सोपवासामकिंचनाम् ' उपवासशब्दोऽत्र प्रायश्चित्तोपलक्षणार्थ इति केचित् । उपवासमात्रमेव प्रायश्चित्तमिति युक्ततरं, उपलक्षणत्वे हेत्वभावात् । आर्किचनत्वं च पुष्पमाल्यामात्रमपि तदीयं न ग्राह्यमित्यभिप्रायम् । तथा च हारीतः - ' पतितस्य तु कुमारीं विवस्त्रामाप्लाव्याहोरात्रेपोषितां प्रातः शुक्लेनाहतेन वाससा आच्छाद्य 'नाहमेतेषां न ममैते' इति त्रिरुच्चैरभिधाय तीर्थे स्वगृहे वोद्वहेत् ' इति । † विश्व.

( २ ) एवं ब्रह्महादिमहापातकिप्रायश्चित्तान्यभिधाय अवसरप्राप्तं तत्संसर्गिप्रायश्चित्तमाह - एभिरिति । एभिः पूर्वोक्तैर्ब्रह्महादिभिरेक संवत्सरं योऽत्यन्तं संवसति सहाऽऽचरति सोऽपि तत्समः । यो येन सहाऽऽचरति स तदीयमेव प्रायश्चित्तं कुर्यादिति तदीयप्रायश्चित्तातिदेशार्थं तत्समग्रहणं, न पुनः पातकित्वातिदेशार्थम् । तस्य ' यश्च तैः सह संवसेत् ' इत्युपदेशत एव सिद्धत्वात् । अत्र च 'सत्यप्यतिदेशत्वे कृत्स्नमेव द्वादशवार्षिकं कार्यं, साक्षान्महापातकित्वात्संसर्गिणः । अपिशब्दाच्च केवलं महापातकिसंयोगी तत्समः किन्त्वतिपातकिपातक्युपपातक्यादीना मध्ये यो येन सह संसर्गं करोति सोऽपि तत्सम इति तदीयमेव प्रायश्चित्तं कुर्यादिति दर्शयति ।

पतितसंसर्गप्रतिषेधेन प्रतिषिद्धस्य यौनसंबन्धस्य क्वचित्प्रतिप्रसवमाह - कन्यामिति । एषां पतितानां कन्यां पतितावस्थायामुत्पन्नां सोपवासां कृतसंसर्गकालोचितप्रायश्चित्तां अकिंचनां अगृहीतवस्त्रालङ्कारादिपितृधनां उद्वहेत् । कन्यां समुद्वहेदिति वदन् स्वयमेव कन्या त्यक्तपतितसंसर्गा समुद्वहेत्र पुनः पतितहस्तात्प्रतिग्राह्येति दर्शयति । एवं च सति पतितयौनसंसर्गप्रतिषेधविरोधोऽपि परिहृतो भवति । अयं चार्थो वृद्धहारीतेन स्पष्टीकृतः - ' पतितस्य तु कुमारीं विवस्त्रामहोरात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाऽऽच्छादितां नाहमेतेषां न ममैते इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेत् ' इति । तथा एषां कन्यां समुद्वहेदिति वचनात्स्त्रीव्यतिरिक्ततदीयापत्यस्य संसर्गानर्हतां दर्शयति । अत एव वसिष्ठः - ' पतितेनोत्पन्नः पतितो भवति अन्यत्र स्त्रियाः, सा हि परगामिनी तामरिक्थामुद्वहेत् ' इति । * मिता.

( ३ ) यच्च एषां ब्रह्महादीनां अकिंचनां अशुल्कां उद्वहेदिति याज्ञवल्क्यवचनेन विवाहविधिः, तदिदं सर्वं युगान्तरविषयमिति न विस्तार्यते, 'संसर्गः शोधितैरपि' ' न पतितैः सह संव्यवहारो विद्यते ' इति पतितैः कृतप्रायश्चित्तैरपीति निषेधादिति भावः । आन.१८३-१८४

## व्यासः

पतितैः सह विवाहस्य पातित्यकरत्वम्

[1]संवत्सरेण पतति संसर्गं कुरुते तु यः ।
यानशय्यासनैर्नित्यं जानन्वै पतितो भवेत् ॥
याजनं योनिसंबन्धं तथैवाध्यापनं द्विजः ।
कृत्वा सद्यः पतेत् ज्ञानात्सहभोजनमेव वा ॥

## देवलः

पतितैः सह विवाहस्य पातित्यकरत्वम्

[3]संलापस्पर्शनिःश्वाससहयानासनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥
याजनं योनिसंबन्धं स्वाध्यायं सहभोजनम् ।
कृत्वा सद्यः पतत्येव पतितेन न संशयः ॥
संवत्सरेण पतति पतितेन सहाऽऽचरन् ।
याजनासनयज्ञादि कुर्वाणः सार्वकामिकम् ॥

## यमः

पतिता कन्या विवाह्या

स्त्री यदा बालभावेन महापापं करोति हि ।
प्रायश्चित्तव्रतस्यार्धं पित्रा तु व्रतचारिणीम् ।
उद्वहेदभिरूपां तामन्यथा पतितस्तु सः ॥

† भर. विश्वरूप ।

* वीमि. मितावत् ।
( १ ) मुक्ता. २८ , १५३.
( २ ) मुक्ता. २८ , १५३ ; आन. १९१ .
( ३ ) देस्मृ. ३३-३५ .
( ४ ) मुक्ता. १५३ .

# शुक्लयजुर्वेदपरिशिष्टात्मकं प्रवराध्यायो वंशाध्याय इति वोच्यमानं प्रावरिकासूत्रम् *

## परिभाषाकाण्डम्

अथातः प्रवरान् व्याख्यास्यामः ॥ १ ॥

तदेतद्ब्राह्मणं भवति, आर्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीत (शब्रा. १।५।१।९ ) इति ॥ २ ॥

बन्धोरेव नैत्यथो संतत्या इति ॥ ३ ॥

एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, पञ्च वृणीते, न पञ्चाति वृणीत इति ॥ ४ ॥

अथ हैके मानवमनुवदित्येवैकमार्षेयं सार्ववर्णिकं प्रदिशन्ति कस्य हेतोरिति 'मानव्यो हि प्रजाः' ( तैसं. ५।१।५।६ ) इति ॥ ५ ॥

न देवैर्न मनुष्यैरार्षेयं वृणीते, ऋषिभिरार्षेयं वृणीत इति ॥ ६ ॥

यः परार्षेयं वृणीते परं यज्ञस्याऽऽशीर्गच्छत्यावृश्च्यते देवेभ्य ऋषिभ्य एष ओषधिभ्यो वनस्पतिभ्यः पितृभ्यो मनुष्येभ्यो यः परान्वृणीते ॥ ७ ॥

तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानामुक्तं भवति ॥ ८ ॥

इत एवोर्ध्वान् होता प्रवृणीतेऽन्वगित्यध्वर्युस्तद्धितवदामन्त्रितवद्येति ॥ ९ ॥

इति परिभाषाकाण्डं समाप्तम् ॥

## भृगुकाण्डम्

भृगूनेवाग्रे व्याख्यास्यामः—

१ भार्गवाः २ जामदग्न्याः ३ वात्स्यायनाः ४ शौकायणाः ५ आलेखायनाः ६ शाकटायनाः ७ दार्भायणाः ८ प्रत्तायनाः ९ वालायनाः १० शौनकायनाः ११ आर्कायणाः १२ मार्कायणाः १३ वार्षिकाः १४ काङ्कायनाः १५ वाहूतकाः १६ सान्तपायनाः १७ शार्कराक्ष्याः १८ काशकृत्स्नाः १९ जानायनाः २० आर्यायणाः २१ वार्कायणाः २२ ऐतिशायनाः २३ अनूपेयाः २४ पैङ्गलायनाः २५ याज्ञिकाः २६ सैपातकाः २७ नाडायनाः २८ शार्द्वन्तायनाः २९ उष्ट्राक्षाः ३० बाहुमित्रायणाः ३१ वापायनाः ३२ दैवन्तायनाः ३३ गोष्ठायणाः ३४ रोहितायनाः ३५ वायवाः ३६ काशेयाः ३७ माध्योदाः ३८ वायानिनः ३९ दाभ्रेपकयः ४० द्रोपमिह्वयः ४१ कारवचः ४२ औरसयः ४३ साङ्काः ४४ राहजितवाहाः ४५ औलन्धि- ४६ काम्वलोदरि- ४७ शातकि- ४८ बाह्यकि- ४९ पार्पति- ५० पार्थकर्णि- ५१ क्रोष्टुकर्णि-

* शुक्लयजुर्वेदपरिशिष्टात्मकः प्रवराध्यायो गोत्रप्रवरप्रकरणमुद्रणात्प्राक् नोपलब्ध इति तत्प्रकरणे प्रा. बॉन् माक-संपादित-गोत्रप्रवरमञ्जरीतः संगृहीतः । अधुना तु पं. श्रीधरशास्त्री वारे इत्येतैः संपादितेषु कात्यायनीयपरिशिष्टेष्वन्तर्भूतः समधिगत इति स परिशिष्टत्वेन यथास्थित एव समुध्दते ।

५२ शौनकर्णि– ५३ शौद्धकर्णि– ५४ सावकर्णि– ५५ सात्यकर्णि– ५६ सावर्णि– ५७ साण्डमर्णि– ५८ कवेरणि– ५९ भवेरणि– ६० शाकपौर्णि– ६१ वाटार्गिराणि– ६२ याह्मिसनि– ६३ शौकजिह्वासनि– ६४ बालायनि– ६५ राथामनि– ६६ पाणिनि– ६७ रेखायनि– ६८ वैहीनरि– ६९ वैश्वानरि– ७० वाल्मीकि– ७१ विरुपाक्षि– ७२ स्थौलपिण्डि– ७३ तौलकेशि– ७४ हस्त्यग्नि– ७५ शिखापत्ति– ७६ सौगौलि– ७७ पारिमण्डलि– ७८ जैकजिह्वि– ७९ केह्नलेढि– ८० कोचहस्ति– ८१ ह्रकोचहुण्डि– ८२ माचामति– ८३ जीहिकारि– ८४ देवमति– ८५ ग्रीहम्मति– ८६ जीवन्ति– ८७ जैह्मति– ८८ शालङ्कि– ८९ बालाकि– ९० पार्णिलि– ९१ सौध्वजि– ९२ सौरसि– ९३ कोटलि– ९४ लाकुचि– ९५ लालादि– ९६ कौञ्चाक्षि– ९७ कौद्धाक्षि– ९८ शौद्धकि– ९९ पौर्णसौगन्धि– १०० अनुसातक्या: १०१ लेखायनि– १०२ नागरङ्गायनि– १०३ कात्यायन– १०४ गोह्मायन– १०५ दौह्मायन– १०६ गोष्ठयायन– १०७ गार्ग्यायण– १०८ काह्वायन– १०९ वायव्यायन– ११० नालायन– १११ वागायन– ११२ वैरायण– ११३ वैशम्पायन– ११४ शौतायन– ११५ लोहितायन– ११६ उदित्तायन– ११७ आर्चायन– ११८ सात्यकायनानां ११९ याह्नेय– १२० भ्राष्ट्रेय– १२१ भ्रास्तेय– १२२ त्वाष्ट्रेय– १२३ माण्डूकेय– १२४ मार्कण्डेय– १२५ लाक्षेय– १२६ गाङ्गेय– १२७ माधूकेय– १२८ वैष्टापुरेय– १२९ नौपेय– १३० वार्णोपेय– १३१ नामृतभाग– १३२ आर्तभाग– १३३ सांख्यमित्र– १३४ चाण्डमस– १३५ कोपियह्न– १३६ मित्रयक्ष– १३७ पौर्णिक– १३८ वृकाश्वक– १३९ श्रीवत्स– १४० शारद्वत– १४१ कोशवृक्ष– १४२ फोटर– १४३ शार्ङ्गरव– १४४ गालव– १४५ सांकृत्य– १४६ यैरोहित्य– १४७ लाक्षण्य– १४८ माण्डव्य– १४९ नैमिश्य– १५० मौद्गल्य– १५१ शाकल्य– १५२ जामाल्य– १५३ नैकशून्य– १५४ वैन्यानां १५५ वत्स– १५६ लव– १५७ उर्ध्वमन्यु– १५८ मृकण्डु– १५९ माण्डु– १६० पैल– १६१ विलभृत्– १६२ सौक्ति– १६३ माक्षि– १६४ कांसि– १६५ क्रोष्टि– १६६ सौकृति– १६७ सौविष्टि– १६८ जिहिति– १६९ अतिथिस्फेन– १७० माङ्गोति– १७१ गेलह– १७२ उशास्तन्वत– १७३ उशन– १७४ व्याघ्यायी– १७५ मारायी– १७६ मीह्लीकी ( गल्हीकी )– १७७ दाल्भि– इत्येतेषामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव– च्यावन– आप्नवान– और्व– जामदग्न्य– इति होता। भृगुवत्– च्यवनवद्– अप्नववद्– उर्ववद्– जमदग्निवद्–इत्यध्वर्युः ॥१॥

आचाव्यानां त्र्यार्षेयः प्रवरो भवति । भार्गव– च्यावन– आचाव्य– इति होता । भृगुवत्– च्यवनवद्–अचाव्यवद्–इत्यध्वर्युः ॥ २ ॥

वैजवा नैमथिताः। तेषां पञ्चार्षेयः प्रवरो भवति। भार्गव– च्यावन–, आप्नवान– वैजव– नैमथित– इति होता। भृगुवत्– च्यवनवद्– अप्नववद्– वीजवद्– निमथितवद्– इत्यध्वर्युः ॥ ३ ॥

शाठरमाठराणां त्र्यार्षेयः प्रवरो भवति । भार्गव– शाठर–माठर– इति होता । भृगुवत्– शठरवत्– मठरवद्– इत्यध्वर्युः ॥ ४ ॥

इति भार्गवा जामदग्न्याः ॥

अथाजामदग्न्या भार्गवाः ।

अथाजामदग्नीनां १ विदाः २ ताम्रायणाः ३ नाष्ट्रायणाः ४ भ्रञ्जायनाः ५ क्रौञ्चायनाः ६ अभयजाताः ७ अभयाः ८ दानाः ९ वैतभृतः १० ष्टैकायनाः ११ भादन्त्याः १२ त्रैकायण्याः १३ आवटाः १४ पौलस्त्याः १५ भ्राजन्त्याः १६ कामलाः १७ भार्गवाः १८ भाभूर्पयः १९ शैलाः २० शौलाः २१ काण्डरथयः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव–च्यावन–आप्नवान – इति होता । भृगुवत्– च्यवनवद्– अप्नववद्– इत्यध्वर्युः ॥ ५ ॥

अथाऽऽर्ष्टिषेणाः। १ ग्राम्यायणाः २ काण्र्यायणाः ३ चान्द्रायणाः ४ आर्ष्टिषेणाः ५ पौष्कलायनाः ६ सिद्धाः ७ सुमनायनाः ८ मार्गपक्षाः ९ औपेयाः १० घटायनि— ११ नैकपि— १२ नैरथि— १३ गार्दमि— १४ कार्दमि— १५ कार्दमायनि— १६ रथतापि— १७ गौराम्भि— १८ कवि— १९ कार्णि— २० आपस्तम्बि— २१ आधामि— २२ राम्भि— २३ मालि— २४ भृग्वन्दीप— २५ अनूपाः। इत्येतेषामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति। भार्गव—च्यावन—आप्नवान— आर्ष्टिषेण—आनूप— इति होता। भृगुवत्— च्यवनवद्— अप्नववद्— आर्ष्टिषेणवद्— अनूपवद्— इत्यध्वर्युः॥ ६॥

वत्सपुरोधसानां पञ्चार्षेयः प्रवरो भवति। भार्गव—च्यावन—आप्नवान—वात्स—पौरोधस— इति होता। भृगुवत्— च्यवनवद्— अप्नववद्— वत्सवत्— पुरोधसवद् —इत्यध्वर्युः॥ ७॥

वेदा विश्वज्योतिषाः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव—वैद—वैश्वज्योतिष— इति होता। भृगुवद्— वेदवद्— विश्वज्योतिषवद्— इत्यध्वर्युः॥ ८॥

पार्थवैनानां त्र्यार्षेयः प्रवरो भवति। भार्गव—वैन्य—पार्थ—इति होता। भृगुवद्—वेनवत्—पृथुवद् —इत्यध्वर्युः॥ ९॥

अथ १ आपिशायनाः २ कापिशायनाः ३ रौक्मायणाः ४ रौप्यायणाः ५ उक्षायणाः ६ द्रोणायनाः ७ सबालायनाः ८ चान्यायनाः ९ मोदायनाः १० औरक्ष्यायणाः ११ रौष्टयायनाः १२ सापिण्डनाः १३ रौच्छकायनाः १४ कैतवायनाः १५ माल्याः १६ महाबल्याः १७ सुरभिनेयाः १८ तार्क्ष्यायणाः १९ होसजिह्वाः २० आहिकायनाः २१ मैत्रेयाः २२ आपिशलाः २३ आपिकक्षाः २४ समक्रियाः २५ शाण्डेयाः २६ साक्षयाः २७ साक्षिताः २८ सात्यण्डिनः २९ वाध्र्यश्वाः ३० दिवोदासाः ३१ मित्रयुवः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव—वाध्र्यश्व—दैवोदास— इति होता। भृगुवद्— वध्र्यश्ववद्— दिवोदासवद्— इत्यध्वर्युः॥ १०॥

अथ वैतहव्याः। १ यास्क— २ मौन— ३ मौक— ४ वाधुल— ५ माधुल— ६ मौनस— ७ वैतहव्य— ८ चण्डमोदन— ९ वर्षपुष्प— १० दुर्दिन— ११ भास्कर— १२ दैर्घचित्त— १३ और्णजित— १४ पाण्यवद— १५ पौष्णवत्— १६ प्रत्यूह— १७ पञ्चालव— १८ दैवन्तायन— १९ जैवन्तायन— २० शालङ्कायन— २१ मान्दायन— २२ वालेय— २३ हालेय— २४ वालेय— २५ कौशाम्बेय— २६ मध्यमेय— २७ भगलेय— २८ भागविक्षेयानां २९ शार्कराक्षि— ३० तौरक्षि— ३१ भागलि— ३२ भागवित्ति— ३३ मौशलि— ३४ वृकाशङ्कि— ३५ समदागेयि— ३६ कार्दमायनि— ३७ लामविलेभि— ३८ मदोकि— ३९ सानुष्टि— ४० सौरि— ४१ ज्वरि — ४२ खलि— ४३ पिलि— ४४ वार्कलीनां ४५ कौबिल्याः ४६ कौटिल्याः ४७ औक्स्याः ४८ सत्यक— ४९ चित्रसेनाः ५० वासवः ५१ वार्कश्वेकेयाः ५२ वाल्हयः ५३ भागवन्तयः ५४ वागुरीच्छयः ५५ श्रोण्यचक्षुः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। भार्गव— वैतहव्य— सावेधस— इति होता। भृगुवद्— वीतहव्यवत्— सवेधसवद्— इत्यध्वर्युः॥ ११॥

अथ गार्त्समदाः। १ गार्त्समदाः २ शुनकाः ३ खार्दमायनाः ४ गाङ्गायनाः ५ सौकराः ६ गार्म्यायणाः ७ मांसगन्धाः ८ मत्स्यगन्धाः ९ यज्ञपयः १० तैत्तिरयः ११ श्रोत्रियाः १२ प्रत्यूषाः १३ प्रत्यूलाः १४ चौक्षाः १५ चौराः १६ चौण्डाः १७ सौगन्धयः १८ राजवन्धक्याः। इत्येतेषामविवाहः। तेषामेकार्षेयः प्रवरो भवति। गार्त्समद— इति होता। गृत्समदवद्— इत्यध्वर्युः। यदि वा त्र्यार्षेयो भवति। भार्गव—गार्त्समद— इति होता। भृगुवद्— गृत्समदवद्— इत्यध्वर्युः॥ १२॥

इति भृगुकाण्डं परिसमाप्तम्॥

# अथाङ्गिरसकाण्डम्

---

तत्रादौ गौतमाङ्गिरसाः ।

अङ्गिरसो व्याख्यास्यामः—

१ औतथ्या गौतमाः २ तौदेयाः ३ क्रोलायनाः ४ आङ्गारकाः ५ पार्थिवाः ६ रोहिणायनाः ७ रोहिण्याः ८ सौयमुनाः ९ क्षीरकरम्भाः १० राहूगणाः ११ गणयः १२ मापण्याः १३ शौनरि– १४ शौलेपि– १५ कारोघनि– १६ काशपारि– १७ सौदामिनि– १८ सौमदायिनि– १९ नैकरि– २० राहुकर्णि– २१ सुरैपि– २२ सुगोमाक्षि– २३ पौषपिण्डि– २४ पौष्काञ्जिनि– २५ सौपुत्रि– २६ सामलेमकि– २७ चीरपि– २८ काचाक्षि– २९ करेलि– ३० करालि– ३१ विश्वण्टि– ३२ रेवचिकि– ३३ क्षारकण्डि– ३४ आरुणायनीनां ३५ अभिजित्– ३६ शरद्वन्त– ३७ स्वरिक– ३८ टैटिक– ३९ भगत्र– ४० भगल– ४१ कारोठ– ४२ सैन्धव– ४३ कौशल्य– ४४ कौटल्य– ४५ वल्यौद्ध– ४६ चाण्डालक– ४७ नग– ४८ मान्धारेपु– ४९ उपमिन्दु– ५० औपमन्यानां ५१ वासपुष्प– ५२ वासमूलि– ५३ वासघयि– ५४ वासस्तेय– ५५ सौमुचि– ५६ धौधि– ५७ क्षपा ५८ क्रोष्टा ५९ सौरू– ६० वासु– ६१ क्षीरट– ६२ पुष्पवन्तः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस– औतथ्य– गौतम– इति होता । अङ्गिरोवद्– उतथ्यवद्– गौतमवद्– इत्यध्वर्युः ॥ १ ॥

दीर्घतमसो गौतमाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस– औतथ्य– दैर्घतमस– इति होता । अङ्गिरोवद्– उतथ्यवद्– दीर्घतमोवद्– इत्यध्वर्युः ॥ २ ॥

आयास्या गौतमाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस– आयास्य– गौतम– इति होता । अङ्गिरोवद्– अयास्यवद्– गौतमवद्– इत्यध्वर्युः ॥ ३ ॥

औशिजा गौतमाः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस– आयास्य– औशिज– इति होता । अङ्गिरोवद्– अयास्यवद्– उशिजवद्– इत्यध्वर्युः ॥ ४ ॥

इति गौतमाङ्गिरसाश्चत्वारः ।

अथ भारद्वाजाङ्गिरसाः

अथ भारद्वाजाः । १ आत्रेयायनि– २ जैत्यलायनि– ३ वार्कलि– ४ वालिशायनि– ५ मार्कण्डि – ६ शिलायलि– ७ माध्यन्ति– ८ वाराहि– ९ वाष्कलि– १० चपिपि– ११ तूणकर्णि– १२ सौदि – १३ सौङ्गि– १४ वाह्योगित्सन्ति– १५ मैथुनमति– १६ देवमति– १७ खारग्रीवी– १८ तैतुण्डी – १९ साष्टङ्कि– २० इषुमति– २१ धौरि– २२ धौताम्बकि– २३ पम्बकि– २४ भौवकि– २५ दशादकि– २६ यावरातकि– २७ व्यढाकि– २८ गाङ्गोदकि– २९ सौज्यलि– ३० सौध्यलि– ३१ पाष्पचि– ३२ चलभायनि– ३३ सात्यमुग्रि– ३४ कौरक्षेत्रि– ३५ जित्यद्रोणि– ३६ वाझगन्धि– ३७ सौजप्तम्भि– ३८ आजकृष्टि– ३९ गौरि– ४० गोस्वपि– ४१ पिङ्गलि– ४२ शालोहि– ४३ घालोहि –४४ सौर्पथि– ४५ स्वारणारि– ४६ देवगारि– ४७ देवस्थानि– ४८ हारिकर्णि– ४९ कौमुदगन्धि– ५० गोमृगन्धि– ५१ औदमेघि– ५२ राजस्तम्भि– ५३ सामस्तम्भि– ५४ सोमस्तम्भि– ५५ ब्रह्मस्तम्भिनां ५६ राजस्तम्भाः ५७ अग्निस्तम्भाः ५८ वायुस्तम्भाः ५९ सूर्यस्तम्भाः ६० ब्रह्मस्तम्भाः ६१ सोमस्तम्भाः ६२ यमस्तम्भाः ६३ विष्णुस्तम्भाः ६४ इन्द्रस्तम्भाः ६५ आपस्तम्भाः ६६ प्राग्वंशयः ६७ भैरवः ६८ कोकग्रीवाः ६९ मत्स्यग्रयाः ७० फारुपययः

७१ उद्दह्न्याः ७२ चेलकाः ७३ स्तनकर्णाः ७४ मामण्डाः ७५ देवाश्वाः ७६ शुङ्गाः ७७ वेलाः ७८ खारूडाः ७९ कल्मापाः ८० सौह्लकेधाः ८१ कौण्डिल्याः ८२ कालक्षलाः ८३ भ्रामण्याः ८४ कुस्त्याः ८५ औपशयः ८६ चयोक्षिभेद्राः ८७ रौक्षाः ८८ वल्मीकयः ८९ शैलह्लिनः ९० वेदवेलाः ९१ शालयः ९२ शार्दूलयः ९३ श्यामेयाः ९४ तैदेहाः ९५ आश्वाः ९६ औक्थ्याः ९७ शौद्वयः ९८ शठाः ९९ उरूढाः १०० व्ययाः १०१ माणभिन्द्व्याः १०२ कारिपायणाः १०३ क्षाभ्यायणाः १०४ रैवायणाः १०५ कारुणायन- १०६ नृत्यायन- १०७ शिखायन- १०८ लाखायन- १०९ कौण्डायन- ११० माखायन- १११ कामकायन- ११२ खाह्नख्यायन- ११३ काशुकायन- ११४ क्षोप्रवाह्णेय- ११५ पारिणद्धेय- ११६ शैपय- ११७ सौगेयौ ११८ तेजसौविध- ११९ साविष्ट- १२० माकर्ण्य- १२१ आम्निवेश्याः १२२ सौवुद्धिक- १२३ माल्लाह्ल- १२४ शक- १२५ काजकि- १२६ काज- १२७ निद्राङ्गपथ- १२८ रुद्राङ्गपथ- १२९ सौभर- १३० कद्रोदक- १३१ लौहितक- १३२ हारितक- १३३ काण्डण्य- १३४ क्षुपिन- १३५ कादल्य- १३६ कुलिक- १३७ श्रीपय- १३८ सौपय- १३९ कक- १४० भरद्वाजाः। इत्येतेपामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- बार्हस्पत्य- भारद्वाज- इति होता। अङ्गिरोवद्- बृहस्पतिवद्- भरद्वाजवद्-इत्यध्वर्युः ॥ ५ ॥

अथाङ्गिरसः पञ्चार्षेया भारद्वाजगणाः।

१ साम्भरायण- २ वात्स्यतरायण- ३ वत्सचतुरायण- ४ गन्धरायण ५ काण्वायन- ६ सांख्यायन- ७ कानायन- ८ कैवलायन- ९ कौण्डायन - १० घासायन- ११ पैल्वकायन- १२ विधायकायन- १३ शारायण- १४ श्यामायन- १५ मधुरावह- १६ माधुरावट- १७ संभार- १८ भारमय- १९ साम्परिवार- २० मैत्माङ्ग- २१ राप- २२ रात- २३ भ्राष्ट्रकृत्- २४ औपमर्कट - २५ भालकृत्- २६ लोमकृत्- २७ भालवित् - २८ ऐन्द्रालि- २९ भ्राष्ट्रबिन्दि- ३० साह्वनि- ३१ शालाकायनि- ३२ बालाकि- ३३ सौयामुनि- ३४ कौष्टकि- ३५ वाहुल्की- ३६ क्रोढि- ३७ क्रोलि- ३८ त्रिण्डि- ३९ कारी- ४० चाम्पी- ४१ सत्सी- ४२ भागीनां ४३ वार्धुनयाः ४४ भ्राजिनाक्षयः ४५ सखीयवः ४६ हौत्रापचयः ४७ सत्यापचयः ४८ गर्गाः। इत्येतेपामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति। आङ्गिरस- बार्हस्पत्य- भारद्वाज- शैन्य- गार्ग्य- इति होता। अङ्गिरोवद् -बृहस्पतिवद्- भरद्वाजवत्- शिनिवद्- गर्गवद्- इत्यध्वर्युः ॥ ६ ॥

अथान्येऽपि त्र्यार्षेया भारद्वाजगर्गाः।

१ तैत्तिरिः २ कपिभूमिः ३ स्यन्दितः ४ गण्डितः ५ गर्गाः। इत्येतेपामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- शैन्य- गार्ग्य- इति होता। अङ्गिरोवत्- शिनिवद्- गर्गवद्- इत्यध्वर्युः ॥ ७ ॥

अथाङ्गिरसो भारद्वाजाः कपयः।

१ कुसादरि- २ पतञ्जलि- ३ कलसि- ४ सासवि- ५ संश्रयि- ६ जलसंधि- ७ मानकन्दयायनि- ८ आमौरि- ९ वह्नि- १० विरि- ११ दण्डि- १२ सलि- १३ सालि- १४ नधि- १५ भूयसि- १६ सौजटि- १७ राजकेशि- १८ भोजसि- १९ कपिस्वर- २० स्वसिर- २१ जलन्धव- २२ कुशितक- २३ बिन्दु- २४ ऊर्ध्वंम- २५ कण्व- २६ धान्यायन- २७ मात्स्यायन- २८ तैत्तिरायण- २९ वैवल्यन- ३० ऐतिशायनीनां ३१ कारीरयः ३२ माञ्जनः ३३ दर्भिनः ३४ ताण्डिनः ३५ काप्याः ३६ करयः ३७ नाकशाः। इत्येतेपामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस- आमहीयव- औरुक्षय्य- इति होता। अङ्गिरोवद्- आमहीयववद्- उरुक्षयवद्- इत्यध्वर्युः ॥ ८ ॥

अथेमानि व्यामुष्यायणकुलानि भवन्ति।

अथ संकृतयः। १ संकृतिः २ पूतिमाषः ३ पौलस्तण्डिः ४ शम्बुः ५ शैलावः ६ परिभव– ७ वैयाघ्रपद्य– ८ पौतिमाष्यायण– ९ श्रौतायण– १० आम्रायण– ११ शालायण– १२ चान्द्रायण– १३ जानकि– १४ मिलातकि– १५ विलातकि– १६ तालानगहि– १७ गाङ्गायनि– १८ चारायणि– १९ दाढर्यक्रपि– २० लौगाक्षि– २१ तैलि– २२ तामलकाः २३ मरकाचाः २४ ह्यारिमीवाः २५ आध्रयया: २६ आर्षण्याः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस– सांकृत्य– गौरीवीति– इति होता। अङ्गिरोवत्– संकृतिवद्– गौरीवीतिवद्– इत्यध्वर्युः ॥ ९ ॥

अथ कपिला भारद्वाजाः।

१ कपिलाः २ शपिलाः ३ शवलाः ४ कौथुमाः ५ अग्निजिह्वाः ६ रौक्षायणाः ७ भरद्वाजाः ८ विभिण्डि– ९ कर्णसुत– १० रुक्षाः। इत्येतेषामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति। आङ्गिरस– बार्हस्पत्य– भारद्वाज– वान्धन– मातृवचस– इति होता। अङ्गिरोवद्– बृहस्पतिवद्– भरद्वाजवद्– बन्धनवद्– मातृवचोवद्– इत्यध्वर्युः ॥ १० ॥

अथ शौङ्गशैशिरयो भारद्वाजाः।

१ कताः २ शुङ्गाः ३ शिशिरयः। इत्येतेषामविवाहः। तेषां पञ्चार्षेयः प्रवरो भवति। आङ्गिरस – बार्हस्पत्य – भारद्वाज – शौङ्ग – शैशिर – इति होता। अङ्गिरोवद् – बृहस्पतिवद् – भरद्वाजवत् – शुङ्गवत्–शिशिरवद्–इत्यध्वर्युः ॥ ११ ॥

इति भरद्वाजाङ्गिरसः सप्त ॥

इति भरद्वाजकाण्डम् ॥

अथ केवलाङ्गिरसः।

अथ हारिताः। १ कुत्साः २ गाण्डायन– ३ हारित– ४ कुत्स– ५ हंस– ६ पैङ्गल– ७ भीमगव– ८ हस्तिदास– ९ शार्ङ्खदर्भि– १० मात्स्यमालि– ११ माण्डमालि– १२ गार्णगारि– १३ मद्रगारी– १४ हस्ती– १५ दार्दुल– १६ अग्न्यखे– (इन्द्राग्न्य) ग– १७ वैरिणि– १८ पालाशी– १९ कौमारहारित– २० वालोदर– २१ महोदर– २२ नैमिश्र– २३ मिश्रोदक– २४ माण्डकार– २५ माधूक– २६ पोडल– २७ मैत्तायु– २८ कैतपानां २९ करीपयः ३० पौलयः ३१ मान्धाता ३२ मत्स्यः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस– आम्बरीप–यौवनाश्व– इति होता। अङ्गिरोवद्– अम्बरीपवद्– युवनाश्ववद्– इत्यध्वर्युः ॥ १२ ॥

अथ कण्वाः। १ रुण्ड– २ भृण्ड– ३ रमण– ४ सण– ५ मर्कट– ६ शाकटायन– ७ गोदायन– ८ रामायण– ९ शानायन– १० प्रकार– ११ गर्दभ– १२ कण्व– १३ नारी– १४ शोवेरी– १५ श्यामायनि– १६ माजिगन्धानां १७ वाष्कलाः १८ पौलदलि– १९ वर्मौञ्जिमाजयः २० वाजिश्रवसः २१ औपमर्कटायनाः २२ मर्कटयः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। आङ्गिरस– आजमीढ– काण्व– इति होता। अङ्गिरोवद्– अजमीढवत्– कण्ववद्– इत्यध्वर्युः ॥ १३ ॥

अथ विष्णुवृद्धाः। १ विष्णुवृद्धि– २ शठ– ३ मद्रि– ४ मद्रिण– ५ भद्रिण– ६ क्षत्रिण– ७ छत्रिण– ८ होत्रिण– ९ पुत्रिण– १० यत्रिण– ११ जर्तृण– १२ कर्तृण– १३ बादरायण– १४ सालकायन– १५ शाम्बरायण– १६ वत्सप्रायण– १७ नैतुंदि– १८ सात्यकि– १९ औपगीति– २० औपगवि– २१ रथुत्याः २२ भारुण्याः २३ वैरूप्याः

२४ देवस्थानयः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस- वैरूप- पार्षदश्व- इति होता । अङ्गिरोवद्- विरूपवत्- पृषदश्ववद्- इत्यध्वर्युः ॥ १४ ॥

अथ रथीतराः । कुत्सरथीतराणां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस- पौरुकुत्स- त्रासदश्व- इति होता । अङ्गिरोवत्- पुरुकुत्सवत्- त्रसदश्ववद्- इत्यध्वर्युः ॥ १५ ॥

अथाऽऽर्षभागीणाः । १ वामदेव- २ बृहदुक्थ्य- ३ आर्षभागीणाः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस- वामदेव्य- गौतम- इति होता । अङ्गिरोवद्- वामदेववद्- गोतमवद्- इत्यध्वर्युः ॥ १६ ॥

अथ मुद्गलाः । १ हिरण्यस्तम्बि- २ हिरण्यगर्भ- ३ हिरण्याक्ष- ४ कार्पभासित- ५ कारुष्यायणाः ६ दीर्घजङ्घयः ७ तारण- ८ भिन्दि- ९ सात्यमुग्रि- १० छत्रहयः ११ मुद्गलाः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आङ्गिरस- भार्म्यश्व- मौद्गल- इति होता । अङ्गिरोवद्- भर्म्यश्ववद्- मुद्गलवद्- इत्यध्वर्युः ॥ १७ ॥

इति केवलाङ्गिरसः षट् । एवं सप्तदशाङ्गिरसः ॥

इत्याङ्गिरसकाण्डम् ॥



# अथ विश्वामित्रकाण्डम्

अथ विश्वामित्रान् व्याख्यास्यामः—

१ विश्वामित्राः २ दैवराताः ३ चिकिताः ४ पार्णजङ्घाः ५ वारक्याः ६ बहेकधाः ७ कुशिकाः ८ याज्ञवल्क्याः ९ जाबालाः १० बाभ्रव्याः ११ आनमित्राः १२ सौगन्तव्याः १३ यमदूताः १४ औलव्याः १५ औपगहनाः १६ श्यामेयाः १७ चैत्रेयाः १८ उदलेयाः १९ मयूराः २० संसृताः २१ सौसृताः २२ लैकाः २३ गौराः २४ सोमेयाः २५ सांकृत्याः २६ औषेयाः २७ करीषाः २८ पाञ्जयः २९ सैरथयः ३० श्यामायनः ३१ सैन्धवायनः ३२ शालङ्कायनः ३३ सतनायन- ३४ आश्वलायन- ३५ तारकायण- ३६ गालव- ३७ शाल- ३८ विशाल- ३९ कालवव- ४० कौशिक- ४१ तन्तु- ४२ मनु- ४३ षड्दाङ्कु- ४४ बभ्रु- ४५ बभ्रुप्य- ४६ कारिप्य- ४७ वालखिल्याः ४८ वाहोलोपव- ४९ उद्धगल- ५० बृहदग्नि- ५१ काञ्जिलि- ५२ पार्षोदरि- ५३ जैमिनि- ५४ खर्वाडवाडवयः ५५ अर्जुनाक्षिः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र- दैवरात- औदल- इति होता । विश्वामित्रवद्- देवरातवद्- उद्दलवद्- इत्यध्वर्युः ॥ १ ॥

अथ देवश्रवसाः । १ देवश्रवसाः २ देवतरसाः ३ श्रौमतसामकायनाः ४ मृगकामकायनाः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र- दैवश्रवस- दैवतरस- इति होता । विश्वामित्रवद्- देवश्रवोवद्- देवतरसवद्- इत्यध्वर्युः ॥ २ ॥

त्रीण्येतानि द्वैस्व ( रौखाणि ) कुलानि भवन्ति। अथ कथकाः। १ कथकाः २ काथकाः ३ आदुघयः ४ उदूर्णयः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- कथक- काथक- इति होता। विश्वामित्रवत्- कथकवत्- काथकवद्- इत्यध्वर्युः॥ ३॥

अथाघमर्षणाः। अथ १ कामन्दक- २ धनञ्जय- ३ पतञ्जलि- ४ परिकुटि- ५ पार्थिव- ६ प्राणिल- ७ वन्धुल- ८ कुशिक- ९ चैत्रेय- १० अघमर्षणाः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- माधुच्छन्दस- आघमर्षण- इति होता। वैश्वामित्र- कौशिक- आघमर्षण-इति वा। विश्वामित्रवद्- मधुच्छन्दोवद्- अघमर्षणवद्- इत्यध्वर्युः। विश्वामित्रवत्- कुशिकवद्- अघमर्षणवद्- इति वा॥ ४॥

अथाऽऽजाः। १ आजाः २ माधुच्छन्दसाः ३ मार्गमित्राः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- माधुच्छन्दस- आज- इति होता। विश्वामित्रवद्- मधुच्छन्दोवद्- अजवद्- इत्यध्वर्युः॥ ५॥

अथ पूरणाः। तेषां द्व्यार्षेयः प्रवरो भवति। वैश्वामित्र- पौरण- इति होता। विश्वामित्रवत्- पूरणवद्- इत्यध्वर्युः॥ ६॥

अथाष्टकाः। अष्टका लोहिताः। इत्येतेषामविवाहः। तेषां द्व्यार्षेयः प्रवरो भवति। वैश्वामित्र - आष्टक- इति होता। विश्वामित्रवद्- अष्टकवद् - इत्यध्वर्युः॥ ७॥

अथ सुवर्णरेतसः। सुवर्णरेतसां द्व्यार्षेयः प्रवरो भवति। वैश्वामित्र- सौवर्णरेतस- इति होता। विश्वामित्रवत्- सुवर्णरेतोवद्- इत्यध्वर्युः॥ ८॥

अथ हिरण्यरेतसः। हिरण्यरेतसां द्व्यार्षेयः प्रवरो भवति। वैश्वामित्र- हैरण्यरेतस- इति होता। विश्वामित्रवद्-हिरण्यरेतोवद्- इत्यध्वर्युः॥ ९॥

अथ कपोतरेतसः। कपोतरेतसां द्व्यार्षेयः प्रवरो भवति। वैश्वामित्र- कापोतरेतस- इति होता। विश्वामित्रवत्-कपोतरेतोवद्- इत्यध्वर्युः॥ १०॥

अथ घृतकौशिकाः। घृतकौशिकानां द्व्यार्षेयः प्रवरो भवति। वैश्वामित्र- घृतकौशिक- इति होता। विश्वामित्रवद्- घृतकौशिकवद्- इत्यध्वर्युः॥ ११॥

अथ गाथिनरेणुवाः। एतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- गाथिन- रैणुव- इति होता। विश्वामित्रवद्- गाथिनवद्- रेणुववद्-इत्यध्वर्युः॥ १२॥

अथ साहुलमाहुलाः। अथ १ कोमलायन- २ शातातप- ३ राहुल- ४ फाहुल- ५ साहुल- ६ माहुल- ७ फागुल- ८ ओहल- ९ कोहल- १० ओमिल- ११ सातवि- १२ जातविः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- साहुल- माहुल- इति होता। विश्वामित्रवत्- साहुलवद्-माहुलवद्- इत्यध्वर्युः॥ १३॥

अथाऽऽश्मरथ्याः। १ आश्मरथ्याः २ कौशिकाः ३ घोटकमुखाः ४ अङ्गुलयः ५ वैनुल- ६ बान्धुल - ७ कामलायन- ८ कामुकायन- ९ पाणिनिः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- आश्मरथ्य- वान्धुलकौशिक- इति होता। विश्वामित्रवद्- अश्मरथ्यवद्- वन्धुलकुशिकवद्- इत्यध्वर्युः॥ १४॥

अथ कताः। १ औदुम्बरायणि- २ शैशिरि- ३ टैटिकि- ४ रायणि- ५ तार्क्ष्यायणि- ६ वेलायनि- ७ वेदायनि- ८ गोदायनि- ९ मोदायनि- १० चोदायनि- ११ गाङ्गायनि- १२ कात्यायनि- १३ शालङ्कायनि- १४ स्रोकायनि- १५ तैकायनि- १६ मौञ्जायनि- १७ करीरामि- १८ लानकि- १९ कालिरात्र- २० परातकि- २१ मौञ्जहायनाः २२ कताः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वैश्वामित्र- कात्य- कैल- इति होता। विश्वामित्रवत्- कतवत्- किलवद्- इत्यध्वर्युः॥ १५॥

इति विश्वामित्रकाण्डम्॥

## अथ वसिष्ठकाण्डम्

अथ वसिष्ठान् व्याख्यास्यामः। वसिष्ठानामेकार्षेयः प्रवरो भवति येऽन्य उपमन्युभ्यः पराशरेभ्यः कुण्डिनेभ्यश्च ॥

१ वैयाघ्रपद्याः २ औपगवाः ३ औपवनाः ४ औपलोमाः ५ सात्वलायनाः ६ गोपायनाः ७ कपिष्ठलाः ८ शितिपृष्ठाः ९ आयस्थूणाः १० पालिसयाः ११ कौलायनाः १२ आलम्भायनाः १३ पार्णकायनाः १४ आश्वलायनाः १५ सोपवस्सायनाः १६ लोमायन्याः १७ ब्रह्मपुरेयाः १८ स्वस्तिकराः १९ स्वस्त्याकर्पिताः २० जातूकर्ण्याः २१ गौरिश्रवसः २२ याज्ञवल्क्याः २३ पार्णवल्क्याः २४ गौरव्याः २५ वसदाकराः २६ दासव्याः २७ वस्नमाजयाः २८ अवकितयः २९ नाहकयः ३० अथोवयः ३१ वैष्णवाः ३२ हारितयः ३३ वालिसयः ३४ वामथयः ३५ घटारकाः ३६ आश्वलायनाः ३७ सौमनसायनि- ३८ याह्नकायनि- ३९ काण्डि- ४० वृद्धि- ४१ काण्डेविद्धि- ४२ कालोहरि- ४३ गालोहधि- ४४ गौडिनि- ४५ गोधिनि- ४६ वाण्डालि- ४७ माण्डलि- ४८ ब्रह्मबलि- ४९ मियोवलि- ५० सुयाचि- ५१ व्यालोहपि- ५२ रावणि- ५३ यौविलि- ५४ फौलि- ५५ मौलि- ५६ यौली- ५७ कौमोजी- ५८ चौलिक- ५९ ब्रह्मविलेय- ६० ब्रह्मकृतेय- ६१ मैत्रेय- ६२ पौण्डव- ६३ आर्जुनाक्षि- ६४ औष्मांगि- ६५ याज्ञकृत् । इत्येतेषामविवाहः। तेषामेकार्षेयः प्रवरो भवति। वासिष्ठ- इति होता। वसिष्ठवद्- इत्यध्वर्युः ॥

इत्येकार्षेयोऽहःसंज्ञो वसिष्ठगणः ॥

अथोपमन्यवः।

उपमन्यून् व्याख्यास्यामः—

१ शैलालयः २ महाकपाः ३ कौरव्याः ४ त्रिपणाः ५ कपिञ्जलाः ६ शाकायनाः ७ सुहाकाः ८ मानेयाः ९ भागवित्तायनाः १० शाङ्कर्याः ११ आलम्बायनाः १२ शाकधियः १३ सांख्यायनाः १४ आलव्याः १५ भागुरायणाः १६ उपल्याः १७ दाकायनाः १८ याकेयाः १९ काजपायनाः २० वलेखलाः २१ दास्कायनाः २२ लम्बायनाः २३ काम्भयनाः २४ कपिकेशाः २५ प्रालम्बायनाः २६ लक्ष्मणेयाः २७ कुण्डिनोदरायणाः २८ गौरथाः २९ पञ्चदशेरकाः ३० उद्वाहाः ३१ सुब्रह्मकायनाः ३२ याज्ञकयः ३३ पादकायनाः ३४ बालाशिराः ३५ शाकाह्याः ३६ क्रोधिनः ३७ पालङ्कायनाः ३८ उपमन्यवः ३९ काद्राधयः ४० औद्राह्मानयः ४१ औपलेखयः ४२ ब्रह्मचर्यः ४३ शौण्डोदरयः ४४ कृष्णास्तरायणाः ४५ यवत्रोडायणाः ४६ रासेयाः ४७ शाटयायनाः ४८ आश्वलायनाः ४९ उपलरि- ५० फौलकि- ५१ फौण्डोदरि- ५२ वैदर्भि- ५३ पार्णगोरि- ५४ गोपोचिति- ५५ कापुरि- ५६ रौद्रमहमणि- ५७ नालुहि- ५८ यालुहि- ५९ धानुहि- ६० पौष्णवत- ६१ पार्थश्रवसः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ- आभरद्वसु- ऐन्द्रप्रमद- इति होता। वसिष्ठवद्- आभरद्वसुवद्- इन्द्रप्रमदवद्- इत्यध्वर्युः ॥ २ ॥

इत्युपमन्युगणः ॥

अथ पाराशराः।

पराशरान् व्याख्यास्यामः—

१ काण्डशयः २ वाहनयः ३ जैमयः ४ भौमतायनाः ५ पार्येयाः ६ ग्रागोहयाः ७ कौरजायनाः ८ कृष्णाजिनाः ९ खल्यायनाः १० वर्ष्यायनाः ११ कपिमोवाः १२ कपिमुखाः १३ गोवयः १४ आयस्तिष्ठायनाः १५ कार्कयः १६ कोपुषायः

१७ श्यामायाः १८ श्यानपातयः १९ श्वेतपूरयः २० स्कम्भिन्याः २१ पदिकाः २२ वधिकाः २३ माण्ढिकाः २४ विल्वपूपयः २५ प्लक्षयः २६ खाल्यायनाः २७ गोपालि– २८ हार्यश्वि– २९ द्वैर्यावि– ३० पौष्कारसादि– ३१ क्षौमि– ३२ स्तार्णि– ३३ शिविः ३४ इष्वैकहस्ताः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ– शाक्त्य– पाराशर्य– इति होता। वसिष्ठवत्– शक्तिवत्– पराशरवद्– इत्यध्वर्युः॥ ३॥

इति पराशरगणः॥

अथ कौण्डिण्यगणः।

अथ कुण्डिणान् व्याख्यास्यामः–

१ औपस्वस्थाः २ स्वस्थयः ३ आलोहाः ४ लोह्यः ५ माध्यंदिनाः ६ त्रैशृङ्गाः ७ नोभायनाः ८ लोभायनाः ९ पैप्पलादयः १० वाह्वः ११ साङ्कितनाः १२ कापठवः १३ पेठकाः १४ नवग्रामाः १५ हिरण्याक्षायणाः १६ अक्षितयः १७ अश्मरथाः १८ अश्वत्थः १९ वैकर्णयः २० विधृग्गार्शि– २१ गोपन– २२ सौगि– २३ गुल्गुलि– २४ सौमक्षि– २५ कौण्डिण्य– २६ मित्रावरुण– २७ घृति– २८ कौङ्क्रोल्याः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ– मैत्रावरुण– कौण्डिण्य– इति होता। वसिष्ठवद्– मित्रावरुणवत्– कुण्डिनवद्– इत्यध्वर्युः॥ ४॥

इति कौण्डिण्यगणः॥

अथ व्यामुष्यायणा जातूकर्ण्याः।

लौहित्यानां फाल्गुन्याः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ– लौहित्य– फाल्गुन्य– इति होता। वसिष्ठवत्– लोहितवत्– फाल्गुनीवद्– इत्यध्वर्युः॥

अथ वाधूलाः।

वाधूलानां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ– वाधूल– पाराशर्य– इति होता। वसिष्ठवद्– वाधूलवत्– पराशरवद्– इत्यध्वर्युः॥

अथौवोधा जातूकर्ण्याः।

१ औवोधाः २ जातूकर्ण्याः ३ पाटवाः। इत्येतेषामविवाहः। तेषां त्र्यार्षेयः प्रवरो भवति। वासिष्ठ– औवोध– पाटव– इति होता। वसिष्ठवद्– उवोधवत्– पटवद्– इत्यध्वर्युः॥

इति वसिष्ठकाण्डम्॥

---

## अथ काश्यपकाण्डम्

अथ अहःसंज्ञः काश्यपगणः।

अथ कश्यपान् व्याख्यास्यामः–

१ आमायणाः २ चाक्रायणाः ३ विपगणाः ४ कौशीतकेयाः ५ शौनव्याः ६ शौनकाः ७ हास्तिकाः ८ आजिह्वायनाः ९ कैरव्जाः १० आह्वगायकाः ११ शानराधाः १२ श्यापशान्ताः १३ औदपृक्षाः १४ मौमयागाः १५ मारीचाः १६ पाशिशायनाः १७ वैशिप्राः १८ शाकल्यायनाः १९ महूज्याः २० शाल्दिदोग्रायणाः २१ हृद्रोगाः २२ रोहितायनाः २३ वैकर्णेयाः २४ काटायनाः २५ मितकुम्भाः २६ कांसायनाः २७ मातृत्याः २८ कोसलायनाः २९ हस्तिदाः ३० वाह्नकायनाः ३१ देवजाताः ३२ हारितायनाः ३३ भालन्दनाः ३४ अग्निशर्मायणाः ३५ धूम्रायणाः ३६ आसुरायणाः ३७ सासिमाः ३८ लाक्षायणाः ३९ कैकसयाः ४० मार्जारायनाः ४१ शाकादाः ४२ आश्वदातायनाः ४३ शौनयाः ४४ वैशम्पायनाः ४५ गौरीनायनाः ४६ कौसादकाः ४७ धर्मायणाः ४८ क्रोष्टायनाः

४९ शौम्रगाः ५० मैपकरिटिकायनाः ५१ लाक्ष्मनयाः ५२ माखशाखयः ५३ साविश्रवसः ५४ शालायया: ५५ छतृह्यः ५६ दाक्षायणाः ५७ सौमिश्रयः ५८ शैवरथाः ५९ ष्टेशुचभ्रयः ६० उच्छ्रयध्वयः ६१ क्रोष्टाजीवनयः ६२ विदर्भी– ६३ हर्करि– ६४ महर्षि– ६५ पार्यकि– ६६ चक्रधर्मि– ६७ महाचक्रि– ६८ पाचामणि– ६९ पैठीनसि– ७० भवन्ददी– ७१ हास्तलायनि– ७२ स्थौलकेशि– ७३ कामेयामकि– ७४ नाव्यकृति– ७५ ज्ञानहस्ति– ७६ खैरकि– ७७ कैजलि– ७८ मौगलि– ७९ काडवायनि– ८० वारुबौया– ८१ ठवृञ्जि– ८२ बबकय– ८३ कैकशेय– ८४ प्रातिथेय– ८५ प्रतिश्रवस– ८६ भौवन– ८७ मापक– ८८ मातङ्ग– ८९ मुस्तह्य– ९० केरिह्य– ९१ काश्यप– ९२ माचक्र– ९३ शौकय– ९४ भृयोगर– ९५ शेरकाः ९६ सुशृत– ९७ काश्वहायन– ९८ द्विहायन– ९९ कुटुका १०० पद्रोडलायन– १०१ चासबभ्रु– १०२ श्याम– १०३ यक्ष– १०४ पैलि– १०५ हास्तिदार्यी– १०६ वेलणी– १०७ भक्षि: । इत्येतेपामविवाहः । तेपां त्र्यार्षेयः प्रवरो भवति । काश्यप– आवत्सार–नैध्रुव– इति होता । कश्यपवद् – अवत्सारवद् – निध्रुववद् – इत्यध्वर्युः ॥ १ ॥

अथ रेभाः ।

रैभ्यानां त्र्यार्षेयः प्रवरो भवति । काश्यप– आवत्सार– रैभ्य– इति होता । कश्यपवद्– अवत्सारवद् – रिभुवद् – इत्यध्वर्युः ॥ २ ॥

अथ शाण्डिलाः ।

१ शाण्डिलाः २ कोहलाः ३ पायकाः ४ तैदेहाः ५ औदमेघाः ६ मूत्राः ७ वाक्यशठाः ८ वटायनाः ९ वात्स्यायनाः १० मौञायनाः ११ जाद्यवंशाः १२ वापावत्साः १३ खर्वमानयाः १४ कारेयाः १५ भालयः १६ गाङ्गायनाः १७ कौङ्कठयः १८ महोदकयः १९ तैक्षिमाहकयः २० वहूदरयः २१ महाकैरल्याः २२ सौक्ष्मयः २३ सावचसः २४ शतुगायन– २५ वेलायन– २६ जाङ्घायन– २७ गर्दभ– २८ गर्दभीमुख– २९ कुहल– ३० गृहल – ३१ मृगल– ३२ भृगल– ३३ कैशिल– ३४ गोशिल– ३५ पिप्पल– ३६ जलन्धर– ३७ मुञ्ज– ३८ मयूर– ३९ सुजातपूर– ४० पर्वपार्याम– ४१ जीम– ४२ वृषखण्ड– ४३ कैरात– ४४ उदमध्य– ४५ उलमेप– ४६ आदित्यकर्ण– ४७ हिरण्यबाहु – ४८ तृणविन्दु– ४९ सुकेतु– ५० तरपैप्पलादि– ५१ बलि– ५२ संपालि– ५३ राज्ञ– ५४ मुजाजलि –५५ वैदानघ– ५६ सुदानवाः । इत्येतेपामविवाहः । तेपां त्र्यार्षेयः प्रवरो भवति । देवल– आसित– काश्यप– इति होता । देवलवद्– असितवत्– कश्यपवद्– इत्यध्वर्युः । यदि वा द्व्यार्षेयो भवति । दैवल– आसित– इति होता । देवलवद्– असितवद्– इत्यध्वर्युः ॥ ३ ॥

अथ सांख्यमित्राः ।

१ सांख्यमित्राः २ शाफयाः ३ रेकाः ४ तुथलाः । इत्येतेपामविवाहः । तेपां त्र्यार्षेयः प्रवरो भवति । काश्यप– आवत्सार– सांख्यमित्र– इति होता । कश्यपवद्– अवत्सारवत्– संख्यमित्रवद्– इत्यध्वर्युः ॥ ४ ॥

अथ शारस्तम्वाः ।

१ आलुष्टयः २ भाकुरयः ३ तानयः ४ स्याजपालयः ५ शाकलयः ६ दार्भायणाः ७ राजचाभियः ८ राजवलपः ९ सासुचि– १० कापुटि– ११ पिङ्गाक्षि– १२ सघ्राक्षि– १३ स्तजस्तम्विः १४ शरस्तम्बिः । इत्येतेपामविवाहः । तेपां त्र्यार्षेयः प्रवरो भवति । काश्यप– आवत्सार– शारस्तम्व– इति होता । कश्यपवद्– अवत्सारवत्– शरस्तम्ववद्– इत्यध्वर्युः ॥ ५ ॥

अथ द्व्यामुष्यायणा अहर्वसिष्ठा नक्तं कश्यपा लौगाक्षयः ।

१ स्याविरोदकि– २ रोपचत्सकि– ३ राजवाहि– ४ राजसेवकि– ५ सौसुकि–६ सैतिकि–७ टैपिकि –८ भालकायनि– ९ कौनामि– १० स्तरोद्वादी– ११

सैरिन्ध्रि–१२ सेरि– १३ मैत्रवादि– १४ कसपात्र– १५ उपशिवयः १६ लौगाक्षिः । इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । काश्यप– आवत्सार –वासिष्ठ– इति होता दिवा । वासिष्ठ– आवत्सार– काश्यप– इति होता नक्तमिति । कश्यपवद् –अवत्सारवद्– वसिष्ठवद्– इत्यध्वर्युर्दिवा । वसिष्ठवद्– अवत्सारवत्– कश्यपवद्– इति नक्तमिति ॥ ६ ॥

इति द्व्यामुष्यायणो लौगाक्षिगणः ॥

इति काश्यपकाण्डम् ॥



## अथात्रिकाण्डम्

### अथात्रिगणः

अत्रीन् व्याख्यास्यामः–

१ जैत्रायणाः २ अर्घ्यायणाः ३ आदकायनाः ४ सारायणाः ५ कारायणाः ६ शाकटायनाः ७ भारद्वाजायनाः ८ साकेतायनाः ९ आनीपायणाः १० गौपवनाः ११ शिशुपालाः १२ वामरथ्याः १३ पौठिकाः १४ पौप्पिकाः १५ माङ्गलाः १६ सोपाच्छरालाः १७ सौकवराः १८ तृणबिन्दवः १९ शाङ्खरवयः २० सावच्यानयः २१ मालरुचः २२ व्यालयः २३ गणपतयः २४ भागतयः ( वित्तयः ) २५ आत्रेय– २६ कृष्णात्रेय– २७ गौरात्रेय– २८ नीलात्रेय– २९ श्वेतात्रेय– ३० श्यामात्रेय– ३१ अरुणात्रेय– ३२ दत्तात्रेय– ३३ महात्रेय– ३४ हालेय– ३५ वालेय– ३६ शौचेय– ३७ सांख्येय– ३८ शौद्रेय– ३९ कौद्रेय– ४० छान्दोगेय– ४१ वैतभाग– ४२ कालवय– ४३ शौरवय– ४४ कार्मर्यायनि– ४५ गौरमीवी– ४६ शौनकर्णी– ४७ शास्त्रायनि– ४८ फेराङ्गि– ४९ वैडालि– ५० छान्दोगि– ५१ शौधृतकि– ५२ विदिकि– ५३ वैश्वानकि– ५४ मानङ्गि– ५५ आनङ्गि– ५६ गौराङ्गि– ५७ दौराङ्गि– ५८ सौराङ्गि– ५९ सारङ्गि– ६० शामलि– ६१ छागलि– ६२ भागलि– ६३ धानुद्दि– ६४ वाह्रुपि– ६५ वाहुदन्ति– ६६ औद्दालकि– ६७ कानजि– ६८ मुद्‌गुरमीव– ६९ गौरन्य– ७० मारय– ७१ गोर्णीपथ– ७२ जलद– ७३ भगयोद– ७४ पनञ्जन– ७५ भागमादन– ७६ दार्भ्य– ७७ दुयादुल– ७८ इन्द्रातिथिः । इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेय– आर्चनस– श्यावाश्व– इति होता । अत्रिवद्– अर्चनसवत्– श्यावाश्ववद्– इत्यध्वर्युः ॥१॥

इत्यत्रयः ॥

### अथ पूर्वातिथिगविष्ठिराः ।

१ और्णनामि– २ वैजवापि– ३ शिलन्दलि– ४ सौपुष्पि– ५ श्यामपुष्पि– ६ ब्रह्मपुष्पि– ७ व्याघ्रपुष्पि– ८ हिरण्यपुष्पि– ९ कालासि– १० काकशीर्षि– ११ कादुकि– १२ प्लाक्षि– १३ दक्षि– १४ पार्ष्णिवलि– १५ धृति– १६ गाविष्ठिर– १७ भलन्दन– १८ मौञ्जकेश– १९ शिरीप– २० मैत्रायण्य– २१ कृष्णशीर्षक– २२ चन्द्रात्रेयाः । इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेय –गाविष्ठिर– पौर्वातिथेय– इति होता । अत्रिवद् – गविष्ठिरवत्– पूर्वातिथिवद्– इत्यध्वर्युः ॥ २ ॥

### अथ द्व्यामुष्यायणाः पुत्रिकापुत्रा वामरथ्यादयः ।

अथ पुत्रिकापुत्रान् व्याख्यास्यामः–

१ वालेय– २ हालेय– ३ कौद्रेय– ४ शौभ्रेय– ५ वामरथ्य– ६ गौपवनाः । इत्येतेपामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आत्रेय– वामरथ्य– पौत्रिक– इति होता । अत्रिवद्– वामरथ्यवत्– पुत्रिकवद्– इत्यध्वर्युः ॥ ३ ॥

इति द्व्यामुष्यायणा अत्रेः पुत्रिकापुत्रा वामरथ्याः ॥

# अथागस्तिकाण्डम्

अथागस्तिगणः ।

अथागस्तीन् व्याख्यास्यामः—

१ हारिग्रीवाः २ वैकर्ण्यायनाः ३ धिखालब्याः ४ स्कापायनाः ५ मार्गायणाः ६ सौभरायणाः ७ सैम्ववाः ८ औपदाहृतयः ९ अम्बुदोहयः १० नैवपथयः ११ रोहिण्याः १२ मौसलेयाः १३ शाल्यातयाः १४ मौजनकयः १५ पण्डोधृताः १६ प्राचार्याः १७ दद्नोगयः १८ उपकल्पकायनि– १९ शालङ्कायनि– २० धारणि– २१ वैरणि– २२ क्षौमिति– २३ लावणि– २४ वह्नकि– २५ वाह्मायनि – २६ माकाक्षि– २७ कुत्स्याक्षि– २८ रम्याक्षि– २९ प्रादुराक्षि– ३० गोव्यादि– ३१ लाशि– ३२ लाज्यामेनि– ३३ तण्डि– ३४ दण्ड्यागस्ति– ३५ कल्मष– ३६ पकुल– ३७ उकुल– ३८ सौव्यायन – ३९ ग्रामाण्य– ४० फटहृत– ४१ शैवयुध– ४२ अर्बुद– ४३ सौभर– ४४ वह्नैरण्डय– ४५ वैरण्डय– ४६ दानोप्णिप– ४७ शारङ्गर– ४८ वाशिपायन– ४९ तेनर– ५० पुत्रिः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य– दार्ढच्युत– ऐध्मवाह– इति होता । अगस्तिवद्– दृढच्युतवद्– इध्मवाहवद्– इत्यध्वर्युः ॥ १० ॥

इत्यगस्तयः ॥

अथ पुलहक्रतवः ।

१ अभयः २ करभयः ३ कौशालाः ४ कौशल्याः ५ कर्णाटाः ६ सुमेधसः ७ सोमयोभुवः ८ गान्धरायणाः ९ पौलस्त्याः १० पुलहाः ११ माहेन्द्राः १२ क्रतुः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य– माहेन्द्र– मायोभुव– इति होता । अगस्तिवद्– महेन्द्रवद्– मयोभुववद्– इत्यध्वर्युः ॥ २ ॥

अथ पारीणकाः ।

१ रिक्रि– २ चक्रि– ३ अर्चि– ४ चर्चि– ५ हिमोदकि– ६ पारीणकाः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य– पैनाक– पारीणक– इति होता । अगस्तिवत्– पिनाकवत्– परीणकवद्– इत्यध्वर्युः ॥ ३ ॥

अथ सायकाः ।

१ नन्दि– २ विनिलि– ३ मिलि– ४ चिलि– ५ माममि– ६ तकि– ७ पैक– ८ सायकाः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य– पैक– सायक– इति होता । अगस्तिवत्– पिकवत्– सायकवद्– इत्यध्वर्युः ॥ ४ ॥

अथ हैमोदकाः ।

१ प्राचीनप्रवणाः २ कापेयाः ३ अक्र– ४ शक्र– ५ शुक्र– ६ हंस– ७ चाप– ८ भास– ९ हिमचर्चि– १० हिमोदकाः । इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य– हैमचर्चि– हैमोदक– इति होता । अगस्तिवद्– हिमचर्चिवद्– हिमोदकवद्– इत्यध्वर्युः ॥ ५ ॥

अथ पूरणाः ।

पौर्णमासाः पूरणाः इत्येतेषामविवाहः । तेषां त्र्यार्षेयः प्रवरो भवति । आगस्त्य– पौर्णमास– पौरण– इति होता । अगस्तिवत्– पूर्णमासवत्– पूरणवद्– इत्यध्वर्युः ॥ ६ ॥

इत्यगस्तिगणः ॥

इत्यगस्तिकाण्डम् ॥



# अथ वैकृतं काण्डम्

व्याख्याताः प्रवराः ॥ १ ॥

वैकृतानि व्याख्यास्यामः ॥ २ ॥

अथ द्वितय्यो ब्राह्मणानां समुत्पत्तयो भवन्ति ॥ ३ ॥

तेषां समुत्पत्तिं प्रतिपत्तिं च व्याख्यास्यामः ॥ ४ ॥

येषां पुरुषतः प्रजोत्पत्तिरविच्छिन्ना भवति ते संहृतकुलीनाः ॥ ५ ॥

ये सप्तभूयःपञ्चपुरुषं वा योनिश्रुतशीलवृत्त-संपन्नाः पुत्रवन्तस्ते पितृमन्तः पैतृमत्या ऋषय आर्षेया भवन्त्यार्तीजानाः ॥ ६ ॥

अथ ये दत्तकक्रयक्रीतकृत्रिमपुत्रिकापुत्राः पर-परिग्रहेण नानार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति ॥ ७ ॥

द्व्यामुष्यायणाः काककोकिलास्तस्माद्द्विपितरः स्मृताः। तस्माद्द्विजा भारद्वाजा ब्राह्मणाः क्षत्रिया विशः ॥ ८ ॥

यथैवच्छौङ्गशैशिरीणां भरद्वाजौदमेधीनां लौगाक्षीणां च ॥ ९ ॥

यानि चान्यान्येवंसमुत्पत्तीनि कुलानि भवन्ति तेषां तथैव प्रवराः स्युः ॥ १० ॥

द्विप्रवरसंनिपाते पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः। अपि वा त्रयोऽन्ये त्रयोऽन्ये। तन्न तथा कुर्यात्। तस्मात्त्रीनेकं पञ्च वा वृणीते द्वयोरेव त्रीन् पञ्च वा नातिवृणीते। अथ यदि सार्षं प्रब्रूयादथ यदि पितृव्येण ज्ञातिना वैकार्षेयेण जातास्तेषां परिग्रहीतुरेव भवन्ति ॥ ११ ॥

अथ यद्येषां स्यात्सु भार्यास्वपत्यं न स्यादिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युः ॥ १२ ॥

यद्युभयोर्न स्यादुभाभ्यामेव दद्युरेकस्मिञ्छ्राद्धे पृथगुद्दिश्य वैकपिण्डे द्वावनुकीर्तयेत्परिग्रहीतारं चोत्पादयितारं चाऽऽतृतीयात्पुरुषात् ॥ १३ ॥

आर्षेयाज्ञानादेते(के)षामेव प्रवराणामाद्यं प्रवरणं प्रवृणीते प्रतिप्रश्नेन वा यं यस्योपपन्नं मन्येत तस्य कुर्यात् ॥ १४ ॥

तथा पुरोहितप्रवरो वा स्यादेकार्षेयप्रवरो राजन्यः ॥ १५ ॥

एतेनैव वैश्यस्य प्रवरो व्याख्यातः ॥ १६ ॥

यदि सार्षं ब्रूयान्मानवैलपौरूरवसेति होता ब्रूयात्। पुरूरवोवदिलवन्मनुवदित्यध्वर्युः ॥ १७ ॥

यदि पित्र्यमश्नीयुर्न विवहेयुः ॥ १८ ॥

पुरोहितप्रवरावेव राजन्यवैश्यौ स्यातामिति ह विज्ञायते ॥ १९ ॥

दिवि वर्षसहस्रं मोदते वंश्याध्यायी यस्य चाश्नाति गृहे वंश्याध्यायी स दिव्यं वर्षसहस्र-मेकैकस्य ऋषेरतिथिर्भवति ॥ २० ॥

नान्यस्मिन्प्रवरणं दद्यान्नापुत्राय नाशिष्याय नासंवत्सरोषिताय ॥ २१ ॥

सर्वेषां पङ्क्तिपावनानामुपरिष्टाद्भवति यः प्रवरा-ध्यायमधीते यः प्रवराध्यायमधीते ॥ २२ ॥

इति वैकृतं काण्डम् ॥

## अथ श्लोककाण्डम्

जमदग्निर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥ १ ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ।
प्रीयमाणतया वाऽपि सत्तया धाऽनुवर्तनम् ॥ २ ॥
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ।
समानमुनिभूयस्त्वमेकप्रवरतामपि ॥ ३ ॥
समानप्रवरत्वं च द्वेधा बौधायनोऽब्रवीत् ।
मुनिप्रणीतप्रवरैरूनपञ्चाशता वयम् ॥ ४ ॥
अनन्तान्यपि गोत्राणि वर्गीकृत्याभिदध्महे ।
जामदग्न्यौ वत्सबिदावार्ष्टिषेणाः परस्परम् ॥ ५ ॥
नान्वियुः प्रवरैक्येन सगोत्रत्वेन चाऽऽदिमौ ।
यास्का मित्रयुवो वैन्याः शुनकाः प्रवरैक्यतः ॥ ६ ॥
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ।
उक्ताः सप्त भृगोर्वंश्या वक्ष्यन्तेऽङ्गिरसो गणाः ॥ ७ ॥
गौतमाः सप्त चाऽऽयास्याः शारद्वन्तास्तथाऽपरे ।
कौमण्डा दैर्घतमसास्ततः कारेणुपाल्यः ॥ ८ ॥
वामदेवा औशनसा गोत्रर्ष्यैक्याच्च नान्वियुः ।
भरद्वाजाः सकपयो गर्गा रौक्षायणा इति ॥ ९ ॥
चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ।
केवलाङ्गिरसश्चेति विष्णुवृद्धाः सकण्वजाः ॥ १० ॥
हारीता राथीतराश्च मुद्गलाः प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥ ११ ॥
षोडशाङ्गिरसस्त्रेधा प्रोक्ताः संकृतयस्तथा ।
संकृतीनां द्विवंश्यत्वाद्वसिष्ठैश्च चतुर्विधैः ॥ १२ ॥
स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वयः ।
[illegible] ॥ १३ ॥
[illegible] ।
[illegible] ॥ १४ ॥
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ।
वसिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः ॥ १५ ॥
अहर्वसिष्ठतोक्तिश्च प्रयाजाद्यादिगोचरा ।
वासिष्ठाः कुण्डिनाश्चैव उपमन्युः पराशराः ॥ १६ ॥

येषां तुल्यैर्भूयस्त्वं नोद्वहन्ति मिथस्तु ते।
भृगूणां चैतदाद्यास्त्रिविवाहो न परस्परम् ॥ ५१ ॥
प्रवरान् पितृगोत्रे तु मातृगोत्रे न चिन्तयेत्।
गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत् ॥ ५२ ॥
यद्येकं प्रवरं भिन्नं वरस्य पैतृके तथा।
विवाहोऽपि न कर्तव्यः सा कन्या भगिनी भवेत् ॥ ५३ ॥
काश्यपैरभ्याः प्रोक्ताश्च शाण्डिल्यास्तु तथाऽपरे।
विवाहस्तु न कर्तव्यः सा कन्या भगिनी भवेत् ॥ ५४ ॥
परिणीय सगोत्रां तु समानप्रवरां तथा।
कृत्वा तस्याः परित्यागमतिकृच्छ्रविशोधनम् ॥ ५५ ॥
कात्यायनेन रचितो विप्राणां हितकाम्यया।
अध्यायः प्रवराख्योऽयं पुरा ब्रह्मविनिर्मितः ॥ ५६ ॥

॥ इति श्लोककाण्डं परिसमाप्तम् ॥

॥ समाप्तोऽयं कात्यायनीयः प्रवराध्यायः ॥

॥ प्रथमो भागः समाप्तः ॥

